

मिथिलाविद्यापीठग्रन्थमाला प्राचीनग्रन्थावलौ त्रयोविंशतितमं पुष्पम

टीकाचतुष्टयसनाथीकृतः सारसङ्कलनोपबृंहितः

## उदयनाचार्यप्रणीतः

# न्यायकुसुमाञ्जलिः

श्रीशङ्करमिश्रकृतामोदव्याख्योपबृंहितः
श्रीगुणानन्दविद्यावागीशरचितविवेकव्याख्यासनाथीकृतः
श्रीवरदराजप्रणीतबोधनीव्याख्याविराजितः म०म०श्रीहरिहरकृपालुद्विवेदिविरचित-
परिमलव्याख्यापस्कृतः ।

एम०ए०-पीएच०डी०डी०लिट्० इत्युपाध्यलङ्कृतेन
न्यायव्याकरणसाहित्यवेदान्ताचार्येण
श्रीमहाप्रभुलालगोस्वामिना
कुसुमाञ्जलिसारेण विस्तृतभूमिकया चालङ्कृत्य सम्पादितः ।

मिथिलाविद्यापीठप्रधानेन बागचीत्युपाह्वेन एम०ए० एलएल०बी०-डी०लिट्०
इत्युपाधिभाजा
श्रीशीतांशुशेखरदेवशर्म्मणा
प्रकाशितः ।

शकाब्दः १८९४ सँव्वत् २०२८ ऐशवीयाब्दः १९७२

मिथिलाविद्यापीठग्रन्थमाला प्राचीनग्रन्थावलौ त्रयोविंशतितमं पुष्पम्

टीकाचतुष्टयसनाथीकृतः सारसङ्कलनोपबृंहितः

उदयनाचार्यप्रणीतः

# न्यायकुसुमाञ्जलिः

श्रीशङ्करमिश्रकृतामोदव्याख्योपबृंहितः
श्रीगुणानन्दविद्यावागीशरचितविवेकव्याख्यासनाथीकृतः
श्रीवरदराजप्रणीतबोधनीव्याख्याविराजितः म०म०श्रीहरिहरकृपालुद्विवेदिविरचित-
परिमलव्याख्योपस्कृतः ।

एम०ए०-पीएच०डी०-डी०लिट्० इत्युपाध्यलंकृतेन
न्यायव्याकरणसाहित्यवेदान्ताचार्येण
**श्रीमहाप्रभुलालगोस्वामिना**
कुसुमाञ्जलिसारेण विस्तृतभूमिकया चालंकृत्य सम्पादितः ।

मिथिलाविद्यापीठप्रधानेन वागचीत्युपाह्वेन एम०ए०-एलएल०बी०-डी०लिट्०
इत्युपाधिभाजा
**श्रीशीतांशुशेखरदेवशर्म्मणा**
प्रकाशितः ।

शकाब्दः १८९४ सँवत् २०२८ ऐशवीयाब्दः १९७२

Mithila Institute Series Ancient Texts No. 23

# NYĀYAKUSUMĀÑJALI

OF

# UDAYANĀCĀRYA

*With the Commentaries*

Āmoda of Śaṅkara Miśra,
Viveka of Guṇānanda Bodhanī of Varadarāja,
Parimala of Mm. Shri Harihara Kṛpālu Dvivedī.

Edited with an introduction and a resumé of the text
by
**Dr Mahaprabhulal Goswami,**
M. A., Ph. D., D. Litt., Nyāyavyākaraṇa Sāhityavedāntācārya.

*Published by*
**Dr S. Bagchi,**
M. A. LL. B., D. Litt., Director, Mithila Research Institute,
DARBHANGA

**1972**



*The Government of Bihar established the* **Mithila Institute** *of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object,* **inter alia**, *to promote advanced studies and research in Sanskrit learning, to bring together the traditional Pandits with their profound learning and the modern scholars with their technique of research and investigations, and to publish works of permanent value to scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, four others have been established and have been doing useful work during the last eighteen or nineteen years— Nalanda Institute of Research and Post-Graduate Studies in Buddhist learning and Pali at Nalanda, K.P. Jaisawal Research Institute at Patna, the Bihar Rashtra Bhasha Parishad for research and advanced studies in Hindi at Patna, and the Vaishali Institute for Post-Graduate studies in Prakrit and Jainology at Vaishali. In the establishment of the Mithila Institute the State Government received a generous donation from Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.*

*2 As part of this programme of rehabilitating and reorientating ancient learning and scholarship, the editing and publication of this volume have been undertaken with the co-operation of scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.*

## प्राक्कथनम्

न्यायाचार्योदयनाचार्यस्य न्यायकुसुमाञ्जलिग्रन्थः आमोदविवेकबोधनी-परिमलटीकाचतुष्टयसमन्वितः न्यायतत्त्वविदां पुरतः समुपस्थाप्यते। आमोदस्तु बाल्ये एव जगत्त्रयवर्णनसमर्थस्यायाचिमिश्रसूनोः श्रीशङ्करमिश्रस्य प्रसन्नगम्भीरा टीका वर्तते। परवर्तिभिराचार्यैरिममामोदमाधाय प्रकाशकरणे सामर्थ्यमासादितमित्युच्यते तदापि न भवत्यतिशयोक्तिदोषदुष्टं वचः, श्रीमद्वरदाचार्यविरचिता बोधनी तु बोधार्थं स्वनाम्नः साफल्यमेवाधत्ते। विवेको हि न्यायतत्त्वविदां विवेकायैवेति। इयं विवेकटीका नव्यन्यायशैलीमवलम्ब्य प्रकाशविवेचिकापि कुसुमाञ्जलिप्रकाशिकैव! महामहोपाध्यायश्रीहरिहरकृपालुद्विवेदिविरचितः परिमलस्तु प्रकाशार्थाविष्करणपूर्विका न्यायकुसुमाञ्जलितत्त्व-प्रकाशिका काचिदपूर्वैव टीका। आसु टीकासु बोधन्याः तृतीयस्तवकपर्यन्तमेव उपलब्धिरिति बालानां कृते महत्कष्टकरमासीत्। अस्मिन् संस्करणे सम्पूर्णस्य ग्रन्थस्य टीका सन्निवेशिता। अस्य संस्करणस्य महद्वैशिष्ट्यं महामहोपाध्यायस्य दुर्लभतमा अश्रुतपूर्वा टीका। कतिपयकारिकास्वेवेयं टीका परं सापि नात्यल्पयशाति ईशस्य न्यायचर्चाप्रसङ्गे काश्यां वसन्तः मोक्षार्थमेवेमां टीकां विरचयन्तः स्वपुण्यप्रतापैरसमापितग्रन्थाः भगवदभिन्नतां प्राप्तवन्तः।

ग्रन्थोऽयं निरीश्वरवादिनां कृते प्रबलतमयुक्तिसमन्वितः अद्वितीय एव विद्यते। न केवलमीश्वरस्यैव चर्चा एतस्मिन् ग्रन्थेऽपि तु न्यायशास्त्रान्तर्गतस्य सर्वस्यापि विषयस्योहापोहात्मिका चर्चा अत्र सन्निहिता वर्तते। आचार्यस्य

ईश्वरे कीदृशो विश्वास इति तु एतद्ग्रन्थाध्ययनेनैव सुस्पष्टमिवाभाति। किमधिकं "यं कारवोऽपि विश्वकर्मेत्युपासते" इति वाक्येनैव ईश्वरे गभीरविश्वासस्य परिचयो जायते। न्यायकुसुमाञ्जलिस्तवकार्थसंग्राहकश्लोकेषु यादृशी भावना आचार्येणाभिव्यक्ता तया एतस्य परमभक्तता सुस्पष्टा भवति। आचार्यः एकत्र हे शिव ? हे करुणामय ? इत्यादिशब्दैरेव भगवतः आह्वानं करोति। अन्यत्र अकाट्यसूक्ष्मतमजालैः ईश्वरास्वीकर्तॄणां मतानि सर्वथा निराकरोति। ये ईश्वरं न स्वीकुर्वन्ति ते परलोकमपि नाङ्गीकुर्वन्ति, अतः ईश्वरविरुद्धमतखण्डनमेव एतस्य ग्रन्थस्य परमं प्रयोजनम्। ईश्वरोपासनां विना नानाविधप्रपञ्चासत्यजालादुद्धारो नैव भवितुमर्हति। युक्त्या वेदस्य शास्त्रस्य च प्रमाण्यं व्यवस्थापितवान्। न्यायप्रक्रियामनुसृत्य ईश्वरस्य विचारः अस्मिन् शास्त्रे वर्तते एतद्ग्रन्थरचनया किमन्यत् न्यायशास्त्रस्य पूर्णतामेव सम्पादितवान्।

वेदादिशास्त्रे सांख्यशास्त्रस्य प्रशंसा वर्तते स्मृतिपुराणादिष्वपि कपिलादेः सांख्याचार्यस्य प्रशंसा विद्यते परं सांख्याचार्यः ईश्वरं नैवाङ्गीकरोति अतः एतन्मतखण्डनेऽपि आचार्यस्य न भवति संकोचः। कर्मानुष्ठानं भारतीयस्य महद्वैशिष्ट्यम्, कर्मकाण्डपरित्यागे हिन्दुत्वमेव न स्थास्यति। कर्मकाण्डस्य मीमांसकाः भट्टप्रभृतयः आचार्याः समभूवन्। इमेऽपि ईश्वरं नैव स्वीकुर्वन्ति। एतेषां मतानापि विशिष्टं खण्डनमत्र महताडम्बरेण कृतवान्। आचार्यशङ्करोऽपि एतच्छास्त्रसम्मतमतानां खण्डनं सम्पादितवान्, किन्तु, उभयोः वर्तते वैशिष्ट्यम् आचार्यपादशङ्करः विधिनिषेधकर्मातिक्रम्य सन्न्यासी सन्नेव मीमांसकादिमतस्य खण्डनमकार्षीत् परमाचार्यः उदयनः कर्मकाण्डेन संश्लिष्टः गृहस्थाश्रमोचितानि अवश्यकर्तव्यानि कर्माणि सम्पादयन्नपि तन्मतखण्डनमकरोत्, एतेन आचार्यस्य ईश्वरं प्रति विशिष्टविश्वास एव ध्वन्यते ये परलोकं न स्वीकुर्वन्ति त एव प्रकृतनास्तिकाः, परमाचार्यः ये ईश्वरं न स्वीकुर्वन्ति तेऽपि नास्तिका इत्येव वदन्ति।

न्यायकुसुमाञ्जलिः पञ्चसु स्तवकेषु विभक्तः। क्रमशः एषु स्तवकेषु प्राधान्येन चार्वाकस्य, मीमांसकस्य सौगतस्य, दिगम्बरस्य सांख्याचार्यस्य च विरुद्धमतानां निरासः विद्यते।

१ चार्वाकाः परलोकार्थं स्वर्गादिफलार्थम्वा अदृष्टस्य ( धर्माधर्मयोः ) कारणत्वं नैव स्वीकुर्वन्ति । परलोकः स्वर्गादिकं वा नास्ति "अलौकिकस्य परलोकसाधनस्याभावादिति" कर्मसम्पादनानन्तर परक्षणे एव यत्फलं भावि तद् भवति, भविष्यार्थं कर्मकरणं निष्फलम् । अतः धर्माधर्मयोरधिष्ठाता कर्मफलदाता वा कश्चिन्नास्ति एवं देहेन्द्रियादिव्यतिरिक्तः आत्मा नास्ति । यदि कार्यकारणभावः प्रामाणिकः स्यात्तदा क्षित्यादिकर्तृत्वेनेश्वरसिद्धिः स्यात् । पृथिव्यादिधर्मिस्वरूपदर्शनेऽपि तत्र कार्यत्वस्य सन्दिग्धत्वात् । मीमांसकादयः पृथिव्या अकार्यत्वमास्थुरिति । नैयायिकादीनाञ्च कार्यत्वमित्युभयविधवाक्यदर्शनेन सन्देहो जायते । यदि कार्यत्वमत्र प्रत्यक्षं स्यातदा तत्कर्तृत्वस्यास्मदादिष्वसंभवेन सर्वज्ञत्वसर्वशक्तित्वादिविशिष्टलोकोत्तरः परमात्मा कल्प्येतापि । परलोके सति तत्साधनस्य यागादेस्तद्दर्शिन उपदेष्टुरपेक्षा च स्यात्, परलोकाभावे नास्ति तत्साधनस्य तद्द्रष्टुश्चापेक्षा अलौकिकस्यादृष्टस्यासिद्धौ तदधिष्ठातृत्वेनापि नेश्वरसिद्धिः । प्रथमस्तवके प्राधान्येन एतस्यैव मतस्य निरासः जायते, अस्मिन्नेव प्रसङ्गे कार्यकारणभावस्यापि व्यवस्था साध्यते, कार्यस्य आकस्मिकत्वखण्डनम्, मीमांसकमतसिद्धस्य शक्तिपदार्थस्य खण्डनम्, ब्रह्मकारणतावादस्य प्रकृतिकारणतावादस्य च खण्डनम्, भोक्तृपुरुषादृष्टव्यवस्था, अभावस्य कारणत्वव्यवस्था, बुद्धेः कर्तृत्वखण्डनम्, आत्मनः कर्तृत्वव्यवस्था क्षणभङ्गवादस्य निरासः, कारणतायाः स्वाभाविकत्वम्, उपाधिविचारः, नित्यपरममहतः कारणत्वव्यवस्था, इत्येतेषां विषयाणां विश्लेषणं प्रथमस्तवके जायते ।

२ द्वितीया बिप्रतिपत्तिर्मीमांसकस्य वर्तते ईश्वरस्य सद्भावं बिनापि परलोकसाधनानुष्ठानं सम्भवतीति न तदनुरोधेन ईश्वरसत्तापेक्ष्यते । स्वतः शब्दे दोषाः न सन्ति वक्तृदोषादेव शब्दो मिथ्यार्थं ब्रूते इति पौरुषेयवाक्ये वक्तृदोषसम्भावनया यावद्वक्तुराप्तत्वं न निश्चीयते तावत्तदुपदिष्टे स्वल्पायाससाधनेऽपि पुरुषस्य निःशंकप्रवृत्तिर्न भवतीति बह्वायाससाध्ये कर्मणि कः प्रवर्तेत ?

वेदः नित्यः, वेदस्य वक्ता कोऽपि नास्ति, अनादिकालादेव वेदः वर्तते,

वेदस्यापौरुषेयत्वेन नित्यनिर्दोषतया स्वतः प्रमाणतया वेदवक्तृत्वेन नेश्वरस्वीकारस्यावश्यकतास्ति। वेदोपदिष्टे यागादावलौकिकसाधने पुरुषप्रवृत्तिस्यादेव वैधकर्मणः सम्यगनुष्ठानेन च जीवस्य सुखादिप्राप्तिरपि स्यात्। जीवस्याकांक्षितफलं स्वर्गप्राप्तिरेव। अतः अलौकिकसाधने पुरुषप्रवृत्त्यर्थं नेश्वरसिद्धेरावश्यकता। परत प्रामाण्यपक्षेऽपि सर्वज्ञप्रणीतत्वेन महाजनपरिगृहीतत्वेन च प्रामाण्यावधारणादलौकिकस्वर्गादिसाधनयागादौ प्रवृत्तिः सूपपद्यत इति नैतदनुरोधेनेश्वरसिद्धिः।

द्वितीयस्तवके प्राधान्येन एतन्मतस्यैव खण्डनं विद्यते, प्रसङ्गतश्च प्रमाज्ञानस्य गुणजन्यत्वव्यवस्थापनम्, महाप्रलयव्यवस्थापनम् वेदादिसम्प्रदायस्य क्रमिकह्रासादेः विषयस्य आलोचना च विद्यते।

३ तृतीया विप्रतिपत्तिः बौद्धानाम् कदापि कुत्रापि यस्य वस्तुनः प्रत्यक्षतः उपलब्धिर्नास्ति तादृशं किमपि वस्तु नास्ति, कदापि केनापि कुत्रापि सर्वज्ञः पुरुषः नैव दृष्टः, तद्दर्शनसम्भावनापि नास्ति, अतः, सर्वज्ञः परमेश्वरः आकाशकुसुमायमानः।

वीरराघाचार्यस्य मते तृतीया विप्रतिपत्तिरपि मीमांसकस्यैव—"यथाऽग्निरनुष्णः प्रमेयत्वादित्यनुमानं प्रत्यक्षप्रमाणबाधितम्, एवमीश्वरसाधकानुमानमपि प्रत्यक्षेणानुमानेन शब्देनार्थापत्त्याऽनुपलब्ध्या वा बाधितुं शक्यमिति पुनर्मीमांसकस्य तृतीया विप्रतिपत्तिः"[१]।

तृतीये स्तवके प्राधान्येन एतस्यैव मतस्य खण्डनं वर्तते, अस्मिन् स्तवके अलीकस्य तुच्छस्य अभावप्रतियोगित्वखण्डनमभावविशेषणत्वखण्डनञ्च वर्तते, योग्यानुपलब्धिनिरूपणम्, ईश्वरबाधकानुमानखण्डनम्, अनुमानप्रामाण्यव्यवस्थापनम्, अनुमानस्य प्रमाणत्वाभावेऽपि सम्भावनामात्रेण प्रवृत्तेरुपपत्तिरिति चार्वाकमतखण्डनम् मीमांसकमतसिद्धोपमानखण्डनम्, न्यायमतसिद्धोपमानव्यवस्थानम्, शब्दस्य प्रमाणान्तरत्वव्यवस्थापनम्, अर्थापत्तेरनुपलब्धेश्च प्रमाणान्तरत्वखण्डनम्, इत्यादीनां विषयाणां विश्लेषणमत्र वर्तते।

---

१ न्या० कु० वि० पृ० ७

४ जैनानां मते नैयायिकस्वीकृतेश्वरसद्भावेऽपि तत्र प्रमाणं नास्ति, यतः, ईश्वरस्य सर्वविषयकं ज्ञानं प्रमाज्ञानलक्षणसमन्वितं नास्ति।

चतुर्थस्तबके प्राधान्येन एतन्मतस्यैव निरासो भवति, प्रसङ्गतः प्रमाज्ञानस्य प्रमाणस्य च लक्षणम्, ज्ञाततायाः खण्डनम्, ज्ञानविषयव्यवस्थोपपत्तिः, प्रमातुः प्रमाणादेश्च लोचनं वर्तते।

५ सांख्यानां विश्वासः वर्तते यत् ईश्वरसाधकं प्रमाणं नास्ति, जगत्कर्तृत्वेन क्षित्यङ्कुरादिकर्तृत्वेन च ईश्वरानुमानं न भवितुमर्हति।

पञ्चमस्तबके प्रधान्येन एतस्यैव खण्डनं विद्यते, प्रसङ्गतः वेदस्य पौरुषेयत्वव्यवस्था, ईश्वरसाधकानुमानस्य बलवत्वम् एतद्विषये अनुकूलतर्कस्यावतारणा, प्रतिकूलस्य तर्कस्य आभासत्वम्, विधिप्रत्ययार्थनिरूपणम्, आख्यातस्य यत्नार्थत्वप्रतिपादनम् सकलस्य वेदस्य परमेश्वरे तात्पर्यावधारणमित्यादिविषयाणां विचारः वर्तते।

वेदे सर्वेषामेव दार्शनिकतत्त्वानां निरूपणं वर्तते। मन्त्रे संक्षेपेणैव विषयनिर्देशः विद्यते तस्यैव च उपनिषत्काले विकासेन विश्लेषणं क्रियते।

परमेश्वरः सृष्टौ किमधिष्ठानं किञ्चोपादनम् एतादृशजिज्ञासायां एतस्य मन्त्रस्य अवतारणा सर्वैरेव दार्शनिकाचार्यैः क्रियते।

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतो बाहुरुतविश्वतस्पात्।
संबाहुभ्यां धमति सत्पतत्रै-
र्द्यावाभूमी जनयन् देव एकः॥

ऋ० सं० ८।३।१६।३

जगत्स्रष्टा परमेश्वरः सर्वात्मकः इति अधिष्ठानोपादाननिरपेक्षः जगतः, सृष्टौ समर्थः। परमेश्वरः सर्वतोव्याप्तचक्षुः, स विश्वतोमुखः, विश्वतोबाहुः, विश्वतस्पाच्च एवम्भूतः परमेश्वरः स्वात्मन्येव त्रैलोक्यसृष्टिं कर्तुं समर्थो भवति, बाहुभ्यां द्युलोके सम्यग्भावेन प्रेरणं करोति, गमनशीलचरणैश्च पृथिवीं सम्य-

गभावेन प्रेरयति। लोकेषु द्युलोकस्य भूलोकस्य च प्राधान्यात् अनयोरेव श्रुतौ निर्देशः। द्युलोकस्य भूलोकस्य च उत्पादनं कृत्वा स्वप्रकाशः देवः एकः तिष्ठति। एतस्यैव मन्त्रस्य छायां गीतायां त्रयोदशाध्याये अनेन मन्त्रेण संगृह्णाति--

सर्वतः पाणिपादं तत् सर्वतोऽक्षिसमन्वितम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥

गी० १३।१४

न्यायकुसुमाञ्जलौ पञ्चमस्तवकस्य तृतीयकारिकायाः व्याख्यानप्रसङ्गे ऋङ्मन्त्रस्यैतस्योद्धारः कृतः। तत्रैतस्य मन्त्रस्य व्याख्यानमेवं प्रदर्शितम्।

—अत्र प्रथमेन सर्वज्ञत्वम् चक्षुषा दृष्टेरुपलक्षणात्, द्वितीयेन सर्ववक्तृत्वं मुखेन वागुपलक्षणात्, तृतीयेन सर्वसहकारित्वम् बाहुभ्यां सहकारित्वोपलक्षणात्, चतुर्थेन व्यापकत्वम्, पदा व्याप्तेरुपलक्षणात्, धर्माधर्मप्रधानकारणत्वम् तौ हि लोकयात्रावहनाद्बाहू। षष्ठेन परमाणुरूपप्रधानाधिष्ठानत्वम्, ते हि गतिशीलत्वात् पतत्रव्यपदेशाः पतन्तीति। संधमति संजनयन् इति च व्यवहितोपसर्गसम्बन्धः, तेन संयोजयति समुत्पादयन् इत्यर्थः। "द्यावा" इति ऊर्ध्वसप्तलोकोपलक्षणम्, "भूमिरिति" अधस्तात्, एक इति अनादिता[१]। अस्मिन् ऋङ्मन्त्रे परमेश्वरस्य षड्विशेषणानि उपात्तानि। प्रथमेन विशेषणेन परमेश्वरः सर्वज्ञः इति सर्वद्रष्टा इति सूच्यते। सर्वतो व्याप्तचक्षुरसौ, चक्षुषैव हि तस्य प्रत्यक्षज्ञानं जायते। अस्माकं च न सर्वतो चक्षुः व्याप्तमतो वयमल्पज्ञाः, परमेश्वरश्च सर्वतो व्याप्तचक्षुरिति सर्वविषयकं प्रत्यक्षात्मकं ज्ञानं जायते, ईश्वरस्य सर्वविषयकं प्रत्यक्षज्ञानं च नित्यम् तन्नेन्द्रियजन्यम्, पश्यत्यचक्षुरित्यनेनैतदेवोक्तम्, कोऽपि सर्वतश्चक्षुश्चेदवश्यमेव सर्वविषयकं ज्ञानं तेषां भविष्यति, ईश्वरस्य सर्वविषयकं प्रत्यक्षात्मकं ज्ञानं वर्तते इति असौ विश्वतश्चक्षुरुच्यते। अनित्यचाक्षुषज्ञानोत्पत्तौ नयनस्य अपेक्षायामपि ईश्वरस्य नित्यं प्रत्यक्षज्ञानमिति तस्य चक्षुषः अपेक्षा नास्ति। ईश्वरस्य सर्वविषयकं प्रत्यक्षात्मकं ज्ञानमिति सूचनार्थमेव श्रुतिः ईश्वरं विश्वतश्चक्षुरिति कथयति। एतदेव सूचनार्थमाचार्य उदयनः कथयति "चक्षुषा दृष्टेरुप-

---

१ न्या० कु०, पृ० ५७६

लक्षणात्"। अनेन मन्त्रेण ईश्वरस्य चक्षुः वर्तते इति नैव सूच्यत अपि तु चक्षुः-शब्देन ईश्वरस्य सर्वविषयकमपरोक्षज्ञानमस्तीति सूच्यते।

"विश्वतोमुखः" इति द्वितीयविशेषणेन ईश्वरस्य सर्ववक्तृत्वं संसूचितम्। प्राणिनां हितानुशासकः हितोपदेष्टा परमेश्वर एव। हितोपदेष्टृत्वसमर्थनार्थमेव सर्वज्ञत्वमपि प्रदर्शितम्। न्यायकुसुमाञ्जलौ तृतीयस्तवकस्याष्टादशकारिकायामाचार्यः परमेश्वरस्योपदेष्टृत्वरूपेण सर्ववक्तृत्वमुद्घोषितम्, पातञ्जलसूत्रेऽपि परमेश्वरस्य प्रथमोपदेष्टृत्वमुक्तम् — "पूर्वेषामपि गुरुः कालेनाव्यवच्छेदात् (पा० सू० १।२६) अनेन मन्त्रेण ईश्वरस्य सर्वतोव्याप्तं मुखं वर्तत इति नैव प्रतिपादितमपि तु ईश्वर एव प्राणिमात्रस्य हितोपदेष्टा इत्येव सूचितम् एतदर्थमेव उदयनः "मुखेन" वागुपलक्षणात्।

"विश्वतो बाहुः" इति तृतीयविशेषणेन ईश्वरस्य सर्वकार्येषु सहकारित्वं प्रतिपादितम्। ईश्वरः सर्वस्य कार्यस्य सहकारिकारणम्, एतदर्थमेव शास्त्रे ईश्वरः सर्वकर्ता इत्युच्यते। साधारणतया हस्तेनैव लोकः सर्वं कार्यं करोति। ईश्वरः सर्वकार्येष्वेव साधारणं कारणमिति ईश्वरः "विश्वतोबाहुः" कथ्यते। ईश्वरस्य हस्तप्रतिपादनार्थं श्रुतौ विश्वतोबाहुरिति नैवोक्तम्। ईश्वरः अपाणिपादः ईश्वरः अशरीरी अतः तस्य हस्तसम्भावना नास्ति। इत्युक्तवान् आचार्यः— "बाहुना सहकारित्वोपपादनात्"। विश्वतस्पात्" इति चतुर्थविशेषणेन ईश्वरस्य सर्वव्यापकत्वं प्रतिपादितम्। सर्वगतं द्रव्यमेव विभुद्रव्यं सर्वव्यापकं वा द्रव्यं भवति। लोके गमनं चरणाभ्यां भवति इति सर्वगतत्वसाधनार्थं "विश्वतस्पात्" इत्युच्यते। ईश्वरस्य चरणौ वर्तेते एतदर्थं "पात्" शब्दोच्चारणं श्रुतौ नास्ति। ईश्वरस्य अशरीरित्वात् अपाणिपादत्वाच्च। अत एवाचार्येणोक्तं "पदा व्यापकत्वोपलक्षणत्वात्"।

"संबाहुभ्यां धमति" इतद्विशेषणेन धर्माधर्मरूपस्य प्रधानकारणस्य निर्देशः। धर्मः अधर्मश्च सर्वकार्यस्य बीजभूतः। बीजं यथा अङ्कुररूपकार्यजनने मुख्यं प्रधानं कारणं तथैव धर्मः अधर्मश्च समस्तकार्यजनने मुख्यं कारणम्।

धर्माधर्मात्मकमुख्यकारणद्वयमेव ईश्वरस्य बाहुयुगलमिति प्रतिपादयति श्रुतिः। आचार्यः एतस्य धर्माधर्मयोः बाहुयुगलशब्देन प्रतिपादने युक्तिं प्रतिपादयन् कथयति "तौ हि लोकयात्रावहनाद् बाहू" लोकयात्राशब्दस्य अर्थः लोकव्यवहारः। धर्माधर्मौ हि सर्वविधलोकयात्रानिष्पादकौ इति बाहुयुगलशब्देनोच्येते। व्यवहारो सुखस्य दुःखस्य वा जनको भवति। धर्मः सुखस्य अधर्मः दुःखस्य कारणम्। अतः धर्माधर्मौ लोकस्य यात्रायाः निष्पादने समर्थौ भवतः।

'संपतत्रैः" एतेन षष्ठविशेषणेन परमाणुरूपारम्भकद्रव्यस्य निर्देशः वर्तते, सर्वज्ञः ईश्वरः अधिष्ठाता अदृष्टमारम्भकं परमाणुरूपं च ईश्वरस्याधिष्ठेयम्। चेतनादृष्टपरमाण्वादयः चेतनेश्वराधिष्ठिताः सन्तः कार्यस्य जनकाः भवन्ति। चेतनानानधिष्ठिताः सन्तः अचेतनजडपदार्थाः कार्यस्य जनकाः न भवितुमर्हन्ति। चेतनकुम्भकारादिना अनधिष्ठिता च चेतनदण्डचक्रादयः घटादिकार्यस्य जनकाः न भवितुमर्हन्ति। चेतनकुम्भकारादिना अधिष्ठिताः सन्त एव अचेतनपदार्थाः कार्यजनकाः भवन्ति इति लोकप्रमाणेनापि सिद्धम्। एवमेवाचेतनपरमाण्वादयः ईश्वराधिष्ठिताः सन्तः एव कार्यस्य जनकाः भवितुमर्हन्ति, नान्यथा। ईश्वराधिष्ठेयवस्तु परमाणुः प्रधानं कारणम्। परमाणुः समवायिकारणम्। कार्यजनने समवायिकारणमेव प्रधानम्। असमवायिकारणं निमित्तकारणञ्चाप्रधानम्। श्रुतौ "पतत्र" शब्देन मुख्याधिष्ठेयस्य समवायिकारणात्मकस्य परमाणोः निर्देशः विद्यते। परमेश्वरः धर्माधर्मात्मकबाहुयुगलेन मुख्याधिष्ठेयस्य समवायिकारणस्य परमाणोः निर्देशं करोति। मन्त्रे "संधमति" शब्दस्यार्थः संयोजति इति भवति। परमेश्वरः धर्माधर्मात्मकबाहुयुगलेन परमाणुसमूहं सयोजयति धर्माधर्मसापेक्षः सन्नेव ईश्वरः आरम्भकपरमाणुसमूहेषु क्रियां समुत्पाद्य संयोजयति। मन्त्रे "देव" शब्दस्यार्थः परमेश्वरः "एक" शब्दस्यार्थः अनादिः।

अनेनैव मन्त्रेणाचार्यः उदयनः परमाणुकारणतावादस्य श्रौतत्वं प्रतिपादयति। उदयनाचार्यात्प्राचीनो व्योमशिवाचार्योऽपि सृष्टिसंहारप्रकरणेऽनेनैव मन्त्रेण ईश्वरस्य श्रुतिसिद्धत्वं प्रतिपादितवान्। "इत्यागमेन प्रसिद्धेः"

इत्येव तत्रोक्तवान्। अचार्योऽपि एतन्मन्त्रोपक्रमे "इममर्थमागमः संवदति" इत्येव कथितवान् इति अनुमानप्रमाणेनागमप्रमाणस्य एकार्थप्रतिपादकत्वं सूचयति। न्यायभाष्येऽपि "आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता ईश्वरः" इत्यपि तदर्थमेव वर्तते।

"पतत्र" शब्देन परमाणोः निर्देशः वर्तते। "पतन्तीति" निर्वचनेन पतनशीलपदार्थः "पतत्र" शब्दवाच्यो भवति। "पतन्त्यनेन" इति व्युत्पत्त्या पक्षिपत्रं पतत्रशब्दवाच्यम्। आचार्यः कर्तृवाच्यप्रत्ययेन पतत्रशब्दार्थप्रदर्शनं कृतवान्। गमनं पत् धातोरर्थः। "ते हि गतिशीलत्वात्पतत्रव्यपदेशाः—पतन्तीति" परमाणुः गतिशीलः, अतः, पतत्रशब्दव्यपदेश्यः। प्रलयदशायां परमाणुः गतिशीलः द्व्यणुकादिः गतिशीलस्तु ईश्वरेच्छावशतः इति द्व्यणुकादावपि क्रिया भवति, किन्तु प्रलयदशायामपि परमाणौ गतिरस्ति तद्दशायामपि तत्र गतिः न निवर्तते। प्रशस्तपादभाष्यस्य सृष्टिसंहारविधिप्रकरणस्य टीकायामुदयनः प्रलयदशायां "कालावच्छेदोपाधितया वर्तमानानि च महाभूतसंक्षोभप्रभववेगजानि च कर्माणि सन्तन्यमानान्यवतिष्ठन्ते। अन्यथा कालावच्छेदानुपपत्तौ पुनः सर्गानुपपत्तेः। "तदिदमुक्तं तावन्तमेव कालमिति" (कि० पृ० ६२) महाभूतचतुष्टयस्य संक्षोभजातवेगात् उत्पन्नः परमाणुकर्मप्रवाहः सन्तानक्रमे उत्पन्नो भवति। अतः प्रलयदशायां परमाणुकर्मप्रवाहस्य निवृत्तिर्न भवति। प्रलये परमाणुक्रिया यदि न स्यात्तदा अखण्डमहाकालावच्छेदकक्रियारूपोपाध्यभावात् सृष्टिकालसमपरिमाणः प्रलयकालः न स्यात् तथा प्रलयकालावसानाभावात् पुनः सृष्टिर्न स्यात्। प्रशस्तपादभाष्यस्य सेतुटीकायां पद्मनाभमिश्रः कथयति—प्रलये परमाणुः गतिशीलस्तिष्ठतीति परमाणुः पतत्रशब्दव्यपदेश्यो भवति। प्रलये परमाणुषु क्रियाः तिष्ठन्ति, परं संयोगविभागौ न जायेते। अत्रेयं शङ्का भवति यत् संयोगविभागाजनिका क्रियैवाप्रसिद्धा, संयोगविभागयोरनपेक्षकारणमेव क्रिया। प्रलये परमाणोः क्रियाजन्यसंयोगसत्त्वेऽपि असौ आरम्भकसंयोगो नास्ति। प्रलये अदृष्टस्य निरुद्धवृत्तित्वात् आरम्भकसंयोगो न भवितुमर्हति[१]।

१ प्रलये परमाणुषु वेगकर्मणी तिष्ठतः। कथं विना कालावच्छेदकानुपपत्तौ तावन्तमेव कालमिति प्रलयपरिमाणादुपपत्तेः। परमाणुक्रियासत्त्वेऽपि संयोगविभागौ अपि नोत्पद्येते। तथा च प्रविभक्ताः संयोगरहिता इत्येव तत्त्वम्। से० पृ० २८६

न्यायकुसुमाञ्जलिद्वितीयस्तवकस्य तृतीयकारिकाव्याख्याने किरणावल्या-
शुक्तस्य विस्तृतं व्याख्यानं प्रदर्शितवान्। तैत्तिरीयारण्यकस्य नारायणोपनिषद्भा-
ष्ये उदयनाचार्यव्याख्यानमेव सायणाचार्योऽपि प्रतिपादितवान्।

## ईश्वरस्य एकत्वम्

देवस्य नानात्वेऽपि ईश्वरस्य नानात्वं नास्ति। देवः मनुष्यश्च ईश्वरसृष्टेः जीववि-
शेषः। ईश्वरसदृशः कोऽपि पदार्थः नास्ति। येन प्रमाणेन ईश्वरः सिद्ध्यति तेनैव
प्रमाणेन ईश्वरस्यैकत्वमपि सिद्ध्यति। ईश्वरस्यानेकत्वखण्डनार्थं न्यायवार्त्तिककारः
उद्योतकरः कथयति—ईश्वरस्यानेकत्वे किं बाधकम्? विरुद्धेच्छासम्पन्नस्येश्वरद्व-
यस्य सद्भावे कस्मिन्नपि एकस्मिन् वस्तुनि प्रवृत्तिर्न स्यात्। यथा एकस्मिन् वस्तुनि
इदं भवतु, इदं न भवतु, इदं समीचीनं भवतु इदं समीचीनं न भवतु, एतादृश-
विरुद्धेच्छाद्वयस्यानुसारं किमपि कार्यं न भवितुमर्हति। एकमेव वस्तु एकस्मिन्
समये नूतनं पुरातनं च न भवितुमर्हति। उभयेश्वरेच्छा प्रतिहता भविष्यति
इति उभावपि अनीश्वरौ स्याताम्। अप्रतिहतैश्वर्याभावे ईश्वरो न भवितुम-
र्हति। यस्य ऐश्वर्यमप्रतिहतं भवति स अनीश्वरो भवति। उभयोर्यदिच्छया
कार्यं भवेत् स ईश्वरोऽन्यश्च अनीश्वरः स्यात्।

वाचस्पतिमिश्रः व्यासभाष्यव्याख्यानावसरे कथयति अनेकेश्वरस्वीका-
रेऽपि काचित् क्षतिर्नास्ति, यतः ईश्वरे रागद्वेषौ न स्तः इति परस्परविरुद्धेच्छा
न भविष्यति। अत्रेदं विचारणीयम्, यदि सर्वेषु ईश्वरेषु एकविधैव इच्छा
सदा भविष्यति तदा एकेनैव ईश्वरेण कार्यं चलिष्यति अनेकेश्वरस्वीकारस्य
का आवश्यकता? एकस्य ईश्वरस्य इच्छयैव कार्यं भविष्यति। ईश्वरस्य नित्या
ईशना इति एक एव ईश्वरः।

## ईश्वरस्य सर्वज्ञत्वम्

न्यायवैशेषिका आचार्याः कथयन्ति यत् ईश्वरः जगतः स्रष्टा अत एवासौ

सर्वज्ञः इति तस्य सर्वज्ञत्वसाधनार्थं प्रमाणस्य आवश्यकता नास्ति। न्यायवार्तिककारश्च एतदेवाभिधत्ते—ईश्वरः यदि सर्वज्ञः न स्यात् तदासौ जगतः स्रष्टा न भवितुमर्हति[1]। तत्र वाचस्पतिमिश्रोऽपि कथयति- कार्योपादानकारणाभिज्ञ एव कार्यस्य कर्ता भूत्वा भवतीति जगत्कर्ता ईश्वरः जगद्रूपकार्यस्योपादानकारणाभिज्ञ एवास्ते। अभिज्ञशब्देन प्रत्यक्षज्ञानमत्र संगृहीतम्, जगतः उपादानं परमाणुः इति ईश्वरः अदृश्यपरमाणुप्रत्यक्षज्ञानवान्। "अदृश्यद्रष्टा सर्वज्ञः" (न्या० कु० ३।१६) अदृश्यपदार्थः इन्द्रियैः ज्ञातो न भवति अतः यः इन्द्रियापेक्षां विना दर्शने समर्थः स एव सकलपदार्थज्ञानवान्।

विधिविवेके मण्डनमिश्रः न्यायवैशेषिकमते सर्वज्ञत्वसाधकमनुमानं प्रदर्शितवान्, "सर्वकार्याणां कर्तृत्वादेव तर्हि सर्वज्ञत्वम्। उपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञा हि कुलालादयः कर्तारः। सर्वेषाञ्च कार्याणाम् ईश्वरः कर्ता इति समस्तकार्योपादानाद्यभिज्ञः, तथा च सर्वज्ञ[2] इति"

विधिविवेकटीकायां न्यायकणिकायां वाचस्पतिमिश्रः कथयति - "सर्वकार्याणां तनुभुवनादीनामुपलब्धिमान् कर्ता प्रतीयमानोऽन्तर्भावितसर्वज्ञत्व एव प्रतीयते।··· ननु भवतु कर्तृता, सर्वज्ञता तु कस्मादित्यत आह—उपादानोपकरणसम्प्रदायप्रयोजनाभिज्ञा हि कुलालादयः कर्तारः। उपादानमिह परमाणुजातिचतुष्टयम्। उपकरणमसमस्तक्षेत्रज्ञसमवायिनौ धर्माधर्मौ। सम्प्रदानम्—क्षेत्रज्ञाः, यानयं भगवान् स्वकर्मभिरभिप्रैति। प्रयोजनं—सुखदुःखभोगः। एतदुक्तं भवति ये यत्कर्तारः ते तदुपादानाद्यभिज्ञाः यथा कुलालादयः। सर्वेषाञ्च कार्याणामीश्वरः कर्तेति समस्तोपादानाद्यभिज्ञः। तथा च सर्वज्ञः[3]"।

---

१ न च बुद्धिमत्तया विना ईश्वरस्य जगदुत्पादो घटते।

न्या० वा० ४।१।२१

२ वि० वि० पृ० २६०—२६१

३ न्याय क० पृ० २६०—२६१

एतत्सर्वं बौद्धाचार्यः ज्ञानश्रीमित्रः ईश्वरभङ्गकारिकायां पूर्वपक्षरूपेणोक्तवान्। न्यायमते ईश्वरस्य सर्वकार्यकर्तृत्वेन सर्वज्ञत्वं सिद्ध्यति। यः पुरुषः यस्य कार्यस्य कर्ता भवति स तस्य कार्यस्य उपादानस्य उपकरणस्य सम्प्रदानस्य प्रयोजनस्य च ज्ञाता भवति। उपादानादेर्ज्ञानं विना कर्ता कार्यस्य उत्पादनं कर्तुं नैव समर्थो भवति। यथा घटकार्यस्य उपादानं मृत्तिका, उपकरणं दण्डचक्रादि सम्प्रदानं घटस्य ग्राहकः, प्रयोजनं जलाहरणादिकम्। एतदुपादानादिकं ज्ञात्वैव कुम्भकारः घटस्य निर्माणं करोति। तथैव सकलकार्यकर्तुः ईश्वरस्यापि समस्तकार्योपादानादेर्ज्ञानमस्ति इति वक्तव्यम् इति तस्य सर्वज्ञताऽस्ति। जगन्निर्माणे उपादान चतुर्विधपरमाणवः। द्रव्यारम्भकचतुर्विधपरमाणुषु पार्थिवपरमाणुः जलीयपरमाणुः तैजसीयपरमाणुः वायवीयपरमाणुश्च। मनसोऽणुत्वे अपि, तन्न द्रव्यारम्भकम्। उपकरणम्—जीवात्मनि समवेतौ धर्माधर्मौ। सकलबद्धजीवात्मन्येव धर्माधर्मौ समवायसम्बन्धेनाश्रितौ। जगत्सृष्टौ सम्प्रदानं जीवात्मसमूहः। भोक्तृसृष्टिं जीवानां भोगार्थमेव ईश्वरः जगतः करोति। प्रयोजनम्—सुखदुःखयोर्भोगः। जीवात्मनः सुखदुःखभोग एव सृष्टेः पर्यवसानम्। सृष्टिं विना जीवस्य सुखदुःखभोगः न भवितुमर्हति। घटादिकर्ता कुलालादिः यथा घटादिकार्यस्य उपादानाद्यभिज्ञः तथैव ईश्वरोऽपि सकलस्य कार्यस्य कर्ता इति कार्योपादानाद्यभिज्ञः, सकलकार्योपादानाद्यभिज्ञश्चावश्यमेव सर्वज्ञः भविष्यति।

## ईश्वरे अनुमानप्रदर्शनम्

न्यायवैशेषिकाचार्याः ईश्वरसिद्ध्यर्थमनुमानप्रमाणप्रदर्शनं कृतवन्तः। वात्स्यायनः कथयति—अनुमानं प्रत्यक्षागमाविरोधि। प्रत्यक्षेणागमेन च प्रमाणेन निश्चितस्यार्थस्य अन्वीक्षा अनुसन्धानमनुमानम्। प्रत्यक्षागमाधिगतस्यार्थस्यानुमानप्रमाणेनावधारणमन्वीक्षा। यत्र अन्वीक्षाव्यापारप्रदर्शनं वर्तते सा आन्वीक्षिकी। आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम् वा। प्रत्यक्षागमविरुद्धमनुमानं न्यायाभासः। न्यायशास्त्रं वेदानुकूलं न वेदविरोधि। उपपादनसापेक्षस्य वेदप्रतिपाद्यस्य सर्वस्यार्थस्य उपपत्तिप्रदर्शनमेव न्यायशास्त्रस्य कार्यम्। उपपत्तिसापेक्षवेदस्यार्थस्य उपपत्तिप्रदर्शनार्थमेव न्यायशास्त्रस्य प्रवृत्तिः। शिक्षादिकं

यथा वेदाङ्गं तथैव पुराणं, न्यायः, मीमांसा, धर्मशास्त्रं च वेदस्योपाङ्गम् ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ (याज्ञवल्क्यः १।३।)

अत्र न्यायशब्देन न्यायवैशेषिकं, सांख्यं पातञ्जलं चेति चतुर्विधदर्शनानां संग्रहो भवति, मीमांसाशब्देन पूर्वमीमांसायाः उत्तरमीमांसायाश्च संग्रहो जायते । उक्तानि षड्दर्शनान्येव वेदस्योपाङ्गभूतानि ।

वेदमन्त्रप्रतिपादितेश्वरस्यास्तित्वसिद्ध्यर्थं कतिपयाचार्यवर्गैः अनुमानप्रमाणमपि प्रदर्शितम् । ईश्वरप्रतिपादकस्य वेदमन्त्रस्य बाहुल्यं वर्तते । वाचस्पतिमिश्रः कथयति वेदस्य अनुमानस्य च ईश्वरसाधकत्वेऽपि एतत्प्रमाणद्वयमीश्वरस्य जगत्कर्तृत्वं सर्वज्ञत्वं च परित्यज्य तत्स्वरूपं साधयितुं न कदापि शक्नोति[1] । वेदे ईश्वरस्य यत्स्वरूपप्रतिपादनं कृतम भारतीयदार्शनिकानां मध्ये नैयायिकाः वैशेषिकाश्च ईश्वरस्य जगत्कर्तृत्वानुमानेन सर्वज्ञत्वानुमानेन च तत्साधनार्थं प्रयासं कृतवन्तः । अनुमानप्रमाणेन ईश्वरस्य जगत्कर्तृत्वादिप्रदर्शनेऽपि वेदविरुद्धस्य कस्यापि धर्मस्य सिद्ध्यर्थं प्रयासं नैव कृतवान्तः ।

भगवान् वात्स्यायनः न्यायसूत्रस्य भाष्ये उक्तवान्—प्रत्यक्षागमाश्रितमनुमानं सा अन्वीक्षा । प्रत्यक्षागमाभ्यामीक्षितस्य अन्वीक्षणमन्वीक्षा । तया प्रवर्त्तते इत्यन्वीक्षिकी । न्यायविद्या न्यायशास्त्रम् । यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति[2] । अयमभिप्रायः—अनुमानं प्रत्यक्षागमयोरविरोधि । प्रत्यक्षागमप्रमाणेनावधृतार्थस्यान्वीक्षानुसन्धानमनुमानम् । प्रत्यक्षागमाधिगतस्यार्थस्य अनुमानप्रमाणेनावधारणमन्वीक्षा । यस्मिन् शास्त्रे अन्वीक्षाव्यापारप्रदर्शनं सा आन्वीक्षिकी । आन्वीक्षिकी एव न्यायविद्या न्यायशास्त्रम्वा । प्रत्यक्षागमविरुद्धः न्यायाभासः । भाष्यकारस्य अनया युक्त्या एतदवगम्यते यत् न्यायशास्त्रं

---

१ "न हि आगमानुमाने जगत्कर्तृत्वनित्यसर्वविषयकबुद्धिमत्त्वव्यतिरेकेण केवलमीश्वरं साधयतः । न्या० ता० टी० पृ० ६५६

२ न्या० सू० १।१।१ पृ० ३६

वेदानुकूलं न वेदविरोधि । वेदप्रतिपाद्यसमस्तार्थोपपादनसापेक्षार्थस्योपपत्ति-प्रदर्शनमेव न्यायशास्त्रस्य कार्य्यम् । उपपत्तिसापेक्षश्रौतार्थस्य उपपत्तिप्रदर्शनार्थमेव न्यायशास्त्रं प्रवर्त्तते । न्यायशास्त्रस्य वेदोपाङ्गत्वेन रूपेण गणना याज्ञवल्क्येन कृता[१] । अत्र न्यायशब्देन न्यायवैशेषिकयोः, सांख्यस्य, पातञ्जलस्य च ग्रहणं कृतम् ।

वैशेषिकसूत्रे साक्षादीश्वरस्य आलोचना नास्तीति वैशेषिकसूत्रात् साक्षात् ईश्वरसाधकानुमानप्रदर्शनं न सम्भवति । प्रशस्तपादभाष्येऽपि सृष्टि-संहारविधिप्रकरणे ईश्वरकर्तृकायाः जगत्सृष्टेः संहारस्य च क्रमः प्रदर्शितः, किन्तु, साक्षात् अनुमानप्रमाणेन ईश्वरसिद्धिः नैव प्रदर्शिता । व्योमवतीटीकायां सृष्टि-संहारविधिप्रकरणस्य व्याख्यायां व्योमशिवाचार्यः कथयति—"प्रशस्तपादभाष्ये ईश्वरकर्तृका या जगतः सृष्टिः प्रदर्शिता सा नैव सुसङ्गता, यतः, ईश्वरास्तित्वे न किमपि प्रमाणम् । अग्रे कथयति—एतत्कथनं न समीचीनम् । अनुमानप्रमाणेन आगमप्रमाणेन च ईश्वरः सेत्स्यति[२] । व्योमशिवाचार्यकथनेनावगम्यते यत् प्रशस्त-पादभाष्ये ईश्वरसाधकं प्रमाणं नैव प्रदर्शितम् । प्रशस्तपादभाष्यस्य टीकायामुदय-नाचार्येणोक्तम्—प्रशस्तपादभाष्ये यः सृष्टिसंहारप्रकारः प्रकाशितः सः ईश्वरा-स्तित्वसिद्धावेव सुसङ्गतो जायते । ईश्वरास्तित्वे किम्प्रमाणम् ? एतस्मिन् प्रश्ने उदयनाचार्यः कथयति—ईश्वरसाधकानामनुमानानां सद्भावेऽपि अत्र तेषु कि-ञ्चदुल्लिखामि[३] । उदयनाचार्यादिलेखेन इदं सिद्धं यत् प्रशस्तपादभाष्ये ईश्वरा-नुमानं नास्तीति उदयनपरवर्तिनाम उद्योतकरादीनामेव मतमादौ संक्षिपामि ।

उद्योतकरः न्यायवार्तिके ईश्वरसाधकमनुमानद्वयं प्रदर्शितवान् ।

---

१ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
याज्ञ० १।३

२ "ननु सर्वमेतदसम्बद्धमीश्वरसद्भावे प्रमाणासम्भवात् । तन्न, अनु-मानागमाभ्यां तत्सद्भावसिद्धेः" । व्यो० पृ० ३०१ ।

३ सर्वमेतदीश्वरसद्भावसिद्धौ सम्भवेत् । तत्सिद्धावेव किं प्रमाणमिति चेत् । तत्बहुत्वेऽपि किञ्चिदुच्यते । कि० पृ० २०

१ क्षित्यप्तेजोवायुरूपमहाभूतचतुष्टयम्, स्वोचितधारणक्लेदनादिक्रियायां बुद्धिमत्कारणाधिष्ठितं सत् प्रवर्त्तते उक्तमहाभूतवर्गस्याचेतनत्वात्। यत् यत् अचेतनं वस्तु स्वोचितक्रियायां प्रवर्त्तते तत् बुद्धिमत्कारणाधिष्ठितं सदेव प्रवर्त्तते, यथा वास्यादिशस्त्रम्। वास्यादिकं काष्ठादिच्छेदनक्रियायां बुद्धिमत्पुरुषकर्तृकाधिष्ठितं सदेव प्रवर्त्तते। एवमेव पृथिव्याद्यचेतनभूतसमूहः स्वोचितधारणक्रियायां बुद्धिमत्कारणाधिष्ठितं सदेव प्रवर्त्तेत। अचेतनमहाभूतवर्गस्य यस्तावत् अधिष्ठाता स एव बुद्धिमत्कारणमीश्वरः।

२ तृणतरुपर्वतादि, तदुपादानाभिज्ञकर्तृकं (निमित्तं), तृणादेरुत्पत्तिमत्त्वात्, कार्यत्वात्, यत् यत् कार्यं तदुपादानाभिज्ञकर्तृजन्यम्, यथा प्रासादादिकम्[१]। तृणतरुपर्वतादेः उपादानाभिज्ञः कर्त्ता एव ईश्वरः। अयमेव द्वितीयानुमानाभिप्रायः।

भाष्यकारवात्स्यायनः साक्षात् ईश्वरसाधकानुमानं नैव प्रदर्शयति। एतावन्मात्रमेव निर्दिशति—"न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम्।" (न्या० भा० ४।१।२१ पृ० ६४४) अयमभिप्रायः बुद्धिं विना अन्य कोऽपि धर्मः ईश्वरे उपपादयितुं न शक्यते येन ईश्वरस्य सिद्धिः स्यात्। भाष्यकारः अत्र ईश्वरीयबुद्धिमेव ईश्वरसाधकलिङ्गरूपेण निर्दिशति। वार्तिककारः तदनुसारमेव "बुद्धिमत्कारणाधिष्ठितानीत्यनुकथयति।

न्यायदर्शनस्य "तत्कारितत्वादहेतुः" (न्या० सू० ४।१।२१) एतेन सिद्धान्तसूत्रेणैव ईश्वरः व्यवस्थापितः। एतत्सूत्रस्य वार्तिके वार्तिककारः कथयति—सूत्रकारः तत्कारित्वात् ईश्वरकारित्वात् इति सूत्रकारः वदति, अत्र सूत्रकारस्य मते ईश्वरस्य निमित्तकारणत्वमेवाभिमतम। निमित्तकारणं समवायिकारणस्य असमवायिकारणस्य च अनुग्राहकं भवति। न्यायवैशेषिकमते भावकार्यजातस्य त्रिविधं कारणं स्वीकृतम्। समवायिकारणं, निमित्तकारणमसमवायिकारणञ्च। सूत्रकारः ईश्वरस्य निमित्तकारणत्वं प्रतिपादयति। निमित्तकारणञ्चेतरकारणद्वयस्यानुग्राहकं भवति। यथा वस्त्रस्य समवायिकारणं तन्तुः,

---

१ न्या० सू० भा० वा० ४।१।२१

असमवायिकारणं तन्तुसंयोगः तुरीवेमादिकं वस्त्रस्य निमित्तकारण-मुभयोरनुग्राहकञ्च। ईश्वरस्य निमित्तकारणत्वे जगतः उपादानकारणं समवायिकारणं वा किम् ? वार्तिककारः कथयति परमाणुः उपादानकारणम् ईश्वरश्च जगतः निमित्तकारणम् किन्तु जगतः निमित्तकारणविषये वादिनः विप्रतिपत्तिरस्ति। केचित् कालं निमित्तकारणं केचन प्रकृतिं निमित्तकारणं, केचन च ईश्वरमेव निमित्तकारणं कथयन्ति। यद्यपि वार्तिककारः जगतः निमित्तकारणविप्रतिपत्तौ प्रकृतेः निर्देशं करोति परं प्रकृतिनिमित्तकारणतावादः न क्वापि प्रसिद्धः। प्रकृतिशब्दः उपादानस्यैव प्रतिपादकः, अतः, केवलं निमित्त-कारणत्वस्य प्रकृतौ प्रतिपादने प्रकृतिशब्दस्यैव वैयर्थ्यं स्यात्। यन्मते प्रकृतिः स्वतन्त्रा तन्मते अन्यः कश्चित् प्रवर्त्तयिता नास्ति।

अग्रे वार्तिककारः कथयति—जगतः निमित्तकारणविशेषे दार्शनिकानां विप्रतिपत्तिरस्तीति निमित्तकारणं किम्भवेत् ? ईश्वर एव निमित्तकारणम् इत्येव न्यायशास्त्रसम्मतम्। ईश्वरस्य अस्तित्वासिद्धौ तस्य निमित्तकारणता कथमिव स्यात् ? कालादेः निमित्तकारणतानिरसनपूर्वकमेव ईश्वरस्य निमित्त-कारणता अवधृता स्यात्। एतत्प्रश्नोत्तरे वार्तिककारः कथयति - अनुमानप्र-माणेनैव ईश्वरस्य निमित्तकारणता सिद्धा भवति अनुमानप्रमाणेनैव च ईश्वरस्य अस्तित्वमपि सिद्धं भवति। ईश्वरास्तित्वसिद्ध्यर्थं पृथक् प्रमाणस्य आवश्य-कता नास्ति, यस्य अस्तित्वमसिद्धं सः कथमपि निमित्तकारणं भवितुं नार्हति। ये अचेतनप्रधानात् जगतः उत्पत्तिं स्वीकुर्वन्ति अथ वा अचेतनपरमाणुसमूहात् उत्पत्तिं स्वीकुर्वन्ति अथ वा जीवस्य शुभाशुभकर्मणा जगतः उत्पत्तिं स्वीकुर्वन्ति तैः सर्वैरपि स्वीकरणीयं यत् बुद्धिमत्कारणाधिष्ठितं सदेव प्रधानं परमाणुः शुभा-शुभकर्म वा प्रवृत्तं भवति यतः एतत्सर्वमपि अचेतनम्। अचेतनं वस्तु बुद्धिम-त्कारणमत्। यत् यत् रूपरसादिमत् तत् बुद्धिमत्कारणाधिष्ठितं सदेव प्राणिनां सुखदुःखादीनां निमित्तं भवति। यथा वस्त्रकारणं तुरीवेमादिकम्।

अचेतनः धर्मः अधर्मश्च बुद्धिमत्कारणाधिष्ठित एव पुरुषस्य उपभोगं सम्पादयति यतः धर्मः अधर्मश्च सुखदुःखरूपोपभोगस्य कारणम्। यत् यत्

करणं तत् बुद्धिमत्कारणाधिष्ठितं सदेव फलस्य जनकं भवति यथा वास्यादिकम्। जीवाश्रितधर्माधर्मयोरधिष्ठाता तयोराश्रयः जीव एव भवितुमर्हति ईश्वरस्य जीवाधिष्ठातृत्वेन स्वीकारस्य का आवश्यकता? न्यायमते ज्ञानोत्पत्तेः प्राक् जीवात्मा अचेतनः, चेतन एव च अधिष्ठाता भवति। जीवात्मनः ज्ञानमनित्यम्। शरीरस्य इन्द्रियाणां च उत्पत्तेः प्राक् जीवस्य ज्ञानं न भवितुमर्हति। अनुत्पन्न-ज्ञानः जीवात्मा स्वीयधर्माधर्मयोरधिष्ठाता न भवितुं शक्नोति। यद्विषयकं ज्ञानं यस्य नास्ति स अधिष्ठाता तस्य कथमिव स्यात्? जीवात्मनः सकलरूपरसा-दिविषयकं ज्ञानमेव न सम्भाव्यते धर्माधर्मविषयकज्ञानस्य तु का कथा। यदि जीवात्मा स्वीयधर्माधर्मयोरधिष्ठाता स्यात्, तदा जीवात्मा कदापि स्वीयाधर्मस्यापि अधिष्ठाता भूत्वा स्वीयदुःखस्योत्पादकः न स्यात्। जीवस्य अधर्मेण च अधिष्ठितो भूत्वा परमाणुसमूहः प्रवृत्तो भवति एवं तेन जगतः सृष्टिर्भवति इत्यपि नैव सुस-ङ्गतं जायते। यतः धर्मः अधर्मः च अचेतनः। अचेतनः पदार्थः स्वतन्त्ररूपेण अधिष्ठाता नैव भवितुमर्हति[१]।

न्यायवार्तिककारः अनुमानप्रमाणेन ईश्वरसिद्धिं प्रदर्शितवान्। वार्ति-ककारप्रदर्शितानुमानमेव वैशेषिकाचार्यस्य नैयायिकाचार्यस्य चोपजीव्यम्। न्यायसूत्रकारः न्यायसूत्रे तत्कारित्वादित्येवोक्तम्। ईश्वरकारित्वादित्येवास्यार्थः। अनेन ईश्वरस्य निमित्तकारणता अभिहिता। एतस्यैव व्याख्यानक्रमे न्यायभा-ष्यकारः कथितवान्—"न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपा-दयितुम्"। अनेन कथनेन भाष्यस्य किञ्चिद्विश्लेषणं जातमस्यैव च वार्तिके विस्तारो वर्तते। वाचस्पतिमिश्रः व्योमशिवाचार्यः उदयनाचार्यश्च वार्तिकोक्ति-मवलम्ब्यैव प्रतिभानुसारमीश्वरसाधकानुमानं प्रदर्शितवान्। उदयनाचार्यः कुसुमाञ्जलिग्रन्थस्य पञ्चमस्तवके, आत्मतत्त्वविवेकस्य अनुपलब्धिवादे, प्रश-स्तपादभाष्यस्य सृष्टिसंहारप्रक्रियाविवरणे, न्यायसूत्रस्य (४।१।२१) तात्पर्यटी-कापरिशुद्धौ च विस्तृतरूपेण अनुमानप्रदर्शनं कृतवान्।

ऋङ्मन्त्रेषु ईश्वरस्य जगतःस्रष्टृत्वं सर्वज्ञत्वञ्च प्रतिपादितम्। एवमेव

---

१ "वेदेरमन्त्रभागे ईश्वर ओ दार्शनिकतत्व" इत्याख्यः ग्रन्थः द्रष्टव्यः।

न्यायवैशेषिकसिद्धान्तानुसारं जगत्स्रष्टृत्वं परमाणुकारणवादश्च प्रकाशितः। कुसुमाञ्जलिपञ्चमस्तवककारिकायाम् "आयोजनम्" इत्यपि हेतुरूपेण प्रदर्शितम्। एतस्मिन्मन्त्रे ईश्वरस्य वेदप्रणेतृत्वं प्रकाशितम्, वैशेषिकाचार्यैर्हि उक्तम्—बुद्धिपूर्वा वाक्यकृतिर्वेदे" अक्षपादसूत्रेऽपि मन्त्रायुर्वेदप्रमाणाच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" न्यायवैशेषिकाचार्यैः प्रदर्शितमीश्वरानुमानं हि ऋङ्मन्त्रप्रदर्शितेश्वरस्वरूपमादायैव कृतम्।

तात्पर्यपरिशुद्धिव्याख्याने ईश्वरचर्चायां न कश्चिद्विशेषोऽपि तु संक्षिप्ता टीका लक्ष्यते। वाचस्पतिमिश्रव्याख्यानस्य तात्पर्योद्घाटनमेव वर्तते।

न्यायाचार्योदयनाचार्यस्य विषये तु न बहु वक्तव्यमस्ति। बहुभिरेतस्य विषये बहुधा वर्णितम्। भक्तिमाहात्म्ये लिखितपरिचय एव सर्वथा पर्याप्तः—

भगवानपि तत्रैव मिथिलायां जनार्दनः।
श्रीमदुदयनाचार्यरूपेणावततार ह॥

अप्रकाशिताभ्यां बोधनीपरिमलाभ्यां सह एव कुसुमाञ्जलिग्रन्थः यथाशक्ति संशोध्य विदुषामग्रे समुपस्थापितः। एतस्य ग्रन्थस्य प्रकाशने प्रातःस्मरणीयानां गुरुवराणां पं० श्रीब्रह्मदत्तद्विवेदिनां डा० श्रीशीतांशुशेखरबागचिमहानुभावानां च कृपैव आधारभूतेति तेषामनुग्रहं वचसा प्रकाशनाक्षमं मनसैव सततमनुभवामि। गुरुवरेण श्रीमता अनन्तलालठाकुरमहोदयेन चतुर्थस्य पञ्चमस्य च स्तवकस्य प्रतिलिपिद्वयं मद्रासविश्वविद्यालयस्य मातृकाविभागात् संगृहीतम्। स्वयं एतस्य ग्रन्थस्य प्रकाशनार्थं प्रतिलिपिद्वयं संगृहीतं विशिष्टकार्यवशात् एतस्य ग्रन्थस्य प्रकाशनार्थं अहं प्रोत्साहितः। श्रीमतां पण्डितप्रवराणां दर्शनतत्त्वविदां श्रीरूपनाथझामहोदयानां महत् साहाय्यमेतस्य ग्रन्थस्य प्रकाशने उपलब्धवान् इति तेषामुपकारं सततं शिरसा बिभर्मि। डा० श्रीसिद्धेश्वरभट्टाचार्यः एम० ए०, पी एच० डी० महोदयः कार्यभारोद्विग्नोऽपि ग्रन्थप्रकाशने महत्साहाय्यं कृतवान् इति शुभाशीराशिभिरेनं संवर्द्धयामि। श्रीशशिनाथमिश्रः प्रकाशनविभागाध्यक्षः एतस्य ग्रन्थस्य प्रकाशने विलम्बो न भवेदेतदर्थं सततमुद्योगं कृतवान् इति धन्यवादार्हः।

इदानीं सर्वथा निर्दोषोऽयमिति न वक्तुमुत्सहे। सुचिरन्तने ग्रन्थे मर्त्यैर्विहिते क्व नाम दोषविरहः इति प्रमादस्य स्वाभाविकत्वात् यदत्र यन्त्रदोषात् स्वकृतिषु रागवशात् दूषणदृष्टेरभावाद्वा स्खलनं जातं तत् समीक्षकैः सस्नेहं परिष्करणीयं सूचनीयं चेति विनिवेदयते।

कार्तिकशुक्लत्रयोदशी
२०२८

विदुषां विधेयः
महाप्रभुगोस्वामी

## सारांशविषयानुक्रमणिका

## मूलविषयसूची

### प्रथमस्तवके

द्वितीयस्तबके

## आमोदस्य विषयसूची

### प्रथमस्तवके

द्वितीयः स्तबकः

चतुर्थस्तबकः

## बोधन्याः विषयसूची

द्वितीयस्तबकः

## विवेकस्य विषयसूची

द्वितीयस्तबकः



तृतीयस्तबकः

## परिमलस्य विषयसूची

# न्यायकुसुमाञ्जलिकारिकाः

## प्रथमः स्तबकः ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥१॥

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥२॥

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।
उपासनैव क्रियते श्रवणानन्तरागता ॥३॥

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥४॥

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥५॥

प्रवाहो नादिमानेष न विजात्येकशक्तिमान् ।
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥६॥

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥७॥

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ।८॥

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥९॥

भावो यथा तथाऽभावः कारणं कार्यवन्मतः ।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥१०॥

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥११॥

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।
देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥१२॥
जयेतरनिमित्तस्य वृत्तिलाभाय केवलम् ।
परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥१३॥
कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा ध्रुवः ॥१४॥
नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥१५॥
न वैजात्यं विना तत् स्यात् न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥१६॥
स्थैर्यदृष्ट्योर्न सन्देहो न प्रमाण्ये विरोधतः ।
एकतानिश्चयो येन क्षणे तेन स्थिरे ततः ॥१७॥
हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥१८॥
पूर्वभावो हि हेतुत्वं मीयते येन केनचित् ।
व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥१९॥
इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो ।
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः ।
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

अथ द्वितीयः स्तबकः ।

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ।
तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः ॥१॥
वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥२॥
जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥३॥

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन् ।
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं ।
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥४॥

अथ तृतीयः स्तबकः ।

योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम् ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥१॥
व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥२॥
दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।
न तस्यां नोपलम्भोऽस्ति नास्ति सानुपलम्भने ॥३॥
इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥४॥
आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥५॥
दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥६॥
शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥७॥
परस्परविरोधे हि न प्रकारान्तरस्थितिः ।
नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥८॥
साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥९॥
सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥१०॥
सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा ॥११॥

श्रुतान्वायादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥१२॥
अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥१३॥
निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥१४॥
व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥१५॥
न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥१६॥
न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥१७॥
हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ।
तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥१८॥
आनयस्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥१९॥
प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥२०॥
प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ।
अत्राश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥२१॥
अवच्छेदमहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥२२॥
प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्माऽपि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवम्
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥२३॥

अथ चतुर्थः स्तबकः ।

अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक् ।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥१॥
स्वभावनियमाभावादुपकारो हि दुर्घटः ।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥२॥
अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्विशिष्टप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥३॥
अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥४॥
मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥५॥
साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥६॥

अथ पञ्चमः स्तबकः ।

कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥१॥
न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ।
सिद्ध्यसिद्ध्योर्विरोधो न, नासिद्धिरनिबन्धना ॥२॥
तर्काभासतयाऽन्येषां, तर्काशुद्धिरदूषणम् ।
अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥३॥
स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावः, विशेषस्तु विशेषवान् ॥४॥
कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः ।

विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥५॥
उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती ।
ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥६॥
प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥७॥
इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।
असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥८॥
कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः, पूर्वा परस्मिन् सैव भावना ॥९॥
भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥१०॥
आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
संख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः ॥११॥
अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तद्लाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥१२॥
असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।
बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥१३॥
हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः ।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ।१४॥
विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥१५॥
कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः ।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥१६॥
स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्याऽपि च शाखानां नाद्यप्रवचनादृते ॥१७॥
इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते

येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते भावनीया नराः ॥१८॥
अस्माकन्तु निसर्गसुन्दर ! चिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुयाम शतशो याम्याः पुनर्यातनाः ॥१९॥

इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा ततः किममरेशगुरोर्गुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥२०॥

॥ इति कुसुमाञ्जलिकारिका: ॥

# सौरभविवृत्याद्यनुसारिकुसुमाञ्जलिसारसङ्कलनम्

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥

सत्पक्षे—सति प्रामाणिके पक्षे पक्षतावच्छेदकविशिष्टपक्षे । प्रसरः—प्रकृष्टं ज्ञानं प्रकर्षेण सरः ज्ञानं यस्मात् भवति । सतां—कुशलविवेचनां सपक्षे सत्तया विपक्षे चासत्तया मलस्य प्रोद्बोधनेन यथार्थव्याप्तिरूपसम्बन्धस्य ज्ञानेन बद्धः स्थिरीकृतः उत्सवः आनन्दो येन; विमर्दनेन विरोधिप्रमाणचिन्तया कार्ये अक्षमो न जायते । अमृतरस-क्षरणकारी मोक्षोत्पत्तिस्थानम्, ईश्वरविषयकतर्कप्रमाणोत्पादक एषः सर्वथा निर्दुष्टः न्यायकुसुमाञ्जलिः मधुलुब्धभ्रमरसदृशभ्रमणशीलमच्चेतः तथा करोतु यथा तत्र चेतसि दुःखसम्पर्को न भवेत् ।

न्यायः—नीयते प्राप्यतेऽर्थसिद्धिरनेनेति व्युत्पत्त्या पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्त-त्वाबाधितत्वासत्प्रतिपक्षितत्वादिपञ्चरूपो विशिष्टहेतुबोधकवाक्यसमूहः । यथा—पर्वतो वह्निमान्, धूमात् इति प्रसिद्धानुमानस्थले पर्वतः पक्षः, वह्निः साध्यः, धूमः हेतुः ।

१. पक्षसत्त्वम्—पक्षे हेतोः सद्भावः । यस्मिन्स्थले अनुमितिः तत्र हेतोः अवस्थितिः । प्रदर्शितस्थले च पक्षे पर्वते हेतोः धूमस्य अवस्थितिः ।

२. सपक्षसत्त्वम्—सपक्षे साध्यविशिष्टरूपेण निश्चिते पक्षातिरिक्तवस्तुनि, निश्चित-रूपेण साध्यस्यावस्थितिः यस्मिन्पक्षातिरिक्ते स्थले वर्तते एवम्भूते स्थले हेतोरवस्थितिः । पक्षातिरिक्तः स्थल एव सपक्षो भवति । अत्र महानसादिकमेव सपक्षः । यतः, महानसादौ वह्नेः स्थितिः निश्चिता वर्त्तते तथा च महानसादौ हेतोः धूमस्य अवस्थिति-रेवात्र सपक्षसत्त्वम् ।

३. विपक्षासत्त्वम्—यत्र प्रकृतसाध्यस्य स्थितिर्नास्ति स विपक्षः । प्रकृतानु-माने जलाशयादिकं विपक्षः । यतः, जलाशयादौ वह्न्यभावस्थले हेतोः धूमस्य अन-वस्थितिरेव विपक्षासत्त्वम् ।

४. अबाधितत्वम्—बाधितत्वाभावः, बाधितः बाधविशिष्टः बाधविशिष्टस्य धर्मः बाधितत्वम् बाधः अर्थात् साध्याभावविशिष्टः पक्षः। प्रकृतानुमाने पर्वतरूपपक्षे साध्यस्य वह्नेरभावो नास्तीति हेतुर्धूमः बाधविशिष्टोऽपि नास्ति इति धूमहेतौ बाधितत्वाभावः वर्तते।

५. असत्प्रतिपक्षितत्वम्— सत्प्रतिपक्षितत्वस्याभावः, सत्प्रतिपक्षितः सत्प्रतिपक्ष-विशिष्टः, तस्य धर्मः सत्प्रतिपक्षितत्वम्, सत्प्रतिपक्षः साध्याभावव्याप्तिविशिष्टः यः अन्यो हेतुस्तेन हेतुना विशिष्टः पक्षः। अत्र पर्वतरूपः पक्षः वह्न्यभावविशिष्टजलादि-हेत्वन्तरविशिष्टो नास्ति। पर्वतो वह्न्यभाववान्, जलादिति, सदनुमानं न भवितुमर्हति इति सत्प्रतिपक्षो नास्ति अतः धूमे असत्प्रतिपक्षितत्वमस्ति।

न्यायः पूर्वोक्तपञ्चरूपविशिष्टलिङ्गप्रतिपादकवाक्यसमूहः। स च प्रतिज्ञाहेतू-दाहरणोपनयनिगमनरूपपञ्चावयवविशिष्टः। तथा च उच्चरितप्रतिज्ञादिपञ्चावयवविशिष्ट-वाक्यस्य समष्टिरेव न्यायस्य सिद्धान्तलक्षणम्।

१. प्रतिज्ञा—पर्वतो वह्निमान्।

२. हेतुः—धूमात्।

३. उदाहरणम्—यत्र यत्र धूमस्तत्र तत्र वह्निः यथा महानसम्। यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा—जलाशयः।

४. उपनयः—अयमपि पर्वतस्तथा, अथ वा अयं पर्वतः न तथा।

५. निगमनम्—तस्मात् हेतोः अयं पर्वतो वह्निमान्।

## न्यायस्योपयोगिता

अप्रत्यक्षवस्तुनः परस्य बोधनार्थं यदा अनुमितिर्भवति तदा तादृशवस्तुसम्बन्धे परामर्शार्थं पूर्वोक्तन्यायवाक्यस्य पूर्वोक्तप्रकारेण प्रयोगं कृत्वा परस्य कृतेऽनुमानं परामर्शो वा उत्पाद्यते। यथा—पर्वते धूमं दर्शयित्वा रामस्य अप्रत्यक्षवह्नेरनुमानकरणवेलायां न्यायवाक्यं प्रदर्श्य पर्वते वह्नेरनुमानं वह्निव्याप्यधूमवान् पर्वत इति निश्चयः उत्पादितो भवति। यतः एतादृशपरामर्शानन्तरमेव रामः पर्वतो वह्निमान् इति अनुमितिं कर्तुं शक्नोति। अस्यामवस्थायां प्रथमतः प्रतिपाद्यविषयस्य सामान्यज्ञानमावश्यकं भवति। प्रतिपाद्यविषयस्य सामान्यज्ञानं विना वाक्यश्रवणे एव रामस्य औदासीन्यमप्रवृत्तिर्वा भवेत्। तस्मात् आदौ न्यायवाक्यप्रथमावयवस्य प्रतिज्ञावाक्यस्य उल्लेखः नितान्तम-पेक्षितो भवति—"पर्वतो वह्निमान्" इति। एतत्प्रतिज्ञावाक्यश्रवणानन्तरं रामस्य

स्वभावत एव जिज्ञासा भवति कस्मात् हेतोः "पर्वतो वह्निमान्" इति। ततश्च रामस्य एतादृशीं जिज्ञासां दूरीकर्त्तुं द्वितीयस्य न्यायवाक्यावयवस्य प्रयोगो भवति "धूमात्" इति ( यतः पर्वते धूमः वर्तते )। एतद्द्वितीयवाक्यश्रवणानन्तरमियं जिज्ञासा जागर्ति रामस्य, यत् धूमः वर्तते पर्वते एतावता वह्नेरवस्थानं कथमिव भवेत् ? रामस्य एतज्जिज्ञासां निवर्त्तयितुं न्यायतृतीयावयवस्य "उदाहरणस्य" प्रयोगो भवति। दृष्टान्तसाहाय्येन हेतौ साध्यव्याप्तिः उच्यते—"यत्र स्थले धूमस्तिष्ठति तत्र स्थले वह्निरपि वर्तते, यथा महानसम्। एतदवगत्यनन्तरमपि "परिदृश्यमानपर्वतः एतादृशो न वा" ? इति रामस्य जिज्ञासां परिहर्तुं न्यायचतुर्थावयवस्य उपनयवाक्यस्य प्रयोगो भवति "अयमपि पर्वतस्तथा" अर्थात् महानसस्येवास्मिन् पर्वतेऽपि वह्निव्याप्तिविशिष्टः ( नियतसहचरः ) धूमः वर्तते। रामस्य एतदवगत्यनन्तरमपि पर्वते धूमस्य यथा प्रत्यक्षं भवति तथा पर्वते वह्नेः प्रत्यक्षं न भवति, वह्नौ सत्यां तस्यापि प्रत्यक्षं स्यादेव। यतः वह्नेः प्रत्यक्षं न भवति तस्मादेव पर्वते वह्निर्नास्ति इत्यादिबाधबुद्धेर्निरासार्थमेव न्यायपञ्चमवाक्यस्य निगमनस्य निर्देशो भवति। उपसंहारे हेतुनिर्देशपूर्वकं प्रतिज्ञातविषयस्य पुनः कथनं भवति "तस्मादेव पर्वतो वह्निमान्" इति।

ईश्वरविषयकं मननं वेदे विहितम्। आस्तिको हि जनः विचित्रस्य जगतः सृष्टिकर्त्ता, स्थितिकर्त्ता लयकर्त्ता च ईश्वरः इत्यवगच्छति अतः तेषां कृते न्यायवाक्यस्य आवश्यकता नास्ति। किन्तु प्रत्यक्षदर्शनं विना ये किमपि न विश्वसन्ति तेषां कृते ईश्वरावगत्यर्थं न्यायवाक्यप्रयोगः नितरामपेक्षितः। जगदीश्वरः परिदृश्यमानघटादिवत् कश्चिन्मूर्तिमान् पदार्थः स्यात्तदा नूनमेवासौ अङ्गुल्यादिनिर्देशपूर्वकमगवतो भवेत् किन्तु अमूर्तः व्यापकः लौकिकचक्षुरादीन्द्रियागोचरः कथमिव प्रत्यक्षविषयः स्यात् ? कदाचित् सः योगर्द्धिसम्पन्नजनमानसगोचरः, अतः परस्य ईश्वरावगत्यर्थमनुमानमेकमेव शरणमिति न्यायवाक्यप्रयोगः अपेक्षित एव।

पदयुगे—पद्यते ज्ञायतेऽनेनेति पदं प्रत्यायकं तस्य युगे प्रमाणतर्करूपे। पूर्वोक्तव्युत्पत्त्या "पद" शब्देन प्रमाणस्य तर्कस्य चावगतिर्भवति। ज्ञानस्य सामान्यतया द्वैविध्यम्—१ अनुभवरूपं २ स्मृतिरूपम्।

अनुभवात्मकं ज्ञानं चतुर्विधम्—(१) प्रत्यक्षम्, (२) अनुमितिः ( मननम् ), (३) उपमितिः (४) शब्दश्चेति। एतच्चतुर्विधयथार्थानुभवात्मकज्ञानस्य करणमेव प्रमाणम्। उक्तेषु अनुमानमपि एकं प्रमाणमिति मननमनुमानं वा पदशब्दस्यार्थः।

क्षित्यङ्कुरं, सकर्तृकं, कार्यत्वादित्यनुमितिरेव ईश्वरानुमितिः। सकर्तृकत्वव्याप्तिविशिष्टं नियतसहचारि वा कार्यत्वं पृथिव्यां वर्तते अथ वा सकर्तृकत्वव्याप्तिविशिष्टकार्यत्ववत् क्षित्यङ्कुरमिति परामर्शः निश्चयात्मकं ज्ञानं वा ईश्वरानुमितेरसाधारणं कारणमिति अनुमानप्रमाणम्। अयमाशयः—क्षित्यङ्कुरं बीजादुत्पन्नं प्रथमं कार्यवस्तु, अनुमानेऽस्मिन् क्षित्यङ्कुरं (पक्षः) सकर्तृकत्वं (साध्यम्) कार्यत्वं (हेतुः) वस्तुनः उत्पत्तौ कर्तुरपेक्षा भवतीति स्वीकर्तव्यमेव, कर्त्तारं विना कार्योत्पत्तिर्नैव भवितुमर्हति। तथा च कार्यवस्तु कर्तृसापेक्षं सकर्तृकं वेति कार्यवस्तुनः धर्मः सकर्तृकत्वमिति। अस्यां दशायां यद्यत्कार्यं तत्तत्सकर्तृकमेतादृशी व्याप्तिः कार्यत्वे सकर्तृकत्वस्य नियतसाहचर्यं वा स्वीकरणीयम्। एवं च सकर्तृकत्वव्याप्तिविशिष्टकार्यत्वविशिष्टं क्षित्यङ्कुरमिति परामर्शे जाते कार्यत्वस्य क्षित्यङ्कुरे वर्तमानत्वात् क्षित्यङ्कुरं सकर्तृकमिति अनुमितिर्भवति। इदानीमेष सन्देहो भवितुमर्हति यत् अल्पज्ञः जीव एव कर्ता भवतु क्षित्यङ्कुरादीनामिति तेनैव सकर्तृकत्वनिर्वाहे नेश्वरसिद्धिरिति ? अल्पज्ञः जीवः क्षित्यङ्कुरधर्मस्य सकर्तृकत्वस्य निर्वाहको न भवितुमर्हति। यतः कस्यापि कार्यस्य उत्पादनार्थं यस्य यस्य उपादानस्य अपेक्षा वर्तते तस्य सर्वस्य ज्ञानं यस्य वर्तते स एव तत्कार्यमुत्पादयितुमिच्छां चेष्टां च करोति। क्षित्यङ्कुरं केन केनोपादानेन उत्पद्यते तस्य साक्षाज्ज्ञानमस्माकं नास्ति क्षित्यङ्कुरदर्शनोत्तरं कथञ्चित्तज्ज्ञानं भवति चेद्भवतु नैतावता प्रथमाङ्कुरोत्पादनेच्छा भवितुमर्हति। अतः अल्पज्ञजीवस्य कर्तृत्वासिद्धौ सर्वज्ञः जीवः कर्ता ईश्वरः सिद्ध्यति इति कथितमनुमानमेव ईश्वरस्य एकं पदम्।

अन्यस्य जनस्य ईश्वर-मननार्थं न्यायवाक्यप्रयोगपूर्वकं कारणीभूतेश्वरविषयकपरामर्शस्योत्पादनमावश्यकम्। तथा च आदौ "क्षित्यङ्कुरं सकर्तृकमिति प्रतिज्ञावाक्यस्य प्रयोगोऽपेक्षितोऽनन्तरं कस्मात् इति प्रश्नस्य उत्तरे वक्तव्यमस्ति "कार्यत्वात्" इदमेव हेतुवाक्यम्। "यत् यत् कार्यं तत् तत् सकर्तृकं यथा घटः" इदमुदाहरणवाक्यम्, "क्षित्यङ्कुरमपि तथा" इति उपनयवाक्यम्; तस्माद्धेतोः "क्षित्यङ्कुरं सकर्तृकमिति" निगमनवाक्यम्। एतादृशन्यायवाक्यश्रवणानन्तरं श्रोता एतद्विषये सचेष्टो भवति, ततश्च सकर्तृकत्वव्याप्तिविशिष्टं नियतसहचारि वा कार्यत्वं क्षित्यङ्कुरे वर्तते इति परामर्शः मननं वा, अनन्तरमनुमितिर्भवति क्षित्यङ्कुरं सकर्तृकम्। अनेन क्रमेण प्रदर्शितन्यायवाक्यमेव ईश्वरप्रमाणात्मकपदस्य उपायभूतं न्यायवाक्यम्।

"पद" शब्दस्य अपरोऽर्थः तर्कः। तर्कः आरोपात्मकं ज्ञानम्। व्याप्यवस्तुनः

आरोपवशात् व्यापकवस्तुनः आरोपज्ञानं ( व्याप्यारोपात्व्यापकारोपस्तर्कः ) कस्मिंश्चिदाधारे कस्यापि वस्तुनः अभावज्ञानार्थमाधारे तद्वस्तुनः ज्ञानमारोपज्ञानम्। तर्के एकमापादकमपरञ्चापाद्यम्। यस्य वस्तुनः आरोपकाले आपत्तेरुद्भवः तदापादकम्। यस्य च आपादनं तदापाद्यम्। तथा च आपादकं व्याप्यमापाद्यञ्च व्यापकम्। यथा—जलाशये वह्नेर्धूमस्य चाभावनिश्चयकाले अर्थात् जलाशये वह्निः धूमश्चेतद्द्वयं नास्तीति ज्ञानकाले—जलाशयो यदि धूमवान् स्यात्तदा वह्निमान् भवेत् इत्येतादृशारोपात्मकं ज्ञानं तर्कः। धूमः वह्निव्याप्यः वह्निश्च धूमव्यापकः। कस्मिन्नपि आधारे व्याप्यवस्तुनः ज्ञाने व्यापकवस्तुनः ज्ञानं स्वाभाविकं, तथा च जलाशयः धूमवान् इत्यारोपे सत्येव आपत्तिर्भवति यत् जलाशयः यदि धूमवान् स्यात्तदा वह्निमान् भवेत् किन्तु केवलं व्याप्यवस्तुनः आरोपवशादेव व्यापकवस्तुनः आपत्तिर्न भवति। प्रत्यक्षप्रज्वलितायोगोलके वह्नेरभावः निश्चितः नास्तीति तस्मिन् धूमारोपकरणेऽपि आपत्तिर्न भवति यतः प्रत्यक्षीभूतप्रज्वलितायोगोलके वह्न्यभावः निश्चितो नास्तीत्यसौ वह्निमान् भवतु इति आपत्तिर्न भवति असौ वह्निमान् प्रत्यक्षविषय एव। जलाशये वह्निर्नास्तीति जलाशये वह्न्यभावस्य प्रत्यक्षत्वं स्वाभाविकं किन्तु जलाशयोत्थितं वाष्पं दृष्ट्वा धूममवगत्य "जलाशयः धूमवान्" इति ज्ञाते जलाशयः वह्निमान् भवत्विति आपत्तिरुदेति। अतः आपत्तियोग्याधारे आपाद्यस्याभावनिश्चयः तर्कस्य कारणम्। एवं व्याप्ये=आपादके व्यापकस्य=आपाद्यस्य व्याप्तिज्ञानस्याभावे तर्कस्य उद्भवः न भवतीति आपादकेन सह आपाद्यस्य व्याप्तिज्ञानमेव तर्कस्य कारणम्। यथा—पर्वते धूमासाधारणधर्मधूमत्वेन धूमस्य ज्ञाने सत्येवानुमितिर्न भवति अपि तु वह्नेः नियतसहचारी व्याप्यो वा धूम इति ज्ञाने सत्येव "पर्वतः वह्निमान्" इत्यनुमितिर्भवति। तथैव जलाशये धूमारोपवशादेव वह्नेरापत्तिर्न भवत्यपि तु जलाशये धूमारोपकाले वह्निनियतसहचरः व्याप्यो वा धूमः इति ज्ञाने जाते एव आपत्तिर्भवति "जलाशयः वह्निमान् स्यादिति। तथा चाकामेनापि स्वीकर्त्तव्यमेव यत् आपत्तिकाले आपादकेन सह आपाद्यस्य व्याप्तिज्ञानं नितरामपेक्षितमिति। अस्यां स्थितौ तर्के तर्कयोग्याधारे आपादकस्यारोपः, आपाद्याभावस्य निश्चयः, आपादकेन सह आपाद्यस्य व्याप्तिज्ञानमेतत्त्रितयमेव कारणं मन्तव्यम्। तथा च तर्कस्य कारणीभूतं आपादकेन सह आपाद्यस्य व्याप्तिज्ञानमुत्पाद्य अन्यस्य कृते तर्कस्य उत्पादनार्थं न्यायवाक्यस्य प्रयोगोऽवश्यमेव स्वीकार्य्यः। तर्कस्य करणीभूते व्याप्तिज्ञाने एव न्यायस्य उपयोगिता।

तर्कस्य उपयोगिता—तर्कः संशयस्य निरासकः, सन्दिग्धस्थले तर्कोपस्थितौ सत्यां

संशयः स्थातुं शक्नोति। यथा—जलाशये धूमोऽस्ति न वा ? एतादृशसंशये सति तर्कः उपस्थितो भवति "जलाशयो यदि धूमवान् स्यात्तदा वह्निमान् स्यात्" सति च तर्के जलाशये धूमसंशयो निवर्त्तते। यतः, पूर्वमेवोक्तं यत् तर्के तर्कयोग्याधारे आपाद्याभावस्य निश्चयः कारणम्, तथा च व्यापकाभावे निश्चिते सति व्याप्याभावनिश्चयः स्वाभाविकः इति जलाशये व्यापकीभूतापाद्यवह्नेरभावनिश्चयवशात् व्याप्यस्यापादकस्य धूमस्य अभावनिश्चयः स्वभाविकः इति पूर्वोक्तः संशयोऽनायासेनैव निवर्त्तते।

कार्यत्वहेतुना "क्षित्यङ्कुरं सकर्तृकम्" एतादृशानुमितिकाले कार्यत्वहेतौ सकर्तृकत्वस्य व्याप्तिनिश्चयः आवश्यकः। व्यभिचारसंशयः व्याप्तिनिश्चयस्य प्रतिबन्धकः, "यत् कार्यं तत् सकर्तृकं न वा" इत्यादिसंशये कार्यत्वहेतौ सकर्तृकत्वस्य व्याप्तिनिश्चयः, यत् कार्यं तत् सकर्तृकमेव, अथ वा कार्यत्वं सकर्तृकत्वस्य नियतसहाचारि इत्यादिनिश्चयो भवितुं नार्हति। अतः कार्यत्वस्वरूपहेतौ सकर्तृकत्वसंशयवारणमावश्यकम् अन्यथा कार्यत्वस्वरूपहेतौ सकर्तृकत्वस्य व्याप्तिनिश्चयः असम्भव इति "क्षित्यङ्कुरं सकर्तृकत्वव्याप्तिविशिष्टं कार्यत्ववत्" इत्यादिपरामर्शः भवितुं नार्हति इति ईश्वरानुमानमसम्भवमेव। एतादृशव्यभिचारसंशयेन सर्वत्र परार्थस्थले व्याप्तिनिश्चयोऽसम्भव इति परार्थानुमानस्यैवोच्छेदः स्यात् इति अनुमानेऽपि तर्कस्यावश्यकता स्वीकार्या। तर्कः कार्यत्वस्वरूपहेतौ सकर्तृकत्वव्यभिचारसंशयस्य निरासकः। यथा—क्षित्यङ्कुरं यदि सकर्तृकं न स्यात्तदा कार्यं न स्यात्" इत्यारोपज्ञानम्। अत्र सकर्तृकस्य भेदः सकर्तृकत्वस्य अभावो वा आपादकः एवं कार्यभेदः कार्यत्वस्याभावो वा आपाद्यः एतादृशापत्तौ तर्के वा तर्कयोग्याधारक्षित्यङ्कुरे आपाद्यस्य (व्यापकस्य) कार्यभेदाभावस्य कार्यत्वाभावाभावस्य वा अर्थात् कार्यत्वस्य निश्चयः आवश्यकः। तथा च एतादृशतर्कोपस्थितौ आपाद्यस्य व्यापकस्य कार्यभेदाभावस्य कार्यत्वाभावाभावस्य वा अर्थात् कार्यत्वस्य निश्चयेन आपादकस्य व्याप्यस्य सकर्तृकभेदाभावस्य सकर्तृत्वाभावाभावस्य वा अर्थात् सकर्तृकत्वस्य निश्चयः स्वाभाविकः, तथा च यत्र यत्र कार्यत्वं तत्र तत्र सकर्तृकत्वमित्यवगच्छति यत् कार्यं तदेव सकर्तृकमिति वा जानाति। अस्यां स्थितौ यत् कार्यं तत् सकर्तृकं न वेति व्यभिचारसंशयो निवर्त्तते।

किञ्च एतादृशतर्कोपस्थितौ पूर्वप्रदर्शितयुक्त्या आपादकसकर्तृकभेदे सकर्तृकत्वाभावे वा आपाद्यकार्यत्वभेदस्य कार्यत्वाभावस्य वा व्याप्तिनिश्चय आवश्यकः। अन्यस्य एतद्व्याप्तिनिश्चयोत्पादनार्थं प्रदर्शितव्याप्तिनिश्चयस्य उत्पादनार्थमुक्तव्याप्तिनिश्चयोपयोगि-

न्यायवाक्यप्रयोगः आवश्यकः। यतः, आपादके आपाद्यस्य व्याप्तिनिश्चयः तर्कस्य कारणम् एवं परार्थस्थले न्यायप्रयोगेणैव एतादृशव्याप्तिनिश्चयो भवति। अतः तर्केऽपि परम्परया न्यायवाक्यमुपयोगि। कथितरूपतर्कस्य निर्वाहके आपादकसकर्तृकभेदे आपाद्यकार्यभेदस्य व्याप्तिनिश्चयस्य उपयोगिन्यायाकारः—

१. प्रतिज्ञा—इदं कार्यं न ( कार्यभेदविशिष्टं न )

२. हेतुः—अकर्तृकत्वात् ( सकर्तृकभिन्नत्वात् )

३. उदाहरणम्—यत् यत् सकर्तृकं नास्ति ( सकर्तृकभेदविशिष्टं ) तत् कार्यं न ( कार्यभेदविशिष्टं ) यथा—आकाशः।

४. उपनयः—इदमपि तथा।

५. निगमनम्—तस्मात् इदं कार्यं न ( कार्यभेदविशिष्टम् )

ईश्वरविषयकानुमानात्मकपदस्य ( कथितपरामर्शस्य उपायभूतः पूर्वोक्तो न्यायः प्रामाणिकपक्षेऽभीष्टस्य साधकः, सत्यपरामर्शे योग्यः, प्रतिपक्षचिन्तादुष्टो न।

यद्यपि तर्कः स्वतो न कस्यचित् साधनमप्रमाणत्वात्, किन्तु निराकरणौपयिकः यथोक्तं प्राक्तथापि प्रतिपक्षनिराकरणद्वारा साधकप्रमाणस्य तर्कस्य व्याप्तिभूतत्वे प्रमाणे एवान्तर्भावस्तथा च पदयुगे प्रमाणतर्करूपे इति वक्तुं न शक्यते तर्कस्य प्रमाणान्तरत्वात् तर्कस्यासाधकत्वे तु आभासत्वेनासहकारीति साधककोटौ समावेशो न भवितुमर्हतीति प्रकाशकृता उक्तम्—"अन्वयव्यतिरेकि वा पदयुगम्"।

प्रामाणिकपक्षः—साध्यविशिष्टः सत्पक्षः हेतुसाध्ययुक्तः यथार्थपक्षः, ईश्वरानुमितौ पक्षः—क्षित्यङ्कुरम् पक्षतावच्छेदकं ( पक्षे ज्ञायमानः धर्मः ) क्षित्यङ्कुरत्वविशिष्टम्, साध्यं सकर्तृकत्वम्, हेतुः—कार्यत्वविशिष्टम् इति प्रामाणिकपक्षः।

सद्धेतुनैव यथार्थानुमितिर्भवति, अनैकान्तादिदोषशून्यः, अर्थात् व्याप्तिपक्षधर्मता विशिष्टहेतुरेव सद्धेतुर्भवति। ईश्वरसाधककार्यत्वादिहेतौ अनैकान्तादिदोषेष्वेकस्यापि सद्भावदशायां हेतोः सद्धेतुषु गणना न भवितुमर्हति एवमेव कार्यत्वादिहेतुः सद्धेतुर्न स्याद्यदा ईश्वरानुमाने उपयुक्तन्यायवाक्यस्यापि सन्न्यायत्वं न स्यात्। पूर्वोक्तन्यायवाक्यस्य प्रामाणिकपक्षे अभीष्टसाधकत्वकथनात् कार्यत्वादिहेतुषु अनैकान्तादिदोषाणां मध्ये पक्षासिद्धिः, स्वरूपासिद्धिः बाधश्च नास्तीत्येव सूच्यते। यतः पक्षे पक्षतावच्छेदकस्य ( पक्षे ज्ञायमानस्य ) धर्मस्य अभाव एव पक्षासिद्धिः, पक्षः-क्षित्यङ्कुरं क्षित्यङ्कुरे

ज्ञायमानः धर्मः क्षित्यङ्कुरत्वरूपं प्रसिद्धं सद्वस्तु, तथा च पक्षे क्षित्यङ्कुरे पक्षतावच्छेदकस्य क्षित्यङ्कुरत्वस्य अभावः नास्तीति प्रकृते पक्षासिद्धिरूपः दोषः नास्ति। पक्षे हेतोरभाव एव स्वरूपासिद्धिः, पक्षे क्षित्यङ्कुरे हेतोः कार्यत्वस्य अभावः नास्तीति स्वरूपासिद्धिर्दोषः नास्तीति। पक्षे साध्यस्य अभाव एव बाधः। पक्षे क्षित्यङ्कुरे साध्यस्य सकर्तृकत्वस्य अभावः नास्तीति बाधरूपो दोषो नास्तीति।

अभीष्टस्य साधक इति कथनात् सिद्धसाधनदोषो नास्तीति पक्षता अत्र वर्तते। सिद्धः-निश्चितः, साधनं-ज्ञापनम् सिद्धसाधनं नाम निश्चितरूपेण ज्ञातवस्तुनः ज्ञानसम्पादनम्। वस्तुनः निश्चितरूपेण सद्भावदशायां तस्य पुनः ज्ञानोत्पादनावश्यकता न भवति तज्ज्ञानसम्पादनस्य प्रयोजनमपि नास्ति। अतः सिद्धस्य साधनमपि दोषः। परार्थानुमानकाले परस्य जनस्य निश्चितरूपेण ज्ञातस्य वस्तुनः ज्ञानसम्पादनवेलायां सिद्धस्य साधनरूपो दोषो भवति। किन्तु कस्यापि वस्तुनः दृढे ज्ञाने सति तस्य झटिति स्मरणं भवति। तथा च ज्ञानस्य दृढतासम्पादनार्थं किम्वा प्रथमोत्पन्ने ज्ञाने प्रायः संशयोऽपि स्वाभाविकः—ज्ञानं यथार्थमयथार्थं वा अर्थात् यदस्माभिरवगतं तत् भ्रमात्मकं सत्यम्वा एतादृशाप्रमाण्याशङ्कानिवारणार्थं वस्तुनः पुनः ज्ञानसम्पादनेच्छायां सत्यां सिद्धस्य साधनमपि नैव दोषायेति।

"आत्मा वाऽरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यादिवाक्यं वेदस्य महावाक्यम्। श्रोतव्यो मन्तव्य इत्यादिशब्देषु तव्यप्रत्ययः विधिप्रत्ययः। विधिप्रत्ययस्य अर्थः इष्टस्य साधनत्वं, कर्तव्यत्वं, बलवदनिष्टस्य-गुरुतरामङ्गलस्य अजनकत्वं, तथा च श्रोतव्यः इति वेदवाक्यानन्तरं मन्तव्यः इति वेदवाक्येन मोक्षार्थिनः आत्मविषयकश्रवणानन्तरं मनने इष्टसाधनत्वस्य, कर्तव्यत्वस्य, बलवदनिष्टाजनकत्वस्य च ज्ञानं भवति अर्थात् मन्तव्यः इति वेदवाक्येन मोक्षार्थिनोऽवगच्छन्ति, श्रवणानन्तरं मननं मदुद्देश्यस्य सम्पादकमिति, मननं मत्कर्तव्यं, मननं गुरुतरानिष्टोत्पादनेऽसमर्थम्। इष्टसाधनताज्ञानमिच्छां प्रति कारणम्, कस्मिन्नपि वस्तुनि इष्टसाधनताज्ञाने सति, अर्थात् कस्मिन्नपि वस्तुनि उद्देश्यसम्पादकत्वावगते तदर्थमिच्छा भवति। मन्तव्यः इति वेदवाक्यवशात् आत्मश्रवणानन्तरं मोक्षार्थिनः मननस्य इच्छा भवति, तथा च वेदवाक्यश्रवणेन परमात्मनः ईश्वरस्य अवगतौ सत्यामपि मोक्षार्थिनः ईश्वरसाधने सिद्धिसाधनदोषः नास्ति। तस्मात् न्यायवाक्यकथनं न निरर्थकम्। सत्यपरामर्शे योग्य-प्रमापरामर्शस्योत्पादने समर्थः। एतत्कथनेन विरोधव्यभिचारस्वरूपासिद्धिव्याप्यत्वासिद्धिप्रभृतयो दोषाः न सन्तीत्यवगतिर्जायते। साध्यव्याप्तिविशिष्टो हेतुः पक्षे, साध्यव्याप्तविशिष्टहेतुविशिष्टो वा पक्षः इत्यादि-

निश्चय एव परामर्शः । अनेन प्रकारेण पक्षे हेतुः, हेतौ च साध्यव्याप्तिरेवं च हेतुतावच्छेदकधर्मप्रभृतयः परामर्शस्य विषयाः भवन्ति । एवमेव यदि हेतौ साध्यव्यभिचारः—व्याप्तेरभावः, विरोधः—हेतुसाध्ययोरेकत्रानवस्थितिः, स्वरूपासिद्धिः पक्षे हेतोरभावः तदा सत्यः यथार्थो वा परामर्शो न भवति । ईश्वरानुमापकपरामर्शस्य सत्यतादशायां हेतौ कार्यत्वादौ साध्यस्य सकर्तृकत्वादेः व्यभिचारः अर्थात् सकर्तृकत्वादेरव्याप्तिः नियतस्य साहचर्य्यस्य अभावः, विरोधः, साध्यस्य सकर्तृकत्वादेः एवं हेतोः कार्यत्वादेः एकत्रानवस्थितिः स्वरूपासिद्धिः पक्षे क्षित्यङ्कुरादौ हेतोः कार्यत्वादेरभावो नास्ति इत्येव अवगम्यते ।

प्रतिपक्षचिन्तया मालिन्यरहितो हेतुः, कथिते ईश्वरानुमाने सत्प्रतिपक्षो नास्ति-कार्यत्वप्रभृतिः हेतुः सत्प्रतिपक्षदोषेण दुष्टः हेत्वाभासो वा नास्ति इत्येव सूच्यते । अयमाशयः—प्रतिपक्षः अन्यकार्ये तुल्यबलतया बाधादाने समर्थः । चिन्तानिश्चयः, क्षित्यङ्कुरं, सकर्तृकं कार्यत्वात् इत्याद्यनुमानेन, सकर्तृकत्वव्याप्यकार्यत्वविशिष्टं क्षित्यङ्कुरमित्यादिपरामर्शेन वा क्षित्यङ्कुरं, सकर्तृकमित्याद्यनुमितिवेलायां, क्षित्यङ्कुरम्, अकर्तृकं, शरीराजन्यत्वादित्याद्यनुमानम्, अकर्तृकत्वव्याप्य-शरीराजन्यत्वविशिष्टं क्षित्यङ्कुरमित्यादिचिन्ता निश्चयो वा अर्थात् परामर्शः बाधको भविष्यति, एतादृशी चिन्तैवात्रापाततः प्रतिपक्षः सम्भवति । इदमत्र कारणम्—कुम्भकारः घटस्य कर्ता, तन्तुवायः वस्त्रवयनं करोति । एतेषु उदाहरणेषु कर्तृमात्रस्य सशरीरत्वं स्वीकर्तव्यमेव, अतः कार्यमात्रस्यैव शरीरजन्यत्वमङ्गीकरणीयम् । शरीरी जीवस्तु सयत्नोऽपि क्षित्यङ्कुरमुत्पादयितुं नैव समर्थो भवति, एवमेवेश्वरोऽपि शरीररहितत्वात् क्षित्यङ्कुरादिकार्यस्य कर्ता न भवितुमर्हति । तथा च क्षित्यङ्कुरादिकम्, सकर्तृकं, शरीराजन्यत्वादित्यपि अनुमानं सेत्स्यति, एतदनुमानमेव च आपाततः प्रतिपक्षो भविष्यति । किन्त्वेतादृशमनुमानं वस्तुगत्या प्रतिपक्षकक्षामधिशेतुं न शक्नोति, यतः एदादृशमनुमानं चिन्ता परामर्शो वा न समानोऽपि तु दुर्बलः शरीराजन्यात्वादिहेतोः हेत्वाभासविषयकत्वेन दुर्बलत्वात् । एवं कार्यत्वादिति हेतोश्चिन्ता परामर्शो वा सद्धेतुविषयकत्वेन बलवान् । साध्यव्याप्तिः पक्षधर्मता (पक्षे अवस्थितिः) एतदुभयमेव हेतोर्बलम् । हेत्वाभासश्च—दुष्टहेतुः व्याप्तिशून्यः पक्षधर्मताहीनो वा अवश्यमेव भविष्यति । शरीराजन्यत्वप्रभृतिः प्रतिहेतुः, सकर्तृकत्वाभावव्याप्तिरहितः, अर्थात् अयं शरीराजन्यत्वादिति हेतुः व्यभिचारीति हेत्वाभासमात्रमेवेति दुर्बलः यतः, क्षित्यङ्कुरं, शरीराजन्यं, सकर्तृकम्, ।

यद्धि शरीराजन्यं तद्धि सकर्तृकत्वाभावविशिष्टम् अकर्तृकम्वेति एतादृशी व्याप्तिर्नास्ति। पञ्चमस्तबकोक्तकार्यत्वप्रभृतिः हेतुः सकर्तृकत्वप्रभृतिसाध्यव्याप्तिविशिष्टः एवं पक्षे क्षित्यङ्कुरादौ अवस्थितत्वात् बलवान् सद्धेतुरयमिति दुर्बलः प्रतिपक्षः एतस्य बलवतः सद्धेतोः बाधको भवितुं नार्हति। अथ वा साध्याभावव्याप्तिविशिष्टः प्रतिहेतुः, तादृशहेतुविशिष्टपक्षसम्भवस्थल एव (तादृशपक्ष एव) सत्प्रतिपक्षः विद्यमानप्रतिपक्षो वा। क्षित्यङ्कुरं, सकर्तृकं, कार्यत्वात्, अत्र सकर्तृकत्वादेरभाव एव साध्याभावः एवं शरीराजन्यत्वादिकमेव प्रतिहेतुः, शरीराजन्यत्वं प्रतिहेतुः सकर्तृकत्वाभावव्याप्तिविशिष्टः नास्तीति पक्षे क्षित्यङ्कुरादौ सकर्तृकत्वाभावव्याप्तिविशिष्टरूपेणावस्थितः शरीराजन्यत्वरूपहेतुर्नास्ति, अतः पूर्वोक्तसकर्तृकत्वस्य कार्यत्वहेतुनानुमाने सत्प्रतिपक्षदोषो नास्ति। तथा च प्रतिपक्षचिन्तावशात् कार्यत्वादिहेतुः दुष्टः सन् क्षित्यङ्कुरादीनां सकर्तृकत्वसाधकानुमितौ असमर्थो न भवति। अयमाशयः—क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टं सकर्तृकत्वाभावव्याप्यशरीराजन्यत्वविशिष्टमित्यादिपरामर्शसद्भावे क्षित्यङ्कुरमकर्तृकं सकर्तृकत्वाभावविशिष्टम्वेति अनुमितिः स्यात्, किन्तु क्षित्यङ्कुरं वस्तुतः सकर्तृकत्वाभावविशिष्टं नास्तीति एतादृशी अनुमितिः प्रमा यथार्थज्ञानम्वा न भविष्यति, तथा च अयं परामर्शः प्रमाणं प्रमाज्ञानजनकं नास्तीति प्रमाणाभासमात्रम्। अन्यत्र च क्षित्यङ्कुरं वस्तुतः सकर्तृकमिति कार्यत्वादिहेतोः कार्यं क्षित्यङ्कुरं सकर्तृकमित्येतादृश्यनुमितिः प्रमा यथार्थज्ञानम्वा। एतादृशानुमितेर्जनकं सकर्तृकत्वव्याप्यकार्यत्वविशिष्टमिति परामर्शः प्रमाणम्। प्रमाणाभासश्च प्रमाणकार्यबाधको न भवति। परार्थानुमितौ कार्यत्वादिहेतुना क्षित्यङ्कुरादौ सकर्तृकत्वानुमितिसम्पादनार्थं प्रथमतः क्षित्यङ्कुरादौ साध्यं सकर्तृकत्वं हेतुः कार्यत्वम्, अनयोः कार्यत्वसकर्तृकत्वयोः हेतुसाध्ययोः परामर्शसम्पादनमावश्यकम्। किन्तु अयं हेतुः वस्तुतः दुष्टः हेतुः हेत्वाभासो वा स्याच्चदा जिज्ञासुः प्रतिवादी वा दोषानिमानुद्भाव्य कार्यत्वहेतौ सकर्तृकत्वरूपसाध्यस्य व्याप्तेरभावज्ञानं किम्वा क्षित्यङ्कुरादिस्वरूपपक्षस्य धर्मताया अभावज्ञानं सम्पादयेत्। तथा सति एतत्पक्षहेतुसाध्यविषयकपरामर्शस्य अर्थात् सकर्तृकत्वव्याप्यकार्यत्वविशिष्टक्षित्यङ्कुरमित्यादिरूपनिश्चयस्य भ्रमत्वं निर्णीतं स्यात्। एवञ्च तेन परामर्शेन क्षित्यङ्कुरं सकर्तृकमित्यनुमितिः ( निश्चयः ) न स्यात्, तत्र न्यायालोचनं मुधैव स्यात्, आचार्यः, एतद्ग्रन्थप्रतिपाद्यन्यायः निर्दोषहेतोः परामर्शस्य सम्पादकः इत्येव प्रतिपादयति। रसः, अभिलषिता अमृतम् अमरता मोक्षः, मुक्तिः। जीवः वर्तमानदेहावसाने पुनः देहादिधारणं न कुर्याच्चेत्तदा मुक्तिरेव। ईश्वरमननेनैतज्जायते इति तदुपयोगिनः न्यायवाक्यस्य जन्मस्थानत्वम्।

कुसुमाञ्जलिपक्षे—

सुखमेव जीवस्यानुकूलसंवेदनीयम् । सुखमेव काम्यं भोग्यञ्च । जीवः स्वभावत एव सुखार्थं लालायितो वर्तते सुखकामनयैव सर्वदा सुखोपायान्वेषणे तत्परस्तिष्ठति । क्षणिकसुखार्थं कियद्दुःखं सहते ? उद्देश्यं—सुखस्योपभोगः तदुपलब्धिर्वा । मिथ्याज्ञानविशिष्टः जीवः सुखभोगकामनयैव पुनः पुनः लोके जायते म्रियते च । जन्ममृत्युप्रवाहे निरन्तरमुन्मज्जति निमज्जति च । कदाचित् सांसारिकसुखलाभे हृष्टः उदारः संसारी भवितुमेव कामयते । कदाचित् दुःखाभिघातजर्जरितः प्रतिकूलवेदनीयं दुःखं जिहासति । सुखराग एव जीवस्य प्रकृत-बन्धनं, तृष्णाया अभावे दुःखबहुलसंसारे पुनः पुनः आगमनस्य अर्थात् देहधारणस्य प्रयोजनमेव नास्ति । काम्यस्य अभिलषितस्य वस्तुनः संप्राप्तौ अन्यत् किमभिलषेत् ? सांसारिकसुखमात्रमेव क्षणिकम् । एतादृशसुखोपभोगेन जीवः एकान्ततृप्तः कामनाशून्यो वा न जायते । भोगं कुर्वत एव जीवनं गच्छति । विशेषतः सांसारिकसुखमात्रमेव दुःखमिश्रितम् । मुमुक्षुः विवेकी एतादृशसुखकामनां न करोति । नित्याविनाशि-चिरस्थायिसुखमेव कामयते । अनन्तसुखोपलब्धौ न कापि कामनाऽवशिष्यते, सर्वथा कामनाशून्यस्तिष्ठति । न किमपि बन्धनं वर्तते । बन्धनमुक्तः संसार-कारागरे न कदापि आगच्छति । श्रुतावप्युक्तं "न स पुनरावर्तते" । नित्यसुखोपलब्धिरेव मुक्तिः । भाट्टमीमांसकानामप्येतदेवाभिमतम् । इदानीं विचार्यते यदेतस्य नित्यसुखस्य भोगः उपलब्धिर्वा नित्या अनित्या वा ? । यदि नित्योऽर्थादुत्पत्तिविनाशहीनः भोगस्तदा संसारदशायामपि जीवस्य नित्यसुखभोगवर्तमानतां को नाम निवारयेत् । दुःखभोगेन सहैव नित्यसुखभोगोऽपि स्वीकरणीयः । किन्तु एककालावच्छेदेन सुखदुःखोभयभोगः सर्वथाऽनुभवविरुद्धः, तस्मात् नित्यसुखभोगः अनित्यः जन्यः इत्येवाङ्गीकरणीयः । उत्कटधर्मसंचयानन्तरं तेन देहावसाने नित्यसुखभोगो भवति स चानन्तकालपर्यन्तमवतिष्ठते । जीवस्य संसारावस्थायां नित्यसुखसद्भावेऽपि शरीरादिसम्बन्धरूपप्रतिबन्धकवशात् तस्य भोगः उपलब्धिर्वा न जायते इत्येव स्वीकरणीयम्, परन्तु एतत्कल्पनामात्रम् । यतः यद्धि कारणं तदेव प्रतिबन्धकमिति न भवितुमर्हति सुखदुःखादिभोगं प्रति आत्मनः शरीरसम्बन्ध एव कारणम् । तर्कस्थले आत्मनः शरीरसम्बन्धस्य नित्यसुखभोगं प्रति प्रतिबन्धकत्वस्वीकारेऽपि नित्यसुखभोगस्य जन्यभावपदार्थत्वे तस्य चिरस्थायित्वं न स्यात्, यतः जन्यभावपदार्थस्य विनाशित्वात् । भोगः उपलब्धिः अनुभवो वा, नित्यसुखभोगः नित्यसुखानुभवः अर्थात् नित्यसुखोपलब्धिः नित्यसुखसाक्षात्कारो वा साक्षात्कारश्च प्रत्यक्षज्ञानम्, जीवस्य ज्ञानमात्रम् द्वित्रिक्षणावस्थायि

न तु दीर्घकालस्थायि। नित्यसुखभोगः, नाशप्रतियोगिजातीयजन्यपदार्थः, नाशप्रतियोगिजातीयजन्यपदार्थस्य नाशः अवश्यम्भावी, अन्यथा—नित्यघटादयोऽपि कल्पनाया विषयः स्यात्। विशेषतः उत्कटधर्मस्यैव नित्यसुखभोगं प्रति कारणत्वं वक्तव्यम् तथा च धर्मकार्यत्वात् भावपदार्थत्वाच्च सुखं क्षयि, शास्त्रे च वर्णितं वर्तते—पुण्यक्षये (धर्मक्षये) मर्त्यलोके पुनरागमनं भवति[१]। मर्त्यलोके नित्यसुखभोगो न भवति, अतः धर्मक्षये नित्यसुखभोगस्य मुक्तेर्वा क्षयोऽवश्यमेवाङ्गीकरणीयः, मोक्षस्य क्षयित्वे तु श्रुत्या सह विरोधः स्यात्, श्रुतावुक्तं—मुक्तजीवस्य पुनरावृत्तिर्न भवति[२]। किञ्च उत्कटपुण्यबलेनानन्तकालस्थायिनित्यभोगस्वीकारे तुल्ययुक्त्या उत्कटपापबलेन नित्यदुःखभोगस्वीकारोऽपि अपरिहार्यः स्यात्, तथा चोत्कटपापवतः दुःखस्य कदाचिदपि निवृत्तिर्न भवेत्, किन्तु शास्त्रे एतादृशं वचनं नास्ति यत् उत्कटपापवतः दुःखभोगाद्विनिवृत्तिर्न भवति। बद्ध एव वस्तुतः दुःखी बद्धकथनादेव तस्य मोक्षावस्थापि वर्तते इति स्वीकरणीयम्। उत्कटपापवतः कदाचिदपि एतादृशी अवस्था नागच्छति इति कथनन्तु न युक्तिसहम्। सुखं च आत्मनः एको विशेषगुणः, येन बन्धनं जायते तस्यैव प्रचलितसंज्ञा गुण इति। सुखकरकर्मसमूहः सुखस्वरूपगुणेन आत्मनः बन्धनं करोति। (आत्मनः कैवल्यस्य केवलभावस्य वा आवरणं करोति) सुखप्राप्तौ जीवः आत्मनोऽनुकूलतामनुभवति। एतदेव दुःखात् सुखस्य विशेषः। सुखस्य मुक्तिस्वरूपत्वं तु न सम्भाव्यते। महर्षिः अक्षपादः, मोक्षोपायभूततत्त्वज्ञानविषये द्वादशविधं प्रमेयपदार्थमुपवर्णयति[३]। तत्र सुखपदार्थं पृथक् नैव कथयति, यतः दुःखसम्पर्करहितं सुखं नितान्तमसम्भवम्, अतः सुखमपि तेन दुःखमध्ये एव परिगणितमन्यथा सुखकथनमपि सूत्रे आवश्यकमाभाति। अस्मादेव कारणात् नैयायिकाः दुखात्यन्तिकनिवृत्तिरेव मुक्तिरिति विवेचयन्ति। नाशः, निवृत्तिर्वा यदा जायते। तदाऽनन्तकालमवतिष्ठते। यद्यपि नाशः उत्पद्यते तथाप्यसौ भावपदार्थो नास्ति, किञ्च नाशप्रतियोगिजातीयोऽपि नास्ति, नाशो हि अभावपदार्थस्तथा च नाशस्य नाशो न जायते, तथा सति यस्य नाशः संजातः स पुनरप्युत्पद्येत, परं नष्टोऽसौ नोत्पद्यते, यथा नष्टे घटे न स उत्पद्यते, तद्घटनष्टे अन्यः घटः उत्पद्यते परं नासावेव नष्टः घटः पुनरुत्पद्यते। यादृशदुःखनाशात् निवृत्तस्य दुःखसजातीयस्य दुःखान्तरस्यो-

---

१. "क्षीणे पुण्ये मर्त्यलोकं विशन्ति"।

२. "न स पुनरावर्तते"।

३. "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःखापवर्गास्तु प्रमेयः—(म्) अक्षपाद-सू० १-१-६

त्पत्तिसम्भावना नास्ति, तादृशनिवृत्तिरेवात्यन्तिकदुःखनिवृत्तिः (अर्थात् चरमदुःखावसानम्) तथा सत्येव पुरुषः कृतार्थो भवति, पुरुषस्य पुनरस्मिन्संसारे आगमनं न भवति। एतादृशी मुक्तिः, अभावस्वरूपा इति इयं मुक्तिः पुनः आत्मबन्धनकरणे अर्थादात्मनः परममहत्त्वस्य कैवल्यस्य वावरणे समर्था न जायते। तदानीं स्वरूपेऽवस्थितिर्भवति। दुःखाभावार्थं जनः सततं सचेष्टः अभिलाषान्वितः वर्तते। गुरुभारः यदा स्कन्धे वर्तते तदा तदवरोहणार्थं सर्वेषामेवेच्छा जायते, अवरोहानन्तरं सुखं न भवति परं दुःखनिवृत्तिवशादेव सुस्थो भवति। जीवः अस्मिन् संसारे दुःखंपरिजिहीर्षुरेव वर्तते। अतः दुःखात्यन्तोच्छेदाभिलाषा एव स्वाभाविकी, अतः दुःखस्यात्यन्तिकी निवृत्तिरेव मुक्तिः सैव च पुरुषार्थः। मोक्षसम्बन्धे मतभेदेऽपि आत्मतत्त्वविवेके आचार्यः दुःखस्यात्यन्तनिवृत्तिरेव मोक्ष इत्यवोचत्। श्रुतावप्युक्तं "दुःखेनात्यन्तं विमुक्तश्चरति"। बहुधा सुखबोधकशब्देन दुःखाभाव एव लक्षितो भवति, अत एवैकान्तिकात्यन्तिकदुःखनिवृत्तिरपवर्ग इति।

देहेन्द्रियादौ जीवस्यात्मत्वज्ञानं मिथ्याज्ञानं इदमेवाविद्या एतदेव संसारस्य निदानम्, अनादिकर्मवासनान्वितस्य जीवस्य प्रतिक्षणं देहेन्द्रियादिकमेवावलम्ब्य "अहं" बुद्धिर्जायते, अर्थात् जीवः अहं गौरः, अहं खादामि, अहं गच्छामि, अहं काणः, अहं बधिरः" इत्यादिरूपेणावगच्छति। एतादृशशरीरादिधर्मविशिष्टाहन्त्वज्ञानमेव दोषः, देहेन्द्रियादिषु आत्मत्वज्ञानादेव जीवः तत्सम्पर्कीयस्त्रीपुत्रप्रभृतिषु आसक्तः, प्रतिकूलविषयेषु द्वेष्टा, एवमत्यधिक-विषयोपभोगेषु मुग्धो भूत्वा मृत्युभयेन सर्वदा भीतः सन्त्रस्त एव कालं नयते। पूर्वोक्त-समुदाय एव दोषः। एतत्सकलदोषवशादेव जीवः स्वाभिलषितविषये प्रवृत्तः एवं प्रतिकूलात् दुःखकरात् वा विषयात् निवृत्तो भवति। प्रवृत्तिः निवृत्तिश्च जन्मनः कारणम्, यदा जीवः अवगच्छति यत् केनाप्युपायेन वर्तमानदेहस्य-रक्षणं न भविष्यति तदा प्रवृत्ति-निवृत्ति-मूलभूतं पूर्वदेहं परित्यज्य स्वीयसञ्चितकर्मसंस्कारवशेनादृष्टानुसारेण वा देहान्तरपरिग्रहं करोति, अयमेव जीवस्य संसारः। जीवः संसारी भूत्वा नानाविधसुखदुःखसंघातमनुभूय व्याकुलः सन् दिवानिशं वैकल्यमनुभवति। एतादृशसंसारस्योच्छेदं विना दुःखस्यात्यन्तिकावसानं न सम्भवति, अत एव मोक्षार्थिना संसारस्य (जन्मनः) उच्छेदोऽवश्यमेव करणीयः। संसारोच्छेदार्थं तत्कारणीभूतायाः प्रवृत्तेरुच्छेदकरणमावश्यकम्; प्रवृत्तेरुच्छेदकरणार्थं तत्कारणीभूतस्य दोषस्योच्छेदकरणमावश्यकम्, दोषस्य चोच्छेदकरणार्थं तत्कारणीभूतस्य मिथ्याज्ञानस्य अविद्यायाः वा

अपायः आवश्यकः[१]। अस्यामवस्थायां कारणाभाववशात्कार्याभावः। अस्मिन् अक्षपादीये दर्शने जीवस्याभिलषितं चरमफलं मोक्षः आत्यन्तिकदुःखनिवृत्तिर्वा। मिथ्याज्ञानस्य निवृत्तिं विना अशेष-ज्वाला-जटिल-संसारात् कदाचिदपि केनापि कारणेन आत्यन्तिकविमोक्षः भवितुं नार्हति। यथार्थज्ञाने जाते मिथ्याज्ञानस्यात्यन्तिकी निवृत्तिर्भवति। यथा रज्जौ सर्पज्ञानं मिथ्याज्ञानं, एतन्मिथ्याज्ञानं रज्जुरियं नायं सर्पः इत्यादियथार्थज्ञानेनैव निवर्तते। रज्जोः यथार्थरूपेण ज्ञाने जाते तदुपलक्षितसर्पत्वभ्रान्तिर्न तिष्ठति। देहेन्द्रियादिषु जीवस्यात्मत्वबुद्धिरूपं मिथ्याज्ञानमस्ति अहं देहादिभ्यो व्यतिरिक्तः स्वतन्त्रः कर्त्ता, भोक्ता, चेतनः यथार्थज्ञानम्। किं कारणम् देहेन्द्रियादयः कर्तृत्वभोक्तृत्वरहिताः अचेतनपदार्थाः इमे आत्मनो भिन्नाः अस्मादेव यथार्थज्ञानात् पूर्वोक्तं मिथ्या ज्ञानं विनिवर्तते। ईश्वरः जीवापेक्षया स्वतन्त्रः;[२] देहेन्द्रियादौ आत्मत्वं जीवाभेदत्वम्वा ईश्वरविषयकतत्त्वज्ञानेनैव निवृत्तिमाप्नोति। कश्चिद् कस्मिंश्चिद्विषये ज्ञानवान् अपरः तद्विषये किमपि न जानाति, इत्यादिरूपेण विरुद्धानुभववशात् जीवः नाना, ईश्वरश्च एकः, अद्वितीयः, इति जीवः ईश्वरेणाभिन्नो न भवितुमर्हति।

यदात्मानं विजानीयादयमस्मीति पुरुषः।
किमिच्छन् कस्य कामाय संसारमनुसंसरेत्॥
तमेव विदित्वातिमृत्युमेति,
नान्यः पन्था विद्यतेऽयनाय।

---

१. "दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" अक्षपाद सू० १-१-२।

२. ईश्वरः जीवापेक्षया स्वतन्त्रः, इति तु आगमेन युक्त्या च सिद्धः। श्रुतिः—द्वा सुपर्णा सयुजा इत्यादि, द्वे ब्रह्मणी वेदितव्ये परश्चापरमेव च, ऋतं पिबन्तौ सुकृतस्य लोके इत्यादि। युक्तिः—ईश्वरस्य किमपि प्राप्तव्यमप्राप्तव्यम्वा नास्ति, प्राप्त्या हान्या वा ईश्वरस्य सुखदुःखसम्भावना नास्ति, असौ सुख-दुःखविहीनः जीवः सुख-दुःखाभ्यामभिभूतः, ईश्वरः जगत्कर्त्ता, जगन्निर्माणे जीवस्य सामर्थ्यं नास्ति, एवमेव यस्मिन् समये एकः कश्चित् सुखी तस्मिन्नेव समयेऽपरः दुःखी, तत्रैव एकस्मिन् समये उक्तमिथ्याज्ञानस्य विनाशार्थं जीवात्मविषयकतत्त्वज्ञानमेव = पूर्वोक्तयथार्थज्ञानमेव उपयोगि, एकस्मिन् आश्रितमेकस्य मिथ्याज्ञानम्, यथा—रज्जौ सर्पत्वस्य मिथ्याज्ञानम् अन्यस्वरूपज्ञानेन अर्थात् घट-पट-स्वरूपज्ञानेन विनष्टं न भवति, तादृशमिथ्याज्ञानविनाशे, रज्जोः सर्पस्य वा यथार्थज्ञानमेवोपयोगि, तथैव—जीवात् एवं देहादिभ्यः पृथक् ईश्वरतत्त्वज्ञानेनापि देहादौ जीवस्य अभेदः आत्मत्वज्ञानम्वा न नश्यति, एतादृशमिथ्याज्ञानविनाशे जीवात्मविषयकं तत्त्वज्ञानमेवोपयोगि। जीवाभिलषित-चरमफलमोक्षार्थमीश्वरतत्त्वज्ञानस्य प्रयोजनं नास्ति, यतस्तदा ईश्वरमननोपयोगिपूर्वोक्तन्यायवाक्यसमूहो निरर्थकः स्यात्।

स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥

पूर्वोक्तदोषापादनं नैव समीचीनम्, यतः, भगवतः उपासनया जीवस्य स्वर्गतुल्या द्विविधमुक्तिः ( जीवन्मुक्तिः परममुक्तिश्च ) भवति। ईश्वरविषयकमननेन साक्षात् पूर्वोक्ताविद्याया उच्छेदाभावेऽपि ईश्वरस्य यथार्थज्ञानसद्भावेऽसौ जीवमनुगृह्णाति। तदनुग्रहेऽर्थात् ईश्वरोपासनाजनितशुभादृष्टबलेन जीवः स्वात्मसाक्षात्कारबलेन अर्थात् स्वरूपस्य यथार्थोपलब्ध्या पूर्वोक्तमिथ्याज्ञानं परम्परया समूलघातं हन्ति। यथार्थज्ञाने जाते अशेषज्वालामयसंसाराद् रक्षणं भवति। अतः जीवस्य स्वात्मसाक्षात्कारोत्पादनेन ईश्वरमननमपि मोक्षस्योपयोगि इति ईश्वरनिरूपणं नैव वृथा। श्रुतावप्युक्तं तमेव परमात्मानमीश्वरं विदित्वा जीवः मृत्युमतिक्रामति। मुक्तेरन्यः उपायो नास्ति जीवस्यात्मसाक्षात्कारोऽपि मुक्तेः कारणमित्यपि श्रुतौ प्रतिपादितम्—अहमेवम्भूतः, अहं देहेन्द्रियादिभ्यो भिन्नः स्वतन्त्रः चेतनः इत्यादिरूपेण यदात्मानं विजानीयात् तदा किमिच्छन् कया कामनया देहधारणं कुर्यात्? अस्यां स्थितौ जीवस्य वासना ( अदृष्टं ) उच्छिन्ना भवति, इदानीं संसारे किमपि प्राप्तव्यं नास्ति, इति मुक्तिं लभते। अनेन क्रमेण ईश्वरतत्त्वज्ञानं जीवतत्त्वज्ञानं समुत्पाद्य मुक्तिकारणमिति ईश्वरोपासना नैव वृथा।

शुद्धबुद्धचित्स्वभावः=स्वभाविकचेतनः,
आदिविद्वान् सृष्ट्यारम्भे ज्ञानस्वरूपः सिद्धः अष्टविधैश्वर्ययुतः।
अणिमा—अणुत्वम्, यद्गुणसाहाय्येन कठिनप्रस्तरादावपि प्रवेशं प्राप्नोति।
लघिमा=लघुत्वं, यद्गुणवशात् सूर्यरश्मिमवलम्ब्य सूर्यलोकं गन्तुं क्षमते।
महिमा—महत्त्वं, यद्गुणवशेनातिशयबृहत्वं प्राप्नोति।
प्राप्तिः = बहुदूरवर्तिवस्तुहस्तसम्पर्ककरणक्षमता।
वशित्वं—परानधीनता
ईशित्वम् = सर्वोपरि स्वप्राधान्यम्
कामावसायिता = सत्यसंकल्पता। यदिच्छति तदेव करोति।

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरा गता ॥ ३ ॥

वेदे श्रवणोत्तरमेव मननस्योपदेशो वर्तते। स्मृतावप्युक्तं प्रथमतः आगमेन शास्त्रेण वानन्तरं मननेन एवं ध्यानाभ्यासेन उत्तमयोगः विज्ञानं वा लभ्यते, मुक्तिकामि-

पुरुषेण। श्रुतिस्मृतीहासपुराणादौ भगवतः अनेक विधरूपं श्रुतमिदानीं मननं कुरु मननं विना आत्मतत्त्वज्ञानं न सम्भाव्यते। श्रवणं—शब्दद्वारार्थनिश्चयः। "आत्मा वारे—इत्यादिवेदवाक्येन परमात्मविषयकश्रवणस्यानन्तरं मननं विहितम्, अत्र प्रथमम् परमात्मविषयकश्रवणमावश्यकम्। तथा च प्रथमं वेदवाक्येन ईश्वरस्य परमात्मनो वा निश्चये जाते श्रवणानन्तरं मननं नैव सम्भाव्यते यतः पूर्वं साध्यसिद्धिसत्त्वे मननमनुमितिर्वा न भविष्यति। सिद्धिः अनुमितेः प्रतिबन्धिका। ईश्वरमनने ईश्वरः साध्यः अर्थासिद्धेरुपयुक्तः। श्रोतव्य इत्यादिमन्त्रवाक्येन प्रथमम् ईश्वरसम्बन्धे निश्चय आवश्यकः, तथा चावश्यकीयेश्वरविषयकशाब्दसिद्धिवशतः ईश्वरमननं न भविष्यति। श्रोतव्यः, मन्तव्यः इत्यादिस्थले मन् + तव्य = मन्तव्यः, तव्यप्रत्ययश्च विधिप्रत्ययः, विधेरर्थः इष्टसाधनत्वं कर्तव्यत्वं, गुरुतरदुःखाजनकत्वम्। वेदस्य "श्रोतव्य" इति वाक्येन ईश्वरस्य येन रूपेण विधानम्, "मन्तव्य" इति वाक्येन मननस्यापि तथैव विधानमस्ति। तथा च श्रोतव्यः मन्तव्य इत्याद्येकैनैव महावाक्येन ईश्वरस्य मननमपि अवश्यमेव करणीयम्, इष्टत्वेन उद्देश्यसाधनरूपत्वेन वा अवधारिते सति ईश्वरमनने मोक्षार्थिनः इच्छा आकांक्षा वा जायते। इष्टसाधनताज्ञानमिच्छायाः कारणम् अर्थात् किमपि वस्तु इष्टस्य साधनम् उपकारि वेति ज्ञाते तद्विषये इच्छा भवति। तथा च प्रथमतः वेदवाक्येन ईश्वरस्य निश्चयरूपेण ज्ञानेऽपि न क्षतिः। साध्यस्य सिद्धिसत्त्वे अनुमितिर्न भवति किन्तु साध्यसिध्यर्थमाकाङ्क्षायां मननेच्छायाम्वा पूर्वं साध्यसिद्धौ सत्यामपि मननमनुमितिर्वा भवति। अयं भावः—रामस्य अग्नेः प्रयोजनमस्ति, अनुसन्धत्ते कुत्राग्नेरुपलब्धिः स्यात्। लोकमुखाच्छ्रुतं अस्मिन् पर्वते अग्निरस्ति। अनेन वाक्येन रामस्य अग्निः पर्वतेऽस्ति इति ज्ञानसिद्धावपि इच्छति केनापि विशेषहेतुना अवगत्य अग्न्यर्थं पर्वतं प्रति गन्तव्यम्। प्रथमतः लोककथनेन पर्वतेऽग्निनिश्चयेऽपि यदि पर्वते धूमादिदर्शनं जायते तदा एतादृशेच्छाबलेन "पर्वतो वह्निमान्" एतादृशं मननमनुमितिर्वा भवति। तथा च साध्यसिद्धीच्छाऽभावे एव सिद्धिः प्रतिबन्धिका भवति अनुमितेः। अस्यां स्थितौ मोक्षार्थिनः ईश्वरमननस्य आकांक्षितदशायां प्रथमतः वेदवाक्येन ईश्वरस्य निश्चयसद्भावेऽपि अयं निश्चयः ईश्वरमननस्य प्रतिबन्धको न जायते। सिषाधयिषा—( साध्यसिद्धीच्छा ) विरहसहकृता सिद्धिरेवानुमितिप्रतिबन्धिका तथा च तादृशसिद्ध्यभावः कारणम्। मोक्षार्थिन ईश्वरमननात्पूर्वं तद्विषयश्रवणसद्भावेऽपि वेदवाक्येन ईश्वरनिश्चयः ( श्रवणं ) ईश्वरविषकमननेच्छाभावसहकृतो नास्ति, ईश्वरविषयकश्रवणस्यैवं मननेच्छाया अभावस्य

च एकस्मिन् मोक्षार्थिपुरुषे एकसमयेऽनवस्थानात् मननस्य प्रतिबन्धको न भवति ।

तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः । तथा सत्यपि अस्मिन् ग्रन्थे संक्षेपेण पञ्चविप्रतिपत्तयः सन्ति । विप्रतिपत्तिः—विपरीतबुद्धिः विरुद्धधारणा वा । यद्यपि परमात्मसम्बन्धेऽनेकेषामनेकविधाः विरुद्धधारणाः वर्तन्ते तथापि यथाक्रमं पंचविंप्रतिपत्तिनिरासनेनैव अन्यविप्रतिपत्तयः स्वत एव निरस्ताः भविष्यन्ति । कस्मिन् अपि विप्रतिपत्तेः विरुद्धधारणायाः वा फलं तस्मिन् विषये संशयः, विप्रतिपत्तिकथनेनैव संशयसूचना जायते ।

१—अलौकिकं परलोकसाधनं नास्ति इयं चार्वाकस्य विप्रतिपत्तिः, एतत्फलमलौकिके अतीन्द्रिये वा वस्तुनि परलोकसाधनता अस्ति न वा ? अतीन्द्रियवस्तु परलोक साधनं न वा इत्यादिसंशयः ।

२—ईश्वराभावेऽपि परलोकसाधनानुष्ठानं सम्भवति इयं मीमांसकानां विप्रतिपतिः । एतत्फलं वेदः अपौरुषेयो न वेति संशयः ।

३—ईश्वराभावबोधकं ( ज्ञापकं ) प्रमाणमस्ति एतत्सौगतस्य बौद्धस्य वा विप्रतिपत्तिः । एतत्फलमनुपलब्धिः अदर्शनम्वा अभावस्य ग्राहकं न वेति संशयः ।

४—ईश्वरसद्भावेऽपि प्रमाणं नास्ति एतज्जैननां विप्रतिपत्तिः । एतत्फलं ईश्वरे प्रमाणमस्ति न वेति संशयः ।

५—ईश्वरसाधकं प्रमाणं नास्ति इति सांख्यानां विंप्रतिपत्तिः एतत्फलं क्षित्यङ्कुरादिकार्यं सकर्तृकं न वेति संशयः ।

केचन तार्किकाः, पक्षे साध्यसंशयमेव पक्षता सैव चानुमितेः कारणम् पक्षे साध्यसंशयाभावे अनुमितिर्न भवतीत्येव स्वीकुर्वन्ति । नौकया दूरदेशगमनमपेक्षितमस्ति, असावधानतया संचिताग्निविनाशः संजातः । पाकः करणीय एव, अग्निः कुतः संचितो भवेत्, निरीक्ष्यावलोकयति नद्याः पारे गावः सञ्चरन्ति । रक्षकाः स्थास्यन्ति तेषां पाकार्थं वह्निः स्यादितिसंशयः जातः अग्निरस्ति न वेति ? पुनर्निरीक्षणेऽवलोकितं धूमः वर्तते, ततः स्मरति धूमः वह्नितसहचारी अर्थात् धूमो वह्निव्याप्तिविशिष्टः ( यत्र धूमस्तत्र वह्निरिति ) तदनन्तरमेव निश्चयो जायते वह्निव्याप्तिविशिष्टो धूमस्तत्रास्ति ( अयमेव परामर्शः ) ततः मननं अनुमिति र्वा जायते एतत्स्थानं वह्निमत् । एतादृशानुभवबलात् तेऽनुमितिपूर्वं पक्षे साध्यसंशय आवश्यकः इति निश्चिन्वन्ति, अतः

सकल-तार्किकसन्तोषार्थं संशयोऽत्र कथितः। वस्तुतस्तु संशयाभावेऽपि अनुमिति-र्भवति अन्यथा श्रवणानन्तरं मननविधायकस्य "मन्तव्य" इति वाक्यस्य वैयर्थ्यं स्यात्। यतः—कस्यापि वस्तुनः निश्चये तद्वस्तुविषये संशयो न जायते तथा च वेदवाक्येन प्रथमतः मोक्षार्थिनः परमात्मनिश्चयस्य आवश्यकत्वात् प्रथमं परमात्मनिश्चये जाते, ततः परमात्मसंबन्धे संशयः न स्यादेवेति मननमसम्भवमेव। तथा च श्रोतव्यः मन्तव्यः इत्यत्र मन्तव्य इति अनर्थकं भवेत्। किं च अनुभवबलात् संशयः मननकारणमित्यपि समीचीनं नास्ति, यतः—संशयः भावाभावविषयकं द्विक्षणमात्रस्थायिज्ञानं यथा गृहं घटविशिष्टं न वा ? इत्यादिज्ञानं। प्रदर्शितरीत्या धूमदर्शने वह्नेर्मननस्थले पर्वतादौ वह्निसंशयानन्तरं मननात्पूर्वं क्रमिकधूमस्वरूपहेतुदर्शनं, धूमे वह्निव्याप्तिज्ञानं, पक्षे पर्वतादौ वह्निधूमयोः परामर्शः ( वह्निव्याप्यधूमवानयं पर्वत इति निश्चयः ) इति अनुमिति-कारणसमूहे पक्षे पर्वते साध्यस्य वह्नेः संशयः मननात् अव्यवहितपूर्वक्षणे न तिष्ठति। तथाचैतादृशस्थले मननकार्ये संशयस्याव्यवहितपूर्ववर्तित्वाभावात् संशयो न मननं प्रति कारणम्।

वस्तुतः सकलदार्शनिकतोषार्थमेव संशयकथनमिति न विचाराङ्गत्वात् संशयप्रद-र्शनमावश्यकम्। विचारपूर्वकं वस्तुनः तत्त्वनिरूपणार्थं तद्वस्तुसम्बन्धे संशयः आवश्यकः, वादिप्रतिवादिनौ उभावपि निश्चयरूपेण वस्तु जानीतः, तदा विचारस्य आवश्यकतैव न स्यात्। अत एव विचारार्थं विषये संशयप्रदर्शनं न निरर्थकम्। अस्मिन् ग्रन्थे परलोकसम्बन्धे विरुद्धमतद्वैधं निरस्य ईश्वरनिरूपणात्मकोपासना अभिप्रेता, इति परलो-कादिसम्बन्धे विप्रतिपत्तेः संशयस्य वा प्रदर्शनमावश्यकम्।

परलोकस्य हेतुभूतः अलौकिकः अतीन्द्रियो वा कोऽपि पदार्थः अस्ति न वेति ? एतादृशसंशयनिरासार्थमतीन्द्रियवस्तुनः साधकयुक्तेः प्रयोगः आवश्यकः। युक्तिं विना एतादृशवस्तुनः सिद्धिर्न स्यात्, यतः एतादृशवस्तुसाधकं प्रत्यक्षं प्रमाणं नास्ति।

ये अलौकिकं ( अतीन्द्रियं ) कारणमदृष्टादिकं न स्वीकुर्वन्ति तेषां कृते अलौ-किककारणसाधनमावश्यकम्। तत्सिद्धावेव प्रतिवादिनोऽपि एतादृशकारणप्रेरकत्वेन तदधिष्ठातृत्वरूपेण ईश्वरं स्वीकरिष्यन्ति। अचेतनवस्तुमात्रं चेतनाधिष्ठितं ( चेतनप्रेरितं ) सत् कार्यस्य कारणं भवति। चेतनप्रेरणां विना न कार्यकारणं भवति।

अचेतनकुठारः चेतने छेदनकर्तरि अधिष्ठितः, चेतनच्छेदनकर्ता प्रेरितः सन् छेदनकार्यजनको भवति। छेदनकार्ये अचेतनकुठारः चेतनाधिष्ठितः चेतनप्रेरित इति

प्रत्यक्षसिद्धः । अलौकिककारणमदृष्टं ( धर्माधर्मौ ) यदा सेत्स्यति तदैव वैधयज्ञादिकर्मणि किम्वा अवैधहिंसादिकर्मणि परलोकस्य स्वर्गस्य नरकादेर्वा करणतायाः निश्चिते अदृष्टं धर्माधर्मादिकम्वा स्वर्गस्य नरकस्य वा कारणं स्यात् । अदृष्टमऽचेतनं वस्तु इति कुठारदृष्टान्तेन तत्रापि चेतनाधिष्ठितत्वं चेतनप्रेरितरूपत्वम्वा अनुमितं स्यात् । —अलौकिकधर्माधमौ, चेतनाधिष्ठितौ, अचेतनत्वविशिष्टकारणत्वात् यथा छेदनकर्त्रधिष्ठितः कुठारः । तथा च विरुद्धप्रतिवादिनां मतेऽचेतनकारणस्वरूपस्य अदृष्टस्य सिद्धौ कुठारादिदृष्टान्तेन पूर्वोक्तानुमितिकरणे वाधः स्यात् । तथा सति अलौकिकाचेतनकारणाधिष्ठानं प्रेरणा वा जीवे न सम्भाव्यत इति जीवापेक्षया स्वतन्त्रः चेतनः निश्चितो भविष्यति स एवेश्वरः । अचेतनकारणस्य प्रेरकः चेतन एव । चेतनस्य चिकीर्षाया एव प्रेरकत्वं, चेतनः कस्यचित्कार्यस्य सम्पादनार्थमिच्छां कुर्वन् अचेतनकारणसमुदायं व्यापृतं करोति । अदृष्टमचेतनं कारणम् , तेषां कार्ये व्यापृतकरणं जीवसाध्यं नास्ति, जीवः कार्यं चिकीर्षुः भवति तावतापि अदृष्टेन फलं न जायते, ईश्वरस्य कार्यचिकीर्षैव अदृष्टस्याधिष्ठातृत्वं प्रेरकत्वम्वा ।

सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥

सापेक्षकत्वात् अनादित्वात् वैचित्र्यात् , विश्ववृत्तितः, भोगं प्रति नियतात्मवृत्तेः हेतोः, अलौकिकः हेतुभूतः धर्माधर्मरूपः वर्तते ।

युक्तिः न्यायश्च एक एव । पूर्वोक्तप्रतिज्ञादिपञ्चावयवविशिष्टं वाक्यमेव युक्तिः । युक्तौ न्याये वा आदौ प्रतिज्ञा । परलोकस्य हेतुभूतमतीन्द्रियं कारणमस्ति कारणपदार्थप्रसिद्धिं विनोक्तप्रतिज्ञा न संभवति अतः प्रथमं कारणसाधनं करोति । कार्यमात्रं सापेक्षमिति कार्यमात्रं सहेतुकम् । कार्यं कस्मिंश्चित्परिच्छिन्ने निर्दिष्टे वा काले तिष्ठति । किमपि कार्यं सर्वदा न तिष्ठति । कस्मिंश्चित् परिच्छिन्ने काले अवस्थितेः कस्मिंश्चित् कालेऽनवस्थितेः कार्यस्य कादाचित्कत्वधर्मः प्रत्यक्षसिद्धः, इयमेव सापेक्षता । प्रत्यक्षमात्रप्रामाण्यवादिचार्वाकादीनां मतेऽपि प्रत्यक्षसिद्धस्यापलापो न भवितुमर्हति । कार्यस्य सापेक्षत्वं कादाचित्कत्वम्वोभयवादिसिद्धम् । तथा च सापेक्षत्वादिति हेतुमङ्गीकृत्य विरुद्धवादिनां कृतेऽपि कार्यं सहेतुकमर्थात् तन्नियतपूर्ववर्तिवस्तुसद्भावाधीनम् एतादृशी अनुमितिः स्यात् , यथा घटपटादिकार्येषु दृष्टान्तेषु

१. धर्माधर्मौ ।

यत्र सापेक्षत्वं तत्र सर्वत्र सहेतुकत्वम् अर्थात् यद्यत् सापेक्षं तत्सर्वं सहेतुकम् इति व्याप्तेः निश्चयः स्यात् । तथा च कार्यमात्रे सहेतुकत्वव्याप्तिविशिष्टसापेक्षत्वं वर्तते इति परामर्शेन कार्यमात्रं सहेतुकमिति अनुमितिः सिद्ध्यति । कार्यमात्रे सहेतुकत्वनिश्चये सति कार्यमात्रे कारणत्वं सिद्ध्यति । सहेतुकत्वं, नियतपूर्ववर्तिवस्तुसद्भावाधीनत्वं कार्यमात्रस्य नियतपूर्ववर्तिवस्तुसद्भावाधीनत्वे ज्ञाते, कार्यमात्रस्य नियतपूर्ववर्तिरूपेण वस्तु अपि एतज्ज्ञानविषयं स्यात्, यद् वस्तु यत्कार्यस्य नियतपूर्ववर्ति तत्तस्य कार्यस्य कारणं यथा घटस्वरूपस्य कारणं दण्डचक्रादयः, एवं च कार्यमात्रस्य सहेतुकत्वे ज्ञाते कार्यमात्रस्य कारणमपि अवश्यमेव स्थास्यति । घटः कार्यं सर्वदा न तिष्ठति यतोऽयं सापेक्षः पदार्थः, अयं चक्र-सूत्र-दण्ड-सलिलप्रभृतिवस्तुसद्भावाधीनः, इमानि वस्तूनि घटस्वरूपकार्यस्य नियतपूर्ववर्त्तीनि एतेषामभावे घटो न जायते । घटः यदा सहेतुकः तदा इमानि वस्तूनि घटरूपकार्यस्य नियतपूर्ववर्तीनि इत्यवगम्यते । अन्यथासिद्धि-शून्यत्वे सति कार्यनियतपूर्ववर्ति कारणम् तथा च दण्डादयः घटस्य कारणम् ।

प्रदर्शितानुमानसाहाय्येन कार्यमात्रस्य कारणस्वीकारेऽपि चार्वाका एवं विवदन्ते यत् कार्यस्य कारणं सर्वदा वर्तते न वा ? यदि कारणसमूहः सदा वर्तते तदा कार्यस्य सर्वदा वर्तमानत्वमर्थात् सदातनत्वप्रसङ्गः स्यात् तथा च कार्यस्य प्रत्यक्षसिद्ध-धर्मस्य सापेक्षत्वस्यानुपपत्तिः स्यात् । कार्यस्य कारणसमूहः वर्तते अथ च कार्यं न भविष्यतीति असम्भवमेवेति कारणसमूहस्यापि सापेक्षत्वं वक्तव्यम् एवं च पूर्वोक्त-हेतुना कारणसमूहस्यापि सहेतुकत्वमर्थात् तस्यापि कारणं वर्तते इति स्वीकर्तव्यम् । तथा च एवम्परम्परया कारणस्य कारणमिति क्रमेण कारणधारापरम्परा प्राप्नोति तथा चानवस्थादोषः समापतेत् । अतः एतादृशानवस्थादोषपरिहारार्थमगत्या कारणप्रवा-हस्य कारणधारापरम्पराया वा अनादित्वं स्वीकृत्य अनवस्थाऽङ्गीकरणीया । अयमाशयः —यथा बीजादङ्कुरोऽङ्कुराद्वाबीजमित्यत्र एकसिद्धान्तो न भवति इति एतादृशप्रवाहस्या नादित्व—( अनादिकालतः एषःक्रमः ) मिति स्वीकृत्यानवस्थामङ्गीकरोति तथैव कारण-परम्परापि एकत्रावस्थानं न प्राप्नोतीति अनादिकालतः कदाचित्कत्वं सहेतुकत्वं च परम्पराक्रमरूपेण कारणे आगच्छति इति स्वीकृत्य अनवस्थायाः सत्त्वेऽपि दोषाभावात् ।

कार्यमात्रस्य किमपि कारणमिति स्वीकारेऽपि एकं ब्रह्म अथ वा एका प्रकृतिरेव कारणमिति स्वीकारेणैव कार्यं प्रचलेत्, अतीन्द्रियधर्माधर्माद्यनेककारणस्वीकारोऽना-वश्यकः ।

प्रत्यक्षवस्तुनः अपलापः न सम्भवति, घटपटादिकार्याणां विभिन्नजातीयरूपता प्रत्यक्षसिद्धा । एकं ब्रह्म किम्वा एकजातीयप्रकृतिरेव विभिन्नजातीयघटपटादीनां कारणं तदा घटपटप्रभृतिकार्येषु प्रत्यक्षसिद्ध-विचित्रधर्माणां घटत्वपटत्वादीनामपलापोऽङ्गीकरणीयः स्यात् । घटपटादिकार्यसमूहस्य घटत्व-पटत्वादिविभिन्नजातिविशिष्टत्वं प्रत्यक्षसिद्धम् । घटस्य घटत्वम् घटसमुदायस्य स्वीयविशेषजातिः सनातनधर्मः सामान्यम्वा पटस्य पटत्वं पटसमुदायस्य स्वीयविशेषजातिः समानधर्मः सामान्यम्वा पटस्य पटत्वं पटसमुदायस्य स्वीयविशेषजातिः समान धर्मः सामान्यम्वा घटे वर्तमानं घटत्वरूपं सामान्यं पटे नास्ति एवं पटसमुदाये वर्तमाना पटत्वजातिः घटादौ नास्ति । अत्र किं कारणमिति जिज्ञासायां घटपटादिवस्तूनां विभिन्नजातीयत्वमेव कारणं नान्यत् । अर्थात् दण्डचीवरादिविशेषजातीयकारण-समूहस्य सम्मेलनवशात् घटः घटत्वरूपं सामान्यं जातिर्वा एवं तन्तुवायप्रभृतिविशेषकारणसमूहसम्मेलनवशतः पटे पटत्वरूपं सामान्यं जातिर्वा वर्तते । तथा च एकं ब्रह्म एकजातीयप्रकृतिः वा घटपटादीनां कारणं स्यात्तदा घटे घटत्वं पटे पटत्वम् इत्यादि—विशेषरूपं सामान्यं जातिर्वा न स्यात् । अतः विभिन्नजातीयकार्याणामेकं ब्रह्म एकजातीया प्रकृतिर्वा कारणमिति न संघटते ।

नानाजातीयकार्यवशात् नानाजातीयकारणानाम् उत्पत्ति स्वीकारेऽपि परलोकस्य कश्चिदतीन्द्रियः पदार्थः कारणमिति कथं सिध्यति ?

परलोके स्वर्गादिफलार्थिनः विहितयज्ञादिकर्मणि प्रवृत्तिरेवं निषिद्धहिंसादिकर्मणि निवृत्तिरेवातीन्द्रियधर्मादिषु प्रमाणम् । अयमाशयः—इदानीं वैधयज्ञादिकर्मानुष्ठानात् अन्यस्मिन् लोके स्वर्गादिफलमवश्यम्भवतीति परलोके स्वर्गादिफलार्थिनः एतादृशकर्मणि प्रवृत्तिः एवं निषिद्धहिंसाप्रभृतिकर्मानुष्ठानात् नारकीयदुःखभोगोऽवश्यम्भावीति एतादृशकर्मणोऽनुष्ठात् निवृत्तिर्भवति, कार्यान्यवहितपूर्वकाले कारणावस्थितिः नियता । यज्ञादिकर्मणां चेदानीमनुष्ठानानन्तरमचिरेणैव विनाशो जायते इति परकाले तेषां सद्भावो नास्ति, तावत्तन्न तिष्ठति । अतः यज्ञादिकर्मसमुदायः साक्षात्सम्बन्धेन परकाले उत्पत्स्यमानस्वर्गादेः फलस्य जनको भवितुं नार्हति, किन्तु वैधकर्मणि इष्टसाधनता—( स्वर्गादिफलजनकता ) ज्ञानं विना प्रवृत्तिः निषिद्धे अवैधकर्मणि अनिष्टसाधनता—( नरकादिफलजनकता ) ज्ञानं विना निवृत्तिर्न स्यादतः यज्ञादिवैधकर्मानुष्ठाने कर्तुः परकालपर्यन्तस्थायिशुभादृष्टं, धर्मो वा एवं हिंसाप्रभृत्यवैधकर्मकर्तुः

परकालपर्यन्तस्थाय्यशुभादृष्टं अधर्मो वा अवश्यमेव स्वीकरणीयम् तथा सति एतादृश-धर्माधर्मौ मध्ये व्यापारीकृत्य वैधकर्मणि स्वर्गादिफलजनकता अवैधकर्मणि च नरकादि-फलजनकता सम्भविष्यतीति वैधावैधकर्मणि इष्टानिष्टसाधनतानिश्चयात् वैधकर्मणि प्रवृत्तेः अवैधकर्मणि अप्रवृत्तेरनुपपत्तिर्न भवति। अदृष्टस्य धर्माधर्मयोः वा स्वीकारेऽन्यापि युक्तिरस्ति—जन्मतः कोऽपि स्वामी कोऽपि दासः इत्यादितारतम्यस्य किं कारणम्? अत्र किमपि दृष्टं कारणं नास्ति, अदृष्टकारणवशादेव एतादृशजन्मग्रहणं कुर्वन्ति। जगत्कर्ता परमेश्वरः एतादृशतारतम्यस्य कारणमित्यपि न वक्तुं पार्यते यतः ते सर्वथा दोषादिहीनाः यस्य यादृशं प्राक्तनं कर्म अदृष्टम्वा तदनुसारमेव जीवः प्रभु-भृत्यादिरूपेण जन्मग्रहणं करोति। अत्रेयं चिन्ता भवति एतददृष्टं धर्माधर्मौ वा भोग्ये वस्तुनि भोक्तरि जीवे वा? भोग्ये वस्तुनि अदृष्टं स्वीकर्तुं न शक्यते, यतः एकामेव प्ररुढयौवनां रमणीं कामुकः यया भावनया पश्यति, अन्यः परिव्राजकस्तया भावनया नैवावलोकयति। तथा च भोक्ता स्वादृष्टवशादेव भोगं करोति, भोग्ये वस्तुनि अदृष्ट-स्वीकारे तु सर्वेषां कृते एकरूपेणैव भोगसम्पादिका स्यादिति जीवे एवादृष्टस्वीकार आवश्यकः।

कण्टकस्य तीक्ष्णता सूच्यग्रता वा यथा अकस्माद्भवति तथैव जगत्समुदायकार्योऽपि अकस्माद्भवति। अयमाशयः पूर्वोक्तसापेक्षत्वहेतुना सहेतुकत्वानुमाने कण्टकतीक्ष्णता-दृष्टान्तेन सत्प्रतिपक्षदोषोद्भावनं क्रियते। तथा हि—घटादिकार्यसमुदायः, सहेतुको नास्ति, कार्यत्वात्, कण्टकतीक्ष्णतावत् अयमेव चार्वाकाशयः।

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।
स्वभाववर्णना नैवमवधेर्नियतत्वतः॥ ५॥

निर्दिष्टे परिच्छिन्ने वा काले वस्तुनोऽवस्थानात्, नियमवशात् अकस्माद्भवतीति शब्देन हेतोर्निषेधः भूतिः उत्पत्तेः निषेधो स्वालीकत्वस्य व्यवस्था अथ वा स्वभाववर्णना अर्थात् स्वभावतः कार्यमुत्पद्यते इत्यर्थो न भवितुमर्हति।

"अकस्माद्भवति" एतस्य शब्दस्य अर्थावगत्यर्थं शब्दस्वरूपावलोकनमावश्यकम्। अत्र वाक्ये अंशत्रयम्। निषेधार्थकः 'अ' शब्दः अव्ययः, 'कस्मात्' कारणबोधककिम्—शब्दस्य पञ्चम्याम् एकवचनम्। भवतीति उत्पत्तिबोधकं क्रियापदम्। अत्र कारण-बोधकेन "किम्" शब्देन निषेधार्थकस्य "अ" शब्दस्यान्वयस्वीकारे कारणं विना कार्योत्पत्तिरिति अर्थः फलति। व्यवहितान्वयं स्वीकृत्य उत्पत्तिबोधकेन 'भवति'

शब्देन सह "अ" शब्दस्यान्वयस्वीकारे उत्पत्तिनिषेध इत्यर्थो भवति। कारणाधीनोत्पत्तिबोधक "कस्माद्भवति" इति समस्तशब्देन सह अन्वयस्वीकारे कारणजन्योत्पत्तेः निषेधः इत्यर्थो भविष्यति। अस्मिन् अर्थे प्रथमपक्षस्येव कारणं विना उत्पत्तिरित्येवार्थः फलति। कारणाधीनोत्पत्तिः चार्वाकमतेऽलीकभूतेति तस्या निषेधो न संभवतीति कारणाभावे उत्पत्तिरित्येवार्थः फलति। कारणभिन्नादुत्पत्तिरिति "अकस्मात्" शब्दस्य अर्थस्वीकारे स्वस्मात् किम्वा अलीकतुच्छात् उत्पत्तिरित्यर्थो भवति। जगति वर्तमानः सकलः पदार्थः कार्यरूपेण कारणरूपेण वेति द्विविधरूपेण ज्ञानस्य विषयो भवति तदतिरिक्तञ्चालीकमेव। तथा च कारणं नेति कथने कार्यम् अलीकम्वेति अर्थो भविष्यति। यदि "अकस्माद्भवतीति" शब्दमव्युत्पन्नप्रातिपदिकं मत्वा स्वभाव इत्यर्थः स्वीक्रियते तदा स्वभावत एव कार्यं भवति इत्यर्थो भवति। किन्तु प्रदर्शितार्थेषु एकोऽपि युक्तिसहो नास्ति। यतः कार्यमात्रस्य अवधिः नियतः। अयमाशयः—कार्यस्य यदि कारणं न स्यात्, किम्वा कार्यं स्वत एव स्वस्य कारणमिति, अथ वा कार्यस्य कारणमलीकं तुच्छम्वा, अथ वा स्वभावः कार्यस्य कारणम् इति अङ्गीकारे कार्यमात्रमेव सर्वदा भवेत् तथा सति कार्यमात्रस्य प्रत्यक्षसिद्धस्य नियतावधिकत्वरूपस्य धर्मस्य ( सापेक्षत्वस्य कादाचित्कत्वस्य ) अर्थात् कस्मिंश्चित् परिच्छिन्नकालेऽवस्थानस्य व्याघातो भवेत्। कार्यस्य कस्मिंश्चित् परिच्छिन्नकाले अवस्थानस्य कारणानुसन्धाने कारणसमावेश एव तत्र कारणमिति। कारणसमूहस्य समावेशः परिच्छिन्नकाले भवतीति कार्यमपि परिच्छिन्नकाले एव अवस्थितं भवति। यथा—घटः कार्यं परिच्छिन्नकालेऽवस्थितम् अर्थात् पूर्वं नासीत् अग्रेऽपि न स्थास्यति मध्यकाले एव वर्तते तत्कारणभूतस्य मृत्तिकादेः कारणसकलस्य समावेशः कस्मिन्नपि परिच्छिन्नकाले भवतीति घटरूपं कार्यमपि सकलकारणसमावेशकालस्याव्यवहितकाले एव स्यात्। तथा च घटस्वरूपं कार्यमेतत्सकलकारणं विना स्वतः भवति अलीकतुच्छेन वा भवति किम्वा स्वभावतः भवतीति स्वीक्रियते तदा कारणसमावेशकालाव्यवहितोत्तरकाले कार्यं व्यवस्थितं भवतीति नियमो न स्यात्। अनियतमेव कार्यं भवतीति स्वीकर्तव्यं भवेत् तथा च कालोत्पत्तिकालावधिनिर्देशो न भवेत्, एवं च कार्यमात्रं सर्वदैव कस्मान्न स्यात्।

अग्निसंयुक्ततृणे फूत्कारेण व्यजनादिना वा वायुसंचारे, अथ वा काचविशेषः सूर्यतापं सम्प्राप्य, अरणिकाष्ठद्वयं घर्षणं वा संप्राप्य, किम्वा प्रस्तरविशेषे लौहादिकठिनवस्त्वाघातेनाग्निरुत्पद्यते इति प्रत्यक्षसिद्धम्। इमानि वस्तूनि यद्यपि एकजातीयानि

न सन्ति, अन्यजातीयवस्तुनापि तृणफूत्कारं विनापि अरणिकाष्ठद्वयघर्षणेनाग्नेरुत्पत्तिः प्रत्यक्षसिद्धा। तथा च व्यभिचारवशतः यत्किंचित् अग्निसंयुक्ततृणस्य एवं फूत्कारस्याभावस्थलेऽन्यजातीयवस्तुना वह्निसामान्यं प्रति कारणत्वं न सम्भाव्यते। तृणाद्येकजातीयं वस्तु एव वह्निसामान्यस्य कारणं भवितुं नार्हति। अतः वह्निसमान्ये सहेतुकनयस्वींकारः आवश्यकः। तथा च यत्र व्यापकीभूतवस्तुनः अभावः स्यात् तत्र व्याप्यवस्तुनोऽभावः आवश्यकः। यत्र सापेक्षत्वं तत्रैव सहेतुकत्वन्तथा च सहेतुकत्वं सापेक्षत्वव्यापकं सापेक्षत्वञ्च सहेतुकत्वव्याप्यमिति वह्नौ व्यापक-सहेतुकत्वस्याभावात् व्याप्यसापेक्षत्वस्याभावः स्वीकरणीयः। तथा च कार्यमात्रे सहेतुकत्वानुमापकसापेक्षत्वहेतुः पक्षीभूते वह्न्यादिकार्येऽसिद्धः, इति असिद्धसापेक्षत्वस्वरूपहेत्वाभासेन कार्यमात्रे सहेतुकत्वनिश्चयः ( अनुमितिः ) न भवितुमर्हति। तथा च अलौकिकादृष्टहेतुरपि सिद्धो न स्यात्, एवं चादृष्टाधिष्ठातृत्वरूपेणेश्वरसिद्धिरपि न सम्भाव्यत इति पूर्वपक्षाशयः।

यद्यपि तृणादिकमपि एकजातीयं स्वासाधारणतृणत्वादिधर्मरूपेण वह्निसामान्यस्य न कारणं, तथापि वह्न्युत्पत्तौ तृणाद्येकजातीयस्य वस्तुनः एव अपेक्षावशतः तृणप्रभृतिवस्तुसमूहे वह्न्युत्पत्त्यनुकूला शक्तिरस्तीति स्वीकर्तव्यम्, तथा च तृणादिवस्तुसकलं वह्न्युत्पत्त्यनुकूलशक्तिमत्, अत एव वह्निसामान्योत्पत्तौ तृणत्वादिरूपेण तृणादेर्व्यभिचारसद्भावेऽपि अर्थात् तृणाभावेऽरणिकाष्ठघर्षणादिना वह्न्युत्पत्तिसम्भवेऽपि वह्न्युत्पत्तौ तृणादिरूपस्य कस्यापि एकजातीयस्य वस्तुन एव अपेक्षया वह्न्युत्पत्त्यनुकूलशक्तिमतो व्यभिचारः नास्तीति। तथा च शक्तिमत्त्वरूपसाधारणधर्मरूपेण तृणादिसकलमेव वह्नेः कारणम्। एवं स्थितौ वह्न्यादिकार्ये सहेतुकत्वस्य अभावो नास्तीति सहेतुकत्वाभाववशात्सापेक्षत्वाभावस्य सिद्धिरिति भवितुं नार्हति।

मीमांसकमते दोषोद्भावनपुरस्सरं नैयायिकानामुत्तरम्—

मीमांसकयुक्तय आपाततो रमणीया अपि विशिष्टविचारे एतादृशयुक्तेः किमपि मूल्यं नास्ति। यतः—तृणादौ या वह्न्युत्पत्त्यनुकूला शक्तिः स्वीक्रियते तत्र किं कारणम्? एतादृशशक्तेराश्रयभूतस्य तृणादेरेव कारणत्वम्? तथा सति तुल्ययुक्त्या एतादृशशक्त्यनुकूलशक्तिमत्त्वरूपेण तृणादेरेव कारणत्वं वक्तव्यम्, किं च द्वितीयशक्तेः किं कारणम्? एतस्य प्रश्नस्य समाधाने पुनरपि तदनुकूलशक्तिमत्त्वरूपेण कारणत्वं स्वीकर्तव्यम् तथा चानवस्थादोषः दुरुद्धरः स्यात्। एवं सति तृणादिवस्तुसमूहे या शक्तिः वर्तते सा तृणादिवस्तूत्पादककारणेन तृणाद्युत्पत्त्या सहैवोत्पद्यते तथा

च वह्नेः कारणीभूतनित्यवस्तुनि काले, दिशि, या शक्तिः वर्तते सा नित्यैवेति, पूर्वोक्तानवस्थादोषाभावेऽपि मीमांसकानां युक्तयो न विचारसहाः। यतः—एकेन कारणेनैव किमपि कार्यं नोत्पद्यते। केवलेन तृणेन मणिना वा वह्नेरुत्पत्तिर्न भवति। तृणस्य सहकारिरूपेण यत्किंचिदग्निसंयोगः फूत्कारादिकं वा, एवं मणिसहकारिरूपेण सूर्यरश्मिसंयोगः, तथैवारणिकाष्ठस्य सहकारिरूपेण निर्मन्थनं काष्ठद्वयस्य घर्षणविशेषो वा कारणं स्यात्, तथा सति विशेषविशेषकारणसहितस्य विशेषकारणस्यैव सहयोगिता वक्तव्या अर्थात् विशेष-विशेष-कारणं विशेष-विशेषकारणेन सहितं कार्यस्याधिकरणे यदा सम्मिलितं भवति तदैव कार्योत्पादने समर्थो जायते इति सहकारित्वव्यवस्थायाः नियमः वर्तते, साऽनियमे भवितुं नार्हति। अर्थात् यज्जातीयकार्यं प्रति यद्वस्तु स्वासाधरणं धर्मं गृहीत्वा कारणं भवति, तद्धर्मरूपेणैवैतद्वस्तु एतज्जातीयकार्यस्य कारणीभूतान्यकारणस्य सहकारि भवति। यथा—घटजातीयकार्यं प्रति मृत्तिका, स्वासाधारणधर्ममृत्तिकात्वरूपेणैव कारणमेवं दण्ड-चक्र-चीवरप्रभृतयोऽपि घटजातीयकार्यं प्रत्येव स्वस्वासाधारणधर्मदण्डत्व-चक्रत्व-चीवरत्वादिरूपविशेषेणैव कारणमिति दण्डत्वप्रभृतिरूपेणैव दण्डादिकारणसमूहः घटजातीयकार्यस्य कारणीभूतमृत्तिकायाः सहकारिकारणं भवति। एवं स्थितौ तृणफूत्कारप्रभृतिकारणसमूहः स्वीयविशेषधर्मतृणत्वफूत्कारादिरूपविशेषेणैव वह्नेः कारणम् न भवेदपि तु वह्न्युत्पत्त्यनुकूलशक्तिमत्त्वरूपेणैव वह्निसामान्यस्य कारणं भवेत्तदा तृणस्य सहकारी ( अर्थात् वह्निकारणीभूततृणेन सह एकस्मिन् आधारे मिलितं सत् वह्नेः जनकं भवेत् ) फूत्कारः यत्किंचिदग्निसंयोगे एवं मणिसहकारि-( अर्थात् वह्निकारणीभूतमणिना सह एकत्र मिलितो भूत्वा वह्नेः जनकः ) सूर्यरश्मिसंयोगादौ परस्परं पृथक् पृथक् सहकारितायाः व्यवस्था न भवितुमर्हति, यतः—एतत्सर्वं वस्तु सामान्यतया वह्नेरनुकूलशक्तिमत्त्वात् तादृशशक्तिमत्त्वेन रूपेणाभिन्नमिति किं कस्य साहाय्यं कुर्यात् इति निरूपणं नैव भवेत्, एवं तृणे फूत्काराग्निसंयोगे सति यथाग्निरुत्पद्यते, तथैव मण्यादावपि फूत्काराग्निसंयोगे सति अग्न्युत्पत्तेरापत्तिः स्यात्, तस्मात् कार्याभूतवह्नौ वैजात्यं स्वीकृत्य विभिन्नजातीयवह्नेरुत्पत्त्यर्थं विभिन्नजातीयकारणस्वीकारे तृणफूत्कारादीनां पृथक् पृथक् सहकारितायाः व्यवस्था भविष्यति इति पूर्वोक्तव्यभिचारोऽपि न स्यात्। अयमाशयः—तार्णजातीयवह्निं प्रति तृणं स्वीयासाधारणधर्म्मं जात्यात्मकं यत्तृणत्वं तेन रूपेणैव कारणं एवं एतज्जातीयवह्निं प्रत्येव फूत्कारः एवं यत्किञ्चिदग्निसंयोगादयोऽपि फूत्कारत्वाग्निसंयोगत्वादिरूपेणैव कारणमिति तार्णजातीयवह्नेरुत्पत्तावेव फूत्कारः एवं यत्किंचिदग्निसंयोगः तृणस्य सहकारी भवति।

एवमेव मणिप्रभवजातीयवह्निं प्रति मणिः स्वीयासाधारणधर्ममणित्वरूपेणैव कारणमेव-मेतज्जातीयवह्निं प्रत्येव सूर्याग्निसंयोगोऽपि स्वीयासाधारणधर्मसूर्यरश्मिसंयोगत्वरूपेणैव कारणमिति मणिप्रभवजातीयवह्नेरुत्पत्तौ सूर्यरश्मिसंयोगः मणेः सहकारी भवति। मणिः एवं सूर्यरश्मिसंयोगः तार्णजातीयवह्नेः कारणं नास्ति एवं फूत्कारः यत्किंचिदग्निसंयोगश्च मणिप्रभवजातीयवह्नेः कारणं नास्तीति फूत्कारः एवं यत्किंचिदग्निसंयोगः मणेः सहकारी एवं सूर्यरश्मिसंयोगः तृणस्य सहकारी न भवति। अर्थात् मणौ फूत्करणे किम्वा तृणस्य सूर्योत्तापे स्थापने सति अग्निर्नोत्पद्यते। तथा च वह्नेः तार्णत्वादिजातिविभागं स्वीकृत्य कार्यकारणभावस्वीकार एव समीचीनः। तथा सति तृणस्य अभावे मणिना, मणेरभावे तृणेन वह्निरुत्पद्यते इति पूर्वप्रदर्शितव्यभिचारोऽपि न संभवति। यतः—तार्णजातीयवह्नौ तृणस्य एवं मणिप्रभवजातीयवह्नौ मणेः व्यभिचारो नास्ति, अर्थात् तृणाभावे तार्णजातीयवह्निः एवं मण्यभावे मणिप्रभवजातीयवह्निर्न संभवति। तथा च सामान्यतः वह्नौ तृणप्रभृतिप्रत्येकं व्यभिचारसद्भावेऽपि दोषो नास्ति। अस्यां स्थितौ वह्निसामान्यस्य तार्णत्वादिसूक्ष्मजातिविभागः सम्भवति। प्रत्येकजातीयवह्नावपि सहेतुकत्वमवधृत्य वह्निसामान्ये सहेतुकत्वं नास्तीति कथनमसङ्गतमेव।

सृष्टिपूर्वकाले महाप्रलये किमपि नासीत् एवं परवर्तिनि महाप्रलयेऽपि किमपि न स्थास्यति इति कार्यकारणभावप्रवाहविच्छेदः अर्थात् सृष्ट्यादौ कारणं विना कार्यस्यो-त्पत्तिः प्राथमिकसृष्टवस्तुनः कारणं नास्तीति स्वीकर्तव्यं भवेत् एवं प्राथमिकसृष्टवस्तु कार्यमिति तत्र सापेक्षत्वं कादाचित्कत्वम्वा इत्यपि स्वीकरणीयम्। तथा सति प्राथमिक-सृष्ट-वस्तुनि साध्यं सहेतुकत्वं नास्ति, परं हेतुभूतं सापेक्षत्वं कादाचित्कत्वम्वा वर्तते इति पूर्वोक्त-सापेक्षत्वरूपो हेतुः प्राथमिकसृष्टवस्तुनि सहेतुकत्वव्यभिचारी अर्थात् सहेतुकत्वा-भावविशिष्टप्राथमिकसृष्टवस्तुनि अवस्थितः इति विचारस्थले व्यभिचारिसापेक्षत्वहेतुना कार्यमात्रे सहेतुकत्वनिश्चयो भवितुं नार्हति।

अयं कार्यकारणप्रवाह **अनादिमान्** अर्थात् अतीतकाले विच्छेदविशिष्टो नास्ति। विभिन्नजातीयकारणसमूहे एकशक्तियुक्तः प्रवाहोऽपि नास्ति। अन्वयव्यतिरेकयोः तत्त्वविषये=याथार्थ्यविषये यत्नः करणीयः। अर्थात् कार्यवैजात्यं स्वीकृत्यान्वयव्यति-रेकयोः रक्षा कर्तव्या। अन्वयः—तत्सत्त्वे तत्सत्त्वम्, यथा-दण्ड-सत्त्वे घटसत्ता, व्यतिरेकः—तदसत्त्वे तदसत्ता, यथा-दण्डस्य असत्त्वे अभावे वा घटस्य असत्त्वमभावो वा। यज्जातीयकार्ये यज्जातीयवस्तुनः एवम्विधोऽन्वयः एवम्विधो व्यतिरेको वा वर्तते,

तज्जातीयवस्तु एव तज्जातीयकार्यस्य कारणम्, यथा—दण्डजातीयवस्तु घटजातीयकार्यस्य कारणम्। यत्र सामान्यतः एतादृशनियमभङ्गो भवति तत्स्थले तादृशवस्तु कारणं न भवति, किन्तु यत्र स्थले एतादृशवस्तुपरित्यागेन कार्यं न भवति, तत्र सामान्यतः कार्यकारणभावकल्पनां परित्यज्य कार्यवैजात्यं स्वीकृत्य उक्तनियमरक्षणं कर्तव्यम्, अर्थात् विशेषकार्यं प्रति विशेषरूपेण कारणं कल्पनीयम्, वह्निसामान्ये तृणमण्यरणिकाष्ठानां मध्ये कस्याप्येकजातीयस्य वस्तुनोऽन्वयस्य व्यतिरेकस्य च व्यभिचारनियमभङ्गेऽपि, तेषां कारणात्परित्यागो न संभवति, यतः तेषु कस्यापि एकजातीयवस्तुनः व्यतिरेके वह्नेरुत्पत्तिर्न भवति। अत एव वह्निसामान्ये वैजात्यं (तार्णत्वादिरूपां भिन्नजातिं) स्वीकृत्य उक्तनियमरक्षणं कर्तव्यम्। तार्णत्वादिभिन्नभिन्नजातीयवह्निं प्रति तृणादीनां तृणत्वादिरूपेण कारणत्वं वक्तव्यम्। तथा सति उक्तनियमभङ्गो न भवति, यतः—तृणव्यतिरेके तार्णवह्निः, मणिव्यतिरेके मणिप्रभववह्निर्न जायते।

इदानीं कार्यकारणप्रवाहस्य विच्छेदो नास्ति, यतः प्राथमिकसृष्टवस्तु अपि कारणं विना नोत्पद्यते, महाप्रलयेऽपि जीवस्यादृष्टं परमाण्वादिकारणसमूहो वर्तते। यदि कार्यकारणप्रवाह आदिमान् अतीतकाले विच्छेदविशिष्टः तदा प्राथमिकसृष्टवस्तु अकस्माद्भवतीति वक्तव्यम्। किन्तु अकस्मात् किमपि भवितुं नार्हति एतच्च पूर्वमेव विश्लेषितम्। कार्यकारणप्रवाहः एकशक्तियुक्तोऽपि नास्ति, तथा सति कार्यवैजात्यस्योपपत्तिरपि भवितुं नार्हति, एतद्विवेचनमपि मीमांसकमते दोषारोपणपूर्वकं न्यायमतालोचनप्रसङ्गे आलोचितम्।

वह्निसामान्यस्य तार्णत्वादिजातिभेदः जातिविभागो वा जन्माधीन इति स्वीकारे सति वह्निसामान्ये तृणादिकारणसकलस्य पूर्वोक्तव्यभिचारदोषः परिहृतो भवति। अर्थात् व्यभिचारवशतः तृणादिषु कोऽपि एकजातीयः पदार्थः वह्निसामान्यस्य कारणं न भवति तदापि न क्षतिः। यतः तार्णादिविशेष-विशेषजातीयवह्निं प्रति तृणादिविशेष-विशेषजातीयवस्तुसकलं अर्थात् तार्णजातीयवह्निं प्रति तृणं, मणिप्रभवजातीयवह्निं प्रति मणिः कारणं, तथा च विशेषजातीयवह्न्युत्पत्तौ तृणादिविशेषकारणस्य व्यभिचारो नास्ति अर्थात् मणिं विना मणिप्रभववह्निर्नोत्पद्यते। अत्रेयं शङ्का भवति यत् वह्नौ तार्णत्वादिजातिभेदस्वीकार एव न संघटते, यतः तार्णातार्णादिसमुदयजातीयवह्निः वह्न्यतिरिक्तं किमप्यन्यद् वस्तु नास्ति, इति समुदयवह्नौ वह्नित्वरूपः

समानधर्मः एकजातिर्वा वर्तते। तथा च तार्णातार्णप्रभृतिसमुदयवह्नेः वह्नित्वस्वरूपैकजाति-विशिष्टस्य कारणं किम् ? अर्थात् समुदयवह्निः वह्नित्वस्वरूपैकजातिविशिष्टः कस्माद्भवति इति वक्तव्यम् ? यतः तृणप्रभृतिभिन्नभिन्नजातीयवस्तुसकलस्य किमपि जातीयं वस्तु वह्नित्वरूपसमानधर्मविशिष्टस्य ( वह्निसामान्यस्य ) कारणं भवितुं न शक्नोत्यपि तु तार्णत्वप्रभृतिभिन्न-भिन्नजातिविशिष्टस्यैव कारणम् ।

तार्णत्वमणिप्रभवत्वादिसमुदयजातीयवह्नेः उत्पत्तावेव विजातीयोष्णस्पर्शविशिष्ट-तेजःसंयोगः कारणम्, अर्थात् तार्णातार्णादिः कोऽपि वह्निरस्तु तदुत्पत्तौ तृणादि-कारणसमूहे विशिष्टोष्णस्पर्शयुक्तः कोऽपि तेजःसंयोगः आवश्यकः इति तार्णादि-भिन्नजातीयसमुदायो वह्निः विजातीयोष्णस्पर्शयुक्ततेजःसंयोगस्य कार्यम् । तथा च भिन्न-भिन्न-जातीयसमुदयवह्निरेव विजातीयोष्णस्पर्शयुक्ततेजःसंयोगस्वरूपकारणस्य कारणनिरूपितकार्यताया अवच्छेदकधर्मरूपे समानः एकधर्माक्रान्तः अवश्यमेव स्वीकर्तव्यः अयमेव एको धर्मः वह्नित्वसामान्यं वह्नित्वजातिर्वा । एवं च तार्णादि-विभिन्नजातीयसमुदयो वह्निरेव विजातीयोष्णस्पर्शयुक्ततेजःसंयोगस्वरूपकारणनिरूपित-कार्यताया अवच्छेदकः वह्नित्वस्वरूपसामान्यं एकजातिर्वा भवति अर्थात् वह्नित्व-स्वरूपैकजातिविशिष्टो भवति । अयमाशयः—यः कोऽपि जातीयो वह्निः भवतु, वह्निः स्वासाधारणधर्मं वह्नित्वमादायैव तदुत्पत्तिमूले स्वकारणीभूततृणादिना येन केनापि जातीयवस्तुना सहितस्य विजातीयोष्णस्पर्शविशिष्टस्य तेजःपदार्थस्य संयोगापेक्षां करोति ॥६॥

प्रदीपे प्रज्वलिते गृहमालोकितं वर्त्तिकायाः प्रदाहः गृहस्थितद्रव्यस्य च प्रत्यक्षं जायते इति एकेनैव वस्तुना विभिन्नजातीयं कार्यं न भवितुमर्हतीति यथा वक्तुं न शक्यते तथैव एकेन ब्रह्मणा एकया वा प्रकृत्या विश्वब्रह्माण्डं घटपटादि—विभिन्न जातीयं कार्यं न भविष्यतीति वक्तुं न शक्यते । कार्यवैचित्र्यार्थं कारणनानात्व-स्वीकारस्य प्रयोजनं नास्ति । तथा सत्येव अदृष्टधर्माधर्मयोः स्वीकारस्य आवश्यकता न भवेत् एवं च तदधिष्ठातृस्वरूपेण ईश्वरस्वीकारस्याप्यावश्यकता न भवेत् ।

एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न ।
शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥ ७ ॥

एकेनैव कारणेन विश्वस्य यावत्कार्यस्य एकस्यानन्तरमपरस्योत्पत्तिर्नियमतः न भवितुमर्हति । कार्यस्य वैजात्यं समानस्य एकस्य कारणस्याधीनं न सम्भाव्यते । शक्तिः

शक्तिमांश्चाभिन्नः हेतुभूतः शक्तिभेदस्य कार्यगतवैजात्यस्य सम्पादको न भवेत्। स्वभावतः एकेन एकजातीयकारणेन वा विभिन्नजातीयं कार्यं न सम्भाव्यते, यतः स्वभावोऽनतिक्रमो भवति।

यदि एकेन एकजातीयवस्तुना वा नानाजातीयं कार्यं स्वीक्रियेत तदा विश्वस्य यावत्कार्यं क्रमेण अनुत्पन्नं ( अग्रे पश्चादिति क्रमेण अनुत्पन्नं ) सत् एकस्मिन् एव काले सर्वमपि कथं नोत्पद्यते एवं विश्वस्य यावत्कार्यं एकजातीयमेव कथं नोत्पद्यते ? एतादृशी आपत्तिः संभवेत्। यद्युच्येत एकम् एकजातीयं कारणं ब्रह्म प्रकृतिर्वा स्वीयाचिन्त्यनानाशक्तिप्रभावेण यथाक्रमं नानाजातीयं कार्यमुत्पाद्य तिष्ठति, तथा सति इयं शङ्का स्याद्यत् ब्रह्म एवं तदीयशक्तिः अथ वा प्रकृतिरेवं तदीयशक्तिः ब्रह्मणा प्रकृत्या वा भिन्ना अभिन्ना वा ? यदि स्वीक्रियते, शक्तिः शक्तिमतः स्वतन्त्रा, तदा शक्तिः शक्तिमाँश्चोभयमेव कारणमिति एकस्य एकजातीयस्य वा कारणतेति सिद्धान्तोच्छेदो भवेत्। यदि शक्तिः शक्तिमतोऽभिन्ना तदा पूर्वोक्तस्य दोषस्य ( कार्यवैजात्यस्य क्रमिकोत्पत्तेश्च ) प्रसक्तिरस्ति। स्वभावतः एकेन कारणेन नानाजातीयं कार्यमुत्पद्यते तदा वस्तुनः स्थितिकाले स्वभावस्य=स्वकीयभावस्य सत्तायाः वा प्रच्युतेरसम्भवात् एकस्मिन्नेव समये नानाजातीयकार्यसमुदायस्य उत्पत्तेः प्रसङ्गः प्राप्नोति। अयमाशयः—घटपटादिरूपस्य विश्वस्य यावत्कार्यकरणस्वभावः एकस्य ब्रह्मणः प्रकृतेर्वा स्यात्तदा घटोत्पत्तिसमये पटोत्पादनानुकूलस्वभावः ब्रह्मणः प्रकृतेर्वा अवरुद्धो न भवतीति अस्मिन् काले एतस्मिन् स्थाने पटोऽपि किं न स्यात् ? नानाजातीयकार्यस्य नानाकारणं स्वीकारे तु कार्यस्य वैजात्यस्य क्रमिकत्वस्य च हानिः न संघटते यतः—यस्मिन् स्थाने यस्मिन् क्षणे घटजातीयस्य यस्य घटस्य कारणीभूताः चक्रदण्डचीवरादयः तदव्यवहितोत्तरक्षणे तस्मिन् स्थाने घट एवोत्पद्यते, अन्यघटाः पटादयो वा न सम्भवन्ति। तथा चेदं स्वीकर्तव्यं यत् एतज्जातीयैतत्कारणव्यक्तिसमूहस्य सम्मिलनस्य परक्षणे घटजातीयः यः घट उत्पद्यते, अन्यस्मिन् समये एतत्कारणव्यक्तिसमूहस्य सम्मिलनं न भवतीति अयं घटोऽन्यस्मिन् समयेऽपि जायेत; तथैव अयं कारणव्यक्तिसमुदायः पटजातीयकार्यस्य जनने समर्थो न भवतीति घटकार्यस्योत्पत्तिसमये घटरूपकार्यस्याधिकरणे पटो न जायते। तन्तुवेमादिभिन्नभिन्नजातीयं वस्त्वेव पटस्य कारणमिति घटः पटजातीयो नास्तीति घटजातीयरूपेणोत्पद्येत। तथा च कार्यवैजात्यस्यापि हानिर्न भवति। पक्षान्तरे—प्रदीपदृष्टान्ते नानाजातीयकार्यस्यैकं कारणमिति समर्थितं तदपि न सङ्गतम्। यतः—गृहस्थितद्रव्यादिप्रत्यक्षे सकलद्रव्ये प्रदीपसंयोगः इन्द्रियसंयोगादिश्च कारणम्

एवं वर्त्तिकायाः विकारे वर्तिकया सह प्रदीपस्य संयोगोऽपि कारणमिति प्रदीपः नानाजातीयकार्यस्यैकं कारणमत्रायं दृष्टान्तः भवितुं नार्हति ॥ ७ ॥

कथितयुक्त्या लौकिक-घट-पट-प्रभृतिप्रत्यक्षकार्यस्य निमित्तं दण्ड-चक्र-वेमाप्रभृति-नानाजातीयं कारणमिति स्वीकारेऽपि परकाले स्वर्गनरकादीनां किमपि अस्तित्वम्वा-स्तीति स्वीकारे न किमपि प्रयोजनम्, अर्थात् तुच्छस्वर्गनरकादीनां निमित्तस्य यज्ञस्य हिंसाया वा कार्यस्य किमपि प्रयोजनं नास्ति ।

विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।
दृष्टलाभफला वापि विप्रलम्भोऽपि नेदृशः ॥ ८ ॥

विश्ववृत्तिः ( अर्थात् परलोकार्थिजनस्य यज्ञादौ प्रवृत्तिः विफला नास्ति, किम्वा यज्ञादिकार्यसकलस्य एकमात्रं दुःखमेव फलमित्यपि न । किम्वा दृष्टलाभः ( अर्थात् दृष्टम्—पूजा ख्यातिः धनं मानमित्यादिफलमेव ) नास्ति । अथ वा विप्रलम्भोऽपि परप्रतारणापि नास्ति ।

. साधवः महापुरुषाः परकाले स्वर्गादिफलार्थं यज्ञादिकर्मसमूहस्य अनुष्ठानं कुर्वन्ति, महापुरुषजनाचरितं कर्म नैव निष्फलम्, तथा च यज्ञादिकर्मणा परकाले स्वर्गादिफल-म्भवतीति स्वीकर्तव्यम् । महापुरुषाः पूजाख्यात्याद्यर्थमेव यज्ञादिकर्मानुष्ठानं कुर्वन्ति इति कथनं नैव समुचितम्, यतः—ये पूजाख्यात्यादिभिः स्पृहाः सन्ति, एतत्सर्वं तुच्छमेवा-वगत्य इतः दूरमेव तिष्ठति एतादृशा अपि महापुरुषाः यज्ञादिकर्मानुष्ठाने प्रवृत्ताः दृश्यन्ते इति पूजाख्यात्यादि कर्मणः फलं भवितुं नार्हति । परप्रतारणमेवोद्देश्यमित्यपि न, यतः—के एतादृशाः सन्ति ये स्वयं नानाविधदुःखजनककार्ये लिप्ता भूत्वा केवलं परप्रतारणार्थमेव बहुवित्तव्ययायाससाध्यकर्मानुष्ठानं कुर्युः । तस्मात्—महापुरुषगणानुष्ठित-यज्ञादिकर्मसमूहः स्वर्गादिविशिष्टफलस्य जनको भवति ॥ ८ ॥

पूर्वोक्तयुक्त्या यज्ञादिकर्मणः फलं स्वर्गादिरिति स्वीकारेऽपि यज्ञादिकर्मजन्या-लौकिकस्यादृष्टस्य धर्माधर्मयोर्वा स्वीकारस्य प्रयोजनं नास्ति ।

चिरध्वस्तं फलायालं न कर्म्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥ ९ ॥

चिरध्वस्तं कर्म, अतिशयं शक्तिविशेषं विना वा फलोत्पादने समर्थो न भवति, ( अर्थात् बहुपूर्वं ध्वस्तं कर्म कामपि शक्तिं कमपि व्यापारम्वाऽनुत्पाद्य कालान्तरभावि-फलोत्पादने समर्थो न भवति । संस्कृतभूतेन भोग्यवस्तुना वा निर्विशेषात्मसकलस्य

संभोगो निष्पन्नं भवितुं नार्हति, चिरविध्वस्तकर्मजन्यव्यापारः, यदि भोग्यान्नपानादौ स्यात् तदा एतद्व्यापारयुक्तभोग्यसकलवस्तुना अदृष्टशून्यात्मनां एकस्मिन्नेव वस्तुनि नानाविधभोगस्य उपपत्तिर्न भवेत् ।

"स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदविधिना यज्ञादिकर्मसमूहः इष्टस्य स्वर्गस्य हेतुरेवं कर्तव्यकार्यमित्यवगतो भवति । यतः यजेत इत्यत्र लिङ् विधिबोधकः अनेन यागे इष्टहेतुना कर्तव्यत्वम् एवं गुरुतरदुःखाजनकत्वमिति सिध्यति, इति एतत्कर्मणः फलमशुभं भवितुं नार्हति । यतः—यद्धि अशुभफलजनकन्तत्र एतादृशी यथार्थबुद्धिर्न भवेत् । वेदः—आप्तवाक्यम्, तेन यथार्थबुद्धिरेव भवति । कर्ममात्रमत्यल्पकालस्थायि इति चिरकालं न तिष्ठति । आशुविनाशियज्ञादिकर्मणा परकालवर्तिस्वर्गादिफलोत्पत्तिकालपर्यन्तस्थाय्यदृष्टकारणं कर्मकर्तुः धर्मविशेषः स्वीकरणीय एवान्यथा एतत्कालानुष्ठितं कर्म स्वर्गादिफलाव्यवहितपूर्वं नास्तीति परकाले स्वर्गादिफलस्य जनकः न भवेत् । अदृष्टकारणस्वीकारे एतत्कालेऽनुष्ठितकर्मसमूहोप्येतददृष्टेन परोक्षभावेन ( मध्यवर्तिव्यापारमदृष्टम्वा उत्पाद्य तेन परम्परया ) परकालीनस्वर्गादिफलस्य कारणं भवति । अत्रायं संशयो भवितुमर्हति एतददृष्टादिकं कुत्र जायते ? यज्ञादिकर्मजनितादृष्टं कर्मकर्तुः जीवस्य, न भोग्यवस्तुनः इतः पूर्वमेतस्योत्तरमेकदा प्रदत्तं पुनरपि इदानीमुच्यते । अदृष्टं कर्मकर्तुः जीवस्य, न भोग्यवस्तुनः । वसन्तपूर्णिमायाः पूर्णचन्द्रदर्शने भावुकभक्तस्य भगवद्विभूतिं मनसि कृत्य भगवत्प्रेम्णि तन्मयता भवति, दुर्जयकामनाया अतृप्तिवशतः विरहिणः मर्मव्यथा भवति, चक्रवाकयुगलं विरहदुःखं विस्मृत्य चन्द्रिकापाने तत्परं भवति[1] । एतत्कारणानुसन्धाने तु यस्य यादृशप्राक्तनकर्मजनितादृष्टं, तस्य एकेनैव वस्तुना तदनुसारि-फलभोगो भवति । तस्मात् कर्मजनितादृष्टं जीवस्यैव न तु भोग्यवस्तुन इति ।

यथा वह्नौ दाहजनिका शक्तिः स्वीक्रियते तथैव कर्मजनितादृष्टं भोग्यवस्तुनि इति स्वीकारेऽपि क्षतिर्नास्ति । आकाशसंयोगे इन्धनसंयोगे च उभयत्र संयोगत्वधर्मस्य समानत्वेऽपि यथा वह्नौ इन्धनसंयोगे सत्येव अग्निरुत्पद्यते, आकाशसंयोगे च नोत्पद्यते, तथैव भोग्यवस्तुनः समानत्वेऽपि नानाविधजीवस्य कर्मजनितनानाविधादृष्टयुक्तभोग्यवस्तुनः जीवानामनुष्ठितकर्मजनितनानादृष्टप्रभावेण जीवस्य नानाविधभोगशक्तिः सम्पाद्यते । भोग्ये वस्तुनि यस्य कर्मजनिता यादृशी शक्तिः अदृष्टम्वा जायते, भोग्यवस्तु स्वीयैतादृश-

१. रात्रौ चक्रवाकः चक्रवाकीच पृथगेव तिष्ठत इति प्रसिद्धिः ।

शक्तिवशेन शक्त्यनुसारं तज्जीवस्य भोगं सम्पादयति। अतः शक्तिरदृष्टम्वा भोग्यवस्तुनि स्वीकारेऽपि एकेनैव वस्तुना नानाजीवस्य अनेकविधभोगस्यानुपपत्तिर्नास्ति। भोग्य-वस्तुनि शक्तिस्वीकारपक्षेऽन्या अपि युक्तयः सन्ति। तथा हि—तृणादिदाह्यवस्तुनि अग्निसंयोगे भस्म भवति, अतः दाहानुकूला शक्तिः वह्नावेव स्वीक्रियते। अन्यथा शक्तिहीनवह्निना दाहस्वीकारे प्रतिबन्धकमणिसद्भावेऽपि दाहं प्रसज्येत। यच्चुच्यते मणिसद्भावस्थले मणिसद्भाववशात् दाहो न जायते, मणिरेव दाहस्य प्रतिबन्धकः, इति मणौ दाहानुकूलशक्तिस्वीकारो नावश्यकः, तथा च मणेरभावः दाहं प्रति कारणमित्येव फलितं भवति, यतः प्रतिबन्धकाभावः भवति कारणं, यः पदार्थः यस्य प्रतिबन्धकः (यस्य वस्तुनः सद्भावे कार्यं न जायते) तस्य अभावः तत्कार्यं प्रति कारणम्, किन्तु अभावः कारणम्भवितुं नार्हति, यतः, किमपि वस्तु कस्यापि कार्यस्य कारणं भवति तदा तस्य कारणरूपेणाभिमतस्य वस्तुनः क्रियासम्बन्धो नितान्तमपेक्षितो भवति। कुम्भकारः दण्डेन चक्रभ्रमणं न कुर्यात् तदा सत्यपि दण्डादिकारणसमवधाने तद्वस्तुसकलं घटस्य कारणमुत्पादकम्वा न भवति, अतः साक्षात् परम्परया वा क्रियया सह सम्बन्धप्रयुक्तमेव दण्डादिकं घटस्य कारणम्भवति। अभावश्च निषेधमात्रं, तत्र विधिरूपता नास्तीति अकिञ्चित्करोऽसौ पदार्थः। अभावे साक्षात्परम्परया वा क्रियासम्बन्धो भवितुं नार्हति, अतः अभावः कस्यापि कारणमपि भवितुं शक्नोति इति मणिः वस्तुतः दाहस्य प्रतिबन्धको नास्ति। तथा सति मणिः वह्नौ या दाहानुकूला शक्तिस्तां नाशयति अत एव च मणौ दाहप्रतिबन्धकत्वम्, मणौ प्रतिबन्धकशब्दः गौणतयैव प्रयुज्यते, मणिः प्रतिबन्धकशब्दस्य मुख्यार्थो भवितुं नार्हति। फलतः—वह्नौ दाहानुकूला शक्तिरवश्यमेव स्वीकरणीया। वस्तुनि शक्तिर्नास्तीति कथनं साहसमात्रमेव ॥ ९ ॥

भावो यथा तथाऽभावः कारणं कार्यवन्मतः।
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥ १० ॥

कार्यस्य भावो यथा कारणं तथाऽभावोऽपि, कारणस्याभावः ( विसामग्री ) प्रतिबन्धः अर्थात् प्रतिबन्धशब्दस्यार्थः। तस्य हेतुः सम्पादको वा प्रतिबन्धकशब्द-स्यार्थः। कारणाभावस्य सम्पादक एव प्रतिबन्धको भवति।

वह्नौ स्वतन्त्रदाहकशक्तिस्वीकारो निष्प्रयोजनः। मणेः दाहस्य प्रतिबन्धकत्वादेव मणिसद्भावस्थले दाहो न जायते, मण्यभावो दाहस्य कारणम्। अभावश्च क्रियाहीनः इति मण्यभावः दाहस्य कारणं भवितुं नार्हति पूर्वपक्षे यदुक्तं तच्च न समीचीनम्।

यतः—ध्वंसोऽपि अभावविशेष एव, अयं प्रत्यक्षसिद्धः कार्यविशेषः क्रियाविहीनश्च। क्रियासम्बन्धं विना ध्वंसरूपाभावस्य कार्यत्वेऽपि क्रियाहीनो मण्यभावः दाहस्य कारणं भवितुं नार्हति। क्रियाहीनोऽपि मण्यभावः स्वावस्थितिवशादेव कारणं भवति। क्रियासम्बन्धं विनाऽपि वस्तु स्वावस्थितिवशादेव कारणं भवति। अभावस्य विधिरूपेण तुच्छत्वेऽपि, सद्रूपेण ज्ञानाविषयत्वेऽपि, ( सद्रूपत्वेन अभावस्य निर्देशासम्भवेऽपि ) निषेधस्वरूपेणाभावस्यास्तित्वमस्ति ( अर्थात् न नास्ति, इत्यादिरूपेण तस्य निर्देशो भवति ) अतोऽभावः आकाशकुसुमस्येव तुच्छपदार्थो नास्ति। अभावस्य अन्वयव्यतिरेकौ भवतः। अस्यामवस्थायामभावः क्रीयाहीनोऽपि स्वावस्थित्या कारणं भवितुमर्हति। यथा—आकाशः क्रियाहीनोऽपि स्वास्तित्वेन ( शब्दस्वरूपकार्यस्याधिकरणेऽभेदसम्बन्धेन स्वावस्थित्या ) शब्दकारणम्भवति। आकाशमेव शब्दस्याधिकरणम्, यतः यस्य वस्तुनः सद्भावे यत्कार्यं जायते, एवं यस्य वस्तुनोऽसद्भावे यत्कार्यं न जायते तद्वस्तु तस्य कार्यस्य कारणम्। अन्वयव्यतिरेकावेव ( तत्सत्त्वे तत्सत्त्वं तदभावे तदभावः ) कारणभावनिर्वाहकौ। अभावस्य अस्तित्वसद्भाव एव अन्वयव्यतिरेकौ संभवतः। इति अभावस्य कारणत्वे न किमपि बाधकम्। मणिसद्भावे वह्निना दाहो न जन्यते, मणेरसद्भाव एव दाहो जन्यत इति मण्यभावः दाहस्य कारणम्। विशेषतः मण्यभावः दाहस्य कारणमिति मणिं लक्ष्यीकृत्य दाहप्रतिबन्धकत्वकथनं सार्थकं भवति। यतः—प्रतिबन्धशब्दस्यार्थः कारणाभावः, मण्यभावस्य दाहकारणत्वात् मण्यभावस्याभावः ( मण्यभावस्याभावः वस्तुगत्या मणिः ) प्रतिबन्धशब्दस्य प्रकृतोऽर्थो भवति। मणेः मणित्वरूपेणावगतिः, मणेः प्रतिबन्धकत्वरूपेण कथनं, मण्यभावस्याभावस्वरूपेण कथनं च इमे प्रभेदाः वस्तुगत्या मणिज्ञानमेवावगमयन्ति। प्रतिबन्धशब्दः, स्वार्थे "क" प्रत्यनेन निष्पन्नः "प्रतिबन्धकशब्दश्च समनार्थकः। यदि प्रतिबन्धकशब्दस्य "क" प्रत्ययः कर्तरि विहितः प्रत्ययस्तदा प्रतिबन्धकशब्दः कारणाभावमप्रत्याय्य प्रतिबन्धस्य कारणस्याभावस्य सम्पादकमेवावबोधयेत्। तथा सति अस्मिन् अर्थे वह्नौ मणिसद्भावकर्ता पुरुष एव दाहस्य वास्तविकप्रतिबन्धकः, मण्यभावः दाहस्य प्रतिबन्धः कारणाभावस्वरूपो वा। अपि च अतिरिक्तदाहकशक्तिस्वीकारपक्षेऽयमपि दोषः सम्भवति यद्वह्नौ प्रतिबन्धकमणिसद्भावे वह्नेः दाहिका शक्तिः नश्यति, मण्यपसारणे किम्वा उत्तेजकमणिसद्भावे च पुनरपि दाहो जन्यते, इति मण्यपसारणे किम्वोत्तेजकपदार्थसमवधाने च पुनरपि दाह उत्पद्यते इत्येव स्वीकर्तव्यम्। तथा च यदा यदा एवं क्रियते तदा तदा शक्तेः नाशः तदुत्पत्तिः च स्वीकरणीयेति महागौरवम् इति तदपेक्षया मणेः दाहप्रतिबन्धकत्व

स्वीकारे लाघवम्, अनन्तशक्तिनाशस्य तदुत्पत्तेश्च स्वीकारः न करणीयो भवति। अतः शक्तेरेवम्बिधजन्मनाशप्रबाहस्वीकारापेक्षया तन्निर्वाणव्यवस्थैव समीचीना। अर्थात् अतिरिक्तशक्तिस्वीकारः न समुचितः।

मणेः दाहं प्रति प्रतिबन्धकत्वस्वीकारे वह्नौ प्रतिबन्धकमणिसमवधानकाले उत्तेजक-मणिसद्भावेऽपि दाहो नैव समुचितः। किन्तु वह्नौ उत्तेजकमणिसमवधाने प्रतिबन्धक-मणिसद्भावेऽपि दाहो भवतीति प्रत्यक्षसिद्धम्। अत एव मणिः न दाहस्य प्रतिबन्धक इत्येव समुचितमाभाति। यद्युच्यते उत्तेजकमणेरसद्भावे (उत्तेजकमणेरभावेन सह मिलितेन एकत्रावस्थितेन रूपेण वा) मणिः दाहस्य प्रतिबन्धकः, उत्तेजकमणिसद्भावे प्रतिबन्धकमणिः, उत्तेजकमणेरभावेन सह मिलितः एकत्रावस्थितो वा न भवति तदा दाहस्य प्रतिरोधं न करोति; अस्यां स्थितौ दाहे बाधको न भवति। एवमुत्तेजकम-णेरपसारणे प्रतिबन्धकमणिः उत्तेजकमणेरभावेन सह मिलितः दाहस्य प्रतिरोधं करोति, अस्यां स्थितौ दाहे बाधको भवति। तथापि उत्तेजकपदार्थसमूहस्यासंख्यत्वात् मणि-मन्त्रौषधादिनानाजातीयासंख्यपदार्थस्यासंख्यस्याभावेन सह मिलितः असंख्यरूपेण मणेः दाहप्रतिबन्धकत्वं वक्तव्यम्। अयमाशयः—यद्धि वस्तु वह्निं वर्धयति तदेवोत्तेजकम्, विशेषमणिरर्थात् प्रस्तरविशेषः विशिष्टमन्त्रः, विशिष्टौषधयः, वह्निवृद्धिं कुर्वन्ति। विश्वस्मिन् उत्तेजकमणेरियत्ता नास्ति। मन्त्र उच्चारणभेदे भिद्यते इति मन्त्राणां संख्या कल्पनायाः अविषयैव; औषधिसम्बन्धेऽपि इयमेव कथा। असंख्यमणिमन्त्रौषधयः प्रत्येकमुत्तेजकम्। प्रतिबन्धकमणिसद्भावे एतेषु वस्तुषु कस्याप्येकस्य वस्तुनः वह्नियोगे दाहो भवति। तेषु कस्यापि एकस्य विशेषस्यभावस्तेन मिलिते सति एकस्यैव प्रतिबन्धकमणेः या विशेषावस्था अनया विशेषावस्थया प्रतिबन्धकमणिः दाहस्य प्रतिबन्धको भवति। अर्थात् दाहस्य प्रतिरोधं करोति। उत्तेजकमणेः यः एकः कश्चिद्विशेषाभावः अर्थात् अयमुत्तेजकमणिर्नास्तीति अभावः। अनेनाभावेन सह मिलिता प्रतिबन्धमणेर्या विशेषावस्थास्यामवस्थायां प्रतिबन्धकमणिः दाहस्य प्रतिरोधको भवति। अयमसौ वा यदेको विशेषमन्त्रः, अस्य तावन्मन्त्रस्य यस्तावदेको विशेषाभावः, एतन्मन्त्रः न पठितः, तन्मन्त्रो वा न पठित इति यो विशेषाभावस्तेन प्रत्येकाभावेन सह मिलिता प्रतिबन्धकमणेः या विशेषावस्था अस्यामवस्थायामेव प्रतिबन्धकमणिः दाहं प्रतिबध्नाति। ओषधिसम्बन्धेऽपि एतदेवावगन्तव्यम्। यथोत्तेजकमणेः संख्यानिर्देशो न सम्भवति तथैव प्रतिबन्धकमणिरपि कतिविधप्रकारेण दाहं प्रतिबध्नातीति निरूपणमप्यसम्भवमेव,

एतादृशी कल्पनातीवगुर्वीति तदपेक्षया वह्नौ प्रतिबन्धकमणिसमवधानदशायां वह्नेर्दाहिका शक्तिः कुण्ठिता भवति, एवमुत्तेजकमण्यादिसमवधानेऽथ वा प्रतिबन्धकमणेरपसारणे शक्तिः कुण्ठिता न भवतीत्येव सुसङ्गतम् । मणिर्नैव दाहस्य प्रतिबन्धकोऽपि तु वह्नेः दाहिका शक्तिः कुण्ठिता जायते ।

वह्नौ प्रतिबन्धकमणिसंयोगे शक्तिकुण्ठनं जायते एवं प्रतिबन्धकमण्यपसारणे किम्वा प्रतिबन्धकमणिसमवधानकालेऽपि उत्तेजकमणिसंयोगे शक्तेः कुण्ठितत्वं नश्यति इति स्वीकारे मीमांसकमते गौरवदोषो भवति । यतः—पुनः पुनः तथा करणे पुनः पुनः शक्तेः कुण्ठितत्वमेवं कुण्ठितत्वस्य नाशः स्वीकरणीयः स्यात्, अनादिकालात् अनन्तव्यक्तिकर्तृकैतादृशी अवस्था कतिधा जातैवमनन्तकालपर्यन्तं कतिधा भविष्यतीति संख्यानिर्देशो न भवितुमर्हति । अतः शक्तेः कुण्ठितत्वस्यापरिसंख्येयस्योत्पत्तिरेवं नाशोऽप्यवश्यमेव स्वीकरणीयः स्यात् । तदपेक्षया उत्तेजकपदार्थस्य मणिमन्त्रौषधादेरभावसमष्ट्या सहोपस्थितिफलेनैव प्रतिबन्धकमणेर्या विशेषावस्था अस्यामवस्थायामेव प्रतिबन्धकमणिः प्रतिरोधको भवति इति स्वीकर्तव्यमेव । पूर्वपक्षोक्तप्रकारे उत्तेजकपदार्थसमूहस्य प्रत्येकविशेषाभावेन सहोपस्थितिफलेनैव एकस्यैव प्रतिबन्धकमणेः विशेषावस्थायां दाहप्रतिरोधस्वीकारस्यावश्यकता नास्ति । विशेषतः एतदपि वक्तुं न शक्यते, यतः—प्रतिबन्धकमणिसद्भावे वह्नौ कस्यापि एकस्य उत्तेजकपदार्थस्य सद्भावे दाह उत्पद्यते, किन्तु अस्यामवस्थायामपि प्रतिबन्धकमणिः अन्यान्योत्तेजकपदार्थस्य विशेषाभावेन सह मिलितो भूत्वैव तिष्ठति, इति कस्यापि एकस्य पदार्थस्य सद्भावकालेऽपि दाहो न भवेत्, किन्तु अस्यामवस्थायां दाहः प्रत्यक्षसिद्धः । अत एव उत्तेजकपदार्थसमुदयस्य एकैकस्य यस्तावदेकैकविशेषाभावः एतत्सकलविशेषाभावसमष्टिसहितस्य मिलितरूपेणैव मणेः प्रतिबन्धकत्वं वक्तव्यम् । तथा सति प्रतिबन्धकमणिसद्भावे वह्नौ कस्याप्येकस्य उत्तेजकपदार्थस्य समवधाने प्रतिबन्धकमणिः अस्योत्तेजकपदार्थस्य विशेषाभावेन सह मिलितो न भवेत्तदा दाहस्य प्रतिरोधकरणेऽपि समर्थो न भवेत्, अतः कस्याप्येकस्योत्तेजकपदार्थस्य समवधानकाले प्रतिबन्धकमणेः सद्भावेऽपि दाहो जायते, इति वह्नौ दाहिका शक्तिः नैव स्वीकरणीया ।

यदि कश्चित् विशेषबाधको न भवति तदा उद्देश्यस्य धर्मोऽर्थात् उद्देश्यतावच्छेदकः विधेये हेतुः = प्रयोजको भवति, 'धनवान् सुखी' इति कथने उद्देश्यस्य धनवतः धर्मः उद्देश्यतावच्छेदकं धनं, विधेयसुखस्य हेतुरूपेण प्रयोजकरूपेण विज्ञातम्भवति ।

धनहेतुकं धनवतः पुरुषस्य सुखमित्येव ज्ञानं जायते। यज्ञोपयोगियवधान्यादीनां व्रीहेरवघातात्पूर्वं प्रोक्षणस्योपदेशो विद्यते इति प्रथमतः एतेषां वस्तूनां प्रोक्षणं भवति, प्रोक्षितव्रीहेरवघातविधानात् अनन्तरमवघातो भवति। एतादृशस्थले प्रोक्षितयवधान्यादीनामुद्देश्यस्य धर्मः उद्देश्यतावच्छेदकं प्रोक्षणं, कालान्तरे निष्पाद्य विधेयावघातस्य हेतुः प्रयोजको वा निर्णीतो भवति। यवधान्यादीनां प्रोक्षणात्पूर्वं यज्ञस्योपयोगी अवघातो न भवति इत्येवावगम्यते। प्रोक्षणम्—मन्त्रपूतजलसेकविशेषः, इदं कर्म अल्पकालमात्रस्थायि, वेदे प्रोक्षणाद्बहुकालानन्तरमवघातस्य विधानात् अवघाताव्यवहितपूर्वक्षणे प्रोक्षणस्वरूपक्रियाविशेषः न तिष्ठति इति साक्षात् सम्बन्धेन प्रोक्षणमवघातस्य हेतुर्न भवति, अतः यवधान्यादिषु प्रोक्षणव्यापारजन्यशक्तिविशेषः स्वीकरणीयः। तथा सति प्रोक्षणव्यापारस्य विनष्टेऽपि एतच्छक्तिद्वारा परोक्षभावेनार्थात् परम्परया अवघातस्य हेतुर्भवति। एतच्छक्तिसम्बन्धेनावघाताव्यवहितपूर्वकाले स्वोपस्थितिज्ञापनेन स्वस्मिन् अवघातहेतुतां बोधयति। अतः वस्तुनः शक्तिः स्वीकरणीया। क्षेत्रस्थयवधान्यादीनां जलसंयोगादिना विनाशेऽपि अनन्तरं तदीयपरमाणुसाहाय्येनाङ्कुर उत्पद्यते। स्वरूपतः स्थितिकालेऽङ्कुरः नोत्पद्यते, एवं धान्यवपनानन्तरं धान्यस्याङ्कुरो जायते, यवाङ्कुरो नैव जायते, यववपनानन्तरं यवाङ्कुरो जायते धान्याद्यङ्कुरो नैव जायते, अतः यवधान्यादिपरमाणौ तत्तज्जातीयशस्यस्याङ्कुरोत्पादनसामर्थ्यविशेषः शक्तिविशेषो वा अवश्यमेव स्वीकरणीयः। किञ्च—महाप्रलये कार्यवस्तु किमपि न तिष्ठति, नित्यपरमाणुप्रभृतय एव स्वीयशक्तिमवधृत्याव तिष्ठन्तेऽनन्तरं पुनरपि सृष्टिकाले शक्तियुतपरमाणोः शक्त्यनुयायिविशेषद्व्यणुकादिक्रमेण विश्वचराचरस्य सृष्टिर्भवति। परमाणौ शक्त्यस्वीकारे पुनः सृष्टिकाले विशेषविशेषद्व्यणुकादिक्रमेण वैचित्र्यमयीयं विश्वचराचरस्य सृष्टिर्न स्यात्। अतः विशेषविशेषपरमाणोर्विशेषविशेषशक्तिरवश्यमेव स्वीकार्या। किञ्च—माघमासे क्षेत्रकर्षणे सति क्षेत्रे उत्तमशस्यं जायते, इति माघकर्षणेन भूमौ उत्कृष्टा शक्तिरस्तीति अवश्यमेव स्वीकर्तव्यम् ॥१०॥

संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः।
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ॥ ११ ॥

प्रोक्षणाभ्युक्षणादिना संस्कारः ( शक्तिविशेषः ) पुरुषस्येष्टः, परमाणुसकलस्य स्वकीयपाकजविशेषविशेषगुणसकलमेव ( परमाणोः पाकजरूपरसादयः ) विशेषाधायको भवति। अयमाशयः—पाकजविशिष्टविशिष्टरूपरसविशिष्टविशिष्टभावापन्नपरमाणुसकलात् विशेषकार्यं जायते।

पूर्वपक्षोक्तयुक्तिसमूहस्यापाततः रमणीयत्वेऽपि व्रीह्यादौ शक्तिस्वीकारे कल्पनागौरवम्भवति। यतः—प्रोक्षणादिजनितशक्तिः यदि व्रीह्यादौ स्वीक्रियते तदा तत्र संख्यानुयायिशक्तिः (व्रीहिसंख्यकाः शक्तयः) स्वीकर्तव्या भवेत्। यदीयं शक्तिः कर्त्तरि स्वीक्रियते तदा व्रीहिसंख्यानुयायिनी न भवेदपि तु कर्तृसंख्यानुयायिनी भवेदिति अल्पसंख्यकशक्तिस्वीकारेणापि कार्यं प्रचलेत्। अतः इयं शक्तिः कर्मफलभोक्तरि पुरुषे एव स्वीकरणीया, तथा सति प्रोक्षणमेतच्छक्तिद्वारा परम्परया बहुकालपरवर्तिनोऽवघातस्य निमित्तम्भवेदित्यत्र किमपि बाधकं नास्ति। किञ्च—क्षेत्रस्थधान्यादीनां विनाशस्वीकारेऽपि सकलभोक्तृजीवस्य अदृष्टबलेनैव धान्यपरमाणुना धान्याङ्कुरोत्पत्तिः स्वीक्रियते एवं प्रलयानन्तरं पुनः सृष्ट्यादौ भगवान् भोगार्थं भोगान्ते च मोक्षार्थं जीवस्यादृष्टानुसारमेव सृष्टिं करोति। महाप्रलयेऽपि जीवस्यादृष्टं सर्वथा विनष्टं न भवति, तथा सति पुनः सृष्टेः प्रयोजनमेव नास्ति। भगवान् जीवस्य कर्मानुसारिणः भोगस्य मोक्षस्य च कृते एव विश्वप्रपञ्चं सृजति। श्रवणमननादिरूपभगवदाराधनाबलेन भोगावसाने जीवस्य कर्मजनितसंस्कारस्य समूलक्षये जीवः कृतकृत्यो भवति, जन्मजरामरणादिसंघातेभ्यः परित्राणं प्राप्नोति। एवं माघकर्षितायां भूमौ विशेषशक्तिस्वीकारस्यापि प्रयोजनं नास्ति, यतः, दृष्टहेतुनैव कार्योत्पत्तिसम्भवे अदृष्टहेतुकल्पनाया अनुचितत्वात्, माघमासकर्षितभूमौ माघस्य सूर्यतापः एवं शिशिरसंयोगो भवतीति भूमौ दृष्टविशेषरूपरसादिसञ्चारो भवति, दृष्टरूपरसादिसंचारेणैव क्षेत्रे उत्तमशस्यस्योत्पत्तिर्जायते, इति भूमौ शक्तिविशेषस्वीकारोऽनावश्यकः ॥११॥

वायौ विजातीयः नातिशीतोष्णस्पर्शः प्रत्यक्षसिद्धः, वायौ पाकजरूपसादयः न सन्ति, तथा सति एतद्रूपरसादिप्रयुक्तं वायौ विजातीयस्पर्शं स्वीकुर्यात्। एवं च। वायौ विजातीयस्पर्शनिमित्तं वायावेव शक्तिविशेषस्य स्वीकारः सम्भवेत्। एवं जलस्य स्वभावतो द्रवपदार्थत्वेऽपि जलमयकरकादेः काठिन्यं प्रत्यक्षसिद्धम्। अतः जलस्य करकादिरूपेण परिणतार्थमुपयुक्तशक्तिस्वीकार आवश्यकः। अन्यच्च अप्रतिष्ठितमूर्तेः पूजा न क्रियते। काष्ठमृत्तिकादिना निर्मितप्रतिमायाः प्रतिष्ठायां देवतारूपेण सा पूजिता भवति। अतः प्रतिमायां प्रतिष्ठया शक्तिविशेष उत्पद्यते इति स्वीकर्तव्यम्। एवम् अपवित्रस्पर्शे सति शक्तेर्नाशो भवति इति स्वीकर्तव्यम्।

निमित्तभेदसंसर्गादुद्भवानुद्भवादयः।
देवता सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥ १२ ॥

उद्भवम् एवमनुद्भवं सकलमेव ( वायोरुद्भूतस्पर्शः एवं परमाणोरनुद्भूतरूपादिकं ) निमित्तभेदवशात् ( भोक्तृजीवविशेषादृष्टवशात् ) भवति। देवता, सन्निधानेन प्रतिमायामहङ्कारममकारादिना ) अथ वा प्रत्यभिज्ञावशात् ( प्रतिमायां साधकस्य प्रतिष्ठितत्वबुद्ध्या अथ वा यथार्थज्ञानवशात् ) पूजायोग्यो भवति।

पूर्वपक्षोक्तयुक्तौ जीवातिरिक्तवस्तुनः शक्तिस्वीकारस्यावश्यकता नास्ति। यतः—वायोरनुष्णाशीतस्पर्शः भोक्तृजीवस्यादृष्टवशादेव भवति ( वायोरेतादृशस्पर्शः जीवस्यादृष्टवशात् एव जायते ) इदमत्र कारणं यत् जीवस्य स्वकर्मानुरूपभोगार्थं भोग्यवस्तुसकलं विशेषविशेषगुणमाधायोत्पद्यतेऽन्यथा विचित्रसृष्टेः प्रयोजनं नास्ति, सृष्टिकर्तुः किमपि प्रयोजनं नास्ति। सः भोगावसाने जीवस्य मुक्त्यर्थं विश्वचराचरस्य सृष्टिं करोति। करके काठिन्यस्यापीयमेव दशा। किं च प्रतिमायाः प्रतिष्ठायां तस्यां कापि शक्तिर्नोत्पद्यते, किन्तु भक्तस्य मनोवासनायाः पूर्त्यर्थं प्रतिष्ठितमूर्तौ देवतायाः ममत्वबोधो भवति। देवता ममेयं मूर्तिरिति विवेचयति, भक्ताश्च एतदर्थमेव देवताज्ञाने मूर्तिपूजां कुर्वन्ति। निर्बोधनास्तिकाश्च प्रतिष्ठितप्रतिमां मृत्तिकामूर्त्तिमङ्गत्योपहासं विदधति। अत्रेयं चिन्ता जायते देवतायां चैतन्यमस्ति न वा? कास्तावद्देवताः? यदि देवता चेतनो न भवेत्तदा प्रतिमायां देवतायाः ममत्वज्ञानमसम्भवम्। चेतनदेवतासम्बन्धे मतभेदो वर्तते। मीमांसकाः चेतनदेवतां न स्वीकुर्वन्ति, तन्मते मन्त्र एव देवता, मन्त्रश्च वर्णानां समष्टिः, स च अचेतनपदार्थः, तथा च तन्मते साधारणभावेनोत्तरं प्रस्तूयते—प्रतिष्ठानन्तरं प्रतिमायां साधकस्य प्रत्यभिज्ञा ( अयन्तावन्ममाराध्यदेवता, इयं मूर्तिः प्रतिष्ठिता, इयं महापुरुषैः पूजिता, इत्यादिज्ञानं ) जायते, एवमेतादृशज्ञानवशादेव भक्ताः प्रतिमां देवतारूपेण पूजयन्ति, इति प्रतिष्ठया प्रतिमायां शक्तिस्वीकारः निष्प्रयोजनः

उपयुक्तसाक्षिप्रमाणाभावे तुलापरीक्षया अपराधनिर्णयो भवति। एतादृशस्थले परीक्षाविधिना तुलायां शक्तिस्वीकारः आवश्यकः। परीक्षायोग्यपुरुषस्य पूर्वं मानं भवति अनन्तरम् "मम पापं नास्ति" इत्यादिप्रतिज्ञां कारयित्वा पुनः मानमेव तुलापरीक्षाविधिः। एतादृशपरीक्षाविधिना परीक्षायोग्यस्य पुरुषस्य मानं पूर्वापेक्षया अधिकं भवति चेत्पापी एवम् अल्पं समानम्वा मानं चेन्निष्पापः इति विवेचितो भवति। पूर्वमेतादृशतुलापरीक्षायाः प्रचलनमासीत्, इति परीक्षाविधिना तुलायां शक्तिविशेषः उत्पद्यत इति स्वीकर्तव्यम्, अतः जीवातिरिक्तस्य शक्त्यभावो नैव प्रमाणितो जायते ॥१२॥

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्।
परीक्षासमवेतस्य परीक्षा विषयो मता: ॥ १३ ॥

जयस्य एवं पराजयस्य निमित्तीभूतः, परीक्ष्यपुरुषे समवेतवृत्तिः, अदृष्टलाभस्य निमित्तम्वा, पुराकाले परीक्षाविधिः सर्वैः स्वीकृतः ।

तुलादण्डे शक्तिविशेषस्वीकारस्यावश्यकता नास्ति, यतः—एतादृशस्थले परीक्ष्यपुरुषस्य धर्माधर्मस्वरूपादृष्टवशेनैव अपराधस्य निर्णयो भवति । अयमाशयः—परीक्ष्यपुरुषस्य "अहं निष्पापः" एतादृशी प्रतिज्ञा यदि सत्यभूता तदा प्रतिज्ञायाः सत्यतानिबन्धनं परीक्ष्यपुरुषस्य धर्मसञ्चयपरिमाणं पूर्वपरिमाण-समानमथ वा ततोऽल्पं जायते, यदि प्रतिज्ञा असत्यभूता तदा असत्यभाषणजनिताधर्मसंचयात् परिमाणं पूर्वापेक्षयाधिकं भवति । तथा च परीक्षाविधिना जीवस्यैवादृष्टमिति स्वीकारेऽपि न क्षतिः । जीवातिरिक्तस्य शक्तिस्वीकारः सर्वथा निष्फलः ।

ज्ञानम्, इच्छा, कृतिः, द्वेषः, सुखं, दुःखं, धर्मः, अधर्मः, इमे सर्वे गुणाः बुद्धितत्त्वस्य, पुरुषः नैव कारणमपि तु निर्लिप्तः चेतनः । पुरुषे तु कोऽपि गुणो नास्ति । बुद्धितत्त्वेन सह अविवेकवशात् ( भेदस्य अज्ञानवशात् ) पुरुषे एतत्सकलस्य गुणस्यारोपो भवति । पुरुषः एतद्गुणविशिष्टमात्मानमवगच्छति । एतदारोपज्ञानमूलकमेव पुरुषस्य बन्धव्यवहारो जायते । अर्थात् अहं सुखी, अहं दुःखी, इत्यादिरूपेण पुरुषः उपलब्धिं करोति । बुद्धितत्त्वेन सह पुरुषस्य विवेकः ( भेदज्ञानम् ) यदा जायते तदा मुक्तिः कैवल्यम्, स्वरूपप्रतिष्ठा वा भवति ।

सांख्यमते—पुरुषः चेतनः, अपरिणामी, नित्यः विभुः ( परममहत्परिमाणयुक्तः ) अनेकश्च । प्रकृतिः, अचेतना, परिणामिनी, एका, नित्या च । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेः प्रथमपरिणामः बुद्धितत्त्वं महत्तत्त्वम्वा । इदं बुद्धितत्त्वमनेकम् । जीवस्यानेकत्वमिव बुद्धिरप्यनेका । एतन्मते प्रतिजीवमेकं बुद्धितत्त्वम् । पूर्वोक्तज्ञानादयो गुणाः एतस्यैव बुद्धितत्त्वस्य । बुद्धितत्त्वमचेतनप्रकृतेः परिणाम इत्यचेतनः किन्तु तथापि तस्य चैतन्याभिमानो भवति । अचेतनस्य चैतन्याभिमानः चेतनसम्बन्धं विना न सम्भवतीति स्वतन्त्रः चेतनः पुरुषो मन्तव्यः ।

सांख्यसृष्टिप्रक्रिया—इष्टेन अनिष्टेन वा ( उपकारिणाऽनुपकारिणा ) विषयेण सह पुरुषस्य सम्बन्धः ( सुखकरस्य दुःखकरस्य वा विषयस्योपलब्धिः ) स्वभावादेव जायते इति स्वीकारे पुरुषस्य मोक्षः सर्वथा असम्भवः । यतः—पुरुषः नित्यः, इति

उद्भवम् एवमनुद्भवं सकलमेव ( वायोरुद्भूतस्पर्शः एवं परमाणोरनुद्भूतरूपादिकं ) निमित्तभेदवशात् ( भोक्तृजीवविशेषादृष्टवशात् ) भवति । देवता, सन्निधानेन प्रतिमायामहङ्कारममकारादिना ) अथ वा प्रत्यभिज्ञावशात् ( प्रतिमायां साधकस्य प्रतिष्ठितत्वबुद्ध्या अथ वा यथार्थज्ञानवशात् ) पूजायोग्यो भवति ।

पूर्वपक्षोक्तयुक्तौ जीवातिरिक्तवस्तुनः शक्तिस्वीकारस्यावश्यकता नास्ति । यतः—वायोरनुष्णाशीतस्पर्शः भोक्तृजीवस्यादृष्टवशादेव भवति ( वायोरेतादृशस्पर्शः जीवस्यादृष्टवशात् एव जायते ) इदमत्र कारणं यत् जीवस्य स्वकर्मानुरूपभोगार्थं भोग्यवस्तुसकलं विशेषविशेषगुणमाधायोत्पद्यतेऽन्यथा विचित्रसृष्टेः प्रयोजनं नास्ति, सृष्टिकर्तुः किमपि प्रयोजनं नास्ति । सः भोगावसाने जीवस्य मुक्त्यर्थं विश्वचराचरस्य सृष्टिं करोति । करके काठिन्यस्यापीयमेव दशा । किं च प्रतिमायाः प्रतिष्ठायां तस्यां कापि शक्तिर्नोत्पद्यते, किन्तु भक्तस्य मनोवासनायाः पूर्त्यर्थं प्रतिष्ठितमूर्तौ देवतायाः ममत्वबोधो भवति । देवता ममेयं मूर्तिरिति विवेचयति, भक्ताश्च एतदर्थमेव देवताज्ञाने मूर्तिपूजां कुर्वन्ति । निर्बोधनास्तिकाश्च प्रतिष्ठितप्रतिमां मृत्तिकामूर्त्तिमत्वगत्योपहासं विदधति । अत्रेयं चिन्ता जायते देवतायां चैतन्यमस्ति न वा ? कास्तावद्देवताः ? यदि देवता चेतनो न भवेत्तदा प्रतिमायां देवतायाः ममत्वज्ञानमसम्भवम् । चेतनदेवतासम्बन्धे मतभेदो वर्तते । मीमांसकाः चेतनदेवतां न स्वीकुर्वन्ति, तन्मते मन्त्र एव देवता, मन्त्रश्च वर्णानां समष्टिः, स च अचेतनपदार्थः, तथा च तन्मते साधारणभावेनोत्तरं प्रस्तूयते—प्रतिष्ठानन्तरं प्रतिमायां साधकस्य प्रत्यभिज्ञा ( अयन्तावन्ममाराध्यदेवता, इयं मूर्तिः प्रतिष्ठिता, इयं महापुरुषैः पूजिता, इत्यादिज्ञानं ) जायते, एवमेतादृशज्ञानवशादेव भक्ताः प्रतिमां देवतारूपेण पूजयन्ति, इति प्रतिष्ठया प्रतिमायां शक्तिस्वीकारः निष्प्रयोजनः

उपयुक्तसाक्षिप्रमाणाभावे तुलापरीक्षया अपराधनिर्णयो भवति । एतादृशस्थले परीक्षाविधिना तुलायां शक्तिस्वीकारः आवश्यकः । परीक्षायोग्यपुरुषस्य पूर्वं मानं भवति अनन्तरम् "मम पापं नास्ति" इत्यादिप्रतिज्ञां कारयित्वा पुनः मानमेव तुलापरीक्षाविधिः । एतादृशपरीक्षाविधिना परीक्षायोग्यस्य पुरुषस्य मानं पूर्वापेक्षया अधिकं भवति चेत्पापी एवम् अल्पं समानम्वा मानं चेन्निष्पापः इति विवेचितो भवति । पूर्वमेतादृशतुलापरीक्षायाः प्रचलनमासीत्, इति परीक्षाविधिना तुलायां शक्तिविशेषः उत्पद्यत इति स्वीकर्तव्यम्, अतः जीवातिरिक्तस्य शक्त्यभावो नैव प्रमाणितो जायते ॥ १२ ॥

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्।
परीक्षासमवेतस्य परीक्षा विषयो मता: ॥ १३ ॥

जयस्य एवं पराजयस्य निमित्तीभूत:, परीक्ष्यपुरुषे समवेतवृत्तिः, अदृष्टलाभस्य निमित्तम्वा, पुराकाले परीक्षाविधिः सर्वैः स्वीकृतः।

तुलादण्डे शक्तिविशेषस्वीकारस्यावश्यकता नास्ति, यतः—एतादृशस्थले परीक्ष्यपुरुषस्य धर्माधर्मस्वरूपादृष्टवशेनैव अपराधस्य निर्णयो भवति। अयमाशयः—परीक्ष्यपुरुषस्य "अहं निष्पाप:" एतादृशी प्रतिज्ञा यदि सत्यभूता तदा प्रतिज्ञायाः सत्यतानिबन्धनं परीक्ष्यपुरुषस्य धर्मसञ्चयपरिमाणं पूर्वपरिमाण-समानमथ वा ततोऽल्पं जायते, यदि प्रतिज्ञा असत्यभूता तदा असत्यभाषणजनिताधर्मसंचयात् परिमाणं पूर्वा-पेक्षयाधिकं भवति। तथा च परीक्षाविधिना जीवस्यैवादृष्टमिति स्वीकारेऽपि न क्षतिः। जीवातिरिक्तस्य शक्तिस्वीकारः सर्वथा निष्फलः।

ज्ञानम्, इच्छा, कृतिः, द्वेषः, सुखं, दुःखं, धर्मः, अधर्मः, इमे सर्वे गुणाः बुद्धि-तत्त्वस्य, पुरुषः नैव कारणमपि तु निर्लिप्तः चेतनः। पुरुषे तु कोऽपि गुणो नास्ति। बुद्धितत्त्वेन सह अविवेकवशात् ( भेदस्य अज्ञानवशात् ) पुरुषे एतत्सकलस्य गुणस्यारोपो भवति। पुरुषः एतद्गुणविशिष्टमात्मानमवगच्छति। एतदारोपज्ञानमूलकमेव पुरुषस्य बन्धव्यवहारो जायते। अर्थात् अहं सुखी, अहं दुःखी, इत्यादिरूपेण पुरुषः उपलब्धिं करोति। बुद्धितत्त्वेन सह पुरुषस्य विवेकः ( भेदज्ञानम् ) यदा जायते तदा मुक्तिः कैवल्यम्, स्वरूपप्रतिष्ठा वा भवति।

सांख्यमते—पुरुषः चेतनः, अपरिणामी, नित्यः विभुः ( परममहत्परिमाणयुक्तः ) अनेकश्च। प्रकृतिः, अचेतना, परिणामिनी, एका, नित्या च। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेः प्रथमपरिणामः बुद्धितत्त्वं महत्तत्त्वम्वा। इदं बुद्धितत्त्व-मनेकम्। जीवस्यानेकत्वमिव बुद्धिरप्यनेका। एतन्मते प्रतिजीवमेकं बुद्धितत्त्वम्। पूर्वोक्तज्ञानादयो गुणाः एतस्यैव बुद्धितत्त्वस्य। बुद्धितत्त्वमचेतनप्रकृतेः परिणाम इत्यचेतनः किन्तु तथापि तस्य चैतन्याभिमानो भवति। अचेतनस्य चैतन्याभिमानः चेतनसम्बन्धं विना न सम्भवतीति स्वतन्त्रः चेतनः पुरुषो मन्तव्यः।

सांख्यसृष्टिप्रक्रिया—इष्टेन अनिष्टेन वा ( उपकारिणाऽनुपकारिणा ) विषयेण सह पुरुषस्य सम्बन्धः ( सुखकरस्य दुःखकरस्य वा विषयस्योपलब्धिः ) स्वभावादेव जायते इति स्वीकारे पुरुषस्य मोक्षः सर्वथा असम्भवः। यतः—पुरुषः नित्यः, इति

पुरुषस्य स्वभावोऽपि ( स्वीयभाव: विद्यमानतापि वा ) नित्य: अर्थात् सार्वकालिक: स्वीकर्तव्य: तथा च पुरुषस्वभावस्य ( अर्थात् विद्यमानताया: ) प्रच्युति: असम्भवा इष्टानिष्टविषयोस्योपलब्धिजनितसुखदु:खयोरात्यन्तिकोच्छेदस्वरूप: मोक्ष: न भविष्यति, इति स्वभावत: पुरुषस्य इष्टानिष्टविषयोपलब्धि: स्वीकर्तुं न शक्यते। एवं पुरुषस्य इष्टानिष्टविषयोपलब्ध्यादिकं प्रकृत्यधीनमित्यपि वक्तुं न शक्यते, यत:, प्रकृतिर्नित्या इति दोष एव स्यात्। इन्द्रियाधीनत्वस्वीकारे पुरुषस्य व्यापकत्वात् चक्षु:कर्णाद्यनेकेन्द्रियै: सह एकस्मिन्नेव समये सम्बन्धसम्भवात् एकदैव चाक्षुषस्पार्शनादिप्रत्यक्षं भवेत्, किन्त्वेतत्तु न भवति, इति मन: स्वीकर्तव्यम्। तथा सति मनोऽतीवसूक्ष्मवस्तु इति एकदैव नानेन्द्रियसंयुक्तं न भवितुमर्हति यदा येनेन्द्रियेण मन: संयुज्यते तदा तदिन्द्रियजनितं प्रत्यक्षं जायते, अन्यान्येन्द्रियाणां विषयसंयुक्तत्वेऽपि तदाऽन्यान्येन्द्रियजनितं प्रत्यक्षं न भवति, इति एकदा नानेन्द्रियजनितप्रत्यक्षत्वापत्तिर्नास्ति। एवं स्वप्नकाले यदात्मानं व्याघ्रादिरूपेण विवेचयति तदा अहं मनुष्य इति ज्ञानं न भवति, इत्यहङ्कारतत्त्वमपि स्वीकरणीयमेव। अयमाशय:—स्वप्नावस्थायां मनुष्य: यदा आत्मानं व्याघ्रादिरूपेणानुभवति तदा अयमनुभव: देहेन्द्रियादिसम्बन्धवशतो भवतीति वक्तुं न पार्यते, यत:—देहेन्द्रियादिसम्बन्ध: विषयसम्बन्धं विना न भवति। व्याघ्रादिविषयस्तदा निकटवर्ती नास्ति इति तै: सह देहेन्द्रियादिसम्बन्धो न संघटते तथा चैतादृशानुभवोऽपि न भवितुमर्हति। मनोवृत्तिविषयोऽनियमित इति अयं घट: अयं पट इत्यादिसमूहालम्बनरूपेण ( नानाविषयेण सह एकदा एकस्य ज्ञानस्य विषयतासम्बन्धेन ) एकदा नानाविषयकानुभवो भवतु, किन्तु स्वप्नावस्थायां अहं व्याघ्र: इत्यनुभव: यदा भवति तदा अतिनिकटवर्तिन: मनुष्यत्वस्यापि बाध: स्यात्, ( अहं मनुष्यो नास्तीति इत्यादिनिश्चय: भवेत् ) तथा च य: केवलमहं स्वरूपविषये आबद्ध: असौ मन: भवितुं नार्हति स खलु पदार्थ: देहेन्द्रियादिव्यतिरिक्त: स्वीकर्तव्य:, स एव चाहंकार:। किञ्च, जाग्रत्स्वप्नसुषुप्तिकालेऽपि क्रियाशीलं श्वासप्रश्वासकार्यं सुसम्पन्नं भवति इति तन्निर्वाहकं बुद्धितत्त्वमपि मन्तव्यम्। अयमाशय:—सांख्यमते सुषुप्त्यवस्थायां सुखानुभवातिरिक्तं किमपि ज्ञानं न वर्तते, यत: तत्समये मनोदेहेन्द्रियाहङ्कारादय: निद्रितावस्थायां व्यापारहीनावस्थायाम्वा तिष्ठन्ति, किन्त्वस्मिन् समयेऽपि नियमितश्वासकार्यं सम्पन्नं भवति, प्रयत्नं विना कार्यं सर्वथाऽसम्भवमेवेति इदानीं यस्य प्रयत्नेन श्वासप्रश्वासादय: सम्भवन्ति तदेव बुद्धितत्त्वं महत्तत्त्वम्वा सुषुप्तिकाले मनोऽहङ्कारादीनां निद्रितावस्थायामपि सर्वथा उद्बुद्धं तिष्ठतीति इदानीं सुखानुभवो नासम्भव:। अत्रेयं शङ्का भवति यत्

सुषुप्त्यवस्थायां बुद्धितत्त्वस्योद्बुद्धत्वस्वीकारे अध्यवसायः ( बुद्धितत्त्वस्य वृत्तिः ) कस्मान्न भवति ? परमियं शङ्का नैव समीचीना, यतः बुद्धितत्त्वस्य अध्यवसायार्थं मनसः अहंकारस्य च वृत्तेरपेक्षा जायते, सुषुप्तिकाले मनसः अहंकारस्य च निद्रितत्वात् तयोर्वृत्तिर्न भवति, इति बुद्धितत्त्वस्यापि अध्यवसायो वृत्तिर्वा न जायते। पुरुषे बुद्धितत्त्वस्य ( बुद्धितत्त्वस्य ज्ञानरूपपरिणामस्य ) प्रतिबिम्बमेव पुरुषस्य स्वरूपचैतन्य-माच्छाद्य तिष्ठति। बुद्धितत्त्वस्य विलये सति पुरुषे बुद्धितत्त्वस्य वृत्तिः ज्ञानरूपपरि-णामस्य प्रतिबिम्बनम्वा न सम्भवति, तथा च इष्टानिष्टविषययोरुपलब्धिरपि न भवितु-मर्हति, एवं तज्जनितसुखदुःखयोरपि सम्भावना नास्ति इति दुःखस्य अत्यन्तनिवृत्तिः मोक्षो वा स्यात्। अयमाशयः—विषयेण सह इन्द्रियसम्बन्धे ज्ञाते विषयः इन्द्रिय-प्रणालिकया बुद्धितत्त्वे—प्रतिफलितो जायते ( अतिस्वच्छबुद्धितत्त्वे विषयच्छाया पतति तच्छायया च बुद्धितत्त्वं विषयाकारं भवति अर्थात् विषयाकारधारणं करोति ) एतदेव बुद्धितत्त्वस्य ज्ञानरूपपरिणामः बुद्धिवृत्तिर्वा। एतादृश-बुद्धिवृत्तौ पुरुषः प्रतिबिम्बितो भवति एवं बुद्धिवृत्तिः पुरुषेऽपि प्रतिबिम्बिता भवति। एवं क्रमेण परस्परप्रतिबिम्बविशेषवशात् पुरुषस्यापि अर्थावबोधः अर्थोपलब्धिर्जायते। पुरुषः वस्तुतः असङ्गः, निर्गुणे सत्यपि बुद्धितत्त्वं ज्ञानरूपे परिणतवृत्तिस्वरूपस्वीयार्थाकारतां प्रतिबिम्बनेन पुरुषं प्रति समर्पयति तेन पुरुषस्य औपाधिकार्थाकारता जायते। इदन्तु तत्त्वम्, जपापुष्पस्य स्फटिकसन्निधाने जपायाः लौहित्यमेवं स्फटिकस्य चाकचिक्यं यथा परस्परं प्रतिबिम्बितं भवति, जपायाः लौहित्येन स्फटिकमणिः, स्फटिकमणेः चाकचिक्येन जपापुष्पम् आक्रान्तं भवति, तथैव पुरुषः बुद्धितत्त्वञ्च परस्परधर्मेण परस्परमाक्रान्तं भवति बुद्धितत्त्वस्य ज्ञानरूपा वृत्तिः पुरुषे एवं पुरुषस्य चैतन्यं बुद्धिवृत्तौ प्रतिबिम्बितं भवति। पुरुषस्य अपरिणामित्वेऽपि इयमेव पुरुषस्य विषयोपलब्धिः, विषयावभासो वा। अन्यत्र बुद्धिवृत्तौ पुरुषप्रतिबिम्बात्, बुद्धिवृत्तेर्यद् स्फुरणं, तदेव बुद्धेर्विषयोपलब्धिरस्ति। पुरुषबुद्धितत्त्वयोः परस्परं प्रतिबिम्बवशात् परस्परभेदस्य पार्थक्यस्य वा अवगतिर्न भवति। बुद्धितत्त्वं पुरुषचैतन्यं स्वकीयमेवावगच्छति अर्थात् स्वयमहंरूपेण जानाति एवंभूताहमित्यनुभवति। पुरुषः यद्यपि निर्गुणस्तथापि विषयाकाराकारिता बुद्धिवृत्तिः पुरुषे प्रतिबिम्बिता सती अहं जानामि, अहं सुखी, अहं दुःखी, इत्यादिरूपेण बुद्धितत्त्वस्य धर्मभूतान् ज्ञानसुखादीन् गृहीत्वा स्वोपलब्धिं करोति परस्परप्रतिबिम्बवशात् एकः अन्यस्य भावेनाच्छादितो भवति, पुरुषः आत्मानं बद्धम्, इष्टानिष्टविषयोपलब्धिजनितसुखदुःखादिनात्मानं सुखिनं, दुःखिनं वा जानाति।

पुरुषस्य एतादृशसुखदुःखादिविषयोपलब्धिरेव भोगः कथ्यते। बुद्धितत्त्वस्य स्थितौ उभयोः परस्परं प्रतिविम्बस्य वारणं न सम्भवति इति बुद्धितत्त्वस्य विद्यमाने सुखदुःखादिभोगस्य निवृत्तिरपि न सम्भाव्यते, इति मोक्षः असम्भव एव स्यात्।

मुक्तिलाभस्योपायः—सत्त्वरजस्तमसां साम्यावस्थैव मूलप्रकृतिः, साम्यावस्थायां धर्माधर्मसुखदुःखद्वेषादीनां गुणानामतिसूक्ष्मत्वात् पुरुषभोगायोपलब्धयेऽनुपयुक्तास्ते भवन्ति। अतः मूलप्रकृतिः पतिव्रतेव पुरुषस्य कृते स्वशोभायाः एततद्गुणस्य भोगसम्पादनार्थमशेषविशेषरूपेण साम्यावस्थया प्रच्युता भवति। अर्थात् स्थूलरूपे एतत्सकलगुणयुक्ता महत्तत्त्वादिरूपे परिणता भवति। प्रकृतेः महत्तत्त्वादिरूपेण परिणामः पुरुषार्थ एव। पुरुषः प्रकृतेः प्रथमपरिणामं महत्तत्त्वं विवेकपूर्वकं यद्यवगच्छेत्तदा, बुद्धितत्त्वं विविच्यावगच्छेत् ततः प्रकृतिश्च नर्तकीव विरता स्यात्। अर्थात् महत्तत्त्वादिक्रमे पुनः परिणता न भवेत्। यतः, प्रकृतेः शोभां पूर्वोक्तधर्माधर्मप्रभृतिरूपेण महदादिपरिणामं पुरुषः जानाति इत्यवगतौ सत्यामहं पुरुषेण दृष्टा इति विविच्य कृतकृत्या भवेत्। लज्जाशीलरमणीव पुरुषस्य दर्शनाभिलाषिणी न भवेत्। स्वशोभामात्मन्येवोपसंहरेत्। अयमेव बुद्धितत्त्वस्य विनाशः प्रकृतिलयो वा। बुद्धितत्त्वस्य प्रकृतौ लीनायां विषयाकारवृत्तेः सम्भावना न भवति। अतः बुद्धिवृत्तेः प्रतिविम्बनवशात् पुनरपि पुरुषस्य स्वरूपाच्छादनं न भवति। तथा च इष्टानिष्टविषयोपलब्धिजनितभोगस्य सम्भावना न वर्तते। तदा त्रिविधदुःखनिवृत्तिरूपो मोक्षो भवेत्।

कर्तृधर्मा नियन्तारश्चेतिता च स एव नः।
अन्यथाऽनपवर्गः स्यादसंसारोऽथ वा ध्रुवम्॥ १४॥

नियन्तृसमुदायाः = संघटनकारिधर्माधर्मेच्छाद्वेषज्ञानसुखादिगुणाः कर्तृधर्माः, स च कर्ता चेतन इत्येवास्माकं मतम्। अन्यथा अपवर्गः मोक्षो वा भवितुं नार्हति, अथ वा संसार एव न स्यात् इति निश्चितम्।

सांख्यानां युक्तिः यद्यप्यापातरमणीया तथापि विचारे युक्तिसंगता न भवति। यतः—मम इच्छा भवतु, अहं ज्ञात्वैव इच्छां कृतवान् विद्वेषवशात् किमपि न करोमि इत्यादिसार्वजनीनानुभववशात् ज्ञानेच्छाद्वेषादयः कर्तुः धर्मरूपेणोभयवादिसिद्धम्, किन्तु चेतनोऽहमेव करोमि चेतनस्य ममेच्छा भवति, इत्यादिरूपसार्वजनीनानुभवेन विरुद्धः सिद्धान्तो भवितुं नार्हति। अतः ज्ञानेच्छादयः गुणाः चेतनस्य कर्तुरात्मन एव न अचेतनायाः प्रकृतेः। अपरञ्च इमे गुणाः अचेतनायाः प्रकृतेः

स्वीकारे मोक्षः सर्वथा असम्भव एव स्यादिति सांख्यशास्त्रस्य वैफल्यमापतति । यतः— स्वीयगुणाः धर्माधर्मप्रभृतयः प्रकृतिं गृहीत्वोत्पत्तियोग्याः पदार्थाः अर्थात् अनित्याः, जन्याः, तथा च बुद्धितत्त्वस्योत्पत्त्यर्थमदृष्टं कारणं धर्माधर्मरूपमवश्यमेव स्वीकर्तव्यम्, यतः कार्यमात्रम् प्रति अदृष्टं कारणम् । तथा च बुद्धितत्त्वस्य उत्पत्तेः पूर्वमदृष्टं स्वीकर्तव्यम्, अदृष्टं परिणामो वा वस्तुनः विकारात्मकगुणपदार्थः गुणश्चाश्रयं विना स्थातुं न शक्नोति इति बुद्धितत्त्वस्योत्पत्तेः पूर्वं मूलप्रकृतिरेवादृष्टस्याश्रयभूता मन्तव्या, किन्तु, मूलप्रकृतिः अपरिणामिनी विकारस्वरूपा नेति धर्माधर्मादिपरिणामः विकारो वा मूलप्रकृतेः भवितुं नार्हति तथा सति प्रकृतेः मूलत्वम् अपरिणामित्वं त्यक्तव्यम्, यदि बुद्धितत्त्वं सदातनं तदा बुद्धितत्त्वस्य विनाशोऽसम्भवो भवेत् इति पुरुषबुद्धितत्त्वयोः प्रतिविम्बनं सर्वदैवावश्यम्भावि, तथा च पुरुषे बुद्धितत्त्वस्य धर्माधर्मादिगुणानामारोपवारणं सर्वथाऽशक्यमेवेति मोक्षो न स्यात् ।

चेतनसबन्धे विचारितं बहुधा, अस्मिन् जगति सर्वमचेतनमेवेति न चेतनमवश्यमङ्गीकर्तव्यम्, किन्तु चेतनस्वीकारेऽपि शरीरेन्द्रियाद्यतिरिक्तं किमपि चेतनं नास्ति, खादामि, गच्छामि, पश्यामि, शृणोमि इत्याद्यनुभववशात् शरीरेन्द्रियादिकमेव चेतन आत्मा ।

नान्यदृष्टं स्मरत्यन्यः नैकं भूतमपक्रमात् ।
वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥ १५ ॥

अन्योऽन्यदृष्टस्य स्मरणं कर्तुं समर्थो भवितुं नार्हति । बाल्ययौवनादिभेदे सत्यपि एकं शरीरं भवितुं नार्हति । बाल्यशरीरस्य वासना युवशरीरे युवशरीरस्य वासना वृद्धशरीरे संक्रमितुं नार्हति । स्थिरपक्षे अन्या गतिरुपायो वा नास्ति ।

स्मृतिस्तावदेकं ज्ञानम्, सा च पूर्वानुभूतवस्तुन एव भवति, अतः स्मरणं प्रति पूर्वानुभवस्य कारणत्वम् । पूर्वानुभूतत्वाभावे वस्तुनः स्मरणं न भवति । यः पुरुषः यस्य वस्तुनः अनुभवं करोति स एव पुरुषः तस्य वस्तुनः स्मरणं कुर्यात्, अन्यः पुरुषः अन्यानुभूतस्य वस्तुनः स्मरणं कर्तुं न पारयति । अतः अनुभवस्य स्मरणस्य च कश्चिदेकः कर्ता भवेत् । पक्षान्तरे परिमाणभेदे वस्तुनः भेदः प्रत्यक्षसिद्धः इति बाल्यादिशरीरं परस्परं भिद्यते । तथा च शरीरस्य चैतन्यमात्मत्वम्वा स्वीक्रियते तदा बाल्यशरीरेऽनुभूतस्य वस्तुनः युवावस्थायां वृद्धावस्थायाञ्च स्मरणं न स्यात्, यद्येवं न स्वीक्रियते तदा, अनुभवस्य स्मरणस्य च कर्तुरेकत्वस्वीकारस्य व्याघातो भवेत् ।

तदा चैत्रकर्तृकदृष्टस्य वस्तुनः मैत्रः स्मरणं कुर्यात् किन्त्वेवं न दृश्यते, किञ्चास्माभिर्बाल्या-वस्थायां यदवलोक्यते, युवावस्थायां किम्वा वृद्धवस्थायामपि एतादृशस्य यस्य कस्यापि वस्तुनः स्मरणं क्रियते । अतः शरीराद्यतिरिक्तः नित्यश्चेतन आत्मा अवश्यमेव स्वीकरणीयस्तथा च पूर्वोक्तः दोषः न संघटते । यतः—यः आत्मा बाल्यावस्थायामव-लोकयति स एव आत्मा युवावस्थायां वृद्धावस्थायाम्वा स्मरणं करोति, तथा च न काप्यनुपपत्तिः । कार्यस्याव्यवहितपूर्वक्षणे कार्यस्याधिकरणे नियतरूपेण अवस्थितिः कारणस्य धर्मः अर्थादेतदेव कारणत्वम् इति बाल्यावस्थायाः द्वित्रिक्षणावस्थाय्यनुभवः बहुकालपरवर्तियुवावस्थायां वृद्धावस्थायाम्वा जातस्य स्मरणस्य पूर्ववर्ती भवितुं नार्हति, इति बाल्यानुभवः युवावस्थायां वृद्धावस्थायाम्वा स्मरणस्य कारणं न स्यात् । अस्यां स्थितौ पूर्वानुभवः अनुभूतवस्तुविषये संस्कारमुत्पाद्य अनेन संस्कारेण अर्थात्—स्मरणा-नुभवयोः मध्यवर्तिसंस्कारस्वरूपपरम्परासम्बन्धेन परवर्तिस्मरणस्य कारणं भवति, इत्यवश्यमेव स्वीकार्यम्, तथा सति शरीराद्यतिरिक्तस्य चेतनात्मनः स्वीकारस्यावश्यकता नास्ति, यतः—बाल्यशरीरकृतानुभवेनोत्पन्नसंस्कारः वृद्धशरीरे सञ्चारितो भूत्वा युवावस्थायां वृद्धावस्थायाम्वा स्मरणमुत्पादयति, इति स्वीकारेणैव कार्यं प्रचलेत्, अतः स्मरणानुभवयोरेककर्तृकत्वस्वीकारः सर्वथा निष्फलः । किन्त्वेतदपि न समीचीनम् यतः—बाल्यशरीरकृतानुभवजन्यसंस्कारस्य वृद्धशरीरे सञ्चारस्वीकारे संस्कारसञ्चारस्य विशेषनियमः स्वीकर्तव्योऽन्यथा चैत्रकृतानुभवजन्यसंस्कारः मैत्रे सञ्चारित इति चैत्रदृष्टं वस्तु मैत्रः स्मरणं कुर्यात्, न च तथा भवति, यद्युच्यते अनुभवकर्तुः स्मरणकर्तुश्च कार्यकारणभाव एव संस्कारसञ्चारनियामकः । चैत्रशरीरमेवं मैत्रशरीरमेकमपरस्य कार्यं कारणम्वा नास्तीति चैत्रानुभवजन्यसंस्कारः मैत्रे नैव सञ्चरेत् । अत एव च चैत्रदृष्टं वस्तु मैत्रः स्मरणं न करोति, किन्तु बाल्यशरीरस्य युवकशरीरं प्रति एवं युवकशरीरस्य वृद्धशरीरं प्रति कारणत्वात् परस्परकार्यकारणभाववशात् बाल्यशरीरकृतानुभव-जन्यसंस्कारः युवावस्थायां सञ्चारितो जायते, एतन्निमित्तवशादेव अनेन संस्कारेण बाल्यशरीरानुभूतस्य वस्तुनः स्मरणमन्यस्यामवस्थायां भवति । परमेतदपि न समीचीनम्, यतः—तथा सति मातृशरीरं पुत्रशरीरस्य कारणमिति मातृशरीरानुभूतवस्तुनः सम्बन्धेऽपि पुत्रस्य स्मरणं स्यात्, किन्तु न तथा दृश्यते । यद्युच्यते कार्यकारणभावः संस्कार-सञ्चारस्य नियामको नास्ति, किन्तु स्मरणानुभवयोः कर्तुः उपादानोपादेयभाव एव संस्कारसञ्चारस्य नियामकः ( उपादानशरीरकृतानुभवजन्य संस्कारः उपादेयशरीरे सञ्चारितो भवति ) मातृशरीरं पुत्रशरीरस्योपादानं नास्ति इति मातृशरीरकृतानुभवजन्य-

संस्कारः पुत्रे सञ्चारितो न भवति। तथा च मात्रनुभूतं वस्तु पुत्रस्मरणपथवर्ति न भवति। बाल्यशरीरं युवशरीरस्य युवशरीरं वृद्धशरीरस्योपादानमिति बाल्यानुभवजन्यसंस्कारः युवशरीरे किम्वा वृद्धशरीरे क्रमेण सञ्चारितो भवति अतः बाल्येऽनुभूतस्य वस्तुनः युवशरीरे किम्वा वृद्धशरीरे स्मरणं भवति। परञ्चैतदपि न समीचीनम्, यतः, विनष्टेऽपि करे हस्तेन अनुभूतवस्तुनः स्मरणं भवति; एतादृशस्थले हस्तविहीनशरीरे हस्तयुक्तशरीरकृतानुभवजन्यसंस्कारः सञ्चारितो भवितुं नार्हति तथा च हस्तयुक्तशरीरानुभूतवस्तुनः स्मरणं हस्तविहीनशरीरे न भवेत्, यतः हस्तयुक्तशरीरं हस्तविहीनशरीरस्योपादानकारणं नास्ति। एवमेव चक्षुःकर्णादयः अपि नैवात्मा भवितुमर्हन्ति। यतः—तथा सति अयमेव दोषः संघटते। अर्थात् चक्षुषो विनाशे चक्षुषा अनुभूतवस्तुनः स्मरणं न भवेत्। मनः, नित्यः पदार्थः, येन मनसा पूर्वमनुभूतवान्, तदेव मनः अनन्तरमपि स्मरति इति मनः एव चेतन आत्मा भवतु। परञ्चैतदपि न समीचीनम् यतः, चाक्षुषं, स्पार्शनं, रासनञ्च प्रत्यक्षज्ञानमेकदा भवितुं नार्हति, इति मनसः परिमाणमतीवसूक्ष्मम् अर्थादणुपरिमाणं मन इति स्वीकर्तव्यम्। अस्यामवस्थायां मनः यदि चेतन आत्मा स्यात्तदा मनस्याश्रितचैतन्यस्य प्रत्यक्षम् ( अहं जानामि, स्मरणं करोमि इत्यादिप्रत्यक्षम् ) न भवेत् यतः यस्मिन् आधारे यस्य वस्तुनः प्रत्यक्षत्वम् तस्याधारस्य महत्परिमाणयुक्तत्वमावश्यकम्। अहं जानामीति प्रत्यक्षज्ञाने यद्यहं स्वरूपेणः मन एव विषयीकरोति, तदा अणुपरिमाणयुक्तस्य वस्तुनः प्रत्यक्षत्वं स्वीकृतं स्यात् अणुपरिमाणयुक्तस्य च वस्तुनः प्रत्यक्षत्वं न भवति। तथा सति पृथिव्यादिपरमाणूनामपि प्रत्यक्षत्वापत्तिः। अत एव मनः नित्यः चेतनः आत्मा न भवेदिति शरीरातिरिक्तः नित्यश्चेतन आत्मा अवश्यमेव स्वीकर्तव्यः।

विश्वस्य सकलं वस्तु जन्यमेवं विनाशि, सकलं वस्तु उत्पन्नं सत् परक्षणे एव विनश्यति। अनादिकालतः संसारक्रम एवमेव चलति, एवमेव चानन्तकालपर्यन्तं प्रचलेत्। विश्वस्य किमपि वस्तु नित्यमुत्पत्तिविनाशहीनं दीर्घकालस्थायि नास्ति। प्रत्येकं वस्तु चरमे महाशून्ये लीनं भवति एवमादावपि महाशून्ये लीनं तिष्ठति। शून्यतैव निर्वाणम् जलबुद्बुदस्येव क्षणपर्यन्तमेव सकलस्य वस्तुनः सत्ता वस्तुमात्रमेव क्षणकालमात्रस्थायि अर्थात् क्षणिकम्। अयमाशयः—वस्तुमात्रमेव स्वलक्षणमर्थात् वस्तुमात्रस्य स्वकायमेकं लक्षणम् वा विशिष्टता अर्थात् अनन्यसाधारण धर्मः वर्तते, अनन्यसाधारणधर्मवशादेव वस्तुसकलं पृथगभिधानेन अर्थात् घटपटादिशब्देनोच्यते। स्वालक्षण्यं स्वीयविशिष्टतैव वा वस्तुनः वस्तुत्वं व्यक्तित्वम्वा एतद्व्यक्तित्वमादायैव

वस्तुनोऽस्तित्वम्, घट-पटादिवस्तुसकलस्य व्यक्तित्वं ( स्वीयं स्वीयं स्वालक्षण्यं विशिष्टता वा)व र्ततेऽत एव सद्रूपेण प्रतीयते अन्यथा सर्वथा असत्पदार्थमध्येष्वेव गणना स्यात्। व्यक्तित्व-विहीनः सर्वथाऽसत्पदार्थः यथा गगनकुसुमम्। अत्रेयं विचारणा यत् वस्तुनः स्वालक्षण्यं स्वीयविशिष्टता तावत्किम्? विश्वस्य किमपि वस्तु कुर्व्वद्रूपं कार्योन्मुखं यावन्न भवति तावत्कार्यं कर्तुं न प्रभवति। प्रत्येकं वस्त्वेव कुर्व्वद्रूपं, कार्योन्मुखम्वा ( अर्थात्कार्यकरणे प्रस्तुतम् ) वस्तु कुर्व्वद्रूपं सदेव क्रमेणोत्पद्यते, कुर्व्वद्रूपत्वं कार्योन्मुखत्वम्वा धर्ममादायैव सृष्टिक्रमः सृष्टिप्रवाहो वा ( एकस्यानन्तरमपरस्योत्पत्तिः ) चलति। कुर्व्वद्रूपता, कार्योन्मुखता वा ( कार्यकरणे प्रस्तुतत्वमेव ) वस्तुनः स्वालक्षण्यं विशिष्टता वा, एतदेव च वस्तुत्वम्। एतादृशी विशिष्टता (वस्तुत्वम्वा) वस्तुसमुदाये नैकापि तु एतद्व्यक्तिभेदान्नाना इति एतदेव व्यक्तित्वम्। यतः—एकस्य कुर्व्वद्रूपता स्वीयविशिष्टता वान्यस्मिन् न वर्तते इत्यवश्यमेव स्वीकर्तव्यम्, वस्तुसमुदायः कार्ये उन्मुखः न भवति एवमेव वस्तुसकलमपि कस्मिन्नपि एकस्मिन् कार्ये उन्मुखं न भवति, प्रत्येकं वस्त्वेव स्वतन्त्ररूपेण कार्यमुत्पादयति, अत एव वस्तुसकलस्य काचिदेका कुर्व्वद्रूपता कार्योन्मुखता वा नास्ति, अपि तु, भिन्नस्य भिन्नस्य वस्तुनः कुर्व्वद्रूपता स्वतन्त्रैव अर्थात् विभिन्नं वस्तु विभिन्नकार्यकरणे एव प्रस्तुतम्। घटः यद्विशिष्टं कार्यं करोति पटः तद्विशिष्टं कार्यं न करोति, एवमेवायं घटः यद्विशिष्टं कार्यं सम्पादयति अन्यः घटस्तद्विशिष्टं कार्यं नैव सम्पादयति एवं व्यक्तिभेदोऽपि प्रत्यक्षसिद्ध एव। अतः एतदवश्यं स्वीकर्तव्यं यत् वस्तुनि व्यक्तौ वा एका कुर्व्वद्रूपता अस्ति अन्यथा व्यक्तेः भेदकः किमपि न स्यात्, वस्तुसकलमेकमभिन्नं स्याद्, एकं यत्कार्यं करोति अपरस्य तन्नास्ति, सर्वमेव स्वाधीनम्। एकेन सहापरस्य कापि सहयोगिता नास्ति, सर्वमपि स्व-स्वकार्ये व्यस्तम्। एकस्मिन् वस्तुनि या एका कुर्व्वद्रूपता स्वीक्रियते एतदेव वस्तुनः स्वालक्षण्यं स्वीयविशिष्टता वा अर्थात् अनन्यसाधारणो धर्मः। यस्य एतादृशी कुर्व्वद्रूपता स्वालक्षण्यम्वा तदेव वस्तुपदवाच्यम्। स्वीयविशिष्टताहीनं नाम, रूपहीनमर्थात् तुच्छं यथा गगनकुसुमम्। तथाचास्यामवस्थायां कस्यापि वस्तुनः दीर्घकालस्थायित्वं नास्ति, यतः—वस्तुनः दीर्घस्थितिकाले (अर्थात् उत्पत्तिपरक्षणात् विनाशक्षणपर्यन्तम् ) प्रतिक्षणं स्वकीयकार्यस्य पुनः पुनः उत्पत्तिः प्रसज्येत, अथ वा वस्तुसकलस्य स्वीयविशिष्टता व्यक्तित्व-स्याभावो वा स्वीकरणीयः, अथ वा एकत्र विरुद्धधर्मद्वयस्य समावेशः स्वीकर्तव्यः। किन्तु पुर्वोक्तेषु तत्र किमपि स्थातुं नार्हति। दृष्टान्तेन विश्लेषणं क्रियते—या क्षेत्रस्थ-बीजव्यक्तिः अङ्कुरमुत्पादयति। इयं बीजव्यक्तिरेवैतदङ्कुरस्वरूपकार्यस्य कुर्वद्रूपमस्ति। तथा

च एतदङ्कुरस्वरूपकार्यस्य कुर्वद्रूपतैव ( इयमङ्कुरस्वरूपकार्योत्पादने प्रस्तुता सती ) एतद्बीजव्यक्तेः स्वालक्षण्यं, विशिष्टता, व्यक्तित्वम्वा । अस्यामवस्थायामियं बीजव्यक्तिः यदि दीर्घकालस्थायिनीति स्वीक्रियते, तदा तस्याः दीर्घस्थितिकाले प्रतिक्षणमेवैतस्याङ्कुरस्य पुनः पुनः उत्पत्तिः स्यात्, यतः—एतदङ्कुरस्वरूपकार्यकरणे प्रस्तुतायां सत्यामेव एतस्याः बीजव्यक्तेः व्यक्तित्वं स्वभावः अर्थात् विशिष्टता, तथा चैतदङ्कुरस्वरूपं कार्यं न कुर्यादिति भवितुं नार्हति, किन्तूत्पन्नस्योत्पत्तिरसम्भवैव, यद्धि वस्तु एकदोत्पन्नं तत्कदाचन नोत्पद्यते । यद्युच्येत, इयं बीजव्यक्तिः दीर्घकालस्थायिनी भवेन्नाम तदापि स्वस्य उत्पत्तिक्षणे एवास्यामेतदङ्कुरस्वरूपकार्यस्य कुर्व्वद्रूपता (इयमेतदङ्कुरस्वरूपकार्यस्य करणे प्रस्तुता ) अर्थात् एतस्याः बीजव्यक्तेः स्वीया विशिष्टता ( व्यक्तित्वम् ) तथा सत्यां उत्पत्तिपरवर्तिदीर्घस्थितिकाले तस्यां स्वीयविशिष्टता अर्थात् व्यक्तित्वं नास्ति । व्यक्तित्वरहितैव सेति स्वीकरणीया । अर्थात दीर्घस्थितिकाले तस्यां स्वीयविशिष्टतायाः व्यक्तित्वस्य वा अभावः स्वीकरणीयः किन्तु सा स्वालक्षण्येन स्वीयविशिष्टतया विहीना तुच्छा वा अवस्तुभूता स्वालक्षण्यवर्जिता भवेत् इति एतस्याः तुच्छायाः बीजव्यक्तेः दीर्घस्थितिकालकल्पना न भवितुमर्हति । तर्कस्थले एवं स्वीकारे एकस्यामेव बीजव्यक्तौ एतदङ्कुरस्वरूपकार्यस्य कुर्व्वद्रूपत्वमेवं तदभावस्वरूपविरुद्धधर्मद्वयस्य समावेशः स्वीकर्तव्यः किन्तु विरुद्धधर्मद्वयन्त्वेकत्र नैव स्थातुमर्हति । गोत्वं, गोत्वस्याभावः एकस्यां गोव्यक्तौ न स्थातुमर्हति, भावोऽभावश्च परस्परविरुद्धधर्मः विरुद्धधर्मश्चैको न भवितुमर्हति, इति बीजव्यक्तिः दीर्घकालस्थायिनी नैव स्यात् । बीजव्यक्तिः क्षणस्थायिन्येवार्थात् क्षणिकैवेति स्वीकर्तव्या स्वोत्पत्तिपरक्षणे स्वालक्षण्यं स्वीयविशिष्टतां अङ्कुरस्वरूपकार्यस्य कुर्व्वद्रूपतां परित्यज्य तुच्छैव अवस्तुभूतैव । तस्मात् वस्तुमात्रमेव क्षणिकमर्थात् क्षणमात्रस्थायि इति स्वीकर्तव्यम्, वस्तुनः स्थितिः विद्यमानता वा उत्पत्तिक्षण एव परिसमाप्ता ।

विशेषविचारणायां तु कुर्व्वद्रूपत्वं, क्रियाकारित्वं, सत्ता इत्यादयः शब्दाः फलतः एकार्थपर्यवसायिनः । वस्तुमात्रमेव कुर्व्वद्रूपमर्थात् कार्यकरणे प्रस्तुतम् । अव्यवहितपरक्षणे कार्यं न करिष्यति एवम्भूतं किमपि वस्तु एव नास्ति, अव्यवहितपरक्षणे कार्यकरणमेव वस्तुनः स्वभावः । कार्योन्मुखमथ वा अव्यवहितपरक्षणे कार्यं करिष्यति एतादृशं वस्तु एव कुर्व्वद्रूपम् । यद्धि कुर्व्वद्रूपं तदवश्यमेव कार्याव्यवहितपूर्वक्षणेऽवस्थितमित्येवावगम्यते । कार्यकरणार्थं यदि प्रस्तुतं न स्यात्तदा वस्तुनः जन्म न भवति । अतः एतादृशस्य वस्तुनः नाम कुर्व्वद्रूपमिति । एवमेव क्रियाकारिशब्दस्य अर्थः कार्यकरणस्वभावः इति । तथा च क्रियाकारित्वशब्दस्य अर्थः कार्यजनकत्वम्, कार्यकरण-

स्वभावो वा कार्याव्यवहितपूर्वक्षणे अवश्यमेवावस्थितत्वम् । वस्तुमात्रस्यैव कार्यकरण-स्वभावः, किमपि वस्तु अकारणं नास्ति, यद्धि क्रियाकारि कारणम्वा नास्ति अर्थात् कार्याव्यवहितपूर्वक्षणेऽवस्थितं न तत्तुच्छमेव, उभयथापि दृश्यते वस्तुमात्रमवश्यमेव कार्या-व्यवहितपूर्वक्षणेऽवस्थितं भवति अतः वस्तुमात्रं क्रियाकारि, कुर्व्वद्रूपम्वा । तथा च कुर्व्वद्रूपत्वमेवं क्रियाकारित्वम्वा एकमेवेत्यवश्यमेव स्वीकार्यम् । एतत् कुर्व्वद्रूपत्वमथ वा क्रियाकारित्वं वस्तुनः सत्ता विद्यमानता वा । यतः—सत्ता इत्यनेन सत् ता इत्यर्थोऽवगम्यते, अर्थात् सतो भावः=अस्तित्वं विद्यमानता वा । यतः—कारणत्वमित्यनेनैव कार्याव्यवहितपूर्वक्षणेऽवस्थितत्वमित्येव वस्तुनः स्वभावः, अत एव कालान्तरे वस्तुनोऽवस्थितिः अर्थात् विद्यमानता नास्ति । अस्मिन् विषये पूर्वमेव विस्तृतं विश्लेषणं प्रस्तुतमस्माभिः । फलतः कुर्व्वद्रूपत्वं क्रियाकारित्वमेव वा अर्थात् कार्य्यस्याव्यवहितपूर्वक्षणेऽवस्थितिर्वा क्रियाकारिकाले विद्यमानत्वमेव सतो भावेऽर्थात् सत्ता । तथा च कुर्व्वद्रूपत्वं क्रियकारित्वं सत्ता इत्यादयः शब्दा एकार्थस्यैव बोधकाः, इत्यवश्यमेव स्वीकार्यम् । क्रियाकारि करणीभूतवस्तुमात्रमेव वा क्रियाकारिकाल एव अर्थात् कार्याव्यवहितपूर्वक्षण एव सत् । वस्तुमात्रस्यैव क्रियाकारित्वं कार्योन्मुखता-स्वभावः एवं कार्यवस्त्वपि परवर्तिकार्यस्य कारणमिति कार्यवस्त्वपि क्रियाकारिकाले एव सत् विद्यमानम्वा कालान्तरे तन्न विद्यते, तथा च सत्ता वस्तुमात्रस्य पृथक् पृथक् कुर्व्वद्रूपता क्रियाकारित्वम्वा स्वभावः एव । इयं सत्ता नैयायिकसम्मता नित्या अनेकसम-वेता जातिस्वरूपा न । वर्तमानविवेचनया एतन्निश्चीयते यत् कुर्व्वद्रूपत्वं, क्रियाकारित्वं, सत्ता च एकमेव वस्तु एवमेव एतस्य दीर्घकालपर्यन्तं वस्तुनि अवस्थितिः न स्वीक्रियते । एतत्कार्याव्यवहितपूर्वक्षण एव परिसमाप्यते । तथा च वस्तुमात्रमेव स्व-स्वक्रियाकरण-कालेऽर्थात् स्वकीयकार्यस्याव्यवहितपूर्वक्षणे सत्, कालान्तरे वस्तुनः सत्ता नास्ति क्षणपर्यन्तमेव वस्तुनः सत्ता, वस्तुमात्रमेव क्षणिकम् अर्थात् यत्सत् तत्क्षणिकम् ।

वस्तुनः क्षणिकत्वपक्षे इयञ्चापरा युक्तिः—किमपि एकं निर्दिष्टं कार्यं केनाप्येकेन निर्दिष्टेन कारणेन भवति, एकस्य कार्यस्य कृते बहूनां कारणानां समावेशः निरर्थकः । किमपि वस्तु परमुखापेक्षि न, सर्वमेव स्वाधीनभावे यस्य यस्य कार्यं तत्करोति विश्वस्यायमेव स्वभावः । तथा च यद्वस्तु यदा यस्य कार्यस्य करणे समर्थं तद्वस्तु तस्मिन् समयेऽ-वश्यमेव तत्कार्यं करोति एवं यत् वस्तु यस्मिन् समये यस्य कार्यस्य करणेऽसमर्थम्, तद्वस्तु तस्मिन् समये तत्कार्यं कथमपि कर्त्तुं न शक्ष्यन्ति । तथा च यदि वस्तुसकलं दीर्घकालस्थायि इति स्वीकारे ( इदानीन्तनवस्तुनः विद्यमानताऽतीतानागतकालेऽपि

स्वीकारे, कुसूलस्थक्षेत्रस्थबीजयोः एकत्वेऽभिन्नत्वे ) एकस्मिन्नेव वस्तुनि कार्योत्पादन-सामर्थ्यं कार्योपयोगिशक्तिविशेषः एवं तदभावः ( एकस्मिन्नेव बीजेऽङ्कुरजननसामर्थ्यं तदभावश्च ) इति स्वभावविरुद्धधर्मद्वयस्य स्वीकार आवश्यकः, किन्तु एकमेव वस्तु परस्परविरुद्धधर्मद्वयसंयुतं न भवति। तथा च दीर्घकालस्थायिरूपत्वेन तु आपाततः प्रतीयमानं सकलमपिवस्तु प्रतिक्षणमेव स्वतन्त्रं तिष्ठतीत्यवश्यमेव स्वीकार्यम्।

उपर्य्यधोभावेन विन्यस्तस्य उत्पलपत्रशतस्य तीक्ष्णाग्रसूच्या विद्धकरणे यावतः सूक्ष्मकालस्यावश्यकता भवति तत्र एकशतभागस्यैको यः भागः, तस्य यावता समयेन भेदनं भवति, अर्थादेकस्योपलपत्रस्य भेदने यावतः समयस्यावश्यकता स एव सूक्ष्मतम-समयः क्षणनाम्नाभिधीयते। तथा चापातदृष्ट्या एतादृशस्य सर्वस्य वस्तुनः (क्षेत्रस्थस्यैवमेव कुसूलस्थस्य बीजादेः ) दीर्घकालस्थायित्वमवगम्यते ( अर्थात् कुसुलस्थबीजमेव यदा क्षेत्रस्थं भवति तदाङ्कुरउत्पद्यते ) इत्येतादृशं ज्ञानं भ्रमज्ञानमेव। वस्तुनः उत्पत्तिक्रमस्या-तीव सूक्ष्मत्वात् द्रुतत्वाच्च आपातदृष्ट्या तज्ज्ञानं नैव जायते। वस्तुतः एकमभिन्नमिति प्रतीयमानं वस्तु अपि दीर्घकालपर्यन्तं एकं तदेव वस्तु नास्ति। तथा सत्येकस्मिन्नेव वस्तुनि कार्यजननोपयोगिसामर्थ्यम् एवं तदसामर्थ्यं चेति विरुद्धधर्मद्वयं स्वीकरणीयं स्यात्। अत्र वस्तुनः स्थिरवादी वक्तुं शक्नोतियत् सहकारिसमवधाने एव कारणे कार्यजनन-सामर्थ्यं शक्तिविशेषो वा उत्पद्यते एवं सहकारिसमवधानाभावे च कार्योत्पादानशक्तेरभाव एव वर्तते। वस्तुनः दीर्घकालस्थायित्वेऽपि सहकारिसमवधानासमवधानाभ्यामेव समय-भेदेऽपि एकमेव वस्तु कार्यपयोगिसामर्थ्यमादधाति। परमेतन्न विचारसहम्, यतः सहकारिलाभे कारणे कार्योपयोगिजननशक्तिरुत्पद्यते इति स्वीकारे इयं शक्तिः कारणाद्भिन्ना अभिन्ना वा एवमेवेयं दीर्घकालस्थायिनी क्षणिकी वेति निरूपणं कर्तव्यम्। यदि भिन्ना तदा शक्तौ कारणत्वस्वीकारादेव कार्यं प्रचलेत्, शक्त्याश्रयस्य कारणत्वस्वीकारो निष्फलः, करणीभूतवस्तुनः अकिञ्चित्करत्वं तुच्छत्वमेव स्यात्, एवं च अस्याः शक्तेः दीर्घकाल-स्थायित्वस्वीकारे पुनः पुनः कार्योत्पत्तिः प्रसज्येत इति अस्याः शक्तेः क्षणिकत्वं स्वीकरणीयम्। तथा सति क्षणिकशक्तिविशिष्टं क्षणिकं वस्त्वेव कारणमिति सिध्यति। तथा च प्रतिक्षणमेव वस्तु विभिन्नं जायते। इयं विभिन्नता चाकस्मादेव न भवत्यपि तु, क्षणे एव संघटिता भवति। अयमाशयः—मृत्तिकासलिलसंयोगादि-सहकारिकारणसमवधाने एव बीजेऽङ्कुरजननोपयोगिसामर्थ्यं शक्तिर्वोत्पद्यते, एवम् एतत्सकलसमवधानाभावे बीजेऽङ्कुरजननोपयोगिसामर्थ्यस्याभावो वर्तते, तथा च समयभेदेऽपि विरोधो नास्ति, अयं वस्तूनां स्थैर्यवादिनां सिद्धान्तः। किन्त्वेतन्न

समीचीनम्, यतः—उक्तसहकारिकारणलाभे बीजेऽङ्कुरजननोपयोगिसामर्थ्यं जायत इति स्वीकारापेक्षया क्षणिकत्वस्वीकार एव श्रेयान्, एतस्याः शक्तेः दीर्घकालस्थायित्व-स्वीकारे दीर्घस्थितिकालपर्यन्तं प्रतिक्षणमङ्कुरोत्पत्तिप्रसङ्गः। तथा च बीजस्य दीर्घकालस्थायित्वस्वीकारे तत्र क्षणिकशक्तेः स्वीकारो न सम्भवति, क्षणिकमक्षणिकञ्च कदाप्येकं भवितुं नार्हति एवं चेयं शक्तिः बीजस्वरूपैव फलतः भवेदिति, बीजस्य क्षणिकत्वं सिध्यति। सहकारिलाभात्पूर्वं बीजं शक्तियुतं नास्ति तत्काले शक्तिहीनमेव बीजम्, सहकारिलाभे च बीजं शक्तियुक्तं भवति अर्थात्तत्समये बीजं शक्तिविशिष्टं बीजं भवति इत्यवश्यमेव स्वीकार्यम्। अस्यां स्थितौ विशिष्टतैव व्यक्तिभेदिका इति सहकारिलाभे शक्तिहीनपूर्वबीजस्य निवृत्तिः शक्तियुक्तस्वतन्त्रबीजस्योद्भवः जायते इत्येव स्वीकरणीयम्। विशिष्टमविशिष्टं च एकमिति अनुभवविरुद्धम्। तथा च क्षेत्रस्थबीजमेवाङ्कुरोत्पादकं, कुसूलस्थबीजञ्च स्वतन्त्रमेव। एवं स्थितौ वस्तुमात्रस्यैव क्षणिकत्वं स्वीकर्तव्यम्, वस्तुमात्रमेव क्षणिकमिति। तथा च प्रतिक्षणमेव वस्तु विभिन्नं भवति इत्यवश्यमेव स्वीकार्यम्। इयं च विभिन्नता हठाद्भवितुं नार्हति अपि तु क्रमादेव भवति। तथा सति अतिसूक्ष्मक्षणे यद्वस्तु यत्कार्यकरणे समर्थम्, तद्वस्तु तत्सूक्ष्मसमयात्पूर्व-मनन्तरम्वाऽकिञ्चित्करम्, असदेव। इत्यायातम् वस्तुमात्रमेव स्वोत्पत्तिक्षणात्पूर्वमनन्तरम्वा असत्। वस्तुनः स्थितिरुत्पत्तिश्च क्षणेनैव परिसमाप्यते। उत्पत्तिः नाश एव च विश्वस्य क्रम इति वस्तुमात्रं क्षणिकम्। अत्रेदं तत्त्वम् स्थिरवादिनोऽनन्तरमपि वस्तुनः स्थितिमङ्गीकुर्वन्ति। वस्तुना सह कालस्य प्रथमसम्बन्ध एव उत्पत्तिः, काले वस्तुनः सम्बन्ध एव स्थितिः, अस्तित्वं विद्यमानता वा। तथा च प्रथमक्षणसम्बन्धः प्रथम-विद्यमानतैव वस्तुनः उत्पत्तिः इति स्थिरवादिभिर्भवद्भिः स्वीकर्तव्यम्। क्षणभेदे क्षणसम्बन्धो भिद्यते इति वस्तुनः विद्यमानतापि क्षणभेदाद्भिद्यत एव, अस्मिन् क्षणे यो हि वस्तुना सह क्षणस्य संबन्धः स परक्षणे नास्ति तथा च प्रथमक्षणस्य उत्पत्तिक्षणस्य यं संबन्धं गृहीत्वा अर्थात् प्राथमिकविद्यमानतां संगृह्य वस्तुनः उत्पन्नत्वव्यवहारो भवति द्वितीयक्षणेऽयं संबन्धः विद्यमानता वा न वर्तते इति स्थिरवादिनां मतेऽपि द्वितीयक्षणे वस्तु उत्पद्यते इति व्यवहारो न भवति। उत्पत्तिक्षणे यद्विद्यमानताविशिष्टं वस्तु सत्, विद्यमानं वा द्वितीयादिक्षणे तद्विद्यमानताविशिष्टं नेति द्वितीयादिक्षणे एतादृशं सत्, विद्यमानम्वा नेति स्थिरपक्षेऽप्यङ्गीकार्यम्। तथा च उत्पत्तिक्षणे वस्तु यादृशं स्वलक्षणं स्वीयविशिष्टतया स्वीयविद्यमानतया विशिष्टम्वा द्वितीयक्षणे तादृशस्वलक्षणं स्वीय-विशिष्टतया, स्वीयविद्यमानतया विशिष्टं नास्ति। द्वितीयक्षणे वस्तु एकं स्वतन्त्रं स्वलक्षणं

स्वीयविशिष्टतया विशिष्टम्। पृथक् पृथक् स्वालक्षण्ये विशिष्टतैव व्यक्तिभेदकम्। तथा च उत्पत्तिक्षणवर्ति वस्तु द्वितीयक्षणवर्ति च वस्तु परस्परं विभिन्नम् उत्पत्तिक्षणस्य वस्तु परक्षणे नास्ति इति स्वीकर्तव्यमेव। यदि स्वीक्रियते वस्तुनः धर्मस्य विशिष्टतायाः क्षणभेदेन भेदोऽपि भवतु नाम धर्मिणः स्थायित्वे किं बाधकम्। अर्थात् प्रथमक्षणवर्ति-विशिष्टता द्वितीयक्षणे न वर्तते इति स्वीकारेऽपि धर्मिणः वस्तुनः दीर्घकालस्थायित्वे किं बाधकम्। इदमत्रोत्तरं यत् विशिष्टतावर्जितं केवलमाकाशकुसुममेवार्थात् धर्म्मवर्जितं धर्मिवस्तु किम्वा विशेषणरहितं विशेष्यं किमपि वस्तु नास्ति, एतादृशं वस्तु कल्पनाया अपि विषयो न। यतः—धर्मधर्मिभ्यां विना विशेष्यविशेषणाभ्याम्विना भावः अर्थात् एकस्याभावेऽपरस्यास्तित्वमसम्भवमेव, अनयोः परस्परमविनाभावसंबन्धो वर्तते इति केवलं तुच्छमाकाशकुसुममेव। यद्धि वस्तु तद्विशिष्टमेव विशिष्टतैव वस्तुनः लक्षणम्। इयं च विशिष्टता क्षणभेदेन भिन्नैव इति वस्तुनः स्थितिः विद्यमानता वा उत्पत्तिक्षण एव परिसमाप्यते इत्यवश्यमेव स्वीकार्य्यम्। उत्पत्तिः, स्थितिः लयः इति विश्वस्य क्रमो नास्ति अपि तु उत्पत्तिः, एवं लय इत्येव विश्वस्य क्रमः। वस्तुमात्रस्य उत्पत्तिपरक्षणे लयो भवति, वस्तुमात्रं क्षणिकम्।

पूर्वमेव सूचितं यत् क्षणार्थमस्तित्वमेव ( स्वस्वक्रियाकारिक्षणे विद्यमानतैव ) सत्ता, सत्ता सदातनभूताऽर्थात् नैयायिकादिसम्मता नित्या लयोत्पत्तिहीना अनेकवस्तु-समवेता जातिर्न। यतः—एतादृशी सत्ता प्रमाणसिद्धा नास्ति। घटः सन्, पटः सन् इत्यादिबुद्धिः सदंशे समानविषयिण्येवेति सर्वेषु सदंशेषु एकं सामान्यं स्वीकरणीयम्। एकसंबन्धेन किमपि वस्तु अनेकवस्तुनि यदा अवस्थितं भवति तदा तदेवानुगतमुच्यते। जातिरेकैव समवायसंबन्धेनानेकपदार्थे वर्तते इत्यसौ अनुगतधर्मः, यदि सत्तारूपाया एकस्या अनुगतजातेः स्वीकारो न स्यात्तदा सदिति एकप्रकारकबुद्धेर्विषयो न स्यात् इति द्रव्ये गुणे कर्मणि च एकस्य धर्मस्य स्वीकार आवश्यकः यतः, तेषु सर्वेषु पदार्थेषु सदिति एकप्रकारा बुद्धिर्जायते। तथा च द्रव्यगुणकर्मसु य एकोऽनुगतधर्मः स एव सत्ता जातिः। परमेतन्न समीचीनम्, यतः—घटादिविभिन्नवस्तुषु सदित्यंशे समानत्व-स्वीकारे तेष्वसमानांशस्य सद्बहिर्भूतत्वं वक्तव्यम् तथा सति सतो बहिर्भूतम् एकं वस्तुत्वं स्वीयविशिष्टता वा सिध्यति, किन्तु सद्बहिर्भूतत्वं किमपि नास्ति, घटादिसकल-वस्तुनः स्वीयविशिष्टता घटत्वं पटत्वमित्यादिविभिन्नरूपेणासदेव स्यात्, अथ च घटत्वादिकं विभिन्नरूपेण प्रत्यक्षसिद्धम् इति घटादिकं विभिन्न वस्तु सकलं पूर्णं सदेव

वक्तव्यम् , तत्र सन्नाम्ना अन्यत्किमपि वस्तु नास्ति, इयं पूर्णसत्ता अस्तित्वं, विद्यमानतां विना अन्यत्किमपि वस्तु नास्ति । यतः, यस्मिन् समये यद्वस्तु वर्तते तस्मिन् समये तत्पूर्णरूपेणैव वर्तते कस्यापि रूपस्य अंशतः वर्तमानता नास्ति इति वस्तुनः स्वीयपूर्णास्तित्वमेव सतो भावः धर्मो वा ।

इयं सत्ता वस्तुनः क्रियाकारिकाले एव परिसमाप्यते इत्यवश्यमेव स्वीकार्यम् इति स्वस्वक्रियाकारिकाले स्व-स्वक्षणिकास्तित्वं क्षणकालपर्यन्तविद्यमानतैव वस्तुनः सत्ता । वस्तुमात्रमेव क्षणिकम् ।

यदि वस्तमात्रं क्षणस्थायि तदा स्थूलरूपेण प्रत्यक्षस्यावयिनः सम्भावनैव कथं स्यात् ? अवयवसकलस्य क्षणिकत्वम्, तथा च अस्मिन् क्षणे यस्य स्थितिरस्ति तत्परक्षणे एव तस्य सत्ता नास्ति । सूक्ष्मावयरूपेण स्थूलावयविनः स्वीकारे अवयवानां परस्परं मेलनं संयोगो वा अवश्यमेव स्वीकार्य्यः । अवयवानामुत्पत्तिक्षणे तेषां मेलनं संयोगो वा न संभवति, यतः—अवयवसकलसंयोगं प्रति अवयवसकलं कारणम् । कार्याव्यवहितपूर्वक्षणे कारणस्थितिरावश्यिकीति यस्मिन् क्षणेऽवयवसकलमुत्पद्यते तस्मिन् क्षणे तेषां संयोगरूपं मेलनरूपम्वा कार्यं भवितुं नार्हति एवमेव तत्परक्षणेऽपि अवयवसकलं नास्तीति आश्रयहीनस्य संयोगस्योत्पत्तिः नैव सम्भवति । संयोगो हि गुणपदार्थः गुणो हि गुणिनम्विना स्थातुं नार्हति इति सूक्ष्मावयवात् स्थूलावयविनः उत्पत्तिः न सम्भवति तस्मात् अवयवस्य दीर्घकाल-( अन्ततो द्विक्षण- ) स्थायित्वं वक्तव्यमेवेति वस्तुमात्रस्य क्षणिकत्वमसङ्गतमेव । इदमपि न समीचीनम्, यतः—स्थूलावयविरूपे आपाततः प्रतीयमानघटादिवस्तुसकलं विशेषविशेषपरमाणोः समष्टिमात्रम् । प्रतिक्षणमेव विशेषपरमाणुपुञ्जात्समष्टेर्वा विशेषपरमाणुपुञ्जान्तररूपे परिवर्त्तनं जायते । परमाणुसमष्टिः स्वतन्त्रं वस्तु नास्ति । पूर्व-पूर्व-परमाणुपुञ्जमेवोत्तरपरमाणुपुञ्जस्योपादानमिति स्थूलावयविरूपे आपाततः प्रतीयमानं वस्तुसकलमपि अनेकपरमाणुसमष्टिमात्रम्, तत्र स्थूलताज्ञानं भ्रमः, अवयवी अतिरिक्तः पदार्थः नास्ति, किञ्च—नित्य-चेतनात्मस्वीकारोऽपि निरर्थकः, परिदृश्यमानशरीरमेवात्मा, अयमात्मापि परमाणुपुञ्जातिरिक्तपदार्थो नास्ति । प्रतिक्षणमेव विशेषपरमाणुपुञ्जात् विशेषपरमाणुपुञ्जरूपेण परिवर्त्तनं जायते, बाल्यं, यौवनं वार्द्धक्यं च हठात् न भवति, शरीरे प्रतिक्षणपरिवर्तनमेव तेषां कारणम्। इदानीमियमाशङ्का भवेत् यदि प्रतिक्षणपरिवर्तनशीलं शरीरमेव चेतनः, आत्मा, तदा यौवने किम्वा वार्द्धक्ये बाल्यदृष्टवस्तुनः स्मरणं कथमिव स्यात् ? बाल्यशरीरमेव

यौवने वार्द्धक्ये वा नास्ति, तद्धि प्रतिक्षणमेव परिवर्तनशीलम्। एकेन कृतस्यानुभवस्या धारेणापरस्य स्मरणं न भवति, चैत्रेणावलोकितस्य मैत्रः स्मरणं न करोति तथा च बाल्ये दृष्टस्य वस्तुनः यौवने वार्द्धक्ये च स्मरणं न स्यात्। एतदपि न समीचीनम्—यतः, शरीरसकलस्य प्रतिक्षणं परिवर्तनशालित्वेऽपि विशेषपरमाणुपुञ्जात्मकं यत् पूर्वशरीरं तत् परवर्तिशरीरस्योपादानम् ( जनकम् ) इति कारणीभूतपूर्वशरीरकृतानुभवस्य कार्यीभूतपरवर्तिशरीरे क्रमेण वासनायाः संस्कारस्य वा सञ्चारो जायते एवमेवोत्तरोत्तरशरीरे क्रमेण इयं वासना सञ्चरति। अर्थात् प्रथमसंस्कारेण द्वितीयशरीरे द्वितीयसंस्कारे तृतीयशरीरे एवञ्च अन्यान्यशरीरे पूर्वपूर्वसंस्कारानुरूपं संस्कारो भवति। यदा यस्मिन् शरीरे यः संस्कार उद्बुद्धो भवति तदा तच्छरीरे तत्स्मरणं जायते। स्थिरात्मवादिभिरपि यौवने वार्द्धक्ये वा बाल्यदृष्टस्य वस्तुनः स्मरणनिर्वाहार्थं मध्यवर्तिव्यापाररूपेणानुभूतवस्तुविषयकसंस्कारोऽवश्यमेव स्वीकर्तव्यः। पूर्वानुभूतवस्तुविषयकं स्मरणं बहुकालानन्तरमपि अर्थात् अस्माभिर्बाल्यकाले येषां वस्तूनां स्मरणं कृतम्, तेषु बहूनां वस्तूनां स्मरणमिदानीमपि जायते, जीवस्य ज्ञानमात्रमेव द्वित्रिक्षणमात्रस्थायि, अचिरमेव नश्यति। बाल्यानुभवः यौवने वार्द्धक्ये वा स्मरणाव्यवहितपूर्ववर्ती नैव भवितुमर्हति। किं च एतदनुभवाधारेणैव यौवने वार्द्धक्ये वा बाल्यदृष्टस्य वस्तुनः स्मरणं भवति पूर्वानुभवः आत्मनि तादृशमेकं विशेषगुणमुत्पादयति येन गुणेन चिरातीतेऽप्यनुभवे बहुकालानन्तरं स्मरणमुत्पादयति अयमेव संस्कारः। तथा च अनुभवस्य नष्टेऽपि अनुभवजन्यः संस्कारः कालान्तरे उद्बुद्धो भवति तदैवानुभूतवस्तुविषयकं स्मरणं जायते इति स्थिरवादिभिरपि स्वीकरणीयम्, तथा च क्षणभङ्गवादिनः सौगताः वक्तुं शक्नुवन्तियत् शरीरस्य प्रतिक्षणपरिवर्त्तनशालित्वेऽपि पूर्वशरीरकृतानुभवस्योत्तरवर्तिशरीरे संस्कारमुत्पाद्य एवं संस्कारपरम्पराक्रमेऽन्यान्यशरीरेऽनुरूपसंस्कारमुत्पाद्य क्रमेण एवमेव चलति। यदा यस्मिन् शरीरे संस्कारः उद्बुद्धो भवति तदा तस्मिन् शरीरे एव पूर्वानुभूतवस्तुनः स्मरणम्भवति। तस्मात् शरीरातिरिक्तस्थिरात्मस्वीकारस्यापि प्रयोजनं नास्ति। एतत्सकलं क्षणभङ्गवादिबौद्धस्य मतम्।

न वैजात्यं विना तत्स्यान्न तस्मिन्ननुमा भवेत्।
विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना ॥१६॥

वैजात्यम्—कुर्वद्रूपत्वं विना क्षणिकत्वं न सिद्ध्यति। यदि वस्तुमात्रमेव विजातीयं कुर्वद्रूपं भवेत् तदानुमितिर्न भवेत्। अनुमितेरभावे क्षणिकत्वस्य निश्चयो

न भवेत् । क्षणिकमेतादृशं सविकल्पकं ज्ञानम् विना कुर्वद्रूपत्वस्य निर्विकल्पकं प्रत्यक्षं न सिद्धयति ॥

क्षणभङ्गवादिनाम्मते वस्तुमात्रमेव कुर्व्वंद्रूपम्, कुर्वद्रूपतैव वस्तुनः लक्षणं विशिष्टता वा, एतदर्थमेव वस्तुमात्रं क्षणिकम् । तथा च वस्तुमात्रे एव कुर्व्वद्रूपतास्वरूपवैजात्यस्य विशिष्टतायाः स्वीकारम्विना वस्तुमात्रस्य क्षणिकत्वं वक्तुं न शक्यते । किन्तु प्रमाणसिद्धं नास्तीति वस्तुनि एतादृशं वैजात्यं भवितुं नार्हति । तथा च वस्तुमात्रस्यैव क्षणिकत्वं न सेत्स्यति । कस्यापि वस्तुनः दर्शनमात्रेणैव नावगम्यते यत् वस्तु कुर्व्वद्रूपमर्थात् परक्षणे कार्यं कर्तुं प्रस्तुतम् । विशिष्टरूपेण वस्तुनः ज्ञानं वस्तुनः विशिष्टता लक्षणमर्थात् विशेषणज्ञानसापेक्षम्; यस्य वस्तुनः यद्धि लक्षणं विशिष्टता वा अर्थात् विशेषणम्, वस्तुनः एतादृशज्ञानात्पूर्वं एतस्य वस्तुनः लक्षणं विशिष्टज्ञानम्वा आवश्यकम्, अन्यथा वस्तुनः विशिष्टज्ञानं भवितु नार्हति । विशेषणज्ञानम्विना विशिष्टज्ञानं न स्यात् । घटत्वस्य ज्ञानं पूर्वं न स्यात्तदा घटत्वरूपेण घटस्य ज्ञानमर्थात् अयं घट इत्याकारकं ज्ञानं न भवति । अयं घटः इति ज्ञानार्थं पूर्वं घटस्य लक्षणस्य विशिष्टतायाः अर्थात् विशेषणघटत्वस्य ज्ञानमावश्यकम् । वस्तुनः कुर्व्वद्रूपतास्वरूपविशिष्टता ( अव्यवहितपरक्षणे कार्यकरणे प्रस्तुतत्वम् ) प्रत्यक्षप्रमाणेन नावगम्यते, अर्थात वस्तुनः दर्शनमात्रेण नावगम्यते यत् वस्तु परक्षणे एव कार्यकरणे प्रस्तुतम् । तथा च पूर्वपक्षोक्तयुक्त्या वस्तुसकलं क्षणकालार्थं विद्यमानम् क्षणिकमिति वक्तुं न शक्यते । कुर्व्वद्रूपता वस्तुनः लक्षणमिति सिद्धान्तं विना क्रियाकारित्वम् ( कार्याव्यवहितपूर्वक्षणेऽवस्थितिः ) वस्तुनः स्वभावः सत्ता वा इत्यपि वक्तुं न शक्यते; यतः—वस्तुमात्रस्य कुर्व्वद्रूपत्वे एव अव्यवहितपरक्षणे कार्य्यमवश्यमेव कुर्यात् इत्येव वक्तव्यम् । किन्तु वस्तुमात्रस्य कुर्व्वद्रूपता प्रमाणसिद्धा नास्तीति क्रियाकारित्वम् अर्थात् अव्यवहितपरक्षणे कार्यकारित्वं वस्तुमात्रस्य स्वभाव इति वक्तुं न शक्यते । किञ्च क्रियाकारित्वमेव यदि वस्तुनः सत्ता भवेत् अर्थात् सतः लक्षणं भवेत् तदा मिथ्या सर्पदंशनादावपि क्रियाकारित्वसद्भावात् तेषामपि सत्पदार्थमध्ये गणना भवेत् । तस्मात् कुर्व्वद्रूपत्वं, क्रियाकारित्वं, सत्ता, इमे शब्दाः एकार्थस्य बोधकाः न सन्ति । विशेषतः अस्तित्वं विद्यमानतैव वा सत्ताशब्दस्यार्थो नास्ति । द्रव्यगुणकर्म्मगतजातिविशेषोऽपि सत्ताशब्दस्य एकोऽर्थो भवति । एतादृशजातिविशेषं गृहीत्वा वस्तुसकलस्य सदिति व्यवहारो भवति, सैव वस्तुनः सत्ता । अत्रेयं शङ्का जागर्ति यत् जातिस्तावत्का, एवं जातिस्वीकारस्य कावश्यकता ? परस्परविभिन्नवस्तुसकलमेकरूपेण ज्ञानस्य विषयो भवति,

संसारे यावन्तः घटाः सन्ति, आसन्, भविष्यन्ति वा ते परस्परं विभिन्नाः सन्तोऽपि तेषु प्रत्येकस्मिन् स्वतन्त्रमेकं व्यक्तित्वं विशिष्टता वर्ततां नाम परं सर्वे एव "घटः" इति एकप्रकारज्ञानविषयो भवति, अतः भिन्नेषु सकलेषु घटेषु कोऽपि एकः धर्मः प्रकारो वा वर्तते यद्वशात् ते समानस्य एकप्रकारस्य वा ज्ञानस्य विषयो भवति अर्थात्तत्र विशेषः एकं सामान्यं समानता वा वर्तते इत्यवश्यं मन्तव्यम्। सकलेषु घटेषु अयं विशेषः सामान्यम् एकधर्म एव घटत्वम्। इदं घटत्वं नित्यमेकमनेकसमवेतञ्चेति जातिरिति घटत्वस्य नित्यत्वं स्वीकर्तव्यमेव, यतः अतीतघटेऽपि घटत्वमासीत्, वर्तमानघटेऽपि अस्ति, एवमुत्पत्स्यमानघटेऽपि स्थास्यति इति घटत्वं सदातनम्। यद्धि सदातनमर्थात् अनादि-कालादनन्तकालस्थायि अर्थात् चिरस्थायि तस्य उत्पत्तिरेवं ध्वंसो नास्तीत्यवश्यमेव स्वीकार्यम्। इदमिदानीमुत्पद्यते इति कथने तद्वस्तु पूर्वं नासीत् इत्यवगम्यते, तथा चैतादृशं वस्तु अनादिकालस्थायि न—एवं यस्य ध्वंसो भवति तद्वस्तु अनन्तकालस्थायि न भवति, इति अनादिकालतः अनन्तकालस्थायिपदार्थस्य उत्पत्तिः एवं ध्वंसः सर्वथाऽ-सम्भवः। ध्वंसोत्पत्तिहीनमेव वस्तु नित्यं भवति। घटत्वं नित्यमेव। घटत्वं सकलेषु घटेषु वर्तते इति अनेकसमवेतम्, तथा च नित्यत्वे सत्यनेकसमवेतत्वात् घटत्वं जातिः। सत्तापि एका जातिः, यतः अतीतद्रव्यगुणकर्मपदार्थः सकलमपि सदासीत्, वर्तमानद्रव्यगुणकर्मपदार्थसकलं सत् एवमुत्पत्स्यमानद्रव्यगुणकर्मपदार्थसकलमपि सदेव स्यादिति। अतीतवर्तमानोत्पत्स्यमानद्रव्यगुणकर्मपदार्थसकलं परस्परं विभिन्नमेवं तेषु प्रतिपदार्थं स्वतन्त्रव्यक्तित्वं विशिष्टता वा वर्तते परमपि सदिति एकप्रकारज्ञानविषयो भवति तस्मात् द्रव्यगुणकर्मसु एकः साधारणधर्मः प्रकारो वा वर्तत इति स्वीकर्तव्यम्, अन्यथा तत्सकलं "सत्" इति एकप्रकारज्ञानविषयो न भवेत्, द्रव्यगुणकर्मसु अयमेको धर्मः प्रकार एव वा सत्ता। इयं सत्ता अनाद्यनन्तकालस्थायिनीति उत्पत्तिः विनाशो वास्याः न भवति इति नित्या एवं द्रव्यगुणकर्मसु समवेतेति जातिरेव। पूर्वपक्षोक्ता-स्तित्वं विद्यमानतैव वा नात्र सत्ता। तथा सति अभावस्यापि अस्तित्वं विद्यमानता वा वर्तते अर्थात् भूतले घटो नास्ति पटो नास्ति इत्यादिरूपेणाभावो ज्ञानस्य विषयो भवति इति सोऽपि सत्पदार्थस्य भावपदार्थस्य वा मध्ये गणनायोग्यो भवेत्। सत्ता भावत्व-ञ्चैकमेव, अभावस्य भावत्वं नास्ति अत एवासावभावः, भावत्वस्य सत्ताया वा अभाव एवाभावस्याभावत्वम्, अथ सत्पदार्थे भावपदार्थे वा अनवस्थितधर्मविशेष एवा-भावस्याभावत्वम्। विशेषतः पूर्वपक्षे यां युक्तिं प्रदर्श्य सत्तायाः जातित्वखण्डनं कृतवान् सापि नैव समीचीना! पूर्वपक्षे उक्तम्—घटपटादिवस्तुसकलं सत् इत्यंशे

एकप्रकारज्ञानविषयो भवति इति सत्ता जातिः स्वीकरणीया। अर्थात् सत्ताजातिस्वीकारपक्षे इमां युक्तिम्प्रदर्श्य तत्र दोषः प्रदर्शितः यत् तथा सति असमानांशेऽर्थात् घटत्वपटत्वादिरूपेण विभिन्नघटपटादिक्रमे तद्रूपेणासत्पदार्थमध्ये गण्यः स्याद्यतः सद्बहिर्भूतं किमपि नास्ति। किन्तु अयं दोषः नैव समीचीनः। यतः—सत्ताजातिस्वीकारेऽपि इयं वस्तुनः कस्मिंश्चिदंशविशेषे तिष्ठति इत्येवं न स्वीक्रियते। इयं सत्ताजातिः द्रव्यगुणकर्मपदार्थत्रयमभिव्याप्यैव तिष्ठति अर्थात् घटपटादिद्रव्ये, रूपरसादिगुणे, उत्क्षेपणापक्षेपणादिकर्मणि सर्वत्रैव पूर्णरूपेण तिष्ठते तत्रांशविशेषे एव न सन्तिष्ठते। तथा च द्रव्यगुणकर्मसमुदाये वर्तमाना एका सामान्यजातिः, अर्थादेतत्त्रितयपदार्थस्य समानधर्मः एका जातिः वा। यथा द्रव्यत्वं समुदायद्रव्यस्य एकं विशेषसामान्यं जातिर्वा, अर्थात् सत्तापेक्षया अल्पस्थाने अवस्थिता जातिः। एवमेव घटत्वं द्रव्यत्वापेक्षया अल्पस्थानेऽवस्थिता समुदायघटस्य जातिः एकं विशेषसामान्यं वा। तथैव गुणत्वं कर्मत्वं, रूपत्वं, रसत्वमित्यादयः असंख्यजातिविशेषाः अवश्यमेव स्वीकार्याः। अतः घटपटादिवस्तु स्वीयघटत्वपटत्वादिविशेषजातिविशिष्टमपि सतो बहिर्भूतमन्यत्रापि सतो बहिर्भूतं हि एकान्ततुच्छमेवेति उभयवादिसिद्धम्। अत्रेयं जिज्ञासा भवितुमर्हति यदेकस्मिन्नेव समये एकमेव स्थानमवरुध्य सत्ता घटत्वादिकं च कथं स्थास्यति? एतदुत्तरे एतदेव वक्तव्यम्—यत् यस्य पदार्थस्य आकृतिः वर्तते एतादृशानेकपदार्थाः एकत्र एकमेव स्थानमवरुध्य न तिष्ठति गुडस्य मिष्टास्वादः लौहित्यञ्च एकदैव गुडस्य सर्वस्थानमभिव्याप्य तिष्टति इति प्रत्यक्षसिद्धम्, सत्ता, द्रव्यत्वं, घटत्वमित्यादिजातिः मूर्तिहीना, निराकारा इति एकस्मिन्नेव पदार्थे एकदैव तेषां सत्त्वे न किमपि बाधकम् इति घटः सन् इति कथने घटस्य सत्त्वकथनेन कस्मिन्नपि अंशविशेषे सत्ता इति ज्ञानस्य विषयो न भवति, घटत्वं सत्ता चोभयमेव घटे पूर्णरूपे एव ज्ञानस्य विषयो भवति। घटः सन् पटः सन् इत्यादिज्ञानं घटपटादेः सत्त्वमंशविशेषेऽवस्थितां सत्तां विषयीकृत्य समानप्रकारकं ज्ञानं न भवति अपि तु इयं बुद्धिः घटपटादौ पूर्णरूपेऽवस्थितं सत्तास्वरूपं समानधर्मं विषयं कृत्वैव समानप्रकारिका भवति। पूर्णास्तित्वं पूर्णविद्यमानतामात्रमेव वा सत्ता नास्ति। पूर्वपक्षे उक्तं यत् कार्याव्यवहितपूर्वक्षणे अवस्थितिः विद्यमानतैव वा क्रियाकारित्वम् अर्थात् कारणस्य लक्षणं कारणता वा अयमेव वस्तुनः स्वभावः इति वस्तुमात्रमेव क्षणिकम्, वस्तुनः स्थितिः उत्पत्तिक्षण एव परिसमाप्यते। उत्पत्तिर्लयश्च विश्वस्य क्रमः। एतत्सम्बन्धे एतद्वक्तव्यमस्ति यत् इदमेव यदि कारणस्य लक्षणम् तदा कथञ्चित् एवमुच्येत, किन्तु कार्य्यस्य अव्यवहितपूर्वक्षणे अवस्थितिः विद्यमानतैव वा कारणस्य

लक्षणं न भवेत्। तथा सति प्रत्येककार्याव्यवहितपूर्वक्षणे तात्कालिकविश्वब्रह्माण्डस्य विद्यमानत्वात् तात्कालिकविश्वब्रह्माण्डवर्तिनः सकलकार्यस्यैव कारणं वक्तव्यम्, इदञ्चानुभवविरुद्धम्। इदमत्र विचारणीयम्—अत्र एकः घटः उत्पद्यते एतत्कारणस्य लक्षणं किम्? पूर्वपक्षिणां मते वक्तव्यं एतत्घटस्याव्यवहितपूर्वक्षणे अवस्थितिः विद्यमानतैव वा कारणस्य लक्षणम् एवं एतादृशकाले विद्यमान-वस्त्वेव एतस्य कारणम्। अस्यां स्थितौ एतद्घटाव्यवहितपूर्वक्षणे तात्कालिकविश्वब्रह्माण्डस्यैव एतद्घटकारणलक्षणाक्रान्तत्वं कारणत्वं वा वक्तव्यम्। अर्थात् पटादिकार्यस्य कारणीभूतं तात्कालिक-विश्वब्रह्माण्डान्तर्गतं तन्तुवेमादिकमपि एतद् घटस्य कारणं स्यात्, इदञ्चानुभवविरुद्धम्। मृत्तिकया घटो भवति, तन्तुवेमादिना घटो न जायते, इत्येव सार्वजनीनानुभवः, सार्वजनीनानुभवविरुद्धश्च सिद्धान्तो न भवति। तथा च कार्यस्याव्यवहितपूर्वक्षणे कार्य्याधिकरणे नियतावस्थितिकत्वमेव कारणस्य लक्षणं कारणता वा। एवमतादृशकारणताविशिष्टं वस्त्वेव कारणम् इत्यवश्यमेव स्वीकार्य्यम्। तथा सत्येव घटस्वरूपकार्यस्य अव्यवहितपूर्वक्षणे घटस्वरूपकार्य्यस्याधिकरणचक्रे तात्कालिकविश्वब्रह्माण्डनियतावस्थितिः नास्तीति तात्कालिकविश्वब्रह्माण्डं घटस्वरूपकार्य्यस्य कारणं न भवितुमर्हति। एतादृशस्य कस्यापि एकस्य कार्यस्याव्यवहितपूर्वक्षणे एतत्कार्याधिकरणे तादृशविश्वब्रह्माण्डस्य नियतावस्थितिर्नास्तीति तात्कालिकविश्वब्रह्माण्डं कस्याप्येकस्यापि कार्यस्य कारणं न भवेत्, विशेष-विशेषवस्त्वेव विशेष-विशेषकार्य्यस्य कारणं स्यात्, इति मृत्तिकयैव घटो जायते, तन्तुवेमादिभिः घटो न जायते इत्यादिसार्वजनीनानुभवस्यापि विरोधो न भवति। तथा च वस्तुनः स्थितेः उत्पत्तिक्षण एव परिसमाप्तिरिति निर्णेतुं न शक्यते। अयमाशयः—समकालिकवस्तुद्वयस्यैक एवाधारः एवमेक एवचाधेयो भवेत्, विभिन्नकालीनवस्तुद्वयस्य एक एव आधारः अपरश्चाधेयो न भवितुमर्हति। यस्तावद्घटः नष्टोऽर्थात् अतीतः तेनेदानीं जलानयनादिकं न सम्भवति, यतः विभिन्नकालीनत्वात् अतीतघटे इदानीन्तनजलस्याधेयता न भवेत्, इति कार्यस्य अधिकरणं कार्यसमानकालीनमेव भवेत् एवं कार्यस्य कारणीभूतं वस्त्वेव कार्य्यस्याव्यवहितपूर्वक्षणे कार्याधिकरणे अवस्थितं स्यादिति नियमात् कार्याव्यवहितपूर्वक्षणे तस्य विद्यमानत्वं नितान्तमावश्यकम्। अस्यामवस्थायां कार्य्याधिकरणस्य कार्यक्षणे तत्पूर्वक्षणे एतदुभयक्षणे विद्यमानत्वमवश्यमेव स्वीकरणीयमिति कार्यस्याधिकरणं कार्याव्यवहितपूर्वक्षणे उत्पन्नं भवेद् इति अन्ततः द्विक्षणस्थायित्वमवश्यमेव स्वीकर्तव्यम्। विश्वस्य प्रत्येकमेव वस्तु कस्यापि कार्यस्याधिकरणं भवेदिति कस्यापि वस्तुनः क्षणकालार्थमेव स्थितिं स्वीकर्तुं न शक्नुयात् इति वस्तुमात्रस्य स्थितिरुत्पत्तिक्षण

एव परिसमाप्यत इति कथनं सर्वथाऽसङ्गतमेव । वस्तुतः विश्वस्य सर्वस्यापि वस्तुन एव स्थितिः द्विक्षणार्थमेव नास्ति, तथा सति द्विक्षणानन्तरमेव सर्वस्यापि वस्तुनः नाशः एवमुत्पत्तिश्च स्वीकरणीया तथा च घटपटादिकं सर्वमेव वस्तु द्विक्षणोत्तरं नाशं याति उत्पत्तिञ्च प्राप्नोति इत्यनुभवविरुद्धम् । विश्वस्य किञ्चिदेव वस्तु यथा विद्युत्प्रभादिकं द्विक्षणोत्तरं नाशं गच्छति, किन्तु सर्वमपि एतादृशमेवेति अनुभवविषयो नास्ति । बहूनां पदार्थानां दीर्घकालस्थायित्वरूपेण अनुभवो भवति, कुसूलस्थबीजं दीर्घकालानन्तरं क्षेत्रस्थं सत् अङ्कुरमुत्पादयति इत्येवानुभवः । अत्र द्विक्षणोत्तरं बीजस्य नाशः एवं सदृशबीजान्तरस्य जन्मस्वीकारे एतद्दीर्घसमयमध्येऽनन्तबीजस्य नाशः एवमुत्पत्तिश्च स्वीकर्तव्या इति कल्पनागौरवं तदपेक्षया कुसूलस्थस्य क्षेत्रस्थस्य च बीजस्य एकत्वं स्थायित्वञ्चाङ्गीकरणीयम् । अत्रेयं शङ्का भवितुमर्हति यत् वस्तु यदि दीर्घकालस्थायि स्यात्तदा वस्तुनः दीर्घकालवर्तिनः प्रतिक्षणं कार्यस्य उत्पत्तिः कस्मान्न भवति ? एतदुत्तरे एतदेव वक्तव्यम् यत् केवलं वस्तुनः स्थितिवशादेव ततः कार्यं न जायते, अपि तु सहकारिकारणसमुदायस्य समवधाने एव वस्तुनः कार्यं जायते । अयमाशयः—विश्वस्य किमपि वस्तु अन्यसाहाय्यं विना किमपि कार्यमुत्पादयितुं न शक्नोति । वस्तुसकलं अन्येन सह मिलितं सदेव विशेषकार्यस्य जनकं भवति, मृत्तिका-सलिलसंयोगादिसाहाय्यं विना बीजमात्रम् अङ्कुरं नैव जनयति सलिलामृत्तिकादि-संयोगे सत्येव बीजमङ्कुरमुत्पादयति । तथा च बीजस्य दीर्घकालस्थितिकाले प्रतिक्षणं मृत्तिकादीनां सहकारिकारणानां लाभो न भवतीति प्रतिक्षणमङ्कुरोत्पत्तिप्रसङ्गो नास्ति । अतः बीजस्य दीर्घकालस्थायित्वमङ्गीकरणीयमेव वस्तुसकलं बहुकालपर्यन्तमेव स्तब्धं तिष्ठति इत्येव तस्य जडत्वम् । अन्यसहकारिसमवधानं सम्प्राप्य जागरितं सत् कुर्व्वद्रूपं कार्योन्मुखम्वा भवति इत्येव तस्य जागरणम् । अनेन रूपेण जागरणमेव वस्तुनः स्वभावोऽस्ति । पूर्वपक्षे उक्तं सहकारिलाभे जाते कारणे कार्योपयोगि-क्षणिकशक्तिर्जायते, इत्थञ्च शक्तिः कारणस्वरूपैवेति कारणस्यापि क्षणिकत्वमेव स्वीकरणीयम् । विश्वस्य सकलमपि विशेष-कार्यस्य कारणमिति वस्तुमात्रमेव क्षणिकम् इत्यपि न समीचीनम्, यतः—सहकारिलाभे कारणे विशिष्टशक्तिरुत्पद्यत इति स्वीकारो निष्प्रयोजनः । सहकारिलाभः समयविशेषे भवति इति दीर्घकालस्थायिकारणात् समयविशेषे कार्यं जायते, मृत्तिकासलिलादिसहकारिसकलस्य लाभः सर्वदा न भवति, यस्मिन् समये तेषां लाभो भवति तत्परक्षण एव बीजादङ्कुरं जायते । तथा च सहकारिसकलस्य लाभस्य कार्यजननोपयोगिशक्तिः सामर्थ्यम्वा, बीजस्याङ्कुरोत्पादनशक्तिः मृत्तिकादिसह-

कारिसकलस्य लाभः एतद्व्यतिरिक्तं किमपि वस्तु नास्ति, इति कारणं क्षणिकशक्तिस्वरूपमिति क्षणिकमिति भवितुं नार्हति।

पूर्वपक्षे उक्तं-यत् यद्वस्तु यत्कार्यकरणे समर्थं तदवश्यमेव तत्कार्यं कुर्य्यात्। बीजमङ्कुरोत्पादने समर्थमिति बीजमवश्यमेवाङ्कुरमुत्पादयेत्, प्रस्तरन्तावदङ्कुरोत्पादनेऽसमर्थमिति कदापि अङ्कुरं नोत्पादयति नाप्युत्पादयितुं समर्थम्। तथा च वस्तुसकलस्य दीर्घकालस्थायित्वस्वीकारे एकस्मिन्नेव वस्तुनि कार्योपयोगिसामर्थ्यं तदसामर्थ्यञ्चेति विरुद्धधर्मद्वयं स्वीकरणीयम्, किन्तु किमपि वस्तु विरुद्धधर्मद्वयाक्रान्तं न भवति, तथा च वस्तुमात्रं कस्यापि कार्यस्य करणे समर्थमिति किमपि वस्तु दीर्घकालस्थायि न भवेत् एवं च वस्तुमात्रं क्षणिकमित्यपि न समीचीनम्। यतः—एतादृशनियमस्य ग्राहकं किमपि नास्ति। यादृशविशेषजातीयेन केनापि वस्तुना विशेषजातीयं किमप्येकं कार्यं जायते एतादृशजातीयं वस्तुमात्रमेतादृशजातीयकार्योत्पादने समर्थम्, दण्डत्वस्वरूपविशेषजातीयेन केनापि दण्डेन घटस्वरूपं कार्य्यं जायते, इति अरण्यस्थदण्डमपि घटजनकजातीयम्, अरण्यस्थदण्डेनापि घटरूपं कार्यं भवितुमर्हति, किन्त्वेतावता अरण्यस्थदण्डेन घटोऽवश्यमेव भविष्यतीति वक्तुं न शक्यते तथा च यद्वस्तु यत्कार्यकरणे समर्थमुपयोगि वा तद्वस्तु तत्कार्यमवश्यमेव कुर्यादिति नियमो नास्ति। सहकारिसकलस्य लाभाभावे वस्तु किमपि कार्यं कर्तुं न क्षमते इत्येवावलोक्यते, बीजमङ्कुरोत्पादने समर्थं, किन्तु सलिलमृत्तिकादिसंयोगाभावे सहकारिसकलस्य लाभाभावात् बीजादङ्कुरं न जायते इत्येव प्रत्यक्षसिद्धम्। वस्तुमात्रम् क्षणिकमित्युभयवादिसिद्धं नास्तीति पदार्थस्य क्षणिकत्वं सन्दिग्धम्। तथा च अङ्कुरोत्पादने समर्थः क्षेत्रस्थबीजविशेषः क्षणिक एवेति वक्तुं न शक्यते। यस्माद्बीजविशेषादङ्कुरो जायते तस्मिन् मृत्तिकासलिलादिसहकारिसमवधानं प्रत्यक्षसिद्धमिति एतदेव निश्चित्य वक्तुं शक्यते यत् सहकारिसकलस्य समवधाने एव बीजादङ्कुरमुत्पद्यते नान्यथा। तथा च सहकारिसकलस्य लाभ एव कारणस्य कार्यजननोपयोगिसामर्थ्यम् एतदतिरिक्तं किमपि नास्ति। एतादृशसामर्थ्यस्यासामर्थ्यस्य च एकदैव एकस्मिन् वस्तुनि सद्भावाभावेऽपि समयभेदे सति एकत्रोभयसत्तायां वाधा नास्ति, अर्थात् समयभेदे सति एकस्मिन्नेव वस्तुनि सहकारिसकलस्य लाभः अलाभश्च स्यात् इति दीर्घकालार्थं वस्तुनः स्थितिस्वीकारेऽपि एकत्र विरुद्धधर्मद्वयस्यारोपो न भवतीति वस्तुमात्रं क्षणिकमिति वक्तुं न शक्यते।

पूर्वपक्षे उक्तं यत्—क्षणेन सह वस्तुनः सम्बन्धस्य विद्यमानतया वा क्षणभेदे

विभिन्नत्वात् कस्यापि वस्तुन एव दीर्घकालार्थञ्चैकैव विद्यमानता इति स्वीकर्तुं न शक्यते। वस्तुनः स्वोत्पत्तिक्षणस्य यः सम्बन्धः विद्यमानता वा तामादाय विशिष्टपरक्षणे इयं विद्यमानता क्षणसम्बन्धो वा न वर्तत इति परक्षणे उत्पत्तिक्षणविशिष्टं वस्तु न तिष्ठति। वस्तुमात्रमेव विशिष्टं विशिष्टतां विशेषणं वा विहाय केवलं विशेषणरहितं किमपि नास्ति इति वस्तुमात्रमेव क्षणिकम्। इदमपि सङ्गतं नास्ति, यतः—विशेषणवर्जितस्य केवलस्य कल्पनाया अविषयत्वेऽपि यत्तावत्सकलंविशेषणमच्छेद्यसम्बन्धे विशेष्ये अवस्थितं भवति, अर्थात् विशेषणस्य नाशं विना विशेष्ये सकलविशेषणस्य अभावसम्पादनं न सम्भवति, एतादृशः विशेषणेन सह विशेष्यस्य यः सम्बन्धः अस्मिन् सम्बन्धेऽथ वा यस्तावत् सकलसम्बन्धस्य नाशो नास्ति एतादृशसम्बन्धे विशेष्येऽवस्थितो भवति। एतादृशसकलविशेषणविशिष्टविशेष्यस्य (क्षणिकविशेषरहितविशेष्यस्य दीर्घकालस्थायित्वं वक्तुं शक्यते। यथा—घटः एकं वस्तु विशिष्टपदार्थो वा, घटत्वं तदीयैकत्वसंख्या, परिमाणादयः सकलं विशेषणमच्छेद्यसम्बन्धे घटेऽवस्थिताः एतत्सकलं घटस्य सामयिकं विशेषणं नास्ति, तदीयरूपरसादीनां विशेषणानां सकलानां सामयिकत्वेऽपि एतत्सकलं क्षणार्थमेव घटस्य विशेषणं नापि तु अच्छेद्यसम्बन्धेनैव घटस्य विशेषणम् [ अयमाशयः, घटस्य दीर्घकालस्थायित्वेऽपि तदीयरूपरसप्रभृतीनां परिवर्त्तनं जायते। एतेषां घटसामयिकविशेषणत्वेऽपि प्रतिक्षणं तत्परिवर्त्तनस्वीकारस्यावश्यकता नास्ति। उत्पत्तिक्षणेन सह घटस्य सम्बन्धः प्राथमिकविद्यमानता वा द्वितीयादिक्षणे न वर्तते। अर्थात् तत्तत्क्षणस्य सम्बन्धस्वरूपतत्तद्विद्यमानता अन्यक्षणे नास्ति तथा च एतादृशं क्षणिकविशेषणमादाय एतत्क्षणविशिष्टघटस्यान्यक्षणे सद्भावाभावेऽपि एतादृशक्षणिकविशेषणरहित-घटत्वादिना विशेष्यस्य अर्थात् घटत्वादिविशेषणविशिष्टस्य घटवस्तुनः दीर्घकालस्थायित्व-स्वीकारे न किमपि बाधकम्। वस्तुनः सम्भावितानां यावतां विशेषणानां समुदायस्याभावः विशेष्ये मा भवतु तथापि सामयिकविशेषणरहितं विशेष्यं किमपि नास्तीति वक्तुं न शक्यते। सामयिक-विशेषणस्य परिवर्तनसम्भवेऽपि तेन सह विशेष्यमपि परिवर्तितं स्यादित्येष नियमो न भवितुमर्हति। यानि तावद्विशेषणानि क्षणार्थं विद्यमानानि तत्सकलविशेषणानामभावेऽपि घटत्वस्वरूपं सदातनं ( नित्यं ) विशेषणमादायैवं दीर्घकालार्थं विद्यमानं तदीयं रूपं रसञ्च विशेषणमादाय घटवस्तु दीर्घकालार्थं विशेष्यं विशिष्टम्वा स्यादित्यत्र न किमपि बाधकम्, अर्थात् दीर्घकालपर्यन्तमेतादृशघटस्य सम्बन्ध-स्वीकारे न किमपि बाधकम्। प्रतिक्षणं घटस्य तदीयरूपरसादेश्च विशेषणसकलस्य नाशः एवमेतादृशस्यापरस्य घटस्य स्वतन्त्रस्य रूपरसादेश्च उत्पत्तिस्वीकारेऽतीव

कल्पनागौरवं प्राप्नोति । अतः उत्पत्तेः लयस्य च व्यवधायिका स्थितिर्नास्ति इति कथनं सर्वथाऽसङ्गतम् । उत्पत्तिरेवं लय एव विश्वस्य कारणमिति वक्तुं न शक्यते ।

पूर्वपक्षेऽवयवातिरिक्तोऽवयवी नेति स्वीकृतवान् । परमाणूनां समष्टिरेवावयवी; स्थूलरूपेणावयविनः प्रत्यक्षत्वं भ्रम एवेत्यपि न समीचीनम्, यतः यदि अवयवी परमाणुव्यतिरिक्तो नास्ति, अर्थात् परमाणोः समष्टिमात्रमेव, तदा परमाणोरतीन्द्रियत्वेनावयविनामपि इन्द्रियग्राह्यत्वं न स्यात्, यतः अतीन्द्रियसमष्टेरिन्द्रियग्राह्यत्वे तेषामतीन्द्रियत्वव्याघातः स्यात् । स्थूलरूपेणावयवी प्रत्यक्षसिद्धः इति अतिरिक्तावयविस्वीकार आवश्यकः; अवयवी परमाणुसमष्टिर्नास्ति । अन्यदप्युक्तम्—परमाणुपुञ्जं, समष्टिस्वरूपञ्चा एवं प्रतिक्षणं परिवर्तनशीलं शरीरमेव चेतन आत्मा, इत्यपि न समीचीनम् । यतः तथा स्वीकारे पूर्वदृष्टवस्तुनः स्मरणं न स्यात् । यदि क्षणिकशरीरमेव चेतन आत्मा तदा बाल्ये विलोकितस्य स्थविरे स्मरणं करोमि एतादृशप्रत्यभिज्ञानं न स्यात् । योऽहं बाल्येऽद्राक्षं सोऽहमिदानीं पश्यामीति प्रत्यभिज्ञा च सार्वजनीना वर्ततेऽतः शरीरं न चेतन आत्मा । अन्यच्च जन्मनोऽनन्तरमेकदैव मरणं भवति एकस्मिन् जीवने जन्मनः मृत्योश्च कष्टमेकदैव भुक्तं स्यात् । शरीरं यदि चेतन आत्मा एवमात्मा च प्रतिक्षणं परिवर्तते तदा प्रतिक्षणमेव जन्मनः मृत्योश्च यन्त्रणा स्यात् । किं कस्यापीयं प्रत्यक्षसिद्धा ? अतः शरीरं नैव चेतन आत्मा एवं प्रतिक्षणं शरीरस्यापि परिवर्त्तनं न जायते, पूर्वपूर्वशरीरवासना संस्कारो वा परवर्तिशरीरे सञ्चारिता भवति तेन चोत्तरकाले स्मरणमिति चातुर्य्यमात्रम् । स्थिरनित्यात्मस्वीकर्तॄणां मते शरीरस्य नाश एव मृत्युर्नास्ति । आत्मना सह शरीरस्य प्राणवायोः विजातीयसम्बन्धनाश एव मृत्युः । एतादृशमृत्युश्च जीवने एकदैव जायते । अतः बालस्य यौवनस्य वार्द्धक्यस्य च भेदे शरीरपरिवर्तनेऽपि एकस्मिन् जीवने पुनः पुनः जन्मनः मृत्योश्च यन्त्रणाभोगः न जायते ।

वस्तुनः वैजात्यं विशिष्टता वा कुर्व्वद्रूपत्वं तस्य प्रत्यक्षत्वं न सिद्धयति इति वस्तुनः कुर्व्वद्रूपत्वं वक्तुं न शक्यते इति उक्तमेव । किन्तु प्रत्यक्षमेवैकं प्रमाणं न अपि तु अनुमानमपि प्रमाणम् । धूमदर्शनाद्वह्नेरनुमानं भवति, मेघगर्जनाद्वृष्टिर्भवितेति मनसि जायते इति प्रत्यक्षं नास्तीति वस्तुनः कुर्व्वद्रूपत्वस्वरूपं वैजात्यं विशिष्टता वा नास्ति ( अर्थात् वस्तु कुर्व्वद्रूपं नास्ति ) इति वक्तुं न शक्यते तथा एवं च प्रत्यक्षं न भवतीति तस्यातीन्द्रियत्वमिति वक्तुं शक्यते । एतादृशाशङ्कानिरासार्थमुच्यते—

कुर्व्वद्रूपत्वं ऐन्द्रियके इन्द्रियग्राह्ये वा वस्तुनि अवस्थितमेवं तदेव वस्तुनः लक्षणं विशिष्टता वा भवतीति एतदतीन्द्रियमिति वक्तुं न शक्यते । यतः—वादिनां मते कुर्व्वद्रूपत्वमेव वस्तुनः विशिष्टता लक्षणम्वा ( वस्तुत्वम् ) इति कुर्व्वद्रूपतामेव परित्यज्य वस्तुनोऽस्तित्वं कल्पनायाः अपि विषयो नास्ति, तां गृहीत्वैव वस्तु विशिष्टम् । वस्तु विशिष्टञ्च एकमेव, बीजादिकं वस्तुरूपेण विशिष्टरूपेणैव वा प्रत्यक्षसिद्धम्, इति कुर्व्वद्रूपत्वं धर्मं गृहीत्वैव बीजादिवस्तुनः प्रत्यक्षत्वमिति अवश्यमेव वक्तव्यम्, अस्यामवस्थायामेतेषां विशिष्टतायाः कुर्व्वद्रूपत्वस्य प्रत्यक्षं नास्ति, तस्या अतीन्द्रियत्वमिति स्वीकारः प्रलापमात्रमेव । अभिज्ञा कदापि न कथयति यत् रक्तरूपविशिष्टं कमलं दृष्टवान् परन्तस्य रक्तं रूपं नैवावलोकितवान् । विशेषतः क्षणभङ्गवादिनः द्रव्यत्वं, घटत्वं, पटत्वादिकंवा अनुगतधर्मं न स्वीकुर्वन्ति, तेषां मते कुर्व्वद्रूपत्वमेव वस्तुनः धर्मः लक्षणम्वा तच्च व्यक्तिभेदादनेकमेव । अनेकेषां वस्तूनामेकं कुर्व्वद्रूपत्वं नास्ति, तस्मात् वादिनां मते विपक्षबाधकतर्कस्य ( व्यभिचारसंशयनिरासकतर्कस्य ) सम्भावना नास्ति । तर्काभावे च प्रायः संशयस्य निरासो न जायते । व्यभिचारसंशयनिवृत्त्यभावे व्याप्तिनिश्चयो भवितुं नार्हति तथा च अनुमानस्य परामर्शस्य वा असम्भववशात् अनुमितिरसम्भवा स्यात् । यथा—तव वह्नेरावश्यकता वर्तते चतुर्द्दिङ्निरीक्षणेन पर्वते धूमं पश्यसि, तत्समये यदि तव निश्चयो जायते धूमो वह्निव्याप्यः ( यत्र यत्र धूमस्तत्र वह्निरिति ) तथा सति "वह्निव्याप्यधूमवानयं पर्वतः" वह्निव्याप्यो धूमः पर्वते वर्तते इत्यादिरूपमनुमानं परामर्शो वा जायते तदा अनुमितिर्भवति "पर्वतो वह्निमानिति । तत्रास्माभिरवलोक्यते यदनुमितौ अनुमापकहेतौ साध्यस्य अनुमेयस्य वा व्याप्तिनिश्चयः ( यत्र यत्र हेतुः तत्र तत्र साध्यम् इत्यादिनिश्चयः ) आवश्यकः । हेतोः एवं साध्यस्य सहचारदर्शने सति अर्थादुभयमेकत्र तिष्ठतीति ज्ञाते सति हेतौ साध्यस्य व्यभिचारज्ञानस्याभावसद्भावे एतादृशव्याप्तिनिश्चयो जायते । धूमः वह्निश्च महानसादौ एकत्र तिष्ठति यदि वह्निधूमयोः सहचारदर्शनं तिष्ठति एवं धूमे वह्नेः व्यभिचारज्ञानस्य ( अर्थात् वह्नेरभावेऽपि धूमस्तिष्ठति किम्वा स्थातुं शक्नोति इत्यादिज्ञानस्य ) अभावस्तिष्ठति, तदैव धूमे वह्निव्याप्तिनिश्चयो भवेत् ( अर्थात् तदा त्वमवगन्तुं शक्नोषि यत् यत्र धूमस्तिष्ठति तत्रैव वह्निस्तिष्ठति ) किन्तु विश्वस्य कियन्ति स्थानानि सन्ति भविष्यन्ति आसन् वा तेषामियत्ता नास्ति । यत्रैव धूमस्तत्रैव वह्निरस्ति इत्यनुसन्धानं कृत्वा ज्ञानं कस्यापि साध्यं नास्ति । महानसादिकतिपयस्थानेषु एवावलोकयिष्यति यत् धूमः वह्निश्चैकत्र तिष्ठति । किन्तु एतावतैव यत्र धूमस्तिष्ठति तत्रैव वह्निस्तिष्ठति इति निश्चयः कर्तुं न शक्यते । किञ्च वह्नेरभावेऽपि

धूमस्तिष्ठति इति निश्चयः यद्यपि कर्तुं न शक्यते, यतः एतादृशं क्वापि नावलोक्यते, तथापि यत्र धूमस्तिष्ठति तत्रैव वह्निः स्यान्न वा ? इत्यपि सम्भाव्यते । कस्मिंश्चित् स्थाने वह्नेरभावेऽपि धूमः स्थातुं शक्नोति सामान्यतया एतादृशसंशयवारणं न सम्भवति एतादृशसंशयस्तु स्वाभाविक एव । विचारं कृत्वा त्वां प्रति धूमे वह्नि-व्याप्तिनिश्चयोत्पादनार्थमवश्यमेव वक्तुं शक्यते यत्र धूमस्तिष्ठति तत्रैव वह्निस्तिष्ठति एतस्य निश्चायकस्तावत्कः ? वह्नेरभावस्थलेऽपि कुत्रापि धूमः स्थातुं शक्यते ? इति परस्य व्याप्तिनिश्चयमुत्पाद्यानुमितिसम्पादनकाले एतादृशसंशयः स्वाभाविक एव । अत एव कथितरूपव्याप्तिनिश्चयार्थं किम्वा परस्य व्याप्तिनिश्चयोत्पादनार्थं तर्कस्यावश्यकता वर्तते । एतादृशस्थले तर्कः व्यभिचारसंशयस्य निरासको भवति । सन्दिग्धस्थले तर्कोपस्थितौ संशयः न तिष्ठति । धूमः यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् (वह्निजन्यत्वाभावविशिष्टः स्यात् । अयन्तावदेको विपक्षबाधकः) इति कथितव्यभि-चारसंशयस्य निरासकः तर्कः । एतादृशतर्कोपस्थितौ तव धूमे वह्नि-व्यभिचार-संशयः स्थातुं न शक्नोति, यतः—एतादृशतर्कोपस्थितौ धूमो वह्निजन्य इति निश्चय-ज्ञानमावश्यकम् । यतः तर्के आपाद्याभावस्य निश्चयः कारणम् । अत्र वह्निजन्यत्वा-भावस्याभावः वह्निजन्यत्वमेव आपाद्याभाव इति धूमः वह्निजन्यः अर्थात् वह्निजन्यत्व-विशिष्टः इति निश्चयरूपेण ज्ञानसद्भाव एव एतादृशतर्क उपस्थितो भवति । अन्यथा धूमस्य वह्निजन्यत्वाभावे एतादृशतर्कः न सम्भाव्यते । धूमो वह्निजन्य इति निश्चयरूपेण तव ज्ञानं वर्तते अस्यामवस्थायां धूमो वह्निव्यभिचारी न वेति संशये सति यदि तव तर्कः ( आपत्तिः ) उपस्थितो भवति, धूमो यदि वह्निव्यभिचारी तदा वह्निजन्यो न स्यात् तथा सति तव धूमो वह्निजन्यः एतादृशस्थिरसिद्धान्तस्य व्याघातस्योपक्रमो भवेत् इति एतादृशतर्कः धूमे वह्निजन्यत्वस्य निश्चयेन अर्थात् धूमो वह्निव्यभिचारी नास्ति भवितुमपि नार्हति इति निश्चयरूपेणावगतिं कारयति । तथा च एतादृशतर्केण धूमो वह्निव्यभिचारी नास्ति इति निश्चयो जायते तेन धूमो वह्निव्यभिचारी न वेत्यादि-संशयस्तव न तिष्ठति । यत्र धूमस्तिष्ठति तत्रैव वह्निरपि तिष्ठति इत्यादिव्याप्तिनिश्चयः सम्भवति ।

अयमाशयः—तर्के आपत्तौ वा एकः आपादकः एकश्च आपाद्यो वर्तते । यस्यारोपेण ( अर्थात् यस्य कथनेन ) आपत्तेरुद्भवो भवति स एव आपादकः एवं यस्य आपत्तिः क्रियते ( अर्थात् यस्य स्यादिति कथ्यते ) स एव आपाद्यः । धूमे वह्निव्यभिचारोद्भावने ( धूमः वह्निव्यभिचारीति कथने धूमस्य वह्निजन्यत्वरूपं

निश्चित्य आपत्तेरुद्भवो भवति "तथा सति धूमो वह्निजन्यः न स्यात्" ( अर्थात् वह्निजन्यत्वाभावः स्यादिति कथ्यते ) तथा च एतादृशापत्तिस्थले वह्नेर्व्यभिचार एव आपादकः एवं वह्निजन्यत्वाभाव एव चापाद्यः । आपादकः आपाद्यस्य व्याप्यः आपाद्यश्च आपादकस्य व्यापको भवति । अस्यां स्थितौ एतादृशापत्तिस्थले व्यापकीभूत-वह्निजन्यत्वाभावस्याभावः वह्निजन्यत्वं धूमे निश्चितमिति आपदकस्य व्याप्यस्य वह्निव्यभिचारस्याभावः निश्चितो भवति, यतः यत्र व्यापकाभावस्य निश्चयः तत्र व्याप्या-भावस्य निश्चयो जायते । अतः एतादृशतर्केण धूमः वह्निव्यभिचारी नास्तीति निश्चितो भवति, तेन च धूमः वह्निव्यभिचारी न वा ? वह्निं विनापि धूमस्तिष्ठति न वा ? इत्यादिव्यभिचारसंशयो न जायते, धूमे वह्निव्याप्तिनिश्चयः ( यत्र यत्र धूमः तत्र तत्र वह्निः इत्यादिनिश्चयः ) भवति ।

क्षणभङ्गवादिनः जातिं गुणादिकमतिरिक्तपदार्थं नैव स्वीकुर्वन्ति । तन्मते कुर्व्वद्रूपता एव वस्तुनः स्वभावो धर्मो वा ( अर्थात् विशिष्टता ) घटत्वपटत्वादिकं जातिः घटपटवस्तुनः इतरभेदमात्रमेव, "घटः" इत्याकारकघटत्वविशिष्टविषयकबुद्धिः इतरस्माद् भिन्नरूपेणैव घटवस्तु विषयं कृत्वा तिष्ठति । घटस्य इतरभेदः घटादति-रिक्तो नास्ति, घटातिरिक्तास्स्वतन्त्रः अर्थात् घटस्यैव स्वरूपभूतः । एवमेव रक्तवर्णः रक्तवर्णवस्तुनः इतरभेदातिरिक्तं किमप्यन्यद्वस्तु नास्ति । घटः रक्तः इत्याकारकरक्तरूप-विशिष्टघटविषयकबुद्धिः घटे रक्तवर्णवस्तुनः इतरभेदं विषयीकृत्वैव तिष्ठति । अयमपि इतरभेदः रक्तरूपेण प्रतीयमानघटपटादिवस्तुन एव स्वरूपभूतः अनेनैव प्रकारेण अन्यान्यजातिगुणादीनां सम्बन्धेऽपि अवगन्तव्यम् । अस्यां स्थितौ क्षणभङ्गवादिनां मते पूर्वोक्तरूपस्य तर्कस्य आपत्तेर्वा उद्भावनं भवितुं नार्हति । यतः—सर्वस्मिन्नेव वस्तुनि भिन्न-भिन्नकुर्व्वद्रूपतां विहाय वास्तविकोऽन्यो धर्मो नास्ति, एवम् वस्तुमात्रस्यैव क्षणिकत्वात् एकैकस्य वह्नेः एकैकेन धूमस्वरूपकार्यस्य कुर्व्वद्रूपत्वं वक्तव्यम् । एकेन वह्निना एकाधिक धूमः न भवति नापि भवितुमर्हति । तथा च यद् वस्तु यस्मिन् क्षणे कार्य्यस्य कुर्व्वद्रूपं तद्वस्तु तस्मिन् क्षणे स्वरूपतः ( अर्थात् निजस्य कुर्व्वद्रूपता-स्वभावं धर्मं वादाय ) एतत्कार्यस्य कारणं भवति । या विशेषधूमव्यक्तिः ( अञ्जन-स्वरूपकार्य्यस्य कुर्व्वद्रूपधूमव्यक्तिविशेषः ) येन विशेषवह्निना ( एतद्धूमस्वरूपकार्य्यस्य कुर्व्वद्रूपया यया वह्निव्यक्त्या भवति ) इयं वह्निव्यक्तिरेव स्वरूपतः ( एतद्धूमस्वरूप-कार्यस्य या विशेषकुर्व्वद्रूपता एतत्कुर्व्वद्रूपतास्वभावं धर्मं वा गृहीत्वा ) एतद्धूमव्यक्तेः

कारणम् । अतः विशेष-विशेषक्षणिकधूमं प्रति विशेष-विशेषक्षणिकवह्नेः स्वरूपतः कारणत्वम् । अस्यां स्थितौ वह्निस्वरूपे धूमसामान्यस्य एका कारणता नास्ति ।

अयमाशयः—क्षणभङ्गवादिनां मते अनुगतः एकः धर्मः (अनेकवस्तुनि एकदा एकसम्बन्धेन अवस्थितः एकः धर्मः) न स्वीक्रियते । तथा च कस्यापि एकस्य कार्यस्य उत्पादकानां जनकानां वा जातीयत्वेन वह्नीनां विषयणां (अनुगतं) कर्तुं न शक्नोति । कस्यापि कार्यस्य जनकजातीयतायामेतत्कार्यजातीयस्य सामान्यकारणता (अर्थात् कारणजातीयवस्तुसमुदायेऽवस्थिता कार्यजातीयवस्तुसमुदायस्य एका कारणता नास्ति । विशेष-विशेषवस्तुनैव विशेषविशेषघटः जायते । विशेष-विशेष-दण्ड एव विशेष-विशेष-घटस्योत्पादकः, दण्डत्वस्वरूपसामान्यधर्मः जातिर्वा नास्तीति दण्डसमुदायः घटकारणजातीये नास्ति इति दण्डसमुदाये घटसमुदायस्य एका कारणता नास्ति इति क्षणभङ्गवादिभिरवश्यं स्वीकार्य्यम् ।

इदमत्र कारणम्—अप्रत्यक्षं कालान्तरीयं देशान्तरीयम्वा सकलं धूमवस्तु वह्निना एव जायते जातम् न वा इत्याकारकस्य संशयस्य निरासो नैव सम्भवति अपि तु धूमसामान्यं वह्निसामान्यजन्यं न वेति संशय एव भवितुं शक्नोति । तथा च एतादृशसंशयस्य निवृत्तिं विना धूमसामान्ये सामान्यतः वह्निजन्यत्वस्य निश्चयो भवितुं नार्हतीति क्षणभङ्गवादिनां मते कथितरूपतर्कस्य सम्भावना नास्ति । यतः—एतादृशतर्ककरणे धूमसामान्ये वह्निजन्यत्वस्य निश्चय आवश्यकः । एतादृशरूपेण सर्वत्र प्रत्यक्षसिद्धसामान्यधर्मरूपे कारणभावनिश्चयो भवितुं नार्हति इति कुत्रापि कार्यकारणभावमूलक-विपक्षबाधकतर्कस्य सम्भावना नास्ति इति कुत्रापि व्यभिचारसामान्यनिवृत्तिः वादिमते प्रायशः न सम्भवति विशेषतया परार्थस्थले व्याप्तिनिश्चयोऽसम्भव एव स्यात् । अनुमानप्रयोगेण अतीन्द्रियकुर्व्वद्रूपत्वस्य सिद्धिर्नैव स्यात् असिद्धकुर्व्वद्रूपत्वेन हेतुना वस्तुनः क्षणिकत्वसाधनं गगनकुसुमेन मालाग्रन्थनमिव स्यात् ।

अन्यच्च प्रत्यक्षं द्विविधम् सविकल्पकं निर्विकल्पकञ्च । यस्मिन् प्रत्यक्षे वस्तु जातिगुणादिना विशेषरूपेण कल्पितं भवति (अर्थात् यज्ज्ञानं वस्तुनः नामजात्यादियुक्तं विषयं करोति अथ वा नामजात्यादिविशिष्टरूपेण वस्तुविषयकं भवति तदेव सविकल्पकं भवति । विशेषणविशिष्टरूपेण विशेष्यस्य ज्ञानमेव सविकल्पकं ज्ञानम् । एतादृशं ज्ञानं विशेषणविशेष्ययोः सम्बन्धं विषयीकृत्यावतिष्ठते । यस्य ज्ञानस्य विशेषणं विशेष्यं च वर्तते तदेव सविकल्पकं ज्ञानम् । यथा—घटत्वरूपेण घटस्य "घटः" इत्याकारकं

ज्ञानम् । एतादृशं ज्ञानं घटत्वजातिरूपेण घटं विषयीकृत्य तिष्ठति । अत्र विशेष्यं घटः विशेषणं घटत्वम् । घट इत्याकारकज्ञाने जाते एव घटवस्तुनि घट इति नाम्ना घटत्वजातेः कल्पना भवति । तथा च घट इत्याकारकं ज्ञानं सविकल्पकं ज्ञानम् । जातिगुणादिविशेषणं विना सविकल्पकं ज्ञानं न सम्भाव्यते । तथा च क्षणभङ्गवादिमते सविकल्पकज्ञानस्य याथार्थ्यं कदापि न सम्भाव्यते । यतः—पूर्वमेवोक्तं तन्मते जातिगुणादिकमतिरिक्तपदार्थो नास्ति, एतत्सकलं मिथ्या, तथा च सविकल्पकप्रत्यक्षमात्रस्यैव विषयः विशेषणांशो वा मिथ्या इति मिथ्याज्ञानम् एतत्कदापि प्रमाणं भवितुं नार्हति । अर्थात् एतादृशज्ञानेन ज्ञाता ज्ञातविषये वस्तुतः आकृष्टो विप्रकृष्टो वा न भवति अर्थात् ज्ञातविषयस्य वास्तविकप्राप्तिर्हानिर्वा न भवति । विशेषतः सविकल्पकं ज्ञानं विषयजन्यं न भवति भवितुमपि नार्हति यतः—तेषां वस्तुमात्रमेव क्षणिकमुत्पत्तिपरक्षणे एव वस्तु न तिष्ठति इति उत्पत्तिक्षण एव वस्तुनि इन्द्रियसन्निकर्षो जायते, तथा च परक्षणे वस्तुनः निर्विकल्पकं ज्ञानं भवति तत्परक्षणेऽर्थात् तृतीयक्षणे सविकल्पकं ज्ञानं भवितुमर्हति, तथा च सविकल्पकज्ञानस्याव्यवहितपूर्वक्षणे ( अर्थात् वस्तुनः उत्पत्तिपरक्षणे ) विषय एव न तिष्ठतीति विषयजन्यं न भवति । एवञ्च ज्ञातारं विषये आकृष्टं विप्रकृष्टम्वा कर्तुं न शक्नोति, अर्थात् वस्तुतः विषयस्य प्राप्तिर्हानिर्वा न भवति इति तत् अप्रमाणमेव । अन्यच्च—यस्मिन् ज्ञाने वस्तु विशेषरूपेण ( जातिगुणादिना ) कल्पितं न भवति ( अर्थात् यज्ज्ञानं वस्तु नामजात्यादियोजनासहितं विषयं न करोति । तदेव निर्विकल्पकं ज्ञानम् । फलतः यस्मिन् ज्ञाने विशेष्यं विशेषणं च नास्ति, यद्धि वस्तुस्वरूपनिर्भासमात्रन्तदेव निर्विकल्पकं ज्ञानं । एतादृशं ज्ञानं मिथ्या भवितुं नार्हति, यतः—वस्तुनः स्वरूपं मिथ्या नास्ति, तथा सति सर्वमाकाशकुसुमायमानं स्यात्, विशेषतः एतादृशज्ञानमेव विषयजन्यम्, तथा च एकमात्रं निर्विकल्पकज्ञानमेव प्रत्यक्षजन्यम् तन्मते प्रमाणम्[१] । एतादृशज्ञानेनैव प्रमाता ज्ञातविषये वास्तविकरूपेणाकृष्टो विप्रकृष्टो वा भवति । एतादृशनिर्विकल्पकज्ञानस्य प्रत्यक्षं न भवति । अर्थात् वस्तुनः निर्विकल्पकज्ञानानन्तरं जानामीति मनसा वस्तुज्ञानस्य अवधारणं न भवति । अर्थात् घटस्य स्वरूपदर्शनमात्रेणैव नोच्यते अहं घटं जानामीति । तथा च प्रत्यक्षत्वाभावे निर्विकल्पकं ज्ञानमनुमेयमेव । सविकल्पकज्ञानेनैव निर्विकल्पकज्ञानस्यानुमितिर्भवति । यतः—वस्तुनि इन्द्रियसम्बन्धे जाते प्रथमतः वस्तुनः निर्विकल्पकं प्रत्यक्षं भवति । ततः

---

१. प्रत्यक्षं कल्पनापोढं नाम जात्याद्यसंयुतम् । प्रमाणसमुच्चयः ।

प्रत्यक्षकृतवस्तुनि नामजात्यादियोजनानन्तरं सविकल्पकं प्रत्यक्षं भवति, अयमेव क्षणभङ्गवादिनां सिद्धान्तः।

अयमाशयः—बहुकालानन्तरं पूर्वपरिचितेन केनापि जनेन साक्षात्कारो भवति। तस्य जनस्य दृष्टिपथागते सति तस्य स्वरूपस्योपलब्धिर्भवति अनन्तरमेवोच्यते—महाशय! कुशलं नु? समीपस्थबन्धुजनेन सह तस्य परिचयं कारयति—अयमेकः विशिष्टः पुरुष इति। अनन्तरं तस्याकारप्रकारस्य लक्ष्यं करोति। दृष्टिपथे आगमनमात्रेण एतत्सकलस्य लक्ष्यं न भवति। तथा च प्रथमतः निर्विकल्पकप्रत्यक्षे जातेऽनन्तरं सविकल्पकं विशिष्टम्वा ज्ञानं जायत इत्यवश्यं स्वीकर्तव्यम्। तथा च कस्यापि वस्तुनः सविकल्पप्रत्यक्षे जाते एव ज्ञायते वस्तुनः निर्विकल्पकं प्रत्यक्षं जातमिति। यतः निर्विकल्पप्रत्यक्षं विना सविकल्पकं प्रत्यक्षं न भवति, भवितुमपि नार्हति इति सविकल्पकप्रत्यक्षं निर्विकल्पकप्रत्यक्षस्य व्याप्यम् इति निर्विकल्पकप्रत्यक्षस्य व्याप्यरूपेण सविकल्पकप्रत्यक्षस्य निश्चयस्थलेऽवश्यमेवानुमितिर्भवेत् यत् वस्तुनः निर्विकल्पकं प्रत्यक्षं जातमिति अस्यामवस्थायां "क्षणिकम्" इत्याकारकसविकल्पकप्रत्यक्षे सम्भवे एव क्षणिकत्वं निर्विकल्पक प्रत्यक्षकल्पनायाः विषयः ( अर्थात् अनुमेयम् ) भवितुमर्हति। किन्तु "क्षणिकम्" इत्याकारकं सविकल्पकप्रत्यक्षमसम्भवमिति पूर्वमेवोक्तम्। अर्थात् वस्तु अवलोक्य नावगम्यते यत् वस्तु क्षणे क्षणे परिवर्तितं भवति। तथा च तन्मतसिद्धप्रमाणेन क्षणिकत्वस्य निर्विकल्पकप्रत्यक्षत्वं न सेत्स्यति एवं च वस्तुमात्रमेव क्षणिकमिति सिद्धान्तो न भवितुं शक्नोति।

अयमाशयः—बौद्धमते व्याप्तिनिश्चयो न सम्भवतीति अनुमानमसम्भवम् इत्युक्तम्, तथा च अनुमानेन वस्तुनः ज्ञानं न सम्भवति। प्रत्यक्षप्रमाणेनापि वस्तुनः क्षणिकत्वस्य सविकल्पकं ज्ञानं ( निश्चयः ) न सम्भवति। अथ च बौद्धाः प्रत्यक्षम् अनुमानञ्च प्रमाणमामनन्ति। तन्मते शब्दादीनां प्रामाण्यं नास्ति। तथा च क्षणिकत्वं केनापि प्रमाणेन ज्ञानस्य विषयो न भवितुमर्हति। यो हि केनापि रूपेण ज्ञानस्य विषयो न भवति, एतादृशस्य विषयस्यास्तित्वकल्पना आकाशकुसुमास्तित्वकल्पनया तुल्या। तदा कदाचित् वस्तुनः क्षणिकत्वरूपेण ( वस्तु क्षणिकमिति ) ज्ञानं भवति इति बौद्धैर्वक्तुं शक्यते, यतः—ते असतः ख्यातिं स्वीकुर्वन्ति यदि क्षणभङ्गवादिनोऽयमेवाभिप्रायः तदा विशेषविचारस्य प्रयोजनं नास्ति। यतः—क्षणिकत्वमसत्—इति स्वीकारे न्यायमते एव प्रवेशः सम्भवति। तदा नैयायिकाः असतः ख्यातिं न स्वीकुर्वन्तीति विरोधः शाम्यति।

यद्यपि वस्तुनः क्षणिकत्वसाधकं प्रमाणं नास्ति ( अर्थात् प्रत्यक्षेणानुमानेन वा वस्तुमात्रं क्षणिकमिति इति निश्चितं न भवति तथापि क्षणिकत्वस्य बाधनिश्चयाभाववशतः ( अर्थात् वस्तुमात्रं क्षणिकं नास्तीति निश्चयाभाववशतः ) क्षणिकत्वसंशयः ( अर्थात् वस्तुसकलं क्षणिकं न वा ? ) इति संशयो भवितुमर्हति । अयमाशयः—एकत्र भावस्य अभावस्य च विषयकरणमेव संशयः, अभावः एवं भावश्च संशयस्य कोटिः, संशयस्य एकतरकोटेः भावस्य अभावस्य वा निश्चये सति संशयो न जायते । यथा—गृहं घटविशिष्टं न वेति एकः संशयः । अत्र गृहे घटस्य भावम् अभावञ्च विषयं कृत्वैव संशयो जायते । घटस्य भावः अभावो वा एतादृशसंशयस्य कोटिः । यदि निश्चित-रूपेण ज्ञायते गृहं घटविशिष्टम् ( अर्थात् गृहे घटोऽस्ति ) अथ वा गृहं घटाभाव-विशिष्टम् ( अर्थात् गृहे घटो नास्ति ) तदा गृहे घटोऽस्ति न वा इति संशयो न भवति ।

क्षणिकत्वमेवं क्षणिकत्वस्याभाव एव क्षणिकत्वसंशयस्य ( अर्थात् वस्तु सकलं क्षणिकं न वेति संशयस्य) कोटिः इति पूर्वनिश्चये वस्तु सकलं क्षणिकं न वेति संशयो न भवितुमर्हति । किन्त्वेतादृशनिश्चयसम्भवाभावे वस्तु सकलं क्षणिकं न वेति संशयो भवितु-मर्हति । प्रत्यक्षेणानुमानेन वा वस्तुनः क्षणिकत्वस्य निश्चयः ( अर्थात् वस्तुमात्रं क्षणिकमित्याकारकनिश्चयः ) न भवितुमर्हति एवं वस्तुसकलं क्षणिकं नास्ति इति निश्चय-रूपेणावगत्यर्थमुपयुक्तं कारणं नास्ति इति वस्तु सकलं क्षणिकं न वेति संशयो भवितुमर्हति, एतस्य वारणं न सम्भवति। अस्यां स्थितौ वस्तुनः सकलस्य स्थिरत्वं दीर्घकालस्थायित्वम्वा इति सिद्धान्तो न जायते । यतः वस्तुनः क्षणिकत्वसंशयः वस्तुनः स्थैर्यनिश्चयस्य प्रतिबन्धकः । अत्रेदं वक्तुं शक्यते प्रत्यभिज्ञैव ( सोऽयमिति निश्चय एव ) वस्तुनः क्षणिकत्वसंशयस्य निरासकः इति प्रत्यभिज्ञयैव स्थैर्य्यस्य ( स्थिरतायाः ) निश्चयो भवति, अर्थात् प्रत्यभिज्ञयैव वस्तुनः सकलस्य स्थिरत्वं दीर्घकालस्थायित्वम्वा निश्चिनोति । प्रत्यभिज्ञैव स्थैर्य्यसाधकं प्रमाणम् ।

अयमाशयः—तदेवेदमिति निश्चय एव प्रत्यभिज्ञा, एतादृशयथार्थप्रत्यभिज्ञया इदानीं दृष्टवस्तुना पूर्वदृष्टवस्तुनः अभेदः ज्ञापितो भवति । वस्तुमात्रस्य क्षणिकत्वे वस्तुसकलस्य प्रतिक्षणं भिन्नत्वं स्वीकार्यम् । किन्तु इदानीं दृष्टस्य वस्तुनः पूर्वदृष्टेन वस्तुना भेदस्वीकारे उभयोः तदेवेदमिति यथार्थप्रत्यभिज्ञा न सम्भवति । इति एतादृश-प्रत्यभिज्ञाबलादेव वस्तुनः सकलस्य क्षणिकत्वं नास्तीति स्वीकर्तव्यमेव । वस्तुनः सकलस्य

क्षणिकत्वं नास्तीति स्वीकारे क्षणिकत्वसंशयोऽर्थात् वस्तु सकलं क्षणिकं न वेति संशयः न सम्भवति। यतः वस्तुसकलस्य क्षणिकत्वाभावनिश्चयः [ अर्थात् वस्तु सकलं क्षणिकं नेति निश्चयः ] क्षणिकत्वसंशयस्य प्रतिबन्धकः। तथा च प्रत्यभिज्ञया वस्तुनः क्षणिकत्व-संशयस्य निरासे सति पूर्वदृष्टवस्तुना सह इदानीं दृष्टवस्तुनः अभेदः ज्ञापितो भवति। एवं च प्रत्यभिज्ञैव वस्तुनः स्थैर्य्यस्य [दीर्घकालस्थायित्वस्य] साधकं प्रमाणम्। अर्थात् यथार्थप्रत्यभिज्ञावशादेव वस्तुनः सकलस्य दीर्घकालस्थायित्वं स्वीकरणीयम् ॥ १६॥

परन्तु एतदपि न समीचीनम्—यदि तदेवेदमिति एतादृशी सन्दिग्धप्रत्यभिज्ञा सम्भवेत्, तदा एवं वक्तुं शक्यते, किन्तु "तदेवेदमिति" या प्रत्यभिज्ञा भवति इयं यथार्था न वेति? एतादृशप्रत्यभिज्ञाविषयकसंशयस्य निरासकं किमपि नास्ति, अपि तु वस्तु सकलं क्षणिकं न वेति एतादृशसंशयवशात् प्रत्यभिज्ञाविषयकसंशय एव [ अर्थात् तदेवेदमिति यस्तावन्निश्चयः स यथार्थो न वेति संशय एव ] सम्भवति। यतः— वस्तुनः सकलस्य क्षणिकत्वे प्रतिक्षणं भिन्नत्वे वा तदेवेदमिति एतादृशी यथार्थप्रत्यभिज्ञा भवितुं नार्हति, वस्तुनः क्षणिकत्वसंशयः प्रत्यभिज्ञामपि सन्दिग्धां करोति। यदि प्रत्यभिज्ञा सन्दिग्धा तदा स्वयं सन्दिग्धा साऽन्यत् सिद्धं कर्तुं कथं शक्नोति? इति प्रत्यभिज्ञया वस्तुनः स्थैर्यं न सिद्ध्यति।

स्थैर्यदृष्ट्योर्न सन्देहो न प्रमाण्ये विरोधतः।
एकतानिर्णयो येन क्षणे तेन स्थिरे मतः ॥ १७॥

वस्तुनः स्थैर्य्ये ( अर्थात् प्रत्यभिज्ञायां ) संशयो नास्ति, विरोधहेतु-प्रामाण्यपदार्थेऽपि संशयो नास्ति। प्रमाणेन क्षणिकवस्तुनि एकत्वनिश्चयः भवति स्थिरपक्षेऽपि तेनैव प्रमाणेनैव एकत्वनिश्चयो भवितुमर्हति।

वस्तुनः स्थिरत्वे संशयो नास्ति। अर्थात् प्रत्यभिज्ञयैव वस्तुनः स्थिरत्वसंशयस्य, अर्थात् वस्तु स्थिरं दीर्घकालस्थायि न वा? इत्यादिसंशयस्य, निरासो भवितुमर्हति। प्रत्यभिज्ञया इदानीं दृष्टवस्तुनः एव तदानीं दृष्टवस्तुनाऽभेदः ज्ञापितो भवति, अन्यथा प्रत्यभिज्ञा नैव स्यात्, इदानीन्तनस्य एवं तदानीन्तनस्य वस्तुनोऽभिन्नत्वे एव वस्तुनः दीर्घकालस्थायित्वं निश्चितं भवति। तथा च प्रत्यभिज्ञा वस्तुनः अभेदस्य एकत्वस्य ज्ञापिका इति प्रत्यभिज्ञया वस्तुनः स्थिरत्वनिश्चयः सम्भवति। स्थिरत्वनिश्चयः स्थिरत्वसंशयस्य प्रतिबन्धकः इति प्रत्यभिज्ञया स्थिरत्वसंशयस्य निरासः अवश्यम्भावी। अहमनेकधा "तदेवेदम् वस्तु" इयं सैव

व्यक्तिः" इत्यादिरूपेण वस्तुनः व्यवहारं करोमि, एतादृशव्यवहारस्यासत्यत्वं नास्ति, प्रत्यभिज्ञैवैतादृशव्यवहारमूलभूता। वस्तुनः दीर्घकालस्थायित्वे एव यथार्थप्रत्यभिज्ञायाः सम्भवादेतादृशयथार्थव्यवहारः सम्भवति। वस्तुनः दीर्घकालस्थायित्वाभावे अर्थात् प्रतिक्षणं वस्तुनः भेदस्वीकारे यथार्थप्रत्यभिज्ञा नैव सम्भवति। इदानीं दृष्टवस्तुनः एवं तदानीं दृष्टवस्तुनः भेदसद्भावे यथार्थ-प्रत्यभिज्ञा नैव सम्भवति, एकस्य पुरुषस्य दर्शनेन भवति अयं स एव पुरुषः। तथा च यथार्थप्रत्यभिज्ञया इदानीं दृष्टवस्तुना सह पूर्वदृष्टवस्तुनोऽभेद एव सिद्ध्यति। यद्यपि कदाचित् भिन्नं भिन्नं वस्तु विषयं कृत्वापि प्रत्यभिज्ञा भवति, यथा—वैद्यः कथयति तदेवौषधम् दत्तम्; एतादृशस्थले पूर्वं तदेवौषध-मनन्तरमपि प्रदत्तमेकमभिन्नमौषधं नैव वर्तते, यतः—तदौषधन्तु पूर्वमेव भक्षितम् तथापि एकजातीयौषधवशादेव एतादृशी प्रत्यभिज्ञा जायते। तथा च पूर्ववस्तुनः एवमिदानीन्तनवस्तुनश्च भेदे सत्यपि यद्येकजातीयं भवेदथ वोभयोरतिशयसादृश्यम्भवेत् तदा यथार्थप्रत्यभिज्ञा जायते। अस्यां स्थितौ यथार्थ-प्रत्यभिज्ञा जायते इति वस्तु वस्तुतः अभिन्नं दीर्घकालस्थायि इत्यादिनिःसन्दिग्धस्वरूपेण निश्चितं भवितुं नार्हति। किन्त्वेतदपि वक्तुं न शक्यते, यतः—कदाचित्साजात्यं सादृश्यम्वा लक्ष्यं कृत्वा कस्यापि वस्तुनः प्रत्यभिज्ञासद्भावेऽपि सदैवैतादृशमेव स्यादिति नियमो नार्हति। वस्तुनः सकलस्य क्षणिकत्वसिद्धान्ते यद्यपि एवं वक्तुं शक्यते, किन्तु क्षणिकत्वसाधकस्य प्रमाणस्याभावात् एवं वक्तुं न शक्यते, विशेषतः क्षणभङ्गवादिनः जातिं सादृश्यादिकञ्चातिरिक्तं पदार्थं नाङ्गीकुर्वन्ति, तथा च एकं धर्मं स्वीकृत्यान्यत् वस्तु तदेवेदम् वस्तु इति तन्मते वक्तुं न शक्यते, घटत्वं जातिः घटस्येतरभेदमात्रम् एवं गवये गोसादृश्यं गोः गवयस्येतरभेदा-तिरिक्तं किमप्यन्यत् नास्ति। अयञ्चेतरभेदः तद्-तद्व्यक्तिसकलस्यैव स्वरूपभूतः। तथा च क्षणभङ्गवादिनां मते एकं धर्मं गृहीत्वा अपरस्य यथार्थज्ञानं न सम्भवति। पूर्वपक्षे प्रत्यभिज्ञामादाय यत् संशयस्यारोपं कृतवान् तदपि नैव संगतम् यतः—प्रत्यभिज्ञाया अनुव्यवसायेनैव ( तदेवेदं वस्तु इति जानामि एतादृशमानसनिश्चयेन ) प्रत्यभिज्ञाविषयकसंशयस्य ( अर्थात् इदं तदेव वस्तु इति यज्ज्ञानं जातं तद् यथार्थं न वा एतादृशसंशयस्य ) निरासो जायते, तथा च निःसन्दिग्धप्रत्यभिज्ञैव वस्तुनः स्थैर्य्यसाधकं प्रमाणम्। यद्युच्यते—"तदेवेदं वस्तु इति साक्षात् जानामि" इत्याकारकमनुव्यवसायं प्रमाणं न वा ? एतादृशसंशयस्य निरासकं किमपि नास्तीति प्रत्यभिज्ञा निःसन्दिग्धा भवितुं नार्हति इति प्रत्यभिज्ञया वस्तुनः स्थैर्य्यसिद्धिर्न भवितुमर्हति। इदमपि न समीचीनम्। यतः—एतादृशानुव्यवसायस्य प्रामाण्ये संशयस्वीकारे विरोधो जायते।

अयमाशयः—मम संशयो जायते, एतादृशसंशयविषयकानुव्यवसायेनैव प्रकृतसंशयः सिद्ध्यति। अस्यां स्थितौ एतादृशसंशयविषयकानुव्यवसायस्य प्रामाण्ये संशयस्वीकारे प्रकृत-संशयः असिद्धः स्यात्, अर्थात् "मम संशयो जायते" एतादृशं ज्ञानं यदि संशयास्पदं भवेत् तदा मम संशयो जायते न वा? एतादृशसंशयः उपस्थितो भवेत्, प्रकृतसंशयः निश्चितो भवितुं नार्हति। किञ्च प्रत्यभिज्ञायाः प्रामाण्ये संशयस्वीकारे क्षणभङ्गवादिनां मते प्रमाणेन एकस्मिन्नेव क्षणे एकस्मिन्नेव वस्तुनि नानात्वनिश्चयो न भवेदपि त्वेकत्व-निश्चयो भवेत्, तेनैव प्रमाणेन स्थिरपक्षेऽपि एकस्मिन्नेव वस्तुनि समयभेदे नानात्व-निश्चयो न भवेदपि तु एकत्वस्य निश्चयो भवेत्। अयमाशयः—एकत्र विरुद्धधर्म-द्वयस्य समावेश-प्रसङ्गोपस्थितौ [ अर्थात् धर्म्याख्यप्रतीयमानवस्तुनः एकत्वस्वीकारे यदि तस्मिन् विरुद्धधर्मद्वयस्थितेः प्रसङ्ग उपस्थितो भवति तदैव ] धर्मिणः नानात्वस्वीकारः आवश्यकः स्यात्, गोः एवमश्वस्यैकत्वस्वीकारे एकत्र गोत्वस्य एवमश्वत्वस्य स्वरूपतः विरुद्धस्य धर्मद्वयस्य प्रसङ्गः उपस्थितो भवति, तथा च गौरश्वश्च नैवैकः इत्येव स्वीकर्तव्यः। क्षणिकवस्तुनि विरुद्धधर्मद्वयस्य प्रसङ्गसम्भावना नास्तीति वस्तुनः एकत्व-निश्चयेन तस्मिन्नेव क्षणे तस्य वस्तुनः एकमखण्डरूपत्वं निश्चितं भवति, तथा च क्षण-भङ्गवादिनां मते विरुद्धधर्मद्वयस्य प्रसङ्गसम्भावनायाः अभावे, तस्मिन्नेव क्षणे तस्यैव वस्तुनः एकत्वनिश्चयस्य स्वतः प्रामाण्यं स्वीकर्तव्यम्। अन्यथा तस्मिन्नेव क्षणे तस्यैव वस्तुनः एकत्वनिश्चयस्य प्रमाण्ये संशयस्वीकारे वस्तुनि एकत्वसिद्धिर्न भवेत्। एवं स्थिरपक्षेऽपि नानात्वस्य हेतुभूतविरुद्धधर्मद्वयप्रसङ्गसम्भावनाया सर्वथाभावे तस्यैव वस्तुनः एकत्वनिश्चयेन वस्तुनि एकत्वसिद्धौ न किमपि बाधकम्, वस्तु स्थिरं दीर्घका-लस्थायि इति स्वीकारकरणेऽपि विरुद्धधर्मद्वयस्य प्रसङ्गो न भवितुमर्हति। किञ्च प्रामाण्यपदार्थेऽपि संशयं स्वीकर्तुं न शक्नुवन्ति, यतः—तथा सति प्रमाणपदार्थस्या-निश्चितत्वात् प्रामाण्यस्य संशयो न भवेत्, अयं घटो न वा इत्याकारकः संशयः सञ्जातः किन्तु घटवस्तु कीदृशमिति यदि निश्चितरूपेण तव ज्ञानं नास्ति तदा वस्तु विलोक्य संशयो भवितुं नार्हति, अयं घटो न वेति, अस्यां स्थितौ प्रामाण्यपदार्थस्य निश्चयाभावे प्रामाण्यपदार्थस्य संशयः [अर्थात् प्रामाण्यपदार्थोऽस्ति न वा? इत्यादिसंशयः] भवितुं नार्हति इति प्रामाण्यस्य संशयकरणादेव प्रामाण्यपदार्थः स्वीकृतो भवेत्। तथा च प्रामाण्यनाम्ना कश्चित् पदार्थो नास्ति इत्यपि वक्तुं न शक्यते ॥१७॥

पूर्वपूर्व-विचारेण परलोकस्य हेतुभूतादृष्टस्य कारणत्वस्वीकारेऽपि आशङ्का भवेत्, कारणस्य धर्मः कारणता स्वाभाविकः औपाधिको वा? वस्तुनः धर्मो द्विविधः, केचन

स्वाभाविकधर्माः, यथा घटस्य घटत्वम् । केचन औपाधिकधर्माः ये हि समयविशेषे एव वस्तुनः धर्माः भवन्ति । यथा—घटस्य रक्तं रूपम्, घटः पूर्वं श्यामवर्णः तिष्ठति अग्निदाहाद्रक्तो भवति । तथा च कारणस्य धर्मः कारणता स्वाभाविकः औपाधिको वेति संशयोऽपि स्वाभाविक एव । कारणता यदि कारणस्य स्वाभाविकः धर्मस्तदा चिरनीलवस्तुनः नीलरूपं यथा समुदायदेशे सकलसमये सकलस्य कृते समानरूपमेव [ अर्थात् नीलमेव ] प्रतिभाति, तथैव कारणस्य धर्मः कारणत्वमपि सकलदेशे सकलकाले सकलस्य कृते समानरूपेणैव प्रतिभातं स्यात् । यदि तदेवास्ति इत्युच्यते तदा प्रत्येक-कार्यस्य कारणता सकलकार्यस्य यत्कारणं तस्य धर्म इति व्यवहृतं भवेत् । किन्तु तथा न भवति घटकारणभूतस्य दण्डस्य पटकारणरूपेण व्यवहारो न भवति । यदि कारणता कारणस्य औपाधिकधर्म इति स्वीक्रियते अर्थात् समयविशेषे एव दण्डे घटकारणता तिष्ठतीत्युच्यते । तथा सति कारणतायाः निर्वाहकः उपाधिः [ अर्थात् दण्डे या घटस्य निमित्तकारणता समयविशेषे तिष्ठतीत्यस्य निर्वाहकः ] औपाधिकः स्वाभाविको वा इति स्थिरीकरणीयम् । किन्तु इदं सुस्थिरं भवितुं नार्हति यतः—कारणतानिर्वाहको-पाधिर्यदि स्वाभाविकः स्यात् तदा स एव पूर्वदोषः जायते, यदि औपाधिकः स्वीक्रियते [अर्थात् कारणतायाः निर्वाहकोपाधिः एतदुपाधिनिर्वाहकश्चोपाधिः स्वीक्रियते] एवं रूपेण परम्पराक्रमे उपाधिस्वीकारस्यावसानं नैव स्यादिति अनवस्था दोषो जायते । अपि च कारणतायाः कारणस्य स्वाभाविकधर्मत्वमिति स्वीकारपक्षेऽन्येऽपि दोषाः सन्ति । यदि कारणता कारणस्य स्वभाविको धर्मः, तदा करणीभूतवस्तुनः उत्पत्तिकाल एव कार्योत्पत्तेः प्रसङ्गः प्राप्नोति, किन्तु सर्वदा कारणीभूतवस्तुनः उत्पत्तिकाले एव कार्यं न जायते, कदाचित् विलम्बेनापि कार्योत्पत्तिर्दृश्यते । अयमाशयः—कार्योत्पादनोपयुक्तसामर्थ्यमेव कारणस्य कारणत्वम्, एतत्सामर्थ्यम् कारणीभूतवस्तुनः स्वभावसिद्धमिति स्वीकारे कारणीभूतवस्तुनः उत्पत्तिमात्रादेव कार्योत्पत्तौ बाधा नैव प्राप्नोति, किन्तु सकलसमये कारणवस्तुजन्ममात्रादेव कार्यं न जायते इति कारणताख्यः कोऽपि पदार्थः नास्ति इति स्वीकर्तव्यम् । तथा सति कारणस्य [ कारणताविशिष्टस्य ] असिद्धिरेव स्वीकरणीया इति परलोकस्य कारणरूपेण अदृष्टस्य सिद्धिर्न स्यात् एवमदृष्टस्याधिष्ठातृ-रूपेणेश्वरस्यापि सिद्धिर्न भवेत् ।

हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत् ।
तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥१८॥

कार्योत्पादनस्योपयुक्तसामर्थ्यं कारणस्य धर्मो वा कारणता नास्ति। कार्यस्य नियतपूर्वसत्ता नियतपूर्ववर्तित्वम्वा कारणत्वम्। कार्याव्यवहितप्राक्क्षणे कार्याधिकरणे कारणीभूतवस्तुनः नियतावस्थानं विना कार्यं न जायते इति कारणताया अभावे कस्यापि कार्यस्य सम्भवो नास्ति। सद्रूपेण प्रत्यक्षसिद्धस्य नीलपीतघटपटप्रभृतिसकलवस्तुनः तुच्छतायां कार्यसमूहस्यापि आकाशकुसुमायमानता स्यात्। अयमाशयः—नीलपीतपट-घटप्रभृतिकार्यवस्तुसकलस्य अस्तित्वे ( पारमार्थिकतायाम् ) कारणस्य अपेक्षा अवश्यमेव स्वीकरणीया अन्यथा एतत् कादाचित्कं न भवेदपि तु सदातनमेव स्यात्। अयमपेक्षा-पदार्थः कारणस्यान्वयं ( तत्सत्त्वे तत्सत्त्वम् ) व्यतिरेकं ( तदसत्त्वे तदसत्त्वम् ) विना अन्यत् किमपि नास्ति। अतः कार्ये कारणस्यापेक्षास्वीकारे कारणस्य धर्मः कारणत्वम्वा ( अर्थात् कार्याव्यवहितपूर्वक्षणे कार्याधिकरणे कारणीभूतवस्तुनः नियतावस्थितिः ) अवश्यमेव स्वीकार्य्यम्। अस्यां स्थितौ कारणीभूतवस्तुनः सत्यत्वमेवं कार्ये तस्यापेक्षा वर्तते, किन्तु तद्धर्मः कारणता किमपि नास्ति ( अर्थात् कारणीभूतवस्तुकार्यस्याव्यव-हितपूर्वक्षणे कार्यस्याधिकरणे अवस्थितं न भवति ( अर्थात् करणीभूतवस्तुनः एतादृशी स्थितिः मिथ्या आकाशकुसुमायमाना ) इति भवितुं नार्हति इति नीलपीतादिकार्यवस्तु-सकलस्य अस्तित्वं पारमार्थिकतां स्वीकृत्य कारणधर्मकारणताया अस्तित्वस्य पारमार्थिक-ताया वा अस्वीकृतौ अन्ततः कारणत्वविशिष्टस्य अर्थात् कारणास्तित्वस्य पारमार्थिकताया वा अस्वीकारः स्यात्। तथा सति प्रत्यक्षसिद्धकार्यवस्तुसकलस्य पारमार्थिकता-स्वीकर्तुः कूर्मलोमनिर्मितवस्त्रस्य पारमार्थिकतास्वीकर्तुरिवोपहासः स्यात्। नीलपीता-दिकं पूर्वपक्षकारिणा स्वीकृतम् अन्यथा नीलपीतादिवस्तुसकलस्य नीलत्वादेरिव कारणस्य कारणत्वं स्वाभाविकमौपाधिकम्वेति आपत्तिर्न भवेत्, किन्तु कारणतास्वीकाराभावे नीलादिसकलस्यापि पारमार्थिकता अस्वीकृता भवेत्। इति नीलपीतादिवस्तुसकलस्येव कारणतापि उभयवादिसिद्धैवेति कारणता नास्ति इति वक्तुं न शक्यते। किं च कस्यापि कार्यस्योत्पत्तिरेकेन कारणेन न जायते प्रत्येककार्यस्यैव एकाधिककारणमस्तीति स्वीकर्तव्यमेव अन्यथा वस्तुमात्रस्यैव क्षणिकत्वं वक्तव्यम्। वस्तुसकलं क्षणिकं नास्ति वस्तुसकलस्य दीर्घकालस्थायित्वेऽपि वस्तुनः स्थितिकाले सर्वदा कार्योत्पत्तिर्न भवति एतदर्थं तत्तत्कार्यस्य कारणसकलस्य परस्परं सहकारित्वं ( अर्थात् तत्कार्यस्याधिकरणे तत्कार्यस्य कारणसकलस्य च सन्निधानवशतः) स्वीकर्तव्यम्। यथा—घटः एकं कार्यम्, मृत्तिकासलिलप्रभृतयः घटवस्तुनः कार्यस्य कारणम्। यस्मिन्नधिकरणे घट उत्पद्यते तस्मिन्नधिकरणे एतत्कारणसमुदयस्य मेलनाभावे घटस्वरूपं कार्यं न स्यात्, अर्थात्

घटस्वरूपकार्यस्याधिकरणे चक्रमृत्तिकादिकस्यापि एकजातीयस्य वस्तुनः मेलनं न स्यात् तदा घटस्वरूपकार्यं न स्यात् इति प्रत्यक्षसिद्धम्। अस्यां स्थितौ मृत्तिकादिरूपस्य कस्यापि एकजातीयस्य वस्तुनः स्थितिकाले सर्वदा घटस्याधिकरणे अन्यान्यकारणसकलस्य मेलनं न जायते इति मृत्तिकादिकारणसकलं दीर्घकालस्थायीति स्वीकारेऽपि मृत्तिकादेः स्थितिकाले सर्वदा घटस्य उत्पत्तेः प्रसङ्गो न जायते न च भवितुमर्हति।

नीलत्वपीतत्वादिरूपेण नीलपीतवस्तुसकलं सर्वसाधारणमितिकारणस्वरूपेण कारणस्य सर्वसाधारणस्य या आपत्तिः प्रदर्शिता तद्विषये साधारण्यपदार्थः कः? साधारणकर्तृकवस्तुनः तथा व्यवहार एव अर्थात् वस्तु येन येन धर्मेण आक्रान्तम् तेन तेन धर्मेणैव सकलदेशे सकलसमये समुदायकर्तृकव्यवहृतभवनमेव साधारण्यम्। अस्यां स्थितौ नीलवर्णं वस्तु येन रूपेण सकलदेशे सकलसमये समुदायकर्तृकनीलत्वरूपे एव ( अर्थान्नीलमुक्त्वा एव ) व्यवहृतं भवति तथैव घटपटप्रभृतिकार्यस्य करणीभूतमृत्तिकादिकमपि सकलदेशे सकलसमये समुदायकर्तृकतत्तत्कार्यस्य कारणस्वरूपेणैव ( अर्थात् तत्तत्कार्यस्य कारणमुक्त्वैव ) व्यवहृतं भवति। नीलवर्णं वस्तु यथा पीतमिति व्यवहृतं न भवति तथैव घटस्य कारणीभूतमृत्तिकादिकमपि पटादेः कारणमिति कथयित्वा व्यवहृतं न भवति। तथैव घटस्य कारणीभूतमृत्तिकादिकमपि घटादेः कारणमिति कथयित्वा व्यवहृतं न भवति। तथा च कारणस्य एतादृशसाधारण्यस्वीकारे न कोऽपि दोषः।

जीवः स्वकर्मजनितादृष्टवशादेव कर्मफलभोगं करोति। एकस्यादृष्टमूले अपरस्य भोगो न भवति। तथा च तत्तज्जीवस्य कर्मजनितादृष्टं तत्तज्जीवस्यैव समवेतं भवति। एवम् एतस्मादेव कारणात् जीवभेदे विभिन्नप्रकारस्य भोगस्यानुपपत्तिर्न भवति इति अवश्यं स्वीकर्तव्यम्। अन्यथा अकृतस्याभ्यागमः ( अन्यस्य कर्मणा अन्यस्य फलप्राप्तिः ) स्यात्। तथा च तत्तज्जीवस्य स्वस्वकर्मजनितादृष्टस्वरूपकार्यं प्रति तत्तज्जीवस्य समयादिकं कारणमिति स्वीकर्तव्यम्। किमपि वस्तु कस्यापि कार्यस्य कारणम् इत्यत्र एतत्कार्ये एतस्य वस्तुनः अन्वयव्यतिरेक आवश्यकः। अन्वय-व्यतिरेक एव कारणभावनिर्वाहकः। अस्यां स्थितौ अदृष्टस्वरूपकार्ये आत्मनः अन्वयव्यतिरेकोऽवश्यमेव स्वीकार्यः। किन्त्वेतन्न सम्भवति, यतः—आत्मनोऽन्वयः अर्थात् आत्मनः सत्तायां पारमार्थिकतायामदृष्टस्य सत्ता पारमार्थिकता वा सम्भाव्यते किन्तु आत्मनः कालकृतः देशकृतः व्यतिरेकः असत्ता वा ( अर्थात् अभावः ) सम्भावितो नास्ति इति ( अर्थात् आत्मा कस्मिन्नपि काले कस्मिन्नपि देशे नास्तीति वक्तुं न शक्यते ) आत्मनः

व्यापकत्वाचस्याभावो न सम्भाव्यते। आत्मा सदातन इति आत्मनः कालकृत-व्यतिरेकः ( अर्थात् कस्मिंश्चित् काले नास्तीति ) सम्भवः नास्ति. एवमात्मा विभुः ( व्यापकः ) इति आत्मनः देशकृतव्यतिरेकः ( अर्थात् कस्मिंश्चिद्देशे नास्ति इति ) सम्भवो न। तथा च आत्मा कस्यापि कार्यस्य कारणमपि न, आत्मा अकारणः आत्मा कस्यापि कार्यस्योत्पादने नैव समर्थः, तथा च अदृष्टस्वरूपकार्यमसम्भवम् इति असम्भावितस्य अदृष्टस्याधिष्ठातृत्वेनेश्वरसिद्धिः न भवितुमर्हति।

पूर्वभावो हि हेतुत्वं मीयते येन केनचित्।
व्यापकस्यापि नित्यस्य धर्म्मिधीरन्यथा न हि ॥१९॥

कार्यनियतपूर्ववर्तित्वमेव कारणत्वं व्यापकस्य नित्यस्य आत्मनः कारणता केनापि प्रमाणेनैवावगन्तव्या, अन्यथात्मनः सिद्धिर्न भवितुमर्हति व्यतिरेकः कारणतायाः सम्पादक इति स्वीकारे कथितापत्तिः कस्मिन्नपि मते न सम्भवति, किन्तु सर्वत्र कारणता व्यतिरेकेण नियम्या न। सम्भावितस्थले एव व्यतिरेकः कारणतायाः सम्पादको भवितुमर्हति। परन्तु कारणरूपेणाभिमतं वस्तु यदि कार्यस्यान्यथासिद्धिविशिष्टो न भवेत्। अर्थात् कारणरूपेणाभिमतस्य वस्तुनः अपेक्षां विना अन्येन कार्योत्पत्तिर्न भवेत्, तदा कार्यस्याव्यवहितपूर्वक्षणे कार्याधिकरणे एतादृशवस्तुनः नियतवासः अवस्थितिरेव वा कारणस्य धर्मः ( कारणता ) इति सर्वत्र अन्वय एव कारणतायाः सम्पादकः। यथा मृत्तिकायाः अपेक्षां विना दण्डचक्रादिकेन घटस्योत्पत्तिर्नैव सम्भवतीति घटस्वरूपकार्ये मृत्तिका अन्यथासिद्धिविशिष्टो न एवं मृत्तिका घटस्वरूपकार्यस्याव्यवहितपूर्वक्षणे घटस्वरूपकार्यस्याधिकरणे नियतावस्थिता भवति इति मृत्तिकाया एतादृशी अवस्थितिरेव मृत्तिकास्वरूपकारणस्य धर्मः कारणत्वम्वा। किमपि वस्तु कस्यापि कार्यस्य कारणं भवेत्तदा एतस्य वस्तुनः व्यतिरेकोऽसिद्धो न वेति अवलोकनस्य आवश्यकता नास्ति। अदृष्टस्वरूपकार्यस्याधिकारणे आत्मनि अदृष्टस्वरूपकार्यस्याव्यवहितपूर्वक्षणे आत्मा अभेदसम्बन्धेन नियतावस्थितः एवमन्यथासिद्धिविशिष्टो न अर्थात् आत्मनोऽपेक्षां विना अदृष्टस्योत्पत्तिर्न सम्भवति इति आत्मनि अदृष्टस्वरूपकार्यस्य कारणत्वमवश्यमेव स्वीकरणीयम्।

नित्यस्य विभोः चेतनस्य आत्मन अवगतौ अनुमानप्रमाणस्य साहाय्यमेवापेक्षितम्, एवञ्च ज्ञानादृष्टेच्छाप्रभृतिकार्यस्य कारणरूपेणैव आत्मनोऽनुमानं सम्भवति। आत्मनोऽनुमानप्रकारश्चेत्थम्—समवेतकार्यं प्रति द्रव्यत्वरूपेण द्रव्यं कारणम् इच्छादृष्टा-

दिकमपि समवेतकार्यमिति तेषां कारणं द्रव्यम्, अर्थात् एतत्सकलकार्यस्याधिकरणे आत्मनि अव्यवहितपूर्वक्षणे द्रव्यस्थितिरावश्यिका पृथिव्याद्यष्टद्रव्ये इच्छादिसमवेतकार्यस्याधिकरणत्वाभावेऽपि ज्ञानेच्छाप्रभृतयः समवेतकार्यं भवतीति निश्चितमिति अदृष्टादिकसमवेतकार्यस्य कारणरूपेण पृथिव्याद्यष्टद्रव्यातिरिक्तमेकं द्रव्यं स्वीकर्तव्यम् स एव आत्मा । अपि च यद्वस्तु प्रसिद्धं नास्ति अलीकमेतादृशं किमपि कल्पनायाः विषयो न भवितुमर्हति, आत्मनः अप्रसिद्धत्वे आत्मा अस्ति न वेति किमपि वक्तुं न शक्यते, आत्मा कारणं नास्तीति कथनेनैवात्मा स्वीकर्तव्यः । कथितरूपेणानुमानसाहाय्येनैव आत्म अदृष्टप्रभृतिकार्यस्य कारणरूपत्वेनैव प्रसिद्धो भवति इति आत्मा कारणं नास्ति न च भवितुमर्हति इति कथनमसङ्गतम् ।

अन्यच्च—नित्यस्य विभोरात्मनः कालकृत एवं देशकृतः व्यतिरेको नास्तीति कारणं भवितुं नार्हति इति यदुक्तन्तदपि न सङ्गतम् । यतः कारणतायाः व्यावर्तकेऽवच्छेदके सम्बन्धे वा कार्यस्य व्यतिरेकप्रयुक्त एव कार्यतायाः व्यावर्तके अवच्छेदकसम्बन्धे वा कार्यस्य व्यतिरेकः स्वीकर्तव्यः । किमपि कार्यं प्रति कस्यापि वस्तुनः कारणत्वे एतत्कार्याधिकरणे केनापि विशेषसम्बन्धेन स्थितिरेव कारणम् । अयं विशेषसम्बन्ध एव कारणतायाः व्यावर्तकः अवच्छेदकसम्बन्धो वा एवं कार्यं येन सम्बन्धेन कस्मिन्नपि आश्रये अवस्थितं सदुत्पद्यते स एव कार्यतायाः व्यावर्तकः अवच्छेदकसम्बन्धो वा । यथा—समवायसम्बन्धेन पटस्वरूपकार्याधिकरणे तन्तौ तन्तुः तादात्म्येन अभेदेन सम्बन्धेन वा पटस्य कारणं भवति । अर्थात् तन्तुः तन्तुरूपेणैव पटस्य कारणम् इति तादात्म्यसम्बन्धोऽभेदसम्बन्ध एव वा तन्तुगतकारणताया व्यावर्तकोऽवच्छेदकसम्बन्धो वा, पटस्वरूपं कार्यं तन्तौ समवायसम्बन्धेनावस्थितं भवति इति पटगतकार्यताया अवच्छेदकसम्बन्धः समवायः तथैव अदृष्टप्रभृतिसमवेतकार्यस्याधिकरणे आत्मनि आत्मा तादात्म्येन अभेदेन वा स्थितः सन् अदृष्टादिकार्यमुत्पादयति इति आत्मगतैतत्सकलकार्यस्य कारणताया अवच्छेदकः सम्बन्धः तादात्म्यम् अभेदो वा, एवमदृष्टादिकार्यमात्मनि समवायसम्बन्धेनावस्थितं सत् एतत्सकलकार्यगतकार्यताया अवच्छेदकः सम्बन्धः समवायः । अस्यां स्थितौ अदृष्टादिकं कार्यस्यात्मगतकारणताया अवच्छेदकतादात्म्यसम्बन्धेन आत्मनो व्यतिरेकप्रयुक्तैतत्सकलकार्यगतकार्यताया अवच्छेदकसमवायसम्बन्धे एतत्सकलकार्यस्य व्यतिरेकः अप्रसिद्धो नास्ति, अर्थात् यो हि आत्मा नास्ति, तत्र समवायसम्बन्धेनादृष्टादिकं कार्यं न जायत इति वक्तुं शक्यते । तथा च अन्वयव्यतिरेकाभ्यामपि आत्मनः कारणता सिद्ध्यति, आत्मनः कालकृतः एवं देशकृतः व्यतिरेको न सम्भवतीति आत्मा

न कारणमिति कथनमयौक्तिकम् । वस्तुनः संसर्गाभावो यद्यपि कालकृत एवं देशकृतो भवति तथापि वस्तुनः भेदः एतादृशो नास्ति, कस्मिन्नपि काले किम्वा कस्मिन्नपि देशे घटः पटाद्भिन्न इति न भवति अपि तु सर्वदा सकलदेशे एव घटः पटाद्भिन्नः घटे पटस्य भेदः कालकृतः देशकृतो वा नास्ति ।

इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात् प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात् साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥

# सौरभविवृत्याद्यनुसारिकुसुमाञ्जलिसारसङ्कलनम्

## द्वितीयः स्तबकः

प्रथमविप्रतिपत्तिनिरासकैः कारणैः प्रपञ्चवैचित्र्यनिर्वाहकस्यालोकप्रत्यक्षस्यादृष्टस्य सिद्धौ सकललोकातिशायी सर्वज्ञः ईश्वरः तर्कपुरस्सरमनुमितः। अदृष्टस्य साधनत्वमवश्यमङ्गीकर्त्तव्यम् अन्यथा अदृष्टस्य अनुत्पादप्रसङ्गः स्यात्। विश्ववृत्तेरन्यथानुपपत्त्यैवादृष्टमिव तत्साधनमपि सामान्यतो ज्ञातम् किन्तु एतत्फलजनकादृष्टसाधनकमिदं कर्मेति विशिष्य तत्साधनकत्वेन नास्माभिः द्रष्टुं शक्यते। विशिष्य तत्साधनकर्मादर्शनेन तदनुष्ठानरूपः कायिकः तदवबोधिवाक्यात्मकवेदरचनारूपः वाचिकश्च व्यवहारो न सम्भवति। अतोऽदृष्टसाधनम्, अभिज्ञकृतिविज्ञेयम्, अन्यागम्यत्वादित्यस्मदनुष्ठेयादृष्टसाधनावबोधिवाक्यवक्तृतयाऽदृष्टबलादीश्वरसिद्धिः।

इदानीं द्वितीयां मीमांसकविप्रतिपत्तिमुत्थापयति—न अदृष्टबलादीश्वरसिद्धिः। तथा हि ईश्वरस्याभावेऽपि क्षतिः नास्ति। जीवः अनादिकालतः स्वकर्मजनितादृष्टानुरूपं फलमनुभवति अनन्तकालपर्यन्तञ्चानुभविष्यति यतः सृष्टेरारम्भः अन्तो वा नास्ति। एकस्मिन् समये सकलस्य ब्रह्माण्डस्य विनाशः असम्भव इति महाप्रलयः असिद्ध एव। अनादिकालात्परम्पराक्रमेण सृष्टिप्रवाहः प्रचलति। सृष्टिकर्त्तुरीश्वरस्य स्वीकारः अनावश्यक एव। संसारपाशबद्धस्य जीवस्य मुक्तयेऽपि श्रवणमननार्थम् ईश्वरस्य स्वीकारः निष्प्रयोजनक एव। स्वर्गादिफलप्राप्तिरेव जीवस्य चरमं परमं च प्रयोजनम्। स्वर्गादिफलप्राप्तिश्च वेदविहितयज्ञादिकर्म्मणां सम्यगनुष्ठानादेव जायते। वेद एव यज्ञादिकर्म्मणः साफल्ये प्रमाणम्। अश्वमेघयज्ञसम्पादनानन्तरं स्वर्गं गत्वा ततः प्रतिनिवृत्य यज्ञवशात् स्वर्गं प्राप्तवान् इति प्रमाणयितुं न कोऽपि क्षमतेऽपि तु वेद एव तत्र प्रमाणम्। वेदः अपौरुषेयः न तु केनापि रचितः। वेदवाक्यस्य अजन्यत्वादेवाविनाशित्वम्। वर्णसमष्टिस्वरूपस्य वेदस्य भावपदार्थत्वम्। भावपदार्थश्च अजन्यः अर्थात् उत्पत्तिहीनः यथा आकाशादिकम्। अविनाशित्वादेव च वेदस्य नित्यत्वम् नित्यत्वाच्च निर्दोषत्वम्। यस्य वाक्यस्य कश्चिद्वक्ता वर्तते तद्वाक्यमवश्यमेव वक्तुः भ्रमप्रमादादिदोषदुष्टम्। वक्ता भ्रमात्मकं ज्ञानमादाय यदि वाक्यप्रयोगं करोति तदावश्यमेव श्रोतुरपि भ्रमात्मकज्ञानमेव स्यात्। वेदवाक्यमजन्यमविनाशि एतस्य न

कोऽपि वक्ता वर्तते, अतः वेदः वक्तुर्भ्रमप्रमादादिदोषदुष्टोऽपि न भवितुमर्हति इति वेदवाक्यात् मिथ्यात्मकं ज्ञानं न सम्भवति। निर्दुष्टत्वादेव प्रमाणम्। शिष्टाः वेदोक्तकर्मणामनुष्ठानं कुर्वन्ति इति वेदस्य प्रामाण्यं निश्चितं भवति, वेदप्रामाण्ये संशयो न भवति। एतादृशावस्थायां विप्रतिपत्तिरियं जायते—वेदः पौरुषेयो न वा ?

अत्र एष सन्देहो भवति यत् अकारादिवर्णसमूहस्य उत्पत्तिर्विनाशश्च प्रत्यक्षसिद्ध एव प्रत्यक्षसिद्धस्य च वस्तुनः अपलापो नैव भवितुमर्हति अतः वर्णानामनित्यत्वं स्वीकरणीयमेव, फलतः अनित्यवर्णानां समष्टिरूपस्य वेदवाक्यस्य नित्यत्वं कथमिव भवेत्। तस्मात् वेदस्य कश्चिद्वक्ता वर्तते इति मन्तव्यम्। इदानीं सर्वज्ञः ईश्वरः यदि न स्वीक्रियते तदा भ्रमप्रमादादिदोषदुष्टः अल्पज्ञः जीवः वेदस्य वक्ता स्वीकर्तव्यः तथा च वेदवाक्यं यथार्थज्ञानस्य सम्पादकं न वेति वेदप्रामाण्ये संशयः स्वाभाविकः स्यात् क्रमेण च वेदोक्तकर्म्मणां साफल्येऽपि संशयः स्यात्। तथा च वेदविहितं सकलमपि सार्थकम्, वेदे निरर्थकं किमपि विधानं नास्तीति निश्चयो न स्यात् तथा च वेदोक्तकर्म्मणि प्रवृत्तेरभाव एव स्यात्। यद्येतदाशङ्कां निवर्त्तयितुमिदमुच्यते वेदस्य कश्चिद् वक्ता अस्तीति स्वीकारेऽपि सर्वज्ञस्य ईश्वरस्य स्वीकारो नावश्यकः अपि तु योगानुष्ठानेन निर्म्मलान्तःकरणाः सर्व्वज्ञाः कपिलादय एव वेदस्य वक्तारः सन्तीति उच्यते। तथा च वेदस्य वक्तुः स्वीकारेऽपि ईश्वरसिद्धिर्न भवति नापि वेदस्य प्रामाण्ये संशयो भवति। योगर्द्धिसम्पन्नाः महर्षयः न भ्रमप्रमादादिदोषदुष्टाः ते यथार्थतया अर्थमवगत्य वेदवाक्यमुक्तवन्तः इति निश्चयो भवितुमर्हति। अतः वेदस्य वक्ता ईश्वरः अस्तीति स्वीकारः निष्प्रयोजनकः। एतादृशार्थस्वीकारे द्वितीयविप्रतिपत्तेः चरमं फलं भवति—वेदः कपिलादिप्रणीतो न वा ? इति संशयः।

प्रमायाः परतन्त्रत्वात्सर्गप्रलयसम्भवात्।<br>
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः॥ १ ॥

शब्दजन्ययथार्थज्ञानं वक्तुः यथार्थज्ञानाधीनम् अर्थात् प्रमायाः = यथार्थज्ञानस्य परतन्त्रत्वात्=पराधीनत्वात् सृष्टेः महाप्रलयस्य सम्भवाच्च ईश्वरः स्वीकरणीयः। ईश्वरान्यस्मिन् अविश्वासात् प्रकारान्तरसम्भवः नास्ति।

यथार्थज्ञानमेव सफलप्रवृत्तेः सम्पादकम्। सफलप्रवृत्तिसम्भवे एतदवगन्तव्यं यत् पुरुषः यथार्थं ज्ञात्वैव कर्म्मणि प्रवृत्तो भवति। पर्वते वह्निरस्तीति यथार्थतया अवगत्य वह्निलाभार्थं प्रवृत्तो भवति, प्रवृत्तः सन् वह्निं प्राप्नोति, तदा तस्य प्रवृत्तिः सफला जायते। "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदवाक्येन अवगतस्य यज्ञादिकर्मणोऽ-

नुष्ठाने प्रवृत्तौ प्रवृत्तिः सफला भवति अर्थात् अश्वमेधयज्ञादिकर्मसम्पादनानन्तरं कर्म्मकर्त्तुः अवश्यमेव स्वर्गादिफलं जायते। अतः "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदवाक्येन यथार्थज्ञानं जायते इत्यवश्यमेव स्वीकर्तव्यम्। जन्ययथार्थज्ञानञ्च परतन्त्रमेव अतः वेदवाक्यजन्ययथार्थज्ञानमपि परतन्त्रमेव। शब्दजन्ययथार्थज्ञानवक्तुर्यथार्थज्ञानाधीनमर्थात् वक्ता प्रतिपाद्यविषयं यथार्थतयावगत्य यदा शब्दप्रयोगं करोति तदा प्रतिपाद्यविषये श्रोतुर्यथार्थज्ञानं भवति। वेदः शब्दसमष्टिरेव, वेदजन्यज्ञानञ्च यथार्थशाब्दज्ञानमतः श्रोतुर्वेदजन्ययथार्थज्ञानमपि वक्तुर्यथार्थज्ञानसापेक्षम्। यथा—कोऽपि पथिकः दूरदेशादागच्छति तस्य अग्नेः प्रयोजनं वर्तते। केनापि जिज्ञासां करोति अग्निं कुत्र लप्स्ये? स अवलोकयति गोष्ठे अग्निसंग्रहं कृत्वा स्थापयति अतः असौ कथयति "सम्मुखे गोष्ठे अग्निः वर्तते" इदं श्रुत्वा तत्र गच्छति गत्वा चावलोयति यत् तत्र अग्निरस्ति। एतेनासौ अवगच्छति यदयमग्निं दृष्ट्वैव मामकथयत् मिथ्या नोक्तवान्। अत्र पथिकः यथार्थं दृष्ट्वा उक्तवान् अत एव पथिककथनेन श्रोतुः गोष्ठेऽग्निसद्भावस्य यथार्थज्ञानं जातम् एवं तस्मादेव तस्य प्रवृत्तिरपि सफला जाता इत्यवश्यं स्वीकर्तव्यम्। पथिकः यदि मिथ्या वदेत् तदा श्रोतुरपि मिथ्यैव ज्ञानं स्यात् तथा च तत्र गमने अग्नेः प्राप्तिरपि न स्यात्। अतः शब्दश्रवणे सति श्रोतुः शब्दार्थविषये यथार्थज्ञानार्थं शब्दार्थसम्बन्धे वक्तुः यथार्थज्ञानस्यापेक्षा अवश्यमेव स्वीकरणीया। अस्यां स्थितौ वेदवाक्येन वेदार्थस्य यथार्थज्ञानं भवतीति पक्षे वेदवक्तुः वेदार्थसम्बन्धे यथार्थज्ञानस्य अपेक्षा अवश्यमेव स्वीकर्तव्या। सकलवेदार्थस्य यथार्थज्ञानं मनुष्याणां नास्ति अतः अतिरिक्तः वेदवक्ता स्वीकार्यः—स एव ईश्वरः। वेदः अपौरुषेयः वेदस्य वक्ता नास्तीति कथनन्त्वसङ्गतमेव। आगमादिषु सृष्टिस्थितिप्रलयानां बहु वर्णनं वर्तते। अनित्यवर्णसमष्टिरूपस्य वेदस्य महाप्रलये स्थितिर्नैव भवितुमर्हति, सृष्ट्यारम्भे वेदरचना भवति अतः वेदः अनित्य इत्येव स्वीकरणीयः। तथा वेदस्य कर्ता ईश्वरः स्वीकरणीयः। परमकारुणिको भगवान् जीवसृष्टिं कृत्वा जीवहितार्थं वेदस्य रचनां कृतवान्। वेदस्य सर्वज्ञप्रणीतत्वादेव प्रामाण्यम्। सृष्टिप्रथमवेलायां न कोऽपि महाजनः आसीत्, अतः महाजनकर्तृकवेदार्थानुष्ठानं तदानीं न सम्भवति इति महाजनपरिगृहीतत्वात् वेदस्य प्रामाण्यनिश्चयो न भवितुमर्हति। कपिलादिमहर्षयः वेदप्रणेतारः इत्यपि भवितुं नार्हति, यतः कपिलादयोऽपि जीवा एव, जीवः कदापि सर्वज्ञः सर्वकर्ता न भवितुमर्हति, जीवोऽसर्वज्ञः न च सर्वकर्त्ता। तथा च वेदस्य कपिलादिप्रणीतत्वे असर्वज्ञजीववाक्यत्वात् वेदे प्रामाण्यं न स्यात् एवं च वेदेऽनाश्वासः स्यात्। अतः वेदकर्ता सर्वज्ञः ईश्वर इति स्वीकरणीयः।

अहोरात्रम्, अव्यवहिताहोरात्रपूर्वकम्, अहोरात्रत्वात् यथा वर्तमानाहोरात्रम्। एतादृशानुमानेन अहोरात्रस्य अतीतकाले विच्छेदः नासीदिति सिद्धो भवति। अहोरात्रस्य आदिकालाभावात् भाविकाले तस्य विच्छेदोऽपि नास्तीति स्वीकरणीयमेव यतः अनादि-भावपदार्थोऽनन्त इति महाप्रलयोऽसम्भव एव। अयमाशयः—चराचरस्य जगतः एकान्तोच्छेदे प्रमाणं नास्ति। सूर्यादिग्रहोपग्रहाणां गतिवशादेव अहोरात्रस्य कल्पनं भवति। समेषां ग्रहाणामुपग्रहाणां च एककाले विनाशः असम्भवः। यतः, तथा सति अहोरात्रविच्छेदः स्वीकरणीयः। तस्य च विच्छेदो न सम्भवतीति महाप्रलयः असम्भव एव।

किञ्च किमपि कर्म भवतु शोभनमशोभनम्वा तस्य कर्मणः फलं भवति। अनुष्ठितं कर्म कदाचिदपि निष्फलं न भवति। कर्मणः सम्पादनानन्तरं तदुत्तरक्षणे एव तत्फलं न भवति परमनुष्ठितकर्मवशात् एकस्य गुणस्य उत्पत्तिर्भवति यद्वशात् बहुकालानन्तरमपि तद्वशात् फलस्य उत्पत्तिर्जायते। कर्मणा उत्पन्नस्य एतस्य गुणस्य अदृष्टनाम्ना ख्यातिरस्ति। शोभनेन कर्मणा शुभादृष्टं, पुण्यं धर्मो वा भवति एवमशोभनेन कर्मणा अशुभादृष्टस्य पापस्य अधर्मस्य वा उत्पत्तिर्जायते। धर्माधर्मरूपादृष्टेन सुखं दुःखं च भवति। यत्कर्म अस्माभिरधुना क्रियते तत्कर्मणा पूर्वकर्मार्जितादृष्टं मिलितं सत् फलमुत्पादयति। कोऽपि अशुभफलार्थं न किमपि कर्म करोति किन्तु एकाकि कर्म किमपि कर्तुं न शक्नोति। असंख्यो जीवोऽनादिकालवशात् कर्म करोति अनन्तकाल-पर्यन्तं करिष्यति च। यदि कोऽपि पुरुषः उत्कटानुष्ठानवशात् स्वर्गं प्राप्नोति तदापि तत्र कर्मफलभोगं करोत्येव। एकदैव सकलस्य जीवस्य कर्मोच्छेदः न संभवति। पूर्वकर्मार्जितस्यादृष्टस्य वर्त्तमानकर्मफलेन सह सम्बन्धे सत्येव अदृष्टानुसारं जीवः सुखं दुःखम्वा भुनक्ति। प्रतिक्षणमेव जीवः अवश्यमेव कस्यापि कर्मणः फलं भुनक्ति प्रतिक्षणमेव च कार्यं करोति। कस्मिन्नपि समये सर्वस्य भावकार्यस्य अभावो न भवितुमर्हति महाप्रलयश्च असिद्ध एव। महाप्रलयस्वीकारे एकस्मिन् समये सर्वस्य भावकार्यस्य अभावस्वीकारे तस्मिन् समये कार्यस्य फलस्य च अभाववशात् जीवस्यादृष्टं सुखं दुःखं वा किमपि उत्पादयितुं न शक्नोति। अदृष्टे फलोत्पादनसमर्थ्यस्याभावश्च स्वीकरणीयः स्यात्। एकस्मिन् समये जीवसमुदायादृष्टवृत्तेर्निरोधः कल्पानाया अविषयः। तस्मात् महाप्रलयः असिद्धः।

किञ्च ब्राह्मणाद् ब्राह्मणः क्षत्रियाद् क्षत्रियः एतादृशवर्णोत्पत्तिर्भवति। महाप्रलयकाले

सृष्ट्यारम्भे ब्राह्मणादेरभावात् ब्राह्मणादेरुत्पत्तिर्नैव भवितुमर्हति । अतः महाप्रलयो नास्तीति अवश्यं स्वीकरणीयम् ।

किञ्च सृष्ट्यारम्भे न वृद्धः न युवा नापि बालकः इति शब्दशक्तिज्ञानमसम्भवमेव । यतः, शब्दश्रवणानन्तरमावापोद्वापाभ्यां बालकस्य प्रथमं शक्तिग्रहः भवति । यथा कोऽपि वृद्धः कमपि पुरुषं कथयति **घटमानय** । युवकः घटमानयति । बालकः शब्दं श्रुतवान् आनयनव्यापारञ्चावलोकितवान् ( अयमेव आवापः ) किन्तु एतद्वाक्य-श्रवणानन्तरमपि बालकः नावगच्छति यत् घटशब्दार्थः कः ? अनन्तरं वृद्धः युवानं प्रति कथयति **घटं नय** बालकः इमं शब्दमपि श्रुतवान्, युवकः घटं नीतवान् इत्यपि बालकेनावलोकितम् ( अयमेव उद्वापः ) तथा च आवापोद्वापाभ्यां बालकोऽवगच्छति घटाधारः कम्बुग्रीवादिमान् घटः भवति । 'नय' शब्दस्य अर्थः नयनम् अन्यथा नयश-ब्दोच्चारणानन्तरं कथमनेन नयनं कृतम् । अनेनैव प्रकारेण बालकस्य आदौ सङ्केतग्रहो भवति । महाप्रलयस्वीकारे पूर्वोक्तरीत्या सङ्केतग्रहो नैव भवितुमर्हति । शिक्षकाभावाच्च घटादिनिर्माणमपि न भवितुमर्हति । तस्मान्महाप्रलयवर्णनं पुराणादौ भाक्तमेव ॥ १ ॥

वर्षादिवद् भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ।
उद्भिद्वृश्चिकवत् वर्णाः मायावत् समयादयः ॥ २ ॥

वर्षादिवत् पूर्वपक्षोक्ताहोरात्रहेतुः भवोपाधियुक्तः अर्थात् संसारावच्छेदकोपाधियुक्तः । सुषुप्तिसमयवत् महाप्रलयेऽपि वृत्तिरोधो नासम्भवः । वर्णसकलम् उद्भिद्वृश्चिकादिवत् वर्तते पदसङ्केतग्रहश्च मायावदेव ।

अहोरात्रम् अव्यवहिताहोरात्रपूर्वकम्, अहोरात्रत्वात् । एतादृशानुमानस्वीकारे वर्षादिनम् अव्यवहितवर्षादिनपूर्वकम्, वर्षादिनत्वात् एतदपि अनुमानं भवितुमर्हति । उभयत्रापि सजातीयपूर्वकत्वं साध्यम्, किन्तु एतादृशानुमाने अहोरात्रत्वं साध्यभूताव्यव-हितवर्षादिनपूर्वकत्वस्य व्यभिचारि एवं वर्षादिनत्वं साध्यभूताव्यवहितवर्षादिनपूर्वकत्वस्य व्यभिचारि । यतः उभयत्रापि उपाधिः वर्तते । परार्थानुमानस्थले सोपाधिकहेतुना अनुमानेन परस्य बोधनं न सम्भवति । परस्य अनुमानेन बोधनार्थम् अनुमापकहेतोः सद्धेतुत्वमावश्यकम् । अन्यथा प्रतिवादिना अनुमाने दोषोद्भावनवेलायामनुमापयिता निगृहीतो भविष्यति । अतः प्रथमानुमाने हेतोः निर्दोषत्वमावश्यकम् । किन्तु तथा न भवति । यतः, यथा साध्यभूताव्यवहितवर्षादिनपूर्वकत्वस्थले वर्षादिनत्वं हेतुः सोपाधि-कमिति व्यभिचारी तथैव साध्यभूताव्यवहिताहोरात्रपूर्वकत्वस्थलेऽपि अहोरात्रत्वं हेतुः

व्यभिचारी इति सोपाधिको हेतुः सोपाधिकत्वाच्च दुष्टः । व्यभिचारिहेतुना परस्य कृतेऽनुमितिर्नैव भवितुमर्हति । उपाधिर्हि व्यभिचारस्य नियतसहचरः व्याप्यो वा । यतः, यत्र यत्र उपाधिः वर्तते तत्र तत्र साध्यस्य व्यभिचारोऽपि वर्तते । व्याप्यज्ञाने व्यापकज्ञानं स्वाभाविकम् । अत एव सोपाधिहेतुना अपरस्य कृतेऽनुमितिर्न भवितुमर्हति । यतः एतादृशस्थले प्रतिवादी उपाधिप्रदर्शनं कृत्वा हेतौ साध्यव्यभिचारज्ञानमुत्पादयिष्यति । तथा सति साध्यस्य व्याप्तिज्ञानं हेतौ न सम्भवतीति अनुमितिरपि न भवितुमर्हति । यः सकलसाध्याधिकरणे वर्तते किन्तु सकलहेत्वधिकरणे न वर्तते स एव उपाधिः । इदमिदानीं विचारणीयं यत् अव्यवहितवर्षादिनपूर्वकत्वमेवमव्यवहिताहोरात्रपूर्वकत्वमत्र उपाधिः वर्तते न वा ? साध्यम्—अव्यवहितवर्षादिनपूर्वकत्वम् एवं हेतुश्चात्र वर्षादिनत्वम् । साध्यं वर्षाकालारम्भद्वितीयदिनात्सम्पूर्णवर्षाकालमभिव्याप्य वर्तते । यतः यस्य वर्षादिनस्याव्यवहितपूर्वकाले वर्षादिनं सम्भवति सकलवर्षादिनमेवाव्यवहितवर्षादिनपूर्वकम् । वृष्टिदिनस्य प्रथमदिनस्याव्यवहितपूर्वदिनं वर्षादिनं नास्तीति वृष्टेः प्रथमदिने अव्यवहितवर्षादिनपूर्वकत्वरूपं साध्यं नास्ति किन्तु वर्षादिनत्वरूपो हेतुश्च कर्कटराशौ सिंहराशौ वा सूर्यसंक्रमणक्षणाद् सकलवर्षादिनमभिव्याप्य तिष्ठति । अस्यामवस्थायां कर्कटराशौ सिंहराशौ वा सूर्यस्य यो हि संक्रमणकालस्तत्पूर्वकत्वधर्मः उपाधिः । यतः अव्यवहितसिंहकर्कटान्यतरराशिगतसूर्यकालपूर्वकत्वधर्मः कर्कटराशिसूर्यसंक्रमणाव्यवहितपरक्षणमादाय अर्थात् कर्कटराशिसूर्यसंक्रमणप्रथमक्षणं परित्यज्य वर्षाकालस्य सर्वप्रथमदिनात्सम्पूर्णवर्षाकालमभिव्याप्य तिष्ठति । यतः कर्कटराशौ सूर्यसंक्रमणप्रथमक्षणपूर्वम् अव्यवहितसिंहकर्कटान्यतरराशिगतः सूर्यः नास्तीति कर्कटराशौ सूर्यसंक्रमणप्रथमक्षणे अव्यवहितसिंहकर्कटान्यतरराशिगतसूर्यकार्यकालपूर्वकत्वधर्मो नास्ति । अतः अव्यवहितसिंहकर्कटान्यतरराशिगतः सूर्यकालपूर्वकत्वधर्मः अव्यवहितवर्षादिनपूर्वकत्वस्वरूपसाध्यस्य व्यापकः एवं वर्षादिनत्वरूपहेतोरव्यापकः इति उपाधिरत्र वर्तते तथैव साध्यभूताव्यवहिताहोरात्रपूर्वकत्वे अहोरात्रत्वरूपहेतुस्थलेऽपि अव्यवहितसंसारपूर्वकत्वधर्म उपाधिः । यतः, अव्यवहिताहोरात्रपूर्वकत्वरूपं साध्यम् सृष्टेः द्वितीयदिनमादाय समग्रसृष्टिकालमभिव्याप्य वर्तते । यतः, सर्वप्रथमाहोरात्रपूर्वेऽहोरात्रं नास्ति इति सृष्टिसर्वप्रथमाहोरात्रेऽव्यवहिताहोरात्रपूर्वकत्वरूपं साध्यं नास्ति एवम् अहोरात्रत्वरूपो हेतुः सृष्ट्यारम्भक्षणमादाय सृष्टिप्रथमदिनात्समग्रसृष्टिकालमभिव्याप्य तिष्ठति । किन्तु अव्यवहितसंसारपूर्वकत्वधर्मः सृष्टेरारम्भक्षणं परित्यज्य अर्थात् सृष्टेः प्रथमदिनात्समग्रसृष्टिकालमभिव्याप्य तिष्ठति । यतः, सृष्टेरारम्भक्षणाव्यवहितपूर्वं संसारस्य

सम्भावना नास्ति इति अव्यवहितसंसारपूर्वकत्वधर्मः सृष्ट्यारम्भक्षणे नास्ति। अतः अव्यवहितसंसारपूर्वकत्वधर्मरूपः साध्यभूताव्यवहिताहोरात्रपूर्वकत्वस्य व्यापकः एवं हेतुभूताहोरात्रत्वस्य अव्यापकः इति उपाधिः वर्तते। अत एव कथितोभयस्थले एव हेतुः उपाधिविशिष्टः इति साध्यस्य व्यभिचारी। अतः एतादृशव्यभिचारिदुष्टहेतुना पूर्वपक्षोक्तानुमानं न भवितुमर्हति। तस्मात् महाप्रलयो नास्ति इति कथनमसङ्गतम् इति महाप्रलयसम्बन्धे आगमादेः प्रामाण्यं नास्ति।

किञ्च एकस्मिन् समये सर्वजीवादृष्टस्य वृत्तिरोधो न भवितुमर्हति इति यदुक्तं तन्न सम्भवति। यतः, जीवस्य स्वीयसुषुप्तिकाले अदृष्टस्य वृत्तिरोधः स्वीकरणीय एव। यस्मिन् समये जीवानां भोगो नास्ति तस्मिन् एकस्मिन् काले तु सकलस्य जीवस्य वृत्तिनिरोधः नासम्भवः।

किञ्च वृश्चिकात् गोमयाच्च एकविधस्य वृश्चिकस्य उद्भवो जायते यथा शाकविशेष-बीजात् शाकविशेषस्यैवोत्पत्तिर्भवति, तथैव ब्राह्मणात् यथा ब्राह्मणः एवमदृष्टविशेषात् ब्राह्मणं विनापि ब्राह्मणस्य जन्म जीवस्य अदृष्टविशेषादेव भवति। अयमाशयः पूर्वसृष्टौ जीवस्य कर्मजनितादृष्टसकलं महाप्रलयेऽपि सर्वथा विनष्टं न भवति। उत्कटादृष्टम् अचिरकाले एव फलमुत्पाद्य विनष्टं भवति एवमनुत्कटसकलादृष्टं चिरकालानन्तरं फलमुत्पादयति। तथा च पूर्वसृष्टौ जीवस्य क्षयावशिष्टः अनुत्कटादृष्ट-समूहः महाप्रलयेऽपि तिष्ठति। महाप्रलये अदृष्टस्वीकाराभावे पुनः सृष्टेः प्रयोजनं न भवेत्। जीवस्य भोगार्थमेव सृष्टिः, जगत्कर्तुः परमेश्वरस्य स्वीकीयं किमप्यन्यत्प्रयोजनं सृष्टेर्नास्ति। सुखदुःखविहीनः आत्मारामोऽसौ। जीवस्य अदृष्टसहकारेण जीवस्य भोगार्थं पुनः सृष्टिं करोति। आगमादिना एतदेवावगम्यते।

किञ्च सृष्ट्यारम्भे सर्वोऽपि शिशुरेव। अतः यूनः वृद्धस्य चाभावात् शिशोः सङ्केतज्ञानं न भवितुमर्हतीति पूर्वपक्षे यदुक्तं तदपि न सङ्गतम्। यतः, परमकारुणिको भगवान् परस्परमनोभावाभिव्यक्त्यर्थं कमपि उपायं नैव प्रकाशयिष्यतीति न सम्भवति। असौ परमेश्वरः विश्वप्रपञ्चस्य सृष्टिं कृत्वा स्वयमेव वृद्धस्य यूनः च स्वरूपं सन्धार्य आवापोद्वापाभ्यां शब्देन सह अर्थस्य नित्यसम्बन्धं कथयति। शिल्पद्रव्यादिनिर्माण-कौशलसम्बन्धेऽपि प्रथमतः स एव परमेश्वरः विश्वकर्मादिरूपेण अवतीर्णो भूत्वा शिल्पादिनिर्माणकौशलमवगमयति ॥२॥

पूर्वोक्तयुक्त्या महाप्रलयसम्बन्धे बाधकस्य निरासं कृत्वा महाप्रलयस्य साधकयुक्तिं कथयति—

> जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
> ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥

जन्मनः, संस्कारस्य, विद्यादेः, शक्तेः वेदस्य कर्मणश्च क्रमिकह्रासदर्शनात् सम्प्रदायस्य ह्रासः अनुमीयते ।

जन्मनः, संस्कारस्य, विद्यादेः वेदस्य कर्मणश्च ह्रासदर्शनात् एतदनुमीयते यत् कदाचिदेतादृशकाल आगमिष्यति यदा वेदादिसम्प्रदायस्य उच्छेदो भविष्यतीति । ब्रह्मा प्रथमतः मनसि सञ्चिन्त्यैव प्रजानां सृष्टिं चकार । अनन्तरं जनां सन्तानकामनया स्त्रीसंसर्गे सत्येव गर्भाधानम् अवश्यम्भावि आसीत् । इदानीं कामिजनप्रवृत्तेः चारितार्थ्यवशादेव सन्तानोत्पत्तिर्भवति इच्छावशादेव गर्भोत्पादने समर्थो न भवति । विद्यासम्बन्धेऽपि क्रमिकह्रास उपलभ्यते । पूर्वं वेदचतुष्टयस्य श्रवणादेव अभ्यासो जायतेस्म । अनन्तरञ्च एकस्य वेदस्य ततः परम् एकस्याः शाखाया एव श्रवणादभ्यासे सक्षमोऽभवत् । ततः परमपि लेखनस्य आवश्यकता जाता । इदानीं तु सन्ध्यावन्दनादिच्छलेन असम्यगुच्चारितानां केषाञ्चिदेव मन्त्राणामभ्यासो वर्तते तेषामपि लिपिबद्धता अपरिहार्यैव ।

धर्मसम्बन्धेऽपि पूर्वं तपस्यायाः यज्ञस्य, तत्त्वज्ञानस्य दानस्य च पूर्णरूपेण अनुष्ठानं भवतिस्म इदानीं तु दानस्यापि अवस्थितिर्नास्ति अन्यस्य तु कथैव वृथा । तथा च ह्रासं विलोक्य विश्वस्य भावकार्यमात्रस्य एकान्तोच्छेदो भविष्यतीति अनुमीयते ॥ ३ ॥

> कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन् ।
> हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
> तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
> विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥ ४ ॥

ये ऐन्द्रजालिकस्येव मायावशात् लोकचक्षुषामगोचरस्य भौतिकजगतः सृष्टिं कृत्वा पुनः संहरन्ति एवं संहृत्य पुनः सृष्टिं कृत्वा क्रीडन्ति । यस्य इच्छा अप्रतिहता अर्थात् यदिच्छति तदेव करोति । विश्वासैभूमिं जगतः मूलकारणं मङ्गलमयं देवमन्तकाले नमन्नेव स्थास्यामीत्येव चेतसि आकांक्षा वर्तते ॥ ४ ॥

# सौरभविवृत्याद्यनुसारिकुसुमाञ्जलिसारसङ्कलनम्

## तृतीयः स्तबकः

अभावप्रत्यक्षे प्रतियोगिनोऽदर्शनमेव कारणम्, यस्य वस्तुनः अभावस्य प्रत्यक्षत्वम् अपेक्षितं भवति तद्वस्तु नास्तीति प्रत्यक्षज्ञानार्थं तस्य वस्तुनः अदर्शनमावश्यकम्। वस्तुनः दर्शने सति एतद् वस्तु नास्तीति वक्तुं, न शक्यते, यतः, विश्वस्मिन् कुत्रापि कदाचिदपि कोऽपि ईश्वरं द्रष्टुं न शक्नोति ईश्वरः यदि स्यात्तदा कदचित् कुत्रापि अवश्यमेव तमवलोकयेत्। कदापि कुत्रापि असौ द्रष्टुं न शक्यते अत एव प्रत्यक्षप्रमाणसाहाय्येनैव निश्चयो भवति यत् ईश्वरो नास्तीति। तथा च ईश्वरः नास्तीति प्रत्यक्षज्ञानावगमपक्षे तस्य अदर्शनमेव प्रमाणम्, प्रत्यक्षतः असौ नोपलभ्यत इत्यत एव स्वीकरणीयं यदीश्वरो नास्तीति। इदमत्र विचारणीयं यत्—कस्यापि वस्तुनोऽदर्शनादेव तद् वस्तु नास्तीति सिद्धान्तो न भवति। यतः, प्रत्यक्षेण कदापि कुत्रापि दर्शनाभावेऽपि बहूनां पदार्थानामस्तित्वं स्वीकरणीयं भवति। वस्तुनः गुरुत्वं प्रत्यक्षस्य एकान्ततोऽयोग्यं गुरुत्वस्य कदापि प्रत्यक्षत्वसम्भावना नास्ति, किन्तु एतावतैव वस्तुनः गुरुत्वं नास्तीति सिद्धान्तो भवितुं नार्हति। सावयववस्तुनः क्रमशः विभागे सति एतादृशी अवस्था आगच्छति यदा पुनः विभागो न भवितुमर्हति, एतादृशाविभाज्यसूक्ष्मतमवस्तुनः परमाणुरिति आख्या वर्तते, परमाणोः प्रत्यक्षत्वं नास्ति, परमाणुः एकान्ततः प्रत्यक्षायोग्यः पदार्थः। किन्तु प्रत्यक्षप्रमाणोपरि निर्भरो भूत्वा एवं वक्तुं न शक्यते यत् परमाणुर्नास्ति। अतः प्रत्यक्षायोग्यस्यापि गुरुत्वस्य परमाणोर्वा अस्तित्वमवश्यमेव स्वीकर्तव्यम्। अस्यामवस्थायामेतदेव वक्तव्यं यत् यस्य कदाचित् कुत्रापि प्रत्यक्षसम्भावना वर्तते, एतादृशस्य वस्तुनः कदाचित् स्थानविशेषेऽदर्शनं भवति तदा तद्वस्तु नास्तीति प्रतीयते। यथा घटः प्रत्यक्षयोग्यः पदार्थः, कदाचित् कुत्रापि घटम् द्रष्टुं शक्नोति; अस्यां स्थितौ कालविशेषे यदि गृहे घटो न दृश्यते तदा गृहे घटो नास्तीति प्रत्यक्षं भवति प्रत्यक्षत एव उच्यते गृहे घटो नास्तीति। तस्मात् अभावप्रत्यक्षे प्रतियोगिनः प्रत्यक्षयोग्यता कारणम्। फलतः प्रत्यक्षयोग्यस्य वस्तुनः अदर्शनमभावप्रत्यक्षे कारणम् इति स्वीकरणीयमेव। अयमाशयः—यस्य वस्तुनः अभावप्रत्यक्षत्वमपेक्षितं तस्य अभावप्रतियोगिवस्तुनः प्रत्यक्षयोग्यता वर्तते तस्य च

वस्तुनः अदर्शनमपि च वर्तते तदा तस्य वस्तुनः अभावस्य प्रत्यक्षत्वं जायते । अर्थात् प्रत्यक्षतः अभावस्य निश्चयो भवति यत् अयं पदार्थो नास्तीति । ईश्वरः सर्वथा प्रत्यक्षायोग्य इति ईश्वरे प्रत्यक्षयोग्यता अदर्शनञ्चैतदुभयं न संघटते, अतः ईश्वरस्य अदर्शनं प्रत्यक्षयोग्यवस्तुनः अदर्शनं नास्ति फलतः ईश्वरो नास्तीति प्रत्यक्षं न भवितुमर्हति । अर्थात् प्रत्यक्षप्रमाणेन एतद्वक्तुं न शक्यते यत् ईश्वरो नास्तीति । अस्यां स्थितौ ईश्वरस्य प्रत्यक्षं न भवतीति ईश्वरो नास्तीति सिद्धान्तः वक्तुं शक्यते । परञ्चैतदपि न समीचीनं यतः शशशृङ्गं नास्तीति प्रत्यक्षस्याप्यनुपपत्तिर्जायते । शशशृङ्गं हि अलीकं गगनपुष्पसदृशं प्रत्यक्षस्य सर्वथा अयोग्यम् । शशशृङ्गं कदापि केनापि न दृष्टं द्रष्टुमपि न शक्यते, अतः शशशृङ्गे प्रत्यक्षयोग्यता एवं तददर्शनञ्च कदापि भवितुं नार्हति तथा च शशशृङ्गादर्शनं प्रत्यक्षयोग्यवस्तुनः अदर्शनं नास्तीति शशशृङ्गं नास्तीति प्रत्यक्षं भवितुं नार्हति किन्तु शशशृङ्गं नास्तीति प्रत्यक्षतः उच्यते । अतः शशशृङ्गं द्रष्टुं न कोऽपि शक्नोति एतावतैव शशशृङ्गं नास्तीति प्रत्यक्षमेव स्वीक्रियते । अतः प्रतियोगी प्रत्यक्षयोग्योऽयोग्यो वा भवतु यस्य अभावः तस्य वस्तुनः यदा अदर्शनं जायते तदैव तद् वस्तु नास्तीति इत्याकारकं प्रत्यक्षं भवति इति अवश्यमेव स्वीकरणीयम् । ईश्वरसम्बन्धेऽपि इयमेव स्थितिः, ईश्वरः प्रत्यक्षायोग्यः योग्यो वा तस्य दर्शनं तु न भवति अतः ईश्वरो नास्तीति प्रत्यक्षसिद्धान्तो भवितुमर्हति । अर्थात् ईश्वरस्य कदाचित् कुत्रापि दर्शनं न भवति अत एव प्रत्यक्षप्रमाणेन वक्तुं शक्यते यत् ईश्वरो नास्तीति ।

योग्याऽदृष्टिः कुतोऽयोग्ये प्रतिबन्धि कुतस्तरां ।
क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम् ॥ १ ॥

अयोग्ये योग्यता एवम् अदर्शनं कथमिव भवेत् ? अतः कुत्र बाधकः ? अयोग्यं शृङ्गं कुत्र बाध्यते ? अनाश्रयमनुमानञ्च कुत्र भवति ?

यस्य अभावो भवति स तस्य प्रतियोगी भवति । यथा घटः नास्ति, अत्र घटस्य अभावः अत्र घट एव अभावस्य प्रतियोगी । यस्य वस्तुनः अभावस्य प्रत्यक्षत्वं तस्य वस्तुनः अर्थात् प्रतियोगिनः प्रत्यक्षयोग्यत्वमावश्यकम् यदि प्रतियोगिनि प्रत्यक्षयोग्यत्वमेवं प्रतियोगिनोऽदर्शनञ्चोभयमेव संघटते तदा प्रत्यक्षोपयुक्तप्रतियोगिनोऽदर्शनवशात् प्रतियोगि-वस्तुनः अभावस्य प्रत्यक्षत्वं संभवति । प्रत्यक्षोपयुक्तवस्तुनोऽदर्शनमेवाभावप्रत्यक्षे कारणम् । अदर्शनवशादेव वस्तु नास्तीति एतादृशाभावप्रत्यक्षस्वीकारे कदापि कुत्रापि च परमाणोः

गुरुत्वस्य च दर्शनं कदापि न सम्भवति इति परमाणुः गुरुत्वञ्च नास्तीति प्रत्यक्षं स्यात्। किन्तु प्रत्यक्षाविषयत्वेऽपि परमाणुः गुरुत्वं च युक्तिसिद्धः पदार्थः। युक्तिसिद्धिपदार्थस्याप-लापं कर्तुं न शक्नोति। तस्मात् प्रत्यक्षायोग्यपदार्थस्याभावोऽपि प्रत्यक्षायोग्यः इति स्वीकर्त्तव्यम् एव। एतस्यामाशङ्कायां पूर्वपक्षिणः शशशृङ्गं नास्तीत्याकारकस्य प्रत्यक्षानुपपत्तिस्वरूपस्य यो हि बाधः प्रदर्शितः सोऽपि नैव सुसङ्गतः। यतः, शशशृङ्गं नास्तीत्यत्र शशविषाणशब्दस्य यदि शशस्य शृङ्गमित्यर्थः क्रियते तदा शशशृङ्गस्य गगनपुष्पसदृशत्वात् तस्य निषेधः पारमार्थिको न भवितुमर्हति। असत्यस्य अलीकस्य निषेधोऽपि असत्यः अलीको वा प्रत्यक्षायोग्य एव भवति। अतः प्रत्यक्षमवलोक्य शशशृङ्गं नास्तीति एतादृशः निषेधो न भवितुमर्हति। अलीकस्य वस्तुनो विधिर्निषेधो वा वस्तुत अलीक एव। ईश्वरः चक्षुरादिबहिरिन्द्रियप्रत्यक्षायोग्यः। ईश्वरे बहिरिन्द्रियजन्यप्रत्यक्षयोग्यता नास्ति। अतः चक्षुरादिबहिरिन्द्रियैः "ईश्वरो नास्तीति" निश्चयो न भवितुमर्हति। प्रत्यक्षेण ईश्वरो नास्तीति निश्चयो न भवितुमर्हति किन्तु अनुमानप्रमाणेन ईश्वरो नास्तीत्यनुमितिर्भवितुमर्हति। तथा हि—ईश्वरः ( पक्षः ) अस्तित्वाभाववान् ( साध्यम् ) बाह्यरूपेण ज्ञानाविषयत्वात् ( हेतुः )। अत्रेदं वक्तव्यं यत् ईश्वरे अस्तित्वाभावानुमितौ यदि ईश्वरो नास्तीत्येवानुमितेर्विधेयभूतम् अर्थात् साध्यम् तदा ईश्वर एव एतादृशानुमितौ पक्षः अर्थात् अस्तित्वाभावरूपसाध्येन ईश्वर एव विशेष्यभूतः। किन्तु अस्तित्वविहीनोऽलीकः पदार्थः अस्तित्वाभावेन विशेषितः विशेष्यो वा न भवितुमर्हति। अस्तित्वाभावविशिष्ट इति सामान्यवचनेन अर्थात् नास्तीत्येवन्मात्र-कथनेन कस्यापि परिचयो न सम्भवति। तथा च ईश्वरस्य अलीकत्वे तुच्छत्वे वा एतादृशानुमितिस्थले पक्षासिद्धिरूपो दोषः स्यात्। किञ्च ईश्वरस्य वास्तविकास्तित्व-सद्भावे अस्तित्वाभावः साध्यो न भवितुमर्हतीति बाधदोषः सम्भवति। अयमाशयः—यत्र यस्य अभावो वर्तते तत्र तद्वस्तु न तिष्ठतीति अबाधितम्। अस्तित्वं हि अस्तित्वाभावस्याभावः। तथा च ईश्वरस्य अस्तित्वं यदि वर्तते ईश्वरस्य अस्तित्वाभावः न भवितुमर्हति, अत ईश्वरं पक्षं विधाय अस्तित्वाभावस्य वस्तुनः साध्यत्वं न सम्भवति। अस्तित्वाभावस्य यो हि अभावः अर्थात् अस्तित्वं तद्विशिष्टः इत्येवात्र बाधदोषः। वस्तुतः सामान्यतः अस्तित्वस्य अभावः आकाशपुष्पवत् इति साध्याप्रसिद्धिदोषोऽपि सम्भवति। पूर्वोक्तरीत्या उभयथैव ईश्वरः अस्तित्वाभावविशिष्ट इत्याकारकानुमितौ हेतुः दोषग्रस्त एव। ईश्वरस्य अलीकत्वे अनुमापकहेतुः, पक्षाप्रसिद्धिदोषेण दुष्टः एवमीश्वरस्य

वास्तविकास्तित्वशालित्वे बाधदोषेण दुष्टः भवति । तथा च अनुमानप्रमाणेनापि ईश्वरो नास्तीति सिद्धान्तो न भवितुमर्हति ।

शून्यवादिबौद्धानां मते कस्यापि वस्तुनः सत्त्वं नास्ति, प्रत्यक्षमप्रत्यक्षं सकलमपि वस्तु असत् सद्रूपेण प्रतीयमानवस्तु सकलमेवं तज्ज्ञानञ्च किमपि सन्नास्ति, सर्वँ शून्यमेवेति तेषां सिद्धान्तः । विज्ञानवादिनां बौद्धानां मते च क्षणिकविज्ञानमेव सत् अतिरिक्तं सकलमप्यसत् । उभयमतेऽपि बाह्यार्थस्यासत्त्वं परमनादितुच्छवासनावशेन विज्ञानस्य विषयो भवति । न्यायमतेऽपि असद्वस्तुना सह विज्ञानस्य विषयतासम्बन्धः वर्ततेऽर्थात् असद्विषयकं ज्ञानं स्वीक्रियते । यस्य घटस्य विनाशः संजातः तस्य स्मरणात्मकं शाब्दबोधात्मकमनुमित्याद्यात्मकं ज्ञानं सर्वैरेव स्वीकृतम् । नष्टपदार्थानां स्मरणं बहूनामेव जायते । विनष्टवस्तुविषयकं ज्ञानं लोके भवत्येव । वृष्टिशमनेऽपि जलधारादिदर्शनात् वृष्टिर्जातेति ज्ञानं भवति । न्यायमते तु विनष्टवस्तुनः प्रत्यक्षत्वमपि स्वीक्रियते । यथा घटेन सह चक्षुषः सन्निकर्षस्यानन्तरं निर्विकल्पज्ञानक्षणे मुद्गरादिपातेन तत्परक्षणे घटस्य विनाशेऽपि एतद्विनाशक्षणे घटस्य प्रत्यक्षत्वं नैयायिकैः स्वीक्रियते । तथा च ईश्वरस्य सर्वथा तुच्छत्वेऽपि ज्ञानविषयत्वे कापि बाधा नास्ति । अर्थात् तुच्छेश्वरविषयकं ज्ञानं नैवासम्भावितम् । तथा च तुच्छेश्वरस्य पक्षकरणेऽपि ईश्वरज्ञानस्य सम्भवत्वात् पक्षासिद्धिदोषस्य (पक्षाज्ञानरूपदोषस्य) सम्भावना नास्ति । किञ्च बाधदोषोऽपि न सम्भवति । यतः, साध्याभावविशिष्टपक्ष एव बाधदोषः । पूर्वोक्तानुमानस्थले अस्तित्वाभावरूपसाध्यस्याभावः—अस्तित्वमेव साध्याभावः ईश्वरस्यालीकत्वाभावे एव वस्तुगत्या अस्तित्वविशिष्टेश्वरस्वरूपबाधदोषः सम्भवति । किन्तु ईश्वरस्य अलीकत्वेऽस्तित्वरूपो यः साध्याभावः तद्विशिष्टोऽसौ न भवितुमर्हति इति बाधदोषोऽपि नास्ति । अतः, ईश्वरे अस्तित्वाभावानुमितौ अनुमापकहेतौ असिद्धिदोषः बाधदोषो वा नास्ति इति अनुमानप्रमाणेन ईश्वरे अस्तित्वाभावानुमितिः सम्भवति । यथा—ईश्वरः (पक्षः) अस्तित्वाभाववान् (साध्यम्) यथार्थज्ञानविषयत्वात् (हेतुः) अथ वा ईश्वराभावस्यैव साध्यत्वम् । ईश्वराभावसाध्यकानुमितौ अनुमापकहेतौ असिद्धिः बाधो वा दोषः नास्ति । अनुमानाकारश्च—संसारः (पक्षः) ईश्वराभाववान् (साध्यम्) ईश्वराभावविशिष्टरूपेण यथार्थज्ञानविषयकत्वात् । संसारस्य प्रसिद्धत्वात् पक्षासिद्धिरूपो दोषः न सम्भवति । साध्यस्येश्वराभावस्याभाव ईश्वरः अलीक इति संसारः वस्तुगत्या साध्याभावविशिष्टो नास्तीति बाधदोषोऽपि नास्ति । यद्यपि साध्याप्रसिद्धदोषः सम्भवति

किन्तु अयमपि दोषो नास्ति। यतः, ईश्वरोऽलीकोऽपि ज्ञानविषयो भवतीति अर्थात् असदीश्वरविषयकज्ञानस्य सम्भवत्वात् इति ईश्वरो नास्तीति अभावांशे विशेषणरूपेण प्रतियोगिनं प्रतिपक्षम्वा ईश्वरं विषयं कृत्वा ईश्वरो नास्तीत्याकारकं साध्यविषयकं ज्ञानं संभवति। तथा च ब्रह्माण्डं पक्षं कृत्वा ईश्वरानुमितौ ईश्वराभावविशिष्टयथार्थज्ञान-विषयत्वरूपानुमापकहेतुर्दुष्टहेतुर्न भवति। तस्मात् ब्रह्माण्डं पक्षं कृत्वा ईश्वराभावा-नुमितिर्नासम्भवा। तथा च पूर्वप्रदर्शिताः पक्षासिद्ध्यादयो दोषाः न सम्भवन्ति ॥१॥

व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।
अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥

यतः अभावस्य आश्रयता विशेष्यता, अतः व्यावर्त्यस्य=निषेध्यस्य अभाववत्ता= अभावाश्रयता-भाविकी = पारमार्थिकी, वस्तुनः प्रतियोगिता अभावाभावात्मत्वम् = अभाव-स्याभाववत्त्वस्वरूपा, अतः अभावस्य आश्रयता एवमभावस्य प्रतियोगिता अवस्तुरूपा अलीकरूपा वा नैव भवितुमर्हति।

यतः अभावस्य आश्रयता = अधिकरणता विशेष्यता वा विशेषणस्वरूपा अतः सा परामर्थतः सत्पदार्थस्वरूपा, एवं सद्रूपो वस्तुनः धर्मः। अयमाशयः—अभावा-धिकरणता स्वरूपविशेष्यतया विशेषणेन वा विशेष्यभूता विशेषरूपे यथार्थतः परिचयाय उपयुक्ता भवति अर्थात् अभावस्य आश्रयतयापि वस्तुनः विशेषरूपेण यथार्थपरिचयो भवति। येन वस्तुनः विशेषरूपेण यथार्थपरिचयो भवति तदेव वस्तुनः वास्तविकं विशेषणमेवं यद्धि वस्तु विशेषरूपेण परिचयाय उपयुक्तं भवति तदेव वस्तुतः विशेष्यम्। रक्तवर्णः घटः रक्तत्वेन विशेषरूपेण परिचयार्थमुपयुक्तः अर्थात् रक्त इति कथनेन घटस्य यथार्थरूपेण परिचयो भवति। अतः, अत्र विशेषणं रक्तत्वं घटश्चात्र विशेष्यभूतः। विशेष्यीभूतघटस्य विशेषधर्मः रक्तत्वम्। अतः रक्तत्वमेव घटस्य वास्तविकविशेष्यता। अधिकरणतया वस्तुनः विशेषरूपेण यथार्थपरिचयो भवति। यथार्थरूपेण पर्वतो वह्निमान् इति कथिते सति वह्निमत्तया वह्नेराश्रयतया वा यः यः पर्वतः वह्निमान् तेषां सर्वेषां यथार्थपरिचयो भवति! अतः अत्र वह्नेराश्रयतैव वास्तविकविशेष्यीभूतपर्वत-समूहस्य विशेषधर्मः। तस्मात् वह्नेराश्रयतैवात्र विशेष्यता विशेषणम्वा। तेन वस्तुतः विशेष्यता विशेषणस्वरूपैव। भ्रमस्थले अन्यधर्मेणैव वस्तुनः विशेषरूपेण परिचय इति यथार्थपरिचयो न भवति। अतः अत्र प्रतीयमानविशेषधर्मः एवं धर्मी विशेषणस्य विशेष्यस्य च आभासमात्रम् भ्रमस्थलेऽसौ विशेष्यस्य वास्तविकधर्मो नास्ति अतः

विशेष्येण सह सम्बन्धप्रयुक्ता या विशेषणस्वरूपा विशेष्यता सा भ्रमस्थले नास्ति। ज्ञानेच्छादेः स्वतन्त्रता विशेष्यता यथा—"जलहीनदेशं दृष्टवान्" अत्र जलहीनदेशः विशेष्यः, जलहीनता, जलाभावस्य आश्रयतैवात्र विशेष्यीभूतदेशस्य भावः धर्मो वा; अतः जलाभावस्य आश्रयतैवात्र विशेष्यता एवमेतदेव विशेषणम्। यतः—जलहीनेति वाक्येन देशः जलाभावस्याश्रय इत्येवावगम्यते। वस्तुतः जलहीनदेशं दृष्ट्वा एतत्कथने देशस्य विशेषरूपेण अर्थात् जलाभावाश्रयरूपेण यथार्थपरिचयो भवति। एतादृशी विशेष्यता अलीकस्य न सम्भवति किम्वा इयं अलीकस्वरूपा इत्यपि न सम्भवति। यतः, अलीकस्य किमपि रूपं प्रकारो वा नास्ति। अलीकवस्तु स्वरूपहीनं विशेष्यतया विशेषणेन वा स्वरूपहीनालीकस्य परिचयो न सम्भवति। आकाशकुसुमस्य विशेषेण परिचयः कदापि न सम्भवति। आकाशपुष्पं रक्तं नीलम्वेति वक्तुं न शक्यते। एवमेव स्वरूपहीनालीकेनापि वस्तुनः परिचयो न भवितुमर्हतीति। आकाशकुसुमेन कस्यापि वस्तुनः परिचयोऽपि न भवति अर्थात् वक्तुं न शक्यते यत् सन्ध्या आकाशकुसुमैः परिपूर्णा। अतः विशेष्यता विशेषणम्वा सत्पदार्थः सद्धर्मो वा। तेन अलीक-तुच्छस्य विशेष्यता विशेषणत्वं वा न सम्भवति। अतः "ईश्वरोऽस्तित्वाभावविशिष्टः" एतादृशार्थे ईश्वरो नास्तीति वक्तुं न शक्यते। यतः, वादिमते ईश्वरस्य अलीकत्वात् अस्तित्वाभावस्याश्रयतास्वरूपविशेष्यता विशेषणेन उल्लेखार्थमेकान्ततः अनुपयुक्ता अर्थात् ईश्वरः परमार्थतः अस्तित्वाभावस्य आश्रयतया विशेष्यो भवितुं नार्हति। अतः ईश्वरः अस्तित्वाभावविशिष्ट इत्याकारिकानुमितिः प्रत्यक्षं वा किमपि न सम्भवति। अली-केश्वरस्य अस्तित्वाभावानुमानप्रयासः सर्वथा वृथा।

किञ्च ईश्वरस्याभावः एतादृशार्थे ईश्वरो नास्तीति वक्तुं न शक्यते। यतः, वादिमते ईश्वरस्य अलीकत्वात् ईश्वरे ईश्वरो नास्तीति एतादृशाभावस्य प्रतियोगिता न भवितुमर्हति। अयमाशयः—अभावो हि नाम भावादन्यः, अतः अभावस्य प्रतियोगी निषेध्यः वा भावः, न भावः = अभाव इति यौगिकशब्देनावगन्तुं शक्यते। प्रतियोगिनं विशेषणरूपेण विषयं कृत्वैव अभावज्ञानं जायते। प्रतियोगिना यदि विशेषितो न भवेत तदा केवलमभावविषयकं ज्ञानं न सम्भवति। प्रतियोगिना विशेषितः ज्ञानविषयः यदा अभावो भवति तदैव अभावस्य अभावत्वम्। घटो नास्तीति अभावः-अयमभावः प्रतियोगिना निषेध्येन वा घटेन विशेषितः सन् ज्ञानस्य विषयः भवति, अन्यथा घटो नास्तीति विशिष्टज्ञानं न भवितुमर्हति। तर्कस्थले अभावः किम्वा नास्ति

इत्येतादृशज्ञानस्वीकारेऽपि भावादन्यरूपेणैवैतादृशज्ञानं भवतीति स्वीकर्तव्यम् । अतः, 'अभावः" इत्येतादृशज्ञानेनापि प्रतियोगिरूपेण प्रतिपक्षरूपेण वा अर्थात् निषेध्यरूपेण भावमेव विषयं करोति । घटः एकः पदार्थः अयं घटाभावाभावस्वरूपः, एवं घटाभावः घटाभावाभावस्याभावस्वरूपः । प्रतियोगी निषेध्यो वा निषेधसापेक्षः । भावः एवमभावः परस्परं निषेधस्वरूपः । तथा च प्रतियोगी निषेध्यो वा अभावाभावस्वरूपः इति प्रतियोगिता निषेध्यता वा निषेधस्य निषेधस्वरूपत्वम् । घटः घटाभावस्य प्रतियोगीति कथने घटाभावाभावस्वरूपमेव घटज्ञानं भवति । अतः घटनिष्ठा या घटाभावनिष्ठा प्रतियोगिता निषेध्यता वा सा घटाभावाभावस्वरूपत्वव्यतिरिक्ता न । एतादृशस्थितौ ईश्वरः नास्तीति कथनेऽपि ईश्वर एव एतादृशाभावस्य प्रतियोगिरूपेण ज्ञातो भवति इति एतादृशाभावस्य प्रतियोगिता ईश्वराभावाभावस्य स्वरूपत्वमात्रमित्यवश्यमेव स्वीकार्यम् । ईश्वरस्य अलीकतुच्छत्वे तस्य स्वरूपमेव न सम्भवति इति अभावस्य प्रतियोगितापि अलीकतुच्छैव स्यात् । अतः ईश्वरः नास्तीति वक्तुं न शक्यते, तेन एतादृशानुमानप्रयासः सर्वथा वृथा ।

आलोचनायाम् असत्ख्यातिवादिनां बौद्धानां मतस्य अर्थात् सर्ववस्तुनः तुच्छत्वे विज्ञानविषयत्वमित्यस्य समर्थनं न भवितुमर्हति । यतः, प्रत्यक्षं प्रति विषयस्य विषयेन्द्रियसम्बन्धादेश्च कारणत्वम् । बाह्यवस्तुनः एकान्तासद्रूपत्वे असद्विषयस्य असदिन्द्रियादिसम्बन्धादेश्च कारणत्वं वक्तव्यम्, किन्तु एकान्तासतः कारणत्वं न भवितुमर्हति । (१) असतः प्रत्यक्षत्वमसम्भवम् । असतः सम्बन्धस्य अलीकत्वात् (२) असतः व्याप्तिसम्बन्धो न भवितुमर्हति । अतः असतः व्याप्तिज्ञानस्य असम्भवत्वात् असद्विषयिकानुमितिर्न भवितुमर्हति । बौद्धाः शब्दस्य उपमानस्य च पृथक् प्रामाण्यं नाङ्गीकुर्वन्ति । अतः प्रमाणाभाववशात् असतः विज्ञानमसम्भवम् । निमित्तं विनैव असतः ख्यातिर्ज्ञानं भवतीति स्वीकर्तुं न शक्यते । यतः असतः ख्यातिः विज्ञानस्य उत्पत्तेर्वा स्वीकारेऽवश्यमेव तस्य कारणं स्वीकर्तव्यमेव यतः उत्पन्नवस्तु कार्यं वा सहेतुकम्, निमित्तकारणं विना कार्यं भवितुं नार्हति । अतः निमित्तरहिता सत्ख्यातिर्न भवितुमर्हति । किञ्च अनादितुच्छवासनावशात् असतः ख्यातिर्भवतीति यदुक्तं तदपि नैव सुसङ्गतम् । यतः एकान्तमसत्कारणं न भवितुमर्हति इति तु पूर्वमेवोक्तम् । यदि अनादिवासना सती भवेत्तदा वासनायाः एव सद्रूपत्वात् सर्वशून्यतावादस्य विज्ञानवादस्य वा असङ्गतिरापतति । तर्कस्थले वासनायाः सत्तास्वीकारे का अपत्तिः संभवति ? विशेषतः नैयायिकाः

अपि असतः ख्यातिं स्वीकुर्वन्ति इति पूर्वपक्षे यदुक्तं तदपि न सुसङ्गतम्। यतः, नैयायिकाःएकान्तासतः ( आकाशकुसुमस्य ) ख्यातिं न स्वीकुर्वन्ति। घटस्य नाशक्षणे घटस्य असत्त्वेऽपि ततः पूर्वं घटः सन् एव सर्वथा असन् आकाशकुसुमवन्नासीत्, तस्मिन् समये तत्र चक्षुरादीन्द्रियस्य सम्बन्धः सम्भवतीति विनाशक्षणे घटस्य प्रत्यक्षत्वं भवितुमर्हति। किन्तु कस्मिन्नपि देशे किम्वा कस्मिन्नपि काले किम्वा यस्य किमपि अस्तित्वं नास्ति एतादृशवस्तुनः प्रत्यक्षत्वमनुमितिम्वा नैयायिकाः नैव स्वीकुर्वन्ति। भ्रमस्थले सद्भूतायां रज्जौ अभेदसम्बन्धेन असत्सर्पस्य ख्यातिर्न भवितुं अर्हति परमन्यथा-ख्यातिर्भवति, अर्थात् यदात्मकं यद्वस्तु तद्वस्तु तद्रूपेण ज्ञातं न भवति अपि तु अन्यरूपेणैव ज्ञातं भवति अर्थात् रज्जुत्वरूपेण रज्ज्वाः ज्ञानं भवत्यपि तु सर्पधर्मसर्पत्वरूपेण रज्ज्वाः ज्ञानं भवति। भ्रमज्ञानस्य विषयीभूतं किमपि वस्तु एकान्तसत् अथ वा एकान्तासन्नास्ति। तथा च केनापि रूपेण सर्वथासतः ख्यातिर्नैव समर्थनयोग्येति ॥२॥

प्रतियोगी प्रत्यक्षयोग्यो भवतु न वा प्रतियोगिनोऽदर्शनवशात् अभावस्य प्रत्यक्षं भवति। शशकशृङ्गं प्रत्यक्षयोग्यं नास्ति यतः शशशृङ्गं कदापि केनापि नैव दृष्टम् न वा द्रष्टुं शक्नोति। किन्तु तथापि शशशृङ्गं नास्तीति प्रत्यक्षं भवति, अतः ईश्वरे प्रत्यक्षयोग्यताया अभावेऽपि, अर्थात् कदाचित् कुत्रापि ईश्वरदर्शनाभावेऽपि ईश्वर-विषयक-दर्शनं न भवति ईश्वरस्य प्रत्यक्षं न भवतीति ईश्वरो नास्तीति वक्तुं शक्यते। प्रतियोगिनः प्रत्यक्षयोग्यतायाः आवश्यकता नास्ति—इयं भ्रान्तस्य आशङ्का।

दृष्टोपलम्भसामग्री शशशृङ्गादियोग्यता।
न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने ॥ ३ ॥

शशशृङ्गादौ दोषघटितोपलम्भसामग्र्येव योग्यता, यदि स्यात् तदा नोपलभ्येत इति अर्थात् उपलभ्येत, यदि एतादृशी सामग्री न स्यात् तदा योग्यता न तिष्ठति।

प्रतियोगिनः प्रत्यक्षयोग्यता एवमदर्शनमेतदुभयं मिलितरूपेण ( अर्थात् प्रत्यक्ष-योग्यप्रतियोगिनः अदर्शनम् ) अभावप्रत्यक्षे कारणम्। दोषवशात् एव शशशृङ्गं नास्तीति प्रत्यक्षं भवति।

अयमाशयः—शशविषाणं किमपि वस्तु प्रसिद्धं नास्ति, "शशविषाणम्" एतादृशं यथार्थप्रत्यक्षं कदापि न सम्भाव्यते। दूरात् शशदर्शनानन्तरं, तस्य लम्बकर्णद्वयं शृङ्गं मत्वा भ्रमो भवितुमर्हति। एतादृशस्थले दूरत्वं कर्णयोः शृङ्गसादृश्यज्ञानादिकम् एतादृशभ्रमप्रत्यक्षजनकदोषभूतम्।

यत्र यद् वस्तु न वर्तते तत्र तस्य वस्तुनः ज्ञानं भ्रमज्ञानम्। यस्य विशेषकारणस्य वशात् एतादृशभ्रमज्ञानं भवति तदेव दोषपदवाच्यम्। रज्जौ सर्पज्ञानं भ्रमज्ञानम्। अल्पप्रकाशे रज्जुसाधारणधर्मस्य एवं सर्पसाधारणधर्मस्य लम्बमानत्वस्य उभयधर्मस्य दर्शनमेव एतादृशभ्रमस्य विशेषकारणम्, अर्थात् अल्पप्रकाशे लम्बमानरज्जुपदार्थस्य दर्शनानन्तरं सर्पभ्रमो भवति। शशशृङ्गाभावः, शृङ्गे शशसम्बन्धाभावो वर्तते, शशशृङ्गमिति ज्ञानं भ्रमज्ञानम्। दूरत्वं, शशकर्णयोः सूक्ष्माग्रत्वं लम्बमानत्वादिकमेव साधारणधर्मः तस्य धर्मस्य दर्शनमेव शशशृङ्गरूपभ्रमजनकदोषभूतम्। अर्थात् दूरात् शशसूक्ष्माग्रस्य लम्बकर्णस्य च दर्शनानन्तरं शृङ्गभ्रमो भवति।

अतः एतादृशदोषसमवधाने इन्द्रियसम्बन्धः उद्भूतरूपादिकमेव शशशृङ्गरूपप्रत्यक्षस्य योग्यता। अर्थात् एतादृशदोषसंघटनस्थले शशकर्णे चक्षुःसंयोगादिप्रत्यक्षकारणसकलसमवधानदशायां शशशृङ्गमिति भ्रमः भवति। तथा च शशशृङ्गमित्याकारकभ्रमप्रत्यक्षस्य योग्यतायाः सम्भवस्थले शशशृङ्गादर्शनम् [ शशशृङ्गमित्येतादृशभ्रमस्य प्रत्यक्षाभावः ] न भवति, अर्थात् एदादृशभ्रम एव भवति एवं शशशृङ्गादर्शनस्थले उक्तरूपयोग्यता नास्ति इत्यवश्यमेव स्वीकर्तव्यम्।

अस्यां स्थितौ शशशृङ्गमित्येतादृशप्रत्यक्षयोग्यताया एवं शशशृङ्गादर्शनस्य च कदाचित् सम्मिलितं न भवति, अर्थात् शशशृङ्गमित्येतादृशप्रत्यक्षस्य योग्यतासम्भवस्थलेऽदर्शनम् [शशशृङ्गमित्येतादृशप्रत्यक्षाभावः] किञ्च शशशृङ्गस्यादर्शनस्थले शशशृङ्गमित्येतादृशभ्रमप्रत्यक्षस्य योग्यता अर्थात् दोषघटितसामग्री न सम्भवति।

अयमाशयः—शशशृङ्गादर्शनसद्भावे शशशृङ्गमित्येतादृशी प्रत्यक्षयोग्यता नास्तीति अथ वा उक्तयोग्यतासद्भावे शशशृङ्गमिति भ्रमप्रत्यक्षाभावो नास्तीति स्वीकर्तव्यम्।

आत्मा विषयविशेषेऽज्ञः कार्यविशेषे चाक्षमः अर्थात् कोऽपि आत्मा सकलं ज्ञातुं सर्वं कार्यं वा कर्तुं न शक्नोति इत्येव आत्मस्वभावः। अहं सर्वं ज्ञातुं न शक्नोमि अहं सर्वं कर्तुं न शक्नोमि इत्येवानुमानम्। आत्मपरमात्मव्यतिरिक्तः पदार्थः नास्ति अतः परमात्मा सर्वशक्तिमान्, सर्वज्ञः नास्ति सोऽपि कस्मिंश्चित् कार्ये अक्षमः कस्यचिद्विषयस्य अज्ञः सर्वज्ञः सर्वशक्तिमाँश्च ईश्वरः अलीकः। अनुमानम्—आत्मा, किञ्चिद्विषयानभिज्ञः, अर्थात् असर्वज्ञः, आत्मत्वात्। अथ वा—आत्मा, किञ्चित्कार्यक्षमः, अर्थात् असर्वकर्ता, आत्मत्वात्॥ ३॥

इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ।
नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥४॥

प्रसिद्धांशे इष्टसिद्धिः अर्थात् पूर्वोक्तानुमानेन अहमित्याकारप्रत्यक्षविषयजीवात्मस्वरूपपक्षे असर्वज्ञत्वस्य अकर्तृत्वस्य च साध्यस्य सिद्धिः इष्टस्य अभिप्रेतार्थस्यैव सिद्धिः। अगोचरेऽप्रत्यक्षे वा ईश्वरे हेत्वसिद्धिरर्थात् स्वरूपसिद्धिर्भवति । सामान्यतः अनुमितिर्न सिद्ध्यति ! आत्मत्वजातौ सा स्वरूपसिद्धिर्भवति ।

जीवः ईश्वरश्च सर्वोऽपि आत्मा पूर्वपक्षोक्तानुमानस्य पक्षभूतः । एतादृशानुमानेन जीवस्वरूपपक्षे असर्वज्ञत्वस्य एवम् अकर्तृत्वस्य अनुमितौ सिद्धसाधनदोषो भवति। अयमाशयः—ज्ञातव्यविषयस्य निश्चितरूपेण ज्ञाने सति पुनः ज्ञानस्य प्रयोजनं नास्तीति सिद्धविषयस्य ज्ञातविषयस्य वा अनुमाने प्रवृत्तिर्न जायते । जीवस्य असर्वज्ञत्वमसर्वकर्तृत्वं च उभयवादिसिद्धम् । अतः, जीवस्वरूपपक्षे असर्वज्ञत्वस्य साधकेन पूर्वोक्तानुमनेन न किमपि प्रयोजनम् । एवमीश्वरस्वरूपपक्षेऽपि एतादृशमनुमानं न सम्भवति यतः, वादिमते ईश्वरस्य अलीकत्वात् पूर्वोक्तानुमाने असिद्धिदोषो वर्तत एवमेव स्वरूपासिद्धिरपीति । अयमाशयः—पक्षवृत्तित्वरूपेण हेतोः ज्ञानमर्थात् हेतुः पक्षे वर्तते इत्यादिनिश्चयः अनुमितेः कारणम् । पक्षः यदि प्रसिद्धो नास्ति तदा हेतुमान् पक्षः, पक्षे हेतुः इत्यादिनिश्चयो न सम्भवति, तथा च स्वरूपासिद्धिर्दोषो भवति ।

फलतः पूर्वोक्तविचारस्थले एतादृशमनुमानं न सम्भवति । किञ्च ईश्वरो नास्तीति ज्ञानार्थमेतादृशानुमानातिरिक्तानुमानस्य सम्भावना नास्ति ।

यदि पूर्वपक्षोक्तानुमानस्य पक्षः आत्मा आत्मत्वजातिर्वा । ईश्वरस्याप्रसिद्धावपि जीवे आत्मत्वजातेः प्रसिद्धिवशात् तादृशानुमाने पक्षासिद्धिरूपो दोषः नास्ति तथैव पक्षासिद्धिनिबन्धनः स्वरूपासिद्धिरपि नास्ति । परञ्च एतदपि न समीचीनम् यतः—आत्मत्वजातिः, असर्वज्ञा, असर्वकर्त्री, आत्मत्वात् , एतादृशानुमाने पक्षे आत्मत्वजातौ असर्वज्ञत्वमसर्वकर्तृत्वञ्चोभयवादिसिद्धम् इति सिद्धसाधनमेव ।

श्रुतिस्मृतिपुराणादिशास्त्रे ईश्वरः प्रसिद्धः, अतः ईश्वरं पक्षीकृत्य अस्तित्वाभावानुमितौ पक्षासिद्धिर्दोषो न सम्भवति । ईश्वरः, अस्तित्वाभाववान् , बाह्यरूपेण ज्ञानाविषयत्वात् , इत्याद्यनुमानसाहाय्येन ईश्वरे अस्तित्वाभावानुमितिः सम्भवति ॥ ४ ॥

आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ।
आगमत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥

आगमादेः प्रमाणत्वस्वीकारे बाधदोषः सम्भवति इति अस्तित्वस्य निषेधः न सम्भवति । यदि आगमस्य आभासत्वं स्यात् अर्थात् आगामादिः प्रमाणाभासस्तदा आश्रयासिद्धिरेव अनिवार्या स्यात् ।

श्रुतिस्मृतिपुराणादिशास्त्राणां प्रमाणत्वे एतेषु शास्त्रेषु ईश्वरस्य अस्तित्वस्य बहुशः उक्तत्वात् ईश्वरस्य अस्तित्वं स्वीकर्तव्यमेव । अतः ईश्वरे पूर्वपक्षोक्तानुमानस्य साध्यभूतस्यास्तित्वाभावस्य निषेधः अस्तित्वं स्वीकर्तव्यमिति बाधदोषः सम्भवति । तथा च पूर्वपक्षोक्तानुमाने अस्तित्वाभावस्य यथार्थतः साध्यत्वं नास्ति । यद्येतेषां शास्त्राणां प्रमाणत्वं नास्ति तदा पक्षस्य ईश्वरस्य असिद्धिवशात् इश्वरे अस्तित्वाभावस्य सदनुमानत्वं नास्ति ।

प्रत्यक्षयोग्यतया सह अदर्शनमर्थात् एकत्र प्रतियोगिनः प्रत्यक्षयोग्यता एवमदर्शनम् एतदुभयम् अभावप्रत्यक्षे कारणम् , इत्यत्र प्रमाणं नास्ति, प्रतियोगिनोऽदर्शनमेव अभाव-प्रत्यक्षे कारणम् प्रतियोगिनः प्रत्यक्षत्वं नैव सर्वथा अपेक्षितम् । यस्य वस्तुनः प्रत्यक्षत्वं न भवति तन्नास्ति, अतीन्द्रियस्य परमाणोः स्थितिर्न भवति तथापि न काचित् क्षतिः । पर्वतस्य सर्षपस्य च विशेषव्यक्तित्वमेव उभयोरसमानतायाः कारणम् , तदर्थमविभाज्य-सूक्ष्मतमतीन्द्रियपरमाणोः स्वीकारस्य आवश्यकता नास्ति ।

इदानीमेष सन्देहो भवितुमर्हति यत् वस्तुनः प्रत्यक्षाभावे तद्वस्तु नास्तीति निर्णयः कथमिव स्यात् ? अप्रत्यक्षवस्तुनोऽपि अनुमानादिना ज्ञानं भवति, ईश्वरस्य अप्रत्यक्ष-त्वेऽपि ईश्वरोऽनुमानस्य विषय इति वक्तुं न शक्यते, यतः अनुमानादीनां प्रमाणत्वमेव नास्ति, प्रत्यक्षातिरिक्तं प्रमाणं नास्ति । हेतोः दर्शनानन्तरं साध्यस्य यथार्थज्ञाने सम्भवति अनुमानस्य प्रामाण्यं सम्भवति । किन्तु हेतोः दर्शनानन्तरं साध्यस्य यज्ज्ञानं भवति तत् सम्भावनामात्रम् । धूमदर्शने सति पर्वतादौ साध्यस्य वह्नेः ज्ञानमपि सम्भावनामात्रमेव एतादृशसम्भावनाबलेन धूमदर्शने वह्न्याहरणार्थं प्रवृत्तिर्भवति । अतः यज्ज्ञानमनुमित्यात्मकं भवति तत्संशयात्मकं ज्ञानं यथार्थज्ञानं न वर्तते । तस्मात् एता-दृशसम्भावनायाः कारणीभूतः परामर्शः प्रमायाः यथार्थज्ञानस्य वा कारणं न । इयं हि चार्वाकमतानुवर्तिनी बौद्धानामापत्तिः । बौद्धानां मते अनुमानस्य प्रामाण्यं वर्तते ॥५॥

दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात् ।
अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥

उपलब्धौ सत्यां भावस्य [ प्रतियोगिनः ] उपलब्ध्यभावे अभावस्य निश्चयवशात् संशयो न भवितुमर्हति। उपलब्ध्यभावे प्रत्यक्षकारणस्य इन्द्रियादेः बाधितत्वात् प्रत्यक्षमपि दुर्लभम्।

सम्भावना—संशयो हि एकत्र भावाभावरूपकोटिद्वयात्मकं परस्परविरुद्धविषयकं ज्ञानं वा विरुद्धकोटिद्वयमध्ये भावाभावयोरेकतरस्य निश्चयसद्भावे संशयो न भवितुमर्हति। पर्वतो वह्निमान् न वेति ? एकः संशयः। वह्निः वह्नेरभाव एव संशयस्य कोटिद्वयम्, पर्वतो वह्निमान् किं वा पर्वतो वह्न्यभाववान् इति निश्चयसद्भावे पर्वतो वह्निमान् न वेति संशयो नोदेति। अस्यां स्थितौ अभावप्रत्यक्षे प्रतियोगिनः अदर्शनस्य कारणत्वे धूमदर्शने सति पर्वते वह्निसम्भावनास्थले प्रतियोगिनः वह्नेरदर्शनवशात् वह्न्यभावस्य निर्णयात् पर्वतो वह्निमान् न वेति सम्भावना संशयो वा न स्यात्। एतादृश-सन्दिग्धस्थले भावस्य अदर्शनात् = प्रत्यक्षतः निश्चयात् अभाववशतः अभावस्य निश्चयः सम्भावनाया विषयः इति संशयमात्रस्य उच्छेद एव स्यात्।

किञ्च भावस्य प्रतियोगिनो वा अदर्शनात् यद्यभावस्य निश्चयः स्यात्तदा अतीन्द्रियचक्षुःकर्णादीन्द्रियादीनां दर्शनं न सम्भवतीति इन्द्रियादीनाम् अदर्शनवशात् इन्द्रियाणामभावं निश्चित्य इन्द्रियाणि न सन्तीति वक्तुं शक्यते। तथा सति प्रत्यक्ष-मात्रप्रामाण्यवादिनां मतेऽपि इन्द्रियादीनामभाववशात् प्रत्यक्षमेव न सम्भवति।

अपि च पुत्रपौत्रादीनां दूरदेशगमने सति केवलम् अदर्शनवशात् तेषामभावं निश्चित्य रोदनादिकं स्यात् अनन्तरं गृहे आगतेऽपि आनन्दस्य हेतुरेव नास्ति।

यद्धि साध्यव्यापकं = साध्यस्थले यस्य अभावः नास्ति, एवं हेतोरव्यापकः=हेतोराश्रये यस्य अभावः वर्तते स एव उपाधिः। आर्द्रेन्धनं धूमस्य सर्वाश्रय एव तिष्ठति, अतः धूमस्य व्यापकमेवं वह्न्याश्रये न वर्तते, तप्तलौहपिण्डे वह्निः वर्तते आर्द्रेन्धनं न तिष्ठति अतः आर्द्रेन्धनं वह्नेरव्यापकम्। अत एव वह्निहेतुकधूमवत्त्वानुमाने आर्द्रेन्धनमुपाधिः। तप्तलौहपिण्डे आर्द्रेन्धनस्य अभाव इति वह्निरार्द्रेन्धनस्य व्यभिचारी एवमार्द्रेन्धनं धूमस्या-श्रये एव तिष्ठति तथा च वह्निरार्द्रेन्धनस्य व्यभिचारी इति धूमस्यापि व्यभिचारी, एतादृशोपाधिस्थले हेतुः सोपाधिक इति अवश्यमेव साध्यस्य व्यभिचारी। यत्र उपाधेर्व्यभिचारः अर्थात् सोपाधिकत्वम्, तस्मिन् आधारे एव साध्यस्य व्यभिचार इति यो हि सोपाधिकः हेतुः स एव साध्यस्य व्यभिचारी इति व्याप्तिः स्वीकरणीया। तथा च व्यभिचारसम्बन्धेन उपाधिविशिष्टता उपाधिव्यभिचारः साध्यव्यभिचारव्याप्यो वा।

व्याप्यसंशयः व्यापकसंशयजनकः अर्थात् कस्मिन्नपि आधारे व्याप्यसंशयसद्भावे व्यापक-संशयः स्वाभाविकः धूमः वह्निर्व्याप्यः, वह्निः धूमस्य व्यापकः पर्वतः धूमवान् न वा ? इत्यादिसंशयसद्भावे पर्वतो वह्निमान् न वा ? इत्यादिसंशयो भवितुमर्हति । तथा च हेतुः सोपाधिको न वा अर्थात् व्यभिचारसम्बन्धेन उपाधिविशिष्टो न वा, अथ वा उपाधिः व्यभिचारी न वा ? इत्यादिसंशयसद्भावे हेतौ साध्यव्यभिचारसंशयः अर्थात् हेतुः साध्यस्य व्यभिचारी न वा ? इत्यादिसंशयः स्वाभाविकः । विशेषतः विचार-स्थले मध्यस्थस्य सोपाधिकहेतौ साध्यस्य व्यभिचारसंशयः अवश्यम्भावी । व्यभिचार-संशयः व्याप्तिनिश्चयस्य प्रतिबन्धकः, यतः, हेतुः साध्याभावविशिष्टस्थानेऽवस्थितो न वा ? अर्थात् साध्यस्य स्थित्यभावेऽपि हेतुः अस्ति न वा ? हेतोः आश्रयस्थाने साध्यमस्ति न वा ? इत्यादिसंशय एव हेतौ साध्यव्यभिचारसंशयः । एतादृशव्यभि-चारसंशयस्थले साध्याभावविशिष्टस्थाने हेतोरनवस्थितिस्वरूपव्याप्तिनिश्चयः; किं वा यत्र हेतुः तत्रैव साध्यं किं वा हेतुः साध्याभावविशिष्टस्थाने न वर्ततेऽथ वा हेतुः साध्यस्य नियतसहचरः इत्यादिनिश्चयो न भवितुमर्हति । तथा च हेतौ सोपाधिकत्वसंशयः, उपाधेः व्यभिचारसंशयो वा अर्थात् हेतुः सोपाधिको न वा ? हेतुः उपाधेः व्यभिचारी न वा इत्यादिसंशयः हेतौ साध्यनिश्चयस्य प्रतिबन्धकः । व्याप्तिनिश्चयः अनुमितेः कारणम्, व्याप्तिनिश्चयाभावे अनुमितिर्न भवति । तथा च हेतौ सोपधिकत्वसंशयस्थले वा अनुमितिरसम्भवैव । अत एव हेतौ सोपाधिकत्वसंशयनिरासः आवश्यकः । सोपाधिकत्वसंशये कोटिद्वयं सोपाधिकत्वं सोपाधिकत्वाभावश्च । संशयस्य एकतर-कोटेः निश्चयसद्भावे संशयो न भवति । अतः हेतुः व्यभिचारसंबन्धेनोपाधिविशिष्टः ( सोपाधिकः ) अथ वा व्यभिचारसम्बन्धेन उपाधिविशिष्टत्वाभावविशिष्टः इत्यादिनिश्चय-सद्भावे सोपाधिको न वा इत्यादिसंशयो न भवितुमर्हति । यद्यपि सद्धेतुस्थले वास्तविकः उपाधिर्न वर्तते—अर्थात् साध्यव्यापकः सन् हेतोरव्यापकः एतादृशः पदार्थः नैव प्रसिद्धिं प्राप्नोति । यथा—पर्वतो, वह्निमान् , धूमादित्यादिसद्धेतुस्थले, यद्यपि जगति तादृशः पदार्थः नास्ति प्रसिद्धः यो वह्नेर्व्यापकः धूमस्य चाव्यापकः तथापि पूर्वोक्त-सद्धेतुस्थले वह्नेर्व्यापकः धूमस्य चाव्यापकः अतीन्द्रियः पदार्थः वर्तते न वा ? एतादृशः पदार्थः सम्भवति न वा ? इत्यादिसंशयमूले हेतुः सोपाधिको न वा ? अर्थात् व्यभिचारसम्बन्धेनातीन्द्रियोपाधिविशिष्टः न वा ? एतादृशसंशयो भवितु-मर्हति । तथा सति हेतौ साध्यव्याप्तिनिश्चयोऽसम्भवः । एतादृशसोपाधिकत्वस्य अर्थात् अतीन्द्रियोपाधिविशिष्टत्वाभावस्य निश्चयः आवश्यकः ।

अस्यां स्थितौ प्रतियोगिनः अदर्शनमात्रमेव अभावप्रत्यक्षस्य नैव कारणम्, तथा सति हेतौ अतीन्द्रियोपाध्यभावनिश्चयो न भवितुमर्हतीति हेतौ अतीन्द्रियोपाधिविशिष्टाभावसंशयस्य अर्थात् हेतुः व्यभिचारसम्बन्धेनातीन्द्रियोपाधिविशिष्टो न वेत्यादिसंशयमूलकः हेतुः सोपाधिको न वा ? एतादृशसंशयस्य निरासो नैव भवितुमर्हति, तथा च हेतौ साध्यव्याप्तिनिश्चयः असम्भवः स्यात्। प्रतियोगिनोऽदर्शनमात्रस्य अभावप्रत्यक्षं प्रति कारणत्वे सद्धेतुस्थले प्रत्यक्षयोग्यस्य अतीन्द्रियोभयविधोपाधेरेव वा अर्थात् सामान्यतः सोपाधिकत्वस्य [ उपाधिविशिष्टाभावस्य ] अभावः निश्चितो भवितुमर्हति, तथा च हेतुः सोपाधिको न वा एतादृशसंशयस्य निरासो भवितुमर्हतीति हेतौ साध्यव्याप्तिनिश्चयः नासम्भवः, इति नानुमानोच्छेदः। अत एव प्रतियोगिनः अदर्शनमात्रस्यैव अभावप्रत्यक्षं प्रति कारणत्वं वक्तव्यम्, तथा च ईश्वरस्य दर्शनं न भवतीति ईश्वरो नास्तीति वक्तुं शक्यते ॥ ६ ॥

शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥ ७ ॥

यदि शङ्का वर्तते तदा अनुमितिरप्यस्ति, यदि शङ्का नास्ति तदापि अनुमितिरस्ति, व्याघातावधिः शङ्का शङ्कावधिस्तर्कः।

हेतौ साध्यसंशयव्यभिचारस्वीकारे अनुमानस्य प्रामाण्यं नैव अस्वीकृतं स्यात् अपि तु अनुमितिः अवश्यमेव स्वीकर्तव्या। अयमाशयः—संशयार्थं संशयस्य कोट्योः विशेषणस्य एवं धर्म्मिणः विशेष्यस्य वा ज्ञानमावश्यकम्। पर्वतः वह्निमान् न वा ? एकः संशयः, वह्निः एवं वह्न्यभावः उक्तसंशयस्य कोटिद्वयं, पर्वतः धर्मी विशेष्यो वा। पर्वतो वह्निमान् न वेति संशयार्थं वह्नेः, वह्न्यभावस्य, एवं पर्वतस्य च ज्ञानमावश्यकम्, एतेषां ज्ञानाभावे पर्वतो वह्निमान् न वेति ज्ञानं न भवितुमर्हति। अस्यां स्थितौ अतीन्द्रियोपाधिसंशयवशतः हेतौ साध्यसंशयव्यभिचारस्वीकारेऽनुमितिरवश्यमेव स्वीकरणीया, अनुमानस्य प्रामाण्यं नैव अस्वीकृतं भवति। वह्निमान् धूमात् इति सद्धेतौ विश्लेषणं क्रियते। धूमः वह्नेर्व्यभिचारी न वा ? इत्यादिसंशय एव प्रकृतस्थले हेतौ साध्यव्यभिचारसंशयः। वह्निव्यभिचारी वह्निव्यभिचाराभाववान् इति उक्तसंशयस्य कोटिद्वयं विशेषणं वा धूमः धर्मी विशेष्यभूतो वा। एतादृशसंशये वह्नेर्व्यभिचारस्य वह्नेर्व्यभिचाराभावस्य एवं धूमस्य च ज्ञानमावश्यकम्। एतेषां ज्ञानं येषां नास्ति तेषामेष संशयो न भवति धूमः वह्निव्यभिचारी न वा ? इति। वह्नि-

व्यभिचारज्ञानार्थं वह्निज्ञानस्यावश्यकतास्ति। अस्यां स्थितौ वह्नेः धूमस्य च ज्ञानं येषां नास्ति तेषामुक्तसंशयो न भवितुमर्हति। किन्तु एकत्र एकदा वह्निधूमयोः प्रत्यक्षस्थले प्रत्यक्षधूमं प्रत्यक्षवह्निञ्च विषयं कृत्वा व्यभिचाराभावं निश्चित्य अर्थात् धूमः वह्न्यभावविशिष्टस्थाने न तिष्ठति इत्यादिरूपेण निश्चयः स्वाभाविकः, व्यभिचाराभाव-निश्चयश्च व्यभिचारसंशयस्य प्रतिबन्धकः तथा च एतादृशं धूमं वह्निं च विषयं कृत्वा धूमः वह्निव्यभिचारी न वेति संशयो नोदेति। कालान्तरीयं देशान्तरीयमप्रत्यक्षं वह्निं धूमं च विषयं कृत्वैव धूमः वह्निव्यभिचारी न वेति संशयः सम्भवति। धूमः वह्नि-व्यभिचारी न वेति संशयस्य प्राक्काले कालान्तरीयस्य देशान्तरीयस्य वह्नेः धूमस्य च ज्ञानं प्रत्यक्षप्रमाणेन न सम्भवति। वह्नेः धूमस्य च ज्ञानं विना एतादृशसंशयो न भवितुमर्हति। तथा च धूमः वह्निव्यभिचारी न वेति संशयस्वीकारेऽनुमानप्रमाणस्य साहाय्येनैव वह्नेः धूमस्य च ज्ञानं स्वीकर्तव्यम्। अस्यां स्थितौ धूमे वह्निव्यभिचार-संशयस्वीकारे अनुमितेः अस्वीकारो न भवितुमर्हति, तथा च अनुमानस्य प्रामाण्यमवश्यमेव स्वीकरणीयम्। सौगतमते शब्दस्य उपमानस्य च पृथक् प्रामाण्यं नास्ति, उभयोरनु-मानगतार्थत्वमेवाङ्गीकृतम्। यदि धूमे वह्निव्यभिचारसंशयो नास्ति अर्थात् सौगताः एतादृशसंशयं न स्वीकुर्वन्ति तदा प्रतिबन्धकाभावात् धूमे वह्निव्याप्तिनिश्चयः भविष्यति, व्याप्तिनिश्चये च यदि विशेषबाधा नास्ति तदा अनुमितिः अवश्यम्भाविनी; अनुमान-प्रामाण्यमवश्यमेव स्वीकरणीयम्। किन्तु हेतौ अतीन्द्रियोपाधिसंशयस्य सद्भावात् हेतुः साध्यव्यभिचारी न वेति संशयो भवितुमर्हति इति व्याप्तिनिश्चयो न भवेत्। तथा च हेतौ साध्यव्यभिचारनिरासकरणमावश्यकम् तदर्थं च अदर्शनमात्रस्यैव प्रत्यक्षं प्रति कारणत्वं स्वीकर्तव्यम्।

किन्तु एतन्न सुसङ्गतम्, यतः, तर्कः संशयनिवर्तकः; स्थलविशेषे तर्केणापि व्यभिचारसंशयस्य निवृत्तिर्जायते। पूर्वोक्तादाहरणविश्लेषणेनैवैतस्यावगतिर्भविष्यति— धूमः वह्निव्यभिचारी न वा? एतादृशसंशय एव हेतौ साध्यव्यभिचारसंशयः। धूमः यदि वह्निव्यभिचारी स्यात्तदासौ वह्निजन्यो न स्यात् अयमेव वह्निव्यभिचारसंशय-निवर्तकस्तर्कः। अत्र वह्निव्यभिचारः आपादकः वह्निजन्यत्वाभावः वह्निजन्यभेदो वा आपाद्यः। तर्के आपाद्याभावनिश्चयस्य कारणत्वात् धूमे आपाद्यस्य वह्निजन्यत्वा-भावस्य अभावः अर्थात् वह्निजन्यत्वनिश्चयः तस्य स्थितिकाले एव अर्थात् धूमो वह्निजन्य इति निश्चयसद्भावे एव धूमे वह्निव्यभिचारसंशयस्थले उक्ततर्कः समुपस्थितो

भवति । आपाद्यं = व्यापकम्, आपादकं = व्याप्यम्, व्यापकाभावनिश्चयसद्भावे व्याप्याभावनिश्चयः स्वाभाविकः । तथा चोक्ततर्केण धूमे वह्निव्यभिचाराभावनिश्चयः सम्भवति इति उक्ततर्केणैव धूमः वह्निव्यभिचारी न वा वह्निं विनापि धूमः तिष्ठति न वेत्यादिव्यभिचारसंशयस्य निरासो भवति । एतदर्थं हेतौ अतीन्द्रियोपाध्यभावनिश्चयस्य आवश्यकता नास्ति । तथा च केवलमदर्शनस्य अभावप्रत्यक्षं प्रति कारणतास्वीकारस्य आवश्यकता नास्ति ।

इदमत्र विचारणीयं तर्के आपादके आपाद्यस्य व्याप्तिनिश्चयस्य कारणतां स्वीकृत्य आपादके आपाद्यव्यभिचारसंशयकरणमावश्यकम्, अन्यथा तर्कः नैव स्यात् । एतदर्थं यदि पुनः तर्क उपस्थापितः स्यात् तदा अविश्रान्ततर्कधारायाः आवश्यकता स्यात्, तर्कधारायाः अवसानं नैव स्यात् इति अनवस्थादोषः स्यात् प्रकृतसंशयस्य च निरासो नैव भवेत्, किन्तु संशयस्य निरासो जायतेऽविश्रान्ततर्कधारैव न जायते । अतः तर्केणैव संशयस्य निवृत्तिर्भवतीति न, संशयनिवृत्त्यर्थमेकस्तर्क एव उपायो नास्ति । स्थलविशेषे व्याघातादिजन्योपायेनापि संशयस्य निवृत्तिर्जायते, संशयनिवारणार्थमविश्रान्ततर्कधारायाः आवश्यकता नास्ति । यथा—अस्मिन्नेव स्थले वह्नेर्व्यभिचारस्वरूपापादके वह्निजन्यत्वाभावव्यभिचारसंशयस्य सम्भावनायां तन्निरासार्थं तर्कप्रयोगस्य प्रयोजनं नास्ति अपि तु व्याघातेनैवात्र आपादकवह्निव्यभिचारे आपाद्यवह्निजन्यत्वाभावस्य व्यभिचारसंशयस्य निरासो जायते । व्याघातः तर्ककारिपुरुषस्य स्वाभाविकप्रवृत्तेर्विरोधः, संशयनिरासार्थं तदैव तर्कः करणीयः यदा स्वाभाविकप्रवृत्तेर्विरोधो न भवेत्, स्वाभाविकप्रवृत्तेर्विरोधसद्भावे तर्कप्रयोगस्यावश्यकता नास्ति स्वाभाविकप्रवृत्तेर्विरोध एव संशयं निवारयेत् । क्षुन्निवृत्त्यर्थं भोजने, धूमार्थे वह्न्याहरणे पुरुषस्य स्वाभाविकी प्रवृत्तिः दृश्यते । भोजनोत्तरं क्षुन्निवृत्तिर्जायते इति यस्यानुभवः वर्तते तस्यैव भोजने स्वाभाविकी प्रवृत्तिर्जायते । वह्निं विना धूमो न जायते, धूमो वह्निजन्यः इति ये जानन्ति तस्यैव धूमार्थं वह्न्याहरणे स्वभावतः प्रवृत्तिः जायते । ये धूमो वह्निजन्य इति निश्चितरूपेण न जानन्ति, ते तर्कं कुर्वन्ति धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् । अस्यां स्थितौ वह्निव्यभिचारे वह्निजन्यत्वाभावव्यभिचारसंशयसम्भवे धूमार्थं नियमेन वह्न्याहरणप्रवृत्तेर्विरोधः स्यात्, अतः वह्निव्यभिचारः वह्न्यभावविशिष्टस्थाने अवस्थितः एवं वह्निजन्यत्वाभावव्यभिचारः वह्निजन्याभावस्य योऽभावः = वह्निजन्यत्वं तद्विशिष्टस्थाने अवस्थितिः अर्थात् वह्निजन्यवस्तुनि अवस्थितिः । वह्निजन्यवस्तुनि

वह्न्यभावविशिष्टस्थानसम्बन्धिनोऽवस्थितिर्न घटते । अस्यां स्थितौ वह्निव्यभिचारः वह्निजन्यत्वाभावव्यभिचारी न वा ? अर्थात् वह्निजन्यं वस्तु वह्न्यभावविशिष्टस्थाने सम्भवति न वा ? एतादृशसंशयसद्भावे धूमः वह्निजन्यः इति येषां निश्चयरूपेण ज्ञानं; तेषां धूमार्थं वह्न्याहरणे या प्रवृत्तिस्तया सह विरोधः उपस्थितो भवति । अभिज्ञः धूमार्थं वह्न्याहरणे प्रवृत्तो भवति, अतः स्वभाविकप्रवृत्तेर्विरोध एव अस्मिन् स्थले व्यभिचारसंशयं निराकरोति, यो वह्निव्यभिचारी स एव वह्निजन्यत्वाभावविशिष्टः अर्थात् वह्निजन्यो न, एतादृशव्याप्तिनिश्चये बाधा न वर्तते । एतदर्थं तर्कस्य आवश्यता नास्ति, अतः अनवस्था नास्ति, स्थलविशेषे व्याघातेनापि संशयस्य निरासो भविष्यति । हेतौ अतीन्द्रियोपाधिसंशयस्य निवर्तकातीन्द्रियोपाधेरभावनिश्चयार्थं केवलादर्शनस्य कारणता वक्तुं न शक्यते, अनुमानप्रामाण्यं नैव व्याहतं स्यात् । विषयस्तु दुरुहः ।

प्रमाणसमूहेषु येन प्रमाणेन अप्रत्यक्षवस्तुनि प्रत्यक्षवस्तुनः सादृश्यं उत्पद्यते तदेव उपमानप्रमाणम् । यथा—परिदृश्यमानमेतद्वस्तु (गवयः) गोसदृशम् एवंरूपेण प्रत्यक्षीकृतगवयवस्तुनि गोसादृश्यज्ञानमुपमानप्रमाणम्, एतादृशसादृश्यज्ञानानन्तरं सैव गौः अर्थात् प्रत्यक्षाविषयभूता गौः एतद्दृश्यमानवस्तुनः सदृशी एतादृशं यथार्थज्ञानमेव उपमिति-प्रमितिः अर्थात् एतदुपमानप्रमाणस्य फलम् । यस्य सदृशं वस्तु नास्ति एतादृशं किमपि नास्ति । सर्वज्ञपरेश्वरसदृशवस्तु उपलब्धेरविषयः सर्वज्ञपरमेश्वरसदृशः पदार्थः उपलब्धेरविषयः तस्मात् कस्मिन्नपि वस्तुनि परमेश्वरसादृश्यज्ञानेन अर्थात् अयं पदार्थः परमेश्वरसदृश एतादृशज्ञानेन सर्वज्ञः परमेश्वरः एतत्सदृशः एतादृशोपमितिः नैव सम्भवति । अस्यां स्थितौ सर्वज्ञपरमेश्वरे उपमानप्रमाणविषयता नास्तीति सर्वज्ञपरमेश्वर-तुलना आकाशकुसुमायमाना । अद्वैतवादविरुद्धे चैतादृशी आपत्तिर्नैव सम्भवति, ब्रह्मणः तुलनारहितत्वेऽपि तत्र आकाशकुसुमम्, किन्तु नैयायिकः द्वैतवादी असंख्यव्यष्टेः पारमर्थिकत्वं स्वीकरोति, तस्मात् परमार्थतः द्रव्यत्वं गुणत्वं, घटत्वमित्याद्यनुगतविशेषधर्मः न्यायमतेऽवश्यमेव स्वीकर्तव्यः । ईश्वरस्यैतादृशः न कोऽपि विशेषधर्मः योऽन्यत्रापि सम्भवति, तस्मात् ईश्वरोऽलीकः आकाशकुसुमायमानः । अथ वा कीटपतङ्गादीनामावद्धार्थमूर्णनाभः यथा स्वशरीरसाहाय्येन जालं प्रस्तुतं करोति तथैव ईश्वरः जीवगणानामाबद्धार्थं स्वशरीरमर्थात् जगतः उपादानभूतपरमाणुसाहाय्येन एतद्विचित्रं जगत् करोति । तथा च एतादृशोपमानप्रमाणेन परमेश्वरे ऊर्णनाभसादृश्यज्ञानमर्थात् ईश्वरः ऊर्णनाभसदृशः एतादृशं ज्ञानं सम्भवति, तथा सति जगतः कर्ता ईश्वरः

ऊर्णनाभसदृशः असर्वज्ञः इत्येव निश्चितं भवति, सर्वज्ञः ईश्वरः तुलनारहितः आकाश-कुसुमायमानः ।

### वैशिषिकमतेन विवेचनम्

अनुमानान्तर्गतरूपेणैवोपमानस्य प्रामाण्यम्, उपमानस्य पृथक् प्रामाण्यम् नास्ति । अयमेतत्सदृश इति एतादृशसादृश्यज्ञानेन **सा गौः एतत्सदृशी** एतादृशं प्रमाज्ञानं जायते । एतदेवातिरिक्तमुपमानप्रमाणं वादिनामभिमतम् । **सा गौः एतत्सदृशी** एतादृशज्ञानार्थमयं गोसदृशः एतादृशोपमानस्य पृथक् प्रामाण्यस्वीकारस्य आवश्यकता नास्ति । यतः—**अयमेतद्गोसदृशः** एतादृशज्ञानान्तरम**सौ गौः एत-त्सदृशी** एतादृशज्ञाने जाते यस्मिन् वस्तुनि एतत्सादृश्यं नास्ति तत्सदृशमिदं वस्तु न भवितुमर्हति । एतादृशव्यतिरेकज्ञानमावश्यकमन्यथा **अयमेतद्गोसदृशः** एतादृशज्ञाने सत्येव तद्गौरेतत्सदृशी इत्येतादृशज्ञानं कथमिव स्यात्? तस्मात् उपमानस्थलेऽपि व्याप्तिज्ञानस्यावश्यकता वर्तते । अस्यां स्थितौ व्याप्तिज्ञानजन्योपमितिप्रमितिरिति अनुमित्यन्तर्गता । अनुमानरूपेणैवोपमितेः प्रामाण्यमुपमानस्य पृथक् प्रामाण्यमर्थात् व्याप्तिज्ञाननिरपेक्षं प्रामाण्यं नास्ति, तस्मात् व्यतिरेकव्याप्तिज्ञानमेवोपमानरूपमनुमानम् । तथा च उपमानेन प्रतिबद्धोऽर्थात् नास्तीति सिद्धान्तो न सम्भवति । परं भवतु नामानुमानान्तर्गतमेवोपमानं तथापि अनुमानस्वरूपोपमानेन प्रतिबद्धः ईश्वरः कस्मान्न भवति? एतन्न समीचीनं, यतः उपमानस्यानुमानान्तर्गतत्वेऽपि अनुमानस्वरूपमुपमान-प्रमाणमनुकूलतर्कपरिशुद्धं नास्तीति दुर्बलमेवमनुकूलतर्कपरिशुद्धं सर्वज्ञेश्वरसाधकमनुमानं प्रमाणं बलवत् । तस्मात् दुर्बलोपमानप्रमाणेन बलवदनुमानकार्यभूता सर्वज्ञेश्वरविषयि-कानुमितिः बाधिता नैव भवेत् । अयमाशयः—उपमानं यदि स्वतन्त्रं प्रमाणं स्यात्तदा उभयोरेव निरपेक्षत्वेन परस्परबलाबलनिरूपणं नैव सम्भवति । तथा चोपमानमपि कदाचिदीश्वर-बाधकं स्यात्, किन्तु उपमानमनुमानान्तर्गतमिति न बलाबलविचारः सम्भवति। यतः अनुकूलतर्कमेवानुमानस्य बलम् । अस्यां स्थितौ यदनुमानमनुकूलतर्कपरिशुद्धं तद् बलवत् इति अनुकूलतर्कपरिशुद्धमीश्वरानुमानमर्थात् क्षित्यङ्कुरं, सकर्तृकं, कार्यत्वादिति अनुमानमनुकूलतर्केण अपरिशुद्धदुर्बलोपमानरूपिणानुमानेन बाधितं न भवेत् । ईश्वरा-नुमानस्यानुकूलस्तर्कः पूर्वमेव विचारितः ।

सादृश्यमतिरिक्तः पदार्थः एतद्द्रव्यगुणादिसप्तपदार्थान्तर्गतं नास्ति । यतः—रूपरसादिगुणेऽपि सादृश्यं वर्तते । आम्रफलमास्वादमधुरमेतस्य रूपं काञ्चनसदृशम् ।

गुणे द्रव्यं गुणः कर्म वा न वर्तते इति सादृश्यं सप्तपदार्थान्तर्गतद्रव्यादिषु त्रिषु नैवान्तर्भूतम्। सादृश्यं जातिरपि न। यतः जातिः निरपेक्षः पदार्थः अर्थात् अपरस्य कस्यापि वस्तुनो ज्ञानस्यापेक्षां विनैव द्रव्यत्वगुणत्वादिजातेः स्वरूपतः ज्ञानम्भवति, किन्तु सादृश्यस्य स्वरूपतः ज्ञानं न भवति। कस्यापि वस्तुनः सादृश्यज्ञानार्थं यस्य सादृश्यं तद्विषयकज्ञानस्यापेक्षा भवति। तस्मात् सादृश्यं सापेक्षपदार्थः। यद्धि सापेक्षं तन्निरे-प्रेक्षजातिपदार्थो न भवितुमर्हति। अयमाशयः—घटत्वादिकम् असाधारणधर्मं जातिं वा विना घटादिकं किमपि नास्ति। घटस्य असाधारणधर्मं घटत्वादिजातिं गृहीत्वैव घटः एकं विशिष्टं वस्तु, तस्मात् घटत्वं घटस्य विशेषणमर्थात् पटविशेषस्य व्यावृत्तेर्वा सम्पादकम्। तस्मात् अयं घटः एतादृशप्रत्यक्षतः अवगत्यनन्तरं घटे चक्षुःसंयोगाद्य-नन्तरं प्रथमतः घटस्य असाधारणधर्मस्य जातेर्वा घटत्वस्य निर्विकल्पकज्ञानं स्वीकर्तव्यम् यतः विशेषणज्ञानं विना विशिष्टज्ञानं न सम्भवति। घटत्वस्वरूपविशेषणज्ञानस्याभावं विना घटः इति विशिष्टबुद्धिर्न सम्भवति। तथा च प्रथमतः घटत्वजातिज्ञानकाले यदि अन्यस्य कस्यापि वस्तुनः ज्ञानमपेक्षितं स्यात्तदा तुल्ययुक्त्या एतदन्यवस्तुनः ज्ञाने पुनरन्यवस्तुनः ज्ञानस्यावश्यकता स्वीकर्तव्या। एवं क्रमेण अनवस्था दोषः जायते इति इन्द्रियसम्बद्धप्रकृतघटवस्तुनः ज्ञानं न सम्भवति। तस्मात् घटे इन्द्रियसम्बन्धमात्रादेव घटत्वपटत्वादिजातेरविशिष्टरूपेणार्थात् स्वरूपतः अर्थात् विशेषणज्ञानस्यापेक्षां विनैव ज्ञानं भवति इत्यवश्यमेव स्वीकर्तव्यम्। जातिः निरपेक्षः अखण्डः पदार्थः, विशिष्टपदार्थः एतादृशो न भवति। विशिष्टस्य ज्ञाने एव विशेषणज्ञानस्यापेक्षावश्यमेव स्वीकर्तव्या। इदं रक्तं वस्त्रमिति ज्ञाने एव रक्तत्वं रक्तरूपं वस्त्रत्वमित्यादिविशेषणज्ञानस्यापेक्षानिवार्या। सादृश्यमपि विशिष्टः पदार्थः। ययोः सादृश्यं तयोः ज्ञानं विना सादृश्यमवगन्तुं न शक्यते। "अयं गोसदृशः" इति ज्ञाने गोविषयकज्ञानस्यापेक्षा। गौः किं ? इति ये न जानन्ति ते न वक्तुं पारयन्ति यदयं गोसदृशः तस्मात् सादृश्यं सापेक्षं विशेषण-युक्तविशिष्टं वस्तु तथा च सादृश्यं जातिपदार्थ इति वक्तुं न शक्यते सादृश्यं समवायः विशेषो वा इत्यपि वक्तुं न शक्यते सादृश्यं समवाये विशेषे च पदार्थे वर्तते। अयमाशयः—सादृश्यं समवाये वर्तते अथ च तस्य समवायस्वरूपत्वस्वीकारे सादृश्यात्मक-समवायेऽपि सादृश्यं वर्तते इति स्वीकर्तव्यम् पुनः एतस्यापि समवायस्य स्वरूपं स्वीकर्तव्यम्। सादृश्यं विशेषे पदार्थे वर्तते अथ च विशेषस्वरूपमिति स्वीकारे सादृश्यात्मकविशेषेऽपि सादृश्यं वर्तते इति स्वीकर्तव्यम् पुनश्च एतस्यापि एकं विशेषस्य

स्वरूपं वक्तव्यम् इत्यनवस्था दोषः स्यात् । तस्मात् सादृश्यं नापि समवायस्वरूपं नापि विशेषस्वरूपम् । सादृश्यमभावोऽपि नास्ति यतः—कस्यापि वस्तुनः सादृश्यावगत्यर्थं तस्य वस्तुनः ज्ञानस्यापेक्षायाः सद्भावेऽपि प्रतियोगिनः अर्थात् सादृश्यस्य अभावस्य ज्ञानस्य आवश्यकता नास्तीति (ना, नास्ति इत्यादिनिषेधबोधकशब्देन सादृश्यस्य ज्ञानं न जायते इति) सादृश्यमभावपदार्थो न भवितुमर्हति । सादृश्यं द्रव्यादिसप्तपदार्थातिरिक्तम् । एतादृशसादृश्यस्य ज्ञापकमुपमानमेकं पृथक् प्रमाणम् । प्रत्यक्षगवये गोसादृश्यस्य प्रत्यक्षे सति तदानीमप्रत्यक्षे गवि प्रत्यक्षगवयस्य सादृश्यज्ञानमर्थात् अयं गौरेतत्सदृशी एतादृशं ज्ञानं गवये गोसादृश्यज्ञानस्वरूपोपमानप्रमाणेनैव भवति । तस्मात् प्रत्यक्षवस्तुनि तदानीमप्रत्यक्षवस्तुनः सादृश्यज्ञानमेव फलतः उपमानं प्रमाणम् । मीमांसकानामेतदेवाभिमतम् । ईश्वरसदृशं किमपि वस्तु नास्तीति ईश्वरः तुलनारहितः तस्मात् ईश्वर इति कथनमात्रम् ।

सादृश्यं सप्तपदार्थातिरिक्तः पदार्थ इति मीमांसकमतं न समीचीनम् । यतः—सप्तपदार्थातिरिक्तः पदार्थः नैव सम्भवति । सप्तपदार्थानां भावरूपेण अभावरूपेण च द्विधाविभागो दृश्यते । कश्चित्पदार्थो भावः कश्चित्पदार्थश्चाभावः । एतदुभयातिरिक्तः तृतीयः प्रकारो नैव सम्भवति । सादृश्यं भावाभावस्वरूपमित्यपि वक्तुं न शक्यते यतः, किमपि वस्तु उभयस्वरूपं न सम्भवति । भावः अभावश्च परस्परविरुद्धस्वभावः । भावकथनेऽभावो नास्तीति अवगम्यते अभावकथने भावो नास्तीति अवगम्यते, तस्मात् सादृश्यं भावाभावोभयस्वरूपमिति वक्तुं न शक्यते ।

सादृश्यं सप्तपदार्थातिरिक्तं मा भवतु, किन्तु समानधर्म एव सादृश्यम्, गोः समानधर्मः शृङ्गगलकम्बलादिकम् गवये गोः सादृश्यम् । प्रत्यक्षगवये गोसमानधर्मस्य शृङ्गत्वादेः प्रत्यक्षमूलकत्वादेव अयं गोसदृशः गोः समानधर्मा इति एतादृशसादृश्यस्य ज्ञानं भवति एतदेवोपमानप्रमाणम् । तदनन्तरमयं गोसदृशः समानधर्मा वा एतादृशज्ञानमेवोपमितिः । एतदेव मीमांसकमतम् ॥ ८ ॥

साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते ।
अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥९॥

अप्रत्यक्षवस्तुनि प्रत्यक्षवस्तुनः साधर्म्यं समानधर्मस्य ग्राहको वा प्रत्यक्षवस्तुनि अप्रत्यक्षवस्तुनः साधर्म्यं समानधर्मस्य ज्ञानमुपमानात्मकमन्यत्प्रमाणं स्याच्चदा प्रत्यक्षवस्तुनि अप्रत्यक्षवस्तुनः वैधर्म्यज्ञानमपि प्रमाणान्तरं स्यात् । अयमाशयः—प्रत्यक्षघटे

तदानीमप्रत्यक्षगो: वैधर्म्यज्ञानमर्थात् अयं घटः गोविधर्मा गोविसदृशो वा एतादृशज्ञाने जातेऽनन्तरं अयं गौः एतद्घटविधर्मा विसदृशो वेति ज्ञानं भवति, तस्मात् तुल्ययुक्त्या प्रत्यक्षघटे तदानींमप्रत्यक्षगोवैधर्म्यज्ञानमपि प्रमाणान्तरं स्यात् । यद्येतादृशवैधर्म्यज्ञानस्य प्रामाण्यमस्वीकृत्यैतादृशस्थले अर्थापत्तिप्रमाणेनाप्रत्यक्षगवि प्रत्यक्षघटवैधर्म्यज्ञानस्वरूपप्रमितिः स्वीक्रियते, तदा साधर्म्यज्ञानस्थलेऽपि एतादृशार्थापत्तिप्रमाणेनैव अप्रत्यक्षगवि प्रत्यक्षगवयसादृश्यप्रमितेः सम्भवात् प्रत्यक्षगवये गोसादृश्यस्य गोसमानधर्मस्य ज्ञानं प्रमाणान्तरं नैव स्यात्, यतः—यादृशप्रत्यक्षघटे गोः वैधर्म्यज्ञाने सति, "यद्यसौ गौः एतद्घटविधर्मा न स्यात्तदा अयं घटोऽपि गोः विधर्मा विसदृशो वा न स्यात्," एतादृशार्थापत्तिप्रमाणेन "असौ गौः एतद् घटविधर्मा विसदृशो वा एतादृशप्रमितिः जायते । एतादृशसाधर्म्यज्ञानस्थलेऽपि तस्मिन् गवि एतद्वस्तुनः साधर्म्यं सादृश्यं वा न स्यात्तदा अयं पदार्थोऽपि तस्य गोः सधर्मा सदृशो वा न स्यात् एतादृशार्थापत्तिप्रमाणेन "असौ गौः एतत् सधर्मा सदृशो वा एतादृशप्रमितिः स्यात् इति साधर्म्यज्ञानस्य पृथक् प्रामाण्यस्वीकारोऽनावश्यकः ॥ ९ ॥

सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।
प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥१०॥

प्रत्यक्षानुमानशब्दातिरिक्तमुपमानमेकमतिरिक्तं प्रमाणम्, किन्तु शब्दार्थयोः सम्बन्धज्ञानस्य संकेतज्ञानस्य वा कारणमात्रम्, अनेन शब्दार्थयोः सङ्केतज्ञानं शक्तिज्ञानम्वा जायते । उपमानेन कस्यापि विधिः निषेधो वा न भवति; सर्वत्रैवं किमपि वक्तुं न शक्यते, एतत्सदृशमन्यद्वस्तु वर्तत एव किम्वा यस्य सदृशमन्यद्वस्तु नास्ति, तन्नास्ति । तस्मात् उपमानमीश्वरस्य बाधकं भवितुं नार्हति । अर्थेन सह शब्दस्य शक्तिः सम्बन्धो वा प्रत्यक्षं न भवति । घटदर्शनमात्रेण वक्तुं न शक्यते यत् अयं घटशब्दस्य अर्थः वाच्यो वा, तथा सति शिशुरपि घटमवलोक्यैव वक्तुं शक्नोति, अयं घटशब्दस्य अर्थः वाच्यो वा, लिङ्गेन हेतुना वा अनुमानस्य साहाय्येन किम्वा कथां श्रुत्वा अर्थात् शब्देन शब्दार्थयोः सम्बन्ध-( शक्ति- ) ज्ञानं न भवति । उपमानप्रमाणेनैवार्थेन सह शब्दस्य सम्बन्धज्ञानं भवति ।

शब्देन एवमनुमानेन वा सङ्केतज्ञानं न भवतीति वक्तुं न शक्यते, यतः अतिदेशवाक्येन अर्थात् अरण्यचारिजनानां निकटे श्रुतेन "गोसदृशो गवयपदवाच्य" इति वाक्येन किम्वा "गवयः, गवयपदवाच्यः, गोसदृशत्वात्" एतादृशानुमानेन सङ्केतज्ञानं जायते । शब्दार्थयोः सम्बन्धज्ञानार्थमुपमानप्रमाणान्तरस्वीकारोऽनावश्यकः ।

सादृश्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥११॥

सति सम्भवे लघुधर्मस्यैव शब्दप्रवृत्तिहेतुत्वं निमित्तत्वम्वा अर्थात् शक्यतायाः अवच्छेदकत्वम् । घटत्वं पटत्वं इत्यादिधर्म एव घटपटादीनां शब्दानां प्रवृत्तिनिमित्तं शक्यतावच्छेदकम्वा । सादृश्यं गुरुधर्म इति शब्दस्य प्रवृत्तिनिमित्तः शक्यतावच्छेदको वा न सम्भवति । एकेन दृष्टान्तेनैतस्य विश्लेषणं क्रियते—गवयपदस्य शक्तिः शक्यता वा केवलं गवये एव तिष्ठति, अन्यत्र नैव तिष्ठति, तस्मात् अस्य अवच्छेदकः ( व्यावर्तकः अथ वा नियामकः ) कश्चिदवश्यमेव स्वीकरणीयः । गवयत्वजातिः गवयपदस्य शक्यतावच्छेदकः स्यात् अखण्डः आधारो वा आधेयरूपेऽमिलितः अर्थात् निरंशजातिपदार्थस्य स्वरूपतः अर्थात् विशेषणेन परिचयं नैव कृत्वा गवयपदस्य शक्यतावच्छेदकताया आश्रयः स्वीकृतः स्यात् इति लाघवमेव । गोसादृश्यस्य गवयपदशक्यतायाः अवच्छेदकत्वस्वीकारे अवच्छेदकताश्रयकल्पनागौरवं भवेत । यतः—गोसादृश्यमेकः अखण्डः निरंशो वा पदार्थः नास्ति, गौः एवं सादृश्यमेतत्सकलस्याधाराधेयरूपेण विशेष्यविशेषणरूपेण मिलितरूपं विना गोसादृश्यस्यैकमखण्डं स्वरूपं नास्ति । गोसादृश्यं केवलं गौरेवं सादृश्यं नास्ति गोसादृश्यज्ञानानन्तरमेव गोविषयकज्ञानस्य अपेक्षा स्वीकर्तव्या । विशेषणेन गवा परिचयं विना गोसादृश्यमवगन्तुं न शक्यते । गौः कीदृशी इति ये न जानन्ति ते एतदुक्तुमवगन्तुं वा न शक्नुवन्ति यदयं गोसदृशः । तस्मात् गोसादृश्यधर्मः गवयपदस्य शक्यतावच्छेदकताया आश्रय इति स्वीकारे कतिपयमिलितपदार्थानां शक्यतावच्छेदकताया आश्रयः स्वीकरणीयः । गवयत्वजातेः गवयपदशक्यतावच्छेदकताया आश्रय इति स्वीकारापेक्षया अल्पपदार्थस्य शक्यतावच्छेदकताया आश्रयः स्वीकृतो भवति । अस्यां स्थितौ अतिदेशवाक्यमर्थात् वनेचरनिकटश्रुतेन "गोसदृशः गवयपदवाच्यः" इति वाक्येनैव गवयपदशक्यतायाः ज्ञानमिति स्वीकारे गवयदर्शनात्पूर्वं नागरिकाणां गवयत्वजातेरज्ञातत्वात् गोसादृश्यावच्छेदकरूपेणैव गवयपदस्य शक्यतायाः ज्ञानं स्वीकरणीयम्, किन्तु गोसदृशत्वं गोसादृश्यम्वा गुरुधर्म इति गवयपदस्य शक्यतावच्छेदक एव नास्ति । एवं पूर्वपक्षोक्तप्रकारानुमानेनापि गवयपदशक्यतायाः ज्ञानं स्वीकर्तुं न शक्यते, यतः—गवयदर्शनात् पूर्वं गवयत्वजातिः नागरिकाणामज्ञातैवेति गोसादृश्यस्वरूपगुरुधर्मावच्छेदेनैव गवयपदस्य शक्यताविषयकानुमितिः अर्थात् गोसदृशः गवयपदवाच्य इति अनुमितिः स्वीकर्तव्या

स्यात्, तस्मात् एतादृशगौरवदोषो भवेत्। अत एव शक्तिज्ञाने सङ्केतज्ञाने वा शब्दोऽनुमानम्वा नैव समर्थम्।

उपमानप्रमाणेन शब्दस्य शक्तिज्ञानप्रकारस्तु—नागरिकव्यक्तिः कस्यापि वनेचरस्य निकटे श्रुतवान् गवयः गोसदृशः, कालान्तरे वस्तुगत्या गवयवस्तु नागरिकनिकटस्थं भवति तदा अयं गोसदृशः प्रथमतः स्वरूपप्रत्यक्षभवनमेव स्वाभाविकम्, एतादृशसादृश्यज्ञानमेवोपमानप्रमाणम्। तदनन्तरं वनेचरनिकटे श्रुतवाक्यार्थस्य स्मरणं भवति यत् गोसदृशः गवयपदवाच्यः, तदनन्तरं निश्चयो भवति अयं गवयपदवाच्योऽर्थात् गवयः गवयपदवाच्यः। इयमेवोपमितिप्रमितिः।

शब्दस्य प्रवृत्तिनिमित्तत्वं लघुधर्मे दर्शने सति तत्समयेऽतिदेशवाक्यस्यांशसादृश्यवाचकवाक्यं स्वीयलक्षणावृत्त्या लघुधर्मविशिष्टे शक्तिज्ञाने नियतसाधकं भवितुमर्हति। शब्देन शक्तिज्ञानं न सम्भवति इति वक्तुं न शक्यते। गवयत्वजातेः प्रत्यक्षज्ञानस्थले "गोसदृशः गवयः" इत्यतिदेशवाक्यस्यांशभूतस्य "गोसदृशः" इति वाक्यस्य लक्षणावृत्त्या गवयत्वविशिष्टार्थस्वीकारे अर्थात् "गोसदृशः" इति वाक्यस्य गवयार्थस्वीकारे एतदतिदेशवाक्येनैव लघुधर्मगवयत्वविशिष्टे "गवय"पदस्य शक्तिज्ञानं सम्भवति शब्दस्य शक्तिज्ञानार्थमुपमानप्रमाणस्वीकारो नावश्यकः ॥ ११ ॥

श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥१२॥

यत्र पदसमूहेन अर्थात् पदकदम्बकेन यथाश्रुतार्था—( शक्यार्था— ) न्वयबोधोऽर्थात् एकपदस्य शक्यार्थेऽन्यपदस्य शक्यार्थसम्बन्धज्ञानम्, एकपदस्य शक्यार्थविशिष्टापरपदस्य वाक्यार्थज्ञानं सम्भवति, एतादृशस्थले एतादृशज्ञानमुत्पाद्यैव सकलं वाक्यं चरितार्थं भवति, अर्थात् वक्तुः अभिप्रेतविषये श्रोतुर्ज्ञानमुत्पाद्य वक्तुः वाक्यान्तरप्रयोगकरणात् विरतं करोति, एतादृशस्थले अभिप्रेतविषयावगत्यर्थं वक्तुः अन्यत्किमपि वक्तव्यं नाविशिष्टं वर्तते। अत्र वाक्यसमूहोऽन्यार्थे आकाङ्क्षाशून्योऽर्थात् अत्र श्रोता अन्यार्थमवगन्तुं नेच्छति इति वाक्यसमूहः अन्यार्थे श्रोतुर्जिज्ञासाया आकाङ्क्षाया वा उत्थापकः एवं निवर्तको वा उत्तरस्वरूपो न भवति, तस्मात् एतादृशस्थले वाक्यसमूहोऽन्यार्थबोधको न भवति। यथा—"गङ्गायां गच्छ" इति कथिते सति गङ्गापदस्य शक्यार्थः गङ्गा, गच्छपदस्य शक्यार्थः गमनं कुरु एतादृशमर्थमवबुध्यैव वाक्यं चरितार्थं भवति इति अत्र गङ्गापदस्य अन्यार्थो लक्ष्यार्थो वा गङ्गातीरे गच्छ अस्मिन्नर्थे

वाक्यस्य निराकांक्षत्वं वक्तव्यम् अर्थात् गङ्गायाम् इति पदश्रवणानन्तरं किं गङ्गातीरे ? एतादृशी जिज्ञासा श्रोतुर्न भवति इति गङ्गायां गच्छ" इति वाक्ये एतादृशाकांक्षायाः जिज्ञासायाः उत्थापकत्वं निवर्त्तकत्वं वा नास्तीति स्वीकर्तव्यम् । तस्मात् गङ्गायां गच्छ इति कथिते गङ्गापदेन गङ्गातीरस्य ज्ञानं न भवति । यत्र पदसमूहस्य यथाश्रुतार्थस्य बाधनिश्चयो भवति अर्थात् एकपदस्य शक्यार्थेऽपरपदस्य शक्यार्थस्याभावनिश्चयस्तिष्ठति तत्र लक्षणावृत्तिं स्वीकृत्य पदसमूहेन अन्यार्थस्य ( शक्यार्थसम्बन्धयुक्तार्थस्य ) ज्ञानं भवति । यतः एतादृशस्थले पदसमूहः अन्यार्थस्यैवाकांक्षाविशिष्टः । यथा—गङ्गायां घोषः, गङ्गापदस्य शक्यार्थः गङ्गानदी, घोषपदस्य शक्यार्थः आभीरपल्ली । गङ्गानद्यां घोषपल्ली सर्वथा असम्भवा । गङ्गायां घोषपल्ल्याः सम्बन्धाभावः सुनिश्चितः, तस्मात् एतादृशस्थले लक्षणावृत्त्या गङ्गापदस्य गङ्गातीरमर्थं कृत्वैव श्रोता अवगच्छति यत् गङ्गातीरे घोषः । गङ्गापदेन गङ्गातीरावगतौ श्रोतुराकांक्षा भवति, गङ्गातीरे किम् ? एतस्या एवाकांक्षायाः निवर्त्तकं घोषपदम्, तस्मात् अत्र गङ्गापदस्य शक्यार्थभिन्नार्थे एव गङ्गायां घोष इति वाक्यं साकाङ्क्षम् । प्रकृतस्थले तादृशं नास्ति । गोसदृशो गवयः एतदतिदेशवाक्यस्य यथाश्रुतोऽर्थः गोसादृश्यविशिष्टे गवयपदवाच्यतायाः ज्ञानसम्पादनेनैवातिदेशवाक्यं चरितार्थं भवति । अयमाशयः—गोसदृशः एतदंशश्रवणे श्रोतुराकांक्षा न भवति यत् गवयः किम् ? एवं गोसदृशः किम् ? एतादृशाकांक्षा स्वाभाविकी तस्मात् गवयत्वजातिविशिष्टे गवयपदवाच्यतास्वरूपार्थेऽतिदेशवाक्यं निराकाङ्क्षमित्येव स्वीकर्तव्यम् । एतदतिदेशवाक्यं गवयः किमित्येतादृशाकांक्षाया उत्थापकम् एवं निवर्तकं न भवति, तस्मात् गोसदृशः गवयपदवाच्यः एतादृशार्थे एवातिदेशवाक्यमाकांक्षाविशिष्टम्, गोसदृश इति पदस्य लक्षणावृत्त्या गवयत्वजातिविशिष्टरूपार्थकल्पनमनावश्यकम्, अस्यां स्थितौ उक्तातिदेशवाक्येन गवयत्वजातिविशिष्टे गवयपदवाच्यताज्ञानं न सम्भवति, परन्तु गोसादृश्यविशिष्टे गवयपदवाच्यताज्ञानमेव भविष्यति । तस्मात् गवयत्वजातिविशिष्टे गवयपदवाच्यताज्ञानार्थमुपमानप्रमाणमवश्यमेव स्वीकर्तव्यम् । किन्तु तथा सत्यपि उपमानप्रमाणं केवलं पदस्य वाच्यता—(शक्ति—) ज्ञाने एव समर्थमिति उपमानेन कस्यापि वस्तुनः निषेधसिद्धान्तो न सम्भवति । तस्मात् उपमानमीश्वरस्य बाधकं न भवितुमर्हति ।

श्रुतिप्रमाणेनावगम्यते यत् एतत् विचित्रं जगत् पूर्वमसदेवासीत्, शून्याद्, अभावादेव एतस्य जगतः उत्पत्तिर्भवति । वस्तुनः पूर्वमभावातिरिक्तं किमपि नास्ति । तुच्छमेव विश्वस्य निदानम् । दृश्यते च घटपटादयः उत्पत्तेः पूर्वं तुच्छा नैवासन्

इति। श्रुतावप्युच्यते असदेव सौम्येदमग्र आसीत् इति चेतनकर्तुः व्यापारोऽनावश्यकः। अनादितुच्छकर्मवासनया तुच्छाभावादेव विश्वकार्यं जायते।

वैशेषिकमतेनोत्तरम्—

शब्दप्रमाणं नास्ति; यतः—शब्देन अर्थस्योपस्थितिः स्मरणं वा जायते। विशिष्टानुभवोऽर्थात् एकपदार्थे अपरपदार्थस्य प्राप्तिः सम्बन्धज्ञानम्वा अनुमानप्रमाणस्य साहाय्येनैव भवति। आकांक्षासत्तियोग्यतातात्पर्यादियुक्तवाक्यश्रवणानन्तरं प्रत्येकपदार्थस्य उपस्थित्यनन्तरं पदार्थपक्षकानुमानेन पदपक्षकानुमानेन वा, एकपदार्थे अपरपदार्थस्य विशिष्टबोधः सम्पन्नो भवति अयमेव वैशेषिकसिद्धान्तः। वैशेषिकमते पदार्थपक्षकानुमानप्रकारश्चेत्थम्—एतत्सकलपदार्थसमुदायः, विशेषणविशेष्यरूपे परस्परसम्बन्धविशिष्टः, आकांक्षासत्तियोग्यतातात्पर्यादियुक्तपदस्मारितत्वात्। अयमभिप्रायः—घटेन जलमानय। घटद्वारा जलकर्मकमानयनं कर्तव्यम्। अयमेव एतस्य पदस्यार्थः। एतादृशवाक्यश्रवणानन्तरं प्रथमतः एतस्य सर्वस्य अर्थस्य स्मरणमात्रमेव जायते। तदनन्तरं यतोऽयमर्थः आकांक्षासत्तियोग्यतातात्पर्ययुक्तपदस्मारितोऽत एव अयमर्थः परस्परविशेषणविशेष्यसम्बन्धविशिष्टः श्रोतुरेतादृशानुमानम् भवति अर्थादनुमितिर्जायते यत् घटेन जलानयनं कुरु। एतादृशानुमानस्याकारश्चेत्थम्। एतत्सकलं पदम्, एतेन स्मारितपदार्थस्य परस्परविशेषणविशेष्यरूपेण सम्बन्धज्ञानपूर्वकम्, आकांक्षासक्तियोग्यतातात्पर्यादियुक्तत्वात्। घटेन जलानयनं कुरु एतदेकं वाक्यम् एतद्वाक्यश्रवणानन्तरम् एतदन्तर्गतघटादिपदार्थस्य स्मरणमात्रमेव जायतेऽनन्तरं यत एतत्पदमाकांक्षायोग्यतासक्तितात्पर्यादियुक्तमत एव अयम् तावदेतस्यार्थः घटद्वारा जलकर्मकमानयनं कर्तव्यमित्यादिविशेषणविशेष्यरूपसम्बन्धज्ञानपूर्वकमर्थात् घटेन जलमानय एतादृशविशिष्टज्ञानपूर्वकं श्रोतुः एतादृशमनुमानं जायते। एतादृशानुमाने वाक्यार्थज्ञानपूर्वकत्वमर्थात् वाक्यार्थविषयक-विशिष्टज्ञानवत्-पुरुषोच्चरितत्वसाध्ये जाते, अर्थात् वक्तुः वाक्यार्थविषयकविशिष्टज्ञानांशे वाक्यार्थं श्रोतुरनुमितिविषयो भवति। तस्मात् वक्तुर्विशेषणं यद्वाक्यार्थविषयकं ज्ञानमेतज्ज्ञानांशे विशेषणरूपेण वाक्यार्थं श्रोता अनुमानप्रमाणस्य साहाय्येन एवावगच्छति। अस्यां स्थितौ शब्दस्यातिरिक्तप्रामाण्यस्वीकारकरणस्यावश्यकता नास्ति "असदेव सौम्य इदमग्र आसीत्" इत्यादिश्रुतिरपि शब्दमात्रम् तस्मात् एतादृशश्रुतिः ईश्वरस्य बाधिका न भवितुमर्हति। अर्थात् एतादृशश्रुतिबलेन युक्तिसिद्धेश्वरः नास्तीत्येव सिद्धान्तो भवितुं नार्हति। युक्तिः अनुमानं वा ईश्वरस्य बाधकं नास्ति इति पूर्वमेवालोचितम् ॥ १३ ॥

अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः ।
आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥१३॥

कथितद्विविधानुमानेषु किमपि सदनुमानं भवितुं नार्हति । प्रथमतः पदार्थपक्षकानुमानसम्बन्धे विचारः क्रियते—यदि एकपदार्थेऽपरपदार्थस्य प्राप्तिः ( सम्बन्धः ) नियमतः ( अर्थात् एकपदार्थसमुदाये ) साध्यं भवति, किम्वा योग्यता साध्यं भवति अर्थात् एकपदस्य अर्थेऽपरपदार्थस्य सम्बन्धयोग्यता अथ वा सम्बन्धस्य प्रयोजको धर्मः साध्यो भवति । तदा पदार्थपक्षकानुमाने यथाक्रमे कथिते हेतौ व्यभिचारः एवमेकपदार्थेऽपरपदार्थस्य सम्बन्धस्य अज्ञानस्वरूपो दोषो भवति । अयमाशयः—घटेन जलमानय इति कथनानन्तरं जले आनयनक्रियायाः कर्मतायाः सम्बन्धस्य बोधो भवति । अर्थात् जलमानयनक्रियाकर्म इत्यवगम्यते एवं घटे आनयनक्रियायाः करणतायाः सम्बन्धस्य बोधो भवति । अर्थात् घटः आनयनक्रियायाः करणं साधनम्वेत्यवगम्यते । अस्मिन् स्थले यदि कथितानुमानेन घटशब्दस्यार्थसमुदायघटे आनयनक्रियायाः करणतायाः सम्बन्धः एवं जलशब्दस्यार्थसमुदायजले आनयनक्रियायाः कर्मतायाः सम्बन्धः अनुमितेः विषयो भवति इत्येव स्वीकर्तव्यम् अर्थात् समुदायघट एव जलानयनक्रियायाः करणम् साधनम्वा एवं समुदायजलमेव आनयनक्रियायाः कर्म एतादृशो अनुमितिः स्वीकर्तव्या, तथा सति सच्छिद्रघटे जलानयनक्रियायाः करणतायाः सम्बन्धो नास्तीति एवं यज्जलं कदापि आनीतं न भवति, किम्वा आनयनसम्भावनापि नास्ति, एतादृशं जलं जलशब्दस्य अर्थो नास्ति किञ्च एतादृशजले आनयनक्रियायाः कर्मतायाः सम्बन्धस्याभावात्, पूर्वपक्षोक्ताकांक्षासत्तिप्रभृतियुक्तपदस्मारितस्वरूपो हेतुः कथितरूपसाध्यस्य व्यभिचारी भवति । तस्मात् व्यभिचारिहेतुना अनुमानप्रमाणसाहाय्येन एतादृशवाक्यस्थले घटपदस्यार्थे घटसामान्ये करणतार्थभूतद्वारेत्यस्य सम्बन्धबोधः एवं जलपदस्यार्थे जलसामान्ये आनयनक्रियायाः कर्मतायाः सम्बन्धबोधो न भवितुमर्हति । किञ्च यद्येतादृशवाक्यस्थले एकपदार्थेऽपरपदार्थस्य सम्बन्धयोग्यता सम्बन्धप्रयोजकधर्मो वा अर्थात् घटे जलानयनक्रियायाः करणतायाः सम्बन्धप्रयोजकधर्मानयनस्य अनुपयुक्तजलभिन्नजलत्वादिरूपं पूर्वपक्षोक्तानुमानस्य साध्यं भवति, तथा सति एतादृशानुमानेन एकपदार्थेऽपरपदार्थस्य व्याप्तिः अर्थात् घटेन जलमानय एतादृशवाक्यस्थले घटे आनयनक्रियायाः करणतायाः एवं जले आनयनक्रियाकर्मतायाः सम्बन्धबोधो न सम्भवति अर्थात् घटेन जलानयनं कुरु एतादृशविशिष्टबोधोऽङ्गीक्रियते । तस्माद् शब्देनैव विशिष्टानुभवो भवति इत्यवश्यमेव स्वीकर्तव्यम् ।

द्वितीयप्रकारानुमाने अर्थात् पदपक्षकपूर्वोक्तरूपानुमाने मिलितरूपेणाकांक्षादिकमेव हेतुः। अनुमानसम्पादनार्थं हेतोर्ज्ञानमावश्यकम्, तस्मात् पूर्वपक्षोक्तद्वितीयप्रकारानुमाने आकांक्षासत्तियोग्यतादेः ज्ञानं नितान्तमपेक्षितमित्यवश्यमेव स्वीकर्तव्यम्, किन्तु शब्दश्रवणानन्तरमेकपदार्थेऽपरपदार्थस्य सम्बन्धबोधेऽर्थात् विशेषणविशेष्यरूपेण पदार्थसकलस्य विशिष्टानुभवे आकांक्षा स्वरूपतः हेतुः अर्थात् स्वज्ञानस्यापेक्षां विना सत्तया विद्यमानतयैव हेतुर्भवति। अर्थात् वाक्यं यदा श्रोतुर्जिज्ञासितार्थस्य ज्ञापकं भवति, तदैव तेनार्थबोधो भवति, शब्दजन्यविशिष्टानुभवे अकांक्षा ज्ञानस्यावश्यकता नास्ति जिज्ञासां विना न वक्तुं शक्नोति, तस्मात् वाक्यप्रयोगस्थले श्रोतुर्जिज्ञासा आवश्यिका जिज्ञासाज्ञानस्यावश्यकता नास्ति अर्थात् अहं ज्ञातुमिच्छां करोमि ( जिज्ञासां करोमि ) एतादृशज्ञानस्य आवश्यकता नास्ति, वक्ता यदा जिज्ञासितविषयं वक्ति तदैवासक्तियोग्यतादियुक्तवाक्येनार्थबोधो भवति। तस्मात् आकांक्षामेव हेतुरूपेणावगत्य अनुमानप्रमाणसाहाय्येन एकपदार्थेऽपरपदार्थस्य सम्बन्धबोधः विशिष्टानुभवो वा सम्पन्नो भवितुं नार्हति। यच्चुच्यते एतस्माद्दोषात् आकांक्षाहेतुर्न भवतु शब्दस्यातिरिक्तप्रामाण्यवादिमतेऽपि योग्यताया एवमासत्त्यादेः शब्दबोधस्य अर्थात् शब्दजन्य-विशिष्टानुभवस्य कारणत्वमुक्त्वा मिलितरूपेण योग्यतामासत्तिञ्च हेतुं मत्वा पूर्वपक्षोक्तपदपक्षकानुमानस्य साहाय्येन विशिष्टबोधोऽर्थात् एकपदार्थेऽपरपदार्थस्य सम्बन्धबोधो भवितुमर्हतीति शब्दस्य अतिरिक्तप्रामाण्यस्वीकारोऽनावश्यकः। एतदपि न सङ्गतं यतः—आकांक्षां परित्यज्य योग्यतामेवमासत्तिमुभयमेव हेतुं स्वीकृत्य निराकांक्षपदान्तर्भावे योग्यता एवमासक्तिश्च व्यभिचारी भवति। 'अयमभिप्रायः—यथा कश्चित् कथयति पुत्रः राज्ञः पुरुषमपसारय एतादृशसन्निहितवाक्यद्वयस्थले पुत्रः इति पदेन उत्थापितायाः कस्य पुत्र इत्याकांक्षायाः निवृत्तिर्भवति राज्ञः इति पदेन एवं पुरुषम् इति वाक्येन उत्थापितायाः किं कर्तव्यमित्याकांक्षायाः निवृत्तिर्भवति अपसारय इति पदेन। तस्मात् पुत्रः पदमेवं राज्ञः पदमेतदुभयमेव परस्परमाकांक्षाविशिष्टम् एवं पुरुषं तथा अपसारय इति पदमेतदुभयमपि आकांक्षाविशिष्टम्। राज्ञः इति पदस्य पुरुषमिति पदेन आकांक्षा नास्ति, यतः राज्ञः इति पदेन उत्थापितायाः राज्ञः किमित्याकांक्षायाः निवृत्तिः पुरुषमितिपदेन नैव भवति। किन्तु उक्तस्थले राज्ञः एवं पुरुषमिति पदयोरव्यवहितोच्चारणं सान्निध्यम्वा वर्तते इति आसक्तिः अस्ति एवं पुरुषपदस्यार्थे राजपदार्थस्य सम्बन्धज्ञानं सम्भवपरमिति योग्यता वर्तते, अथ च पुरुषपदार्थे राजपदार्थस्य सम्बन्धज्ञानपूर्वकत्वरूपं साध्यं नास्ति अर्थात् वक्ता राज्ञः पुरुष इत्यवगत्य एतद्वाक्यं न वदति, तस्मात् पदपक्षकानुमानेऽपि मिलित-

योग्यता एवम्—आसक्तिः हेतुः पुत्रः राज्ञः पुरुषमपसारय एतद्वाक्यद्वयस्य अंशिभूते राज्ञः पुरुषमिति समुदाये वर्तते इति व्याप्तिशून्यः अर्थात् व्यभिचारी। व्यभिचारिहेतुना पूर्वपक्षोक्तानुमानसाहाय्येन विचारस्थले विशिष्टबोधो भवितुं नार्हति। तस्मात् शब्दस्य अतिरिक्तप्रमाणत्वमवश्यमेव स्वीकर्तव्यम्। अनुमानेन शब्दः नैव चरितार्थो भवति अर्थात् शब्दस्थलेऽनुमानेन शब्दार्थस्य विशिष्टबोधोऽनुभवो वा सम्पन्नो न भवितुमर्हति।

शब्दोऽनुमानान्तर्गत इत्येतस्य वैशेषिकमतस्य निरासं कृत्वा लौकिकशब्दोऽनुवादकः तस्मात् अप्रमाणभूतः इत्येतस्य प्रभाकरमतस्य निरासार्थं प्रभाकरमतस्योत्थापना क्रियते।

वेदवाक्यं नित्यमर्थात् अपौरुषेयम् वेदस्य वक्ता कोऽपि नास्ति, तस्मात् वक्तुर्ज्ञानस्य विशेषणरूपेण वेदार्थस्यानुमानमर्थात् यतः वेदः आप्तोक्तः, तस्मात् वेद-वक्ता वेदार्थस्य यथार्थज्ञानवान्, एतादृशमनुमानं न सम्भवति इति वेदवाक्यसकलमनुवादकमर्थात् प्रमाणान्तरेण ज्ञातवस्तुनः ज्ञानजनकमिति वक्तुं न शक्यते वेदः प्रमाणमपरलौकिकवाक्येन वाक्यार्थस्य वर्णना अनुवादमात्रम्वा भवतीति लौकिकवाक्यमप्रमाणम्। अयमाशयः लौकिकवाक्यश्रवणे श्रोतुः वाक्यार्थविषयकयथार्थज्ञाने जाते श्रुतवाक्ये वक्तुः आप्तोक्तत्वनिश्चयः (वक्ता यथार्थतया वाक्यार्थमवगत्य वाक्यमुक्तवान् इति निश्चयः) आवश्यकः। अर्थात् यथार्थतया अवगत्यैव वक्ता वाक्यमुक्तवान्। श्रोतुरेतादृशनिश्चये जाते श्रुतवाक्येन श्रोतुः वाक्यार्थविषयकं यथार्थज्ञानं जायते। तस्मात् प्रणिधानेनैवावगन्तुं शक्यते यत् लौकिकवाक्यश्रवणे श्रोतुः वाक्यार्थज्ञानं प्रथमतोऽनुमानप्रमाणस्य साहाय्येनैव जायते। यतः एतत्सकलं वाक्यमर्थात् श्रुतवाक्यम् आप्त-(वाक्यार्थस्य यथार्थज्ञानवत्पुरुष-) कर्तृकोक्तमिति ज्ञाते श्रोतुः प्रथमतः यतः वक्ता यथार्थरूपेणावगत्यैवोक्तवान् वाक्यमतः वाक्यार्थस्य यथार्थज्ञानवान् एतादृशाप्तपक्षकानुमानेन परम्परया अर्थात् वक्तुः वाक्यार्थज्ञानस्य विशेषणरूपेण वाक्यार्थोऽनुमितिविषयो भवति, किम्वा यतः एतद्वाक्यस्य (श्रुतवाक्यस्य) अन्तर्गतोऽर्थसमुदयो यथार्थज्ञानविषयस्तस्मादेव हेतोः अयं सकलपदार्थः (अर्थात् श्रुतवाक्यान्तर्गतपदेन उपस्थितार्थसमुदायः) परस्परसम्बन्धविशिष्टः एतादृशपदपक्षकानुमानेन प्रथमतः साक्षाद्भावेन वाक्यार्थः श्रोतुरनुमितिविषयो भवति। अनन्तरं वाक्यार्थस्य सामर्थ्याकांक्षासक्तियोग्यतादिना पुनर्वाक्यार्थज्ञानं जायते। तस्मात् लौकिकवाक्यसकलं प्रमाणान्तरेण ज्ञातवस्तुनः

ज्ञानजनकम् अर्थात् अनुवादकम् इति प्रमाणं भवितुं नार्हति। अयमाशयः—यद्धि प्रमाणान्तरेण ज्ञातवस्तुनः ज्ञानजनकम् अर्थात् यद्धि प्रथमतो यथार्थज्ञानमुत्पादयितुमसमर्थम् तत् प्रमाणं भवितुं नार्हति। यतः—यद्धि फलवत्प्रवृत्तेः किम्वा निवृत्तेः सम्पादकम् तदेव प्रमाणम् विषयं यथार्थरूपेणावगत्य प्रवृत्तः सन् वस्तुतः विषयं प्राप्नोति किम्वा जहाति तदा प्रवृत्तिः किम्वा निवृत्तिः फलवती अर्थात् सफला भवति। घटं वस्तु यथार्थतया अवगत्य प्रवृत्तः सन् वस्तुतः घटस्य लाभो भवति तदा प्रवृत्तिः सफला भवति। सर्पं यथार्थतया अवगत्य निवृत्तः सन् वस्तुतः सर्पस्य परित्यागं करोति तदा निवृत्तिः सफला भवति, तस्मात् यद्धि प्रथमतः वस्तुनः यथार्थज्ञानसम्पादने समर्थं तदेव यथार्थप्रमाणम्। लौकिकवाक्यस्थले प्रथमतोऽनुमानमेव सफल-प्रवृत्तेः किम्वा सफलनिवृत्तेः सम्पादकम् इति लौकिकशब्दे सफलप्रवृत्तेः किम्वा सफलनिवृत्तेः सम्पादकत्वस्वीकारो नावश्यकः। वेदवाक्यस्थले प्रथमतोऽनुमानेन अर्थबोधः न सम्भवति इति अत्र स्थले वेदवाक्यमेव सफलप्रवृत्तेर्जनकमिति वक्तव्यम् इति वेदवाक्यसकलं प्रमाणम्। वेदस्य नित्यत्वात् वेदे श्रोतुः आप्तत्वनिश्चयः अर्थात् वेदः, वेदार्थस्य यथार्थज्ञानवत्पुरुषकर्तृकोक्तः एतादृशनिश्चयो न सम्भवति, तस्मात् यतः वक्ता यथार्थतया अवगत्य वेदमुक्तवान् अतः वेदवक्ता वेदार्थस्य यथार्थज्ञानवान्, एतादृशमनुमानं न सम्भवति। अस्यां स्थितौ वेदवाक्येनैव श्रोतुः प्रथमतः वेदार्थस्य ज्ञानं स्वीकर्तव्यम्। अयमेव प्रभाकरमतसंक्षेपः। अत एवावलोक्यते यत् प्रभाकरमते कतिपयवाक्यमर्थात् वेदवाक्यमगृहीतग्राहीति अर्थात् प्रमाणान्तरेणाज्ञातवस्तुनः ज्ञानजनकमिति प्रमाणम् एवं कतिपयवाक्यमर्थात् लौकिकवाक्यसकलं गृहीतग्राहीति अर्थात् प्रमाणान्तरेण ज्ञातवस्तुनः ज्ञानजनकमित्यप्रमाणम् ॥ १३ ॥

प्रभाकरमतखण्डनम्—

निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।
व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥१४॥

कथितयुक्त्या लौकिकं वाक्यमप्रमाणं भवितुं नार्हति। यतः—प्रभाकरमते वेदवाक्यस्थले वेदे आप्तोक्तनिश्चयः नास्ति, तस्मात् आप्तोक्तनिश्चयस्यापेक्षां विनैव वेदवाक्यम् आकांक्षायोग्यतासत्त्यादिसामग्रीसमवधानबलात् कारणबलाद्वा अर्थात् सहकारितायामर्थबोधं जनयति। अस्यां स्थितौ यादृशसामग्रीसमवधाने कारणसमूहस्थितौ आकांक्षादिसहकारितायां वेदवाक्येनार्थबोधो भवति एतादृशकारणसकलसहकारितायां

लौकिकवाक्येनापि अर्थबोधो भवति अत्र किमपि बाधकं नास्ति। यतः—वेदवाक्यस्थले आप्तोक्तनिश्चयस्यापेक्षां विनैव आकांक्षादिकारणसमूहस्य सहकारितायां प्रथमतः अर्थबोधे शब्दस्य सामर्थ्यमवधारितं भवतीति लौकिकवाक्यस्थलेऽपि आप्तोक्तनिश्चयस्यापेक्षां विनैवाकांक्षादिकारणसमूहस्य सहकारितायां प्रथमतोऽर्थबोधो नैवासम्भावितोऽस्ति। तुल्ययुक्त्या लौकिकवाक्यस्यापि प्रमाणत्वं वक्तव्यमेव। अपि च प्रभाकरमते शब्दश्रवणानन्तरं श्रोतुरनुमानाकारो यस्तावत्प्रदर्शितः तादृशानुमानस्वीकारे अनुमाने हेतोः साध्यस्य व्याप्तेश्च ज्ञानमावश्यकमिति शब्दश्रवणानेकक्षणानन्तरं शब्दार्थज्ञानं स्वीकर्तव्यम्, किन्तु शब्दश्रवणात् एतावद्विलम्बानन्तरं शब्दार्थज्ञानमनुभवविरुद्धमिति ततोऽनेकक्षणपूर्वमेव शब्दार्थज्ञानमावश्यकम् तस्मात् शब्दस्थलेऽनुमानस्यैवानुवादकत्वमर्थात् शब्देन ज्ञातवस्तुनः ज्ञानसम्पादकमनुमानमिति अनुमानमेवानुवादकमर्थात् शब्देन ज्ञातवस्तुनः ज्ञानसम्पादकमिति अप्रमाणमित्यवश्यमेव स्वीकर्तव्यम्।

प्रभाकरमतस्य पुनरपीयमाशंका यत् श्रुतलौकिकवाक्ये आप्तोक्तत्वसंशये सति अर्थात् वक्ता वाक्यार्थं यथार्थतयाऽवगत्य वाक्यमुक्तवान्न वा ? इत्यादिसंशये किम्वा आप्तोक्तत्वाभावप्रत्यये सति अर्थात् वक्ता यथार्थतया अवगत्य वाक्यं न वक्ति इत्यादिनिश्चये सति एतादृशवाक्येन श्रोतुः वाक्यार्थविषयकं विशिष्टज्ञानं न जायते। तस्मात् लौकिकवाक्यस्थले श्रुतवाक्ये श्रोतुराप्तोक्तत्वनिश्चयस्य कारणत्वं शाब्दबोधे कारणत्वं वक्तव्यम्। अस्यां स्थितौ लौकिकवाक्येन अर्थबोधे सत्येव प्रथमतः श्रुतवाक्ये श्रोतुराप्तोक्तत्वनिश्चयस्यावश्यकत्वात् लौकिकवाक्येन अनुवाद एव स्यात्। अयमाशयः—आप्तो नाम यथार्थज्ञानवान्। आप्तोक्तत्वं नाम आप्तकर्तृकोक्तत्वं वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितत्वम् अर्थात् यथार्थरूपेणार्थमवगत्य वक्तृवाक्योच्चारणम्। लौकिकवाक्यस्थले वाक्यं श्रुत्वा श्रोता यदि निश्चयरूपेणावगच्छति यदेतद्वाक्यमाप्तोक्तमर्थात् वक्ता वाक्यार्थं यथार्थरूपेणावगत्यैव वाक्यमुक्तवान् श्रोतुर्यदि एतादृशनिश्चयो भवति तदा श्रुतवाक्येन श्रोतुः शाब्दबोधोऽर्थात् वाक्यार्थविषयकं विशिष्टज्ञानं स्यान्नाम। श्रुतवाक्ये श्रोतुरेतादृशाप्तोक्तत्वमनुमानप्रमाणसाहाय्यं विना न भवितुमर्हति। अयमाशयः—आप्तोक्तं वाक्यमिति श्रोतुः प्रत्यक्षज्ञानस्य विषयो न अर्थात् कस्यापि वाक्यस्य श्रवणानन्तरं चक्षुःकर्णादीन्द्रियैः उपलब्धिर्न भवति यत् वाक्यमाप्तोक्तम्। एतद्वाक्यमाप्तोक्तमिति शब्दानन्तरं विनापि अर्थात् वाक्यमाप्तकर्तृकोक्तम् आप्तः इदं वाक्यमुक्तवान् इति श्रोतारं प्रति कथनं विनापि श्रुतशब्देन श्रोतुरर्थबोधो जायते। तस्मात् इत्यवश्यमेव स्वीकर्तव्यं यत् शब्दश्रवणानन्तरं श्रोता स्वयमेव अनुमानप्रमाणसाहाय्येन श्रुतवाक्ये आप्तोक्तत्व-

निश्चयोऽर्थात् वाक्यमाप्तोक्तमेतादृशमनुमानं कृत्वा अनन्तरं वाक्येनार्थमवगच्छति । श्रोतुरनुमानाकारश्च—एतद्वाक्यम्, आप्तोक्तम्, संवादिप्रवृत्तिजनकत्वात् । वाक्यार्थमवगत्य प्रवृत्तः सन् यदि वस्तुतोऽर्थलाभो भवति तदा एतादृशप्रवृत्तिः संवादिप्रवृत्तिः । तस्मात् लौकिकवाक्येनार्थबोधकरणार्थमनुमानप्रमाणसाहाय्येन प्रथमतः श्रोत्रावगतिः करणीया यत् एतद्वाक्यमाप्तोक्तमर्थात् वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितमर्थात् वक्ता वाक्यार्थं यथार्थरूपेणावगत्यैव वाक्यमुक्तवान् । अस्यां स्थितौ परम्पराविशेषणरूपेऽर्थात् वाक्यार्थविषयकं यद्वक्तुर्यथार्थज्ञानं, तदंशे विशेषणरूपेण वाक्यार्थः प्रथमतः श्रोतुरेतादृशानुमितेर्विषयो भवति । श्रुतवाक्यं वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितमित्याकारिका या श्रोत्रनुमितिरत्र विशेष्यं श्रुतवाक्यं, विशेष्यीभूतवाक्ये विशेषणमाप्तोक्तत्वमेवार्थात् वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितत्वम्, इदन्तावद्विशेषणं तद्घटत्वपटत्वादिवदेकः अखण्डः अविशिष्टो वा पदार्थो नास्ति । अत्र एकेन अपरो विशेषितः सन् अर्थात् वाक्यार्थेन यथार्थज्ञानं यथार्थज्ञानेन वक्तृपुरुषः एवं वक्तृपुरुषेण उच्चरितत्वमुच्चारणम्वा विशेषितः एकः सखण्डः विशिष्टो वा पदार्थः । यतः "वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितम्" एतादृशकथने उच्चरितत्वमुच्चारणम्वा पुरुषस्य यथार्थज्ञानवत्त्वं यथार्थज्ञानस्य वाक्यार्थविषयकत्वमुक्त्वैवावगम्यते । तस्मात् वाक्यार्थः वाक्यार्थविषयकयथार्थज्ञानवत्पुरुषोच्चरितत्वस्वरूपाप्तोक्तत्वान्तर्गतः इत्यवश्यमेव स्वीकर्तव्यः । अन्तर्गतवस्तुनः विषयत्वमनवगत्य समष्टिज्ञानं न सम्भवति यथा—रक्तं वस्त्रमिति एतदन्तर्गतं रक्तत्वं रक्तरूपत्वम्वा रक्तरूपस्य विषयत्वं विना रक्तं वस्त्रमित्याकारकं विशिष्टं ज्ञानं न सम्भवति । तस्मात् एतद्वाक्यमाप्तोक्तमिति वाक्यार्थस्य यथार्थज्ञानवत्पुरुषोच्चरितत्वमित्याकारानुमितौ विषये यथार्थज्ञानांशे वाक्यार्थोऽवश्यमेव विषयो भवति । दृष्टान्तेन विषयप्रकाशः क्रियते—पर्वतो वह्निमान् एतदेकं वाक्यम् । एतद्वाक्यं वह्निविशिष्टपर्वतविषयकयथार्थज्ञानवत्पुरुषोच्चरितमेतादृशानुमितिरेवात्र श्रोतुराप्तोक्तानुमितिः आप्तोक्तत्वनिश्चयो वा । वक्तृपुरुषस्य यथार्थज्ञानांशे वाक्यार्थः—"वह्निविशिष्टः पर्वतः" अत्र श्रुतवाक्यं श्रोतुः आप्तोक्तानुमितिविषयः । तस्मात् अत्र श्रोता आप्तोक्तत्वस्य "पर्वतो वह्निमान्" इति वाक्यस्यार्थः यः वह्निविशिष्टः पर्वतः तद्विषयकयथार्थज्ञानवत्पुरुषोच्चरितत्वस्यान्तर्गते यथार्थज्ञानांशे विशेषणरूपे वाक्यार्थः—वह्निविशिष्टः पर्वतः अनुमानप्रमाणसाहाय्येनावगत्यानन्तरं "पर्वतो वह्निमान्" इति वाक्येन पुनः वह्निविशिष्टपर्वतमवगच्छति, तस्मात् पर्वतो वह्निमान् इति वाक्यश्रवणानन्तरं प्रथमवाक्यार्थः "वह्निविशिष्टः पर्वतः" श्रोतुरनुमितेर्विषयो भवति । अत एवावलोक्यते यत् लौकिकवाक्यस्थले श्रोता प्रथमतः अनुमानप्रमाणसाहाय्येन

वाक्यार्थमवगत्यानन्तरं श्रुतवाक्येन पुनरर्थबोधं करोति। तस्मात् लौकिकवाक्यसकलं गृहीतग्राहि अर्थात् प्रमाणान्तरेण (अनुमानप्रमाणेन) ज्ञातविषयस्य ज्ञानजनकमिति अनुवादकमात्रमिति एतद् प्रमाणं भवितुं नार्हति। एकेन दृष्टान्तेन व्याख्यानं क्रियते। इदमत्र चिन्तनीयम् "पर्वतो वह्निमान्" इति वाक्यं श्रुत्वा प्रथमतः यदि श्रोतुर्निश्चयो भवति यत् एतद् वाक्यमाप्तोक्तमर्थात् वाक्यार्थो यः वह्निविशिष्टः पर्वतः तद्विषयकयथार्थ-ज्ञानवत्पुरुषोच्चरितमर्थात् वक्ता वह्निविशिष्टपर्वतं यथार्थरूपेणावगत्यैव वाक्यमुक्तवान्। तथा सति एतद्वाक्येन श्रोतुः वाक्यार्थः—वह्निविशिष्टपर्वतविषयकं ज्ञानं जायते। एतद्वाक्यार्थज्ञानमेव शाब्दबोधः। श्रोतुः कथितरूपमाप्तोक्तज्ञानमनुमानप्रमाणसाहाय्येनैव जायते। एवमेतज्ज्ञानस्य (आप्तोक्तानुमितेः) अर्थात् वक्तुः यथार्थज्ञानांशस्य विशेषणरूपेण विषयो भवति वह्निविशिष्टः पर्वत इति। तस्मात् श्रोता प्रथमतः अनुमान-प्रमाणसाहाय्येन वह्निविशिष्टं पर्वतमवगत्य अर्थात् वह्निविशिष्टपर्वतविषयकमनुमानं कृत्वा अनन्तरं पर्वतो वह्निमान् इति वाक्येन पुनः वह्निविशिष्टः पर्वत इत्यवगच्छति। अत एव दृश्यते प्रथमतः अनुमानप्रमाणेन विज्ञातो वह्निविशिष्टः पर्वत एव पर्वतो वह्निमान् इति वाक्ये-नानन्तरं विज्ञातो भवति। तस्मात् पर्वतो वह्निमान् इति लौकिकं वाक्यमनुवादकं गृहीतग्राहि वा अर्थात् प्रमाणान्तरेण ज्ञातवस्तुनः ज्ञानजनकत्वात् प्रमाणं भवितुं नार्हति ॥१४॥

व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी।
अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥

भ्रमः प्रमादो वा वक्तृपुरुषस्य दोषः। पुरुषदोषाशङ्काशून्यशब्देन अर्थात् वक्त-भ्रमवशात् प्रमावशाद्वा वाक्यं नैव कथयति, वाक्यं यथार्थतया अवगत्यैव कथितवा. एतादृशनिश्चितशब्देन स्मारितः (स्मृतिविषयः) हेतुपदार्थसमुदायः, परस्परसम्बन्धविशिष्टः, एतादृशानुमानप्रमाणेन प्रथमतः पदार्थसकले परस्परसम्बन्धोऽनुमितो भवति इति लौकिकवाक्यं यथा अप्रमाणम् अनुवादकमात्रम्, तथैव तुल्ययुक्त्या वेदवाक्यसकलमपि अनुवादकमप्रमाणमिति वक्तुं शक्यते, अत्रान्यथा भवितुं नार्हति। अयमाशयः—वेदवाक्येन वेदार्थस्य विशिष्टे ज्ञाने जाते वेदवाक्येऽपौरुषेयत्वनिश्चयः अर्थात् वेदवाक्यं पुरुषविशेषकर्तृकोक्तं नास्ति अर्थात् नित्यमेतादृशनिश्चयं तुल्ययुक्त्या कारणं स्यात्। अस्यां स्थितौ "यतः वेदार्थसकलमपौरुषेयवाक्येन स्मारितम् तस्मादेव परस्परसम्बन्धयुक्तमेता-दृशानुमानप्रमाणेन प्रथमतः वेदार्थस्य ज्ञानं भवितुमर्हति। वेदवाक्यसकलस्यापि अनुवादकत्वमङ्गीकर्तुं न शक्यते अर्थात् प्रमाणान्तरेण ज्ञातवस्तुनः ज्ञानजनकत्वात्

वेदवाक्यमपि अनुवादकम् इति अप्रमाणमेव । "अश्वमेधेन यजेत" एतदेकं वेदवाक्यमेतच्चापौरुषेयमेतद्वाक्यश्रवणे सति प्रथमतः एतस्य प्रत्येकपदार्थस्य (अश्वमेधः संज्ञा, यागस्य इष्टसाधनत्वं कृतिसाध्यत्वं, गुरुतरदुःखाजनकत्वमित्यादि) स्मरणं भवति । यज्—इत = यजेत "इत" इति विधिप्रत्ययः इष्टसाधनत्वं, कर्तव्यत्वं, गुरुतरदुःखाजनकत्वमेतत् त्रयं विधिप्रत्ययस्यार्थः । अनन्तरमेतत्सकलपदार्थस्य परस्पर-सम्बन्धबोधो भवति अर्थात् विशिष्टज्ञानमश्वमेधनामकयज्ञः इष्टस्य साधकम्, कर्तव्यम् एवं गुरुतरदुःखस्य अजनकम्, एतादृशनिश्चयो जायते । किन्तु एतत्स्थलेऽपि एतत्स-कलपदार्थः अपौरुषेयः "अश्वमेधेन यजेत" इति वेदवाक्यान्तर्गतशब्देन स्मारित इति प्रथमत एव यतोऽयं सकलपदार्थः अपौरुषेयशब्देन स्मारितः अत एव परस्परसम्बन्धयुक्तः एतादृशानुमानप्रमाणेन विशिष्टबोधः अर्थात् अश्वमेधनामकयज्ञः इष्टस्य साधनं कर्तव्यमेवं गुरुतरदुःखाजनकम् एतादृश एकः विशिष्टनिश्चयो भवितुमर्हति । तथा सति यदेतत् "अश्वमेधेन यजेत" इति वाक्यं इदमपि अनुवादकमिति अप्रमाणं भवितुमर्हति ।

शब्दातिरिक्तप्रमाणस्वीकारे गीतादिशास्त्रवाक्येन प्रकारान्तरेणात्मनि कर्तव्यत्वरूपस्य निषेधस्योक्तत्वात् शब्द एव ईश्वरस्य बाधको भवति । जगतः कर्ता इत्युक्त्वैव ईश्वरः स्वीकरणीयः । ईश्वरोऽपि आत्मविशेषः अर्थात् परमात्मा । आत्मनि यदि वास्तविक-कर्तृत्वं न स्यात् तदा जगतः कर्ता ईश्वरः इति नैव स्वीकरणीयः । गीतायामुक्तं यत् प्रकृतेर्गुणैः सत्त्वरजस्तमोभिरेव समुदायकार्यं भवति । असङ्गः निर्दोषः आत्मा मोहवशात् अर्थात् प्रकृतेः एवं स्वभेदस्याज्ञानवशात् प्रकृतिकार्यसमुदायस्य स्वयं कर्तारं मत्वा विवेचयति । तस्मात् गीतादिशास्त्रवाक्येनावगम्यते यत् असङ्गस्य आत्मनः कर्तृत्वमा-भिमानिकमर्थात् प्रकृतेः अन्यत्वाविवेचनात् आत्मनि कर्तृत्वप्रतिबिम्बनम् । तस्मादात्मनि कर्तृत्वं नैव स्वाभाविकम् । ईश्वरस्वीकारे तु परमात्मा सर्वज्ञ विशेषदर्शी एव भवेत् । तस्य च भ्रमो नास्ति । अस्यां स्थितौ तस्य अभिमानमर्थात् स्वस्य प्रकृतेरभिन्नत्वरूपे-णाथ वा प्रकृतेः ज्ञानेच्छादिभिः आत्मानं गुणयुक्तं स्वीकृत्य विवेचनं नैव सम्भवति, केनापि रूपेण गुणस्यारोपो नैव सम्भवति । तस्मात् तस्याभिमानिकं कर्तृत्वं नास्ति इत्यवश्य-मङ्गीकर्तव्यम् । अतः जगतः कर्ता कश्चिदीश्वरो न सेत्स्यतीति ॥ १५ ॥

न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता ।
अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥

यस्य वाक्यार्थविषयकं दर्शनं यथार्थज्ञानम्वा नास्ति स आप्तो नास्ति, गीताद्या-गमसकलं अनाप्तस्य ( आगमार्थानभिज्ञस्य ) वचनमिति स्वीकारे तत्प्रमाणं न स्यात्,

तथा च एतादृशागमेन ईश्वरे कर्तृत्वस्य निषेधो न भवितुमर्हति। विशेषत इन्द्रियग्राह्ये अतीन्द्रियतत्त्वे वा यस्य प्रत्यक्षं ज्ञानमस्ति स एव सर्वज्ञः। कार्यरूपेण प्रत्यक्षस्य वेदस्य नित्यत्वं न सम्भवति इति अवश्यमेव वेदस्य वक्ता स्वीकरणीयः। वेदे इन्द्रियातीत-विषयस्योपदेशसद्भावात् वेदवक्तुः इन्द्रियातीतविषयस्यापि साक्षाज्ज्ञानमस्ति इति स्वीकारः आवश्यकः। तस्मात् वेदवक्ता सर्वज्ञः ईश्वरः अस्तीति अवश्यमेव स्वीकरणीयः। वेदे जगतः कर्ता ईश्वरः कथितः। इयमुक्तिः सर्वज्ञस्येति मिथ्या भवितुं नार्हति। तस्मात् ईश्वरे कर्तृत्वं नास्ति, तत्र कर्तृत्वमाभिमानिकमित्यपि वक्तुं न शक्यते ॥ १६ ॥

न चासौ क्वचिदेकान्तः सत्त्वस्यावि प्रवेदनात्।
निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥

परमात्मनि ईश्वरे कर्तृत्वाभावज्ञापकं "निरञ्जनं ब्रह्म" इत्यादिबहुविधं वेदवाक्यं वर्तते परमपि निरञ्जने ( निर्गुणे ) अर्थे एतत्सकलं वाक्यमनैकान्तमर्थात् तात्पर्यशून्यम्, यतः ईश्वरे सत्त्वस्य कर्तृत्वस्य वा बोधिका बहुविधा श्रुतयः वर्तन्ते यतो वा इमानि भूतानि जायन्ते, यतः सर्वं प्रवर्तते, स एताल्लोंकानसृजत इति। अयमाशयः— ईश्वरः जगतः कर्तृत्वरूपे युक्तिसिद्धः इति युक्तिपरिशुद्धे एतस्मिन् अर्थे एव श्रुत्यादेरपि तात्पर्यमिति स्वीकरणीयम्। वेदादिवाक्यस्य निरञ्जनाद्यर्थः युक्तिपरिशुद्धः नास्ति, तस्मात् अयमर्थः आपाततः रमणीयोऽपि एतेषु अर्थेषु वेदादिशास्त्रस्य तात्पर्यं नास्ति इत्येव स्वीकर्तव्यम्। अत्रैष प्रश्नः सम्भवति वेदादिशास्त्रे तं निरञ्जनं कथमुक्तवान्? तस्य एवं रूपेणोपासनायां जीवस्य शुभादृष्टं जायते एवमेतस्य शुभादृष्टस्य सामर्थ्येन जीवः आत्मसाक्षात्कारं कृत्वा एतस्मात् संसारात् परित्राणमाप्नोति।

ईश्वरः यदि सर्वज्ञः स्यात्तदा उपदेशं विनापि अर्थात् वेदवाक्यं न कथयित्वापि अस्माकं यज्ञादिषु प्रवृत्तिं कारयितुं शक्नुयात् इति वेदवाक्यं वृथैव स्यात्! अयमाशयः—ईश्वरः यदि सर्वज्ञः स्यात् तदासौ उपदेशं विनापि यज्ञादिकर्मणि प्रवृत्तिं कारयितुं कमपि उपायमवश्यमेव जानातीत्यवश्यमेव स्वीकर्तव्यम्। अन्यथा तस्य सर्वज्ञत्वं न सिद्ध्यति। तथा च ईश्वरे उपदेशकर्तृत्वाभावः प्रसज्यते। अर्थात् ईश्वरः वेदवाक्यं विनापि अस्माकं तत्र यज्ञादिकर्मणि प्रवृत्तिं कारयितुं समर्थो भवेत्। किन्तु उपदेशं कृत्वा एव यज्ञादिकर्मणि प्रवृत्तिं कारितवान्, अत एव एतन्मन्तव्यम् उपदेशातिरिक्ता प्रवृत्तिकारिणी काचित्प्रवृत्तिः तस्य नैवावगता इति ईश्वरः नैव सर्वज्ञ इति सिद्ध्यति। तथा सति ईश्वरः जीवसदृश एव सम्पन्नः इति तस्यादेशवाक्ये आश्वास-

स्थापनं नैव सम्भवति। तस्मात् वेदवाक्यं नैव प्रमाणम्। अस्यां स्थितौ वेदवाक्यं नित्यम्, वेदः कस्यापि उक्तिर्नास्ति इत्यत एव प्रमाणमिति स्वीकर्तव्यम्, तथा च वेदवक्ता कश्चित्सर्वज्ञः न सिद्ध्यति। अर्थापत्तिरपि प्रमाणान्तरमर्थात् प्रत्यक्षानुमानोपमानशब्दातिरिक्तमेकं प्रमाणमर्थापत्तिरस्ति ॥ १७ ॥

हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा।
तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥ १८ ॥

प्रत्यक्षं विषयसंयुक्तमिन्द्रियमनुमानं परामर्शो वा अर्थात् साध्यव्याप्यहेतुमान् पक्षः इत्याद्याकारनिश्चयः शब्द एवमुपमानमर्थात् एकस्य अन्येन सह यथार्थसादृश्यज्ञानमेतच्चतुर्विधमेव प्रमाणमर्थात् यथार्थानुभवसम्पादनकारणम्। एतद्व्यतिरिक्तः यथार्थानुभवो नास्ति। **यजेत** इत्यादिविधिवाक्येन यज्ञादिकर्मणि इष्टसाधनत्वं, कृतिसाध्यात्वम्वा प्रमा यथार्थज्ञानम्वा जायते इति यज्ञादिकर्मणि प्रवृत्तिर्भवति। यज्ञादिकर्मजनितं फलं वेदे एव अवगतं भवति। तस्मात् वेदवाक्येनैव यज्ञादिकर्मणि इष्टविशेषसाधनताया अवगतिर्भवति। अन्योपायेन यज्ञादिकर्मणि इष्टविशेषस्य अर्थात् स्वर्गादिफलस्य साधनतानिश्चयो नैव संभवति। तथा च स्वर्गादिफललाभार्थं यज्ञादिकर्मणि प्रवृत्तिः वेदेनैव सम्भवतीति उपदेशातिरिक्तान्येनोपायेन यज्ञादिकर्मणि प्रवृत्त्युत्पादनमाकाशकुसुमायमानम्। तस्मात् वेदोपदेशः नैव व्यर्थः। उपदेशं कृतवान् एतावता ईश्वरः असर्वज्ञः इति वक्तुं न शक्यते। वेदः, सर्वज्ञेश्वरप्रणीतः अत एव प्रमाणम्, यद्युपदेशं विनापि यज्ञादिकर्मणि प्रवृत्तिः स्यात्तदा मीमांसकमतेऽपि आनर्थक्यप्रसक्तिः स्यात् यतः तव मतेऽपि यज्ञादिकर्मणि कार्य्यताज्ञानं कृतिसाध्यताज्ञानम्वा अर्थात् "यत्ने कृते यज्ञादिकर्मसम्पादनं कर्तुं शक्यते" एतादृशनिश्चयः प्रवृत्तिकारणमिति, किन्तु यदि एतादृशकार्यताज्ञानं वेदवाक्यं विना अन्योपायेन सम्भावितं स्यात्तदा तव मते वेदस्य कीदृशी सार्थकता? वेदवाक्यं निरर्थकं स्यात्। एवं तथा सति तवाभिप्रेतकर्मवादस्यापि सङ्गतिर्न भवति। यज्ञादिकर्मणः कृते सति अदृष्टं भवति। एवमेतस्यादृष्टस्यानुसारेणैव विश्वब्रह्माण्डस्योत्पत्तिरस्ति, तस्मात् विश्वब्रह्माण्डस्य कर्ता स्वतन्त्रः चेतनः ईश्वरः अस्तीति न स्वीकर्तव्यम्, इत्यादिकर्मवादः उन्मत्तप्रलाप एव ॥ १८ ॥

प्रत्यक्षानुमानोपमानशब्दव्यतिरिक्ता किञ्चिदर्थापत्तिरूपं प्रमाणं नास्ति, मीमांसकमतसिद्धमर्थापत्तिप्रमाणमनुमानान्तर्गतमेव।

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः।
न मानयोर्विशेषोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥

यद्धि: अव्याप्यन्तत् अयुक्तमनुपपन्नं वा न भवति एवं यद्धि अव्यापकन्तत्, साधकमुपपादकं वा न भवति। घटः वह्नेरव्याप्यः अर्थात् नियतसहचरः व्याप्यो वा नास्ति। अयमाशयः—यत्र यत्र घटः वर्तते सर्वत्र वह्निस्तिष्ठत्येष नियमो नास्ति। वह्निं विनापि घटस्तिष्ठति। एवं वह्निः घटस्याव्यापकः घटसमुदायाश्रये वह्निस्तिष्ठतीत्येष नियमो नास्ति, घटस्य सद्भावदशायामपि वह्निर्न तिष्ठति, तस्मात् वह्निर्नास्तीति घटोऽपि नास्ति अथ वा स्थातुं न शक्नोति, एतादृशयथार्थानुपपत्तिज्ञानं न सम्भवति। अत एव यत् व्याप्यं तद्वस्तुतः अनुपपन्नामनुपपत्तिज्ञानस्य ( यथार्थानुपपत्तिज्ञानस्य ) विषयः भवेत्, एवं यद् व्यापकं तदेव वस्तुतः साधकं भवति अनुपपत्तिरेवार्थापत्तिस्तस्मात् अनुपपत्तिस्थले व्याप्यव्यापकभावोऽवश्यमेव स्वीकर्तव्यः। तथा च अनुपपत्तिज्ञानस्वरूपार्थापत्तिप्रमाणस्थले व्यतिरेवार्थप्रकाशिका अर्थात् एतादृशस्थले व्यतिरेकव्याप्तिज्ञानेनैव वस्तुनोऽवधारणं भवति। तस्मात् अनुपपत्तिज्ञानस्य पृथक् प्रामाण्यं नास्ति अर्थात् प्रत्यक्षानुमानोपमानशब्दातिरिक्तार्थापत्तिः प्रमाणं नास्ति। एकेन प्रसिद्धोदाहरणेनैतस्य विश्लेषणं क्रियते। —जीवितदेवदत्तः गृहे नास्ति एतादृशज्ञानानन्तरं देवदत्तः गृहादन्यत्र ( बहिर्देशे ) अस्ति, एतादृशावधारणमेवार्थापत्तिः, ज्योतिषादिशास्त्रेणावगम्यते यत् देवदत्तः शतवर्षजीवी, देवदत्तः जीवितरूपेणावधारितः किन्तु अवलोक्यते यदसौ गृहे नास्ति, एतादृशस्थले यदि देवदत्तस्य गृहादन्यत्र स्थितिर्न स्वीक्रियते, तदा तज्जीवितत्वस्य एवं गृहास्तित्वाभावस्य एतदुभययोः उपपत्तिर्न भवति, एतादृशज्ञानदशायामवधारणं भवति यत् देवदत्तः गृहादन्यत्रास्ति। एतादृशं यदवाधारणं तदेवार्थापत्तिप्रमाणम्। मीमांसकानामयमेवाभिमतः। किन्तु एतन्न विचारसहम्, यतः—एतादृशानुपपत्तिज्ञानं व्यतिरेकव्याप्तिश्च एक एव पदार्थः। अयमाशयः—अनुपपत्तिर्नाम, उपपादकाभावप्रयुक्तो योऽभावस्तस्य प्रतियोगित्वम्, एवं व्यतिरेकव्याप्तिर्नाम हेतौ साध्याभावप्रयुक्तो योऽभावस्तस्याभावस्य प्रतियोगित्वम्। उक्तस्थले जीवितदेवदत्तस्य गृहास्तित्वाभाव एव गृहेऽनवस्थितिरेवोपपाद्यः एवं गृहादन्यत्रावस्थितिरेव उपपादकः यतः जीवितदेवदत्तः गृहादन्यत्र अस्तीत्यत एव गृहे तस्य अस्तित्वाभावः। तस्मात् जीवितदेवदत्तस्य गृहादन्यत्रास्तित्वाभावे तस्य गृहास्तिभाव भावः स्यात्। तथा च जीवितदेवदत्तस्य गृहास्तित्वाभावाभावः अर्थात् गृहास्तित्वं गृहादन्यत्रावस्थितेरभावप्रयुक्तम्। जीवितदेवदत्तो यदि बहिर्न तिष्ठेत्तदा तस्य गृहास्थितेरभावः न सम्भवति। गृहास्तित्वं गृहास्तित्वाभावाभावस्वरूपमिति गृहास्तित्वाभावस्वरूपाभावस्य प्रतियोगि। तस्मात् उपपाद्यगृहास्तित्वाभावेऽर्थात् जीवितदेवदत्तस्य गृहानवस्थितिस्वरूपे धर्मे

उपपादको यः गृहादन्यत्रावस्थितिरूपस्तस्याभावप्रयुक्तो योऽभावः गृहास्तित्वरूपः, एतस्याभावस्य प्रतियोगितैवात्रानुपपत्तिः, एतादृशी अनुपपत्तिरेव फलतः व्यतिरेकव्याप्तिः। जीवितदेवदत्तस्य गृहास्तित्वाभावरूपमुपपाद्यं हेतुस्थानीयं मत्वा एवं गृहादन्यत्रावस्थितिस्वरूपमुपपादकं साध्यस्थानीयं कृत्वा अवगतौ सत्यान्तत्र संशयो न तिष्ठति। जीवितदेवदत्तः गृहे नास्तीति गृहादन्यत्र वर्तते इत्यवधारितं भवति, तस्मात् एतादृशस्थले जीवितदेवदत्तस्य गृहादन्यत्रावस्थितिरेव साध्यानिश्चितकरणार्थमुपयुक्ता एवं जीवितदेवदत्तस्य गृहास्तित्वाभाव एव हेतुः। तस्मात् अनुपपत्तिज्ञानमेवं व्यतिरेकव्याप्तिज्ञानमेक एव पदार्थः। तस्मात् कथितरूपानुपपत्तिज्ञानजन्यं यदवधारणम् तद्व्यतिरेकव्याप्तिज्ञानजन्यमिति अनुमितिस्वरूपम्, तद्व्यतिरिक्तं प्रमाणं नास्ति, तस्मात्, कथितरूपानुपपत्तिज्ञानमनुमानान्तर्भूतमेव नातिरिक्तं प्रमाणम्। अनुपपत्तिज्ञानमेवं व्यतिरेकव्याप्तिज्ञानमेकमिति अनुमानरूपमेव अनुपपत्तिज्ञानस्य प्रामाण्यमनुमानञ्चोभयवादिसिद्धं प्रमाणमिति अनुपपत्तिज्ञानस्य पृथकप्रामाण्यस्वीकारोऽनावश्यकः।

अर्थापत्तेः पृथक् प्रामाण्यसम्बन्धे मीमांसकविशेषस्येयमपि अपरा युक्तिर्यत् जीवितदेवदत्तः गृहे नास्ति एवमवश्यमेव कस्मिंश्चित्स्थाने अस्ति, एकदैव एतादृशं द्विविधं ज्ञानं सम्भवति। एतादृशस्थले कुत्रापि अस्ति एतज्ज्ञानं गृहं विषयं कृत्वा, एतादृशं ज्ञानद्वयमेतादृशं द्विविधं ज्ञानम्वा गृहे वर्तते एवं गृहे नास्ति एतादृशं ज्ञानं जायते! ज्ञानद्वयस्य यौगपद्यस्वीकाराभावेऽपि एकं ज्ञानमेव समूहालम्बनरूपेण एकदा नानाविधपदार्थं विषयं कृत्वा सम्भवति। वस्तुतः मीमांसकाः ज्ञानद्वयस्य यौगपद्यम्वा एकसमयेऽवस्थितिं स्वीकुर्वन्ति। एतादृशं ज्ञानद्वयं द्विविधज्ञानम्वा परस्परविरोधि। परस्परविरोधिज्ञानद्वयमेकदैव भवितुं नार्हति, किन्तु यतः एतादृशं ज्ञानद्वयं द्विविधज्ञानम्वा एकदैव भवति तस्मात् अवगन्तव्यं यत् जीवितदेवदत्तः कस्मिंश्चित्स्थानेऽस्ति, एतज्ज्ञानं गृहाद्भिन्नं स्थानं विषयं कृत्वैव वर्तते। कुत्रापि वर्तते इति सामान्यतः ज्ञानं गृहादन्यस्थानं विषयं करोति एतदनुपपत्तिज्ञानमर्थापत्तिर्वा प्रमाणस्य फलमर्थात् जीवितदेवदत्तः गृहादन्यत्र न स्यात्तदा गृहे स्थितेरभावः न सम्भवति, एतादृशमनुपपत्तिज्ञानस्य फलम्। तस्मात् एतदर्थमेवानुपपत्तिज्ञानस्यार्थापत्तिज्ञानस्य पृथक् प्रामाण्यं स्वीकर्तव्यम्। एतच्च प्रत्यक्षानुमानोपमानशब्दाख्यप्रमाणचतुष्टयेन न सम्भवति, यतः "जीवितदेवदत्तः गृहे नास्ति" एतादृशप्रत्यक्षकाले गृहादन्यत्र तस्य दर्शनमसम्भवम् "देवदत्तः गृहादन्यत्र अस्ति एतादृशानुमितिकरणार्थमुपयुक्तः हेतुर्नास्ति। उपमानप्रमाणेन शब्दस्य शक्तिज्ञानमेव जायतेऽथ वा अप्रत्यक्षवस्तुनि प्रत्यक्षवस्तुनः सादृश्यज्ञानमात्रमेव भवति। तस्मात्

देवदत्तः गृहादन्यत्र वर्तते, एतदुपमानप्रमाणस्य विषयो नास्ति, "जीवितदेवदत्तः गृहादन्यत्र वर्तते" इत्यादिशब्दश्रवणं विनापि "जीवितदेवदत्तः कुत्राप्यस्ति" यत इदं ज्ञानं गृहात् अन्यत्स्थानं विषयं कृत्वा भवति ततः इदं सर्वत्र शब्देनापि न सम्भवति। मीमांसकानामेतन्मतं न युक्तिसहं यतः—देवदत्तः गृहे नास्ति, एतादृशं ज्ञानद्वयं द्विविधज्ञानम्वा विरोधि नास्ति। 'देवदत्तः कुत्रापि स्थाने वर्तते' एतज्ज्ञानं गृहं विषयं मत्वा स्यात्तदा कथञ्चित् विरोधः स्यात् किन्तु पूर्वोक्तरूपानुमानप्रमाणेनापि सामान्यतः कुत्रापि स्थानेऽस्ति एतादृशी अनुमितिः गृहादन्यस्थानं विषयं कृत्वा सम्भवति अर्थात् भवितुमर्हति। अयमाशयः—जीवितदेवदत्तः कुत्रचित्स्थाने न स्यात् तदा तस्य जीवितत्वम् नैव सम्भवति अर्थात् देवदत्तस्य जीवितत्वस्य अनुपपत्तिः स्यात्, एतादृशनिश्चये सति अर्थात् अस्तित्वाभावप्रयुक्तः यः अभावः तस्य अभावस्य प्रतियोगी जीवितत्ववान् देवदत्तः एतादृशानुपपत्तिज्ञाने सति देवदत्तः गृहे नास्ति इत्यस्माद्धेतोः जीवितदेवदत्तः कुत्रापि स्थाने अस्ति, एतज्ज्ञानं गृहातिरिक्तं स्थानं विषयं कृत्वा संभवति। अस्तित्वाभावप्रयुक्तो योऽभावः एतस्याभावस्य प्रतियोगि जीवितत्वम्, एतादृशानुपपत्तिज्ञानमस्तित्वसाध्यकं जीवितत्वं हेतुस्थलीयव्यतिरेकव्याप्तिज्ञानस्य स्वरूपम्, तस्मात् अस्तित्वाभावप्रयुक्तो योऽभावः एतस्य अभावस्य प्रतियोगी "जीवितत्ववान् देवदत्तः" एतादृशपरामर्शेनानुमानप्रमाणेनैव जीवितदेवदत्तः कुत्राप्यन्यत्र स्थाने अस्ति एतादृशानुमितिः गृहात् अन्यत्स्थानं विषयं कृत्वा एव सम्भवति, एतदर्थमेतादृशानुपपन्नविज्ञानस्य पृथक् प्रमाण्यम् ( अनुमितिभिन्नप्रमाज्ञानस्यासाधारणकारणत्वम् ) इति स्वीकारस्यावश्यकता नास्ति। अनुपपत्तिज्ञानस्थले व्यतिरेकव्याप्तिज्ञानस्य अवश्यम्भावित्वासत्त्वेऽपि यदि अनुपपत्तिज्ञानस्य स्वतन्त्रप्रामाण्यं स्वीक्रियते तदा अनुमानस्य सुप्रसिद्धहेतुभूते धूमे वह्नेः व्याप्तिज्ञानस्थलेऽपि अर्थात् यत्र यत्र धूमस्तत्र वह्निरित्यादिनिश्चयस्थलेऽपि वह्नेरभावे धूमस्य उपपत्तिर्न भवति, एतादृशार्थापत्तिप्रमाणेनानुपपत्तिज्ञानेनैव पर्वतादौ वह्नेरवधारणं सम्भवति, तस्मात् अर्थापत्तिप्रमाणेनैव पर्वतादौ वह्नेरवधारणं सम्भवति, तस्मात् अर्थापत्तिप्रमाणेनापि अनुमानस्योच्छेदः स्यात्, किन्तु अनुमानमुभयवादिसिद्धं प्रमाणमिति एतादृशस्थलेऽर्थापत्तेः पृथक् प्रामाण्यस्वीकारस्यावश्यकता नास्ति, अनुपपत्तिज्ञानं व्यतिरेकव्याप्तिज्ञानस्वरूपमिति अनुमानरूपेणैव तस्य प्रमाण्यम् ॥ १९ ॥

न दृश्यतेऽतः ईश्वरो नास्तीति वक्तुं न शक्यते, अनुपलब्धिः अदर्शनम्वा प्रमाणमेव नास्ति। अर्थात् न दृश्यतेऽत एव वस्तु नास्ति इति यथार्थरूपेण वक्तुं न शक्यते। यतः—

प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।
अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥

योग्यस्य प्रतियोगिनः अदर्शनवशात् अभावस्य यज्ज्ञानं भवति तदपरोक्षं ज्ञानमर्थात् प्रत्यक्षं ज्ञानम्, तस्मात् इन्द्रियस्वरूपकरणेनैव भवति इत्यवश्यमेव स्वीकरणीयम् । अर्थात् यतः प्रतियोगिनः अदर्शनवशात् अभावज्ञानं प्रत्यक्षस्य स्वरूपम्, तस्मादेव इन्द्रियस्वरूपकरणजन्यम् इत्यनुमानं स्वीकरणीयम् । यतः एतादृशमभावज्ञानमज्ञानकरणेन उत्पन्नं, तस्मादेव हेतोः इन्द्रियस्वरूपकरणेनोत्पन्नम्, एतादृशम् अनुमानमपि वक्तुं शक्यते, तस्मात् प्रतियोगिनोऽदर्शनमभावप्रत्यक्षस्य करणमितिस्वीकारस्यावश्यकता नास्ति । अयमाशयः—घटपटादिसकलवस्तुप्रत्यक्षं यथा इन्द्रियस्वरूपकरणं विना न सम्भवति, तथैव प्रतियोगिनोऽदर्शनवशात् अभावस्य प्रत्यक्षमपि इन्द्रियस्वरूपकरणं विना न भवितुमर्हति । विशेषतः अनुमितिशाब्दबोधादिस्थले ज्ञायमानहेतुः एवं शब्दज्ञानमेव करणम्, धूमसद्भावे एव पर्वते वह्न्यनुमितिर्न भवति अपि तु पर्वते धूमज्ञानसद्भावेऽपि भवति तस्मात् ज्ञायमानधूम एव वह्नेरनुमापकः एवमेव शब्दे सत्येवार्थबोधो न भवति शब्दज्ञानमर्थात् शब्दश्रवणादिकमेव शाब्दबोधस्य उपयोगि । किन्तु प्रत्यक्षे इन्द्रियं ज्ञायमानं विनैव करणम् अर्थात् विषयेण इन्द्रियसम्बन्धे सत्येव प्रत्यक्षं भवति, इन्द्रियज्ञानस्य अपेक्षा न भवति अर्थात् नैवैतस्य ज्ञानस्यापेक्षा भवति यत् विषयेणेन्द्रियसंयोगः संजातः । तस्मात् यतः प्रतियोगिनोऽदर्शनवशात् अभावस्य ज्ञानमज्ञानकरणेन उत्पन्नम्, तत एव हेतोः इन्द्रियस्वरूपकरणेन उत्पन्नमित्यवश्यमेव स्वीकार्यम्, एतस्मात् कारणात् प्रतियोगिनोऽदर्शनमभावप्रत्यक्षस्य करणमिति कथनस्यावश्यकता नास्ति । इदानीमेतद्वक्तुं शक्यते—घटपटादिसकलवस्तुनः प्रत्यक्षेऽपि इन्द्रियस्य करणत्वं कथमिव स्यात् ? यतः—विषयेण इन्द्रियस्य सम्बन्धं विना प्रत्यक्षं न भवति, तस्मात् विषयेन्द्रियसम्बन्धस्य अवश्यमेव कारणत्वं वक्तव्यम्, अस्यां स्थितौ इन्द्रियस्य प्रत्यक्षं प्रति करणत्वस्वीकारोऽनावश्यकः, इन्द्रियमन्यथासिद्धमर्थात् विषये इन्द्रियसंयोगस्यावश्यकतावशात् तत्सम्बन्धे एव इन्द्रियस्यावश्यकता अर्थात् इन्द्रियसंयोगस्य सम्पादकमिति अथ वा इन्द्रियसंयोगस्य विशेषणमिति इन्द्रियस्य आवश्यकता वर्तते स्वप्रधानरूपेण तस्य आवश्यकता नास्ति । इत्यपि न संगतम्, यतः—व्यापारेण अर्थात् विषयेन्द्रियसंबन्धेन प्रत्यक्षे इन्द्रियमन्यथासिद्धं न भवितुमर्हति । आयमाशयः—इन्द्रियं प्रत्यक्षस्य कारणमित्यत एव इन्द्रियस्य कारणतायाः अर्थात् प्रत्यक्षस्वरूपकार्यस्याधिकरणस्वरूपविषये इन्द्रियस्य नियतपूर्ववर्तित्वम्, नियतपूर्वावस्थितेः निर्वाहकरूपेण इन्द्रियस्य सम्बन्धः स्वीकरणीयः । अस्यां स्थितौ अनेन

सम्बन्धेन इन्द्रियस्य अन्यथासिद्धत्वं वक्तुं न शक्यते अर्थात् इन्द्रियं विना इन्द्रिय-सम्बन्धेन प्रत्यक्षस्योत्पत्तिर्नैव स्वीक्रियते। अयमाशयः—प्रत्यक्षस्वरूपकार्यस्याधिकरण-विषये इन्द्रियस्य वर्तमानतां विना कारणं भवितुं नार्हति एवं विषये इन्द्रियस्य वर्तमानत्वे विषयेण सह स्वसम्बन्धस्य कारणत्वादेव विषये इन्द्रियसम्बन्धस्य कारणत्वं स्यात्। अस्यां स्थितौ इन्द्रियस्य प्रत्यक्षकारणत्वाभावे विषयेण सह इन्द्रियसम्बन्धस्यापि कारण-त्वस्वीकारे युक्तिर्नास्ति। प्रत्यक्षे इन्द्रियस्य कारणतास्वीकारादेव एतस्याः कारणतायाः उपपादकरूपेण विषयगतेन्द्रियसम्बन्धस्य कारणता स्वीकरणीया। तस्मात् पूर्वस्वीकृत-कारणता पश्चात्स्वीकार्यकारणतया खण्डिता न भवति। प्रत्यक्षे इन्द्रियमेव प्रत्यक्षमात्रस्य असाधारणं व्यापारवद्वा कारणम्। प्रतियोगिनः अदर्शनमभावप्रत्यक्षस्य करणम् अर्थात् असाधारणकारणस्वीकारस्यावश्यकता नास्ति। विशेषतः घटपटादिसकलवस्तुनः प्रत्यक्षानुमितिशाब्दबोधाद्यनुभवसकलं मनसैव भवति, किन्तु मनः एकाकि एतत्सकल-ज्ञानोत्पादने समर्थं न। मनः इन्द्रियसाहाय्यं विना प्रत्यक्षमुत्पादयितुं नैव समर्थम्। परामर्शसाहाय्यं विना अर्थात् "साध्यव्याप्यहेतुमान् पक्षः" एतादृशनिश्चयं विना मनसा अनुमितिर्न भवति शब्दस्य श्रवणं विना मनसा शब्दार्थविशिष्टं ज्ञानं न भवति। अतः अवलोक्यते यत् इन्द्रियं, परामर्शः, शब्दज्ञानमित्यादिभावपदार्थस्वरूपकरणस्य सहकारि-तायामेव मनः विशिष्टानुभवमुत्पादयति। तेन अनुमानं कर्तुं शक्यते यत् मनः सर्वत्रा-नुभवस्थले भावस्वरूपकारणस्य सहकारितायाः एव अनुभवमुत्पादयति। अभावप्रत्यक्षमे-वमनुभवविशेषः एतदपि मनसैव भवति। घटपटादिप्रत्यक्षस्य दृष्टान्तेऽभावस्य प्रत्यक्षेऽपि भावस्वरूपकरणमेव ( इन्द्रियमेव ) मनसः सहकारि इत्येव स्वीकर्तव्यम्। प्रतियोगिनः अदर्शनमभावस्य स्वरूपमिति करणरूपे मनसः सहकारि नास्ति तदा प्रतियोगिनोऽदर्शनम-भावप्रत्यक्षस्य सामान्यकारणमात्रमिति वक्तुं शक्यते ॥ २० ॥

प्रतियोगिनि सामर्थ्याद्व्यापाराव्यधानतः।
अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥

प्रतियोगिग्राहकत्वेन अर्थात् प्रतियोगिविषयकप्रत्यक्षजनकत्वस्वरूपहेतुना अभाव-प्रत्यक्षे इन्द्रियमेव करणरूपेऽवधारितं भवति। अर्थात् यस्मात् इन्द्रियमेव प्रतियोगि-विषयकप्रत्यक्षस्य करणम् इति, तदेव हेतुः अभावविषयकप्रत्यक्षस्य करणम्, एतादृशमनुमानं भवितुमर्हति। अयमाशयः—घटो नास्ति, एतदभावस्य प्रतियोगिघटस्य प्रत्यक्षे इन्द्रिय-स्यैव करणत्वं वक्तव्यम्, प्रत्यक्षविशेषे इन्द्रियस्यैव करणता उभयवादिसिद्धा, तस्मात् घटाभावप्रत्यक्षेऽपि इन्द्रियस्यैव करणत्वम्, एवं स्वीकारेऽन्यत्र करणरूपेण कल्पस्यैव

पदार्थस्य करणत्वमुच्यते किन्तु एवमनुक्त्वा अभावस्य प्रत्यक्षे प्रतियोगिनोऽदर्शनस्य करणत्वस्वीकारे, अतिरिक्तस्य एकस्य करणत्वकल्पनं भवति इति कल्पनायाः गौरवं भवति। तदा एतद्वक्तुं शक्यते यत् इन्द्रियस्वरूपकरणेन अभावस्य प्रत्यक्षत्वस्वीकारे, यस्मिन् अधिकरणेऽभावस्य प्रत्यक्षत्वं स्यात्, प्रथमतः इन्द्रियेण तस्य अधिकरणस्य प्रत्यक्षत्वमावश्यकं यतः अधिकरणं विषयीकृत्यैव प्रायशोऽभावस्य प्रत्यक्षं भवति। **घटो नास्ति** केवलमेतादृशरूपेऽभावस्य प्रत्यक्षत्वं न भवति, भूतले घटो नास्ति इत्यादिरूपेण एव भूतलाद्यधिकरणं विषयं कृत्वैवाभावस्य प्रत्यक्षं जायते तस्मात् अभावप्रत्यक्षे प्रथमतः अधिकरणस्य प्रत्यक्षमावश्यकम्। भूतलादिकम्भावपदार्थं इति भूतलादिविषयकं प्रत्यक्षमिन्द्रियस्वरूपकरणं विना नैव सम्भवति। अस्यां स्थितौ भूतलादौ अभावस्य प्रत्यक्षे इन्द्रियमधिकरणभूतलादेः प्रत्यक्षस्वरूपव्यापारमात्रमेव सम्पादयति, अनन्तरं प्रतियोगिनोऽदर्शनस्वरूपकरणेनैवाभावस्य प्रत्यक्षं भवति, विशेषतः अधिकरणप्रत्यक्षस्वरूपव्यापारेण इन्द्रियस्य अन्यथासिद्धत्वमपि वक्तुं शक्यते अर्थात् अभावप्रत्यक्षे इन्द्रियमधिकरणप्रत्यक्षस्वरूपव्यापारमेव सम्पादयति, प्रतियोगिनः दर्शनं नास्तीत्यत एवाभावस्य प्रत्यक्षं जायते, तस्मात् अभावप्रत्यक्षे इन्द्रियस्य करणत्वस्वीकारोऽनावश्यकः। एतदपि न समीचीनम्, यतः—तथा सति घटपटादिभावपदार्थस्य प्रत्यक्षेऽपि घटपटादिविषये प्रथमतः इन्द्रियस्य सम्बन्धः आवश्यक इति इन्द्रियसम्बन्धेनापि इन्द्रियमन्यथासिद्धं स्यात्। किन्तु घटपटादिभावपदार्थस्य प्रत्यक्षे इन्द्रियं करणरूपेण उभयवादिसिद्धम्। विशेषतः करणं, व्यापारेणैव अन्यथासिद्धं न भवितुमर्हति।

अभावस्य प्रत्यक्षे इन्द्रियमेव करणमत्र अन्या अपि युक्तयः सन्ति—सर्वत्र करणस्य दोषवशादेव भ्रमज्ञानं जायते, करणे अर्थात् असाधारणकारणे यदि कोऽपि दोषः न स्यात्तदा ज्ञानं भ्रमात्मकं न भवितुमर्हति, चक्षुषः पित्तदोषदुष्टत्वादेव सर्वस्य वस्तुनः पीतत्वं जायते इति भ्रमो भवति। स्थाणौ चक्षुषः दूरत्ववशादेव मनुष्यभ्रमः भवति। अस्यां स्थितौ अभावप्रत्यक्षे प्रतियोगिनः अदर्शनस्यैव करणत्वस्वीकारेऽभावस्य भ्रमात्मकप्रत्यक्षे प्रतियोगिनोऽदर्शनस्यैव दोषस्य आश्रयत्वं वक्तव्यम्, किन्तु अदर्शनम् अभावपदार्थ इति पित्तदूरत्वादिदोषस्याश्रयं न भवितुमर्हति, चक्षुषः पित्तदोषदूषितत्वेऽपि शंखो नैव श्वेतवर्ण इति एतादृशाभावविषयकभ्रमप्रत्यक्षं न भवितुमर्हति। अभावस्य प्रत्यक्षे इन्द्रियस्य करणत्वस्वीकारे एतद्दूषणं न भवितुमर्हति, अन्यच्च अभावाधिकरणं विना अभावस्य प्रत्यक्षत्वमपि न संभवति, वायुः चक्षुषा अप्रत्यक्षपदार्थः तथापि वायौ रूपाभावस्य अर्थात **वायौ रूपं नास्ति** इत्याकारकं प्रत्यक्षं भवति, तस्मात्—अभावप्रत्यक्षमात्रमेव

अधिकरणं विषयं कृत्वैव जायते इत्यपि वक्तुं न शक्यते, अभावस्य प्रत्यक्षं प्रायश एव अधिकरणं विषयं कृत्वा भवति भूतले घटो नास्ति, पटो नास्ति इत्यादिप्रत्यक्षमधिकरणं विषयं कृत्वैव भवति। तस्मात् प्रायश एवाभावप्रत्यक्षमधिकरणप्रत्यक्षात्मकं भवति। अस्यां स्थितौ भूतलादिस्वरूपाधिकरणस्य प्रत्यक्षे इन्द्रियाणामेव करणत्वमिति आधाराधेयरूपे भूतलाभावविषयकैकप्रत्यक्षे इन्द्रियमेवं प्रतियोगिनः अदर्शनमेतदुभयमेव करणमिति वक्तव्यमिति तु नैव संगतम्। सर्वत्र प्रत्यक्षे इन्द्रियस्य करणत्वस्वीकारे एव कार्यं प्रचलति, इति अभावस्य प्रत्यक्षे प्रतियोगिनोऽदर्शनातिरिक्तकरणत्वस्वीकारोऽनावश्यकः।

चन्दनकाष्ठे चक्षुःसन्निकर्षे जाते प्रत्यक्षं भवति यदत्र सुरभिः अर्थात् यस्य सौरभज्ञानं वर्तते तस्य सुरभिचन्दनम् एतादृशं प्रत्यक्षं भवति। सौरभस्य चक्षुषा ग्रहणं न भवति, किन्तु यः पुरुषः पूर्वं घ्राणेन्द्रियेण चन्दनसौरभं गृहीतवान् तस्य चन्दनस्थसौरभस्य स्मरणं भवति इति चक्षुषैव प्रत्यक्षं भवति यत् सुरभिचन्दनम्। एतस्य प्रत्यक्षस्य चाक्षुषत्वेऽपि इदं प्रत्यक्षं सौरभमपि विषयं करोति तथापि सौरभांशे चक्षुषः करणता नास्ति एतादृशोऽभावः इन्द्रियस्वरूपकरणेन प्रत्यक्षानुपयुक्तोऽपि प्रतियोगिनोऽदर्शनवशात् प्रथमतः अभावस्य ज्ञानं भवति अनन्तरमिन्द्रियेणाधिकरणप्रत्यक्षेऽभावःविषयो भवति अर्थात् भूतलं घटाभाववत् इत्यादिरूपप्रत्यक्षस्याकारं गृहीत्वा जायते इति अभावप्रत्यक्षे इन्द्रियस्य करणत्वस्वीकारोऽनावश्यकः।

किञ्च विशिष्टज्ञाने विशेषणज्ञानं कारणं भवति इति इन्द्रियेण घटपटादिरूपप्रत्यक्षेऽपि घटपटादिविषये चक्षुषः सन्निकर्षे सति घटत्वपटत्वादेः विशेषणस्य निर्विकल्पकप्रत्यक्षं कृत्वैव जायते। अन्यथा विशेषणज्ञानस्वरूपकारणस्य अभाववशात् घटपटादिरूपसविकल्पकज्ञानं विशिष्टबुद्धिर्वा न भवेत्। अस्यां स्थितौ इन्द्रियस्वरूपकरणेनाभावस्य विशिष्टप्रत्यक्षम् अर्थात् घटाभावविशिष्टं भूतलम् इत्यादिप्रत्यक्षस्वीकारे इन्द्रियेणैव अभावस्वरूपविशेषणस्य विशेषणज्ञानं स्वीकर्तव्यम्, किन्तु अभावस्य निर्विकल्पकज्ञानमसंभवम्। यतः इन्द्रियेणाभावस्य निर्विकल्पकज्ञानस्वीकारे अभावे इन्द्रियस्य संबन्धः स्वीकरणीयः, किन्तु अभावः द्रव्यगुणादिषट्पदार्थव्यतिरिक्तः इति तत्र इन्द्रियस्य संयोगादिस्वरूपसाक्षात् संबन्धः न संभवति। एवं स्वरूपत्वात् स्वतन्त्रः अर्थात् स्वातिरिक्तः कोऽपि पदार्थः नास्ति इति अभावे अभावस्य स्वरूपेन्द्रियसंबन्धः आकाशकुसुमायमानः। कस्मिन्नपि वस्तुनि किमपि वस्तु मिलितं सम्बन्धयुक्तं वा यदा भवति,

तदा वस्तुद्वयस्य परस्परापेक्षितत्वस्य अर्थात् आधाराधेयभूतवस्तुद्वयनिरूपितोपयुक्त-मिलनस्य संबन्धनस्य वा आवश्यकता भवति। एतादृशसंबन्धेन आकृष्टं सदेव एकमपरेण मिलितं भवति। तस्मात् वस्तुद्वयस्य संबन्धः वस्तुद्वयातिरिक्त इति स्वीकर्तव्यः। वस्तुनः स्वरूपं वस्तु स्यात्तदा अस्वतन्त्रं निजरूपमिति एवमपरेणनिरूपितभवनायोग्य इति तत्र एकेऽपरस्य संबन्धो भवितुं नार्हति। अर्थात् स्वरूपेण एकस्मिन् अन्यस्मिन् अन्यत् आधाराधेयभावरूपेण मिलितं न भवति। तस्मात् अभावे इन्द्रियस्य संबन्धः असंभव इति इन्द्रियेण अभावेनस्य निर्विकल्पकज्ञानं न संभवति। तस्मात् विशेषण-ज्ञानाभाववशात् इन्द्रियेण अभावस्य विशिष्टबुद्धिरर्थात् **भूतलं घटाभाववत्** इत्यादिबु-द्धिर्भवितुं नार्हति। अभावस्य विशिष्टप्रत्यक्षे प्रतियोगिनः अदर्शनमेव प्रधानमर्थात् करणम्।

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः॥ २२॥

सौरभं चन्दनस्य गुणः, गुणस्य चन्दने समवायसंबन्धेन स्थितिः। चन्दने चक्षुषः संयोगे सति सौरभे चक्षुःसंयुक्तसमवायसंबन्धः वर्तते तथापि चक्षुषा सौरभस्य साक्षात्कारः अर्थात् सौरभमवलोकयामि एतादृशानुव्यवसायसिद्धप्रत्यक्षं न भवति। तस्मात् चक्षुरिन्द्रियजन्यसाक्षात्कारं प्रति सौरभस्य प्रतिबन्धकत्वं वक्तव्यम् अर्थात सौरभं स्वयमेव चक्षुरिन्द्रियजन्यसाक्षात्कारस्य प्रतिरोधं करोति इति स्वीकर्तव्यम्। एतत्सौरभ-स्यैकं वैशिष्टयम्। किन्तु घ्राणेन्द्रियेण चन्दनगतसौरभस्यानुभवसद्भावे एतदनुभवजनि-तसंस्कारेण सौरभस्य स्मरणं जायते तथा च सौरभं चन्दनविषयकचाक्षुषप्रत्यक्षस्य विषयो भवति। अर्थात् **सुरभि चन्दनम्**एतादृशचाक्षुषप्रत्यक्षं भवति। किन्तु तथा सत्यपि चक्षुषा सौरभस्य साक्षात्कारो न भवति। यतः सुरभि चन्दनमेतादृशचाक्षुष-प्रत्यक्षेऽपि **चन्दने सौरभमवलोकयामि** एतादृशानुव्यवसायो न भवति। प्रत्युत **सुरभिचन्दनमवलोकयामि** एतादृशानुव्यवसायो भवति। किन्तु भूतले चक्षुःसंयोगे सति **भूतलं घटाभाववत्** इत्यादिप्रत्यक्षं जायते। एतादृशस्थले **भूतले घटो नास्तीति** अवलोकयामि एतादृशसार्वजनीनानुव्यवसायो जायते, तस्मात् अभावे चक्षुःसंयुक्तभूतल-विशेषणतास्वरूपसंबन्धस्य बलेन चक्षुषैव भूतले घटाभावादेः साक्षात्कारो जायते इति स्वीकर्तव्यम्। तस्मात् चन्दने सौरभस्य चाक्षुषं प्रत्यक्षमर्थात् **सुरभिचन्दनम्** एतादृशप्रत्यक्षमेवं भूतले घटाभावादेः चाक्षुषप्रत्यक्षमर्थात् **भूतलं घटाभाववत्** इत्यादिप्रत्यक्षं समानं नास्ति। तस्मात् **सुरभिचन्दनम्** एतादृशचाक्षुषप्रत्यक्षस्य

दृष्टान्ते अभावः आश्रयरूपेण उपनीतः सन् अर्थात् पूर्वानुभवजनितसंस्कारेण स्मृतः सन् किम्वा अदर्शनवशात् ज्ञातः सन् प्रत्यक्षस्य विषयो भवतीति कथनं नैव समीचीनम् ।

किञ्च विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वेऽपि प्रथमतः इन्द्रियेण विशेषणस्य निर्विकल्पकं ज्ञानमुत्पाद्यैव सर्वत्र विशिष्टबुद्धिर्जायते एतादृशः नियमो न सम्भवति । यतः—प्रत्यक्षस्य विषयः यदि विशिष्टवस्तुना विशेषितो भवति तदा एतादृशस्थले विशेषणविषयकनिर्विकल्पकज्ञानस्यावश्यकता नास्ति । प्रत्यक्षस्य विशेष्यं यदि अविशिष्टविशेषणसम्बन्धयुक्तं भवति तदा प्रथमतः विशेषणस्य निर्विकल्पकं ज्ञानं स्वीकर्तव्यम । अयमाशयः घटत्वमेका जातिः इयं जातिरविशिष्टमखण्डमेकं वस्तु, अनेन विशेषितः अनेन सह सम्बन्धयुक्तरूपेण घटः एकः विशिष्टः सखण्डो वा पदार्थः; तस्मात् घट इत्येतादृशं प्रत्यक्षं विशिष्टवस्तुविषयकं प्रत्यक्षम् । एतादृशप्रत्यक्षे घटत्वस्वरूपविशेषणज्ञानस्यापेक्षा वर्तते, तस्मात् घटे चक्षुःसंयोगवशादेव अविशिष्टरूपेऽर्थात् स्वरूपतः घटत्वस्य प्रत्यक्षम् अर्थात् घटत्वस्य निर्विकल्पकं प्रत्यक्षं स्वीकर्तव्यम् । अन्यथा घटत्वस्वरूपविशेषणज्ञानस्य अभाववशात् घटः इत्येतादृशविशिष्टबुद्धिर्न भवितुमर्हति । प्रतियोगिनं विना केवलस्य अभावस्य ज्ञानं न भवितुमर्हति । अभावज्ञानानन्तरमेव घटो नास्ति पटो नास्ति इत्यादिरूपेण घटपटादिप्रतियोगिना विशेषितं कृत्वैवावगन्तव्योऽभावः । घटपटादिकं विशिष्टं वस्तु, तस्मात् अभावः विशिष्टप्रतियोगिना विशेषितं विना ज्ञानस्य विषयो न भवितुमर्हति । अभावस्य ज्ञानमात्रमेव अभावे विशिष्टवस्तुनः वैशिष्ट्यं सम्बन्धमत्वा विषयं कृत्वैव भवति इत्यवश्यं स्वीकार्यम् । तस्मात् अभावस्य निर्विकल्पकं ज्ञानमर्थात् केनापि विशेषणेन कल्पितं विशेषितं विना स्वरूपतः ज्ञानं न भवितुमर्हति । तस्मात् इन्द्रियेण अभावस्य विशिष्टबुद्धिस्वीकारेऽपि घटपटादिविषयकप्रत्यक्षस्थलस्य दृष्टान्ते अभावस्य निर्विकल्पकप्रत्यक्षस्य आपत्तिर्न सम्भवति । अभावस्य निर्विकल्पकं प्रत्यक्षमसम्भवम् विशेषतः भूतलादौ अभावस्य विशिष्टबुद्धिस्थले अभावस्य निर्विकल्पकज्ञानस्वीकारे सिद्धसाधनदोषः सम्भवति । अयमाशयः—अभावाधिकरणभूतलादिप्रत्यक्षनिमित्तस्येन्द्रियादेरावश्यकता वर्तते, भूतलादौ इन्द्रियसम्बन्धं विना भूतलादेः प्रत्यक्षं न सम्भवति । अस्यां स्थितौ इन्द्रियेण भूतलादौ अभावस्य प्रत्यक्षाभावे न किमपि कारणम् । एतदर्थं प्रतियोगिनः अदर्शनस्य कारणत्वस्वीकारे वादिमते इन्द्रियेण सिद्धः ज्ञातो वा योऽभावः तद्विषयकज्ञानस्य साधनं भवति ।

इन्द्रियेण अभावज्ञानस्वीकारे अभावे इन्द्रियसम्बन्धः स्वीकर्तव्यः एव, किन्तु अभावे इन्द्रियस्य संयोगस्वरूपादिसाक्षात्सम्बन्धोऽथ वा इन्द्रियसंयुक्तः भूतलादेः संयोग-समवायादिपरम्परासम्बन्धो वा भवितुं नार्हति इति इन्द्रियेण अभावस्य ज्ञानं न सम्भवति, पूर्वपक्षे यदुक्तं तन्न समीचीनम् यतः—इन्द्रियसंयुक्तभूतलादौ अभावस्य स्वरूपसम्ब-न्धसद्भावात् ( अभावे इन्द्रियस्य साक्षात्सम्बन्धाभावेऽपि ) चक्षुरादीन्द्रियसंयुक्तभूतला-दिनिरूपितस्वरूपसम्बन्धात्मकपरम्परासम्बन्धः सम्भवति, तस्मात् एतादृशपरम्परासम्बन्ध-बलेनैव अभावस्य प्रत्यक्षता स्यात्। स्वरूपसम्बन्धः न सम्भवतीति पूर्वपक्षे यदुक्तं तदपि न सङ्गतम्, यतः—स्वरूपसम्बन्धस्य स्वीकाराभावे सम्बन्धधारायाः विच्छेदः शेषो वा न सम्भवति तथा चानवस्थादोषो भवेत्। अयमाशयः—आधारे आधेयवस्तु वर्तते तत्र आधाराधेययोः कोऽप्येकः सम्बन्धोऽस्ति, आधाराधेययोः सम्बन्धसद्भावे सम्बन्धः आवश्यकः एवं क्रमेण सम्बन्धधारायाः शेषः न सम्भवति। यथा—घटभू-तलयोः संयोगः सम्बन्धः इति प्रत्यक्षसिद्धः, संयोगसम्बन्धः यदि भूतले न स्यात्तदानेन सम्बन्धेन घटः भूतले न स्यात्, तस्मात् संयोगसम्बन्धः भूतले वर्तते इत्यवश्यं स्वीकर्तव्यम्। तथा सति वक्तव्यम् यत् संयोगसम्बन्धोऽपि अन्येन केनापि सम्बन्धेन अर्थात् समवायसम्बन्धेन भूतले वर्तते एवञ्च तुल्ययुक्त्या समवायस्यापि सम्बन्धान्तर-कल्पना कर्तव्या एवं समवायस्य सम्बन्धः भूतले वर्तते तत्रापि सम्बन्धान्तरकल्पना कर्तव्या इत्यनेन क्रमेण सम्बन्धधारायाः शेषो न भवति इति अनवस्था भवति। अत एव यस्य वस्तुनः संयोगसमवायादिसुस्पष्टसम्बन्धः अर्थात् आधाराधेयभावादिज्ञापकः सम्बन्धः न सम्भवति तयोः स्वरूपसम्बन्ध इत्येव स्वीकर्तव्यम्। तथा च पूर्वोक्तानवस्थादोषः न सम्भवति। अयमाशयः—सर्वत्र स्वरूप एव शेषसम्बन्धः। ययोः अन्यः कोऽपि साक्षात्सम्बन्धः नास्ति तयोः पदार्थयोः प्रथमः स्वरूप एव सम्बन्धः। स्वरूपस्य स्वातिरिक्तः कोऽपि सम्बन्धो नास्तीति तस्य स्वरूपातिरिक्तसम्बन्धकल्पना न कर्तव्या भवतीति इति सम्बन्धधारैव परिसमाप्ता भवति। भूतले घटस्याभावः वर्तते अयं घटा-भावः एतस्य स्वातिरिक्तं किमपि रूपं प्रकारो वा नास्ति तात्कालिकभूतलस्य स्वरूपं प्रकार एव वा तस्य रूपं प्रकारो वा, तस्मात् भूतलेन सह अभावजन्यः कोऽपि सम्बन्धः न सम्भवति तात्कालिकभूतलस्य स्वरूपमेव स्वस्वरूपमिति भूतलेन सह घटाभावस्य स्वरूपः सम्बन्धः। स्वरूपसम्बन्धोऽपि तत्तत्कालावच्छिन्नाधिकरणस्वरूपातिरिक्तोऽन्यो नास्ति अर्थात् यत्कालेनावच्छिन्न घटाभावः भूतले वर्तते तेन कालेनावच्छिन्नः स्वतन्त्र-भूतलस्य यः स्वरूपः स एव भूतले घटाभावस्य सम्बन्धः।

यदि प्रतियोगिनोऽदर्शनेन प्रथमतोऽभावस्य निर्विकल्पकं ज्ञानं भवति इति अभावविषयकविशिष्टबुद्धिर्भवति इति स्वीक्रियते, तदा तु तुल्ययुक्त्या अनुमानादि-प्रमाणेनार्थबोधस्थलेऽपि प्रथमतः अनुमानादिप्रमाणस्य साहाय्येन विशेषणस्य निर्विकल्पकं ज्ञानं भवति ततः विशिष्टबोधो भवति इत्यपि स्वीकर्तुं शक्यते परमेतदनुभवविरुद्धम् ॥ २२ ॥

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः ।
प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ॥
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥

# सौरभविवृत्याद्यनुसारिकुसुमाञ्जलिसारसङ्कलनम्

## चतुर्थः स्तवकः

ईश्वरस्य ज्ञाने प्रमाज्ञानलक्षणं न संघटते, तस्मात् ईश्वरसद्भावेऽप्यसौ प्रमाण-पुरुषो न सम्भवति, प्रमाज्ञानस्य कर्ता किम्वा करणमेव प्रमाणम्, ज्ञानं, यथार्थमित्यत एव तत्प्रमा एवं वक्तुं न शक्यते। प्रमाज्ञानस्य लक्षणं भवति अगृहीतग्राहित्वम्, अज्ञातवस्तु-विषयकज्ञानत्वम्वा अर्थात् पुरुषस्य यज्ज्ञानं स्वसमकाले एवं पूर्वकाले एतदुभयकाले अवस्थितेनैतादृशज्ञानान्तरेणाज्ञातवस्तु विषयं कृत्वा तिष्ठति, तदेव प्रमा। यथा कस्यापि पुरुषस्य प्रथमतः एकं ज्ञानं जातम्, "अयं घटः" इति एतज्ज्ञानसमकाले एवं पूर्वकाले एतादृशज्ञानान्तरं पुरुषस्य न भवति, एतादृशस्थले एतत्पुरुषस्य "अयं घटः" इत्येतादृशं यत्प्राथमिकं ज्ञानम्, तत् एतादृशज्ञानान्तरेणाज्ञातघटं विषयं कृत्वैव भवति। तस्मात् एतत्पुरुषस्य अयं घट इति यत्प्राथमिकं ज्ञानं तदेव प्रमा। किन्तु एतत्पुरुषस्यैव "अयं घटः" इत्येतादृशैकप्रकारकज्ञानधारास्थले ( अयं घटः अयं घटः इति क्रमिकैकाधिकज्ञानस्थले ) द्वितीयादिसकलमेव ज्ञानं स्वसमकाले एवं पूर्वकाले अवस्थितेन "अयं घटः" इत्येता-दृशज्ञानान्तरेण अर्थात् पूर्ववर्तितुल्यज्ञानेन ज्ञातघटं विषयं कृत्वैव भवति, अर्थात् "अयं घटः" इति यत् द्वितीयं ज्ञानं, तत्, तत्सदृशप्राथमिकं यत् "अयं घटः" इत्येतादृशं ज्ञानम् एतज्ज्ञानस्य विषयभूतस्य घटस्य विषयं कृत्वा भवति। तृतीयादिज्ञानसम्बन्धेऽपि एवमेवावगन्तव्यम्। तस्मात् एकस्यैव पुरुषस्य अयं घटः एतादृशं क्रमिकद्वितीया-दिसकलं ज्ञानं नैव प्रमा। अयमाशयः—सर्वत्र प्राथमिकं ज्ञानमेव प्रमाज्ञानम्। ईश्वरः सर्वज्ञः, सर्वविषयकं नित्यमेकं ज्ञानम्। अनाद्यनन्तासीमकाल एव ईश्वरस्य ज्ञानस्य समकालः। ईश्वरस्य ज्ञानस्य समकालः प्रसिद्धः परं पूर्वकालः नैव प्रसिद्धः। ईश्वरस्य ज्ञानं नित्यमिति अजन्यम्, एवं तस्य ज्ञानान्तरं नास्ति। तस्मात् ईश्वरस्य ज्ञानं, प्रमाज्ञानस्य यल्लक्षणं कथितं तद्युक्तं नास्ति इति प्रमा नास्ति। एवमीश्वरः प्रमाज्ञानस्य कर्ता करणम्वा किमपि नास्ति, ईश्वरः अप्रमाणपुरुषः। तस्मात् ईश्वरोक्तत्वात् वेदस्य प्रामाण्यं संस्थापयितुं न शक्यते, वेदेऽनाश्वासस्तिष्ठत्येव।

अप्राप्तेरधिकप्राप्तेरलक्षणमपूर्वदृक्।
यथार्थोऽनुभवो मानमनपेक्षतयेष्यते ॥ १ ॥

अप्राप्तिः—अव्याप्तिः, अधिकप्राप्तिः—अतिप्राप्तिः, इत्येतदुभयदोषवशात् पूर्वपक्षोक्तमगृहीतग्राहित्वम्प्रमायाः लक्षणं न भवितुमर्हति। यतः—भ्रमज्ञानं प्रमा नास्ति, तद्धि प्रमालक्षणस्य लक्ष्यं न। किन्तु अगृहीतग्राहित्वं यदि प्रमायाः लक्षणं स्यात्तदा प्राथमिकभ्रमज्ञाने ( सर्पत्वरूपे रज्जुविषयकप्राथमिकज्ञाने ) लक्षणस्य अतिव्याप्तिः अर्थात् अलक्ष्ये लक्षणस्य प्राप्तिस्वरूपः दोषः स्यात्। एवं धारावाहिकः क्रमिकयथार्थज्ञानसमुदायो वा यत्र प्रमा, तत्र एकप्रकारकक्रमिकबहुज्ञानस्थले द्वितीयादिज्ञानसकले लक्षणस्य अव्याप्तिः दोषो भवेत्। अत एव यथार्थानुभवत्वमेव प्रमायाः लक्षणम्। यद् वस्तु वस्तुतः यद्धर्माक्रान्तं अथ वा यद् वस्तु यत्, एतद्रूपे एतद्वस्तुविषयकानुभवः, अथ वा एतद्वस्तुनः एतद्वस्तुरूपेण योऽनुभवः स एव प्रमा। ईश्वरः सर्वदर्शी, तस्मात् तस्य ज्ञानं प्रत्यक्षानुभवः, एवम् ईश्वरः अभ्रान्त इति तस्य ज्ञानं यथार्थम् तस्मात् ईश्वरस्य ज्ञानं प्रमा। इदानीं वक्तुं शक्यते यत्—**प्रमा** शब्दस्य अर्थः प्रकृष्टं ज्ञानम्, प्र + मा = प्रमा, "प्र" शब्दस्यार्थः प्रकृष्टः, "मा" शब्दस्यार्थः ज्ञानम्, प्रकृष्टं ज्ञानमेव "प्रमा" शब्दस्य योगार्थः। यथार्थत्वमेव ज्ञानस्य प्रकृष्टता, स्मृतिरपि एकं ज्ञानम्। तथा च स्मृतिरपि प्रमाशब्दस्य योगार्थान्तर्वर्तिनी। अस्यां स्थितौ यथार्थानुभवत्वं यदि प्रमायाः लक्षणं स्यात्, तदा स्मृतिरनुभवो नास्तीति यथार्थस्मृतौ लक्षणस्य अव्याप्तिदोषः स्यादेव। तस्मात् यथार्थानुभवत्वं प्रमायाः लक्षणं न सम्भवति। अत्रेदं वक्तव्यम्, यदाचार्यः अत्र महर्षि गोतमस्य अभिप्रेतप्रमायाः लक्षणमेव उक्तवान्, "अनपेक्षतयेष्यते" आचार्यस्य एतद्वचनेन एतादृशमेव ज्ञानं सम्भवति। यथार्थस्मृतिः महर्षेरभिप्रेतप्रमा नास्ति। अथ वा आचार्यः स्वमतदृढीकरणार्थमेव एतदुक्तवान्। महर्षिमते निरपेक्षप्रकृष्टज्ञानमेव प्रमा। अर्थात् ज्ञानस्य प्रकृष्टता यथार्थता वा निरपेक्षः अर्थात् स्वसमानविषयकज्ञानान्तरस्य प्रकृष्टता यथार्थतायाः अनधीनो वा एतादृशज्ञानमेव प्रमा। स्मृतेः स्मरणात्मकज्ञानस्य वा एतादृशयथार्थता नास्ति। स्वसमानविषयकपूर्वानुभवजनितसंस्कारेण स्मरणं जायते। यादृशः पूर्वानुभवस्तादृशमेव स्मरणं भवति। पूर्वानुभवस्य यथार्थत्वे स्मरणमपि यथार्थं भवति एवमयथार्थत्वे स्मरणमपि अयथार्थं भवति। घटस्य धर्मे घटत्वरूपे घटस्य पूर्वानुभवसद्भावे स्मरणमपि तथैव भवति। तथा च स्मरणात्मकज्ञानस्य यथार्थता अयथार्थता वा पूर्वानुभवस्य यथार्थतायाः अयथार्थतायाः वा अधीना, निरपेक्षयथार्थतैव ज्ञानस्य प्रकृष्टता। तस्मात् यथार्थस्मरणसद्भावेऽपि तत् निरपेक्षं स्वाधीनप्रकृष्टतायुक्तम्वा नास्ति। अत एव महर्षिः स्मृतेः प्रमात्वं नेच्छति। ज्ञानं द्विविधम्—अनुभवात्मकम्, स्मरणात्मकञ्च—अनुभवश्चतुर्विधः—प्रत्यक्षानुमित्युप-

मितिशाब्दबोधभेदात्। महर्षिः स्वकृतदर्शनस्य सर्वप्रथमसूत्रे प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्मोक्षः भवतीत्युक्तवान्। अनन्तरं "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"ति तृतीयसूत्रे प्रत्यक्षाद्यनुभवस्य करणरूपे चतुर्विधं प्रमाणमुक्तवान्, स्मृतिकरणं प्रमाणरूपेण न गणितम्। अतोऽवगन्तव्यं यत् स्मृतिः स्मरणात्मकं ज्ञानम्वा तत्त्वज्ञानविषयप्रमाण-स्यैकदेशप्रमारूपे नैव अभिप्रेतम्। तथा सति प्रमायाः करणं प्रमाणमित्युक्त्वा यथार्था-नुभवस्यैव चतुर्विधकरणस्योल्लेखोऽसङ्गतः स्यात्, तत्र स्मृतिकरणस्य उल्लेखोऽपि समुचितः। अतः स्मृतेः प्रमात्वं मुनेरभिप्रेतं नास्तीति सुस्पष्टमवगम्यते। आत्मा वाऽरे द्रष्टव्यः इत्यादिना वेदवाक्येनात्मविषयकं स्मरणं नैव विहितम्। अवगम्यते एतदर्थमेव महर्षिरपि यथार्थस्मृतेः प्रमात्वं नोक्तम्। महर्षेः अयमाशयः यत् कस्यापि वस्तुनः ज्ञाने जाते तद्वस्तु यदि पुरुषः स्वेष्टसाधनमुपकारि वा अथ वा अनिष्टस्य साधनमनुपकारि वा अवगच्छति, तदा तस्य वस्तुनः प्राप्त्यर्थमथ वा परित्यागार्थं पुरुषस्य प्रवृत्तिः अथ वा निवृत्तिर्भवति। प्रवृत्तेः फलं प्राप्तिः, निवृत्ते फलं परित्यागः, किमपि वस्तु यथार्थरूपेणावगत्य एवं स्वोपकारिरूपेण तद्विवेचनां कृत्वा तल्लाभार्थं प्रवृत्तः सन् तद् वस्तु प्राप्नोति एवं किमपि वस्तु यथार्थरूपेणावगत्यापि स्वानुपकारि मत्वा तत्परित्यागार्थं निवृत्तः सन् तस्य वस्तुनः वास्तविकपरित्यागो भवति। भ्रमवशात्प्रवृत्तः सन् वस्तुनः वास्तविकप्राप्तिः परित्यागो वा न भवति। अयमभिप्रायः—जलं जलं ज्ञात्वा एवं पिपासाशान्तेरुपायं विचिन्त्य जलार्थं प्रवृत्तः सन् वास्तविकजलस्य लाभः प्राप्तिर्वा भवति, प्रवृत्तिश्च सफला। किन्तु मरीचिकायां जलभ्रमस्थले जलं पिपासाशमनोपायं मत्वा प्रवृत्तः सन्नपि वास्तविकजललाभं न करोति, प्रवृत्तिश्च सफला न भवति। एवमेव यथार्थसर्पं दृष्ट्वा तमनिष्टकारिणं मत्वा निवृत्तः सन् वस्तुतः सर्पस्य परित्यागो भवति, निवृत्तिश्च सफला भवति। किन्तु रज्जुं सर्पं विविच्य एवं सर्पमनिष्टकारिणं मत्वा निवृत्तः सन्नपि वास्तविकसर्पस्य परित्यागो न भवति निवृत्तिश्च सफला न भवति। तस्मात् सफलायां प्रवृत्तौ निवृत्तौ च यथार्थज्ञानमुपयोगि। पूर्वानुभवस्य यथार्थतावशादेव स्मरणस्य यथार्थता। यथार्थरूपे कस्यापि वस्तुनः स्मरणं कृत्वा उपकारिविवेचनं कृत्वा प्रवृत्तोऽनु-पकारिविवेचनं कृत्वा निवृत्तः वस्तुनः वास्तविकप्राप्तिं परित्यागम्वा करोति, किन्तु एतादृशस्थले पूर्वानुभवस्य यथार्थता एव मूलम्। यतः—पूर्वानुभवस्य यथार्थतायामपि स्मरणं यथार्थं न भवति। तस्मात् प्रवृत्तेः किम्वा निवृत्तेः सफलतायाः विषये यथार्थ-स्मरणात्मकं ज्ञानं स्वाधीनं नास्ति। अस्यां स्थितौ सर्वत्रैव साक्षात्परम्परया वा अनुभवस्य यथार्थताम्विना प्रवृत्तिः निवृत्तिर्वा सफला न भवति। अतः यथार्थानुभव एव प्रमा

सर्वोत्कृष्टं ज्ञानम्वा। महर्षिः सर्वोत्कृष्टज्ञाने एव प्रमाशब्दस्य व्यवहारं कृतवान्। स्मृतेः यथार्थत्वेऽपि सर्वोत्कृष्टा नेति स्मृतिः प्रमाज्ञानमिति महर्षेः अभिप्रेतं न। आचार्यस्य मतेऽपि इत्येवावगम्यते। आचार्यमते एतत्प्रसङ्गे गोतममतमेवाभिप्रेतमिति चतुर्थस्तवकपंचमकारिकायां "प्रामाण्यं गौतमे मते" इति आचार्यवचनेनैवाभिव्यज्यते। यथार्थानुभवत्वमेव प्रमायाः सिद्धान्तं लक्षणम्। प्रमा शब्दस्य योगार्थं गृहीत्वा स्मृतावपि प्रमाशब्दस्य व्यवहारः सम्भवति। यन्मते अगृहीतग्राहित्वं प्रमायाः लक्षणं तन्मते स्मृतौ प्रमायाः लक्षणं कथमपि न संघटते। अत एवावगम्यते यत् आचार्यः महर्षिमतसिद्धं प्रमालक्षणमुक्तवान्। अन्यथा यथार्थस्मृतेः प्रमास्वीकारे का क्षतिरिति सुधीभिर्विवेचनीयम्।

प्राथमिकभ्रमज्ञाने अगृहीतग्राहित्वस्वरूपप्रमालक्षणस्य या अतिव्याप्तिः प्रदर्शिता, सापि नैव सुसंगता। यतः---ज्ञानमात्रमेव प्रमा भ्रमो वा न भवितुमर्हति। अयमाशयः—ज्ञानं मुख्यं प्रकाशस्वरूपं वस्तु। घटपटादिरपि तस्य साधारणासाधारणधर्मरूपेण एकं विशिष्टं वस्तु। वस्तुन्येव वस्तुनः सम्बन्धः सम्भवति। ज्ञानेन सह वस्तुनः एव सम्बन्धः सम्भवति, अवस्तु अलीकं ज्ञानस्य विषयो न भवितुमर्हति। विषयतैव वस्तुनि ज्ञानस्य सम्बन्धः। अन्यस्य असाधारणधर्मरूपेणान्यत् किमपि नास्ति। सर्पस्य असाधारणधर्मसर्पत्वरूपेण रज्जुः अकिञ्चित्करं तुच्छमवस्तु। तस्मात् सर्पत्वरूपेण रज्जुः ज्ञानस्य विषयो न भवितुमर्हति। तर्कस्थले अवस्तुनि वस्तुनः सम्बन्धस्वीकारेऽपि तस्य प्रतियोगिता प्रतिपक्षतैव वा सम्बन्धः। विषये ज्ञानस्यैतादृशः सम्बन्धो नास्ति। तस्मात् सर्पत्वरूपेण रज्जुः कदापि ज्ञानस्य विषयो न भवितुमर्हति। ज्ञानमात्रमेव यथार्थम् यदि तदा पूर्वानुभूतस्यैव स्मृतिर्भवतीति सा नैवागृहीतग्राहिणीति स्मृतिर्नैव प्रमापदवाच्या। दूरस्थवक्राकाररज्जुं दृष्ट्वा अल्पालोके सर्पज्ञानं भवति, एतदेव भ्रमज्ञानस्य प्रसिद्धमुदाहरणम्, किन्तु एतादृशस्थले सर्प इति एकं ज्ञानं भवति इत्यापाततः प्रतीयते, परमिदं वास्तविकमेकं ज्ञानमर्थात् सर्पधर्मसर्पत्वं विशेषणं कृत्वा रज्जुविषयकं ज्ञानं न भवति। तथा सति एतज्ज्ञानं भ्रमः अर्थात् अन्यस्य धर्मरूपेणान्यस्य ज्ञानमुच्येत। वस्तुत एतादृशज्ञानस्थले एकदा ज्ञानद्वयं वर्तते। एकं सर्पत्वस्य स्मृतिः, एवमपरं वस्तुनः असाधारणं धर्मं विषयं नैव कृत्वा लम्बमानत्वादिसाधारणधर्मरूपेण रज्जोः प्रत्यक्षं भवति। तत्रैकमपि ज्ञानं नैव भ्रमज्ञानम्। परं सर्पत्वस्य स्मरणं गृहीतग्राहीति प्रमा नास्ति रज्जोः प्रत्यक्षं गृहीतग्राहीति प्रमा अयमेवात्र भेदः। अल्पालोके एवं दूरत्वादिदोषसद्भावात् एतज्ज्ञानद्वयस्य पार्थक्यमुपलब्धिविषयो न भवति इति

एकज्ञानरूपेण व्यवहृतो भवति। सर्वत्र भ्रान्तव्यवहारस्थले दोषवशात् एकदा एतादृशज्ञानद्वयस्य एकत्र समावेशो भवति, तथा च प्राथमिकभ्रमज्ञाने अतिव्याप्तिप्रदर्शनं गगनकमलिनीकमनीयताप्रदर्शनवदेकान्ताकिञ्चित्करम्।

किञ्च कस्यापि वस्तुनः सम्बन्धे क्रमिकैकप्रकारसकलज्ञानस्य अर्थात् घटः इत्येतादृशसकलज्ञानस्य द्वितीयादिज्ञाने अव्याप्तिरूपो दोषः प्रदर्शितस्तदपि नैव सुसंगतः। यतः घटः इति प्राथमिकं ज्ञानं केवलं घटत्वरूपेण घटं विषयं कृत्वैव भवति। किन्तु एतादृशज्ञाने जाते घटो ज्ञात इति व्यवहारो भवति, तस्मात् घट इति प्राथमिकज्ञानेन विषयघटे ज्ञाततारूपः एकः धर्मः उत्पद्यते इत्यवश्यं स्वीकर्तव्यम्। अस्यां स्थितौ क्रमिकज्ञानधारास्थले द्वितीयं ज्ञानं प्रथमज्ञानाविषयज्ञाततास्वरूपमतिरिक्तं धर्मं विषयं कृत्वा वर्तत इति एतदंशं गृहीत्वा द्वितीयं ज्ञानमपि अगृहीतग्राहि वर्तते। एवमेव तृतीयचतुर्थज्ञानसम्बन्धेऽपि अवगन्तव्यम्। प्राथमिकघटज्ञानं द्वितीयघटज्ञानस्य समकाले एवं पूर्वकाले यद्यपि अवस्थितं तथापि समानविषयकं नास्ति। तथा च अगृहीतग्राहित्वस्वरूपप्रमालक्षणं धारावाहिकबुद्धिस्थलेऽव्याहतम्। इदमत्र वक्तुं शक्यते यत् विषये ज्ञानजन्यज्ञाततास्वीकारस्य किं प्रयोजनम्? अत्रेदमुत्तरं यत् विषये ज्ञानजन्यज्ञातता-स्वीकाराभावे ज्ञानस्य विषयनियमो न स्यात्, अर्थात् घट एव घटः एतादृशज्ञानस्य विषयः पटो न एतादृशनियमः न सम्भवति। ज्ञाततास्वीकारे एतादृशी अनुपपत्तिर्न भवति, अर्थात् वक्तुं शक्यते यत् ज्ञानजन्यज्ञातता यस्मिन् वस्तुनि जायते तदेवैतज्ज्ञानस्य विषयः एतत्स्वीकारे एव ज्ञानस्य विषयनियमः रक्षितो भवति इति ज्ञातता अवश्यमेव स्वीकार्यः पदार्थः ॥ १ ॥

स्वभावनियमाभावादुपकारोऽपि दुर्घटः।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥ २ ॥

भ्रमव्यवहारस्थले द्विविधं ज्ञानं वर्तते, एकं धर्मिणः प्रत्यक्षम् एवमन्यद्धर्मस्य स्मरणम्। परमेतन्न समीचीनम्। यतः—नायं सर्पो रज्जुरियमित्यादिरूपबाधज्ञाने जाते रज्जौ न सर्पभ्रमस्तिष्ठति, भ्रमज्ञानं वाधितं भवति इति सकलप्रत्यक्षम्। किन्त्वेतादृशबाधज्ञाने जाते सर्पत्वस्य स्मरणमेवं रज्जुस्वरूपधर्मिणः प्रत्यक्षम् एतज्ज्ञानद्वयस्य सद्भावे बाधा न भवति, तस्मात् रज्जौ सर्पत्वस्य ज्ञानम् अर्थात् रज्जुं सर्पमवगत्य ज्ञानमेकं विशिष्टं ज्ञानम्, यज्ज्ञानं विशिष्टज्ञानस्य स्वरूपं नास्ति तत् ज्ञानान्तरेण बाधितं न भवति, बाधितं च न भवितुमर्हति। तदा सर्पस्वरूपे रज्जुरलीकभूतेति रज्ज्वा

सह ज्ञानस्य सम्बन्धः भवितुं नार्हति इति यदुक्तं तदपि न सङ्गतम्, यतः—एकान्तासद्वस्तु ज्ञानस्य विषयो न भवितुमर्हति। सर्पत्वरूपेण रज्जुः यद्यपि एकः विशिष्टः पदार्थो नास्ति इत्यत्र न कस्यापि पुरुषस्य विमतिः तथापि सर्पत्वमेवं रज्जुरित्युभयोर्मध्ये एकोऽपि पदार्थः असन्नास्ति, तथा च दोषवशात् सर्पत्वरूपेण रज्जोः ज्ञानमसम्भवं न भवितुमर्हति। किञ्च भ्रमद्वयस्य यौगपद्यं नास्ति अर्थात्, एकस्यात्मनः एकसमये ज्ञानद्वयं न सम्भवति। एकस्य आत्मनः एकसमये ज्ञानद्वयं न भवति, मनसः अणुत्वमेवात्र कारणं प्राथमिक-भ्रमज्ञाने अगृहीतग्राहित्वस्वरूपप्रमालक्षणस्य अतिव्याप्तिः स्यादेव।

अन्यच्च विषये ज्ञानेन ज्ञाततायाः स्वीकाराभावे, ज्ञानस्य विषयनियमः न स्यात् तथा च विषयतायाः अतिरिक्तज्ञातता स्वीकर्तव्या, एतदपि न समीचीनम्, यतः—ज्ञानेन विषये ज्ञातता उत्पद्यते इति स्वीकारे तत्रापि कोऽपि नियमः स्वीकर्तव्यः। अन्यथा घटः इति ज्ञानेन ज्ञातता पटे कस्मात् न जायते ? तस्मात् वक्तव्यम् यस्मिन् ज्ञाने यद् वस्तु विषयो भवति अर्थात् यस्य ज्ञानस्य विषयता यत्र तिष्ठति तस्मिन् वस्तुनि तज्ज्ञानेन ज्ञातता उत्पद्यते, तथा सति घटविषयकज्ञानेन पटे ज्ञातता न भवितुमर्हति। अस्यां स्थितौ कस्यापि पक्षस्य निरूपणं न सम्भवति। अयमाशयः—ज्ञानेन ज्ञातता कुत्र जायत इति विचारे यस्य विषयस्य ज्ञानमर्थात् ज्ञानविषयता यस्मिन् वस्तुनि वर्तते, तथा च ज्ञानस्य विषयः कः इति निरूपणवेलायां वक्तव्यं यत् ज्ञानेन ज्ञातता यस्मिन् वस्तुनि जायते, तदेव ज्ञानस्य विषयः, अर्थात् ज्ञातवस्त्वेव ज्ञानविषयतायुक्तम्। अस्यां स्थितौ वस्तुनि विषयतायोगस्य स्वीकाराभावे ज्ञाततायाः स्वीकारो न भवति। एवं ज्ञाततायाः स्वीकाराभावे विषयतास्वीकारो न भवति, तस्मात् अन्योऽन्याश्रयदोषः सम्भवति इति कस्यापि पक्षस्य निरूपणं न सम्भवति। अत एव ज्ञानेन विषये एका अतिरिक्ता ज्ञातता भवति इति यदा वक्तुं न शक्यते, तदा वस्तुनि ज्ञानस्य यः स्वाभाविकः सम्बन्धः विषयता सा एव ज्ञातता, विषयतातिरिक्ता काचित् ज्ञातता नास्ति। तथा च एकविषयस्य क्रमिकबहुज्ञानस्थले द्वितीयादिज्ञानं ज्ञाततास्वरूपातिरिक्तपदार्थं विषयं करोतीति अगृहीतग्राहीति वक्तुं न शक्यते। किञ्च ज्ञानं यथा वर्तमानवस्तुसम्बन्धे भवति तथैवातीतानागतवस्तुसम्बन्धे भवति, नष्टवस्तुनः स्मरणम् अनेकस्यैव भवति, मेघगर्जने वृष्टिर्भवति इति चिन्ता भवति, इतिहासपाठेऽतीतानेकघटनाया एव ज्ञानं भवति। येन कारणेन ज्ञानं भवति, ज्ञानस्य विषयतापि तेनैव कारणेन जायते, अर्थात् ज्ञानेन सहैव विषयतासम्बन्धोऽपि जायते। तथा चातीतानागत-

वस्तुविषयकं ज्ञानं सम्भवति इति विषयतायाः असम्भवो नास्ति । तथा च अतीतस्य किम्वा अनागतस्य वस्तुनः ज्ञानेन अतीतानागतवस्तुनि वर्तमानकाले ज्ञाततायाः प्रादुर्भावो न सम्भवति । यतः—कार्यस्याव्यहितपूर्वे कार्याश्रयस्य वर्तमानत्वमावश्यकम्, चिरातीतं चिरभाविवस्तु वा वर्तमानज्ञाततायाः अव्यवहितपूर्वे क्षणे स्थातुं न शक्नोति । तस्मात् ज्ञातता नैव भवितुमर्हति ।

ज्ञानं नाम मानसिकक्रिया, क्रियामात्रमेव कर्मगतफलस्य जनकम्, यथा, गमनक्रिया । गमनक्रियया ग्रामादिकर्मकारके पादसंयोगरूपं फलं भवति । विषयः ज्ञानक्रियायाः कर्म । अत्र स्थले कर्मगतफलजनकत्वं साध्यम्, हेतुः क्रियात्वम्, दृष्टान्तः गमनक्रिया अनुमानञ्च—ज्ञानं, कर्मगतफलजनकम्, क्रियात्वात् । एतादृशानुमानेन ज्ञेये ज्ञानस्य विषये वा ज्ञातता सिद्धो भवितुमर्हति । कर्मपदार्थे कस्यापि फलस्य कार्यस्य वा उत्पादनकरणं क्रियायाः स्वभावः क्रिया सर्वथा निष्फला न भवति । ज्ञानमपि क्रिया, ज्ञानस्य विषय एव कर्म, तस्मात् ज्ञानं स्वविषये कर्मणि वा अर्थात् ज्ञेयपदार्थेऽवश्यमेव किमपि फलमुत्पाद्यैव तिष्ठति इत्यवश्यमेव स्वीकर्तव्यम्, इदमेव ज्ञातता । अयमाशयः—क्रियाजन्यफलसम्बन्ध एव कर्मता, एतत्फलसम्बन्धे यः आधारो भवति, तदेव कर्म । चैत्रः ग्रामं गच्छति, अत्र स्थले चैत्रस्य पादसञ्चालनस्वरूपगमनक्रियाजन्यफलं ग्रामे चैत्रस्य संयोगः, एतदेव अस्मिन् स्थले गमनक्रियायाः कर्मत्वं, एवं तद्युक्तमिति ग्रामं कर्म । तथैव चैत्रः घटं जानाति, इत्यादिस्थलेऽपि घटविषयकज्ञानस्वरूपा या क्रिया तज्जन्यं फलं ज्ञाततैव कर्मता एवं तद्युक्तः घटः कर्म । एवमेव सर्वत्र ज्ञानस्थले ज्ञानस्य विषये कर्मणि वा ज्ञानजन्यज्ञातता अवश्यमेव स्वीकर्तव्या ॥२॥

अनैकान्तादसिद्धेर्वा न च लिङ्गमिह क्रिया ।
तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥३॥

व्यभिचारस्य एवमसिद्धेः दोषवशात् क्रियात्वहेतुना पूर्वपक्षोक्तानुमानं न सम्भवति । यतः—धातुवाच्यः = धात्वर्थः, क्रियाशब्दस्य अर्थ इति स्वीकारे घटं वस्त्रेणाच्छादयति अत्र दोषः स्यात् । यतः—आच्छादनमपि क्रिया, किन्तु आच्छादन-क्रियया कर्मणि घटे किमपि फलं न जायते, अर्थात् आच्छादने सति घटे किमपि वैशिष्ट्यं न भवति । इयं या आच्छादनक्रिया अनेन साध्यं कर्मगतफलजनकत्वं नास्ति एवं हेतुः क्रियात्वम्, तस्मात् एतादृशक्रियान्तर्भावे हेतुरूपं क्रियात्वमनेकान्तोऽर्थात् साध्यस्य कर्मगतफलजनकत्वस्य व्यभिचारि तस्मात् व्यभिचारिक्रियात्वहेतुना विचारस्थले

अनुमितिः न सम्भवति, एवं स्पन्दनं यत्र क्रियाशब्दस्यार्थस्तत्र स्पन्दनत्वमेव पूर्वपक्षोक्तानुमानस्य हेतुः, एतस्य ज्ञानस्वरूपक्रियायामभावात् हेतुः स्वरूपासिद्धः, अर्थात् पूर्वपक्षोक्तानुमानस्य पक्षः ज्ञानं हेतुभूतस्पन्दनत्वाभावविशिष्टं, तस्मात् अनेनापि विचारस्थले पूर्वपक्षोक्तरूपानुमितिर्न सम्भवति ।

किञ्च—विशेषणेन विशेषितैव विशिष्टबुद्धिर्भवति, अर्थात् विशेषणस्य एवं विशेष्यस्य सम्बन्धं विषयं कृत्वैव विशिष्टबुद्धिर्भवति ! ज्ञातो घटः इत्याकारकप्रत्यक्षानुभवोऽपि विशिष्टबुद्धिरिति घटस्वरूपविशेष्यं ज्ञानेन विशेषितं भूत्वैव एतादृशविशिष्टप्रत्यक्षस्य विषयो भवति । अर्थात् विशेषणीभूतं ज्ञानं विशेष्यीभूतः घटः इत्येतदुभययोः सम्बन्धं विषयं कृत्वा भवतीति वक्तव्यम् । तस्मात् ज्ञानस्य एवं विषयस्य सम्बन्धभूतज्ञाततायाः अस्तित्वे प्रत्यक्षानुभव एव प्रमाणम् । इदमपि नैव सङ्गतम् , यतः—एतादृशविशिष्टप्रत्यक्षानुभवः, ज्ञानस्य एवं विषयस्य इत्येतदुभययोः स्वाभाविकसम्बन्धभूतविषयतयैव सम्पन्नो भवति । अर्थात् विषयतासम्बन्धे ज्ञानेन विशेषितम् एव ज्ञातः घटः इत्यादिरूपं विशिष्टं प्रत्यक्षं भवति । एतदर्थं विषयतातिरिक्तज्ञाततास्वीकारस्यावश्यकता नास्ति । अन्यथा तुल्ययुक्त्या कृतः घटः इष्टः घटः इत्यादिविशिष्टप्रत्यक्षस्यानुरोधेन विषये कृततारूपस्य एवम् इष्टतास्वरूपस्य धर्मान्तरस्य स्वीकारः आवश्यकः स्यात् । अर्थात् स्वाभाविकसम्बन्धेन विशिष्टबोधे सम्पन्ने सति अपि यदि विशिष्टबुद्ध्यर्थं सम्बन्धान्तरस्वीकारः भवति तदा कृतः घटः इष्टः घटः इत्यादिप्रकारकविशिष्टप्रत्यक्षस्थलेऽपि कृतेः एवम् इच्छायाः स्वाभाविकसम्बन्धविषयतया अतिरिक्ता कृतता एवमिष्टता सिद्धा स्यात् , यदि इष्टता कृतता च न स्वीक्रियते तदा तुल्ययुक्त्या ज्ञाततायाः स्वीकारस्यापि आवश्यकता नास्ति । ज्ञातो घट इत्येतादृशविशिष्टप्रत्यक्षेण विषयस्य एवं ज्ञानस्य स्वाभाविकसम्बन्धस्य विषयतामात्रस्यैव प्रकाशो भवति, अर्थात् ज्ञानं स्वेन सह विषयस्य स्वाभाविकसम्बन्धं विषयतामात्रमेव प्रकाशयति विषयतातिरिक्ता ज्ञातता नास्ति ॥३॥

अर्थेनैव विशेषो हि निराकारतया धियाम् ।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥४॥

घटपटादिसकलं वस्तु स्वीयस्वीयजातिरूप-घटत्वपटत्वादिना विशेषितं सत् व्यावृत्तमर्थात् घटादिपदार्थसकलस्य विरुद्धता एकत्रानवस्थितजातिवशात् पूर्वोक्तजातियुक्तं पदार्थसकलं परस्परं विभिन्नं वर्तते । एकजातीय-सावयववस्तुनः परस्परभेदः जातिभेदमूलकः

न सम्भवतीति तत्र व्यक्तिगतभेदः स्वीक्रियते, स्वीयावयवविशेषसंस्थानेनाकृत्यैव वा भेदः सम्भवति। यथा—अयं घटः स घटः एकजातीयत्वात् परस्परभिन्नः न भवति, जातिकृतः भेदः तत्र न सम्भवति, तथापि एतद्घटस्य यो ह्यवयवसंस्थानविशेष आकृतिर्वा सा अन्यघटावयवसंस्थानेनाकृतिविशेषेण वा भिन्न इति विशेषविशेषाकृतिविशिष्टः घटः परस्परं भिन्नः, विशेषाकृतिरेव तत्र भेदिका, ज्ञानं, तादृशं न, ज्ञानमवयवविहीनं तस्मात् आकृतिशून्यं निराकारम्वा, तथा च घटविषयकज्ञानं पटज्ञानाकृतिवशात्परस्परभिन्नमिति वक्तुं न शक्यते एवम् सर्वमपि ज्ञानं एकेन ज्ञानत्वजातिरूपेण विशिष्टम् इति जात्यापि तत्र भेदः न सम्भवति, किन्तु घटज्ञानं पटज्ञानं च परस्परभिन्नमिति प्रत्यक्षसिद्धम्। घटज्ञानकाले पटज्ञानं नास्ति, अहमिति यद्यपि एकः अभिन्नः तथापि यस्मिन् समये घटज्ञानवान् अहं तस्मिन्समये पटविषयकज्ञानवान् नाहम् इत्यादिरूपानुभव एव ज्ञानस्य परस्परविभिन्नतायां प्रमाणम्। तस्मात् ज्ञाने परस्परभेदकः कश्चिदवश्यमेवावगन्तव्यः। विशेषभूतोऽर्थः विषय एव वा निराकारज्ञानस्य व्यावर्तकः भेदकधर्मो वा अर्थात् विषये भेदवशादेव ज्ञानानां परस्परभेदः भवति। घटपटादीनां भेदः यद्यपि विषयभेदवशात् सम्भवति तथापि एकं घटं विषयं कृत्वा यज्ज्ञानसकलं जायते तेषामर्थात् एकघटविषयकज्ञानधारास्थले ज्ञानसकलस्य भेदः विषयभेदवशात् न सम्भवति। तस्मात् **अर्थेनैव विशेषो हि** इति एवकारः न संगच्छते, विशेषतः समूहालम्बनज्ञानस्य अर्थात् विशेषतः यदा एकमेव ज्ञानम् एकस्मिन्नेव समये नाना वस्तु विषयं करोति तत्र विषयभेदे सत्यपि ज्ञानमपि न भिन्नम् इत्यवश्यं स्वीकर्तव्यम्। अर्थेन विषयेण वा विशेषितं सदेव ज्ञानसकलं विशिष्टज्ञानस्य विषयो भवति अहं घटं जानामीत्यादिरूपे एव ज्ञानस्य विशिष्टं मानसप्रत्यक्षं भवति विषयांशं परित्यज्य केवलं जानामि एतादृशमानसप्रत्यक्षस्वीकारे उपयुक्तं कारणं नास्ति। किमपि वस्तु अन्येन केनापि वस्तुना विशेषितं भवति तदा तेषां परस्परविशेषसम्बन्धस्यापेक्षां करोति। तस्मात् घटज्ञानपटज्ञानादिविशेषविशेषज्ञाने घटपटविशेषणस्य ( विषयस्य ) सम्बन्धः अवश्यमेव स्वीकर्तव्यः सैव विषयिता। एवं तुल्ययुक्त्या घटपटादिविषयेऽपि ज्ञानस्य सम्बन्धः स्वीकर्तव्यः सैव विषयता। एवमेव इष्टः इप्सितः वा घटः, ज्ञातः घटः इत्यादिरूपसार्वजनीनानुभववशात् कृतीच्छादिरूपकर्मणः अर्थस्य वा ( विषयस्य ) ज्ञानस्थले कृतीच्छादीनामपि विषये सम्बन्धः स्वीकर्तव्यः तदपि विषयतैव अतिरिक्तायाः ज्ञाततायाः इष्टतायाः कृततायाः स्वीकारस्यावश्यकता नास्ति। अयमाशयः ज्ञातः घटः, इष्टः घटः, कृतः घटः इत्यादिरूपबुद्धिज्ञानेच्छाकृत्यादीनां क्रियाधाराविशेषिता घटविषयकविशिष्ट-

बुद्धिः तथा च ज्ञानेच्छाकृत्यादिविशेषणस्य सम्बन्धः घटे अवश्यमेव स्वीकर्तव्यः सैव विषयता ।

किञ्च विषयशब्दस्यार्थपर्यालोचनायामयमर्थः सुस्पष्टं ज्ञातो भवति । विषयशब्दः वि + षिञ् + अच् प्रत्ययनिष्पन्नः । षिञ् धातोरर्थः बन्धनम्, तथा च यद्धिबन्धनं करोति तदेव विषयशब्दवाच्यः । निराकारघटज्ञानं घटेनैव बद्धमाकृतिविशिष्टं वा भवति तथा च घटज्ञानस्य विषयः घटः, तस्मात् घटज्ञानस्य विषयता घटेऽवश्यमेव स्वीकर्तव्या, विषयतातिरिक्ता ज्ञातता नास्ति ।

प्रमाणजन्यं फलं कार्यमेव प्रमा प्रमास्वरूपकार्यस्य कर्ता करणम्वा प्रमाणम् । ईश्वरस्य ज्ञानं नित्यमिति फलं कार्यम्वा नास्ति, तथा च ईश्वरः ज्ञानस्य कर्ता करणम्वा नास्ति । अस्यां स्थितौ ईश्वरः प्रमाणं प्रमाता वा किमपि भवितुं नार्हति ईश्वरोऽप्रमाणपुरुषः इति तदुक्तवेदे आस्थास्थापनं न सम्भवति ॥ ४ ॥

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥

प्रमाणजन्यं फलं वा प्रमायाः लक्षणं नास्ति सम्यग् ज्ञानं यथार्थज्ञानमेव प्रमा अर्थात् यद्वस्तु वस्तुतः यद्वर्तते अथ वा यद्धर्मविशिष्टः तत् अथ वा तद्धर्मविशिष्टरूपे तदेव वस्तुनः ज्ञानं प्रमा । वस्तुतः इदं यथार्थज्ञानस्य लक्षणम्, यथार्थज्ञानमात्रमेव प्रमा नास्ति तथा सति यथार्थस्मृतिरपि प्रमा स्यात् एवं तत्करणमपि प्रमाणं स्यात्, परन्तु यथार्थस्मृतिकरणं नैव प्रमाणम् । आचार्यः प्रमाकथने सम्यक् परिच्छित्तिरित्युक्तम्, सम्यक् शब्दार्थो नैव सुस्पष्टः स्मृतिश्च न प्रमोक्तमाचार्यमते तदेवाङ्गीकृतं न वेति चिन्ता परं गौतममतमेव एतन्मतम् । यथार्थस्मृतिः प्रमा अथ वा सम्यक् परिच्छित्तिः स्यात् तदा को दोष इति नावगम्यते वेदे आत्मविषयकस्मृतेः कर्तव्यता नैव विहिता एतदर्थं स्मृतिः प्रमा न स्वीक्रियते इत्यपि सुधीभिर्विवेचनीयम् । घटः वास्तविकघटत्वविशिष्टः । घटत्वरूपेण घटं विषयं कृत्वा घट इति ज्ञानं प्रमा । ईश्वरः अन्यधर्मेणान्यत् वस्तु नावगच्छति, यस्य वस्तुनः यो हि धर्मः तद् वस्तु तेनैव रूपेणावगच्छति, तस्मात् ईश्वरज्ञानं प्रमा । प्रमाता प्रमायाः कर्ता इत्यर्थो नास्ति प्रमाज्ञानस्याश्रयः प्रमाता । प्रमाज्ञानस्य योऽभावस्तस्य भेदः प्रामाण्यम् । ईश्वरस्य ज्ञानं नित्यः एवं प्रमा । तस्मात् ईश्वरे प्रमाज्ञानस्य सम्बन्धाभावः स्थातुं न शक्नोति इति ईश्वरप्रामाण्यमव्याहतम्, ईश्वरः प्रमाणपुरुषः । तद्रचितः वेदः कदापि अनित्यः अश्रद्धेयः न भवितुमर्हति । वेदस्य उपदेशकरूपेण ईश्वरः अवश्यमेव स्वीकर्तव्यः ।

# सौरभविवृत्याद्यनुसारिकुसुमाञ्जलिसारसङ्कलनम्

## पञ्चमस्तवकः

ईश्वरस्य साधकमीश्वरस्य निश्चयरूपेणावगत्यर्थमुपयुक्तं प्रमाणं नास्ति। चक्षुरादिभिरिन्द्रियैः ईश्वरस्य प्रत्यक्षं न जायते इति ईश्वरसम्बन्धे प्रत्यक्षं प्रमाणं नास्ति। शब्दस्य उपमानस्य च प्रामाण्यमनेके न स्वीकुर्वन्ति। सांख्याचार्याः शब्दस्य प्रामाण्यं स्वीकुर्वन्ति तथापि तेन विचारस्थले अप्रत्यक्षवस्तुनोऽसन्दिग्धं ज्ञानं न जायते। विचार्य अप्रत्यक्षवस्तुनोऽसन्दिग्धज्ञानार्थमेकमात्रमनुमानप्रमाणमेव निर्भरयोग्यम् अनुमानप्रमाणस्य साहाय्येन कस्यापि वस्तुनः निश्चयार्थं सद्धेतोरावश्यकता वर्तते। सद्धेतुरित्यनेन व्याप्तिपक्षधर्मताविशिष्टः हेतुरुच्यते, अनुमापको हेतुर्यदि साध्यव्याप्तिविशिष्टः, एवं पक्षे ( अनुमितिस्थले ) अवस्थितो भवेत्तदा हेतुः सद्धेतुरुच्यते। किन्त्वीश्वरानुमाने उपयुक्तः सद्धेतुर्नास्ति इति अनुमानेनेश्वरसाधनं न सम्भवति इयं सांख्याचार्यस्य विप्रतिपत्तिः। एतादृशविप्रतिपत्तेः फलं यदीश्वरः अस्ति न वा ? इति संशयः।

कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुते।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वजिदव्ययः ॥१॥

कार्यायोजनादिशब्दोऽत्र भावप्रधानोऽभिमतः। "कार्य" शब्दस्य कार्यत्वमर्थः, "आयोजन" शब्दस्य आयोजनत्वं कर्मत्वम्वार्थः। "धृत्यादिशब्दस्य सम्बन्धेऽपीयमेव कथा। कार्यत्वादिसद्धेतुनैवेश्वरविषयकं मननमनुमितिर्भवति ! सद्धेतोरभावात् ईश्वरमननं न सम्भवति इति भ्रान्तस्य कथनम्। कार्यत्वहेतुना ईश्वरानुमानस्यायमाकारः —क्षित्यङ्कुरं सकर्तृकं, कार्यत्वात्, अस्मिन् अनुमाने क्षित्यङ्कुरं पक्षः, सकर्तृकत्वं साध्यम्, कार्यत्वं हेतुः, दृष्टान्तः—यथा घटः। सकर्तृकत्वमाक्रम्य कार्यत्वं न तिष्ठति, यत्र कार्यत्वं तत्र सकर्तृकत्वम, अर्थात् यद्यत् कार्यं तत्तत्सकर्तृकमिति कार्यत्वं हेतुः सकर्तृकत्वस्य नियतसहचारी अर्थात् सकर्तृकत्वस्य आश्रये नियतं मिलति। नियतसाहचर्यमेव व्याप्तिरिति कार्यत्वं सकर्तृकत्वस्य व्याप्तिविशिष्टं व्याप्यम्वा। एवं क्षित्यङ्कुरस्वरूपपक्षेऽवस्थितमिति सद्धेतुरेव, अस्यां स्थितौ सकर्तृकत्वस्य व्याप्यं कार्यत्वं क्षित्यङ्कुरे वर्तते अथ वा सकर्तृकत्वस्य व्याप्यकार्यत्ववत् क्षित्यङ्कुरम् इत्यादिरूपेण यथार्थपरामर्शः सम्भवति इति एतादृशपरामर्शेन क्षित्यङ्कुरं सकर्तृकमिति अनुमितिः

सम्भवति, अर्थात् क्षित्यङ्कुरस्य एकः कर्ता वर्तते इति निश्चितरूपेणावगन्तुं शक्यते। सकर्तृकत्वं = कर्तृजन्यत्वमिति सखण्डम्, विशिष्टपदार्थो वा कर्तृत्वं कर्तृजन्यत्वादिकम्वा पदार्थसकलस्य विशेष्यविशेषणसम्बन्धयुक्तत्वरूपेण विशिष्टपदार्थत्वम्। कर्तृत्वादि-पदार्थसकले कमपि एकं पदार्थं परित्यज्य सकर्तृकत्वस्वरूपविशिष्टपदार्थस्य ज्ञानमसम्भवम्, अर्थात् कर्तृत्वं नाम किमस्ति, कर्ता कः पदार्थः, इत्यादिकं ये न जानन्ति ते सकर्तृकत्वं किमित्यप्यवगन्तुं न शक्नुवन्ति तस्मात् कर्तृत्वादिपदार्थसकलस्य प्रत्येकमेव सकर्तृकत्वस्वरूपविशिष्टपदार्थस्य घटकम् निर्वाहकम्वा। अस्यां स्थितौ सकर्तृकत्वस्य ज्ञाने जाते एव सकर्तृकत्वस्य घटकीभूतः निर्वाहको वा कर्तापि एतज्ज्ञानस्य विषयो भवेत्। तथा च क्षित्यङ्कुरे कर्यत्वहेतुकसकर्तृकत्वस्य कथितरूपपरामर्शेनैव क्षित्यङ्कुरं सकर्तृकमित्यनुमितौ सत्यां क्षित्यङ्कुरस्य यो हि सकर्तृकत्वादिकं धर्मः तस्य निर्वाहकः कर्ता अवश्यमेवैतादृशानुमितेर्विषयो भवति। कार्यस्य उपादानसम्बन्धे यस्य प्रत्यक्षं ज्ञानम्, कार्यकरणेच्छा ( चिकीर्षा ) एवं प्रवृत्तिः ( यत्नः ) वर्तते सैव व्यक्तिः कार्यस्य कर्ता भवितुमर्हति, अर्थात् कार्योत्पादने समर्थः स्यात्। क्षित्यङ्कुरं किम् एतस्योपादानं किम्, एतत्सम्बन्धे ज्ञानमल्पज्ञानां जीवानां नास्ति, अर्थात् अल्पज्ञाः जीवाः प्रत्यक्षं कर्तुं न शक्नुवन्ति यत् क्षित्यङ्कुरं किम्, केनोपादानेन च गठितम्। अल्पज्ञो जीवः क्षित्यङ्कुरविषयकचिकीर्षाम् अर्थात् क्षित्यङ्कुरस्वरूपकार्यकरणे इच्छां यत्नं कृत्वापि क्षित्यङ्कुरमुत्पादयितुं न शक्नोति इति प्रत्यक्षसिद्धम् इति अल्पज्ञः जीवः क्षित्यङ्कुरस्य कर्ता नास्ति इत्यवधारितम्। अस्यां स्थितौ क्षित्यङ्कुरं सकर्तृकमित्येता-दृशानुमितौ सत्यां तयैवाल्पज्ञजीवात् अतिरिक्तः एकः प्रयत्नवान् कर्ता वा अनुमितो भवति। क्षित्यङ्कुरस्वरूपकार्यस्य निमित्तं बहवः कर्तारः इति स्वीकारोऽनावश्यक इति तन्निमित्तमेकः कर्ता स्वीकरणीय एव, एककर्तृस्वीकारे कल्पनालाघवं जायते इति एता-दृशानुमित्या एको अनुमितो भवतीति क्षित्यङ्कुरस्य कर्तुरेकत्वं सिद्ध्यति। स एव च ईश्वरः।

आयोजनम्— आ युज्यतेऽनेन, अर्थात् अनेन सम्यग्रूपेण युक्तो भवति। एता-दृशव्युत्पत्तिसिद्धायोजनशब्दस्य अर्थः कर्म क्रिया वा। क्रिययैव वस्तुसकलं परस्परं संयुज्यते। यद्यपि क्रियेति "आयोजन" शब्दस्य व्युत्पत्तिलभ्यार्थस्तथापि अत्र आयोजनत्वं क्रियात्वम्वार्थः। क्रियात्वहेतुकानुमानस्याकारः—सृष्टेः सर्वं प्रथमं द्व्यणुकस्यारम्भकः यः संयोगः, येन संयोगेन अवयवी प्रस्तुतो भवति स एव आरम्भकसंयोगः, येनांशद्वयेन घटः प्रस्तुतो भवति तस्य कपाल इति नाम उच्यते, कपालद्वयस्य संयोगे सति अर्थात्

कपालद्वयसंयुक्तकरणात् घटस्वरूपावयवो भवति, इदं प्रत्यक्षसिद्धम् । अयं यस्तावत् कपालद्वयस्य संयोगः, अयमेव घटस्यारम्भकः संयोगः ।

एतत्संयोगानुकूलक्रिया, चेतनप्रयत्नपूर्विका अर्थात् चेतनप्रयत्ननिष्पाद्या, क्रियात्वात् अत्र तादृशक्रिया,—( पक्षः ), चेतनप्रयत्नपूर्वकत्वम् ( साध्यम् ) क्रियात्वम्, ( हेतुः ) यथाऽस्माकं क्रिया इति ( दृष्टान्तः ) ससीम्नि परिच्छिन्ने वा वस्तुन्येव क्रिया सम्भवति परिच्छिन्नवस्तुमात्रमेवाचेतनम्, चेतनप्रयत्नं विना अचेतनक्रिया नैव सम्भवति, तथा च यत्र यत्र क्रियात्वन्तत्र तत्र चेतनप्रयत्नपूर्वकत्वम् अर्थात् या क्रिया सा चेतनप्रयत्ननिष्पाद्या इति क्रियात्वं हेतुः चेतनप्रयत्नपूर्वकत्वस्य नियतसहचारी, व्याप्तिविशिष्टो वा, एवं पक्षे तादृशक्रियायामवस्थितः । परमाणुद्वयसंयोगेन एकं द्व्यणुकं जायते, परमाणुद्वयस्य संयोग एव द्व्यणुकारम्भकक्रिया क्रिययैव संयोग इति । सृष्टेः सर्वप्रथमोत्पन्नद्व्यणुकस्यारम्भकसंयोगानुकूला क्रिया क्रियात्वविशिष्टा एवं क्रियात्वं हेतुः चेतनप्रयत्नपूर्वकत्वस्य व्याप्यः व्याप्तिविशिष्टो वेति पक्षे सृष्टिसर्वप्रथमोत्पन्नद्व्यणुकारम्भकसंयोगानुकूलक्रियायामवस्थित इति सद्धेतुः । अस्यां स्थितौ सृष्टेः सर्वप्रथमोत्पन्नद्व्यणुकारम्भकसंयोगस्यानुकूला क्रिया चेतनप्रयत्नपूर्वकत्वव्याप्यक्रियात्वविशिष्टा इत्यादिरूपानुमाने परामर्शे वा जाते एतादृशक्रिया, चेतनप्रयत्नपूर्विका एतादृशी अनुमितिर्जायते । एतादृशी क्रिया च अल्पज्ञजीवस्य प्रयत्नेन साध्या नास्ति, एतदवधार्यानुमित्या अल्पज्ञजीवातिरिक्तः एकः स्वतन्त्रः कर्ता अनुमितो भवति, स एव चेश्वरः सृष्टेः प्रथमोत्पन्नद्व्यणुकस्यारम्भकसंयोगस्यानुकूलक्रियायाः निमित्तम्, बहुप्रयत्नवतः स्वीकरणमनावश्यकम् । एकजनस्वीकारे कल्पनालाघवं भवति इति एतादृशानुमित्या एतादृशक्रियाकर्तृत्वरूपे एकस्यैव जनस्यानुमितिर्भवति ।

गुरुवस्तुसकलस्य पतनाभावः अर्थात् यत् पतनं न भवति तदेव धृतिः धैर्य्यम्वा । धृतिहेतुकानुमानस्याकारः अखिलं ब्रह्माण्डसकलम्,— प्रयत्नवदधिष्ठितम् प्रयत्नवत्कर्तृकधृतमर्थात् प्रयत्नवदाश्रितम्, पतनाभावात् । यथा उड्डीयमानविहङ्गमधृतकाष्ठदण्डः । वस्तुनः गुरुतैव पतनस्य कारणम्, ब्रह्माण्डे गुरुत्वेऽपि नैव पतति तत् यथास्थानमेव तिष्ठति । यद्धि गुरुत्वविशिष्टमपि न पतति तदवश्यमेव प्रयत्नवत्कर्तृकधृतमाश्रयप्राप्तम्वा । तथा च ब्रह्माण्डसकलस्य पतनप्रतिबन्धकः कश्चित् वर्ततेऽर्थात् ब्रह्माण्डसकलं प्रयत्नवत्कर्तृकाश्रितमिति अनुमितिः सम्भवति । अल्पज्ञो जीवः एतादृशं प्रयत्नं न कर्तुं शक्नोति इति एतादृशप्रयत्नवतः पुरुषस्य स्वीकारादेव कार्यं चलेत् तथा चानुमित्यैव अल्पज्ञजीवव्यतिरिक्तः एकः स्वतन्त्रः प्रयत्नवान् अनुमितो भवति, स एव च ईश्वरः ।

पद्यतेऽनेनेति व्युत्पत्त्या 'पद' शब्दस्य अर्थः व्यवहारः। अत्र च व्यवहारत्वम-वगन्तव्यम्। व्यवहारेणैव वस्तुनः परिचयो भवति। शिशुः सूच्यते यत् अयं घटः अथ वा यद्युच्यते यत्र जलं स्थाप्यते स एव घटः, तदा शिशुः घटस्य परिचयं प्राप्नोति अत्र वस्तुप्रदर्शनमथ वा पूर्वोक्तवाक्यकथनमेव व्यवहारः। सृष्ट्यारम्भे भगवान् अनुग्रहं कृत्वैव जीवं प्रति वस्तुपरिचयं कारयति। अन्यथा जीवः अस्मिन् संसारे आगत्यापि अन्धतमसाच्छन्नः सन् एवावतिष्ठेत्। जीवस्य कर्मानुसारमेवासौ शिक्षां ददाति इति जीवशिक्षातारतम्येऽपि असौ दोषी नास्ति।

अनुमानस्य आकारः—घटादिसम्प्रदायस्य प्राथमिकव्यवहारः, स्वतन्त्रपुरुषाधीनः, व्यवहारत्वात्, यथा आधुनिकलिपिव्यवहारः। यदि कोऽपि परिचयं न कारयेत्तदा शिशोर्यथा न कस्यापि परिचयो भवति, तथैव घटादीनामपि प्रथमं परिचयं कोऽपि न कारयेत्तदास्माकं वस्तुपरिचय एव न भवेत्। यः सर्वप्रथमं वस्तुपरिचयं कारितवान् स एवेश्वरः।

प्रत्ययः—प्रत्ययस्य अर्थः प्रामाण्यं प्रमात्वम्वा। अनुमानाकारश्च वेदवाक्यजन्यं ज्ञानम्, कारणगुणजन्यम्, प्रमात्वात्, यथा प्रत्यक्षप्रमाज्ञानम्। गुणेन ज्ञाने जातेऽसौ प्रमा यथार्थो वा भवति। प्रत्यक्षे विषयसंयुक्तेन्द्रियमेव गुणः प्रत्यक्षविषये वास्तविकेन्द्रियस्य सम्बन्धे सति यथार्थप्रत्यक्षं भवति। यथार्थानुमितौ यथार्थपरामर्श एव गुणः अर्थात् "साध्यव्याप्यहेतुमान् पक्षः" इत्यादिनिश्चयः परामर्शो वा यथार्थः स्याच्चदा अनुमितिरपि यथार्था भवेत्। धूमः वस्तुतो वह्निव्याप्यः एवं पर्वतेऽवस्थितः "वह्निव्याप्यधूमवान् पर्वतः" एतादृशपरामर्शे सति "पर्वतो वह्निमान्" इति यथार्थानुमितिः भवेत्। यथार्थ-शाब्दबोधे वक्तुः वाक्यार्थविषयकयथार्थज्ञानपूर्वकत्वमेव गुणः; अर्थात् वक्ता वाक्यार्थं यथार्थतया अवगत्य वाक्यप्रयोगं कुर्य्याच्चदा श्रोतुः एतद्वाक्यजन्यं वाक्यार्थविषयकं यथार्थज्ञानं भवेत्। अस्यां स्थितौ वेदवाक्यजन्यज्ञानमात्रमेव प्रमा यथार्थो वेति वेदवक्तुः वेदार्थसम्बन्धे यथार्थज्ञानमवश्यमेव स्वीकार्यम् अर्थात् यथार्थरूपेण अवगत्यैव वेदवक्ता वेदमुक्तवान् इत्यवश्यमेवानुमितिर्भवेत्। बहुशाखाप्रशाखाविभक्तं वेदं यथार्थरूपेणावगत्य वेदस्य कथनं जीवसाध्यम् नास्ति इत्यवधारणात्, एवमेकस्य वेदवक्तुः स्वीकारेणैव कार्यं प्रचलेदिति, वेदवाक्यजन्यं ज्ञानं कारणगुणजन्यम् एतादृशानुमित्यैव सकलवेदार्थस्य यथार्थज्ञानवान् एकोऽनुमितो भवति स एवेश्वरः।

अथ वा प्रत्ययशब्दस्य अर्थः विधिप्रत्ययः। "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदवाक्यस्थे यज + इत = यजेत शब्दे "इत" इति लिङ्प्रत्ययः विधिप्रत्ययः;

अस्यार्थः आप्ताभिप्रायः । अर्थात् वेदवक्तृपुरुषाभिप्रायः । आचार्यस्य मते आप्ताभिप्राय एव विधिप्रत्ययस्य अर्थः । प्रथमतः वेदः अल्पज्ञजीवोच्चरितो न इत्यवधारितम् इति एतादृशविधिप्रत्ययेन यस्याभिप्रायः अनुमितो भवति स एवेश्वरः । अनुमानाकारः— वैदिकविधिप्रत्ययः, आप्ताभिप्रायबोधकः, विधिप्रत्ययत्वात् ।

श्रुतिः = वेदः अत्र वेदत्वमर्थः । अनुमानाकारः वेदवाक्यं सकलम्, पौरुषेयम्, अर्थात् पुरुषोच्चारितम्, वेदत्वात्, यथा आयुर्वेदः । अत्र पक्षः वेदवाक्यम्, साध्यम्— पौरुषेयत्वम्, हेतुः वेदत्वम् । वाक्यमात्रम् पुरुषोच्चारितम्, वेदोऽपि वाक्यम् इति वेदत्वं पौरुषेयत्वव्याप्तिविशिष्टम् व्याप्यम् वा । वेदे पौरुषेयत्वव्याप्यवेदत्वस्य निश्चये जाते अनुमितिर्भवति वेदः, पौरुषेयः, सृष्ट्यादौ वेदवाक्यम्, अल्पज्ञजीवेनोच्चरितं न भवेत् इत्यवधारितम् एवं प्राथमिको वेदवक्ता कश्चिदेकः स्वीकर्तव्यः इत्यनुमित्या अल्पज्ञजीवा-तिरिक्तो वेदवक्ता अनुमितो भवति ।

वाक्यम् = वाक्यत्वम् । वाक्यत्वहेतुकानुमानाकारः—वेदः, पौरुषेयः, वाक्यत्वात्, यथा महाभारतम् । वाक्यमात्रमेव पौरुषेयम् इति वाक्यत्वं पौरुषेयत्वव्याप्यम्, वेदे पौरुषेयत्वव्याप्यवाक्यत्वस्य निश्चये परामर्शे वा जाते अनुमितिः भवति "वेदवाक्यं पौरुषेयम्" एतादृशानुमित्या सर्वज्ञः ईश्वरोऽनुमितो भवति ।

संख्याविशेषः अर्थात् द्वित्वत्वहेतुकानुमानाकारः—सृष्टिप्रथमद्व्यणुकपरिमाणजनक-परमाणोः द्वित्वसंख्या, अपेक्षाबुद्धिजन्या, द्वित्वसंख्यात्वात्, यथा—घटस्य पटस्य च द्वित्वसंख्या परिमाणमात्रम् स्वजातीयोत्कृष्टपरिमाणजनकं भवति । महत्परिमाण-विशिष्टकपालद्वयेन एकस्य घटस्य सम्भवे अयं घटः कपालद्वयापेक्षया उत्कृष्टः महान् भवति । परमाणुपरिमाणमतिसूक्ष्मम्, अस्यां स्थितौ द्व्यणुकपरिमाणस्य परमाणुपरिमाणं यदि कारणं भवेत्तदा द्व्यणुकपरिमाणस्य परमाणुपरिमाणापेक्षया उत्कृष्टत्वमापद्येत अर्थात् द्व्यणुकपरिमाणं परमाणुपरिमाणापेक्षया सूक्ष्ममर्थात् अणुतरं स्यात्, किन्तु परमाणुपरिमाणा-पेक्षया उत्कृष्टमर्थात् सूक्ष्मं परिमाणमप्रसिद्धम्, द्व्यणुकपरिमाणं परमाणुपरिमाणापेक्षया किञ्चित्स्थूलमिति युक्तिसिद्धम् । यद्यपि परमाणुपरिमाणापेक्षया सूक्ष्मपरिमाणस्याप्रसि-द्धत्वादेवापत्तिर्न स्यादिति तथापि द्व्यणुकं वाच्यतासम्बन्धेन "परमाणुतरम्" एतच्छब्दविशिष्टमस्तु एतादृशापत्तिः स्यात्, यतः वाच्यतासम्बन्धः परमाणुतरशब्दश्च इत्येतदुभयं नैवाप्रसिद्धम्, पदपदार्थयोः सम्बन्ध एव वाच्यता, घटादिशब्दस्य वाच्यता-सम्बन्धः प्रसिद्धः इति तादृशव्यधिकरणसम्बन्धेन अर्थात् एकस्य सम्बन्धेनापरस्य-आपत्तिः स्यादिति ।

पूर्वविश्लेषणेन एतत्सिद्धं यत् परमाणुपरिमाणं न द्व्यणुकपरिमाणस्य कारणम् परमाणोः द्वित्वसंख्यैव द्व्यणुकपरिमाणस्य कारणम् अर्थात् परमाणुद्वय-संयोगे एव एकं द्व्यणुकमुत्पद्यते इति स्वीकर्तव्यम्, द्वित्वप्रभृतिसंख्यामात्र-मेवापेक्षाबुद्धिजन्यम् अयमेकः, अयमेकः, इत्याकारिका अनेकैकत्वबुद्धिरेवापेक्षा-बुद्धिः, एतादृशापेक्षाबुद्धौ सत्यामेव वस्तुनि द्वित्वादिसंख्या उत्पद्यते, एतन्निमित्तमेव द्वित्रीत्यादिरूपेण वस्तुनः प्रत्यक्षं जायते। सृष्टेः प्रथमद्व्यणुकपरिमाणे परमाणोः द्वित्वसंख्यैव कारणम्। सृष्टिप्रथमे शरीराद्यभाववशात् जीवः ज्ञानशून्यः, तत्समये यस्यापेक्षाबुद्ध्या परमाणोः द्वित्वसंख्या जायते, स एव ईश्वरः सर्वज्ञः। अत्र प्राथ-मिकापेक्षाबुद्धिजन्यत्वस्य व्याप्त्या द्वित्वसंख्यात्वविशिष्टसृष्टिप्रथमोत्पन्नद्व्यणुकपरिमाणजनक-परमाणोः द्वित्वसंख्या एतादृशपरामर्शवशात् अनुमितिर्भवितुमर्हति यत् तादृशद्वित्वसंख्या कस्याप्यपेक्षाबुद्धिजन्या, तादृशद्वित्वसंख्यायाः कारणीभूता अपेक्षाबुद्धिः अल्पज्ञजीवस्य नैव सम्भवति इत्येतन्निश्चितमेवमेतादृशापेक्षाबुद्धेराश्रयः एकः जनः अवश्यमेव स्वीकर-णीयः इति एतादृशानुमित्यैवाल्पज्ञजीवातिरिक्तः स्वतन्त्रः ईश्वरः अनुमितो भवति।

कार्यत्वस्वरूपहेतौ पञ्चदोषाणामारोपः सम्भवति। पक्षे साध्यस्याभावः साध्या-भावविशिष्टः पक्ष एव वा बाधदोषः, कथ्यमानयुक्त्या क्षित्यङ्कुरे सकर्तृकत्वस्याभावात् अकर्तृकत्वस्य वा स्वीकारात् क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टम् तस्मादत्र कार्यत्वं सकर्तृकत्वाभावविशिष्टक्षित्यङ्कुरमिति यो बाधदोषस्तेन दोषेण दुष्टो हेतुः। कर्ता अवश्यमेव शरीरादिविशिष्टः, कर्तृमात्रस्य शरीरविशिष्टत्वं दृष्टम्, यथा जीव इति शरीरं कर्तृत्वव्यापकमर्थात् शरीरेण सह नियतमिलितम् नियतसहचरम्वा। यत्र व्यापकीभूतस्य वस्तुनः अभावो भवेत् तत्र व्याप्यस्याप्यभावोऽवश्यमेव सम्भवेत् इति तु सुनिश्चितम्। वह्निः धूमव्यापकीभूतः, धूमश्च वह्निव्याप्यः, यत्र वह्निर्नास्ति तत्र धूमोऽपि न तिष्ठति इति प्रत्यक्षसिद्धम्। तथा च ईश्वरे कर्तृत्वव्यापकीभूतस्य शरीरस्याभावात् अर्थात् शरीरमीश्वरस्य नास्तीति तद्व्याप्यस्य कर्तृत्वस्याप्यभावोऽवश्यमेव स्यात् अर्थात् ईश्वरः कस्यापि कार्यस्य कर्ता भवितुं नार्हति। अल्पज्ञः जीवः क्षित्यङ्कुरं कर्तुं नैव समर्थ इति जीवेन क्षित्यङ्कुरस्य कर्तृत्वधर्मस्य समाधानं नैव भवितुमर्हति, एवं शरीराभावात् ईश्वरोऽपि कस्यापि कार्यस्य कर्ता भवितुं नार्हति इति ईश्वरेऽपि क्षित्यादिकर्तृत्वं न सिद्ध्यति। तथा च क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टमित्येव स्वीकर्तव्यम् एवं च क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वात्, एतादृशानुमानस्य हेतुः कार्यत्वं बाधदोषदुष्टम्। इत्येतादृशदुष्टहेतुना कस्यापि वस्तुनः स्वरूपनिरूपणं न सम्भवति।

शरीराभावे कर्ता भवितुं नार्हति, कस्यापि कार्यस्य सम्पादनार्थं कर्तुः शरीरस्यावश्यकता वर्तते। तथा च शरीरस्यापि कर्तृ-साध्यकार्यस्य कारणत्वं वक्तव्यम्। अस्यां स्थितौ यद्धि कर्तृजन्यं तदेव शरीरजन्यं "यत्र-यत्र कर्तृजन्यत्वन्तत्र तत्र शरीरजन्यत्वमपि" इत्येतादृशी व्याप्तिः स्वीकरणीया। अर्थात् शरीरजन्यत्वं कर्तृजन्यत्वस्य व्यापकं कर्तृजन्यत्वञ्च शरीरजन्यत्वस्य व्याप्यम् इत्यवश्यं मन्तव्यम्। यत्र व्यापकस्याभावो वर्तते तत्र व्याप्यस्याभावोऽवश्यम्भावी क्षित्यङ्कुरे शरीरजन्यत्वस्याभावः प्रत्यक्षसिद्ध इति क्षित्यङ्कुरे शरीरजन्यत्वाभावस्वरूपप्रतिपक्षहेतुना कर्तृजन्यत्वाभावोऽर्थात् सकर्तृकत्वाभावः सेत्स्यति। तथा च क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वादित्यनुमानकाले क्षित्यङ्कुरम्, अकर्तृकम्, सकर्तृकत्वाभावविशिष्टम्वा, शरीराजन्यत्वात् शरीरजन्यत्वाभाववत्त्वाद्वेति प्रतिपक्षोद्भावनं कर्तुं शक्यते। तथा कस्यापि पक्षस्य निर्णयो न स्यादिति एतादृशस्थले कार्यत्वहेतुः सत्प्रतिपक्षदोषग्रस्तत्वाद्दुष्टो हेतुः।

अल्पज्ञो जीवः क्षित्यङ्कुरप्रयत्नं कर्तुं न शक्नोति इति जीवेन क्षित्यङ्कुरादेः सकर्तृकत्वस्वरूपधर्मस्य समाधानं न भवितुमर्हति। जीवातिरिक्तेनैव तस्य निर्वाहः सम्भवति इति स्वीकर्तव्यम् "क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वात्, इत्याकारकसामान्यानुमानेनैव क्षित्यङ्कुरे विशेषतः ईश्वरकर्तृकत्वस्यानुमितिः सम्भवति अर्थात् एतादृशसामान्यानुमानेनैव विशेषतः ईश्वरं विषयीकृत्यानुमितिर्भविष्यतीति उच्यते। अर्थात् क्षित्यङ्कुरस्य कर्तृस्वरूपेणैव जीवातिरिक्तस्येश्वरस्य स्वीकारः आवश्यकः। किन्तु जीवातिरिक्तस्येश्वरस्य शरीरं नास्तीति ईश्वरः कर्ता भवितुं नार्हति। तथा च न्यायमतप्रसिद्धमीश्वरस्य कर्तृत्वं सर्वथा अप्रसिद्धमलीकम्वा। एवञ्च क्षित्यङ्कुरं सकर्तृकं कार्यत्वादेतादृशस्थले हेतुः साध्याप्रसिद्धिदोषदुष्टः हेत्वाभासमात्रम्[१]।

---

१. सत्प्रतिपक्षः = विद्यमानप्रतिपक्षः, अन्यस्य कार्ये तुल्यबलेन बाधाप्रदानकरणे समर्थ एव प्रतिपक्षशब्दस्य वाच्यो भवति। कार्यत्वहेतुना क्षित्यङ्कुरे सकर्तृकत्वानुमितिकाले क्षित्यङ्कुरे साध्यस्य सकर्तृकत्वस्यैवं हेतोः कार्यत्वस्य परामर्शस्तथा हि "क्षित्यङ्कुरं सकर्तृकत्वव्याप्यकार्यत्वविशिष्टम्" इत्यादिनिश्चयः आवश्यकः। एतादृशपरामर्शकाले यदि "क्षित्यङ्कुरमकर्तृकं शरीराजन्यत्वादित्यादिना परामर्शोऽर्थात् क्षित्यङ्कुरमकर्तृत्वव्याप्यशरीराजन्यत्वविशिष्टम्" इत्यादिनिश्चयो भवति तदा प्रतिपक्षस्य विद्यमानत्वात् कार्यत्वस्वरूपहेतोर्यत्कार्यं क्षित्यङ्कुरस्य सकर्तृकत्वमित्याकारानुमितिस्तन्न भवितुमर्हति। तथा च क्षित्यङ्कुरेऽकर्तृकत्वसाधकः शरीराजन्यत्वरूपो हेतुः सकर्तृकत्वसाधककार्यत्वहेतोः सत्प्रतिपक्षः विद्यमानप्रतिपक्षो वा। अथ वा साध्याभावव्याप्तिविशिष्टं यद्धेत्वन्तरम्तद्विशिष्टपक्ष एव सत्प्रतिपक्षः। एतादृशपक्षसद्भावदशायामेव हेतुः सत्प्रतिपक्षदोषदुष्टो भवति। शरीराजन्यत्वरूपः प्रतिपक्षः हेतुः वस्तुगत्या पक्षे क्षित्यङ्कुरे

यस्य सिद्धिरपेक्षिता अर्थात् यद्धि ज्ञापनीयं तत्साध्यम्। वस्तुनः धर्मस्य साध्यत्वे प्रज्ञापनीयत्वे वा अनेन धर्मरूपेण वस्तुनः साध्यत्वं प्रज्ञापनीयत्वम्वोच्यते। धूमं दृष्ट्वा वह्नेरनुमानवेलायां वह्निरेव साध्यः प्रज्ञापनीयो वा। पर्वतस्य सिद्धत्वात् प्रज्ञातत्वाद्वा असौ नैव साध्यः। पर्वतस्य स्वरूपतः सिद्धत्वेऽपि तत्काले वह्निविशिष्ट-रूपेण सिद्धः प्रज्ञातो वा नास्ति इति तत्काले वह्निविशिष्टरूपेण पर्वतोऽपि साध्यः प्रज्ञापनीयो वा। उक्तस्थले क्षित्यंकुरादीनां सिद्धवस्तुत्वेऽपि क्षित्यंकुरादौ सकर्तृकत्वं साध्यं प्रज्ञापनीयम्वेति तादृशानुमानकाले सकर्तृकत्वविशिष्टरूपेण क्षित्यंकुरादिकमपि साध्यं प्रज्ञापनीयम्वा यदेतत्सकर्तृकत्वं तत् जीवकर्तृकत्वमीश्वरकर्तृकत्वम्वेति द्विविधं

---

वर्तते। इति प्रत्यक्षसिद्धमेव सकर्तृकत्वाभावव्याप्यम् इति क्षित्यङ्कुरं सकर्तृकं कार्यत्वात्, अत्र सकर्तृकत्वाभावस्य व्याप्यः विरुद्धहेतुः यत् शरीराजन्यत्वं तद्विशिष्टं क्षित्यङ्कुरमिति सत्प्रतिपक्षः। एवं च क्षित्यङ्कुरे सकर्तृकत्वस्य अनुमापकः कार्यत्वहेतुः सत्प्रतिपक्षदोषदुष्टः हेत्वाभासो वा। शरीरम्, कार्यमात्रस्य कारणम्, शरीरं विना ईश्वरः कर्ता भवितुं नार्हति, तथा च कार्यत्वं हेतुः सत्प्रतिपक्षदोषेण दुष्टः। अयमाशयः—ईश्वरः कर्ता न भवितुमर्हति इति ईश्वरेण सकर्तृकत्वस्य समाधानं निर्वाहो वा न भवितुमर्हति। अर्थात् ईश्वरं कर्तृत्वस्थाने अवगत्य सकर्तृकत्वं कर्तृजन्यत्वं वा नावगन्तुं शक्यते। जीव एव शरीरीति कर्त्ता तथा च जीवेनैव सकर्तृकत्वस्य समाधानं भवति। अर्थात् सकर्तृकत्वावगतावेव जीवः कर्तृस्थानीयः स्यात्। तथा च सकर्तृकत्वकथनेनैव जीवकर्तृकत्वमवगम्यते। एवं च यज्जीवकर्तृकं तदेव शरीरजन्यमिति क्षित्यङ्कुरं शरीराजन्यमतः अकर्तृकमिति क्रमेण सत्प्रतिपक्षोद्भावनं सम्भवति। अनया रीत्या कार्यत्वात्मको हेतुः परम्परया सत्प्रतिपक्षदोषदुष्टः हेत्वाभासो वा। अयमाशयः—क्षित्यंकुरादिषु जीवकर्तृकत्वं नास्ति अर्थात् क्षित्यंकुराद्युत्पादनसामर्थ्यं जीवे नास्ति एवमेवेश्वरस्य शरीराभावात् ईश्वरोऽपि किमपि कर्तुं नैव प्रभवति इति निश्चितम्। अस्यां स्थितौ क्षित्यंकुरं शरीराजन्यमित्येव मन्तव्यम् तथा च यत् शरीराजन्यन्तदकर्तृ-कमिति क्रमेण क्षित्यंकुरमकर्तृकं शरीराजन्यत्वादित्येतादृशानुमानं स्वीकर्तव्यम्। एवं च परम्पराक्रमेणात्र प्रतिपक्षो भविष्यति।

क्षित्यंकुरं सकर्तृकं, कार्यत्वादित्यस्मिन् अनुमाने कार्यत्वहेतावुपाधिरपि सम्भवति। यतः—यत् सकर्तृकं तत् शरीरजन्यमिति शरीरजन्यत्वं सकर्तृकत्वव्यापकम् अर्थात् सकर्तृकत्वस्य समुदायाश्रये अवस्थितम् एवं कार्यत्वरूपहेतोरव्यापकम् अर्थात् कार्यत्वभूत-समुदायस्य आश्रये ( कार्यमात्रे ) अवस्थितं नास्ति। यत् साध्यस्य व्यापकमेवं हेतोरव्यापकं तदेवोपाधिः। तथा च क्षित्यंकुरं सकर्तृकं, कार्यत्वात् अत्र स्थले शरीर-जन्यत्वमुपाधिः। उपाधिः हेतोरव्यापकः अर्थात् हेतोर्यथाकथञ्चिदाश्रयेऽपि उपाधेः अभावः आवश्यक इति हेतुरवश्यमेवोपाधेः व्यभिचारी इति कार्यत्वरूपो हेतुः शरीर-जन्यत्वरूपोपाधेर्व्यभिचारी उपाधिः साध्यस्य व्यापक इति हेतुरवश्यमेव साध्यस्य व्यभिचारी भवेत्।

भवितुमर्हति। किन्त्वीश्वरस्य शरीरं नास्तीति ईश्वरकर्तृकत्वमसिद्धमलीकम्वेति ईश्वर-कर्तृकत्वविशिष्टरूपेण क्षित्यङ्कुरमसिद्धमलीकम्वा। एवं जीवः यद्यपि कर्ता भवितुमर्हति तथापि क्षित्यङ्कुरं नैव जीवकर्तृकम् इति प्रत्यक्षसिद्धमिति जीवकर्तृकत्वविशिष्टरूपेण क्षित्यंकुरमसिद्धमलीकम्वा इति अनेन रूपेणापि साध्याप्रसिद्धिरूपो दोषः सम्भवति। तथा च कार्यत्वरूपो हेतुः सकर्तृकत्वरूपस्य साध्यस्य व्यभिचारी। व्यभिचारिहेतुना सदनुमानमसम्भवम् कार्यत्वहेतुनानुमानप्रमाणस्य साहाय्येन क्षित्यंकुरे सकर्तृकत्वस्य निश्चयो न सम्भवति। अयमाशयः—व्यभिचारज्ञानं व्याप्तिज्ञानं प्रतिबध्नाति। हेतोः सोपाधिकत्वे उपाधिविशिष्टत्वे वा हेतौ साध्यव्यभिचारज्ञानं सम्भवति, इति कार्यत्वहेतुना क्षित्यंकुरे सकर्तृकत्वानुमितौ प्रतिवादी शरीराजन्यत्वरूपमुपाधिमुद्भावयिष्यति इति कार्यत्वस्वरूपहेतौ साध्यस्य सकर्तृकत्वस्य व्यभिचारज्ञानमुद्भावयिष्यति। तथा सति विचारकाले एतादृशानुमितिर्न सम्भवति अर्थात् विचार्य = प्रथमस्तवकोक्तप्रकारस्य न्यायवाक्यस्योद्भावनं कृत्वा अनुमानप्रमाणेन अप्रत्यक्षेश्वरविषयिकानुमितिर्न स्यात्[१] ॥१॥

न बाध्योऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः।
सिद्ध्यसिद्ध्योर्विरोधो न नासिद्धिरनिबन्धना ॥२॥

प्रथमदूषणस्योद्धारः प्रदर्श्यते—उपजीव्यानुमानमर्थात् क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वात् इत्यनुमाने कार्यत्वरूपो हेतुः बाधितः। आचार्यमते ज्ञायमानलिङ्गं हेतुर्वा अनु-मानप्रमाणम्। अतोऽत्र कार्यत्वहेतुरेव अनुमानमुच्यते अर्थात् बाधदोषदुष्टः हेतुः नास्ति अयं सद्धेतुरेव, तथा च ईश्वरकर्तृकत्वविषयिकानुमितिः प्रदर्शिता भवति। शरीरा-भावात् ईश्वरः कर्तृकत्वाभावविशिष्टः अकर्ता वेति कार्यत्वस्वरूपहेतौ क्षित्यंकुरं सकर्तृ-कत्वाभावविशिष्टम् अकर्तृकम्वेति यस्तावद्बाधदोषः प्रदर्शितः, असौ दोषः नैव सुसङ्गतः यतः—यस्मिन् आधारे अभावज्ञानं करणीयम् तस्याधारस्य ज्ञानं विना तस्मिन् आधारे अभावज्ञानं न भवितुमर्हति। तथा च ईश्वरे कर्तृत्वाभावज्ञानवेलायां प्रथमतः ईश्वर-रूपाभावाधारस्य ज्ञानमावश्यकम्। किन्तु ईश्वरज्ञाने जाते क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वादित्यस्यानुमानस्यैवावश्यकता वर्तते इति पूर्वमेव प्रदर्शितम्। एवं च पूर्वोक्ता-

---

१. यद्धि व्यापकीभूतस्य वस्तुनः व्यभिचारि तदवश्यमेव व्याप्यस्यापि व्यभिचारि। यत् वह्निव्यभिचारि तदवश्यमेव धूमस्यापि व्यभिचारि। उपाधिः साध्यव्यापकीभूत इत्य-वश्यमेव साध्यमुपाधिव्याप्यम्, तथा च यदुपाधिव्यभिचारि तदवश्यमेव साध्यव्यभि-चार्य्यपि।

न्यायवक्येन परामर्शो जायते इति न्यायवाक्यं परामर्शसम्पादनेनानुमिति-सम्पादकम्।

नुमानमेव ईश्वरस्वरूपाधारस्य ज्ञानार्थं प्रतिवादिनां कृतेऽपि उपजीव्यमवलम्बनीयम्वेति अस्मिन् उपजीव्यानुमाने अर्थात् क्षित्यङ्कुरं सकर्तृकं कार्यत्वादित्यस्मिन् कार्यत्वहेतौ "सकर्तृकत्वाभावविशिष्टं क्षित्यङ्कुरम्" इति बाधदोषं प्रदर्शयितुं न शक्नुवन्ति प्रतिवादिनः। अयमाशयः—यस्य साहाय्येन स्वस्थितिः स एव यदि तस्य बाधकः तदा स्वस्थितेरेव अभावः कृतः स्वस्थितिं विना अर्थात स्वयम् अप्रतिष्ठितः स बाधकः कथमिव स्यात्? ईश्वरे कर्तृत्वाभावे निश्चिते सति क्षित्यङ्कुरं नैव जीवकर्तृकमिति सकर्तृकत्वाभावविशिष्टम् अकर्तृकम्वा स्यान्नाम। "ईश्वरः कर्तृकत्वभावविशिष्ट इति ज्ञानार्थमेव कर्तृकत्वाभावस्वरूपस्याधारभूतस्य ईश्वरस्य ज्ञानमावश्यकम्, ईश्वरस्य ज्ञानं च "क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वादि"ति अनुमानसाहाय्येनैव संभवति तथा च एतादृशानुमानास्वीकारे प्रतिवादी ईश्वरे कर्तृत्वाभावं साधयितुमेव न क्षमते इति क्षित्यङ्कुरम्, सकर्तृकम्, कार्यत्वात् इत्यनुमानं प्रतिवादिनापि स्वीकरणीयमेव। अस्यां स्थितौ शरीराभावस्वरूपहेतुना ईश्वरे कर्तृत्वाभावः सिद्धोऽनुमितो वा न भवितुमर्हति। सकर्तृकत्वाभावविशिष्टस्य क्षित्यङ्कुरस्य अलीकत्वात् कार्यत्वरूपो हेतुः बाधदोषेण दुष्टः हेतुः हेत्वाभासो वा नास्ति। अयं सकर्तृकत्वव्याप्तिविशिष्टः एवं पक्षे क्षित्यङ्कुरेऽवस्थित इति सद्धेतुः।

द्वितीयदोषस्योद्धारः क्रियते—दुर्बलेन बलवतो बाधो जायते, दुर्बलेन बलवतः कार्यस्य प्रतिबन्धो न भवति। अयमाशयः—तुल्यबलो हि अन्यस्य कार्ये बाधोद्भावने समर्थो भवति, स एव च प्रतिपक्षपदवाच्यः। क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टं शरीराजन्यत्वादित्येतादृशानुमानमेव अर्थात् सकर्तृकत्वाभावव्याप्यशरीराजन्यत्वविशिष्टं क्षित्यङ्कुरमित्यादिपरामर्श एव क्षित्यङ्कुरे कार्यत्वहेतुकसकर्तृकत्वानुमाने प्रतिपक्षरूपेण प्रदर्शितो भवति, किन्तु अनुमानप्रमाणेन कस्मिन्नपि वस्तुनि सकर्तृकत्वस्य अभावसिध्यर्थमवगत्यर्थम्वा शरीराजन्यत्वरूपगुरुतरहेतोः प्रयोजनं नास्ति। अजन्यत्वस्वरूपलघुहेतुनैव तत्सिध्यति अर्थात् यद्धि अजन्यं तदेव सकर्तृकत्वाभावविशिष्टमेतादृशव्याप्तिज्ञानेन आकाशादौ सकर्तृकत्वाभावः सिध्येत् अनुमितो वा भवेत्। तथा च अजन्यत्वपदार्थे शरीरांशविशेषणदानपूर्वकं शरीराजन्यत्वरूपेण हेतुकरणं निष्प्रयोजनम्। अस्यां स्थितौ प्रतिवादिकर्तृकोत्थापितसकर्तृकत्वाभावस्यानुमापकः शरीराजन्यत्वस्वरूपः प्रतिहेतुः व्याप्यत्वासिद्धदोषदुष्टः हेतुः हेत्वाभासो वा इति दुर्बलः, अनेन दुर्बलेन बलवतः दोषशून्यस्य कार्यत्वहेतुकस्य कार्यक्षित्यङ्कुरे सकर्तृकत्वानुमानस्य प्रतिबन्धो भवितुं नार्हति। अयमाशयः—यत्र यत्र धूमस्तत्र तत्र वह्निः तिष्ठति इति धूमसामान्येऽर्थात्

धूमत्वस्वरूपसामान्यधर्मरूपे धूममात्रे वह्निसामान्यस्यार्थात् वह्नित्वस्वरूपसामान्यधर्मरूपे वह्निमात्रस्य व्याप्तिः स्वीकर्तव्या, तथा च नीलधूमत्वस्वरूपगुरुधर्मेण धूमं विशेषितं कृत्वा वह्निसामान्यस्य व्याप्तेः अर्थात् "यत्र नीलधूमस्तत्र वह्निः" एतादृशव्याप्तेः स्वीकारोऽनावश्यकः। यतः—धूमसामान्यस्य नीलस्वरूपविशेषणेन विशेषितं कृत्वा यदि वह्नेर्व्यभिचारः अर्थात् वह्न्यभावविशिष्टस्थाने धूमस्य स्थितिः सम्भावनायां यस्य दोषस्य सम्भावना तस्य वारणं भवेत् तदा धूमस्वरूपहेतोः वह्नेरव्यभिचारित्वप्रतिपादनार्थं नीलत्वस्वरूपविशेषणेन विशेषितं कृत्वा हेतोः स्वीकरणं सप्रयोजनं भवेत्, किन्तु धूमत्वरूपे धूमसामान्ये वह्निसामान्यस्य व्यभिचारः अर्थात् वह्निसामामान्यस्यभावविशिष्टे स्थाने धूमसामान्यस्यावस्थितिर्नास्ति इति वह्निसामान्यस्य साध्यतास्थले धूमसामान्यमेव दोषशून्यं हेतुस्वरूपम् नीलत्वादिविशेषणेन विशेषितं कृत्वा धूमस्य हेतुत्वकल्पनं वृथैव। अर्थात् यत्र यत्र नीलधूमस्तत्र तत्र वह्निरिति व्याप्तिस्वीकारोऽनावश्यकः। तथा च "पर्वतो वह्निमान् नीलधूमादि"त्यत्र नीलधूमः व्याप्यत्वासिद्धिदोषेण दुष्टः तथैव सकर्तृकत्वानुमापकशरीराजन्यत्वस्वरूपो हेतुः व्याप्यत्वासिद्धिदोषण दुष्टो हेतुः हेत्वाभासो वेति अवश्यमेव स्वीकर्तव्यम्। अयमाशयः—लघोः अजन्यत्वमात्रस्य हेतुत्वस्वीकारेऽपि साध्यस्य सकर्तृकत्वाभावस्य व्यभिचारी नास्ति अर्थात् सकर्तृकत्वे वस्तुनि अजन्यत्वं न तिष्ठति इति सकर्तृकत्वाभावस्यासौ व्याप्तिविशिष्टमिति तस्य अव्यभिचारित्वसम्पादनाय व्याप्तिविशिष्टत्वसम्पादनाय वा शरीरांशस्य निवेशनं कृत्वा शरीराजन्यत्वरूपविशेषणविशिष्टहेतुकरणं सर्वथा निष्प्रयोजनम्। यतः—अजन्यत्वमात्रस्य हेतुत्वस्वीकारे यद्यजन्यत्वं सकर्तृकत्वाभावस्य व्यभिचारि स्यादेवं शरीरांशविशेषणविशिष्टहेतुस्वीकारे व्यभिचारदोषस्य निवारणं स्यात्तदा विशेषणविशिष्टहेतुस्वीकारः सप्रयोजनो भवेत् किन्तु अजन्यत्वस्वरूपहेतौ वास्तविकसकर्तृकत्वाभावस्य व्यभिचारो नास्ति अर्थात् सकर्तृकत्वाभावस्य योऽभावः सकर्तृकत्वम्वा तद्विशिष्टे अवस्थितो नायं हेतुः। तथा च यद्धि शरीराजन्यं तदेव अकर्तृकम्। एतादृशव्याप्तिस्वीकारस्य आवश्यकता नास्ति। एवं च शरीराजन्यत्वस्वरूपे प्रतिहेतौ सकर्तृकत्वाभावस्य व्याप्यत्वस्य व्याप्तेर्वा असिद्धिरिति व्याप्यत्वासिद्धिदोषदुष्टो हेतुरयम् हेत्वाभासो वेति दुर्बलः। व्याप्तिः पक्षधर्मता च हेतोर्बलमयं हेतुः सकर्तृकत्वाभावव्याप्तिशून्यः। तथैव अजन्यत्वमात्रस्य हेतुस्वीकारेणापि सत्प्रतिपक्षदोषोद्भावनं कर्तुं न शक्यते। यतः—"क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टमजन्यत्वादिति अनुमानमेव सत्प्रतिपक्षरूपं स्यात् किन्त्वेतादृशानुमानस्य हेतुरजन्यत्वरूपः स्वरूपासिद्धिदोषदुष्टः हेत्वाभासो वा। अयमाशयः--पक्षे हेतोरभावः

किम्वा हेत्वभावविशिष्टः पक्षोऽयमित्येव स्वरूपासिद्धिदोषः। एतादृशदोषसम्भावनायामेव हेतुः स्वरूपासिद्धो भवेत्। क्षित्यङ्कुरं प्रत्यक्षासिद्धजन्यपदार्थः तत्र अजन्यत्वं नास्ति तथा च क्षित्यङ्कुरस्य पक्षत्वेऽजन्यत्वस्य च हेतुत्वे स्वरूपासिद्धिदोषो भवेत् इति अजन्यत्वरूपो हेतुः स्वरूपासिद्धिदोषदुष्टो हेतुः हेत्वाभासो वा वर्ततेऽर्थात् हेतौ पक्षधर्मता पक्षवृत्तित्वम्वा नास्ति इति दुर्बलो हेतुः। एवञ्चाजन्यत्वेन बलवता कार्यत्वहेतुना क्षित्यङ्कुरे सकर्तृकत्वस्यानुमितौ प्रतिरोधः न सम्भवति तथा च कार्यत्वहेतुना क्षित्यङ्कुरे सकर्तृकत्वस्यानुमानकाले सत्प्रतिपक्षः न सम्भवति।

तृतीयदोषस्योद्धारः क्रियते शरीरं विना कर्ता भवितुमर्हति न वेति व्यभिचारसंशयस्य निरासं विना "कर्तृमात्रं शरीरि" एतादृशव्याप्तिनिश्चयो न भवेत् अनुकूलतर्कं विना एतादृशव्यभिचारसंशयस्य निवृत्तिर्न स्यात्। कार्यस्य कारणस्य वा अन्यथापत्तिरेव सकलतर्कस्य विषयः एतादृशतर्क एवानुकूलतर्कः, कर्तुः एवं शरीरस्यैतादृशः कोऽपि कार्यकारणभावो नास्ति येन कर्तृत्वे शरीरस्य व्यभिचारसंशयोत्थापने एतादृशकार्यकारणभावस्यान्यथास्वीकारः आवश्यको भवेत्। परन्तु कार्यमात्रस्य कश्चित्कर्ता अवश्यमेव स्वीकरणीयः, कर्तारं विना किमपि कार्यं न भवितुमर्हति। क्षित्यङ्कुरादिमपि कार्यं तस्मादवश्यमेव तस्यापि कर्ता अस्ति। अस्यां स्थितौ क्षित्यङ्कुरादिकार्यस्य कर्ता अस्ति न वेति, क्षित्यङ्कुरादिकं सकर्तृकं न वा इत्यादिसंशयोद्भावनानन्तरं तर्कः उपस्थितो भवति क्षित्यङ्कुरं यदि सकर्तृकं न भवेत् अर्थात् क्षित्यङ्कुरादीनां कश्चित् कर्ता न स्यात्तदा कार्यं न स्यात्। क्षित्यङ्कुरादिकं कार्यरूपे प्रत्यक्षसिद्धम् प्रत्यक्षसिद्धपदार्थस्यापलापः असम्भवः, तथा च एतादृशतर्कोपस्थितौ क्षित्यङ्कुरादेः कर्ता अस्ति न वा, एतत्सकर्तृकं न वा इत्यादिसंशयो न भवेत्। तथा च कार्यत्वस्वरूपहेतौ सकर्तृकत्वव्याप्तिनिश्चयः अर्थात् यत् कार्यं तत्सकर्तृकमित्यादिरूपनिश्चयः असम्भावितो नास्ति। प्रतिवादिमतसिद्धं यत् कर्तृमात्रस्य शरीरमावश्यकमिति केवलदृष्टान्तेनैव सुनिश्चितो न भवेत्, यतः कर्तृमात्रस्य शरीरमस्ति न वा एतादृशसंशयस्य निरासस्तेनासम्भवः। तथा च कर्तृत्वे शरीरस्य व्याप्तिनिश्चयासम्भवात् कर्तृशरीरमस्तीति अनुमितं न भवेत्। अयमाशयः—बहुषु स्थानेषु केनापि वस्तुना सहैव कस्यापि वस्तुनः उपलब्धिर्भवत्येतावतैव तद्वस्तु तेन सह सर्वत्र वर्तते न वाऽर्थात् एकस्याभावेऽपि अपरं वस्तु वर्तते न वेत्यादिरूपसंशयस्य निरासो भवति, तथा सति पर्वतचत्वरादिबहुषु स्थानेषु एव वह्निधूमयोः सह स्थितिः दृश्यते इति धूमे वह्निव्यभिचारसंशयोऽर्थात् यत्र यत्र धूमस्तत्र तत्र वह्निरस्ति न वाऽथ वा वह्नेरभावेऽपि

धूमस्तिष्ठति न वेत्यादिसंशयो न भवितुमर्हति किन्तु कदाचित् कुत्रचित् एतादृशसंशयो भवेत् , अत्र चेदमेव कारणं—यत् , कतिपयस्थाने धूमं दृष्टवान् एतेषु सकलेषु स्थानेषु वह्नेः दृष्टचरत्वेऽपि सर्वत्र एतादृशोऽस्ति न वा इत्यादिसंशयः स्वाभाविकः, तथा च केवलदृष्टान्तेन व्यभिचारसंशयस्य निरासो भवितुं नार्हति । एवं चैतादृशसंशयसद्भावे यदि तर्कः समुपतिष्ठते यत् धूमः यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यात् , तथा सति धूमे प्रत्यक्षसिद्धवह्निजन्यत्वस्यापलापः स्वीकरणीयः, किन्तु प्रत्यक्षसिद्धस्य धर्मस्यापलापोऽसम्भवः । तथा चावश्यमेव स्वीकरणीयं यत् एतादृशतर्कस्य उपस्थितौ धूमे वह्निव्यभिचारसंशयो न वर्तते । कुम्भकारतन्तुवायप्रभृतिकर्तॄणां शरीरं दृष्ट्वापि कर्तृमात्रस्य शरीरमस्ति न वेति संशयस्य निरासो न भवति । यतः—अस्मिन् स्थले कर्तृत्वस्य शरीरस्य चैकत्र स्थितावपि सर्वत्र एतादृशसंशयस्य निरासकोऽनुकूलतर्कः नास्ति अर्थात् एतत्सम्बन्धे एतादृशः कोऽपि तर्कः न सम्भवति येन प्रत्यक्षसिद्धस्य धर्मस्यापलापः स्वीकरणीयः स्यात्, तथा च व्यभिचारसंशयवशतः "कर्तृमात्रं शरीरी"ति व्याप्तिनिश्चयोऽसम्भवः । विशेषतः कुम्भकारादिकर्तॄणां शरीरं यथा दृष्टचरं तथैव अशरीरिकर्ताऽपि ज्ञानस्य अविषयीभूतो नास्ति । यतः—"यत् कार्यं तत्सकर्तृकम्" एतादृशव्याप्तिनिश्चयस्य सम्भवत्वं प्रतिपाद्य क्षित्यङ्कुरादौ सकर्तृकत्वस्यानुमितिः (निश्चयः) सम्भवति । एवं क्षित्यङ्कुरस्य धर्मः यत् सकर्तृकत्वं तत् फलतः ईश्वरकर्तृकत्वमेव प्रदर्शयति, तथा च कर्तुः शरीरस्थितिः एवं तदभावश्चेत्युभयम् , प्रमाणागोचरं प्रमाणाविषयीभूतं नास्ति अत्र कोऽपि विरोधः नास्ति भवितुमपि नार्हति । रामस्य धनमस्ति श्यामस्य धनं नास्ति इति कथने यथा विरुद्धार्थप्रकाशनं न जायते तथैव कुम्भकारादयः शरीरिणः कर्तारः ईश्वरस्वरूपस्य च कर्तुः शरीरं नास्ति इति स्वीकारेऽपि कोऽपि विरोधो न जायते । कुम्भकारस्य शरीरमस्ति इति ईश्वरस्य शरीरं भवेदिति नियमो नास्ति तथा च क्षित्यङ्कुरस्य सकर्तृकत्वमर्थात् ईश्वरस्य कर्तृकत्वमप्रसिद्धं नास्तीति क्षित्यङ्कुरं सकर्तृकं कार्यत्वादित्येतादृशानुमानस्य हेतुः कार्यत्वं सकर्तृकत्वस्यार्थात् ईश्वरकर्तृकत्वस्य अप्रसिद्धिदोषदुष्टो हेतुः हेत्वाभासो वा न अपि तु सद्धेतुरेव ।

द्वितीयदोषोद्धावनमिव चतुर्थदोषोद्धावनमपि क्रियते । यतः—चतुर्थदोषस्तावत्परम्परासत्प्रतिपक्षोऽर्थात् क्षित्यङ्कुरं सकर्तृकत्वाभावविशिष्टं शरीराजन्यत्वात् एतादृशसत्प्रतिपक्षोत्थापकः । परमेतस्यानुमानस्य सत्प्रतिपक्षत्वाभावे अस्योत्थापके प्रतिपक्षस्य सम्पादनकारित्वमिति परम्परया प्रतिपक्षत्वं वक्तुं न शक्यते । एवं च पृथग्रूपेण चतुर्थदोषस्य उद्धारकरणमनावश्यम् ।

पञ्चमदोषस्योद्धारः क्रियते—शरीरजन्यत्वस्वरूपोपाधेरुपादानं कृत्वा कार्यत्वस्वरूपहेतौ सकर्तृकत्वस्य व्यभिचार उद्भावितः। अयमभिप्रायः—एतादृशोपाधेरुद्भावनेन कार्यत्वस्वरूपहेतौ सकर्तृकत्वस्य व्यभिचारज्ञानसम्पादने सति कार्यत्वस्वरूपहेतौ सकर्तृकत्वव्याप्तिनिश्चयो न सम्भवति, एवं तथा सति व्याप्तिज्ञानस्यासम्भवात् कार्यत्वस्वरूपहेतुना क्षित्यंकुरे सकर्तृकत्वस्यानुमितिरसम्भवैव स्यात्। एतादृशानुमानस्यासम्भवत्वे ईश्वरस्य सिद्धिः सम्भवा न भवेत्। किन्तु एतन्न समीचीनं यतः—शरीरजन्यत्वं यदि उपाधिः स्यात्तदैव एतत्सम्भवति शरीरजन्यत्वं च वस्तुतः उपाधिर्नास्ति यतः—शरीरजन्यत्वं सकर्तृकत्वव्यापकं नास्ति। साध्यव्यापकं विना उपाधिः कथमिव स्यात्, अयमभिप्रायः—क्षित्यंकुरं यदि सकर्तृकं न स्यात्तदा कार्यं न स्यात् एतादृशानुकूलतर्केण कार्यत्वस्वरूपहेतौ सकर्तृकत्वव्यभिचारसंशयोऽर्थात् यत् यत् कार्यं तत्तत् सकर्तृकं न वेतादृशसंशयः स्थातुं न शक्नोति एवं च यत् कार्यं तत् सकर्तृकमिति व्याप्तिनिश्चयः सम्भवति तथा चैतादृशव्याप्तिनिश्चये सति क्षित्यंकुरं सकर्तृकमिति निश्चयः ( अनुमितिः ) भवति। अर्थात् अनुमानप्रमाणसाहाय्येनैवावधारितं भवति यत् "क्षित्यंकुरं सकर्तृकं" तथा च क्षित्यंकुरे सकर्तृकत्वमस्ति इत्यवश्यं स्वीकरणीयम् किन्तु क्षित्यंकुरे शरीरजन्यत्वस्याभावः उभयवादिसिद्धः। अस्यां स्थितौ शरीरजन्यत्वं सकर्तृकत्वव्यापकमर्थात् सकर्तृकत्वस्य समुदायाश्रये अवस्थितं नास्तीति उपाधिर्न सम्भवति।

ईश्वरे कर्तृत्वस्य प्रतिकूलेऽर्थात् कर्तृत्वाभावनिश्चयोत्पादने सक्षमतर्कसद्भाववशात् एवम् ईश्वरे कर्तृत्वस्यानुकूले अर्थात् "ईश्वरः कर्ता इत्यवगतौ सक्षमतर्कासद्भावात् ईश्वरे कर्तृत्वाभावनिश्चय एव सम्भवति। यतः—ईश्वरस्य सुखदुःखशरीराभावश्च उभयवादिसिद्ध इति ईश्वरस्य कर्तृत्वस्वीकारे आपत्तिः सम्भवति यत् ईश्वरः यदि कर्ता स्यात् तदा शरीरी स्यात् सुखी स्यात, दुःखी स्यात्। तथा च एतादृशतर्केणैव ईश्वरस्य कर्तृत्वं नास्तीति अवधारितम्भवति। अस्यां स्थितौ पूर्वोक्तबाधादिदोषाणां खण्डनं न सम्भवति इति कार्यत्वरूपो हेतुः सद्धेतुः न भवेत्, एवं च कार्यत्वहेतुना ईश्वरस्यानुमितिर्न सम्भवति। अर्थात् विचारस्थले क्षित्यंकुरं सकर्तृकं कार्यत्वादेतादृशानुमानेन ईश्वरस्यानुमानं न स्यात् ॥२॥

तर्काभासतयाऽन्येषां तर्काहुशुद्धिरदूषणम्।
अनुकूलस्तु तर्कोऽत्र कार्यालोपविभूषणम् ॥३॥

पूर्वपक्षिणोत्थापिततर्काणां तर्काभासत्वं कुतर्कमात्रत्वम्वा । यतः कस्मिन्नपि विषये तर्कोपस्थापने तर्कयोग्यस्याधारस्य प्रसिद्धिरपेक्षिता, अन्यथा तु कुत्रापि आपत्तिः सम्भवति, आपत्तिस्थलं किमिति अनिश्चितं भवेत् । धूमः यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति एकः तर्कः । अत्र तर्कयोग्याधारस्तावद्धूमः धूमस्तावत्प्रसिद्धं वस्तु तथा च यथा धूमः वह्निव्यभिचारी भवति इति कथने वह्निजन्यः न स्यादिति आपत्तिः क्रियते । तथैव ईश्वरः यदि कर्ता भवति तदा शरीरी भवतु एतादृशतर्कोपस्थापनेऽपि तर्कयोग्याधारस्येश्वरस्य प्रसिद्धिरावश्यिका, किन्तु पूर्वपक्षी ईश्वरं नैव स्वीकरोति इति तर्कोपस्थापने समर्थो न भवति यत् ईश्वरः कर्ता चेत् शरीरी भवतु । तथापि एतादृशतर्कस्य कुतर्कत्वमेव स्यात् तस्मादेतादृशतर्केण कार्यत्वहेतुकसकर्तृकत्वानुमाने दोषोद्भावनचेष्टा वृथैव । किं च ईश्वरस्य कर्तृत्वविषयेऽनुकूलस्तर्को नास्तीति यदुक्तं तदपि नैव संगतम् यतः—कर्तारं विना किमपि कार्यं न भवति इत्युभयवादिसम्मतं तथैव क्षित्यंकुरस्य कार्यत्वं धर्मः इत्यपि उभयवादिसम्मतम् । अस्यां स्थितौ क्षित्यंकुरं यदि सकर्तृकं न स्यात् अर्थात् क्षित्यंकुरस्य कर्ता नास्तीति उच्यते तदा तर्कस्य आपत्तेर्वा उद्भवो भवेदिदं कार्यं न स्यात्, एतादृशकार्यलोपविषयकः यस्तावदनुकूलस्तर्कः तेन यत् कार्यं तत् सकर्तृकमर्थात् कार्यमात्रस्य कर्ता वर्तते एतादृशव्याप्तिनिश्चयः सम्भवति । यतः—प्रत्यक्षसिद्धधर्मस्यापलापो न भवति तथा च एतादृशस्तर्कः कार्यत्वहेतुकसकर्तृकानुमानस्यालङ्कारभूतः । तस्मात् ईश्वरः यदि कर्ता भवेत्, तदा शरीरी स्यात् सुखी स्यात् दुःखी स्यादित्यादितर्कः तर्काभास एव ।

सृष्टेः यः प्रथमद्व्यणुकारम्भकः संयोगस्तदनुकूला क्रिया कस्यापि प्रयत्नसाध्या क्रियात्वात् इदमेव क्रियात्वहेतुकमीश्वरानुमानम् जीव-प्रयत्नेन एतन्न सम्भवतीति एतादृशानुमानेनापि जीवातिरिक्तः ईश्वरः सिध्यति किन्तु एतादृशानुमानेन जीवातिरिक्तस्य ईश्वरस्य स्वीकारः निष्प्रयोजनः । यतः—जीवादृष्टवशात् किम्वा परमाणुयत्नेनैव एतादृशी क्रिया सम्भवति । अथ वा परमाणुयत्नास्वीकारेऽपि केवलेन जीवादृष्टेन कस्यापि कार्यस्यासम्भवत्वप्रतिपादनेऽपि एतादृशानुमानेन ईश्वरस्य सिद्धिर्न सम्भवति यतः—काचित् क्रिया जीवप्रयत्नसाध्या भवतु अर्थात् चेष्टा जीवप्रयत्नसाध्या भवतु नाम तथापि क्रियामात्रमेव प्रयत्नसाध्यम् इति व्याप्तिस्वीकारस्यावश्यकता नास्ति यत्नं विनापि क्रिया सम्भवति । दृश्यतेऽपि वत्सपुष्ट्यर्थं गोः स्तन्यक्षरणं जायते । एवमेव सृष्टिप्रथमद्व्यणुकस्यारम्भकसंयोगानुकूलाक्रिया यत्नं विनापि भवति तस्मात् यत्नवतः कस्यचित्पुरुषस्य स्वीकारः सर्वथा निष्प्रयोजनः ॥ ३ ॥

स्वातन्त्र्ये जडताहानिर्निर्दिष्टं दृष्टघातकम् ।
हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥४॥

चैतन्यमेवं यत्नः नियतः एकत्रावस्थितः पदार्थः, एकं विना अपरः क्वापि न तिष्ठति प्रयत्नवान् पदार्थ एव चेतनः परमाणुस्तावज्जडः अचेतनपदार्थः इत्युभयवादि-सिद्धम् । अस्यां स्थितौ परमाणुप्रयत्नस्वीकारे तत्र चैतन्यमप्यवश्यमेव स्वीकरणीयं किन्तु परमाणौ चैतन्यं नास्ति इति परमाणौ प्रयत्नाभावः स्वीकरणीयः तथा च परमाणु प्रयत्नेन परमाणुक्रिया भवतीति असङ्गतमेव अन्यच्च अन्वयव्यतिरेकाभ्यां कार्यकारण-भावः निरूपितो भवति यस्मिन्कार्ये यस्य वस्तुनः अन्वयः एवं व्यतिरेको भवति अर्थात् यस्य वस्तुनः सद्भावे यत् कार्यं भवति एवं यस्य वस्तुनः अभावे यत् कार्यं न भवति तत्कार्ये तस्य वस्तुन एव कारणत्वमिति व्यवहारो जायते । परमाणुक्रियारूपकार्ये प्रयत्नस्यान्वयव्यतिरेकसत्त्वेऽपि यदि प्रयत्नः परमाणुक्रियां प्रति कारणं न स्यादपि तु अदृष्टमात्रस्यैव कारणत्वं स्वीक्रियते तदान्वयव्यतिरेकशालिनः चक्रदण्डादेरपि घटादिरूपकार्यं प्रति कारणत्वम् अनङ्गीकृत्य तुल्ययुक्त्याऽदृष्टमात्रस्यैव कारणत्वं वक्तव्यं तथा सति कार्यकारणभावनिरूपणेऽन्वय-व्यतिरेकयोः किमपि मूल्यं न स्यात् । यद्यन्वयव्यतिरेकयोरावश्यकता न भवेत् तदा अदृष्टं कार्यमात्रं प्रति कारणमित्यपि कथमुच्यते । तस्मात् यस्मिन् कार्ये यत् यत् अन्वयव्यतिरेकशालि तत् तत् कारणम् एकेन कारणेनापरस्य कारणस्यान्यथात्वं न सम्भवति । तथा च अदृष्टस्य कार्यमात्रं प्रति कारणत्वेऽपि तेन दृष्टकारणसकलस्य अन्यथासिद्धत्वं न सम्भवति । अस्यां स्थितौ सृष्टिप्रथमद्व्यणुकस्यारम्भकसंयोगस्या-नुकूलक्रिया अदृष्टेनैव भवति इति कथनमसङ्गतमेव अपरचेष्टायाः शरीरक्रियायाः वा जीवप्रयत्नसाध्यत्वेऽपि क्रियामात्रं प्रयत्नसाध्यमेतादृशव्याप्तिनिश्चयो न सम्भवति इत्युक्तम् तदपि न सुसङ्गतम्,—यतः—कस्मिंश्चित् जातिविशेषकार्ये कस्यचिज्जातिविशेष-वस्तुनः कारणत्वस्वीकारेऽपि तस्मिन्कार्यजातीयमात्रे तत्कारणजातीयवस्तुमात्रस्यैव करणत्वं स्वीकर्तव्यम् । एकेन दृष्टान्तेन इत्यस्यावगतिः करणीया, दण्डत्वं, घटत्वं च जातिविशेषः घटत्वस्वरूपविशेषजातिविशिष्टस्यार्थात् घटत्वजातीयैतद्घटस्वरूपविशेषकार्यस्य सम्भवः दण्डत्वस्वरूपविशेषजातिविशिष्टेनार्थात् दण्डत्वजातीयतद्दण्डेनैव भवति अन्यथा न भवति एवं चैतादृशान्वयव्यतिरेकवशादेवासौ दण्डः एतद्घटस्य कारणम् दण्डत्वजातीयापर-दण्डेऽपि घटत्वजातीयापरघटस्य कारणत्वम् । तथा च घटत्वजातीयप्रत्येकघटस्वरूप-कार्यम्प्रति दण्डत्वजातीयस्य यस्य कस्यचित् दण्डस्यान्वयव्यतिरेकोऽवश्यमेव स्वीकरणीयः ।

तथा च दण्डसामान्यसद्भावे एवार्थात् दण्डसद्भावे एव घटसामान्यं जायतेऽन्यथा न भवतीति एतादृशसामान्यतयाऽन्वयव्यतिरेकोऽवश्यमेव स्वीकार्यः इति घटत्वजातीय-घटसामान्यस्वरूपकार्ये दण्डत्वजातीयदण्डसामान्यस्य कारणत्वम् सिद्ध्यति। तथा च प्रयत्नत्वजातीयविशेषवस्तुनः जीवप्रयत्नस्य क्रियात्वजातीयविशेषवस्तुनः चेष्टायाः क्रियायाः कारणत्वस्वीकारे प्रयत्नसामान्यस्य क्रियासामान्यं प्रति कारणत्वमवश्यमेव स्वीकरणीयम्। एवं च "क्रियामात्रं प्रयत्नसाध्यम्" इत्येतादृशव्याप्तिनिश्चयो नासम्भवः इति क्रियात्व-हेतुकेन कर्म्मत्वहेतुकेन वा पूर्वोक्तानुमानप्रमाणेन ईश्वरः सिद्धः अनुमितो वा भवति।

इदानीं धृतिहेतुकानुमाने, नाशहेतुकानुमाने पदहेतुकानुमाने प्रत्ययहेतुकानुमाने च दोषोद्भावनं क्रियते। ब्रह्माण्डसमुदायः, प्रयत्नवत्कर्तृकधृतः आश्रितो वा धृतेः। एतद्धृतिहेतुकं धैर्य्यहेतुकम्वाऽनुमानम्, एवं "ब्रह्माण्डसमुदायः, प्रयत्नवत्कर्तृकविनाश्यः, विनाशित्वात्", इदं नाशहेतुकमनुमानम्। अस्मिन् अनुमाने यत् धृतिविशिष्टं पतना-भावविशिष्टम्वा तत् प्रयत्नवत्कर्तृकधृतमाश्रयप्राप्तम्वा, एवं यद्विनाशि तत्प्रयत्नवत्कर्तृकवि-नाश्यमेतादृशव्याप्तिनिश्चयस्यावश्यकताऽस्ति, किन्तु धृतिविशिष्टस्य पतनाभावविशिष्टस्य वाऽर्थात् उड्डीयमानविहङ्गमशरीरस्य प्रयत्नवत्कर्तृकविनाश्यत्वेऽपि तदर्थं कस्यापि प्रयत्नवतः स्वीकारस्यावश्यकता नास्ति। ब्रह्माण्डसकलं प्रयत्नवत्कर्तृकं धृतं न वा? प्रयत्नवत्क-र्तृकं विनाश्यं न वा? इत्यादिसंशयो न स्यात्। एतादृशव्यभिचारसंशयनिवृत्तिं विना, यद्धि पतनाभावविशिष्टं तत् प्रयत्नवत्कर्तृकं धृतं तथैव यद्धि विनाशि, तदेव प्रयत्नवत्कर्तृकं विनाश्यमित्यादिव्याप्तिनिश्चयो न भवेत्। तथा च धृतिं विनाशं च हेतुं कृत्वा पूर्वं यद्धि अनुमानं प्रदर्शितम्, तेनानुमानेन ईश्वरसिद्धिः ईश्वरानुमानम्वा न सम्भवति। एवं महाप्रलयस्त्वसिद्धः यतः उपादानकारणस्य विकारः परिणामो वा अर्थात् अवस्थान्तरप्राप्तिरेव कार्यम्, कार्यमाकस्मिकघटना नास्ति। यतः असतः उत्पत्तिरसम्भवा उत्पत्तेः पूर्वमपि कारणरूपेण कार्यसत्ता स्वीकरणीयैव। कार्यं हि तत्त्वतः उपादान-कारणात् अतिरिक्तं नूतनं किमपि नास्ति घटः मृत्तिकायाः कार्यं तस्मात् मृत्तिकायाः अवस्थान्तरमाकृतिपरिवर्त्तनमात्रम्वा। घटः मृत्तिकया अतिरिक्तं किमपि नूतनं तत्त्वं नास्ति। तस्मात् मृत्तिका कारणावस्थायां यस्मिन् आकारे आसीत् कार्यस्य घटस्य वा अवस्थायां सा तस्मिन् आकारे नास्ति। घटावस्थायां मृत्तिका घटाकृतिं धारयति। इयञ्चाकृतिः वस्तुतः मृत्तिकयातिरिक्ता नास्ति। घटोत्पत्तेः पूर्वं मृत्तिकावश्यमेव तिष्ठति, तथा च तत्समये घटोऽपि मृत्तिकारूपेण सन् एव। अनाद्यसीमप्रकृतिः सर्वदैव यस्मिन् कस्मिंश्चिद्दांऽशे परिणता विकृता वा जायते। अयं प्रकृतेः स्वभावः इति प्रकृतेः

सर्वांशेन अपरिणामः विकारो वा न सम्भवति अर्थात् सर्व्वांशेनाकार्यावस्था असम्भवैव। प्रतिक्षणमेव प्रकृतिः यस्मिन् कस्मिंश्चिदंशे विकारं प्राप्नोति, तथा च कोऽपि एकस्मिन्नेव समये समुदायकार्यस्यार्थात् साक्षात् परम्परया यः कोऽपि प्रकृतेर्विकारः तत्समुदायस्य परिणामः असम्भवः नास्ति भवितुमपि नार्हति। महाप्रलयोऽसिद्धः। अयमाशयः प्रकृतेः साक्षात् विकारः परिणामो वा महत्तत्त्वम् बुद्धितत्त्वस्य विकारः अहंकारः अहंकारात्पञ्चतन्मात्रादिकं जायते। एवं क्रमेण स्थूलभूतस्य सृष्टिर्भवति। तथा च अहंकारावधिस्थूलभूतपर्यन्तं विकारः परिणामो वा प्रकृतेः परम्परापरिणामः। अस्यां स्थितौ पदत्वं प्रत्ययत्वं वा हेतुरूपेणावगत्य पूर्वोक्तानुमानेन ईश्वरसाधनं न सम्भवति। महाप्रलयाभावे सृष्टेः प्रथमकल्पनापि न सम्भवति। तद्धि अलीकवाक्यमात्रमेव स्यात् तथा च व्यवहारादेः प्रथमं किमपि नास्तीति प्राथमिकव्यवहाराद्यर्थं जीवातिरिक्तेश्वरस्वीकारः निरर्थकः। अनादिकालादेव अध्यापकपरम्पराक्रमः पितृमातृपरम्पराक्रमः चलति। वेदोऽपि अध्यापकपरम्पराक्रमेण चलत्येव। अनादिपरम्पराक्रमेण अध्यापक एव वेदस्य प्रवक्ता वेदः ईश्वरोक्त इति भ्रान्तस्य कथा। वेदार्थविषये अध्यापकस्य यथार्थज्ञानमेव शिष्याणां वेदवाक्यजन्यवेदार्थज्ञानस्य कारणम्। अर्थात् यद्यध्यापकः यथार्थरूपेण वेदार्थमवगत्य वेदमुपदिशति तदा शिष्योऽपि वेदस्य यथार्थज्ञो भवति। एतदर्थमीश्वरस्वीकारस्यावश्यकता नास्ति। आप्ताभिप्राय एव विधिप्रत्ययस्य अर्थ इति स्वीकारेऽपि अध्यापकानामभिप्राय इत्येवावगतो भवति। यथार्थतयार्थमवगत्य यस्तावद्व्यक्तिविशेषः वाक्यमुच्चारयति स एव आप्तः, वेदविषये चैतादृशोऽध्यापक एवाप्तः, तथा च विधिप्रत्ययत्वहेतुना अनुमानप्रदर्शनपूर्विका जीवातिरिक्तेश्वरसिद्धिर्न सम्भाव्यते ॥४॥

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः।
विच्छेदनपदस्यापि प्रत्ययादेश्च पूर्ववत् ॥५॥

कर्तृत्वमूलक एवं कार्यत्वमूलकस्तर्क एव अनुकूलतर्कः। एतादृशतर्केणैव संशयनिवृत्तिः संभवति। धृतिर्विनाशश्च प्रत्यक्षसिद्धकार्यविशेषः। तथा च चेतनप्रयत्ननिष्पाद्यत्वमन्यथा प्रत्यक्षसिद्धधर्मस्य कार्यत्वस्य अपलापः करणीयः। अस्यां स्थितौ ब्रह्माण्डसकलस्य धृतिः एवं विनाशो यदि चेतनप्रयत्ननिष्पाद्यः न भवेत् तदा एतत्कार्यं न स्यात् एतादृशतर्क एवोपस्थितो भवति। एवमुड्डीयमानविहङ्गमशरीरधृतेस्तथा घटपटादेः विनाशस्य कर्ता उभयवादिसिद्धः। तथा च तस्मिन्दृष्टान्ते धृतिमात्रं विनाशमात्रं वा कर्तृसाध्यमिति धृतं विनाशि वा कर्त्रा धृतं न वा ? विनाश्यं न वा ? इत्यादिसंशयः

स्थातुं न शक्नोति। तथा च एतादृशतर्केणैव पूर्वोक्तधृतिस्वरूपहेतौ प्रयत्नविनाश्यत्व-स्वरूपसाध्यस्य हेतौ च प्रयत्नवत्साध्यस्य व्यभिचारसंशयः निवर्तेत। धृतिहेतौ विनाश-स्वरूपहेतौ व्याप्तिनिश्चयो नैवासम्भवः। तथा च पूर्वकथितानुमानस्य हेतुः धृतिः एवं विनाशः सद्धेतुरेव।

पूर्वपक्षे उक्तं यत् असतः उत्पत्तिर्न भवति, कार्यं हि उपादनकारणस्य परिणामः विकारो वा अर्थात् अवस्थान्तरप्राप्तिरेव। वस्तुतोऽसावुपादानादभिन्न एव। एककाले प्रकृतेः सर्वांशेनावस्थान्तरप्राप्तिरसम्भवैव प्रकृतिः प्रतिक्षणमेव यस्मिन् कस्मिंश्चिदंशे विकारं प्राप्नोति इति महाप्रलयः न सम्भवति। इदन्तावन्न विचारसङ्गतम्। यतः प्रथममेतद्विचारणीयं यत् कार्यत्वं नाम कः पदार्थः ? तस्य किमपि तत्त्वमस्ति न वा ? इदमाकाशकुसुमवदपदार्थो नास्ति। कार्यत्वरूपे वस्तु प्रत्यक्षसिद्धम्। कार्यत्वरूपे घटः नासीत् इदानीं कार्यत्वरूपे घटः जायत इति सकलजनप्रत्यक्षसिद्धं वस्तु। तस्मात् कार्यत्वमपि एकं पृथक् तत्त्वं वर्तते इदमुपादानस्यावस्थान्तरमात्रं नास्ति। उपादानस्य कारणावस्था कार्यनियतपूर्ववर्तित्वरूपा एवं कार्यत्वं पूर्वमनवस्थितिरेव इदमवस्थाद्वयं एकस्यैव वस्तुनः न सम्भवति। कार्यत्वकारणत्वयोर्भेदोऽवश्यमेव स्वीकार्यः। समय-भेदवशात् एकस्यैवोपादानस्य कारणस्यावस्थाद्वयस्वीकारे उपादनस्यैव कार्यावस्था कार्य-त्वम्वा वर्तते इत्येव स्वीकरणीयम्। तथा चेयं कार्यावस्था कार्यत्वम्वा पूर्वं नासीदिति जायते इति तु स्वीकरणीयमेव तथा सति इयं कार्यत्वस्वरूपा अवस्था सा पूर्वमसती इति असतः उत्पत्तिः स्वीकरणीया तथा सतः उत्पद्यत इति वादोऽसंगत एव भवेत्। उत्पत्तेः पूर्वं स्वस्थितेरभाव एव कार्यत्वस्य स्वभावोऽसाधारणधर्मो वा कार्यत्वं प्रागभाव-प्रतियोगित्वमात्रमेव। घटस्तावदेकं कार्य्यमयं घटः स्वोत्पत्तेः पूर्वं नासीदितीदानीं जायते इति प्रत्यक्षसिद्धम्। अयमुत्पत्तेः पूर्वं स्थित्यभावरूपो यः प्रागभावः एतस्या-भावस्य प्रतियोगी घटः घटे प्रागभावप्रतियोगित्वमेव घटस्य कार्यत्वम्। एतस्याः प्रतियोगितायाः अवच्छेदकोऽवश्यमेव कश्चित्स्वीकरणीयः: यतः घटस्य यः प्रागभावः सः प्रागभावप्रतियोगितायाः उपादानभूता या मृत्तिका तस्या मृत्तिकायाः कारणावस्था नास्ति। अवच्छेदकधर्मश्च घटत्वम् तथा च घटत्वविशिष्टं घटवस्तु पूर्वमसत् सत् कार्यं कार्यताविशिष्टम्वा। कारणावस्थायां घटत्वरूपेण घटसत्ता आकाशकुसुमस्येवा-सती अयमेव निष्कर्षः प्रागभावास्वीकारेऽपि उत्पत्तेः पूर्वं केनापि रूपेण कार्यस्यास्तित्वं स्वीकर्त्तुं न शक्यते यतः कार्यमेकदैव जायते पुनःपुनः न भवति। यस्य घटस्यैकदो-त्पत्तिः सञ्जाता एतादृशस्यान्यस्योत्पत्तिर्भवेन्नाम किन्त्वेतस्य घटस्य पुनरुत्पत्तिर्न सम्भाव्यते।

तत् प्रत्यक्षसिद्धम् । एतस्मात्कारणात् कार्यस्य उत्पत्तौ कार्यं प्रतिबन्धकम् अर्थात् कार्यं वर्तत इत्यत एव पुनः कार्यं न जायते इति स्वीकर्तव्यम् । यः घटः एकदा संजातः उत्पत्तिकालानन्तरमयं घटः सन् इत्यत एव पुनरसौ घटः न जायते । तथा च कार्यस्योत्पत्तेः पूर्वं प्रतिबन्धकस्यात्यन्ताभावः आवश्यक इति उत्पत्तेः पूर्वं कार्यं सत् तु नास्तीति स्वीकर्तव्यम् । सतः उत्पत्तिरसम्भवैव । अत्रेदमपि चिन्तनीयम् यत् कस्यचिदेकस्यैव वस्तुनः उत्पत्तिरनादिकालाज्जायत इति नापि तूत्पत्तेरवधिरवश्यमेव वर्तते । अयं यः एकः घटः अयन्तावदनादिकालादेव वर्तते इति नापि तु एतस्य घटस्योत्पत्तिः कस्मिंश्चिन्निर्दिष्टकाले एव संजातेति स्वीकरणीया तथा च उत्पत्तिपूर्वमेतस्य वस्तुनः सद्भावः कथमिव सम्भाव्येत । उत्पत्तेः पूर्वं कार्यं कार्यरूपेण मास्तु किन्तु कारणरूपेण वर्तत एव, सत एव उत्पत्तिर्भवति असतः उत्पत्तिरेव न सम्भाव्यते इदमपि न सुसङ्गतम् कार्यस्योत्पत्तेः पूर्वं या कारणरूपता सा कारणस्यैव रूपता कार्यस्य रूपं न भवति । उत्पत्तेः पूर्वं कार्यस्यालीकत्वात् केनापि रूपेण तत् कल्पनायाः विषयो न भवति, तथा च उत्पत्तेः पूर्वं या कारणरूपता सा कारणस्यैव न कार्यस्येति सत्कार्यवादः न समीचीनः। एकस्याः प्रकृतेः विजातीयं कार्यं जायते, इदन्त्वसम्भवमेव, नानाजातीयकार्यार्थं नानाजातीय-कारणस्वीकारः नितान्तमपेक्षितः, अस्यां स्थितौ समयभेदे घटादिभावकार्यस्य विनाशः दृष्टचर इति एकस्मिन् समये समुदायभावकार्यस्य विनाशोऽनुमानेन सिद्धयति तस्मान्म-हाप्रलयः प्रमाणाविषयो नास्ति । अपि च शब्दोऽपि एकं प्रमाणम् । श्रुतिः शब्द एव, श्रुतिस्मृत्यादौ महाप्रलयवर्णनमुपलभ्यते तद्वर्णनं मिथ्या नैव स्यात् । तथा च महाप्रलयः अर्थात् सर्वभाववस्तुसकलस्य विनाशसम्बन्धे संशयो नास्ति[1] । मध्ये-मध्ये भावकार्यसकलस्य विनाशोऽवश्यमेव भवति । अत एव पदत्वेन प्रत्ययत्वेन वा हेतुद्वयेन पूर्वोक्तरूपानुमानप्रमाणसाहाय्येन ईश्वरः सेत्स्यति । पूर्वोक्तेश्वरानुमापकहेतुसकलमध्ये "प्रत्ययत्वम्" एकस्तावद्धेतुः । तस्यार्थः विधिप्रत्ययत्वम् । आचार्यमते विधिप्रत्यय-स्यार्थः आप्ताभिप्रायः । आप्ताभिप्राय एव विधिप्रत्ययस्यार्थः तस्य प्रतिपादनमिदानीं क्रियत ॥५॥

प्रवृत्तिः कृतिरेवात्र सा चेच्छातः यतश्च सा ।
तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥६॥

प्रवृत्तिशब्दस्यार्थः प्राथमिकेच्छा एवं यत्नः, किन्तु विधिवादे प्रवृत्तिशब्दस्यार्थः यत्नः प्राथमिकेच्छा वा न भवति । अयमाशयः—विधिवादे इच्छा यदि

---

१. द्वितीयस्तवकस्य तृतीयकारिका द्रष्टव्या ।

प्रवृत्तिशब्दस्यार्थः स्यात्तदा "स्वर्गकामो यजेत" इत्यादिविधिवाक्यश्रवणानन्तर-मश्वमेधयज्ञादौ इच्छामात्रेणैव पुरुषः चरितार्थः स्यात्, किन्तु एतादृशवाक्य-श्रवणानन्तरं पुरुषः यज्ञादौ प्रवृत्तः यत्नवान् वा भवति, तस्मात् विधिवादे विधिशब्दस्यार्थः प्रवृत्तिः—यत्नः इच्छा नास्ति। चिकीर्षा अर्थात् कार्य-करणेच्छा प्रवृत्तेः कारणम् एवमिष्टसाधनत्वं कृतिसाध्यत्वञ्च कर्तव्यत्वज्ञानम्वा चिकीर्षायाः कारणम्, अर्थात् किमपि कर्म इष्टस्य साधनम् उपकारि वा एवं कर्तव्यं जानाति तदा तत्कार्यकरणार्थमिच्छा अर्थात् चिकीर्षा जायते। "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादि-वाक्यमेव विधिवाक्यम्। एतदन्तर्गतः "यजेत" इति शब्दस्य यज+इत इत्यत्र इत प्रत्ययः विधिप्रत्ययः। विधिप्रत्ययस्यार्थावगत्यनन्तरं नियोज्यः पुरुषः यज्ञादिकर्मणि प्रवृत्तो भवतीति दृश्यते। अयमाशयः कर्मणि नियुक्तः प्रवृत्त्यर्थंमुप्रयुक्तः पुरुष एव नियोज्यः प्रवर्त्यो वा भवति कर्मक्षमः कर्माधिकारी वा पुरुष एव नियोज्यः प्रवर्त्यः वा भवति। तथा च नियोज्यः, प्रवर्त्यः अधिकारी समर्थः इत्यादिशब्दाः समानार्थकाः। तथा च विधिवाक्यश्रवणानन्तरं यज्ञादिकर्मणि प्रवृत्तेः पूर्वं प्रथमतः नियोज्यपुरुषस्य वैधयज्ञादिकर्मणि इष्टसाधनत्वमेवं कृतिसाध्यत्वं कर्तव्यत्वज्ञानम्वा जायतेऽर्थात् विधि-वाक्येन प्रथमतः नियोज्यः पुरुषः जानाति यत् यज्ञादिकर्म इष्टस्य अभिप्रेतस्य वा फलस्य जनकम् एवं कर्तव्यं कर्म। तदनन्तरं यज्ञादिकर्मकरणार्थमिच्छा चिकीर्षा वा जायते इत्यवश्यमेव स्वीकर्तव्यम्। प्रवृत्तिं प्रति चिकीर्षा कारणं चिकीर्षां प्रति इष्ट-साधनत्वं कृतिसाध्यत्वमेवं कर्तव्यत्वज्ञानम्वा कारणम्। अर्थात् यदा नियोज्यः जानाति यत् इदं कर्म मदिष्टस्याभिप्रेतस्य वा फलस्य जनकमेवं कर्तव्यमिति जानाति, तदा एतत्कर्मचिकीर्षाऽर्थात् करणेच्छा जायते, तदनन्तरं पुरुषः कर्मकरणार्थं प्रवृत्तः उद्यतो वा भवति। तथा च विधिवाक्यश्रवणानन्तरं वैधकर्मणि पूर्वमिष्टसाधनत्वमेवं कृति-साध्यत्वज्ञानं जायत इति एतादृशज्ञानस्य विषयः इष्टसाधनत्वमेवं कृतिसाध्यत्वं कर्तव्यत्वमेव वा विधिप्रत्ययस्यार्थः। इति प्राचीनमतम्। आचार्यमते इष्टसाधनत्वमेवं कर्तव्यत्वं विधिप्रत्ययस्यार्थो नास्ति। आप्तपुरुषस्य अभिप्राय एव विधिप्रत्ययस्यार्थः। वाक्यार्थस्य यथार्थज्ञानवान् पुरुष एव आप्तः। तथा च यः भ्रमात् मोहाद्वा अथ वा प्रलोभनवशतः रागद्वेषवशाद्वा वाक्यं न वदति स एवाप्तः।

"स्वर्गफलार्थी अश्वमेधयागं कुर्यात्" "स्वाराज्यकामी वाजपेययागं कुर्यात्" इत्यादिनानाविधाभिप्रायं कृत्वैव वेदवक्ताप्तपुरुषः विभिन्नरूपाधिकारिणं प्रति "स्वर्ग-कामोऽश्वमेधेन यजेत" "स्वाराज्यकामो वाजपेयेन यजेत" इत्यादिभिन्नं भिन्नं विधि-

वाक्यं प्रयुङ्क्ते तथा च विधिवाक्यश्रवणानन्तरं नियोज्यपुरुषस्य प्रथममाप्ताभिप्रायविषयकं ज्ञानं जायतेऽर्थात् केनाभिप्रायेणाप्तपुरुषः वेदे कथयति एतदेवादौ नियोज्यः पुरुषोऽवगच्छति। अनन्तरं यतः स्वर्गादिफलार्थं यज्ञादिकर्मकरणं वेदवक्तुराप्तपुरुषस्याभिप्रेतं तस्मात् यज्ञादिकर्मसकलमिष्टस्याकांक्षितफलस्य जनकमेवं कर्तव्यं कर्म एतादृशमनुमानं जायते; अनन्तरं यज्ञादिकर्मकरणार्थमिच्छा ( चिकीर्षा ) जायते; एवम् तदनन्तरं यज्ञादिकर्मणि प्रवृत्तो भवति। तथा च यज्ञादिकर्मणि इष्टसाधनत्वस्यैवं कर्तव्यत्वस्यानुमापकं आप्ताभिप्रायं नियोज्यः पुरुषोऽवगच्छति इति आप्ताभिप्राय एव विधिप्रत्ययार्थः इत्येव विचार्य सिद्धान्तः क्रियते।

यज्ञादिकर्मकर्तुर्धर्मः यद् स्पन्दनं नियोज्यपुरुषस्य शारीरिकक्रिया वा सैव विधिप्रत्ययस्यार्थः इत्यपि कस्यचिन्मतम्। कश्चित् यज्ञादिकर्मणः धर्मः यत् इष्टसाधनत्वमेवं कर्तव्यत्वन्तदेव विधिप्रत्ययस्यार्थ इति कथयति। अपरे करणं यत् विधिप्रत्ययः तस्य धर्मः अभिधानामकशक्तिः स एव शक्तिविशेषः विधिप्रत्ययस्यार्थः। आचार्यः आप्ताभिप्राय एव विधिप्रत्यार्थं इति वदति। एवं विधानेकार्थः विधिप्रत्ययस्य स्वीकृत इति कस्तावत् विधिप्रत्ययार्थः समीचीन इति कस्तावद्ग्राह्य इति विचार्य निर्णयः प्रस्तूयते आचार्येण ॥६॥

इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः।
असत्त्वात्प्रत्ययत्यागात्कर्तृधर्म्मो न सङ्करात् ॥७॥

कर्तृधर्मः स्पन्दनं चेष्टा वा अर्थात् नियोज्यपुरुषस्य शरीरक्रिया विधिप्रत्ययस्य अर्थः स्यात्तदा स्थलविशेषे इष्टहानिरर्थात् प्रवृत्तेरभावः एवं स्थलविशेषे अनिष्टप्राप्तिरर्थात् प्रवृत्तेरापत्तिस्वरूपो दोषो भवेत्। "आत्मानं विजानीयात्" इदमेकं विधिवाक्यम्। अनेन विधिवाक्येन आत्मज्ञानार्थमुपदेशः वर्तते। एतादृशविधिवाक्यश्रवणे सति नियोज्यपुरुषस्य आत्मज्ञानार्थं प्रवृत्तिः स्यात्। एतादृशस्थले प्रथमतः मुमुक्षोः मुक्तिकामिनः पुरुषस्य आत्मज्ञाने इष्टसाधनत्वस्य एवं कर्तव्यत्वस्य ज्ञानं भवति, अनन्तरमात्मज्ञानचिकीर्षा ( आत्मज्ञानलाभेच्छा ) जायते तदनन्तरमात्मज्ञानार्थं प्रवृत्तिर्भवति। कर्तुः धर्मेण स्पन्दनेन चेष्टया वा आत्मज्ञानलाभो न भवति। अर्थात् हस्ताद्यङ्गप्रत्यङ्गसञ्चालनेनात्मज्ञानं न जायते। तथा च एतादृशविधिवाक्यस्थले विधिप्रत्ययेन कर्तुः धर्मस्य स्पन्दनस्य ज्ञानं न भवति इत्यवश्यमेव स्वीकार्यम्। अस्यां स्थितौ अपि यदि स्पन्दनं चेष्टा शरीरक्रियैव वा विधिप्रत्ययस्यार्थः स्यात्तदा एतादृशवाक्यश्रवणेन जनस्य

आत्मज्ञानलाभार्थं प्रवृत्तिर्नैव स्यात् । वैधविषये समर्थव्यक्तेः प्रवृत्तिर्न स्यात्तदा वक्तुरिष्टस्य उद्देश्यस्य वा हानिरेव स्यात् । एवं "ग्रामं गच्छति" अर्थात् ग्रामगमनं करोति इति कथने ग्रामगमनोपयोगिचरणसञ्चालनक्रियास्वरूपकर्तृधर्मस्य स्पन्दनस्य ज्ञानं भवति । गम्-ति = गच्छति, अत्र 'ति' विधिप्रत्ययो नास्ति, किन्तु एतत् 'ति' प्रत्ययस्यार्थः पादसञ्चालनरूपशरीरक्रिया । अस्यां स्थितौ स्पन्दनं शरीरक्रिया वा यदि विधिप्रत्ययार्थो भवेत् तदा एतादृशवाक्यश्रवणे सति श्रोतुः विधिप्रत्ययार्थज्ञानवशात् ग्रामगमने प्रवृत्तिः स्यात्, किन्तु तथा न भवति । यतः तद्विधिवाक्यमादेशवाक्यम्वा नास्ति, तथा च अनिष्टप्राप्तिरूपो दोषो भवेत् अर्थात् यादृशवाक्यश्रवणे श्रोतुः प्रवृत्तिर्न भवति तादृशवाक्यश्रवणे सति प्रवृत्तेः प्रसङ्गः दोषः सञ्जायते । तथा च कर्तुः धर्मः स्पन्दनं चेष्टो वा अर्थात् शरीरक्रिया विधिप्रत्ययस्यार्थो न भवितुमर्हति । आत्मा एव कर्ता स्पन्दनं शरीरक्रिया वा साक्षात् आत्मनि न वर्तते तथापि आत्मा शरीरक्रियायाः जनक इति जनकतासम्बन्धेन तदात्मनि वर्तते एतदर्थमेव स्पन्दनं कर्तृधर्म इत्युक्तम् ।

कर्तृधर्मः यत्नः यदि विधिप्रत्ययस्यार्थः स्यात्तदा वैधकर्मणि अप्रवृत्तिप्रसङ्गः स्यात् । यतः चैत्रो ग्रामं गच्छति अर्थात् चैत्रः ग्रामे गमनं करोति एतादृशवाक्यश्रवणे सति "ति" प्रत्ययेन ग्रामगमनोपयोगियत्नस्य ज्ञानं जायते इति अस्यापि विधिवाक्यत्वं स्यात् । किन्तु एतादृशवाक्यश्रवणे सति श्रोतुः ग्रामगमने प्रवृत्तिर्न जायते इति वैधकार्ये प्रवृत्तेरभावः स्वीकरणीयः स्यात् । अयमेव दोषः इति कर्तृधर्मः यत्नः विधिप्रत्ययार्थो नास्तीति वक्तव्यम् ।

कर्तृधर्मः इच्छा यदि विधिप्रत्ययार्थो भवेत्तदा विरोधः असत्त्वं प्रत्ययत्यागः एवं सङ्करः दोषः प्रसज्येत । यतः—विधिप्रत्ययार्थज्ञानानन्तरमिच्छा अर्थात् वैधकर्मचिकीर्षा भवेत्; तदनन्तरं चिकीर्षया वैधकर्मणि प्रवृत्तिः स्यात्, तथा च वैधकर्मप्रवृत्तिनिर्वाहक-चिकीर्षोत्पत्तौ विधिप्रत्ययार्थविषयकं ज्ञानमपेक्षेत । एवं सति इच्छा चिकीर्षा वा यदि विधिप्रत्ययस्यार्थो भवेत्तदा चिकीर्षैव विधिप्रत्ययार्थविषयकज्ञानस्य विषय इति चिकीर्षा विधिप्रत्ययार्थविषयकज्ञानस्य कारणमिति स्वीकर्तव्यम् । अयमाशयः—चिकीर्षाविषयकं ज्ञानं मानसप्रत्यक्षस्य स्वरूपमिति प्रत्यक्षे विषयस्य कारणत्वात् परस्परोत्पत्तौ परस्परापेक्षा अर्थात् चिकीर्षोत्पत्तौ विधिप्रत्ययार्थविषयकज्ञानस्यापेक्षा एवं विधिप्रत्ययार्थविषयकज्ञानस्योत्पत्तौ चिकीर्षाया आपेक्षा स्वीकर्तव्या । तथा चान्योन्याश्रयदोषः स्यात् अर्थात् स्वोत्पत्तौ स्वापेक्षितवस्तुनः अपेक्षा स्वीकरणीयेति

दोषः । अयमाशयः—उत्पत्तियोग्यं वस्तु यावन्नोत्पद्यते तावत्पर्यन्तमसत्, उत्पत्त्यनन्तरं वस्तु सद् प्रतिष्ठितम्वा भवति एवं तेन अन्यत् किमपि वस्तु न सम्भवति। तथा च वस्तुनः उत्पत्तौ स्वापेक्षितवस्तुनः अपेक्षास्वीकारे स्वोत्पत्तेः पूर्वं स्वापेक्षितवस्तुनोऽसद्रूपत्वात् कारणाभाववशात् स्वोत्पत्तेरेव व्याघातः स्यात्। घटोत्पत्तौ दण्डस्यापेक्षा वर्तते दण्डं विना घटो न सम्भवतीति दण्डः घटस्य कारणम्, तथा च यदि दण्डोत्पत्तौ घटस्यापेक्षा स्वीक्रियेत अर्थात् घटः कारणं स्यात् तदा दण्डस्योत्पत्तेः पूर्वं दण्डाभाववशात् घटो न भवेत् इति घटः दण्डोत्पत्तौ कारणं न सम्भवति, अयमेवोत्पत्तिगतोऽन्योऽन्याश्रयः। तस्मात् विरोधात्, अन्योन्याश्रयदोषाद्वा इच्छा चिकीर्षा वा विधिप्रत्ययस्यार्थो न सम्भवति।

विधिप्रत्ययार्थः इच्छायाः ज्ञानं अर्थात् वैध-कर्म-चिकीर्षायाः ज्ञानं कारणं स्यात्तदा एतस्याः मानसप्रत्यक्षत्वस्वरूपस्वीकारे विषयः प्रत्यक्षस्य कारणमिति पूर्वोक्तान्योन्याश्रयदोषः प्रसज्येत। किन्तु विधिप्रत्ययेनैव विधिप्रत्ययार्थचिकीर्षाज्ञानं भवतीति स्वीकारे तत् शब्दजन्यम् अर्थात् शाब्दबोध इति एतादृशज्ञाने चिकीर्षायाः कारणत्वं न सम्भवति प्रत्यक्षे विषयः कारणम् शब्दजन्यबोधे विषयः कारणं नास्ति, यतः शब्देन चिरातीत-वस्तुनोऽपि ज्ञानं भवति। तथा च अन्योऽन्याश्रयदोषोऽपि न सम्भवति अर्थात् स्वोत्पत्तौ स्वापेक्षितवस्तुनोऽपेक्षास्वीकारः न करणीयो भवति। एतदर्थं दोषान्तरं प्रदर्शयति—असत्वं हेतुः। प्रवृत्तिं प्रति चिकीर्षा कारणमर्थात् प्रवृत्तेरव्यवहितपूर्वक्षणे चिकीर्षायाः सद्भावेऽपि प्रवृत्तिर्भविष्यति। प्रवृत्तौ चिकीर्षाविषयकज्ञानस्यावश्यकता नास्ति। चिकीर्षा, विधिप्रत्ययस्यार्थो वर्तते किन्तु विधिप्रत्ययेन चिकीर्षा न भवेत्परं चिकीर्षायाः ज्ञानमात्रं भवति, इति स्वीकारे चिकीर्षाज्ञानकाले चिकीर्षायाः अविद्यमानत्वे-ऽपि विधिप्रत्ययेन प्रवर्त्यपुरुषस्य वैधकर्मणि प्रवृत्तिः असम्भवा स्यात्, तथा च इच्छा चिकीर्षा वा विधिप्रत्ययस्य अर्थो नास्ति।

विधिवाक्यश्रवणे सति विधिप्रत्ययेन प्रथमतः प्रवर्त्यपुरुषस्य वैधकर्मचिकीर्षा जायते तदनन्तरं विधिप्रत्ययेनैव स्वार्थचिकीर्षायाः ज्ञानम्भवति इति स्वीकारे प्रवृत्तेरनुपपत्तिर्न-जायते तस्मात् दोषान्तरोद्भावनं क्रियते। प्रत्ययत्यागः हेतुः। विधिप्रत्ययेन वैधकर्म-चिकीर्षा भवतीति स्वीकारे एतच्चिकीर्षयैव पुरुषस्य वैधकर्मणि प्रवृत्तिः सम्भवति, विधिप्रत्ययेन स्वार्थचिकीर्षाविषयकज्ञानस्यावश्यकता न भवति। किन्तु विधिवाक्यश्रवणे विधिप्रत्यार्थविषयकं ज्ञानम्भवति, अथ च अनावश्यकत्वात् तदस्वीकारः स्यात्। तथा च

प्रत्ययेन अर्थात् विधिप्रत्ययेन यज्ज्ञानं भवति तस्य परित्यागः स्वीकरणीयः, अयमेव दोषः, तथा च इच्छा चिकीर्षा वा विधिप्रत्ययस्यार्थः नास्ति।

सुखमेव चरमं फलम्, अर्थात् जीवस्य स्वाभाविकमभिलषितं वस्तु, जीवः स्वभावत एव सुखस्य अभिलाषां करोति। वैधयज्ञादिकर्मकरणानन्तरं कर्मकर्तुः स्वर्गादिसुखं जायते, सुखेच्छां कृत्वा समर्थः पुरुषः यज्ञादिकर्मानुष्ठानं करोति। सुखेच्छैव विधिप्रत्ययस्यार्थः, विधिवाक्यश्रवणानन्तरं प्रथमं सुखेच्छायाः ज्ञानं भवति अर्थात् "मम सुखं भवतु" एतादृशी या सुखविषयिणी इच्छा "सा मम भवति" इति निश्चयः भवति। तदनन्तरम् एतज्ज्ञानेन निश्चयेन वा वैधकर्मचिकीर्षोत्तरं वैधकर्मप्रवर्त्य-पुरुषस्य प्रवृत्तिर्भवति, एवं स्वीकारे पूर्वोक्तदोषः न जायते, तथा च दोषान्तरोद्भावनं क्रियते—सम्बन्धहेतुः अर्थादन्यथासिद्धः हेतुः। ( सुखस्वरूपचरमफलविषयकेच्छायाः ज्ञानं चिकीर्षायाः कारणं नास्ति, एतादृशीच्छैव कारणम्, यतः चिकीर्षोपायेच्छावशादेव फलेच्छा ( सुखेच्छा ) चिकीर्षायाः कारणम्। लोकः फलाकांक्षी सन् एवोपायेच्छान्वे-षणं करोति। अस्यां स्थितौ सुखस्वरूपचरमफलेच्छाविषयकं ज्ञानं चिकीर्षायाः कारणमिति कथनं भ्रान्तस्यैव कथनम्। किन्त्वेतत्स्वीकृत्यैव दोषोद्भावनं क्रियते। अयमाशयः—सुखेच्छाविषयकज्ञाने जाते सुखार्थिनः सुखोपायभूतकर्मचिकीर्षा भवति किन्तु कर्मणि सुखोपायत्वं सुखस्वरूपेष्टसाधनत्वज्ञानम्वा अर्थात् "अनेन कर्मणा मम सुखं भविष्यति" इत्यादिरूपनिश्चयं विना कर्मचिकीर्षा न जायते इति कर्मचिकीर्षां प्रति कर्मणि इष्टसाधनत्वज्ञानमेव कारणमिति वक्तव्यम् तथा च सुखेच्छाज्ञानमन्यथा-सिद्धम् अर्थात् निष्कामकर्मस्थले एतादृशसुखेच्छाज्ञानं विनापि कर्मणि सामान्यतः इष्टसाधनताज्ञानवशादेव पुरुषस्य कर्मचिकीर्षा जायते इति सामान्यतः कर्मणि इष्ट-साधनताज्ञानमेव कर्मचिकीर्षां प्रति कारणम्, एतादृशस्थले सुखेच्छाऽभाववशात् सुखेच्छाविषयकं ज्ञानं न भवतीति तत्कर्मचिकीर्षां प्रति कारणं न भवति, अस्यां स्थितौ इच्छा चिकीर्षा वा एवं सुखेच्छा विधिप्रत्ययस्यार्थो न भवितुमर्हति। तथा च पुरुषस्य धर्मः स्पन्दनं यत्नः इच्छा एतत्त्रयमपि विधिप्रत्ययस्यार्थो नास्ति।

यत्न एव विधिः लिङ्प्रत्ययस्यार्थः लट् प्रभृत्याख्यातप्रत्ययेन धात्वर्थस्य अनुकूल-व्यापारमात्रस्यैव ज्ञानं भवति "रथो गच्छति" अयमेव दृष्टान्तः। रथः अचेतनं वस्तु अस्य प्रयत्नो न सम्भवति, तथा च धात्वर्थगमनक्रियायाः अनुकूलव्यापारः रथस्य स्पन्दनम्वा रथस्य कर्तृत्वम्। तथा च धात्वर्थस्यानुकूलव्यापारमात्रमेव सामान्यतः

आख्यातप्रत्ययस्यार्थः, प्रयत्नः यदि आख्यातप्रत्ययस्यार्थः स्यात्तदा रथे तादृशप्रयत्नस्या-भाववशात् रथः कर्ता न स्यात्, प्रयत्नः सामान्यतः आख्यातस्यार्थो नास्ति। अस्यां स्थितौ यत्नस्य विधिप्रत्ययार्थस्वीकारेऽपि क्षतिर्नास्ति अर्थात् पूर्वोक्तदोषो नास्ति ग्रामं गच्छति इत्यादिस्थले "ति" इत्याख्यातप्रत्ययेन विधिप्रत्ययार्थस्य प्रयत्नस्य ज्ञानं न भवति इति एतादृशवाक्यश्रवणे श्रोतुः ग्रामगमनप्रवृत्तिप्रसङ्गो न भवति, एतादृशस्थले ग्रामगमनं श्रोतुः वैधं न भवति ॥७॥

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥८॥

कुम्भकारः घटं कर्तुं शक्नोति पटं कर्तुं न शक्नोति, एतादृशसार्वजनीनव्यव-हारवशात् कर्तृरूपमर्थात् कर्तृत्वं कृधातुनैव निर्धारितं भवति। कृधातोरर्थः यत्नः, तथा च यत्नः एव कर्तुः रूपम् कर्तृत्वम्वार्थात् कर्तुरसाधारणं धर्मः। कृधातोरर्थः यत्न एव कर्तरि विहिताख्यातप्रत्ययस्यार्थः। धात्वर्थानुकूलव्यापारः कर्तृरूपम्, कर्तृत्वं कर्तुरसाधारणधर्मो नास्ति। तथा सति कृधातुना तस्य निश्चयो न भवेत्, यतः धात्वर्थानुकूलव्यापारः कृधातोरर्थः नास्ति। अत्रेयमापत्तिः स्याद्यत् तथा सति आख्यात-प्रत्ययसकलस्य कृधातोः पर्यायभूतत्वं कस्मान्न स्वीक्रियते? अत्रोत्तरे एतदेव वक्तव्यम् यत् यत्नस्याख्यातप्रत्ययार्थत्वेऽपि सामान्यतः यत्नः आख्यातप्रत्ययार्थो नास्ति, फलसाधनी-भूतः अर्थात् कार्यसम्पादनोपयोगिप्रयत्नः यत्नविशेष एव आख्यातप्रत्ययार्थः। यस्या-परनाम भावना। सामान्यतः यत्नमात्रं कृधात्वर्थः, तथा च सकलाख्यातप्रत्ययस्य कृधातोः पर्यायत्वं नास्ति। प्रकृष्टः यत्नः भावना वा कृधातोरर्थमध्ये वर्तत इति कृधातुना सामान्यतः आख्यातप्रत्ययसकलस्यार्थप्रकाशनं जायते। सामान्यवाचक-शब्दस्य विशेषार्थबोधकत्वं प्रसिद्धम्, सामान्यतः घटशब्दस्य घटमात्रार्थकत्वेऽपि जलानयनार्थं यदि कमपि पुरुषं कथयति घटमानय तदासौ छिद्ररहितमेव घटमानयति, तथा च एतादृशस्थले सामान्यवाचकघटशब्देनैव छिद्ररहितस्य घटस्य ज्ञानं भवति इत्यवश्यमेव स्वीकर्तव्यम्, एवमेव कृधातोः सामान्यतः यत्नार्थकत्वेऽपि कृधातुना आख्यातार्थप्रकृष्टयत्नस्य ज्ञानं भवितुमर्हति। अत्रेदं वक्तुं शक्यते यत् रथो गच्छति इत्यत्र रथे गमनक्रियायाः कर्तृत्वं कथमिव स्यात्? रथस्य प्रयत्नो नास्ति, यतः रथोऽचे-तनपदार्थः, अस्याशङ्कायामेतदेव वक्तव्यं यत् एतादृशस्थले रथः गमनक्रियायाः कर्तृ-रूपेणोपचरितमात्रम्, रथे वास्तविकं गमनक्रियाकर्तृत्वं नास्ति। आख्यातार्थस्य शक्यार्थः कर्तृत्वं प्रयत्नविशेषो वा रथे नास्ति, एतादृशस्थले आख्यातस्य लक्षणावृत्त्या गमनानुकूल-

क्रियामात्रस्योपस्थितिर्जायते इति रथस्य गमनकर्तृत्वरूपेण व्यवहारमात्रं जायते, एतादृशस्थले कर्तृत्वमौपचारिकम् लाक्षणिकम् ।

रथो गच्छतीत्यादिषु दृष्टान्तेषु धात्वर्थानुकूलव्यापार एव सामान्यत आख्यातप्रत्ययस्यार्थः । तदा पूर्वोक्तरूपेण कृतम् अकृतम् इति व्यवहारेण प्रयत्नस्य यज्ज्ञानं जायते तत् कृधातोः शक्यार्थमुक्त्वा न भवति अपि त्वाक्षेपेण भवति । यतः—प्रत्यक्षतः अवलोक्यते यत् पाचकोऽग्निं ज्वालयति चुल्यां पाकमात्रस्य स्थापनं करोति तथा च पाककार्यस्थले अनेन क्रियाव्यापारेण युक्त एव पाचकः पाकस्य कर्ता, अस्यां स्थितौ चैत्रः पचति इति कथने आख्यातेन तिप्रत्ययेन पाककार्यस्य अनुकूलव्यापारस्यैवार्थात् पाककार्योपयोग्याग्नेः प्रज्वालनकार्यस्यैव ज्ञानं भवति तस्मात् एतादृशस्थले एतत्सकलव्यापारस्यैव आख्यातप्रत्ययार्थत्वमित्यवश्यमेव स्वीकार्यम् । तदा यदैतादृशस्थले कर्तरि प्रयत्नज्ञानं भवति अर्थात् चैत्रः पाकं करोति इत्यादिरूपज्ञानं भवति तत् आक्षेपेणानुमानप्रमाणसाहाय्येन वा भवति । अनुमानाकारश्च—चैत्रः, पाककार्यानुकूलयत्नवान्, पाककार्यानुकूलव्यापारयुक्तत्वात् । अत्र चैत्रः पक्षः पाककार्योपयोगिप्रयत्नः साध्यम्, पाककार्योपयोगिव्यापारः हेतुः एवमेव सर्वत्राख्यातप्रत्ययान्तवाक्यस्थलेऽवगन्तव्यम् ॥८॥

भावनैव यत्नात्मा सर्वत्राख्यातस्य गोचरः ।
तथा विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥९॥

पचति एतस्य विवरणं पाकं करोति एतद्विवरणेनैव 'ति' प्रत्ययस्यार्थः प्रकाशितो भवति, तथा च कृधातोरर्थ एवाख्यातप्रत्ययस्य शक्यार्थः, अन्यथा कृधातुना आख्यातप्रत्ययस्यार्थप्रकाशनं नैव स्यात्, विशेषतः पूर्वोक्तरूपाक्षेपेणानुमानेन वा यत् कर्तरि प्रयत्नज्ञानं भवति तदपि न सङ्गतम्, यतः चैत्रस्य पाककार्यस्थले काष्ठादिद्रव्येऽपि पाकोपयोगिव्यापारः वर्तते इति प्रत्यक्षमेव; किन्तु काष्ठादिद्रव्ये प्रयत्नो नास्ति । अस्यां स्थितौ पूर्वपक्षोक्तपाककार्योपयोगिव्यापाररूपो हेतुः काष्ठादौ द्रव्ये साध्यस्य प्रयत्नस्य व्यभिचारी, तस्मात् एतादृशव्यभिचारिहेतुना अनुमानस्य साहाय्येन कर्तरि यत्नवत्त्वसिद्धिर्न भवति । अत एव पचति इति कथने प्रथमतः शब्देन पाककार्योपयोगिनः व्यापारस्य ज्ञानं भवति अनन्तरं आक्षेपेणानुमानसाहाय्येन वा कर्तरि प्रयत्नवत्वानुमानं भवति इत्यपि वक्तुं न शक्यते । तदा अगत्या रथादीनामचेतनत्वात् रथो गच्छति इति अचेतनबोधकवाक्यस्थले एतत्सकलकर्तरि प्रयत्नस्य बाधितत्वात् अगत्या आख्याते लक्षणावृत्तिं स्वीकृत्य कर्तृत्वोपपत्तिः करणीया । अर्थात् एतादृशस्थले धात्वर्थानुकूलक्रिया आख्यातप्रत्ययस्यार्थः लाक्षणिक एव तथा च धात्वर्थानुकूलव्यापारः आख्यातप्रत्ययस्य शक्यार्थः ।

पचतीत्यस्य यद्विवरणं पाकं करोतीति अनेन यादृशपाककार्यानुकूलप्रयत्नस्य कर्तृत्वस्य वा ज्ञानं भवति तद्रूपतदृशप्रयत्नवतः कर्तुः वा अवगतिः ज्ञानं वा भवति। तथा च कर्तर्य्येव लडाद्याख्यातस्य शक्तिः स्वीकरणीया। अर्थात् कर्ता एव आख्यातप्रत्ययस्य शक्यार्थः इति कथनमेव सङ्गतम्, कर्तृत्वमाख्यातप्रत्ययस्य शक्यार्थो नास्ति अपि तु शक्यतावच्छेदकमात्रम्।

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना।
संख्येयमात्रलाभे तु साकाङ्क्षेण व्यवस्थितिः॥ १०॥

आक्षेपः साकाङ्क्षापरपर्यायः किम्वा अनुमानम्, संख्येयवस्तु अर्थात् यद्वस्तु आख्यातप्रत्ययस्यार्थः या संख्या तया विशेष्यं विशेषितम्वा भवितुमुपयुक्तम्, तत् आक्षेपलभ्यमर्थात् विवरणशब्दलभ्यम् अथ वा अनुमानलभ्यम्, तथा च संख्येयवस्तु अन्यलभ्यमर्थात् विवरणादिलभ्यमिति संख्येयवस्तुनि आख्यातप्रत्ययस्य शक्तिः न स्वीक्रियते। यतः यद्धि अनन्यलभ्यमर्थात् अन्येन लब्धुं ज्ञातुम्वा अयोग्यं स एव शब्दस्य शक्यार्थः (अनन्यलभ्यः शब्दार्थः मी. द.) प्रथमान्तपदेन यस्य वस्तुनः उपस्थितिः स्मरणं वा भवति एतादृशवस्तुनि यदि आख्यातप्रत्ययार्थस्य विशेष्यता भवेत् एतादृशवस्तु यदि आख्यातप्रत्ययार्थेन विशेषितोपयुक्तं स्यात्तदा एतादृशवस्तुनः आक्षेपलभ्यत्वमेवार्थात् साकाङ्क्षप्रथमान्तपदेनाथ वा अनुमानप्रमाणेन वा ज्ञातोपयुक्तत्वमेव एतादृशवस्तुनि आख्यातप्रत्ययार्थसंख्यायाः अन्वयः भवति। आकाङ्क्षालभ्यैतादृशवस्तुनि आख्यातप्रत्ययार्थ संख्यायाः अन्वयो भवति। अस्यां स्थितौ कर्तृवाच्ये विहिताख्यातप्रत्ययस्थले कर्तृवस्तु एवं कर्मवाच्ये विहिताख्यातप्रत्ययस्थले कर्म वस्तु आख्यातप्रत्ययार्थेन विशेष्यमेवं प्रथमान्तशब्दलभ्यत्वात् संख्येयरूपेऽन्वितं भवितुं योग्यम्, यतः यत्र आख्यातप्रत्ययार्थभावनायाः प्रयत्नस्य वा अन्वयः (सम्बन्धो वा) भवति तत्रैवाख्यातप्रत्ययार्थसंख्याया अन्वयः सम्बन्धो वर्तते इत्येव नियमः। प्रथमान्तशब्दलभ्यवस्तुन्येवाख्यातप्रत्ययार्थभावनायाः प्रयत्नस्य वा अन्वयो भवति। तथा च तस्मिन्नेवाख्यातप्रत्ययार्थसंख्यायाः अन्वयः स्वीकरणीयः। अस्यां स्थितौ पाकं करोतीति पचतेः विवरणमिति स्वीकारेऽपि अनेन कर्तुरवगतिसम्भवेऽपि कर्ता अन्यलभ्योऽर्थात् कथितरूपनियमलभ्यः एवं प्रथमान्तपदलभ्यः इति तस्य आख्यातप्रत्ययशक्यार्थत्वं न स्वीक्रियते। संख्या एवं भावना प्रयत्नो वा उभयमपि आख्यातप्रत्ययस्यैवार्थः, तथा च उभयमपि एकशब्दस्यैवार्थ इति यत्र एकस्यान्वयस्तत्रैवापरस्यापि अन्वयः स्वीकरणीयः

इत्येव नियमः। यद्धि वस्तु प्रथमान्तपदेनोपस्थितं भवति तत्रैव संख्यायाः अन्वयो जायते। तस्मात् एतादृशनियमेनानुमानप्रमाणबलेन वा संख्ययान्विते एवाख्यातप्रत्ययार्थं-भावनायाः अन्वयबोधो सम्पन्नो भवितुमर्हति इति भावनाविशिष्टेऽर्थात् कर्तरि आख्यात-प्रत्ययस्य शक्तिस्वीकारस्यावश्यकता नास्ति। विशेषतः संख्येयवस्तु अन्यलभ्यम्। प्रथमान्तशब्देनानुमानेन वा लभ्यमिति अयं शक्यार्थो भवितुं नार्हति। चैत्रो पचति इति कथने चैत्रः प्रथमान्तपदस्यार्थे चैत्रे एवाख्याततिप्रत्ययस्यार्थसंख्यायाः अन्वयो भवेत्, अयमेव नियमः तथा च भावनापि तिप्रत्ययस्यार्थं इति एकत्वसंख्यायाः अन्वयिनि चैत्रे एव अन्वयः स्यात्, अयमपि नियमः, तथा च यत् यत् संख्यायाः अन्वयि तत्तदेव भावनाया अन्वयि एतादृशनियमेनानुमानप्रमाणेन वा प्रथमान्तपदो-पस्थितचैत्रे एव आख्यातार्थभावनायाः प्रयत्नस्य वा ज्ञानं सम्पद्यते तस्मात् प्रयत्नवति शक्तिस्वीकारोऽनावश्यकः। भावना प्रयत्न एव वा आख्यातप्रत्ययस्यार्थः! कर्त्तुः असाधारणधर्मः कर्तृत्वं प्रयत्न एव ( भावनैव ) वा आख्यातप्रत्ययस्यार्थः। एतादृश-कर्मविहिताख्यातप्रत्ययस्थले कर्मत्वमेवाख्यातप्रत्ययस्य शक्यार्थः। पच+ति पचति 'ति' आख्यातलट्लकारे परस्मैपदस्यैकवचनविभक्तिः। पच् धातोरर्थः पाकः पचति कथने सति एकस्य पाककर्तुर्ज्ञानं जायते। एवमेव पचतः इति कथने पाककर्तृद्वयस्य ज्ञानम्, पचन्ति इति कथनेऽनेक पाककर्तृज्ञानं जायते। एवमेव पच्यते इति कर्मविहिताख्याते लट्लकारे आत्मनेपदस्य प्रथमैकवचनविभक्तौ भवति, पच्यत इति कथने पाकक्रियाया एकस्य कर्मणः ज्ञानम्, पच्येते इति कर्मणि विहिते आख्याते लट्लकारे द्विवचनविभक्तौ रूपम्, पच्येते इति कथिते पाकक्रियायाः कर्मद्वयस्य ज्ञानम्, पच्यन्त इति कथने अधिकपाकक्रियाकर्मणः ज्ञानं जायते। तथा च ति तस्, अन्ति इत्यादिकर्तृवाच्ये विहिताख्यातप्रत्ययस्यार्थः भावना प्रयत्नो वा एवं यथाक्रमम् एकत्वं द्वित्वं बहुत्वं च संख्या। अस्यां स्थितौ संख्या एवं भावना एतदुभयमेवाख्यातप्रत्ययस्यार्थ इति एकोऽपरं परित्यज्यान्यत्र स्थातुं न शक्नोति इति नियमः स्वीकरणीयः। अर्थात् यत्राख्यातार्थभावनायाः सम्बन्धस्तत्रैवाख्यातार्थ-संख्यायाः सम्बन्धो भवति एतादृशनियमो व्याप्तिर्वा स्वीकरणीया। किञ्च संख्या गुणपदार्थः सा आश्रयं विनार्थात् अनाश्रिता न स्थास्यति, तथा च संख्या आश्रयस्यापेक्षां कृत्वैव अर्थात् संख्येयस्य संख्यया विशेषित-भवनोपयुक्तवस्तुनोऽपेक्षां कृत्वैव तिष्ठति इत्येव स्वीकर्तव्यम्, एतादृशानुमानेन संख्येय-वस्तुनः लाभो ज्ञानं वा भवतीति संख्येयवस्तु अन्यलभ्यमेवम् यत्र स्थले आख्यात-प्रत्ययार्थसंख्या वर्तते तत्रैवाख्यातप्रत्यार्थभावनापि वर्तते इति अन्यलभ्यसंख्येय-

वस्तु एवाख्यातप्रत्ययार्थभावनायाः विशेष्यमित्यवश्यं स्वीकर्तव्यम्। यस्य शब्द-स्योत्तरं प्रथमाविभक्ति योगः एतच्छब्दस्य योऽयर्थः एतस्मिन्नेवार्थे प्रथमविभक्तियुक्तपदमु-च्चरितं भवति। तथा च प्रथमान्तपदेन किमपि वस्तु कर्तृत्वकर्मत्वकरणत्वादिरूपे उपस्थितं न भवति। घट इति प्रथमान्तं पदं घट इत्येतन्मात्रकथने घटत्वरूपेणैव घटस्योपस्थितिर्भवति, कर्तृत्वादिरूपेण न भवति, घटः इति कथनेन कर्ता कर्म वा घट इति किमपि नावगम्यते एकस्य घटस्यैव प्रतीतिर्जायते। एतादृशार्थे एव प्रथमाविभक्ति-र्जायते। अर्थात् अयं कर्ता इत्यादिरूपेण ज्ञानं न भवति तस्मात् प्रथमान्तपदेन कर्तृत्वकर्मत्वादिव्यापारहीनरूपेणोपस्थितार्थ एवाख्यातप्रत्ययार्थः भावनास्वरूपव्यापार-साकाङ्क्ष इत्येव नियमः। पचति इत्युक्ते कः पचति एतादृशी आकाङ्क्षा जिज्ञासा वा स्वाभाविकी। चैत्रः इति कथिते किं करोति एतादृशी आकाङ्क्षा स्वाभाविकी। पचति पदं श्रुत्वा कः पचति इति जिज्ञासायाम् ओदनमिति कथनेनैव जिज्ञासायाः निवृत्तिर्न भवति किन्तु चैत्रः इति पदकथनेन एतादृशजिज्ञासायाः निवृत्तिर्भवति, एवं चैत्रः इति पदं श्रुत्वा चैत्रः किं करोतीति जिज्ञासायां तदुत्तरे दण्डेन इत्यादिवाक्यकथने सति एतादृशजिज्ञासायाः निवृत्तिर्न भवति, किन्तु पचति इति कथनेन एतादृशजिज्ञासायाः निवृत्तिर्भवति। तस्मात् पचति कथिते चैत्र एतादृशप्रथमान्तोपस्थितकर्मत्वादिव्यापार-हीनरूपेणोपस्थितचैत्ररूपोऽर्थ एव आख्यातार्थभावनाविषयिकया प्रयत्नविषयिकया कः पचतीति एतादृशाकाङ्क्षया युक्तः। एवमेव चैत्रः इति कथिते पचतीतिपदेन उपस्थितोऽर्थं एव चैत्रः किं करोतीत्याकाङ्क्षाया निवर्तकः। तस्मात् चैत्रः पचति इति एतद्वाक्यान्तर्गतः चैत्रः एवं पचति इति पदद्वयं परस्पराकांक्षायुक्तम् इति वाक्यद्वयस्यार्थः चैत्रः एवं पाककरणस्वरूपव्यापारः भावना वा परस्पराकांक्षायुक्तोऽर्थात् साकांक्षः। एवमाख्यातप्रत्ययार्थभावना प्रयत्नो वा गुणपदार्थ इति आश्रयसाकांक्षः। तस्मात् भावना एवं प्रथमान्तपदलभ्योऽर्थः परस्परं साकांक्षः इत्यवश्यमेव स्वीकरणीयम्। अस्यां स्थितौ चैत्रः पचति इति कथने चैत्रः इति प्रथमान्तपदेन कर्मत्वादिव्यापार-हीनरूपेणोपस्थितचैत्रे एवाख्यातार्थभावनाया अन्वयः स्वीकरणीय इति भावनायाः आश्रयः चैत्रः आख्यातप्रत्ययस्य शक्यार्थो भवितुं नार्हति। यतोऽत्र भावनाया आश्रयः, चैत्रः इति पदेन लभ्योऽर्थात् आक्षेपलभ्यः। एवमेव कर्मवाच्ये विहिताख्यातप्रत्यय-स्थलेऽपि अवगन्तव्यम्। ओदनः पच्यते इति कथने ओदनोऽयं प्रथमान्तशब्देनो-पस्थितोदन एव आख्यातप्रत्ययार्थकर्मत्वस्याश्रयः इति कर्माख्यातप्रत्ययस्यार्थो न

भवितुमर्हति। यतः एतादृशस्थले कर्म ओदन इत्येतच्छब्दलभ्य इति आक्षेपलभ्योऽन्यलभ्यो वा।

किञ्च वक्ता यदा पचति इति वक्ति तदा तात्पर्यानुसारं कस्यचित्कर्तृबोधकस्य चैत्रस्य मैत्रस्य वा प्रथमान्तपदस्याध्याहारो भवति। तस्मात् पचति इत्येतन्मात्रकथनेऽपि अध्याहृतप्रथमान्तपदलभ्यार्थे एव आख्यातप्रत्ययार्थभावनाया अन्वयो भविष्यति। अस्यां स्थितौ संख्येयबोधकप्रथमान्तशब्दस्योच्चारणं विनापि वक्तृतात्पर्यविषयसंख्येयवस्तु अध्याहृतप्रथमान्तपदलभ्यमिति आख्यातप्रत्ययस्य शक्यार्थो भवितुं नार्हति। अत एव संख्यार्थबोधकशब्दः कथितो भवतु मा वा एतस्यान्यलभ्यत्वात्संख्येयवस्तुनः बोधनार्थं आख्यातप्रत्ययस्य सामर्थ्यस्वीकारावश्यकता नास्ति। संख्येयवस्तु एव कर्ता किम्वा कर्म भवति इति कर्ता कर्म वा कर्तृवाच्यविहितम् किम्वा कर्मवाच्ये विहिताख्यातप्रत्ययार्थस्य शक्यार्थो नास्ति।

अत्र वक्तुं शक्यते द्वितीयादिविभक्त्यन्तपदलभ्येऽर्थे आख्यातप्रत्ययार्थभावनायाः अन्वयाभावे किं कारणम्? एतदुत्तरे एतदेव वक्तव्यम् यत् द्वितीयादिविभक्तिसकलं कारकविभक्तिरिति एतत्सकलविभक्त्यन्तपदेन कर्मत्वादिविशिष्टरूपेणैव स्वार्थस्योपस्थितिर्भवति। तस्मात् द्वितीयादिविभक्त्यन्तपदलभ्यार्थसकलमाख्यातप्रत्ययार्थभावनायाः अन्वये आकाङ्क्षायुक्तो नास्ति। इति तत्राख्यातप्रत्ययार्थभावनायाः अन्वयो न भवति। अयमाशयः—अग्निना इति शब्दकथने करणत्वविशिष्टाग्नेरुपस्थितिः ओदनमिति कथने कर्मत्वविशिष्टोदनस्यार्थात् ओदनमित्यर्थस्योपस्थितिर्भवति। पचति कथने केन पचति? किं पचति एतादृशजिज्ञासायाम् अग्निना ओदनं पचति इति कथिते जिज्ञासायाः निवृत्तिर्भवति तस्मात् तृतीयाविभक्त्यन्ताग्निनेति पदं करणत्वविशिष्टमर्थं बोधयित्वा एवं द्वितीयाविभक्त्यन्तमोदनमिति पदं कर्मत्वविशिष्टमोदनं बोधयित्वा जिज्ञासायाः निवृत्तिं करोति। तथा च अग्निना, ओदनम् इत्यादिपदसकलं कर्मत्वकरणत्वादिव्यापारविशिष्टं वस्तु बोधयित्वैव चरितार्थतां याति इति आख्यातप्रत्ययार्थभावनायाः अन्वये एतत्पदार्थानामाकाङ्क्षा नास्ति। अर्थात् अग्निः एवमोदनम्, कः पचति इत्येतादृशभावनाविषयिकाख्यायाः प्रयत्नविषयिकायाः वा जिज्ञासायाः निवृत्तिं न करोति। तस्मात् द्वितीयादिविभक्त्यन्तपदसकलमाख्यातार्थभावनाविषयकाकाङ्क्षायुक्तं न।

कर्तृधर्मः स्पन्दनं यत्न इच्छा इत्यादिसकलं विधिप्रत्ययस्यार्थो नास्ति इति पूर्वमेवावेदितम्। किन्त्वेतेषां विधिप्रत्ययार्थत्वाभावेऽपि कर्मणः धर्मः कर्मत्वं कर्तव्य-

त्वम्वा विधिप्रत्ययस्यार्थो भवितुमर्हति । यतः कस्यापि कर्मणः कर्तव्यत्वरूपेण ज्ञाते तत्कर्मणि नियोज्यपुरुषस्य प्रवृत्तिर्भवेत् अर्थात् नियोज्यः पुरुषः यदि अवगच्छेत् यत् इदं कर्म मम कर्तव्यम् तथा सति एतादृशकर्मणि प्रवृत्तो भवेत् । तस्मात् कर्मणः धर्मः कर्मत्वं कर्तव्यत्वम्वा विधिप्रत्ययस्यार्थो अस्ति विधिवाक्यश्रवणे नियोज्यपुरुषः वैधकर्मणि प्रवृत्तो भवतीति दृश्यते । कर्मणि कर्तव्यत्वज्ञानमेव कर्मप्रवृत्तेः जनकम्, तस्मात् विधिप्रत्ययेन वैधकर्मणि कर्तव्यताया कर्मत्वस्य वा ज्ञानं भवति इत्यवश्यं स्वीकर्तव्यम् । अस्यां स्थितौ कर्मत्वं कर्तव्यत्वमेव वा विधिप्रत्ययस्यार्थः । स्वर्गकामोऽश्वमेधेन यजेत इति विधिवाक्यम् । अर्थे अश्वमेधयज्ञसम्पादने समर्थः स्वर्गाभिलाषी एव नियोज्य पुरुषः । अश्वमेधयज्ञकरणे शुभादृष्टं भवति एवं तेन जन्मान्तरे स्वर्गो भवति तथा च स्वर्गः शुभादृष्टम्, अश्वमेधयज्ञः एतत्त्रयमपि नियोज्यपुरुषप्रयत्नेन सम्पन्नं भवति इति त्रयमपि कर्तव्यं कर्म वा । एषु यत्र कुत्रापि नियोज्यपुरुषस्य कर्तव्यत्वज्ञानं कर्मत्वज्ञानम्वा भवेत् तदाश्वमेधयज्ञे प्रवर्तते । यजेत इत्यत्र इत विधिप्रत्ययेन कर्तव्यत्वज्ञानं भवति एतादृशविधिवाक्यस्थले कर्मत्वं कर्तव्यत्वमेव वा विधिप्रत्ययस्यार्थः ॥१०॥

अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ।
तदलाभान्न कार्यञ्च न क्रियाप्यप्रवृत्तितः ॥११॥

स्वर्गादिफलम्, अपूर्वम् एवं यज्ञादिक्रिया एतत्त्रयमेव कर्मशब्देनोच्यते "स्वर्गकामोऽश्वमेधेन यजेत" एतादृशविधिवाक्यस्थले स्वर्गरूपं फलं यदि कर्म भवेत् तदा स्वर्गस्वरूपफलगतं कर्तव्यत्वं कर्मत्वमेव वा विधिप्रत्ययस्यार्थो भवेत्, तथा सति अव्याप्तिदोषः आपतति । नियोज्यः पुरुषः यस्य विषयस्य अभिलाषां कृत्वा कर्मणि प्रवृत्तो भवति, तदेव फलम् । स्वर्गाभिलाषी पुरुष एव अश्वमेधयज्ञसम्पादने प्रवृत्तो भवति । तस्मात् अश्वमेधयज्ञस्य फलं स्वर्गं कर्तव्यं कर्म । कर्मकरणसमर्थः पुरुषः किमपि कर्म कर्तव्यमिति यदा अवगतिं कुर्यात् तदा तस्मिन्नेव प्रवर्तेत । अयमेव नियमः एतस्य व्यतिक्रमो नोपलभ्यते । यथा भोजनकरणं कर्तव्यम् इति अवगतौ तत्समये तस्मिन्नेव प्रवृत्तिर्भवति स्नाने प्रवृत्तिः न भवति । तस्मात् तत्कर्मविषयककर्तव्यत्वज्ञानमेव तत्कर्मविषयकप्रवृत्तेः कारणम् । अस्यां स्थितौ स्वर्गफलगतकर्तव्यत्वस्य विधिप्रत्ययार्थत्वे एतादृशविधिवाक्यश्रवणे विधिप्रत्ययेन स्वर्गरूपफले एव नियोज्यपुरुषस्य कर्तव्यत्वज्ञानं भवति इति स्वीकरणीयम् । एवमेतादृशकर्तव्यताज्ञानवशादेव नियोज्यपुरुषः अश्वमेधयज्ञे प्रवृत्तः स्यात् । तस्मात् कथितनियमस्य व्यतिक्रमो भवेत् अर्थात् एकविषयककर्तव्यत्वज्ञानेनान्यविषयकप्रवृत्तिः स्वीकरणीया स्यात् । यतः अश्वमेधयज्ञसम्पादने पूर्वमतिरिक्तबहुकर्मणां सम्पादनमपेक्षितं

भवति एतत्सर्वं कर्म च अश्वमेधान्तर्गतं नास्ति । एतत्सर्वं कर्मगतकर्तव्यत्वं विधिप्रत्ययस्यार्थो नास्तीति एतादृशविधिवाक्यश्रवणे सति अश्वमेधयज्ञगतकर्तव्यत्वज्ञानेन एतत्सकलातिरिक्तकर्मविषयिणी प्रवृत्तिर्भवतीति स्वीकरणीया। तथा चातिव्याप्तिदोषः सम्भवति अर्थात् एकविषयककर्तव्यत्वज्ञानेनान्यविषयकप्रवृत्तिः स्वीकरणीया।

अपूर्वनिष्ठकर्तव्यं यदि विधिप्रत्ययस्यार्थः स्यात्तदा अपूर्वस्य तत्त्वमपूर्वत्वं न तिष्ठति। अयमाशयः—अपूर्वमर्थात् यस्य पूर्वं ज्ञानं कर्तुं न शक्यते। अश्वमेधयज्ञेन स्वर्गो भवति इति कथने सति अश्वमेधयज्ञकरणात् अपूर्वं शुभादृष्टम्वा भवति इति स्वीकर्तव्यम्। अश्वमेधयज्ञकरणात् पूर्वमेतज्ज्ञानं न सम्भवति। प्रथमतः विचारणीयं यत् अपूर्वं कथं ज्ञायते? स्वर्गस्तावदेकं सुखं अर्थात् येन सुखेन सह कस्मिन्नपि काले दुःखसम्पर्को न भवति एवमिच्छयैव लाभो भवति तदेव सुखम्[१]। सुखदुःखादिकं आत्मसमवेतगुणपदार्थः। आत्मनः शरीरधारित्वाभावे आत्मनि सुखदुःखादिकं समवेतं न स्यात्। तस्मात् शरीरमपि एतत्सकलस्य कारणम्। सुखदुःखाद्यर्थमेव जीवः पुनः पुनः शरीरं धारयति। अयमेव जीवस्य संसारः। संसारी जीवः दुःखपङ्के निमग्नः सन् सर्वदा सुखार्थं व्यग्रः तिष्ठति। वेदे अवगतो भवति अश्वमेधयज्ञे कृते सति अनुष्ठातृपुरुषस्य स्वर्गसुखं जायते, किन्तु मानवस्य पार्थिवदेहविद्यमानतादशायां स्वर्गः अर्थात् दुःखसम्पर्करहितं सुखं न सम्भवति इति मानवस्य पार्थिवदेहविनाशोत्तरं स्वर्गसुखोपयोगिशरीरस्य धारणं भवति। तस्मात् परकाले एव तत्संघटते इत्यवश्यं स्वीकर्तव्यम्। एतदर्थं निषिद्धकर्मानुष्ठाने परकाले नरकस्य सुखसम्पर्कवर्जितदुःखस्य प्राप्तिः स्यात् इति पार्थिवदेहविनाशानन्तरं तदुपयुक्तशरीरधारणं करणीयं भवति। किमपि वस्तु कस्यापि कार्यस्य अव्यवहितपूर्ववर्ति न स्यात् तदा कारणं न स्यात्। इह कालेऽनुष्ठितमाशुविनाश्यश्वमेधयज्ञादि कर्म परजन्मनि उत्पत्स्यमानस्य स्वर्गादिफलस्य अव्यवहितपूर्ववर्ति नैव। अथ च एतत्सकलकर्मणोऽनुष्ठानाभावे स्वर्गादिफलं न भवति। तस्मात् अश्वमेधादि कर्म एवं स्वर्गः अनयोर्मध्ये एतादृशः एको व्यापारः स्वीकरणीयः येन परवर्तिकाले स्वर्गादिसुखं भवेत्। अन्यथा "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिवेदविधिरनर्थकः स्यात्। एतादृशव्यापार एव शुभाशुभकर्मभेदेन धर्माधर्मनाम्ना अभिहितो भवति। तस्यैव साधारणं नाम अपूर्वम् इति। अश्वमेधयज्ञादेरनुष्ठाने कृते स्वर्गादिफलं भवति इत्यवगतौ

---

१. यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥

स्वर्गादिफलमेवमश्वमेधयज्ञादिकर्म इत्यनयोः कार्यकारणभावोपपादकरूपेणापूर्व-कल्पनायाः विषयो भवति। तस्मात् "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिविधि-वाक्यार्थज्ञानात् पूर्वं ज्ञानस्य विषयो भवितुं नार्हति इति धर्माधर्मयोः साधारणं नाम अपूर्वम्। अस्यां स्थितौ अपूर्वनिष्ठ-कर्तव्यत्वं यदि विधिप्रत्ययस्यार्थः तदा विधिवाक्य-जन्यविशिष्टज्ञानसम्पादनात् पूर्वमेव अपूर्वज्ञानं स्वीकर्तव्यम्। "स्वर्गकामोऽश्वमेधेन यजेत" यदेतद्विधिवाक्यम् तन्महावाक्यम्। अर्थात् स्वर्गः काम इत्यादिकतिपय-वाक्यानां समष्टिः। एतादृशमहावाक्येन एकस्य विशिष्टस्य ज्ञानस्य सम्पत्तौ पूर्वं तदन्तर्गतप्रत्येकवाक्यस्यार्थविषयकं ज्ञानमावश्यकम्। इति यजेत इत्यत्र इत इति यः विधिप्रत्ययः तस्यापि प्रथमतः ज्ञानमावश्यकम्। किन्तु यदेतद्विधिवाक्यम् एतस्य वाक्यार्थस्य ज्ञानात्पूर्वमपूर्वस्य ज्ञानं न सम्भवति इति अपूर्वगतकर्तव्यत्वं विधि-प्रत्ययस्यार्थः इति वक्तुं न शक्यते, तथा सति विधिवाक्यार्थस्य विशिष्टज्ञानमसम्भवं स्यात्, तथा सति अपूर्वस्य यत्तत्त्वं तस्यार्थात् अपूर्वत्वस्य पूर्वज्ञानाविषयत्वस्य हानिः स्वीकृता स्यात् विशेषतः निषेधविधिस्थले फलस्याभाववशात् अदृष्टकल्पना नैव स्यात्। "न कलञ्जं भक्षयेत्" इत्येकः निषेधविधिः। किन्तु कलञ्जभक्षणं विना अस्मिन् काले परकाले वा अनिष्टातिरिक्तं किमपि फलं नास्ति। तस्मात् एतादृशस्थले अपूर्वकल्पनायाः आवश्यकता नास्ति। "अहरहः सन्ध्यामुपासीत" अयं नित्यविधिः। यस्य कर्मणो-ऽननुष्ठाने पापं भवति एतादृशं कर्म एव नित्यं कर्म। प्रतिदिनं सन्ध्योपासनां विना पापं जायते। अयमेव विधिवाक्यस्यार्थो भवतीति अयं नित्यविधिः। तस्मात् एतादृश-कर्मणोऽनुष्ठाने किमपि फलं न भवति इति एतादृशस्थले अपूर्वकल्पना न कर्तव्या। अस्यां स्थितौ अपूर्वगतं कर्तव्यत्वं विधिप्रत्ययस्यार्थो न सम्भवति।

किञ्च अश्वमेधयज्ञादौ कर्मगतकर्तव्यत्वमपि विधिप्रत्ययस्यार्थो न स्यात्। यतः विधिवाक्यश्रवणानन्तरमपि नियोज्यपुरुषस्य कदाचित् वैधाश्वमेधादियज्ञकर्मणि विरति-रप्रवृत्तिर्वा दृश्यते। अश्वमेधयज्ञादौ पशुवधः करणीयो भवति इति अप्रवृत्तो भवति। हिंसा सामान्यतः पापजनिका नरकभयभीतस्य नियोज्यस्य पुरुषस्य वैधहिंसायां पापभ्रमे सति हिंसाबहुलवैधकर्मणि प्रवृत्तिर्न भवति। वैधहिंसा वस्तुतः पापजनिका नास्ति, अत एव बोधो भवति यतः भगवान् अर्जुनं केवलहिंसात्मकेऽपि वैधेयुद्धे कर्मणि नियुक्तवान्, तस्मात् अश्वमेधादौ यज्ञे हिंसासत्त्वेऽपि तत्र हिंसा नैव पापजनिका, एतादृशी हिंसा पापजनिका इति ज्ञानं भ्रमः वर्तते। अश्वमेधयज्ञादिकर्मगतं कर्तव्यत्वं यदि विधि-प्रत्ययस्यार्थो भवेत् तदा एतादृशविधिवाक्यश्रवणे नियोज्यपुरुषस्य "अश्वमेधयज्ञः

कर्तव्यः" एतादृशनिश्चयो भवतीति एतादृशवाक्यश्रवणेऽश्वमेधयज्ञादिकार्य्ये कादाचित्की प्रवृत्तिर्न स्यात् अर्थात् कदाचित्प्रवृत्तेरभावः न भवेत्। यतः किमपि कार्यं यदा कर्तव्यत्वेनावगच्छति तदा तादृशकार्ये प्रवृत्तिरवश्यमेव भवेत्, तस्मात् वैधकर्मगतकर्तव्यत्वमपि विधिप्रत्ययस्यार्थो न संभवति। विधिलिङ् आख्यातप्रत्ययान्तर्गतः। तस्मात् विधिप्रत्ययत्वम् एवमाख्यातप्रत्ययत्वमेतदुभावपि विधिप्रत्ययस्य धर्मः। तदा विधिप्रत्ययत्वं विशेषधर्मः एवमाख्यातप्रत्ययत्वं साधारणधर्मः, अभिधानामकशक्तिविशेषः प्रवर्तनाशक्तिर्वा अर्थात् नियोज्यपुरुषस्य कर्मप्रवृत्तेः सम्पादकव्यापारविशेषः विधिप्रत्ययत्वरूपेण विधिप्रत्ययस्य अर्थः एवमुत्पादना कृतिर्वा कर्मणः सम्पादकव्यापारविशेषः अर्थात् भावना वा कर्मविषयकप्रवृत्तिः आख्यातप्रत्ययत्वरूपेण विधिप्रत्ययस्यार्थः। अभिधाशक्तिः विधिप्रत्यये समवेता वा तिष्ठति एवमुत्पादनकृतिः भावना वा नियोज्यपुरुषसमवेता वा वर्तते। वैदिकविधिवाक्यस्थले प्रवर्तकपुरुषस्य विद्यमानत्वाभावेऽपि अर्थात् आज्ञाम्, अनुज्ञादिकं कृत्वा कर्मणि प्रवृत्तं कारयितुमुपयुक्तपुरुषस्य विद्यमानत्वाभावेऽपि नियोज्यपुरुषः वैधकर्मणि प्रवृत्तः दृश्यते। तस्मात् वक्तव्यम् यत् विधिप्रत्ययः स्वीयशक्तिविशेषेणैव नियोज्यपुरुषं वैधकर्मणि प्रवृत्तिं कारयति। सैवाभिधाशक्तिः विधिप्रत्ययसमवेतव्यापारविशेषो वा। विधिवाक्यमेव माम् प्रवर्तयति एतादृशानुभव एव एतादृशशक्तिविशेषस्वीकारे प्रमाणम्। तथा च विधिवाक्यस्थले विधिप्रत्ययसमवेताभिधानाम्नी शक्तिः नियोज्यपुरुषस्योत्पादना वा कृतिः कर्मप्रवृत्तेः प्रयोजिका अर्थात् अनयाऽभिधाशक्त्यैव नियोज्यपुरुषस्य कर्मणि प्रवृत्तिर्जायते इति उत्पादना कृतिरस्या अभिधाशक्तेः प्रयोज्या। अयमाशयः—प्रवृत्तिर्द्विविधा स्वाधीना पराधीना च, पुरुषस्य कदाचित् स्वाधीनभावेन कदाचिच्च पराधीनभावेन प्रवृत्तिर्दृश्यते, यदा पुरुषः किमपि कर्म स्वेष्टसाधनमवगत्य कर्मणि प्रवृत्तो भवति तदा सा प्रवृत्तिः स्वाधीना, यतः कस्मिन्नपि कर्मणि स्वेष्टसाधनत्वावगत्यनन्तरं पुरुषस्य एतत्कर्मविषयिणी चिकीर्षा भवति ततश्च तत्कर्मणि प्रवर्तते पुरुषः, इयं या कर्मप्रवृत्तिः सा स्वाधीनैव। किञ्च पुरुषः अन्यस्य आज्ञादिना यत्कर्मणि प्रवर्तते सा प्रवृत्तिः पराधीना। यथा प्रभोराज्ञया भृत्यस्य कर्मणि प्रवृत्तिः, भृत्यः कर्म स्वोपकारि अनुपकारि वा नावगच्छति अवगन्तुमिच्छामपि न करोति। प्रभुः आज्ञां कृतवान् इति कर्म अवश्यमेव कर्तव्यम् इति विविच्य कर्मणि प्रवृत्तो भवति। एतादृशस्थले प्रभोराज्ञैव प्रवर्तना अर्थात् भृत्यस्य कर्मप्रवृत्तिजनको व्यापारः। स्वर्गकामोऽश्वमेधेन यजेत" "अग्नीषोमीयं पशुमालभेत" इत्यादिविधिवाक्यश्रवणे सति पुरुषस्याश्वमेधयज्ञे पशुवधकर्मणि प्रवृत्तिर्दृश्यते। एतादृशस्थले

प्रवर्त्तकपुरुषस्याभाववशात् यजेत आलभेत इत्यादि "इत पदेषु" इतविधिप्रत्यय एव प्रवर्त्तकः। तथा च प्रवर्तकत्वं, प्रवर्तना एवं प्रवृत्तिः इत्येदुभयमेव विधिप्रत्ययस्यार्थः इति स्वीकर्तव्यम्। यत्र चेतनः प्रवर्त्तकः तत्र प्रवर्त्तकपुरुषस्याज्ञादिकमेव प्रवर्तकम् प्रवर्तनाव्यापारो वा। अचेतनप्रवर्तकविधिप्रत्ययस्थले विधिप्रत्ययस्य शक्तिविशेष एव प्रवर्तकः प्रवर्तनाव्यापारो वा। एतादृशशक्तिविशेष एव विधिप्रत्ययस्याभिधानामकशक्तिः एवं स एव विधिप्रत्यत्वरूपे, विधिप्रत्ययस्यार्थः, एवं नियोज्यपुरुषस्याश्वमेधयज्ञादौ कर्मविषयकप्रवृत्तिराख्यातप्रत्ययत्वरूपेण विधिप्रत्ययस्यैवार्थः। इयं या अभिधाशक्तिः तस्यैव नामान्तरं शाब्दीभावना। भावनाशब्दस्यार्थो भवति येन भवति। भावनामात्रेषु किं केन कथम् इति अंशत्रयं वर्तते। यथा—"स्वर्गकामोऽश्वमेधेन यजेत" इति विधिवाक्यस्थले यजेत इत्यस्य "इत" इति विधिप्रत्ययस्याभिधाशक्त्या किं भवति इति कथने उत्तरमभिहितम्। तेन आर्थी भावना अर्थात् अश्वमेधयज्ञविषयिणी प्रवृत्तिर्भवति। केन भवतीति कथने, तदुत्तररूपेणोच्यते यतोऽयमभिधानामकशक्तिविशेषः विधिप्रत्ययरूपे, विधिप्रत्ययस्यार्थः अर्थात् यतः एतादृशविधिवाक्यस्थले "इत" इतिविधिप्रत्ययस्यार्थः—अभिधानामकशक्तिः। अयमाशयः—विधिवाक्यस्थले प्रवर्तकपुरुषस्याभाववशात् विधिप्रत्ययस्याभिधानामकशक्तिविशेषेणैव वैधकर्मणि नियोज्यपुरुषस्य प्रवृत्तिर्भवति इति पूर्वमेवोक्तम्। विधिप्रत्ययः शब्दमात्रम्। शब्दश्रवणानन्तरमेव कर्मणि प्रवृत्तो न भवति। यदा शब्दार्थस्य ज्ञानं भवति तदैव प्रवृत्तो भवति। भृत्यः प्रभोराज्ञां श्रुत्वैव न प्रवृत्तो भवति कर्मणि। प्रभुः किं वदतीत्यवगत्यैव कर्मणि प्रवृत्तो भवति, तस्मात् प्रवर्त्तकशब्दस्यार्थज्ञानमावश्यकम्। विधिवाक्यस्थले प्रवर्तकपुरुषस्याभाववशात् विधिवाक्यस्यैव कर्मणि प्रवृतिं कारयितुं शक्तिः इत्यवगत्यैव नियोज्यः पुरुषः कर्मणि प्रवृत्तो भवति। अस्यां स्थितौ एतादृशशक्तिविशेषः यदि विधिप्रत्ययस्यार्थो न भवेत्, तदा विधिप्रत्ययेन तस्य ज्ञानं न भवेत्, तस्मात् अभिधानामकशक्तिः विधिप्रत्ययस्यार्थः इत्यवश्यमेव स्वीकर्तव्यम्। कथं भवति इति कथने एतदुत्तररूपेण अर्थवादेनोपस्थितश्रुत्यादिना प्रशंसितरूपेणैव आर्थीभावना कर्मप्रवृत्तिर्वा भवति। अर्थात् एतादृशविधिवाक्यस्थले "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत" इत्याद्यर्थवादेनैव प्रशंसितरूपेणैव अश्वमेधयज्ञे प्रवृत्तिर्जायते। आर्थीभावनायामपि अंशत्रयं वर्तते। आर्थीभावनया किं भवतीत्येतस्य उत्तररूपेण उच्यते तदिदं वैधकर्म भवति। अर्थात् "स्वर्गकामोऽश्वमेधेन यजेत" एतादृशविधिवाक्यस्थले आर्थीभावनया अश्वमेधयज्ञविषयकप्रवृत्त्या वा अश्वमेधयज्ञस्वरूपं कर्म भवति। केन भवतीत्यस्य प्रश्नस्योत्तरे शाब्दी-

भावनया प्रवृत्तिर्भवतीत्युच्यते। अर्थात् अत्रोच्यते "इत" इति विधिप्रत्ययस्याभिधानामक-शक्तिविशेषेणैवाश्वमेधयज्ञविषयकप्रवृत्तिर्भवति। केन प्रकारेण भवतीत्यस्य प्रश्नस्योत्तररूपेण उच्यते यत् प्रधानयज्ञस्याङ्गीभूतयज्ञादिकर्मणा विशेषितो भूत्वा भवति। अर्थात् अत्रोच्यते यत्——प्रयाजप्रभृतिकतिपययज्ञेन विशेषितो भूत्वैव अश्वमेधयज्ञादिकं सम्पूर्णतां याति। अस्यां स्थितौ अभिधानामकशक्तिविशेष एव विधिप्रत्ययस्य अर्थः, अयं मीमांसकविशेषस्याभिप्रायः ॥११॥

असत्त्वादप्रवृत्तेश्च नाभिधापि गरीयसी।
बाधकस्य समानत्वात् परिशेषो हि दुर्घटः ॥१२॥

विधिप्रत्ययसमवेताभिधानामकशक्तिविशेषस्वीकारे प्रमाणं नास्ति। यतः शब्दे-नैवार्थस्य ज्ञानमेवं तुल्यशब्दान्तरमात्रमेव भवति। तेन अन्यस्य कस्यापि वस्तुनः उत्पत्तिर्न सम्भवति। विधिप्रत्ययोऽपि शब्दः, तस्मात् विधिप्रत्ययेन नियोज्यपुरुषस्य यज्ञादौ प्रवृत्तिरसम्भवा। विशेषतः स्वाधीनप्रवृत्तिस्थले इष्टसाधनताज्ञानमेवं चिकीर्षा-दिकमेव प्रवृत्तेः कारणम्। एतस्य चोभयवादिसिद्धत्वात् पराधीनप्रवृत्तिस्थलेऽपि एता-दृशक्लृप्तकारणेनैवार्थात् इष्टसाधनताज्ञानेनैव चिकीर्षादिना वा कर्मणि प्रवृत्तिर्जायते इत्येव स्वीकर्तव्यम्। प्रभोराज्ञया भृत्यस्य कर्मप्रवृत्तिरेव पराधीनप्रवृत्तेः प्रसिद्धस्थलम्। एतादृशस्थलेऽपि भृत्यः प्रभोरिष्टं स्वेष्टं विविच्य प्रभोः कर्मणः चिकीर्षुः भवति एवं तेनैव प्रभोः कर्मणि नियुक्तः प्रवृत्तो वा भवति। अस्यां स्थितौ "स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिविधिवाक्यस्थलेऽपि विधिप्रत्ययेनैव प्रथमतः वैधकर्मणि नियोज्यपुरुषस्य इष्टसाधनतायाः एवं कर्तव्यताया वा ज्ञानं भवति, अनन्तरं वैधकर्मचिकीर्षा ततः वैध-कर्मणि प्रवृत्तिर्भवति। तस्मात् अभिधानामशक्तिविशेषस्वीकारोऽनावश्यकः।

किञ्च अभिधानामकशक्तिविशेषस्य ज्ञाने सत्येव वैधकर्मणि प्रवृत्तो भवति इति वक्तुं न शक्यते, यतः——"अभिधा" इति शब्देनापि अभिधानामकशक्तिविशेषस्य ज्ञानं भवतीति "अभिधा" इति शब्दश्रवणानन्तरमपि वैधकर्मणि प्रवृत्तिः स्यात्, किन्तु तथा न भवति। तथा च अष्टमकारिकोक्तस्य एवं द्वादशकारिकोक्तस्य बाधकस्य सद्भावात् कर्तृधर्मः किम्वा कारणस्य धर्मः विधिप्रत्ययस्य अर्थः वक्तुं न शक्यते, तादृशप्रमाणाभावस्वरूपस्य एवं प्रवृत्त्यभावस्वरूपस्य बाधकस्य सद्भावात् विधिप्रत्ययसमवेताभिधानामकशक्तिविशेषोऽपि विधिप्रत्ययार्थो वक्तुं न शक्यते। तस्मात् एतस्मिन् पक्षेऽपि बाधकस्य समानत्वात् अर्थात् विधिप्रत्ययस्य अर्थरूपे अभिधानामकशक्तिविशेषस्य सिद्धान्तो भवितुं नार्हति।

विधिप्रत्ययार्थसम्बन्धे प्राचीननैयायिकाभिमतपक्षस्योत्थापनं क्रियते—कस्मिन्नपि कर्मणि इष्टसाधनताज्ञानानन्तरं तत्कर्मचिकीर्षा भवति, ततश्च कर्मणि प्रवृत्तिर्जायते। अस्यामवस्थायामिष्टसाधनताज्ञानं चिकीर्षायाः कारणमेवमिष्टसाधनता चिकीर्षा चेत्येतदुभयं प्रवृत्तेः कारणम्। विधिवाक्यश्रवणे नियोज्यपुरुषः वैधकर्मणि प्रवृत्तो भवति। तथा च विधिप्रत्ययेन प्रथमतः वैधकर्मणि इष्टसाधनताज्ञानं भवति, अनन्तरं वैधकर्मचिकीर्षा, ततश्च वैधकर्मणि प्रवृत्तिर्भवति इत्येव स्वीकरणीयम्। तस्मात् प्रथमोपस्थितत्वादिष्ट-साधनतैव विधिप्रत्ययस्यार्थः। "स्वर्गकामोऽश्वमेधेन यजेत" एतद्विधिवाक्यम् वेदपाठेन ज्ञायते यतः अश्वमेधयज्ञकरणेन स्वर्गो भवति। तस्मात् अश्वमेधयज्ञस्थले स्वर्ग एव नियोज्यपुरुषस्य इष्टम् आकाङ्क्षितं फलम्। एतादृशविधिवाक्यश्रवणानन्तरं प्रथमतः नियोज्यपुरुषस्याश्वमेधयज्ञस्वरूपकर्मणि स्वर्गस्वरूपेष्टस्य साधनताज्ञानम् अर्थात् अश्वमेध-यज्ञसम्पादनेन अभिलषितस्वर्गो भवति इति निश्चयोऽनन्तरं कर्मचिकीर्षया अश्व-मेधादियज्ञस्वरूपकर्मणि प्रवृत्तिर्भवति। तस्मात् प्रथमोपस्थितत्वात् इष्टसाधनत्वमेव (स्वर्गसाधनत्वमेव) अत्र "इत" इति विधिप्रत्ययस्यार्थः ॥१२॥

हेतुत्वादनुमानाच्च मध्यमादौ वियोगतः।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः ॥१३॥

विधिवाक्यस्थले वैधकर्मणि इष्टसाधनत्वमनुमेयम् अर्थात् विधिवाक्यश्रवणानन्तरं कर्मणः वैधत्वावगतौ कर्मणो वैधत्वात् इष्टसाधनमिति अनुमानप्रमाणेन कर्म इष्टसाधन-मित्यनुमितिर्भवति। तस्मात् इष्टसाधनत्वस्य आक्षेपेणानुमानेन वा लभ्यत्वात् विधि-प्रत्ययस्यार्थो न भवितुमर्हति। विशेषतः तथा स्वीकारे सिद्धसाधनरूपो दोषोऽपि सम्भवति। अयमाशयः—"स्वर्गकामोऽश्वमेधेन यजेत" एतदेकं विधिवाक्यम्, एतादृशविधिवाक्यश्रवणानन्तरमश्वमेधयज्ञे विधिप्रत्ययार्थे ज्ञाते, अश्वमेधयज्ञस्य वैधकर्मत्वात्, तेन अश्वमेधयज्ञे इष्टसाधनत्वमनुमितं भवति। अर्थात् वैधकर्मत्वादेवाश्वमेधयज्ञः इष्टस्य साधनमुपकारी वा इत्येतादृशमनुमानं भवति। तस्मादिष्टसाधनत्वं साध्यमेवं विधि-प्रत्ययार्थः हेतुर्ज्ञापको वा इत्येव फलतः स्वीकरणीयम्। अस्यां स्थितौ इष्टसाधनत्वं यदि विधिप्रत्ययस्य अर्थो भवेत्तदा स्वस्यैव स्वहेतुत्वं ज्ञापकत्वम् (अनुमापकत्वं) वा वक्तव्यम्—तस्मात् इष्टसाधनत्वस्वरूपहेतुना इष्टसाधनत्वस्य साधनं क्रियते इति सिद्धसाधनदोषो भवति। अनुमितेः पूर्वं हेतुज्ञानमावश्यकमिति सर्वत्रानुमानस्थले हेतोः प्रसिद्धत्वमावश्यकम्। अस्यां स्थितौ हेतुः साध्यं भवितुं नार्हति, यतः—यद्धि अज्ञातम् एवमवगन्तुमुपयुक्तं तदेव साध्यम् भवति, होतोश्च प्रसिद्धत्वात्, ज्ञातत्वाद्वा तत्र

साध्यता स्थातुं न शक्नोति, अयमेव दोषः । अर्थात् विधिप्रत्ययेनाश्वमेधयज्ञादिकर्मणि इष्टसाधनत्वमवगत्य पुनः अनुमानेन तदवगतेरावश्यकता न तिष्ठति इति पूर्वोक्तरूपमनुमानं निष्फलं भवति । अपि च तरति मृत्युं तरति ब्रह्महत्यामित्याद्यनेकवेदवाक्यमुपलभ्यते । अनेन सकलेन वेदवाक्येन केवलं फलमेवोक्तं भवति । अनेन वाक्येन केनोपायेन ब्रह्महत्यापापात् किम्वा मृत्योः अव्याहतिर्भवेत् इति सम्यग्वक्तुं न शक्यते । तस्मात् संशयो भवेत् वेदः असम्पूर्ण एव । किन्तु वेदः सर्वज्ञेश्वरवाक्यम्, सर्वज्ञः फलं जानाति उपायं न जानाति इति त्वसम्भवमेव । ईश्वरः लोकहितार्थमेव वेदमुक्तवान्, तेन फलमुक्त्वा उपायगोपनं कृतमिति तु न सम्भवति । तस्मात् वक्तव्यम्—अध्ययनाध्यापनशैथिल्यात् कतिपयवेदांशानाम् विलोपः सञ्जातः । एतादृशस्थले लुप्तवेदस्यानुमानं क्रियते । अर्थात् मृत्युब्रह्महत्यासंतरणकामोऽश्वमेधेन यजेत एतादृशस्य वेदवाक्यस्य अनुमानं करणीयम् इति सर्वे स्वीकुर्वन्ति । किन्तु इष्टसाधनत्वं यदि विधिप्रत्ययस्यार्थो भवेत्तदा तरति मृत्युं तरति ब्रह्महत्यामित्याद्यर्थवादेनैव अश्वमेधादियज्ञे मृत्योः सन्तरणस्वरूपस्य ब्रह्महत्यया सन्तरणस्वरूपस्येष्टसाधनताज्ञानस्य लाभो भवति, अतस्तदर्थमेतादृशविधिवाक्यानुमानस्यावश्यकता न भवेत् । तस्मात् इष्टसाधनत्वादन्य एव विधिप्रत्ययस्यार्थं इत्यवश्यमेव स्वीकरणीयम् । विशेषतः अश्वमेधयज्ञे मृत्योः ब्रह्महत्यायाश्च सन्तरणरूपेष्टसाधनत्वं तरति मृत्युं तरति ब्रह्महत्यामित्याद्यर्थवादेनैव लभ्यमिति एतादृशेष्टसाधनत्वमनुमितस्य मृत्यु—ब्रह्महत्यासन्तरणकामोऽश्वमेधेन यजेत" इति विधिवाक्यान्तर्गतस्य "इत" इति विधिप्रत्ययस्यार्थः न भवितुमर्हति यतः यद्धि अनन्यलभ्यम् अर्थात् अन्येन ज्ञातुमनुपयुक्तं तदेव शब्दस्य शक्यार्थो भवितुमर्हति । किमपि वस्तु पुनः पुनः निश्चयरूपेण यदि ज्ञातम् भवति तदा तस्य वस्तुनः ज्ञानं दृढं भवति । यदा ज्ञानं दृढं भवति तदा वस्तु शीघ्रमेव स्मृतिपथमायाति । तस्मात् ज्ञानस्य दृढतायै ज्ञातवस्तुनोऽपि ज्ञानार्थमाकांक्षा भवेत् । अथ वा वस्तु कस्यापि वस्तुनः प्राथमिकज्ञाने अप्रामाण्याशङ्का अर्थात् ज्ञानं भ्रमो न वा ? इत्येतादृशसंशयः स्वाभाविकः । तस्मात् प्राथमिकज्ञानेऽप्रामाण्याशङ्कानिवारणार्थं वस्तुनः पुनरपि ज्ञानार्थमाकांक्षा जायते । एतादृशस्थितौ सिद्धवस्तुनः साधनं न दोषावहम् । अर्थात् सिद्धमपि वस्तु साध्यं भवितुमर्हति । तस्मात् विधिप्रत्ययेन प्रथमतः वैधकर्मणि इष्टसाधनत्वज्ञाने जातेऽपि पुनरपि अनुमानप्रमाणेन वैधकर्मणि इष्टसाधनत्वानुमितिर्नैव दोषावहा । अत एव दोषान्तरोद्भावनं क्रियते—यथा आज्ञायाः अध्येषणादेश्च अर्थबोधस्थले विधिप्रत्ययेन इष्टसाधनत्वज्ञानं न भवति इति इष्टसाधनत्वं विधि-

प्रत्ययस्यार्थोऽपि न भवितुमर्हति । अयमाशयः—"स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिविधिवाक्यस्थले "इत" इति विधिप्रत्ययेन इष्टसाधनत्वज्ञानस्य कथञ्चित् स्वीकारेऽपि मध्यमोत्तमपुरुषविधिप्रत्ययस्थले अर्थात् "कुर्य्याः" "कुर्याम्" इत्यादिपदस्य यात् एवं याम् इत्यादिविधिप्रत्ययस्थले विधिप्रत्ययेन वक्तुः आज्ञायाः एवं संकल्पादेश्च ज्ञानं भवतीति इष्टसाधनत्वं सकलस्य विधिप्रत्ययस्यार्थो न भवितुमर्हति । विशेषतः "न कलञ्जं भक्षयेत्" इत्यादिनिषेधवाक्यस्थले भक्षयेत् इत्यत्र यात् इति विधिप्रत्ययेन इष्टसाधनत्वज्ञानं न भवितुमर्हति । यतः तथा सति एतादृशविधिवाक्येन कलञ्जभक्षणे इष्टसाधनत्वस्य निषेधावगतिः स्यात् किन्तु कलञ्जभक्षणमाशुतृप्तिकरमर्थात् मुखरोचकमिति तत्र सामान्यतः इष्टसाधनत्वस्य अभाव इति बोधयितुं "न" इति निषेधवाचकं पदं न समर्थम् । अयमाशयः—न भक्षयेत् इति कथने भक्षणे सामान्यतः "यात्" इति विधिप्रत्ययार्थस्य अभाव एव "न" शब्देन अवगम्यते । किन्तु कलञ्जभक्षणमापाततः तृप्तिसाधनमिति तत्र सामान्यतः इष्टसाधनत्वस्याभावः बाधितः, तस्मात् "न" इति निषेधवाचकशब्देन कलञ्जभक्षणे सामान्यतः इष्टसाधनत्वस्य अभावः नावगम्यते तस्मात् इष्टसाधनत्वं विधिप्रत्ययार्थो नास्ति ॥ १३ ॥

विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।
अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपेयता ॥ १४ ॥

कर्मकर्त्तुः नियोज्यपुरुषस्य धर्मः स्पन्दः यत्नप्रभृतयः एवं यज्ञादिकर्मणः धर्मः—कर्तव्यत्वमेवं विधिप्रत्ययस्य धर्मः अभिधानामकशक्तिविशेषः विधिप्रत्ययस्यार्थो भवितुं नार्हति इति पूर्वविचारेणैव प्रतिपाद्य आचार्यः स्वमतं प्रतिपादयति—प्रवृत्तेः हेतुभूतेष्टसाधनत्वस्य एवं निवृत्तेः हेतुभूतद्विष्टसाधनत्वस्य अर्थात् गुरुतरदुःखजनकत्वस्य मनने अनुमापकः वक्तुरभिप्राय एवाचार्यस्य मते विधिप्रत्ययस्य अर्थः । यतः मध्यमोत्तमपुरुषस्य विधिप्रत्ययस्थले विधिप्रत्ययेन आज्ञायाः, संकल्पस्वरूपस्य वक्तुः अभिप्रायस्य वा संकल्पविशेषस्यैव ज्ञानं भवति । तस्मात् यजेत इत्यादेः "इत" इति पुरुषस्य विधिप्रत्ययस्थलेऽपि विधिप्रत्ययेन वक्तुरभिप्राय एव विधिप्रत्ययस्यार्थः इति कथने न कोऽपि दोषः । तस्मात् सर्वत्र वक्तुरभिप्राय एव विधिप्रत्ययस्यार्थः । "स्वर्गकामोऽश्वमेधेन यजेत" इदमेकं विधिवाक्यम्, एतस्य विधिवाक्यस्य श्रवणे नियोज्यः पुरुषः प्रथमतः अवगच्छति यत् स्वर्गकामिपुरुषस्य अश्वमेधयज्ञकरणमाप्तपुरुषाभिप्रेतम् । एवं "न कलञ्जं भक्षयेत्" एतादृशनिषेधवाक्यश्रवणे सति श्रोता प्रथमतः अवगच्छति यत् कलञ्जभक्षणमाप्तपुरुषाभिप्रेतं नास्ति । अर्थात् सर्वत्र विधिवाक्यस्थले प्रथमतः

आप्तपुरुषाभिप्रायावगतिरपेक्षिता अनन्तरं यतः अश्वमेधादियज्ञकरणं वक्तुराप्तपुरुषस्य अभिप्रेतम्, तस्मात् एतत्सकलं कर्म नियोज्यपुरुषस्याभीष्टं स्वर्गस्य साधनम्वा। एतादृशानुमानेन अश्वमेधयज्ञादिकर्मणि इष्टसाधनत्वज्ञानानुमितिः भवति। एवं निषेध-वाक्यस्थले यतः कलञ्जभक्षणं कर्म वक्तुराप्तपुरुषस्याभिप्रेतं नास्ति, तस्मादेव एतत्सकलं कर्म गुरुतरदुःखजनकम् इत्यादिरूपानुमानप्रमाणेन निषिद्धकलञ्जभक्षणादिकर्मणि गुरुतरदुःख-जनकत्वस्य ज्ञानं भवति। एवमेतादृशमननेन वैधकर्मणि प्रवृत्तिरेवं निषिद्धकर्मणि निवृत्ति-र्भवति आचार्यमते एतदेव वैशिष्ट्यम्। वेदः वाक्यसमष्टिः वाक्यं च नित्यं भवितुं नार्हति तस्मात् वेदः अनित्यः इति वेदस्य वक्ता अवश्यमेव स्वीकर्तव्यः। आचार्यमते सर्वज्ञः ईश्वर एव वेदस्य वक्ता तस्मात् वेदविधिर्वक्ता कोऽपि नास्तीति आशङ्का न भवितुमर्हति इति सर्वज्ञेश्वराभिप्राय एव वैदिकविधिप्रत्ययस्यार्थः। वस्तुतः आचार्यमतं संगतं न वेति विशेषप्रणिधानयोग्यम्। यतः ईश्वरज्ञानं यथा सर्वविषयकन्तथैव ईश्वरस्येच्छापि सर्व-विषयिणी किमपि कार्यमीश्वरेच्छां विना न भवति, अन्यथा तस्य सर्वनियन्तृत्वं न स्यात्। समुदायकार्ये ईश्वरस्य क्षमता नास्ति, इति पूर्वपक्षमुद्भाव्य तृतीयस्तवकस्य चतुर्थकारिका-यामाचार्यः ईश्वरस्य सर्वनियन्तृत्वं साधितवान्। तामसभावापन्नः पुरुषः कलञ्जभक्षणे प्रवृत्तः दृश्यते। सात्त्विकोऽपि पुरुषः भ्रमप्रमादादिवशतः कदाचित् निषिद्धकर्माचरणं करोति इति प्रत्यक्षमेव। तस्मात् कलञ्जभक्षणादिनिषिद्धकर्मण्यपि ईश्वरेच्छा निहिता वर्तते इत्यवश्यं स्वीकार्यम्। अस्यां स्थितौ एतत्सकलकर्मकरणमीश्वराभिप्रेतं नास्ति इति वक्तुं न शक्यते। तस्मात् "न कलञ्जं भक्षयेत्" एतादृशनिषेधवाक्यश्रवणे सति कलञ्जभक्षणम् ईश्वराभिप्रेतं नास्ति एतादृशयथार्थज्ञानं न भवितुं नार्हति। एतादृश-वाक्यश्रवणे सति अभिज्ञजनः कलञ्जभक्षणादिकर्मणि विरतो जायते। तस्मात् "न" इति निषेधवाचकशब्देन "भक्षयेत्" एतस्य अंशभूतेन "यात्" इति विधिप्रत्ययेन गुरुतरदुःखजनकत्वस्यैव ज्ञानं भवति, अर्थात् कलञ्जभक्षणं यदि करोति तदा भाविगुरुतरदुःखं स्यादित्येवाभिज्ञः श्रोता अवगच्छति तस्मात् गुरुतरदुःखजनकत्वस्या-भाव एवैतादृशविधिवाक्यस्थले विधिप्रत्ययस्यार्थः। अयमाशयः—गुरुतरदुःखजनन-कत्वाभावस्याभावः गुरुतरदुःखजनकत्वम् इति विधिप्रत्ययस्यार्थस्य निषेधस्वरूपः, तस्मात् गुरुतरदुःखजनकत्वस्याभाव एवात्र विधिप्रत्ययस्यार्थः। एवमेव "जलं न ताडयेत्" इत्यादिस्थले इष्टसाधनत्वमेवं पङ्गुः समुद्रं न लङ्घयेत्" इत्यादिस्थले कर्तव्यत्वमेव विधिप्रत्ययस्यार्थः। एवमेव "तृप्तिकामो जलं न ताडयेत्" इत्यादिस्थले "न" इत्येत-न्निषेधबोधकशब्देन विधिप्रत्ययस्य अर्थः तृप्तिजनकत्वस्य निषेध एव ज्ञातो भवति

तस्मात् एतादृशस्थले तृप्तिस्वरूपं यदिष्टं तज्जनकत्वमेव अर्थात् इष्टसाधनत्वमेव विधिप्रत्ययस्यार्थः। एवमेव पङ्गुः समुद्रं न लङ्घयेत् इत्यादिस्थले "न" इति निषेधबोधकशब्देन कर्तव्यत्वस्य निषेध एव ज्ञातो भवति, तस्मात् कर्तव्यत्वमेव एतादृशस्थले विधिप्रत्ययस्यार्थः। अस्यां स्थितौ गुरुतरदुःखजनकत्वस्याभावः इष्टसाधनत्वमेव कर्तव्यत्वमेतत्त्रितयमेव विधिप्रत्ययस्यार्थः इत्येव युक्तियुक्तमिति मन्तव्यम्। मध्यमोत्तमपुरुषस्थलेऽपि वक्तुराज्ञा संकल्पादिकम्वा विधिप्रत्ययस्यार्थो नास्ति एतादृशस्थले यथासम्भवं गुरुतरदुःखजनकत्वाभावः इष्टसाधनत्वमेव कर्तव्यत्वम् एषु एक एव कश्चिद्विधिप्रत्ययस्यार्थो भवेत् ॥१४॥

कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः।
स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ॥१५॥

अस्मिन् स्तवके प्रथमश्लोकस्य व्याख्यायामीश्वरसाधकहेतुरूपेण अर्थात् अनुमानप्रमाणरूपेण वेदः उक्तः, किन्तु शब्दप्रमाणरूपेणापि वेदवाक्यमीश्वरस्य साधकं ज्ञापकम्वा भवति सम्प्रति तदेवोच्यते—श्रुतिशब्दस्य वेदत्वमर्थः तथा च वेदः, पौरुषेयः, वेदत्वात्, एतादृशानुमानेन पूर्वमीश्वरसिद्धिः कृता साम्प्रतं श्रुतिशब्दस्य श्रुतिवाक्यमित्यर्थस्वीकारेऽपि श्रुतिवाक्यैनैवेश्वरसिद्धिर्भवितुमर्हति। वेदान्तः उपनिषद् वा ब्राह्मणम् कर्मकाण्डम् वा मन्त्रः संहिता वा यावन्तो वेदविभागा सन्ति सर्वत्रैव परमेश्वरः कथितोवर्तते। ब्राह्मणभागे "यज्ञो वै विष्णुः" पश्यत्यचक्षुः शृणोत्यकर्णः इत्यादि। उपनिषद्भागे "एतस्य वा प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः" इत्यादि। संहिताभागे यज्ञपुरुषरूपेण ईश्वरः उक्तः। इदं विष्णुर्विचक्रमे इत्यादि सहस्रशीर्षा पुरुषः इत्यादि। अन्यत्रापि "ईश्वरमुपासीत"। एतत्सकलं वाक्यं निरर्थकं नास्ति। यतः—यथा स्वर्गकामोऽश्वमेधेन यजेत" इत्यादिस्थलेषु स्वर्गकामः इति पदस्यार्थवादत्वेऽपि अश्वमेधेन यजेत इति विधिवाक्येन सह एकवाक्यतावशात, स्वर्गकामः इति शब्दस्य स्वर्गफलाकांक्षिपुरुषस्वरूपार्थे प्रामाण्यं स्वीकर्तव्यम् तथैव यज्ञो वै विष्णुः इत्यादिश्रुतिवाक्यस्यार्थवादत्वेऽपि ईश्वरमुपासीत इति विधिवाक्येन सहैकवाक्यतावशात् विष्णुपदस्य स्वार्थे प्रामाण्यं स्वीकर्तव्यम्। अयमाशयः—अश्वमेधेन यजेत इतिविधिवाक्यश्रवणे सति श्रोतुर्जिज्ञासा स्वाभाविकी कोऽश्वमेधेन यजेत ? एतदुत्तरे स्वर्गकामी इत्युत्तरवाक्यकथने श्रोतुर्जिज्ञासायाः निवृत्तिर्भवति। तस्मात् स्वर्गकामः इति वाक्यम् अश्वमेधेन यजेत इति वाक्येन उत्थापिताकांक्षायाः निवर्तिका इति स्वर्गकामोऽश्वमेधेन यजेत इति एकं महावाक्यम्। तस्मात् स्वर्गकामः इति वाक्यस्यार्थवादत्वेऽपि अश्व-

मेंघेन यजेत इति वाक्येन सह मिलितरूपेण एतस्य सार्थकता वर्तते, तथैव ईश्वर-मुपासीत इति विधिवाक्यश्रवणानन्तरं नियोज्यपुरुषस्य जिज्ञासा स्वाभाविकी—ईश्वरः कः ? एतदुत्तरे यज्ञो वै विष्णुः इति कथिते एतादृशजिज्ञासायाः निवृत्तिर्भवति । तस्मात् यज्ञो वै विष्णुरिति वाक्यस्यार्थवादत्वेऽपि ईश्वरमुपासीत एतद्वाक्येन सह मिलितरूपेण अर्थात् एकवाक्यतारूपेण तस्य सार्थकता वर्तते, तस्मात् स्वार्थप्रतिपादनेनापि वेदवाक्य-मीश्वरबोधकम् ॥१५॥

स्यामभूवं भविष्यामीत्यादौ संख्या प्रवक्तृगा ।
समाख्यापि च शाखानां नाद्यप्रवचनादृते ॥१६॥

एतत्स्तवकस्य प्रथमश्लोकस्य व्याख्यायामनुमानस्य हेतुरूपे संख्या ईश्वरसिद्धिं प्रतिपादयति, किन्तु संख्यायां संख्याविशिष्टरूपेऽपि ईश्वरः सिद्धो भवितुमर्हति इत्येवोच्यते, स्याम्, इत्याद्युत्तमपुरुषस्य प्रयोगस्थले आख्यातप्रत्ययेन वक्तुः संख्या उक्ता, अहं स्यामिति कथने "याम्" इत्याख्यातप्रत्ययेन यथा वक्तुः संख्या अवगम्यते तथैव अहं बहु स्यां प्रजायेयमिति वैदिकोत्तमपुरुषस्य प्रयोगस्थलेऽपि आख्यातप्रत्ययेन वेदवक्तुः संख्याया एव ज्ञानं भवति । तस्मात् एतादृशस्थले आख्यातप्रत्ययस्यार्थः संख्या तद्विशिष्टोऽथ वा संख्येयवेदवक्ता इत्यवश्यमेव स्वीकरणीयम् । स एव च सर्वज्ञः ईश्वरः । किञ्च वेदस्य शाखासकलस्य समाख्यसंज्ञाया वापि वेदस्य वक्ता स्वीकरणीयः । यतः शाखासकलस्य कौथमीकाठकादिसंज्ञा वक्तुः नामानुसारमेव भवतीति ईश्वरस्य सिद्धिर्भवति अनया संज्ञयापि एतत्सकलसंज्ञा अध्यापकप्रभृतेः नामानुसारं न भवति यतः असंख्य-विद्यार्थिनः भिन्ने भिन्ने समये एकपुरुषस्य निकटे एव अध्ययनं कुर्वन्ति इति न सम्भवति । तस्मात् अवश्यमेव स्वीकर्तव्यम् यत् परमकारुणिकः भगवान् प्रथमतः काठकादिरूपे-ऽवतीर्णः सन् शाखासकलमुक्तवान् । सर्वमङ्गलनिधानभूतः भगवान् अवश्यमेव वर्तते अत एव भगवतः मननरूपोपासनाकार्ये व्याप्तः सन् जीवनयापनं मनुष्यमात्रस्य कर्तव्यम् ॥१६॥

ईश्वराविश्वासिनं प्रति उच्यते ।

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारनीया नराः ॥ १७ ॥

एवं श्रुतिस्मृत्यादिना प्रक्षालितेऽपि यस्य हृदये तव स्थानं नास्ति अर्थात् तव सत्तायां विश्वासो नास्ति, सत्यमेव तस्य चेतः शैलवत्कठिनम्। किन्तु, हे कारुणिक! यद्यपि ते नानारूपेण प्रतिकूलाचारपरायणास्तथापि तव कारुणिकतयैव ते अवश्यमेव उद्धारयोग्याः इति ॥ १७ ॥

ईश्वरविश्वासिनं प्रत्युच्यते—

अस्माकन्तु निसर्गसुन्दर चिराच्चेतो निमग्नंत्वयी-<br>
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते।<br>
तन्नाथ त्वरितं विधेहि करुणां येन त्वमेकाग्रतां<br>
याते चेतसि नाप्नुयाम शतशो याम्याः पुनर्यातनाः ॥ १८ ॥

इति पञ्चमस्तवकः।



# न्यायकुसुमाञ्जलिः

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥१॥

आमोदः

आमोदैः परितोषिताः परिषदः प्रत्येकमाशाभृतां 5
सान्द्रैः पिञ्जरिताः परागपटलैराशावकाशा दश ।
आहूता मकरन्दबिन्दुनिकरैः पुष्पन्धयश्रेणयो
येनाकारि[?] स वः पुनातु नटतः शम्भोः प्रसूनाञ्जलिः ॥

प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयसम्बन्धमभिदधान एवेष्टदेवताकीर्तनरूपंमङ्गल-
माचरन्नाह—सत्पक्षेति । एष ममानघन्यायप्रसूनाञ्जलिः सतां मुमुक्षूणां 10
सुधियां वा चेतो रमयतु सुखयतु दुःखनिदानहीनं करोतु । अनघो निर्दोषः ।
न्यायः पञ्चरूपोपेतलिङ्गप्रतिपादकं वाक्यजातं तादृशवाक्यप्रतिपाद्यं लिङ्ग-
जातञ्च, नीयतेऽभिमतसिद्धिरनेनेति योगबलात् । तदेवाह्लादकत्वात् प्रसूनं,
तेषामेव बहूनामञ्जलिरिवाञ्जलिः समूहः । अनघत्वमेवाह—सदिति । सति
प्रामाणिके पक्षे प्रसरः प्रकृष्टं ज्ञानं प्रमारूपं यस्मात् यस्य वा, तेनाश्रया- 15
सिद्धिभागासिद्धिस्वरूपासिद्धिसिद्धसाधनानां निरासः । व्याप्यत्वासिद्धि-
व्यभिचारविरोधान् परिहर्तुमाह—परिमलेति । सतां परिमलप्रोद्बोधेन
व्याप्तिनिश्चयेन बद्ध उत्पादित उत्सवो येन स तथा । असत्प्रतिपक्षितत्व-
माह—विम्लान इति । समबलत्वाभिमतोपस्थाने न विम्लानः न हीन-
बलः । न्यायस्य प्रयोजनमाह—अमृतेति । अमृतं मोक्षस्तस्य रसोऽभिला- 20
षस्तदधीनेच्छाविषये मोक्षोपाये निदिध्यासने साक्षात्कारे च प्रणिधानं
प्रस्यन्दः स एव माध्वीकं तस्य भूरुत्पत्तिस्थानम् । अमृतरसो रस्य-
मानममृतम् "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् ।

तदेव प्रस्यन्द उत्पत्तिस्तदेव माध्वीकं तस्य भूरुत्पत्तिस्थानम्। एतस्मा-न्न्यायान्मनने सति मुक्तिरिति भवति प्रयोजनवान् न्यायः। अमृतं मोक्ष-स्तस्य रस इच्छा तस्य प्रस्यन्द उत्तरोत्तरानुवृत्तिस्तदेव माध्वीकं तस्य भूरित्यन्यः। भवति हि यथा यथा सन्निहितोपायप्राप्तिस्तथा तथा फलोत्-
5 कण्ठोद्रेक इति तेषामाशयः। न्यायान्मनने सति संक[शङ्क ?] सुकृतानिवृत्तौ निर्भरं निदिध्यासनादावासङ्गो न्यायप्रयोजनं, फलेच्छाया उपायेच्छां प्रति हेतुत्वात्। **ईश्यस्येति**। ईशः कर्ता तस्य पदयुगं स्थानद्वयं जीवात्म-स्वरूपं परमात्मस्वरूपं च, तत्र निवेशितः, तत्साधनाय प्रयुक्तः "द्वे ब्रह्मणी वेदितव्ये" इति श्रुतेः। पद्यतेऽनेनेति पदं प्रमाणं, तद्युगमनुमाना-
10 गमरूपं वा, संवादार्थमागमस्यापि दर्शनीयत्वात्। तर्कानुमानरूपं वा पद-युगम्। अन्वयव्यतिरेकानुमानरूपं वा। वेदकर्तृत्वक्षितिकर्तत्वानुमानद्वय-रूपं वा। चरमलिङ्गपरामर्शानुमितिरूपं वा पदयुगं, ज्ञानद्वयम्। तदर्थं निवेशितः प्रतिज्ञाद्यानुपूर्व्या प्रयुक्तः। निमित्तसप्तम्याः प्रयोगः। **भृङ्गाय-माणमिति**। भृङ्ग इव आत्मानमाचरत्। यथा कुसुमलुब्धा भृङ्गास्तथा
15 न्यायलुब्धं चेतः। अतएव भ्रमत् मोक्षोपायं न्यायमनुसरत्।

कुसुमपक्षे तु सत्पक्षो विदग्धानुकूलः प्रसरो विकाशो यस्य। सतां विदग्धानां, परिमलः सौरभविशेषः, तस्य प्रोद्बोध उत्कर्षस्तेन बद्ध उत्सवो येन। नित्यसापेक्षत्वात् समासः। विमर्दने करसंश्लेषे न विम्लानो न मालिन्यावस्थां गतोऽमृतरसवत् प्रस्यन्दमानं यन्माध्वीकं मधु तस्य भूः
20 स्थानम्। ईशस्य धातुः परमेश्वरस्य वा ॥१॥

बोधनी

विशदयितुमर्थतत्त्वं विनिहन्तुं चान्तरीयसन्तमसम्।
मम मनसि सन्निधत्तां नरहरिशबलाकृति ज्योतिः ॥ १ ॥

विश्वं यो विदधात्यदृष्टसचिवः सत्सम्प्रदायो यतः
प्रामाण्यं लभते श्रुतिर्गुणवतो वक्तुर्यतो नान्यतः।
25 यस्मिन् बाधकशङ्कयापि विगतं-माता च मानं च यः
सिद्धो यः श्रुतिनीतिसम्प्लवशतैस्तं मन्महे मानतः ॥ २ ॥

औदयने पथि गहने विदेशिकः प्रतिपदं स्खलति लोकः ।
तस्य कृते कृतिरेषा कुसुमाञ्जलिबोधनी जयति ॥ ३ ॥

प्रारिप्सितप्रकरणव्युत्पाद्यस्य परमात्मविषयन्यायस्य प्रसिद्धसमाराधनसाधनप्रसूनाञ्जलि-साधर्म्यप्रदर्शनेन पञ्चरूपोपपत्तिसम्पत्तिलक्षणं विशुद्धिं निःश्रेयसात्मकं फलं च प्रतिपाद्य तथाविधन्यायव्युत्पादनेन परमात्मसमाराधनतया परिकल्पितेन परमात्मनिरूपणेन स्वारसिक- 5 श्रद्धायुक्तस्य स्वान्तःकरणस्याविहतश्रद्धावत्त्वमारिप्सितग्रन्थाविघ्नपरिसमाप्तिफलमाशास्ते- **सत्पक्षप्रसर** इति । सति प्रमाणसिद्धे प्रमाणावधिते च पक्षे सन्दिग्धसाध्यधर्मवति धर्मिणिप्रसरतीति **सत्पक्षप्रसरः** तेनाश्रयासिद्धिकालात्ययापदेशसिद्धसाधनानां मूले निहितः कुठारः । **सत्पक्षेप्रसरः** प्रकर्षेण सरणं व्याप्त्या वृत्तिर्यस्येति भागतोऽपि स्वरूपा-सिद्धेरुद्धारः । कुसुमाञ्जलिस्तु सन् शोभनः पक्षप्रसरः पत्रविकासो यस्येति स तथोक्तः । 10 सतामन्वयव्यतिरेकविदामागमावगततत्त्वानां वा **परिमलः** परशीलनं भूयोदर्शनमिति यावत् , तज्जनितः **प्रोद्बोधः** भूयोदर्शने साहायकमाचरतानुकूलतर्केण निरस्तनिखिलोपाधिशङ्कं व्याप्ति-ज्ञानं, तत्र **बद्ध उत्सवोऽपेक्षा** येन स तथोक्तः गृहीतव्याप्तिक इति यावत् । यद्वा तेन प्रोद्बोधेन स्वस्मिन् बद्धोत्सवः बद्धापेक्षः अनुमित्सतां गृहीतव्याप्तिकत्वादपेक्षणीय इत्यर्थः । अथवा सामान्यव्याप्तिमत्तया परिशीलनस्य **प्रोद्बोधो** विशेषे पर्यवसानं, तेन बद्धः स्थिरी- 15 कृतः **उत्सवः** परमात्मोपासनेच्छा येनेति । एवदुक्तं भवति आगमावगते परमात्मनि व्याप्तिवशेन भूयस्तत्संवादिप्रमित्युत्पादनेन तदुपासने श्रद्धां निश्चलामावद्धवानिति । अनेन स्वरूपतो ज्ञानतश्च व्याप्यत्वासिद्धेः कण्ठतः कुण्ठनम् । अनध्यवसितसव्यभिचारयोर्वि-रुद्धस्य चार्थतो निरासः । अन्यत्र, सतां श्लेष्माद्यनुपहतघ्राणानां सौरभोद्गारेण विहित-प्रीतिः स्वस्मिन् बद्धेच्छो वा । प्रतिप्रमाणैः प्रतितर्कैश्च **विमर्दने** पीडने सति न म्लायति 20 न दूष्यते, तेषां हीनाङ्गत्वेन दुर्बलत्वादिति भावः । अनेन प्रकरणसमः प्रतितर्कप्रती-घातश्च घातितः । अन्यत्रकरतलादिमर्दने न म्लानः तदभावादेव न प्रत्यग्रापचित इत्यर्थः । यद्वा पुष्पाञ्जलिसाधर्म्यप्रसक्तविमर्दनासहत्वनिवारणेन न्यायस्य तद्वैधर्म्यमनेन प्रदर्श्यते, यथा विमर्दने सति पुष्पाञ्जलिर्म्लायति नायं तथेति । अमृतं ब्रह्म, रसयतीति **रसस्तद्विषया** बुद्धिः, तस्य **प्रस्यन्दः**=प्रवाहः ध्यानमिति यावत् । तेन यत् तस्य 25 साक्षात्कारि ज्ञानं तद्द्वारं निर्वाणं वा, तदेव माध्वीकमिवाव्यवहितपुरुषार्थतया माध्वीक-मिति गौणो वादः, तस्य **भूर्हेतुः** । श्रवणानन्तरं न्यायावधृतपरमात्मतत्त्वानां तत्त्वानुचिन्त-नेन साक्षात्कार उत्पद्यते ततोऽपवर्गइति स्थितिः । अथवा **अमृतं**=मोक्षः, तत्र **रसः**= तद्गोचरेच्छा, तस्य **प्रस्यन्दो**ऽविच्छेदेन प्रवाहः, स एव **माध्वीकं**, तस्य भूर्भूमिरिति ।

श्रवणसञ्जातां मुमुक्षां नास्तिककुतर्कापादितशैथिल्यापनयेन वर्द्धयतीत्यर्थः। अनेन न्यायस्य फलवत्ताप्रदर्शनेन तद्व्युत्पादकस्य प्रकरणस्यापि प्रेक्षावदुपादित्साप्रयोजिकामभिमतफलसाधनतां सूचितवानिति। अन्यत्र अमृतसमरसस्य प्रस्यन्दमानस्य मकरन्दस्य भूमिरिति। **एवमनघः**=विशुद्धः, न्यायो नीयते ज्ञाप्यते विक्षितार्थोऽनेनेति न्यायः 5 परार्थानुमानं, स एव **प्रसूनाञ्जलिः**। यद्वा **न्यायाः** प्रसूनानीव तेषामञ्जलिः विधेयनिषेध्यविषयलिङ्गात्मककरतलद्वयगोचरत्वेन न्यायानामञ्जलित्वमिति। **ईशस्य**=**परमात्मनः** परापररूपात्मनि **पदयुगे निवेशितः**। यद्वा, पद्यते गम्यतेऽनेनेति **पदं**, तद्द्वयमागमप्रामाण्यलिङ्गंकार्यलिङ्गं च तद्विषय इति। अन्यत्र सुगमम्। यथा कुसुमाञ्जलौ भ्रमति भृङ्गः तथा स्वस्मिन् मदीयं साभिलापमन्तःकरणमविघ्नं **रमयतु**। यद्वा 10 **भृङ्गायमाणं** यथा मधुमत्यमधुमति च कुसुमे विवेकानवधारणेन चञ्चलश्चञ्चरीकः, तथा तत्त्वेऽतत्त्वे च वर्त्तमानं सन्दिहानमित्यर्थः, भ्रमचक्कचिदतत्त्वमेव तत्त्वतयाध्यवस्यन् मदीयं **चेतो रमयतु** संशयविपर्ययनिरासेन तत्त्वास्पदं करोत्विति। अनघमिति व्यस्तपाठे चेतोविशेषणं, स्वारसिकश्रद्धावत्त्वेन निष्पापं चेत इति; क्रियाविशेषणं वा, 'अघं' क्लेशः यथा तत्र स्याद् यथा च विघ्नो न स्याद् तथा **रमयतु**। अक्लिष्टमविहतश्रद्धायुक्तं यथा 15 स्यात्तथा करोत्वित्यर्थः।

केचितु न केवलं कुसुमाञ्जलिना न्यायो निरूप्यते मननात्मकेन ज्ञानयोगेनेव कुसुमाञ्जलिप्रदानात्मकेन कर्मयोगेनापि परमात्मसमाराधनतया परिकल्पितेनाविघ्नपरिसमाप्तिराशास्यत इति व्याचक्षते, तत्र न्यायेनोपार्जितः प्रसूनाञ्जलिर्न्यायप्रसूनाञ्जलिरिति ॥ १॥

विवेकः

नमः कर्मण्यधिष्ठात्रे वेदप्रामाण्यहेतवे।
20 निरस्ताखिलबाधाय प्रमात्रे विश्वकर्मणे॥
गुणानन्देन विदुषा विचार्य प्रतिफक्किकम्।
विविच्यन्ते प्रयत्नेन कुसुमाञ्जलिकारिका॥

प्रारिप्सितविघ्नापनुत्तयेऽनुष्ठितं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलसम्पत्तये च निबध्नन् प्रयोजनाभिधेयसम्बन्धानाह——**स**दिति। एष कुसुमाञ्जलिर्मम 25 चेतो रमयतु, इष्टफलेन योजयतु, ईशस्य पद्युगे रमयतु, तच्चिन्तैकपरीकरोत्विति वा।

**परे** तु मे मत्कर्तृको न्यायप्रसूनाञ्जलिः सतां मुमुक्षूणां सुधियां वा चेतो रमयतु सुखयत्विति योजयन्ति। अनघत्वं शब्ददोषरहितत्वं, विषयशुद्धेः पूर्वार्धे नैवाभिहितत्वदिति

**प्रकाशः ।** अनघो निर्दोषः । पूर्वार्धं तु यावद्विशेषदोषबाधबोधनद्वारा सामान्या-
भावज्ञानोपपादकमिति केचित् । तन्न, शब्ददोषराहित्यस्य तावताप्यलभात् । न्याय-
पदार्थमर्यादया तल्लाभे तु पूर्वार्धवैयर्थ्यात् । परे तु भगवद्विषयतया पापनाशकत्वमेवा
नघत्वमित्याहुः । 'न्यायः' उचितानुपूर्वीकप्रतिज्ञादिपञ्चकं, 'नीयते प्राप्यते विवक्षितार्थ-
सिद्धिरनेने'ति योगार्थोऽपि सम्भवतीति न्यायेन यदि भासते तदा योगरूढिरेव । स 5
एवाह्लादकतया प्रसूनाञ्जलिः । यद्यपि "तौ युतावञ्जलिः पुमानि"ति विन्यासविशेषविशिष्टौ
करावेवाञ्जलिस्तथापि राजदन्तादिवदञ्जलेः प्रसूनमिति समासः । वनं पुष्पितमित्यादौ
वनपदस्य संख्याविशेषशक्तावपि यथा परम्परयान्वयस्तथात्रापि । अतएव च "त्रींस्त्रीन्
दद्याज्जलाञ्जलीनि"त्याद्यपि वदन्ति । 'अविघ्नमि'ति क्रियाविशेषणम् , इतरन्यायाद्विशेष-
यन्निष्टफलोपायत्वे हेतुगर्भविशेषणमाह---ईशस्य पदयुगे निवेशित इति । 'ईशो' 10
जगत्कर्ता तं पद्यते जानात्यनेनेति व्युत्पत्त्या पदं ज्ञानकरणं तद्युगं प्रमाणतर्करूपम्,
अन्वयिव्यतिरेकिलिङ्गरूपं वा, तत्र निवेशितस्तत्फलतात्पर्येण प्रतिपत्तितात्पर्येण । पदपदस्य
भावसाधनत्वे तु पदयुगम् अन्वयव्यतिरेकानुमितियुगं, तत्र निवेशित इत्यस्य निवेशनं प्रापित
इत्यर्थकतया कर्मसंयोगात् "सीम्नि पुष्कलको हत" इतिवत् कर्मसंयोगाद्वा निमि-
त्तसप्तम्या तद्युगनिमित्त इति **प्रकाशः ।** प्रकृतक्रियाकर्मत्वे योग्यताप्रदर्शनाय चेतो 15
विशिनष्टि---भृङ्गायमाणमिति । भृङ्गो यथा प्रसूनस्थे सौरभे मकरन्दे वा सरागस्तथा
न्यायप्रसूनाञ्जलेः फले सरागमित्यर्थः । अतएव भ्रमत् इष्टफलोपायं न्यायप्रसूनाञ्जलि-
मनुसरत् । अन्यथा तु तदाह्लादकत्वं नोपपद्यत एवेति भावः ।

अर्थदोषराहित्यमाह---सत्पक्षेति । सति पक्षतावच्छेदकविशिष्टे पक्षे सिषा-
धयिषितसाध्यके । प्रकृष्टः सरः पक्षतावच्छेदकावच्छेदेन भ्रमभिन्नं यज्ज्ञानं साध्यस्य 20
हेतोर्वा यस्मात् स तथा । एतेनाश्रयासिद्धिसिद्धसाधनार्थान्तरभागबाधभागासिद्धिबाध-
स्वरूपासिद्ध्यो निरस्ताः । सतां साधूनाम्, ईश्वरविद्वेषिणान्तु तत्सिद्ध्या भयादेव
नोत्सव इति भावः, परामर्शकुशलानामिति तु **प्रकाशः ।** परि सर्वतः कार्त्स्न्येन मलः
सम्बन्धः साधनतावच्छेदकविशिष्टे साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपः, तस्य यः
प्रकृष्टः प्रमात्वबोधः उत् उत्कृष्टः अप्रामाण्यशङ्काशून्यः बोधः । बाधनिश्चयसंशयान्यत्वं 25
वा उत्कर्षः तेन बद्धः स्थिरीकृत उत्सवः सुखसन्तानो येन स तथा, बोधे बन्धे उत्सवे वा
सतामित्यस्यान्वयो नित्यसापेक्षत्वादिति । एतेन साध्यसाधनाप्रसिद्धिसव्यभिचारविरोधानां
निरासः । सत्प्रतिपक्षितत्वनिरासार्थमाह---विम्लान इत्यादि । विमर्दने प्रतिहेतुपरामर्शे
सति यो विम्लानः प्रकृतकार्यानुपधायकस्तदन्यः । ईश्वरपदयुगे निवेशितस्यापि

न्यायरूपकुसुमाञ्जलेः प्रयोजनसम्बन्धज्ञानं विना नाह्लादकत्वप्रतिपत्तिरिति तदर्थं तमाह—अमृतेति। अमृतं मोक्षः स एव रसः इष्टः, विशेषणविशेष्यभावस्य कामचारादित्थमभिधानम्। "कृदभिहित" इति न्यायेन रस्यमानममृतमिति तु प्रकाशः। तस्य प्रस्यन्दः उत्पत्तिः असम्बन्धसम्बन्धोपहितत्वगुणयोगात् गौण्या वृत्त्या स एव माध्वीकम्
5 अत्राप्युत्कटत्वगुणयोगस्तस्य भूः स्थानम्। वस्तुतस्तु विप्रतिपत्तिपञ्चकस्य वक्ष्यमाणस्य विरोधीनि पञ्च विशेषणानि। प्रथमया आश्रयासिद्धिर्वक्ष्यते, तद्विरोधि 'सत्पक्षप्रसर' इति। द्वितीयया प्रमायां गुणजन्यत्वाभाव उक्तः। तत्र सतां वेदप्रामाण्याभ्युपगन्तॄणां गुणजन्यतया तद्व्यवस्थापनेन च तेषां हर्षः। तृतीयया बाधः, निरसनं तृतीयेन। चतुर्थ्या नित्यज्ञानस्य प्रमात्वनिरसनम्। तत्रामृतेति अमृतौ नित्यौ रसप्रस्यन्दौ ताविष्टफलकतया
10 माध्वीकं तद्भूस्तदाश्रयः रस इच्छा, स्यन्दधातोर्गत्यर्थतया सर्वार्थकत्वेन तत्र प्रस्यन्दे प्रमात्वग्रहः तेन तन्निरसनम्। पञ्चम्या प्रमाणाभाव उक्तः। पदयुग इत्यनेन च तन्निरासो ध्येयः।

अथ च श्लिष्टपदमर्यादयोपस्थिताप्राकरणिकाञ्जलिमिलितकुसुमेन प्रकृतस्य सादृश्यं प्रतिपद्यते। तद् यथा, 'न्यायप्रसूनाञ्जलिः' न्यायोपात्तप्रसूनाञ्जलिः मे 'चेतो रमयतु'
15 सुखयतु। 'ईशस्य' भगवतः 'पदयुगे' चरणयुगले निवेशितः। 'अनघः' कीटादिदोषरहितः। पुनः कीदृक्? 'सत्पक्षप्रसरः'। सन् समीचीनः पक्षप्रसरो दलविकाशो यस्य सः सत्पक्षप्रसरः, विदग्धानुकूलविकाश इति केचित्। सतां सुकृतिनां विदग्धानां वा। विमर्दोत्थसौरभमत्र परिमलपदेनाभिहितं तस्य प्रोद्बोधो लौकिकसाक्षात्कारः तेन बद्ध उत्सवो येन सः। 'विमर्दने' संघर्षणे यो म्लानोऽन्यथासंस्थानस्तदन्यः। अमृतस्येव रसो
20 यस्य तदमृतरसम्, एतादृशं यत् प्रस्यन्दमानं माध्वीकं तस्य भूरुत्पत्तिस्थानम्। 'भृङ्गायमाणं भ्रमदि'ति च यथाश्रुतार्थम्। यद्यपि न्यायस्य परार्थानुमान एवोपयोगात् श्रवणानन्तरं स्वार्थानुमाने मनने न तदुपयोगः, तथापि स्वार्थमननविषयेऽपि सत्यां परविप्रतिपत्तौ अप्रामाण्यशङ्का आपद्येतेति तदर्थं न्यायादिरप्युपादेयः। परदुःखप्रहरणेच्छयैव न्यायेन तस्यैव वा मननमनेन कार्यमिति ज्ञानार्थकत्वे नानुपयोगः॥१॥

परिमलः

25 अनन्तमाप्तं सर्वज्ञं सर्वकल्याणकारणम्।
सर्वागमगिरोवेद्यं चिद्घनानन्दविग्रहम्॥ १॥
श्रुतिगाथं जगन्नाथं विश्वनाथमहं भजे।
समारब्धार्थनिर्विघ्नसिद्धये सुसमाहितः॥ २॥

प्रारिप्सितप्रबन्धस्य निर्विघ्नपरिसमाप्तिकामनया इष्टदेवताकीर्तनरूपं सच्छब्दप्रयोगरूपं च मङ्गलमाचरन्नेव प्रयोजनाभिधेयसंबन्धान् निर्दिशति । सत्पक्षेति-तत्कीर्तनं तद्विषयकशाब्दबोधजनकशब्दोच्चारणम् यथा ईशपदस्यात्र च तद्विषयकबोधजननतात्पर्येण तदुच्चारणमस्ति । प्रयोगस्तु तद्विषयकशाब्दाज्ञानाजनकतदर्थकशब्दोच्चारणम् । यथा—सत्पदस्य "ॐ तत्सदिति-ब्रह्मणो निर्देश" इत्यभियुक्तोऽत्र तत्सत्पदस्य ब्रह्मवाचकत्वेऽपि तदर्थविषयकबोधतात्पर्येण 5 प्रकृते न तदुच्चारणमपितु समीचीनार्थबोधतात्पर्येणैवेति तदुच्चारणं प्रयोग इत्यनयोर्विशेषः । करिष्यमाणस्यापि प्रकृतप्रबन्धस्य बुद्धिस्थतया प्रत्यक्षाभिधायकैतच्छब्देन निर्देशः ।

अनघः-निर्दोषः । यद्यपि "अघो दुःखं व्यसनैनसोरिति" हैमकोशानुसारेण अघशब्दो न दोषवाचकस्तथापि दुःखादिवद्दोषस्याप्यनुपादेयतया तदुभयसाधारणानुपादेये लक्षणया तत्प्रयोगः । दोषोद्विविधः, शब्दगतः च्युतव्याकृतिसंस्कारादिः, अर्थदोषश्चासिद्धयादिः । 10 पूर्वार्द्धेनार्थदोषसंभावनाया निराकृतत्वात्परिशेषाच्छब्ददोष एवेहनिराचिकीर्षितः । नीयते प्राप्यते सिषाधयिषितार्थसिद्धिरनेनेति न्यायः, पक्षसत्वसपक्षसत्वविपक्षव्यावृतत्वाबाधितत्वासत्प्रतिपक्षितत्वादिपञ्चरूपोपपन्नलिङ्गबोधकवाक्यजातम् । अह्लादकतया स एव प्रसूनं, तदेवावान्तरघटितत्वेनाञ्जलिः । मम चेतः अविघ्नं यथा स्यात्तथा रमयतु, विषयान्तरेषु चेतसः सञ्चारः प्रकृते विघ्नः तदभावंनिरन्तरमित्यर्थः, दुःखजनकसामग्रीरहितं करोतु । अशेष- 15 विशेषगुणोच्छेदो मोक्ष इति वादिनां मते दुःखासम्भिन्नानन्दानुभवस्य निरन्तरस्यासम्भवादात्यन्तिकदुःखध्वंसतात्पर्येण गमयति पदोपादानम्, आत्यन्तिककार्यनिवृत्तेः कारणनिवृत्तिनान्तरीयकतया तत्कारणीभूतसामग्रीनिवृत्तिं प्रार्थयते इतिभावः । मिथ्याज्ञानमेव दुखनिदानम् तदेव निवर्त्यत्वेन प्रार्तिथिपितम् । अथवा ईशस्य पदयुगे रमयतु, तदेकाग्रंकरोतु । पूर्वं विदेहकैवल्यविषयकं प्रार्थनमिदन्तु जीवन्मुक्तिविषयकमिति विवेकः । मनः कीदृशं ? 20 भृङ्गायमाणं, भृङ्गः मधुकरः स इव आचरति 'उपमानादाचारे' इति क्यङि भृङ्गायते ततः शानचि भृङ्गायमाणं मकरन्दः पुष्परसः तद्ग्रहणलोलुपो भृङ्गः । भ्रमत् तमेवानुसरत्, तथा संसारिणां दुःखविगमोपाये साभिलाषं भ्रमत्, दुःखविगमोपायमनुसरत्, यो हि यत्र साभिलाषः स तमेवानुसरति नान्यमिति लोकानुभवसिद्धम्, फलार्थिनः साधने प्रवृत्तिः फलेच्छाप्रयुक्तैवेति न क्षतिः । ननु सांसारिकदुःखपरिजिहीर्षया, विषयेभ्यश्चेतो व्यावर्त्य 25 ईश्वरे तत्सन्निवेशाय श्रवणमननादिरेवापेक्ष्यते, नैतद्ग्रन्थप्रणयनमिति चेत्सत्यम्, न स्वचेतसः परस्मिन् समर्पिपयिषया एतद्ग्रन्थप्रणयनम्, किन्तुलोकानाम्, अत एव संसारिणां दुःखविगमोपाये भ्रमचेत इति व्याख्यातम्, एतद्ग्रन्थप्रतिपाद्योपाय एव तापत्रयप्रतीकारक्षमो नान्य इति सूचितं भवति । कारुणिकस्य परदुःखसमुच्चिच्छित्सया तदुपायोपदेशे प्रवृत्तिर्न परोक्षा प्रेक्षावताम् । अस्मिन् व्याख्यानेऽस्मत्पदोपानं व्यर्थमतोऽर्थान्तरमाह प्रकाशकारः-'यद्वेति' 30 मम चेतः परोपकारकरणेन रमयतु सफलयतु । भृङ्गायमाणमुपकारलुब्धं भ्रमत् दुःखितमपकर्तुं व्याप्रियमाणमित्यर्थः । यथा मधुकरः मधुमति तच्छून्ये च विकाराभावाद्भ्रमति, तथा मदीयं चेतः तत्त्वेऽतत्त्वे च भ्रमत् तत्त्वे रमयतु सन्देहादिशून्यं करोतु । 'अनघमि'ति व्यस्तपाठे चेतो विशेषणम्, ईश्वरध्यानादिना निष्पापं चेतः । अथवा अनघमिति क्रियाविशेषणमपि भवति ।

ननु धूमादिविषयकस्य न्यायस्य सत्वात्किमनेन न्यायेनेत्यत आह—'ईशस्येति' 35 ईशस्य पद्यते ज्ञायतेऽनेनेति पदं प्रत्यायकं, तद्युगे प्रमाणतर्करूपे, निवेशितः तद्विषये कृतः

प्रबन्धः। यद्यपि तर्कः स्वतो नकस्यचित्साधनमप्रमाणत्वात्, किन्तु निराकरणौपयिकस्तथापि प्रतिपक्षनिराकरणद्वारासाधकप्रमाणस्य तर्कस्य व्याप्तिभूतत्वे प्रमाणे एवान्तर्भावस्तदभूतत्वे आभासत्वेनासाधकत्वमित्यसहकारीति तस्यापि साधककोटौ समावेशोऽनुपपन्नः।

अथवास्वरसादाह—अन्वयीति। अन्वयिव्यतिरेकिरूपमनुमानं पदयुगम्। वेदस्य 5 पौरुषेयत्वे केवलव्यतिरेकिणोऽनुमानस्य वक्ष्यमाणत्वात्। अथवा पद्यते ज्ञायते इति पदं तद्युगं जीवात्मपरमात्मविषयकानुमानयुगलम्। अथवा पदयुगशब्देन आगमप्रामाण्यलिङ्गकं कार्यादिलिङ्गकं चानुमानद्वयं विवक्षितम् शब्दानुमानरूपं पदयुगं त्विह न गृह्यते, श्रुतो हि भगवानित्यादिना शाब्दव्यापारस्य पूर्वमेव प्रदर्शितत्वात्। अप्रवृत्तप्रमाणद्वयप्रवर्त्तनमेवे-हाभिधित्सितम्। अग्रे आत्मनि आगमोपन्यासः अनुमानाविरोधप्रदर्शनाय, आगम-10 विरोधेऽनुमानस्याभासत्वापत्तेः। सत्पक्षेत्यादिना न्यायानामनघत्वं दर्शयति सतिप्रमाणसिद्धे पक्षे सन्दिग्धसाध्यधर्मवति धर्मिणि प्रकर्षेण सरोज्ञानं यस्मात्। अनेनाश्रयासिद्धिवाधसिद्धसाधन-स्वरूपासिद्धिभागासिद्धयो निरस्ताः। तर्कपक्षे सन् निर्दोषः पक्षप्रसरः पक्षव्यापकोऽनिष्ट प्रसञ्जनरूपस्तर्को यस्मात्। व्याप्यारोपाद् व्यापकारोपस्तर्कः। यथा—ह्रदो यदि धूमवान् स्यात्तर्हि वह्निमान् स्यादित्यादिः निर्दोषोऽयं पक्षप्रसरः। ह्रदो यदि वह्निमान् स्यात्तर्हि धूमवान् 15 स्यादयं पक्षप्रसरः सदोषः, वह्निमतोऽपि अयोगोलकस्य धूमवत्वाभावात्। सतां परामर्श-निपुणानां परितः सपक्षे सत्तया विपक्षे चासत्तया यो मलः व्याप्तिरूपः सम्बन्धः तस्य यः प्रोद्बोधः अवाधितव्याप्तिनिश्चयः साध्यसाधनयोः, साध्याभावसाधनाभावयोर्वा, आपाद्यापादकयोश्च, तेन वद्धः स्थिरीकृत उत्सव आनन्दो येन सतथा।

ननु सतामित्यसमस्तेन प्रोद्बोधइत्यस्य सापेक्षत्वात्कथमिहसमासः, समर्थः 20 पदविधिरित्यधिकारात् समर्थेनैव समास इष्टः, सापेक्षमसमर्थमित्यनेन सापेक्षस्यासमर्थत्वं स्पष्टमेव वोध्यते, अतएव कात्यानेन सविशेषणस्य वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेत्यभिदधता समासात्प्रगसमस्तपदार्थान्वयविवक्षायां समासप्रतिषेधः, समासोत्तरं तदन्वय-प्रतिषेधश्च स्पष्ट एव कृत इति चेत्सत्यम्। तादृशनिषेधः, नित्यसापेक्षातिरिक्तविषयकः "प्रतियोगिपदादन्यत् यदन्यत् कारकादपि वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते" इत्यनेन 25 स्पष्टमेव प्रतीयते इति प्रकृते नित्यसापेक्षत्वात्समासः समुचितः। एतेन अन्वयव्यतिरेकिणि, सपक्षासपक्षयो', सत्त्वासत्त्वे, केवलव्यतिरेकिणि च विपक्षासत्त्वं च दर्शितमिति व्याप्यत्वासिद्धि-सव्यभिचारविरुद्धनिरासः। अयमभिप्रायः—पूर्वं शास्त्रतः परमात्माधिगमो भवति, ततः भूयोदर्शनसध्रीचीनानुकूलतर्केणोपाधिशङ्कानिरासपुरस्सरं व्याप्तिनिश्चयो जायते, ततः आगमेन संवादितेनानुमानेनेश्वरसद्भावमधिगम्य श्रद्धापुरस्सरोपासनपरजीवः संसारदुःखं 30 हातुं शक्नोति।

अन्यत्र सतां सुकृतिनामनुपहतघ्राणानां परिमलः विमर्दोत्थो जनमनोहरोगन्धः "विमर्दोत्थे परिमलो गन्धेजनमनोहरे" इत्यमरः, तस्य यः प्रोद्बोधः प्रकृष्टज्ञानं तेन बद्धः स्थिरीकृत उत्सवो येन स तथा, गन्धग्रहणं सुखजनकादृष्टसहितघ्राणस्येतद्विषयत्वं। सुकृतविनाशे घ्राणाद्युपघात इति सूचनाय सत्पदोपादानम्। विमर्दने एतद्विरोधिप्रमाणप्रदर्शने न विम्लानः न स्वपक्ष-35 साधनाक्षमः विरोधिनः प्रमाणाभासत्वव्यवस्थापनात्। अनेन सत्प्रतिपक्षनिरासः स्फुटीकृतः।

अन्यत्र करतलविमर्दने न विम्लानः करतलस्पर्शाभावात्, वृक्षात्सद्यः सञ्चितत्वात्। अथवा भगवच्चरणसंपर्काद्विम्लानत्वाभावः पुष्पाणां दिव्यत्वादित्यपि नार्थ इति को ब्रूयात्। अथवा पुष्पाञ्जलिसाधर्म्यप्रयुक्तमार्दवप्रसक्त्या प्रतिपक्षकर्कशविचारसहत्वं न स्यादित्यभिप्रेत्य विमर्दनसहत्वव्यवतिष्ठापयिषया विमर्दने विम्लानो नेत्युक्तम्, तथा च पुष्पापेक्षया एतद्वैधर्म्यमिह पुष्पाञ्जलिः करतलविमर्दे म्लायति अयन्तु विरोधिप्रमाणोपदर्शनेऽपि न म्लायति। 5

ननु ईश्वरप्रमाणव्युत्पादनं न स्वयं फलवत्, नवा फलवतः कस्यचिदङ्गं, तत्सन्निधावपाठादित्ययं प्रयासो निष्फल इत्यत आह 'अमृतेति' अमृतं मोक्षस्तत्र रस इच्छा, तत्प्रस्यन्दो न भवति। अतः "कृदभिहितो भावः द्रव्यवत्प्रकाशते" इत्यनुशासनेन रसपदं रस्यमानपरं तच्च अमृतेविशेषणमेवं च रस्यमानामृतस्य यः प्रस्यन्दः उत्पत्तिः तदेव माध्वीकं मधु तस्योत्पत्तिस्थानम्। अमृते रस्यमानत्वमहिम्ना आत्यन्तिकदुःखाभावरूपमोक्षस्यानुभवाविषयस्य 10 न पुरुषार्थत्वमिति फलति। एतेनाद्वैतमतानुसारी मोक्षो न तार्किकसमतः। तन्मते मोक्षसुखस्यावेद्यत्वात्। एतन्मते तस्य वेद्यत्वमेवेति स्फोटयितुं रस्यमानेत्युक्तम्। माध्वीकपदेन मोक्षस्योत्कटेच्छाविषयत्वं दर्शयति। एतेन दुःखध्वंसवत् सुखध्वंसस्यतदावश्यंभावात् तुल्यहानिलाभतया नायं पुरुषार्थ इति निरस्तम्, तथात्वे उत्कटेच्छाविषयत्वानुपपत्तेः। अमृतं मोक्षस्तस्य रस इच्छा तस्य प्रस्यन्दः उत्तरोत्तरानुवृत्तिरूपः प्रवाहः स एव माध्वीकं तस्य भूः 15 हेतुरिति तु व्याख्यानमसमीचीनम्, ज्ञानजन्या भवेदिच्छेति वचनानुसारेण मोक्षज्ञानादेव तदिच्छोत्पादेन तदर्थमेतस्यानुपयोगात्। विषयाधीनत्वसातिशयित्वक्षयित्वादिदोषदर्शनेन ऐहिकामुष्मिकफलविरक्तस्य निरतिशयादिसुखोपायं पर्येषमाणस्य श्रुत्यादिभिः परात्मज्ञानं तदुपाय इति जानानस्य मुमुक्षोः परात्मज्ञानसंपादनाय श्रवणादिषु प्रवृत्तिर्जायते। तत्र परमात्मैव नास्ति कुतस्तज्ज्ञानं मोक्षहेतुरिति बाह्यशङ्कानिरासाय ईश्वरसद्भावसाधक- 20 प्रकृतप्रबन्धो निर्मित इति नतदिच्छोत्पत्तिहेतुरयमित्यभिप्रयन् प्रकाशकारः इममर्थं निरास्थत्।

अथवा अमृतं ब्रह्मरसस्तद्विषयकं ज्ञानं तस्य प्रस्यन्दः निरन्तरः तत्प्रत्ययोत्पादरूपं ध्यानं ततः जायमानस्तत्साक्षात्कारस्तद्द्वारा वा मोक्षस्तस्यभूः उत्पत्तिस्थानम्, श्रवणमनननिदिध्यासनात्साक्षात्कारस्ततो मोक्षःइत्यविवादम्। अन्यत्र अमृतमिव रसः तस्य प्रस्यन्दः उत्पत्तिः तत्स्थानमित्यर्थो बोध्यः। वस्तुतस्तु अमृतमिव रसो यस्य प्रस्यन्दते इति प्रस्यन्दः, अमृत- 25 रसश्चासौ प्रस्यन्दश्चेति कर्मधारयः। स एव माध्वीकं तस्य भूरिति व्याख्यानम् समीचीनम्॥१॥

**स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः।**
**यदुपास्तिमसावत्र परमात्मा निरूप्यते॥२॥**

आमोदः

न्यायविषयं विविच्य दर्शयति—स्वर्गेति। स्वर्गयोरिव दुःखासम्भिन्नतयाऽपवर्गयोर्जीवन्मुक्तिपरममुक्त्योर्मार्गमुपायमामनन्ति कथयन्ति। उपा- 30 स्तिम् उपासनाम्। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "द्वे ब्रह्मणी वेदितव्ये" इत्यादिश्रुतिभ्यां परमात्मवेदनस्यापि साक्षाद्वा

स्वात्मगोचरसाक्षात्कारद्वारा वा मोक्षहेतुत्वात् तन्निरूपणमपि सफलमिति भावः ॥२॥

## बोधनी

ननु देहादिव्यतिरिक्तस्य नित्यस्यापरस्यात्मनस्तत्त्वज्ञानं संसारनिदानतद्विषयमिथ्याज्ञानादिनिवृत्तिक्रमेण[1] निर्वाणकारणं वर्णयन्ति। यथाहुः—"दुखजन्मप्रवृत्तिदोषमिथ्या-
5 ज्ञानानामुत्तरोत्तरपायात्तदरान्तराभावादपवर्गः"[2] (न्या. सू. १. १. २) इति। विवेचितश्चायमात्मतत्त्वविवेक इति किमनेन परमात्मनिरूपणेनेत्यत्राह—**स्वर्गापवर्गयोः इति**। सक्षात्कृतपरमेश्वरप्रसादसहकृतमेव हि जीवात्मज्ञानमपवर्गमातनोति। तथाचामनन्ति—"द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च" "द्वा सुपर्णा सयुजा सखाया" इत्यादि। गुडजिह्विकया रागिजनमावर्जयितुमत्र स्वर्गोपादनं, तेऽपि दुःखसन्तमससन्ततासु सुख-
10 खद्योतिकासु निर्विद्य मुमुक्षवो भविष्यन्तीतिभावः। न चैकस्या एवोपास्तेः कथं परस्परविरोधिस्वर्गापवर्गहेतुत्वमिति वाच्यम्। उपासकसङ्कल्पादिसहकारिविशेषेण सामग्रीभेदादुपपत्तेः। यद्वा, अत्र पूर्वत्र सूचितयोर्विषयप्रयोजनयोः स्पष्टीकरणेनेश्वरोपास्तेरपवर्गहेतुत्वे श्रुतीः प्रमाणयतीति ॥ २ ॥

## विवेकः

नन्वीश्वरपदयुगे निवेशितस्य न्यायस्य मोक्षरूपफलसम्बन्धे मानाभावः, "आत्मा वा
15 अरे द्रष्टव्य" इत्यत्रात्मपदस्य संसारनिदानमिथ्याज्ञानविषयस्वात्ममात्रपरत्वात् तन्मननस्यैव मोक्षोपायत्वादिति शङ्कायामाह—**स्वर्गे** ति। उत्कटेच्छाविषयत्वगुणयोगात् स्वर्गयोः स्वर्गाभिन्नयोरपवर्गयोर्जीवन्मुक्तिपरममुक्त्योर्मार्गमुपायं यदुपास्ति यस्योपासनां ध्यानमामनन्ति उपगच्छन्ति कथयन्तीति **केचित्**। यद्यपि "ण्यासश्रन्थो युजि"ति विशेषवचनादासधातोरासनेत्येव भवति, तथाप्यसु क्षेपण इत्यसुधातोरेवायं प्रयोगः समर्थनीयः, धातूनामनेकार्थ-
20 त्वात्। अतएव "लावण्य उत्पाद्य इवास यत्नः" इत्यादयः प्रयोगास्तेनैव धातुना **वामनेन** समर्थिताः। अतएव उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति तदभियुक्ताः। **परे** तु बहुलवचनात् क्वचिदपवादविषये उत्सर्गस्यापि प्रवृत्तेरासधातोरेव क्तिन्प्रत्ययमाहुः। **प्रकाशकृत**स्तु धातुस्वरूपवाचिनस्तिपो निर्देश इत्याहुः। धातुत्वेन रूपेण तिपः शक्तिः, तत्समभिव्याहृतधातोश्च स्वरूपे लक्षणा, तेनासधातुरिति
25 प्रतीतिः, तिपो धातुत्वमात्रे शक्तौ तु प्रकृतिलक्षणार्थकधातुविशेष्यको धातुत्वविधेयक

---

१. ख. द्वारेण। २. क. उत्तरोत्तरापाये इति विश्वनाथपञ्चाननसम्मतः पाठः।

एव बोधः । अर्थवत्प्रत्ययान्तसमभिव्याहृतसुबर्थस्यापि कृत्प्रत्ययप्रकृत्यर्थेऽन्वयः । इष्टसाधनत्वशक्तभावविहिततव्याद्यन्तो दृष्टान्त इति नाव्युत्पत्तिः । यद्वा, धातुना स्वार्थोपस्थितौ तदर्थप्रतिपादकधातुत्वेनैव बोधः । 'व्यक्तिवचन'न्यायेन सर्वनाम्नि बुद्धिस्थत्ववत् स्वप्रकृतित्वस्य नियामकतया वा नातिप्रसङ्गः । इत्थञ्च उपासधातुप्रतिपत्तौ शब्द[तच्छक्ति ?]सम्बन्धेन तदर्थलक्षणा द्विरेफपदवत् । न च तत्तत्कारकविहितप्रत्ययानां कारकान्तरेऽसाधुत्ववत् तिपोऽप्यर्थान्तरे तथात्वमिति वाच्यम् ; तिपोऽर्थान्तरे तथात्वेऽपि प्रकृत्यर्थे तदभावात् । अत एव "ईक्षतेर्नाशब्दम्" इति **वेदान्तसूत्रम्** । "आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते" इति **कात्यायनः** । "यजतिषु येयजमाहं कुर्या"दि"ति **श्रुतिः** । एवं प्रयोगा भूरिशोऽनुसन्धेया इति । मनीषिणो वेदयुक्तिविदः । अतः परमात्मा निरूप्यते मननव्यापारविषयीक्रियते ।

अयम्भावः—"द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव चे" त्यत्र ईश्वरवेदनस्य मोक्षहेतुत्वं श्रूयते । तच्च वेदनं साक्षात्काररूपं जीवात्मसाहचर्यात् । इत्थञ्च "आत्मा वा अरे द्रष्टव्यः" इत्यत्रापि आत्मपदं जीवात्मेश्वरोभयपरं स्वावृत्तिप्रागभावाप्रतियोगिज्ञानवत्त्वेनैवोपस्थापनात्, सामान्यशब्दस्य विशेषपरत्वं वा । तथा च तत्रापि मननविधेरीश्वरमननमपि मोक्षहेतुरिति [तत्-]साक्षात्कारः साक्षादन्तःकरणशुद्धिद्वारा आत्मसाक्षात्कारोपयोगितया वोपयुज्यत इत्यन्यदेतत् । **परे** तु "तमेव विदित्वाऽतिमृत्युमेती"तीश्वरमुपक्रम्य श्रवणात् तन्मात्रसाक्षात्कारो मोक्षहेतुरित्याहुः । **प्राचां** नये तु 'तं विदित्वैवे'ति योजना ध्येया ॥२॥

### परिमलः

ननु अपरिक्षीणकर्मराशेर्न मोक्षः संभवति तत्प्रक्षयश्च न भोगमन्तरा, "नाभुक्तं क्षीयते कर्मेति" वचनात् भोगश्च न कर्माणि अकुर्वतः, कर्माणि च भूतोत्पीड़नमन्तरा न सम्भवन्ति, भूतोत्पीड़नादि च जन्मान्तरशरीरारम्भकमिति तत्रापि भोगस्य कर्मान्तरमिति सम्भोगकर्मणोरनिशं घटीयन्त्रवत्प्रवाहे सति क्वाशेषविशेषगुणोच्छेदरूपोमोक्षः । नापि ईश्वरे प्रमाणव्युत्पादनं मोक्षहेतुरित्यत्र श्रुत्यादिकं किञ्चत्प्रमाणमस्ति । न चातीन्द्रियहेतुफलभावोऽर्वाग्बुद्धिविषय इति मोक्षाय प्रमाणव्युत्पादनं विफलम् ? किञ्च ईश्वर-मननं मोक्षं जनयति इत्यत्रापि न प्रमाणम् । न चात्मा वा अरे द्रष्टव्यः श्रोतव्या मन्तव्यः निदिध्यासितव्यः साक्षात्कर्त्तव्य इतिश्रुतिरेव परमात्मसाक्षात्कारो मोक्षफलक इति बोधयतीति वाच्यम् । तत्रात्मशब्दस्य जीवात्मपरत्वेनाप्युपपत्तेः । न च तस्याहं सुखीत्यादिमानसप्रत्यक्षविषयत्वस्य सिद्धतया, पुनस्तत्साक्षात्कारविधानं व्यर्थम् । निर्लुंठितगर्भतया तत्स्वरूपस्य मानसप्रत्यक्षेण तदनिश्चयात्, अन्यथा शास्त्रकृतां तत्र विवाद एव न स्यात् नहि प्रत्यक्षप्रमिते विवदन्ते लोकाः प्रागेव तु शास्त्रकृतः, अपि च स्वात्मनो मानसगोचरत्वेऽपि परकीयात्मनामप्रत्यक्षत्वात्तत्साधारण जीवात्ममात्रसाक्षात्कारो मोक्षाय श्रुत्या विधित्सित इत्यपि न सम्यक् । यत आत्मसाक्षात्कारो

न साक्षान्मोक्षहेतुः, किन्तु मिथ्याज्ञाननिवृत्तिद्वारा। मिथ्याज्ञानं च न जीवात्ममात्रविषयकं संसारहेतुः, नवा ईश्वरविषयकम्, किन्तु स्वात्ममात्र विषयकम्, तदेव च मोक्षार्थिना निविवर्तयिषितम्। तत्र न जीवात्ममात्रसाक्षात्कारोऽपेक्ष्यते, नापि परमात्मसाक्षात्कारः, किन्तु स्वात्मसाक्षात्कारः। न चेश्वरमननेन स्वात्मसाक्षात्कारो जायत इति तदर्थं तन्मननमावश्यकमिति वाच्यम्, मन्तव्यः साक्षात्कर्त्तव्य इति श्रुतौ समानाधिकरण्यनिर्देशात् यद्विषयकः साक्षात्कारोमोक्षजनकस्तद्विषयकं मननं तादृशसाक्षात्कारोत्पादनद्वारा मोक्षहेतुरितिलभ्यते स एव साक्षात्कारः मोक्षार्थिनेष्टव्यः, यो मिथ्याज्ञाननिवर्त्तनद्वारा मोक्षहेतुर्भवेत्, सचात्मसाक्षात्कार एवेति तदर्थमीश्वरमननादिव्यर्थमिति तत्र प्रमाणसद्भावप्रदर्शनमपि मुधैवेत्यत आह—

स्वर्गेति मनोषिणो—विद्वांसः, यदुपास्ति—यदुपासनं स्वर्गापवर्गयोरुत्कटेच्छाविषययोर्जीवन्मुक्तिपरममुक्त्योर्मार्गमुपायमामनन्ति स परमात्मा अत्रग्रन्थे निरूप्यते तत्र प्रमाणसद्भावप्रदर्शनेन व्यवस्थाप्यते। एवं व्याख्यानेन "यजेत स्वर्गकाम" इत्यादिश्रुत्या स्वर्गादिफलं प्रति उपायतया यगादीनामेव विधानदर्शनेनेश्वरमननस्य स्वर्गं प्रति कारणत्वाभिधानमसंगतमिति शङ्का निराकृता भवति। स्वर्गपदेनात्र जीवन्मुक्तेरेव विवक्षितत्वात्। जीवन्मुक्तिपरमुक्त्योरेकेश्वरज्ञानसाध्यत्वप्रदर्शनेन जीवन्मुक्तिसहितपरममुक्तिः ग्रन्थप्रबन्धप्रयोजनमिति स्पष्टमुपलभ्यते। अयमभिसन्धि :—कर्म त्रिविधं सञ्चितं, प्रारब्धं, क्रियमाणं च। तत्र प्रारब्धं कर्म, भोगं विना न क्षीयते तत्तात्पर्येण नाभुक्तं क्षीयते कर्मेत्यभिधानं। सञ्चितकर्मविषये द्विविधं मतम्। योगप्रकर्षबलेन योगी एकस्मिन्नेवजन्मनि नानाशरीराणि परिगृह्यनेकजन्मभोगकर्मफलानि भुञ्जानो निश्शेषं तानि क्षपयित्वा प्रक्षीणकर्मराशिः सम्पद्यते इत्यर्थकं मतम्। मतान्तरे तु सञ्चितकर्मराशेरीश्वरज्ञानादेव प्रक्षयः, "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे इत्यादि श्रुत्या "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन"इत्यादि स्मृत्या च स्पष्टमेव बोध्यत इति। ईश्वरमननादिषु व्यापृतस्य क्रियमाणं कर्म बन्धाय न भवति। "न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य देहिन" इति पातञ्जलोक्तेः। तथा च न तस्य नवीनकर्मार्जनशंकर ईश्वरमननं च न मिथ्याज्ञाननिवर्त्तनद्वारामोक्षहेतुः वैयधिकरण्यात्, किन्तु अदृष्टद्वारा तदुपासनाजन्यादृष्टेन जीवस्य मिथ्याज्ञानं नश्यति, ततस्तत्साक्षात्काराऽनन्तरं मोक्ष इति तत्त्वविदां परामर्शः।

ईश्वर मननं च तत्प्रमाणव्युत्पादनं विना न संभवतीति तत्प्रमाणव्युत्पादनमपि परंपरया मोक्षहेतुरिति स प्रयोजनम्। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्येश्वरमननस्य मोक्षहेतुत्वं प्रतीयते, अतएव स हि तत्त्वतो ज्ञातः साक्षात्कारस्योपकरोतीत्यभियुक्ताः। अन्ये तु ईश्वरमननस्य मोक्षहेतुत्वे श्रुत्या प्रमितस्योपपत्तये अदृष्टं द्वारं कल्पनीयमित्याहुः। परे तु ईश्वरोपासनायाः स्वर्गः अपवर्गश्चेत्युभयं फलम् तत्तत्फलकामनाविशिष्टोपासनानां भेदादिति नैकहेतुतो विरोध्यनेककार्याशंकाः। ननु "ण्यासश्रन्थोयुजि" त्यनेनेह युजि उपासना इत्येवप्रयोगो युज्यते न तूपास्तिरिति क्तिनो युजाबाधादिति चेन्न। "क्वचिदपवादविषयेऽपि उत्सर्गः प्रवर्तते" इति न्यायाद् बाहुलकत्वाद्वा क्तिनोऽप्युक्तेः। अथवा भवेर इति वद् धातुस्वरूपनिर्देशे श्तिप् प्रत्ययः। तस्य धातुस्वरूपवाचकत्वेऽपि गभीरनदीतीरे नदीपदवत् उपासनार्थे तस्य लक्षणा। दृष्टान्तविधया द्विरेफपदोपादानन्तु शब्दोपस्थापकस्यार्थे लक्षणेति तात्पर्येण ॥२॥

इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रद्योतको[1]ऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः किं बहुना, कारवोऽपि यं विश्वकर्मेत्युपासते, तस्मिन्नेवं जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारं प्रसिद्धानुभावे भगवति भवे सन्देह एव कुतः? किं निरूपणीयम्? तथापि—

**न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरागता ॥३॥**

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्यो भवति। 'श्रोतव्यो मन्तव्य' इति श्रुतेः।

"आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥"

इति स्मृतेश्च ॥३॥

आमोदः

धर्मिणि संशयाभावेऽपि मननानुकूलन्यायपूर्वाङ्गसंशयमुपपादयन्नाह—

इह यद्यपीति। इह न्यायेन निरूपणे कर्तव्ये संशयो नास्त्येव। तथा च किं निरूपणीयं, कुत्र न्यायः प्रवर्तनीय इत्यन्वयः। अत्र यद्यप्येवमुपासते तथापि सन्देह एव प्रकारभेदादिति शेषः। यद्वा संशय एव संशये सत्येव किं निरूपणीयमिति कुत इत्यन्वयः। संशयस्तु नानाप्रकारेणैव श्रुतिभ्यः श्रवणात्, कुत्र तात्पर्यमित्यनिर्णयात्, प्रामाण्यसन्देहाद्वा, मध्यस्थादिवदाहार्य एव वा। शुद्धः केवलः। बुद्धः स्वप्रकाशबोधात्मकः। औपनिषदा वेदान्तिनः। आदीति। आदौ सर्गादौ विद्वान् चेतनः, न तु चेतनच्छायया प्रकृत्यादिवच्चेतनः। सिद्धः कूटस्थनित्यः। **कापिलाः सांख्याः। क्लेशेति।** अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः। अस्मिताऽहङ्कारः। अभिनिवेशो मरणभयम्। कर्म यागहिंसादि। विपाको जात्यायुर्भोगादिः। फलपर्यन्तमाशेत इत्याशयो धर्मोऽधर्म[श्च ?], एतैरपरा-

१. सम्प्रदायप्रवर्त्तक इति बोधनी सम्मतः पाठः।

मृष्टः। निर्माणकायो वेदनिर्माणार्थं कायः, तदधिष्ठानं तदुपग्रहः। सम्प्रदायो वेदः, तस्य नित्यत्वात् प्रद्योतकः प्रवर्तक इत्यर्थः। अर्थ[नु ?]ग्राहकश्च घटादिनिर्माणोपदेष्टा। लोकविरुद्धैर्विषभक्षणविषधरधारणादिभिर्वेदविरुद्धै-र्ब्रह्मवधादिभिर्निर्लेपो दृष्टादृष्टदोषशून्यः। स्वतन्त्रः परमाण्वदृष्टादि-
5 साहित्यमन्तरेणापि जगत्कर्ता। पाशुपता महाव्रतीयाः। सर [ शिव ] इति 'प्रमहसि पदेनिस्त्रैगुण्ये' वर्तमानः। पुरुषोत्तमो नित्यसर्वज्ञत्वादिभिः। पितामहो जनकस्यापि जनकः। यज्ञपुरुषो यज्ञे प्राधान्येन इज्यः। सर्वज्ञः क्षणिकसर्वज्ञः। निरावरणो निराकारः, निष्पापो वा। उपास्यत्वेन देशितो विधिबोधितमन्त्रमय इत्यर्थः। लोकव्यवहारसिद्ध इति प्रतिमाद्याकार
10 इत्यर्थः। यावद्भिरुक्तैरुपपन्नो यावद्भिरुक्तेऽप्युपपन्नैरुक्तैरुपपन्नो वा मध्यप-दलोपी समासः। सामान्ये संशयाभावेऽपि विशेषमादाय संशयमुपपाद-यन्नाह—विश्वं कार्यजातं कर्म यस्य विश्वकर्मा। जातिर्ब्राह्मणत्वादिः। गोत्रं काश्यपादि। प्रवराश्च्यवनादयः। चरणं वेदभागः। अनुभावोऽसाधारणं कार्यं क्षित्यादि। [भवत्य ?]स्मादिति भवः। तथा चेश्वरकर्तृकतया
15 क्षित्यादिकार्ये श्रुतेऽपि ईश्वर एकोऽनेको वा, स्वतन्त्रः परतन्त्रो वा, शरीरी अशरीरी वा इत्यादयः सन्देहाः सन्त्येव। यद्यपि सर्वे धर्मा वेदे श्रुतास्त-थापि तात्पर्यसन्देहात् प्रामाण्यसन्देहाद्वा सन्देह इति प्रागुक्तम्।

ननु अपवर्गोपायश्च उपासना, तदा न्यायचर्चा मननं वा किमर्थमत आह—**न्यायेति**। उपासनान्यायचर्चामनननानामिहैकात्मतैव विवक्षिता, तथा
20 च यदुपास्तिमपवर्गोपायमामनन्ति स निरूप्यते। उपासनैव क्रियत इति न्यायचर्चाया मननात्मिकायाश्च कोऽयमवसर इत्यत आह—**श्रवणेति**। श्रवणानन्तरपरिप्राप्तेत्यर्थः। मननस्य श्रवणानन्तर्यं चेत् तदा श्रवणमेव न जातमस्तीति पुनः स एवानवसर इत्यत आह—**श्रुतो हीति**। स्मृत्या-दीनां संवादार्थमुपादानम्। "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यत्र श्रुतितः
25 श्रवणस्य विहितत्वात्। अन्यथा शूद्रादीनामप्यधिकारापत्तेः। 'इदानीमि'ति मननावसर इत्यर्थः। **मन्तव्य** इति मननात्मक-प्रतिपत्तिविषयीकर्तव्य इत्यर्थः। श्रवणमननयोः सामानाधिकरण्येनैकविषयता, सा च धर्मिणि न तु प्रकारेऽपीति न सन्देहानुपपत्तिः।

श्रवणादीनां क्रमं फलञ्चाह—**आगमेनेति**। रसो रसनम् एकतानतेति यावत्। प्रज्ञां प्रतिपत्तिं, प्रकल्पयन् उत्पादयन्, उत्तमो योग आत्मसाक्षात्काराव्यवहितपूर्ववर्त्यात्ममनःसंयोगः ॥३॥

बोधनी

प्रकरणारम्भमाक्षिपति—**इहेत्यादिना किं निरूपणीयमित्यन्तेन**। सन्दिग्धेन्यायः प्रवर्त्तते न हि सिद्धे। सिद्धश्चायमात्मा सर्ववादिनाम्। तस्मादस्य न्यायविषयत्वा- 5 सम्भवात् तद्विषयकन्यायव्युत्पादकं प्रकरणं नारम्भणीयमिति तात्पर्यम्। इह परमात्मनि प्रकरणे वा, **किं निरूपणीयमिति** सम्बन्धः, अर्थयमाना इत्यस्य **चोपासते** इत्यनेन। सर्ववादिसम्प्रतिपत्तिदर्शनं **शुद्धेत्यादि**। **शुद्धः** केवलः अद्वितीय इति यावत्। अतएव **बुद्धः** स्वप्रकाशः। द्वितीयाभावे परप्रकाश्यत्वासम्भवात्। **आदिविद्वान्** स्वारसिकचैतन्यः, न तु बुद्धिवदिति ; छायापत्त्या तथात्वे सत्यादिविद्वत्ताविरोधात्। **सिद्धः** 10 कूटस्थनित्यः न तु प्रकृत्यादिवत् केनचिदपि रूपेण साध्य इति। अविद्यास्मितारागद्वेषाभिनिवेशाः **क्लेशाः**। तत्र विपरीतख्यातिरविद्या। अहमस्मीत्यभिमानोऽस्मिता। रागद्वेषौ सुखदुःखतत्साधनविषयौ प्रसिद्धौ। प्राप्तैश्वर्यभङ्गभीतिरभिनिवेशः। धर्माधर्मसाधनमश्वमेधादिब्रह्महत्यादि **कर्म**। जात्यायुर्भोगा **विपाकाः**। तत्र जातिर्देवत्वमनुष्यत्वादिः। प्राणाख्यस्य **वायोः** कायावच्छिन्नः सम्बन्ध आयुः। स्वसमवेतसुखदुःखा- 15 न्यतरसाक्षात्कारो भोगः। आफलनिष्पत्तेरात्मनि शेत इत्याशयो धर्माधर्मरूपमपूर्वम्। एतैरपरामृष्टः सर्वदा सर्वथाऽसंसृष्टः। कथं तर्हि कर्माद्यभावे शरीरसम्बन्धः, कथं वा तदभावे सम्प्रदायप्रवर्त्तकत्वं, कथं वानुग्राहकत्वमित्यत उक्तम्—**निर्माण** इति। जगन्निर्माणार्थं स्वेच्छामात्रनिर्मितानि संसारिचेतन[1]धर्मकर्मनिमित्तानि वा शरीराणि व्युत्पाद्यव्युत्पादकभावेनाधितिष्ठति। सम्प्रदीयते गुरुणा शिष्यायेति **सम्प्रदायो** वेदो घटपटव्यवहारश्च, 20 [2]**तत्प्रवर्त्तको वक्ता प्रवक्ता च** वेदे कर्त्ता ग्राहयिता चान्यत्र, **अनुग्राहकः** स्वर्गापवर्गादिफलप्रदानादिनेति। **लोकवेदविरुद्धैः** चिताभस्मोद्धूलन देवदारुवनद्विजवधूविप्लवादिभिरनुष्ठितैरलेपः लोकगर्हयाऽधर्मेण रहितः। क्लेशसलिलावसिक्तायामात्मभूमौ उप्तं कर्मबीजमधर्माङ्कुरमारभते, न च नित्यसर्वज्ञस्य क्लेशसम्भवः। **स्वतन्त्रः** कर्त्ता। **महापाशुपताः** महाव्रतचारिणः पाशुपताः। **शिवः** निस्त्रैगुण्यः। **पुरुषोत्तमः** पुरुषेभ्य उत्तमः। 25 उत्तमत्वं च सर्वज्ञत्वमसंसारित्वं चेति स्वयमेव व्याख्यास्यति। **पितामहः** जगतामुत्पा-

१. ख. वर्गनिर्मितानि। २. क. तस्य तस्य।

दकः । **यज्ञपुरुषः** यज्ञाधिष्ठातृदेवता । **सर्वज्ञः** क्षणिकसर्वज्ञः । **निरावरणः** सर्वविषयकचैतन्याच्छादकत्वेन स्वकर्मार्जितं शरीरमावरणम् ; यद्वा वस्त्रादिभिरिव शरीरं धर्माधर्माभ्यामाव्रियते पुरुष इति तावेवावरणं तद्रहितः । **उपास्यत्वेन चोदितः** चोदनासिद्धमुपास्यत्वं हविः प्रतियोगित्वं स्तुति प्रतियोगित्वं चैव तस्य रूपं, न तु सर्ववित्सर्वकर्तृ-
5 कत्वादिकमिति । **लोकव्यवहारसिद्धः** राजादिर्दृश्यमानः, चतुर्भुजादिरूपा प्रतिमा वा । **यावदुक्तोपपन्नः** मया यानि विशेषणान्युक्तानि तेषु यावदुपपन्नं तेनोपपन्नः । यद्वा, यावदुक्तेन यथाश्रुतेन न तु व्याख्यातेनोपपन्नः, यथा शुद्धः देहादिरहितः, बुद्धः बोधे कर्त्ता कर्म वा, **आदिविद्वान्** नित्यज्ञातलोकव्यवहारः । **सिद्धः** सर्वजनप्रसिद्धिगम्यः, सुगममन्यत् । जातिर्ब्राह्मणत्वादिः । **गोत्रं** कूटस्थऋषिनाम्ना सङ्कीर्त्तनम् । **प्रवरः**
10 वंश्यऋषिगणानुकीर्त्तनम् । **चरणः** बह्वृचत्वाद्यवान्तरजातिः । **कुलधर्मः** प्रतिकुलं व्यवच्छिन्नः शिखासन्निवेशादिः । यथा जात्यादयः संसारमभिव्याप्य प्रमाणसिद्धाः, एवमीश्वरोऽपि । **किं निरूपणीयम् ?** न किञ्चिदित्यर्थः ।

समाधत्ते—**तथापि न्यायेति** । तत्रैव हि सन्दिग्धविषयत्वनियमो न्यायस्य यत्र दृष्टमेव संशयनिराशः प्रयोजनम्, अयं तु विहितोपासनात्मकत्वाददृष्टरूपस्वर्गापवर्गादिफल
15 इति सिद्धेऽपि विषये प्रवर्त्तत इति भावः । विहितत्वप्रदर्शनार्थं—**मननेति** । "मन्तव्य" इति मननं विहितम्, मननाख्या चेयं न्यायचिन्तेति । यद्वा, यद्युपासनेयं **न्यायचर्चा**, न तु संशयनिरासफला, तर्हि श्रवणादिचतुर्विधायां कतमेयमित्यत उक्तं—**मननेति** । **श्रवणानन्तरेति** मननस्यावसरप्राप्तिर्दर्शितेति । तद् व्याचष्टे—**श्रुतौ हीति** । **प्रज्ञा** साक्षात्कारः, **योगं** योगफलं निःश्रेयसमिति ॥ ३ ॥

## विवेकः

20 मननोपायन्यायपूर्वाङ्गसंशयमुपपादयन्नाह—

**इहेत्यादि** । यद्यपि तेन तेन रूपेण ते च ईश्वरमुपासत इति धर्मिणि न विप्रतिपत्तिः, तथापि तत्तदभ्युपगतस्य कस्यचिदस्मदनभ्युपगतस्य धर्मस्य सम्भवात 'श्रवणानन्तरागते'त्यनेन च इह न्यायेन निरूपणे कर्तव्ये भगवति तस्मिन् प्रसिद्धानुभावेऽपि तेन तेन रूपेण विप्रतिपत्त्या सन्देह एव सन्देहोऽस्त्येवेति, न्यायेन किं निरूपणी-
25 यमिति कुतः पूर्वपक्ष इति योजना । यद्वा येन येन रूपेण ते ते तमुपासते इत्युक्तं तस्य तत्रास्माभिरभ्युपगमात् उभयवादिसिद्धतया विप्रतिपत्त्यभावात् तेन तेन रूपेण संशयः कुतः, किं निरूपणीयं, कथं न्यायः प्रवर्ततामित्याक्षेपे **तथापीति** । उभयवाद्य-

सिद्धधर्मान्तरेण विप्रतिपत्त्या न्यायाङ्गकं मननं स्यादेवेति भावः। अथवा उक्त एव आक्षेपे तथापीत्यनेन पक्षताया एव मननोपयोगितया संशयाभावेऽपि न क्षतिः। श्रवणानन्तरं मोक्षोपायत्वेन विहिता इत्यर्थकेन तादृशफलरूपेष्टसाधनताज्ञानाधीनसिषाधयिषावश्यम्भावबोधनात्, अन्यथा तेनैव रूपेण श्रवणात्मकसिद्धेरेव सत्त्वात् मननं दुरुपपादमेव स्यादिति भावः। कमपि मुख्यं गौणं वा पुरुषार्थं फलमर्थयमाना 5 इच्छन्तो यमुपासते। केन रूपेण, के तथा इत्याकांक्षायामाह—**शुद्धेत्यादि**। शुद्ध एको निर्दोषो वा। बुद्धः स्वप्रकाशज्ञानात्मकः जन्यज्ञानवदन्यो वा। औपनिषदा उपनिषदर्थविवेचका वेदान्तिनः। **आदीति**। आदौ सर्गादौ विद्वान् निखिलवेदार्थज्ञानवान्। सिद्धो योगसम्पत्सम्पादिताऽणिमादिसिद्धिः। **कापिलाः सांख्याः**। **क्लेशेति**। अविद्याऽस्मितारागद्वेषाभिनिवेशाः। अविद्या अज्ञानमनादिर्विनाशी भावः, 10 अस्मिताऽहङ्कारोऽन्तःकरणविशेषः, अभिनिवेशो मरणभयं, कर्म यागहिंसादि विहितनिषिद्धरूपं, विपाको जात्यायुर्भोगादिः। तत्र जातिर्जन्म, फलपर्यन्तमाशेत इत्याशयो धर्माधर्मरूपः, तैरपरामृष्टोऽसम्बद्धः। निर्माणकायं वेदाभिव्यञ्जनघटादिकरणशिक्षार्थञ्च कायव्यूहमधिष्ठाय उपगृह्य, सम्प्रदायो गुरुणा शिष्याय सम्प्रदीयत इति व्युत्पत्त्या वेदस्तस्य प्रद्योतकः व्यञ्जकः, नित्यत्वेन तस्य कारकत्वाभावात्। 15 अनुग्राहको घटादिनिर्माणे शिक्षकः। लोकवेदविरुद्धैर्विषपानब्रह्मशिरश्छेदादिभिर्यो लेपः पापनिष्ठकारणतानिरूपकं तच्च रूपं दुःखं तच्छून्यः, दृष्टादृष्टदोषरहित इति वा। स्वतन्त्रो जगत्कर्ता। शिवः सत्त्वरजस्तमोलक्षणगुणत्रयातीतः। पुरुषोत्तमः पुरुषेषु पुरुषेभ्यो वा उत्तमः। पितामहो जनकस्यापि जनकः। यज्ञपुरुषः प्राधान्येनेज्यः, यज्ञात्मक एव भगवदवतारविशेषोऽस्ति तच्छरीराधिष्ठित इति वा। सर्वज्ञः क्षणिकसर्वज्ञः। तेन 20 नैयायिकवैलक्षण्यम्, उभयसाधारण्ये तु यथाश्रुतमेव। आवरणमावरकशक्तिमती अविद्या, स्वादृष्टोपार्जितञ्च शरीरं पापमात्रं वा। उपास्यत्वेन देशितो देशनाविशिष्टः कश्चित्। लोकव्यवहारसिद्धः चतुर्भुजादिशरीरं तादृशी प्रतिमेति **केचित्**। उक्तेषु मध्ये यावन्तो धर्मा उपपन्ना युक्तिसिद्धास्तैरुपपन्नः। यद्वा तेषु मध्ये ये ये उपपन्ना युक्तिसिद्धास्ते यत्रेति वा। पूर्वेषां न्यायाविरुद्धधर्मपरत्वे तु यथाश्रुतमेव ज्यायः। अतिप्रसिद्धार्थमाह— 25 **किं बहुनेति**। कारवः शिल्पिनः, विश्वकर्मा विश्वं कार्यजातं कर्म कार्यं यस्य स तथा उपासते ध्यानपूजानमस्कारादिनानाविधव्यापारविषयतां प्रापयन्ति, मननविषयीकुर्वन्तीति तु कारुपक्षेऽसम्भवादुपेक्षितम्। ननु ये ये त्वयोक्तास्ततोऽन्ये विप्रतिपन्नाः स्थास्यन्ति, तत्र च संशयो नानुपपन्न इत्यत आह **एवमिति**। तथा च नास्त्येव तादृशः कश्चिद् योऽत्र

विप्रतिपन्न इति भावः। एवं विभक्तेष्विव, जातिर्ब्राह्मणत्वादिः, गोत्रप्रवरौ काश्यपादि, चरणं वेदस्य शाखाः कठादयः, कुलधर्मः स्ववंशानतिक्रमेण तत्तत्काले संस्कारः। अतएव "चूड़ा कार्या यथाकुलमि"ति **स्मृतिः।** आसंसारं संसारमभिव्याप्य प्रसिद्धानुभावे प्रसिद्धोऽनुभावः क्षित्यादिलक्षणं कार्यं यस्य यस्मिन् 5 वा, तमेवंप्रसिद्धं सप्रमाणयति—**भव** इति। भवत्यस्मादिति भवः, भवत्वेन प्रसिद्धिरेव तत्प्रसिद्धिरिति भावः।

ननूपासना फलवतीत्युक्तं, तावतापि मननोपयोगिनो न्यायस्य न फलसम्बन्ध इत्यत्राह—**न्यायचर्चे**ति। न्यायेन चर्चाऽनुमितिरूपा या क्रियते सा उपासनैव, तथा च नार्थान्तरमिति भावः। तस्यास्तत्त्वे मानमाह—**मननव्यपदेशभागि**ति। 10 मननस्य च तत्त्वं सुप्रसिद्धमिति हृदयम्।

ननु मननव्यपदेशभाज उपासनात्वेन प्रसिद्धावपि तादृग्रूपायास्तस्याः फलसम्बन्धे किं मानमित्याकांक्षायामाह—**श्रवणानन्तरे**ति। श्रवणानन्तरं 'श्रोतव्य' इत्यनन्तरमागता 'मन्तव्य' इति विधिना विहिता। तथा च स एव विधिरत्र मानमिति भावः। इत्थञ्च पाठिकक्रमेणानुष्ठेयक्रमोऽपि ध्वनितः।

15 ननु श्रवणानन्तरमेव तदनुष्ठेयमिति नायं तस्यावसर इत्यत्राह—

**श्रुतो ही**ति। हि हेतौ, अवधारणे वा। स्मृत्यादीनां सम्पातायातमुपादानमिति **बहवः। मिश्रास्तु** यद्यपि 'श्रोतव्यः श्रुतिवाक्येभ्यः' इत्यस्ति, तथापि तत्र श्रुतिपदं प्रमाणशब्दमात्रपरम्, अन्यथा नियमादृष्टकल्पनापत्तेः। नन्वेवं गौरवज्ञानात् पदार्थत्यागे विद्याप्रयुक्तिकल्पनाभिया रथकारे रूढित्यागापत्तिरिति चेन्न, अत्र प्रमाणशब्दस्य विशेष्यतया 20 तदत्यागाद्विशिष्टविशेष्ये शक्तावपि तात्पर्यवशाच्छुद्धविशेष्यतावच्छेदकप्रकारेण बोधने लक्षणानुपगमात्। शक्तिमुख्यविशेष्यकशक्यतावच्छेदकघटकसाक्षात्प्रकारीभूतधर्मप्रकारकबोधस्यैव तादृशशक्तिधीप्रयोज्यत्वोपगमात्। अतएव बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताशक्तविधेः श्येनादौ शुद्धेष्टसाधनताबोधनं विनैव लक्षणाम्। अतएव च न प्रमाणमात्रपरत्वं श्रुतिपदस्य, प्रमाणमात्रस्य मुख्यविशेष्ये साक्षात्प्रकारतया तन्मात्रेण तद्बोधने 25 लक्षणापत्तेः, समनियतसिद्धिरितरवैयर्थ्यात्। अतएव शाब्दबोधस्यैव तत्प्रयोजकत्वे[1] नियमादृष्टकल्पनमपि। नियमादृष्टञ्चादृष्टविशेषो वा विशिष्टकार्यकारण[2]भावो वेत्यन्यदेतदित्याहुः।

---

१. ख—त्वेन। २. ख—ता।

वस्तुतस्तु 'श्रुतिवाक्येभ्यः' इत्यस्य श्रुतिसमानार्थवाक्येभ्य इत्यर्थः, अन्यथा वाक्यपदवैयर्थ्यापत्तेस्तथा च स्मृत्यादिजन्यबोधस्यापि तदर्थत्वमिति ध्येयम् ।

ननु श्रवणानन्तरं मननमनुपपन्नं, श्रवणात्मिकायाः सिद्धेरेव प्रतिबन्धकत्वादित्यत आह—**श्रोतव्यो मन्तव्य इति ।** तथा च तदधीनेष्टसाधनताज्ञानाधीनायाः सिषाधयिषायाः सत्त्वान्न पक्षताक्षतिरिति भावः । 'ध्यानाभ्यासरसो' निदिध्यासनानुकूलो व्यापारः, 'त्रिधा 5 प्रकल्पयन्' उक्तैस्त्रिभिरुपायैरात्मज्ञानं जनयन् 'उत्तमं' 'योगम्' आत्मसाक्षात्कारं लभते॥ ३॥

## परिमलः

भगवदुपासना फलवती, निरूपणं च क्रियते इति पूर्वापरग्रन्थासंगतिंपरिहरन् ईश्वरे विप्रतिपत्त्यभावेन संशयमाक्षिपति—इहेति । इह विचारे । विचारकारणं संशय एव नास्तीति कुतो विचारारम्भ इति अत्र हेतुं निर्दिशति । अयं भावः सन्दिग्धे हि न्यायः प्रवर्तते न प्रसिद्धेः सन्दिग्धस्यैव जिज्ञास्यत्वात्, नहि स्फीतालोकमध्यवर्ती 10 घटः केनचिद् जिज्ञास्यते प्रसिद्धत्वात् । अजिज्ञासितार्थाभिधानं वक्तुरनवधेयवचनतां सूचयति इति विनेयप्रवृत्तये प्रेक्षावद्भिरभिधेयः । सर्ववादिनाम् परमात्मा प्रसिद्धः तदयं न विचारविषयः इति तद्विषयकन्यायव्युत्पादनपरोऽयं ग्रन्थो नारम्भणीय इति भावः । इह परमात्मनि ग्रन्थे वा किं विचारणीयम् न किमपीति एकस्याभिप्रायः । अर्थयमानाइत्यस्य-चोपासते इत्यनेनान्वयः । सर्वेषां वादिनां संप्रतिपत्तिं दर्शयति—यं कमपीति । स्वस्वसम्प्रदाया- 15 नुरूपं मोक्षं फलमर्थयमानाः औपनिषदादयः यमीश्वरमुपासते मननविषयीकुर्वन्तीति संबन्धः । शुद्धः अद्वितीयः द्वितीयाभावादेवाशुद्धिशङ्का निरस्ता । बुद्धः स्वप्रकाशबोधात्मकः प्रकाशान्तराभावादेव परप्रकाश्यत्वसंभावनाविरहः इति वेदान्तिनः । आदौ प्रथमतः विद्वान् चिद्रूपः स्वभावतश्चेतनः, न तु प्रधानवच्चितिच्छायापत्त्याचेतनः । सिद्धः नित्यः कूटस्थनित्यः, नतु प्रधानवत् परिणामिनित्यः । इदं व्याख्यानं सर्वात्मसाधारणमिति न कार्यजस्योत्कर्षसिद्धि- 20 रित्यन्यथाव्याख्येयम् । "आदौ सर्गादौ विद्वान् सिद्धः आजानसिद्धाष्टविधैश्वर्यसंपद्युक्तः" तत्त्वकौमुद्यां श्रीवाचस्पतिमिश्रैरेवमेवोक्तम् इति सांख्याः । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः, कर्म धर्माधर्महेतुभावना साध्ययागादिः, विपाको जात्यायुर्भोगाः । फलपर्यन्तमाशेरते इत्याशयाः, धर्माधर्माः, तैरपरामृष्टोऽसम्बद्धः । शरीरेन्द्रियादिसाध्यवेदादिनिर्माणार्थं कायः निर्माणकायः । संप्रदीयते गुरुणा शिष्याय इति सम्प्रदायो वेदः । स च अनादिरेव भगवता 25 उपदिष्टः । यद्यपि परमेश्वरस्यादृष्टं नास्ति तथापि तत्तच्छरीरसाध्यघटादिजन्यभोगजनकजीवादृष्टैरेव तत्तदुत्पाद्यते । अनुग्राहकः जीवानुकम्पया शरीरीभूत्वा घटादिं निर्माय जीवेभ्यस्समुपदिदेश । लोकवेदविरुद्धैः अग्निसर्पधारणादिभिः वेदविरुद्धैः दारुवनद्विजवधूविध्वंसनैरुपलक्षितः "इत्थं भूतलक्षणे"इति तृतीया सोऽयमीदृशोऽपि निर्लेपः ।

स्वतन्त्रः जगत्कर्ता इति महापाशुपताः । शिवः निस्त्रैगुण्यः इति शैवाः । पुरुषेषूत्तम इति 30 पुरुषोत्तम इति वैष्णवाः । पितामहा पितुः पिता इति पौराणिकाः, याज्ञिकेषु प्राधान्येनेज्यं यज्ञपुरुषः इति याज्ञिकाः । सर्वज्ञः क्षणिकः सर्वज्ञ इति बौद्धाः । आवरणमदृष्टमविद्या

स्वकर्मोपार्जितश्चशरीरमस्य नास्तीत्यर्थः। वेदोपदिष्टोपास्यभावः कश्चिन्मन्त्रादिरिति मीमांसकाः। यावदुक्तेषु यदुपपन्नं सर्वज्ञत्वादि तेन संपन्न इति मध्यमपदलोपिसमासः। मया यानि विशेषणानि उक्तानि तेषु यावदुपन्नं तेन उपपन्न इत्यर्थः। यथा शुद्धो देहादिरहितः सर्वज्ञ इत्यादिः। जातिः ब्राह्मणत्वादि। गोत्रं काश्यपादि। यज्ञे क्रियमाणा ऋत्रय एव प्रवराः। चरणं
5 शाखा। अनुभावोऽसाधारणं कार्यं वेदादि। अतएव भवत्यस्मादिति भवः। एवं च जगति गोत्रादिवत् संसारमभिव्याप्य यावत्संसारं श्रुत्यादिप्रमाणसिद्धे भगवति भवे परमात्मनि शिवे न सन्देहोऽतस्तत्र किं निरूपणीयम् इतिशङ्काग्रन्थः। तथापीति समाधानग्रन्थः। अयमभिप्रायः यद्यपि भगवति धर्मिणि संशयोनास्ति, धर्मिणः सर्वसंमतत्वात्, तथापि धर्मिणो विहितं मननं केनरूपेण कर्तव्यमिति प्रकारविशेषाकाङ्क्षायां तत्र पूर्वोक्तविप्रतिपत्तिदर्शनेनशङ्का जायते इति
10 तन्निर्णयाय मननात्मक विचाररूपोपासना क्रियते—

न्यायेन चर्चा न्यायचर्चा अनुमितिरूपोपासनमननापरपर्याया श्रवणानन्तरं क्रियते। श्रवणानन्तरं मननं, श्रोतव्योमन्तव्य इतिश्रुत्या विहितं तत्र श्रुतिस्मृतीतिहासपुराणादिभ्यो भगवान् श्रुत इदानीं क्रमप्राप्तं मननं क्रियते अथवा सन्दिग्धे न्यायः प्रवर्त्तते इति नियमः संशयनिवृत्तिरूपं यत्र प्रयोजनं दृष्टं तत्र, अयन्तूपासनात्मको न्यायोऽदृष्ट द्वाराऽदृष्टमोक्षप्रयोजनकः
15 इति नात्रोपासनात्मकन्याये सन्देहापेक्षेत्यसन्दिग्धेऽपि न्यायः प्रवर्तते। वस्तुतस्तु संशयघटितपक्षतास्वीकारे पूर्वपक्षः, सिषाधयिषाघटितपक्षतास्वीकारेणोत्तरः पक्ष इति कश्चित्।

ननु श्रोतव्यः श्रुतिवाक्येभ्यः इति वचनेन श्रुतिभ्य एव श्रवणं न तु स्मृत्यादिभ्य इति स्मृत्यादिपदोपादानं व्यर्थमिति चेन्न। तत्र श्रुतिपदस्य श्रुत्यर्थकवाक्योपलक्षणपरतया प्रमाणदार्ढ्याय तन्मूलकस्मृत्यादिवाक्यतोऽपि श्रवणस्येष्टत्वात्, श्रुत्यर्थकभाषावाक्यतोऽप्यात्मश्रवणं
20 मोक्षाय कल्पते इत्यन्यत्र विस्तरः। आगमवाक्यजन्यशाब्दज्ञानेन अनुमानेन निर्विचिकित्सशाब्दसाधनस्वरूपमननेन ध्यानाभ्यासरसेननिदिध्यासनेन त्रिधा प्रज्ञां प्रकल्पयन् उत्तमं योगमात्मसाक्षात्कारं पुरुषो लभत इति उक्तस्मृत्यर्थः ॥३॥

तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः । अलौकिकस्य परलोकसाधनस्याभावात् । अन्यथापि परलोकसाधनानुष्ठानसम्भवात् । तदभावावेदकप्रमाणसद्भावात् । सत्त्वेऽपि तस्याप्रमाणत्वात् । तत्साधकप्रमाणाभावाच्चेति तत्र न प्रथमः कल्पः । यतः—

**सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।**
**प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥४॥**　5

न ह्ययं संसारोऽनेकविधदुःखमयो निरपेक्षो भवितुमर्हति । तदा हि, स्यादेव, न स्यादेव वा, न तु कदाचित् स्यात् ॥४॥

आमोदः

**तदिहेति** । यस्माद्विप्रतिपत्तिजन्मा सन्देह एव तस्मादत्र । पञ्चतयी विप्रतिपत्तिरिह ग्रन्थे निरस्यत इति शेषः । एतन्निरासादेव च **वेदान्त्यादि**-विप्रतिपत्तयोऽपि निरस्ता भवन्तीति भावः । अत्र ल्यब्लोपे पञ्चमी, 10 परलोकसाधनाभावं प्राप्य विप्रतिपत्तिरित्यर्थः । एवमग्रेऽपि । वेदानाम् आप्तोक्तत्वाधीनं प्रामाण्यं यागादिगोचरप्रवृत्तिप्रयोजकम् । आप्तश्चेश्वर इत्यनुपपन्नं नित्यनिर्दोषत्वादेव वेदप्रामाण्यसिद्धेरिति मीमांसकविप्रतिपत्ति-माह—**अन्यथापीति** । नित्यनिर्दोषवेदप्रामाण्येऽपीत्यर्थः । क्षित्यादेः सकर्तृ-कत्वेन ईश्वरसाधने प्रत्यक्षादिप्रमाणबाध इत्याह—**तदभावावेदकेति** । सन्न- 15 पीश्वरो न प्रमाणम् । तथा च कुतस्तदधीना प्रमा । कथञ्च तामन्तरेण क्षित्यादिकर्तृत्वं वेदवक्तृत्वं वा इत्याह—**सत्त्वेऽपीति** । यद्वा तस्येश्वर-ज्ञानस्य अप्रमाणत्वात् गृहीतग्राहित्वात् । क्षित्यादिकर्तृत्वग्राहकं वेदवक्तृ-त्वग्राहकं प्रमाणमेव नास्ति, वक्ष्यमाणानामाभासत्वादित्याह—**तत्साधकेति** ।

**तत्रेति** । तासु विप्रतिपत्तिषु मध्ये प्रथमः कल्पो न, प्रथमः पक्षो 20 नेत्यर्थः । कथमेवमित्यत आह—**यत** इति । यतो हेतुरस्ति, स चालौकिक इत्यन्वयः । तदेव कथमित्यत आह—**सापेक्षत्वादिति** ।

हेतुर्दण्डादिरस्ति घटादिकार्यनियतपूर्वसन्निति प्रतिज्ञा मृद्दण्डचक्रा-दीनां परस्परसापेक्षत्वात् । न ह्येषां परस्परापेक्षाऽनुभूयमाना घटादिकार्य-म[न्त]रेण सम्भवति । यद्वा कार्यं सहेतुकं सापेक्षत्वात् दण्डाद्यपेक्षोत्- 25 पत्तिकत्वादित्यर्थः । अनुमानप्रामाण्यं च व्यवस्थापयिष्यते । हेत्वनभ्यु-पगमे परप्रतिपत्त्यर्थं वाग्व्यवहारो व्याहत इति भावः । ननु हेतुरपि

दण्डादिः कदाचित्क इति सहेतुको वाच्य एव, तत्रापि सहेतुकत्वमित्यनवस्था इत्यत आह—अनादित्वादिति । बीजाङ्कुरवत् । ननु भवतु साधनं तच्च दृष्टमस्मदाद्यधिष्ठेयमिति नादृष्टं साधनमस्ति येन तदधिष्ठानार्थमीश्वरापेक्षेत्यत आह—वैचित्र्यादिति । दृष्टमात्रेण वैचित्र्यं कार्याणामनुपपन्न-
5 मतोऽदृष्टं कल्पनीयमित्यर्थः । तथापि दृश्यमेव तथास्तु किमन्येनेत्यत आह—विश्ववृत्तित इति विश्वेषां प्रामाणिकानां वृत्तिर्यागादौ प्रवृत्तिर्धर्मार्थाऽतो न कथमदृष्टसिद्धिरित्यर्थः । तथापि तददृष्टं साधारणमस्तु, किं प्रत्यात्मनिष्ठतया भिन्नं कल्पनीयमित्यत आह—प्रत्यात्मनियमादिति । हेतुभिः साध्यं विशिष्टमर्थमाह—अस्तीति । 'हेतु' रस्ति, स चालौकि-
10 कोऽपीत्यर्थः । हेतुसत्त्वे यत् प्रमाणमुक्तं तत्र तर्कमाह—न हीति । अनेकविधदुःखमय इति जगद्वैचित्र्यार्थम् संसार इत्यदृष्टसिद्ध्यभिप्रायेण । निरपेक्षत्वे विपक्षदण्डमाह—तदा हीति । 'स्यादेव' नित्यः स्यादिति स्वमतेन, स्यादित्यलीकं स्यादिति परमते आपादनं, तेन नित्यानभ्युपगमात् आपादकश्च निरपेक्षत्वमेव, तच्चाहेतुकत्वम् । अहेतुकस्य मतभेदे द्वयी गतिः ।
15 नित्यत्वमलीकत्वं वा, न तु कादाचित्कः स्यादिति उभयथापि कदाचित्कत्वमनुभूयमानं हेतुः स्यादित्यापाद्यद्वयस्य तृतीयमापादनम् ॥४॥

### बोधनी

ननु प्रमाणायत्तं मननं, प्रमाणं त्वीश्वरविषयं तत्तदादिविप्रतिपत्तिदूषितं कथं मननसाधनमित्याशङ्कां निरसितुं परिच्छेदपञ्चकनिराकरणीया विप्रतिपत्तीस्तावद्दर्शयति—तदिहेति । तदिति वाक्योपक्रमे, प्रकरणस्यारम्भ्यत्वादिदिति हेतौ वा । इह—प्रकरणे,
20 जगत्कर्त्तरि, तद्विषये प्रमाणयुगले वा । निरस्यत इति शेषः । तत्र परमनास्तिकचार्वाकविप्रतिपत्तिं प्रथममाह—अलौकिकस्येति । अयमाशयः—अलौकिकहेतुसिद्धौ तस्य साधनानुमानायत्तसिद्धित्वात्, तदनुमानस्य च ज्ञानमन्तरेणानुपपत्तेस्तस्य चास्मदादीनामसम्भवादुपदेशमूलेन भवितव्यम् ; उपदेशश्च न विशिष्टमुपदेष्टारं विनेति लोकोत्तरः कल्प्येतापि न त्वेवं सम्भवति, अलौकिकस्य परलोकसाधनस्यैवाभावात् तदभावे च तदधि-
25 ष्ठातुर्जगत्कर्त्तुरनुपपत्तेः कार्यत्वहेतुरपि शिथिलः स्यादिति । अस्त्वलौकिको हेतुस्तत्साधनोपदेशश्च, तथाप्युपदेशस्य नित्यत्वपुरुषान्तरपूर्वकत्वयोरपि सम्भवादसिद्धमाप्तोक्तत्वम्, अन्यथासिद्धं वेति न विवक्षितपुरुषसिद्धिरिति मीमांसकादिविप्रतिपत्तिमाह—अन्यथेति ।

कार्यत्वहेतुरपीश्वरमन्तरेणास्मदादिभिरेवादृष्टद्वारा परमाण्वादिसाधनानां प्रेरणात्मकानुष्ठान-सम्भवात् सिद्धसाधनमिति भावः। बाधितविषयं प्रमाणद्वयमित्याह—**तदभावेति**। ननु सत्यपि वेदकर्त्तरि न तत्प्रणीतत्वादागमः प्रमाणं तत्कर्त्तुरप्रमाणत्वात्, यद्ययं प्रमाणं स्यात् तदा प्रमाणस्य प्रमातृत्वनियमादीश्वरस्याचैतन्यं स्यादित्यनिष्टप्रसङ्गलक्षणप्रतिकूल-तर्कप्रतिहतत्वान्न साधनमुपदेशः कार्यत्वं चेत्याह—**सत्त्वेऽपीति**। किञ्च, प्रमासाधनस्य 5 प्रमाणत्वान्नित्यप्रमाश्रयस्य तदसम्भवादप्रमाणत्वम्, किञ्च, अनधिगन्तुः प्रमाणत्वान्नित्य-सर्वज्ञस्य च तदसम्भवादप्रमाणत्वम्, किञ्च ईश्वरज्ञानस्यास्मदादिभ्रमानालम्बने सर्वविषयक-त्वाभावः, तदालम्बने च तद्विषयालम्बनस्यापि नान्तरीयकत्वादस्मदादिविभ्रमवदेवाप्रमाणत्वा-पात इति तर्काः। अत्र **सत्त्वेऽपीति** सत्त्वाभ्युपगमो बाधकाभावात् सम्भावनामात्रेण, न वस्तुत इति। अस्त्वनन्यथासिद्धादुपदेशाद् विशिष्ट उपदेष्टा। तथापि कार्यत्वस्य 10 विपक्षे बाधकाभावेन सन्दिग्धविपक्षव्यतिरेकित्वम्, उपाधिसद्भावेनाप्रयोजकत्वम्, व्याप्ति-प्रमाणाभावेन व्याप्त्यसिद्धिरिति जगत्कर्तृत्वादिविशिष्टे परमेश्वरे प्रमाणाभावादिति बौद्ध-मीमांसकचार्वाकाः प्रत्यवतिष्ठन्ते **तत्साधकेति**। केचित् 'पूर्वमुपदेशलिङ्गकमनुमान-मेव चिन्तितं न तु कार्यलिङ्गस्य प्रस्तावः, सम्प्रत्युपदेष्टरि सिद्धेऽपि जगत्कर्त्तरि प्रमाणाभावमेव वदन्तः प्रत्यवतिष्ठन्त' इति व्याचक्षते। अनेन विप्रतिपत्तिप्रदर्शनेन 15 न्यायस्य सन्दिग्धविषयत्वमपि प्रदर्शितं भवति।

तत्र यथाभिमतस्या**लौकिकस्य** हेतोः साधकानि सङ्कल्प्याह—**सापेक्षत्वादिति**। अत्र तावत् **सापेक्षत्वेन**, सत्येव हेतौ कार्यं भवति नासतीति सर्वलोकप्रसिद्धं प्रत्यक्षं हेतुमत्त्वे प्रदर्शितम्; अनुमानं च—विवादाध्यासितं हेतुमत् सापेक्षत्वात्। सापेक्षत्वं च कदाचित्कत्वात्। अत्रोभयत्रापि व्यतिरेकेण गगनं दृष्टान्त इति। ननु सापेक्षत्वेऽपि 20 कादाचित्कत्वानुपपत्तिः, अपेक्षणीयस्य सदातनत्वेन कार्यस्यापि सदातनत्वप्रसङ्गात्। तथाच निरपेक्षादिव सापेक्षादपि व्यावृत्तेः कदाचित्कत्वहेतुराधारणः स्यादित्यत्राह—**अनादित्वादिति**। न हि कारणस्य सदातनत्वं, तस्याप्यपेक्षणीयान्तरसम्भवात्, न चानवस्था, कार्यकारणप्रवाहस्या**नादित्वादिति**। यद्वा, कारणान्तरानपेक्षत्वेऽपि भावस्योत्तरकोटिना प्रध्वंसमात्रेण कादाचित्कत्वोपपत्तेर्नेदं सापेक्षत्वव्याप्तमित्याशङ्क्याह— 25 **अनादित्वादिति**। निरपेक्षत्वे कार्यस्यानादित्वप्रसङ्गात् सापेक्षपरम्पराप्रवाह**स्याना-दित्वा**दिति।

नन्वेकमेकजातीयं वा किञ्चित् कारणमस्तु, तथा च विवक्षितकारणासिद्धेर्न तदर्थ-मुपदेशापेक्षेति तत्राह—**वैचित्र्यादिति**। विचित्रकारणाभावे कार्यवैचित्र्यं न स्यात्,

अस्ति च तदिति। अस्तु तर्हि दृष्ट एव विचित्रो हेतुर्जगद्वैचित्र्यस्य, तथाच विवक्षितासिद्धिस्तदवस्थेत्यत्राह—**विश्ववृत्तित** इति। तावन्मात्रहेतुत्वे प्रेक्षावतो विश्वस्य पशुपुत्राद्यर्थं यागादौ प्रवृत्तिर्न स्याद्, दृश्यते चासौ, तस्माद्यागादिरपि कारणमिति। तर्हि यागादिस्वरूपमेव कारणमस्तु, तथापि विवक्षितासिद्धिरित्यत्राह—**प्रत्यात्मे**ति।
5 यागादिस्वरूपस्यैव हेतुत्वे तस्य क्षणिकत्वात् कालान्तरभाविनः फलस्य भुक्तिर्न स्यात्, तस्मात् तेनान्तरा किञ्चिदपूर्वमनेन कल्पयितव्यम्[१] तच्च **प्रत्यात्मसमवेतं**, भोगं प्रति नियमदर्शनात्। तथा च तस्यास्मदादिभिरशक्यज्ञानत्वात् तदुपदेष्टा तदधिष्ठाता जगत्कर्त्ता चेश्वरः सिध्यतीति प्रथमपरिच्छेदार्थसंग्रहश्लोकतात्पर्यार्थः ॥ ४ ॥

## विवेकः

**तदिति** वाक्योपक्रमे। 'इह' परमात्मनिरूपणे कर्तव्ये 'संक्षेपतः' अवान्तराविवक्षया
10 'पञ्चतयी' पञ्चप्रकारा 'विप्रतिपत्तिः' विपरीता प्रकृतसिद्धिबाधिका असाधकत्वविषयिका प्रतिपत्तिः। तस्यां[२] च पञ्चतय्यां विरोधिप्रतिपत्तौ हेतूनाह—**अलौकिकस्ये**त्यादि। तथा हि अलौकिकं परलोकसाधनमदृष्टं पक्षयित्वा चेतनाधिष्ठितत्वमचेतनत्वे सति जनकत्वे जनकत्वेनैव वा साध्य-साध्यसाधनमस्मदाद्यधिष्ठानबाधसहकारेण पक्षधर्मताबलादीश्वरे पर्यवस्यतीत्यत्रायं हेतुरसाधक आश्रयासिद्धेरिति विरुद्धा प्रतिपत्तिः। तत्र चाश्रया-
15 सिद्धिर्हेतुः, सा चालौकिकपरलोकस्य साधनाभावरूपैवेति तत्र घटकीभूतप्रत्येकाभावस्यापि तथात्वमिति कृत्वोक्तं **संक्षेपत** इति। तथा च तद्धेतुका विरुद्धा प्रतिपत्तिरिति फलति। एवमग्रेऽपि। वेदो वक्तृवाक्यार्थज्ञानजन्यः प्रमाणशब्दत्वादित्यनुमानेन भगवत्सिद्धौ 'अन्यथापि' वाक्यार्थज्ञानजन्यत्वं विनापि। दोषाभावादेव परलोकसाधनस्य यागादेरनुष्ठानं, यतः प्रकृते[५]वेदरूपस्तस्य सम्भवात् अप्रयोजकत्वज्ञानात् विप्रतिपत्तिः। ईश्वरसाधकप्रमाण-
20 सामान्य एव 'तदभावावेदकप्रमाणसद्भावादि'ति बाधसामग्रीतया वा विपरीतप्रतिपत्तौ हेतुः। एवं "मन्त्रायुर्वेदप्रामाण्यवच्च तच्च [तत्?]प्रामाण्यमाप्तप्रामाण्यादि"त्यत्र वेदप्रापाण्ये आप्तप्रामाण्यं हेतुः, तत्र तज्ज्ञानप्रामाण्याभावो हेत्वप्रसिद्धिरूपतया विपरीतप्रतिपत्तौ हेतुः, स च 'सत्त्वेऽपि तस्याप्रमाणत्व'रूपः। यद्वा वेदः प्रमाणवक्तृकः प्रमाणशब्दत्वात् इत्यनुमानेन पक्षधर्मताबलादीश्वरः साधयिष्यते, तत्र सम्भवति, तस्य प्रामाणत्वाभावादिति।
25 पक्षधर्मताबललभ्ये साध्यतावच्छेदकांशेऽभावरूपा साध्याप्रसिद्धिरुक्ता। एवं क्षितिर्न

---

१—ख. जनयितव्यम्। २ ख—च नास्ति। ३. ख—त्वेन। ४. ख—साध्य नास्ति। ५. क. प्रकृतेर्वेद–।

सकर्तृका सकर्तृकत्वसाधकप्रमाणाविषयत्वादित्यपि हेतुर्बाधोत्थापकतया तथा, एवम् अन्यथा तत्साध्यकेऽपि बोध्यम्। प्रकाशकृतस्तु सत्यामपि सिषाधयिषाधीनायां पक्षतायां परार्थानुमानस्थले विप्रतिपत्तिजन्मानमेव संशयमङ्गमङ्गीकृत्य विप्रतिपत्तिपदं यथाश्रुतार्थकमेव; 'संक्षेप' श्चावान्तरविप्रतिपत्त्यविवक्षा[1], तत्र विषयिण्यां विप्रतिपत्तौ विषयस्य प्रयोजकत्वविवक्षया पञ्चमीत्याहुः। ल्यब्लोपे पञ्चमीयं तत्तद्विषयं प्राप्य इमा विप्रतिपत्तय इति केचित्। प्रत्येकं तु विप्रतिपत्तिरेवम्।—प्रमेयत्वं साक्षात्कारित्वनिरूपितविषयत्वव्याप्यं न वा? यदि योगजज्ञानस्यापीदृशी विषयता तदा तदनिरूपितत्वेनापि विषयत्वं विशेष्यम्, ईश्वरज्ञानत्वञ्च न तादृशविषयत्वप्रतियोगीति हृदयम्। भवतु वा योगप्रागभावप्रयुक्तप्रागभावाप्रतियोगित्वरूपं योगाजन्यत्वं तादृशविषयतानिरूपकज्ञानविशेषणं, भवतु वा जन्यत्वमेव विशेषणम्। अप्रसिद्धिस्तु 'कल्प' इत्यनेन मूल एवाभिधास्यते। तद्विशेषेऽदृष्टे च आत्मा ऐन्द्रियकावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्समवायी न वेति? तदेव विहितजन्यवृत्तित्वेन निषिद्धजन्यवृत्तित्वेन च जातिविशेषणे धर्माधर्मयोस्तथा, जीवनयत्नत्वभावनात्वादि च न गुणत्वसाक्षाद्व्याप्यमिति। शरीरत्वं दुःखावच्छेदकावृत्तिजातिसमानाधिकरणं न वेति स्वर्गे, तदेव दुःखपदस्थाने सुखपदप्रक्षेपेण नरके। न च सुखदुःखान्यतरानवच्छेदकशरीरसिद्ध्यार्थान्तरमिति वाच्यम्, शरीरवृत्तिजातित्वावच्छेदेन तदन्यतरावच्छेदकवृत्तित्वनिर्णयेन बाधादेव तदनवकाशात्। उभयावच्छेदकावृत्तित्वस्य तद्विशेषणत्वे तु सामान्यतः परलोकमात्रे। साधनत्वे तु दण्डत्वं घटाव्यवहितप्राक्कालवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकं न वा? तत्तद्घटनिरूपिततत्तदव्यवधानानाञ्च संसर्गमर्यादयैव निवेशात् सामान्यतो नाप्रसिद्धिः, निषेधकोटेश्चाकाशादौ तादृशसम्बन्धाप्रतियोगिनि धर्मान्तरे कम्बुग्रीवादिमत्त्वादौ वा प्रसिद्धिः। दण्डादाववधित्वलक्षणं कारणत्वं निर्णीतम्। कार्यत्वावच्छेदेन तादृशकारणवत्त्वस्य साध्यत्वे तु कार्यं सकारणकं न वा? कार्यत्वमवधितानिरूपकतावच्छेदकं न वेत्यादि। इत्थञ्चालौकिकत्वं परलोकसाधनवृत्ति न वा; परलोकसाधनत्वमलौकिकवृत्ति न वेत्याद्याः प्रत्येकसिद्ध्यनन्तरं विप्रतिपत्तयोऽनुसन्धेयाः।

कार्यकारणभावासिद्धौ च न कर्तृतया, तदसिद्ध्या परलोकसिद्ध्या च न तत्साधनाय यागादिद्रष्टृतयाऽदृष्टासिद्धौ च न तदधिष्ठातृतया तत्सिद्धिरिति पूर्वपक्षयितुरभिप्रायः। नन्वाश्रयासिद्धेर्हेतावसाधकत्वं साधनीयम्। पक्षञ्चालौकिकं परलोकसाधनम्,

---

[1] ख.-नपेक्षा।

तत्रालौकिकसामान्ये परलोकसाधनत्वाभावो वा, परलोकसाधनेऽलौकिकत्वाभावो वा ? तदुभयमेव निराकरोति—

**तत्रे**ति । 'प्रथमः कल्पः, पक्षः, न तत्राद्यमित्यमिप्रेत्याह —**अतो** हेतुरस्ति, परलोक इति शेषः, परलोको यतो हेतुमानिति यावत् ।

5 तत्र हेत्वाकांक्षायामाह—**सापेक्षत्वा**दिति । प्रागभावप्रतियोगित्वादित्यर्थः । तथा च परलोको हेतुमान् सापेक्षत्वात् घटवदिति फलति । स च तद्धेतुः प्रागभाव-प्रतियोगी सहेतुको न वा ? अन्त्ये तत्रैव व्यभिचारः । प्रथमे तत्तद्धेतुतादृशपरम्परायां तदभ्युपगमे अनवस्थेति कश्चित् तादृशो निर्हेतुक एव वाच्यस्तथा च तत्रैव व्यभिचार इत्यत्राह—**अनादित्वा**दिति । इयमनवस्था न प्रमाणप्रवृत्तिविरोधिनी अनाद्यन-10 वस्थात्वात् बीजाङ्कुरानवस्थावदित्यर्थः । अथवायं यदि सहेतुर्न स्यात् तर्ह्यनादिः स्यादित्येव तर्कोऽनेन सूचितः । पञ्चम्यर्थश्च विपर्ययसिद्धयौपयिकव्यापकताज्ञानविषयत्वम् । द्वितीये त्वाह—**वैचित्र्या**दिति । परलोको विचित्रहेतुकः कार्यत्वे सति विचित्रत्वात् । कार्यत्वे सति यद् यदपेक्षया विचित्रं तत्तत्कारणविचित्रहेतुकमिति सामान्यमुखी व्याप्तिः । नन्वत्र दृष्टेनैव विचित्रेण हेतुना अर्थान्तरमत आह—**विश्ववृत्ति**त इति । विश्वेषां परलोकार्थिनां 15 वृत्तितः प्रवृत्तितः । तथा च निष्फले कर्मणि प्रवृत्त्यसम्भवात् । यागादिः सफलः शिष्टा-चारविषयत्वात् पाकवदित्यनुमानेन तस्य सफलत्वसिद्धौ साक्षात् साधनत्वासम्भवेन तद्व्या-पारः कश्चित् फलानुगुणो वाच्यस्तत्र चैन्द्रियकत्वबाधादतीन्द्रियत्वं सिध्यतीत्यलौकिकेन [१]परलोकसाधनं नासिद्धमिति भावः । नन्वस्यात्मसमवेतः कश्चित् योग्य एव धर्मो व्यापारत्वेन सम्भाव्यतां, न च तस्य पुरुषानध्यक्षतामात्रेणैवालौकिकत्वमत आह—**प्रत्यात्म-20 नियमा**दिति । यागव्यापारयोः फलव्यापारयोश्च सामानाधिकरण्यप्रत्यासत्त्यैव कार्यकारण-भावः कल्प्यते लाघवात्, व्यधिकरणस्य तत्त्वे चातिप्रसङ्गात् । यागः कालान्तरभाविफलानु-कूलस्वसमानाधिकरणव्यापारक आत्मसमवेतत्वे सति कालान्तरभाविफलानुगुणत्वात् स्मृत्यनु-कूलानुभववत् । भोगो वा स्वसमानाधिकरणव्यापारजन्यः स्वात्मसमवेतत्वे सति विनष्टकारण-जन्यत्वात् स्मृतिवदित्यादयः प्रयोगाः । अवघातजनकव्रीहिप्रोक्षणे तदभिघाते व्यभिचार-25 वारणाय सत्यन्तम् । **प्रकाश**कृतस्त्वलौकिकं परलोकसाधनत्वं वाऽनभ्युपगच्छतो नाश्रयासिद्ध्याद्युद्भावनं घटते, प्रतियोग्यप्रसिद्ध्या निषेधानिरूपणात् । तत्र यदि सत एव

---

१. क. परलोके साधनत्वमसिद्धमिति ।

प्रतियोगिनः ख्यातिमादाय प्रत्यवतिष्ठते तत्राह—**क्लृप्तो यत** इति। ख्यातिविषयत्वस्य सत्त्वव्याप्यत्वात् असत्ख्यात्याप्रसिद्धमित्यपार्थकं यत इति।

नन्वभ्युपेत्य परलोकादिकमुक्तप्रणाल्या प्रत्यवस्थेयं, मयैव त्वदुपरि अपार्थकत्वमुद्भावनीयं विशिष्टपक्षाप्रसिद्धेरत्राह—**सापेक्षत्वा**दिति। पूर्वव्याख्यानुसारेणैव निगदितार्थमेतत्।

सहेतुकत्वसाध्यानुमाने अनुकूलतर्कमाह—

**न ह्ययमि**ति। अयं यदि सत्त्वे सति निरपेक्षः स्यात्, स्यादेव तर्हि नित्यः संसारः प्रागभावाप्रतियोगी। 'अनेकविधे'ति विचित्रेत्यर्थः। एतच्च 'वैचित्र्यादि'त्यत्रोपयोक्ष्यते। 'दुःखमय' इति वैराग्योपदर्शनाय, तस्य च मुमुक्षायामुपयोगः। निरपेक्षो निर्हेतुकः। यद्वा यदि सहेतुको न स्यात् तदा सापेक्षको न स्यादित्यत्रेष्टापत्तिं निरस्यति—**न ह्ययमि**त्यादिना। अयं यदि सत्त्वे सति निरपेक्षः स्यात् स्यादेव नित्यः, जनकतासम्बन्धेन ध्वंसाविशिष्टस्य नित्यत्वे 'सत्त्वे सती'ति नोपादेयम्। परमते त्वाह—**न स्यादेवे**ति। अलीकं स्यादित्यर्थः। सत्त्वञ्च सम्बन्धसामान्येन केवलान्वय्यत्यन्ताभावप्रतियोगित्वम्। उभयमते त्वाह—**न त्वि**ति। कादाचित्कत्वं महाप्रलयपूर्वकालनिष्ठा(?)व्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वं[१] तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं वा, यथाश्रुते प्रागभावे व्यभिचारात्। यद्वा 'स्यादेवे'त्यस्य निखिलकालवृत्तित्वे सति सत्त्वं न[?]स्यात्, 'न स्यादेवे'त्यस्य च कालावृत्तित्वमर्थः, कालवृत्तिश्चाकाशादावेव[२] प्रसिद्धः, तत्र कालवृत्तित्वे सति सहेतुकत्वापादकः, तेन पूर्वत्राकाशादौ द्वितीये प्रागभावे न व्यभिचारः। विशेषणवत्तयाऽवगते विशिष्टाभावः सिध्यन् विशेष्याभावमादाय पर्यवस्यतीति संशयैककोटिमात्रपर्यवसायिता विपर्ययद्वारा तर्कस्येति नानुपयोगः। विशिष्टाभावस्यातिरिक्तत्वेऽनतिरिक्तत्वे वा येन रूपेण संशयकोटिता तेनापर्यवसानमित्यभिप्रायेणाह—**न त्वि**ति। **परे** तु अयं घटो यदि सहेतुको न स्यात् तदा एतत्प्रागभावकालवृत्तिः स्यात् एतत्कालान्यकालवृत्तिश्च स्यादिति 'स्यादेवे'त्यस्यार्थः। तत्र गगनादेः कालावृत्तित्वनये तत्र व्यभिचारमाशङ्क्याह—**न स्यादेवे**ति। एतदधिकरणकालमात्रवृत्ति न स्यादित्यर्थः। अयञ्च विशिष्टाभावः कालवृत्तावपीति नोक्तव्यभिचारः, कादाचित्कत्वञ्च सत्त्वे सत्येतदुत्तरकालवृत्तित्वं, सत्त्वे सति कालवृत्तित्वं वा तुः समुच्चयार्थ इत्याहुः। अन्यच्च वैषम्यमुदक्षरतया उपेक्षितम् ॥४॥

---

१. क. तन्निष्ठान्योन्याभावप्रतियोगित्वमित्यधिकः पाठः। २. ख—दिरेव।

## परिमलः

ननु भगवति सन्देह एव नास्तीत्युच्यते तदा न्यायप्रवृत्तिरेव न सम्भवति, न हि करिणि प्रत्यक्षे चीत्कारेण तमनुमितेऽनुमातार इति वाचस्पत्युक्त्या सिद्धसाधनेऽनुमानाप्रवृत्तेः। न च सिद्धसाधनं परार्थानुमाने एव दोषो, न तु स्वार्थानुमाने, एकत्रानेकप्रमाणसंप्लवस्येष्टत्वादिति वाच्यम्। अनुमानाङ्गपक्षताघटकसंशयविघटकसाध्यनिश्चयस्योभयत्र तुल्यतया एकत्रादूषणत्वे
5 विनिगमकाभावात्; स्वार्थानुमाने न्यायप्रयोगस्याभावेन सिद्धसाधनस्य तत्रोपन्यासानर्हत्वेना-दूषणत्वेऽपि परार्थानुमानपरकप्रबन्धे न्यायप्रयोगस्यावश्यकतया दूषणत्वेन तदुपन्याससंभवाच्च। ननु 'यथाग्निहोत्रं जुहोति', 'यवागूंपचति, अत्र शाब्दक्रमेण पूर्वमग्निहोत्रं ततः यवागूपाकः प्रतीयते, परन्तु शाब्दक्रममुल्लंध्यार्थक्रमेण पूर्वं यवागूपाकस्ततोऽग्निहोत्रमिति मीमांसकैर्व्यवस्थापितं, तथा प्रकृते श्रोतव्यो मन्तव्य इति शाब्दक्रमं विहायार्थक्रमेण पूर्वं मननं ततः श्रवणमिति स्वीकारे
10 न सिद्धसाधनमिति चेन्न। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। दृष्टान्ते शाब्दक्रमेणानुष्ठाने अग्निहोत्रे साधनानिर्देशात् साधनान्तरस्य ध्रौवान्यस्य यवागूपाकवाक्ये साध्यानिर्देशादनेन किं भाव्यमित्य पेक्षायां भाव्यानिर्देशादगत्यादृष्टस्य च ग्रहणं स्यात्। आर्थक्रमेणानुष्ठाने तु यवागूपाकहोमयोः साध्यसाधनलाभेन यवागूं पचतीत्य दृष्टार्थकत्वमेवेति लाघवमत एव "लभ्यमाने फले नादृष्ट-परिकल्पनेति" भट्टपादोक्तिः सङ्गच्छते। प्रकृते तु शाब्दक्रमत्यागे न किञ्चिद्बीजमिति
15 सिद्धसाधनं दुर्वारमेव श्रवणं विना मननस्वीकारे श्रवणानन्तरागतेत्यनेन विरोधश्च स्यात्। न च येन येन प्रकारेण श्रवणन्तत्तदन्येन प्रकारेण मनने न दोष इति वाच्यम्, श्रुतिवाक्येभ्य इति बहुवचनदर्शनेन सर्वप्रकारकश्रवणस्य विहितत्वात्। न च श्रुतिविहितश्रवणप्रकारीभूतधर्मा-तिरिक्तधर्मप्रकारेण मनने न दोष इति वाच्यम्, प्रमाणभावेनाश्रौतधर्मस्य ग्रहाण्यनङ्गीकारात्। तदवृत्तिधर्मेण तन्मननस्य प्रमाणभावेन प्रकृतानुपयोगात्। अथ "कपिञ्जलानालभेत" इति
20 वाक्ये बहुवचनेन सर्वेषां कपिञ्जलानामालम्भः कर्तव्यत्वेन प्रतीयते, न च कश्चित् सर्वेषां कपिञ्जलानामालम्भं कर्तुमर्हतीति यावतामालम्भं कर्तुं शक्नोतीत्यर्थे शास्त्रस्याव्यवस्थितार्थकत्वं स्यादिति तत्रत्यबहुवचनं त्रित्वसंख्यापरं प्रथमोपस्थितत्वादेवं च त्रय एव कपिञ्जला आलब्धव्या इति पूर्वमीमांसायां निर्णयस्तद्वदिहापि श्रुतिवाक्येभ्य इति बहुवचनेन श्रौतवाक्यत्रयोक्तधर्म-णैवात्मश्रवणं विहितमिति तदन्यश्रौतात्मधर्मेण मनने नोक्त दूषणमिति चेन्न। "श्रोतव्यो
25 मन्तव्य" इति श्रुतौ सामानाधिकरण्यनिर्देशाद येन रूपेण श्रवणं तेनैव रूपेण स्मरण-स्येष्टत्वात्। रूपान्तरेण मननं प्रति रूपान्तरेण श्रवणस्यानुपयोगितया व्यर्थत्वापत्तेश्च, रूपान्तरेण मननस्य श्रौतार्थेऽयोग्यत्वार्थकत्वेन निवर्त्तकत्वानुपत्तेश्च। न च श्रुतेऽपि भगवति श्रुतिप्रामाण्यसंशयाधीनः संशयः संभवतीति वाच्यम्। श्रुतिप्रामाण्ये संशयानस्य तद्विहिते चिरायाससाध्ये मनने पुरुषस्य प्रवृत्त्यनुपपत्तेः, तथात्वे च वेदप्रामाण्यानुमानस्योपजीव्यत-
30 यौचित्येनेश्वरानुमानानुपयोगात् विस्तरस्तु प्रकाशे द्रष्टव्यः। उक्तरीत्यानुमानमात्रं प्रति संशयस्यानङ्गत्वेऽपि जिज्ञासितार्थानुमितौ संशयस्य हेतुत्वमस्त्येव यद्वा अनुमितिनिवर्त्तनीया-भावप्रतियोगित्वेन संशयोऽनुमितिहेतुरिति यो मन्यते तम्प्रति भिन्नविषयकधर्मविशेषसंशयो धर्मिविषयकन्यायप्रवृत्तिहेतुरिति स्वीकार्य्यमित्यभिप्रायेण संशयकारणभूतां विशेषविप्रतिपत्तिमत्र दर्शयति—तदिहेति। संशयं विना न्यायप्रवृत्तिर्न भवति इति ये मन्यन्ते तत्परितोषायैव
35 विप्रतिपत्तिप्रदर्शनम्, न तु संशयं विना मननमेव न भवतीति तात्पर्यम्।

तदिति वाक्यारम्भे 'इह' परमेश्वरे तत्प्रमापकप्रमाणयुगले शाब्दानुमाने वा संक्षेपोऽवान्तरविप्रतिपत्त्यविवक्षा, तेनावान्तरानेकविप्रतिपत्तिसत्त्वेपि न पञ्चत्वहानिः। प्रयुक्तत्वं पञ्चम्यर्थः, विरुद्धा प्रतिपत्तिः, प्रतिपत्तिर्ज्ञानं तदभिलापो वा। आद्या—एकधार्मिकविरुद्धनानाधर्मप्रकारकं ज्ञानं। यथा—शब्दो नित्यो वा अनित्य इत्यादिज्ञानरूपा। द्वितीया—तदभिलापकताद्दशशब्दप्रयोगरूपा। आद्याया विषयजन्यत्वेऽपि द्वितीयायास्तदजन्यत्वेन 5 जन्यत्वमुपेक्ष्य प्रयुक्तत्वमुक्तम्, दण्डाभावाद् घटाभाव इत्यादौ नित्येऽपि घटाभावे दण्डाभावप्रयुक्तत्वव्यवहारदर्शनात्। लौकिकप्रत्यक्षविषयो लौकिको घटादिस्तद्भिन्नमलौकिकं परमाण्वादि। संयोगसंयुक्तसमवायादिषु षट्सु संसर्गेषु तदन्यतमसंसर्गजं ज्ञानं प्रत्यक्षम् लौकिकम्। साक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयत्वं प्रमेयत्वव्याप्कं न वा ? विधिकोटिश्चार्वाकस्य, निषेधकोटिस्तार्किकस्य। अत्रेन्द्रियसन्निकर्षाश्रयत्वमात्राभिधाने तस्य परमाण्वादिष्वपि सत्त्वेन तत्रातिप्रसक्तिस्तेषामलौकिकत्वात् व्यतिरेके च बाधः ; अतः साक्षात्कारकारणेत्युक्तम्। परमाण्वादिषु इन्द्रियसंयोगस्य उद्भूतरूपाद्यवच्छिन्नत्वाभावेन साक्षात्कारकारणत्वाभावात्। न च विषयेन्द्रियसन्निकर्षस्य विषयवदिन्द्रियेऽपि सत्त्वात्तस्यापि लौकिकत्वापत्तिरिति वाच्यम्। इन्द्रियप्रतियोगिकत्वविशिष्टसंसर्गस्यैव तत्र कारणत्वस्वीकारेण ताद्दशसंसर्गस्यात्माश्रयदोषेणेन्द्रियेष्वसत्त्वात्, नहीन्द्रियप्रतियोगित्वविशिष्टः संसर्गः इन्द्रिये स्थातुमर्हति विशिष्टाश्रयस्य विशेषणाश्रयत्वनियमेन 15 स्वस्य स्वाश्रयत्वापत्तेर्दुर्वारत्वात्। न चेन्द्रियं न संसर्गविशेषणमपि तूपलक्षणं लाघवात्तथा च स एव दोष इति वाच्यम्। तथा सतीन्द्रियस्यापि लौकिकत्वापत्तेः प्रत्यक्षत्वापत्तेः।

ननु य एव संयुक्तसमवायो रूपस्य स एव गुरुत्वस्यापि समवायस्यैकत्वादिति तस्यापि लौकिकत्वापत्तिरिति विप्रतिपत्त्यन्तरदर्शितम्। सामान्यलक्षणप्रत्यासत्त्यजन्ययोगजधर्माजन्यस्वविषयकसविकल्पकाजन्य-जन्यसाक्षात्कारविषयत्वं प्रमेयत्वं व्यापकं नवेति ? सामान्यलक्षण- 20 प्रत्यासत्तिजन्यसाक्षात्कारविषयत्वस्य जगन्मात्रे सत्त्वेनातिप्रसक्तया सामान्यलक्षणप्रत्यासत्त्यजन्यत्वं विशेषणम्। योगजधर्मजन्यज्ञानमादाय दोषवारणाय योगजधर्माजन्येत्युक्तम्। निर्विकल्पकज्ञानजन्यत्वमादाय दोषपरिहारार्थं सविकल्पकाजन्येत्युक्तम्। ईश्वरस्य सर्वज्ञतया तज्ज्ञानं सर्वविषयकमिति मदीयघटादिविषयकज्ञानविषयमपीति तजन्यत्वस्यैव सर्वत्र सत्त्वेनासंभवापत्तिवारणाय जन्येत्युक्तम्। ईश्वरज्ञानस्य नित्यत्त्वेन तद्व्यावृत्तिः। अभावज्ञानस्य संबन्धज्ञानस्य च 25 प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसम्बन्धितावच्छेदकविशिष्टसंबन्धिविषयकसविकल्पकजन्यत्वेनाव्याप्तिपरिहाराय सविषयकेत्युक्तम्। प्रतियोगिसम्बन्धिज्ञानयोरभावसम्बन्धाविषयकत्वेन तद्व्यावृत्तिः। पुनरपि उक्तविशेषणविशिष्टेश्वरज्ञानजन्यत्वस्य जगन्मात्रे सत्त्वेनासंभवापत्तिपरिहारायान्तिमं जन्यमुक्तम्। अत्र यद्यपि ज्ञानपदेनैव विवक्षितार्थसिद्धया विकल्पकपदमनावश्यकम्, तथाऽखण्डाभावस्य न वैयर्थ्यमुपरञ्जकतया तदुपादानात्। न च सविकल्पक- 30 पदानुपादाने स्वविषयकज्ञानं निर्विकल्पकमपि गृह्येत, तजन्यत्वमेव सर्वत्र घटादिसाक्षात्कारे न तु तदजन्यत्वमिति तत्साक्षात्कारग्रहो न स्यादिति वाच्यम्। ताद्दशनिर्विकल्पकसाक्षात्कारमादाय सर्वत्रेष्टसिद्धेः। यत्तु विप्रतिपत्तौ सविकल्पकसाक्षात्कारस्यैव प्रवेशः न तु निर्विकल्पसाधारणसाक्षात्कारमात्रस्य, तथा सति घटादिलौकिकसाक्षात्कारस्य स्वविषयकनिर्विकल्पकज्ञानजन्यतयाऽसंग्रहापत्तेः। न च तथापि विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षस्य स्वविषयकसविकल्पकविशेषण- 35 ज्ञानजन्यतया संग्रहो न स्यादिति वाच्यम्। ताद्दशज्ञानं प्रति विशेषणज्ञानस्य तत्त्वेन

कारणत्वं न तु जन्यस्वविषयजसविकल्पकत्वेन, तत्त्वेन च इहाजनकत्वं विवक्षितमिति । तत्तुच्छम्, यद्यपीत्यग्रिममूलग्रन्थविरोधापत्तेः, तत्र घटोयमिति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे घटत्वविषयकं यत्सविकल्पकं ज्ञानं तज्जन्यत्वस्यैव सत्त्वेन तत्संग्रहो न स्यादित्याशंक्य घटत्वविषयकनिर्विकल्पकसाक्षात्कारमादायैव तत्रेष्टसिद्धेरभिधानात्, न हि तज्ज्ञानजन्यज्ञानविषयत्वं तज्ज्ञानाजन्यज्ञानविषयत्वं तज्ज्ञानाजन्यज्ञानविषयत्वविरोधि, एकत्र घटत्वादौ तदुभयस्वीकारात् । घटत्वविषयकसविकल्पज्ञानजन्यविशिष्टवैशिष्ट्यावगाहिज्ञानविषयत्वं घटे तथा घटत्वजात्यजन्यं यद् घटत्वादिविषयकं निर्विकल्पकं तज्जन्यत्वमपीति संयोगाद्यन्यतमप्रत्यक्षजन्यसाक्षात्कारविषयत्वप्रमेयत्वव्यापकं न वेति फलितम् । अलौकिकविशेषे त्वदृष्टे प्रयत्नकारणात्मविशेषगुणनिरुपाधिविषयकारणात्मविशेषगुणत्वं लौकिकमानसप्रत्यक्षाविषयेवर्तते न वा । प्रयत्नकारणात्मविशेषगुणौ इच्छाद्वेषौ तयोर्निरुपाधिविषयौ सुखदुःखे, तत्कारणत्वविशिष्टात्मविशेषगुणत्वं मानसप्रत्यक्षविषये वर्तते न वा ? । ननु प्रत्यक्षपदेन मानसप्रत्यक्षस्यापि संग्रहान्मानसपदमनावश्यकमिति चेन्न । मनःप्रयोज्यजातिविशेषाश्रयप्रत्यक्षस्य विवक्षितत्वात् । विस्तरस्तु प्रकाशे द्रष्टव्यः ।

अलौकिकस्य परलोकसाधनस्याभावादिति प्रथमा विप्रतिपत्तिः नास्तिकशिरोमणेश्चार्वाकस्य । अयमभिप्रायः—यदि कार्यकारणभावः प्रामाणिकः स्यात्तदा क्षित्यादिकर्तृत्वेनेश्वरसिद्धिः स्यात् । पृथिव्यादिधर्मिस्वरूपदर्शनेऽपि तत्र कार्यत्वस्य सन्दिग्धत्वात् । मीमांसकादयः पृथिव्या अकार्यत्वमास्थिषत । नैयायिकादीनाञ्च कार्यत्वमित्युभयविधवाक्यदर्शनेन सन्देहो जायते । यदि कार्यत्वमत्र प्रत्यक्षं स्यात्तदा तत्कर्तृत्वस्यास्मदादिष्वसंभवेन सर्वज्ञत्वसर्वशक्तित्वादिविशिष्टलोकोत्तरः परमात्मा कल्प्येतापि । परलोके सति तत्साधनं यागादिस्तद्दर्शिन उपदेष्टुरपेक्षा च स्यात्, परलोकाभावे नास्ति तत्साधनस्य तद्द्रष्टुश्चापेक्षा अलौकिकस्यादृष्टस्यासिद्धौ तदधिष्ठातृत्वेनापि नेश्वरसिद्धिः ।

अन्यथेति द्वितीया विप्रतिपत्तिर्मीमांसकस्य । ईश्वरस्य सद्भावं विनापि परलोकसाधनानुष्ठानं सम्भवतीति न तदनुरोधेन ईश्वरसत्तापेक्ष्यते । स्वतः शब्दे दोषाः न सन्ति, वक्तृदोषादेव शब्दो मिथ्यार्थं ब्रूते इति पौरुषेयवाक्ये वक्तृदोषसंभावनया यावद्वक्तुराप्तत्वं न निश्चीयते तावत्तदुपदिष्टे स्वल्पायाससाधनेऽपि पुरुषस्य निःशंकप्रवृत्तिर्नभवति प्रागेव तु बहायाससाध्ये कर्मणि । वेदस्य नित्यनिर्दोषत्वेन स्वतः प्रमाणतया तदुपदिष्टे यागादावलौकिकसाधने पुरुषप्रवृत्तिस्स्यादेवेति तदर्थतयापि नेश्वरसिद्धिप्रत्याशा । परतः प्रामाण्यपक्षेऽपि सर्वज्ञप्रणीतत्वेन महाजनपरिगृहीतत्वेन च प्रामाण्यावधारणादलौकिकस्वर्गादिसाधनयागादौ प्रवृत्तिः सूपपद्यत इति नैतदनुरोधेनेश्वरसिद्धिरिति ।

वेदस्य पौरुषेयत्वात् महाजनपरिग्रहाच्चाप्तोक्तत्वमास्ताम्; क्षित्यादिकर्तृत्वेनेश्वरसिद्धिस्तु वक्तुमशक्या, प्रत्यक्षादिप्रमाणेन तत्र जन्यत्वबाधात् । न हि बाधितविषये अनुमानं भवति । यदि सावयवत्वेन जन्यत्वं क्षित्यादिषु साध्यते, जन्यत्वञ्च जनकत्वमन्तरा न संभवति अस्मदादिषु च तज्जनकत्वसंभवो नास्तीतीश्वरोऽनुमीयते । तर्हीश्वरो न प्रमाणं । तथाहिप्रमाणपदं प्रमीयते येनेति व्युत्पत्त्या प्रमितिसाधनपरं । प्रमितिः प्रमाणमिति भावव्युत्पत्त्या प्रमितिपरम् । प्रमिणोतीति व्युत्पत्त्या प्रमाणपदं प्रमाकर्तृपरम् । प्रमा चाबाधितानधिगतार्थाधिगतिः । तथा च यदि ईश्वरः कर्ता स्यात्, तदा प्रमावान्, तत्करणेन्द्रियादिमान्, तत्समवायिकारणं च स्यात् । न च शरीरेन्द्रियादिमत्त्वं तस्येष्टमनित्यत्वापत्तेः । अपि च ईश्वरस्य नित्यप्रमावतः प्रमा-

साधनत्वाभावादपि न प्रमाणत्वम्। किञ्चेश्वरज्ञानमस्मदादिज्ञानं विषयीकरोति न वा ? आद्ये विषयविशेषितज्ञानस्यविषयीकरणादस्मदादिवत्तस्यापि भ्रान्तत्वापत्तेः। द्वितीये चासर्वज्ञत्वापत्त्याऽनीश्वरत्वमेव स्यादिति प्रतिकूलतर्कः। न चाप्रमाणपुरुषवचसि कश्चिद्विश्वसितीति भावः।

ईश्वरसत्त्वमभ्युपगम्याप्याह—तत्साधकप्रमाणाभावादिति। सोपाधिककार्यत्वस्य दुष्टत्वेनाप्रमाणत्वात्ततस्तत्साधनासम्भवादिति पञ्च विप्रतिपत्तयः :— 5

तत्र प्रथमविप्रतिपत्तिश्चार्वाकं वादिनमुद्दिश्य क्रियते। चार्वाकः कार्यकारणभावे प्रत्यक्षं न प्रमाणमिति मन्यते। क्षित्यादेर्दर्शनेऽपि कार्यत्वस्याप्रत्यक्षत्वादन्यथा संशयो न स्यात्। न चान्वयव्यतिरेकानुविधानसहकृतेन प्रत्यक्षेण तद्ग्रहणं, प्रकृते सहकारिविरहात्संशय इति वाच्यम्। तयोर्व्यभिचारिसाधारण्येनानिश्चायकत्वात्। यत्र यत्र कार्यं तत्र तत्र कार्यमिति सकलदेशकालघटितनियमांशस्यार्वाग्दिशा प्रत्येतुमशक्यत्वात्, अनन्यथासिद्धेश्च सर्वत्र सुज्ञेयत्वाभावात्। 10 नापि तत्रानुमानं प्रमाणं, तदप्रामाण्यात्। न च संवादिप्रवृत्तिजनकत्वेन तत्प्रामाण्यमनुमातुं शक्यते। क्वचिदप्यनुमाने प्रामाण्यस्यानङ्गीकारेणान्वयिनोऽनुमानस्य दर्शयितुमशक्यत्वात्। अत एव न केवलव्यतिरेकिणोऽत्रावतारः, अनुमानप्रामाण्यासिद्ध्या तद्व्यतिरेकस्य सुतरामसिद्ध्या व्यतिरेकव्याप्तिग्रहासम्भवात्। न च तर्हि तत्प्रतिषेधोऽपि कर्तुमशक्यः, क्वचित्प्रसिद्धस्यैव प्रतिषेधाङ्गीकारादिति वाच्यम्। असत्ख्यातिवादिनो भ्रमाप्रमितप्रतिषेधस्येष्टत्वादित्यत आह—तत्रेति। 15 तत्र तेषु मध्ये प्रथमः कल्पो न। अत्र प्रथमकल्पः परलोकसाधनाभावरूपस्तदभावः परलोकसाधनमभावाभावस्य प्रतियोगिस्वरूपत्वाभ्युपगमात्। ततश्च परलोक-साधनस्य साध्यत्वे अलौकिको हेतुरस्तीत्यनेन सहान्वयो न स्यात्, साध्याविशिष्टत्वाद्धेतोः। परलोकहेतुरस्तीत्यन्वये कोऽर्थः स्यादिति हेतुत्वान्वयानुपपत्तिः स्फुटैव। यदि च प्रथमः कल्पो हेत्वभावकल्पो न प्रामाणिक इत्यर्थस्तदाऽविशेषितो हेतुरस्तीति 20 व्यधिकरणम्, प्रासादः श्वेतः काकस्य कार्ष्ण्यादितिवत्। अतः प्रथमपदं प्रथमपक्षपरम्। कल्पपदञ्चासत्ख्यातिविषयपरम्, तथा च प्रथमपक्षो न प्रामाणिकः असत्ख्यातिविषयत्वादिति प्रकाशव्याख्यामकरन्दः।

अयम्भावः—कार्यकारणभावमन्यमानस्यापि चार्वाकस्याभिमतबोधार्थं तदनुकुलशब्दं प्रयुञ्जानस्य वाधः स्पष्ट एव। यदि कारणं विनापि कार्यं स्यादथवा सत्स्वपि कारणेषु कार्यं न 25 स्यात्तर्हि परं प्रति वाक्यप्रयोग एव न स्यात्। न च परान्तःकरणवर्त्तिबोधः केनचिदर्वाग्दृशा प्रत्येतुं शक्यः। परकीयशब्देन यथा स्वान्तःकरणे बोधो भवति तथा स्वशब्देन परान्तःकरणे अवश्यमेव शाब्दवोधः स्यादिति निश्चयेनैव परम्प्रति शब्दप्रयोगः संगच्छते। परान्तःकरणे शाब्दबोधज्ञानञ्चाभिप्रायादिलिङ्गकानुमानेनैवेत्यनुमानप्रामाण्यमवश्यमेवाङ्गीकार्यम्। तथापि प्रमाणं विना न कार्यकारणभावः सिध्यतीति मन्वानं तं प्रति तत्रानुमानं प्रमाणं दर्शयति— 30 सापेक्षत्वादिति। कारणस्य अपेक्षया सहः वर्तमानः सापेक्षः। कारणे सत्येव भवति, असति तस्मिन् न भवतीति यावत्, तस्य भावः सापेक्षत्वम् तस्मात्कादाचित्कत्वादित्यर्थः। कार्ये किञ्चित्कालासम्बन्धित्वे सति किञ्चित्कालसम्बन्धित्वं रूपं कादाचित्कत्वम् प्रत्यक्षसिद्धम्। दण्डादनन्तरं घटो भवति, दण्डाभावे न भवतीत्यादि प्रत्यक्षं कार्यकारणभावे मानम्। उक्तप्रत्यक्षप्रागभावेऽसम्भवादेव तस्य कादाचित्कत्वेऽपि न तत्र कार्यत्वम्, प्रागभावस्यानादितया 35 तत्र पूर्वावधेरभावात्। अथवा प्रागसत्त्वस्य विवक्षितत्वेन प्रागभावे प्राक्सत्त्वस्य स्वीकारेण न

कार्यत्वम्। अपि च घटादेरनन्यथासिद्धनियतपूर्वसद्दण्डादीत्यपि प्रत्यक्षं तत्र मानम्। अनन्यथासिद्धिनिर्णायकस्तर्को वक्ष्यते इति भावः। यत्तु प्रत्यक्षसहकारित्वेनानुमानमात्रोपन्यस्तमिति, तन्न, यतः यदि अनुमानं प्रमाणं तदा तदेव तत्रोपन्यस्येत्। अथाप्रमाणं तदा किं सहकारितयापि, यद्वा संवादिप्रवृत्तिजनकत्वादिना पूर्वमनुमानप्रामाण्यं निरूप्य, कार्यं, सहेतुकं, कादाचित्कत्वात्, यन्नैवं तन्नैवं, यथा आकाशम्। न च साध्याप्रसिद्धिः, कियद्भागे प्रत्यक्षतः तत्सिद्धतया तदविषयेऽनुमानावतारात्। यथाः—पृथ्वी, इतरेभ्योभिद्यते, गन्धवत्त्वादित्यादौ घटादिषु इतरभेदस्य प्रत्यक्षेण सिद्धावपि पृथिवीत्वावच्छेदेनानुमानम्, तथा प्रकृतेऽपि बोध्यम्। न चोत्पत्तिरपि कादाचित्की, अन्यथा कार्यस्य सदातनत्वापत्तेरिति तस्या अपि सहेतुकत्वेऽनवस्थापत्त्या, तत्र सहेतुकत्वानभ्युपगमेन कादाचित्कत्वस्य तत्रैव सत्त्वाद्व्यभिचार इति वाच्यम्। कार्यस्याद्यक्षणरूपाया उत्पत्तेः सहेतुकत्वाभ्युपगमेन व्यभिचाराभावात्। यथाभावस्य कादाचित्कत्वकिञ्चित्कालसम्बन्धित्वरूपस्य प्रागभावे व्यभिचारः। प्रागसत्त्वविशिष्टकिञ्चित्कालसम्बन्धित्वरूपकादाचित्कत्वविशेषणे व्यर्थविशेष्यत्वमन्यत्र सर्वत्र किञ्चित्कालसम्बन्धित्वरूपस्यैव तस्य स्वीकारादित्याशयेनाह—यद्वेति[1]। उत्पत्तिगर्भः। स्वोत्पत्त्यधिकरणक्षणसम्बन्धरूपं कादाचित्कत्वमभ्युपेयते प्रागभावस्य चोत्पत्तिविरहेण कादाचित्कत्वाभावान्न व्यभिचारः। नचोत्पत्तेरुत्पत्तिगर्भकिञ्चित्समसंबन्धरूपकादाचित्कत्वमिति न तया व्यभिचारः। ध्वंसवदुत्पत्तेरुत्पत्त्यनङ्गीकारात्। स्वमते उत्पत्तेरुत्पत्तिस्वीकारेण, तत्र कादाचित्कत्वेन सहेतुकमपीत्यग्रे स्फुटीभविष्यति। एतेन अलौकिको हेतुरस्ति सापेक्षत्वादित्यनुमानपक्षे हेतोरसिद्धौ आश्रयासिद्धिः, सिद्धौ च सिद्धसाधनम्, सापेक्षत्वस्य कार्यधर्मत्वेन हेत्ववृत्तितया स्वरूपासिद्धिः, कार्यस्यैव पक्षत्वे सापेक्षत्वादित्यस्य हेतुमत्त्वादित्यर्थे साध्याविशिष्टत्वं, सापेक्षत्वादित्यस्य कादाचित्कत्वादित्यर्थे प्रागभावेन व्यभिचार इत्यपास्तम्, कार्यपक्षकानुमानस्यैवेष्टत्वात्, सापेक्षत्वादित्यस्य कादाचित्कत्वादित्येवार्थः, प्रागभावे व्यभिचारपरिहारस्योक्तत्वात्।

ननु हेतुः सदातनः कादाचित्को वा। आद्ये, तत्सापेक्षस्य कार्यस्यापि सदातनत्वापत्तिः, सति हेतौ फलावश्यम्भावनियमात्, तथा च कादाचित्कत्वमहेतोराकाशादेरिव सहेतोर्व्यवर्तमानमसाधारणं स्यात्, सपक्ष-विपक्षव्यावृत्तपक्षमात्रवृत्तिहेतोरसाधारणात्वात्, ततश्चागमकत्वापत्तिः स्फुटैव। द्वितीये, तस्यापि हेत्वपेक्षायामनवस्थापत्तिः। तस्याहेतुकस्यैव कादाचित्कत्वे तद्वत्कार्यमपि अहेतुकमेव कादाचित्कत्वं स्यादित्यत आह—अनादित्वादिति। हेतोरपि स्वहेतुबलायातं कादाचित्कत्वमिष्टमेव बीजाङ्कुरवत्प्रामाणिकाऽनवस्थाया अदूषणत्वादिदि भावः।

सांख्याद्वैतमतेनाक्षेपः—ननु अस्तु तावत्कार्यकारणभावः, एकं ब्रह्मैव एकजातीयं प्रधानं वा निखिलस्य कार्यस्य कारणमास्ताम्, लाघवात्, तच्चोपदेशमन्तराप्यस्मदादिभिर्ज्ञातुं शक्यते। यदि अतीन्द्रियत्वान्नास्माभिर्ज्ञातुं शक्यमिति ब्रूयात्तदा दोषान्तरमाह—न विलक्षणसामग्रीजन्यं कार्यं सिध्यतीत्यत आह—वैचित्र्यादिति। नानाजातीयात्कारणान्नानाजातीयं कार्यमुत्पद्यते इत्यत्र प्रत्यक्षमेव प्रमाणम्। न हि एकस्मादेकजातीयाद्वा कारणाद् घटपटयोस्तज्जातीययोर्वा उत्पत्तिर्लोके दृश्यते। अथ दृश्यमानं कार्यवैचित्र्यमेव कारणवैचित्र्यानुमापकम्। हेतोरभिन्नत्वे अभिन्नजातीयत्वे कार्यस्य भिन्नत्वं भिन्नजातीयत्वम्वा न स्यादिति तर्कः सहकारीत्यर्थः। तथा

---

१—"यद्वा, उत्पत्तिगर्भः किञ्चित्समयसंबन्ध एव ह्युत्पत्तिरिति" प्रकाशः।

परिदृश्यमानविलक्षणकारणप्रयुक्तमेव कार्यवैलक्षण्यमास्तामलमदृष्टकारणभेदकल्पनया इत्यत आह—विश्ववृत्तितः। विश्वेषामास्तिकसमर्थप्रेक्षावतान्तत्तत्फलाभिलाषुकाणां यागादौ प्रवृत्तिः। न च यागः कालान्तरभाविफलाय साक्षात्प्रभवति, तस्मात्तज्जन्यमदृष्टं द्वारमवश्यमेव कल्पनीयम्। तथा च यागादि अदृष्टावान्तरव्यापारद्वारा स्वर्गादि जनयतीत्यर्थः। अस्तु तावददृष्टम्, किन्तु तद्भोक्तृनिष्ठमुतभोग्यनिष्ठमिति विवेचनीयम्। सुखदुःखान्यतरसाक्षात्कारात्मको भोगः प्रतिपुरुषं नियतो दृश्यत इति तत्प्रयोजकमदृष्टमपि लाघवाद् भोक्तृनिष्ठमेव युज्यते। यद्भोगप्रयोजकमदृष्टं, तदात्मसमवेतं, तत्रैव तद्भोग इति भोगादृष्टयोः सामानाधिकरण्येन हेतुहेतुमद्भावः सिध्यति। भोग्यनिष्ठादृष्टस्वीकारे तु भोग आत्मनि अदृष्टं विषयनिष्ठमिति वैयधिकरण्यं स्फुटम्। कथञ्चित्सामानाधिकरण्योपपादनेऽपि एकस्मादेव भोग्यसम्बन्धात्कस्यचित्सुखं कस्यचिद्दुःखं सकृदुत्पद्यते इति तत्रोभयविधादृष्टपरिचायकस्यावश्यकतया भोक्तृषु तत्सम्बन्धव्यवस्थायै हेत्वन्तरं वक्तव्यं स्यादिति गौरवं स्फुटमेवेति भोक्तृनिष्ठमेवादृष्टं कथनीयमिति आद्यस्तवकस्यातिसंक्षिप्तार्थः।

उक्ते प्रत्यक्षे अनुमाने चान्यथासिद्धिशङ्कानिरासाय प्रमाणसहकारितर्कमाह—नह्ययमिति। विविधसुखदुःखमयोपादानं मुमुक्षुवैराग्यार्थं कार्यवैचित्र्यस्फोरणार्थं च। निरपेक्षत्वं च किंचित्पदार्थावधिकोत्तरत्वव्याप्यकालासम्बन्धित्वं, तदभावश्च सापेक्षत्वम, दण्डादिकालोत्तरत्वव्याप्य एव कालसंबन्धः, घटादौ कारणसमयादुत्तरस्मिन्नेव समये घटसम्बन्धाङ्गीकारात्। निरपेक्षे आकाशादौ तदभावः स्पष्ट एव। सर्वस्मिन्नेव समये तत्संबन्धस्य सत्त्वेन तस्य किञ्चित्पदार्थावधिकोत्तरत्वव्याप्यत्वाभावात्।

न च चार्वाकमते कारणभावात्तदवधिकोत्तरत्वव्याप्यप्रतियोगिनोऽप्रसिद्धया तदभावस्य सुतरामप्रसिद्धिः। न च परमतासिद्धेन धर्मेण परस्यापादनं युज्यते इति वाच्यम्। असत्ख्यातिवादिनः तस्य व्यावहारिकसापेक्षत्वस्वीकारात्।

ननु एकेनैव निरपेक्षत्वेन संसारस्य सत्त्वासत्त्वोभयापादानं न सम्भवति, व्याप्येनापादकेन व्याप्यस्यापाद्यस्यापत्तिः सर्वत्र क्रियते। न च मिथो विरुद्धसत्त्वासत्त्वोभयव्याप्यम् निरपेक्षत्वम्। न हि घटत्व-पटत्वोभयव्याप्यो धर्मो लोके दृश्यते। न चाव्याप्येनापादानं संभवतीति चेन्न, परस्पराङ्गाङ्गीभावार्थकतुशब्दासंगतिश्च। अत्रोच्यते:—

संसारो यदि निरपेक्षः स्यात्तर्हि कादाचित्को न स्यादिति निरपेक्षत्वेन कादाचित्कत्वाभाव एकः आपाद्यते। स च नित्यत्वे अलीकत्वे च पर्यवस्यति। अत एव तुशब्दस्यापि संगतिः। यद्वा मतद्वये आपादनद्वयम्। न्यायमते आकाशवन्नित्यमेव स्यात्परमते खपुष्पवन्नैव स्यात्। मतद्वयेऽपि दृश्यमानं कादाचित्कत्वमनुपपन्नं स्यादित्यन्यत्र विस्तरः ॥४॥

अकस्मादेव भवतीतिचेन्न—

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥५॥

हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनम्, अविशेषात्। भवनप्रतिषेधे 5 प्रागिव पश्चादप्यभवनम्, अविशेषात्। उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पक्षानुपपत्तेः। पौर्वापर्यनियमश्च कार्यकारणभावः। न चैकं पूर्वमपरञ्च। तत्त्वस्य भेदाऽधिष्ठानत्वात्। अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्रसक्तौ पुनः सदातनत्वापत्तेः।

स्यादेतत्। नाऽकस्मादिति कारणनिषेधमात्रं वा, भवनप्रतिषेधो वा, स्वात्म-10 हेतुकत्वं वा, निरुपाख्यहेतुकत्वं वाऽभिधित्सितम्, अपि त्वनपेक्ष एव कश्चिन्नियत-देशवन्नियतकालस्वभाव इति, ब्रूमः। निरवधित्वे अनियतावधिकत्वे वा कादाचित्कत्व-व्याघातात्। न ह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वं, किन्तु प्रागसत्त्वे सति। सावधित्वे तु स एव प्राच्यो हेतुरित्युच्यते। अस्तु प्रागभाव एवावधिरिति चेन्न। अन्येषामपि तत्काले सत्त्वात्। अन्यथा तस्यैव निरूपणानुपपत्तेः। तथा च न 15 तदेकावधित्वम् अविशेषात्। इतरनिरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः कार्यसत्त्वप्रसङ्गात्। सन्तु ये केचिदवधयो, न तु तेऽपेक्ष्यन्त इति स्वभावार्थ इति चेत्—नाऽपेक्ष्यन्त इति कोऽर्थः? किं न नियताः? आहोस्विन्नियता अप्यनुप-कारकाः? प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्यात्, नियामकाऽभावात्। द्वितीये तु किमुपकारान्तरेण, नियमस्यैवाऽपेक्षार्थत्वात्, तस्यैव च कारणात्मत्वात्, ईदृशस्य 20 च स्वभाववादस्येष्टत्वात्। नित्यस्वभावनियमवदेतत् न ह्याकाशस्य तत्त्वमाक-स्मिकमिति सर्वस्य किं न स्यादिति वक्तुमुचितमिति चेन्न। सर्वस्य भवतः स्वभाव-त्वानुपपत्तेः। न ह्येकमनेकस्वभावं नाम, व्याघातात्। नन्वेवमिहाऽपि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघात इति तुल्यः परिहारः? न तुल्यः। निरव-धित्वेऽनियतावधित्वे वा कादाचित्कत्वव्याघातात्। नियतावधित्वे[1] हेतुवादाभ्यु-25 पगमात् ॥५॥

आमोदः

"अहेतुका भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनादिति सूत्रानुसारेण शङ्कतेऽकस्मादिति।

तदेतद्विकल्प्य दूषयति—हेत्विति। किंशब्दस्य हेत्वर्थत्वे हेतुनिषेधः पर्यवस्यति, प्रतिषेधवाचकासमस्ताशब्दस्य भवत्यन्वये भवनप्रतिषेधः। तथा 30 च कस्मादपि न भवतीत्यर्थः। यद्वा किंशब्दोऽन्यपरः, तथा चान्यस्मान्न

१. "नियतावधित्वेतु" इति गुणानन्दसम्मतः पाठः।

भवति, किन्तुस्वस्मादेव भवतीत्यर्थः। अथवा किंशब्दः प्रामाणिकपरः तथा च प्रामाणिकान्न भवति, किन्त्वप्रामाणिकादनुपाख्याद् भवतीत्यर्थः। यद्वा अकस्मादित्यव्युत्पन्न एवायं शब्दः स्वभावमाह—तथा च स्वभावादेव भवदीदृशन्न हेतुवैचित्र्यमपेक्षत इत्यर्थः। सर्वत्र परिहारमाह—**अवधेरिति**। घटादोनां दण्डादेरवधेर्नियतपूर्वंसत्त्वस्यान्वयव्यतिरेकगम्यत्वेन दुष्परिहर- 5 त्वादित्यर्थः।

विकल्पितपक्षेषु विशेषदूणमाह—**हेतुनिषेध** इति। हेतुनिरपेक्षं चेद् भवनं तदा सर्वदा घटादेर्भवनं प्रसक्तं, तथा च कादाचित्कत्वमनुभूयमान- मनुपपन्नं स्यादित्यर्थः। भवनप्रतिषेधबाधकमाह—**भवनेति**। कार्यस्य भवन- मेव नास्तीति यद्युच्येत तदा कदाचिदपि कार्यं नोत्पद्यते। तथापि कदा- 10 चित्कत्वं न स्यादिति भावः। **पक्षानुपपत्तेरिति** विरोधादिति भावः। विरोधं स्फुटयति—**पौर्वापर्येति**। प्रागपि सत्त्वप्रसक्तावित्यापाततः, वस्तुतो निरुपाख्यस्यार्थकारित्वाभ्युपगमे तस्य सत्त्वप्रसक्तौ निरुपाख्यत्वानुपपत्तेः।

**स्यादेतदिति**। यदि पूर्वोक्तं दूषणमुद्धृतं तदाग्रे वक्ष्यमाणमेतत् स्यादित्यर्थः। कारिकार्थं स्फुटीकर्तुं वृत्तमनुकीर्तयति—**नाकस्मादिति**। 15 **नियतदेशवदिति**। यथा घटस्य कपालमेव, पटस्य तन्तुरेव देशः, तथा काल- विशेषोऽपि घटादीनां नियतः स्यात्, किमत्र कारणापेक्षयेत्यर्थः। कालनियमे कारणापेक्षावश्यकी, अन्यथा कादाचित्कत्वमनुभूयमानं व्याहन्येत, एवं देशनियमोऽपि कारणापेक्ष एव, अन्यथा यत्र किञ्चित् क्वचिदुत्पद्येतेति भावः। देशनियमेन गोत्वादिकं परमाणुपरिमाणत्वादद्दृष्टान्तीक्रियते, तदाह— 20 **निरवधित्व** इति। निरवधित्वकादाचित्कत्वयोर्विरोधादिति भावः। ननूत्तर- कालसंसर्गित्वमात्रं कादाचित्कत्वं, तच्चाकाशादौ निरवधायापि दृष्टमेव, तथा च कुतो विरोध इत्यत आह—**न हीति**। तथा च घटाकाशयोः कादाचित्कत्वात् कादाचित्कत्वव्यवहारोऽपि निर्वहतीति भावः। नन्ववधि- मङ्गीकुर्मो, न तु कारणमत आह—**सावधित्व** इति। पूर्वावधित्वमेव 25 सहेतुकत्वमित्यर्थः। नानुपमृद्य प्रादुर्भावादिति पूवद[प?]क्षिणम- भावोपादानकं जगदितिवादिनमुत्थापयति—**अस्त्विति**। कपालादीनामपि प्रागभाववदेवान्वयव्यतिरेकाऽवधित्वमावश्यकमित्याह—**अन्येषामपीति**।

यदि कपालादीनां नियतपूर्वसत्त्वं न स्यात्, तदा प्रागभावोऽपि दुर्निरूपः सामग्रीक्षण एव तन्निरूपणात्, तथा च तस्यावधित्वाभ्युपगमो न[?]स्यान्न वेत्याह—**अन्यथेति**। **तथाचेति**। तन्निरूपकस्यापि रूपादेरवधित्वसम्भवादित्यर्थः। ननु प्रागभावनिरूपकत्वेऽपि यथावज्जलादीनां नावधित्वं तथा
5 कपालादीनामप्यवधित्वमस्तु, को दोष इत्यत आह—**इतरेति**। यदि प्रागभावमात्रमवधिः स्यात्, तदा तदधीनमात्रोत्पत्तिकस्य कार्यस्यानुभूयमानं कादाचित्कत्वं भज्येतेत्यर्थः। ननु कार्येण योऽवधिरपेक्षणीयः स्वोत्पत्तौ तत् कारणं भवेत्, न त्ववधिमात्रमेव कारणमित्याह—**सन्त्विति**। **किन्नियता** इति। अनि[य]तावधिकमेव कार्यमित्यर्थः। **आहोस्विदिति**। दण्डादयो-
10 ऽवधयोऽपि कार्ये घटादौ नोपकारमादधतीति, न च कारणमित्यर्थः **धूम** इति। धूमस्यानियतावधित्वे धूमार्थी 'दहनवद्' गर्दभेऽपि प्रवर्तेत, यद्वा दहनासमवधानेऽपि कदाचिद् गर्दभादपि धूमो दृश्येतेत्यर्थः। यद्वा धूमत्वाच्छिन्नं प्रति दहनत्वावच्छेदेन गृहीता कारणता भज्येतेत्यर्थः। अत्र सर्वत्र हेतूपवर्णनम्। **नियामकाऽभावादिति**। यदि कारणानियमः स्यात्,
15 तदेदमनिष्टं स्याद् इत्यत्र तात्पर्यम्। ननुतर्कविधानादेष्टव्या, किमुपकारान्तरेणापि ? अनाहितोपकारोऽपि यन्नियतपूर्ववर्तिजातीयः स एव तत्कारणमित्यर्थः। अन्यथोपकारेऽप्युपकारान्तराधानेऽनवस्था स्यादिति भावः। **तस्यैवेति**। नियतपूर्ववर्तिजातीयस्यैव कारणपदवाच्यत्वादित्यर्थः। ननु नाहितोपकारत्वाविशेषात् कथं कस्यचिदेवनियतपूर्वभावनियमः स्वभाववादं
20 विनेत्यत आह—**ईदृशस्य चेति**। **नित्येति**। यथाकाशादीनां शब्दाश्रयत्वं स्वभावो न तु सर्वस्य, तथा घटादीनामेव कादाचित्कत्वं स्वभावान्न त्वाकाशादीनामपीति न कादाचित्कत्वानुरोधेन सहेतुकत्वाभ्युपगमः। तदुक्तं **दिङ्नागेन**—

> नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन।
> 25 विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः॥
>
> वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः।
> केनेदं रचितं तस्मात् स्वभावात्तद्व्यवस्थितिः॥ इत्यर्थः।

न च 'नियतदेशवदि'त्यादिना पौनरुक्त्यं, यत्र यन्नियतं तन्नकारण-

नियम्यमित्युक्तं, सम्प्रति तु यस्य सः[यः?] स्वभावः स केनापि [न?] नियम्य इत्यपौनरुक्त्यम्।

**केचित्तु**, ननु 'नियतदेशवदि'ति यन्मया पूर्वमुक्तं तवोद्धृतम'हेतुकत्वेऽपि' यथा नियतदेशत्वं तथा नियतकालतापि स्यात्, को विरोध इत्याह—**नित्येति**। **न हीति**। 'तत्त्वम्' आकाशत्वं परम्परासम्बन्धेन शब्दत्वमेव, अस्य द्रव्यभिन्नत्वं वा। 'न ह्याकाशस्य तत्त्वमि'ति दूषयति—**सर्वस्येति**। एकमात्रनियतो धर्मः स्वभावः, स यद्यन्यस्यापि स्यात्, तदा स्वभावत्वव्याघात इत्यर्थः। किञ्चैवं सत्येकमनेकस्वभावं स्यात्तदाह—**न त्वे [ह्ये?]कमिति**। कादाचित्कत्वस्वभावस्य घटादेः सदातनत्वापादनेऽपि स्वभावव्याघातस्तवापीति शङ्कते—**नन्विति**। परिहरति—**न तुल्य इति**। देशनियमेऽवध्यपेक्षा नास्ति, कालनियमेऽवश्यमवध्यपेक्षा। स एवावधिः कारणं पर्यवस्येदिति भावः। एतदेव व्याघातम् स्फुटयति—**निरवधित्व इति**।

ननु निरवधित्वमनियतावधित्वं वा न ब्रूमो येन कादाचित्कत्वं व्याहन्येत, किन्तु नियतावधित्वमेवाचक्ष्महे, न तु कारणत्वं तत्राह—**नियतावधित्व इति** ॥५॥

बोधनी

तत्र[१] तावत् सापेक्षत्वादित्येतदुपपादयन् विवृणोति—**न ह्ययमिति**। **संसारः** कार्यवर्गः। **नैकविधः** सर्वकालं नैकरूपः, कादाचित्क इति यावत्। **अनेकविध इति** पाठे वक्ष्यमाणहेतुवैचित्र्योपयोगितया[२] कार्यवैचित्र्यमुक्तम्। **दुःखमयत्वं** स्वतन्त्रप्रसिद्धया सर्वस्यापि दुःखत्वभावनार्थमुक्तं, न तु साधनोपयोगितया। यद्वा, दुःखमयत्वात् तवापि हेयं हानं हेतुनिर्वृत्त्या, तथाच हेतुमत्त्वमवश्याश्रयणीयमिति प्रदर्शनार्थम्। अत्र कदाचित्कत्वेन **सापेक्षत्वं** साधितमिति। तदाह कीर्त्तिः—

नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः ॥ इति ॥४॥

कदाचित्कत्वहेतोरन्यथासिद्धिं शङ्कते—**अकस्मादिति**।

तदेतद् यथासम्भवं विकल्प्य निराकरोति—**हेतुभूति इति**। **अकस्माद् भवती**त्यत्र नामयोगिनोऽपि नञः प्रतिषेधार्थत्वमाश्रित्य यदा कस्मादिति निर्दिष्टहेतुसम्बन्धो

१—२१ पृष्ठस्थस्य "नह्यय"मित्यादेर्व्याख्यानम्। २—ख. उपयुक्ततया।

विवक्ष्यते तदा हेतुनिषेधः स्यात् । यदा तु समासान्निष्कृष्य भवनसम्बन्धस्तदा भूतिनिषेधः । यदि पुनः स्वरसप्राप्तो हेतुसम्बन्धः पर्युदासवृत्तिश्चाऽश्रीयते तदा तदितरविधिपरत्वाद्धेतुतोऽन्यस्मात् स्वस्मादनुपाख्याच्च भवतीति स्यात् । अथवा, यदा हेतुविशिष्टभवनसम्बन्धो विवक्षितो न हेतोर्भवतीति तदा विशेषनिषेधस्य शेषविधिपरत्वाद-
5 हेतुतो भवतीति स्यात्, अहेतुश्च **स्वयमनुपाख्यश्चेति,** तयोरेव विधिः प्राप्नोति । यदा त्वश्वकर्णादिवद् व्युत्पत्त्यनपेक्षं, तदा स्वभावत एव भवतीति स्यात् । न चावश्य-मत्र सर्वत्र ग्रन्थसंघटनायां यतितव्यं, तात्पर्यमात्रविकल्पनात् । पञ्चानामपि कल्पानां निराकरणहेतु**रवधेर्नियतत्वत इति** । **अवधेः** कार्यपूर्वक्षणवर्त्तिनः कस्यचिदन्यस्य **नियतत्वात्** किञ्चिदेकमवधीकृत्य दर्शनादित्यर्थः । यद्वा, **अवधिः** प्रागसदुत्तरकाल-
10 सम्बन्धस्तस्य, नियतत्त्वतः नियतकालत्वात् कादाचित्कत्वादिति यावत् । यद्वा, अनन्त-रोक्तस्यावधेः सहेतुकोत्पत्तिनियतत्वादिति ।

तदेतदनिष्टप्रसङ्गप्रदर्शनमुखेन विवृणोति—**हेतुप्रतिषेध इति** । सर्वदा भवनम् **सत्त्वम्** । स्यादिति शेषः । विपर्ययस्तु दृश्यत इति भावः । एतेनैतन्निरस्तं यदाहुः—

कार्यत्वं कारणत्वं च सम्बन्धः सोऽसतां कुतः ।
15 सच्चेत् कारणवैयर्थ्यमसच्चेदनवस्थितिः ॥

तथा—कुर्वत् कार्यमकुर्वद्वा कारणं कारणंभवेत् ।
कुर्वच्चेदनवस्थानमकुर्वत्यनवस्थितिः ॥ इति ॥

पश्चादप्यभवनम् असत्त्वम् । स्यादिति शेषः । अभवनाविशेषादुत्पत्त्यभावस्य पूर्वापरकालयोरविशेषादिति । एतेनैतन्निरस्तं यदाहुः—

20 न चेदुत्पत्तिरुत्पत्तेर्नित्यत्वमनवस्थितिः ।
उत्पत्तावित्यतः कार्यं कारणं चानिरूपितम् ॥

**उत्पत्तेरिति** । न ह्यसतः प्रभुत्वं नापि स्वस्य प्रभुत्वमिति । नन्वेकस्यैव कर्यकारणभावे को दोषस्तत्राह—**पौर्वापर्येति** । **चो** हेत्वर्थः । यस्मात् पौर्वाप-र्यनियतः कार्यकारणभावस्तस्मादिति । अथवेतश्च न स्वस्मादुत्पत्तिरित्याह—**पौर्वापर्येति** ।
25 **तत्त्वस्य** पूर्वापरभावस्येत्यर्थः ।

निराकृतात् पक्षचतुष्टयाद् विविञ्चानः पञ्चमं पक्षं स्वभावादपक्षमाशङ्कते—**स्यादेतदिति** । यथा घटादेर्देशविशेषसंसर्गासंसर्गनियमः, यथा वाकाशपरमाण्वादेर-शेषदेशव्यापित्वाव्यापित्वनियमः, यथा वानेककारकसाध्यस्यापि कार्यस्य कस्मिंश्चिदेव

कारके समवायो न कारकान्तरेष्विति देशनियमो हेत्वभावेऽपि सङ्गच्छते, तथा कश्चिद् घटादिर्नियतकालसंसर्गः स्वभावत एवाकाशादिवदिति कालनियमोऽप्यहेतुक एव सङ्गंस्यत इति । अत्राप्यवधेर्नियतत्वत इत्येतदेवोत्तरयति—**न निरवधित्व इति** । किञ्चिद-वधिमनुपादाय कादाचित्कत्वं निरूपयितुमशक्यं, कदाचिदित्यस्यैवाभावे कादाचित्कत्व-व्याघातात् । तन्नैवं कादाचित्कत्वम् । न हि कस्मिंश्चिदेव देशे सत्त्वं कारणापेक्षा-मनिरूप्य निरूपयितुं शक्यते । किन्तु निरूपितं सत् स्वाभाविकं सहेतुकं वेति विमृश्यते । अस्ति चात्र सर्वत्रापि नियामको हेतुः, तथाचोन्मोचिता प्रतिवन्दीति भावः । ननु कालविशेषसंसर्गमात्रं कदाचित्कत्वं तच्च गगनादिवन्निरवधित्वेऽपि भविष्यति, तस्मान्न तत्स्वरूपानुप्रवेशित्वमवधेरित्याशङ्क्याह—**न हीति** । इतः पूर्वं नासीदिदानीमस्तीति पूर्वकालासत्त्वे सत्युत्तरकालसत्त्वं कादाचित्कत्वम् । तच्च कालानवच्छेदे न सम्भवतीति कालावच्छेदात्मकं सावधित्वं कादाचित्कत्वस्वरूपान्तर्गतमेव । तेन निरवधित्वे कादाचित्-कत्वं व्याहन्यत एवेति भावः । नन्वेवमपि कादाचित्कत्वेन सावधित्वे सिद्धे हेतुमत्त्वे किमायातं न हि तयोः पर्यायत्वमित्याशङ्क्याह **सावधित्व इति** । सावधित्वाभ्युपगमे हेतुरेव स्वीकृतः स्यादिति । अन्येषां भावानामपि तत्कालनियतत्वादभावेन सह तुल्ययोगक्षेमत्वं भवेदित्यभिप्रायवानाह । **नेति** । विपर्ययेऽनिष्टमाह—**अन्यथेति** । आश्रयनिरूपणीयत्वनियमाभावेऽप्यदूरविप्रकर्षिणा केनचिद् भावेनैवाभावो निरूप्यत इति अभावकारणत्ववादिना तन्निरूपणार्थो भावस्तावदवश्याभ्युपगन्तव्य इति । ततः किमित्यत आह—**तथाचेति** । प्राक्कालनियतत्वेनाविशेषादिति । ननु सन्निध्यविशेषेऽपि प्रागभाव एव हेतुर्न भावा अवर्जनीयसन्निधित्वात् तेषामित्यत्राह—**इतर-इति** । तदवधेः प्रागभावैकावधिकस्य कार्यस्य तस्मादवधेर्वेति शङ्कते—**सन्तु-इति** । कार्यपूर्व-क्षणे न केचिद् भावाः सन्तीति नायं स्वभाववादः किन्तु सत्स्वपि तेषु कार्येण ते नापेक्ष्यन्त इति । तदेतद् विकल्प्यानिष्टप्रसङ्गेनेष्टसिद्ध्या च दूषयति—**नापेक्ष्यन्त-इति** । कथमनियतस्यैवावधित्वमङ्गीकुर्वतस्तदेवानिष्टत्वेनाऽऽपाद्यते **गर्दभमप्यवधी-कुर्यादिति ?** उच्यते । यदि यस्य कस्यचिदानन्तर्यं धूमस्य स्वभावः, तदा नित्यं यस्य कस्यचिद् भावाद् धूमस्य सदातनत्वापत्तेरकामेनापि नियतोऽवधिरङ्गीकार्यः, तथाच नियमो दूषणमिति । **नियामकाभावादिति** । अनियतत्वाविशेषे दहन एवावधिर्न रासभ इति नियामकाभावादित्यर्थः । **नियमस्येति** । इदमेव हि कार्यस्य कारणापेक्षित्वं नाम, यत्तस्मिन् सत्येव भवतीति । यदि नियमातिरिक्त उपकारो नाङ्गीक्रियते तर्हि स्वभाववाद एव सिद्धः स्यादित्यत्राह—**ईदृशस्येति** । चरश्चेदर्थे । दहनादिषु सत्स्वेव

धूमादयो भवन्तीतीदृशः स्वभाववादश्चेत् स तर्ह्यस्माभिरिष्यत एवेति । तदेवमन्यथा-सिद्धिं निराकृत्य सम्प्रति चार्वाकाङ्गीकृतं प्रमाणमाशङ्कते—**नित्येति** । अस्यार्थः । यथा नित्यानामाकाशादीनामाकाशत्वादयः स्वभावविशेषा निरपेक्षा अपि तैस्तैराकाशादि-भिर्नियतास्तथानपेक्षमेव कार्यं केनचिदेव कालेन संसृज्यते नान्येनेति नियम्यत इति न
5 सदातनत्वप्रसक्तिः । अनपेक्षत्वसम्प्रतिपत्यर्थं नित्यग्रहणम् । अनेन दृष्टान्तावष्टम्भेन प्रयोगं सूचयति, कादाचित्कत्वस्वभावनियमो, निर्हेतुकः, स्वभावनियमत्वात्, नित्यस्वभावनियमव-दिति । अनेन कादाचित्कत्वहेतोस्तुल्यबलत्वाभिमाने सत्प्रतिपक्षत्वमन्यथा बाधः, स्वपक्षसाधनं वेति । केचित् पूर्वमपि नियतदेशवदिति प्रयोगः सूचितः तस्मिन् देशनियमस्य कारणा-पेक्षित्वं परिहर्तुं दृष्टान्तान्तरेण प्रत्यवतिष्ठन्ते, नित्यस्वभावनियमस्य कारणापेक्षायाम-
10 सम्भवादित्यपौनरुक्त्यं मन्यन्ते । तत्तु पौर्वापर्यापरामर्शविलसितमित्यनादरणीमिति । उक्त-मेवोपपादयति **नहीति** । **तत्त्वमाकाशत्वं सर्वस्य** कालादेः । तदुक्तम्—

> नित्यसत्त्वा भवन्त्यन्ये नित्यासत्त्वाश्च केचन ।
> विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥
>
> अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः ।
> 15 केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः ॥

तत् परिहरति **न—सर्वस्येति** । स्वस्य भावः स्वभावः । न च स्वस्मादन्यदपि स्वमेव, येन तस्यापि भवनस्य स्वभावो भवेत्, तेन सर्वस्य भवदाकाशत्वस्वभावतामेव जह्यादित्येतदेव स्पष्टयति—**न ह्येकमिति** । न ह्येकमेव धर्मि चानेकेषां स्वकीयो भावस्तद्भवितुमर्हति । **न ह्येकमनेकस्वभावो नामेति** सम्प्रदायवतां पाठः । तत्र
20 न **ह्येकमाकाशत्वादिकमनेकेषां** कालादीनां स्वभावो भवति, स्वभावत्वव्याघातात् । स्वस्यैव भवतः स्वभावत्वादित्यर्थः । तर्ह्यत्रापि सर्वदा भवने कदाचित्भवनस्वभावत्व-व्याघातः सुवच इत्याह—**नन्वेमिति** । सिद्धान्ती पूर्वोक्तमेव परिहारं स्मारयति—**न तुल्यइति** । कादाचित्कत्वसिद्धौ हि तद्विपरीतकल्पनायां व्याघातः । तत्सिद्धिश्च निरवधित्वे तावन्न सम्भवति, कादाचित्कत्वनिर्वचनव्याघातस्योक्तत्वात् । अत एव
25 नानियतावधित्वेऽपि कादाचित्कत्वसिद्धिः । यस्य कस्यचित् सर्वदा सम्भवान्नियतावधित्वेन कादाचित्कत्वाभ्युपगमे तु सम्प्रतिपत्तिरुत्तरम् । एवं च नानुमानस्य बाधविरोधादयो दोषा इति । एवं तावत् सापेक्षत्वादिति हेतुर्विवृतः ॥५॥

विवेकः

अत्र शङ्कते—**अकस्मादेव भवतीति**। अत्र हेतुपरेण किंशब्देन नञः सम्बन्धे हेतुं विनैव भवतीति लभ्यते, तथा च तर्कमूलीभूतव्याप्तौ अप्रयोजकत्वम्; यदि च नञो भवनेनान्वयः असूर्यम्पश्येत्यादाविव, तदा भवनाभावो लभ्यते। भवनञ्च प्रागभाव-प्रतियोगित्वं तद्व्यापकमुत्पत्तिमत्त्वं वा, तथा च तर्के इष्टापत्तिः। किंशब्दस्य स्वभिन्नपरत्वे तत्र च नञर्थस्य भेदस्यान्वये स्वभिन्नभिन्नात् स्वस्माद्भवतीति स्वपरत्वे तद्भिन्नाद् 5 भवतीति च लभ्यते। तथा चापादकस्य पराभ्युपगमाविषयत्वेन विपर्यये सिद्ध-साधनं दोषः।

तावता चालौकिकेऽदृष्टे परलोकसाधनत्वाभावादाश्रयासिद्धिरेवेति प्रकारपञ्चकमाशङ्क्य निराकरोति—**हेतुभूतीति**। सर्वत्र हेतु'रवधेर्नियतत्वत' इति स्वपूर्वकालवर्तिसदवधि-कत्वेनैव प्रमाणसिद्धत्वादित्यर्थः। 10

एकेन हेतुना प्रकारपञ्चकं निरस्य पक्षद्वये प्रागुक्तं तर्कमनुवदति—**हेतुनिषेध** इति। 'भवने'ति भवनप्रतियोगिनः कार्यस्य कार्योत्पत्तेर्वाऽनपेक्षत्वेन सर्वदा भवनं कार्यस्य सतः सार्वदिकत्वं स्यात्, तावता 'स्यादेवे'ति तर्कः स्मारितः। तन्मूलीभूतव्याप्तिग्राहकमाह—**अविशेषादिति**। इदानीन्तत् नान्यदेत्यत्र नियामकाभावादित्यर्थः। **इष्टापत्तौ** दोषमाह—**भवनप्रतिषेध** इति। 'प्रागिव' सामग्रीत्वेनाभिमतात् पूर्वमिव, ततः 15 'पश्चादप्यभवनम्' अनुत्पत्तिः, तथा चोत्पन्नोऽयमिति प्रत्ययो न स्यादिति भावः। 'अविशेषात्' सर्वथैव त्वया उत्पत्तेर्निषेधात्। तृतीयं निरस्यति—**उत्पत्तेरिति**। उत्पत्तेरापत्तेः[1] स्वस्मात्[2] पूर्वमिति तु विवक्षितं, 'स्वयमसतः' अविद्यमानस्य [3]स्वस्य 'स्वोत्पत्तौ' स्वस्मिन् वाऽप्रभुत्वेनाहेतुत्वेन 'स्वस्मात्' स्वमिति पक्षस्यानुपपत्तेः। अप्रभुत्व-मेव कथमित्याकाङ्क्षायामाह—**पौर्वापर्ये**ति। 'चो' हेतौ। नियतपूर्वसत्त्वमेव यतो 20 हेतुत्वं तन्नियतं वा 'यत' इति। ननु नियतपूर्वसत्त्वमेव स्वापेक्षया स्वस्य स्यादित्यत्राह—**नचैकमिति**। स्वप्रागभावेन सह प्रतियोगिनः कालिकविरोधादिति भावः। ननु प्रागभावेन समं तस्य तथात्वेऽपि तदवधिकत्वमेव तत्पूर्वत्वं वाच्यमित्यत्राह—**तत्त्वस्येति**। 'तत्त्वस्य' स्वावधिकनियतपूर्वत्वस्य। भिद्यते इति व्युत्पत्त्या भेदो भिन्नः, स च स्वापेक्षया तदधिष्ठानत्वात् स्वभिन्नवृत्तित्वादिति यावत्, स्वभेदाधिष्ठानाधिष्ठानकत्वादिति 25 मध्यपदलोपाद्वा तथा लाभः। 'अनुपाख्यस्य हेतुत्वे' उपाख्याशून्यकहेतुत्वे। 'प्रागपि'

---

१. क. च इति अधिकः पाठः। २. क. अस्मात्। ३. ख. भस्य।

स्वस्मात् प्रागपि। अपिना स्वाधिकरणस्वोत्तरकालयोः समुच्चयः। आपादकञ्च सत्त्वेन विशेषितं तेन न प्रागभावे व्यभिचारः। **पुनरि**ति। अहेतुकत्वेन सदातनत्वापादनमपेक्ष्य कारित्वस्य तन्मते सत्त्वेन तत्रानुपाख्यत्वमेव तर्हि व्याहतमित्यपि बोध्यम्।

'स्यादेतत्' एतद्वक्ष्यमाणं स्यात्। तत्र वक्ष्यमाणपक्षस्य दूषितमतवैधर्म्योपदर्शनाय तदनुवदति—**नाकस्मादिती**ति। 'कारणप्रतिषेधमात्र' कारणमात्रप्रतिषेधः। **निरुपाख्यहेतु[क?]त्वं वे**ति। इदमुपलक्षणम्। स्वस्य भावः 'स्वभावः' स्ववृत्तिरिति यावत्। तद्धेतुकत्वं वेत्यपि बोद्धव्यम्। 'अभिधित्सितम्' 'अकस्मादि'त्यभिधानप्रयोजकतात्पर्यविषयः। 'अनपेक्ष एव' अहेतुक एव। कश्चिदाकाशपरिणाहादिर्यथा भवति 'नियतदेशः', तथा कार्यत्वेनाभिमतोऽपि घटादि'र्नियतकालस्वभावः', तथा चानुमानं तर्को वा प्रयोजकमिति भावः। अहेतुकत्वाकादाचित्कत्वयोर्निरुपाधिसहचारेण व्याप्तिग्रहान्नाप्रयोजकत्वमित्यभिप्रेत्याह—[1]**ने**ति। 'अनियतावधि[क]त्वे वा' अनियतावधित्व इव। तथा चैकमेव हेतुरित्यत्र यथा कादाचित्कत्वव्याघातस्तथाऽहेतुकत्वेऽपीत्यर्थः। प्रागभावे व्यभिचारमाशङ्क्य तदुद्धरणम्। प्रकारान्तरेणापि सहेतुत्वं साधयति—**न ही**ति। '[2]उत्तरकालसंसर्गित्वमात्रं' कालवृत्त्यत्यन्ताभावाप्रतियोगित्वमात्रम्। **प्रागसत्त्वे सती**ति। कालसंसर्गित्वं विशिष्योपादानाद् वृत्तौ नातिव्याप्तिः। **परे** तु उत्तरकालसंसर्गित्वं कादाचित्कत्वं तच्च गगनादेरप्यस्तीति व्यभिचारमाशङ्क्य निराचष्टे—'न ही'त्याहुः। त'त्रोत्तरे'त्यस्य वैयर्थ्यमनुसन्धेयम्। नन्वत्र निरवधित्वमुपाधिरित्यत्राह—**सावधी**ति। सावधित्वे तु कार्यत्वाभिमतस्य 'स एव' अवधिरेव 'प्राच्यो' नियतपूर्ववर्ती 'हेतु'रुच्यते। हेतुपदवाच्यो हेतुरित्युक्तौ विरूपोपस्थित्यभावादनन्वय इत्युच्यत इत्युक्तम् **अस्त्वि**ति। एतावतापि 'अलौकिकं परलोकसाधनमदृष्टमि'त्यत्राश्रयासिद्धिरेव, न वा कर्तृतया भगवतः सिद्धिरिति भावः। 'अन्येषां' नियतान्वयव्यतिरेकशालिनां कपालादीनां 'तत्काले' कार्याव्यवहितप्राक्काले 'सत्त्वात्'। तेषाञ्चान्यथासिद्धिग्राहकप्रमाणाभावात् कारणत्वमेवार्थवशसम्पन्नमिति भावः। 'अन्यथा तदानीं तादृशानामसत्त्वे 'तस्यैव' प्रागभावस्यैव सामग्रीव्यङ्ग्यत्वात्तस्येति भावः। 'न तदेकावधित्वं' न प्रागभावैकावधित्वम् 'अविशेषात्' कारणताग्राहकान्वयव्यतिरेकग्रहस्य प्रागभाव इव कपालादावपि सत्त्वात्। ननु कार्योत्पत्तिद्वितीयक्षणे सत्येव कारणत्वाभिमतेष्वन्येषु प्रागभावव्यतिरेकात् कार्योत्पत्तिव्यतिरेको दृष्टः, न त्वन्यव्यतिरेकादित्यत्राह—**इतरे**ति।

१. न निरवधित्वे इति गुणानन्दसम्मतः पाठः। २. शङ्करमिश्र-गुणानन्दसम्मतः पाठः।

'प्रागपि' कपालादिसमवधानात् 'तदवधेः' प्रागभावरूपैकावधेः कार्यस्य सत्त्वमुत्पत्तिरूपं, तथा च यथा द्वितीयक्षणे प्रागभावव्यतिरेकात् कार्यानुत्पत्तिः, तथा सत्यपि प्रागभावे कपालादिसमवधानात् पूर्वं कार्यानुत्पत्त्या तस्यापि हेतुत्वमिति भावः। 'स एव प्राच्यो हेतुरि'त्यत्र शङ्कते—**सन्त्विति**। 'ये केचित्' प्रागभावस्तदितरे वा, तेन कार्येण तु 'ते नापेक्ष्यन्ते' तथा च तदवधित्वेन तद्धेतुव्यपदेशत्वे साध्ये ततकार्यापेक्षणीयत्वमुपाधिरिति 5 'स्वभावार्थः' स्वभाववादिनां तात्पर्यम्। 'न नियता' न नियतपूर्ववर्तिनः। 'नियता अपि' नियतपूर्ववर्तिनोऽपि। 'नोपकारकाः' न तत्तद्वृत्तिधर्मोत्पादकाः। **प्रथम** इति। तथा च दहनाद्धूम इतिवत् गर्दभादित्यपि प्रत्ययः स्यादिति भावः। तावता च नियतपूर्ववर्तित्वं नियतमवधित्वमकामेनापि वाच्यमिति सिद्धम्। **केचित्तु** धूमार्थी दहन इव रासभेऽपि प्रवर्तेतेत्यर्थः। यद्वा, दहनासमवधानेऽपि क्वचिद्रासभादपि 10 धूम उत्पद्येत इत्यर्थ इत्याहुः। 'किमुपकारान्तरेण' कार्यनिष्ठधर्मान्तरजननेन, अन्यथा तादृशधर्मापेक्षणीयत्वनिर्वाहाय तत्रापि तदधीनधर्मान्तरकल्पनेऽनवस्था स्यादिति 'नियमस्यैव' नियतपूर्ववर्तित्वस्यैवा'ऽपेक्षार्थत्वात्' अपेक्षाव्यवहारविषयत्वात्। कारणार्थ[त्वः]त्वात्' कारणव्यपदेश्यत्वव्यापकत्वात्। तथा चावधित्वेन हेतुव्यपदेश्यत्वे साध्ये कार्यापेक्षणीयत्वं साधनव्यापकतया नोपाधिरिति सिद्धम्। ननु तद्वृत्त्युपकाराजनकत्वेऽपि घटावधित्वं 15 कपालादावेव न वेमादावित्यत्रैव किन्नियामकमित्यत्राह—**ईदृशस्येति**। अवधित्वस्यायमेव 'स्वभाव' इति 'वादस्य' उपकारे उपकारान्तराजनने अनवस्थाभिया उपकारे उपकाराजननेऽपितदवधित्वं तत्रैवेति उत्तरस्य त्वया 'पीष्टत्वात्' त्वयापि देयत्वात्। तथा च मयापि तथैव वाच्यमिति भावः। अभ्युपगतस्वभाववादं प्रत्याह—**नित्येति**। नित्यस्याकाशादेर्यः स्वभावः शब्दाद्यवधित्वरूपस्तद्देशनियमवदेतत् कादाचित्कत्वं स्यात्। 20 यथा स्वभावादेतदवधित्वं तत्रैव नान्यत्रेति त्वयोच्यते तथा कादाचित्कत्वाभावोऽपि आकाशादावेव नान्यत्रेति वाच्यमिति भावः। दण्डादौ घटावधित्वं तत्कारणनियम्यत्वमेव वक्तुं शक्यते अत उक्तं **नित्येति**। 'तत्त्वं' शब्दावधित्वम् 'आकस्मिकं' हेत्वनियम्यं, पूर्वं परिमाणादिकमादाय शङ्का, इदानीमभ्युपगतस्वभाववादमवधित्वमाश्रित्येति न पौनरुक्त्यम्। **परे** तु इयमपि शङ्काऽऽकाशपरिमाणादिकमाश्रित्यैव, पूर्वं व्योमपरि- 25 माणादिषु क्वाचित्कत्वं यथा विनैव कारणं नियतं तथा घटादीनां कादाचित्कत्वमपीति कादाचित्कत्वेन सहेतुकत्वे साध्येऽप्रयोजकत्वमुक्तमिदानीं कदाचित्कत्वं न कारणनियतं स्वभावनियतत्वात् व्योमपरिमाणवदिति सत्प्रतिपक्षोद्भावनम्। यद्वा, यन्न नियतं तत् कारणनियम्यमित्युक्तमिदानीं यो यस्य स्वभावः स न कारणनियम्य

इत्युच्यत इति न पौनरुक्त्यमित्याहुः। **सर्वस्येति**। 'स्वभाव' इत्यत्र भावपदं धर्मार्थकं, धर्मत्वेन सामान्यतो धर्मिप्राप्तौ स्वस्याभिधानं निषेधफलकमिति यस्यैव यो धर्मः स तस्य स्वभावः, स चेद्धर्मोऽन्यस्यापि स्यात्, तदा तस्य स्वभावत्वमेव व्याहन्येत, हेतून् विनापि तेषां देशनियमादित्यर्थः। अत्रोपष्टम्भकमाह—**न हीति**। एकमाकाशादि। 5 **अनेकेति**। न एकं न एकमात्रं स्वाश्रयतया सम्बन्धि यस्य तदनेकमनेकवृत्तीति यावत्, तत्स्वभावकमित्यर्थः। तस्यान्यवृत्तित्वे त्वनेकवृत्तिधर्मस्यैकस्वभावत्वव्याघातादेकस्यानेक-वृत्तिधर्मस्वभावकत्वविरोध उपष्टम्भको भवत्येवेति ध्येयम् नन्वेवं कदाचित्कत्वं प्रागभाव-प्रतियोगिनां स्वभावो गगनादौ स्वभावत्वव्याघातादेव न वर्तते, तादृशनियमार्थमपि न कारणापेक्षेति तुल्यमित्याह—**नन्वेवमिति**। 'सर्वदा' भवतः सार्वदिके सतः 10 तद्वृत्तेरिति यावत्, कादाचित्कस्य 'कादाचित्कत्वस्वभावव्याघात' इति विनैव कारणं देशनियमो भविष्यति, किं कारणेनेत्यर्थः। दैशिकसम्बन्धेन यो यस्य स्वभावस्तस्य हेत्वनियम्यत्वेऽपि कालिकसम्बन्धेन कस्यचिदेव कालस्य घटस्वभावो नान्यस्येत्यत्र कारण-मेव नियामकं वाच्यमित्यभिप्रायेणाह—**तुल्य** इति। न च प्रागभावस्य तेन सम्बन्धेन तत्स्वभावत्वेन कारणनियम्यत्वमिति वाच्यं, तत्रापि प्रतियोगिकारणनियम्यत्वोपगमात्। 15 कारणसामान्यनिषेधे तु किं कस्य नियामकमिति भावात्। नन्ववधिरेव तन्नियामकोऽस्तु, कारणस्य न तावतापि सिद्धिरित्यत्राह—**नियतावधित्वे त्विति**। **हेतुवादेति**। वादः शब्दो वाचकतया यस्यास्ति तस्योपगमात्, य एव तन्नियामकोऽवधिः स एव हेतुपदवाच्य इत्यर्थः ॥५॥

## परिमलः

अत्र सत्प्रतिपक्षं शङ्कते :—कादाचित्कं, निर्हेतुकं, भवत्वादाकाशवत्। अकस्माद्भ-20 वतीति चेन्न। अत्र किं शब्दो यदा हेतुपरस्तदा नञः किंशब्देन संबन्धे हेत्वभावे कार्यं भवतीत्यर्थः। यदा तु नञः भवनक्रियया संबन्धस्तदा हेतौ सति कार्यं न भवतीत्यर्थः।

ननु वृत्तस्य वा विशेषणयोगो नेति वचनात्किंशब्देन समस्तस्य नञः भवनक्रियायामन्वयो दुर्घटः, समासात्पूर्वमेव नञः भवनक्रियायामन्वयतात्पर्येण प्रयोगस्तदा सापेक्षमसमर्थवदिति वचनात्किंशब्देन समास एव न स्यादिति चेन्न। सूर्यं न पश्यन्तीति विग्रहे नञः दर्शनक्रिया-25 यामन्वयतात्पर्यसत्त्वेन "असूर्यंललाटयोर्दृशितपो" रित्यनेनासमर्थसमासविधानदर्शनेनान्यत्रापि तदभिज्ञानात्। न च तत्र विशिष्टधातूपादानात्तत्रैवार्थविशेषे समासाभ्यनुज्ञा नान्यत्रेति चेत्सत्यम्, "अभावो नाप्रतिषेधवचना" इति कोशादशब्दस्य प्रतिषेधार्थकस्यैवात्र प्रयोगः। एतदुभयं निराकरोति।

ननु अकस्मादिति शंकाग्रन्थे हेतुभवननिषेध एव प्रतीयते, न तु स्वानुपाख्यविधिः, समाधानग्रन्थे तु चतुर्णां निषेधः क्रियते इति शंकाग्रन्थे न्यूनतापरिहाराय स्वानुपाख्यविध्योः संग्रहायाह प्रकाशे[1]—अथेति। यथा लोके चतुर्षु फलेषु सत्सु फलद्वयं न देयमित्युक्तौ च फलद्वयदानप्रतिज्ञेयस्य चाऽभ्यनुज्ञा फलति, तथा प्रकृते हेतुभवनयोः प्रतिषेधे स्वानुपाख्यविध्यो-रभ्यनुज्ञा प्रतीयते इति शंकाग्रन्थेऽपि चतुर्णां लाभान्न न्यूनता। अभ्यनुज्ञाबललाभप्रकारश्चेत्थम्— न हेतुरहेतुरिति पर्युदासनञा समासे हेतुव्यतिरेकोद्भावनमभ्यनुज्ञायते, हेतुव्यतिरक्तं च कार्य-स्वरूपमत्यन्तालीकं चेति ततो विधिः स्पष्टं प्रतीयते। अथापि स्वभाववर्णनानैवमिति अग्रिमग्रन्थे स्वभावप्रतिषेधदर्शनाच्छङ्काग्रन्थेऽपि तल्लाभ आवश्यक इत्यभिसन्धायाह— अश्वकर्णादिवत्स्वभावार्थकोऽकस्माच्छब्दात्स्वभावार्थलाभइति कार्यस्य स्वाभाविकत्वमेव कादा-चित्कत्वमिति भावः।

सर्वत्र शंकायां हेतुं दर्शयति—अवधेरिति। कादाचित्कस्य कार्यस्य नियतावधि-सम्बन्धित्वेनैव कादाचित्कस्य कार्यस्य तर्कसहकृतप्रत्यक्षेण विषयीकरणात् क्रमेण तर्कं दर्शयति— हेत्विति। भवनस्योत्पत्तेः अनपेक्षत्वे सर्वदा भवनं स्यात्, अभवनकालाद्भवनकाले हेतुरेव विशेषः, स चेन्नापेक्ष्यते तदा विशेषाभावाद्भवत्कार्यं सर्वदा स्यादित्यर्थः। नियामकाभावात् भवनमिह सत्त्वं नोत्पत्तिः। हेतुनिषेधे उत्पत्तेः संभवाभावात्। ततश्च हेतुनिषेधे गगनवत्सर्वदा सत्त्वं घटादिकार्यस्य स्यात्। सर्वदा सतश्च कादाचित्कत्वं व्याहन्यते। भवननिषेधे कारण-व्यापारात्प्रागिव पश्चात्कारणव्यापारोत्तरमपि न स्यात्। हेत्वनभ्युपगमे पूर्वापरकालयोर्विशेषा-भावादित्यर्थः। तथा च कादाचित्कत्वग्राहिप्रत्यक्षबाधः स्फुटएव। उत्पत्तेः पूर्वं स्वस्यासत्त्वेन स्वस्मादिति पक्षानुपपत्तेः। अयं भावः—स्वोत्पत्तेः पूर्वं यदि स्वं भवेत्तदा नियतकालविशेषे स्वोत्पत्तिनियामकं भवेत्। असत उत्पादकत्वे उत्तरकाल इव पूर्वकालेऽपि कार्यासत्त्वसंभवेनो-पलब्धिविरोधः स्यात्। स्वस्मात्स्वोत्पत्तौ विरोधान्तरमप्याह—पौर्वापर्येति। पूर्वकालवर्ति-कारणं परकालवर्ति च कार्यमिति कार्यकारणयोः पूर्वापरकालवर्तित्वनियमोऽस्ति। न च स एव पूर्वोऽपरश्च, पूर्वापरभावस्य भेदघटितत्वात् सिद्धस्य पूर्वत्वं साध्यस्य परत्वम् न चैककाले-द्वयोरेकत्र समावेशः युगपत् सिद्धत्वसाध्यत्वयोर्विरोधात्। अनुपाख्यस्य तुच्छस्य कारणत्वे तस्य सर्वदा सर्वत्र सुलभतया कार्यस्य पुनरपि सदातनत्वं स्यात्। एतत्पटानुत्पत्तिक्षणः पटोत्पत्तिप्राक्क्षणः यदि पटोत्पादकानुपाख्योत्तरक्षणः स्यात्तदा एतत्पटाधिकरणं स्यात्, कारणोत्तरक्षणस्य कार्याधिकरणत्वात्।

स्वभावकारणवादमुत्थापयति—अपितु अनपेक्ष इत्यादि। अयंभावः :—यथा परमाणुतत्परिमाणयोर्मिथः कार्यकारणभावाभावेऽपि स्वभावतः परमाणोर्देशत्वं तत्परिमाणस्य तद्वृत्तित्वम्। यथा वा कारणत्वाविशेषेऽपि पटस्य तन्तुदेशवृत्तित्वं न तुरीवेमादिदेशवृत्तित्व-मिति स्वभावादेव नियमः। तथा कार्यस्य घटादेरहेतुकत्वेऽपि स्वभावादेव कारणत्वेन त्वदीयाभिमतनियतकपालाधिकरणकालोत्तरकालवृत्तित्वं, न तु कालान्तरवृत्तित्वमिति कादाचित्कत्वं सिध्यतीति-आशंकते—अपि त्विति। निरवधित्वनियतावधित्वाभ्यां कादाचित्कत्वस्य विरोधान्नि-

---

१—"अथ हेतुभवनयोर्निषेधस्य शेषाभ्यनुज्ञाफलकत्वात् पर्युदासनञा हेतुव्यतिरिक्तो-द्भावनं लभ्यते, अहेतुश्च कार्यस्वरूपमवस्तु च तदा स्वानुपख्याविधिः, तं निषेधती" ति प्रकाशः।

रवधित्वे कादाचित्कत्वं न स्यादिति स्फुटीकर्तुमाह—निरवधित्वे इति। निर्गतोऽवधिः कारणं येषां ते गगनादयः सदातना एव दृश्यन्ते न कादाचित्काः, तद्वद्घटादेर्निरवधित्वे कादाचित्कत्वं न स्यात्। अयं क्षणः यदि एतत्पटध्वंसानाश्रयः सन् एतत्पटप्रागभावाश्रयो न स्यादेतत्पटाश्रयः स्यादित्यभिप्रायः। घटध्वंसाधिकरणकालो घटप्रागभावानाश्रयोऽपि घटाश्रयो न भवतीति
5 घटाश्रयकाले एतद्घटध्वंसानाश्रयत्वविशेषणम्। एतद्घटाश्रयः कालः तद्ध्वंसानाश्रयः तत्प्रागभावानाश्रयो घटवान् भवत्येव। घटप्रागभावतद्ध्वंसानधिकरणकालाप्रसिद्धिवारणाय एतदिति विशेषणम्। ननूत्तरकालसंसर्गित्वमात्रं तस्य घटाकाशसाधारण्येन द्वयोः कादाचित्कत्वे लोकव्यवहारविरोधः स्यात्। घटः कादाचित्कः आकाशः सदातन इत्येव हि लोके व्यवहारः। न च तर्हि सावधित्वमस्तु सहेतुकत्वं तु मास्त्विति शंक्यम्, अनयोः पर्यायत्वेन
10 सावधित्वे सहेतुकत्वनिषेधासंभवात्। अस्तु तर्हि प्रागभाव एव प्राचीनो हेतुरिति चेन्न। प्रागभाववद् भावान्तरस्यापि तदानीं सत्त्वाविशेषात्, अन्यथा प्रागभावज्ञानमेव न स्यात्। समवायिकारणदर्शनेनैव प्रागभावः परिच्छिद्यते इति तेऽप्यवधयो न प्रागभावमात्रम्। न च प्रागभावज्ञापकचक्षुरादेरिव भावान्तरस्य मृत्पिण्डादेरपि न कारणत्वमिति वाच्यम्। चक्षुरादेः प्रागभावाधिकरणग्रहणमात्रे एवोपक्षीणतयाऽभावग्रहणं प्रत्यकारणत्वात्। अत एवानुमितेऽ-
15 धिकरणेचक्षुरादिव्यापाराभावे मृत्पिण्डादिनिरपेक्षप्रागभावमात्रस्य कारणत्वे पूर्वोक्तं व्याघातं स्मारयति—इतरेति। यदि प्रागभावमात्रं कारणं स्यात्तदा कारणव्यापारात्प्रागपि तदवधेः सत्त्वाद्घटादेः सत्त्वापत्तिः।

ननु आपाद्यापादकयोर्वैयधिकरण्यादेव तर्को न समीचीन इति चेत्सत्यम्। अत एव प्रकाशकारः यद्ययं घटः प्रागभावान्यावधिको न स्यात्तर्हि सदातनः स्यादिति तर्कमाह। न च
20 प्रागभावे व्यभिचारः। तस्य निरवधिकत्वेऽपि सदातनत्वाभावादिति वाच्यम्। सदातनः स्यादित्यस्य आनादिः स्यादित्यर्थे तात्पर्यात् प्रागभावस्यानादित्वाभ्युपगमात्। ननु सन्तु अन्येऽपि अवधयः दण्डकपालादयः किन्तु ते कारणत्वेन नापेक्ष्यन्ते प्रागभावमात्रस्यैव कारणत्व-मिति चेदत्र ब्रूमः। कुतो नापेक्ष्यन्ते? किन्ते प्रागभाववन्नियता न अथवा नियताऽपि अनुपकारकाः। प्रथमे दूषणमाह—प्रथम इति। अनियतस्यावधित्वे धूमं प्रति दहनस्येव
25 गर्दभस्याप्यवधित्वं स्यात्। इष्टापत्तिस्तु न। नहि लोके धूमार्थिनां नियमेन यथा वन्ह्यानयने प्रवृत्तिस्तथा गर्दभेऽपि दृष्टा। द्वितीये त्विति। नहि कारणता उपकारव्याप्ता येनोपकार-निवृत्तौ निवृत्ता स्यात्, किन्तु कारणस्वरूपविशेषव्याप्ता कारणस्वरूपनिवृत्तावेव सा निवर्तते। यज्जातीयं कार्यं प्रति यज्जातीयस्यान्वयव्यतिरेकौ नियतौ, नियतजातीय एव कारण-पदार्थः स एवापेक्षणीयः कार्योत्पादाय इति लोके प्रसिद्धम्। ईदृशः स्वभाववादो भवतामपी-
30 ष्टस्तदा न विवादः। सत्प्रतिपक्षमाशंकते—नित्यस्वभावेति। कादाचित्कस्वभावो निर्हेतुकः स्वभावत्वान्नित्यस्वभाववदिति। अयं भावः—यथाकाशादेः नित्यस्य शब्दाश्रयत्वं स्वाभाविकमपि नियतमेव तथा घटादिरपि कपालादेर्नियतो भविष्यति। न हि नित्यस्वभावे किञ्चिन्नियामकं केनचिदङ्गीक्रियते। तथाऽनित्यस्वभावोऽपीति न तदर्थं कारणस्यावश्यकता। यदि च शब्दा-श्रयत्वमाकाशस्याकस्मिकं तर्हि सर्वस्य तत्किन्न भवति इति वक्तुमशक्यम्। सर्वत्र भवतो
35 गगनत्वादेः स्वाभाविकत्वानुपपत्तेः। एकस्मिन्नेव नियतोऽसाधारणो धर्मः स्वाभाविकः उच्यते। स चेत्सर्वस्य स्यात्तर्हि स्वभावव्याघातः स्यात्, नहि एकत्वं गगनत्वादि अनेकेषां कालादीनां

स्वभावः, सर्वस्य भवतः स्वाभाविकत्वानुपपत्तेः, स्वमात्रवृत्तिर्धर्मः स्वाभाव उच्यते। परन्तु ईदृशविवक्षायां नहि **एकोऽनेकस्वभाव** इति पाठः स्यात्।

केचित्तु तन्मते धर्मधर्मिणोरभेदस्वीकारात्, गगनाभिन्नं गगनत्वं यदि कालादौ स्यात्तर्हि कत्वाद्यभिन्नमपि स्यादित्यनेकत्वापत्त्यैकत्वव्याघातः स्यादित्याशयेनाह—**नहि एकमनेक स्वभावमिति**। वस्तुतस्तु—गगनत्वं यदि कालादेरपि धर्मः स्यात्तदा तस्यापि स्वाभाविक एव स्यात्तथा च व्याघातः स्यात्, तदन्यावृत्तित्वविशिष्टतद्वृत्तिधर्मस्यैव स्वाभाविकत्वात्, अनेकवृत्तेस्तन्मात्रवृत्तित्वक्षतेरित्याशयेनोक्तम्—**नहि एकमनेकस्वभावमिति**।

ननु यदि स्वभावत्वव्याघातभयेनाकाशत्वं सर्वस्य शङ्कितुं न शक्यते, तदा कादाचित्कत्वस्वभावव्याघातभयेन तस्य सदातनत्वमत्र नाशङ्कनीयमेवेतितुल्यपरिहार इत्याह-**नन्वेवमपीति** अत्र पूर्वोक्तिपरिहारमेव स्मारयति—**ननु च इति**। अयं भावः—यदि कादाचित्कत्वस्वभावसिद्धिः स्यात्तदा तस्य सदातनत्वकल्पनायां व्याघातो वक्तुं शक्येत, तदेव तु निरवधित्वे अनियतावधित्वे न संभवति। ये निरवधयो निष्कारणगगनादयः न ते कादाचित्काः किन्तु सदातना एव। यद्यपि न नियतोऽवधिर्यस्येति नित्यातिरिक्तिमप्रसिद्धम्। अवधिपदेन कारणमेवेष्यते तच्च नियतमेव आकाशादिप्रसिद्धं निरवधिपदेनैव संगृहीतमिति अनियतावधिरिति व्यर्थमुदाहरणाभावात्, तथापि आकाशादिसंग्रहायैव तदप्युपात्तम्। न च पौनरुक्त्यम्। पूर्वेण शुद्धावधिसामान्याभावो विवक्षितः, उत्तरेण नियतत्वविशिष्टावध्यभावो विवक्षित इति विशिष्टाविशिष्टप्रतियोगिकत्वेन तद्भेदात्। अथवा तन्मतेन शशशृङ्गादयोऽनियतपदेन विवक्षिता इति स्थितस्य गतिः। एवं चानियतावधिस्वभावस्य नियतावधिस्वभावस्य च कादाचित्कत्वभावव्याघातः। नहि विरुद्धयोतेजलजसोरेकस्वभावः। नियतावधित्वे तु अस्मन्मतसिद्धिरिति घट्टकुट्यां प्रभातायितम्। वस्तुतोऽन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षमेव कारणत्वं गृह्णाति तत्र न स्यादेवेत्यादिस्तर्कोऽन्यथासिद्धो दर्शित इति अनुमानादितात्पर्येण वाधादयो हेत्वाभासा इति सर्वमवदातम्॥ ५॥

स्यादेतत्। उत्तरस्य पूर्वः पूर्वस्योत्तरो मध्यमस्य उभयमवधिरस्तु। दर्शनस्य दुरपह्नवत्वात्। त्वयाऽप्येतदभ्युपगन्तव्यम्, न हि भाववदभावेऽप्युभयाऽवधित्वमस्ति। तद्वद्भावेष्वप्यनुपलभ्यमानैकैककोटिषु स्यात्। न स्यात्, अनादित्वात्।

**प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान्।**
**तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥६॥**

प्रागभावो ह्युत्तरकालावधिरनादिः, एवं भावोऽपि घटादिः स्यात्। अनुपलभ्यमानप्राक्कोटिकघटादिविषयं नेदमनिष्टमिति चेन्न। तावन्मात्रावधिस्वभावत्वे तदहर्वत्पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात्, अपेक्षणीयान्तराभावात्। एवं पूर्वपूर्वमपि। भावे, तदेव सदातनत्वम्। तदहरेवानेन भवितव्यमित्यस्य स्वभाव इति चेन्न। तस्याप्यह्नः पूर्वन्यायेन पूर्वमपि सत्त्वप्रसङ्गात्। तस्मात्तस्यापि तत्पूर्वकत्वमेवं तत्पूर्वस्यापीत्यनादित्वमेव ज्यायो, न त्वपूर्वानुत्पादे कस्यचिदपूर्वस्य सम्भव इति। तथापि व्यक्त्यपेक्षया नियमोऽस्तु, न जात्यपेक्षयेति चेन्न। नियतजातीयस्वभावताव्याघातात्। यदि हि यतः कुतश्चिद्भवन्नेव तज्जातीयस्वभावः स्यात्, सर्वस्य सर्वजातीयत्वमेकजातीयत्वं वा स्यात्। एवं तज्जातीयेन यतः कुतश्चिद्भवितव्यमित्यस्य स्वभावः? तदाऽपि सर्वस्मात् सर्वजातीयमेकजातीयं वा स्यात्। कथं तर्हि तृणारणिमणिभ्यो भवन्नाशुशुक्षणिरेकजातीयः? एकशक्तिमत्त्वादिति चेन्न। यदि हि विजातीयेष्वप्येकजातीयकार्यकारणशक्तिः समवेयान्न कार्यात्कारणविशेषः काप्यनुमीयेत। कारणव्यावृत्त्या च न तज्जातीयस्यैव कार्यस्य व्यावृत्तिरवसीयेत। तदभावेऽपि तज्जातीयशक्तिमतोऽन्यस्मादपि तदुत्पत्तिसंभवात्। यावद्दर्शनं व्यवस्था भविष्यतीति चेन्न। निमित्तस्याऽदर्शनात्, दृष्टस्य चानिमित्तत्वात्। एतेन सूक्ष्मजातीयादिति निरस्तम्। अवह्नेरपि तत्सौक्ष्म्याद्धूमोत्पत्त्यापत्तेः। कार्यजातिभेदाभेदयोः समवायिभेदाभेदावेव तन्त्रं, न निमित्तासमवायिनीति चेन्न। तयोरकारणत्वप्रसङ्गात्। न हि सति भावमात्रं तत्, किन्तु सत्येव भावः। न च जातिनियमे समवायिकारणमात्रं निबन्धनम्, अपि तु सामग्री। अन्यथा द्रव्यगुणकर्मणामेकोपादानकत्वे विजातीयत्वं न स्यात्। न च कार्यद्रव्यस्यैषा रीतिरिति युक्तम्। आरब्धदुग्धैरेवाऽवयवैर्दध्यारम्भदर्शनात्।

एतेनाऽपोहवादे नियमो निरस्तः। 'कार्यकारणभावाद्वे'त्यादिविप्लवप्रसङ्गात्। तस्मान्नियतजातीयतास्वभावभङ्गेन व्यक्त्यपेक्षयैव नियम इति फुत्कारेण तृणादेरेव, निर्मन्थनेनारणेरेव, प्रतिफलिततरणिकिरणैर्मणेरेवेति प्रकारनियमवत्तेनैव व्यज्यमानस्य कार्यजातिभेदस्य भावात्। दृश्यते च पावकत्वाविशेषेऽपि प्रदीपः प्रासादोदरव्यापकमालोकमारभते, न तथा ज्वालाजालजटिलोऽपि दारुदहनो, न तराञ्च कारीषः।

यस्तु तं नाकलयेत्, स कार्यसामान्येन कारणमात्रमनुमिनुयादिति किमनुपपन्नम्? एवं तर्हि धूमादावपि कश्चिदनुपलक्षणीयो विशेषः स्याद् यस्य दहनापेक्षेति न धूमादिसामान्याद्वह्निसामान्यादिसिद्धिः। एतेन व्यतिरेको

व्याख्यातः। तथा च कार्यानुपलब्धिलिङ्गभङ्गे स्वभावस्याप्यसिद्धेर्गतमनुमानेनेति चेत्, प्रत्यक्षानुपलम्भगोचरो जातिभेदो न कार्यप्रयोजक इति वदतो **बौद्धस्य** शिरस्येष प्रहारः। अस्माकन्तु यत्सामान्याक्रान्तयोर्ययोरन्वयव्यतिरेकवत्ता तयोस्तथैव हेतुहेतुमद्भावनिश्चयः। तथाचाऽवान्तरविशेषसद्भावेऽपि न नो विरोधः। किं पुनस्तार्णादौ दहनसामान्यस्य प्रयोजकम्? तृणादीनां विशेष एव नियतत्वादिति 5 चेत्, तेजोमात्रोत्पत्तौ पवनो निमित्तम्, अवयवसंयोगोऽसमवायी, तेजोऽवयवाः समवायिनः। इयमेव सामग्री गुरुत्ववद्द्रव्यसहिता पिण्डितस्य। इयमेव तेजोगतमुद्भूतस्पर्शमपेक्ष्य दहनं, तत्रापि जलं प्राप्य दिव्यं, पार्थिवं प्राप्य भौमम्, उभयं प्राप्यौदर्यमारभत इति स्वयमूहनीयम् ॥६॥

### आमोदः

ननु नियतावधिकत्वेन सहेतुकत्वं वा साध्यते सोपादानकत्वं वा। 10 आद्ये प्रागभावे व्यभिचारः। अन्त्ये तु ध्वंसेऽपि व्यभिचारः। किञ्च सामग्र्याः कादाचित्कत्वेऽपि न सहेतुकत्वमनवस्थानादिति यथा कादाचित्कापि सामग्री न सहेतुका तथा घटादिरपि न सहेतुकः स्यात्। किञ्च दृष्टान्वयव्यतिरेकाणामपि तृणारणिमणीनां व्यभिचारान्न कारणत्वम्, एवं धूमादीनामपि कारणनियमो न भवेत्, इत्याद्येकेनापरेणाशङ्कते—**स्यादेतत्**- 15 **दिति**। केचित्तु ननु सावधित्वमङ्गीक्रियत एव, किन्तु सावधिर्न कारणम्। तत्रापि सावधित्वेन सहेतुकत्वेऽनवस्थानात्, किन्तूदासीन एव कश्चिदिति हृदि निधायाह 'स्यादेतदिती'त्याहुः। उत्तरस्य ध्वंसस्य पूर्वः प्रतियोगी। पूर्वस्य प्रागभावस्य उत्तरः प्रतियोग्येव मध्यमस्य दृष्टोभयावधेर्घटादेरुभयं प्रागभावो ध्वंसश्चावधिरस्तु। स्वीकारे बीजमाह—**दर्शनस्येति**। 20 अनेनैव बीजेन सिद्धान्तिनमपि स्वीकारयति—**त्वयापीति**। स्वीकृतं मया, किं तत इत्यत आह—**न स्यादिति**। **न हीति**। अनुपलभ्यमानै[कैः?]ककोटिषु तरुमहीरुहादिषु, तथा च कार्यत्वान्न सकर्तृकत्वसिद्धिरिति नेश्वरसिद्धिरिति भावः। तत्र कादाचित्कत्वं सहेतुकत्वे साध्ये सामग्र्यां व्यभिचारीति यदुक्तं तत्राह—**अनादित्वादिति**। सामग्र्यपि सामग्र्यधीना, 25 एवं साऽपीत्यनादित्वमेवात्र परीहारः। दृष्टान्वयव्यतिरेकाणामपि तृणादीनां व्यभिचारपरिहारो मण्वचिन्तन[?] एवानादित्वादिति।

हेतुं विवरितुं कारिकयोपगृह्णाति—**प्रवाह** इति। कार्यकारणप्रवाहोऽनादिरेव। अनादित्वं च ध्वंसव्याप्यप्रागभावप्रतियोगित्वम्, तथापि व्यक्त्योरेव कार्यकारणभावोऽस्तु न जातिगर्भो येन कार्यत्वावच्छेदेनैव सकर्तृकत्वं सिध्येत[त् ?]। अथ नियतजातीयकार्यान्यथानुपपत्त्या सामान्यगर्भ एव कार्यकारणभावोऽननुगमस्तु तृणादावेकशक्तिमत्त्वेन समाधेय इत्यत आह—**न विजातीति**। विजातिषु विरुद्धजातिषु तृणारणिमणिषु वह्न्यनुकूलशक्तिमत्तया कारणत्वमित्यपि नास्ति इत्यर्थः। नत्वे[न्वे ?]वं तृणारणिमणीनां कारणत्वं परस्परव्यभिचारेण कथं ग्राह्यमित्यत आह—**तत्त्व** इति। अन्वयव्यतिरेकयो'स्तत्त्वे' नियतत्वे ग्राह्ये पुरुषेण 'यत्नवता भाव्यम्'। तथा च वह्न्यवान्तरजातिकल्पनया तृणादावन्वयव्यतिरेकनियमो ग्राह्य इति भावः।

सावधिकत्वस्य सहेतुकत्वे व्यभिचारं निरस्यति—**प्रागभावो** हीति। तस्योत्तरैकावधित्वम्। तच्च न सहेतुकत्वे हेतुर्येन व्यभिचारः स्यात्। न हि यत् सावधित्वं प्रागभावे, तदेव घटादावपीति। वैषम्यमसहमानआह **अनुपलभ्यमानेति**। घटादिर्यदि पूर्वावधिशून्यः स्यात्, तदा तन्मात्राधीनं तत्कार्यमपि पूर्वावधिशून्यं सत् सदातनं स्यादिति कादाचित्कत्वभङ्गप्रसङ्ग एवेत्याह—**तावन्मात्रेति**। **तदहर्वदिति**। समासान्तविधेरनित्यत्वेन समाधेयम्। **अनेनेति**। अनुपलभ्यमानप्राक्कोटिकस्य घटादेर्यत् कार्यं तेन च तस्मिन्नेव दिने भवितव्यमिति तत्स्वभावाभ्युपगमे कथं सदातनत्वमित्यर्थः। अहस्तावत् कालः कालोपाधिर्वा, उभयथापि तत्कार्यस्योक्तन्यायेन सदातनत्वमित्याह—**तस्यापीति**। कार्यकारणभावप्रवाहस्यानादित्वाभ्युपगममन्तरेण न निस्तार इत्युपसंहरति—**तस्मादिति**। कार्यकारणभावप्रवाहानादितामेव द्रढ़यति—**न त्विति**। घट आगन्तुकहेत्वधीन एवं सोऽपीत्यनादित्वमेवेत्यर्थः। **तथापीति**। या दण्डव्यक्तिर्घटपूर्वसती दृश्यते सैव तद्घटव्यक्तिं प्रति कारणं, न तु घटजातीयं प्रति दण्डजातीयमित्यर्थः। एवं सति नियतजातीयं कार्यं न स्यादित्याह—**नियतेति**। ननु कार्यस्यायं स्वभावो यद् 'यतः कुतश्चिद'पि 'भवन्नि'यतजातीयं भवेत् तत्राह—**यदि हीति**। कार्यपक्षकं तर्कद्वयमाह—**सर्वस्येति**। अयं घटो यदि पटजनकयावज्जन्यः स्यात्,

पटजातीयः स्यात्। एवं धूमादिजातीयत्वमपि घटस्यापाय[द्य?]मित्येव सर्वजातीयत्वापादनार्थः। घटभिन्नं कार्यं यदि घटजनकयावज्जन्यं स्यात्, घटजातीयं स्यादित्येकजातीयत्वापादनम्। कारणपक्षकं तदाह—**एव-मिति**। यदि घटसामग्री पटसामग्र्यभिन्ना स्यात् पटजननी स्यात्। एवं धूमजननत्वादिकमापाद्यम्। घटान्यकार्यसामग्री यदि घटसामग्र्यभिन्ना स्यात् पटजनिका स्यादित्येकजातीयत्वापादनम्। ननु कार्यसाजात्यं यदि कारणसाजात्यनिबन्धनं तदा तृणादिवैजात्येऽपि वह्निसाजात्यं न भवेदि-त्याह—**कथमिति**। **मीमांसकः** प्रत्यवतिष्ठते—**एकशक्तिमत्त्वादिति**। वन्ह्य-नुकूलैकशक्तिमज्जन्यतयैव वह्निजातीयत्वमित्यर्थः। एवं सति वह्नेस्तृणानु-मानभङ्गवद् धूमाद्वह्न्यनुमानभङ्गः। तृणव्यावृत्त्या वह्निव्यावृत्त्यनुमान-भङ्गवत् वह्निव्यावृत्त्या धूमव्यावृत्त्यनुमानमपि भज्येत इत्याह—**यदि ही-त्यादि**। उभयत्रापि हेतुमाह—**तदभावेऽपीत्यादि**। दृष्टव्यभिचारस्थले तृणादावेव तत्कल्पनं, न तु सर्वत्र, येनोक्तदोषः स्यादित्याशङ्कते—**यावदिति**। तृणादावप्येकशक्तिमत्त्वं न दृश्यते, शक्तेरतीन्द्रियत्वात्। अनुमानं त्वन्यो-न्याश्रयपरमाह। तत्तृणादेः कारणत्वग्रहे शक्तिकल्पनं, तत्कल्पने च व्यभिचाराग्रहात् कारणत्वग्रह इति निमित्तस्यादर्शनं, तृणत्वादिकं च दृष्टत्वावच्छेदकं व्यभिचारादित्याह—**निमित्तस्येति**। **एतेनेति**। सौक्ष्म्यञ्च योग्यव्यक्तिवृत्तित्वेऽप्यतीन्द्रियत्वम्। वह्निकुर्वद्रूपत्वजात्या तृणादिकमेक-जातीयं कृत्वा कारणत्वग्रह इत्यप्यन्योन्याश्रयादिग्रस्तमित्यर्थः। कार्यलिङ्ग-कानुपलब्धिलिङ्गकानुमानद्वयभङ्गश्चात्रापीत्याह—**अवह्नेरपीति**। रास-भादेरपि कुर्वद्रूपतो वह्निसम्भावनायां क्वानुमानमित्यर्थः। ननु वह्ने-रैकजात्यं समवायिकारणवह्न्येकजात्यधीनम्, न तु निमित्तकारणसाजात्या-धीनमतः किं तत्साजात्यचिन्तयेत्याह—**कार्येति**। यदि तद्भेदः कार्यभेदः प्रयोजको न स्यात्, तदा तयोरसाधारणकारणत्वाभावप्रसङ्ग इत्याह—**तयोरिति**। यद्वा यदि सामान्यं कारणतावच्छेदकं न स्यात्तदा 'तयोः' कारणत्वमेव न स्यात्, ग्रहीतुमशक्यत्वादित्याह—**तयोरिति**। नन्वेकस्यां दण्डव्यक्तौ सत्यां घटोत्पत्तिदर्शनात् कथं न सा कारणमत आह—**न हीति**। **किन्त्विति**। तां विनापि घटरूपकार्यान्तरदर्शनात्, व्यभिचारात् सा कथं हेतुः स्यात्। न हि तस्यां सत्यामेव घटो भवतीति नियमः, तथा चायातं

तज्जातीयत्वं तन्त्रमित्यर्थः। समवायिकारणसाजात्यमात्रनिबन्धं तत्साजात्य-मित्यत्र व्यभिचारमाह—न चेति। द्रव्यसमवायिकारणानां द्रव्य-गुणकर्मणां वीजात्यदर्शनात्। तर्हि कार्यसाजात्ये किं निबन्धनं तत्राह—अपि त्विति। एकजातीयकारणमेलकाधीनं कार्यसाजात्यमित्यर्थः न तु
5 द्रव्यरूपकार्यसाजात्यं समवायिकारणसाजात्यनिबन्धमत आह—न चेति। व्यभिचारमाह—आरब्धेति।

ननु तृणारणिमण्यन्योन्यत्वेन तृणादीनां कारणत्वग्रहः स्यादित्यत आह—एतेनेति। अत्रापि वह्निपिशाचान्योन्यत्वेन धूमं प्रति कारणता स्यादिति धूमाद्वह्न्यनुमानं न स्यात्। 'नियमः' कारणता। न हि सर्वत्र
10 कारणविशेषस्यानुमानमिति ब्रूम इति भावः। यद्यपि वह्नौ वैजात्यं योग्या-नुपलब्धिबाधितम्, तथा च एकशक्तिमत्तयैव तृणादीनां कारणत्वं कल्प-यितुमुचितम्, तथापि नानास्थलेऽश्वरणिषु, मणिषु, तथा फुत्कारादौ शक्ति-नानात्वकल्पनापेक्षया वह्निवैजात्यकल्पनमेव लाघवादुचितम्। फुत्काराद्य-नन्तरजायमानवह्निव्यक्तिषु तदुपलम्भोऽप्यस्ति, द्व्यणुकयोरिव श्या-
15 मर्कपिशयोः। न च यथा समवायिकारणासमवायिकारणध्वंसजन्यद्रव्य-ध्वंसे वैजात्यमन्तरेणापि कार[ण]त्वमेकशक्तिम[त्त ?]यैव वाच्यम्, तथा प्रकृतेऽपि किं न स्यादिति वाच्यं, तत्रापि समवायिकारणनाशानाश्यद्रव्य-नाशत्वेन, असमवायिकारणनाशानाश्यद्रव्यनाशत्वेनैव तदुभयकारणत्वात्। यद्वा विद्यमानाश्रयिकद्रव्यनाशत्वेनासमवायिकारणमस्य द्रव्यनाशं प्रति
20 कारणत्वात्। तदुभयनाशजन्यो नियमः।

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्"॥

इति त्वदभ्युपगमः। तत्र स्वभावनियमेऽपि कार्यकारणभाव एव तन्त्रम्। तद्भङ्गे[1] तस्यापि भङ्ग इत्यर्थः। कथं तर्हीत्याद्याक्षेपमुपसंहरति—तस्मा-
25 दिति। व्यक्त्यपेक्षयैवेति। पूर्वव्यक्तिरुत्तरव्यक्तौ कारणं, न तु जाति-नियता कारणतेत्यर्थः। फुत्कारेणेति। फुत्कारादिनियतसह-कारिसमवहिततृणादिजन्यवह्निषु वह्नित्वावान्तरजातित्रयकल्पनेन व्यभि-

१—भङ्गेनेत्यत्र भङ्गे नेति विवेकामोदसम्मतः पाठः।

चारविरहान्न जातिगर्भकार्यकारणभावभङ्ग इत्यर्थः। 'प्रकारनियमः' सहकारिनियमः। वह्निवैचित्र्योपपादनेनावान्तरजातिभेदं साधयति—**दृश्यत** इति। विवादपदं वह्नयो वह्नित्वावान्तरसामान्यवत्ता[न्तो?]नियतसहकार्यनुप्रवेशेन जायमानत्वात् प्रदीपादिवदित्यनुमानमित्यर्थः।

ननु वैजात्यं दुरूहमतः कथं कारणानुमानमत आह—**यस्त्विति**। 5 द्रव्यनाशे तु समवायिनिरूपितयावत्कारणनाशजन्यनाशत्वेन निमित्तेतरकारणनाशजन्यनाशत्वेन वा कारणत्वमिति भावः। एवं सति धूमसामान्येन वह्निसामान्यानुमानं न स्यात्, धूमेऽपि वैजात्यशङ्कातादवस्थ्यादित्याह—**एवं तर्हीति**। न वा वह्न्यभावेन धूमाभावोऽनुमीयेत कारणान्तराधीनधूमसद्भावसम्भवादित्याह—**एतेनेति**। 'व्यतिरेको' व्यतिरेकानुमानभङ्गः। 10 **कार्येति**। 'कार्यलिङ्गकं' कार्येण कारणानुमानम् 'अनुपलब्धिलिङ्गकं' कारणानुपलब्ध्या कार्याभावानुमानमित्यर्थः। **स्वभावस्यापीति**। तत्रापि कार्यकारणभावविलोपप्रसङ्ग एव विपक्षबाधक इति भावः। 'प्रत्यक्षानुपलम्भगोचरो'ऽन्वयव्यतिरेकगोचरः। अङ्कुरतावच्छिन्नकार्यं प्रति बीजत्वेन न कारणता, किन्तु कुर्वद्रूपत्वावच्छेदेन कारणत्ववादिन इत्यर्थः। 15 **एष प्रहार इति**। अनुमानमात्रभङ्गप्रसङ्ग इत्यर्थः। तन्मतेऽङ्कुरेण बीजानुमानं धूमेन वह्न्यनुमानञ्च न स्यात्, वह्नित्वादेस्तत्राप्रयोजकत्वात्, कुर्वद्रूपस्य च दुर्ज्ञेयत्वादिति भावः। स्वमतमुपपादयति—**अस्माकं त्विति**। बाधकाभावेन वह्नित्वधूमत्वावच्छेदेनैव कार्यकारणभावग्रहादनुमानमप्रत्यूहमेव, तृणादिस्थले तु व्यभिचारान्न सामान्यतः कार्यकारणभावग्रह इति 20 भावः। **अवान्तरेति**। पाण्डरधूमत्वेन पालालकवह्नित्वेन कार्यकारणभावेऽपि सामान्यानुमानमिति भावः। ननु यदि तृणादीनां विशेषेष्वेव कारणता तदा वह्नित्वमाकस्मिकं स्यादित्याह—**किं पुनरिति**। तथा च वह्निसामान्येन कस्यापि कारणस्याप्यनुमानं न स्यादिति भावः। अस्तु तावद्वह्निसामान्यप्रयोजकनिर्वचनम्। तद्व्यापकव्याप्यधर्मावच्छिन्नस्यापि कारणं 25 निर्वक्तुं शक्यत इति प्रौढिवादेनाह—**तेजोमात्रोत्पत्ताव**[ति?]। कार्यतेजोमात्रेत्य[र्थः]। प्रदीपादौ पवनस्य कारणता गृहीतैव, निर्वाति दीपनिर्वाणदर्शनात् 'यद्विशेषयो'रिति न्यायात् सर्वत्रैव जन्यतेजसि पवनः

कारणमिति भावः। गुरुत्ववद्द्रव्यमुपष्टम्भकपार्थिवपिण्डितसुवर्णं, दिव्यं विद्युदादि, 'भौमं' भौमेन्धनप्रभवम्, 'उभयं' जलं पार्थिवञ्चेति ॥६॥

बोधनी

अथानादित्वादिति हेतुमवतारयितुं निराकरणीयामाशङ्कामाह—**स्यादेतत्**—अयमत्र भावः—यथा निरपेक्षत्वे कादाचित्कत्वं न सम्भवति तथा सापेक्षत्वेऽप्यपेक्षणीयस्य
5 सदातनत्वेन कार्यस्यापि तथात्वापत्तेः, तस्मान्निरपेक्षाद् गगनादिव सापेक्षादपि व्यावर्त्तमानं कादाचित्कत्वमसाधारणत्वान्न सापेक्षत्वसाधकमिति। अक्षरार्थस्तु—**उत्तरस्या**नुपलभ्यमानोत्तरावधेर्भावस्य **पूर्व** एवावधिरस्तु, **पूर्वस्या**नुपलभ्यमानपूर्वावधे**रुत्तर** एवावधिरस्तु, **मध्यमस्यो**पलभ्यमानोभयावधे**रुभयं** पूर्व उत्तरश्चावधिरस्तु, तथा दर्शनात्। ननु सर्वस्याप्यवधिद्वयं वक्तव्यम् अन्यतरावधेस्तदितरावधिव्याप्तत्वादित्यत आह—**त्वयापि**—
10 **इति**। एतदेवावधित्वं त्वयाप्यङ्गीकार्यं प्रागभावप्रध्वंसयोरेकावधित्वस्य सिद्धत्वात्। प्राक्प्रध्वंसाभाववद**नुपलभ्यमानैककोटिकेषु** भावेष्वपि पूर्वैकावधित्वमुत्तरैकावधित्वं वा स्यात्। अत्रानुपलभ्यमानप्राक्कोटेर्भावस्य पूर्वावधिविरह एव साध्यः। अवशिष्टस्य दृष्टान्ततयोपन्यासः।

अथवायमर्थः। **उत्तरस्य** प्रध्वंसस्य **पूर्व** एवावधिरवच्छेदकः नोत्तरः, भावोन्म-
15 ज्जनप्रसङ्गात् **पूर्वस्य** प्रागभावस्यो**त्तर** एवावधिर्न पूर्वः पूर्ववत्प्रसङ्गात्। **मध्यमस्य** प्राक्प्रध्वंसाभावयोर्मध्यासीनस्य कार्यस्योभयमवधिरस्तुदर्शनबलात्। **त्वया** सिद्धान्तिना**प्ये**तत्त्रयं व्यवस्थितमभ्युपगन्तव्यम्। ततः किमित्यत आह—**ततः**—इति। तथाचानुपलभ्यमानप्राक्कोटेः कारणस्यानादित्वसम्भवात् तदनपेक्षामलभमानानां कार्याणामपि सदातनत्वप्रसङ्ग इत्युभयत्रापि समानो वाक्यशेषः। यद्वा, अयमत्र भावः, यस्य कार्यस्य योऽवधि-
20 र्दृश्यते पूर्व उत्तर उभयं वा तत्तदवधिकमेवास्तु, दुर्लङ्घ्यत्वाद्—**दर्शनस्य**। न चान्यतरावधेरितरावधिव्याप्तिः अभावेन व्यभिचारात्। तत्र विधात्रयेऽपि कार्यस्यावधिमत्त्वेनैव कादाचित्कत्वं सिध्यति, सदातनत्वप्रतिपक्षमात्ररूपत्वात् तस्य। तथाचानुपलभ्यमानपूर्वावधेः कार्यस्योत्तरावधिमात्रेणैव कादाचित्कत्वे सिद्धे न तेन कारणपरम्परानुमानमित्यन्यथासिद्धिः। सर्वस्यापि कार्यस्य पक्षीकरणाद् भागे बाधितविषयत्वं चेति।
25 हेतुमवतारयति—**न स्यादनादित्वात् इति**।

तदेतत् प्रसङ्गमभिधाय विपर्यये पर्यवसानमिति व्याचष्टे—**प्रवाहोऽनादिमानेषः**—इति। अनुपलभ्यमानपूर्वकोटेः कारणस्य पूर्वावधिविरहे तस्या**नादित्वात्** कादाचित्कत्व-

व्याघातः स्यात्। तस्मात्तस्यापि कश्चित् पूर्वावधिरस्ति, एवं तस्यापीति कारणप्रवाहोऽय-
**मादिमान्न** भवति। पश्चिमे तु व्याख्यानेऽनुपलभ्यमानपूर्वावधेरपि कार्यस्य पूर्वावधि-
सापेक्षत्वम्, अन्यथा तत्कार्यस्यानादित्वप्रसङ्गादिति परिहारार्थः। नन्वस्तु कारणप्रवाहोऽ-
नादिस्तथाप्येकजातीयं कार्यमेकजातीयात् कारणाद् भवतीति नियमो नास्ति, विजातीयेभ्य
एव तृणादिभ्य एकजातीयाग्नेरुत्पत्तिदर्शनात्। न चैवमाकस्मिकः कार्यजातिनियमः, 5
विजातीयेष्वपि कारणेषु एकशक्त्यङ्गीकारादेव तदुपपत्तेरित्यत आह—**न विजाति**-इति।
विविधा जातिर्यस्य तद् विजाति। एका शक्तिर्यस्य **तदेकशक्ति विजाति चैकशक्ति**
च कारणं **विजात्येकशक्ति, तद्वान्** कारणप्रवाहो न भवति। नैकजातीयस्य विजातीयं
कारणमिति चार्वाकस्य निरासः, न च तदेकशक्तिकमिति प्रसङ्गान् **मीमांसकस्येति।**
कारणवैजात्ये कार्यसाजात्यस्याऽकस्मिकत्वप्रसङ्गात् तृणादिभ्यो भवतोरवान्तरजातिभेदोऽ- 10
स्तीति तत्रैव तेषामुपयोगः। स चाग्न्यवान्तरजातिभेदस्य तृणादेश्च कार्यकारणभावोऽ-
वहितैरन्वयव्यतिरेकैर्गम्यः। तदुक्तं—**तत्त्वे-इति।** **तत्त्वे**-कायकारणभाव इति
यद्वा, **तत्त्व** इति साध्यानङ्गीकारप्रदर्शनम्। ततः परमनिष्टप्रसञ्जनं **विजात्येकशक्ति-**
**मत्त्वेऽङ्गीक्रियमाणेऽन्वयव्यतिरेकयोर्यत्नवता** भवितव्यम्। तावन्वेष्टव्यौ कार्यकारण-
भावावधारणाय, तौ तु न लभ्येते इति भावः। सूक्ष्मजात्यभ्युपगमे सर्वत्र तदाशङ्कया 15
दृश्यजातीययोर्व्याप्तिग्रहः स्यादिति चेत्, तत्राप्येतदेवोत्तरं—**तत्त्वे**-इति। **अन्वय-**
**व्यतिरेकयोस्तत्त्वे** याथात्म्ये यत्नवान् भव। सम्भाव्यमानेऽपि जातिभेदे दृश्यसामान्य-
विशेषाक्रान्तयोरन्वयव्यतिरेकाभ्यां व्याप्तिं गृह्णीष्वेत्यर्थः

तत्र प्रवाहो नादिमानित्येतद् विवृण्वन्नस्योत्तरैकावधित्वेऽभिसंहितं प्रसङ्गमाह—
**प्रागभाव**-इति। एवमुत्तरैकावधिर्भावोऽनादिः स्यादिति। चार्वाकस्तु नेदमनिष्ट- 20
प्रसञ्जनमित्याह—**अनुपलभ्यमान**-इति। सिद्धान्ती त्वनिष्टतामापादयति-**न-ताव-**
**न्मात्र इति।** उत्तरैकावधिस्वभावत्वे कारणस्यानादित्वेन तस्मिन्नहनि कार्योत्पत्तिवत्
पूर्वेद्युरपि तमेव भावमवधिं कृत्वा तदुत्तरस्य कार्यस्य सत्त्वप्रसङ्गः, तमन्तरेणापेक्षणीया-
भावात्तस्य च तदानीमपि सत्त्वात्। एवं पूर्वेद्युरपि सत्त्वप्रसङ्गात् कार्यस्य तदेव सदा-
तनत्वमायातं यन्निरवधिपक्ष आपादितम्। प्रागभावे तु प्राक्कोटिकल्पनायां भावोन्मज्जन- 25
प्रसक्तिर्बाधिका, साधिका च न काचिद् युक्तिरिति भावः। नन्वनादित्वेऽपि कारणस्य
यस्मिन्नह्नि कार्यं दृश्यते तस्मिन्नेवाह्नि भवनं कार्यस्य स्वभाव इत्याह—**तदहरेव**-इति।

निराकरोति-**न**-इति। अहर्नामावच्छेदकोपाधिभिन्नः कालः, तस्याप्युपाधेर्यदिपूर्व-
न्यायेनानुपलभ्यमानप्राक्कोटिकारणत्वसम्भवेन पूर्वमपि सत्त्वादह्नोऽपि सत्त्वमेव स्यात्,

ततश्च तदहर्भावस्वभावत्वेऽपि सदातनत्वप्रसङ्गो दुस्तर इति भावः। उपसंहरति—**तस्मात्**—इति। यस्मात् कार्यस्य परिदृश्यमानकादाचित्कत्वव्याघातप्रसङ्गः, **तस्मात्**। **तस्या**नुपलभ्यमानप्राक्कोटेरपि कारणरूपस्य पूर्वावध्यपेक्षित्वम्। एवं तस्य तस्यापीत्यनादित्वं कारणप्रवाहस्य युक्तम्। न **त्वपूर्वस्य** पूर्वमविद्यमानस्य कारणस्योत्पत्त्यनभ्युपगमे कादाचित्कस्य कार्यस्य सम्भव इति। पश्चिमे व्याख्याने तु—**न तावन्मात्र**—इति। उत्तरैकावधिस्वभावत्वे कार्यस्य **तदहर्वत् पूर्वेद्युरपि** तदेकावधिस्वभावत्वाविशेषादुत्तरेद्युर्जायमानस्य कार्यस्य सत्त्वं स्यात्। तच्च नोपलभ्यत इति। तस्मात् **तस्यापी**—ति। अनुपलभ्यमानपूर्वावधेरपि कार्यस्येति। सुगममन्यत्। **न विजात्येकशक्तिमा**नित्येतदवधारयितुं शङ्कते—**व्यक्त्यपेक्षया**—इति। जात्यपेक्षया कारणनियमस्य भङ्गे व्यक्त्यपेक्षया नियमभङ्गः सुकर इति गूढोऽभिसन्धिः। न—इति। कारणस्य जातिनियमाभावे कार्यजातिनियमो हेत्वभावेन व्याहन्येतेति। विजातीयेभ्योऽपि भवतः कार्यस्य जातिनियमः स्वभावादेव भविष्यतीत्याशङ्का तत्र कार्यस्यैव स्वभावो यद् भिन्नजातीयेभ्योऽपि भवतः प्रतिनियतजातीयत्वमिति, उत कारणस्य यदसत्यप्येकजातीयत्वे नियतजातीयकार्यजनकत्वमिति विकल्पं मनसि कृत्वा प्रथमे दूषणमाह—**यदि यतः कुतश्चिदि**ति। घटजातीयस्यापि पटजातीयत्वं घटस्य पटस्य च घटाद्येकजातीयत्वं हेतोस्तत्र कार्यत्वस्याविशेषादिति। द्वितीयकल्पमाशङ्क्य दूषयति—**एवमि**ति। नियतजातीयेन कार्येण यतः कुतश्चिद् भवितव्यमित्यस्य यस्य कस्यचित् कारणस्य स्वभावस्तदापि तत्कारणस्वभावप्रयुक्तजातीयत्वं सर्वेषां तत्कार्याणां भवेत्। तत्र यदि यस्य कस्यचित् कारणस्यानेकजातीयजनकत्वं स्वभावस्तदा सर्वस्यापि तत्कार्यस्य प्रत्येकं सर्वजातीयत्वं भवेत्। अथैकजातीयत्वं तर्हि सर्वस्याप्येकजातीयत्वं भवेदिति। यद्वा, पूर्वं यतः कुतश्चिद्भवतस्तज्जातीयत्वस्वभाव इति भवनोद्देशेन तज्जातयीस्य भावविधिमाशङ्क्य यतः कुतश्चिद् भवतोऽनेकजातीयस्वभावत्वं विधीयते, एकजातीयस्वभावत्वं वा ? पूर्वत्रैकस्यैव सर्वजातीयत्वं भवेत्, यतः कुतश्चिद् भवनाविशेषात्; उत्तरत्र सर्वस्याप्येकजातीयत्वं भवेत्, तत एव हेतोरिति परिहृतम्। पश्चात्तु तज्जातीयस्य यतः कुतश्चिद्भवनं स्वभाव इति तज्जातीयोद्देशेन यतः कुतश्चिद् भवनविधिमाशङ्क्य तज्जातीयस्य सर्वस्यापि यतः कुतश्चिद् भवनस्वभावत्वं वा स्यात्, नियतजातेः कस्यचिदेव वा, पूर्वत्र सर्वस्माद् यतः कुतश्चिद् भवदेकमेव सर्वजातीयं भवेद्, उत्तरत्र सर्वस्मादपि यतः कुतश्चिद् भवदनेकमेकजातीयं भवेदिति परिहार इति। अत्र व्याख्याद्वये ग्रन्थार्थयोरौचित्यविशेषोऽवहितानां सुगम इति। न च नित्यजातिनियमतद्धेत्वनपेक्षत्वं कार्यजातिनियमस्य वाच्यम्।

हेत्वनपेक्षव्यक्तिप्रयुक्तत्वात् तस्येति कारणवैजात्यवादी स्वाभिप्रायमुद्धाटयति—**कथं तर्हीं**—ति। पूर्वपक्षस्थ एव विजातीयेषु कारणेष्वेकशक्तित्वमाशङ्क्य कार्यानुपलब्धिलिङ्ग-भङ्गप्रसङ्गेन निराकरोति—**एकशक्तिमत्त्वात्**—इति। अनुमानद्वयभङ्गेऽपि **हेतुस्तद्-भावेऽपि तज्जातीयेति** लिङ्गद्वयं समाधित्सुः शङ्कते—**यावद्दर्शनम्**—इति। कार्य-दर्शनानुसारिणी शक्तिकल्पना विजातीयेष्वपि यथाकार्यदर्शनं व्यवतिष्ठते। ततश्च कार्यात् 5
क्लृप्तशक्तिकमेवान्यतमदनुमीयते। समस्ततद्व्यतिरेके च कार्यव्यतिरेक इति भावः। तत्र निमित्ते वा शक्तिः कल्प्यते दृष्टे वेति विकल्पं हृदि निधायाह—**निमित्तस्य**—इति। यस्मिन् सत्येव यद् भवति तत् तस्य निमित्तं, इह तु न तथाविधनिमित्तं दृश्यते, ये तु दृश्यन्ते तृणादयो, न ते निमित्तं, तद्व्यतिरेकेऽपि कार्यव्यतिरेकाभावात्; अन्वयमात्रेण शक्तिकल्पनायां रासभादिष्वपि प्रसङ्गः। तेन च ये निमित्ततया दृष्टास्तेषु शक्ति- 10
कल्पनमिति नायं समाधिरिति। नन्वस्ति तृणादिष्वपि दृश्यमानस्थूलजातिभेदेषु सूक्ष्मा काचिदेका जातिः, ततः कार्यजातिनियम इत्याशङ्क्याह—**एतेने**ति। कार्यकारणनिवृत्ति-भ्यां कारणकार्यनिवृत्त्यनुमानभङ्गप्रसङ्गेनेति। यद्यस्ति जातिः किमिति नोपलभ्यते इत्य-त्रोक्तं—**सूक्ष्मजातीयात्**—इति। अतिदिष्टमेव हेतुं स्पष्टयति—**अवह्नेरि**ति। धूमप्रयोजकसूक्ष्मजातिमतोऽप्यवह्नेरिति शङ्कते—**कार्य**—इति। निमित्तासमवायिनीभिन्ना- 15
भिन्ने इति शेषः। तृणादीनां तु निमित्तकारणत्वात् तद्वैजात्येऽपि न कश्चिद् दोष इति भावः। **न**—इति। यदि निमित्तासमवायिभेदेऽपि तज्जातीयमेव कार्यमनुवर्त्तते ततस्तयोर-कारणत्वमेव स्यादिति। नन्वस्तु कार्यान्वयादेव तयोः कारणत्वमिति तत्राह—**न हि**—इति। तत्कारणत्वं नान्वयमात्रं किन्तु सत्येव कारणे कार्यभावः, व्यतिरेकोऽप्यङ्गमि-त्यर्थः। किञ्च, समवाय्यभेदेऽपि अतज्जातीयकार्यदर्शनान्न तद्भेदाभेदौ कार्यभेदाभेद- 20
योर्निदानमित्याह—**न च**—इति। ननु मा भूत् कार्यमात्रभेदस्य समवायिभेदो निबन्धनं, किन्तु द्रव्यस्य सतः कार्यस्य प्रकारोऽयं यत् समवायिमात्रभेदेन भेद इति। अतो न गुणादिभिर्व्यभिचार इत्यत्राह—**न च कार्यद्रव्यस्य**—इति। न च दुग्धमेव दध्यारभते न तदवयवा इति वाच्यम्। कार्यद्रव्यस्यानेकद्रव्यारभ्यत्वनियमाद् दधिकाले दुग्धानु-वृत्त्यभावाच्च। न च दुग्धाम्लद्रव्याभ्यामेवारम्भः, विजातीयानां सहारम्भानुपपत्तेः। तेन 25
दुग्धावयवा अम्लसंयोगाद् विनष्टदुग्धकार्या दध्यारभन्त इति न समवायिभेदनिबन्धनः कार्यद्रव्यभेदोऽपीति।

एतेन—इति। तृणाद्यन्यापोहात्मनैकजातीयानामेव तृणादीनाम् अग्न्यन्यापोहात्मना एकजातीयं कार्यं प्रति कारणत्वमिति जात्यपेक्षयैव नियम इति बौद्धादयः, तान् प्रत्याह

**एतेन**—इति । कार्यादिना कारणादीनामननुमानप्रसङ्गेनापोहजात्यपेक्षयापि कार्यकारणभावो निरस्त इति । तमेव प्रसङ्गं स्मारयति **कार्य**—इति । तृणादित्रयमात्रानुगतान्यनिवृत्तेरभावात् प्रत्येकमन्यनिवृत्तेर्व्यभिचारादन्यमात्रनिवृत्तेश्च तृणादिष्वप्यभावात् कार्यकारणयोरविनाभावो न सिध्येत् , तदसिद्धौ च स्वभावनियमोऽपि न सिध्यतीति । यद्वा, **एतेन**—विजातीयेभ्योऽप्येकजातीयकार्यदर्शनेन । अपोहवादेऽपि कार्यकारणभावनियमो निरस्तः । तृणाद्यनुगतायास्तदितरनिवृत्तेरनुपलम्भात् तस्याः सूक्ष्मायाः शक्तेर्वाभ्युपगमेन नियमाङ्गीकारे कार्यकारणयोः स्वभावतद्वतोश्चाविनाभावस्य दुर्ग्रहत्वेनासिद्धेरिति । तस्मान्नियतजातिशक्तिव्यावृत्तीनामभावात् कार्यजातिनियतिं प्रति नियतजातीयस्वभावेन कारणेन भवितव्यमिति नियमस्य भङ्गात् कार्यस्य यया कयाचिद् व्यक्त्या भवितव्यमित्येव नियमः स्यादित्युपसंहरति—**तस्मात्**—इति । सिद्धान्त्याह—**नेति** । एवशब्दो भिन्नक्रमः, **तृणादेः** फूत्कारेणैवेत्यादि योजनीयः । **प्रकारनियमः** सहकारिनियमः । फूत्कारादिस्तृणादीनां नियमान्नियतसामग्रीव्यङ्ग्याया जातेर्भेदोऽस्ति । नहि सामग्री भिद्यते न भिद्यते च कार्यमिति सम्भवति । तथा च प्रयोगः—तार्णाद्यग्नयोऽभिन्नावान्तरजातिभेदवन्तः विलक्षणसामग्रीजन्यत्वात् तैलवर्त्त्या विलक्षणसामग्रीकप्रदीपादिवदिति । न च साध्यविकलो दृष्टान्त इत्याह—**दृश्यते—च**—इति । प्रदीपादौ कार्यभेददर्शनादवान्तरजातिभेदोऽवश्याभ्युपगन्तव्य इति ।

ननु कार्य्यावान्तरजातिभेदस्य दुरूहत्वात् कथं ततस्तृणादिविशेषानुमानमित्यत्राह—**यस्त्विति** । तमवान्तरजातिभेदं तृणादिजन्यमन्वयव्यतिरेकयोर्यत्नवानेवाकलय्य तृणादिकारणविशेषमनुमिनोति, यस्त्वलसो दुरूहमवान्तरजातिभेदं नावगच्छति स सामान्यमात्रात्सामान्यमात्रं तन्निवृत्तेश्च तन्निवृत्तिमनुमिनुयात् का नो हानिरिति । ननु यदि तृणदीनामनुपलभ्यमानमग्न्यवान्तरजातिभेदं प्रत्युपयोगान्नाग्निमात्रदर्शिनस्तृणाद्यनुमानसिद्धिः, एवं तर्ह्यनुपलक्ष्यमाणधूमाद्यवान्तरजातिभेदं प्रत्येव दहनादीनामुपयोग इत्यपि सम्भवान्न धूमादिमात्राद्दहनाद्यनुमानसिद्धिरित्याह—**एवं तर्हि**-इति । एतेन धूमादिविशेषस्य दहनाद्यपेक्षत्वसम्भावनाप्रतिपादनेन दहनादिव्यतिरेकान्न धूमादिमात्रव्यतिरेकोऽपि सिद्धयतीत्याह—**एतेन**-इति । एवं चानुमानमात्रोच्छेद एव स्यादित्याह—**तथा च**-इति । शिंशपाया वृक्षत्वस्वभाव इत्येतद् वृक्षे शिंशपात्वानुपलब्ध्या लिङ्गेन शिंशपात्वव्यतिरेकोऽनुमानात् सिद्धयति, तेन व्यतिरेकासिद्धौ स्वभावस्यासिद्धेरनुमानमात्रोच्छेद एव इति । परिहरति—**न**-इति । प्रत्यक्षानुपलम्भाभ्यां गृहीतान्वयव्यतिरेकं बीजत्वादिजातीयमङ्कुरादिकार्ये न प्रयोजकं कारणं किन्तु तद्विशेषः कुर्वज्जातीयत्वमिति **वदतो बौद्धस्यैष**

प्रसङ्गो बाधक इति तस्याप्रामाणिकं कारणगतं विशेषमिच्छतोऽप्रामाणिकस्यैव कार्यगतस्यापि विशेषस्य सम्भावनया तस्यैव तत्कारणप्रयोज्यत्वं, नतु तद्विजातीयस्येति शङ्कावशाद-नुमानोच्छेदप्रसङ्गात् । एतच्च क्षणभङ्गे स्फुटीभविष्यति । **अस्माकं** पुनः परिदृश्य-मानजातीययोरेव कार्यकारणभावं नियच्छतां कार्यगतविशेषसम्भावनायामपि तज्जातीय-मात्रात्तज्जातीयानुमाने न कश्चिद्विरोधः । न च तृणादिजन्योऽन्यवान्तरजातिभेदोऽ- 5
प्रामाणिको येन तदङ्गीकारे सर्वत्रानाश्वासः स्यादिति **किं पुनः**—इति । किमाक्षेपे । विशेषे स्वे स्वे कार्यविशेषे नियतत्वेनाभ्युपगमादिति । अनुवृत्तं तु न किञ्चित् दृश्यते इति भावः । **न**—इति । समवाय्यसमवायिनिमित्तानामनुवृत्तिरस्ति तावत् सामान्यप्रयोजकम् । अनुवृत्तैव च सामग्री तत्तत्सहकारिभेदवशात्पिण्डितादिविशेषोत्पत्तौ निबन्धनमुद्भूतस्पर्श-तेजोऽवयवतत्संयोगपवनास्ताार्णतार्णसामान्यसामग्रीति न कुत्रचिद्विरोध इति ॥६॥ 10

विवेकः

ननु घटादेः कादाचित्कत्वस्वभावनियामिका सामाग्र्येव वाच्या, सापि कादा-चित्की न वा ? आद्ये तस्या अपि तथात्वे सामग्र्येव नियामिका वाच्येत्यन-वस्थेति कदाचित्कसामग्री विनैव सामग्रीं कादाचित्की वाच्या, तथा च क्षित्यादिरपि तथैव स्यादिति तद्धेतुतया न भगवत्सिद्धिरित्यभिप्रायेणाह—**स्यादेतदिति** । नन्व-वधित्वस्य उभयावधिमत्त्वव्याप्तत्वादुत्तरावधिमत्याः सामग्र्याः पूर्वावधिरावश्यक इति 15
प्रामाणिकत्वादियमनवस्था न दोषायेति दोषमुद्दिधीर्षुराह—**उत्तरस्येत्यादि** । उत्तरस्य ध्वंसस्य पूर्वः प्रतियोगी, पूर्वस्य प्रागभावस्योत्तरः स्वध्वंस इत्युभयावधिमत्त्वव्यभिचारो दर्शितः, न तु विरुद्धत्वमित्याह—**मध्यमस्येति** । उपलब्धजन्मविनाशस्येयर्थः । अन्यदीयजन्मविनाशयोरारोपस्तत्रेति शङ्कां निरस्यति—**दर्शनस्येति** । तद्वत्त्वेनाबाधित-प्रत्यक्षविषयत्वादित्यर्थः । ध्वंसप्रागभावयोर्व्यभिचारमुद्धरति—**न हीति** । प्रतियोग्युन्म- 20
ज्जनापत्तेरिति भावः । 'तद्वत्' सामग्रीवत्, 'भावेषु' अदृष्टप्राक्कोटिकक्षितिसमुद्रपरलोकादिषु विनैव कारणं कादाचित्कत्वं 'स्यात्' । सामग्र्याः पूर्वावधिशून्यत्वे बाधकमाह—**अनादित्वादिति** । सामग्र्यधिकरणक्षणध्वंसोत्पत्तिक्षणस्य तत्कार्यवत्त्वनियमेन तत्कार्यस्यानादित्वप्रसङ्गादित्यर्थः । तथा चायं घटो यदि पूर्वावधिमदवधिको न स्यादनादिः स्यादिति प्रतिकूलतर्कशरीरम् । 25

नन्वनवस्थाभिया तर्कोऽयं शिथिलमूलः स्यादित्यत्राह—

**प्रवाहोऽनादिमानिति** । प्रवाहः 'सामग्रीपरम्परा' 'नआदिमान्', अपि त्वनादिः अनादित्वादेव च नानवस्था, न प्रमाणप्रवृत्तिविरोधिनीति भावः । यद्वा'ऽनादिमान्'

आदिमद्भिन्नः, यथाश्रुते मतुपोऽनुपपत्तिर्ध्येया। अनादित्वञ्च स्वाश्रयध्वंसव्याप्यप्रागभाव-प्रतियोगित्वं, स्वं येन रूपेणानादित्वम्। ननु सावधित्वे च 'हेतुवादाभ्युपगमादि'त्युक्तम्। न हि वह्नेस्तृणाद्यवधिकत्वमस्ति, न च तृणादिहेतुकत्वं व्यभिचारेण नियमगर्भकारणत्वात् सम्भवति, तस्मात् यद्व्यक्त्यवधिर्यत् स एव तद्धेतुरित्येवं वाच्यम्। इत्थञ्च कार्यसामान्यस्य

5 कर्तृजन्यतया न भगवत्सिद्धिः, न वा यागादेः स्वर्गजनकतानिर्वाहकापूर्वे मानमस्ति येन परलोकसाधनादृष्टपक्षकानुमितिः। तत्र तृणादीनां व्यभिचारिणामप्येकशक्तिमत्त्वेन कारणत्वमिति कर्तृसाधारणैकशक्तिमत्त्वेन कार्यत्वावच्छिन्नं प्रति कारणत्वेन भगवत्सिद्धि-रितीश्वरद्वेषिणो **मीमांसकस्य** समाधानं निरस्यति—**नेति**। 'विजातिषु' विजातीयेषु तृणादिषु कार्यकारणप्रवाहो 'नैकशक्तिमान्'। यद्वा 'विजाति'स्तृणादि'र्नैकशक्तिमानि'त्यर्थः।

10 ईदृशं कारणत्वमेकशक्त्यवच्छिन्नं नेत्यर्थः। तृणादिकं वह्न्यनुकूलातीन्द्रियधर्मवत् वक्ष्यमाणयुक्तेरिति **मीमांसकसमाधानं** निरस्य स्वमतमाह—**तत्त्व** इति। अन्वयव्यतिरेक-योर्वह्नितृणाभावयो'स्तत्त्वे' तृणवह्न्यभावनिरूपितनियमग्रहे तन्निमित्तवह्निनिष्ठविलक्षणधर्मस्य ग्रहे 'यत्नवता भाव्यं' तद्व्यञ्जकग्रहाय यतितव्यम्। जाते च तदधीनवह्निनिष्ठविलक्षण-जातीनां ग्रहे तयोर्व्याप्तिग्रहः सुकर इति भावः।

15 'अनादित्वादि'ति हेतुं प्रसङ्गपरतया विवृणोति—**प्रागभावो हीति**। अनादित्वे सति विनाश्यत्वमापाद्यं, तत्प्रसिद्ध्यर्थमुक्तं 'प्रागभावो ह्युत्तरावधिरनादि'रिति। अत्रेष्टा-पत्तिमाह—**अनुपलभ्यमानेति**। 'प्राक्कोटिक'त्वं प्रागवधिकत्वम्।

'तावन्मात्रावधिकस्वभावत्वे' सामग्रीमात्रावधिस्वभावत्वेऽनुपलभ्यमानप्राक्कोटिकमात्रा-वधिकस्वभावत्व इति यावत्। तदा 'तदहर्वत्' तत्काल इव 'पूर्वेद्यु'स्तत्-

20 पूर्वमपि 'सत्त्वप्रसङ्गात्'। 'तदहरिति' समासान्तविधेरनित्यत्वात् नात्प्रत्ययः। अत्र हेतुमाह—**अपेक्षणीयेति**। सामग्र्यव्यवहितोत्तरत्वस्य कार्यवत्त्वव्याप्यत्वादित्यर्थः। क्षणस्य सूक्ष्मत्वात् पूर्वक्षणे तदापादने कदाचिदिष्टापत्तेराह—**एवमिति**। इत्थमनादेस्तस्य कदाचिदनुपलभ्यमानध्वंसस्य 'तदेव' अनादित्वमेव, 'सदातनत्वं' सदातनत्वे पर्यवसन्नम्, एतच्च न केनाप्यनुमन्यत इति अपेक्षणीया 'सम्भवाभावादि'त्यत्र शङ्कते—**तदहरिति**।

25 तं[१] क्षणं प्राप्यैव तेन भवितव्यमित्यर्थः। स एव क्षणः कथमस्यापेक्षणीयो नान्य इत्यत्र नियामकाकांक्षायामाह—**इत्यस्य स्वभाव** इति। 'तस्याप्यहः' तस्यापि क्षणस्य

---

१. ख लक्षणं।

'पूर्वन्यायेनानुपलभ्यमानप्राक्कोटिक'मात्रावधिकत्वेन 'पूर्वं' स्वोत्पत्तेः प्राक्, तस्मात् सामग्री-प्रवाहस्यानादित्वमनायत्यैवाभ्युपेयमित्युपसंहरति—तस्मादिति । 'तस्यापि' क्षणस्य तत्पूर्वापेक्षत्वम् , 'एवं' तत्पूर्वक्षणस्यापीति 'अनादित्वमेव' कारणप्रवाहस्येति । अपूर्वेति । कार्याव्यवहितप्राक्क्षणातिरिक्तप्राक्क्षणवृत्तीत्यर्थः । 'अपूर्वस्य' 'सम्भव' उत्पत्तिः । उक्ताभिसन्धिना शङ्कते—तथापीति । नियमोऽस्त्वि'त्यस्य कारणताघटक इति शेषः । 5
'न जात्यपेक्षया' नानेकवृत्तिधर्मनिरूपितो नियमस्तथेत्यर्थः । कार्यत्वं नानेकवृत्ति-धर्मावच्छिन्नमिति तु विवक्षितम् । नियतेति । नियता कार्यत्वेन कार्यमात्रवृत्तिः कार्यभिन्ना वृत्तिरिति यावत् । एतादृशी या जातिस्तद्भत्त्व'व्याघातादि'त्यर्थः । तथा च वह्निजात्य-वच्छिन्नकार्यताको न स्यात्, अकार्यावृत्तिजातिमान्न स्यादिति तर्कशरीरम् । परनये त्वसत्-ख्यात्यापादकप्रतियोगिप्रसिद्धिः । एवमग्रेऽपि । एतन्मूलीभूतव्याप्तावप्रयोजकत्वाशङ्काया- 10
माह— यदि हीति । 'यदि' घटत्वं कार्यमात्रवृत्तित्वे सति पटसामग्र्यघटकवृत्ति-धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं न स्यात् तदा पटवृत्तिः स्यात् पटत्ववत् । एवं पटत्वं पक्षीकृत्यापादकेष्टसामग्र्युपादाने घटवृत्तित्वापादनमिति 'सर्वस्य सर्वजातीयत्वम्' । तासाञ्च जातीनामधिकरणभेदमन्तरेण भेदानुपपत्तेराह—
एकजातीयत्वं वेति । घटत्वं यदि कार्यमात्रवृत्तिजातित्वे सति पटसामग्र्यघटक- 15
निष्ठकारणतानिनिरूपितकार्यतावच्छेदकं न स्यात्, पटमात्रवृत्ति स्यात् । पटत्वाव्याप्यत्वस्यापादकविशेषणत्वे पटत्वं स्यादिति । एवं पटत्वं पक्षीकृत्य घटत्वात्मकत्व-मापाद्यम् । एवमिति । घटसामग्री यदि घटत्वावच्छिन्नकार्यतानिरूपितकारण-ताघटिता न स्यात्, घटभिन्नजनिका स्यात् । तादृशसामग्रीत्वासम्भववद् घटत्वा-वच्छिन्नकारणता च तन्मतेऽसत्ख्यात्युपनीता, अस्मन्नये च सुलभप्रसिद्धिरेव । एवं 20
पटसामग्रीमपि पक्षीकृत्य घटत्वेत्यत्रापादके पटत्वोपादाने पटभिन्नजनकत्वापादनम् । तथा घटसामग्री यदि पटावृत्त्यनेकवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताघटिता न स्यात्, घटभिन्नजनिका स्यात् । इत्थं पटसामग्रीमपि पक्षीकृत्यापादके घटेत्यत्र पटेत्युपादाने घट-जनकत्वापादनमनेकवृत्तिधर्मावच्छिन्नकारणता च तन्नये सांवृत्तिकप्रसिद्धिः । प्रकाशकृतस्तु
अयं घटो यदि पटजनकयावज्जन्यः स्यात्, पटजातीयः स्यात्, एवं यदि धूमजनकयावज्जन्यः 25
स्यात्, तदा धूमजातीयः स्यात् । एवमन्योन्यजातीयत्वमप्यापाद्यमिति सर्वजातीयत्वा-पादनार्थः । घटभिन्नं कार्यं यदि यावद्घटजनकजन्यं स्यात् , घटजातीयं स्यादि'त्येक-जातीयत्वा'पादनार्थः । कारणपक्षकं तर्कद्वयमाह—एवमिति । घटसामग्री यदि पटप्रयोजक-

यावद्रूपवती स्यात्, पटजातीयजननी स्यात्, एवं धूमादिजातीयजनकत्वमप्यापाद्यम्। घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्धर्मवती स्यात, घटजातीयजननी स्यादिति क्रमेणापादनमित्याहुः। तच्चिन्त्यम्। आपादकस्य परानभ्युपगतत्वेन विपर्यये सिद्धसाधनात्। एतावता प्रबन्धेन कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वं व्यवस्थाप्य 'व्यक्त्योरेवे'ति
5 दूषितम्। तत्र शङ्कते—**कथमि**ति। 'तर्हि' कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमे आशुशुक्षणिर्वह्निरेकजातीयः वह्नित्वलक्षणकार्यमात्रवृत्तिजातिमान्। तृणत्वाद्यवच्छिन्न-कारणतानिरूपितकार्यतावच्छेदकत्वं तस्य निरसितुमाह—**तृणादिभ्यो भवन्नि**ति। परस्परनिरपेक्षेभ्य इति च पूरणीयं, तेन व्यभिचारितया तदनवच्छेदकत्वलाभः। ननु यद्येकजातीयकारणनियमात् कार्यतानियमस्तर्हि भिन्नजातीयेभ्यस्तृणादिभ्यः कथमेकजातीय-
10 कार्यमित्याह—**कथमितीत्यपरे**। **मीमांसक**मुत्तरयति—**एके**ति। तृणारणिमणीनां कारणत्वमिति शेषः। तथा च तादृशावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकमेव वह्नित्वमिति नोक्तदोष इति भावः। 'विजातीयेषू'भयवादिसिद्धानतिप्रसक्तधर्मशून्येषु परस्परमैन्द्रियकेषु 'एके'त्यनुगतधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकमतीन्द्रियो धर्मः 'समवेयात्', येन सम्बन्धेन कारणतावच्छेदकत्वं तेन सम्बन्धेन वर्तेत, अतएव मणित्वादेः
15 कालिकसम्बन्धेन तृणादिवृत्तित्वेऽपि न क्षतिः। 'कार्य'विशेषाद्धूमादिलक्षणात् 'कारणविशेषो' वह्न्यादिः 'क्वापि' 'नानुमीयेत' वह्निस्तृणमिवेति निदर्शनम्। 'कारणव्यावृत्त्या' वह्न्यादि-व्यावृत्त्या, 'तज्जातीयस्यैव' यादृशेन कारणमनुमीयते, तादृशस्य 'कार्यस्य' धूमादे'र्व्यावृत्ति'श्च 'नावसीयेत'। उभयत्र हेतुमाह—**तदभावेऽपी**ति। वह्न्यादिजातीयशक्तिमतो धूमाद्यनुकूलशक्तिमतो'ऽन्यस्माद्व'ह्निभिन्नात् 'तदुत्पत्तिसम्भवात्' धूमाद्युत्पत्तिसम्भवात्।
20 ननु यदवच्छेदेन यत्रान्वयव्यतिरेकग्रहस्तदवच्छेदेनैव कारणता गृह्यते, न च वह्न्यवह्नि-साधारणातीन्द्रियरूपेण धूमत्वावच्छिन्नं प्रति तद्ग्रहः, किन्तु वह्नित्वेनैवेति न कार्यानुप-लब्धिलिङ्गकानुमानबाध इत्याह—**यावद्दर्शन**मिति। 'यावद्दर्शनं' येन रूपेणान्वय-व्यतिरेकग्रहव्यवस्था तेन रूपेण कारणत्वव्यवस्थितिः। 'निमित्तस्य' तृणादिषु वह्निकारण-तावच्छेदकत्वेन भवदभिमतस्य 'अदर्शनात्' अन्वयव्यतिरेकग्रहाविषयत्वात्, 'दृष्टस्य'
25 वह्निविषयेऽन्वयव्यतिरेकग्रहविषयस्य 'अनिमित्तत्वात्' वह्नित्वावच्छिन्नकारणतानिरूपितकार्य-तानवच्छेदकत्वात्। **बौद्ध**मतमपवदति—**एतेने**ति। सूक्ष्मादतीन्द्रियात् एक जातीयात् वह्निफलोपधायकमात्रवृत्तिवह्निकुर्वद्रूपत्वरूपजात्यवच्छिन्नात्। सूक्ष्मत्वं विशेष्ये बाधात् तादृशजातौ विशेषणेऽन्वयि तेन सूक्ष्मा या तादृशी जातिस्तदवच्छिन्नादिति फलति। 'आशुशुक्षणिरेकजातीय' इति प्राक्तनेनानुषङ्गान्निराकांक्षप्रतिपत्तिः। 'तत्सौक्ष्म्यात्' सूक्ष्मता-

दृशजातिमतः, तथा चोक्तानुमानद्वयभङ्ग इति भावः। ननु समवायिकारणताग्रह एव व्यभिचारग्रहे विरोधी, नतु निमित्तासमवायिकारणत्वग्रहे;तथा च'तृणत्वादिनैव वह्निसामान्यं प्रति हेतुत्वं गृह्यतामित्यभिप्रायेण तत्र विनिगमकमाह—कार्यजातीति। तथा च यादृशकारणसाजात्यं कार्यसाजात्यप्रयोजकं यादृशकारणवैजात्यञ्च कार्यवैजात्यप्रयोजकं तत्रैव व्यभिचारग्रहस्तत्कारणताग्रहे विरोधी नान्यकारणताग्रह इत्याखण्डलार्थः। 'समवायिभेदाभेदौ' 5 तत्साजात्यवैजात्ये 'न निमित्तासमवायिनी' न निमित्तासमवायिसाजात्यवैजात्ययोर्निमित्तासमवायिनोर्व्यभिचारित्वेन नियमगर्भकारणत्वस्य ग्राह्यस्याभावप्रसङ्गात्। कारणत्वस्य नियमगर्भत्वे युक्तिमाह—**न** हीति। 'सति' कारणत्वाभिमते 'भावः' सत्त्वं कार्यत्वाभिमतस्य व्यभिचारिजातीयरासभादिसाधारणत्वादिति भावः। उक्तं विनिगमकं दूषयति—**न** चेति। 'जातिनियमे' कार्यसाजात्ये 'समवायिकारणमात्रम्' एकजातीयसमवायिकारणकत्वं 10 तत्कार्यतावच्छेदकरूपेणैकजातीयत्वव्याप्यमिति यावत्। 'सामग्री' तत्साजात्यमन्यथा सजातीयसमवायिकारणकत्वस्य, एकधर्मावच्छिन्नसमवायिकारणकत्वस्य वा तत्कार्यतावच्छेदकरूपेण कार्यसाजात्यव्याप्यत्वे द्रव्याणां जन्यानां गुणानां परत्वापरत्ववेगादीनां कर्मणाञ्च एकोपादानकत्वे मूर्तत्वावच्छिन्नसमवायिकारणकत्वेन विजातीयञ्च स्यात्, तत्कार्यतावच्छेदकरूपेण साजात्यं स्यात्। **न** चेति। तथा च सजातीयसमवायिकारण- 15 कद्रव्यत्वं तद्व्याप्यमिति भावः। 'अवयवैः' परमाणुभि'र्दध्यारम्भदर्शनात्' दधिद्व्यणुकारम्भदर्शनादिति प्रमाणसूचनाय। न चात्र प्रमाणाभावः, सति दुग्धे दध्यारम्भादर्शनेन तन्नाशस्तत्र हेतुर्वाच्यस्तस्य च व्यधिकरणस्यातिप्रसक्तत्वाद् दधिद्व्यणुकं प्रति सामानाधिकरण्यप्रत्यासत्त्या दुग्धनाशो हेतुर्वाच्यः। न च चिरोत्पन्नदुग्धध्वंसादन्तरारब्धपाषाणादितोऽपि दध्यारम्भापत्तिरिति वाच्यम्, अम्लसंयोगजन्याव्यवहितदुग्धध्वंसस्य दधिजन- 20 कत्वोपगमात्। व्यवधानञ्च दधिविजातीयद्रव्यध्वंसेन वाच्यं, तेन दधिद्व्यणुकनाशानन्तरं तद्द्व्यणुकोत्पादेऽपि न क्षतिः। अम्लसंयोगः पाकविशेषसहकारेण रसविशेष एव हेतुः, न दुग्धध्वंस इति तु ज्यायः, दध्यारम्भकतावच्छेदकरसविशेषवत्त्वं सविशेषस्यैव वा जन्यतावच्छेदकं तत, न च रसवृत्तितादृशजातेः कारणत्वमनुगतं दुर्वचमिति वाच्यं, पृथिवीत्वेनैव तदवच्छिन्नं प्रति हेतुत्वोपगमात्। तद्व्याप्यञ्च जातिद्वयम्, एकं 25 पाकविशेषजन्यतावच्छेदकम्, अपरञ्च दधिजन्यतावच्छेदकं, विशेषसामग्रीमादायैव सामान्यसामग्र्याः कार्यजनकत्वे च नातिप्रसङ्गः। अतएव दुग्धप्राचुर्ये दधिप्राचुर्यमित्यप्याहुः। अतएव दधिद्व्यणुकं दुग्धोपादानोपादेयं दुग्धध्वंसजन्यद्रव्यत्वात्, यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तत्तदुपादानोपादेयकं महादुग्धध्वंसजन्यखण्डदुग्धवदित्यप्यनुमा-

नम्। अत्र सामानाधिकरण्यप्रत्यासत्त्या ध्वंसमात्रवृत्तिधर्मावच्छिन्नत्वेन वा कारणत्वस्य लाभाय प्रथमद्रव्यपदं, तेन कालोपाधितया पटादिध्वंसजन्यपटादौ न व्यभिचारः। महादुग्धोत्पत्तिकाले खण्डदुग्धोत्पत्तिवारणाय तद्व्यक्तौ तद्ध्वंसत्वेनैव हेतुत्वोपगमात् न दृष्टान्तासिद्धिः। **केचित्तु** भावाभावसाधारणध्वंसत्वस्य व्याप्तिघटकतया कपालप्रागभाव-
5 ध्वंसात्मककपालजन्ये घटे प्रागभावोपादानुपादेये व्यभिचारवारणाय तत्। न च प्रागभावोपादानाप्रसिद्ध्या न तथेति वाच्यं, तत्साधारणसम्बन्धस्यैवोपादानपदार्थत्वात्। हेतुमति साध्याप्रसिद्धेरपि दोषत्वाच्च। कपालध्वंसजन्ये घटध्वंसे व्यभिचारवारणाय चरमद्रव्यपदम्। ब्राह्मणादिशरीरध्वंसस्य नारकीयशरीरं प्रति हेतुत्वोपगमेऽपि न सामाना-धिकरण्यप्रत्यासत्त्या तथात्वं दृष्टद्वारा वा तज्जन्यत्वं वाच्यं, न चाप्रयोजकत्वमवयवान्तराणां
10 तत्र कल्पनायां गौरवेण तेषामेवावयवानां तथात्वं कल्प्यते लाघवादिति भावात्। **एकदेशिनस्तु** परमाणुसाधारणो जातिविशेष एव दधिजनकतावच्छेदको लाघवात्, अन्त्यावयव्यपि स्वरूपयोग्य एव, क्लृप्ते च तेन रूपेण कारणत्वेऽवयवान्तरकल्पनागौरवं न दोषाय। एतेन दुग्धादयो व्याख्याताः। दुग्धध्वंसस्य च व्यधिकरणस्यापि कयाचिद्वि-लक्षणप्रत्यासत्त्याऽन्वयव्यतिरेकाभ्यां हेतुत्वोपगमान्नातिप्रसङ्ग इत्याहुः।

15 **एतेने**ति। तृणाद्यन्यान्यत्वेनैव वह्निसामान्यं प्रति कारणत्वमित्यपास्तम्। कार्येण कारणानुमानं न स्यात्, वह्निपिशाचान्यान्यत्वेनैव तत्रापि धूमं प्रति हेतुत्वमिति व्यभिचार-संशयात्। अत्रेष्टापत्तौ तत्सिद्धान्तविरोधमाह—**कार्यकारणे**ति। आदिपदात् स्वभावनियमपरिग्रहः। तत्रापि कार्यकारणभावस्यैव मूलत्वात् व्यक्त्योरेव नियमोऽस्त्विति वादी उपसंहरति—**तस्मा**दिति। नियतजातीयतास्वभावभङ्गे कार्यमात्रवृत्तिजातित्वस्य
20 कार्यतावच्छेदकत्वव्याप्तिभङ्गे वह्नौ वह्न्यर्थिप्रवृत्तिदर्शनाद् वह्निसामान्ये विलक्षणस्पर्शवत्त्वेन तादृशस्पर्शत्वेनैव वा हेतुत्वं वाच्यम्, अन्यथा इष्टस्वरूपयोग्यतानिश्चयं विना प्रवृत्त्याद्यनुपपत्ते-रिति सामान्यतस्तत्त्वे **मूलम्**। तत्र यदि इष्टस्वरूपयोग्यतानिश्चयाधीना प्रवृत्तिस्तदा तृणादौ प्रवृत्तिर्न स्यात्, वह्निसामान्यं प्रति तेषां व्यभिचारात्। व्यक्तिविशेषं प्रति तस्य च प्रवृत्त्यप्रयोजकत्वमित्याभिप्रायिकं बाधकं निरस्यन्नाह—**ने**त्यादि। अत्र कार्यनिष्ठजातित्रय-
25 कल्पने तत्साक्षात्कारं प्रति कारणत्रयकल्पने च गौरवात्, उभयसिद्धक्लृप्तकारणभावेषु तृणादिषु फुत्कारादिषु च शक्तिद्वयं कारणतावच्छेदकमेव कल्प्यते। यदा च व्यभिचार-सन्देहस्तदा तेन तदननुमानेऽपि न क्षतिरिति पुनरुपस्थितं **मीमांसकं** निरस्य जातित्रयं व्यवस्थापयति—**फुत्कारेणे**त्यादिना। यदि तादृशैकशक्तिमत्त्वेन कारणत्वं, तदा फुत्कार-

सहकारात् तृणादिवाऽरण्यादेरपि निर्मन्थनादिसहकारात् तृणादपि वह्निः स्यादिति तृणजन्यतावच्छेदकमेव फुत्कारजन्यतावच्छेदकमेवमन्यत्रापि बोध्यमिति गुर्वप्यन्यथानुपपत्त्या जातित्रयमेव तत्तत्कार्यतावच्छेदकं कल्प्यते इत्यर्थः । 'प्रकारनियमवत्' सहकारिनियमवत् । अनुपलब्धिबाधमुद्धरति—**तेनैवेति** । कारणविशेषजन्यत्वेनैवेत्यर्थः । 'जातिभेदस्य' वह्न्यवान्तरजातीनां 'भावात्' सत्त्वात् । ननु वह्नित्वं न जातिव्यापकं वह्नीतरावृत्तित्वात् 5 तद्रूपवत् इत्यनुमानबाधितं तत् स्यादित्यत्राह—**दृश्यते चेति** । तथा च कार्यविशेष-जनकतावच्छेदकत्वेन तद्व्याप्यजातेरवश्योपगमात् नोक्तानुमानमिति भावः । 'पावकत्वाविशेषेऽपी'त्यनेन तत्तत्कार्यविशेषे पावकसामान्यस्यान्वयव्यभिचारो दर्शितः ।

'यस्तु तं' वह्निगतं जातिभेदं 'नाकलयेत्' न गृह्णाति, 'स कार्यसामान्येन' वह्निमात्रेण 'कारणमात्रं' वह्निसामान्यकारणमात्रं विलक्षणस्पर्शादिमन्तमेव वा, न तु विशिष्य तृणादि- 10 कम् । दीधितिकृतस्तु तृणफुत्कारयोररणिनिर्मन्थनयोर्मणितरणिकिरणयोर्ये सम्बन्धविशेषा-स्तेषामेवैकशक्तिमत्त्वेन कारणत्वं कल्प्यत इति नातिप्रसङ्ग इत्याहुः । 'एवं' वह्नाविव । **तर्हीति** । 'न दहनादिसिद्धिरि'त्यत्रान्वयी 'अनुपलक्षणीयः' कार्यकारणविशेषव्यङ्ग्यः 'विशेषः' जातिविशेषः । यद्धर्मस्य यदवच्छिन्नस्य 'व्यतिरेकः' वह्निसामान्यव्यतिरेकः 'व्याख्यातः' अलिङ्गतया निरूपितः । 'कार्यं' धूमादि, 'अनुपलब्धिः' प्रतियोग्यनुपलम्भ- 15 गम्यः कारणाभावः, तयो'र्लिङ्ग'त्व'भङ्गे' उक्तप्रणाल्या व्यभिचारसंशयेन व्याप्त्यग्राहकत्वे 'स्वभावस्य' तादात्म्येन शिंशपादेरसिद्धेरप्रयोजकत्वेन वृक्षादिनिरूपितव्याप्त्यसिद्धेः, तत्रापि कार्यकारणभावस्यैव मूलत्वात् । 'प्रत्यक्षानुपलम्भगोचरो' यदवच्छेदेनान्वयव्यतिरेकज्ञानं 'न कार्ये प्रयोजकः' न कारणतावच्छेदकमपि त्वतीन्द्रियं तत्कार्यकुर्वद्रूपत्वम् ।

'अन्वयव्यतिरेकवत्ता' सहचारदर्शनव्यभिचारज्ञानव्यतिरेकौ 'तयो'स्तज्जातीययोः 20 'तथैव' तत्सामान्यावच्छेदेनैव वह्न्यन्वयव्यतिरेकग्रहात् तेन रूपेण वह्निजन्यत्वं न त्वप्रामाणिकेनेति भावः । अत्र दृष्टान्तार्थमन्यदप्याह—**तेज** इति । जन्यते[ज]स्त्वावच्छिन्न इत्यर्थः । **पवन** इति । आगमश्चात्र प्रमाणम् । **अवयवेति** । कार्यैकार्थप्रत्यासत्त्या कारणत्वसू[च]नाय । अतएव पूर्वदीपनाशे दीपान्तरानुत्पत्तिः । 'तेजोऽवयवाः' स्वावयवाः, तेज इति विजातीयारम्भकत्वनिरासाय । 'इयमेव'तेजःसामान्यसामग्र्येव 'द्रव्य- 25 सहिता' पार्थिवसुवर्णसहकारेण पिण्डस्य तैजससुवर्णस्य, 'उद्भूतस्पर्शं दाहकस्पर्शं, 'दिव्यं' विद्युदादि, उभयं' जलं पार्थिवञ्च । एतावता प्रबन्धेन कार्यमात्रं सहेतुकं व्युत्पाद्य हेतुत्वे परलोकीयत्वाभावनिबन्धनाश्रयासिद्धिरुद्धृता ॥६॥

## परिमलः

ननु भवन्तोऽपि सामग्रीजन्यं कार्यमवतिष्ठन्ते। सामग्री न नित्या कार्यस्यापि सदातनत्वापत्तेः, किन्तु अत्र प्रश्नः ? किं निरपेक्षा सा, उत सापेक्षा। आद्ये तन्नित्यत्वापत्त्या कार्यसदातनत्वापत्तेः, अन्त्येऽनवस्थापत्तिः सामग्र्यामपि सामग्र्यन्तरापेक्षणात्। तथा च निरपेक्षैव कार्यरूपा सामग्री हेतुरित्येव वाच्यमेवं च कादाचित्कत्वं प्रागभावे निरपेक्षे यथा
5 वर्तते तथा सामग्र्यामपीति साधारणानैकान्तिको हेत्वाभास इति निरपेक्षत्वस्य कादाचित्कत्वेनाभानम्। सामग्रीवद् घटादिषु निरपेक्षेषु कादाचित्कत्वसम्भवात् इत्याशयवानाह—स्यादेतदिति। उत्तरस्य ध्वंसस्य पूर्वो घटादिः प्रतियोगी अवधिः न ध्वंसः, पूर्वस्य प्रागभावस्य उत्तरः घटादिः प्रतियोगी अवधिः न तु प्रागभावः। मध्यमस्य घटादेस्तु उभयं ध्वंसः प्रागभावश्चेत्युभयमवाधिरीदृशदर्शनस्य सर्वलोकानुभवसिद्धत्वादित्यर्थः। दर्शनेन चेत्कारणत्वं निश्चीयते
10 तदा ईश्वरे जगत्कर्तृत्वस्य धर्मादेश्चादर्शनात्तदधिष्ठातृत्वेनेश्वरसिद्धिरित्याशयश्चार्वाकस्य अङ्गीकारे दोषमाह—त्वयापीति। अन्यथा प्रागभावध्वंसयोरपि अवधिद्वयकल्पना प्रसज्येत। यदि प्रागभावस्य प्राक्कोटिः ध्वंसस्योत्तरा कोटिर्न दृश्यते किन्त्वेकैका कोटिरेव दृश्यते इति सैव स्वीक्रियते, तर्हि यस्य भावस्यउत्पत्तिर्दृश्यते न नाशस्तत्र प्राक्कोटिरेव, यस्य तु विनाश एव दृश्यते नोत्पत्तिस्तस्य उत्तरा कोटिरेव, यस्य तूभयं दृश्यते तत्र प्रागुत्तरकोटिद्वयी स्वीकार्या
15 दर्शनस्य दुरपह्नवत्त्वात्। यत्र तु कोटिद्वयं न दृश्यते तत्रोभयं न कल्पनीयमिति क्षित्यादिकर्तृत्वस्येश्वरे धर्मादेश्चाप्रत्यक्षत्वान्नेश्वरादिसिद्धिरिति तदाशयः। सिद्धान्तिना त्वया तार्किकेण घटादादिव प्रागभावे ध्वंसे चोभयावधित्वं स्वीक्रियते तद्द्वयाभावेषु अनुपलभ्यमानैककोटिषु स्वीकार्यमित्यर्थः।

प्रवाह इति। एष कार्यकारणप्रवाहो न आदिमान्, अनुपलभ्यमानप्राक्कोटेः
20 सामग्र्या अपि प्राक्कोटिः कल्पते, अन्यथा तदनादिद्वारा कार्यस्यापि अनादित्वापत्तेः, बीजाङ्कुरवदनवस्थाया दूषणत्वाभावात्। न च तर्हि प्रागभावध्वंसयोरपि द्विकोटिकत्वं स्वीक्रियतामिति वाच्यम्, तत्र प्रतियोग्युन्मज्जनापत्तेः। अनादित्वं च सजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वं बीजाङ्कुरादेः सादित्वेऽपि तत्तद्बीजाङ्कुरादिप्रागभावस्य तत्सजातीयध्वंसव्याप्यत्वान्नानुपपत्तिः।

25 ननु अस्तु अनादिः कारणप्रवाहस्तथापि यत्कार्यं प्रति या व्यक्तिरव्यवहितनियतपूर्ववृत्तिः सैव तत्कार्यं प्रति कारणं न तु तज्जातीयकार्यम्प्रति तज्जातीयं कारणमिति जातीयघटितकार्यकारणभावो मानाभावात्तथाचाव्यवहितव्यक्तेरेव कारणत्वलाभेन व्यवहितस्य यागादेरकारणत्वान्न क्षित्यादिकर्तृत्वेन, न वाऽदृष्टाधिष्ठातृत्वेनेश्वरसिद्धिः। तृणारणिमणिना एक जातीयवन्हिकार्योत्पाददर्शनेन तज्जातीयघटितकार्यकारणभावोऽपि न प्रामाणिकः न चैवं कार्ये एकजातीयत्वस्या-
30 कस्मिकत्वापत्तिर्दाहानुकूलैकशक्तिमत्वेन तेषां कारणत्वाङ्गीकारादत आह—न विजातीति। विविधा विरुद्धा वा जातिर्यस्य तद्विजाति। एका शक्तिर्यस्य तदेकशक्ति। विजाति चैकशक्ति च विजात्येकशक्ति तदस्ति अस्य तद्वान् प्रवाहो न वक्ष्यमाणयुक्तेरित्यर्थः। एकजातीयस्य कार्यस्यानेकजातीयं कारणं नेति चार्वाकस्य निरासः। एककार्यानुकूलशक्तिमत्त्वेन तृणादीनां कारणत्वं वदतां मीमांसकानां प्रसङ्गान्निरास इति विवेकः। न चैकजातीयात्कारणादेक-

जातीयं कार्यमुत्पद्यते इति नियमस्य तृणादिभ्यो जायमानवन्हौ व्यभिचार इत्यत आह—तत्त्व इति। तृणारणिमणिभ्यः समुत्पन्नेषु वन्हिषु अवान्तरजातिविशेषः वन्हित्वव्याप्यतार्णत्वादिः, स चातिसूक्ष्मः, तादृशजातीयवन्हिं प्रत्येव तृणस्येव मण्यादिजन्यावान्तरजातीयवन्हिं प्रति अरण्यादीनां कारणत्वमिति रीत्या सूक्ष्मदृष्ट्या तृणादीनां तत्तज्जन्यावान्तरजातीयवन्हिं प्रति कारणत्वं ग्रहीतव्यम्। अथवा अवान्तरजातिविशेषसंभावनया सर्वत्र सामान्यरूपेण कार्यकारण- 5 भावग्रहो न स्यादत आह—यत्रवतेति। तथा च यत्र सामान्यरूपेण कार्यकारणभाव स्वीकारे न व्यभिचारादिस्तत्र सामान्यरूपेण तद्ग्रह इतिभावः। ननु प्रागभावो यथा उत्तरकालावधि-ध्वंसावधिरनादिः, तथा भावो घटादिरपि ध्वंसावधिरनादिः स्वीक्रियताम्। न च दण्डादि प्राक्कोटिदर्शनं तत्र बाधकमेवं तर्हि यत्र घटादौ प्राक्कोटिर्न दृष्टा तद्विषये इदं न बाधितमिति वाच्यम्। प्रागभावमात्रनिमित्तवत्त्वे यस्मिन् दिने यो घट उत्पन्नस्तद्दिनात्पूर्वदिनेऽपि 10 तदुत्पादः स्यात्, प्रगभावस्य तदानीं सत्त्वादत्तदन्यस्यापेक्षणीयस्याभावात्। एवं ततः पूर्वं तदापादनादनादित्वं स्यात्। न च तास्मिन् दिने एव संभवतीति तत्स्वभाव इति वाच्यम्। तस्यापि प्रागभावमात्रनिबन्धनत्वात्पूर्वन्यायेन तत्पूर्वमपि सत्त्वप्रसङ्गात् उपसंहरति—तस्मादिति। अनुपलभ्यमानप्राक्कोटेरपि कार्यस्य कादाचित्कत्वंव्याहतं स्यात्तत्प्रागभावातिरिक्तागन्तुक-कारणकोटिकस्य स्वीकारेण तस्यापि सदातनत्वं स्यात्। अविद्यमानस्यापूर्वस्य कारणस्योत्प- 15 त्त्यनभ्युपगमे किञ्चित्कार्यमपूर्वं न स्यात्। कारणायत्तं हि कार्यं, कारणस्यापूर्वत्वे कार्यस्याप्यपूर्वत्वं नान्यथेति निष्कर्षः। कार्यं यदि आगन्तुकसामग्रीजन्यं नियतकालोत्पत्तिकं न स्यात्तर्हि अनादि स्यादित्यर्थः। जात्यपेक्षया कारणत्वे निरस्ते व्यक्त्यपेक्षया तन्निरासः सुकर इत्यभि-प्रायेणाह—तथापीति। व्यक्त्यपेक्षयैव कार्यकारणाभावोऽस्तु दृष्टत्वान्नजात्यपेक्षया, जातीययोः कार्यकारणभावस्य पुरुषायुषाप्यशक्यत्वात्। न च कार्यजातीयतानियमो न स्यादिति 20 वाच्यम्, स्वभावादेव तन्नियमोपपत्तेः। किं कार्यस्यैव स्वभावो यद्भिन्नजातीयेभ्यः कारणेभ्यो भवत् कार्यमेकजातीयं भवति। अथवा कारणस्येति तत्राद्यं निराकरोति—यदीति। यतः कुतश्चित्कारणाद्भवत्कार्यमेकजातीयं स्यात्तर्हि सर्वं कार्यं सर्वजातीयमेकजातीयं वा स्यात्।

ननु क्वचित्प्रसिद्धस्यैवापादकत्वेनान्यत्रापत्तिर्दातुं शक्यते, नाप्रसिद्धस्य। प्रकृते सर्व-जातीयकार्याप्रसिद्ध्यास्तदापादानमसंगतमिति चेन्न, प्रकारान्तरेण तदापादानसंभवात्। प्रकारान्तरं 25 च प्रकाशे प्रदर्शितन्तथाहि—अयं घटो यदि पटजनकयावजन्यः स्यात्तदा पटः स्यात्। पटजनक-कालादिजन्यत्वेऽपि स्वमते घटः पटात्मा न भवतीति यावदुक्तं स्वमते यावदन्तर्गततन्तुवेमादि-जन्यत्वाभावान्नघटस्य पटात्मत्वं। परमते तन्तुवेमादीनां कारणत्वानभ्युपगमेनोक्तापत्तिसंभवात्, एवमन्यजातीयत्वापादनं बोध्यम्। एवं पटादावपि घटादिजातीयत्वापादनात्सर्वजातीयत्वापादनं फलति। घटभिन्नं कार्यं यदि यावद्घटजनकजन्यं स्यात् पटजातीयं स्यादित्येकजातीयत्वमा- 30 पाद्यम्। द्वितीये कारणपक्षकमाह—तज्जातीयेति। घटादिजातीयं कार्यं यतः कुतश्चित्कार-णाज्जायमानं घटजातीयमेव भवतीति कारणस्वभावोऽभ्युपगम्यते तदापि सर्वतो जायमानं कार्यं सर्वजातीयमेकजातीयम्वा स्यात्। घटजनकसामग्री यदि पटप्रयोजकयावद्रूपवती स्यात्पट-जातीयजननी स्यात्, एवं सा यदि धूमजनकयावद्रूपवती स्याद्धूमजातीयजननी स्यादिति रीत्या सर्वजातीयत्वापादनं बोध्यम्। एवं घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्धर्मवती 35 स्यात् घटजातीयजननी स्यात्, एवं धूमजनकयावद्रूपवती स्याद्धूमजननी स्यादिति रीत्या

सर्वकार्यजातीयत्वापादनम्। घटान्यकार्यसामग्री यदि घटप्रयोजकयावद्रूपवती स्यात् घटजननी स्यादित्येकजातीयत्वापादनं ज्ञेयम्।

ननु यदि एकजातीयं कार्यमेकजातीयात्कारणादेव भवति न भिन्नजातीयेभ्यः कारणेभ्यः तर्हि भिन्नजातीयेभ्यस्तृणारणिमणिभ्यो जायमानोऽग्निरेकजातीयः कथं दृश्यते इति चेदत्र 5 मीमांसका उत्तरयन्ति—तृणादीनां न तृणत्वादिरूपेण कारणता, अरणिजन्यं वन्हिं प्रति व्यभिचाराद् एवं मण्यादीनामपि व्यभिचारान्न तत्तद्रूपेण कारणत्वं किन्तु दाहानुकूलैकशक्तिमत्त्वेनेत्याहुस्तन्न। यदि भिन्नजातीये कारणे एककार्यानुकूलशक्तिः स्यात्तर्हि कार्येण कारणविशेषानुमानं क्वापि न स्यात्, कारणविशेषाभावेऽपि हेत्वन्तरेण तत्कार्योत्पादादितिहेतोर्व्यभिचारित्वात्। कारणाभावेन कार्याभावानुमानमपि न स्यात्, कारणान्तरेणतदुत्पत्त्याऽत्रापि व्यभिचारात्। 10 अत्रोच्यते–सर्वत्र नैकशक्तिमत्त्वेन कारणत्वं ब्रूमः, किन्तु यत्र तृणादिविरहेऽपि अरण्यादिभ्यो वन्ह्यादेरुत्पत्तिर्दृश्यते, तत्रैव एकशक्तिमत्वेन कारणत्वं कल्प्यत इति न दोषः। यत्रानेकजातीयेषु हेतुत्वदर्शनं तत्रैव तेषामेकशक्तिमत्वेन तद्व्यवस्था इत्यपि निराकरोति—निमित्तस्येति। कारणतावच्छेदकं तृणत्वं न संभवति, व्यभिचारात्। अन्यच्चकारणतावच्छेदकं न दृश्यते इत्याह—निमित्तस्यादर्शनात्। इष्टस्य तृणत्वादेर्व्यभिचारेणानिमित्तत्वमित्यर्थः। न च शक्तिरेव कारण- 15 तावच्छेदिका, तस्याप्रत्यक्षत्वात्। तृणादिषु कारणत्वग्रहे शक्तिकल्पनं, तत्कल्पने च कारणत्वग्रह इत्यन्योन्याश्रयात्तत्कल्पनं न कारणत्वग्रहं विनापि तत्कल्पनायां रासभादावपि तत्कल्पनापत्तेः। शक्तिदूषणप्रकारमन्यत्राप्यतिदिशति। अतएव अतीन्द्रियजातिविशेषमग्निकुर्वद्रूपादि स्वीकृत्य ये व्यभिचारं परिहरन्ति तेऽप्यत एव निरस्ताः। शक्तिपक्षोक्तस्य इहापि सत्त्वात्। कार्यात्कारणस्य कारणनिवृत्त्या कार्यनिवृत्तेरनुमानस्य भङ्गप्रसङ्गात्। अनुपलब्धौ निमित्तमाह—सूक्ष्मजाति- 20 रिति। अवन्हेर्वन्हिभिन्नधूमोत्पादप्रयोजकसूक्ष्मजातिविशिष्टात्। ननु निमित्तासमवायिकारणभेदाभेदौ न कार्यभेदाभेदयोः प्रयोजकौ, किन्तु समवायिकारणभेदाभेदावेव। प्रकृते तु वन्हिं प्रति तृणादेर्निमित्तकारणत्वमेवेति, न तद्भेदेन वन्हिभेदः समवायिकारणन्तु वन्हिरेवेति तस्य तृणारणिमणिस्थलेषु एकत्वात् नोक्तकारणभेदप्रयुक्तवैजात्यमग्नौ किन्त्वेकजातीयत्वमेव समवायिनो वन्हेरेकजातीयत्वादिति शङ्कते—तथापि व्यभिचारान्न तृणादेः कारणत्वं स्यादिति परिहरति— 25 तयोरिति। यस्मिन्सति यदुत्पद्यते तत्तस्य कारणमिति न रासभादौ आनिदर्शनाद्व्यभिचारिसाधरण्यात्। किन्तु यस्मिन्सति भवति असति न भवति तत्कारणम् रासभे असत्यपि आनिदर्शनान्न तस्य कारणत्वम्, किन्तु तृणदेरेव तस्मिन्सति भावादसति चाभावात्। न च समवायिकारणसाजात्यवैजात्यमेव कार्यसाजात्यवैजात्यप्रयोजकम्, किन्तु सामग्रीत्याह-नचेति विपक्षेदण्डमाह—अन्यथेति। द्रव्यगुणकर्मणां समवायिकारणमेकमेव द्रव्यमिति तेषां वैजात्यं 30 न स्यात्। दृश्यते च तस्मात्तत्साजात्यं न कार्यसाजात्यनियामकम्।

ननु न कार्यभेदमात्रं प्रति समवायिभेदस्य कारणत्वं ब्रूमः, किन्तु द्रव्यरूपं कार्यं प्रति अतो न द्रव्यमात्रोपादाने गुणादौ दोष इत्याह—नचेति। एवमपि समानोपादानयोर्दुग्धदध्नोर्व्यभिचारः स्फुटः, दुग्धपरमाणव एव कालपरिपाकाम्लादिसहकारेण दध्यारभन्ते समवायिन एकत्वेऽपि कार्यभेदात्। न च दुग्धमेव दध्यारम्भकं, न तत्परमाणुरिति वाच्यम्। दुग्धस्यापि 35 तत्रानुवृत्त्यापत्तेः, दुग्धं नष्टं दधि जातमिति लौकिकानुभवविरोधापत्तेः। दुग्धावयविनोरेकत्वेन द्रव्यारम्भकत्वायोगात्। न च दुग्धाम्लद्रव्याभ्यां द्रव्यारम्भः, विजातीयानामेकद्रव्याना-

रम्भकत्वात्। एतेनोक्तानुमानभङ्गेन अपोहस्तद्भिन्नभेदस्तद्वादिना बौद्धेन यत्समर्थितं तदपि निरस्तमित्यर्थः। इदं हिं तत्समर्थनम्। अग्निं प्रति तृणादेर्न तृणत्वादिना कारणत्वं व्यभिचारात्, किन्तु तृणादिभिन्नभिन्नत्वेनेति न व्यभिचार इति। निरासहेतुश्च कार्यकारणभावासिद्धिरेव। तृणभिन्नभेदस्तृणे एव, अरणिभिन्नभेदोऽरण्यामेवं मणिभिन्नभेदो मणावेवेति त्रितयानुगतैकव्यावृत्तेरभावादेकैकव्यावृत्तिरूपेण कारणत्वे व्यभिचारः व्यावृत्तिमात्रस्यानुपादानेऽपि सत्त्वात्। यत्किंचिद्भिन्नभेदस्य केवलान्वयित्वात् कार्यकारणभावासिद्धया स्वभावनियमस्याप्यसिद्धिः। कार्यानुपलब्धिप्रसङ्गरूपविपक्षबाधकसाध्यत्वात्तस्या इतिं सामान्यरूपेण कारणत्वासिद्धौ व्यक्त्यपेक्षयैककारणत्वं वक्तव्यमित्युपसंहरति—तस्मादिति। अत्र सिद्धान्ती प्राह—तृणादिजन्यवन्हौ तार्णत्वादिरूपवन्हित्वव्याप्यावान्तरजातिस्वीकारेण तज्जातीयवन्हिं प्रति तृणादेरव्यभिचारात् कारणत्वग्रहो निर्बाध एवेति। न च तृणादिजन्यवन्हौ आवान्तरजातिभेदे साधकाभाव इति वाच्यं, सामग्रीभेदस्यैव साधकत्वात् सामग्रीभेदं दर्शयति-तृणजन्यवन्हेरेव सहकारी फूत्कारो नारण्यादिजाग्नौ। अरणिजाग्निं प्रति निर्मथनं सहकारि। प्रतिफलितसूर्यकिरणो मणिजाग्नावेव सहकारीति फूत्कारादिसहकृततृणादिसामग्रीव्यङ्ग्या तार्णत्वादिजातिः, न हि सामग्री भिद्यते न भिद्यते च कार्यमिति संभवति सामग्रीभेदे कार्यभेद इत्यत्रानुमानमिदं तार्णाद्यग्नयोऽग्नित्वव्याप्यावान्तरजातिभिन्नाः विलक्षणसामग्रीजन्यत्वात्, तैलवर्त्यादिविलक्षणसामग्रीकप्रदीपादिवदिति दृष्टान्तेऽवान्तरजातिं स्फुटयति, दृश्यते चेति। प्रासादः देवगृहं, राजगृहं वा प्रासादो देवभूभुजामित्यपरः। यतः विशिष्य तत्रैवातिस्वच्छः प्रदीपो दृष्टः दारु काष्ठं, "काष्ठं दार्विन्धनंत्वेध" इत्यमरः। करीषं शुष्कगोमयं गोविट् गोमयमस्त्रियाम्। तत्र शुष्कं करीषोऽस्त्रीत्यमरः, ततो जातः, कारीषोऽग्निः न तरां प्रदीपवत्प्रकाशक इति तत्र जातिभेद आवश्यकः तद्वत्प्रकृतेऽपि। तृणादिजन्यवन्हौ तत्तत्सामग्रीभेदाज्जातिभेद आवश्यकः। वस्तुविशेषः सामग्रीविशेषाभिव्यङ्ग्यजातिविशेषमाकलयति। स अवान्तरजातीयाग्निमनुमिनोत्येव, इतरस्तु अतिदुरुहतया तदनाकलनात् सामान्यकारणमात्रं धूमदर्शनेनानुमिनोतीत्याह—यस्त्विति।

ननु कार्ये वैजात्यकल्पनायामावान्तरतार्णत्वजातीयवन्हौ एव तृणादीनां कारणत्वमिति वद्धूमविशेषे एव वन्हेः कारणत्वं न धूम सामान्ये इति सन्देहेन धूमदर्शनेन वन्ह्यनुमानं न स्यात्कारणान्तरेणापि तस्य संभवात्। यदि चोपस्थितरूपे व्यभिचाराभावात्तेनैव रूपेण कार्यत्वग्रहस्तर्हि कारणतायामपि यत्रोपस्थितरूपे व्यभिचारस्तत्रैव रूपान्तरेण कारणताग्रहइति तुल्यम्। यद्वा यदि तृणादीनां तार्णत्वाद्यवान्तरजातीयाग्निं प्रत्येव कारणता नाग्निमात्रं प्रति व्यभिचारात्तर्हि वन्हेरपि धूमत्वावान्तरजातीयधूमं प्रत्येव कारणता न धूमसामान्यं प्रति इति तुल्यम्। एवं च वन्हेर्धूमविशेषं प्रत्येव कारणत्वान्न वन्ह्यभावाद्धूमसामान्याभावसिद्धिः। धूमसामान्यं प्रति तस्याकारणत्वादित्याह—वन्हाविव धूमेऽपि कश्चनावान्तरसूक्ष्मजातिभेदो यस्याग्नेरपेक्षा न धूममात्रस्येति न धूममात्रादग्निसिद्धिः एवं वन्हिव्यतिरेकाद् धूमसामान्यव्यतिरेकोऽपि न सिद्धयेत्। कार्यलिङ्गकानुमानं धूमेन वन्ह्यनुमानमनुपलब्धिलिङ्गकं चानुमानं वन्ह्याद्यभावेन धूमाभावादेरनुमानं च न स्यात्तदुभयकार्यानुपलब्धिलिङ्गयोर्भङ्गात् भङ्गः,

---

१. कण्डा इति लोके प्रसिद्धम्।

प्रकारस्तूक्त एव। शिंशपायाः वृक्षत्वस्वभावो वृक्षादन्यत्र तदनुपलब्धेरित्यनुपलब्धिलिङ्ग कानुमानमेव विपक्षबाधकं मानं व्यक्तमनुपलब्धिलिङ्गबाधे विपक्षबाधकमानाभावात्, तद्वेद-नीयस्वभावनियमाभावादनुमानमात्रोच्छेदापत्तिः—"कार्यकारणभावाद्वा स्वभावाद्वेति" तत्सि-द्धान्तात्। इदं दूषणं बौद्धस्यैव तन्मते प्रत्यक्षानुपलम्भाभ्यां गृहीतान्वयव्यतिरेकं बीजत्वा-दिविजातीयं नाङ्कुरजनकं किन्तु तद्विशेषः कुर्वज्जातीयमिति स्वीकारात्, तत्सत्त्वे तत्सत्त्वमित्यन्वयः
5 प्रत्यक्षेण गृह्यते तदभावे तदभाव इति व्यतिरेकोऽनुपलब्ध्या गृह्यते इत्यन्वयव्यतिरेकविशिष्टं बीजं तच्च नकारणम्। बीजे कुर्वद्रूपत्वमतीन्द्रियमित्यप्रामाणिकमिति तत्कार्यप्रयोजकत्वकल्प-नाया अप्रमाणिकत्वम्। स्वमते कार्यकारणभावं समर्थयते—अस्मात्कन्निर्वात। बीजत्वा-ङ्कुरत्वजातीययोरन्वयो बीजजातीये सति अङ्कुरसत्ता बीजजातीयाभावेऽङ्कुरव्यतिरेकः एतदुभय-वत्तास्तीति बीजाङ्कुरयोर्बीजत्वेन कारणत्वमङ्कुरत्वेन कार्यत्वमिति साधूपपद्यते। यत्र सामान्य-
10 रूपेण कार्यकारणभावे व्यभिचारो नास्ति, तत्र तेनैव रूपेण कार्यकारणभावः। यत्र तु तृणादौ सामान्यरूपे वन्हिकारणत्वग्रहे व्यभिचारस्तत्र विशेषरूपेण कारणताग्रहः यथाङ्कुरं प्रति बीजस्य धूमं प्रति वन्हेरिति। यदि तृणजन्यवन्हिविशेषवद् धूमविशेष उपलभ्येत तदा नानिष्टं स्यादित्यर्थः। ननु तृणादीनां वन्हिविशेषे एव कारणत्वात्तार्णाताणवन्हिसामान्यस्य किं प्रयोजकम्? न हि तदाकस्मिकं संभवतीति, न चानुवृत्तं किंचिद्दृश्यते, यद्वशात्सामान्यं
15 स्यादित्याशयेन पृच्छति—किं पुनरित्यादि। अथवा अनुवृत्तसामान्यादर्शनेन प्रयोजक-माक्षिपति—किमित्यादि। किमाक्षेपे। समवाय्यसमवायिनिमित्तानामनुवर्त्तमानानां सामान्य-प्रयोजकत्वमित्युत्तरयति—तेज इत्यादि। न च सूर्ये सुवर्णे च व्यभिचारात् तेजोमात्रे पवनो न हेतुरिति वाच्यम्। वायुं विना प्रदीपनाशदर्शनेन तस्य तन्निमित्तमित्यन्यत्रापि तेजस्त्वेन तदनुमानात्।

20 ननु कारणभावेन कार्यानुत्पत्तिरेव जायते न कार्यध्वंस इति ध्वंसप्रयोजकाभावप्रतियोगिनः पवनस्य न प्रदीपकारणत्वमिति वाच्यम्। प्रदीपसन्तानस्याशुविनाशितया पवनाभावेऽग्रिमसन्ता-नानुत्पत्तेरेवेह नाशपदेन विवक्षितत्वात्। यदुत्कर्षापकर्षाभ्यां यदुत्कर्षापकर्षौ तत्तस्य कारणमिति न्यायात्पवनस्य वन्हिं प्रति कारणत्वं निश्चीयते। पवनोत्कर्षे वन्ह्युत्कर्षस्य लोके दृष्टत्वात् गुरुत्ववदद्रव्यं तेज उपष्टम्भकं पीतिमगुरुत्वाश्रयंविलक्षणं द्रव्यम् एतत्सहिता पूर्वोक्ता सामग्री
25 सुवर्णस्य कारणम् शेषमतिरोहितार्थम्॥ ६॥

तथाप्येकमेकजातीयमेव वा किञ्चित्कारणमस्तु, कृतं विचित्रेण। दृश्यते ह्यविलक्षणमपि विलक्षणाऽनेककार्यकारि। यथा प्रदीप एक एव तिमिरापहारी, वर्तिविकारकारी, रूपान्तरव्यवहारकारीति चेन्न, वैचित्र्यात्कार्यस्य।

**एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।**
**शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः ॥७॥** 5

न तावदेकस्मादनपेक्षादनेकम्। अक्रमात् क्रमवत्कार्यानुपपत्तेः। क्रमवत्तावत्कार्यकारणस्वभावत्वात्तस्य तत्तथा यौगपद्यवदिति चेत्, अयमपि क्षणभङ्गे परिहारो, न तु सहकारिवादे। पूर्वपूर्वानपेक्षायां क्रमस्यैव व्याहतेः। क्रमनियमे त्वनपेक्षानुपपत्तेः।

नाप्यनेकमविचित्रम्। यदि ह्यन्यूनमनतिरिक्तं वा दहनकारणमदहनस्यापि 10 हेतुर्नासावदहनो दहनो वा स्यादुभयात्मको वा स्यात्। न चैवम्। शक्तिभेदादयमदोष इति चेन्न। धर्मिभेदाऽभेदाभ्यां तस्यानुपपत्तेः। असङ्कीर्णोभयजननस्वभावत्वादयमदोष इति चेन्न। न हि स्वाधीनमस्यादहनत्वम, अपि तु तज्जनकस्वभावाधीनम। तथाच तदायत्तत्वाद्दहनस्यापि तत्त्वं केन वारणीयम्? न हि तस्मिञ्जनयितव्ये नासौ तत्स्वभावः। तस्माद्विचित्रत्वात्कार्यस्य, कारणेनापि विचित्रेण भवि- 15 तव्यम्। न च तत्स्वभावस्तथा। ततः सहकारिवैचित्र्यानुप्रवेशः। न च क्षणोऽपि तदनपेक्षस्तथा भवितुमर्हतीति ॥७॥

आमोदः

**एकमिति।** **वेदान्तिमतं**, तेषां ब्रह्मैवैकं प्रपञ्चस्य कारणं किमीश्वरेण। **एकजातीयमिति।** एका प्रकृतिर्नानापुरुषोपरागाद्भिन्ना, प्रकृतेरैक्याच्चैकजातीया, सकलभूतभौतिककारणं, किमीश्वरेणेति **सांख्याः**। विशिष्टभेदे- 20 ऽप्यविशिष्टैक्यादेकजातीयत्वमित्यर्थः। तेषां नानापुरुषोपरक्तप्रकृतेरेव कारणत्वमिति भावः। अत्र दृष्टान्तमाह—**यथेति**। तिमिरमत्र तेजःप्रागभावः, तदपहारी तन्नाशकः। दीपेन तेजःप्रागभावविनाशरूपतेजोऽनन्तरजननात्। वर्तिविकारो भस्मीभावो रूपपरावृत्तिर्वा, रूपान्तरं घटादिस्वरूपं, तद्व्यवहारी तत्साक्षात्कारजनक इत्यर्थः। **वैचित्र्यात् कार्यस्येति**। 25 विचित्रं कार्यं विचित्रकारणनियम्यं, न त्वेकस्मादेकजातीयाद्वा कारणान्निर्वहतीति भावः।

तदुपपादयति—**एकस्येति**। न क्रमो न क्रमकारित्वमित्यर्थः। **वैचित्र्यञ्चेति**। विचित्रकार्यजनकत्वमित्यर्थः। **समस्य** एकस्य एकजातीयस्य वा **शक्तिभेदो**ऽपि कार्यवैचित्र्यनियामकेनोपपद्यते। हेत्वर्थे च यतो धर्मो- 30

धर्म्यभेदादभिन्न एव, एकस्य एकजातीयस्य वा स्वभावादेव कार्यवैचित्र्यं स्यादित्यपि न दहनजनकस्वभावश्चेत्, कथमदहनं जनयेत्, 'स्वभाव'स्य 'दुरतिक्रम'त्वादित्यर्थः ।

**अनपेक्षत्व[ा]ात्** स्वभावनिरपेक्षत्वात् । **अक्रमात्** अक्रमकारिणः ।
5 **क्रमवदिति** । एकस्यैव क्रमवत्कार्यजननस्वभावत्वात् तत्कार्यं तथा क्रमवदित्यर्थः । **यौगपद्यवदिति**सप्तम्यन्ताद्वतिः । यथा यौगपद्ये युगपत् कार्यजनने सामर्थ्यं तथेत्यर्थः । **क्षणभङ्ग** इति । तन्मते समर्थस्य क्षेपायोगेन एकदैव तावत्कार्यकारित्वं सम्भवति ब्रह्मणः, क्षणिकं त्वया नाभ्युपगम्यते किन्तु स्थिरं, तस्य च क्रमवत्कार्यजननं क्रम[व]त्सहकारिसापेक्ष-
10 मित्यर्थः । **केचित्तु** 'अयं परिहारः' क्षणभङ्गवादे वै क्रमते, स्वभाववाद इति यावत्, 'न तु सहकारिवादे', स्थिरपक्षे स्वभावस्य धर्म्यभिन्नत्वे क्रमवत्कार्यानुपपत्तिः । धर्म्यभिन्नत्वे तस्यैवापेक्षायां नैकमेव ब्रह्मस्वरूपं कारणनिरपेक्षमित्यर्थः इत्याहुः । स्वभाववादस्य निरस्तत्वे सहकार्यनपेक्षायां दोषमाह—**पूर्वपूर्वेति** । आगन्तुक इत्यर्थः । यदि कार्याणि स्वपूर्ववर्त्यागन्तुककारणान-
15 पेक्षाणि स्युः, क्रमवन्ति न स्युः । क्रमवन्ति च तस्मादागन्तुककारणानपेक्षाणीत्यर्थः । **क्रमस्यैवेति** । त्वयाभ्युपगन्तुं न शक्यते क्रम इत्यर्थः । ननु मया क्रमोऽभ्युपगम्यते, सापेक्षत्वं तु कारणस्य नाभ्युपगम्यत इत्यत आह—**क्रमनियमे त्विति** । अनपेक्ष्यानुक्तत्वादिति भावः । दहनकारणादन्यूनकारणं मुक्तं न तु दहनजाती[य]मत उक्तम्—**अनतिरिक्तमिति** ।
20 अदहनो दहनान्योन्याभाववान् घटादिः, तथा च घटो यदि यावद्दहनजनकजन्यः स्याद, दहनान्योन्याभाव[वा]न्न स्यात् । **दहनो वा स्यादिति** । दहनत्वजातिमान् स्यादिति प्रकारभेदेनापादनद्वयम् । ननु दहनजनकस्वभावं यत् तत् कथमदहनं जनयेदित्यत आह—**उभयात्मक** इति । यथा तद दहनजनकस्वभावं तथाऽविशेषाददहनजननस्वभावमपीत्युभयात्मकत्वमेव
25 तज्जन्यं स्यादित्यर्थः । तथा च दहनो यद्यदहनजननस्वभावजन्यः स्याददहनः स्यादित्युभयात्मकत्वापादनम् । त्रयाणामपि तर्काणां विपर्ययपर्यवसानमाह—**न चैवमिति** । **अयमदोष** इति । कार्यवैचित्र्यप्रसङ्गरूप इत्यर्थः । **धर्मीति** । धर्मी यद्यभिन्नस्तदा तदधीना शक्तिरप्यभिन्नैव । यदि भिन्नस्तदा तद्भेदा-

देव कार्यभेदोपपत्तेः, किं शक्तिभेदकल्पनयेत्यर्थः। **असङ्कीर्णेति**। एकस्य एकजातीयस्य वा कारणस्यायमेव स्वभावो यदनेन दहनमदहनञ्च जननीयमित्यर्थः। **न हीति**। दहनजननस्वभावस्याप्यदहनस्वाभाव्यनिवृत्तेर्न कार्यभेदः। न वैकस्य कारणस्य विरुद्धोभयभाव्यमित्यर्थः। उपसंहरति—**तस्मादिति**। ननु कार्यं कारणं वा स्वभावादेव विचित्रमस्तु, 5
किं सहकारिवैचित्र्येणेत्यत आह—**न चेति**। **तदिति**। कार्यकारणं चेत्यर्थः। सहकारिभेदं विना तदुभयमप्यनुपन्नमित्यर्थः। ननु विचित्रकार्यंकुर्वद्रूप एव क्षणः स्वलक्षणा[नि]विचित्राणि कार्याणि कुर्यादित्याह—**नत्विति**। बौद्धमतेऽपि तथोत्पन्नसहकारिवैचित्र्याधीनमेव कार्यवैचित्र्यमित्यर्थः। एतेन सांख्यवेदान्तबौद्धमतं निरस्तमिति भावः ॥७॥ 10

बोधनी

अथ वैचित्र्यादिति हेतुमवतारयितुं शङ्कते—**तथापि**–इति। यद्यपि कार्यस्य नियतजातीयकारणनियमस्तथापीति। कथं तर्हि कार्यवैचित्र्यमित्यत आह—**दृश्यते हीति**। न चात्रदृश्यते स्वरूपसहकारिवैलक्षण्यमिति भावा। अत्र हेतुमवतारयति—**वैचित्र्यात्**–इति। कथं साध्यमेव कारणवैचित्र्यं हेतुरित्यत्राह–**कार्यस्य**–इति।

व्याचष्टे–**एकस्य–इति**। न तावदेकमेव कारणम्, एकस्याक्रमत्वेन कार्य- 15
क्रमानुपपत्तेः। अनेन कालकृतवैचित्र्यं कारणवैजात्ये हेतुर्दर्शितः। यद्वा, प्रथमसंग्रहश्लोकानुपन्यस्तमेव कार्यक्रममत्रैवाशङ्कितस्य कारणैकत्वस्य निराकरणायोक्तसंग्रहोक्तं वैचित्र्यमवतारितमिति। समस्यापि शक्तिभेदात्कार्यवैचित्र्योत्पत्तिमाशङ्क्याह–**शक्तिभेदो न च–इति**। धर्मिव्यतिरेकाव्यतिरेकविकल्पदुःस्थत्वात्तस्येति भावः। यद्वा, भावादभिन्नः शक्तिभेदो न कारणं भावमात्रकारणत्वेन समानयोगक्षेमत्वादिति। एकप्रसरेण योजना- 20
भेदे तु कारणवैचित्र्यस्वीकार इति भावः। ननु स्वभाव एवायं भावस्य यत्समं च विषमं कार्यं करोतीति तत्राह–**अभिन्नस्वभाव–इति**। य एवास्यैकस्मिन् जनयितव्ये, स्वभावः स एवावन्यस्मिन् जनयितव्येऽपि, स्वभावस्य दुर्लङ्घ्यत्वात्। ततश्चाभिन्नस्वभावस्य कथं विलक्षणकार्यनिर्माणमिति भावः। अभिन्न इत्यस्य पूर्वशेषत्वे त्वयमर्थः स्वभावः कार्यान्तरे जनयितव्येऽपि नापैति यावद्- भावभावित्वात् स्वभावस्येति। 25

आद्यं पादं विवृणोति—**न तावत्–इति**। नैकस्मात् क्रमवत्सहकारिविधुरादनेकं क्रमवत् कार्यं, भवतीति शेषः। **अक्रमात्–इति**। क्रमवत्सहकारिवैधुर्येणासम्भवा-

यितक्रमादिति। यद्वा, कार्यस्य भेदस्तावत् कारणभेदात् स्यात् यथा घटपटयोः, तदभावेऽपि कालभेदाद्वा यथा दुग्धदध्नोः। अत्र तु पूर्वः कल्पो न भवति कारणस्यैकत्वाभ्युपगमादित्यभिप्रेत्योत्तर आह—**न तावत्**–इति। सहकार्यभावेन कालक्रमायोगादिति। अत्र तु नानेककार्यं भवतीति यथास्थित एव ग्रन्थः सङ्गच्छत इति।
5 शङ्कते—**क्रमवत्**–इति। **तस्य** कारणस्य। **तत्** कार्यं। **तथा** क्रमवद्। यथा ह्येकस्य यौगपद्यम्। अनेकेषामेककालता हि यौगपद्यं, तत् कथमेकस्य भवेत् तत्रापि स्वभावत एव युगपत् कार्याणि कुर्वन् दृष्टान्त इत्यर्थः। एवं वदता चार्वाकवराकेण सहकारिवाद एवाभ्युपगतः स्यादिति प्रतिपादयन्नाह—**अयमपि**–इति। यावत्कार्यकरणसमर्थस्वभावो भावो जातः स तावन्त्यपि कार्याणि तदैव कुर्यात् समर्थस्य क्षेपायोगात्।
10 ततः स क्षणान्तरे अर्थक्रियाभावादसत्त्वमेवेति यदा बौद्धः क्षणभङ्गं ब्रूयात् तत्रैष परिहारः सङ्गच्छते। एकस्यैव स्वभावतः क्रमेणानेककार्यकरणमुपपद्यत इति। अपि चेति समुच्चयो बौद्धस्यैष शिरसि सम्प्रहार इत्येतदपेक्ष्येत। सहकारिसन्निधिक्रमेणैकमेव तत्तत्कार्यं करोतीति सहकारिवादः, न तस्यायं बाध इति। कथमबाधकं यावता स्वेतरनिरपेक्षमेकमेव क्रमेण कार्याणि करोतीत्युक्तिः सहकारिवादं बाधेतैवात आह—**पूर्व**–
15 **इति**। पूर्वपूर्वमुत्पाद्योत्तरोत्पादनं हि क्रमः, अन्यथा यौगपद्यप्रसङ्गात्। तत्र स्वेतरनिरपेक्षस्य कार्योत्पादने पूर्वोत्पादनमपेक्ष्योत्तरोत्पादनमित्येवमात्मकः क्रमो बाध्येत। क्रमाङ्गीकारे च पूर्वपूर्वमुत्पादनमुत्पाद्यमानं वापेक्षमाणस्य कार्यकरत्वमिति स्यात्। तत्र स्वेतरापेक्षालक्षणसहकारिवादः सिद्धः स्यादिति।

द्वितीयपादं व्याचष्टे—**नाप्यनेकम्**–इति। नानेकमप्यविचित्रमेकजातीयं कारणं
20 विचित्रस्य कार्यस्येति। कुतो नैवमित्याशङ्क्य किं तत् कारणं दहनैकजननस्वभावम्, अदहनैकजननस्वभावम् उभयजननस्वभावम्वेति विकल्पं हृदि निधाय प्रथमे दोषमाह—**यदि हि**—इति। असावदहनाभिमतो नादहनः स्यात् किन्तु दहनसामग्रीजन्यत्वेन दहन एव स्यादिति भावः। द्वितीयेऽप्याह—**दहनो वा**–इति। अदहनसामग्रीजन्यत्वादिति। तृतीयेऽप्याह—**उभयात्मक**–इति। उभयमप्युभयात्मकं भवेदिति।
25 विपर्ययस्तु दृश्यत इति। शक्तिभेदो नचेत्येतदवतारयितुं शङ्कामाह—**शक्तिभेदात्**–इति। नानात्वादेकस्यैव कार्यवैचित्र्योपपत्तेर्न पूर्वोक्तदोष इति। **न–इति**। सा हि शक्तिर्धर्मिणो स्याद् भिन्ना वा ऽभिन्ना वा भिन्नाभिन्ना वा, प्रथमे शक्तिरेव कारणं स्यात् तदन्वयव्यतिरेकानुविधानात् कार्यस्य। न द्वितीयः, शक्तेरेवापलापात्। न तृतीयः, प्रमाणाभावात् तद्व्याघाताच्च। तेन भेदाभेदाभ्यामिति ग्रन्थश्च प्रत्येकसमुदायपरो

योजनीयः । यद्वा, दहनादहनजननशक्तिमतः कारणाज्जातस्य कार्यस्य दहनादहनात्मकत्वत्वप्रसङ्गेन विरुद्धधर्मसंसर्गाद् भेदः स्यात् एकसामग्रीजन्यत्वेनाभेदश्च स्यादिति शक्तिभेदानुपपत्तिरिति । श्लोकशेषं विवरीतुं शङ्कते-**असङ्कीर्ण**-इति । नायं दहनादहनाद्यात्मकत्वप्रसङ्गदोषोऽस्तीत्यर्थः । **न इति** । यदि हि स्वाधीनमस्यादहनस्यादहनत्वं तदा दहनस्यादहनप्रसङ्गो वक्तुं न शक्येतापि, न चैवं, किन्तु कारणगतादहनजननस्वभावायत्तम्, तथा च दहनस्यापि तदेकसामग्रीकस्य तत्त्वमदहनत्वं दुर्वारमिति । एतदेव श्लोकशेषेणोपपादयति **नहि**-इति । तस्मिन् दहने जनयितव्ये नासौ भावो दहनजननस्वभावो न भवति, स्वभावभेदाभ्युपगमे तु कारणवैजात्यं स्यादिति भावः । उपसंहरति-**तस्मात्**-इति । वस्तुतः कार्यवैचित्र्यात् कारणवैचित्र्यमभ्युपगम्यैव क्षणभङ्गित्वाद् भावानां स्वरूपत एव वैचित्र्यं न त्वेकस्यैवानुयायिनः सहकारिनिबन्धनं वैचित्र्यमिति बौद्धो मन्यते तं प्रत्याह—**न च**-इति । न च **तत्** कारणम् । **स्वभावतः** स्वरूपतः । **तथा** विचित्रं, तत्त्वेन प्रत्यभिज्ञायमानत्वादिति । यद्वा, प्रदीपवत् स्वभावत एव विचित्रमस्तु कारणं किं सहकारिवैचित्र्येणेत्युक्तमिति चेत तत्राह—**न च**-इति । प्रदीपे तिमिरापहारादिकार्यभेदस्य तैलवर्त्त्यादिसहकारिभेदनिबन्धनत्वादित्यर्थः । क्षणभङ्गवादेऽपि सहकारिवैचित्र्यमादरणीयमित्याह-**न च क्षणोऽपि**-इति । न चान्त्यक्षणोऽपि सहकार्यनपेक्षस्तथा विचित्रकार्यसन्ततिहेतुर्भवति । सोऽपि हि यदृच्छया सिद्धसहकारिमध्यासीन एव विचित्रकार्ये हेतुः, अन्यथा कुसूलनिहितवीजः कृषीवलः कृतार्थः स्यादिति ॥७॥

विवेकः

अदृष्टे परलोकसाधनत्वाभावनिबन्धनामाश्रयासिद्धिमभिप्रेत्य वैचित्र्यादिपूर्वकारिकांशं व्याकर्तुं **तथापी**ति । **एक**मिति । **एकदण्डिनां** मतं, ये ब्रह्मैककारणं प्रपञ्चजातमामनन्ति । **एकजातीय**मिति । **सांख्यानां** मतम् । तेषां कार्याणां कारणाभिन्नतया, सर्वाण्येव प्रकृतिजातीयानि प्रकृत्यधिष्ठानञ्चास्मदादिनापि शक्यमिति तदर्थं नेश्वरसिद्धिः । न वा क्षित्यादिकर्तृतया आत्ममात्रस्यैवाकर्तृत्वादिति 'विचित्रेण' परलोकसाधनेनादृष्टेन । तथा च किं केनाधिष्ठेयमिति भावः । ननु एकस्मादेकजातीयाद्वा न विलक्षणकार्यं दृश्यते तत् कथमेतदित्यत्राह—**दृश्यते ही**ति । 'अविलक्षणं विलक्षणकार्यकारि' एकमनेककार्यकारि । यथाश्रुते 'विलक्षणानेके'त्यत्रानेकपदवैयर्थ्यं, बहुत्वं वानेकत्वम्, अतएव दीपस्य विलक्षणकार्यकारित्वं दर्शयिष्यति । 'तिमिरापहार' आलोकस्तत्'कारी' समवेतालोककारीत्यर्थः । 'वर्त्तिविकारः' पूर्वरूपादिनाशः रूपाद्यन्तरोत्पादो वा; रूपाद्यन्तरं

घटादिरूपं तद्व्यवह्रियतेऽनेनेति व्युत्पत्त्या साक्षात्कारविशेपलाभस्तत्'कारी'त्यर्थः । वस्तुतस्तु साक्षात्कारीत्येतावतैव सुस्थतायां रूपान्तरे'त्यस्य वैयर्थ्यात् 'रूपान्तरं' 'व्यवहार'श्च करणव्युत्पत्त्या चाक्षुषसाक्षात्कारस्तत्'कारी'त्यर्थो ज्यायान् । क्रमिकत्वमपि वैचित्र्यं वैजात्यञ्चेत्याविष्कर्तुमाह—

5 **एकस्ये**ति । एकस्या सामग्र्या यत् कार्यं तस्य 'न क्रमः', तथा चानन्तरोत्पत्तिको घटो यदि पूर्वोत्पन्नघटकारणमात्रजन्यः स्यात्, तद्घटोत्पत्त्यनन्तरोत्पत्तिको न स्यात्, तद्घटवदिति । एवं पूर्वोत्पत्तिकं घटं पक्षयित्वा प्रागुत्पत्तिकत्वाभाव आपाद्यः । 'समस्य' अविलक्षणायाः सामग्र्या यानि कार्याणि तत्र 'वैचित्र्यं' वैलक्षण्यं 'न', तथा च घटो यदि पटसामग्र्यविलक्षणसामग्रीकः स्यात्, पटविलक्षणो न स्यात्, पटवदिति भावः । 10 नन्वेकस्या एकजातीयायाश्च सामग्र्या एव शक्तिभेदोऽङ्गीकार्यो यदधीनं कार्ये क्रमिकत्वं वैचित्र्यञ्चेत्यत्राह—**शक्तिभेदो न चाभिन्न** इति । 'शक्तिभेदः' कार्यस्य क्रमे वैचित्र्ये वा 'न' नियामकः, 'चो' हेतौ, यतः स आश्रयाभिन्नः, तथा च स्वाभिन्नतया स्वमिव न कार्यस्य क्रमे वैचित्र्ये वा स नियामक इति भावः । तस्य ततो भिन्नत्वे तु तस्यापि कारणतया नैकहेतुत्वं नैकजातीयहेतुकत्वं वेति भावः । नन्वेकस्या 15 एकजातीयाया वा अयमेव स्वभावो यत् क्रमिकं विजातीयञ्च कार्यं जनयति, अतएव त्वयैवाभिहितमीदृशस्य 'स्वभाववादस्येष्टत्वादि'ति तत्राह—**स्वभावो दुरतिक्रम** इति । तथा चैक एव घटो यदि स्वोत्पत्त्यपेक्षया क्रमिकोत्पत्तिकः स्यात्, तदा स्वापेक्षया विलक्षणः स्यात्, तादृशस्वभावकसामग्रीकत्वादिति भावः ।

अनेकत्वपरतयापि वैचित्र्यपदं व्याचष्टे—**न ताव**दिति । तथा चैतद्भिन्नं कार्यं 20 यद्येतत्कारणमात्रजन्यं स्यादेतद्भिन्नं न स्यादिति भावः । अनेकपदस्य क्रमिकपरत्वे यथाश्रुतमेव । 'अक्रमात्' तत्तत्कार्यानुकूलक्रमिकसहकारिविधुरात् 'क्रमवत्कार्यानुपपत्तेः, क्रमिककार्योत्पत्त्यसम्भवात् शङ्कते—**क्रमव**दिति । क्रमवत्तावतां कार्याणां यथाऽयौग-पद्यमित्यर्थः । **अयमपी**ति । यदि कुशूलस्थबीजमङ्कुरसमर्थं स्यात् स्वोत्पत्त्यनन्तरमेव कुर्यात्, न करोति च तं तदा तस्मान्न तत्समर्थमिति विरुद्धधर्माध्यासलक्षणभङ्गसाधने 25 अयं कारणस्य क्रमवत्तावत्कार्यकरणस्वभावत्वरूपः 'परीहारः' शोभते सहकारिसमवधान-क्रमस्यैव तादृशस्वभावनिर्वाहकत्वात्, 'न तु सहकारिवादे' यः पूर्वपक्षस्तद्वादिनस्तु 'नायं परीहारः', तत्स्वभावनिर्वाहकसहकारिसमवधानक्रमानुपगमात् इति अक्षरतात्पर्ययोरर्थः । 'पूर्वपूर्वानपेक्षायां' सहकारिसमवधानक्रमानुपगमे 'क्रमस्यैव व्याहतेः', क्रमपदार्थस्यैवानुपपत्तेः,

क्रमघटकानां तावतां क्षणानां युगपदुत्पादे क्रमाश्रित्य क्रमो निर्वक्तव्य इति भावः। 'क्रमनियमे' तावतां क्षणानां क्रमेणैवोत्पादे 'अनपेक्षानुपपत्तेः' अनपेक्षार्थानुपपत्तेः। 'अनेकमि'त्यस्य क्रमिकमिति शेषः, तस्यैव वा सोऽर्थः, तेन न प्रागुक्तदोषः। 'अनेकमि'त्यत्र 'कारणमस्त्वि'ति प्राक्तनमनुषञ्जनीयम्। अदहनः यदि दहनकारणताव्यापकस्वनिष्ठकार्यतानिरूपितकारणताकः स्यात्, दहनकारणताव्याप्यस्वनिष्ठकार्यतानिरूपित- 5 कारणताको वा स्यात, अदहनो न स्यात्। लाघवादाह—दहनो वा स्यादिति। एवं दहनं पक्षीकृत्यापादककोटौ दहनस्थानेऽदहननिक्षेपे दहनो न स्यादित्यापाद्यम्। एकामेव व्यक्तिं पक्षीकृत्योक्तापादकद्वयेन क्रमाद्युगपद्वा उभयापादनमेव उभयात्मकत्वापादनं तेन नापाद्याप्रसिद्धिः। एतच्चापाद्यव्यतिरेकनिश्चयस्य तर्काङ्गत्वनय एव सम्भवि, प्रमाणसिद्धविरोधिविषयत्ववत् विरुद्धापादनसामग्रीविशिष्टे तद्विरुद्धविषयत्वस्यापि अनिष्टरूपत्वेन 10 जिज्ञासाविच्छेदकत्वादिति। त्रयाणामेव तर्काणां पक्षे विपर्ययं दर्शयन् इष्टापत्तिं निरस्यति—न चैवमिति। शङ्कते—शक्तीति। एकस्मिन् कारणे कार्यानुकूलात् तद्वैचित्र्यानुकूलाच्च शक्तिभेदात् अयं कार्यक्रमावैचित्र्यापादनरूपो यो दोषः स नेत्यर्थः। **धर्मीति।** तस्य शक्तिः। क्रमाभेदस्य धर्मिणः कारणत्वाभिमतात् स्वरूपभेदे धर्म्यभेदे च त्वदुक्तस्यानुपपत्तेः, भेदे एकमेकजातीयत्वं वा न कारणं तद्भिन्नशक्तिभेदस्यैव तत्त्वोपगमात्। 15 अभेदे च न कार्यक्रमवैचित्र्ययोरुपपत्तिरिति। नन्वेकजातीयस्यापि कारणस्यायमेव स्वभावो यदसङ्कीर्णमेव दहनमदहनञ्च जनयति, अतएव दहनेऽदहनत्वापादनमदहने वा दहनत्वापादनन्नोपपन्नमित्याह—असङ्कीर्णोभयेति। 'अयमु'क्तापादनत्रयम्, 'अदोषो' दोषो न, असङ्कीर्णोभयजनकस्वभावोऽपि यो दहनः सोऽदहनकारणाविलक्षणजन्यत्वेनादहनः, एवमदहनश्च दहनकारणाविलक्षणजन्यत्वेन दहन एव स्यात्, तावताप्यसङ्कीर्ण- 20 जननस्वभावतोपपत्तेः। दहनादहनसामग्रीप्रसूतत्वेन तयोस्तत्त्वं व्यवस्थितं दहनत्वमदहनत्वञ्च केन वारणीयमिति चेददहनदहनसामग्रीप्रसूतत्वेन तयोरदहनदहनत्वमपि केन वारणीयमित्यक्षरतात्पर्याभ्यामाह—न हीति। 'अस्या'दहनस्य न स्वाधीनमदहनत्व'मपि तु तज्जनकस्वभावाधीनं', 'तदायत्तत्वात्' अदहनसामग्र्यायत्तत्वात् 'दहनस्यापि तत्त्वम दहनत्वम्। इदमुपलक्षणम्, अदहनस्यापि दहनसामग्र्यधीनं दहनत्वं 'केन वारणीयम्', 25 अदहनस्यादहनत्वे दहनस्य दहनत्वे च तत्सामग्रीप्रभवत्वातिरिक्तस्य नियामकस्य वक्तुमशक्यत्वादिति भावः। 'न हि तस्मिन्न'दहने 'जनयितव्ये' 'असौ' कारणत्वेनाभिमतः 'न' दहनजननस्वभावः, एवं तस्मिन् दहने जनयितव्ये नासावदहनजननस्वभाव इत्यपि बोध्यम्। यस्य यः स्वभावस्तस्य तत्त्यागास्वभावात् त्यागे वा तत्कारणस्यापि निर्वक्त

व्यत्वापाताच्चेति। उपसंहरति—तस्मादिति। न च तत्कार्यं 'स्वभावत' एव एकजातीय-सामग्रीजन्यत्वेऽपि तथाऽसङ्कीर्णं नियतरूपं कार्यमात्रवृत्तिजातेः कारणनियम्यत्वोपगमादिति भावः। ततः विचित्रकार्यजनकत्वात् सामग्र्यां 'सहकारिवैचित्र्यानुप्रवेशः विचित्रसहकारि-निवेशः आवश्यकः। ननु तथोत्पन्नः क्षणविशेष एव विचित्रसहकार्यनुप्रवेशं विनैव विचित्र-
5 कार्यजनकोऽस्त्वित्याशङ्क्य निषेधति—न त्विति। तदनपेक्षः' विचित्रकारणानपेक्षः 'तथा' विचित्रकार्यजनको 'भवितुमर्हति' तथोत्पन्नक्षणस्यैव वैचित्र्योपगमे तु नैकजातीयमेव कारणमिति भावः। एतावता प्रबन्धेन क्रमवद्विचित्रञ्च कारणं व्यवस्थापितम् ॥७॥

परिमलः

अस्तु तावत्कारणत्वं तथापि सापेक्षत्वादित्यत्र सिद्धसाधनम् शङ्कते—तथापीति। एकमिति वेदान्तिमतम्। एकस्यैव ब्रह्मणः सकलकार्यकारणत्वात्। एकजातीयमिति
10 सांख्यमतम्। तन्मते पुरुषाणां प्रति पुरुषं महत्तत्त्वस्य भेदेऽपि पुरुषस्याकारणत्वात्, महत्तत्त्वस्य चैकप्रकृतिविकारत्वेनैकजातीयत्वात्प्रकृतेरैक्यात्। न चैकस्य कारणत्वे विचित्र-कार्यानुपपत्तिः। एकस्मादपि विचित्रकार्योत्पत्तिदर्शनादित्याह—दृश्यत इति। तिमिरं न द्रव्यान्तरं किन्तु आलोकाभावः तदपहारो न तद्ध्वंसः, किन्तु आलोकः तत्कारी प्रदीपः वर्तिर्दशा तद्विकारः, तदीयरूपान्तरपरिणामः। शुक्लनीलादिव्यवहारनिदानं च। न चात्र सहकारि-
15 भेदोऽपि लक्ष्यते, एवं चैतद्दृष्टान्तेनान्यत्रापि विचित्रकार्याणामेककारणजन्यत्वमनुमेयमिति भावः। दृष्टान्तेऽपि विलक्षणकारणजन्यत्वमस्ति, विलक्षणानि च रूपालोकासंबन्धादीनि स्युः। यदि एकं कारणं सर्वस्य स्यात्तर्हि क्रमेण कार्योत्पत्तिर्न स्यात् कार्यक्रमस्य कारणक्रमाधीनत्वात्। एकजातीयस्य कारणत्वे कार्यवैचित्र्यानुपपत्तिः, कार्यवैचित्र्यस्य कारणवैचित्र्याधीनत्वात्। नचैकस्मिन्कारणे शक्तिभेदः कल्प्यते इति ततः कार्यवैचित्र्यं स्यादित्यपि, न, यतः धर्म्यभिन्ना
20 शक्तिः चो हेत्वर्थे। विलक्षणकार्यजनकस्वभावं कारणमिति कार्यवैचित्र्यमपि संगतम्। यदि यादृशस्वभावं कारणमेकत्र कार्ये जनकं, तादृशस्वभावमेव तत्कार्यान्तरं जनयति, तदा कार्यस्य वैचित्र्यं न स्यात्, कारणवैचित्र्यं विना कार्यवैचित्र्यस्याकस्मिकत्वापत्तेः। स्वभावान्तर-कल्पनायामेकत्वहानिः स्यात्। अक्रमादिति। क्रमप्रयोजकसहकारिराहित्यात्, सहकारि-समवधानं विनापि क्रमिककार्यजनकस्वभावं कारणं मन्यते इति क्रमेणैव कार्याणि भविष्यन्ति।
25 अत्र दृष्टान्तः—यौगपद्यवत्। यौगपद्ये इव यौगपद्यवत् वतिप्रत्ययः।

अयं भावः—यथा आयुगपत्स्वभावोऽपि प्रदीपः घटपटादीन् युगपत्प्रकाशयति। तथा अक्रमं कारणं क्रमवत्कार्यं करिष्यतीति चेन्न, क्षणभङ्गवादे एतत्परिहारसम्भवेऽपि स्थैर्यपक्षे एतत्परिहारासम्भवादित्यग्रे स्फुटी भविष्यति। पूर्वं पूर्वकार्यमुत्पाद्य अनन्तरकार्योत्पादनं क्रमः। तत्रानन्तरकार्योत्पादने पूर्वोत्पादितक्रमिककार्यमपेक्षते न वा ? अन्त्ये दूषणमाह—
30 पूर्वेति। पूर्वकार्योत्पादसापेक्षोत्तरकार्योत्पादक्रमस्यैवानपेक्षायां व्याघातः स्यातः। प्रथमे तु तस्यैव द्वितीयस्यापेक्षणीयत्वेन क्रमनियमेऽनपेक्षानुपपत्तेः। नाप्येकमविचित्रं कारणं विचित्र-कार्यजनकं भवितुमर्हति। यदि यादृशं कारणं दहनस्य ततोऽन्यूनानतिरिक्तं दहनकारणमात्रम-

दहनस्यापि कारणं स्यात्तदा उत्पद्यमानं कार्यमदहनात्मकं न स्याद्दहनकारणस्वभावद्दहनात्मकं स्यात् दहनजनकैकस्वभावस्य अदहनजनकत्वे व्याहतिश्च। द्वितीये तु दहनो न स्यादहनजनक-कारणजन्यत्वादिभवन्वा दहनः स्यादित्यादि। तृतीये तु उभयात्मकः स्यात् उभयजनककारण-जन्यत्वादित्यर्थः। उभयात्मकस्वकार्यस्याप्रसिद्धया प्रकारान्तरेण तदापादनं कर्तव्यं, प्रकारान्तरं च घटो यदि यावद्दहनजनकजन्यः स्याद्दहनः स्यादेवं यावद्दहनजनकजन्यः स्यात् घटो न 5 स्यादित्युभयात्मकत्वापादनं बोध्यम्।

ननु दहनजनकस्वभावेऽदहनशक्तिस्वीकारेण नोक्तदोष इत्याशङ्कते। शक्तिभेदादिति। शक्तिरूपो धर्मो न धर्म्यभिन्नः, अन्यथा धर्मिण एकत्वात्तत्स्वरूपस्य धर्मस्यापि भेदो न स्यात् तथासति दहनजनकैकस्वभावमदहनजनकैकस्वभावमुभयजनकस्वभावमिति विकल्प्य प्रथमे दूषणमाह—नासाविति। धर्म्मिभिन्नत्वे तस्यैव कारणौचित्येनैकजातीयकारणत्वस्य व्याघाता- 10 पत्तेः। नापि धर्म्मिणो भेदाभेदौ, मिथो विरोधेनैकत्र भेदाभेदयोरसंभावादिति परिहरति—धर्म्मिभेदाभेदाभ्यामिति। असंकीर्णमनुभयात्मकं केवलम्। एवं च परस्परव्यावृत्तो-भयजनकस्वभावं कारणं मन्यते इति नोभयात्मकत्वं कार्यस्येति निराकरोति—नेति। कार्यस्य दहनत्वमदहनत्वम्वा न स्वाभाविकम्, किन्तु कारणस्वाभावाधीनम्। अदहनमुत्पाद्य यदा दहनमुत्पादयति तदा अदहनजननस्वभावत्वमनुवर्तते न वा ? आद्ये दहनत्वेनाभिमतस्य 15 कार्यस्यादहनत्वापत्तिः, कारणस्वभावाधीनाद्दहनत्वादेः केन परिहारः, न हि दहने जनयितव्ये असौ कारणं न तत्स्वभावो नादहनजननस्वभाव इति नहि किन्तु तत्स्वभाव एव। तथा च दहनो यदि अदहनजनकस्वभावजन्यः स्याद्दहनः स्यादिति वैपरीत्यमप्यापाद्यम्। कार्याणां वैचित्र्यं विचित्रकारणप्रयुक्तमेवेत्युपसंहरति—तस्मादिति। दृश्यमानानि विचित्राणि कार्याणि विचित्रकारणजन्यान्येव नाविचित्रकारणजन्यानीति मन्तव्यम्। 20

ननु कार्याणि स्वभावतो विचित्राणि भवन्ति इत्ययेव कल्पतेऽलं तत्र सहकारिप्रवेशेनेत्यत आह— न त्विति। क्षणभेदोऽपि सहकारिभेदं विना दुर्निरूपः। बौद्धमते सहोत्पन्नविचित्र-सहकारिसमवहितक्षणस्यैव विचित्रकार्यकरत्वमित्यर्थः। अनेन विलक्षणसामग्री विचित्रकार्य-जनिकेति सिद्धम्॥ ७॥

अस्तु दृष्टमेव सहकारिचक्रं, किमपूर्वकल्पनयेति चेन्न । विश्ववृत्तितः ।

**विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा ।**
**दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ॥८॥**

यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनं, न परलोकार्थी
5 कश्चिदिष्टापूर्तयोः प्रवर्तेत । न हि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्व-
कारी घटते, प्रागेव जगत् । लाभपूजाख्यात्यर्थमिति चेत् ? लाभादय एव किन्नि-
बन्धनाः ? न हीयं प्रवृत्तिः स्वरूपत एव तद्धेतुः । यतो वाऽनेन लब्धव्यं, यो वैनं
पूजयिष्यति । स किमर्थम् ? ख्यात्यर्थमनुरागार्थञ्च । जनो दातरि मानयितरि
च रज्यते । 'जनानुरागप्रभवा हि सम्पद' इति चेन्न । नीतिनर्मसचिवेष्वेव तदर्थं
10 दानादिव्यवस्थापनात् । त्रैविद्यतपस्विनो धूर्तबका एवेति चेन्न । तेषां दृष्टसम्पदं
प्रत्यनुपयोगात् । सुखार्थं तथा करोतीति चेन्न, नास्तिकैरपि तथाकरणप्रसङ्गात् ।
सम्भोगवत् । लोकव्यवहारसिद्धत्वादफलमपि क्रियते, वेदव्यवहारसिद्धत्वात् सन्ध्यो-
पासनवदिति चेद्, गुरुमतमेतन्न तु गुरोर्मतम् । ततो नेदमनवसर एव वक्तुमुचि-
तम् । वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेन्न । वृद्धानामपि प्रवृत्तेः । न च विप्रल-
15 म्भकाः स्वात्मानमपि विप्रलभन्ते । तेऽपि वृद्धतरैरित्येवमनादिरिति चेत्, न तर्हि
विप्रलिप्सुः कश्चिदत्र, यतः प्रतारणशङ्का स्यात् । इदं प्रथम एव कश्चिदनुष्ठायापि
धूर्तः पराननुष्ठापयतीति चेत्, किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्व-
बन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली
यावज्जीवमात्मानमवसादयति । कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः । केन वा
20 चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः ? न ह्येतावतो दुःखराशेः
प्रतारणसुखं गरीयः । यतः पाखण्डाभिमतेष्वप्येवं दृश्यत इति चेन्न । हेतुदर्शना-
ऽदर्शनाभ्यां विशेषात् । अनादौ चैवम्भूतेऽनुष्ठाने प्रतीयमाने प्रकारान्तरमाश्रित्यापि
बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, न त्वनुष्ठानागोचरेण कर्मणा । अन्यथा
प्रमाणविरोधमन्तरेण पाखण्डित्वप्रसिद्धिरपि न स्यात् ॥ ८ ॥

आमोदः

25 अस्त्विति । विचित्रकार्यजनकमिति शेषः । किं पुनरिति । तथा
च 'तदधिष्ठातृत्वेन नेश्वरसिद्धि'रिति रहस्यम् । विश्वेषां 'वृत्तितो' यागदान-
स्नानादौ प्रवृत्तेरवश्यं कल्पनीयमित्यर्थः । यागादिप्रवृत्तेरन्यथासिद्धिं निर-
स्यति—विफलेति ।

ननु भूतान्येव चेतनान्येव चेतनानि, तान्येव वासनापरिपाकवशात्तथा-
30 परिणमति यथा उत्तरोत्तरशरीरनिष्पत्तिर्भोगव्यवस्था च स्यात्, किम-

१. किं पुनरपूर्वं इति शङ्करमिश्रसम्मतः पाठः ।

पूर्वेणेत्यत आह—**यदि हीति**। 'इष्टं' यागादि, 'पूर्तं' खातादि। **प्रागेवेति** निपातसमुदायोऽसम्भावनावाची। तेन जगत्प्रवृत्तिरसम्भावितेत्यर्थः। यद्वा प्रागेव दूरत इत्यर्थः। **किन्निबन्धना** इति। धार्मिकत्वज्ञानं तत्रापि निबन्धनमिति भावः। एतदेवाह—**न हीयमिति**। तथा च न वापि कृष्यादिप्रवृत्तिवद् यागादिप्रवृत्तिप्रसङ्ग इत्यर्थः। **स किमर्थमिति**। तस्यापि 5 धर्म एवोद्देश्य इत्यर्थः। **ख्यात्यर्थमिति**। असौ दाता विनीतश्चेति ख्यातिः, तन्निबन्धनश्चानुरागः। तस्यापि फलमाह—**जनानुराग** इति। नीति-सचिवो मन्त्री, नर्मसचिवः क्रीडासचिवः। **व्यवस्थापनादिति**। धर्मशास्त्र इत्यर्थः। ननु प्रतारणार्था तपस्यादौ प्रवृत्तिर्न धर्मार्था इत्याशङ्कते **त्रैविद्येति**। त्रिवेदीवेदिनस्त्रैविद्याः त्रैविद्याश्च ते तपस्विनश्चेति ते तथा। **अनुपयोगा-** 10 **दिति**। धूर्तताया इति शेषः। **सुखार्थमिति**। धूर्ततायाः सुखमेव किञ्चिदुत्पद्यत इत्यर्थः। एवञ्च भोजनादिवत्तवापि तपस्यादौ प्रवृत्तिः स्यादित्याह—**नास्तिकैरिति**। **सन्ध्योपासनवदिति**। सन्ध्योपासनादावपि फलश्रुतेर्निष्फले प्रेक्षावत्प्रवृत्त्यनुपपत्तेरिति भावः। **गुरुमतमिति**। **गुरोः** प्रभाकरगुरोर्मतं, न त्वस्मद्गुरोरपीत्यर्थः। तथा चाप्रामाणिकमिति भावः। 15 यद्वा गुरुमतं महन्मतमिति परीहासः। **अनवसर** इति। **पञ्चमस्तत्रकेतु** सर्वमेव विचारणीयमिति भावः। प्राथमिकविप्रलम्भपूर्वकोऽयं व्यवहार इत्याह—**वृद्धैरिति**। **वृद्धानामपीति**। अन्यथा ज्ञातमन्यथा बोधयन् विप्रलम्भक उच्यते। स च स्वयं तत्र कथं प्रवर्तत इत्यर्थः। तदेवाह— **न चेति**। **न तर्हीति**। अनादौ समाचारो वेदमूलकत्वध्रौव्यादित्यर्थः। 20 अनादित्वं नास्तीत्याह—**इदमिति**। परध्वंसनार्थं कश्चिदाधुनिक एव तपस्यादौ प्रवर्तत इत्यर्थः। **अनुविदध्युरिति**। आद्रियेरन्नित्यर्थः। तद-नुष्ठितमनुतिष्ठेयुरिति वार्थः। **ईदृश** इति। यावज्जीवमरण्यादौ तपस्यादौ प्रवृत्त इत्यर्थः। **यत** इति। पाखण्डानामपि मण्डलीकरणादौ निष्फले प्रवृत्तिदर्शनादिति भावः। **हेत्विति**। तेषामालस्यजीविकादिहेतुभिः प्रवृत्ति- 25 दर्शनादित्यर्थः। ननु यागाद्युपदेशो न प्रतारणा मण्डलीकरणोपदेशः प्रतारणेत्यत्र किं विनिगमकमित्यत आह—**अनादाविति**। यथा यागाद्य-नुष्ठानं महाजनपरिगृहीतमनादि, तथा तादृशमेव यद्यन्यदेतद्विरुद्धमनुष्ठानं भवेत्तदाऽत्रानुष्ठाने प्रतारणाशङ्का स्यान्न तु तथा परम्परा काचिदस्ति

प्रकारान्तरेणेत्यर्थः। **न त्विति**। यादृशमनाद्याचरणं यागादौ तादृशानुष्ठानागोचरेण कर्मणा शङ्कैव नोदेति। मण्डलीकरणादेस्तादृशानुष्ठानाभावात्। **अन्यथेति**। यदि मण्डलीकरणादिकं तादृशमेव, तदा किमाचारवतां पाखण्डत्वं स्यादित्यर्थः, प्रमाणेनखण्डितानां पाखण्डत्वव्यवहारात् ॥८॥

### बोधनी

5 अथ विश्ववृत्तित इत्येतदवतारयितुं शङ्कते—**अस्तु**—इति। ततोवेश्वरसिद्धिरिति अवतारयति—**न, विश्ववृत्तितः**—इति। अस्यानन्यथासिद्धिं दर्शयन् विवक्षितसाध्यकत्वमुपपादयति—**विफला**—इति। यागादौ तावद्विश्वस्य जगतः प्रवृत्तिर्दृश्यते, नेयं विफला, नापि दुःखैकफला, विश्ववृत्तित्वादेव। नापि दृष्टपूजादिफला स्वरूपतो हेतुत्वात्। परैर्विप्रलब्धत्वात् परविप्रलिप्सया वा प्रवृत्तिरित्यपि न युक्तम्। ईदृशविप्रलम्भासम्भवात्

10 तस्मात् यागादौ विश्ववृत्तिरनन्यथासिद्धा तस्यापि तावत् कारणत्वं कल्पयति। न तु दृष्टमेव सहकारिचक्रं कारणमित्यर्थः। तदेतद् व्याख्यास्यन्ननन्यथासिद्धिं तावत् प्रतिजानाति—**यदि हि**—इति। भूतानां परिणतिः कार्यं, तत्परम्परा, उप्तं बीजमङ्कुरं जनयति, तत् सस्यं, तद्व्रीह्यादिकमिति पूर्वं पूर्वं दृष्टमेवोत्तरोत्तरं प्रति कारणमिति **यद्युच्येतेति**। यद्वा भूतानां सहकारिणां परिणतिः साकल्यम्। **इष्टं** यागादि श्रौतं कर्म।

15 **पूर्त्तं** खातादि स्मार्त्तमिति। अत्र हेतुत्वेन संग्रहं व्याचष्टे—**न हि**—इति। शङ्कते—**लाभ** इति। दुःखात्मकयोरपि श्रौतस्मार्त्तयोर्लाभादिदृष्टसिद्ध्यर्थमयं प्रवर्तत इति दूषयति—**लाभादय**—इति। तेऽप्यदृष्टनिबन्धना इत्यर्थः। कुत इत्यत आह—**न हि**—इति। न हीयं यागादौ प्रवृत्तिः स्वरूपेणैव लाभादिहेतुः, तेषां प्रवृत्त्यानन्तर्यनियमाभावात्; तेनादृष्टद्वारेणैव हेतुत्वमिति भावः। **यतो वा**—इति। स किमर्थं लम्भयति पूजयति वेति

20 शेषः। तत्र प्रवृत्तिरपि नादृष्टमन्तरेणोपपद्यत इति भावः। शङ्कते—**ख्यात्यर्थम्** इति। न तु पारलौकिकं किञ्चिल्लिप्समानः पूजयति ददाति वेति। अनुरागो वा किमर्थ इत्यत्रोक्तं—**जनानुराग** इति। परिहरति—न—इति। ख्यात्यनुरागार्थयोर्दानपूजयोर्यथाक्रमं नर्मनीतिसचिवयोर्व्यवस्थितत्वादत्र च तदभिसन्धिविरहान्न तादर्थ्यमिति। पुनः शङ्कते—**त्रैविद्य**—इति। वैदिका यागादिकर्त्तारो विप्रलम्भका दृष्टार्थमेव भावयन्तोऽदृष्टार्थमिवाचरन्ति, तेऽपि

25 तेन नर्मसचिवप्राया इत्यर्थः। **परिहरति** न—इति। नीतिनर्मसचिवा हि दृष्टोपयोगिनः, नैवं त्रैविद्याः, अतस्तेषु पूजादि न दृष्टार्थमिति। ननु तेषां पूजादिकमनुतिष्ठतः किञ्चिद् दृष्टमेव सुखं जायते, ततस्तदर्थमेव पूजानुष्ठानमित्याह **सुखार्थम्**—इति। **न इति**।

न हि तात्त्विकं किञ्चिद् दानादिजन्यं सुखमस्ति, पारलौकिकसुखाध्यवसायादेव हि तदनुष्ठायिनस्तदा प्रीतिरिति भावः। शङ्कते—**लोक**—इति। अनादिना लौकिकाचारेण कर्तव्यतया सिद्धत्वादफलमपि दानादि क्रियते, वैदिकविधानेन सिद्धसन्ध्योपासनवत्। तद्विधायकवाक्येषु फलाश्रवणाज् जीवनादिकर्माधिकारलाभाच्च विधित एव अनुष्ठानसिद्धौ फलकल्पनायां प्रमाणाभावादफलमेव सन्ध्योपासनादिकमिति भावः। **गुरुमतमेतत्—इति**। निष्फलं कर्मेति प्राभाकरगुरोरयं राद्धान्तः, नास्मद्गुरोः, तस्य निष्फलोपदेशासंभवात्। तत्राप्युपात्तदुरितक्षयादिफलमस्तीति राद्धान्तः। यद्वा, गुरु श्लाघ्यं तन्मतमित्युपालम्भगर्भः, न तु गुरोर्हितोपदेशिनः कस्यचिन्मतं—तस्मादप्रस्तुतमिदानीं न वक्तव्यमिति। तस्माद् यागादिकर्तृपूजादेर्दृष्टहेत्वभावादवश्यं धार्मिक इति बुद्ध्या तदाचार इत्यभ्युपगन्तव्यम्। तेन यागादेस्तदनुष्ठातृपूजादेश्चामुष्मिकं फलं सिद्धमिति रहस्यम्। तुरीयपादमवतारयितुं शङ्कामाह—**वृद्धैः**—**इति**। बालानां प्रवृत्तिरिति शेषः। **न—इति**। विप्रलम्भका यत्र परं प्रवर्त्तयन्ति न तत्र स्वयमपि प्रवर्त्तन्त इति। स्वैरेव विप्रलब्धाः प्रवर्त्तन्त इति मन्दाशङ्कां निराकरोति—**न चेति**। आत्मवञ्चनमशक्यमप्रयोजनं चेति भावः। तर्हि सर्वेऽपि पूर्वैर्विप्रलब्धाः प्रवर्त्तन्त इत्याह—**तेऽपि—इति**। सर्वेषामेव भावाभ्युपगमेनेयं विप्रलम्भकमूला प्रवृत्तिः। अन्यथा संविदानोऽन्यथोपदिश्य प्रवर्त्तको विप्रलम्भकः, न चात्र तादृशः कश्चित्; अतः प्रमाणमूलत्वमेवोपपन्नमिति भावः। पुनः शङ्कते—**इदं प्रथमः**—इति। विप्रलिप्सातिशयेन हि स्वयमप्यनुष्ठानोपपत्तिरिति भावः। तदतिशयप्रदर्शनार्थमुक्तं—**धूर्त्तः**—इति। किमसाविति धूर्त्तविप्रलम्भकास्तावदुपदेशमात्रेण विप्रलभन्ते। क्वचित्तु केचिदल्पायाससाध्येषु कर्मसु स्वयमनुष्ठायापीति संभाव्येत। न तु सर्वस्वदक्षिणादिसाध्ये वैदिककर्मकलापानुष्ठाने कश्चिद् विप्रलम्भक इत्युत्प्रेक्षितुमपि क्षममिति। अस्तु वा तथाविधो धूर्त्तः कश्चित्, नत्वेकस्यास्य प्रेक्षावद्भिर्बहुभिरनुविधानं संभवतीत्याह—**कथं चेति**। यदि वा सर्वप्रेक्षावदनुविहिताचारस्तथाविधः पुरुषः किमस्य विप्रलिप्सायां भवतः प्रमाणमित्याह—**केन वेति**। न केवलं प्रमाणाभावः प्रमाणबाधितैवतस्य विप्रलिप्सेत्याह—**न हीति**। तस्माद् वैदिकेषु कर्मसूपदेशानुष्ठानाभ्यां परान् प्रवर्त्तयन् सकलप्रेक्षावदनुविहिताचारो लोकोत्तरः कश्चिदिति निश्चेतव्यम्। न च तस्मिन्ननाश्वासो युक्त इति भावः। विश्ववृत्तेर्भ्रममूलत्वमप्यत एव निरस्तं वेदितव्यम्। चोदयति—**अथ—इति**। बाह्याभिमतेषु चैत्यवन्दनादिषु विश्वप्रवृत्तिर्द्वीपान्तरापेक्षं दृश्यत, ततः साप्युक्तप्रकारेणान्यथासिद्धा तेषामामुष्मिकफलत्वं कल्पयेदिति भावः **न—इति**। ज्योतिष्टोमचैत्यवन्दनयोर्नतुल्यत्वं, दृष्टहेतुसंभवाच्चैत्यवन्दनादिपरिग्रहस्य तदभावाच्चेतरपरि-

ग्रहस्य। अयं च विशेषः प्रपञ्चयिष्यते द्वितीये परिच्छेदे। हेतुदर्शनशून्यैर्ग्रहणधारणार्थनुमानादितरत्र विश्ववृत्तिरभिमताऽसावन्यत्र नास्तीति भावः। किञ्च, यत्र यत्र प्रतारणं तत्र सर्वत्रापि पूर्वसिद्धे कस्मिंश्चिदनुष्ठाने प्रतीयमाने ततः प्रकारान्तरमाश्रित्य प्रतारयितुमात्मनोऽर्थप्रदानादिसुकरोपायोपदेशमात्रेण प्रतारणं भवति, न तु स्वयमनुष्ठानेन।
5 यथा रोगापगमहेतौ भेषजभेदानुष्ठाने पूर्वसिद्धे प्रतारणं 'मम हस्ते किञ्चित् प्रदीयतामिदानीमेव सर्वं शमयिष्यामि' इति। इह दुःखात्मके कर्मणि स्वयमनुष्ठायैव परमानुष्ठापयति, तस्मान्न प्रतारणेयमित्याह—**अनादौ**—इति एवं सत्याप्तप्रणीतत्वेन वेदानामेव प्रामाण्यात् तद्विरोधिनां बौद्धाद्यागमानां प्रमाणविरोधनिबन्धना पाखण्डत्वप्रसिद्धिः सिध्येत्, नत्वन्यथेत्याह **अन्यथेति**। अन्यथा—यदि वैदिकमनुष्ठानं प्रतारणायत्तं भवेदित्यर्थः।
10 यद्वा, यदि वञ्चकः स्वयमप्यनुतिष्ठेत् ततो बौद्धागमानां प्रतारणपरत्वे प्रमाणाभावादाप्तोक्तत्वसिद्धौ प्रमाणविरोधासंभवात् तन्निबन्धना पाखण्डत्वप्रसिद्धिर्न स्यादिति।

अनादावित्यादेरपरा व्याख्या—कस्यचिदनुष्ठाने प्रागसिद्धे ह्यनुष्ठानमात्रस्यैवाज्ञानाद्विप्रलिप्सोपदेशमात्रेण प्रतारणानुपपत्तेरवश्यमनुष्ठानायैव प्रतारणं स्यात्। प्रागेव तु ज्योतिष्टोमानुष्ठानसिद्धौ प्रकारान्तरोपदेशमात्रेण स्वयमनुष्ठायैव प्रतारणं संभवति।
15 नन्वनुष्ठानायैवेति विपरीतं किमिति न स्यादित्यत आह—**अन्यथेति**। चैत्यवन्दनादीनां प्रमाणमूलत्वे प्रमाणविरोधासंभवात् तदागमानां पाखण्डत्वप्रसिद्धिर्न स्यादित्यनुष्ठानागोचरेण कर्मणेति केचित् पठन्ति। तत्रायमर्थः—यदि वैदिकानुष्ठानात् पूर्वसिद्धं किञ्चिदनुष्ठानं स्यात् ततः पश्चात्तनं वैदिकमनुष्ठानं तत्र प्रतारणपरं स्यात्। न तु पूर्वसिद्धानुष्ठानागोचरेण कर्मणा प्रतारणं संभवति। सर्वत्र पूर्वसिद्धानुष्ठानविषयत्वात्
20 प्रतारणस्येति। अयं च प्रथमव्याख्यायां संगच्छेत ॥८॥

### विवेकः

नैतावतापि भगवत्सिद्धिरित्यभिप्रायेणाह—**अस्त्विति**। दृष्टमेवास्मदाद्यधिष्ठानयोग्यमेव क्रमिकं विचित्रञ्च सहकारिचक्रं सामग्री अस्तु, किमपूर्वकल्पनयेति। तथा च किमधिष्ठानार्थं भगवान् सेत्स्यतीति भावः। अत्र यागादिरगम्यागमनादिर्वा स्वजन्यस्वर्गनरकानुकूलव्यापारको न वा? एतज्जन्यं स्वर्गनरकादि एतज्जन्यजन्यं न वा? आत्मा
25 ऐन्द्रियकावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान्न वा? अतीन्द्रियमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वम् आत्मसमवेतवृत्तिवृत्ति न वा?—इत्याद्या विप्रतिपत्तयो बोद्धव्याः। तथा च यागादिरिष्टसाधनं वक्ष्यमाणहेतुदर्शनशून्यप्रवृत्तिविषयत्वात् भोजनादिवत् इत्यत्रेष्टान्तरबाधात्

कालान्तरभावि तत् सिध्यति। तदनुगुणश्च व्यापारोऽदृष्टं तदधिष्ठाता च विश्वदर्शी भगवान् इति भावः। ननु सन्ध्यावन्दनवत्तादृशप्रवृत्तिविषयोऽपि निष्फल एव भविष्यति, तथा च त्वदुक्तस्य हेतोः सन्ध्यावन्दनादौ व्यभिचारः। तत्तदन्यत्वादिविशेषितस्य चाप्रयोजकत्वमित्यत्राह—

**विफले**ति। 'विश्ववृत्ति'र्हेतुदर्शनशून्यप्रवृत्तिः तादृशप्रवृत्तिविषयो वा 'विफला' न प्रवृत्तिसामान्ये इष्टसाधनताज्ञानस्य कारणत्वेन सन्ध्यावन्दनादेरपि सफलत्वस्य व्यवस्थापयिष्यमाणत्वात् इति भावः। प्रकृतपक्षे साध्याभावो विशेष्याभावायत्तः, किं वा स्वनिष्ठसाधनतासामान्ये इष्टीयत्वलक्षणविशेषणाभावायत्तो वा? आद्ये सत्त्वानुपपत्तेस्तन्नयेऽर्थक्रियाकारित्वस्यैव तत्त्वात्। द्वितीये त्वाह—**न दुःखैकफले**ति। नानिष्टैकफलेत्यर्थः। अन्यतरनिरूपितत्वनियतस्य साधनत्वस्य इष्टनिरूपितत्वबाधेऽनिष्टनिरूपितत्व एव पर्यवसानादिति। विशेषदर्शिप्रवृत्तिविषयत्वात् तादृशप्रवृत्तित्वाद्वेति च हेतुः। ननु सफलत्वमात्रे साध्ये दृष्टेनैव फलेनार्थान्तरं, तथा च न स्वर्गाद्यनुकूलयागादिव्यापाराधिष्ठानायेश्वरसिद्धिरित्यत आह—**दृष्टलाभफले**ति। वक्ष्यमाणयुक्तेरिति शेषः। ननु विप्रलम्भादिनिमित्तैव यागादौ प्रवृत्तिरिति स्वरूपासिद्धो हेतुरित्यत्राह—**विप्रलम्भोऽपी**ति। तादृशयागादेः कर्तव्यतानिमित्तवक्ष्यमाणयुक्तेरिति शेषः।

ननु भूतचैतन्यवादे तथा तथा परिपाकशालीनि कारणीभूतानि भूतानि जायन्ते यथा तदुत्तरोत्तरशरीरे भोगादिव्यवस्था स्यात्। किमपूर्वेणेत्यत आह—**यदि ही**ति। 'परिणतिपरम्परा' वासनापरिपाकः 'उत्तरोत्तरनिबन्धनं' भोगव्यवस्थापकं 'न परलोकार्थी'ति कर्तुः फलासम्बन्धादिति भावः। 'इष्टापूर्ते' यागतड़ागादौ। ननु कर्तुः स्वजन्येष्टासम्बन्धस्यापि तज्जन्यदुःखमात्रसम्बन्धादेव प्रवृत्तिः स्यादित्यत्राह—**न ही**ति। 'निष्फले' स्वनिष्ठेष्टनिरूपितसाधनत्वाभाववत्तया ज्ञाते 'प्रेक्षाकारी' विशेषदर्शी 'घटते' प्रवर्तते। 'किमुते'त्यर्थकः 'प्रागेवे'ति निपातः, निपातः, असम्भावनातिशयो वा, दूर इत्यर्थो वा **इत्यपरे। लाभ इति।** तथा च सफलत्वे साध्ये तैरेवार्थान्तरमिति भावः। 'इयं' यागादिगोचरा, 'स्वरूपतः' साक्षात्, 'तद्धेतु'र्लाभादिहेतुः। अनुपदमेव तदनुत्पादात्, अन्यथा तदर्थितया नास्तिकैरपि करणप्रसङ्गाच्चेति भावः। ननु तत्तत्कर्मकारिणि धार्मिकत्वबुद्ध्या परे प्रयच्छन्तीति लाभादिप्रयोजकत्वमित्यत्राह—**यो वैनमि**ति। अदृष्टद्वारा स्वर्गार्थमेव ते प्रयच्छन्तीति तदधिष्ठातैवेश्वर इति भावः। दानप्रवृत्तिमपि फलान्तरेणान्यथासिद्धयति—**ख्यात्यर्थमि**ति। ख्यातेरपि प्रयोजनाकांक्षायामाह—**अनुरागे**ति। स्वस्मिन्नितरानुरागविषयत्वार्थमित्यर्थः तस्यापि स्वतः

प्रयोजनत्वाभावादाह—**जन** इति। 'मानयितरी'ति दृष्टान्तार्थम्। 'नीतिसचिवो' मन्त्री, 'नर्मसचिवः' क्रीडामित्रं, 'व्यवस्थापनात्' नीतिशास्त्रेषु। प्रतारणार्थं तपश्चर्यादि क्रियत इत्याह—**त्रैविद्येति**। त्रिवेदीविदस्त्रैविद्याः 'तपस्विन'श्च ये ते 'धूर्ता' वञ्चकाः परप्रतरणैकपरास्तेषां त्रैविद्यतपस्विनाम्, 'दृष्टसम्पदं' दृष्टग्रामपशुहिरण्यादिकं तत्रा'नुपयोगात्' तन्निःस्पृहत्वात्। 5 'सुखार्थं' दृष्टसुखार्थं 'तथा' तपश्चर्यादि। **नास्तिकैरपी**ति। तथा च नास्त्येव तद्दृष्टफलमिति भावः। 'लोकव्यवहारसिद्धत्वात्' कार्यताज्ञानमात्रात्; 'वेदव्यवहारसिद्धत्वात्' वैदिककार्यताज्ञानात्। '**गुरु**मतं' **गुरु**नामक**प्रभाकर**स्य मतम्। 'इदं' विनापीष्टसाधनताज्ञानं वेदाधीनकार्यताज्ञानात् प्रवृत्तिरिति मतम्, 'न तु' 'गुरो'रिष्टस्य, अस्मद्गुरोरिति **केचित्**। शुचितत्कालजीविन एवाकरणे तस्य प्रत्यवायः, प्रवृत्तौ चेष्टसाधनताज्ञानं कारणं 10 सामान्यत एव क्लृप्तमिति तस्य च न बाधः कल्प्यत इति भावः। नन्विदमेव विचार्यतां न हि वाङ्मात्रेणैव तद् दुष्टमिति तत्राह—**तत** इति। यदि गरिष्ठस्यास्मद्गुरोर्वा मतं स्यात्, तदा'नवसर एव' कदाचिद्वक्तुमर्हं गुरुमतभिन्नत्वान्नेदमनवसरे 'वक्तुमुचितम्', अवसरे तु **पञ्चमस्तवके** विवेचयिष्यत एव इति भावः। 'विप्रलम्भोऽपि नेदृश' इति व्याकरोति—**वृद्धै**रिति। 'बालानां' यागादौ प्रवृत्तिरिति शेषः। 'वृद्धानां' विप्रलम्भकत्वे-15 नाभिमतानां यागादौ 'प्रवृत्तेः'। 'विप्रलभन्ते', अन्यथा ज्ञानवन्तमात्मानमन्यथा ज्ञापयन्ति, सति विशेषदर्शने तदभावादिति भावः। 'तेऽपि' वृद्धा अपि 'वृद्धतरै'र्विप्रलब्धा यागादौ प्रवर्तन्त इति शेषः। वृद्धतरा एव कथं प्रवर्तन्त इत्यपेक्षायामाह—**एवमनादि**रिति। पूर्वपूर्वविप्रलब्धत्वादुत्तरोत्तरेषां प्रवृत्तिरिति। 'विप्रलिप्सुर'न्यथा ज्ञातमन्यथा बुबोधयिषुः 'यतः प्रतारणशङ्का स्यात्' यत्र शङ्कितं प्रतारकत्वं स्यादित्यर्थः। 'इदं' तपश्चर्यादि, 'प्रथम 20 एव' इतरापेक्षकार्यत्वज्ञानशून्य एव स्ववचसि प्रामाण्यज्ञानाय स्वय'मनुष्ठायापि' पर'मनुष्ठापयति' केवलं 'परवञ्चनकुतूहली' परवञ्चनमात्रेष्टसाधनताज्ञानवान्। भवतु वा उन्मादादिदोषादेवं, तथाप्याह—**कथमि**ति। 'अनुविदध्युः' तदुपदिष्टानि कार्याणि त एव कुर्युः। 'एवं' तथाविधप्रतारणाधीनप्रवृत्तिमान्। **हेतु**रिति। 'हेतुदर्शनं' भ्रमप्रमादादिपाषण्डप्रवृत्तौ, 'तददर्शनं' यागादिप्रवृत्ताविति 'विशेषात्' वैलक्षण्यात्। ननु हेतुदर्शनशून्यप्रवृत्तिविषयेऽपि 25 यागादौ शङ्का स्यात्। तथाहि घुणाक्षरन्यायेन 'स्वर्गकामो यजेते'ति वाक्यं केनचिदुच्चरितं कश्चित् श्रुत्वा तत्प्रामाण्यमवगत्य स्वयं प्रवृत्तः प्रवर्तयामास च परानिति तत्राह—**अनादा**विति।

'एवंभूतानुष्ठाने' परलोकसाधनताज्ञानाधीनेऽनुष्ठाने 'प्रतायमाने उत्तरोत्तरानुवर्तमाने अनादौ च सति तत्र प्रसिद्धं तादृशसाधनत्वं 'प्रकारान्तरं' तादृशसाधनतानाश्रयं कल्पित-

व्रतादिकम् 'आश्रित्य' विषयीकृत्य तादृशसाधनत्वेन प्रमितानुष्ठानसदृशतया प्रतारणा स्यात्। प्रकारान्तरमाह—**अपि बहुवित्तेति**। परलोके साधनमिव 'बह्वायास-वित्तव्यय'साध्यतया तादृशधर्मान्तरसारूप्येण प्रतारणा स्यात्, 'न त्वनुष्ठानागोचरेण कर्मणा'। तादृशाधनतया प्रमितेन कर्मणा तत्सादृश्येन प्रतारणा स्यात्। एतेन विलक्षणमिष्टसाधनतया प्रमितं किञ्चिद्वाच्यं यत्सारूप्येण प्रतारणा, तत्र तत्प्रामाण्यग्राहको 5 महाजनपरिग्रह एव वाच्यस्तस्य च निखिलवैदिककर्मसाधारणत्वान्न प्रतारणाशङ्केति भावः। ननु तादृशसाधनत्वेन बौद्धागमप्रमितं मण्डलीकरणादि तत्सारूप्येण प्रतारणा स्यात्, किञ्चेत्थं बौद्धागमस्यापि प्रामाण्यप्रसङ्गः, तत्राप्येवं वक्तुं सुकरत्वादित्याशङ्कायामाह— **अन्यथेति**। तत्रेष्टसाधनतया प्रमितत्वोपगमे तदागमप्रामाण्योपगमे वा प्रमाणविरोध-मन्तरेण प्रमाणस्याप्रमाणत्वानुपगमेनाप्रामाण्यस्य प्रामाण्यत्वानुपगमेन च तन्निबन्धना या 10 पाषण्डत्वप्रसिद्धिः सा न स्यात्। एतेन पाषण्डत्वप्रसिद्ध्या तदुपगृहीते न महाजनपरिग्रह इति नाविशेष इत्यपि ध्वनितम् ॥८॥

## परिमलः

ननु दृष्टसहकारिघटितैव सामग्री स्वीकर्तुमुचितेति तदधिष्ठानं चास्माभिरपि कर्तुं शक्यमिति सिद्धसाधनमाक्षिपति, दृष्टेनैव कारणेन कार्योत्पादसम्भवेऽदृष्टकारणत्वकल्पना व्यर्थेत्यत आह— विश्ववृत्तितः। वृत्तिरिह प्रवृत्तिर्विवक्षिता, विश्वेषां लोकानां जनानां प्रवृत्तेरदृष्टं सिद्ध्यतीत्यर्थः। 15

भूतचैतन्यवादिनश्चार्वाका भूतानां शरीरादीनां मरणानन्तरमिहैव भस्मीभावादतिरिक्ता-त्मानङ्गीकारान्न परलोकार्थी कश्चिदिति परलोकस्तत्साधनमदृष्टादि न किमपि सिद्ध्यतीत्यत्र दोषमाह—यदि हीति। पूर्वपूर्वभूतानां कारणीभूतपृथिव्यादीनां परिणतिपरम्पराकार्यं पिण्ड-कपालघटादि बुद्बुदकललादि परिणतिपरम्पराशरीरं न अदृष्टमत्र कारणम्, तदा परलोकार्थी कश्चिद् यागदानहोमादिषु वापीकूपतडागादिषु न प्रवर्तेत। निष्फले दुःखमात्रफले कर्मणि 20 प्रेक्षावत्प्रवृत्तेरनङ्गीकारात्। प्रवृत्तिमात्रम्प्रति इष्टसाधनत्वज्ञानस्य कारणत्वात्, द्वेषज्ञानस्य प्रतिबन्धकत्वाच्च, न कुर्यान्निष्फलं कर्मेति प्रतिषेधाच्च, प्रेक्षापूर्वकारी विचारशीलो यत्र एकोऽपि पुरुषो न प्रवर्तते, सुतरां तत्र जगन्न प्रवर्तते इत्यर्थः। प्रागेवेति निपातसमुदायोऽतिशयार्थः। अन्यथा तत्र प्रवृत्तिमाशङ्कते—लाभेति। यो यागादि करोति धार्मिकोऽसाविति मत्वा जनस्तस्मै द्रव्यं प्रयच्छतीति लाभः। पूजा प्रतिष्ठा, ख्यातिः प्रसिद्धिः इत्यादिदृष्टप्रयोजनान्यपि सन्ति, 25 तदर्थान्येव तानीत्यत आह—विफलेति। यागकालिकदानादिकं प्रति स्वरूपेण यागादेर्हे-तुत्वेऽपि कालान्तरदानं प्रति चिरध्वस्तादृष्टद्वारैव हेतुत्वं वक्तव्यमित्यदृष्टसिद्धिरायातैव। यद्वा स्वरूपतो यागादेर्लाभहेतुत्वे धनाभिलाषुकस्य नास्तिकस्यापि तत्र प्रवृत्त्यापत्तेः, धनमिच्छन्तस्तेऽपि तत्कुर्युः—यतोवेति। यजमानाय यो ददाति स किमुद्दिश्य ददाति, पूजयति स किमुद्दिश्य। एतस्य महापुरुषस्य दानपूजादिभिर्धर्मो भविष्यति। यस्य तु एवं बुद्धिर्न भवति न स तस्मै 30 प्रयच्छति सोऽपि दृष्टार्थमेव करोतीति शङ्कते—ख्यात्यर्थमिति। तदेव स्पष्टयति—जन इति।

एतद्दूषयति—नीतीति। नीतिसचिवाःन्यायकर्तारः नर्मसचिवा आमोदप्रदपरिहासादिक्रिया-कुशलाः, एभ्यो दृष्टमेव प्रयोजनमुद्दिश्य राजादयो ददति। तपस्विवनस्थादिभ्यो यद्ददति तददृष्टार्थमेव, प्रयोजनं विना दानानुपपत्तेः दृष्टस्याभावाददृष्टमेव तत्कल्प्यते। तिसृणां विद्यानां समाहारस्त्रिविद्यं त्रिविद्यं ये विदुस्ते त्रैविद्यास्ते च तपस्विनस्त्रैविद्यास्तपस्विनः।
5 परवञ्चनार्थं विद्वान्सोऽपि तपसि प्रवर्तन्ते इत्यपि न। परद्रव्यस्यान्यायेन ग्रहणार्थं वञ्चना क्रियते तेषां द्रव्येष्वपेक्षाविरहात्तदनुपपत्तेः। फलमनुद्दिश्य विहितेषु नित्येषु सन्ध्यावन्दनादिषु विज्ञा यथा प्रवर्तन्ते तथाऽफलेष्वपि विहितेषु श्रौतस्मार्तकर्मसु प्रवर्त्तन्ते इति। न च सन्ध्या-वन्दनादेरपि विश्वजिदादिवत्फलं कल्प्यमिति वाच्यम्। नित्यत्वव्याघातापत्तेः काम्यत्वापत्तेश्च अकरणे निन्दानुपपत्तेश्च। न च तर्हि प्रवृत्त्यनुपपत्तिरिष्टसाधनताज्ञानाभावादिति वाच्यम्।
10 कार्यताज्ञानस्यैव प्रवर्त्तकत्वात्, कार्यताया एव लिङर्थत्वात्, तदेव च प्रवृत्तिप्रयोजकं, न तु इष्टसाधनताज्ञानम्।

यद्यपि सन्ध्यावन्दनादि नित्यं कर्माफलमिति प्रभाकरगुरोर्मतम्, न तु ममममतमिति तन्मतनिराकरणासमये एवैतदुपन्यासोयुज्यते नेदानीं चार्वाकादिमतनिराकरणसमये, तदप्रसक्तेः। तथापि संक्षिप्य किञ्चदुक्तार्थे दूषणं प्रदर्श्यते। न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तते
15 इत्यनुभवान्न कुर्यान्निष्फलं कर्मेति निषेधाच्च निष्फले कर्मणिसाधारणा अपि जना न प्रवर्त्तन्ते प्रागेव तु प्रेक्षावन्तः। यदपि वेदबोधितकर्तव्यतया निष्फले नित्ये कर्मणि प्रवृत्तिस्तदपि न निष्फले वेदबोधितकर्तव्यत्वासम्भवात्, प्रवृत्तिप्रयोजकप्रयोजनाभावे वेदेन कार्यताया बोधयितुम-शक्यत्वादित्यन्यत्र विस्तरः। अन्यैः प्रतारितो बाल्यादेव निष्फले कर्मणि प्रवर्तते, तदानीं प्रयोजनतात्त्विकज्ञानायोग्यत्वादनन्तरं चाभ्यासादेव तत्करोतीति, न, वृद्धस्य स्वयमनुष्ठातृत्वेन
20 प्रतारकत्वायोगात् स्वयं तदननुतिष्ठन् केवलं परस्मै य उपदिशति अनुष्ठानं स एव लोके प्रतारक उच्यते, उपायं जानानोऽनुपायं य उपदिशति स प्रतारक इत्युच्यते। वृद्धैर्वञ्चितो बालो निष्फले कर्मणि प्रवर्तते, तदानीं फलविवेचनशक्तेर्वैधुर्यादनन्तरं चाभ्यासादेव तदनुवर्तते इत्यापि न। वृद्धानां स्वयं तदनुष्ठानप्रवृत्तिदर्शनात् अन्यथाजातमर्थमन्यथा यो ब्रवीति न स्वयमनुतिष्ठति स वञ्चक इति कथ्यते। वृद्धास्तु स्वयं कुर्वन्तः कथं विप्रलम्भका भवेयुः। न च परवञ्चन
25 कुतूहली प्रतारकः स्वात्मानं न प्रतारयति किन्तु परमेवेति चेन्न, वृद्धस्यापि स्वपूर्ववृद्धेन प्रतारित-त्वात्, एवं सोऽपि पूर्ववृद्धैरित्यनन्तसन्तानादिरेव प्रतारणाप्रवाहः। न। दृष्टफलनिरपेक्षानादि-कालप्रवृत्तेरदृष्टफलकत्वनियमात्। अपि चान्यथाज्ञातमर्थमन्यथा य उपदिशति स प्रतारकोऽथवा भ्रान्तोऽफलमेव यः फलवत्त्वेनोपदिशति? नाद्यः स्वयं तत्कर्तृत्वात्। अन्त्ये तु अदृष्टफलकत्वं बलात्सिद्धयेत्। परवचनार्थं पूर्वं स्वयमनुष्ठाय परस्मै उपदिशति। न। दुस्सहदुःखप्रदसर्व-
30 बन्धुपरित्यागाद्यपेक्षया परवञ्चनाकुतूहलस्यानपेक्षत्वादित्यादि मूले एव स्फुटः। सुकरप्रवृत्तिहेतुः कर्मलाघवादिहेतुः पाखण्डिमते विशेषः परत्र तु ब्रह्मचर्यादिदुःखमयकर्मप्रधानत्वात्। यद्यपीष्टा-पूर्तादिषुदृष्टप्रयोजनशून्येषु कर्मलाघवादिसुकरोपायो नास्ति तथापि कश्चिद् धूर्तः इष्टादिकरणे पुण्यतिशयो भवति इत्येदर्थमागमं निर्माय भ्रान्त्या परस्य प्रामाण्यं ग्राहयित्वा प्रेक्षावतः प्रवर्त्तय-तीत्यत आह—अनादाविति। अयं भावः अनादि किञ्चिदविगीतमनुष्ठानं यागादि यदि प्रसिद्धमस्ति तत्र प्रकारान्तरमात्मत्वाभाववदुपदिशति तत्प्रतारणम्भवति। यथा यागादिभ्य आयास-
35 साध्येभ्यो यत्फलमिष्यते तत्फलं भिक्षुविहाराश्रमस्थापनया भविष्यति, स्वल्पश्रमेणसिद्धौ

गुरुपायानुष्ठानमयुक्तमित्याद्युपदेशः प्रतारणा। न च ज्योतिष्टोमादिवैदिकोपायापेक्षया कश्चनाविगीतप्राक्प्रसिद्ध उपायोऽस्ति, यत्र प्रकारान्तरोपदेशेन वैदिकोपायः प्रतारणा स्यात्। बौद्धाद्यागमस्तु प्रतारणा पूर्वसिद्धवैदिकोपाये प्रकारादेशनात्। यथा पिपासाशमकन्तोयपानमित्यनादिव्यवहारः अन्नभक्षणं पिपासाशमनकरमित्याधुनिक उपदेशः प्रतारणा। वैदिकोपाये यागादौ एतत्पूर्वतनं नास्ति, यदपेक्षयायमुपदेशः प्रतारणा स्यादिति। तस्मादयमुपदेशः प्रामाणिको न प्रतारणापर इति भावः। पूर्वमनुष्ठानमगोचरीकृत्य अविषयीकृत्य तद्धर्मिकप्रकारान्तरोपदेशरूपं प्रतारणमसंभवि। यदि पूर्वसिद्धं वैदिकमनुष्ठानं प्रामाणिकत्वेन न स्वीक्रियेत तर्हि पाखण्डापाखण्डमतभेदो न स्यात् उभयस्याप्रामणिकत्वाविशेषादित्याह—अन्यथेति। यदि वैदिकमनुष्ठानं प्रतारणापरं स्यादित्यर्थः ॥ ८ ॥

अस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न। क्षणिकत्वादपेक्षितस्य कालान्तरभावित्वात्—

**चिरध्वस्तं फलायालं न कर्मातिशयं विना।**
**सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥९॥**

तस्मादस्त्यतिशयः कश्चित्। ईदृशान्येवैतानि स्वहेतुबलायातानि, येन नियतभोगसाधनानीति चेत्, तदिदममीषामतीन्द्रियं रूपं सहकारिभेदो वा? न तावदैन्द्रियकस्यातीन्द्रियं रूपम्, व्याघातात् द्वितीये त्वपूर्वसिद्धिः ॥९॥

आमोदः

अस्त्विति। तथा च नादृष्टं न वा तदधिष्ठातेति भावः। क्षणिकत्वादाशुतरविनाशित्वात्, अपेक्षितस्य स्वर्गादेः।

एतदेव कारिकयोपगृह्णाति—चिरेति। चिरध्वस्तं कर्मफलाय चिरभावितेन नालं न समर्थं, तर्हि भूतान्येव शरीराण्येव यागादिभिः संस्क्रियन्ताम् अत आह—सम्भोग इति। निर्विशेषाणामनाहितापूर्वाणामात्मनां सम्भोगः सम्यग्भोगः प्रतिनियतो भोग इत्यर्थः।

ननु शरीराण्येव संस्कृतानि प्रतिनियतभोगसाधनानि स्युरित्याशङ्कते—ईदृशान्येवेति। रूपं कुर्वद्रूपत्वं जात्यन्तरं वा स्वरूपं वा, सर्वत्र दोषमाह—व्याघातादिति। ऐन्द्रियकस्यातीन्द्रियजातिमत्त्वस्यातीन्द्रियत्वस्य च व्याघातादित्यर्थः ॥९॥

बोधनी

प्रत्यात्मनियमाद् भुक्तेरित्यत्रापूर्वसद्भावहेतुः कालान्तरे फलोपभुक्तिरपूर्वस्यात्मसमवाये हेतुश्च भुक्तेः प्रत्यात्मनियमः संगृहीतः। तत्रापूर्वसिद्धौ तस्यात्मसमवायः शक्यसाधन इति तत्सिद्धिहेतुं तावद् भुक्तिमवतारयितुमाशङ्कते—**अस्तु इति**। अत्रैवकारोऽपूर्वव्यवच्छेदार्थः, जगद्वैचित्र्यस्यामुष्मिकफलस्येत्यर्थः। परिहरति—**नेति**।

5 एतदेव विभजते—**चिरध्वस्तमिति**। फलाय कालान्तरभाविन इति शेषः। अपूर्वसिद्धावपि तस्य प्रत्यात्मसमवायः न तु प्रतिभूतमिति कथं सिध्येदित्यत्र प्रत्यात्मनियमाद् भुक्तेरिति हेतुं व्याचष्टे—**सम्भोग-इति**। अपूर्वसंस्कृतेष्वपि शरीरेन्द्रियादिभूतेषु नित्यत्वविभुत्वाभ्यां सकलशरीरप्राप्तानामात्मनामपूर्वेणाविशेषितत्वे संविभज्य भोगः प्रतिनियतभोगो न सिध्येद्, दृश्यते चासौ, तस्मादात्मसमवाय्यपूर्वमिति निगदव्याख्यात-

10 त्वेन पूर्वार्धार्थं निगमयति—**तस्मादिति**। तत्र शङ्कते—**ईदृशानीति**। क्षणभङ्गुराण्यपि कर्माणि स्वकारणवशादीदृशान्येव सिद्धानि येनापूर्वजननमन्तरेण कालान्तरभावित्वेन नियतानामेव फलानां साधनानि स्युः। तेषां कालान्तरफलानुगुणं किञ्चिद् रूपमस्तीत्यर्थः। ईदृशशब्दविवक्षितं रूपं तद्विकल्पयति—**तदिदमिति**। न तावद् दृश्यमानं रूपं फलानुगुणं क्षणिकत्वात्; अतस्तदतीन्द्रियमभ्युपगन्तव्यम्।

15 तच्चातीन्द्रियममीषां कर्मणां स्वरूपं वा सहकारिभेदो वेति। न तावत् पूर्वः कल्पः, ऐन्द्रियकत्वादतीन्द्रियत्वलक्षणविरुद्धधर्मसंसर्गाद्भेदप्रसङ्गे नैकत्वव्याघातादित्यत आह—**न तावदिति**। द्वितीयस्तु सिद्धसाधनमित्याह। **द्वितीये तु- इति**। कर्मणां फलोत्पत्त्यनुगुणोऽतीन्द्रियः सहकारिभेद एवापूर्वम्। तु शब्दोऽभ्युपगमसूचनार्थः। अत्र कश्चिद् विपश्चिदन्यो व्याचष्टे—समस्तस्यैव श्लोकस्यार्थं निगमयति—

20 **तस्मादस्त्यतिशयः कश्चिदिति**। आत्मसमवेत इति शेषः। **ईदृशानीति**। **भूतानि** ईदृशान्येवात्मसमवेतमपूर्वमन्तरेणास्मदाद्यनुपलक्षणीयरूपविशेषविशिष्टानि जायन्ते। येन भूतानि नियतोपभोगसाधनानीति। सुगममन्यत्॥ ९ ॥

विवेकः

**दानाध्ययनादिरेवेति**। 'एव'कारेण तज्जन्यजनकताव्यवच्छेदः, 'जगद्वैचित्र्यस्य' जगतः 'क्षणिकत्वात्' आशुतरविनाशित्वात्। तादृशस्यापि विशेषणज्ञानादे-

25 र्जनकत्वदर्शनादाह—**अपेक्षितस्येति**। फलत्वेनाभिमताव्यवहितप्राक्कालावृत्तित्वादिति यावत्। यागदानादि न साक्षात् स्वर्गजनकं तदव्यवहितप्राक्कालावृत्तित्वात्, स्वर्गो वा न साक्षात् यागादिजन्यः, तदधिकरणक्षणाव्यवहितानुत्तरत्वात् संमतवदित्यादयः प्रयोगाः।

अप्रयोजकत्वशङ्कया सामान्यमुखीं व्याप्तिं दर्शयति—

**चिरेति।** स्वफलप्राक्कालवृत्तिध्वंसप्रतियोगि 'कर्म न फलाय' तादृशे 'अलम्'। तत्फलोपहिते स्मृतिजनकज्ञाने व्यभिचारादाह—**अतिशयं विनेति।** 'अतिशय' स्तत्फलानुकूलः स्वजन्यः तं 'विना' तदसहकृतः। ननुभूतनिष्ठ एव कश्चिद् योग्यस्तद्व्यापारत्वेन कल्प्यतां, पदार्थान्तर-कल्पने गौरवात्, तदधिष्ठानञ्चास्मदादिनैव शक्यमित्याशङ्क्याह—**सम्भोग** इति। व्यवस्थितो भोगः 'भूतैः संस्कृतैरपि' भूतनिष्ठतद्व्यापारैरपि 'निर्विशेषाणां' तद्व्यापारशून्यानामात्मनां न स्यात्, तद्भूतसंयोगस्य निखिलात्मसाधारण्येन कर्तुरिवाकर्तुरपि भोगः स्यादित्याखण्डलार्थः।

उपसंहरति—**तस्मादिति।** कालान्तरभाविजनकत्वात् 'अतिशयो'ऽस्ति जनकतासम्बन्धेन तज्जनकत्वमस्तीति यावत्। क्लृप्तेनार्थान्तरवारणायाह—**कश्चिदिति।** क्लृप्तभिन्न इत्यर्थः। तद्व्यापारवतां भूतानामविशिष्टत्वेऽपि भोगनियममुपपादयति—**ईदृशान्येवेति।** 'ईदृशानि' विलक्षणानि तानि भूतानि। वैलक्षण्यप्रयोजकाकांक्षायामाह—**स्वहेत्विति।** 'तद्' वैलक्षण्यम् 'इदं' नियतभोगप्रयोजकत्वेन त्वदभिमतम्। 'अमीषां' भूतानाम् ऐन्द्रियक'मतीन्द्रियं वा 'रूपं' धर्मः। सोऽपि जातिरूपस्तदन्यो वा। यद्वा 'अमीषां' भूतानां नियतभोगजननानुकूलः 'सहकारिभेदो'ऽन्यनिष्ठः। आद्यं योग्यानुपलब्ध्यैव निषिद्धम्। द्वितीये त्वाह—**न तावदिति।** 'अतीन्द्रियं रूपं' जातिः 'व्याघाताद्' ऐन्द्रियकवृत्तिजातित्वव्याघातात्। चतुर्थमाह—**द्वितीये त्विति** ॥९॥

## परिमलः

दृष्टस्यैव दानादेर्जगद्वैचित्र्यहेतुत्वसंभवेऽदृष्टस्वीकारो व्यर्थ इति तदधिष्ठातृत्वेनेश्वरकल्पनमपि निराकरोति—**क्षणिकत्वादिति।** दानादिक्रियादिः क्षणविनश्वरो न कालान्तरभावितद्भोगसमयवर्तीति न तत्कारणम्।

क्षणमात्रावस्थायित्वस्वरूपस्य स्वमतेऽसत्त्वादतः क्षणिकत्वमाशुविनाशित्वरूपमिह बोध्यम्। "यजेत स्वर्गकाम" इत्यादौ यागस्वर्गयोः समभिव्याहारात्साध्यसाधनभावः प्रतीयते, परन्तु कालान्तरभाविस्वर्गोत्पादसमये आशुतरविनाशिनो यागस्य साक्षात्तत्साधनत्वासंभवेन तत्र साधनत्वोपपत्तये अपूर्वं द्वारभूतं कल्प्यते। चिरध्वस्तं यागादि अतिशयमपूर्वं विना स्वर्गादिफलसाधनं नेत्यर्थः। तथाच यागजन्यव्यापारस्यफलपर्यन्तस्थायित्वस्वीकारेण तद्द्वारा यागादेः तत्साधनत्वोपपत्तिः। नचापूर्वेणैव फलोपपत्तौ यागादेरन्यथासिद्धत्वमिति वाच्यम्, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावात्। ननु अदृष्टसिद्धावपि तस्य भूतधर्मत्वमेव स्वीक्रियते, नात्मधर्मत्वमित्यत आह—**संभोग इति।** समीचीनो नियतो भोगः तत्तददृष्टशून्यस्यात्मनो न संभवति, भूतानां सर्वसाधारण्यात् सर्वस्य समानभोगापत्तेः। स्वकारणप्रभावोत्पन्नासाधारण-

स्वरूपविशेषवच्छरीरेन्द्रियादिनियतभोगसाधनमस्त्विति शंकते—शरीरादीनां नियतफलभोगानुकूलस्वरूपं यदिष्यते तत्किं तेषामतीन्द्रियं स्वरूपं सहकारिविशेषो वेति निराकरणसौकर्याय विकल्पयति—आद्ये ऐन्द्रियकस्वरूपस्यातीन्द्रियत्वाभिधाने व्याघातः स्यात्, न हि ऐन्द्रियकस्वरूपोऽतीन्द्रियस्वरूपोऽभिधातुं शक्यते। द्वितीये अतीन्द्रियसहकारि अपूर्वमिति स्वमतसिद्धिः ॥९॥

5 सिध्यतु भूतधर्म एव गुरुत्वादिवदतीन्द्रियः। अवश्यं त्वयाप्येतदङ्गीकरणीयम्। कथमन्यथा मन्त्रादिभिः प्रतिबन्धः। तथा हि, करतलानलसंयोगाद् यादृशादेव दाहो दृष्टस्तादृशादेव मन्त्रादिप्रतिबन्धे सति दाहो न जायते, असति तु जायते। तत्र न दृष्टवैगुण्यमुपलभामहे। नापि दृष्टसाद्गुण्येऽदृष्टवैगुण्यं सम्भावनीयम्, तस्यैतावन्मात्रार्थत्वात्। अन्यथा, कर्मण्यपि विभागः कदाचिन्न जायेत। न च प्रतिबन्धकाभाव-
10 विशिष्टा सामग्री कारणम्। अभावस्याकारणत्वात्। तुच्छो ह्यसौ। प्रतिबन्धकोत्तम्भकप्रयोगकाले च तेन विनापि कार्योत्पत्तेः। प्राक्प्रध्वंसादिविकल्पेन चाऽनियतहेतुकत्वापातात्। अकिञ्चित्करस्य प्रतिबन्धकत्वायोगात्। किञ्चित्करत्वे चाऽतीन्द्रियशक्तेः स्वीकारात्। मन्त्रादिप्रयोगे चेतरेतराभावस्य सर्वेऽपि कार्यानुदयात्। अतोऽतीन्द्रियं किञ्चिद्दाहानुगुणमनुग्राहकमग्नेरुन्नीयते, यस्यापकुर्वतां प्रतिबन्धकत्व-
15 मुपपद्यते यस्मिन्नविकले कार्यं जायते, यस्यैकजातीयत्वादनियतहेतुकत्वं निरस्यत इति। अत्रोच्यते—

**भावो यथा तथाऽभावः कारणं कार्यवन्मतः।**
**प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ॥१०॥**

न ह्यभावस्याकारणत्वे प्रमाणमस्ति। न हि विधिरूपेणासौ तुच्छ इति
20 स्वरूपेणापि तथा, निषेधरूपाऽभावे विधेरपि तुच्छत्वप्रसङ्गात्। कारणत्वस्य भावत्वेन व्याप्तत्वात्तन्निवृत्तौ तदपि निवर्तत इति चेन्न, परिवर्तप्रसङ्गात्। अन्वयव्यतिरेकानुविधानस्य च कारणत्वनिश्चयहेतोर्भाववदभावेऽपि तुल्यत्वात्। अभावस्यावर्जनीयतया सन्निधिर्न तु हेतुत्वेनेति चेत्, तुल्यम्। प्रतियोगिनमुत्सारयतस्तस्यान्यप्रयुक्तः सन्निधिरिति चेत्, तुल्यम्, भावस्याभावोत्सारणं स्वरूपमेवेति चेदभावस्यापि
25 भावोत्सारणं स्वरूपान्नातिरिच्यते। तस्माद् यथा भावस्यैव भावो जनक इति नियमोऽनुपपन्नस्तथा भाव एव जनक इत्यपि। को ह्यनयोर्विशेषः ?

प्रतिबन्धकोत्तम्भकप्रयोगकाले तु व्यभिचारस्तदा स्यात्, यदि यादृशे सति कार्यानुदयस्तादृश एव सत्युत्पादः स्यात्। न त्वेवं, तदापि प्रतिपक्षस्याभावात्। असत्प्रतिपक्षो हि प्रतिबन्धकाभिमतो मन्त्रः प्रतिपक्षः। स च तादृशो नास्त्येव।
30 यस्त्वस्ति, नासौ प्रतिपक्षः। तथापि विशेष्ये सत्येव विशेषणमात्राभावस्तत्र, स चोत्तम्भकमन्त्र एवेत्यन्यैव सामग्रीति चेन्न, विशिष्टस्याप्यभावात्। न हि दण्डिनि सत्यदण्डानामन्येषां नाभावः, किन्तु दण्डाभावस्यैव केवलस्येति युक्तम्।

यथा हि केवलदण्डसद्भावे उभयसद्भावे द्वयाभावे वा केवलपुरुषाभावः सर्वत्राविशिष्टस्तथा केवलोत्तम्भकसद्भावे प्रतिबन्धकोत्तम्भकसद्भावे द्वयाभावे वा केवलप्रति-

बन्धकाभावोऽविशिष्ट इत्यवधार्यताम्। अथैवम्भूतसामग्रीत्रयमेव किं नेष्यते? कार्यस्य तद्व्यभिचारात्। जातिभेदकल्पनायाञ्च प्रमाणाभावात्। यथोक्तेनैवोपपत्तेः। भावे वा काममसावस्तु। का नो हानिः। प्राक्प्रध्वंसविकल्पोऽपि नानियतहेतुकत्वापादकः। यस्मिन् सति कार्यं न जायते तस्मिन्नसत्येव जायते इत्यत्र संसर्गाभावमात्रस्यैव प्रयोजकत्वात्। 5

यस्तु संसर्गाभावतादात्म्यनिषेधयोर्विशेषमनाकलयन्नितरेतराभावेन प्रत्यवतिष्ठते, स प्रतिबोधनीयः। तथाप्यभावेषु जातेरभावात् कथं त्रयाणामुपग्रहः स्यात्, अनुपगृहीतानाञ्च कथं कारणत्वावधारणमिति चेत्, मा भूज्जातिः। न हि तदुपगृहीतानामेव व्यवहाराङ्गत्वम्। सर्वत्रोपाधिमद्व्यवहारविलोपप्रसङ्गात्। एतेन 'प्रतिबन्धके सत्यपि तज्जातीयस्यान्यस्याऽभावसम्भवात् कार्योत्पादप्रसङ्गः, अनुत्पादे वा ततोऽप्यधिकं किञ्चिदपेक्षणीयमस्तीति निरस्तम्। 10

यथा हि 'तज्जातीये सति कार्यं जायते, अर्थादसति न जायते' इति स्थिते तद्भावेऽपि तज्जातीयान्तराभावान्न भवितव्यं कार्येणेति न, तथैतदपि, अनुकूलवत् प्रतिकूलेऽपि सति तज्जातीयान्तराभावानामकिञ्चित्करत्वादिति। यत्त्वकिञ्चित्करस्येति, तदप्यसत्। सामग्रीवैकल्यं प्रतिबन्धपदार्थो मुख्यः। स चात्र मन्त्रादिरेव। न त्वासौ प्रतिबन्धकः। ततः किं तस्याकिञ्चित्करत्वेन? तत्प्रयोक्तारस्तु प्रतिबन्धारः। ते च किञ्चित्करा एवेति किमसमञ्जसम्? 15

ये तु व्युत्पादयन्ति, 'कार्यानुत्पाद एव प्रतिबन्ध' इति, तैः प्रतिबन्धमकुर्वन्त एव प्रतिबन्धका इत्युक्तं भवति। तथा हि—कार्यस्यानुत्पादः, प्रागभावो वा स्यात्? तस्य कालान्तरप्राप्तिर्वा? न पूर्वः। तस्यानुत्पाद्यत्वात्। न द्वितीयः, कालस्य स्वरूपतोऽभेदात्। तदुपाधेस्तु मन्त्रमन्तरेणापि स्वकारणाधीनत्वात्। प्रागभावावच्छेदककालोपाधिस्तदपेक्ष इति चेन्न—मन्त्रात्पूर्वमपि तस्य भावात्। तस्मात् सामग्रीतत्कार्ययोः पौर्वापर्यनियमात्तदभावयोरपि पूर्वापरभाव उपचर्यते। वस्तुतस्तु तुल्यकालत्वमेवेति नायं पन्थाः। न चेदेवं शक्तिस्वीकारेऽपि कः प्रतीकारः? तथा हि—प्रतिबन्धकेन शक्तिर्वा विनाश्यते, तद्धर्मो वा, धर्मान्तरं वा जन्यते, वा किमपि? इति पक्षाः। तत्राकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तेः, विपरीतधर्मान्तरजनने, तदभावे सत्येव कार्यमित्यभावस्य कारणत्वस्वीकारः, प्रागभावादिविकल्पावकाशश्च। तद्विनाशे तद्धर्मविनाशे वा पुनरुत्तम्भकेन तज्जननेऽनियतहेतुकत्वं, पूर्वं स्वरूपोत्पादकादिदानीमुत्तम्भकादुत्पत्तेः। न च समानशक्तिकतया तुल्यजातीयत्वान्नैवमिति साम्प्रतम्। विजातीयेषु समानशक्तिनिषेधात्। न च प्रतिबन्धकशक्तिमेवोत्तम्भको विरुणद्धि, न तु भावशक्तिमुत्पादयतीति साम्प्रतम्। तदनुत्पादप्रसङ्गात्। कालविशेषात्तदुत्पादे तदेवानियतहेतुकत्वमिति ॥१०॥ 20 25 30

आमोदः

मीमांसकाभिमतशक्तिदृष्टान्तेन बौद्ध एवातीन्द्रियभूतधर्ममाह—सिध्यत्विति। त्वयापि नैयायिकेनापि। बौद्धस्तु मीमांसकमतमाश्रित्य

दृष्टान्तमुपपादयति—**तथा हीति** । विप्रतिपत्तिकारणतावच्छेदकत्वमतीन्द्रियमात्रवृत्ति न वा ? दाहकारणतावच्छेदकत्वं वह्नित्वभिन्नं न वा ? दाहकारणतावच्छेदकमव्यासज्यवृत्ति न वा ? दाहकारणतावच्छेदको धर्मोऽतीन्द्रियो न वा । प्रतिव्यक्तिमात्रविश्रान्तो न वा ? दाहकारणत्वं वह्नित्वावच्छिन्नं न वा ? दाहकारणतावच्छेदकत्वमनित्यत्वसमानाधिकरणं न वा ? कारणानि स्वजन्यानुकूलातीन्द्रियभावभूतधर्मवन्ति न वा ? वह्निर्दाहानुकूलाद्विष्ठातीन्द्रियधर्मसमवायी न वा ? गुणनिष्ठा कारणताजन्यधर्मावच्छेद्या न वेति शक्तावर्थापत्तिं प्रमाणयति—**यादृशेति** । तथा च सति प्रतिबन्धके दाहाभावो यद्व्यतिरेकप्रयुक्तः स धर्मोऽवश्यं वह्नौ स्वीकार्यः, स च शक्तिरेवेति भावः । **मन्त्रादिनेति** । मणिमन्त्रौषधादिनेत्यर्थः । अन्यथोपपत्तिं निरस्यति—**न च तत्रेति** । अदृष्टवैगुण्यं दाहकादृष्टनाशो, दाहप्रतिबन्धकादृष्टोत्पादो वा, तद्दाहजनकादृष्टा[त्य?]न्ताभाव एव वा । **तस्य तावन्मात्रेति** । अदृष्टस्य यावद्दृष्टसमवधानफलकत्वादित्यर्थः । दृष्टानि च प्रकृते समवहितान्येवेति भावः । दृष्टसमवधानेऽप्यदृष्टापेक्षायां दण्डमाह—**अन्यथेति** । **कर्मणीति** । अविनश्यदवस्थकर्मणीत्यर्थः । न च तत्र तत्रादृष्टं नियमतः समवहितमेवेति वाच्यं, नियामकाभावात् । ननु दृष्टसमवधाने यद्यदृष्टस्य प्रयोजकत्वं तदा क्वचिदप्यदृष्टं कारणं न भवेत् । दृष्टसमवधानं हि दृष्टोत्पादनं वा, तत्सन्निधानं वा, तदुभयमपि कार्यमेव । तत्रापि दृष्टसमवधानेनैव कारणं वाच्यम् । एवं तत्र तत्रापीति चेत्—न । अदृष्टस्य सर्वत्र कार्ये साक्षादेव कारणत्वम् । न ह्यत्र कारणान्वयव्यतिरेकगम्या कारणता, किन्तु श्रुतिगम्या । श्रुतिश्चास्मात् कार्यं भवत्येवेति प्रतिपादयति । न त्वेतद्व्यतिरेकेण कार्यं न भवतीति व्यतिरेकांशमपीति गौरवात्, तावतैव प्रवृत्तेश्च । तथाच यत्र यावन्ति दृष्टानि समवहितानि तत्रादृष्टविलम्बेन विलम्बः । बन्ध्यासम्प्रयोगादौ च लोहितरेतसो रेतोपघातकल्पनात् पुत्रजन्मानुकूलमदृष्टं विद्यमानमपि जन्मान्तरे फलजनकं स्यादेवेति भावः । प्रतिबन्धकाभावेनान्यथासिद्धिमाशङ्क्य निराकरोति—**न चेति** । अभावस्याकारणत्वे हेतुमाह—**तुच्छो हीति** । तुच्छत्वमप्रामाणिकत्वमजनकत्वं वा । अभावस्य दाहहेतुत्वे व्यभिचारमप्याह—**प्रतिबन्धकेति** । **तेन विनापीति** । प्रतिबन्धकाभावेन विनापीत्यर्थः । **प्रागिति** । प्रतिबन्धककाले

प्रागभावप्रध्वंसौ न सम्भवतः, प्रतियोगिमति चात्यन्ताभावात्। **अन्योन्या-भावस्तु** प्रतिबन्धके सत्यपि तत्रास्तीति दाहप्रसङ्गः। **अनियतेति**। संसर्गा-भावत्वस्य चैकस्याभावात्। प्रागभावत्वादिना च हेतुत्वेऽनुगम इतिभावः। **अकिञ्चिदिति**। प्रतिबन्धकतापि मण्यादेः शक्तिविघटकत्वेनैव वाच्या। तथा च शक्तिसिद्धिरिति भावः। एतदेवाह--**किञ्चिदिति**। ननु मा भूत् 5 संसर्गाभावत्वेन हेतुताऽभावत्वेन स्यादित्यत आह--**मन्त्रादीति**। तथा च व्यभिचारान्न तथेति भावः। अर्थापत्तिसिद्धमर्थमुपसंहरति--**तत इति**। अनुग्राहकत्वं कार्याभावव्याप्याभावप्रतियोगित्वं कारणतदवच्छेदक-साधारणम्। यस्येति कर्मणि षष्ठी। **अपकुर्वतामिति**। मणिमन्त्रादीना-मिति शेषः। अविकलेऽकुण्ठेऽनष्टे वा। **यस्येति**। एकशक्तिमत्त्वेन कारण- 10 त्वानुगम इत्यर्थः।

**कार्यवदिति**। यथा कार्योऽभावस्तथा कारणमपीत्यर्थः। दृष्टं हि प्रायश्चित्तादौ पापनाशस्य तोयपानादौ पिपासा दुःखाभावस्य कार्यत्वमिति भावः। **विसामग्रीति**। प्रतिबन्धकाभावरूपकारणविघटकत्वेन विसामग्री, न तु शक्तिविघटकत्वेनेत्यर्थः। **तद्धेतुरिति**। मण्यादिप्रयोक्तेत्यर्थः। तेना- 15 किञ्चित्करस्ये'ति प्रत्युक्तम्।

**न हीति**। विधिमुखप्रत्ययवेद्यत्वाभावेऽपि निषेधमुखप्रत्ययवेद्यत्वेना-भावस्यापि प्रामाणिकत्वादित्यर्थः। **स्वरूपेणापीति**। अभावत्वस्वरूपेणे-त्यर्थः। अभावत्वस्य प्रमाणसिद्धित्वादिति भावः। ननु कारणत्वं भावत्व-व्याप्यं कथममावेऽपि स्यादिति शङ्कते—**कारणत्वस्येति**। कारणत्वमभावत्व- 20 व्याप्यं कथं भावेऽपि स्यादित्यपि सुवचं स्यादिति परिहारान्तरमाह— **परिवर्तनेति**। आपाततः प्रौढ़िवादेन परिवर्तनप्रसङ्ग उक्तः। वस्तुतस्तु ग्राहकतौल्यात् कारणत्वमुभयत्रेत्याह—**अन्वयेति**। यद्यपि परिवृत्तिप्रसङ्ग-मुक्त्वा तुल्यत्वाभिधानमयुक्तं तथापि सिद्धान्तो वक्तव्य एवेति भावः। सति शक्ते दहने प्रतिबन्धकाभावस्याकाशादेरिवान्यथासिद्धित्वमिति शङ्कते— 25 **अभावस्येति**। सति प्रतिबन्धकाभावे शक्तिरप्यतन्त्रमिति परिहरति— **तुल्यमिति**। प्रतियोगी शक्तिपदार्थस्तदपनयनद्वारेणैव तस्य **मण्यादेः सन्निधिनं तु** स्वाभावोत्सारणद्वारा, येन तदभावो **हेतुः स्यादित्याह**—

**प्रतियोगिनमिति**। प्रतियोगी शक्तिविरोधी मण्यादिस्तदुत्सारणद्वारा तस्य शक्तिरक्षायामुपक्षीणत्वम्, न तु दाहहेतुत्वमिति प्रतिबन्धस्य स्वभावोत्सारणमेव द्वारं किं न स्यादिति परिहरति—**तुल्यमिति**। ननु प्रतिबन्धकेन स्वभावोत्सारणं न क्रियते स्वभावोत्सारणस्वरूपत्वात्तस्येति शङ्कते—
5 **भावस्येति**। एवं प्रतिबन्धकाभावोऽपि प्रतिबन्धकोत्सारणद्वारा नान्यथासिद्धः; किन्तु प्रतिबन्धकाभावरूपतया दाहं प्रति कारणमेवेति पर्यवसितमित्याह—**अभावस्यापीति**। **केचित्तु** भावाभावयोरन्वयव्यतिरेकतुल्यतया भाव एव कारणं न त्वभाव इति विनिगमनाविरहपरतयैव समस्तं व्याचक्षते—**कार्यवदिति**। व्याकुर्वन्नेवोपसंहरति—**तस्मादिति**। **को हीति**।
10 प्रामाणिकत्वाविशेष इति शेषः। ननूक्तं प्रतिबन्धके सत्यपि दाहो दृश्यत इति तदभावो न कारणमत आह—**प्रतिबन्धकेति**। **यादृशे सतीति**। उत्तेजकाभावविशिष्टस्य प्रतिबन्धकस्याभावः कारणम्। सत्युत्तेजके विशेषणाभावघटितः सोऽस्त्येवेत्यर्थः। एतदेवाह—**तदापीति**। उत्तेजककालेऽपीत्यर्थः। कथमेतदत आह—**असदिति**। उत्तेजकाभावविशिष्ट इत्यर्थः।
15 **यस्त्वस्तीति**। उत्तेजकाभावविशिष्ट इत्यर्थः। अननुगमं शङ्कते—**तथापीति**। विशेषणमुत्तेजकाभावस्तदभाव उत्तेजकं तथा च विशेषणाभावो विशेष्यस्य मण्यादेरभाव उभयाभावश्चेति दाहं प्रति हेतुत्रयम्। दाहे च वैजात्यं नास्त्येवेति भावः। विशिष्टाभाव एक एव तत्र कारणमिति नाननुगम इति परिहरति—**विशिष्टस्यापीति**। दार्ष्टान्तिकं स्फुटयितुं दृष्टान्तं स्फुट-
20 यति—**न हीति**। अदण्डानामन्येषां दण्डिपुरुषभिन्नानां पुरुषाणां दण्डरहितपुरुषाणामित्यर्थः। **नाभाव इति**। अपित्वभाव इत्यर्थः। एतदेव विशदयति—**यथा हीति**। विशेषणविशेष्ययोरप्यभावे विशिष्टाभावमाह—**केवलदण्डसद्भाव** इति। अत्र हि विशेषणस्य दण्डाभावस्य विशेष्यस्य पुरुषस्य चाभावः। विशेषणाभावकृतं विशिष्टाभावमाह—**दण्डपुरुषसद्भाव**
25 इति। अत्र हि दण्डाभावो यद्विशेषणं तन्मात्रं नास्तीति। विशेष्याभावकृतं विशिष्टाभावमाह—**उभयाभाव** इति। अत्र हि दण्डाभावो विशेषणमस्त्येव विशेष्यं पुरुषः परं नास्तीत्यर्थः। दार्ष्टान्तिकेऽपि विशेषणविशेष्योभयाभावकृतं विशिष्टाभावमाह—**केवलोत्तम्भकेति**। अत्र हि उत्तेजकाभावस्य विशेषणस्य प्रतिबन्धकस्य च विशेष्यस्याभावः। विशेषणाभावकृतं विशिष्टा-

भावमाह—**प्रतिबन्धकोत्तम्भकसद्भाव** इति। अत्र हि विशेषणस्य उत्तेजकाभावस्यैव परमभावः। विशेष्याभावमात्रकृतं विशिष्टाभावमाह—**द्वयाभाव** इति। अत्र हि विशेषणस्य उत्तेजकाभावस्य सत्त्वेऽपि विशेष्यस्य प्रतिबन्धकस्यैव परमभाव इत्यर्थः। तटस्थः शङ्कते—**अथेति**। यद्यपि विशेषणाभावविशेष्याभावरूपाभ्यां सामग्रीभ्यामेव निर्वाहे न तृतीयकल्पनं तथापि यत्र 5
विशेषणविशेष्योभयाभावस्तत्रोभयकारणतावच्छेदकावच्छिन्नसत्त्वे उभयजन्यतावच्छेदकावच्छिन्नकोत्पत्तौ जातिसङ्करप्रसङ्गभावेन[-भयेन ?] तत्र विलक्षणसामग्रीकल्पनमित्यभिप्रायः। सा च सामग्री प्रत्येकाभावेन कार्यजनने प्रतिबन्धिकेति। **कार्यस्येति**। अनुगतकार्यस्याननुगतकारणानियम्यत्वादित्यर्थः। ननु तृणारणिस्थल इवात्रापि वैजात्यमेव स्यादित्युक्तमित्यत 10
आह—**जातिभेदेति**। विशिष्टाभावत्वेनैवानुगतेन कारणत्वे सम्भवति कार्यवैजात्यकल्पनायां प्रमाणाभावादित्यर्थः। **यथोक्तेनेति**। उक्तविशिष्टाभावत्वेनेत्यर्थः। 'अभ्युपेत्या'ह—**भावे वेति**। तथापि प्रतिबन्धकाभावेनान्यथासिद्धौ न शक्तिसिद्धिरिति भावः। **प्रागिति**। प्रागभाव इत्यर्थः।
**यस्मिन्निति**। प्रतिबन्धकसंसर्गाभावत्वेन त्रितयसाधारण्येन कारणत्वमिति 15
नानियतहेतुकत्वमित्यर्थः। **विशेषमनाकलयन्निति**। तथा च प्रतिबन्धके सत्येव तदन्योन्याभावसत्त्वेन दाहापादनेनेति शेषः। **प्रतिबोधनीय** इति। प्रतिबन्द्या बोधनीय इत्यर्थः। **मीमांसकस्यापि** यत्र कारणाभावात् कार्याभावानुमानं तत्रापि कारणान्योन्याभावमादाय कार्याभावः सिध्येदिति प्रतिबन्दिरित्यर्थः। ननु संसर्गाभावत्वं न जातिः, तथा च प्रागभावादीनां 20
दाहकारणत्वं कथं तेनावच्छिद्येत इत्यत आह—**तथापीति**। **मा भूदिति**। संसर्गावच्छिन्नप्रतियोगिकाभावत्वस्योपाधेरेव कारणतावच्छेदकत्वात् कर्मसमवायिकारणतावच्छेदकमूर्तत्ववदिति भावः। ननु मणौ सत्यपि मन्त्राभावाद्दाहः स्यात्। न हि स न प्रतिबन्धकाभाव इत्याह—**एतेनेति**।
**ततोऽप्यधिकमिति**। एकप्रतिबन्धके सति प्रतिबन्धकान्तराभावात् यद्दाहो 25
न जायते तत्र प्रतीमः शक्तिविरहस्तत्र निमित्तमित्यर्थः। **तज्जातीय** इति। दण्डजातीये सति कार्यं भवति तदभावे सति न भवति इत्यन्वयव्यतिरेकगम्यं तावत् कारणत्वम्। तत्रैकसत्त्वे दण्डान्तरविरहात् कार्येण भवितव्यमिति यथा न भवतीति तथा प्रकृतेऽपीत्यर्थं इत्यधिकनञ्प्रवेशेन व्याख्येयम्।

यद्वा शिरश्चालने नञ्, तथा च कार्येण न भाव्यमिति न, अपितु भाव्यमेवेत्यर्थः। व्यतिरेकव्यभिचारवदन्वयव्यभिचारस्याप्यदोषत्वादुभयसमाधेयत्वाद्वा। वस्तुतोऽत्र प्रतिबन्धकत्वावच्छिन्नप्रतियोगिक एक एव सामान्याभावः कारणमिति न व्यभिचारोऽपि। यदि च प्रतिबन्धकाभावत्वेन
5 कारणतायां कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमित्यन्योन्याश्रयः, तदा मण्याद्यभावकूटत्वेनैव कारणत्वं वाच्यमिति नोक्तदोषः। **तज्जातीयेति**। एकप्रतिबन्धकत्वे प्रतिबन्धकान्तराभावानामकिञ्चित्करत्वादित्यर्थः। मण्याद्यभावकूटत्वेनैव कारणत्वादिति भावः। प्रतिबन्धकान्यथानुपपत्त्या शक्तिकल्पनमिति यदुक्तं तद् दूषयति—**यत्त्विति**। मण्यादिर्न प्रतिबन्धकः, किन्तु
10 प्रतिबन्धः, तत्र प्रतिबन्धकपदं स्वार्थिक-कन्प्रत्ययेन द्रष्टव्यम्। किं **किञ्चित्करा एवेति**। मन्त्रादिरूपप्रतिबन्धकरा एवेत्यर्थः।

एकदेशमितं दूषयति—**ये त्विति**। कार्यानुत्पादस्य कार्यप्रागभावपर्यवसन्नतयानुत्पाद्यत्वादित्यर्थः। **तदुपाधेः** सूर्यस्पन्दादेः। **प्रागभावावच्छेदकेति**। कार्यप्रागभावावच्छिन्नः कालोपाधिः प्रतिबन्धकेन क्रियत
15 इत्यर्थः। ननु प्रागभावश्चेदनुत्पाद्यस्तदा सामग्र्यभावात् कार्याभाव इति कथं पौर्वापर्यव्यवहार इत्युपसंहरन्नेव उपपादयति—**तस्मादिति**। औपचारिकोऽयं व्यपदेश इत्यर्थः। उपचारे बीजं **सामग्रीतत्कार्ययोरिति**। **तुल्यकालत्वमेवेति**। **तदभावयोः** सामग्रीतत्कार्याभावयोः। **नायं पन्थाः** नैकदेशिसिद्धान्तः साधीयान्। **न चेदेवमिति**। यदि प्रतिबन्धकाभावो न
20 दाहकारणमित्यर्थः। **तद्धर्मो वेति**। विनाश्यत इत्यनुषङ्गः। सन्निधानाचरमविकल्पमारभ्य दूषयति—**तत्रेति**।

**तज्जनन** इति। शक्तिजनने तद्धर्मजनने वेत्यर्थः। अनियतहेतुकत्वमेवोपपादयति—**पूर्वमिति**। **तदुत्पादकात्** वह्न्याद्युत्पादकात्। 'नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजे'ति तवाभ्युपगमादित्यर्थः। ननूत्तेजके स्वरूपोत्-
25 पादके शक्त्यनुकूलाऽपरा शक्तिरित्येकशक्तिमत्त्वेन नानियतहेतुकत्वमित्यत आह **न चेति**। **निषेधादिति**। **न विजात्येकशक्तिमानित्यनेनेति** भावः। **तदनुत्पादेति**। वह्नौ पुनः शक्त्यनुत्पाददाहकत्वप्रसङ्गादित्यर्थः। ननु कालविशेषादेव वह्नौ शक्तिरुत्पत्स्यत इत्यत आह—**कालेति** ननु विशिष्टा-

भावः कारणं, स च विशेषणाभावविशेष्याभावोभयाभावानुगत इति यदुक्तं तत्र विशिष्टस्यातिरिक्तस्याभ्युपगमे त्वपसिद्धान्तः। विशेषणादीनामत दर्थत्वे तदभावकारणत्वे पुनरननुगम एव। न च विशिष्टविरोधित्वं विशेषणाद्यभावेऽनुगतम्। विशेषणाद्यभावस्य विशिष्टेन विरोधः। परस्पर- विरहात्मकं चेत्, तदा विशेणाद्यभावाभावो विशेषणादिरेव विशिष्टः 5 स्यात्। परस्परविरहव्याप्यत्वं तदाक्षेपकत्वञ्च विशिष्टपदार्थस्य भेदे स्या- त्, स च त्वया नाभ्युपगम्यत [ए?] वेति चेत्? मैवम्। विशेषणविशेष्यसम्बन्धविरोधित्वेनैवानुगमात्। न हि विशेषणाभात्रे विशेष्या- भावे वा तयोः सम्बन्धः सम्भवति। स च सम्बन्ध उभयोरुपदिष्टप्रत्यय- जन[न?]योग्यत्वमेव। न चैकविरह एव नास्ति। किं शक्तेन शक्तिजनने 10 कथमस्तु शक्तिरन्यादृशेन जनने कथमस्तु शक्तिः? भावानपेक्षभवने नियम- प्रकोपो नित्यैव सेति वचने वचनप्रकोप इत्यादि दूषणमूह्यम् ॥१०॥

### बोधनी

सम्भोगो निर्विशेषाणामिति विवरीष्यन् तद्विपरीतं चोदयति—**सिध्यतु-इति**। सत्यं, यागादिजन्यमपूर्वमस्ति, तच्च भूतधर्म एवास्तु न त्वात्मधर्मः, गुरुत्ववेगादिवदिति। ननु रूपादय एव भूतधर्मा दृश्यन्त कथं तदतिरेकिणोऽपूर्वस्य भूतधर्मत्वमित्यत आह— 15 **अवश्यम्-इति**। त्वया नैयायिकमानिनापि कश्चिदतीन्द्रियः कार्योदयानुकूलो भूतधर्मः शक्त्यादिपदवेदनीयोऽङ्गीकरणीयः, तथाऽपूर्वमपि भूतधर्मो भविष्यतीति भावः। शक्तेर्वा कथमङ्गीकरणीयतेत्यत आह—**कथमन्यथा-इति**। मन्त्रादिभिर्दाहादिकार्यप्रतिबन्धस्तावद् दृश्यते, स चान्यथानुपपद्यमानः शक्तिं कल्पयतीति। तदेव विभजते-**तथा हीति**। यादृशादग्नेः पूर्वं दाहो जातः तादृशादेव दृष्टवैकल्यरहितादेव न जायते दाहः। तेन दृष्टस्य 20 व्यभिचाराददृष्टं किमपि कार्यान्यथानुपपत्त्या कल्पनीयमिति भावः। तत्र दृष्टादृष्टयोरन्यतर- वैगुण्येनान्यथोपपत्तिमाशङ्क्याह—**तत्रेति**। **एतावन्मात्रार्थत्वादिति**। दृष्टकारण समव- धानमात्राद्यर्थत्वाददृष्टस्येति एतदेव कुत इत्यत आह—**अन्यथेति**। यदि दृष्टकारण साद्गुण्यातिरेकेणादृष्टस्य कार्यं प्रति व्यापारोऽङ्गीक्रियते तर्हि कर्मणि सत्यपि कार्यविभागः कदाचिन्न जायेत अदृष्टवैगुण्यसंभवादिति। उभयवादिसिद्धप्रतिबन्धकाभावेनान्यथोपपत्ति- 25 माशङ्क्याह—**न चेति**। किमिति कारणं न भवतीत्यत आह—**तुच्छ-इति**। विधिरूपविरहस्तुच्छत्वमिति। ननु विधिरूपेण तुच्छत्वेऽपि स्वरूपेण सतः कथं कारणत्वा-

नुपपत्तिरित्यत आह—**प्रतिबन्धकेति**। उत्तम्भकप्रयोगकाले प्रतिबन्धकस्य सत्त्वात् तेन प्रतिबन्धकाभावेन विनापि कार्योत्पत्तेर्व्यभिचारादकारणमभाव इति। इतश्चाकारणमभाव इत्याह—**प्रागिति**। न तावत् प्रागभावः कारणं, प्रध्वंसे व्यभिचारात्, न च प्रध्वंसः, प्रागभावे व्यभिचारात्, नात्यन्ताभावः, इतरत्र व्यभिचारात्, न च समुच्चयेन, प्रत्येकं 5 व्यभिचारात् असम्भवाच्च, नापि विकल्पेन, अनियतहेतुकत्वप्रसङ्गादिति। तथाचान्वयव्यतिरेकयोर्व्यभिचारादिति। एवं कार्यान्यथानुपपत्तिं शक्तिसद्भावे प्रमाणयित्वा प्रतिबन्धकत्वान्यथानुपपत्तिमपि प्रमाणयति—**अकिञ्चित्करस्य**—इति। दृष्टेऽग्न्यादिस्वरूपे प्रतिबन्धादर्शनाददृष्टमनभ्युगच्छतो मण्यादीनां प्रतिबन्धकत्वं न संभवतीति। अस्तु किञ्चित्करस्ततः किमित्यत आह—**किञ्चित्करत्वेऽपीति**। यत् किञ्चित् 10 करोति सैवास्माकं शक्तिरिति। सिंहावलोकितन्यायेन कार्यार्थापत्तिमेवोपसंक्रम्याह—**मन्त्रादीति**। प्रयुज्यमाने मन्त्रादौ प्रतिबन्धके तदितराभावोऽस्त्येव तथापि कार्यं न जायत एवेति। अथवा मन्त्रप्रयोगे मण्यादिप्रतिबन्धकाभावे सत्यपि कार्यस्यानुदयः। एवं मणिप्रयोगे मन्त्राभावेऽपि। एवमेकतरमण्यादिप्रतिबन्धकप्रयोगे तदितरमण्यादिप्रतिबन्धकाभावस्य सत्त्वेऽपि कार्यानुदय इति। तदुभयथाप्यन्वयव्यमिचारान्नाभावः कारण-15 मिति। अर्थापत्तिभ्यां साध्यसिद्धिं निगमयति—**अतोऽतीन्द्रियम् इति**। तत्र यस्यापकुर्वतामिति प्रतिबन्धकार्थापत्तेरुपसंहारः, यस्मिन्नित्यादिना त्वितरस्य इति। तथाच सति शक्तिवादिनो न कश्चित् पूर्वोक्तदोष इति भावः॥ सिद्धान्तमाह—**अत्रोच्यते**।

**भाव इति**। अत्र पूर्वार्धेन कार्यार्थापत्तेरन्यथोपपत्तिरुपपाद्यते, उत्तरेणोत्तरस्याः। अयमर्थः—येन हेतुना भावः कारणं भवति तेनैवाभावोऽपि। न भावे भाव इत्येव 20 कारणं किन्तु कार्येणानुविहितान्वयव्यतिरेक इति, तच्चाविशिष्टमभावस्यापीति सोऽपि कारणम्। तुच्छत्वादकारणत्वे तत एव कार्यत्वमपि न स्यात्, क्रियते च प्रध्वंस इत्याह—**कार्यवदिति**। यथा नियतोत्तरभावित्वेनाभावः कार्यं, तथा नियतपूर्वकालवर्त्तित्वेनाभावः कारणमपीति भावः।

**विसामग्री** सामग्र्यन्तर्गतकारणविगमः सामग्रीवैकल्यमिति यावत्, मन्त्रादिश्च 25 तथा, तदभावस्य सामग्र्यनुप्रवेशात्। तेन मन्त्रादेः प्रतिबन्धकत्वाभावादकिञ्चित्करत्वं न दोषाय। कस्तर्हि प्रतिबन्धक इत्यत्रोक्तं—**तद्धेतुरिति**। मन्त्रादिप्रयोक्तारः प्रतिबन्धकाः ते तु किञ्चित्करा एवेति भावः।

कारिकां व्याचष्टे—**न हीति**। तुच्छत्वमत्र प्रमाणमुक्तमित्यत्राह—**न हि विधीति**। किमत्र तुच्छत्वं?—यद्यलीकत्वं तदसिद्धं, यद्यन्यरूपेणासत्त्वं तत्तर्हि

भावस्याप्यविशिष्टं भावाभावयोरितरेतरानात्मकत्वात् । अत ईदृशं तुच्छत्वमनैकान्तिकमिति । शङ्कते—**कारणत्वस्येति** । स्पष्टम् । **नेति** । कारणत्वस्याभावत्वेन व्याप्तत्वाद-भावत्वनिवृत्तौ कारणत्वमपि निवर्त्तत इति वक्तुं शक्यत इति । ननु न वयं तावन्मात्रत्वेन कारणत्वं ब्रूमः येनैवमुपालभ्येमहि, किन्तु कारणत्वनिदानमन्वयव्यतिरेकौ, तौ चाभावस्येति तत्राह—**अन्वयेति** । नन्वाकाशादिवदवर्जनीयसन्निधितया नाभावः कारणमित्याह—**अभावस्येति** । न तावदाकाशादिवन्नित्यत्वविभुत्वा-भावादर्जनीयसन्निधिरभावस्तथाप्यवर्जनीयत्वे भावस्यापि तत्तुल्यत्वमित्याशयवानाह—**तुल्यमिति** । ननु अनन्यथासिद्धान्वयव्यतिरेकवतः कारणत्वम्, अभावस्तु कार्य-विरोधिनं स्वप्रतियोगिनं प्रतिबन्धकमुत्सारयन् सन्निधत्ते न तु कार्यार्थमित्याह—**प्रतियो-गिनमिति** । तर्हि भावोऽपि कार्यविरोधिनं स्वाभावमुत्सारयन् सन्निधत इति शक्यते वक्तुमित्याह—**तुल्यमिति** । अथ भावस्याभावाभावात्मकत्वेन न स्वरूपव्यतिरिक्तम-भावोत्सारणं नाम किञ्चिदस्ति कार्यं, तेन कार्यप्रयुक्त एव भावसन्निधिरिति चेत्तर्हि अभावस्यापि भावाभावात्मकत्वान्न स्वव्यतिरेकेण भावोत्सारणं नाम कार्यमस्तीति शङ्को-त्तराभ्यामाह—**भावस्येति** । उपसंहारव्याजेन कार्यवन्मत इत्येतद् विवृणोति—**तस्मादिति** । यथा प्रमाणबाधितत्वादेको नियमोऽनुपपन्नस्तथाऽपरोऽपि, द्वयोर्नि-यमयोर्बाधितत्वाविशेषात् । यद्वा, कार्यत्वकारणत्वयोः प्रमाणसिद्धत्वाविशेषादिति । यत्तूक्तम् उत्तम्भकप्रयोगे सत्येव कार्योत्पत्तेर्व्यतिरेकव्यभिचारः प्रतिबन्धकाभावस्येति तत्राह—**प्रति-बन्धकेति** । **यादृश इति** उत्तम्भकरहिते प्रतिबन्धे, सतीति प्रतिबन्धोत्तम्भकप्रयोग-कालेऽपि कार्यप्रतिपक्षः प्रतिबन्धको नास्तीत्यर्थः । कीदृशस्तर्हि प्रतिबन्धकः यदभावात्तदा कार्यमुत्पद्यत इति । अत उक्तम्—**असत्प्रतिपक्षो हीति** । उत्तम्भकापरपर्यायस्व-प्रतिपक्षाभावविशिष्टो हि मन्त्रादिःप्रतिबन्धकः, तदभावश्च कारणमित्युक्तेऽपि तत्रोत्तम्भका-भावविशेष्यस्य मन्त्रादेः सत्त्वेऽपि विशेषणमात्रस्योत्तम्भकाभावस्याभावः, नतु विशिष्टस्य । स चोत्तम्भकाभावाभाव उत्तम्भकमन्त्र एव । तस्मादुत्तम्भकाभावविशिष्टप्रतिबन्धकाभाव-स्याभावादन्यैव सामग्री । न हि प्रतिबन्धकोत्तम्भकाभावविशिष्टा तत्सद्भावविशिष्टा च सामग्री न भिद्यत इति च सम्भवति । अत्र स चोत्तम्भकमन्त्र एवेति सामग्रीभेददर्श-नायोक्तम् । यद्वा, सत्त्वकार्यस्योत्तम्भक एव मन्त्रो न तु प्रतिबन्धकस्य प्रतिबन्धकत्वविघात-मात्रहेतुरिति दर्शयति । यद्वा, न परं सामग्रीभेद एव किन्तु भाव एव, सामग्री स्यादिति दर्शयितुमिति । **नेति** । न केवलं विशेषणमात्रस्येति शेषः । न चोभयोः सत्त्वमसत्त्वं वा कारणं, किन्त्वसत्प्रतिपक्षप्रतिबन्धकाभावः स चाविशिष्टः सर्वत्रेति न

सामग्रीभेद इति भावः। विशेष्ये विशेषणाभावेन न केवलं विशेषणमात्रस्यैवाभावः किन्तु विशिष्टस्यापीत्येतद् दृष्टान्तेनोपपादयति-**न हीति**। दण्डिनि सत्यदण्डत्वं विशेषणमेवनास्ति। तद्विशिष्टस्त्वदण्डः पुरुषोऽस्तीति। न हि वक्तुं युक्तमित्युपपादितं दृष्टान्तीकरोति **यथा हीति**। केवलदण्डसद्भावे विशेषणमदण्डत्वं विशेष्यः
5 पुरुषश्चोभयं नास्ति। सदण्डपुरुषद्भावे तु विशेषणमदण्डत्वं नास्ति विशेष्यस्त्वस्ति पुरुषः। द्वयाभावे तु विशेषणमस्ति, नास्ति विशेष्यम्। अत्र सर्वत्र केवलस्य कैवल्यविशिष्टस्य पुरुषस्याभावः समान इति पक्षं निगमयति—**तथेति**। कार्योत्पत्तिसमयेषु सर्वेषु केवलोतम्भकसद्भावप्रतिबन्धोत्तम्भकसद्भावद्वयाभावेषु प्रत्येकं समुच्चितयोश्च विशेषणविशेष्ययोरभावात् केवलस्योत्तम्भकाभावविशिष्टस्य प्रतिबन्धकस्या-
10 भावोऽनुवृत्तः। अत्र च प्रतिबन्धकोत्तम्भकसद्भावे विशिष्टाभावः प्रतिपाद्यः निदर्शनत्वेनेतरयोरुपादानमिति। प्रकृतं विधात्रयमवलम्ब्य चोदयति—**अथेति**। केवलोत्तम्भकवती काचित् सामग्री, अन्या तु प्रतिबन्धकोत्तम्भकवती, द्वयाभाववती चान्येति सामग्रीत्रयं कार्यस्यास्तु किमिति सर्वत्रैकरूप्यं प्रयासेन साध्य त इति। परिहरति —**कार्यस्येति**। एकैकव्यतिरेकेऽपि कार्योत्पत्तेस्त्रयाणामप्यकारणत्वप्रसङ्गादिति। तृणारणिमणिन्यायमा-
15 शङ्क्याह—**जातीति**। ननु सामग्रोभेद एव तत्र प्रमाणमस्तीत्यत आह—**भाव**—इति। एवं सामान्यव्यभिचारं परिहृत्य प्राक्प्रध्वंसादिविशेषव्यभिचारं परिहरति—**प्रागिति**। कुत इत्यत आह—**यस्मिन्नइति**। यस्मिन् केवल प्रतिबन्धके सति संसर्गिणि कार्यं न जायते तस्मिन्नसत्यसंसर्गिणि कार्यं जायत इत्यभ्युगमे संसर्गाभाव एक एव कारणम्। प्रागभावादयस्तु तद्विशेषा इति नानियतहेतुकत्वमिति। ननु
20 संसर्गाभावः कारणमित्युक्तेऽपि संसर्गप्राक्प्रध्वंसादिविकल्पेनानियतहेतुकत्वं, तत्रापि संसर्गाभावस्वीकारेऽनवस्थेति चेत्, न। न ह्यत्र संसर्गस्याभावः कारणं यतो विकल्प्येत, किन्तु संसृज्यमानस्य मन्त्रादेः। न हि संसर्गः प्रतिबन्धकः संसृज्यमानस्यैव मन्त्रादेस्तथात्वादिति।

यत्तूक्तमितरेतराभावस्य सत्त्वेऽपि कार्यानुदयादिति तत्र प्रथमव्याख्यानेन यानु-
25 पपत्तिरुक्ता तां निराचष्टे—**यस्तु—इति**। प्रतिबोधनीयः, तादात्म्याभावविलक्षणः संसर्गाभावः। द्विविधो ह्यभावः संसर्गाभावस्तादात्म्याभावश्चेति। तत्रेदानीमिह वा नास्तीति संसर्गितया यत्र प्रतियोगी निषिध्यते ससंसर्गाभावः, इदमिदं न भवतीति तदात्म्यतया प्रतियोगिनो निषेधः स तादात्म्याभावः। तत्र संसर्गाभावभेदाः प्रागभावप्रध्वंसात्यन्ताभावाः, तेषामेव संसर्गितामापन्नप्रतियोगिनिरूप्यत्वात् ततश्चेतरेतराभावस्याप्रसक्तिरिति। नन्वस्तु तादात्म्याभाव-

संसर्गाभावयोर्विशेषः, तथापि प्रागभावादित्रयानुगतायास्तादात्म्याभावव्यावृत्ताया जातेरभावात् कथं त्रयाणामुपसंग्रहः, कथं वा तदनुपसंग्रहे व्यभिचाराच्छक्यावधारणं कारणत्वमित्याह— **तथापीति**। विनापि जातिमेकोपाध्युपगृहीतानां त्रयाणां कारणत्वमवधारयामः, उपाधिश्चात्र संसर्गितापन्नप्रतियोगिनिरूप्यत्वमित्याशयवानाह—**मा भूदिति**। तथापि न तावन्मात्रेण कारणत्वं शक्यावधारणमिति चेत्। न, भवतोऽपि बीजे सत्यङ्कुरो 5 जायते तदभावे तु न जायते इत्यत्र व्यतिरेकादौ यदि बीजप्रागभावो विवक्षितः प्रध्वंसे जायेत, अथ प्रध्वंस इतरत्र जायेतेत्यादिप्रसङ्गः, बीजाभावमात्रविवक्षायां तादात्म्याभावेऽप्यङ्कुरानुदयप्रसङ्ग इत्यभिहिते च तादात्म्याभावव्यावृत्तस्य प्रागभावादित्रयानुगतस्य च संसर्गाभावत्वस्याङ्गीकार एव परिहार इति इतरेतराभावस्य सत्त्वेऽपीत्यत्र द्वितीयव्याख्यानोक्तानुपपत्तिमनुभाष्य दूषयति। **एतेनेति**। प्रतिबन्धके सति कार्यं न जायते 10 तस्मिन्नसति जायत इति प्रतिपादिते कथमनेनैतन्निरस्तमित्यत्रातिदेशमेव भावकारणवादसाम्येन विशदयति—**यथाहीति**। बीजजातीये सत्यङ्कुरोत्पत्तिरित्युक्तेऽर्थात्तदभावे तदनुत्पत्तिरिति सिद्धे एकस्मिन् बीजे सति बीजजातीयान्तराणामभावादङ्कुराख्येन कार्येण न भवितव्यमिति न प्राप्नोति **तथैतदपि**। प्रतिबन्धके सति कार्यानुदयस्तदभावे सति कार्योदय इत्यत्रापि एतस्मिन् प्रतिबन्धके सति सजातीयान्तराणामभावाद् भवितव्यं 15 कार्येणेत्येदपि न प्राप्नोतीति। कुत इत्यत आह—**अनुकूलवत्—इति**। कार्यानुकूले कारणे सति यथा तज्जातीयान्तराणामभावो न तस्य कार्यं निषेधति तथा प्रतिकूलेऽपि कस्मिश्चित् प्रतिबन्धके सति प्रतिबन्धकान्तराभावेऽपि न कार्यं विधत्ते अकिञ्चित्कारत्वं निषेधे विधौ चेति द्रष्टव्यम्। अथ प्रतिबन्धकत्वान्यथानुपपत्तिं दूषयितुं प्रतीकेनानुभाषते— **यत्त्विति**। सङ्ग्रहं व्याचक्षाणो दूषयति—**तदपीति**। पूर्वार्थापत्तिसमुच्चयेऽपि सामग्री- 20 वैकल्यं सामग्र्यन्तर्भूतानामन्यतमस्य विगमः प्रतिबन्धकः। उभयवादिसिद्धिप्रदर्शनार्थो मुख्यशब्दः। स च प्रतिबन्धोऽत्राभावकारणत्वस्थितौ मन्त्रादिरेव स्यात्, अभावाभावस्य भावात्मकत्वात्। न त्वसौ मन्त्रादिः प्रतिबन्धकः। अतो मन्त्रादेरकिञ्चिकरत्वेऽपि न प्रतिबन्धकस्याकिञ्चित्करत्वं भवति प्रतिबन्धकस्य किञ्चित्करत्वापेक्षायामनवस्थाप्रसङ्गात् प्रतिबन्धकत्वप्रसङ्गाच्चेति। के तर्हि प्रतिबन्धका इत्यत्राह—**तत्प्रयोक्तारः—इति**। 25 मन्त्रादिप्रयोक्तारः पुरुषाः प्रतिबन्धकाः, ते च मन्त्रादीन् प्रयुञ्जानाः किश्चत्करा एवेति नानुपपद्यमानं किञ्चिदस्तीति।

कार्यानुत्पादः प्रतिबन्धः, तं च कुर्वन्तो मन्त्रादयः प्रतिबन्धका इत्येकदेशिनां मतमुपन्यस्य निरस्यति—**येत्विति**। तस्य कालान्तरप्राप्तिरिति सामग्रीसमवधाने हि

कार्यस्य प्रागभावो विनश्यति। सति तु प्रतिबन्धके पश्चात्तनमपि कालं व्याप्नोति। तेन प्रागभावस्य पाश्चात्यकालप्राप्तिः प्रतिबन्धकाधीनेति। **तस्यानुत्पाद्यत्वादिति**। प्रागभावस्यानादित्वेनानुत्पाद्यत्वादिति। **कालस्यस्वरूप त इति**। मुख्यतस्तावत् कालस्यैकत्वात् कालान्तरमिति न संभवति यत्प्राप्तिर्मन्त्राधीना भवेदिति। नन्वौपाधिककालभेदप्राप्तिर्मन्त्रा-
5 द्यधीना स्यादित्याशङ्कयाह **तदुपाधेरिति**। अत्र हि पक्षे कालान्तरप्राप्तिर्नामावच्छेद-कोपाध्यन्तरप्राप्तिरित्यवशिष्यते। तत्र कालोपाधिः सूर्यगत्यादिर्मन्त्रमन्तरेणापि स्वकारणाधीनः, तत्प्राप्तिश्च प्रागभावस्यानुत्पाद्यत्वेन स्वयमेव सिद्धेति किमत्र मन्त्रादिना क्रियत इति। ननु कालमात्रभेदोपाधेर्मन्त्राद्यनपेक्षत्वेऽपि प्रागभावव्यवच्छेदककालान्तरोपाधिर्मन्त्रादि-कमपेक्षते। न हि सूर्यगत्यादिमात्रभेदितः कालः प्रागभावं व्यवच्छिनत्ति कार्योत्पत्त्युत्तर-
10 कालमपि तस्य भावादित्याह—**प्रागभाव-इति**। अस्ति हि मन्त्रादेः पूर्वमपि प्रागभावा-वच्छेदककालोपाधिः, यदि पूर्वमपि प्रागभावस्तदवच्छेदकश्च कालस्तदुपाधिश्च कश्चिन्न स्यात् तर्हि तदानीं प्रागभावव्यवहारो न स्यादिति। यद्यनादित्वात् कार्यप्रागभावो नोत्पाद्यः कथं तर्हि कारणभावात् कार्यभाव इति कार्याभावकारणाभावयोः कार्यकारणभावव्यवहारः। कालभेदे व्यपदेशश्च लौकिकानामिति शङ्कामुपपादयन्नाह—**तस्मादिति**।
15 प्रागभावस्यानुत्पाद्यत्वादौपचारिकः प्रयोग इत्यर्थः। अथोपपादितं कार्यानुत्पादस्याप्रति-बन्धकत्वमुपसंहरति-**इतीति**। कार्यानुत्पादविपरीतः प्रतिबन्ध इत्ययं न प्रतिबन्धत्वोपपा-दनमार्गः किन्तु पूर्वोपदर्शित एवेति। एवमेकदेशिनं निराकृत्य शक्तिवादिनमेव प्रत्याह—**न चेदेवम्-इति**। मन्त्रादेः प्रतिबन्धत्वं तत्प्रयोक्तॄणां प्रतिबन्धकत्वमित्य-नभ्युपगमे शक्तिस्वीकारेऽपि त्वदुक्तसकलदूषणानां न निस्तार इति प्रतीकाराभावमेव
20 दर्शयितुं यथासम्भवं विकल्पयति—**तथा हीति**। शक्तिविनाशः प्रतिबन्धः इति प्रथमः कल्पः, यावद्भावभावित्वाच्छक्तेर्विनाशः तस्यास्तु कार्योदयानुकूल इति द्वितीयः, कार्यप्रतिकूलधर्मान्तरजननमिति तृतीयः, अकिञ्चित्करस्यैव प्रतिबन्धकत्वमिति चतुर्थः। अत्राऽऽनन्तर्यादिन्तमं पक्षं दूषयति—**तत्रेति**। अतिप्रसङ्गान्निर्वचनानुपपत्तेश्चेति भावः। तदनन्तरं कल्पं दूषयति—**विपरीत**-इति। विपरीतधर्माभावस्य कारणत्वं तावत् प्रसज्येत,
25 तत्र च प्रागभावादिविकल्पावकाशः पूर्ववदेव स्यादिति। प्रथमद्वितीयकल्पावेकप्रसरेण दूषयति **तद्विनाश-इति**। शक्तितद्धर्मयोर्विनाशे सति पुनरुत्तम्भके सति कार्यदर्शनात् तेन तयोरुत्पत्तिरङ्गीकार्या, तथा चानियतहेतुकत्वं, पूर्वं शक्तिमदुत्पादकेनेदानीमुत्तम्भकेन तयोरुत्पत्तेरिति। ननु स्वरूपोत्पादकोत्तम्भकयोर्विजातीयत्वेऽप्येकशक्तित्वेन तुल्यत्वे संभवति नानियतहेतुकत्वप्रसक्तिरित्याशङ्कयाह—**न चेति**। कारणमाह—**विजातीयेषु**

**इति**। प्रवाहोनादिमानेप न विजात्येकशक्तिमानित्यत्र। ननु नोत्पादकः कारणशक्तिं तद्धर्मं वा जनयति, केवलं स्तम्भकस्य स्तम्भनशक्तिं निरुणद्धि, तेन नानियतहेतुकत्व-प्रसङ्ग इत्यत्राह—**न चेति**। **तदनुत्पादे**ति। पूर्वं प्रतिबन्धकविनष्टयोः शक्ति-धर्मयोः पुनरुत्तम्भकेनाजनने तयोरनुत्पाद एव स्यात्, ततश्च कार्यस्याप्यनुत्पादप्र-सङ्ग इति भावः। उत्तम्भकेनानुत्पादेऽपि नानुत्पादप्रसङ्ग इत्याशङ्क्याह—**कालविशेषा-दि**ति। यदुत्तम्भकेन तदुत्पादे वर्णितं **तदेवेति** ॥१०॥

विवेकः

तृतीयं शङ्कते—**सिध्यत्वि**ति। **गुरुत्वादि**ति। 'आदि'पदात् स्थितिस्थापकोपग्रहः। ननु तादृशस्य गुरुत्वादेः स्वोत्पत्त्युत्तरक्षण एवोत्पत्तेर्न यागाद्यधीनत्वं, तथाच व्यापारो यः कल्प्यः स एवादृष्टमित्यत आह—**अवश्यमि**ति। यथा उत्तेजकसमवधाने समयान्तरेऽपि दाहानुकूलोऽतीन्द्रियो धर्म उत्पद्यते तथैव यागाधीनोऽपि स्यादिति भावः। तत्र वह्निर्दाहानुकूलातीन्द्रियधर्म्यसमवायी न वेति विप्रतिपत्तिः। धर्मश्च वह्न्यवह्निसम-वेतान्यत्वेन संयोगाद्यन्यत्वेन वा विशेष्यः। तेनादृष्टवदात्मसंयोगेन नार्थान्तरम्। स्थितिस्थापकेनार्थान्तरवारणाय 'दाहानुकूले'ति, उष्णस्पर्शे तद्वारणाया'तीन्द्रिये'ति। अनुकूलत्वं जनकतावच्छेदकत्वं, धर्मत्वादि तथा प्रसिद्धं कारणतावच्छेदकव्यावृत्तौपयि-कानन्यथासिद्धत्वाघटितकारणत्वस्यैवानुकूलत्वे धर्माद्यपि तथा, तादृशादेरपि कालिक-सम्बन्धेन वह्नौ वृत्तेरर्थान्तरादाह—'समवाये'ति। समवायसम्बन्धेन साध्यताबोधनाय वह्निसंयोगस्य पक्षत्वे तु दाहानुकूलातीन्द्रियधर्मवत्त्वम्, अतीन्द्रियधर्मवत्त्वं वा विधिकोटिः, पाकविशेषप्रयोजकपरमाणुवह्निसंयोगनिष्ठतादृशजात्युपगमेनार्थान्तरवारणाय पक्षे 'करतले'ति। वह्निनिष्ठशक्तेर्वह्निमत्त्वाजन्यत्वे तु वह्निः स्वोत्पत्तिकालीनजन्यसमवायी न वा, नित्यायान्तु कर्मानुकूलनित्यधर्मसमवायी न वा, धर्माधर्मौ तथा प्रसिद्धौ कारणतावच्छेदकत्वमैन्द्रियक-वृत्ति न वेति **केचित्**। अत्र निषेधकोटिः परेषाम्। अत्रानुकूलतर्कमाह—**कथमि**ति। मण्यादिसमवहितो वह्निर्यदीदानीं वह्नित्वे सति दाहप्रयोजकयत्किञ्चिदसमवहितो न स्यात्, इदानीं दाहजनको न स्यात्, दाहोपहितो वा स्यात्। कारणान्तरा-समवधानमादाय विपर्यये सिद्धसाधनस्यार्थान्तरस्य वारणाय उपात्तपक्षविशेषणस्य प्रामाणिकत्वबोधनायाह—**यादृशादेवेति**। इष्टापत्तिं निरस्यति—**मन्त्रादिप्रतिबन्धे सति दाहो न जायत** इति। स वह्निसंयोगः स्वरूपयोग्य एव न भवतीत्यत्राह—**असति जायत** इति। न च स्वरूपायोग्यत्वे तत्सम्भव इति तादृशत्वमेवासिद्धमित्या-

शङ्कायामाह—**न चेति**। नन्वदृष्टवैगुण्यात् पक्षविशेषणमसिद्धमित्यत्राह—**नापीति**। दृष्टोपहारद्वारा यत्रादृष्टं प्रयोजकं तत्र 'दृष्टसाद्गुण्ये' ऽदृष्टेतरनिखिलकारणसमवधाने 'ऽदृष्टवैगुण्यम्' अदृष्टव्यतिरेकेण कार्याजननं 'तस्य' दाहादिजनकादृष्टस्य, तावन्मात्रार्थत्वाद् दृष्टसमवधानमात्रप्रयोजकत्वात्, तच्च प्रकृते अस्त्येवेति भावः। वह्नयसंप्रयोगे त्वदृष्टमन्वयव्यतिरेकात् साक्षादेव फलप्रयोजकमिति भावः। अन्यथा यत्र दृष्टोपहारद्वारा अदृष्टं प्रयोजकं तत्र सत्यपि दृष्टेऽदृष्टाभावात् कार्याजननकर्मणि अविनश्यदवस्थे सति पुनरपि पक्षविशेषणासिद्धिं शङ्कते—**न च प्रतिबन्धकेति**। प्रतिबन्धकाभावः कारणमिति वक्तव्ये विशिष्टपदोपादानं सम्बन्धविशेषेण तत्समवधानस्य प्रयोजकतालाभाय। तथा च 'प्रतिबन्धकाभावविशिष्टा' प्रतिबन्धकाभावघटिता 'सामग्री' 'करणं' फलोपहिता, तथा च तदभावादेव कार्याभावः। अभावस्याहेतुत्वे युक्तिमाह—**तुच्छो हीति**। कारणत्वस्य भावत्वव्याप्तत्वात् तदभावात्तदभाव इति भावः। उक्तव्याप्तेरनुपगमे त्वाह—**प्रतिबन्धकोत्तम्भकेति**। प्रतिबन्धकमण्यादौ 'उत्तम्भकप्रयोगकाले' उत्तेजकसमवधानकाले 'तेन' प्रतिबन्धकाभावेन। तथा च व्यभिचारेण न तस्य हेतुत्वमिति भावः। उत्तेजकाभावविशिष्टप्रतिबन्धकाभावहेतुत्वोपगमे न तथेति मनसिकृत्य निरुत्तेजकप्रतिबन्धकमभिप्रेत्याह—**प्राक्प्रध्वंसेति**। संसर्गाभावत्वस्यानुगतस्य सम्भवे त्वाह—**किञ्चिदिति**। 'किञ्चित्करत्वे' शक्तेर्नाशस्य कुण्ठनस्य वा कारित्वे अनभ्युपगम्य संसर्गाभावत्वं तदभावत्वेन हेतुत्वोपगमे त्वाह—**मन्त्रादीति**। अग्नेरनुग्राहकमग्निवृत्ति यस्येति हिंसार्थयोगे षष्ठी। 'कार्यं' दाहादि। 'यस्यैकजातीयत्वात्' येनानुगतत्वात् तृणादीनां तृणादिलक्षणाननुगतहेतुत्वं वह्नेर्निरस्यत इति।

तुच्छो ह्यसावित्यत्राह—**भाव इति**। 'अभावः' कारणं नियतान्वयव्यतिरेकशालित्वात् भाववत्। अत्र भावत्वस्योपाधित्वं दृष्टान्तेनाप्रयोजकत्वं प्रदर्शयन्नपाकरोति—**कारणमित्यादि**। यथा कार्यत्वस्य व्यापकं न भावत्वं तथा न कारणत्वस्यापीत्यर्थः। अकिञ्चित्कुर्वत इत्यात्राह—**प्रतिबन्धक इति**। 'विसामग्री' कारणीभूताभावप्रतियोगी मन्त्रादि'स्तद्धेतुः' तत्प्रयोक्ता। यथाश्रुते दण्डादिकमुत्सारयितर्यपि प्रतिबन्धकत्वापत्तिरिति ध्येयम्।

तुच्छत्वमलीकत्वं वा विधिभिन्नत्वं वा ? नाद्योऽनभ्युपगमात्। द्वितीये त्वाह—**न हीति**। 'विधिरूपेण' विधित्वेन 'असौ' अभावः 'तुच्छः' प्रमाणाविषयः इति हेतोः 'स्वरूपेणापि' स्ववृत्तिधर्मेणापि अभावत्वादिना 'तथा' तुच्छः प्रमाणाविषयः।

**निषेधरूपाभाव** इत्यादिः। एकरूपेणाप्रामाणिकत्वेनैवापररूपेण यदि तथात्वं तदा निषेधरूपस्याभावत्वस्य भावधर्मिण्यप्रमाणिकत्वात् भावत्वमपि व्यावर्ततेत्यर्थः। अन्वयव्यतिरेकाननुविधायित्वेन रासभादिवदन्यथासिद्धिरभावस्येत्याह—**अभावस्येति** 'अवर्जनीयतया' अकुण्ठशक्तिवन्ह्यादिनान्तरीयकतया 'सन्निधिः' समवधानं कारणेऽपेक्षणीय इति शेषः। **तुल्यमिति**—भावस्यापि अकुण्ठशक्तिकाभावनान्तरीयकतयैव 'सन्निधि'रपेक्षितो 'न 5 हेतुत्वेने'त्यपि स्यादित्यर्थः। ननु प्रतियोग्युत्सारणं कार्यप्रयोजकं तज्जननेनैवाभावोऽन्यथासिद्ध इत्याह—**प्रतियोगनमिति**। 'तस्य' अभावस्य 'अन्यप्रयुक्तः' प्रतियोग्युत्सारणार्थः 'सन्निधि'रपेक्षणीय इति शेषः। **तुल्यमिति**। अभावमुत्सारयत एव तत्प्रयुक्तः सन्निधिरित्यपि स्यादित्यर्थः। **भावस्येति**। तथा चाभावमुत्सारयत इत्येव नास्तीति भावः। **अभावस्येति**। तथा च प्रतियोगिनमुत्सारयत इत्यपि सिद्धमिति 10 भावः। **भाव इति**। तन्मतसिद्धानामनुवादोऽनुपपन्नः प्रमाणाभावात् नाभ्युपगतः। 'अनयो'र्नियमयोः 'को विशेषः'शक्तिग्राहकानुकूलतर्कसत्त्वासत्त्वाभ्यां वैलक्षण्यम्। वस्तुतस्तु प्रतियोग्यनुपलम्भादेवाभावोपलम्भादिकं प्रति कारणत्वस्य तैरभ्युपगमात् भावत्वव्याप्यं कारणत्वं तैरपि नोपेयत इति ध्येयम्। सोत्तेजकप्रतिबन्धस्थले विशिष्टाभावस्य हेतुत्वमभ्युपेत्य व्यभिचारमुद्धरति—**प्रतिबन्धकेति**। 'यादृशे' उत्तेजकाभावकूटविशिष्टे मण्यादौ। 15 'उत्पाद'स्तज्जातीयकार्यस्य। 'तदापि' उत्तेजकवन्मण्यादिकालेऽपि। सति प्रतिपक्षे कथं तदभाव इत्यत्राह—**असदिति**। असन् प्रतिपक्ष उत्तेकजको यत्र स तथा। एवंभूतो हि 'प्रतिबन्धकाभिमतः' प्रतिबन्धकत्वेनाभिमतो मन्त्रादिः 'प्रतिपक्षः' कारणीभूताभावप्रतियोगितावच्छेदकावच्छिन्नः न तु शुद्धो मन्त्रादिः। 'स च' मन्त्रादि'स्तादृश' उत्तेजकाभाववान् इदानीन्तत्र 'नास्त्येव'। 'यस्तु' शुद्धो मन्त्रस्तत्रा'स्ति' 'नासौ प्रतिपक्षः' नोत्तेज- 20 काभावविशिष्टः। विशिष्टाभावस्यानतिरिक्तत्वमभिप्रेत्य शङ्कते—**तथापीति**। 'विशेष्ये' प्रतिबन्धकत्वेनाभिमते मन्त्रादौ 'विशेषणमु'त्तेजकभावः। मात्रपदेन विशिष्टप्रतियोगिकत्वनिरासः। 'तत्र' सोत्तेजकप्रतिबन्धकवति। 'सः' विशेषणमात्राभावः। **अन्यैवेति**। तथा च व्यतिरेकव्यभिचारो दुष्परिहरः। स्वीकुरु वा एकशक्तिमत्त्वेन तयोः कारणत्वमिति भावः। अतिरिक्तं विशिष्टाभावमाश्रित्याह—**नेति**। विशिष्टस्य प्रतियोगितामवगाहमाने- 25 नानुभवेन व्यवस्थितं विशिष्टाभावं दृष्टान्तेन द्रढ़यति—**न हीति**। 'अदण्डानां' दण्डाभाववता'मन्येषां' दण्डाभाववतो भिन्नानां पुरुषाणां 'नाभावः', 'केवलस्य' कैवल्यस्य। विशेषणाद्यभावव्यापकत्वं दृष्टान्तेन विशिष्टाभावस्य दर्शयन् व्यभिचारमुद्धरति—**यथा हीति**। 'केवलदण्डसद्भावे' पुरुषाभाववति पुरुषसद्भावे दण्डवति दण्डाभाववति पुरुषसद्भावे

'द्वयाभावे' पुरुषस्य दण्डस्य चाभावे 'केवलपुरुषाभावः' दण्डाभावविशिष्टपुरुषाभावः 'सर्वत्राविशिष्टः' सर्वत्रैकोऽखण्डः। **तथेत्यादि**। पूर्ववद्विशिष्टाभावश्च विशेषणावच्छिन्न-प्रतियोगिताको वा विशेष्याभावो विशेषणविशेष्यसम्बन्धाभावो वा, विशिष्टाभावत्वम्वा विशेषणविशेष्याभावद्वयवृत्ति। 'एवम्भूतसामग्रीत्रयं विशेषणाद्यभावघटितं सामग्रीत्रयम्।
5 उत्तरं 'कार्यस्ये'ति, दाहसामान्यस्येत्यर्थः 'तद्व्यभिचारात्' विशेषणाद्यभावव्यभिचारात्। ननु वह्निस्वर्गादौ तृणयागादिजन्यतावच्छेदकवैजात्यवत् दाहेऽपि विशेषणाद्यभावजन्यताव-च्छेदकं तत् स्यादत एवोभयमित्यत्राह—**जातिभेदे**ति। नन्वन्यथानुपपत्तिरेव मानं स्यात्तत्राह—**यथोक्तेने**ति। अनुभवबलसिद्धेनातिरिक्तेन विशिष्टाभावेनेत्यर्थः। 'उपपत्ते'र्दाहसामान्यस्य। अभ्युपेत्याह—**भाव** इति। तत्तज्जन्यतावच्छेदकवैजात्यस्य
10 दाहे 'भावे वे'त्यस्यार्थः। 'असौ' त्वदुक्तः पक्षः। शक्तिश्च दूरप्रतिक्षिप्तैवेति भावः। यादृशप्रतिबन्धके येन येन सम्बन्धेन यदुत्तेजकं तेन तेन सम्बन्धेन तादृशोत्तेज-काभावकूटवत्तादृशप्रतिबन्धकस्य येन सम्बन्धेन प्रतिबन्धकत्वं तेन सम्बन्धेनाभावस्य हेतुत्वं व्यवस्थाप्य निरुत्तेजकप्रतिबन्धकस्थले व्यभिचारमुद्धरति—**प्रागि**ति। तत्र तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावानामेवहेतुत्वं, ध्वंसप्रागभावयोः प्रतियोग्यत्यन्ता
15 भावाविरोधित्वे तु तत्तत्सामान्याभाव एव तथेति ध्येयम्। इतरेतराभावं सत्यपि प्रतिबन्धके सम्बन्धान्तरावच्छिन्नप्रतियोगिताकतदभावश्चादायान्वयव्यभिचारमुद्धरति—**यस्मिन् सती**ति। 'यस्मिन्' येन सम्बन्धेन। **संसर्गे**ति। तादृशसम्बन्धावच्छिन्न-प्रतियोगिताकत्वस्य संसर्गाभाव एव विश्रामादित्यर्थः।

ननु संसर्गावच्छिन्नप्रतियोगिताकत्वमेव संसर्गाभावत्वं तच्च भेदसाधारणन्तादात्म्यस्यापि
20 संसर्गत्वात्, संसर्गस्यापि तादात्म्यतया च भेदत्वमपि संसर्गाभावत्वाभिमतसाधारणमत आह—**यस्त्वि**ति। 'यः' संसर्गाभावतादात्म्ये निषेधयो'र्विशेषं' परस्परव्यावर्तक-लक्षण'मनाकलयन्' 'इतरेतराभावेन' सत्यपि प्रतिबन्धके तद्भेदेन 'प्रस्त्यवतिष्ठते' अन्वयव्यभिचारमुद्भावयति, 'स प्रतिबोधनीयः' प्रतिबन्धयोर्विशेषं बोधनीयः। स च इत्थं व्यापकाभावेन व्याप्याभावानुमानम्, अनुपलब्ध्या अभावोपलम्भः सत्यप्युप-
25 लभ्यमाने प्रतियोगिनि तद्भेदादेव स्यादित्यनायत्या त्वयापि तन्निर्वचनीयं तच्चाखण्डं पदार्थान्तरमन्यद्वेत्यन्यदेतत्। **मिश्रास्तु** प्रतियोग्यवृत्तित्वे सति प्रतियोगिक्षणवृत्तित्वं भावभेदत्वं तदन्याभावत्वं संसर्गाभावत्वं, तन्न, एकार्थसमवायसम्बन्धेन सत्तात्यन्ता-भावेऽतिव्याप्तेः(?)। 'त्रयाणां' प्राक्प्रध्वंसाभावात्यन्ताभावाना'मुपग्रहः' अनतिप्रसक्तधर्मेणा-नुगमः। 'मा भूदि'त्यनन्तर'मभावेष्वि'ति प्राक्तनमनुषज्यते। **व्यवहारे**ति।

व्यवह्रियतेऽनेनेति व्युत्पत्त्या व्यवहारः सामान्यकारणताग्रहः, त'दङ्गत्वं' तद्विषयत्वम्' सर्वत्रेति। इन्द्रियत्वशरीरत्वादिना कारणताग्रहविलोपापत्तेरित्यर्थः। **एतेने**ति। यत्किञ्चि-द्दण्डे सत्येव घटोत्पादवत् यत्किञ्चित्प्रतिबन्धकाभावसत्त्व एव सत्यपि प्रतिबन्धकान्तरे कार्यं स्यादित्यर्थः। नन्वन्वयव्यभिचारः कथं कारणताविरोधीत्याशंकायामाह— **अनुत्पादे**ति। **ततोऽपी**ति। तथाच तेनैव कार्यसम्भवे अयमन्यथासिद्ध इति भावः। 'तज्जातीये' दण्डजातीययत्किञ्चिद्व्यक्तौ, 'असति' तज्जातीये 'तद्भावेऽपि' यत्किञ्चित्कारणजातीयसत्त्वेऽपि 'तज्जातीयान्तराभावाद्द'ण्डाद्यन्तरस्याभावात्, 'तथैव' तदपि मानत्वाद्यवच्छिन्नसामान्याभाववत् यावद्विशेषाभावे कार्यं न तु व्यक्त्यन्तराभाव-सत्त्वादेवेत्यर्थः। **अनुकूले**ति। यथानुकूले कारणजातीये सति तज्जातीयान्तराभावो न कार्यप्रतिकूलः, तथा प्रतिकूले प्रतिबन्धकयत्किञ्चिद्व्यक्तौ सत्यां तज्जातीयान्तराभावो नानुकूल इत्यर्थः। **मुख्य** इति। कार्यानुत्पादहेतुतया मन्त्रादिरेव प्रतिबन्धकः। गौणं मतम्।

'अकुर्वन्त एव' मन्त्रादयः। 'तस्य' कार्यप्रागभावस्य। 'कालस्य स्वरूपतो महा-कालस्या'भेदात्'। तथा च न साध्यत्वमिति भावः। प्राप्तिः स्वरूपान्नातिरिच्यत इति भावः। यद्वा 'कालस्य स्वरूपतः' प्राप्तिलक्षणस्वरूपसम्बन्धा'दभेदात्' तथा च कालस्या-साध्यत्वादेव तत्प्राप्तेरपि तत्त्वमिति भावः। 'तदुपाधेः' कालोपाधिसामान्यस्य। कालोपाधि-विशेषो मन्त्रजन्यः स्यादित्याह—**प्रागभावे**ति। प्रागभावाधिकरणीभूतकालोपाधिरित्यर्थः। 'तदपेक्षः' मन्त्रापेक्षः, 'तस्य' निरुक्तकालोपाधिसामान्यस्य। नन्वेवं कारणाभावात् कार्यानुत्पाद इति कथं व्यवहार इत्यत्राह—**तस्मादि**ति। 'तदभावयोः सामग्र्यभावकार्या-भावयोः 'पूर्वापरभावः' साध्यत्वनिरूपकाश्रयभावः 'उपचर्यते' प्रतियोगिनिष्ठस्य तस्य परम्परासम्बन्धः पञ्चम्या बोध्यते। 'तुल्यकालत्वं' साध्यसाधनभावविरहसामग्र्यभावकार्या-नुत्पादयोः। एतावता प्रबन्धेन प्रतिबन्धकाभावस्य कारणत्वव्युत्पादनेन शक्तिर्निराकृता। न च मन्त्रादिविशिष्टदाहे उत्तेजकानां हेतुत्वमस्तु किं विशिष्टाभावहेतुत्वकल्पनयेति वाच्यम्; उत्तेजकानामननुगतत्वेन व्यभिचारात्। न च यावन्त उत्तेजकाभावास्त्वया विशेषणीकृतास्तावतां यावत्तावच्छिन्नप्रतियोगिताकाभावस्तथा तस्य चातिरिक्तत्वेऽनति-रिक्तत्वे च न व्यभिचार इति वाच्यम्। एवमपि स्वर्गसाधनत्वेन ये श्रुतास्तदभावकूट-त्वावच्छिन्नाभावत्वेन स्वर्गसामान्यकारणत्वोपपत्तौ तद्वैजात्यानुपगमप्रसङ्गात्। किञ्च सति प्रतिबन्धके उत्तेजकाभावात् प्रतिबन्धकविशिष्टं कार्यं मा जनिष्ट, तदविशिष्टकार्यन्तु अन्यत्र क्लृप्तसामान्यसामग्रीतः स्यादेव; तथा प्रतिबन्धकापसरणानन्तरं या कार्य-

व्यक्तिर्जायते तद्व्यक्तिनिखिलकारणस्य तदानीनपि भावात् विना कारणाभावं कार्यानुत्पादनस्य ब्रह्मणापि दुरुपपादत्वात् । क्षणविशेषेण तदुत्पादोपगमे तु तावन्मात्रकारणपरिशेषापत्तेरिति । यत्तु प्रतिबन्धकाभावः कारणतावच्छेदको न तु कारणमिति तन्न, विनिगमनाविरहात् अन्वयव्यतिरेकानुविधानस्य चाविशेषात् । न चासत्यपि भावभूते 5 कारणे सति च तदुपलक्षिते प्रतिबन्धकाभावे (प्रसङ्गः) कार्योत्पत्तेरिति वाच्यं, प्रतिबन्धकाभावोपलक्षितादपि कार्योत्पादापत्तेः । अन्यत्र कारणतावच्छेदकपूर्ववर्तिताया अनपेक्षत्वेऽपि प्रतिबन्धकाभावे तस्मिन् साप्यपेक्षणीयेति चेत्तुल्यं भावभूतकारणतावच्छेदकविशेषेऽपीति । ननु कारणतावच्छेदकस्य तदानीं सत्त्वेऽपि विशिष्टाभावस्य तदव्यवहितप्राक्क्षणवृत्तितया तत्प्रतियोगितावच्छेदकत्वेन कारणतावच्छेदस्य कथन्तेन रूपेण कारणतावच्छेदकत्वमिति 10 चेन्न; द्विविधो हि विशिष्टाभावः, एको दैशिकः, सम्बन्धमात्रेण विशेषणीभूतं यत्तदवच्छिन्नप्रतियोगिताकश्च । तत्र तत्काले सति विशेषणे यद्यप्यन्त्यः सम्भवति तथापि नाद्य इति न तथा कारणताविरोध इति दिक् । तादृशाभावस्य प्रतियोगिसमानाधिकरणतया कारणताघटकाभावस्य च तदसमानाधिकरणत्वेनावश्यं विशेषणीयतया न क्षतिरित्यप्याहुः । अस्मत्पक्षे त्वदुक्तदोषाणां त्वत्पक्षेऽपि सम्भव इत्याह— **न चेदि**ति । 15 **तद्धर्मो वा** विनाश्यते । तद्धर्मान्तरं वह्निनिष्ठं शक्तिनिष्ठं वा । सन्निधिक्रमेण दूषयति— **तत्रे**ति । अन्त्यं दूषयित्वा तृतीयं दूषति— **विपरीते**ति । दाहप्रतिकूलेत्यर्थः । प्रथमद्वितीयौ दूषयति— **तद्विनाशे**त्यादिना ।

पुनरुत्तम्भकेन पुनरुत्तम्भकेनैवेति यावत् । व्यवच्छेद्या आश्रयसामग्री । तज्जनने दाहानुकूलशक्तितद्धर्मयोर्जनने । स्वरूपं स्वाश्रयः स्वं रूपं यस्येति व्युत्पत्तेः । तदुत्पत्तेः 20 शक्तिधर्मयोः । समानशक्तिकतया स्वाश्रयसामग्र्युत्तम्भकयोर्नैवं नानियतहेतुकत्वम् । **विजातीयेष्वि**ति । इदमुपलक्षणमुत्तेजकाधीनाया अपि शक्तेः प्रतिबन्धकान्नाशः स्यादित्यपि बोध्यम् । उत्तेजकविशिष्टमेव प्रतिबन्धकं यदा समवहितं तदभिप्रायेणाह— **न चे**ति । प्रतिबन्धकशक्तिं मन्त्रादिनिष्ठां दाहानुकूलशक्तिनाशप्रयोजकशक्तिं विरुणद्धि नाशयति । प्रतिबन्धकोत्तेजकयोः क्रमिकसन्निधानस्थलमभिप्रेत्याह— **तदनुत्पादे**ति । 25 दाहानुकूलशक्त्यनुत्पादेत्यर्थः । **कालविशेषात्** उत्तेजकसमवधानकालात् । **तदुत्पादे** दाहशक्त्युत्पादे । एतेन वह्निः करवह्निसंयोगो वा दाहानुकूलाद्दिष्टातीन्द्रियवान् अतीन्द्रियवान् वा दाहजनकत्वाद् भावत्वाद्वा स्थितिस्थापकादृष्टवदात्मसंयोगोष्णस्पर्शानादायार्थान्तरवारणाय प्रथमसाध्ये विशेषणत्रयं, समवायसम्बन्धस्य साध्यतावच्छेदकत्वाच्च जन्यमात्रस्य कालोपाधितया अदृष्टादेरपि तेन सम्बन्धेन वृत्त्या नार्थान्तरम् । अतएवा-

भावस्य तन्मते अनुपलब्धत्वेनातीन्द्रियतया तेनापि नार्थान्तरं, समवायोऽतिरिक्तोऽनतिरिक्तो वेत्यन्यदेतदित्यपास्तम्। अप्रयोजकत्वात् प्रथमे साधनावच्छिन्नसाध्यव्यापकस्य बहिरिन्द्रियाप्रत्यक्षत्वस्योपाधित्वात्, द्वितीये ऐन्द्रियकत्वावच्छिन्नसाध्यव्यापकस्य द्रव्यत्वस्य तथात्वाच्च ॥१०॥

## परिमलः

अस्तु अपूर्वम्, परन्तु नासौ आत्मधर्मः किन्तु भूतधर्मः गुरुत्वादिवदतीन्द्रियः कार्यानुमेयः, आदिपदेन मीमांसकाभिमतशक्तिर्गृह्यते। शक्तौ अर्थापत्तिं प्रमाणयति—तथाहीति। सत्यपि कारणकलापे प्रतिबन्धे सति दाहो न जन्यतेऽसति तु जन्यते इति वन्हौ दाहानुकूला शक्तिः स्वीक्रियते या च प्रतिबन्धकेन नाश्यते। अर्थापत्तौ दूषणामन्यथोपपत्तिं परिहरति—न दृष्टस्य कारणसाकल्यस्य वैगुण्यमुपलभ्यते येन दाहानुत्पत्तिरन्यथोपपन्ना स्यात्। नाप्यदृष्टवैगुण्यं समर्थयितुं शक्यते। अदृष्टं हि कारणकलापं सन्निधापयति, न तु आहत्य स्वयं करोति, तस्मिन्सति अदृष्टवैगुण्यसंभावनैव नास्ति, तस्यादृष्टस्य दृष्टकारणकलापमात्रार्थत्वात्। मात्रपदेन तदतिरिक्तं प्रतिषेधति। दृष्टकारणसमवधानमात्रमदृष्टस्य प्रयोजनमिति कुतो निश्चीयते इत्यत आह—अन्यथेति। कर्मणि संयोगादिकारण-सत्त्वेऽदृष्टवैगुण्यात्कदाचित्तन्न स्यात्। अतो यद्वैकल्यात्कार्यं न जायते तदग्नौ स्वीकर्तव्यम्। भोजनाभावात्पीनत्वाभाववद् शक्त्यभावाधीनदाहाभावोनुपपत्त्याऽर्थापत्तिप्रमाणात् शक्तिः सिद्ध्यतीति भावः। ननूभयसिद्धान्वयव्यतिरेकवत्प्रतिबन्धकाभाव एव दाहप्रयोजकः, कृतमन्यतरासिद्ध शक्तिकल्पनेनेत्यत आह—न चेति अभावस्य तुच्छत्वेनाकारणत्वात्। तुच्छत्वं च न विधिरूपम् इति तत्त्वम्, न हि अभावो विधिगोचरः, व्यापारं विनैव तत्सिद्धेः। कारणत्वं च विधित्वव्याप्यमिति मीमांसकाभिप्रायः। मीमांसकैरलीकानङ्गीकारादित्यग्रे स्फुटीभविष्यति।

कारणाभावेऽपि कार्योत्पत्तिरूपव्यतिरेकव्यभिचारं शङ्कते—प्रतिबन्धकोत्तम्भकयोस्समवधाने प्रतिबन्धकसत्त्वेऽपि दाहोत्पत्त्या न तस्य कारणत्वमेवमन्वयव्यभिचारोऽपि। एकस्य मणेः प्रतिबन्धकस्य सत्त्वेऽपि तदन्यमन्त्रौषधादेः प्रतिबन्धकस्याभावेऽपि कार्यानुत्पादात्, अव्यभिचरितावन्वयव्यतिरेकावेव कारणताग्राहकौ तौ च प्रकृते न स्त इति भावः। सामान्यतः व्यतिरेकव्यमिचारम्प्रदर्श्य विशिष्य व्यभिचारप्रदर्शनायाह—प्रागिति। प्रतिबन्धकप्रागभावस्थले ध्वंसादिर्नास्ति ध्वंसादिस्थले प्रागभावो नास्तीति परस्परजन्ये परस्परव्यभिचारात् न प्रतिबन्धकाभावस्य हेतुत्वमिति नान्यथोपपत्तिः। न च प्रागभावप्रध्वंसात्यन्ताभावेषु एकः कश्चन धर्मो येन तद्रूपेण सर्वेषां संग्रहः संभवेत्। न च प्रागभावबुबोधयिषया प्राक्पदोपादानमयुक्तं, तत्र तच्छक्तेरनङ्गीकारादिति वाच्यम्। यतो ध्वंसपदमिहाभावपरं न प्रध्वंसपरं, तथा च तद्विशेषणतया प्रध्वंसपदेन प्रागभावस्य लाभात् नानुपपत्तिः। आदिपदेनात्यन्ताभाववद्ध्वंसस्यापि लाभ इति स्थितस्य गतिः। प्रतिबन्धकप्रागभावस्थले तदत्यन्ताभावो नास्तीत्यादिरीत्या तत्तदभावस्यानियतत्वेन दाहस्यानियतहेतुकत्वापत्तेः। तच्चानिष्टम्, नियतपूर्ववर्तिन एव हेतुत्वात्, प्रतिबध्नाति यः स प्रतिबन्धक उच्यते। अकिञ्चित्कुर्वतो मण्यादेः प्रतिबन्धकत्वानुपपत्तिः स्फुटैव। शक्तिनाशरूपप्रतिबन्धं कुर्वतो मण्यादेः प्रतिबन्धकत्वे तु अतीन्द्रियशक्ति-

स्वीकार आवश्यकः। प्रतिबन्धकाभावस्य कारणत्वे दूषणान्तरमाह—मन्त्रादीति। यदि प्रागभावादिष्वनुगतमभावत्वमेकमस्तीति तेन तेषां संग्रहस्तदान्योन्याभावेऽपि तदस्तीति मन्त्रादिप्रयोगेऽपि तस्य सद्भावात्कार्योत्पत्त्यापत्तेः। अन्योन्याभावव्यावृत्तं संसर्गाभावत्वन्तु निर्वक्तुमशक्यम्। स्वपक्षमुपसंहरति—अत इति। यतः प्रतिबन्धकाभावस्योक्तयुक्त्या कारणत्वं न संभवति अतोऽतीन्द्रियं दाहानुगुणमनुग्राहकं किञ्चित्कल्पनीयम्, सैव च शक्तिः। अनुगुणत्वं कार्याभावव्याप्याभावप्रतियोगिकारणं सहकारि च व्यापकं, कार्यं च व्याप्यमिति कार्याभावव्याप्यः कारणविरहः सहकारिविरहश्च ययोर्व्याप्यव्यापकभावस्तद्विपरीतस्तदभावयोर्व्याप्यव्यापकभाव इति सिद्धान्तात्, तत्प्रतियोगित्वं सहकारिणोऽपीति शक्तेः सहकारित्वस्वीकारे मीमांसकानामपसिद्धान्तस्तन्मते शक्तेरकारणत्वात् शक्तिमत एव कारणत्वाभ्युपगमादत आह—अनुग्राहकं कारणतावच्छेदकं शक्तिमतः कारणत्वे शक्तेस्तदवच्छेदकत्वमायाति लभ्यते। कर्मणः सम्बन्धविवक्षया वन्हिमपकुर्वतां शक्तिं नाशयतां मण्यादीनां प्रतिबन्धकत्वम्। अथवा स्वरूपमित्यध्याहार्यं, यस्य कारणत्वेनाभिमतस्य स्वरूपं कारणतावच्छेदकशक्तिमपकुर्वतामित्यर्थः। तथा च प्रतिबन्धकेन कारणतावच्छेदकशक्तिरूपस्य तत्स्वरूपस्य विनाशान्न कार्योत्पत्तिः।

ननु प्रतिबन्धके दाहशक्तेर्नाशस्वीकारे पुरुषान्तरेणापि दाहो न स्यादिति चेन्न। तत्पुरुषीयदाहानुकूलशक्तेरेव विनाशस्वीकारात् पुरुषान्तरे न तदनुपपत्तिः, फलबलेन नाश्यनाशकभावस्वीकारादिति भावः। एवं तृणादीनां वन्हिं प्रति अनियतहेतुकत्वपरिहाराय वन्हिजननशक्तिमत्त्वेन रूपेण कारणत्वं समर्थनीयमिति हृदयम्। उत्तरयति—भाव इति।

अन्वयव्यतिरेकानुविधायित्वेन यथा भावः कारणम्, तथा तेनैवाभावोऽपिकारणं मतः कारणताग्राहकान्वयव्यतिरेकयोस्तौल्यात्। कारणत्वं भावत्वव्याप्तमित्यभावो न कारणमिति यदि ब्रूयात्तत्राह—एवं तर्हि अभावः कार्योऽपि न स्यात्, कार्यत्वस्यापि भावत्वव्याप्तत्वाङ्गीकारात्, अपि च वैपरीत्यमेव किन्नोच्यते। भावत्वव्याप्तत्वे मानादभावः कार्यवत्कारणमिति बोध्यम्। द्वितीयां विप्रतिपत्तिं निरस्यति—प्रतिबन्ध इति। दाहसामग्र्यन्तर्गतमण्याद्यभावप्रतियोगी मण्यादिः प्रतिन्धः तत्संयोगेन पुरुष एव प्रतिबन्धकः, स च किंचित्कर एव न मण्यादिः प्रतिबन्धकः, किन्तु सामग्रीवैकल्परूपप्रतिबन्धः। मण्यादौ प्रतिबन्धकशब्दप्रयोगश्च स्वार्थेकप्रत्ययान्तस्य बोध्यः। नचाभावस्याकारणत्वे किंचिन्मानम्। तुच्छत्वमेवतत्र मानमित्यत आह—नहीति। विधि रूपेण भावत्वेन रूपेण तस्य तुच्छत्वेऽपि भावभिन्नत्वेऽपीत्यर्थः। स्वरूपेणाभावत्वेनरूपेण तस्यातुच्छत्वात्। तुच्छत्वंनालीकत्वमनङ्गीकारात्, किन्तु अन्यरूपेणासत्वं, तच्च भावेप्यविशिष्टम्, घटादेर्भावस्यापि घटाद्यभावनिषेधरूपत्वात्। भावनिषेधात्मकतयैवाभावस्याकारणत्वे भावस्याप्यभावनिषेधात्मकतयातस्याप्यकारणत्वं स्यात्। अथ कारणत्वं भावत्वव्याप्तं तन्निवृत्तौ कारणत्वमपि निवर्तते शिंशपात्वमिव वृक्षत्वनिवृत्तौ इति चेन्न। कारणत्वमभावत्वव्याप्तमित्यभावत्वनिवृत्तौ कारणत्वं निवर्तते इति विपरीतस्यापि वक्तुं शक्यत्वात्। नियतपूर्ववर्तित्वरूपं कारणत्वं भाववदभावेऽपितुल्यमिति भावः कारणताग्राहकान्वयव्यतिरेकयोर्भावाभावसाधारण्यात्। न च सत्ताविशिष्टस्यैव कारणत्वमभावे तदभावादकारणत्वं तस्येतिवाच्यम्, आत्माश्रयादिभयेन सत्तायां सत्ताविरहात्तस्यैवाकारणत्वापत्या विशिष्टस्यकारणताया वक्तुमशक्यत्वात्। यद्यपि अन्वय-व्यतिरेकानुविधानं भाववदभावेऽप्यस्ति, तथापि आकाशस्येव अभावस्य सन्निधिरवर्ज-

नीयतया वर्जयितुमशक्यतया न तु कारणतया। यथा घटाद्युत्पत्तौ हेतुत्वेन दण्डाद्यपेक्षेति-घटोत्पत्तिप्राक्काले तस्यसन्निधिर्नियता एवमाकाशसन्निधिरपिनियतैव। यत्र घटाद्युत्पत्तिस्तत्राकाश-सन्निरिधिरस्त्येव तस्य परिहर्तुमशक्यत्वात्, नहि यत्र घटाद्युत्पत्तिस्तत्रनाकाशसन्निधिरिति, किन्तु कारणत्वेनतत्सन्निधिर्न तस्यान्यथासिद्धत्वात्, एवमभावस्यापि सन्निधिर्न हेतुत्वेन किन्त्ववर्जनीय-त्वेनेति न तस्य कारणत्वमित्यर्थः। तुल्यमिति! अभावस्यैव कारणत्वाङ्गीकारे भावसन्निधिरेवा 5 वर्जनीयाऽत एवान्यथासिद्ध इत्यपिवक्तुं शक्यत एव। अयं भावः—कारणसामग्र्यां वन्हयादेरिव मरायाद्यभावस्यापि समावेशात्तत्र भावस्यैव कारणत्वेऽभावसन्निधिरन्यथासिद्ध इति यथा परैरुच्यते एवमभावस्यैवकारणत्वे वन्हयादिसन्निधिरन्यथासिद्ध इति किन्न वक्तुं शक्यते। सामग्र्याः कारणत्वे द्वयोर्भावाभावयोः कारणत्वमभावमुपेक्ष्य भावमात्रस्यैव कारणत्वे भावमुपेक्ष्याभावमात्रकारणताया अन्यैर्वक्तुं शक्यत्वात्, प्रतियोगिनो मण्यादेः प्रतिबन्धकस्यापसारणायाभावसन्निधिरपेक्ष्यते 10 इत्यसौ यदि अन्यथासिद्धस्तर्हि तुल्यमिति भावस्य वन्हयादेरपि अकारणीभूतस्वभावस्योत्सारकत्वेन तत्सन्निधेरपि अन्यप्रयुक्ततया अन्यथासिद्ध इति तुल्यम्, मिथो विरोधित्वेनोभयोः परस्परप्रतिक्षेप कत्वसाम्यात्, भावस्याभावोत्सारणं भावरूपान्नातिरिच्यते तर्हि अभावस्यापि भावोत्सारणं तत्स्व-रूपान्नातिरिच्यते इति समम्। यथाऽभावोत्सारणं भावस्तथा भावोत्सारणमभाव इत्युभयोत्सारणं तत्तत्स्वरूपान्नातिरिक्तमित्यर्थः। वस्तुतस्तु गतौ कुड्याद्यभावस्याभावज्ञानेऽनुपलब्धे प्रत्यवाये 15 विहिताकारणत्वस्य वेदप्रामाण्ये निर्दोषत्वस्य हेतुत्वं मीमांसकैरपि स्वीक्रियते इत्यभावस्य कारणत्वानभ्युपगमेऽपसिद्धान्तापत्तेः। अभावस्य कारणत्वमुपसंहरति—तस्मादिति। यथा भावस्यैव भावोजनक इति नियमो नास्तिध्वंसस्यापि भावजन्यत्वात् तथा भाव एव जनक इत्यपि नियमो नास्ति प्रमाणाभावादिति भावः। यद्यपि प्रतिबन्धकोत्तम्भकसंप्रयोगे व्यभिचारप्रदर्शनं तदपि न तदानीं प्रतिबन्धकाभावस्य सत्त्वात्। 20

ननु प्रतिबन्धकसत्त्वे कथं तदभाव इति चेच्छृणु—केवलप्रतिबन्धकसहितवन्ह्यादि-सद्भावाद् दाहानुत्पत्तिस्तादृशे एव तस्मिन् सति यदि दाहः स्यात्तदा व्यभिचारः स्यात्। प्रकृते तु तथा नास्ति, उत्तम्भकसद्भावस्याधिक्यात्, न सन् प्रतिपक्षः प्रतिद्वन्द्वी यस्य सः प्रतिबन्धकः उच्यते। प्रकृते तु उत्तम्भकः प्रतिबन्धकः प्रतिद्वन्द्वी विद्यते इति न प्रतिबन्धकः, उत्तेजकाभावविशिष्टस्यैव मण्यादेः प्रतिबन्धकत्वात्, तादृशः उत्तेजकाभावविशिष्टः प्रतिबन्धकः 25 मण्यादिः नास्त्येव। यस्तूत्तेजकविशिष्टो मणिरस्ति नासौ प्रतिबन्धकः, कार्याभावैकगम्यं प्रतिपक्षत्वं कार्यदर्शने तन्नास्तीति ज्ञायते। यत्र विशेष्ये प्रतिबन्धके सति विशेषणस्य उत्तम्भका-भावस्याभाव उत्तम्भकमस्ति, तत्रोत्तम्भक एव दाहकारणं, यत्र च प्रतिबन्धकस्योत्तम्भकस्य च द्वयोरभावस्तत्र प्रतिबन्धकाभाव एव कारणमिति सामग्रीभेदः, तथा चानियतहेतुकापत्तिस्तद-वस्थैवेति निराकरोति—नेति। यत्र प्रतिबन्धकोत्तम्भकंद्वयमस्ति तत्र न केवलस्योत्तम्भकाभावस्य 30 विशेषणमात्रस्याभावः, किन्तु विशिष्टस्य उत्तम्भकाभावविशिष्टस्य प्रतिबन्धकस्याप्यभावः, यत्र विशेषणभावप्रयुक्तो विशिष्टाभावः, विशेष्याभावप्रयुक्तो विशिष्टाभावः, उभयाभावप्रयुक्तो विशिष्टाभावस्तत्र सर्वत्रानुगतस्य विशिष्टाभावस्यैव कारणत्वं तदेव प्रपञ्चयति—नहीति। यत्र भूतले दण्डी अस्ति तत्र अदण्डी नास्तीति प्रतीतिर्न केवलस्य विशेषणस्य दण्डाभावस्याभाव-मात्रमवगाहतेऽपि तु तद्विशिष्टानामन्येषां पुरुषाणामप्यभावमिति लोकसिद्धम्। यत्र केवल- 35 दण्डोऽस्ति, यत्र वा तदुभयाभावः, यत्र च दण्डपुरुषोभयमस्ति तत्र सर्वत्र अदण्डी पुरुषो

नास्तीति प्रतीतिर्जायते। प्रथमे विशेषणदण्डाभावाभावविशेष्याभावोभयप्रयुक्तो विशिष्टाभावः, मध्यमे तु विशेष्याभावप्रयुक्तो विशिष्टाभावः विशेषणस्य दण्डाभावस्य सत्त्वात्, अन्त्ये तु विशेषणाभावप्रयुक्तो विशिष्टाभावः सर्वत्रानुगतः, तथा केवलोत्तम्भकसद्भावे विशेषणोत्तेजकाभावविशेष्यप्रतिबन्धकैतदुभयाभावप्रयुक्त उत्तम्भकप्रतिबन्धकोभयसद्भावे विशेषणोत्तेजकाभावप्रयुक्त उत्तम्भकप्रतिबन्धकोभयाभावे विशेष्याभावप्रयुक्तो विशिष्टाभावः सर्वत्र सुलभः, एवं च विशेषणाद्यभावव्यापक उत्तेजकाभावविशिष्टप्रतिबन्धकाभावो दाहकारणमित्यर्थः। ननु विशिष्टं न विशेषणविशेष्यतत्संसर्गातिरिक्तं येन प्रतियोगिभेदाद्विशेषणाद्यभावातिरिक्तोऽनुगतः कारणं स्यात्, किन्तु विशेषणाद्यभाव एव तथा च सामग्रीभेदस्तदवस्थ एवेति चेन्न। प्रतियोगिभेदादिव प्रतियोगितावच्छेदकभेदादप्यभावभेदस्वीकारात्। विस्तरस्तु प्रकाशे द्रष्टव्य इति।

विशेषणाद्यभावत्रयघटितं सामग्रीत्रयमेव हेतुरस्तु किमनुगतेन विशिष्टाभावेनेत्याशंकते—**अथेति कार्यस्येति**। व्यभिचारादेकैकस्य कारणत्वं न स्यात्। न च कार्ये तत्तज्जातिभेदकल्पनया व्यभिचारवारणं स्यादिति वाच्यम्। अतीन्द्रियजातिभेदकल्पनायां प्रमाणाभावात्। ननु तृणादिजन्यवन्ह्यादौ यथा व्यभिचारवारणाय जातिभेदः स्वीक्रियते तथा प्रकृतेऽपि तदर्थं जातिभेदः कल्प्यतामिति चेन्न। उक्तेन विशिष्टाभावेनानुगतेन व्यभिचारपरिहारसम्भवात् तत्तज्जातिभेदकल्पनायां गौरवाच्च। जातिभेदाग्रहे तु कल्पितेन जातिभेदेन नास्माकं क्षतिः।

प्रागभावप्रध्वंसात्यन्ताभावानां कारणत्वे व्यभिचारं परिहरति—**नचास्मिन्सतीत्यादि**। प्रागभावादित्रितयानुगतेन संसर्गाभावत्वेनैकोपाधिना त्रयाणां कारणत्वे न व्यभिचारगन्धोऽपि। ननु यदि संसर्गान्योन्याभावयोर्भेदः स्यात्तदाऽन्योन्याभावव्यावृत्तसंसर्गाभावत्वेन कारणत्वं स्यात्तदेव तु नास्ति, तथा च प्रतिबन्धकाधिकरणे तदन्योऽन्याभावसत्त्वाद्दाहः स्यादित्यत आह—**यस्त्विति**। प्रतिबन्द्या बोधनीयः। वन्हिसत्त्वेधूमसत्ता वन्हिव्यतिरेके धूमव्यतिरेक इत्यन्वयव्यतिरेकधिया धूमकारणत्वं तद्व्यापकत्वं च वन्हौ गृह्यते इति मीमांसकैरपि स्वीक्रियते। यदि अन्योन्याभावव्यावृत्तः संसर्गाभावो न स्यात्तदा व्यतिरेकपदेनान्योन्याभावस्यापि संग्रहे तस्य व्याप्तिकारणग्राहकत्वाभावेन तदसंगत्यापत्तेः प्रागभावादिविकल्पस्य तत्रापि सम्भवात्। व्याप्यकार्यजनेन व्यापकसामग्रीकारणमिति निष्कर्षेऽपि व्यापकसामग्रीसत्त्वेऽपि तदन्योन्याभावसत्त्वाद् व्याप्यकार्योत्पादो न स्यात् प्रतिबन्धकाभावे सतिवन्हौ दाहानुकूला शक्तिरस्तीति मीमांसकैः स्वीक्रियते। तथा च प्रतिबन्धकसत्त्वेऽपि तदन्योन्याभावसत्त्वाद्दाहापत्तेरिति तैरपि संसर्गाभावत्वमभ्युपेयमिति भावः। अभावे जात्यनङ्गीकारेऽपि उपाधेः स्वीकारात्तेनैव त्रयाणां प्रागभावादीनां संग्रहः। न हि जात्यैवानेकसंग्रहो नोपाधिनेति कुलधर्मः। न च संसर्गाभावत्वं वक्तुमशक्यमपि यत्राधिकरणे प्रतियोगिनमारोप्य निषेधधीस्तत्रासंसर्गाभावो यत्र तु प्रतियोगितावच्छेदकमारोप्य निषेधीस्तत्रान्योन्याभाव इति प्रकाशः। ननु एकस्मिन्दण्डे सति यथा घटोत्पत्तिर्नतु यावदद्दण्डसत्वा पेक्षा तथैव प्रतिबन्धकसत्त्वेऽपि प्रतिबधकान्तराभावसत्त्वात्तत्कार्यापत्तिः स्याद्यावत्प्रतिबन्धकाभावस्यानपेक्षितत्त्वादित्यतआह—**एतेनेति**। एकप्रतिबन्धकसत्त्वे प्रतिबन्धकान्तराभावसत्त्वेऽपि यदि कार्यं नोत्पद्यते तदा अधिकं किमपेक्ष्यत इति मन्तव्यम्। अधिकं शक्तिरूपं पराभिमतं निराकरोति—**यथाहीति**। यज्जातीये बीजजातीये सति अङ्कुरजातीयमुत्पद्यते- बीजजातीयाभावेऽङ्कुरजातीयं न जायत इति नियमे स्थिते बीजजातीयान्तराभावादङ्कुरो न भवितुमर्हति इति यथा

कश्चिदयुक्तं ब्रूयात्तथेदमपि अयुक्तम्। प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकस्तदभावः कारणम्। यत्किञ्चित्प्रतिबन्धके सति तत्सामान्याभावो नास्त्येव सामान्याभावस्य यावद्विशेषाभावनियतत्वात्। तथा चैकप्रतिबन्धकसत्त्वे प्रतिबन्धकान्तराभावमादाय कार्यमापादयितुं न शक्यते कारणीभूतसामान्याभावस्य तत्रासत्त्वात्। अनुकूले भावकारणस्थले यथाजातीयान्तरविरहोऽकिञ्चित्करो यत्किञ्चिद्बीजजातीयादेव तत्कार्यं सम्भवति, तथा प्रतिकूलस्थले प्रतिबन्धकस्थले यत्किञ्चित्प्रतिबन्धकसत्त्वे कार्यानुत्पाद एव प्रतिबन्धकान्तराभावस्याकिञ्चित्करत्वादिति भावः। अथवा प्रतिबन्धकाभावत्वेन न कारणता अन्योन्याश्रयत्वात्। तथाहि—कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्। मण्याद्यभावस्य कारणत्वे ज्ञाते तत्प्रतियोगित्वेनमण्यादेः प्रतिबन्धकत्वं बोध्यम्। मण्यादेः प्रतिबन्धकत्वे ज्ञाते च प्रतिबन्धकसंसर्गाभावत्वेन मण्याद्यभावस्य कारणत्वग्रहः, प्रतिबन्धकत्वज्ञाने कारणत्वज्ञानं, कारणत्वज्ञाने प्रतिबन्धकत्वज्ञानमपेक्ष्यते इति स्वग्रहसापेक्षग्रहसापेक्षत्वेनान्योऽश्रयः स्फुटः। किन्तु मण्याद्यभावकूटत्वेन प्रतिबन्धकत्वम्, यथा चैकप्रतिबन्धकसत्त्वे तदभावकूटाभावान्न कार्यापत्तिरिति भावः यत्तैरुक्तमकिञ्चित्करस्य प्रतिबन्धकत्वानुपपत्तिरिति तत्परिहरति—**सामग्रीवैकल्यं प्रतिबन्धपदार्थो मुख्यः।** प्रतिबन्धसत्त्वे सामग्रीवैकल्यं स एव प्रतिबन्धाभावस्य सामग्रीघटकत्वेन प्रतिबन्धः सामग्रीवैकल्यम्, तत्प्रयोक्तारः पुरुषाः प्रतिबंधकास्ते च किञ्चित्करा एवेति भावः।

ये तु कार्यस्यानुत्पत्तिरेव प्रतिबन्धस्तद्धेतुश्च मण्यादिप्रतिबन्धक इति कथयन्ति, तन्मते प्रतिबन्धमकुर्वाण एव प्रतिबन्धक इत्युक्तं भवति। तथाहि कार्यानुत्पादः किं कार्यप्रागभावस्तस्य कालान्तरप्राप्तिर्वा। आद्ये, प्रागभावस्यानादित्वात्तदुत्पादासंभवेन तद्धेतुत्वस्य प्रतिबन्धकाभिमतेष्वभावात्। न द्वितीयः। कालप्रागभावस्वरूपातिरिक्तायास्तत्प्राप्तेरभावात्। कालस्यैकत्वेन नित्यतया च प्रागभावस्य चानादितया तत्स्वरूपयोरनुत्पाद्यत्वेन प्रतिबन्धकाधीनोत्पादस्य सुतरामसम्भवात्। कालोपाधेः सूर्यपरिस्पन्दादेः स्वकारणैः सूर्यादिभिरेवोत्पादान्मन्त्रादेस्तत्कारणत्वासम्भवात्।

ननूपाधेः स्वकारणाधीनत्वेऽपि प्रागभावावच्छेदकोपाधेः प्रतिबन्धकाधीनत्वमेव, अन्यथा तत्पूर्वमपि तदवच्छेदकोपाधेरुत्पत्तिः स्यात्। मन्त्रादिसत्त्वे तदानीं कार्यं नोत्पद्यते किन्तु तदुत्तरकालमिति तादृशोपाधेर्मन्त्राधीनत्वमस्त्येवेति चेन्न। मन्त्रप्रयोगात्प्रागपि प्रागभावावच्छेदकोपाधेः सत्त्वेन तादृशोपाधिं प्रति तत्प्रयोजकत्वानभ्युपगमादित्यर्थः। मन्त्रप्रयोगात्पूर्वमपिप्रागभावस्तदवच्छेदकः, सूर्यपरिस्पन्दादिश्चास्त्येव, प्रागभावस्यानादितयाऽनुत्पाद्यत्वादुपाधेश्च स्वकारणाधीनत्वेन मन्त्राद्यधीनत्वं न कस्यापीति सुष्ठूक्तं भवति प्रतिबन्धमकुर्वन्त एव प्रतिबन्धका इति तैरुक्तं भवति।

ननु प्रागभावो नोत्पाद्यस्तर्हि कारणाभावात्कार्याभाव इति लौकिकः प्रयोगः कथं संगच्छतामित्यत आह—तस्मादिति। सामग्रीतत्कार्ययोः प्रयोज्यप्रयोजकभावदर्शनात्तदभावयोरपि स उपचर्यते, अर्थाद्गौणप्रयोगो न मुख्यः। वस्तुतस्तु कारणाभावात्कार्याभाव इत्यत्र न प्रयोज्यप्रयोजकभावः प्रतीयते। किन्तु द्वयोस्तुल्यकालत्वमेव, कारणाभावतुल्यकालिकः कार्याभाव इति नायं प्रयोज्यप्रयोजकविषयः सामग्रीवैकल्यं प्रतिबन्धस्तद्धेतवः पुरुषाः प्रतिबन्धका इति नाभ्युगम्यतेऽपितु कार्यानुत्पादः प्रतिबन्धस्तद्धेतुमन्त्रादिः प्रतिबन्धक इत्यभ्युपगम्यते, तदा

शक्तिस्वीकारेऽपि न दूषणपरिहारः शक्यसम्भवः। तथाही त्यादिनाविकल्पयति। प्रतिबन्धके मण्यादिना वन्हौ दाहानुकूला शक्तिर्वा नाश्यते, कारणधर्मो वा, दाहप्रतिकूलधर्मान्तरं वा जन्यते, न जन्यते किमपि इति चत्वारः पक्षाः। तत्र अन्तिमं पक्षं निरस्यति—यदि किमपि न जन्यते तदाऽकिञ्चित्करस्य मण्यादेः प्रतिबन्धकत्वानुपपत्तिः। तृतीयं पक्षं दूषयति—प्रतिबन्धको
5 दाहप्रतिकूलधर्मान्तरं जनयति तदा तादृशधर्माभावे एव दाहो जायते इति अभावस्य कारणत्वापत्तिः, तत्रापि पूर्ववत्प्रागभावादिविकल्पापत्तिश्च। प्रथमद्वितीययोः समानं दूषणमाह—**तद्विनाशे तद्धर्मविनाशे वेति।** शक्तिविनाशे प्रतिबन्धकेन शक्तिकारणधर्मयोर्विनाशे उत्तेजकसमवधाने कार्यदर्शनेन पुनः शक्तितद्धर्मयोरुत्पत्तेः स्वीकर्तव्यतया, दाहेऽनियतहेतुकत्वापत्तिश्च। पूर्वं प्राचीनशक्तितद्धर्मेण कार्योत्पत्तिरिदानीं नूतनशक्तिधर्माभ्यामित्यनियतहेतुकत्वं
10 स्फुटमेव, पूर्वं वन्हिस्वरूपादिदानीमुत्तेजकाद्दाहानुकूलशक्तेरुत्पादात्। "नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजेति" तदुक्तेः। वन्हेरनित्यत्वेन तच्छक्तेस्तत्स्वरूपादेवोत्पत्तिस्वीकारादिति भावः। न च वन्हिस्वरूपोत्तेजकयोरेकदाहानुकूलशक्तिजननशक्तिमत्त्वेनैकरूपेणैव कारणत्वमिति नानियतहेतुकत्वमिति वाच्यम्। विजातीयेषु समानशक्तेरनभ्युपगमात्। ननूत्तम्भको न दाहशक्तिं जनयति न वा तद्धर्मं किन्तु प्रतिबन्धकशक्तिमेव रुणद्धि इति नानियतहेतुकत्वमिति
15 चेन्न। पूर्वं प्रतिबन्धकेन विनाशितायां दाहशक्तौ उत्तम्भकेन तदजनने दाहानुत्पादप्रसङ्गात्। तज्जनने चानियतहेतुकत्वमित्युभयतः पाशारज्जुप्रसङ्गात्, कालविशेषप्रतिबन्धकोऽथ च कालादेस्तदुत्पादकत्वे तदेवानियतहेतुकत्वमिति न किञ्चिदेतदिति ॥१०॥

स्यादेतत्। मा भूत् सहजशक्तिः, आधेयशक्तिस्तु स्यात्। दृश्यते हि प्रोक्षणादिना व्रीह्यादेरभिसंस्कारः। कथमन्यथा कालान्तरे तादृशानामेव कार्यविशेषोपयोगः? न च मन्त्रादीनेव सहकारिणः प्राप्य ते कार्यकारिण इति साम्प्रतम्। तेषु चिरध्वस्तेष्वपि कार्योत्पादात्। नापि प्रध्वंससहायास्ते तथा। एवं हि यागादिप्रध्वंसा एव स्वर्गादीनुत्पादयन्तु, कृतमपूर्वकल्पनया। तेषामनन्तत्वादनन्तफलप्रवाहः प्रसज्यते 5 इति चेत्, अपूर्वेऽपि कल्पिते तावानेव फलप्रवाह इति कुतः? अपूर्वस्वाभाव्यादिति चेत्, तुल्यमिदमिहापि। तावतापि तत्प्रध्वंसो न विनश्यतीति विशेषः।

स्यादेतत्। उपलक्षणं प्रोक्षणादयो, न तु विशेषणम्। तथा चाविद्यमानैरपि तैरुपलक्षिता व्रीह्यादयस्तत्र तत्रोपयोक्ष्यन्ते। यथा गुरुणा टीका, कुरुणा क्षेत्रमिति चेत्, तदसत्। न हि स्वरूपव्यापारयोरभावेऽप्युपलक्षणस्य कारणत्वं कश्चिदिच्छति, 10 अतिप्रसङ्गात्। व्यवहारमात्रं तु तज्ज्ञानसाध्यं, न तु तत्साध्यम्। तज्ज्ञानमपि स्वकारणाधीनं, न तु तेन निरन्वयध्वस्तेन जन्यते। अस्तु वा तत्राप्यतिशयकल्पना, किन्नश्छिन्नम्? यद्वा, यागादेरप्युपलक्षणत्वमस्तु। तदुपलक्षितः कालो यज्वा वा स्वर्गादि साधयिष्यति, कृतमपूर्वेण। न च देवदत्तस्य स्वगुणाकृष्टाः शरीरादयो भोगाय, तद्भोगसाधनत्वात्, स्रगादिवदित्यन्वयिबलादपूर्वसिद्धेर्नाविशेष इति साम्प्रतम्। इच्छा- 15 प्रयत्नज्ञानैर्यथायोगं, सिद्धसाधनात्। न च तद्रहितानामपि भोग इति युक्तिमत्, येन ततोऽप्यधिकं सिध्येत्। नापि स्वगुणोत्पादिता इति साध्यार्थः। मनसाऽनैकान्तिकत्वात्। नापि कार्यत्वे सतीति विशेषणीयो हेतुः। तथासत्युपलक्षणैरेव सिद्धसाधनात्। असतां तेषां कथमुत्पादकत्वमिति चेत्, तदेतदभिमन्त्रणादिष्वपि तुल्यम्। तस्माद्भावभूतमतिशयं जनयन्त एव प्रोक्षणादयः कालान्तरभाविने फलाय कल्पन्ते। प्रमाणत- 20 स्तदर्थमुपादीयमानत्वात्, यागकृषिचिकित्सावदिति। अन्यथा कृष्यादयो दुर्घटाः प्रसज्येरन्। बीजादीनामापरमाण्वन्तभङ्गात्, तेषु चावान्तरजातेरभावान्नियतजातीयकार्यारम्भाऽनुपपत्तेः। अत्रोच्यते—

**संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः।**
**स्वगुणाः परमाणूनां विशेषाः पाकजादयः॥११॥** 25

यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतयः समन्त्राः प्रयुक्ताः पुरुषमभिसंस्कुर्वते न वह्निं, नापि देवताः, तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः पुरुषमेव संस्कुरुते, न तम्। यथा च कारीरीजनितसंस्काराधारपुरुषसंयोगाज्जलमुचां सञ्चरणजलक्षरणरूपा क्रिया, तथा व्रीह्यादीनां तत्तदुत्तरक्रियाविशेषाः। यथा चैकत्र कर्तृकर्मसाधनवैगुण्यात् फलाभावस्तथा परत्रापि। आगमिकत्वस्योभयत्रापि तुल्यत्वात्। 30 न तर्हि बर्हिष इव व्रीह्यादेः पुनरुपयोगान्तरं स्यात्। उपयोगे वा तज्जातीयान्तरमप्युपादीयेत, अविशेषात्। न। विचित्रा ह्यभिसंस्काराः केचिद् व्याप्रियमाणोद्देश्यसहकारिण एव कार्ये उपयुज्यन्ते। किमत्र क्रियतां, विधेर्दुर्लङ्घ्यत्वात्। यथा चाभिचारसंस्कारो यं देहमुद्दिश्य प्रयुक्तस्तदपेक्ष एव तत्सम्बद्धस्यैव दुःखमुपजनयति,

नान्यस्य। न वा तदनपेक्षः। एवमभिमन्त्रणादिसंस्कारा अपि भवन्तो न मनागपि नोपयुज्यन्ते। कथं तर्हि व्रीह्यादीनां संस्कार्यकर्मतेति चेत्, प्रोक्षणादिफलसम्बन्धादेव।

ननु यदुद्देशेन यत् क्रियते तत्तत्र किञ्चित्करम्। तथा पुत्रेष्टिपितृयज्ञौ। तथा चाभिमन्त्रणादयो व्रीह्याद्युद्देशेन प्रवृत्ता इत्यनुमानमिति चेत्। तन्न। हविस्त्यागादि-
5 भिरनैकान्तिकत्वात्। न हि ते कालान्तरभाविफलानुगुणं किञ्चिद् हुताशनादौ जनयन्ति। किं वा न दृष्टमिन्द्रियलिङ्गशब्दव्यापाराः प्रमेयोद्देशेन प्रवृत्ताः प्रमातर्येव किञ्चिज्जनयन्ति, न प्रमेये इति। कृषिचिकित्से अप्येवमेव स्यातामिति चेन्न। दृष्टेनैव पाकजरूपादिभेदेनोपपत्तावदृष्टकल्पनायां प्रमाणाभावात्। तथा च लाक्षार-सावसेको व्याख्यातः। अत एव बीजविशेषस्याऽऽपरमाण्वन्तभङ्गेऽपि परमाणूना-
10 मवान्तरजात्यभावेऽपि प्राचीनपाकजविशेषादेव विशिष्टाः परमाणवस्तं तं कार्यविशेष-मारभन्ते। यथा हि कलमबीजं यवादेः, नरबीजं वानरादेः, गोक्षीरं माहिषादेर्जात्या व्यावर्तते, तथा तत्परमाणवोऽपि मूलभूताः पाकजैरेव व्यावर्तन्ते। न ह्यस्ति सम्भवो गोक्षीरं सुरभि मधुरं शीतं, तत्परमाणवश्च विपरीताः। तस्मात्तथाभूताः पाकजा एव परमाणवो यथाभूतैरेव आद्यातिशयोऽन्त्यातिशयोऽङ्कुरादिर्वेति किमत्र शक्ति-
15 कल्पनया ? कल्पादावप्येवमेव। इदानीं बीजादिसन्निविष्टानामस्मदादिभिरुपसम्पादनं, तदानीं तु विभक्तानामदृष्टादेव केवलान्मिथः संसर्ग इति विशेषः। न च वाच्य-मिदानीमपि तथैव किं न स्यात् ? यतः कृष्यादिकर्मोच्छेदे तत्साध्यानां भोगाना-मुच्छेदप्रसङ्गात्। अव्यवस्थाभयाच्चादृष्टानि कर्माणि दृष्टकर्मव्यवस्थयैव भोगसाधना-नीत्युन्नीयते। तस्मात्, पाकजविशेषैः संस्थानविशेषैश्च विशिष्टाः परमाणवः कार्य-
20 विशेषमारभन्ते। ते च तेजोऽनिलतोयसंसर्गैः, ते च क्रियया, सा च नोदनाभिघात-गुरुत्ववेगद्रवत्वादृष्टवदात्मसंयोगेभ्यो यथायथमिति न किञ्चिदनुपपन्नम्। निमित्त-भेदाश्च पाके भवन्ति। तद् यथा—हारीतमांसं हरिद्राजलावसिक्तं हरिद्राग्निप्लुष्ट-मुपयोगात्सद्यो व्यापादयति। दशरात्रोषितं कांस्ये घृतञ्चापि विषायते। ताम्रपात्रे पर्युषितं क्षीरमपि तिक्तायते, इत्यादि ॥११॥

## आमोदः

25 आधेयशक्तिं निषेद्धुमुपक्रमते—**स्यादेतदिति**। स्वसमवायिसहोत्पन्नत्वं सहजत्वम्, उत्पन्ने समवायिनि मन्त्राद्यधीनत्वमाधेयत्वम्। विप्रतिपत्तिस्तु—प्रक्षीणं व्रीहिनिष्ठातीन्द्रियधर्मजनकं न वा इति। न च गुरुत्वेनार्थान्तरं तस्य कारणगुणजन्यत्वेनैव, मानसिद्धत्वात्। प्रोक्षणजन्यातिशय उभय-सिद्धः। स व्रीहिसमवेतो न वेति। **दृश्यते हीति**। प्रमीयते हीत्यर्थः।
30 **अभिसंस्कारो**ऽभिमतः संस्कारः कालान्तरभाविफलानुगुणः इत्यर्थः। मान-माह—**कथमन्यथेति**। तादृशानां प्रोक्षितानां **कार्यविशेषो**ऽवघातादिः।

तथा च व्रीहिनिष्ठस्थिरसंस्कारं विना प्रोक्षितानां कालान्तरभाव्यवघातादौ नोपयोगः स्यादित्यर्थापत्त्यातद्गतः संस्कारः सिध्यतीत्यर्थः ।

'प्रोक्षिता एव व्रीहयोऽवघाताय कल्पन्ते' इति वाक्यशेषमप्यत्र प्रमाणयन्ति । अर्थापत्तावन्यथोपपत्तिं निरस्यति—**न चेति** । **मन्त्रादीन्** प्रोक्षणादिकारणमन्त्रादीन्, **ते** प्रोक्षणादयः, **तेषु** मन्त्रादिषु । ननु मन्त्रादिध्वंससहकृता प्रोक्षणादयोऽवघातहेतवः स्युरित्याह—**नापीति** । यागादीनामपूर्वं व्यापारकल्पना न स्यात् । प्रत्युत कारणीभूताभावप्रतियोगित्वेन यगादीनां स्वर्गादिप्रतिबन्धकत्वमेव पर्यवस्येत् । ध्वंसव्यापारत्वे यगादीनां फलप्रवाहानन्त्यमतस्तत्रापूर्वमेव व्यापार इति शङ्कते—**तेषामिति** । यद्यपि ध्वंसव्यापारत्ववादीनामनन्तफलप्रवाहजनक[क]ल्पापादकं नास्ति ; न हि यावद्व्यापारसत्वं फलमिति नियमः; संस्कारे पूर्ववद्व्यभिचारात्, तथापि विवादाध्यासितः कालो यदि चैत्रस्वर्गोत्तरत्वे सति तत्स्वर्गजनकयागव्यापारवान् स्यात्, तत्स्वर्गाधारः स्यात् इति विवक्षितत्वात् । **अपूर्वेऽपीति** । तत्रापि नियामकं किञ्चिन्नास्तीत्यर्थः । **अपूर्वेति** । श्रुत्युक्तकालावच्छिन्नफलजनकस्वाभाव्यादित्यर्थः ।

**तुल्यमिति** । तावत्कालफलजनकस्वभावत्वमेवेत्यर्थः ।

अवघातादावुपयोगः प्रोक्षणादीनामुपलक्षणतयैव स्यादिति तदनुधेननाधेयशक्तिकल्पनमिति शङ्कते—**स्यादेतदिति** ।

एतद्दूषयति—**स्वरूपेति** । नन्वेवं गुरुकुरुभ्यामपि टीकाक्षेत्रयोरुपलक्षणं न स्यात् । न हि ताभ्यां तत्र व्यापारः कश्चिदाहित इत्यत आह—**व्यवहारमात्रन्त्विति** । **तज्ज्ञानं** साध्यम् । न तु ततसाध्यं कुरुगुरुज्ञानसाध्यम् । न तु कुरुगुरुसाध्यमित्यर्थः । ननुः तर्हि तज्जनितव्यापारं विना ज्ञानमपि कथं स्यादित्यत आह—**तज्ज्ञानमपीति** । कुरुणा गुरुणा वेत्यर्थः । कुरुणा क्षेत्रं कृतमिति शाब्दज्ञानजनितसंस्कारप्रभवस्मृत्यधीनो व्यवहार इति भावः । ननु कुरुगुरुभ्यां तज्ज्ञानमपि चेन्न जनितं तदा कथमुपलक्षणत्वमपीत्यत आह—**अस्त्विति** । टीकायां वाक्यसमूहे क्षेत्रे च ताभ्यां काचिच्छक्तिराहितेत्यर्थः । यद्वा अभ्युपेत्याह—**अस्त्विति** । प्रोक्षणादीनामुपलक्षणत्वे दोषान्तरमाह—

**यद्वेति** । नन्वपूर्वं मानान्तरमस्ति नत्वाधेयशक्तौ इत्यत आह—**न चेति** । स्व गुणसहसकारिणः **स्वगुणे**त्यादिना इति वा ।

आद्ये तावदाह—**इच्छेति** । **यथायोगमिति** । सूपकारसाधितान्ने राज्ञ इच्छामात्रं सहकारि । परदेशभोगे प्रयत्नोऽपि ज्ञानं सर्वत्रेत्यर्थः ।
5 **तद्रहितानामिति** । इच्छादिरहितानामित्यर्थः । अन्त्यमाशङ्क्य निराचष्टे—**नापीति** । उपलक्षणैर्जन्मान्तरज्ञानादिभिः सिद्धसाधनमर्थान्तरमित्यर्थः । **अतिशयमिति** । व्रीहिनिष्ठमिति शेषः । ( ननु? ) आत्मनिष्ठ एव किं न स्यादिति वाच्यम्, यो यत्र यदुद्देशेनोपादीयते स तत्र फलजनक इति व्याप्तेः । यद्वा यत्रावघातरूपं फलं चिरभावि तदनुगुणो व्यापारस्तु समाना-
10 धिकरणः कल्पयितुमुचित इति भावः । न च विहितत्वेन पुरुषनिष्ठाति शयजनकत्वमनुमेयम्, अप्रयोजकत्वाच्चिकित्सादिना व्यभिचाराच्चेति । **तदर्थमिति** । कालान्तरभाव्यवघातफलार्थमित्यर्थः । यद् यत् कालान्तरभावि फलार्थमुपादीयते तत्तदनुगुणमतिशयं जनयतीति सामान्यव्याप्तौ दृष्टान्तमाह- **यागेति** । यागेऽपूर्वमुभयसिद्धमिति तदुल्लङ्घ्याह—**अन्यथेति** । आधेय
15 शक्तिविनेत्यर्थः कृषिकर्मणा कालान्तरभाविशस्यावगमाय बीजभूम्यादेरति- शयाधानं, चिकित्साकर्मणा कालान्तरभाव्यारोग्यफलहेतुः शरीरेऽतिशयाधान- मित्यर्थः ननु स्वरूपत एव बीजमनुवर्तते; किं तत्रातिशयेनेत्यत आह— **बीजादीनामिति** । ननु कलमत्वयवत्वादिजात्यालिङ्गिताः परमाणव एव कलमयवाङ्कुरकारिण इति किं तत्रातिशयकल्पनयेत्यत आह—**तेषु**
20 **चेति** । पृथ्वीत्वावान्तरजातेः परमाणावनभ्युपगमादिति भावः ।

प्रोक्षणादिनाऽतिशयो जन्यत एव, न तु व्रीहीत्यादौ इत्यत आह— **संस्कार इति** । **पुंस इति** पुंसीत्यर्थः, आत्मनीति यावत् । प्रोक्षणावान्तरभेदोऽ- भ्युक्षणम् । आदिपदान्मन्त्रादीनामुपग्रहः । न च व्रीहिनिष्ठ एव किं न कल्प्यत इति वाच्यम्, व्रीहिषु यद्येक एव संस्कारो व्यासज्यवृत्तिस्तदा कस्यचिद् व्रीहे-
25 र्नाशान्नाशप्रसङ्ग आश्रयनाशाविशेषात्, वृक्षादयः [······?] किञ्चिदाश्रय- नाशादेव नश्यन्ति प्रत्यभिज्ञा तु खण्डवृक्षनिबन्धना, वृक्षनाशेनानुपपन्ना । प्रतिव्रीहि नानाशक्तिकल्पने गौरवम् । पुरुषनिष्ठसंस्कारेण व्रीहीणां स्वरूप- सम्बन्ध एव । अतस्तत्फलभागितयैव द्वितीयोपपत्तिरिति भावः । परानु-

मानै कृष्यादिदृष्टान्तासिद्धिं स्वानुमाने व्यभिचाराभावश्चाह—**स्वगुणा** इति । **विशेषा** इति विशेषका इत्यर्थः । तत्रातिशयो दृष्टद्वारसद्भावादिति साध्यवैकल्यमिति भावः । न च परमाणोराधेयशक्तिः पाकगुणा वा सन्तु, न कश्चिद्विशेष इति वाच्यम्, तदारब्धावयविनि तज्जातीयगुणोपलम्भात्तत्र कल्पनाया आवश्यकत्वात् । आदिपदात् संयोगविशेषा गृह्यन्ते । 5

यो यदुद्देश्येन क्रियते स तद्‌गतातिशयाधायक इति परव्याप्तौ व्यभिचारमाह—**यथा** हीत्यादि । देवतायाः प्रीतिहेतुतया व्रीह्यादीनां च व्यापारभागितया उद्देश्यत्वमविशिष्टमिति भावः । न च यद्‌गतफलार्थितया यत् क्रियते तत् तद्‌गतातिशयजनकमिति व्याप्तेरनुमानं श्येनेन व्यभिचारात् । न च तत्रापि शत्रावेव दुरदृष्टं श्येनेन जन्यत इति वाच्यम्— 10

"शास्त्रदेशितं फलमनुष्ठातरी"—

त्युत्सर्गस्य बाधकं विना त्यागायोगादिति भावः । तर्हि अवघातादौ कथं व्रीहेरुपयोग इत्यत आह—**यथा** चेति । प्रोक्षणादिजन्यादृष्टवदात्मसंयोगाद् व्रीह्यादीनामुत्तरक्रिया अवघातादिरित्यर्थः । ननु प्रोक्षणादीनामपूर्वजनकत्वे कदाचित् फलाभावः कथं स्यादपूर्वस्य समस्तदृष्टोपपादकत्वादित्यत आह— 15 **यथा** चेत्यादि । करीर्यां यथा कर्मादिवैगुण्यात् फलाभावस्तथा प्रकृतेऽपि स्यादित्यर्थः । नन्वागमसिद्धत्वेनावश्यमेव फलेन भाव्यमित्यत आह— **आगमिकत्वस्ये**ति । एवं सति कारीर्यामपि फलाभावः कदाचिन्न स्यादित्यर्थः । ननु व्रीहिश्चेन्न संस्क्रियते तदावघातादौ कथं तस्यैव पुनरुपादानं विनियुक्तविनियोगविरोधात् ? अत्र **बर्हिष** इति व्यतिरेके दृष्टान्तः । 20 यथा बर्हिषः पुनरुपादानप्रापकं वचनमस्ति—

'दर्भाः कृष्णाजिनम्' इति,

न तथात्रास्तीत्याह—**न तर्ही**ति । 'बर्हिस्तृणाति,' 'बर्हिषि हविरासादयति' इतिवद् यथा बर्हिषः पुनरुपादानं न तथा प्रकृते स्यादिति व्यतिरेकदृष्टान्त **इत्येके** । 'इडो यजति,' 'बर्हिर्यजति,' बर्हिर्जयतीति विहितस्य बर्हिर्याग- 25 स्य यथा न पुनरुपादानं, तथा व्रीहेरपि न स्यादित्य**परे** । ननु व्रीहीन् प्रोक्षति,' 'व्रीहीनवहन्ति,' 'व्रीहीन् पिनष्टी' त्यवघातादावपि व्रीहिकर्म नैव प्रतीयत इति पुनरुपयोगः कथं न स्यादित्यत आह—**उपयोगे** चेति ।

विपद्यते ? पाकजरसाद्युत्पत्तिस्तत्रानलान्तरसाधितेऽपीत्यत आह—
**निमित्तेति**। पाकजमात्रं न तन्त्रं किन्तु निमित्तविशेषाधीनपाकजत्व-
मित्यर्थः। निमित्तविशेषानेवोदाहरति—**तद् यथेति**। अग्नेः पाकजत्वम-
भिधाय उष्मादेः पाकजत्वमाह—**दशरात्रेति**। आदिपदात्ताम्रपात्रस्थदधि-
5 तिक्ततादिपरिग्रहः। एतेन पाकजरसादेः प्रत्यक्षसिद्धतया तेनैवोपपत्तौ
किं शक्त्येत्यपि ध्वनिः॥ ११॥

बोधनी

अपूर्वस्य भूतधर्मत्वे सहजा शक्तिर्मा भूद् दृष्टान्त आधेयशक्तिस्तु दृष्टान्तः स्यात्
दुरपह्नवत्वात् तस्या इति पूर्वपक्षयति—**स्यादेतदिति**। अत्र च भूतानामेव स्वहेतुव-
शेनातीन्द्रियातिशयशालित्वेनोत्पन्नानां भोगनियामकानुपपत्तावपि यागादिजन्यातिशयभाजां
10 शरीरादिभूतानां तदुपपत्तेस्तेष्वाधीयतामपूर्वं प्रोक्षणादिवन्न त्वात्मनीति भावः। आधेयशक्ति-
सद्भावे प्रमाणमाह। **दृश्यते हीति**। व्रीहीन् प्रोक्षतीति द्वितीयाश्रुत्या प्रोक्षणस्य
व्रीहयः कर्मत्वेनावगम्यन्ते। क्रियाजन्यफलभागित्वं च कर्मत्वं। अतः प्रोक्षणादीना व्रीह्या-
दिषु संस्कारापरनामा शक्तिराधीयत इत्यत्र श्रुतिरेव प्रमाणमिति। तदनुग्राहकं तर्कमाह—
**कथमिति**। यदि तद्गतः कश्चिदतिशयो नाधीयेत प्रोक्षितानामेव पुरोडाशादिकार्योप
15 योगो नान्येषामिति न स्यादप्रोक्षितेभ्यः तेषामविशेषादिति। प्रोक्षणादिस्वरूपसहकृतानामेव
कार्योपयोगोऽस्तु, अन्यथादृष्टकल्पनानुपपत्तेरित्याशङ्क्याह—**न चेति**। सन्तु तर्हि
प्रोक्षणादिप्रध्वंसादयः कालान्तरेऽप्यनुवर्त्तमानाः सहकारिण इत्याशङ्क्याह—**नापीति**।
तथाकालान्तरकार्यकारिण इत्यर्थः। अतिप्रसङ्गपरिहारमाशङ्कते—**तेषामिति**। यागादि
प्रध्वंसानामेव फलसाधनत्वे तेषामनन्तत्वेन फलविनाश्यत्वाभावादुत्पन्नेऽपि पुनरपि तत एव
20 फलोत्पादप्रसङ्गेन फलप्रवाहोनन्तः स्यात्, तत्र च कर्मान्तरफलोपभोगोऽपवर्गश्च न स्या-
ताम्; अतो यागादिजन्यमपूर्वमवश्यमभ्युपगन्तव्यमिति। तर्हि कल्पितमप्यपूर्वं किञ्चित्
स्वर्गादिसुखमुत्पाद्य नानन्तरमेव नश्यति सहस्रसंवत्सरादिभोगश्रुतेः, तेन परिमितफलप्रवाह-
स्तदापि न स्यादित्याह—**अपूर्व**—इति। यदि तु परिमितफलप्रवाहजनकत्वमपूर्वस्य
स्वभावः स तर्हि प्रध्वंसस्यापि भविष्यतीति शङ्कोत्तराभ्यामाह—अपूर्वेति। **तावतेति**।
25 परिमितफलोत्पादकत्वाभ्युपगमे नामान्तरेणापूर्वमेवाङ्गीकृतं स्यादित्याशङ्क्य फलविनाश्यत्वा-
विनाश्यत्वाभ्यां विशेषोऽस्तीत्याह **तावतेति**॥

**स्यादेतदि**ति। यदि प्रोक्षणादयो विशेषणं भवेयुस्तदा कार्यान्वयिन एव विशेषणत्वात् कार्यकाले तेषामसत्त्वेन विशेषणत्वायोगाद् विशिष्टस्य कारणत्वं न सिध्येत्। तेषां तूपलक्षणत्वे बुद्धिसन्निहितानामेवेतरव्यवच्छेदेन विशेष्यविषयबुद्धिजननद्वारेण कार्योपयोग इत्यविद्यमानत्वेऽपि न कश्चिद् दोषः। अविद्यमानस्यैवोपलक्षणत्वे तदुपलक्षितस्य कार्यविशेषोपयोगे च दृष्टान्तः—**यथे**ति। अविद्यमानेनैव हि गुरुणा 5
कुरुणा च प्राभाकरकुरुक्षेत्रत्वोपलक्षिते टीकाक्षेत्रे तेषु कार्यविशेषेषूपयुज्येते—**यथे**ति।
**तदस**दिति। उपलक्षणत्वे प्रोक्षणादीनां कार्यान्तरोपयोगित्रीह्युद्देशेन विधानेन तत्कार्येऽपि साधनत्वावगमात् कार्योत्पत्तिं यावत् स्वरूपेण वा स्वोत्पादितातिशयद्वारेण वा तेषां सत्त्वमङ्गीकार्यम्। अन्यथातिप्रसङ्गादिति। कथं तर्ह्यसत एव गुर्वादिरुपलक्षणत्वेन कारणत्वमित्यत्राह—**व्यवहार**—इति। न तावद् गुर्वादिना टीकादौ किञ्चित्कार्यं क्रियते 10
किन्तु तदीयत्वेन व्यहारमात्रमेव तत्रास्ति, तदपि तेन न क्रियते किन्तु गुर्वादिज्ञानेन, तज्ज्ञानमप्याप्तत्वादिकारणाधीनं न त्वनुत्पादितव्यापारध्वस्तेन गुर्वादिना जन्यते; प्रत्यक्षज्ञान एव ह्यर्थः कारणं नान्यत्रेति भावः। अथ गुर्वादिनापि टीकादौ तत्तत्कार्यानुगुणः कश्चिदाधीयतामतिशयः, न तेन संस्कारवादिनामस्माकं काचित् क्षतिः, भवतस्तु साध्यविकलो दृष्टान्तः स्यादित्यभिप्रायेणाह—**अस्तु** वेति। यदि वा प्रोक्षणादीनामति- 15
शयमन्तरेणोपलक्षणत्वेन कारणत्वं स्यात् चेत् तदा यागादीनामपि तथात्वप्रसङ्गादपूर्वं दत्तजलाञ्जलि स्यादित्याह—**यद्वे**ति। ननूपलक्षणत्वेन यागादीनां फलसाधनत्वोपवत्तावपि प्रमाणबलादेव तत्रापूर्वसिद्धिरित्यत्राह—**न चे**ति। स्रगादयो हि स्वगुणेन प्रयत्नादिना सन्निधापिता भोगाय भवन्ति, तथा पश्वादयोऽप्यपूर्वाख्येन गुणविशेषेण सन्निधापिता इत्यपूर्वसिद्धेः प्रोक्षणादिभ्यो यागादीनां नाविशेषः। **इच्छे**ति। 20
क्वचिद् ज्ञानेच्छाप्रयत्नैः समुदितैरुपगृहीताः पश्वादयो भोगाय भवन्ति। क्वचित् त्वन्यतमेन यथा निदाघतप्तस्य मेघच्छायादयः, न तेन तदतिरिक्तापूर्वसिद्धिरिति। यदीच्छादेर्व्यतिरेकेऽपि भोगः स्यात् ततस्तदतिरिक्तं सिध्येत्। न त्वेवमस्तीत्याह—**न चे**ति। इच्छाभावे भोगत्वमेव न स्यात्, इष्टत्वलक्षणात् सुखस्येति। स्वगुणाकृष्टत्वं नाम स्वगुणोत्पादितत्वं विवक्षितं तथा न सिद्धसाधनं परवादीनामिच्छाद्यनुत्पाद्यत्वादि- 25
त्याशङ्क्याह—**नापी**ति। मनो हि नित्यत्वान्न केन चिदुत्पाद्यतेऽथ च भोगसाधनमिति तेनानैकान्तिकमिति। तर्हि कार्यत्वे सति भोगसाधनत्वादिति हेतुं विशेषयिष्याम इत्यत्राह—**नापी**ति। अस्माभिरुपलक्षणत्वेनापादिता यागादयो ह्यात्मगुणास्तत्तत्संकल्पप्रयत्नाद्यात्मकत्वात् तेषाम्। अतस्तैरेव जन्मान्तरीयैरैहिकैर्वा पश्वाद्युत्पत्तिसिद्धेर्न तद-

तिरिक्ततज्जन्यापूर्वसिद्धिरिति। ननु चिरविनष्टा यागादयः कथं कालान्तरभाविनः पश्वादेः साधनं यतस्तैः सिद्धसाधनं स्यादित्याह—**असतामिति**। तर्हि अभिमन्त्रणादिष्वपि कालान्तरभाविने फलाय संस्कारमभ्युपगच्छेत्याह—**तत् इति**। उक्तमर्थमुपसंहरन् प्रमाणयति—**तस्मात्**—इति। प्रध्वंसेन सिद्धसाधनं मा भूदित्युक्तं—**भाव**—इति। भ्रमादिकृतेनोपादानेनानैकान्तिकं मा भूदित्याह—**प्रमाणत**—इति। श्रुति प्रमाणादित्यर्थः। न च कृष्यादौ साध्यवैकल्यमित्याह—**अन्यथा**—इति। कथमित्याह—**बीजादीनामिति**। परिकर्षितायामुर्व्यामुप्तं बीजावयवि पयःपवनसंयोगात् क्रियोत्पत्ताववयवानां विभागेनासमवायिकारणतत्संयोगविनाशाद् विनश्यति। एवमापरमाण्वन्तं विभागात्, तेषु च यवकलमादिविजातीयाङ्कुरारम्भकनियामिकाया जातेरभावात्, कलमबीजावापे कलमाङ्कुर एव यवबीजावापे यवाङ्कुर एवेत्येवं कार्यजातिनियमानुपपत्तिः। अतिशयाङ्गीकारे कृष्याद्याहितातिशयास्ते ते परमाणवस्तं तं कार्यविशेषमारभन्त इति नियमोपपत्तिरिति भावः।

तदेवं प्रोक्षणादिजन्यातिशयवद् यागादिजन्यमपूर्वं भूतधर्मोऽस्त्विति पूर्वपक्षिते सिद्धान्तमारभते—**अत्रेति**। यदि तावत् प्रोक्षणादयः कञ्चिदतिशयमादधतीति साध्येत ततः सिद्धसाधनम्, अथोद्देश्यगतमादधतीति, ततोऽनैकान्तिकता; ततः पुंस एव संस्कार इष्यताम्, कृष्यादावपि क्लृप्तैरेव पाकजादिगुणविशेषैः कार्यनियमोपपत्तौ नाप्रसिद्धातिशयकल्पनेति साध्यवैकल्यमिति भावः।

कथं व्रीह्याद्युद्देशेन तत्र प्रयुज्यमानः प्रोक्षणादिः पुरुषं संस्कुर्वीतेत्याशङ्कां निराकुर्वन्ननैकान्तिकतामेव स्फोरयति—**यथा हीति**। व्रीह्याद्युद्देशेन तत्रैव प्रयुज्यमान इत्युपस्कारः कथं पुरुषसंस्काराणां व्रीह्याद्यसम्बन्धानामेव तत्सहकारित्वमित्यत आह—**यथा चेति**। यथा हि कारीरीजनितसंस्कारानाधारा एव जलधरास्तदाधारयजमानात्मसंयोगादेव गगनं संचरन्ति वर्षन्ति च, तथा व्रीह्यादयोऽपि संस्कृतात्मसम्बद्धाः कार्योपयोगिन इति। ननु पुरुषसंस्कारपक्षे यदा तस्य पातकादिदोषस्तदा तस्मिन् संस्काराधानायोगाद् वैफल्यमेव प्रोक्षणादेः स्यात्। व्रीहिसंस्कारत्वे तेषामदुष्टत्वान्नायं दोष इत्यत्राह—**यथा चेति**। कर्तृदोषे यथैकत्र कर्त्तरि फलस्य संस्कारस्याभावः, तथापरत्र व्रीह्यादिष्वपि कर्तृत्ववैगुण्ये कचिदपि न संस्कार उत्पद्यत इत्यर्थः। यद्वा, एकत्र कारीर्यामपरत्र प्रोक्षणादावपि उभयत्र पक्षद्वये कर्मद्वये वाप्यागमिकत्वस्य तुल्यत्वाददुष्टानामेवाधिकारः। अत्र कर्मसाधनयोरुपादानं दृष्टान्तर्थम्। यद्वा, कृमिकीटका-

द्युपहतेष्वपि व्रीहिषु व्रीह्यन्तरोपादानं न स्यादसंस्कृतत्वाविशेषादित्यत आह—**यथेति**। कर्मादिवैगुण्य इव व्रीह्यादिदोषेऽपि फलाभावश्रुतेस्तुल्यत्वेन व्रीह्यन्तरोपादानमुपपद्यत इत्यन्या व्याख्या। ननु पुरुषसंस्कारपक्षे प्रोक्षणादीनां कारीर्यादिवदनियतफलत्वं प्राप्नोतीत्यत्राह—**यथा चेति**। कर्मादिवैगुण्यनिमित्तं हि कारीर्यामनियतफलत्वं, तच्चाविशिष्टं प्रोक्षणादिष्वपि। उभयं ह्यागमेन फलाय विधीयत इति। अतः 5 प्रोक्षणादिष्वपि वैगुण्यनिबन्धनः फलाभावोऽविशिष्ट इति।

ननु यदि भाविप्रयोजनार्थं व्रीहयः संस्क्रियन्ते तदा तेषां स्वकार्यान्तरोपयोगो युज्यते। यदि तु पुरुषः संस्क्रियेत, तदा न यदेकस्मादपूर्वं तदेतरत्तदर्थमिति न्यायात् सक्तुवद् विनयोगभङ्गेन व्रीह्यादेः प्रोक्षणादिशेषतैव स्यात्, तत्र च प्रोक्षणादिनिर्वृत्त्यैव कृतार्थानां व्रीह्यादीनां कार्यान्तरोपयोगो न स्यात्। "बर्हिषि हवींष्यासादयति" ति 10 हविरासादने विनियुक्तस्य बर्हिष इवेत्याह—**न तर्हीति**। अथ व्रीहिभिर्यजेतेति व्रीहीणां यागसाधनत्वेन विधानात् कृतकार्याणामपि यागार्थमुपादानमिति चेत् तत्राह—**उपयोगे वेति**। तदा हि प्रोक्षितैर्यष्टव्यमिति निममाभावाद् व्रीहिजातीयं व्यक्त्यन्तरमुपादीयेत प्रोक्षिताप्रोक्षितयोर्व्रीहिबर्हिषोर्वा विशेषाभावादिति। सिद्धान्त्याह—**नेति**। वैचित्र्यमेवाह—**केचिदिति**। कस्मैचित् कार्याय यल्लक्ष्यीकृत्य या क्रियाप्रयुक्ता तज्जनितः 15 संस्कारः कश्चित्पुरुषाधारोऽपि तदुद्देश्यव्यापारसहकार्येव कार्यं करोति, कश्चित्तु तन्निरपेक्षः। तत्र च विधिरेव प्रमाणमिति। अत्रोभयसिद्धं निरूपयति—**यथा हीति**। श्येनेष्वेकद्वित्रिकाद्यभिचारकर्मजनितसंस्कारो हि कर्त्रात्मसमवेतत्वेन भ्रातृव्यदेहानाधारोऽपि उद्देश्यदेहापेक्षस्तत्सम्बद्धस्य तस्यैवात्मनो मरणादिदुःखं जनयति नान्यस्य, नापि तस्यैव भवान्तरीयसम्बद्धस्येति। दार्ष्टान्तिकेऽतिदिशति—**एवमिति**। एवं 20 भवन्तः उद्देश्यसहकारिणो भवन्त इत्यर्थः। **कथं तर्हीति**। व्रीहीनिति द्वितीयया तावत् कर्मत्वमवगम्यते, तच्च प्रोक्षणादिक्रियाजन्यफलभागित्वमन्तरेण नोपपद्यत इति। **प्रोक्षणादीति**। प्रोक्षणक्रियायास्तावज्जलसंयोगः फलं, तत्फलं च संस्कारः, तेन संस्कारानाधारत्वेऽपि क्रियाफलजलसंयोगभाजां व्रीहीणां कर्मत्वोपपत्तिः, नाप्यनीप्सितकर्मत्वम्, आग्नेयाद्यपूर्वेषु उपयोक्ष्यमाणत्वादित्यर्थः। 25

पूर्वपक्षी स्वाभिप्रायमुद्घाटयति—**ननु**—इति। तत्र किञ्चित्करमित्यत्र संयोगादिकरत्वात् सिद्धसाधनतां निराकर्तुं कालान्तरभाविफलानुकूलं किञ्चिदित्युपस्कर्तव्यम्। अत एवानैकान्तिकं प्रदर्शयन् वक्ष्यति "न हि ते कालान्तरभाविफलानुगुणम्" इति। वैश्वानरेष्टिर्हि पुत्रे तेजस्वितां करोति, पितृयज्ञश्च पितरि तृप्तिमिति। **नेति**। अनै-

कान्तिकतामेव लौकिकोदाहरणेन विशदयति—**किञ्चिदि**ति। प्रमेयगतं तु प्राकट्यं निराकरिष्यत इति भावः। **कृषिरि**ति। ते अपि हि प्रोक्षणादिवददृष्टरूपसंस्काराधानद्वारेण कार्यकरे स्यातामिति। **नेति**। परिणतिर्निष्पत्तिः सहकारीति वा। इममेव प्रकारमुदाहरणान्तरेष्वप्यतिदिशति—**तथा चे**ति। लाक्षारसावसिक्तबीजपूरादिबीज-
5 जनिततत्कुसुमारुणिमापि न संस्काराधानतद्द्वारा लाक्षारसावसेकेन जायते। किन्तु दृष्टेनैव रूपविशेषजननद्वारेणेति व्याख्यातमिति। तेनैतन्निरस्तं यदाह महाव्रतः—

कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते।
शक्तिराधीयते तेन काचित्तां किं न पश्यसि॥

यदुक्तमन्यथा कृष्यादयो दुर्घटाः प्रसज्येरन्निति तदुत्तरमर्धं संग्रहस्य व्याचष्टे—
10 **अत एवे**ति। यत एव दृष्टे सत्यदृष्टकल्पना न न्याय्या अत एव यवबीजारम्भकाः परमाणवः पूर्वं कलमबीजारम्भकपरमाणुव्यावृत्तैर्यैः पाकजविशेषैः कलमबीजविलक्षणं यवबीजमारब्धवन्तः प्राचीनैस्तैरेव तज्जातीयैरेव वा विशिष्टाः परमाणवो यवाङ्कुरमेवारभन्ते नान्यमिति। ननु व्यावर्त्तकगुणविशेषसिद्धौ हि त एव विशेषका भवेयुः, तत्सिद्धिरेव कुतस्त्येत्यत आह—**यथा ही**ति। यथा हि तदवयविनां जात्या
15 व्यावृत्तिस्तथा तदारम्भकपरमाणूनां गुणविशेषैर्व्यावृत्तिरिति। दृष्टान्तमात्रेणापरितुष्यन् प्रमाणमाह—**न ही**ति। तत्तदवयविषु दृश्यमानविलक्षणगुणा एव तत्तदारम्भकपरमाणुषु गुणविशेषमावेदयन्ति। अन्यथा कार्येऽपि न स्युः कारणविशेषगुणपूर्वकत्वात् कार्यविशेषगुणानामिति। उपसंहरति—**तस्मादि**ति। भूमावुप्तबीजस्याङ्कुरजननानुगुणमवान्तरकार्यमतिशयः, तत्रोच्छूनत्वमाद्यातिशयः, उच्छूनतमत्वमन्त्यः यतोऽङ्कुरो जातः,
20 उच्छूनतरत्वलक्षणस्तु मध्यमः सम्पातगृहीत इति। ननु महाप्रलये सकलकार्यविनाशाभ्युपगमात्—पाकजविशेषा अपि विनश्येयुः, कथं तदानीं परमाणवो नियतजातीयकार्यमारभेरन्नित्यत्राह—**कल्पादावि**ति। कार्यदर्शनीयस्य पाकजविशेषस्यादृष्टसंस्कारवत् प्रलयेऽप्यविनाशः। यद्वा, तदानीमप्याग्नेयादिपरमाणुसंयोगात् पाकजविशेषोत्पत्तिरिति भावः। यद्युभयत्राविशेषः, तर्हीदानीमपि कृषीवलापेक्षा न स्यादित्यत्राह—**इदानीम्**—
25 इति। बीजादिरूपेण सन्निविष्टानामारब्धबीजमृत्सलिलाद्यवयविनां परमाणूनां यथाङ्कुराद्यारम्भकभावस्तथोपसर्पणमस्मदादिभिरिदानीमिति। कथं तर्हि कल्पादौ कृषीबलाद्यभावे बीजादिसमवधानमित्यत्राह—**तदानीम्**—इति। यथोक्तम् "**अणुमनसोश्चाद्यं कर्मादृष्टकारितम्**" इति। इदानीमप्यदृष्टादेवोपपत्तेः किं कृपीबलेनेत्यत्राह—**न चे**ति। हेतुमाह—**कृष्यादि**—इति तत्र कृपीबलस्य कायसंक्षोभसाध्यानां दुःखात्मकानां

भोगानां कृष्यादिकर्मलभ्यभृत्यादिभोगानां चोच्छेदः स्यात्। अव्यवस्थानामप्रसङ्गाति-प्रसङ्गौ, सा च स्यात्। कृतकृषेरपि सस्याधिगमो न स्यात्, स्याच्चेतरस्ये-त्यर्थः। यद्वा, अदृष्टस्यैव हेतुत्वे केवलं कृषीवलभोग एव न स्याद् यस्य व्रीहितण्डुलादयोऽपि दृष्टहेतवो न स्युरिति। अयमत्र भावः, यत्र दृष्टकारणानि सन्ति तत्र तदुपहारेणैवादृष्टस्योपयोगः न स्वतन्त्रस्य, तेन हेतुत्वमवश्यमास्थेय-मिति। दृष्टकर्मव्यवस्थयैवादृष्टानि भोगसाधनानीत्युपसंहरति—**तस्मादिति**। पाक-जादय इत्यादिशब्दव्याख्यानं संस्थानविशेषैरिति। अत्र पाकजविशेषः पूर्ववीजादि-सजातीयाङ्कुरारम्भे हेतुः। संस्थानविशेषः कार्यसन्निवेशविशेषहेतुरिति। तेषु पाकज-विशेषेषु तत्कारणपरम्परायां च न क्वचिद् दृष्टकारणव्यतिरेकेण शक्तिरङ्गीकार्येत्याह—**ते चेति**। नोदनादीनां परस्परनिरपेक्षाणामेव क्रियाहेतुत्वमिति दर्शितम्। **यथा-यथम्**—इति। क्वचित्तु पाकजविशेषस्याविशेषेऽपि मरणादिरूपकार्यविशेषदर्शनात् तदतिरिक्तशक्तिभेदोऽङ्गीकार्य इत्यत्राह—**निमित्तभेदाश्चेति**। पाकजानां निमित्त-कारणानि भिन्नानि दृश्यन्ते, तेन निमित्तभेदहेतुकः पाकजेष्वपि विशेषोऽस्ति यतः कार्यविशेष इति भावः। निमित्तभेदं कार्यविशेषं च निदर्शयति। **तद्यथेति**। यदाह वाहटः—

हारीतमांसं हारिद्रशूल्कप्रोतपाचितम्।
हरिद्रावह्निना सद्यो व्यापादयति चर्वितम्॥ इति॥

सर्पिःक्षीरयोश्च पार्थिवत्वात् पाकजोत्पत्तिः सम्भवतीति॥ ११॥

विवेकः

सहजशक्तिः अनित्ये स्वाश्रयेण सह जायमाना नित्ये च नित्या आश्रयजन्येति यावत्। आधेयशक्तिः आश्रयजन्या शक्तिः, उत्तेजकन्तु न शक्तिजनकमिति न तत्र प्रसङ्गः। भवतु वा सापि शक्तिराधेयैव। अत्र कालान्तरभाव्यवघातानुकूलं संप्रोक्षणं व्रीहिनिष्ठातीन्द्रियजनकं न वा, व्रीहिसमवेतोऽतीन्द्रियो धर्मः प्रोक्षणजन्यो न वा इत्याद्या विप्रतिपत्तयः। दृश्यते प्रमीयते अस्तीति यावत्। व्रीह्यादेः व्रीह्यादिसमवेतः अभिसंस्कारः अभितोऽतीन्द्रियः संस्कारः। नन्वात्मन्येव सोऽस्तीत्याशङ्कायां व्रीहिसमवेतत्वेऽर्थापत्तिं प्रमाणयति—**कथमन्यथेति**। तादृशानामेव प्रोक्षितानामेव व्रीहीणां कार्यविशेषः कालान्तर-भाव्यवघातः, तदुपयोगः तत्सम्बन्धः, अन्यथा तादृशादृष्टवदात्मसंयोगस्य व्रीहिमात्रसाधारण-त्वादसंस्कृतेऽप्यवघातः स्यादिति भावः। प्रोक्षणकारणीभूतो मन्त्रो यत्रोद्देश्यतया प्रवृत्तः

तत्रावघात इति नातिप्रसङ्ग इत्याह—**न चेति**। प्रोक्षणोपलक्षिता व्रीहयः कार्यकारिणः स्वनिष्ठावघातजनकाः, तेषु मन्त्रादिषु, कार्यस्य नियताधिकरणकावघातस्योत्पादात्, तथा च मन्त्रादिव्यापारत्वेनापि संस्कारोऽभ्युपेय इति भावः। **तद्ध्वंसेति**। प्रोक्षणादिप्रध्वंसेत्यर्थः। ते व्रीहयः तथाकार्यविशेषहेतवः प्रोक्षतीति विधिप्रतिरूपकेण। न चाप्रोक्षणस्य
5 इष्टसाधनत्वलाभात् तदुपपादकत्वस्य तद्ध्वंसेऽसम्भवात् प्रतियोगिध्वंसयोरेकत्राजनकत्वात्। एतदनभ्युपगमे दोषमाह—**एवमिति**। **प्रध्वंसा एवेति**। ध्वंसातिरिक्तव्यापारव्यवच्छेदः। अपूर्वग्रहेण अपूर्वोपगमेन, शङ्कते—**तेषामिति**। यागादिध्वंसानामित्यर्थः। **तावानिति**। तावन्मात्रकालावच्छिन्नेत्यर्थः। नाशकत्वेनाभिमतं फलमेव चरमं न स्यात् तस्यैव तन्नाशकत्वादिति भावः। **अपूर्वेति**। तदपूर्वजन्यस्वर्गसामान्यं प्रति चरमत्वेनाभिमतफलप्रागभावस्य
10 हेतुत्वादित्यर्थः। **तुल्यमिति**। मयापि तद्ध्वंसजन्यस्वर्गे चरमत्वेनाभिमतफलप्रागभावो हेतुर्वाच्य इत्यर्थः। यथाश्रुते सत्यां सामग्र्यां स्वभावमात्रेण कार्याभावस्य दुरुपपादत्वादिति ध्येयम्। तावतापि चरमकल्पेऽपि विशेषो वैलक्षण्यमपूर्वात् ननु[न तु ?] स्वध्वंसजन्ये स्वस्य स्वजन्ये च स्वध्वंसस्य कारणत्वाव्यवहारात् स्वेन स्वध्वंसस्य च स्वस्यान्यथासिद्धत्वम्, अन्यथा दाहं प्रति स्वध्वंसद्वारा मणेरारम्भकसंयोगस्य द्रव्यनाशं प्रति च
15 हेतुतापत्तिः। एवं प्रतियोगिजन्यकार्यसामान्यं प्रत्येव तत्प्रागभावस्य तथात्वं स्यात्, ग्रहणस्मरणाकारश्चैकं नोपेयते ज्ञानं तेन संस्कारजनकज्ञानध्वंससाक्षात्कारस्य संस्कारद्वारा तादृशज्ञानजन्यस्मरणानात्मकतया नोक्तव्याप्तेर्व्यभिचारः, यागादिध्वंसस्य कालोपाधितया तज्जन्यस्वर्गादिकं प्रति हेतुत्वानुपगमेऽपि न क्षतिरिति चेत्तुल्यमिहापि। यत्त्वेवमन्यथासिद्ध्यनुपगमे स्मृतिजनकसंस्कारोऽपि न सिध्येदिति, तन्न, ज्ञानोत्पत्तितृतीयक्षणेऽपि
20 स्मृतेरुदयेन तत्र तद्ध्वंसव्यापारकत्वासम्भवादिति।

अव्यवहितप्राक्कालवृत्तित्वं न कारणत्वमपि तु प्राक्कालवृत्तित्वमात्रं, तथाच विनापि व्यापारं चिरविनष्टस्यापि प्रोक्षणस्यावघातहेतुत्वमस्तु, किं संस्कारेणेत्यभिप्रेत्याह—**स्यातदेदिति**। उपलक्षणमिति कार्याव्यवहितप्राक्कालान्वयिव्रीहौ उपलक्षणं तदन्वय्यव्यवहिततत्प्राक्कालानन्वयि, न तु विशेषणं न तदन्वयि अविद्यमानेन यत्किञ्चित्पूर्वक्षण-
25 वृत्तिना प्रोक्षणेन तत्र तत्रावघातादौ असतापि तेन व्यावृत्तिप्रत्ययमुदाहरति—**यथेति**। तत्प्राक्कालवृत्तित्वमात्रमपि न कार्यत्वाभिमतप्राक्कालवृत्त्यन्ताभावाप्रतियोगित्वं जन्ये सम्भवति इत्यव्यधानमवश्यं निवेश्यं, तच्चाव्यवधानं सामान्यतो यद्यप्यसम्भवं तथापि तत्तन्निरूपिताव्यवधानानां संसर्गमर्यादया निवेशनीयतया नाननुगमस्तथाच स्वस्वव्यापारान्तरयोस्तदव्यवहितप्राक्क्षणनिष्ठात्यन्ताभावाप्रतियोगित्वमेव तस्य कारणत्वं कालिकव्यापारान्य-

तरसम्बन्धेन तदव्यवहि[त]प्राक्कालवृत्त्यत्यन्ताभावाप्रतियोगित्वं वा तद्वाच्यमिति व्यापारस्य जनकत्वमित्यमिप्रायेणाह—**तदसदिति**। स्वरूपं कारणत्वेनाभिमतमभावेऽपि अव्यवहित-प्राक्कालावृत्तित्वेऽपि उपलक्षणस्य यत्किञ्चित्प्राक्कालवृत्तिमात्रस्य अतिप्रसङ्गात् व्यभिचारि-साधारणत्वात्, तथाच नियमांशप्रवेशेऽवश्यमव्यवधाननिवेश इति भावः। नन्वेवं निरन्वयध्वस्तस्य गुरोः कुरोर्वा कथं व्यावर्तकत्वमित्यत्राह—**व्यवहारमात्रन्त्विति**। 5
करणव्युत्पत्त्या व्यावृत्तिप्रत्यय इत्यर्थः। तज्ज्ञानसाध्यं विशेषणज्ञानसाध्यं, तज्ज्ञानमपि विशेषणज्ञानमपि, तेन विशेषणेन कुरुणा गुरुणा वा कुरुगुरोस्तत्कारणत्वव्यवहारः। सत्त्वे त्वाह—**तत्रापी**ति। तत्रापि कुरुगुरुस्थलेऽपि। उक्तमेवार्थं प्रतिवन्द्या द्रढयति—**यद्व**ेति। व्रीहौ प्रोक्षणमुपलक्षणं सत सहकारीति दृष्टान्तस्य साम्यार्थमाह—**यज्वा वे**ति। **न चे**ति। देवदत्तस्य शरीरादय इति पक्षः आदिपदात्तदवयवपरिग्रहः, 10
आदिविशेषणान्न 'सिद्धसाधनं देवदत्तीयत्वावच्छेदेन वा साध्यसिद्धेरुद्देश्यत्वात् तदनुपादा-नेऽपि क्षतिः। गुणाकृष्टा भोगायेति साध्यं गुणो विशेषगुणः। तेन संयोगेन नार्थान्तरं, तथाच तदात्मसमवेतविशेषगुणसहकारेण भोगजनका इत्यर्थः पर्यवस्यति।

स्वर्गादिवत् तदात्मभोगसाधनस्वर्गादिवत्। स्वगुणोत्पादिता इति तथा च भोगायेत्य-नुपादेयमेवेति भावः। उपलक्षणैर्ज्ञानादिभिः असतां कार्याव्यवहितप्राक्काले तेषां ज्ञानादीना- 15
मेतत्तदानीमसतामनुपपादकत्वं भावभूतमिति यथोक्त्या ध्वंसव्यापारतानिराकरणाय अतिशयं तत्फलानुकूलम्। उपजनयन्त इत्यस्य व्रीह्यादावित्यादिः, तेन नादृष्टेन सिद्धसाधनं, प्रमाणमिति भ्रमेण तद्गतफलार्थितया क्रियमाणे व्यभिचारवारणाय, तथाचाभ्रान्तेन यत्र कालान्तरभाविफलार्थित्वेन यत् क्रियते तत्तन्निष्ठव्यापारजनकमिति सामान्यमुखी व्याप्तिरव-सेया। कृषेर्दृष्टान्तासिद्धिमपाकरोति—**अन्यथे**ति। कृष्यादेस्तादृशातिशयजनकत्व इत्यर्थः। 20
कृष्यादय इत्यत्रादिपदात् लाक्षासेकादिपरिग्रहः। दुर्घटञ्च नियतजातीयकार्यम्। ननु विजातोयवीजादिसहकारेणैव नियतजातीयकार्यजनकत्वं स्यादित्यत्राह**बीजादीनामापर-माणवन्तभङ्गा**दिति। ननु तत्तदारम्भकविजातीयपरमाणुसहकारेणैव तथात्वं स्यादित्यत्राह—**तेष्वि**ति। परमाणुष्वित्यर्थः। अवान्तरजातिः द्रव्यविभाजकन्यूनवृत्तिजातिः।

'चिरध्वस्तमि'त्यादियुक्त्या सिद्धस्य प्रोक्षणजन्यातिशयस्य व्रीहिनिष्ठत्वमपाकरोति— 25
**संस्कार** इत्यादि। संस्कारः प्रोक्षणाभ्युक्षणादिकरणक-कालान्तरभाविफलानुगुणोऽतिशयः पुंस एव पुंवृत्तिरेव न तु व्रीहिवृत्तिः, पुरुषातिरिक्तवृत्तित्वे बाधकप्रमाणविषयत्वात् व्रीहि-निष्ठत्वे तथात्वाद्वा संस्कार इत्येकवचनेन च बाधकमानं ध्वनितम्। कालान्तरभाविफलानु-

गुणो व्यापारः सिध्यन् लाघवादेक एव, तस्य व्रीहिनिष्ठत्वे यत्किञ्चिद्व्रीहिनाशात्तनाशेऽ-
वघातानुपपत्तिः। अतोऽनायत्या व्यधिकरणोऽपि एक एवादृष्टभेदस्तथा कल्प्यत इति
ध्वनितम्। प्रोक्षणाभ्युक्षणे अधऊर्द्ध्वमुखपाणिकरणकजलक्षेपौ। विनाप्यतिशयं कृष्यादितो
नियतजातीयकार्यार्थत्वमुपपादयति—**स्वगुणा** इति। स्ववृत्तयो रूपरसगन्धस्पर्शा विशेषा
5 विलक्षणा नियतजातीयकार्यनियामका विशेषपदावृत्त्या व्याख्येयम्। वैलक्षण्ये हेतुमाह—
**पाकजादय** इति। आदिपदाददृष्टभेदनिमित्तकोद्भिदादेः संस्थानविशेषपरिग्रहः। **केचित्**
आदिपदात् सुवर्णाद्यारम्भप्रयोजकगुरुद्रव्यसंयोगपरिग्रह इत्याहुः।

कालान्तरभाविफलाय यदुद्देशेनाभ्रान्तेन यत्र यत् क्रियते तत्तन्निष्ठातिशयजनक-
मित्यत्र व्यभिचारमाह—**यथा ही**ति। हुताः होमविधिविषयाः तेन भ्रमाधीनत्वनिरासः,
10 यथाश्रुतेऽनन्वयात्। न वह्निमिति दृष्टान्तार्थं, वस्तुतस्तु व्रीहेरुद्देश्यत्वं कर्म्मता
देवतानाञ्चानिराकर्तृ[क]सम्प्रदानत्वमिति न हविरित्येव वक्तुमर्हति। संस्कुर्वते अभिमत-
संस्कारवन्तं कुर्वन्ति, न तु व्रीह्यादि। न च यद्गतफलार्थितयाय त् क्रियते तत्तन्निष्ठा-
तिशयजनकमिति वाच्यम्, अप्रयोजकत्वात्, नानाव्यापारकल्पने गौरवाच्च।
शत्रुबधोद्देशेन क्रियमाणे श्येने व्यभिचारादिति **केचित्**, तत्रापि गयाश्राद्धादिजन्यादृष्टस्य
15 पितरीव शत्रावेव तददृष्टमिति तु **मिश्राः**। वस्तुतस्तु यद्गतफलार्थितयेतिव्याप्तौ
व्यभिचारन्दर्शयन् परम्परया प्रत्यासन्नस्यादृष्टस्य जनकतां दर्शयति—**यथा चे**ति।
संस्काराधारत्वं पुरुषस्येत्यनेन यथोक्तव्यभिचारो दर्शितः, तदाधारपुरुषसंयोगादित्यनेन
च परम्परासम्बन्धः, क्रियाविशेषा अवघातादयः। ननु तददृष्टं व्रीहाववश्यमवघातं
जनयेत्, अजनने फलैकनाश्यस्य तस्यानाशप्रसङ्ग इत्याशङ्कायामाह—**यथा चे**ति।
20 कर्म्मत्यागसेकादि तद्वैगुण्यम् अन्यायोपादानादिना। कर्त्तृवैगुण्यम् अशुच्यादिना।
साधनं हस्तादि। तद्वैगुण्यं विहितपरिमाणयथासन्निवेशाद्यभावादिना। एकत्र कारीर्यां
फलाभावः अदृष्टानुत्पत्तिः, परत्र प्रोक्षणे आगमिकत्वस्यागमप्रामाण्यानुपपत्तिरु
पकल्पकस्य, उभयत्र कारीरीप्रोक्षणयोः साङ्गत्वेऽपि अजनितपरमापूर्वाङ्गापूर्वस्येव तन्नाशः
कल्पनीय इति च ध्येयम्।

25 ननूत्पादिताङ्गापूर्वस्य पिण्डास्तरणबर्हिषो विनियुक्तविनियोगविरोधाद् यथा कर्म्मान्तरे
नोपयोगस्तथा प्रोक्षितव्रीहेरप्यवघातादौ विनियोगो न स्यात्, जनिताङ्गापूर्वतया
विनियुक्तत्वस्योभयत्राप्यविशेषः स्यादित्याह—**न तर्ही**ति। तर्हि अङ्गापूर्वजनकत्वे बर्हिष
इव बर्हिर्यागस्येवेति **केचित्**। **परे** तु व्यतिरेके दृष्टान्तः। बर्हिस्तृणाति, बर्हिषि

हविरासादयति इत्यत्र यथा विशेषवचनात् पुनरुपयोगस्तथा प्रकृते न स्यात्, तथा वचनाभावादित्यर्थ इत्याहुः। ननु व्रीहेर्नापूर्वजनकत्वं किन्तु तत्कर्म्मकप्रोक्षणस्येति नोक्तरीत्या विनियोगान्तरबाध इत्यत्राह—उपयोगे वेति। तज्जातीयान्तरम् अप्रोक्षितानपि व्रीहीनुपादीयेत अवघातयागादौ विनियुज्येत, अविशेषात्। विधिविषयतावच्छेदकव्रीहित्वस्य प्रोक्षिताप्रोक्षितसाधारणत्वात् स्वजनकीभूतप्रोक्षणकर्म्मव्रीहित्वस्य नियामकत्वान्नातिप्रसङ्ग 5 इत्यभिप्रेत्याह—न विचित्रा इति। केचित् केचिदेव अभिसंस्कारा अदृष्टरूपा विचित्रा न तु सर्वे। वैलक्षण्यमेवाह—क्रियमाणोद्देश्यसहकारिण इति। स्वजनकीभूत-व्यापारोद्देश्यसहकारिणइत्यर्थः। कार्य उपयुज्यन्ते तत्तत् कार्यञ्जनयन्ति। विधेरिति व्यक्ति-वचनन्यायेनाकांक्षाबलात्तत्रैव गृहीततात्पर्य्यकत्वाद्विधेरित्यर्थः। दृष्टान्तेनातिप्रसङ्गमाह—यथेति। प्रयुक्त उत्पादितः तदपेक्षएव तज्जातीयशरीरावच्छेदेनैव तदवच्छेदेनापि नान्य- 10 स्यात्मन इत्याह—तत्सम्बद्धस्यैवेति। तदात्मन एवेत्यर्थः। नियमव्यवच्छेद्यं स्पष्टयति—नान्यस्येति। एवमित्यादि। अभिमन्त्रादिसंस्कारा एवं भवन्तः नियतसहकारेणैव नियतकार्यकारितामासादयन्तः न मनागपि नोपयुज्यन्ते अल्पामप्यनुपपत्तिं नाप्नुवन्ति। तर्हि प्रोक्षणस्य व्रीहिनिष्ठसंस्काराजनकत्वे संस्कार्यकर्म्मतेत्यत्र प्रोक्षणेत्यादिक्रियाजन्यफल-शालितायास्तत्त्वादिति भावः। क्रियाजन्यफलशालित्वमात्रं न तथा पूर्वोत्तरदेशयोर्गमित्य- 15 जिकर्मतापत्तेः, किन्तु धात्वर्थतावच्छेदकफलशालित्वम्। प्रकृते जलसंयोगस्य तथात्वान्नानुप-पत्तिरित्याह—नेति। अतएव "शक्तून् प्रोक्षती"त्यत्राधेयशक्त्यभावेऽपि कर्म्मतेति भावः। देवताविशेषोद्देशेनेत्यादिना सामान्यतो दूषितं पराभिप्रेतं मानं प्रयोगारूढं कृत्वा दूषयति—नन्विति। यद्वा व्रीहिः प्रोक्षणजन्यातिशयवान् कालान्तरभाविफलानुगुणप्रोक्षणोद्देश्यत्वात्। यत् कालान्तरभाविफलानुगुणयदुद्देश्यं तत्तज्जन्यातिशयवदिति प्रागुक्तमिदानीं प्रोक्षणं 20 व्रीहिनिष्ठातिशयजनकं कालान्तरभाविफलानुगुणव्रीह्युद्देश्यकक्रियात्वादिति शङ्कते—नन्विति। अभिमन्त्रणादयः प्रोक्षणादयः। ते हविस्त्यागादयः। ते अपि हविरादिनिष्ठं स्वत्वध्वंसमुत्पादयन्त्येवेत्यत आह—हुताशनादाविति। आदिपदाद्देवताविशेषपरिग्रहः। ननु तदुद्देश्यकत्वं तत्कर्म्मकत्वमित्यरुचेराह—किं वेति। इन्द्रियेत्यादि। तज्जन्यज्ञाना-नीत्यर्थः। तदुद्देशेन प्रवृत्तास्तत्कर्म्मकाः किञ्चित् संस्कारादिकं व्यवच्छेद्यं स्पष्टयित्वा 25 व्यभिचारमुपपादयति। संस्कारस्य च विषयतया प्रमेयनिष्ठत्वे मानाभाव इति भावः। उपेक्षाज्ञानाभिप्रायेण वा। एवमदृष्टद्वारा कालान्तरभाविफलानुगुणे परिणतिर्द्धातुसाम्यं लाक्षारसावसेकः कालान्तरभाविरक्तपुष्पोद्गमहेतुबीजपूरे लाक्षारसावसेकः व्याख्यातः परमाणुनिष्ठपाकजरूपादिद्वारा तादृशकार्य्यजनकतया। तथा च न तदर्थमाधेयशक्तिस्वीकार

इति भावः । **स्वगुणा** इति कारिकांशं व्याचष्टे—**अतएवे**त्यादि । विशिष्टा विलक्षणाः जातिवदुपाधेरपि व्यावर्त्तकत्वमविशेषादित्याह—**यथे**त्यादि । तत्र विलक्षणपाकजादिमत्त्वे युक्तिमाह—**न ह्यस्ती**ति । **शीत**मिति । उपष्टम्भकस्पर्शमभिप्रेत्य—**आद्ये**ति । आद्यातिशयो द्व्यणुकम्, अन्त्यातिशयोऽङ्कुरादिरिति च समानाधिकरणम् । अन्त्यातिशय
5 इत्यनन्तरं क्वचिद्वाकारः श्रूयते । तत्रान्त्योऽतिशयोऽन्त्यावयवी अंकुरादिः यस्मादिति व्युत्पत्त्या तदवयव आद्यातिशयान्त्यातिशयादिपदे अंकुरस्योच्छूनत्वोच्छूनतरत्वपरे इत्याहुः । एवमेव कल्पान्तरोत्पन्नपाकजविशेषादेव कार्यवैलक्षण्यम् अदृष्टादेवेत्युपलक्षणं, भगवत्प्रयत्ना- दित्यपि बोध्यम् । अतएवायोजनं हेतूकरिष्यत इति । तथा भोक्त्रदृष्टादेव सहकारिसमव- धानं, तथा च कृष्यादिषु न प्रवर्त्तेतेति भावः । **यत** इति । तादृशमदृष्टमेव कालविशेषो
10 वा तत्प्रतिबन्धक इति भावः । **अव्यवस्थे**ति । तथा च सत्सु बलवत्सु दुर्बलानामुपादानं न स्यादिति ते म्रियेरन्निति भावः । कृष्यादेः कारणत्वाव्यवस्था स्यादित्यङ्कुरेषु वैजात्यं कल्पनीयं कृष्यन्यसाध्ये तत्र कालविशेषोऽन्यत्र कृष्यादिरिति कल्प्यत इति प्रकाशः । अदृष्टानि कृष्यादिद्वारा अङ्कुरसाधनानि दृष्टकर्मव्यवस्थयैव कृष्यादिकं जनयित्वैव भोगसाध- नानि अङ्कुरादिकारीणि । उपसंहरति—**तस्मादि**ति । पाकपदग्राह्यैकदेशमाह—**संस्था-**
15 **ने**ति । ते पाकजविशेषाः अदृष्टवदात्मसंयोगाः, प्रयत्नवदात्मसंयोगस्याप्युपलक्षणम् । ननु पाकजविशेषात् कलमादिवैलक्षण्यम् अभिहितं तच्च न सम्भवति, तेजःसंयोगावैलक्षण्येऽपि तद्वैलक्षण्यात् । तथा च तदर्थमेव शक्तिः स्वीक्रियतामित्यत्रासमवायिकारणतेजःसंयोगा- वैलक्षण्येऽपि अदृष्टरूपनिमित्तवैलक्षण्यादेव तद्वैलक्षण्यमित्याभिप्रायिकसमाधानं दृष्टान्तेनोप- पादयति । वस्तुतः संयोगवैलक्षण्येऽप्यवश्यं मूलमदृष्टवैलक्षण्यमिति हृदयम् ।

20 **निमित्तभेदा** इति । पाके पाकगततद्वैलक्षण्ये निमित्तभेदा निमित्तकारणवैलक्षण्यानि प्रयोजका भवन्ति । निमित्तञ्च दृष्टमदृष्टं वेति न विशेषः । यद्वा ते पाकेन कार्यविशेषे जननीये सहकारिणो भवन्तीत्यर्थः । अथवैतद्दृष्टान्तप्रदर्शनेनात्रैव कार्यविशेषनियामकतया ये शक्तिमङ्गीकुर्वन्ति तेऽपि निराकृता इति ध्येयम् । प्लुष्टं दग्धम् । उक्तस्थले क्षणवैलक्षण्याधीनम् अग्निवैलक्षण्याच्चतत्संयोगवैलक्षण्यमाशङ्क्य स्थलान्तरमाह—**दशे**ति ।
25 अत्र कांस्यकालौ निमित्ते, तद्वैलक्षण्याद्वैलक्षण्यम् । अत्र पाके तु वैलक्षण्यस्य फलैकोन्नेतया दृष्टान्तत्वासम्भवादाह—**ताम्रे**ति । विशेषः विशेषगुणः, तेन तादृशसंयोगादिसत्त्वेऽपि न क्षतिः ॥११॥

## परिमलः

उक्तरीत्या प्रतिबन्धकाभावस्य कारणत्वस्वीकारेणैव प्रतिबन्धकस्थले कार्यापत्तिवारण-
संभवात्तदर्थं कारणेस्वाभाविककार्यानुकूला शक्तिर्मास्तु, आधेयशक्तिस्वीकारस्त्वावश्यक इत्याह—
माभूदिति। व्रीहीन्प्रोक्षतीत्यादिवाक्यविहितप्रोक्षणादेः संस्कारानाधायकत्वे व्रीहीनवहन्तीत्यादि-
वाक्यविहितवेलायां स्वरूपेणावर्तमानस्य प्रोक्षणस्याप्रोक्षितव्रीह्यादिव्यावर्तकत्वानुपपत्याऽप्रोक्षि-
तानामपि तेषामवघातापत्तिः स्यात्प्रोक्षणविधेश्च वैयर्थ्यं स्यात्। संस्काराधायकत्वस्वीकारे तु 5
संस्कारस्य तत्समवेतस्य कालान्तरेऽपि सत्त्वेन व्यावर्त्तकत्वमुपपद्यते, तत एव संस्कारविधेरपि
सार्थक्यम्। ननु व्रीहीन्प्रोक्षतीति वाक्ये संस्काराश्रवणान्न तस्य विधिविषयेतति चेन्न,
व्रीहीन्प्रोक्षतीत्यत्र द्वितीयाश्रुत्या व्रीहीणां कर्मत्वं प्रतीयते। कर्मत्वं च क्रियाजन्यफल-
भागित्वं फलं च संस्कारः, तस्य स्थायितया कालान्तरेऽपि सत्त्वेन व्यावर्तकत्वोप-
पत्तिरिति प्रोक्षितानामेव तेषामवघातादिद्वारा पुरोडाशकार्ये उपयोगः। न च व्रीहीनवहन्तीत्यत्र 10
व्रीहिमात्रश्रवणात्तस्यैवाघातेऽन्वयो न तु प्रोक्षितस्यैव विशेषाश्रवणादिति वाच्यम्। सामान्यस्या-
वघातासंभवेन तद्विशेषापेक्षायां प्रकरणप्राप्तस्य प्रोक्षितव्रीहेरेव तथान्वयस्यौचित्यात्, उपस्थितं
परित्यज्यानुपस्थितकल्पने मानाभावात्, दृष्टार्थत्वेन प्रोक्षणस्योपपत्तावदृष्टार्थत्वकल्पनानौचित्याच्च।
ननु तथापि "व्रीहीन्प्रोक्षति" "व्रीहीनवहन्ती"ति वाक्याभ्यां व्रीहेरेव प्रोक्षणमवहननं च विधीयतां,
किं प्रोक्षणविशिष्टे अवघातविधानेन। तथा च नावघातविषयव्यावर्त्तनाय प्रोक्षणजन्यातिशय- 15
कल्पनेति चेन्न। प्रोक्षितव्रीहयोऽवघाताय कल्पन्ते इति वाक्यशेषानुसारेण प्रोक्षितानामेवाव-
घातविधानौचित्येन तदर्थं संस्कारकल्पनाया आवश्यकत्वात्। प्रोक्षणध्वंसविशिष्टेऽवघात-
विधानन्तु वक्तुमशक्यम् ध्वंसस्यकारणत्वापत्तेः। मन्त्रादिसहकृताः प्रोक्षणादय एवावघात-
नियमापूर्वप्रयोजका इत्यपि न, आशुविनाशिनां तेषां ध्वंसेनापि तत्कार्योत्पत्तिस्वीकारात्, तर्हि
ध्वंसद्वारैव ते तदुत्पादका इति चेन्मैवम्। ध्वंसव्यापारद्वारा यागादय एव स्वर्गादिफलजनका इत्यपि 20
वक्तुं शक्यतया तत्राप्यपूर्वाभावापत्तेः। न च ध्वंसस्यानादिकालस्थायितया तत्फलस्य स्वर्गादेरनन्त-
कालस्थायित्वापत्तेः, ततोऽवरोहाभावे ये रमणीयाचरणास्ते रमणीयां योनिमुत्पद्यन्ते, ये कपूया-
चरणास्ते कपूयां योनिमापद्यन्ते इत्यादिसूचितपूर्वकर्मफलभोगानुपपत्तेः मोक्षानुपपत्तेश्चेति यागादि-
जन्यमपूर्वमवश्यमेव स्वीकार्यम्। अपूर्वस्वीकारेऽपि नेयं शङ्का समाधातुमर्हा। न हि फलमुत्पाद्या-
पूर्वः नश्यतीति तत्स्वभावः कल्पयितुं शक्यते, तन्नाशे तद्भोगानुपपत्तेः। न चापूर्वमात्रं समानकाल- 25
फलप्रदम्, साधनतारतम्येन न्यूनाधिककालस्थायिभोगजनकत्वस्वाभाव्यात्तेषां विधिवाक्यात्तेषां
तत्तत्स्वभावकल्पने तत एव ध्वंसस्यापि तादृशस्वभावः कल्प्यतामिति समः समाधिः।
फलम्प्रदायापूर्वं नश्यति, ध्वंसस्तु अग्रे प्रवहन्नपि न फलं यच्छति।

अस्तु तर्हि प्रोक्षणादिजन्योऽतिशयः परन्त्वसौ आत्मधर्म एव न भूतधर्म इत्याह—

अनेकसंस्कारकल्पनापेक्षया एकातिशयकल्पने लाघवमिति तर्कसहकृतधर्मिग्राहकमाना- 30
दतिशयः सिध्यन्नेकपुरुषनिष्ठश्च सिध्यति। यदि व्रीहिनिष्ठः संस्कारस्स्वीक्रियते तदा सकलव्रीहीषु
व्यासज्यवृत्या एक एव संस्कारः किम्वा यावन्तो व्रीहयस्तावन्तः संस्कारा इति नान्त्यः
महागौरवप्रसङ्गात्। आद्ये एकव्रीहिनाशे तन्नाशापत्तेः यथा दशत्वादिसंख्या व्यासज्यवृत्या-
नैकत्र वर्तते तत्र एकस्याप्यपायेऽपैति एवं संस्कारोऽपि नश्येत्। न च यावदाश्रयनाशे न

तन्नाशः कल्पयितुं शक्यः लाघवादाश्रयनाशत्वेनातिशयनाशं प्रति हेतुता न तु यावदाश्रयनाशत्वेन हेतुता गौरवादित्यन्यत्र विस्तरः। व्यभिचाराभावं परोक्तदृष्टान्तासिद्धिं चाह **स्वगुणेति।** परमाणूनां स्वगुणाः पाकजादयो विशेषाः, व्रीहिजादिनिष्ठः स्वगुणः पाकजरूपरसादिरेव विशेषोऽतिशयस्वरूपः स च वीजावयवेषु परमाणुर्विद्यते इति तदभावादेव यवव्रीजाद्यवाङ्कुर इत्यादिनियम इति न तत्र संस्काराभावेऽपि व्यभिचारगन्धः परमाणावतिशयाभावाच्च दृष्टान्तः साध्यविकल इत्यर्थः। यद्यपि परमाणुषु पाकजविशेष एवातिशय इति न दृष्टान्तः साध्यविकल इति तथापि शक्तिरूपातिशयो नास्तीति तत्तात्पर्य्येण तथाभिधानात्। न च शक्तिपाकजरूपयोरतीन्द्रियत्वाविशेषात् शक्तिकल्पनं वा पाकजरूपादिकल्पनं वेत्यत्र विनिगमकत्वाभावात् पाकजादिरेव विशेषो न शक्तिरिति कथं निर्णय इति वाच्यम्? अवयविगतरूपादिसजातीयरूपादेरवयवेषु स्वीकारानुरोधेनैव तन्नियतकार्य्योपपत्तौ तदर्थं शक्त्याधानकल्पनायां गौरवात्। यो यदुद्देशेन विधीयते स तत्रातिशयजनक इति व्याप्तिं व्यभिचारयति—**यथा हीति।** शुष्यच्छस्योपजीवनौपाधिकवृष्टिकामनया यत्र कारीरीयागः क्रियते तत्र देवतोद्देश्यकवैधाग्न्यधिकरणकहविस्त्यागेन यागेन पुरुष एव संस्क्रियते। न वा देवता न वाऽग्निस्तादृशादृष्टवदात्मसंयोगान्नभसि प्रादुर्भूतेभ्यो मेघेभ्यो वृष्टिरुत्पद्यते, तथा व्रीह्युद्देशेन प्रयुक्ताः प्रोक्षणादयः पुरुषमेव संस्कुर्वन्ति तादृशसंस्कृतात्मसंबद्धा व्रीह्यादयोऽवघातादिकार्य्योपयोगिनो भवन्ति एतेन व्रीहौ परम्परासम्बन्धेन तादृशातिशयसम्बन्धकल्पनायां गौरवात् साक्षात् सम्बन्धकल्पनैव युक्ता प्रामाणिकगौरवस्यादूषणत्वात्। न च पुरुषनिष्ठातिशयकल्पनायां यदा पुरुषो नाधिकृतस्तदा तत्प्रयुक्तप्रोक्षणादेः संस्कारानाधायकतया वैयर्थ्यम् व्रीह्यादिगतसंस्कारकल्पनायामपि एतद्दोषतादवस्थ्यात् अनधिकृतपुरुषकृतप्रोक्षणादेः संस्कारानाधायकत्वात् न कर्तृकर्मसाधनवैगुण्यादितिन्यायसूत्रे स्फुटमिदम्। साधनादिवैगुण्यवत्, कर्तृवैगुण्यस्यापि फलानुत्पादकत्वमिष्टमेव, आगमप्रमाणस्योभयत्र तुल्यत्वात्। बर्हिष इवेति बर्हिस्तृणाति बर्हिष हविरासादयीत्यादिवाक्येन विहिते तरणासादनादौ कृतार्थानां बर्हिषां यथा कार्य्यान्तरेषु विनियोगो न भवति। तथा प्रोक्षणे कृतार्थानां व्रीहीणामवघातादिषु पुनर्विनियोगो न स्यात्। व्रीहिनिष्ठसंस्कारपक्षे तु संस्कृतस्य क्वचिद्विनियोग आवश्यकोऽन्यथासंस्कारस्य वैयर्थ्यापत्तेरिति विनियोगोऽवघाते आवश्यकः। यदि तु बर्हिरादौ विनियोगवचनान्तराभावादविनियोगः, इह तु व्रीहिभिर्यजेत इत्यादिविनियोगवचनदर्शनात् पुनः कार्य्यान्तरे तत्सम्बन्धोऽभ्युपेयत इति तज्जातीयस्याप्रोक्षितव्रीह्यादेरुपादानं स्यात्, व्रीहित्वस्योभयत्राविशेषात्। विशेषस्यसंस्कारस्य चेष्टस्य तत्रानङ्गीकारादिति चेदत्राहुः—संस्कारा हि विचित्रमहिमानः यथाऽभिचारादिः। यादृशशत्रुशरीरमुद्दिश्य अभिचारः क्रियते स अभिचारकर्तृपुरुषसमवेतोऽपि तादृशशरीरसहकारितया तदेकशरीरं नाशयति न शरीरान्तरं, न वा तस्यैव शत्रोर्जन्मान्तरीयं शरीरम्, तस्यानुद्देश्यत्वेनासहकारित्वात्। एवमभिमन्त्रणादिसंस्कारः पुरुषसमवेतोऽपि तादृशोद्देश्यव्रीह्यादिः सहकारीभूत्वा तस्यैवावघातं नियच्छति। व्रीहीनवहन्तीतिविधेः प्रोक्षितान् व्रीहीनवहन्यादित्यत्रैव तात्पर्य्यमित्यर्थः। प्रोक्षिता व्रीहयोऽवघाताय कल्पन्ते इति वाक्यशेषसहितव्रीहीनवहन्यादिति विधेस्तत्रैव तात्पर्य्यात्। अत एव संस्कारा अवघाताय नोपयुज्यन्त इति न किन्तूक्तन्यायेनावघातायोपयुज्यन्ते। पुरुषसमवेतो वा व्रीहिसमवेतो वा संस्कारः सर्वथा कार्य्योपयोगी न एवेति भावः। कथं तर्हि व्रीहीणां संस्कार्य्यकर्मत्वं क्रियाजन्यफलभागिन एव कर्मत्वम्। व्रीहीगतातिशय

कल्पने तु तादृशक्रियाजन्यसंस्काराश्रयत्वेन तेषां कर्मत्वमुपपद्यते। तस्य पुरुषसमवेतत्वमिति पक्षे तु तादृशफलाश्रयत्वाभावात् कर्मत्वन्न स्यादिति वाच्यम्? प्रोक्षणक्रियाजन्यजलसंयोगाश्रयत्वेन तेषां कर्मत्वोपपत्तेः। न च व्रीहीन् प्रोक्षतीति बहुवचनश्रुत्या सर्वेषामवघातायोपनीतानां व्रीहीणां कर्मत्वमेष्टव्यं प्रोक्षितजलसंयोगस्य सकलव्रीहिस्वभावादिति वाच्यम्। कपिञ्जलानालभेत व्रीहित्रयगतजलसंयोगेनैव तदुपपत्तौ सकलव्रीहिगतत्वापेक्षाविरहात्। यो यदुद्देशेन क्रियते इति परोक्तानुमाने व्यभिचारं स्फुटमिमनुवदति नन्विति। पुत्रेष्टि जातेष्टिं "वैश्वानरं द्वादशकपालं चरुं निर्वपेत्" पुत्रे जाते। पुत्रोत्पत्त्यनन्तरमिमं यागं पिता करोति। तज्जन्यं फलञ्च पुत्रे तदुद्देशेनैतद्विधानात्। अत एवं यस्मिन् जाते शतामिष्टिं निर्वपति सपूत एव तेजस्वी अन्नादः पशुमान् भवतीति श्रुतिः पुत्रे एव तत्फलं बोधयति। एवममावास्यायामपराह्णे पिण्डपितृयज्ञेन यजेत इत्या निकृष्यादिसाध्य भोगजनकादृष्टस्य वैयर्थ्यं स्यात्......।

यद्यपि सर्गादाविव कृष्यादिं विनाऽधुनापि अङ्कुरो भवतु। कृष्यादिसाध्यभोगजनकादृष्टानुसारेण ततोऽप्यङ्कुरादिर्जायतां द्वयोरुत्पत्तौ मिथो विरोधाभावात्। तथापि कृष्यादित एवाङ्कुरादिदर्शनैतद्दृष्टस्य तादृशाङ्कुरोत्पत्तेः प्रतिबन्धकत्वं कल्प्यते। अथवा सर्गाङ्कुरविजातीयोऽयमङ्कुरः, तत्सजातीयाङ्कुरस्वीकारे व्यभिचारात् कृष्यादीनां हेतुत्वमेव न स्यात्। अदृष्टानि दृष्टसामग्रीसंघटनद्वारैव भोगसंपादकानि न तु साक्षात् तथैव लोके दर्शनात्। अथवा सर्गादावपि आग्नेयपरमाणुसंयोगात् पार्थिवपरमाणौ पाकजाविशेषगुणोत्पत्तिः। तत्तद्भोगजनकादृष्टसंयोगात् तादृशैरेव परमाणुभिस्तज्जातीयाङ्कुरोत्पत्तिः। यदि सर्गादाविव सर्गेऽपि तादृशगुणैरङ्कुरारम्भस्तर्हि कृषिकर्मापेक्षैव न स्यादित्याह इदानीमितीति। कथं तर्हि सर्गादौ बीजादिसमवधानमित्यत आह तदानीमिति। तथैवेदानीं किन्न भवतीत्याह न चेति। कृष्यादिसम्पादनक्षमश्रमज दुःखभावानां तथा तत्कर्मव्याप्रतकर्मकरभोगानां चोच्छेदः स्यात्; अव्यवस्था अकृतकृषिकर्मण सस्यप्राप्तिः स्यात्। संस्थानशब्देनावयवसंयोग उच्यते पूर्वबीजजातीयाङ्कुरारम्भे पाकजविशेषं समानजातीयशरीरादौ संस्थानविशेषमपेक्षन्ते परमाणवो एतच्चोपलक्षणमदस्य ब्राह्मक्षत्रियशरीरसंस्थाने समानेऽपि अदृष्टविशेषापेक्षयैव तत्तज्जातीयशरीरोपपत्तिः स्वीकार्या, पाकजसंस्थानयोः तुल्यत्वात्, तर्हि पाकजविशेषोत्पत्त्यर्थमेव शक्तिः स्वीकार्येति आह न चेति। ते पाकजविशेषा जलानलानिलसंसर्गैः, संसर्गश्च नोदनाभिघातगुरुत्वादृष्टवदात्मसंयोगेभ्य इति दृष्टैवरे कारणैस्तदुत्पत्तिसम्भवान्नतदुत्पत्त्या न तदुत्पत्त्यर्थमपि शक्तेरावश्यकता निमित्तभेदात्पाकविशेषं सदृष्टान्तमाह—हारीतेति। हारीतः पक्षिविशेषः। हरिद्राजलक्षालितं शूलकप्रोतपाचितं तन्मांसं भक्षितं सद्धोक्तारमाशु नाशयति। तथा च वाह्याः हारीतमांसहरिद्राशूलकप्रोतयाचितं हरिद्रावन्हिना सद्यो व्यापादयति। चर्वितमिति हारीतमांसमेवं पाचितं व्यापादयति अन्यथानेति। निमित्तविशेषवशेन पाकजरूपादिकं भिद्यते इति स्पष्टमेव प्रतीयते। एवं कांस्यपात्रेदशरात्रोषितं घृतमपि बोध्यम् ॥११॥

यत्र तर्हि तोये तेजसि वायौ वा न पाकजो विशेषस्तत्र कथमुद्भवानुद्भवद्र-वत्वकठिनत्वादयो विशेषाः ? कथं वा पार्थिवे प्रतिमादौ प्रतिष्ठादिना संस्कृतेऽपि विशेषाभावात्पूजादिना धर्मो, व्यतिक्रमे स्वधर्मोऽप्रतिष्ठिते तु न किञ्चित्। न च तत्र यजमानधर्मेणान्यस्य साहायकमाचरणीयम्, अन्यधर्मस्यान्यं प्रत्यनुपयोगात्; 5 उपयोगे वा साधारण्यप्रसङ्गात्। अत्रोच्यते—

**निमित्तभेदसंसर्गादुद्भवानुद्भवादयः ।**
**देवताः सन्निधानेन प्रत्यभिज्ञानतोऽपि वा ॥१२॥**

उपनायकादृष्टविशेषसहाया हि परमाणवो द्रव्यविशेषमारभन्ते, तेषां विशेषा-दुद्भवविशेषाः प्रादुर्भवन्ति। यथा स्वभावद्रवा अप्यापो निमित्तभेदप्रतिबद्धद्रवत्वाः 10 कठिनं करकाद्यमारभन्ते इत्यादि स्वयमूहनीयम्। प्रतिमादयस्तु तेन तेन विधिना सन्निधापितरुद्रोपेन्द्रमहेन्द्राद्यभिमानिदेवताभेदास्तत्र तत्राराधनीयतामासादयन्ति, दष्टमूर्छितं राजशरीरमिव विषापनयनविधिनापादितचैतन्यम्। सन्निधानञ्च तत्र तेषामहङ्कार-ममकारौ, चित्रादाविव स्वसादृश्यदर्शिनो राज्ञ इति नो दर्शनम्। अन्येषां तु पूर्वपूर्वपूजितप्रत्यभिज्ञानविषयस्य प्रतिष्ठितप्रत्यभिज्ञानविषयस्य च तथात्वम-15 वसेयम्। एतेनाभिमन्त्रितपयः पल्लवादयो व्याख्याताः ॥१२॥

आमोदः

ननु किञ्चित्तेज उद्भूतरूप-स्पर्शं किञ्चिद्विलक्षणम्, वायावपि स्पर्शोद्भवः क्वचित्त्वगिन्द्रियेण; तथा तोयत्वाविशेषेऽपि किञ्चिद् द्रवं तडागादौ, करका-दयस्तु कठिना इति शक्तिभेदमन्तरेणानुपपन्नमिति शङ्कते—**यत्र तर्हीति**। यत्र च पार्थिवे पाकजविशेषो नास्ति, तत्रावश्यं शक्तिस्वीकार इत्यत 20 आह—**पार्थिवेऽपीत्यादि**। **पूजादिनेत्यादि**पदान्नमस्कारादिसंग्रहः। **यजमानः** प्रतिष्ठाकारी। **साधारण्येति**। अदृष्टस्य साधारण्यप्रसङ्गादित्यर्थः।

उद्भवश्चानुल्वणत्वम्। मृगमदे गन्धस्योपलब्धत्वं, कुक्कुटे वाग् संसर्गाधीनं न त्वतिशयनिमित्तकं, चन्द्र-चामीकरादौ चौष्ण्यानुपलब्धत्वं जलपार्थिवसंसर्गाधीनम्; आदिपदाद् द्रवत्वकठिनत्वादीनां करकातुहिनग-25 तानां संग्रहः। तत्रापि निमित्तभेदोऽदृष्टसमवधानमेवेत्यर्थः।

प्रतिमा देवता भवति पूजनीयतामासादयतीत्यर्थः।

**तेन तेनेति**। यद्देवताप्रतिमाप्रतिष्ठां प्रति श्रुतौ यो विधिः प्रकार उक्त-स्तेनेत्यर्थः। सन्निधानमाहार्यारोप इति विभावनार्थमुक्तम्—**अभिमानीति**। **सन्निधानमिति**। अहमेवैतत् ममैवेदं शरीरमित्याहार्यज्ञानं देवतानां जन्यते,

प्रतिष्ठाविधिना तत्रास्थिरमपि संस्कारद्वारा उपकारीत्यर्थः। उपनायकमदृष्टं परमाणुक्रियोत्पादकम्। **नो दर्शनमिति** । न्यायसिद्धान्त इत्यर्थः। **अन्येषामिति** । देवताचैतन्ये विप्रतिपन्नानामित्यर्थः। आद्यपूजां प्रति पूजितत्व प्रत्यभिज्ञानं नास्तीत्यनुशयेनाह—**प्रतिष्ठितेति**। "प्रतिष्ठितं पूजयेदि" ति विधेश्च तज्ज्ञानमावश्यकम्। चण्डालादिस्पर्शे तु प्रतिष्ठितप्रत्यभिज्ञानस्य 5
पूजितत्वप्रत्यभिज्ञानस्य संस्कार एव नाश्यते। **प्रतिष्ठितपदं** प्रतिष्ठाध्वंसपरं वा। स चास्पृश्यस्पर्शनादिसंसर्गाभावसंस्कृतः पूजकानां धर्महेतुः। **एतेनेति** । तत्रापि मन्त्राधिष्ठातृदेवतासन्निधिरेव क्रियते इत्यर्थः। आदिपदान्मन्त्रादिप्रयोगान्मृदादीनां विषरूपतादिसंग्रहः। कांस्यादीनां मार्जनादिना शक्त्याधानमित्यपि नास्ति तत्र मलाद्यपनयनस्य शक्तिपदार्थत्वात्॥ १२ ॥ 10

बोधनी

अस्तु पार्थिवेषु पाकजविशेषादेव कार्यविशेषः, अबादिषु तदभावाच्छक्तिरङ्गीकार्येत्याह—**यत्र तर्हीति** । केचिदाप्याः परमाणव उद्भूतद्रवत्वं कार्यमारभन्ते, केचित्त्वनुद्भूतद्रवत्वं करकादिकम्। तैजसाश्चोद्भूतस्पर्शमुद्भूतरूपमनुद्भूतस्पर्शमनुद्भूतरूपं च प्रदीपं चक्षुर्दर्शनं चारभन्ते। वायवीयाश्च स्तिमितादीति। किञ्च, पार्थिवेष्वपि केषुचित् पाकजाभावेऽपि कार्यविशेषः प्रतिमादिषु दृश्यत इत्याह—**कथं वेति**। 15
विशेषाभावात् पाकजदृष्टरूपादिविशेषाभावादित्यर्थः। ननु प्रतिष्ठादिजनितेन प्रतिष्ठापकात्मसमवेतेनैव धर्मेण सहकृतः पूजादिर्धर्मं तद्व्यतिरेकश्चाधर्मं प्रसूते, ततश्च न प्रतिमादावतिशयोऽङ्गीकार्य इत्याशङ्क्याह—**न चेति**। साहायकं सहायकारित्वं यजमानः प्रतिष्ठापकः, अन्यः पूजकादिः। **उपयोगे वेति**। क्वचिदन्यधर्मस्यान्यधर्मं प्रत्युपयोगाङ्गीकारे नियामकाभावात् सर्वस्य धर्माधर्मजातस्य सर्वपुरुषसाधारण्यप्रसङ्ग इति। 20

अर्द्धद्वयेन शङ्काद्वयं परिहरति—**निमित्तभेद**—इति। निमित्तभेदः सहकारिभेदः, तस्मादेवोद्भवादिविशेषोपपत्तिः प्रतिष्ठादिजनितापूर्ववदात्मसंयोगादेव देवतानां सन्निधानादाराधनीयाः—प्रतिमादय इति स्वमतेन परिहारः। परमतेन तु तत्र देवतासदृशप्रतिमादर्शनजनितेन प्रत्यभिज्ञानेन, पूर्वैः प्रतिष्ठापिता सेयं प्रतिमेति वा प्रत्यभिज्ञानेन सहकारिभेदेनार्थक्रियाविशेषः संभवतीति॥ 25

पूर्वार्द्धं तावद् विवृणोति—**उपनायक**—इति। दृष्टकारणसंयोजनद्वारेणादृष्टस्योपकारकत्वात् परमाणूनां परस्परसंयोजकक्रियाहेतुरदृष्टमुपनायकादृष्टमुच्यत इति। ततः

किमित्यत आह—**तेषामिति**। पाकजविशेषाभावेऽपि तत्तद्विशेषसहकृतानां परमाणूनां विशेषादेव कार्यविशेषप्रादुर्भाव इति अतिशयान्तरकल्पनातः क्लृप्तादेवादृष्टविशेषात् कार्यविशेषकल्पना साधीयसी, दृष्टं च केवलादृष्टस्यैव सामर्थ्यमग्न्यूर्द्ध्वज्वलनादिष्विति भावः। तथापि चेदपरितोषस्तत्राह—**यथेति**। दृष्ट एव वैद्युताग्निसंयोगादिनिमित्त-
5 भेदस्तत्र तत्रानेक इति। उत्तरमर्द्धं व्याचष्टे—**प्रतिमादयस्त्विति**। तेन तेनेति तत्तच्छास्त्रोक्तेनेत्यर्थः। पूर्वमनाराधनीयस्यैव पश्चादाराधनीयत्वे दृष्टान्तः-**विषदष्टेति**। मूर्च्छामूषितचैतन्ये हि वपुषि व्युत्क्रमेण प्रत्यवायाभावेऽपि पश्चादाराधनीयो राजेति। ननु सर्वगतत्वाद् देवतानां नित्यमेव सन्निधानं किं प्रतिष्ठाविधिना तत्राह—**सन्निधानं चेति**। नो दर्शनं देवतावादिनामास्तिकानामित्यर्थः। कथमिदं नास्तिकस्य मीमांसक-
10 स्योत्तरं स्यादित्याशङ्क्य प्रत्यभिज्ञानतोऽपि वेत्येतदुत्तरतया व्याचष्टे—**अन्येषामिति**। यो नामुनेयं प्रतिष्ठापितेत्ति प्रतिष्ठायामनुसन्धातुमीष्टे तस्य प्रतिष्ठा प्रत्यभिज्ञासहकारिणी, इतरस्य तु पूर्वपूर्वपूजितप्रत्यभिज्ञा। तथात्वम् पूजातिक्रमाभ्यां धर्माधर्मजनकत्वमिति। अभिमन्त्रितस्य पयःपल्लवादेर्विषरोगादिप्रतीकारान्यथानुपपत्त्या शक्तिकल्पनमाशङ्क्य तत्राप्यु-क्तमेव प्रकारमतिदिशति—**एतेनेति**॥१२॥

विवेकः

15 **तत्रेति**। रसनादौ। यथासम्भवमनुद्भूतरूपादयः, अन्यत्रोद्भूताः, हिमकरकयोः कठिनत्वम्, अन्यजले तद्वैपरीत्यं द्रवत्वम्, आदिपदात् तेजस्त्वाविशेषेऽपि चक्षुः परप्रकाशकम्, आलोकादयः स्वपरप्रकाशकाः, उष्माद्यप्रकाशकमित्यादेः संग्रहः। सम्भवत्पाकजेऽपि यत्र तेन नोपपत्तिस्तत्र का गतिरित्याह—**कथं वेति**। पार्थिवेऽपि सम्भवत्पाकजेऽपीति यावत्। विशेषाभावात् कार्य्यवैलक्षण्यनियामकपाकजत्वा-
20 भावात्। व्यतिक्रमे दृष्ट्वा नमस्काराद्यकरणे। यजमानधर्मेण प्रतिष्ठाकारिनिष्ठप्रतिष्ठाजन्यधर्मेण स्वस्य साहायकम्। अन्यनिष्ठपूजाव्यतिक्रमजन्यधर्म्माधर्म्मादिकम् अन्यम् प्रति अन्यनिष्ठ-धर्म्माधर्म्मौ प्रति। ननु गुणवत्सम्प्रदानकदानतत्प्रहारादेस्तत्तत्सहकारेणैव धर्म्माधर्म्म-जनकत्वं दृष्टमित्यत्राह—**उपयोगे वेति**। **साधारण्येति**। प्रतिष्ठायाः कर्त्तरि मुक्ते तददृष्टनाशात् अप्रतिष्ठितेन प्रतिमासाधारण्यप्रसंगात् तत्सारूप्यप्रसङ्गात् पूजाव्यतिक्रमे
25 धर्म्माधर्म्मानुत्पादप्रसङ्गादिति यावत्। यद्वा चाण्डलादिना तत्प्रतिमास्पर्शेऽपि प्रतिष्ठिततद-स्पृष्टप्रतिमया साधारण्यप्रसङ्गात् पूजाव्यतिक्रमे धर्म्माधर्म्मजननप्रसङ्गादित्यर्थः।

**निमित्तेति**। अनुद्भूतरूपाद्यारब्धतोयादिरूपादिषु यदुद्भवत्वादि तन्निमित्तभेदादेव

निमित्तकारणवैलक्षण्यादेव, तच्च दृष्टमदृष्टं वेति न विशेषः। अतएव तप्ततैलान्तःपात्यनुद्भूत-रूपादेव तेजसो जलादिसंयोगसहकारेण उद्भूतरूपस्य तेजस आरम्भ इति भावः। **परे** तु नियतारम्भवादमभ्युपगच्छन्तस्तदन्तःपात्युद्भूतरूपपरमाणूनामेव तदारम्भकत्वमाहुः। एतच्च उद्भूतत्वानुद्भूतत्वयोर्द्वयोरेव जातित्वनये। यदि चानुद्भूतत्वमेव जातिस्तदा तदभाव एवोद्भूतत्वं, तदानुद्भूतरूपनिमित्ताभावादेव तदभाव इति ध्येयम्। **देवता** इति। 5 प्रतिमायाः पूज्यताप्रयोजिका इति शेषः। तच्च सन्निधानादि अस्पृश्यस्पर्शनान्नश्यति इति हृदयम्। तत्र पूज्यतामासादयन्तीति शेषः इति तु **प्रकाशकृतः**।

उपनायकादृष्टं द्व्यणुकारम्भकसंयोगानुकूलक्रियानिमित्तादृष्टं तत्सहायाः तत्सहकृताः द्रव्यविशेषमुद्भूतानुद्भूतगुणवद्व्यणुकं, जात्यैकत्वादेकवचनं, त्रिभिः परमाणुभिर्द्रव्यानारम्भात् तदभ्युपगमेनेदमिति तु **केचित्**। तेषामुपनायकादृष्टानां विशेषात् वैलक्षण्यात् उद्भवानुद्भव- 10 विशेषाः उद्भूतत्वेनानुद्भूतत्वेन वा विलक्षणा द्व्यणुकरूपादयः प्रादुर्भवन्ति जायन्ते। आदिपदग्राह्यं व्याकरोति—**तथेति**। स्वभावद्रवाः सांसिद्धिकद्रवाः निमित्तभेदो विलक्षणादृष्टं प्रतिबन्धद्रवत्वा द्रवत्वोत्पत्तिप्रतिबन्धकोपहितद्रवत्वाः प्रतिमादयः शिवलिङ्गानि वा तत्र **शास्त्रे** उक्तेन तेन विधिनेति योजना। अहंममेत्यभिमाने आगन्तुकहेतोः प्रयोजकतां दृष्टान्तेनाह— **दष्टेत्यादि**। भुजगादिना दष्टः, अनन्तरं मूर्च्छितो यो राजा तस्य यच्छरीरं यथागन्तुकेन 15 विषापनयनविधिना आपादितचैतन्यं विनाशितमूर्च्छं सचिवैराराधनामासादयतीति विभक्ति-परिणामेनानुषञ्जनीयम्। वृषभादिवाहनवतो रुद्रादेस्तत्र सन्निधाने कुण्डमण्डपादिभङ्ग-प्रसङ्गादाह—**सन्निधानञ्चेति**। तेषां देवताभेदानां तत्र प्रतिमादिलिङ्गादिषु प्रतिमायाम-हङ्कारः लिङ्गे च ममकारः "स्वसादृश्ये"त्यत्राहङ्कारे स्वस्य ममकारे स्वीयस्य नः **नैयायिकानां** दर्शनं तदनुयायी सिद्धान्तः। एतच्च भगवतोऽपि आहार्य्यसंशयवदाहार्य्या- 20 भिमानमभ्युपेत्य अभिमानस्याशुविनाशित्वेऽपि तदाहितसंस्कारस्यान्यत्र तथात्वमवसेयम्। अन्येषान्देवताचैतन्ये विप्रतिपन्नानामिति **केचित्**। तन्न। कर्मफलीभूतेन्द्रादेर्देवतात्वाभावेऽपि अभिमानस्यैव तत्र प्रयोजकत्वे बाधकाभावात्। तस्मादन्येषां भगवति जन्यज्ञानमनभ्युप-गच्छतामित्य**परे**। पूजितत्वप्रत्यभिज्ञानस्य प्रथमपूजायामसम्भवादाह—**प्रतिष्ठितेति**। तथात्वं सफलपूजाप्रयोजकत्वं "प्रतिष्ठितं पूजयेदि"ति विधिबलात् प्रतिष्ठितत्वज्ञानस्य तथा- 25 विधपूजाङ्गत्वादिति भावः। यद्यप्येवमस्पृश्यस्पर्शेऽपि तादृशज्ञानस्य सत्त्वात् पूज्यतापत्ति-स्तथापि तत्प्रतिष्ठाकालीनयावद् अस्पृश्यस्पर्शप्रतियोगिताकाभावस्यापि तत्प्रतिष्ठितत्वप्रयुक्त-पूजायां तथात्वमवसेयमिति **मणिकृतः**। **एतेनेति**। तत्रापि तत्तन्मन्त्राधिष्ठातृदेवतासन्निधा-नस्याभिमन्त्रितत्वप्रत्यभिज्ञानस्य वा दर्शनादिभेदेन पीतोपशमनादिहेतुत्वमित्यर्थः॥१२॥

## परिमलः

अथ पार्थिवेष्वेव पदार्थेषु पाकजरूपादिकमुत्पद्यते इति शक्त्यनङ्गीकारेऽपि व्यवस्थोपपद्यताम्। जलादिषु तु पाकासंभवात्तत्र तत्तत्कार्यविशेषाय शक्तिस्वीकार आवश्यक इत्यत आह—यत्रेति। केचिज्जलीयाः परमाणवः उद्भूतद्रवत्वजलमारभन्ते किंचिदनुद्भूतद्रवत्वां करकामारभन्ते। केचित्तैजसाः परमाणवः अनुद्भूतस्पर्शवदुद्भूतरूपवत्प्रदीपादि केचिदनुद्भूतरूपोद्भूतस्पर्शवत् ग्रीष्मोष्मादिकमारभन्ते। किं च पाकजत्वेऽपि अवान्तरविशेषानुपपत्त्याऽपि शक्तिः स्वीकार्यैव तथा हि पार्थिवप्रतिमादौ संस्कृते पूजादिना धर्म उत्पद्यते। अनुचिताचारेणाधर्म। अप्रतिष्ठिते तु न किञ्चिदिति शक्तिस्वीकारे तु प्रतिष्ठादिना शक्तिरुत्पद्यते सैव प्रतिष्ठिताप्रतिष्ठितयोर्विशेषः। तदनङ्गीकारे तु तत्र पाकजादिविशेषादर्शनात्तावदविशेष एव स्यात्। न च प्रतिष्ठितप्रतिमापूजने प्रतिमाप्रतिष्ठाजन्ययजमनगतादृष्टमेव सहाकारीति वाच्यम्। पुरुषान्तरापूर्वोत्पत्तौ पुरुषान्तरीयादृष्टस्य सहकारित्वानभ्युपगमात्। ननु अन्यधर्मस्यापि अन्यधर्मं प्रति सहकारित्वं दृश्यते। यथा पात्राय यो ददाति तस्य अपात्रदानापेक्षयाधिकं पुण्यमुत्पद्यते। धर्मविशेषप्रयुक्तत्वस्यैव पात्रत्वादित्यत आह—उपयोगे वेति। भोगेन यजमानधर्मनाशे प्रतिष्ठिताप्रतिष्ठितयोः प्रतिमयोरविशेषात् पूजकस्यधर्मानुत्पत्तेः। सहकारिणो यजमानधर्मस्य विरहात्। यजमानधर्मसत्त्वेऽपि चाण्डालादिस्पर्शेनापूज्यत्वावगतेश्च। शक्तिस्वीकारे तु तत्स्पर्शेन तन्नाशादप्रतिष्ठितप्रतिमावदपूज्यत्वोपपत्तेश्च।

उपनयति परमाणुं परमाण्वन्तरं प्रापयति मिथः संयुनक्तीति यावत्। उपनायकं मिथः संयोगजनकक्रियाहेतुरदृष्टं तद्विशेषः सुखदुःखान्यतरभोगजनकस्तद्भेदात् तद्विशेषसहकारिणः परमाणवो द्व्यणुकादिक्रमेण द्रव्यमारभन्ते, तेषान्तत्तदृष्टसहकृतपरमाणूनां विशेषादुद्भवादयः उद्भूतद्रवत्वानि जलानि अनुद्भूतद्रवत्वकरकादिर्जायते। इत्यावश्यकविशेषभेदादेव कार्यविशेषोपपत्तौ तदतिरिक्तशक्तिकल्पनायुक्ता, एतदेवोदाहरणेन स्पष्टयति—तथेति। सांसिद्धिकद्रवत्वस्वभावा अपि आपः प्राणिनां दुरदृष्टवशात् प्रतिबद्धद्रवत्वाः कठिनं करकाद्यारभन्ते इत्यादि स्वयमुन्नेयम्। प्रतिमादय इति। तेन तत्प्रतिष्ठापकशास्त्रविधिना उपेन्द्रो विष्णुः सन्निधापितातत्तद्देवतास्तत्तत्प्रतिमा अर्चनीया भवन्ति। तत्तत्फलकामनया अत्याराधनीयाः। पूर्वमपूजनीयानां पश्चात्पूजनीयत्वे दृष्टान्तमाह—दष्टेति। सर्पादिदष्टोऽत एव मूर्च्छितोविषापनयनविधिना प्राप्तचैतन्यः आराधनीयो भवति। तथा पूर्वमनाराधनीयाऽपि तत्तद्देवताप्रतिमा पश्चादाराधनीया भवति फलार्थिभिः।

ननु देवताया व्यापकत्वात्सदा सन्निधानं कृतं प्रतिष्ठाविधिनेत्यत आह—सन्निधानमिति। प्रतिष्ठोत्तरमेव तत्र देवतानामहंकारममकारौ नान्यथेति भावः। न च प्रतिमादावहङ्कारज्ञानं भ्रम एव स च न तासां भवितुमर्हति विशेषत्वादिति वाच्यम्। आहार्यज्ञानस्य विवक्षितत्वात्, विशेषदर्शनदशायान्तस्य निराबाधात्। ज्ञानस्य तादृशस्य नाशेऽपि तज्जन्यः संस्कारस्तिष्ठतीति न दोष इति चेत्, देवतामानिनामस्माकमास्तिकानां दृष्टान्तः—चेतनां देवतामनभ्युपगच्छतामन्येषां मीमांसकानां पूर्वैः पूर्वैरियं प्रतिमा पूजितेति प्रत्यभिज्ञानविषयस्य "प्रतिष्ठितं पूजयेदि"ति विध्यनुसारेण प्रतिष्ठाज्ञानस्य पूजाविधावावश्यकतया तत्सहकृतप्रत्यभिज्ञानविषयस्य च प्रतिमादेस्तथात्वं पूजाविपर्ययाभ्यां धर्माधर्मजनकत्वम्। प्रथमपूजायां पूर्वंपूर्वं पूजाप्रत्यभिज्ञासंभवेनाह—प्रतिष्ठितेति। तन्मते प्रतिष्ठाज्ञानाभावे पूजानिष्फलैवेति भावः। ईदृश-

रीत्या शक्तिनिरासप्रकारमन्यत्राप्यतिदिशति—एतेनेति। अभिमन्त्रितेन पयसा पल्लवेन वा यत्र विषापनयनं वातादिरोगनिवृत्तिर्वा क्रियते, तत्राभिमन्त्रणादिजन्यशक्तिस्वीकारोऽन्यथाभिमन्त्रितानभिमन्त्रितयोरविशेषप्रसङ्गः स्यादित्याशंक्योक्तमेतेनेति। अभिमन्त्रितपयःपल्लवादावपि मन्त्रोच्चारणजन्यादृष्टवदात्मसंयुक्तेनप्रत्यभिज्ञानसहकृतेन तेन तन्निवृत्तिस्वीकारेदोषाभावादितिभावः ॥१२॥

घटादिषु का वार्ता?। कुशलैवेति चेन्न। न हि सामग्री दृष्टं विघटयति, नाप्यदृष्टं, ज्ञापकत्वात्। नाप्यदृष्टमुत्पादयति, धर्मजनने सर्वदा विजयप्रसङ्गात्। विपर्यये सर्वदा भङ्गप्रसङ्गात्। अत्रोच्यते—　5

**जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्।**
**परीक्ष्यसमवेतस्य परीक्षाविधयो मताः ॥१३॥**

यद्यपि धर्माद्यभिमानिदेवतासन्निधिरत्रापि क्रियते, ताश्च कर्मविभवानुरूपं लिङ्गमभिव्यञ्जयन्तीत्यस्माकं सिद्धान्तः, तथापि परविप्रतिपत्तेरन्यथोच्यते। तेनापि हि विधिना तदेव जयस्य पराजयस्य वा निमित्तमभिव्यक्तं कार्यमुन्मीलयति। कर्मणश्चाऽभिव्यक्तिः सहकारिलाभ एव। तच्च सहकारि, 'सोऽहमनेन विधिना तुलामधिरूढो योऽहं पापकारी, निष्पापो वे' ति प्रत्यभिज्ञानम्। यदाहुः—　10

'तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः' इति।　15

अथवा—प्रतिज्ञाऽनुरूपां विशुद्धिमपेक्ष्य तेन धर्मो जन्यते। निमित्ततो विधानाद्विजयफलश्रुतेश्च। अविशुद्धिञ्चापेक्ष्याधर्मः। पराजयलक्षणानपेक्षितफलोपदर्शनेन फलतो निषेधात्। अथ शक्तिनिषेधे किं प्रमाणम्?। न किञ्चित्। तत् किमस्त्येव? बाढम्। न हि नो दर्शने शक्तिपदार्थ एव नास्ति। कोऽसौ तर्हि? कारणत्वम्, किं तत्? पूर्वकालनियतजातीयत्वम्, सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं वेति।　20

ततोऽधिकनिषेधे का वार्ता? न काचित्। तत्किं विधिरेव? सोऽपि नास्ति, प्रमाणाभावात्। सन्देहस्तर्हि? कथमेवं भविष्यति, अनुपलब्धचरत्वात्। विवादस्तर्हि? कुत्र? अनुग्राहकत्वसाम्यात्, सहकारिष्वपि शक्तिपदप्रयोगात्, सहकारिभेदे तत्रापि दहनादेरनुग्राहकोऽधिकोऽस्त्येव यः प्रतिबन्धकैरपनीयते इति यदि तदा न विवदामहे। अस्मदभिप्रेतस्य चाभावादेरनुग्राहकत्वमङ्गीकृत्य निःसाधना मीमांसका अपि न विप्रतिपत्तुमर्हन्ति। ततोऽभावादिरनुग्राहक इत्येके, नेत्यपरे, इति विवादकाष्ठायां व्युत्पादितश्चैतस्यानुग्राहकत्वम्। किमपरमवशिष्यते यत्र प्रमाणमभिधानीयमित्यलमतिविस्तरेण। तथापि चेतन एवायं संस्क्रियते, न भूतानीति कुतोनिर्णय इति चेत्? उच्यते। भोक्तॄणां नित्यविभूनां सर्वदेहप्राप्तावविशिष्टायां विशिष्टैरपि भूतैर्नियामकाभावात् प्रतिनियतभोगासिद्धेः। न हि तच्छरीरं तन्मनस्तानीन्द्रियाणि विशिष्टान्यपि तस्यैवेति नियमः, नियामकाभावात्। तथा च साधारणविग्रहवत्त्वप्रसङ्गः। न च भूतधर्म एव कश्चिच्चेतनं प्रत्यसाधारणः, विपर्यय-　25 30

दर्शनात्। द्वित्वादिवदिति चेन्न। तस्यापि शरीरादितुल्यतया पक्षत्वात्। नियत-चेतनगुणोपग्रहेणैव तस्यापि नियमो, न तु तज्जन्यतामात्रेण। स्वयमविशेषात्। तथापि तज्जन्यतयैव नियमोपपत्तौ विपक्षे बाधकं किमिति चेत्, कार्यकारणभावभङ्ग-प्रसङ्गः। शरीरादीनां चेतनधर्मोपग्रहेणैव तद्धर्मजननोपलब्धेः। तद् यथा—इच्छोप-5 ग्रहेण प्रयत्नो, ज्ञानोपग्रहेणेच्छादयः, तदुपग्रहेण सुखादय इत्यादि। प्रकृतेऽपि चेतनगता एव बुद्ध्यादयो नियामकाः स्युरिति चेन्न। शरीरादेः प्राक् तेषामसत्त्वात्। तथा च निरतिशयाश्चेतनाः, साधारणानि भूतानीति न भुक्तिनियम उपपद्यते ॥१३॥

आमोदः

**घटादिष्विति**। **घट**स्तुला, आदिपदात्तप्तमाषकादिसंग्रहः। तत्राधिवासन-विधिना हवनमलक वद्दाहादिप्रयोजिका शक्तिरवश्यमङ्गीकर्तव्येति संक्षेप-10 प्रश्नभावः। **सामग्री** परीक्षासामग्री, दृष्टस्य प्रतिमानप्रस्तरादेर्विद्यमानत्वात्। अदृष्टविघटने सर्वदैव हवनमलकवद्दाहादिप्रसङ्गात्, ज्ञापकत्वात्; न तु दृष्टा-दृष्टविघटकत्वमिति भावः। **विपर्यय** इति। अधर्मजनन इत्यर्थः।

**जयस्तदितरः** पराजयः, तन्निमित्तस्य सुकृतस्य दुष्कृतस्य वा वृत्ति-स्तत्कार्यजननं प्रति सहकारिलाभः। **परीक्ष्यः** परीक्षणीयः पुरुषः।

15 **धर्मादीति**। तुलायां धर्मस्तप्तमाषकादौ वह्निराहवनीया देवता। तद्व्यापारमाह—**ताश्चेति**। **कर्मविभावनानुरूपं** पापाचरणानाचरणोचितं, **लिङ्गमिति** अवनमनदाहादिस्वरूपमित्यर्थः। **परो** मीमांसकादिर्दैवताचैतन्ये विप्रतिपन्नः। निमित्तमदृष्टम् अभिव्यक्तं सहकारिसमवहितं कृतं कार्यं न-मनोन्नमनदाहादिरूपम् **उन्मीलयति** प्रकटयति। **कर्मणो**ऽदृष्टस्य। पापकारीति 20 यदि प्रत्यभिजनाति तदा पराजयम्, यदि निष्पाप इति तदा जयं लभते। प्रत्यभिज्ञा च प्रमारूपा विवक्षिता। तदेवाह—**तास्त्विति**। स्वयं जानात्येव यन्मया पापं कृतं न वेत्यर्थः। सभाक्षोभादिना तादृशज्ञानाभावे गत्यन्तर-माह—**मया नेदं पापंकृतमितिप्रतिज्ञा** यत् तुलादौ प्रवर्तते सेयं यदि शुद्धा भवति तदा जयी नो चेद् भङ्गी। आरोहणादेर्ध्वंस्ततया व्यापार आव-25 श्यकः। 'तदन्ते जयमादिशेदि'ति वचनाज्जयादेस्तदन्तनिर्देश्यत्वादित्याह—**धर्म** इति। ननु तुलारोहणाविधेर्धर्महेतुत्वम्, निषेधाश्रवणादधर्महेतुत्वं कथं स्यादित्यत आह—**निमित्तत** इति। अभिशापनिमित्ततताबलादर्थादायात एवायं विधिर्निषेधश्च यदभिशप्त सत्यप्रतिज्ञस्तुलामारोहेदसत्यप्रतिज्ञस्तुलां नारोहेदिति।

ननु शक्तौ साधकं मानं खण्डितं बाधकं च मानं नोपदर्शितमिति तत्र सन्देह एव; न तु तदभावसिद्धिरित्याशयेन पृच्छति--**अथेति**। उत्तरं **नेति**। शक्तिपदार्थो नास्माभिर्निषिध्यत इत्यर्थः। तर्हि सिद्धं न समीहितमित्याह–**तत्किमिति**। गूढाभिसन्धिराह--**बाढमिति**। एवमभ्युपगमे तवापसिद्धान्त इत्याह--**कोऽसाविति**। अभिसन्धिमुद्घाटयति--**कारणत्वमिति**। ननु 5 शक्तेः किमन्यत् कारणत्वमित्याह–**किं तदिति**। तदभिमतात् शक्तिपदार्था द्भिनत्ति–**पूर्वेति**। अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वमित्यर्थः। पूर्वत्वञ्च प्रागभावावच्छिन्नकालत्वं, प्रागभावत्वं प्रतियोगिध्वंससमानकालीनाभावत्वं गन्धानाधारकालानाधारभावत्वम्। एवं दुःखद्वेषादिकमपि प्रक्षिप्य निर्वा-च्यम्। गन्धानाधारकाल एव सर्वमुक्तिकालः। तत्र च गन्धत्वं स्वाधिकरणा 10 नधिकरणवृत्ति, कार्यमात्रवृत्तिजातित्वात्, घटवदित्यनुमानस्य सत्वात्। यद्वा प्रतियोग्यवधिकपरत्वयावदाश्रयसमानकालीनकादाचित्काभावत्वम्। तेन गुणकर्मप्रागभावादिसंग्रहः। तत्रापि परत्वोत्पत्तौ तयोरवधित्वात्। न च परत्वावधेरप्यव[पर?]त्वाश्रयत्वनियमः, प्रमाणाभावात्। बहुतरतपनपरिस्प-न्दान्तरितबुद्धेः परत्वाश्रये तत्रापि भावात्, परत्वावधेरपर[त्वा] श्रयत्व- 15 नियमाभिधानस्य उत्सर्गत्वात्। तथा च प्रलयकालीनकर्मप्रागभावस्यापि संग्रहः। यदि च प्रतियोग्यन्यूनावधिककालीनावाधिकत्वं परत्वे विवक्ष्येत तदा अन्त्यशब्दप्रागभावे अन्ततः शब्दबुद्ध्यादिप्रागभावासंग्रह एव। न हि तदन्यूनानतिरिक्तकालीनं मूर्तं भवति। यदि च परत्वावधेरपरत्वाश्रयत्व-नियमस्तदा प्रतियोग्युत्पत्तिसमकालोत्पत्तिकाबाधकपरत्वाश्रयसमानकाली- 20 नत्वं वक्तव्यम्। उत्पत्तिश्चाध्यस्तक्षणस्य क्षणसम्बन्धा इति न्यायोन्याश्रयः। प्रलयकर्मप्रागभावश्च ब्रह्माण्डान्तरमूर्तापक्षनिरूपण एवेति नाव्याप्ति[ः]। अवर्जनीयसिद्धत्वं चान्यथासिद्धत्वम्। नतु कारणेतरत्वेन सिद्धत्वं येनात्मा-श्रयादिः स्यात्। तच्च दण्डरूपादेर्दण्डत्वाकाशादे रूपप्रागभावस्य प्रागभाव-स्थलेन साधकं प्रति व्यापारभिन्नं जनयतश्च कुम्भकारपित्रादेः सिद्धमेव। 25 प्रागभावादिनिर्वचनापेक्षलक्षणमिदं दुर्ग्रहमित्यनुशयेनाह--**सहकारीति**। सह कारित्वं कारणगर्भमित्यन्योन्याश्रय इति नाशङ्कनीयम्। सर्वदाऽव्युत्पन्नं प्रति लक्षणप्रणयनात्। लक्ष्यं लक्षणत्वं च जानानं प्रत्येतस्यैतल्लक्षणमिति पक्षनिष्ठताज्ञापकस्यैव लक्षणप्रणयनफलत्वात्। अन्यथा लक्षणपदानां तत्-

पदार्थानां च तदानीमेव लक्षणाप्रणयनप्रसङ्गेनाव्यवस्थापत्तेः। वीजे अङ्कुराभावः सहकारिप्रत्युक्तः। शिलायाश्च शिलात्वप्रयुक्त एवेति विशेषः। कार्यत्वनिरूपितत्वं वा कारणत्वम्। कार्यनियतदेशकालनियतत्वं वेति दिक्। ननु भवतु कारणत्वमपि शक्तिपदार्थः। अस्मदभिमता शक्तिस्तथापि न निषिद्धेत्याह—

**तत** इति। गूढाभिसन्धि राह—**न काचिदिति**। तर्हि साऽपि स्यादित्याह—**तत् किमिति**। आशयमुद्घाटयति—**एतदपीति**। प्रमाणाभावस्य चोक्तत्वादिति भावः। **सन्देह** इति। साधकबाधकमानाभावादिति भावः। उत्तरम्—**कथमिति**। कोटिप्रसिद्धेरभावान्न सन्देह इति भावः। तर्हि संशयाभावे विवादानुपपत्तिरित्याह—**विवाद** इति। कारणत्वमेव शक्तिपदवाच्यं, तच्चानुग्राहकं सहकार्यनुग्राहकम्, अतः सहकारिण्यपि शक्तिपदप्रयोगात् किं सहकारि वह्नौ यतो दाह इति धार्यते इत्याह—**अनुग्राहकत्वेति**। यत् सा हि स एव, कार्यं तदनुग्राहकं, तच्च कारणत्वं सहकारि च, तथा च सहकारिभेदे विवाद इत्यर्थः। ननु प्रतिबन्धकापनेयमनुग्राहकं मयाप्यङ्गीक्रियत एव, तत्र कथं विवाद इत्यत आह—**तत्रेति**। **निःसाधना** इति। अर्थापत्तेरन्यथोपपत्तेरनुमानस्य चान्यथासिद्धत्वात् मीमांसकानां निःसाधनत्वं विवादारम्भिकां विप्रतिपत्तिमाह—**तत** इति। एके नैयायिकादयः, अपरे मीमांसकाः।

**भूतानीति**। शरीरादीनीत्यर्थः। व्रीहिषु काण्डस्यापास्तत्वात्। भोक्तृप्रत्यासक्त्यविशेषे किञ्चिदेव शरीरादि कस्यचिदेव भोगसाधनमिति नियामकाभावो भोक्तृसंस्कारे मानमित्यर्थः। **विशिष्टान्यपीति**। संस्कृतान्यपीत्यर्थः। **विपर्ययेति**। भूतधर्मादीनां साधारण्यदर्शनादित्यर्थः। व्यभिचारमत्र शङ्कते—**द्वित्वादिवदिति**। भूतधर्मो द्वित्वादिर्यथा प्रतिनियतभोगजनकस्तथाऽपूर्वमपि स्यादित्यर्थः। तत्राप्यपेक्षाबुद्धिरेव नियतचेतनगुणो निमित्तं येन नियतभोगसाधनत्वमिति कुतो व्यभिचार इत्याह—**तस्यापीत्यादि**।

**तज्जन्यत्वमात्रेण** भूतजन्यत्वमात्रेण। अत्र नियामकाभावं शङ्कते—**तथापीति**। कार्यकारणभावमेवाह—**शरीरादीनामिति**। **तद्धर्मजननोपलब्धेश्चेतनधर्मजननोपलब्धेः**। चेतनधर्मोपग्रहेणैव चेतनधर्मोत्पत्तिरिति कार्य-

कारणभाव इत्यर्थः। तदेव दर्शयति—**तद् यथे**ति। **प्रकृतेऽपी**ति शरीरादीनां नियतभोगसाधनत्वेऽपीत्यर्थः। **तेषामि**ति। बुद्ध्यादीनामित्यर्थः। **निरतिशया** इति। अदृष्टरहिता इत्यर्थः। एतावता 'प्रत्यात्मनियमाद् भुक्ते'-त्यादिकारिकाप्रतीकार्थो व्याख्यातः॥१३॥

बोधनी

तत्रापि हि तत्तन्मन्त्रप्रतिपाद्यगरुडादिदेवतापरिग्रहादभिमन्त्रितत्वप्रत्यभिज्ञानाद्वा प्रोक्षणादिवदभिमन्त्रणासहकाराद्वोपपत्तिरिति गूढाभिसन्धिः पृच्छति—**घटादिष्वि**ति। तुलातसमाषादिष्वित्यर्थः। गूढाभिसन्धिरेवोत्तरमाह—**कुशला**—इति। इतरः स्वाभिप्रायमुद्घाटयति—**न हि सामग्री**ति। तुलारोहणाङ्गत्वेन विहिताभिमन्त्रणादिसामग्री न तावदभिशस्तसमवेतं जयस्य पराजयस्य वा निमित्तं किञ्चिद् दृष्टं लघुत्वं गुरुत्वं वा विघटयति ज्ञापकत्वेनाकारकत्वात् तस्यादर्शनाच्चेति भावः। **नाप्यदृष्टमि**ति। विघटयतीत्यनुषङ्गो ज्ञापकत्वादेव। किञ्च, धर्मविघटने सदा भङ्गप्रसङ्गः, अधर्मविघटने सदा विजयप्रसङ्गः, उभयविघटनं त्वेकस्याः सामग्र्या न सम्भवतीति वक्ष्यमाणन्यायोऽत्राप्यनुसन्धेय इति। नन्वभिशस्तसमवेतमर्थतथात्वज्ञापकं किञ्चिददृष्टमुत्पादयति, तेन तद्द्वारा ज्ञापकोऽयं विधिर्भविष्यतीत्याशङ्क्याह—**नाप्यदृष्टमुत्पादयती**ति। न चैकस्मिन् धर्ममितरस्मिन्नधर्ममिति सम्भवति, सामग्र्यभेदे कार्यभेदानुपपत्तेरिति भावः। प्रतिमादौ तत्तद्देवतासन्निधानादिसम्भवात् पूजातिक्रमलक्षणसामग्रीभेदेन धर्माधर्मजननसम्भवाच्च सम्भवेदपि परिहारस्तुलाद्यभिमानिकदेवताभावात् सामग्र्याश्चैकरूपत्वेन धर्माधर्महेतुत्वायोगात् संस्काराधानमेवाङ्गीकार्यमिति पुनः प्रत्यवस्थानमिति।

सिद्धान्ती स्वाभिप्रायमुद्घाटयति—**जयेत**रेति। **वृत्तिः** अभिव्यक्तिः, सा च सहकारिलाभ इति स्वयमेव व्याख्यास्यति। अभिशस्तसमवेतयोर्जयेतरनिमित्तधर्माधर्मयोरभिव्यक्तिद्वारेणार्थतथात्वं ज्ञापयति परीक्षाविधिः, अतोऽत्रापि न संस्कारकल्पनेत्यत्रापि पूर्वोक्तमेव परिहारं स्मारयति—**यद्यपी**ति। परिक्षाविधिनापि धर्मसत्यादिषु शरीरवदभिमानिनीनां सन्निधिः क्रियते। सन्निहिताश्चाभिशस्तस्तेयादिकर्मविभवानुरूपं तुलानमनोन्नमनादिकं लिङ्गमभिव्यञ्जन्ति। ततो जयः पराजयो वेति। यद्यप्यभ्युपगमः सिद्धस्तथाप्यत्र मीमांसकस्यासम्प्रतिपत्तेरभ्युपगम्यैवान्यथा परिहार उच्यत इति श्लोकं व्याचक्षाणस्तमेव परिहारमाह—**तेनापी**ति। तद्विधानाभिव्यक्तमभिशस्तकृतस्तेयाद्यनुमापकं कार्यं नमनोन्नमनादि जनयति। कथमनेन धर्माधर्माभिव्यक्तिरित्यत्राह—**कर्मणश्चे**ति। सहकारिलाभे फलोत्पत्त्या कर्माभिव्यज्यते, तेनाभिव्यक्तिहेतुत्वात्

सहकारिलाभोऽभिव्यक्तिरुपचर्यत इति। कथं लोकपालार्चनादिकर्मणां क्षणिकत्वेन साहित्यानुपपत्तेः सहकारितेत्यत्राह—**तच्चे**ति। कर्मक्षणानां स्वरूपतः साहित्याभावेऽपि तद्विषयज्ञानद्वारा तत्साहित्यात् सहकारित्वोपपत्तिः तत्र निष्पापत्वेन प्रत्यभिज्ञानं जयनिमित्तं कर्माभिव्यनक्तीतरदितरदिति विवेकः। सुगूढमपि पापं चरद्भिरात्मनः पापकारित्वं

5 ज्ञायत एवेत्यत्र स्मार्त्तवचनमुदाहरति—**यदाहुः**—इति। एवं तावत् संग्रहो व्याख्यातः। इदानीं तु न तावज्जयपराजयमात्रफलमनेनानुष्ठितं कर्मास्ति यदनेनाभिव्यज्येत, तादृशकर्मणामश्रुतत्वात्। न चानुष्ठितं स्तेयादि पराजयहेतुस्तस्य नरकादिफलत्वात्, न च विजयमानेन विजयहेतुः कश्चित् धर्मोऽनुष्ठितः किन्तु स्तेयादिरनुष्ठितः, न चाननुष्ठानस्य किञ्चित्फलमस्तीति तत्रापरितुष्यन् परिहारान्तरमाह। **अथवे**ति। प्रतिज्ञानु-

10 रूपशुद्धिसहकृतेन परीक्षाविधिना धर्मो जन्यत इति। ननु किञ्चिदुद्दिश्य विहितात् कर्मणो धर्मो जन्यते न त्विह किञ्चिदुद्दिश्यारोहणविधिरस्तीत्यत्राह—**निमित्ततः**—इति। मिथ्याभिशस्ततां निमित्तीकृत्य विधिरस्ति। न चाविहितस्य फलश्रुतिः सम्भवतीति निषेधलक्षणमधर्महेतुत्वं, न चात्राविशुद्धौ नारोहेदिति निषेधः श्रूयते इत्यत्राह—**पराजयेति**। अप्रस्तुतोऽपि निषेधः कल्प्यते, अविशुद्धं प्रत्यारोहणस्यानिष्टहेतुत्वा-

15 न्निषिद्धस्यैव च तथात्वादिति।

तदेवम्भूतसमवायिनी शक्तिः सहजा आधेया वास्तीति न किञ्चित्प्रमाणमस्तीत्युक्तम्। इतरस्तु वादजल्पयोरन्यतरेण कथाप्रवृत्तिं कृत्वा तयोर्न स्वपक्षसाधनमन्तरेण परसाधनस्य दूषणमात्रेण पर्यवसानमिति मन्वानः पृच्छति—**अथेति**। गूढाभिसन्धिः प्रतिब्रूते—**न किञ्चिदिति**। अज्ञातपराभिसन्धिः पुनः पृच्छति—**तत् किमस्त्येवे**-

20 ति। निषेधकाभावे त्वस्तित्वमेवावशिष्यत इति। गूढाभिसन्धिरेव सम्प्रतिपत्तिमुत्तरमाह—**बाढम्**—इति। यद्येवमपसिद्धान्तप्रसङ्ग इत्यत्र स्वाभिसन्धिमुद्घाटयितुमाह—**न ही**-ति। अस्मत्सिद्धान्तानभिज्ञो भवानिति भावः। पुनरप्यनभिज्ञः पृच्छति—**कोऽसौ**—इति। आशयमाविष्करोति—**कारणत्वम्**—इति। शक्तिमत्त्वैव कारणत्वमिति मन्वानः पृच्छिति—**किं तदि**ति। ज्ञातपराभिसन्धिराह—**पूर्वकाले**ति। पूर्वकालनियतत्वमित्येव वक्तव्ये

25 नियतजातीयत्वाभिधानं जात्यपेक्षयैव नियम इति स्मारयितुम्। अन्यथा कारणत्वं निरूपयति—**सहकारी**ति। यस्य सहकारिवैकल्यप्रयुक्तः कार्यप्रागभावो न तु स्वरूपप्रयुक्तः, यः सहकारिषु सत्सु करोत्येवेत्यर्थः। न त्वभावादकारणत्वमिति। तर्हि कारणत्वातिरिक्तमदभिमतातीन्द्रियशक्तिनिषेधः किंप्रमाण इत्याह—**तत इति**। एकत्र हि सिद्धस्यान्यत्र निषेधः न त्वत्यन्तानुपलब्धस्येत्याशयवानाह—**न काचिदिति**।

अविदितपराशयः पृच्छति—**तत् किमिति**। विधिः अस्तित्वम्। यदि निषेधो नास्ति तर्हि विधिरेव स्यात् भावाभावयोरितरेतराभावात्मकत्वादिति। न हि निषेधवद् विधिरपि निष्प्रमाणः सिध्यतीत्युत्तरमाह—**सोऽपीति**। निषेधे प्रमाणं नास्तीत्युक्तं न तु निषेधोनास्तीति भावः। तर्हि साधकबाधकयोरभावाच्छक्तेरस्तित्वनास्तित्वयोः सन्देह एव स्यात्, एवमपि भवदभिमतं न सिध्येदित्यभिप्रायवानाह—**तर्हीति**। उत्तरं 5 **कथमेवमिति**। न तावानेव सन्देहहेतुरपि तर्हि धर्म्युपलब्धिरपि, ततश्चानुपलब्धे शक्तिरूपे धर्मिणि कथं सन्देह इति। यदि शक्तेर्बुद्धावनारोह एव तर्हि तत्सत्त्वासत्त्व-विषयो विवादः कथमावयोर्भवेत् तस्यापि सामान्यतो ज्ञाते धर्मिणि विशेषविषयत्वादि-त्याह—**विवादः—इति**। सुहृद्भावेनोत्तरमाह—**अनुग्राहकत्वेति**। अत्रोभयसि-द्धसहकारिपदार्थमधिकृत्य तद्विशेषविषयो विवादः कथं तर्हि शक्तिविषय इत्यत्रोक्तं— 10 **अनुग्राहकत्वेनेति**। सहकारिविशेषो भवदभिमतया शक्त्या सहानुग्राहकत्वेन साम्यात् शक्तिपदास्पदं भवति। ततश्च सहकारिविशेषविषय एव विवादः शक्तिविषय इत्युच्यते। नन्वसावपि सहकारिभेदः सम्प्रतिपन्नश्चेत् न विवादगोचरः, असम्प्रतिपत्तौ सुतरां शक्तिवद् बुद्धावनारोहादतः पुनरपि विवादविषयाभाव इत्यत्राह—**तत्रापीति**। दहनादेरधिकः प्रतिबन्धकापाकरणीयः कश्चिदनुग्राहकः सम्प्रतिपन्न इति न तस्य 15 बुद्धावनारोहदोष इति। तर्हि सम्प्रतिपत्तौ न विवाद इत्येतत् तदवस्थमित्यतआह— **यदीति**। प्रतिबन्धकापाकरणीयः कश्चिदधिको मीमांसकस्यापि सम्प्रतिपन्न इति कृत्वा यदि वयं न विवदामहे ततः सोऽधिकः प्रमाणसिद्धः प्रतिबन्धकाभाव एव भविष्यतीति। अस्मदभिप्रेतस्यैवानुग्राहकत्वमङ्गीकृत्य ततोऽधिकभावे निःसाधनको मीमांसकोऽपि न विप्रतिपत्तुमर्हतीति। एके व्याचक्षते सम्प्रतिपन्नाग्न्याद्यतिरिक्तसहकार्य- 20 पेक्षं कार्यमिति मीमांसको यदि ब्रूयात् नास्माकमत्र विवाद इत्याह—**तत्रापीति**। यदि च नैयायिकोक्तं प्रतिबन्धकाभावादेः सहकारित्वं मीमांसकोऽङ्गीकुर्यात् तदा प्रतिबन्धकाभावसहितायाः सामग्र्याः कार्यव्यभिचाराभावात् तदतिरिक्तकल्पनं निष्प्रमाणक-मिति निःसाधनो मीमांसको न विप्रतिपत्तुमर्हतीत्याह—**अस्मदभिप्रेतस्य चेति**। ततश्चायं विवादविषयोऽवशिष्यत इत्याह —**तत**इति। तस्याभावादेरनुग्राहकत्व- 25 मनन्यथासिद्धान्वयव्यतिरेकित्वे व्युत्पादितम्, अतः शक्तिनिषेधो नाम न कश्चिदन्योऽर्थः प्रमाणसाध्योऽस्तीतिशक्तिविषयेयं कथोपरम्यत इति।

नन्वेवमपि भूतधर्मत्वमपूर्वस्य न सिध्यतु, चेतनधर्मत्वेऽपि विनिगमना कुतस्त्येत्याह— **तथापि** इति। अत्र संभोगो निर्विशेषाणामित्येतदुत्तरयति—**उच्यत**—इति। अदृष्ट-

विशेषविशिष्टेष्वपि शरीरादिभूतेषु सर्वात्मनां सर्वत्र सर्वदा सन्निधानाविशेषादिदमस्यैव शरीरं नान्यस्येति नियामकाभावेन प्रतिनियतभोगासिद्धेः चेतन एव संस्क्रियत इति निर्णेष्यत इति। तदेवोपपादयति—**न हीति**। तच्छरीरं यस्यैवेति दृश्यते तदपूर्वविशिष्टमपि तस्यैवेति नियमो न स्यादिति। तदनियमे दोषमाह—**तथा चेति**।
5 ननु भूतधर्मत्वेऽप्यपूर्वस्य कश्चिच्चेतनं प्रत्यसाधारण्यं भविष्यति। ततस्तद्विशिष्टं शरीरादि तस्यैवेति नियमः स्यादित्यत्राह **न—चेति**। भूतधर्मा हि रूपादयः सर्वान् प्रति ज्ञानजनकत्वेन साधारणा दृश्यन्त इति। शङ्कते—**द्वित्वादिवदिति**। द्वित्वादयो हि भूतधर्माः केनचिदेव ज्ञायन्ते नान्येनेत्यसाधारण्येन दृष्टान्ता इति। **नेति**। द्वित्वादेरपि शरीरादिना तुल्ययोगक्षेमत्वात् भूतधर्मत्वेनासाधारणत्वस्यासिद्धत्वा-
10 दिति। तुल्यतामेवाह—**नियत—इति**। यस्यापेक्षाबुद्धिजन्या द्वित्वादयस्तस्यैव ते स्वविषयां बुद्धिं जनयन्ति नान्यस्येति नियतचेतनगुणोपगृहीतत्वेनैव तेषामसाधारण्यं, न तु भूतधर्मत्वमात्रेण, स्वयमविशेषादिति। रूपादिभ्यो द्वित्वादिनां स्वगतविशेषाभावादिति। यद्वा, स्वरूपेणासाधारण्यादित्यर्थः।

यद्यपि द्वित्वादीनां स्वयमविशेषः, तथापि नियतचेतनगुणोपग्रहाभावे किं बाधकं
15 येन नियमस्य नियतगुणोपगृहीतत्वेन व्याप्तिः सिध्येदित्याशयेन पृच्छति—**तथापीति**। यदि द्वित्वादयो नियतचेतनगुणानुगृहीता भवेयुस्तर्हि तेषां चेतनधर्मेण स्वविषयज्ञानेन सह यः कार्यकारणभावः स भज्येतेत्याह—**कार्यकारणेति**। स्वविषयज्ञानजनकत्वानुपपत्तिर्बाधकमित्यर्थः। कुत इत्यत आह—**शरीरदीनामिति**। चेतनधर्मजनकत्वस्य तद्धर्मोपगृहीतत्वेन व्याप्तिप्रदर्शनादित्यर्थः। व्याप्तिमेवोदाहरणे दर्शयति—
20 **तद् यथेति**। न ह्यनिष्टे प्रवृत्तिप्रयत्नः, न चाज्ञातविषयेच्छा, नापि तदविषयस्य सुखहेतुत्वमित्यादि। ततश्च द्वित्वशरीरादीनां नियतत्वं चेतनगुणोपग्रहणेन व्याप्यत इति ततस्तत्सिद्धिरिति। सन्तु तर्हि प्रकृते शरीरेन्द्रियाणां प्रतिनियतभोगसाधनत्वेऽपि नियतचेतनगताः सम्प्रतिपन्ना एव नियामका इत्याह—**प्रकृत—इति**। शरीरादेः पूर्वं बुद्ध्याद्यभावेन बुद्ध्यादिभिः शरीरनियमः, तेन नियतेषु शरीरादिषु बुद्ध्यादयोऽस्य
25 भवन्ति, तैश्च तन्नियम इति इतरेतराश्रयप्रसङ्गादात्मसमवेतमपूर्वमेव नियामकमङ्गीकर्त्तव्यं, तदनङ्गीकारे नियमानुपपत्तिमुपसंहरति—**तथा चेति**। चेतनानामतिशयो नाङ्गीकृतः सातिशयान्यपि भूतानि साधारणानि न शरीरादेः पूर्वं बुद्ध्यादयः सन्ति। तस्मान्न शक्तिनियम उपपद्यते। अत्र प्रयोगः—भोक्तुः स्वगुणोत्पादिताः शरीरादयः, कार्यत्वे सति

तद्भोगसाधनत्वात्, स्रगादिवत्। न च बुद्ध्यादिभिः सिद्धसाध्यता शरीराद्युत्पत्तेः प्राक् तदभावादिति ॥ १२ ॥

विवेकः

घटादिषु तुलादिपरीक्षासु का वार्त्ता? तत्र जयभङ्गादिव्यवस्थापकत्वेन शक्तिसिद्धेः को निराकरणप्रकारः? उत्तरं—कुशलेति। परपक्षनिराकरणे दक्षेत्यर्थः। अथवा कुशला क्षेमकारिका। परपक्षनिराकरणमेव क्षेमम्। प्रकारमविद्वान् शङ्कते—नेति। सामग्री 5 परीक्षासामग्री दृष्टं सामान्यहेतुं तदनुपलब्धेरिति हेतुरवसेयः, नाप्यदृष्टं साम्यहेतुमदृष्टं विघटयति। ज्ञापकत्वादिति। तुलासामग्र्या नमनोन्नमनद्वारा परीक्ष्यनिष्ठपापतद-भावज्ञापकत्वात् साम्यहेत्वदृष्टनाशे च निष्पापमपि नमयेत् पापिनमप्युन्नमयेत्, तथा च तन्नियामकतया शक्तिरवश्यमुपेयेति भावः। अदृष्टं परीक्ष्यसमवेतं, विपर्यये ऽधर्मजनने।

जयेति। परीक्ष्यसमवेतस्यादृष्टस्य वृत्तिलाभो वक्ष्यमाणसहकारिसमवधानम्, 10 इतरो भङ्गः।

धर्म्मादीत्यादिपदात् तत्र तत्र विहितावाहनपूजादीनां परिग्रहः। अभिशापविषय-कर्मवानयं तच्छून्यो वेति ज्ञानं क्रियते। तेनापि हि विधिना परीक्षाविधिना ताः देवता कर्मभावानुरूपमभिशापविषयीभूतकर्मसत्तासत्तानुरूपं लिङ्गं नमनोन्नमनादि अभिव्यञ्जयन्ति जनयन्ति। परिविप्रतिपत्तेः परेषां देवताचैतन्ये विप्रतिपत्तेः 15 अन्यथोच्यते प्रकारान्तरेण समाधीयते। तद्विभावकं जयपराजयव्यञ्जकं कार्यमुन्नमना-वनमनादि उन्मीलयति। कर्मणोऽभिव्यक्तिः नमनाद्युत्पत्तिः सहकारिलाभ एव, तल्लाभे सत्येव प्रत्यभिज्ञानं यथार्थं तेन पापविस्मरणादिना निष्पापप्रत्यभिज्ञाने न जयः, न वा पापकारित्वभ्रमे भङ्ग इति। अतएव प्रपश्यन्तीत्यत्र प्रशब्देन प्रामाण्यात्मकः प्रकर्ष उक्तः। तादृशञ्च ज्ञानं न परीक्षाविधिं विनेति तत्सार्थक्यमपि। यत्र क्षोभादिना न 20 तादृशं ज्ञानं तत्र का गतिरित्याह— अथवेति। प्रतिज्ञानुरूपां प्रतिज्ञानिष्ठां विशुद्धि-प्रामाण्यं तेन परीक्षाविधिना। परीक्षाविधेर्धर्मजनकत्वे मानमाह—निमित्तत इति। अभिशापरूपनिमित्तवत्कर्तृकत्वेन विहितत्वादित्यर्थः। प्रायश्चित्तादिवत् साक्षात्फलजनकत्वेन विहितस्य धर्मजनकत्वे मानाभावमाशङ्क्याह—विजयफलेति। तथा च फलस्य कालान्तर-भावितया न द्वारं विना तत्सम्भव इति भावः। अनपेक्षितं द्विष्टं यत् स्तूयते तद्विधीयते 25 यन्निन्द्यते तन्निषिध्यते इति व्याप्तेरश्रूयमाणविधिनिषेधस्थलेऽपि तत् कल्प्यत इति आखण्डलार्थः।

ननु शक्तिनिषेधः प्रमाणिको न वा ? आद्ये, विधौ पर्यवसानं केवलान्वय्यन्तरवत् ; द्वितीयेऽपि सद्भ्यामभावो निरूप्यत इति न्यायेन तत्सिद्धिप्रसङ्ग इत्यभिप्रायेण पृच्छति— **अथेति**। यदि दाहानुकूलातीन्द्रियवह्निसमवेतधर्मस्य प्रोक्षणजन्यावघातानुकूलव्रीहिसमवेतातीन्द्रियधर्मस्य वा निषेधे किम् मानमिति प्रश्नः, तदानुत्तरमेव ज्यायः। अतएवोक्तं स्वयमेव परिभावयतु अप्रामाणिकेऽर्थे मूकवावदूकयोः कतरः श्रेयानिति। यदि च शक्तिपदस्य वाचकतासम्बन्धेन शक्तिमत्पदपरत्वे वह्नौ वा शक्तिपदार्थस्य निषेधे किम्मानमिति प्रश्नः, तत्रोत्तरं **न किञ्चिदिति**। तत्र तत्प्रतियोगिन एव प्रामाणिकत्वादिति भावः। तत्पदस्य यदर्थवत्त्वं यदर्थस्य वा तत्पदवत्त्वं तत्पदार्थे यद्वत्त्वं वा वह्नौ सैवास्मदभिमता शक्तिरित्यभिप्रायेणाह—**तत् किमिति**। गूढाभिसन्धिराह—**बाढमिति**। आशयमुद्घाटयितुं शङ्कते—**कोऽसाविति**। उत्तरं—**कारणत्वमिति**। शक्तित्वेनास्मदभिमतातिरिक्तकारणत्वमेव दुर्वचमित्यभिप्रेत्य पृच्छति—**किन्तदिति**। **पूर्वकालेति**। कार्यतावच्छेदकत्वेनाभिमतवदव्यवहितप्राक्कालनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकवत्त्वमित्यर्थः। तत्तद्व्यक्तिनिरूपिताव्यवधानाञ्च संसर्गतया प्रवेशात् सामान्यतस्तदप्रसिद्ध्यापि न क्षतिः। यत्र यत्कारणस्य नियतदैशिकसम्बन्धेन प्रत्यासन्नस्यैव हेतुता तत्र तेन सम्बन्धेनाप्रत्यासन्नादपि कार्यवारणाय कालिकव्याप्तौ तेन सम्बन्धेन देशभेदोऽप्यवच्छेदकतया निवेशनीयः। अतएव रासभजातीयस्य देशान्तरे वह्निजातीयाव्यवहितप्राक्कालवृत्तित्वनियमेऽपि नातिप्रसङ्गः। **परे** तु कारणताशरीरे तेन तेन सम्बन्धेन दैशिकव्याप्तिमपि स्वातन्त्र्येण निवेशयन्ति। तन्नये एकस्य दण्डव्यक्तेर्देशान्तरेऽव्यवहितप्राक्कालवृत्तित्वमन्यस्याश्च तत्काले यत्रातद्देशवृत्तिता तत्र कार्योत्पाद एकव्यक्तेः कारणताघटकप्रत्यासत्तिद्वयेन सत्त्व एव स्वभावात् कार्योत्पाद इति कल्पनयैव निवारणीयः। अत्र घटाव्यवहितप्राक्कालवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकदण्डत्वादिकमेव विशिष्य कारणत्वं, न च दण्डत्वस्य तथात्वनियमेऽव्यावर्तकतया विशेषणवैयर्थ्यमिति वाच्यं ; कारणताव्यवहारप्रयोजकीभूतज्ञाने विषयतया तस्य व्यावर्तकत्वात् शुद्धज्ञानात्तदव्यवहारात्। इत्थञ्च तेन तेन रूपेणान्यथासिद्धत्वनिर्वचनमपि तद्रूपस्य कारणतानात्मकत्वबोधनायैवेति। यत्तु यथा सति घटाव्यवहितप्राक्कालवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकवत् वेमेति ज्ञाने प्रवृत्तिः स्यात् तस्य कारणतानात्मकत्वात् इष्टसाधनताधियश्च प्रवर्त्तकत्वात्। न च तत्र तादृशदण्डत्वस्यैव तत्रारोप इति वाच्यं, तदनवच्छेदकत्वस्य वेमत्व एव ग्रहात् दण्डत्वादेः प्रागग्रहाच्च। न च तादृशप्रतियोगितानवच्छेदकत्वेनैव तदपि गृहीतमिति वाच्यं, तादृशप्रतियोगितानवच्छेदकवेमत्वादिवदिति ज्ञानादप्रवृत्त्यापत्तेरिति तन्न, यद्धर्मावच्छेदेन कारणताघटकतावत्पदार्थानां विलक्षणविषयताशालिज्ञानं तेन रूपेणैव तत्र तत्र

प्रवृत्तिः, यथा तथाविधज्ञानविशेषादनुमितिः। अतएव वस्तुतो यन्नित्यं तदर्थितयापि भ्रमात् प्रवृत्तिरानुभविकी। न च तत्र तथाविधविशिष्टं प्रसिद्धमिति प्रागभावत्वञ्चानुयोगिताविशेषो भावाभावसाधारणमत्र निवेशनीयं गन्धानाधारसमयावृत्तित्वं वा तेन ध्वंसनिरूपितकारणता-निरुक्तौ तदव्यवहितप्राक्कालत्वस्याव्यवधानविशिष्टतत्प्रागभावरूपविशिष्टत्वस्य जनकत्वादि-गर्भतया आत्माश्रयादिति निरस्तम्। न च यागादेः स्वर्गाव्यवहितप्राक्कालासत्त्वादव्याप्ति-रव्यवधानाप्रवेशे च प्रकृते दुर्वचं व्यापकत्वमिति वाच्यं, स्वस्वजन्यान्यतरस्य तदव्यवहित-प्राक्कालनियमस्यैव तत्कारणतात्वात् कालिकत्वव्यापारान्यतरसम्बन्धेन वा नियमस्य वाच्यत्वात्। अत्र प्राञ्चोऽन्यथासिद्धिपञ्चकं परिभावयन्ति। तथाहि—येन सहैव यस्य यं प्रति पूर्ववर्तित्वज्ञानं तेन कार्यसंभवे तेन रूपेण तत् तथा, यथा घटं प्रति दण्डरूपत्वेन तद्रूपं दण्डेन कारणतावच्छेदकतयाऽनुप्रवेशनीयेन कार्यस्य घटस्य सम्भवे तेन दण्डेन तद्रूपं तथा। एवं प्रत्यासत्तिघटकतया यदनुप्रवेशनीयं तेन कार्यसम्भवे अन्यस्य तथात्वं यथा दण्डेन दण्डत्वं रूपत्वेन तद्रूपं वा। न च दण्डरूपत्वेन तथात्वेऽपि प्रत्यासत्ति-घटकीभूतदण्डेनैव तथेपि वाच्यं, तस्य प्रत्यासत्तित्वघटकत्वाज्ञानेऽपि उक्तरूपेण ज्ञातेऽपि तथाव्यवहारात, उपधेयसङ्करेऽपि उपाधेरसङ्करात्, एतामादायैव यस्यान्वयव्यतिरेकज्ञानं तेन तत्तथेत्यवसीयते। यद्यपि लघुना गुरोरन्यथासिद्धेर्निर्वक्तव्याया आवश्यकत्वेन दण्डरूपत्वेनापि तस्य तत्रैव प्रवेशस्तथापि कारणतावच्छेदकत्वेन यत्राप्रवेशस्तत्रैव तथात्वं वाच्यम्, परिभाषाकर्तुरिच्छाया एव विभागे नियामकत्वादिति। एवमन्यत्रक्लृप्तनियत-पूर्ववर्तिन एव कार्यसम्भवेऽन्यस्य सहभावमात्रम्, यथा गन्धं प्रति रूपादिप्रागभावा-देस्तद्रूपव्यक्तिं प्रति च तद्गन्धप्रागभावादेः। अत्र च लघुना गुरोः कारणतावच्छेदकव्यापक-रूपेण च तत्त्वस्य सम्पत्तये अन्यत्रेत्यस्यावश्यक्लृप्तेत्यर्थमाहुः। यथा जन्यमहत्त्वेनानेक-द्रव्यवत्त्वस्य महत्त्वत्वन्तु न कारणतावच्छेदकं यत्राकाशादिमहत्त्वस्य स्वरूपयोग्यत्वे कदाचित् फलोपधानापत्ते'र्नित्यस्ये'ति न्यायात् तदनुपगमे तु लाघवेन द्रव्यसाक्षात्कार-त्वस्यैव तज्जन्यतावच्छेदकत्वात्। जन्यसमवेतत्वरूपानेकद्रव्यवत्त्वस्य च बहिर्द्रव्यसाक्षात्कार एव कारणत्वस्य प्रसक्तत्वात्। इत्यथञ्चा'न्यत्रक्लृप्ते'ति यथाश्रुतार्थमादाय प्रकृते तन्निर्वचन-शक्यतायामपि लघुसमनियतगुर्वन्तरसंग्रहायैवावश्येति वाच्यम्। अवश्यकल्प्यपूर्ववर्तिना नावश्यकल्प्यपूर्ववर्त्येवान्यथासिद्धम्। अनवश्यकल्प्यञ्च गुरुसामान्यावच्छिन्नं प्रति व्यभिचारि च। व्यभिचारश्चान्वयतो व्यतिरेकतश्च, तेन कारणतावच्छेदकव्यापकेन तत्तद्व्यक्तिं प्रति सामान्यव्यभिचारिजातीयरासभत्वादिना च तत्त्वं, तेन नान्यथासिद्ध्यन्तर-वैयर्थ्यमिति वदन्ति। वस्तुतस्तु इच्छाया एव परिभाषायान्नियामकत्वाद् येन येन

रूपेणान्यथासिद्ध्यन्तरं तदन्यत्वमपि प्रवेशनीयमिति एतावन्मात्रं ज्यायः। एवं कुलालपितुः कुलालत्वेनान्यथासिद्धत्वेऽपि कुलालपितृत्वेनान्यथासिद्धये जन्यत्वाभिमतजनकं प्रति पूर्ववर्तित्वे गृहीत एव जनकत्वेनाभिमतस्य पूर्ववर्तित्वं गृह्यते इति तेन तं प्रति तत्तथा। जनकं व्यापारान्यत्वेन विशेष्यमिति **मिश्राः**। एवं शब्दाश्रयत्वेन घटं
5 प्रति तत्त्वाय जनकं प्रति पूर्ववर्तित्वे गृहीत एव यं प्रति यस्य तद्ग्रहणं तेन तत्तथेति वाच्यमिति सम्प्रदायः। वस्तुतस्तु यद्धर्मावच्छिन्नं प्रति येन रूपेण यस्यान्यथासिद्धत्वं तत्तदन्यत्वमेव तत्कारणत्वे निवेश्यम्, अनुगमस्य यावच्छक्यं करणीयत्वात् न तदर्थिन्यर्थता। अतएव ध्वंसेन प्रतियोगी, प्रतियोगिना च ध्वंसः। अतएव रासभो घटहेतुरित्यादिकभ्रमो नानुपपन्नः, अन्यथा रासभो रासभस्येति वत्तदनुपपत्तिरेव।
10 अतएवेष्टसाधनत्वादेरपि विध्यर्थस्य नानुपपत्तिगन्धोऽपि। अतएवान्वय-व्यतिरेकज्ञानसध्रीचीनेनाध्यक्षेणैव तद् गृह्यत इत्यपि सङ्गच्छते। निरुक्तानि च कारणत्वानि तद्व्यञ्जकानि तदननुगमश्च न दोषायेत्यन्यत्र विस्तरः। **सहकारीति**। यद्धर्मस्य कार्याभावव्याप्यत्वं सामानाधिकरण्येनेतराभावावच्छिन्नं तेन रूपेण तं प्रति तस्य हेतुत्वम्। कार्याभावश्च उत्पादकत्वसम्बन्धेन, तस्य च संसर्गतया प्रवेशात्।
15 तादृशसम्बन्धावच्छिन्नाया विलक्षणाया प्रतियोगितायास्तथात्वान्नात्माश्रयादि। बीजत्वस्य हि तादृशसम्बन्धेन यः कार्य्याभावः तद्व्याप्यत्वं, न केवलं बीजत्वत्वेन, किन्त्वितराभाव-विशिष्टबीजत्वभावेनैव[१] तद्व्याप्यत्वम्। उदासीनघटाभावत्वादेरपि तदभावव्याप्यत्वे अधि-करणीभूताभावस्यापि तदवच्छेदकत्वात्तद्वारणायाभावे इतरेति विशेषणं स्वाश्रयेतरपरम्। शिलात्वस्यापि तत्त्वे शिलात्वत्वमेव तथा। तच्च शिलेतरत्वादिघटितमिति तत्रापीतरा-
20 भावोऽवच्छेदक इति तादृशसम्बन्धेन कार्यवत्प्रतियोगिकत्वेनापि अभावो विशेषणीयः। न च शिलेतरावृत्तित्वं तथा, यदि च ज्ञानविशेषं प्रति शिलेतरावृत्तित्वमपि हेतुरहेतुश्च शिलेतरावृत्तित्वमिति तत्रातिव्याप्तिः सम्भाव्यते, तदा तदतिरिक्तत्वेनाप्यभावो विशेषणीयः। चरमकारणस्यापि स्वोत्पत्तिक्षणे कार्य्याभावोऽस्ति, इतराभावावच्छिन्नश्च तदानीं कार्य्या-व्यवहितप्राक्क्षणावच्छिन्नत्वमिति वदन्ति। तत्रापि प्रमेयत्वादीनां तत्त्वमन्यथासिद्धत्वेन
25 वारणीयमिति ध्येयम्।

**तत** इति। कारणत्वातिरिक्तशक्तिपदवाच्यनिषेध इत्यर्थः। उत्तरं—**न किञ्चिदिति**। अत्र मूकताया एव ज्यायस्त्वादिति भावः। आशयमविद्वान् पुनः पृच्छति—**तत्**

---

१. क-बीजत्वत्वेनैव। शिलाशकलस्य तु तत्त्वेनैव इत्यधिकः पाठश्च।

किमिति । निषेधाभावस्य तत्रैव विश्रामादिति आशयमुद्घाटयति—**प्रमाणाभावादिति** । 'सन्देह' इत्यस्य कारणत्वातिरिक्तशक्तिपदार्थस्येत्यादिः एवं सन्देहः । **अनुपलब्धेति** । असत्ख्यातिनिरासादिति भावः । तर्हि सन्देहानुपपत्तौ विवादो विचार एव कुतः, संशयस्य विचाराङ्गत्वादिति भावः । शक्तौ विवाद इति व्यवहारमुपपादयन्नाह—**अनुग्राहकत्वेति** । कार्य्याभावप्रयोजकाभावप्रतियोगित्वमनुग्राहकत्वम् , तच्च भवदभिमतायां शक्तौ अस्मदभि- 5 मतेषु सहकारिष्वपि । तथा च सहकारिषु विवाद एव शक्तिविवाद इति भावः । तत्रापि सहकारिष्वपि मध्ये प्रतिबन्धकेऽपह्रियमाणे विवादमुपपादयति—**दहनादेरिति** । अधिको भिन्नः प्रतिबन्धकैर्म्मन्त्रादिप्रयोक्तृभिरिति यदि सामान्यतस्तदा न विवदामहे । इदं नास्माकमनभिमतम् , अस्मदभिप्रेतस्य प्रतिबन्धकापह्रियमाणस्याभावादेरनुग्राहकत्वं दाहादिकारणत्वं स्वीकृत्य **मीमांसका** अपि निःसाधना निर्युक्तिका विप्रतिपत्तुं **नैयायिक-** 10 मतविपरीतप्रतिपत्तिं जनयितुं नार्हन्ति, न क्षमन्ते इति विवादविषयं निष्कृष्याह— **अभावादिरेवेति** । प्रतिबन्धकापह्रियमाण इत्यादिः, तेन नावधारणबाधः । आदिपदात् प्रोक्षणादिजनितादृष्टादिपरिग्रहः । **एके नैयायिकाः ; अपरे मीमांसकाः** । तथा च प्रतिबन्धकाभावो दाहजनको न वेति विचाराङ्गसंशये व्युत्पादितं साधितं तस्याभावस्य अनुग्राहकत्वं दाहकारणत्वम् । प्रकृतवादे प्रतिबन्धकाभावकारणत्वापेक्षया व्यवस्थाप्यमपरं 15 किमस्ति शक्तिनिषेधादितरत् प्रश्नविषयोऽस्ति यत्र मया प्रमाणं वाच्यमिति ।

'प्रत्यात्मनियमाद्भुक्ते'रिति कारिकांशं व्याकर्तुं शङ्कते—**तथापीति** । संस्क्रियते यागादिना भूतानि शरीरादीनि । तथा च भूतनिष्ठं योग्यमेव किञ्चिद् यागादिजन्यं स्वर्गाद्यनुकूलं स्यादिति तदधिष्ठानाय नेश्वरोऽयम् इति भावः **नित्यविभूना-** **मिति** । अत्र नित्यत्वं भूतोपरमे तन्निष्ठसंस्कारोपरमात् भोगो न स्यादित्यत्रो- 20 पयोक्ष्यते । विभुत्वञ्च सर्वदेहप्राप्त्युपयोगिदेहप्राप्तिस्ततसंयोगः विशिष्टैर्यागादिजन्यसंस्क- रवद्भिः भूतैर्देहादिभिः नियामकाभावात् । अत्रैव भोगो जनयितव्य इत्यत्र नियामकाभावात् प्रतिनियतभोगासिद्धेस्तत्प्रसङ्गात् कुतो निर्णय इत्यत्र हेतुप्रश्ने उत्तरम्—**इदानीमिति** । पञ्चम्यर्थान्वयस्तत्रैव । तद्भूतं यदीयं तद्वृत्तिना संस्कारेण तस्य भोग इत्यत्र नियामक- मस्त्वित्यत्राह —**न हीत्यादि** । विशिष्टान्यपि यागादिजन्यसंस्का[र]वन्त्यपि । तथा च 25 शरीरादेस्तदीयतानियामकमपि भोक्तृनिष्ठोऽदृष्टविशेषो वाच्य इति भावः । तथाच भोक्तृनिष्ठतादृशादृष्टानभ्युपगमे साधारणविग्रहवत्त्वप्रसङ्गः; सर्वेषां शरीराणां सर्वीयत्व- प्रसङ्गः । कश्चिच्चेतनं प्रत्यसाधारणः कस्मिंश्चिदेव चेतने भोगजनको, न सर्वत्र । **विपर्ययेति** । नीलादौ भूतधर्मे असाधारण्याभावदर्शनात् भूतधर्मे तत् कल्पयितुं न

शक्यत इति भावः। दर्शनमात्रमप्रयोजकं, नियमश्च नास्ति, द्वित्वादौ व्यभिचारादि-
त्याशयेनाह—**द्वित्वादी**ति। यथा भूतधर्मोऽपि द्वित्वादिः प्रतिनियतात्मनिष्ठं साक्षात्कारं
जनयति, यागादिजन्यसंस्कारो भूतनिष्ठोऽपि तथा स्यादित्यर्थः। तस्यापि द्वित्वादेरपि तदीय-
तानियामकात्मवृत्तिधर्मस्याभावे साधारण्यमेव शरीरवत् स्यात्, नियतचे[त]नगुणोपग्रहेणैव
5 तत्तन्निष्ठापेक्षाबुद्धिजन्यत्वेनैव तस्यापि द्वित्वादेरपि नियमो नियतनिष्ठसाक्षात्कारजनकत्वम्,
न तु तज्जन्यतामात्रेण शरीरजन्यतामात्रेण स्वयं स्वस्य द्वित्वादेस्तेन रूपेण रूपादि-
भ्योऽविशेषात् अविलक्षणत्वात् तस्य रूपादिसाधारणत्वेन नियामकत्वाभावादिति यावत्।
**तथापी**त्यादि। तज्जन्यतयैव तच्चेतनजन्यतयैव। एवकारेण द्वित्वादौ सतोऽपि तद्वृत्ति-
गुणजन्यत्वस्य व्यवच्छेदः। नियमोपपत्तौ प्रतिनियतचेतनगुणोपग्रहेणैव प्रतिनियतभोगादि-
10 जनकत्वमित्यत्र विपक्षे किं बाधकमित्यर्थः। **कार्यकारणे**ति। अन्यथासिद्धान्वयव्यतिरे-
केण प्रतिनियतचेतनधर्मस्य प्रतिनियतभोगहेतुत्वावधारणादित्यर्थः। उक्तमेव कार्यकारणभाव-
मुदाहरणेन विशदयति—**शरीरादीनामि**ति। प्रकृतेऽपि शरीरादावपि चेतनगता एव
बुद्ध्यादयः चेतनगता बुद्ध्यादय एव नियामकाः तदीयत्वव्यवस्थापकाः। तथा च तदीय-
शरीरवर्त्तिसंस्कारवत्त्वस्य तन्निष्ठभोगजनकत्वनियमो नानुपपन्न इति भावः। **शरीरादे-**
15 **रि**ति। तथा च तेषां न तदीयतानियामकत्वमिति भावः। निरतिशया अदृष्टशून्याः।
तव मते एतावता प्रबन्धेनात्मनि भोगोत्पादायादृष्टं स्वीकार्यमिति व्यवस्थापितम् ॥१३॥

### परिमलः

घटतुलापत्रचौर्याद्यभियोगे कश्चित्साक्षी नास्ति अभियुक्तश्चाभियोगं न स्वीकरोति, सन्देहः
केवलं विद्यते, तदभियोगनिर्णयाय दैवीपरीक्षा क्रियते, तत्र तुलाविधिरस्ति, तद्विधिमनुष्ठाय
तुलामधिरोहति। स चेददुष्टस्तदा तदाश्रितस्तुलाभाग उन्नतो भवति, दुष्टश्चेत्तदाश्रितस्तुला
20 भागोऽवनतो भवति। परीक्षाविधिजन्यगुरुत्वाद्यतिशयकल्पनायान्तु दुष्टत्वेगुरुत्वंऽदुष्टत्वे लघुत्वमुप-
पादयति येन तुलाया आरोहावरोहौ उपपद्येते। अथवाऽदुष्टत्वे गुरुत्वं लघयति। दुष्टे तु
लघुत्वं गुरुत्वं जनयति, तत एव तुलायाः पूर्वावस्थातो वैलक्षण्यं जायते। इत्यपि न। परीक्षविधेः
ज्ञापकत्वेनोत्पादकत्वाभावात्; परीक्षाविधेः समत्वेन सामग्रीभेदाभावे भिन्नकार्योपपत्तेरयुक्तत्वाच्च।
प्रतिमापरीक्षाविधिप्रयुक्तदेवतासन्निधिरस्तीति तत्र पूजातद्वैपरीत्येन धर्माधर्मयोरुत्पत्तिः संभवति
25 सामग्रीभेदात्, इह तु देवताया अहंकारादिरूपसमवधानाभावेन सामग्र्याश्चैकत्वाद्भिन्नकार्योत्पत्तेः
वक्तुमशक्यतया ततः संस्काराधानमेव स्वीकार्यमित्याशयेन पुनः प्रत्यवस्थानम् कर्तृपुरुषकर्मजन्य-
पापतद्विरहसहकृतपरीक्षाविधिनातिशयसामग्रीभेदाद्भिन्नकार्योत्पत्तिरितिशंकाकृदभिप्रायः।

जयो विजय इतरः पराजयस्तन्निमित्तमभियुक्तपुरुषगतं दुरदृष्टं तद्विरहश्च तस्यवृत्तिः
स्वकार्यकरणप्रवृत्तिस्तल्लाभायपरीक्षाविधयोमताः। यद्यपीति। इदं कर्मानेनकृतमिति
30 देवताया ज्ञानमस्ति परीक्षाविधिनोपस्थापिता पापाद्यभिमानिनी देवता तदुपस्थानं च इहद्याभि-

योगवाननेन विधिना तुलामधिरुढ इति ज्ञातम्। अत एव कर्मज्ञापकं तुलानमनोन्मनादिकार्यं देवताः ज्ञापयन्ति। परीक्षाविधेः समत्वेऽपि अयं पुण्ययोनिषु पापोवेति देवताज्ञानभेदात्कार्य-भेदोपपत्तिः। परीक्षाविधिं विना तादृशज्ञानं देवताया न संभवति। तत्रानेन विधिनेत्यस्य प्रवेशा-दिति परीक्षाविधिरपि तत्प्रयोजक इत्यर्थः। परीक्षाविधावपि धर्माधर्माभिमानिदेवतासन्निधानं क्रियते ताश्च देवताः कर्मानुरूपं लिङ्गं तुलोन्नमनादि अभिव्यञ्जयन्ति प्रकाशयन्ति इति नैयायिकसिद्धान्तः, 5
तथापि मीमांसकाः देवतां चेतनां न मन्यन्ते इति तदनुरोधेनान्यथा परिहारः क्रियते। जयपरा-जयनिमित्तं यददृष्टं तस्याभिव्यक्तिः परीक्षाविधितोऽभिव्यक्तिः, अभिव्यक्तं च न तत्कार्यं तुलोन्नम-नादि जनयति, सहकारिलाभ एव कर्माभिव्यक्तिः उक्तविधिसहकृतं कर्मादृष्टं कार्यं तुलोन्नमनादि अभिव्यनक्ति इत्यभिव्यक्तिनिमित्तं सहकारिलाभोऽभिव्यक्तिरुपचर्यणे तुलादेवार्चनादि तदानीं स्वरूपेण न वर्तते। तस्यासहकारित्वेऽपि तज्ज्ञानद्वारासहकारित्वमुपपद्यते। ज्ञानं सोऽहम- 10
नेनविधिना तुलामधिरुढः पापकारी निष्पापो वेति प्रत्यभिज्ञानम्। तत्र निष्पापत्वेन प्रत्यभिज्ञानं जयनिमित्तम् सपापत्वेन प्रत्यभिज्ञानं पराजयनिमित्तं निगूढमपि पापमनेन विधिना ज्ञायते इत्यर्थं स्मृतिमुदाहरति—तांस्तुदेवाः प्रपश्यन्ति इत्यादि। तच्च पापं कृतवतोऽपि तद्विस्मरणात् यत्र प्रत्यभिज्ञानं नोत्पद्यते तत्र कुतो न जयः। प्रमाप्रत्यभिज्ञानस्यैव जयहेतुत्वेऽपि पापप्रत्यभि-ज्ञानाभावेन पराजयानुपपत्तेः, स्वरूपेण पापस्य पराजयहेतुत्वे परीक्षाविधिवैयर्थ्यापत्तेः, पापतद- 15
भावयोः स्वरूपेणसत्त्वे योऽहं पापवत्त्वादिनासन्दिहानः सोहमनेनविधिना तुला मधिरूढ इति प्रत्यभिज्ञानस्य विवक्षितत्वात्। तच्च परीक्षाविधिं विना नेति तस्यापि प्रयोजकत्वमिति भावः। यत्र सभाक्षोभादिना तादृशप्रत्यभिज्ञानाभावस्तत्र गत्यन्तरमाह—यद्वा तुलारोही पुरुषः न जयपराजयफलकं कर्मान्वतिष्ठत् यदभिव्यक्तिः परीक्षाविधिना स्यात्। न च स्तेयादिकर्मानुष्ठितं तदेव पराजयफलकमिति वाच्यम्, तस्य नरकादिहेतुत्वात् स्तेयादिकर्माभाव- 20
वान् विजयते तस्य विजयहेतुस्तत्कर्माभावः न तस्य किमपि फलं भवितुमर्हतीत्यपरितोषादाह यद्वेति। प्रतिज्ञानुरूपशुद्धिसहकृतेन परीक्षाविधिना धर्मोजन्यते तत एव विजयलिङ्गं तुलोन्न-मनादि भवति। एवं प्रतिज्ञानुरूपामशुद्धिमपेक्ष्य तद्विधिनाऽधर्मो जन्यते, यतस्तुलानमनमिति साम्प्रतम्। तादृशविधिवाक्याभावेन परीक्षाविधेः धर्मजनकत्वे प्रमाणाभावादित्याह—निमित्तत इति। यद्यपि साक्षाद्विधिवाक्यं तादृशं नास्ति, तथाप्यतिशयनिमित्तकपरीक्षाविध्यनुरोधेन 25
सत्यप्रत्यभिज्ञोऽभिशप्तः जयकामः तुलामधिरोहेदितिविधिः कल्प्यत इति भावः। न चापूर्वं विना कालान्तर्भाविजयादिसिद्धिरित्यपूर्वमङ्गीकरणीयम्। यथा "वैश्वदेवी आमीक्षा" इत्यादौ "यजेत" इति पदाभावेपि द्रव्यदेवतारूपयागनिमित्तदर्शनबलाद्वैश्वदेव्या यजेत इति विधिकल्पनमेवं प्रकृतेऽपीति बोध्यम्।

यदि स्वरूपेण विद्यमानं पापं भङ्गहेतुः स्यात् तदा परीक्षाविधिं विनापि तस्य स्वरूपेण 30
सत्त्वादभियुक्तभङ्गोपपत्तिः स्यादिति परीक्षावैयर्थ्यं प्रसज्येत। यस्तु पापं नाकरोत् किन्तु मृषाभियुक्तः तस्य तुलारोहणसमये निष्पापप्रतिज्ञानुरूपां शुद्धिमपेक्ष्य परीक्षाविधिना धर्मो जन्यते स एव तस्य निष्पापत्वज्ञापनाय तुलामुन्नमयतीति नानुपपत्तिः। ननु तादृशविधिवाक्यमेव क्वचिदपि शास्त्रे नोपलभ्यते इति कथं परीक्षाविधेर्धर्मजनकत्वम्। कुत्रचित्पापकर्मणि योऽभि-युक्तः साक्षी कश्चिन्नास्ति स्वयं चापलपति तत्र तदभियुक्तं पुरुषमुद्दिश्य तत्परीक्षणाय परीक्षाविधानं 35
तद्विजयफलश्रुतिश्च शास्त्रे दृश्यते, तदनुरोधेन अभिशप्तः सत्यप्रतिज्ञः जयकामः तुलामारोहेदिति

विधिः कल्प्यते। एवमभियुक्तस्याशुद्धिमपेक्ष्य परीक्षाविधिना अधर्मो जन्यते परीक्षासमाध्यनन्तरं पुरुषस्तुलामधिरोहति, तुलाधिरोहणसमये क्रियाकलापात्मकस्य परीक्षाविधेरसत्त्वेनाव्यवहितपूर्ववर्त्तित्वाभावेन कारणत्वं न सम्भवतीति तुलाधिरोहणकालस्यापि जयसाधनं तादृशविधिजन्यमपूर्वं कल्प्यते, अभियुक्तस्य पुरुषस्यानिष्टं पराजयलक्षणं फलमपिदृश्यते इति तदनुरोधेन निषेधविधे-
5 रनुमानं भवति, असत्याभिसन्धस्तुलामधिरोहेत्तर्हि ततोऽधर्मः स्यात्तत्फलं पराजयश्च, सत्याभिसन्धस्तुलाभधिरोहेत्तर्हिततोधर्मः तत्फलं जयश्च स्यात्। यद्यपि "न सुरां पिबेत्," न ब्राह्मणं हन्यादितिं वन्नायं स्वरूपतो निषेधविधिस्तथापि न हन्यादित्यादिनिषेधविधिमुल्लङ्घ्य हिंसाद्यनुष्ठाने अधर्मो भवति तथा असत्याभिसन्धं प्रति उक्तपरीक्षाविधेरधर्मजनकत्वेन फलतो निषेधविधित्वमुभयोरनुष्ठाने फलं दुरदृष्टं समम्।

10 जल्पकथामाश्रित्य मीमांसकः पृच्छति—शक्तिनिषेधे किं प्रमाणमिति? नैयायिकः उत्तरयति—न किञ्चिदिति। तर्हि अप्रतिषिद्धमनुमतं भवतीति न्यायेन शक्तिः स्वीक्रियते। वाढमिति, न्यायदर्शनेऽपिं शक्तिपदार्थोऽस्त्येव तर्हि का शक्तिर्विशिष्य निर्दिश्यताम्? कारणत्वमिति। किन्तात्वकारणत्वमिति? पूर्वकालनियतजातीयत्वम्, घटादिकार्योत्पत्तिप्राक्काले दण्डादेर्नियतजातीयत्वमिति घटं प्रति दण्डादेर्हेतुत्वम्, न हि दण्डजातीयं विना घटजातीयस्योत्पत्तिः
15 क्वचिद् दृश्यते। अयं भावः—अन्वयव्यतिरेकाभ्यां हि कारणत्वं गृह्यते। न च एकव्यक्तिं प्रति तौ संभवतः। तत्कारणव्यक्तिसत्त्वे तत्कार्यव्यक्तिसत्त्वमित्यंशस्य संभवेऽपि तद्व्यतिरेके कार्यव्यतिरेकस्य दर्शयितुमशक्यत्वात्। उत्पत्त्यनन्तरं कार्यसत्त्वेन तद्व्यतिरेकासंभवात्। नाप्यन्वयमात्रदर्शनेन कारणत्वनिश्चयः शक्यः कर्तुम्। वन्हिरासभयोरपि कदाचिदन्वयदर्शनेन रासभस्यापि वन्हिकारणत्वापत्तेः। तस्मात्कार्यतावच्छेदकं तत्कार्यमात्रानुगतमेकं धर्मंगृहीत्वा
20 एतज्जातीयं कार्यं प्रति तत्कारणसामान्यानुगतमेकं कारणतावच्छेदकीभूतं धर्ममालोच्य तज्जातीयस्य नियतपूर्ववर्तितत्वं गृहीत्वानयोः कार्यकारणभावो निश्चीयते यथा घटत्वजातीयं प्रति दण्डत्वजातीयस्य कारणत्वमिति। पूर्वत्वस्य दुर्वचत्वमाश्रित्य लक्षणान्तरमाह—सहकारीत्यादि। यत्र कार्याभावः सहकारिवैकल्यप्रयुक्तस्तत्कारणं, यथा बीजेऽङ्कुराभावः क्षितिसलिलसंयोगविरहप्रयुक्तः सहकारिसंपत्तौ ततः अङ्कुरउत्पद्यते तदसंपत्तौ तु नेति तदभावस्तत्प्रयुक्तः यतः कार्यं नोत्प-
25 द्यते तत्र कार्याभावः स्वतः सिद्ध इति सहकारिवैकल्यप्रयुक्तः सः यथा शिलाशकलेऽङ्कुराभावः कुसुलस्थितबीजेऽपि सहकारिवैकल्यप्रयुक्तकार्याभावत्वमस्तीति तत्र लक्षणसमन्वय;।

ननु सहकारि कारणमेवोच्यते अकारणस्य सहकारित्वानुपपत्तेः, एवं च कारणत्वलक्षणे कारणत्वप्रवेशेनात्माश्रयः। प्रयुक्तत्वमिह किं विवक्षितम्? किं जन्यत्वं, जनकत्वं, व्यापकत्वं, व्याप्यत्वम्वा? नाद्यः प्रागभावस्यानादित्वेनाजन्यत्वात् लक्षणासंभवः। नापि द्वितीयः प्रागभावस्य
30 स्वप्रतियोगिजनकत्वेन सहकारिविरहं प्रति जनकत्वस्य शङ्कितुमशक्यत्वात्। नापि तृतीयः—शिलाशकलेऽपि अङ्कुराभावः सहकारिविरहव्यापकोऽस्तीति तत्रातिव्याप्तेः। नापि चतुर्थः—कार्यसंसर्गाभावस्य सहकार्यभावव्याप्यत्वेन तत्रातिव्याप्तेः। यस्य कार्याभावव्याप्यत्वमितरावच्छिन्नं तत्कारणम्। बीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते, क्षितिसलिलसंयोगे सति बीजादङ्कुरोत्पत्तिदर्शनादिति क्षितिसलिलसंयोगाभावेनैवावच्छिद्यते, क्षितिसलिलसंयोगेऽङ्कुरोत्पत्तिदर्शनेन
35 तदभावे तददर्शनेन तस्य तदवच्छिन्नत्वाभ्युपगमादित्यन्यत्र विस्तरः॥ १३॥

एतेन सांख्यमतपास्तम् ।

एवं हि तत्—अकारणमकार्यः कूटस्थचैतन्यस्वरूपः पुरुषः। आदि-कारणं प्रकृतिरचेतना परिणामिनी। ततो महदादिसर्गः। न हि चितिरेव विषयबन्धन-स्वभावा, अनिर्मोक्षप्रसङ्गात्। नापि प्रकृतिरेव तदीयस्वभावा, तस्या अपि नित्यत्वेनानि-र्मोक्षप्रसङ्गात्। नापि घटादिरेवाहत्य तदीयः, दृष्टादृष्टत्वानुपपत्तेः। नापीन्द्रिय-मात्रप्रणाडिकया, व्यासङ्गायोगात्। नापीन्द्रियमनोद्वारा, स्वप्नदशायां वराहव्याघ्रा-द्यभिमानिनो नरस्यापि नरत्वेनात्मोपधानायोगात्। नाप्यहङ्कारपर्यन्तव्यापारेण, सुषुप्त्यवस्थायां तद्व्यापारविरमेऽपि श्वासप्रयत्नसन्तानावस्थानात्। तद् यदेतास्वव-स्थासु सव्यापारमेकमनुवर्तते, यदाश्रया चानुभववासना, तदन्तःकरणमुपारूढोऽर्थः पुरुषस्योपधानीभवति। भेदाग्रहाच्च निष्क्रियेऽपि तस्मिन्पुरुषे कर्तृत्वाभिमानः, तस्मिन्नचेतनेऽपि चेतनाभिमानः तत्रैव कर्मवासना। पुरुषस्तु सर्वथा पुष्कर-पलाशवन्निर्लेपः। आलोचनं व्यापार इन्द्रियाणां, विकल्पस्तु मनसः, अभिमानो-ऽहङ्कारस्य, कृत्यध्यवसायो बुद्धेः। सा हि बुद्धिरंशत्रयवती। पुरुषोपरागो, विषयोपरागो, व्यापारावेशश्चेत्यंशाः। भवति हि 'मयेदं कर्तव्यमि'ति तत्र मयेति चेतनोपरागो दर्पणस्येव मुखोपरागो भेदाग्रहादतात्त्विकः। इदमिति विषयोपराग इन्द्रियप्रणाडिकयापरिणतिभेदो दर्पणस्येव निःश्वासाभिहतस्य मलिनिमा पारमार्थिकः। एतदुभयायत्तोव्यापारावेशोऽपि। तत्र एवंरूपव्यापारलक्षणाया बुद्धेर्विषयोपराग-लक्षणं ज्ञानम्। तेन सह यः पुरुषोपरागस्यातात्त्विकस्य सम्बन्धो दर्पणप्रतिबिम्बतस्य मुखस्येव मलिनिमा, सोपलब्धिरिति। तदेवमष्टावपि धर्मादयो भावा बुद्धेरेव, तत्सामानाधिकरण्येनाध्यवसीयमानत्वात्। न च बुद्धिरेव स्वभावतश्चेतनेति युक्तं, परिणामित्वात्। पुरुषस्य तु कूटस्थनित्यत्वादिति। तदेतदपि प्रागेव निरस्तम्। तथाहि—

**कर्तृधर्मा नियन्तारश्चेतिता च स एव नः।**
**अन्यथाऽनपवर्गः स्यादसंसारोऽथवा ध्रुवः ॥१४॥**

कृतिसामानाधिकरण्यव्यवस्थितास्तावद्धर्मादयो नियामका इति व्यवस्थितम्। चेतनोऽपि कर्तैव। कृतिचैतन्ययोः सामानाधिकरण्येनानुभवात्। न चायंभ्रमो, बाधकाभावात्। परिणामित्वाद् घटवदिति बाधकमिति चेन्न। कर्तृत्वेऽपि समानत्वात्। तथा च कृतिरपि स्वाभाविकी महतो न स्यात्। दृष्टत्वादयमदोष इति चेत्, तुल्यम्। अचेतनकार्यत्वं बाधकं, कार्यकारणयोस्तादात्म्यादिति चेन्नासिद्धेः। न हि कर्तुः कार्यत्वे प्रमाणमस्ति। प्रत्युत 'वीतरागजन्मादर्शनात्'[1] ( न्या० ३-१-२५ ) इति न्यायादनादि-तैव सिध्यति। यद् यच्च कार्ये रूपं दृश्यते तस्य तस्य कारणात्मकत्वे रागादयोऽपि प्रकृतौ स्वीकर्तव्याः स्युः। तथा च सैव बुद्धिर्न प्रकृतिः, भावाष्टकसंपन्नत्वात्। स्थूलता मपहाय सूक्ष्मतया ते तत्र सन्तीति चेत्, चैतन्यमपि तथा भविष्यति। तथाप्यसिद्धो हेतुः। तथा सति घटादीनामपि चैतन्यप्रसङ्गस्तादात्म्यादिति चेत्, रागादिमत्त्व-प्रसङ्गोऽपि दुर्वारः। सौक्ष्म्यञ्च समानमिति। तस्मात्, यज्जातीयात्कारणाद् यज्जा

१. "भाविकी" इति प्रकाशसम्मतः पाठः।

तीयं कार्यं दृश्यते तथाभूतात्तथाभूतमात्रमनुमातव्यं, न तु यावद्धर्मकं कारणं तावद्धर्मकं कार्यं, व्यभिचारादिति किमनेनाप्रस्तुतेन ? यदि च बुद्धिर्नित्या, अनिर्मोक्षः सङ्गः। पुंसः सर्वदा सोपाधित्वे स्वरूपेणानवस्थानात्। अथ विलीयते, ततो नाऽनादेर्विलय इत्यादिमत्त्वे तदनुत्पत्तिदशायां को नियन्ता ? प्रकृतेः साधारण्यात्। तथा चाऽसंसारः। पूर्वपूर्वबुद्धिवासनानुवृत्तेः साधारण्ये ऽप्यसाधारणीति चेत्, बुद्धिनिवृत्तावपि तद्धर्मवासनानुवृत्तिरित्यपदर्शनम्। सौक्ष्म्यान्नदोष इति चेत्। मुक्तावपि पुनः प्रवृत्तिप्रसङ्गः। निरधिकारत्वान्नैवमिति चेत्, तर्हि साधिकारा प्रसुप्तस्वभावा बुद्धिरेव प्रकृतिरस्तु, कृतमन्तरा प्रकृत्यहङ्कारमनः—शब्दानामर्थान्तरकल्पनया ? सैव हि तत्तद्व्यवहारगोचरा तेन तेन शब्देन व्यपदिश्यते, शारीरवायुवदित्यागमोऽपि सङ्गच्छते इत्यतोऽपि[1] हेतुरसिद्धः। अधिकारनिवृत्त्या[2] बुद्धेरप्रवृत्तिरपवर्गः, वासनायोगश्चाधिकारः, ततः संसारः। धर्मधर्मिणोरत्यन्तभेदे च कौटस्थ्याविरोधः। भेदश्च विरुद्धधर्माध्यासलक्षणो घटपटादिवत् [3]प्रत्यक्षसिद्धः। न च सामानाधिकरण्यादभेदोऽपि, तद्धि समानशब्दवाच्यत्वम्, एकज्ञानगोचरत्वम्, एकाधिकरणत्वम्, आधाराधेयभावः, विशेष्यत्वं, सम्बन्धमात्रं वा, भेद एव भेदेऽपि चोपपद्यमानं नाभेदं स्पृशतीति [4]सर्वमवदातम्॥१४॥

आमोदः

नन्वु चेतनश्चितिशक्तिः पुरुषः, तत्र च न भोगो नाप्यपूर्वं, किन्तु बुद्धिरेव भावाष्टकसम्पन्ना इत्यत आह—एतेनेति। अपूर्वस्य चेतनधर्मव्युत्पादनेनेत्यर्थः।

अपासनीयं विशदयति—एवं हीति। **अकारणमिति**। प्रकृतिभेदकम्। **अकार्यमिति**। बुद्धितत्त्वादिव्यावर्तकम्। कूटस्थत्वं जन्यधर्मानाश्रयत्वम्। **आदिकारणं** सर्वकार्यमूलभूतं कारणम्, अचेतनत्वे हेतुः परिणामिनीति। **तत** इति। प्रकृतेरित्यर्थः। **महदादीति**। "प्रकृतेर्महान्, महतोऽहङ्कारः, अहङ्कारात् पञ्च तन्मात्राणी"ति तत्सिद्धान्त इति भावः। ननु विषयाणां घटादीनां चेतनसम्बन्धः साक्षादेवास्तु, तत एव बुद्ध्युपलब्धिज्ञानप्रत्ययानामुपपत्तौ किं महदादिप्रणालिकया इत्यत आह—**चितिरिति**। चितिविषययोः सम्बन्धे चितेर्विषयाणाञ्च नित्यतया मोक्षः कदापि न स्यादित्यर्थः। सर्वदैवेष्टानिष्टभोगसम्भवादिति भावः। ननु चैतन्यं प्रकृतौ प्रतिबिम्बितं प्रकृतिविषयोक्तसाक्षात्सम्बन्धः स्यात्, किं महदादिना इत्यत आह—**नापीति**। तदीयस्वभावा विषयसम्बन्ध-स्वभावा। **तथापीति**। तस्या

---

१. "इतोऽपि" इति विवेक सम्मतः पाठः। २. "अधिकार निवृत्त्या च" इति विवेकसम्मतः पाठः। ३. "अध्यक्षेण सिद्धः" इति विवेकसम्मतः पाठः। ४. "तस्मात्सर्वं भवदातमि"ति बोधनी सम्मतः पाठः।

अपि नित्यत्वात् पुंसः पुनरनिर्मोक्षापत्तिरेवेत्यर्थः। ननु चितिर्विषयसम्बन्धस्वभावा माऽस्तु, विषया एव चितिसम्बन्धस्वभावाः सन्तु, तथा च विषयकलातिरोभावे मोक्षः स्यादित्यत आह—**नापीति**। आहत्य साक्षात्। **दृष्टेति**। विषयस्य परम्परया चैतन्यस्य चैतन्यधर्मितया चैतन्यसम्बन्धिस्वभावत्वे द्वारीभूतस्येन्द्रियादेरङ्गीकारापत्तिरिति साक्षात् तद्वाच्यम्; तथा 5 सति इदं दृष्टमिदमदृष्टमिति न स्यात्, सर्वथा चितिसम्बन्धस्वाभाव्येनाव्यवधानादित्यर्थः। ननु विषया इन्द्रियद्वारा चितिसम्बन्धात्मानः सन्तु, दृष्टादृष्टव्यवहारादि तत्तत्सन्निकर्ष-विप्रकर्षाभ्यामुपपत्स्यत इत्यत आह—**नापीन्द्रियमात्रेति**। एवं सति व्यासङ्गो न स्यादिन्द्रियसम्बद्धे विषये ज्ञानोत्पत्तेरावश्यकत्वादित्याह—**व्यासङ्गेति**। तर्हि व्यासङ्गानुपपत्त्या मनः कल्प्यतां, 10 किमहङ्कारेणेत्यत आह—**नापीन्द्रियमनोद्वारेति**। एवं सति स्वस्मिन् व्याघ्रोऽहं वराहोऽहमिति नारोपयेत्; किन्त्विन्द्रियमनोद्वारा चितिसम्बद्धं स्वकीयं नरत्वमेव गृह्णीयात् इत्याह—**स्वप्नेति**। तथाप्यहङ्कारोऽप्यस्तु, स्वप्नदशायामारोपार्थं बुद्धितत्त्वे च न मानमस्तीत्यत आह—**नाप्यहङ्कारेति**। सुषुप्तावस्थायां मनोवदहङ्कारोऽपि निवृत्तव्यापार एव, तथा श्वासप्रश्वासप्रयोजकजीवनयो- 15 नियत्नः कस्य व्यापारः स्यादिति तदनुरोधेन बुद्धितत्त्वमावश्यकमित्याह—**सुषुप्तेति**। कारणान्तराद्भेदकान्तरमाह—**यदाश्रयेति**। अनुभवरूपा वासनाऽनुभववासना, न त्वनुभवजन्या वासना संस्कारः, सांख्यैस्तदनभ्युपगमात्। **तदन्तःकरणमिति**। बुद्धितत्त्वेन सम्बद्धो गोघटादिः पुरुषेण चैतन्येन सम्बध्यत इत्यर्थः। ननु यदि बुद्धौ न स्वाभाविकं चैतन्यं, तदा कृतिसामानाधिकरण्येन 20 तज्ज्ञानमनुपपन्नमित्यत आह—**भेदाग्रहादिति**। बुद्धितत्त्वेन भेदाग्रहादित्यर्थः। **तस्मिन्निति**। बुद्धितत्त्व इत्यर्थः। पुरुषभेदाग्रहाच्च चैतन्याभिमानमित्यर्थः। कर्मजनिता वासना धर्माधर्मावित्यर्थः। ननु कर्मवासना पुरुषनिष्ठैव किं न स्यादित्यत आह—**पुरुषस्त्विति**। पुरुषस्य निर्लेपत्वं निर्गुणत्वं निरञ्जनत्वं श्रुतिगम्यमित्यर्थः। ननु मनोद्वारैव चेतनस्य विषयसम्बन्धोऽस्तु किमिन्द्रि- 25 यैरत आह—**आलोचनमिति**। आलोचनार्थमिन्द्रियाभ्युपगमात्। व्यपदिशन्ति हि लोका मनो मया न दत्तमतः स्फुटतरश्च प्रत्ययो न जात इति। **आलोचनं** निर्विकल्पकं, यद्वा करणानां भेदकं प्रति नियतं व्यापार **आलोचनमि**त्यादि। **अभिमान** इति। स्वप्ने व्याघ्रोऽहं वराहोऽहमित्याद्यभिमान इत्यर्थः।

**कृत्यध्यवसायः** करोमीत्यध्यवसायो बुद्धेर्बुद्धितत्त्वस्य महदाख्यस्य व्यापार इति सर्वत्रानुषङ्गः। ननु 'कृत्यध्यवसायः' कृतिमत्तया ज्ञानं, तच्च कथमचेतनाया बुद्धेरत आह—**सा हीति**। 'हि' शब्दो हेतौ। पुरुषचैतन्योपरागान्नैतदनुपपन्नमित्यर्थः। कृत्यध्यवसायाकारमाह—**भवति हीति**।
5 अंशं विभजते—**तत्रेति**। 'मये' त्यंशश्चेतनस्य दर्पणनिर्मलायां बुद्धौ प्रतिबिम्ब उपधानं, तच्चातात्त्विकमेव, चैतन्येन बुद्धेर्वास्तवसम्बन्धाभावात्, यथा दर्पणे मुखसम्बन्धमन्तरेणापि मुखभ्रम इत्यर्थः। 'विषयोपरागो' विषयोपधानं, तच्च वास्तवमेव,' इन्द्रियप्रणालिकया' बुद्धौ ज्ञातरूपविषयसम्बन्धत्वात्। **एतदुभयायत्त** इति। पुरुषोपरागविषयोपरागमहिम्ना कृतिमत्तया-
10 ऽध्यवसाय इत्यर्थः। ननु ज्ञानमेव चैतन्यं, तत् कथमनयोर्भेद इत्यत आह—**एवंरूपेति**। कृत्यध्यवसायलक्षणव्यापारविशिष्टयोरित्यर्थः। **विषयोपरागेति**। इन्द्रियप्रणालिकया बुद्धौ विषयस्य घटादेर्यः सम्बन्धो वृत्तिविशेषस्तदेव ज्ञानमित्यर्थः। **तेन सहेति**। विषयोपरागेण सहेत्यर्थः। यथा दर्पणनिष्ठो मलिनिमा दर्पणप्रतिबिम्बतमुखादौ दृश्यते तथेत्यर्थः। तथा
15 च 'घटं जानामी' त्यनुव्यवसायाख्या 'उपलब्धिरि'त्यर्थः। ननु तथापि सुखाद्याधारता पुरुषस्य, तथा च कौटस्थ्यविरोध इत्यत आह—**तदेवमिति**। ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मरूपा 'अष्टौ' धर्मा इत्यर्थः। संस्कारस्य तैरनङ्गीकारात् **तदिति**। अहं जाने, सुखीत्यादिसामानाधिकरण्यप्रतीतेरित्यर्थः। ननु यत्रैते धर्माः स एव चेतनः किं न स्यात्? **न चेति**।
20 **परिणामित्वात्** अनित्यधर्मरूपतया परिणामित्वात्, तन्मते धर्मधर्मिणोरभेदादित्यर्थः। चेतनस्य कूटस्थतयैव श्रुतेरिति भावः। **प्रागेवेति**। प्रत्यात्मनियमाद्भुक्ते (१।४) रि' त्यादिनेत्यर्थः।

**कर्तृधर्मा** इति शास्त्रं, तथा च ज्ञानेच्छाकृतिसमानाधिकरणावेव धर्माधर्मौ भोगं समानाधिकरणं जनयेदिति मन्तव्यमित्यर्थः।

25 'प्र [शास्त्र ? ] देशितं फलमनुष्ठातरी'ति न्यायेन कृतिसमानाधिकरणा एव धर्मादयो भोगनियामका इत्यर्थः। **चेतिता** चैतन्यवान्। स एव उक्त एव इति। स्वस्य प्रामाणिकत्वेन प्रमाणदार्ढ्यं आह—**अन्यथेति**। यद्यन्यः कर्ताऽन्यश्चेतिता, तदा चेतनस्य पुरुषस्य मुक्तिर्न स्यात्, कर्तृभूताया बुद्धेर्नित्य-

त्वेन तदुपधानस्य नित्यत्वात्। अथानित्या बुद्धिस्तदा संसारो न स्यात्। बुद्धौ नष्टायां तत्र ज्ञानसुखादिजनने कारणाभावादित्यर्थः।

**व्यवस्थित**मिति। कृतहानाकृताभ्यागमप्रसङ्गभयेन व्यवस्थितमित्यर्थः। **अनुभवा**दिति। चेतनोऽहं कारोमीत्यनुभवादित्यर्थः। ननूक्तं चैतन्यं कर्तरि प्रतिबिम्बितं गृह्यतेऽतः सामानाधिकरण्यं नानुपपन्नमत आह—'**न चे**ति। 5 द्वेग्रामौत्[भ्रमौत् ? ] सर्गिकं प्रमाण्यं 'बाधकं' नैवोपपाद्यते, अत्र च नास्तीति भावः। बुद्धिरचेतना परिणामित्वादिति बाधकं शङ्कते—**परिणामित्वा**दिति। तर्हि बुद्धिर्न कर्ता परिणामित्वादिति कर्तृत्वमपि बुद्धितत्त्वस्य स्वाभाविकत्वे न स्यादिति परिहरति—**कर्तृत्वेऽपी**ति। न त्वहं जानेऽहं या[य ? ] त इत्यनुभवादिदमनुमानं बाधितमित्यमत आह—**दृष्टत्वा**दिति। चेतनोऽहङ्कारोमीत्यनु- 10 भवस्यापि सत्वादाह—**तुल्य**मिति। ननु बुद्धिर्न चेतना द्य[अ? ] चेतनकार्यत्वा दिति बुद्धावचैतन्यं साधकं स्यादिति शङ्कते—**अचेतने**ति। अत्र विशेष्यासिद्धिमाह—**ने**ति। तदेवाह—**न ही**ति। जायमानः सराग एव दृश्यते, एवं पूर्वपूर्वमित्यनादितैव कर्तुर्दृश्यते इत्याह—**प्रत्युते**ति। **यद्** **यच्चे**ति। यथा रागादिरहितापि प्रकृतिर्बुद्धौ रागादिकं जनयति, एवं चैतन्यरहितापि चैतन्यं जनये- 15 दिति भावः। बुद्धौ रागादिस्वीकारे दण्डमाह—**तथाचे**ति। 'सैव' प्रकृतिरेव, 'ते' रागादयः। 'तत्र' प्रकृतौ। **तथे**ति। सूक्ष्मरूपमित्यर्थः। **अप्रसिद्ध** इति 'अचेतनकार्यत्वादि'त्यत्र विशेषणासिद्धिरित्यर्थः। **तथासती**ति प्रकृतौ चैतन्ये सति तत्परिणामेषु **घटा**दिषु चैतन्यं स्यादित्यर्थः। 'तदात्म्यात्' कार्यकारणयोः। एवं सति रागादिम[दीनां ? ] बुद्धिकार्यत्वेन रागादयोऽपि 20 घटादौ स्युरित्याह—**रागादी**ति। ननु रागादयः सूक्ष्ममात्रया घटादौ सन्तीति यदि, तदा चैतन्यमपि तादृक् स्यादित्यत आह—**सूक्ष्मता चे**ति। तदेवमचेतनाया **अपि** प्रकृतेश्चेतना बुद्धिः स्यादित्युपसंहरति—**तस्मा**दिति। अप्रस्तुते चैतन्याश्रयस्यजन्यत्वमेव नास्तीति तज्जनकचिन्तायां क्व प्रस्ताव इत्यर्थः। द्वितीयं कारिकाप्रतीकं व्याचष्टे—**यदि चे**ति। **स्वरूपेणे**ति। कैवल्यात्मने- 25 त्यर्थः। **तदनुत्पत्तिदशाया**मिति। बुद्ध्यनुत्पत्तिदशायामित्यर्थः। **को नियन्ता** किंनिष्ठेनादृष्टेनपुनर्जन्मादि भवेदित्यर्थः। नतु[ नु ? ] प्रकृतिनिष्ठधर्मादिर्नियामकः स्यादित्यत आह—**प्रकृते**रिति। पुरुषाणामानत्यात् प्रकृतेश्चैक्यात् तत्तत्पुरुषभेदेन बुद्धेरसाधारण्यं तदुपधानानुपधाने एव पुंसः संसारा-

पवर्गाविति सांख्यसिद्धान्तादित्यर्थः। **असंसार** इति। जन्ममरणप्रबन्धाभाव इत्यर्थः। प्रकृतावेव तत्तत्पुरुषीयबुद्धिवासनायाः सत्वात् पुनः संसार इति शङ्कते—**पूर्वेति**। **बुद्धीति**। वासनाश्रयनाशे वासनासत्त्वमित्यभ्युपगमेऽपसिद्धान्त इत्यर्थः। **सौक्ष्म्यादिति**। स्फुटवासना बुद्धिनाशान्नश्यति, प्रकृतौ
5 तु सौक्ष्म्यानु[न्न?] नश्यतीत्यर्थः। **मुक्तावपीति**। तदानीमपि सूक्ष्मवासना सत्त्वात् संसारापत्तिरित्याह—**निरधिकारत्वादिति**। अधिकारो रागद्वेषमोहा धर्माधर्मौ वा। **साधिकारेति**। धर्मादिमती संसारदशायां, मुक्तिदशायां तु प्रसुप्तस्वभावा, धर्मादिशून्या बुद्धिरस्तु। सैवास्माकमात्मा, प्रकृत्यादिकल्पना तु निष्फलेत्याह—**तर्हीति**। प्रकृत्यादिप्रतिपादकश्रुतिविरोधं परिहरति—
10 **सैवेति**। **शारीरेति**। यथा शरीरे एक एव वायुः प्राणापानादिव्यापारवत्तया पञ्चसंज्ञक इत्यर्थः। **हेतुरिति**। अचेतनकार्यत्वरूपा इत्यर्थः। **असिद्ध** इति। विशेषणविशेष्योभयासिद्धे[रि?] ति भावः। स्वसिद्धान्तानुसारेण सांख्यमतं सङ्गमयति—**अधिकारेति**। 'अधिकारो' दोषस्त 'न्निवृत्त्या' तत्कार्यप्रवृत्तिरपैति। वासना धर्माधर्मरूपा, ज्ञानवासना संस्काररूपा, तदधीनो दोष इत्य-
15 भेदात्तथोक्तम्। अत्र कौटस्थ्यं नित्यत्वं, तथा च धर्मार्मादिनिवृत्तावपिनित्यस्यात्मनः कैवल्यमविरुद्धम्। **प्रत्यक्षेति**—अहमज्ञासिषमहं जानाम्यहं ज्ञास्यामीति धर्मस्यातीतत्वादिग्रहेऽपि धर्मिणोऽभेदेनैव प्रत्यभिज्ञानादित्यर्थः। ननु नीलः पट इत्यादिवत् अहं सुखी, जाने, यते इत्यादौ सामानाधिकरण्यमनुभूयते, तच्चात्यन्तभिन्नाद् गवाश्वादेरत्यन्त[ । ? ] भिन्नाच्च व्य[ा?] वर्त-
20 मानं भेदाभेदौ धर्मधर्मिणोः साधयिष्यतीत्याह—**न चेति**। आद्यद्वयं[—त्रयं?] भेदेऽपि, अन्त्यद्वयं[त्रयं ?] भेद एव, सम्बन्धमात्रमपि भेदेऽभेदे चेति नैतदनुरोधेनाभेदेऽपीत्यर्थः॥ १४॥

बोधनी

**एतेनेति**। भोक्तृसमवेतमेवापूर्वं भोगान्नियच्छति नान्यसमवेतमिति प्रतिपादनेनेत्यर्थः।

कथं निरस्तमिति दर्शयितुं तन्मतमेव तावदुपन्यस्यति—**एवं हि तदिति**।
25 तन्मते हि पुरुषो न किञ्चित् करोति न केन चित् क्रियते। यथाहुः—

'न प्रकृतिर्न विकृतिः पुरुषः' (सां०का० ३) इति। **कूटस्थचैतन्यस्वरूप** इति। **कूटस्थम्** अपरिणामिचैतन्यमेव स्वरूपं यस्य स तथोक्तः तदप्याहुः 'तद्विपरीतस्तथा च

पुमान्' (सां०का० ११) इति। अत्र चकारोऽप्यर्थः। व्यक्ताव्यक्ताभ्यामनेकत्वाकार्यत्वे साधर्म्येऽपि निर्गुणत्वचैतन्यादिभिस्ताभ्यां विधर्मेत्यर्थः। अपरिणामिन्यप्रतिसङ्क्रमा चितिशक्तिरिति कथं तस्याकारणत्वे सर्ग इत्यत्र कारणं तत्स्वरूपं चाह—**आदिकारणमिति**। सर्वमपि तया क्रियते, न तु सा केनचित्। तदाहुः—'मूलप्रकृतिरविकृतिः' (सां०का० ३) इति। अचैतन्यादेव परिणामित्वम्। तच्चाहुः—त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि। व्यक्तं तथा प्रधानम्' (सां०का०११) इति। 5

केन रूपेण तस्याः परिणाम इत्याह—**तदिति**। ततः प्रकृतेः। महदहङ्कारेन्द्रियतन्मात्रमहाभूतात्मनां त्रयोविंशतेस्तत्त्वानां सर्गः। यद्यपि प्रकृतेर्महान् महतोऽहङ्कार इत्यादिक्रमात् परिणामः, तथापि प्रकृतेर्मूलकारणत्वात् तत इत्युक्तम्। ननु पुरुषार्थाय हि प्रवर्तते प्रकृतिः, पुरुषार्थश्च भोगोऽपवर्गश्च, भोगो विषयानुषङ्गस्तद्वियोगश्च यैः पुरुष 10 उपयुज्यते विभज्यते च त एव शब्दादयः परिणामभेदाः सन्तु, कृतमितरेण महदादिपरिणामेन। न च विषयसम्बन्धार्थः तत्संसर्गः, नित्यचैतन्यरूपस्य पुरुषस्य स्वभावतः तत्सम्बन्धोपपत्तेरित्याशङ्क्याह —**न हीति**। चितिश्चैतन्यमात्ररूपः पुरुषः, यदि पुरुषस्वभावानुबन्धो विषयानुषङ्गो भवेत् ततः स्वभावस्यानुच्छेद्यत्वेनानिर्मोक्षः स्यादिति। तर्हि प्रकृतेरेवैष स्वभावोऽस्तु यद्विषयपाशैः पुरुषं बध्नाति **तत्राह—नापीति**। **तदीयत्वं** 15 तादर्थ्यं, तदीयभोगोपकरणसम्पादकत्वमिति यावत्। तत्स्वभावत्वे प्रकृतेर्नित्यत्वेन कदाचिदपि निरुपाधित्वानुपपत्तेरनिर्मोक्ष एव पुंस इति। तर्ह्यनित्यस्य घटादेर्विषयस्यैव चैतन्यसम्बन्धित्वस्वभावोऽस्त्वित्यत्राह—**नापीति**। विषयस्यैवाव्यवधानेन तदीयत्वं चेतनीयत्वं चैतन्यसम्बन्धित्वं स्वभाव इत्यभ्युपगमे यावत्सत्त्वं सर्वस्याप्यवभासप्रसङ्गात् कस्यचिद् दृष्टत्वं कस्यचिददृष्टत्वं कस्यचिन्नोपपद्येतेति। अस्तु तर्हि बाह्येन्द्रियपरिणामः, ततो 20 दृष्टादृष्टत्वव्यवस्थासिद्धेः कृतमन्तःकरणैरित्यत्राह—**नापीन्द्रियेति**। बाह्येन्द्रियमात्रद्वारा घटादेश्चैतन्यसम्बन्धाभ्युपगमे त्विन्द्रियसम्बद्धेऽपि क्वचिद् विषये कदाचिज्ज्ञानोत्पत्तेर्व्यासङ्गो विलम्बो दृश्यते, स न घटत इति। तर्हि तदर्थं मनोऽप्यङ्गीक्रियतां किमहङ्कारकल्पनयेत्यत्राह—**नापीन्द्रियमनोद्वारेति**। पूर्ववदत्रापि घटादिस्तदीय इत्यनुषञ्जनीयम्। कश्चिद्धि नरः स्वप्ने वराहोऽहं व्याघ्रोऽहमिति चात्मानं मनुते। तस्य नरस्यापिसतः, 25 नरत्वेविद्यमानेऽपीति यावत्। **नरत्वेनात्मोपधानं** नरोऽहमित्यभिमानो न दृश्यते। न तावदत्र बाह्येन्द्रियवृत्त्यभावान्नरत्वाभिमानानुदयः, जाग्रदवस्थायामपि तस्य तन्निरपेक्षत्वदर्शनात्। न च स्वप्नदशायां मनो न व्याप्रियते, तस्माद् विद्यमानेऽपि नरत्वे तदभिमाने च बाह्येन्द्रियनिरपेक्षे मनसि व्याप्रियमाणे च तस्मिन् यद्व्यापारविरही नरत्वाभि-

मानानुदयो भवति सोऽपीन्द्रियमनोऽतिरिक्तो नरत्वाभिमानहेतुरङ्गीकार्यः, स एवास्माक-महङ्कारपदाभिधेय इति। यद्वा, स्वप्नदशायां वराहाद्यभिमानविषयः कश्चिदभ्युपगन्तव्य इत्यर्थः। अन्येषां व्याख्या:—यदीन्द्रियं मनश्चोभयं द्वारं तर्हि यदा स्वप्ने मनोद्वारा विषयसम्बन्धः तदैवेन्द्रियद्वारेणापि स्यात्, ततश्च यथा तत्र वराहोऽहमिति मनसाभिमानः
5 तथेन्द्रियेण नरोऽहमित्यभिमानोऽपि भवेत्। न चासावस्ति, तस्मान्नोभयं द्वारमिति। सेयमसङ्गतत्वादनादर्त्तव्येति। नरत्वेनार्थोपधानाभावादिति केचित् पठन्ति। तत्र यथा वराहोऽहमिममर्थं जानामीत्यभिमन्यते तथा नरोऽहमिममर्थं जानामीत्यर्थोपधानं नास्ति। तस्मान्नियतविषयाभिमानव्यापारवानन्यः स्वीकर्त्तव्य इत्यर्थः। तर्ह्यहङ्कारोऽप्यस्तु कृतं महतेत्यत्राह—**नापी**ति। पूर्ववदनुषङ्गः सुषुप्त्यवस्थायामहङ्कारपर्यन्तेन्द्रियव्यापार-
10 विरामेऽपि शरीरधारणनिमित्तश्वासप्रश्वासहेतोः प्रयत्नसन्तानस्यानुवृत्तेस्तदतिरिक्तं किञ्चि-दस्ति यत् प्रयतमानं शरीरं बिभर्त्ति, स महानिति। तस्य महतः स्वरूपमुपसंहारव्याजेन दर्शयति—**तद् यदेतास्वि**ति। तत् तस्मान्न केवलं सुषुप्तौ किन्तु जाग्रत्स्वप्नसुषुप्त्य-वस्थासु सप्रयत्नं यदनुवर्त्तते यदाश्रयश्च स्मृतिहेतुः संस्कारस्तदन्तःकरणमुपारूढ इन्द्रियमनोऽहङ्कारव्यापारपरम्परया तत्र प्रतिफलित इति यावत्। तदाहुः—

15 एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति॥ (सां० का० ३६) इति।

**गुणविशेषाः** इन्द्रियाणि। गुणविकारत्वात् पुरुषस्य कृते विषयं परम्परया बुद्धौ प्रयच्छन्तीत्यर्थः। सोऽर्थः स्वच्छस्येव स्फटिकस्य लाक्षादिश्चैतन्यमात्रस्यात्मन उपरञ्जको भवति। अन्तःकरणसन्निधानात्तदारूढैः स भिन्न इव भातीति "यावदिति"
20 यदि बुद्धेरेव व्यापारो न चात्मनश्चेत् तस्य कथं तर्हि चेतने कर्तृत्वाभिमानः योऽहं जानामि स एव करोमीति, कथं वा कर्त्तरि चैतन्याभिमानः योऽहं करोमि स एव जानामीति, तत्राह—**भेदाग्रहादि**ति। कर्तृचेतनयोर्भेदाग्रहादन्यतरस्मिन्नन्याभिमानः। यथा नैयायिकानां शरीरात्मनोरिति। तच्चोक्तम्—

तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
25 गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ( सां० का० २० ) इति।

**लिङ्गं बुद्धिः**। प्रकृत्यनुमापकत्वात्, धर्माधर्मयोरप्यन्तःकरणमेवाश्रय इत्याह—**तत्रैवे**ति। यदि धर्मादयो बुद्धेर्गुणाः कीदृशस्तर्ह्यात्मेत्याह—**पुरुषस्त्वि**ति। **सर्वथे**ति। अनुभवतद्वासनातत्फलैः कर्मतद्वासनातत्फलैश्चेत्यर्थः। बुद्धितत्त्वस्यासाधारणं

व्यापारं दर्शयिष्यन् सर्वेषां तावत् कारणानां यथास्वमसाधारणान् व्यापारानाह— **आलोचनमिति**। संमुग्धवस्तुमात्रदर्शनमालोचनं, तच्च चक्षुरादीनामिदमिति बाह्य-प्रावण्यात्मकः परिणतिभेदः यत् नैयायिकैर्निर्विकल्पकमित्युच्यते। विकल्पस्तु संमुग्धदृष्टस्य विशेषणविशेष्यभावेन विवेचनं तन्मनसो व्यापारः। अभिमानः अहं जानाम्यहं करोमीत्यादि-रूपः, सोऽहङ्कारस्य। कृत्यध्यवसायः स बुद्धेरिति। नन्वीदृशः कृत्यध्यवसायः कृतिसम- 5
वायं विषयसम्बन्धं चैतन्यं वापेक्षते, स कथमनेवंविधाया बुद्धेर्धर्मो भवेदित्यत आह— **सा हीति**। तानेवांशान् विभजते—**पुरुषोपराग** इति। कथमेतत्त्रयं बुद्धेर्धर्म इत्याशङ्क्य संमुग्धमुदाहरणं दर्शयति—**भवति हीति**। भवतु, कथं तावता अंशत्रयसिद्धिरित्यत्र निष्कृष्यांशान् दर्शयति—**तत्रेति**। दर्पणमुखयोरिव बुद्धिचेतनयो-र्भेदाग्रहादेकत्वाभिमानः पुरुषोपराग इति। इदमा प्रतिनिर्दिष्टस्य विषयस्य यद्ग्राहिकेव 10
बुद्धिराभाति स चेतनोपराग इत्यर्थः। तेन मयेत्यभिमानः कथं बुद्धेर्धर्मः स्यादिति शङ्का निरस्ता भवति। चेतनोपरागश्चेतनसम्बन्धः, स च परिणामविशेषः, तत् कथं चेतनोऽ-परिणामी बुद्ध्या सम्भन्त्स्यत इत्यत्रोक्तं—**दर्पणस्येति**। कथं दूरस्थेन विषयेण बुद्धिरुपरज्यत इत्यत्रोक्तम्—**इन्द्रियप्रणालिकयेति**। सोऽपि किं स्वभावतश्चेतन इत्यत्राह—**पुरुषस्येति**। यद्वा, चेतनसामानाधिकरण्येनाध्यवसीयमानत्वादिच्छादयः 15
पुरुषधर्माः सन्तु, कृतं बुद्ध्येत्याह—**पुरुषस्येति**। इच्छादिरूपेणात्मनः परिणामे कौटस्थ्यं हीयेत, ततश्च परिणामिनो घटादिवदचैतन्यप्रसक्तिरिति भावः। तदेवं सांख्यमत-मुपन्यस्यैतेनैतन्निरस्तमिति पूर्वोक्तं स्मारयति—**तदेतदिति**। भोक्तृधर्म एव भोगनियाम-कोनान्यधर्म इति प्रागुक्तत्वान्निरस्तमिति। यथा निरस्तं तथाह—

**तथा हीति** कर्त्तुर्धर्माधर्मादयो भोगस्य नियामका इति तावदविवादं, चेतनश्च 20
कर्त्तैव नः प्रामाणिकानां कृतिचैतन्ययोः सामानाधिकरण्यात्। अन्यथाऽकर्त्तैव चेतनोऽचेतनैव बुद्धिः कर्त्री, तद्धर्मा एव भोगन्नियच्छन्तीति मते बुद्धिर्नित्याऽनित्या वा स्यात् पूर्वत्र पुंसो नापवर्गः स्याद् बुद्धिलक्षणोपाधेरनुच्छेदात्, उत्तरत्र तु नानुत्पन्नस्या-नित्यत्वमित्यनुत्पत्तिदशायां बुद्धितद्धर्माभावात्संसारप्रागभाव एव पुंसः। ततश्च कदाचिद्भोगः कदाचिन्मुक्तिरिति भोगनियमो नोपपद्येत। पूर्वं पुरुषान्तरापेक्षया भोगनियमानुपपत्तिरुक्ता, 25
इदानीं त्वेकस्यैव कालापेक्षया, तत्रोभयोरपि भोगनियमानुपपत्तित्त्वाविशेषान्निरस्तमित्युक्तम्। अत्रापि नित्यविभूनामात्मनां सर्वबुद्धिप्राप्त्यविशेषेण बुद्धिनियमाभावात् तदायत्तभोग-नियमानुपपत्तिरनुक्तसुलभेति भावः। **कृतिसामानाधिकरण्यव्यवस्थितेति**। कर्त्तृधर्मा इत्यर्थः। इदं त्वस्माभिरुच्यत इत्याह—**चेतनोऽपीति**। चैतन्यमपि

कर्त्तुरेवेत्यर्थः। नन्वयमनुभावो भेदाग्रहनिमित्तो भ्रम इत्युक्तं, तत्राह—**न चायमि**ति। नन्वस्ति बाधकं परिणामित्वं कर्त्तुः परिणामित्वादित्याह—**ने**ति। ततः किमित्यत आह—**तथा चे**ति। प्रयत्नोऽपि बुद्धेः स्वाभाविको न स्यादित्यर्थः। **शङ्कते दृष्टत्वादि**ति। बुद्धेः कृतिसमवायस्य मानसप्रत्यक्षसिद्धत्वात् न परिणामित्वा-
5 नुमानं कर्त्तृत्वं बाधत इति। तर्हि कृतिचैतन्ययोः सामानाधिकरण्यस्यापि दृष्टत्वात्कर्त्तुर-चैतन्यानुमानमपि बाधितविषयमित्याह—**तुल्यमि**ति। बाधकान्तरमाशङ्कते—**अचेतने**ति। अचेतनाया हि प्रकृतेः कार्या बुद्धिः, साऽचेतना स्यात्, चेतनभावे वा प्रकृतेरपि चैतन्यप्रसङ्ग इति भावः। **ने**ति। कर्त्तुः कार्यत्वमेवास्माकमसिद्धं, दूरत एवाचेतनकार्यत्वमिति। न परं कार्यत्वे प्रमाणाभावः किं च कार्यत्व एव प्रमाण-
10 मस्तीत्याह—**प्रत्युते**ति। जायमानाः प्राणिनः तावत्स्तन्यादिषु रागवन्तो दृश्यन्ते, रागश्च सुखसाधनानुमानात्, तदनुमानं च तज्जातीयलिङ्गपरामर्शात्, स च जायमान स्यास्मिन् जन्मनि न सम्भवतीति तदर्थं भावान्तरमास्थेयम्। एवं पूर्वेष्वपि भावेष्वित्य-नादित्वमेव कर्त्तुः सिध्यति। तदाह सूत्रकारो **'वीतरागजन्मादर्शनात्'** (न्या० सू० ३.१.२५) इति। अस्त्वचेतनकार्यत्वं बुद्धेः तथापि तस्याश्चैतन्यं, तच्चैतन्ये
15 कारणचैतन्यं च न प्रसज्यत इत्यनिष्टप्रसङ्गमुखेन दर्शयति—**यद्यदि**ति। यदि यावद्धर्मकं कारणं तावद्धर्मकं कार्यमिति स्यात्तर्हि बुद्धेरचैतन्यवद्रागादयोऽपि न स्युः, भावे वा प्रकृतावपि स्युः; तत्र कारणात्मकत्वमिति कारणधर्मत्वं विवक्षितमिति सन्तु रागादयः प्रकृतावित्यत आह—**तथा चे**ति। एवकारो भिन्नक्रमः। सा प्रकृति-र्बुद्धिरेव स्यात्, न तु प्रकृतिः। भावाष्टकसम्पन्नत्वं हि बुद्धिलक्षणमिति। **स्थूल-**
20 **रूपतामि**ति। प्रतीयमानभावाष्टकसंपत्तिर्बुद्धेर्लक्षणम्। प्रकृतौ तु रागादयः सूक्ष्म-रूपाः, ततो नोक्तदोष इति। तर्हि रागादिवच्चैतन्यमपि प्रकृतौ सूक्ष्मरूपमभ्युपगम्यता-मित्याह—**चैतन्यमपी**ति। ततः किमित्यत आह—**तथापी**ति। एवमप्यचेतन-कार्यत्वादिति हेतुर्विशेषणासिद्धः, सूक्ष्मचैतन्ययोगिप्रकृतिकार्यत्वादिति। ननु प्रकृते-श्चैतन्याभ्युपगमे तत्कार्याणां घटादीनामपि तथात्वप्रसङ्गः कार्यकारणयोस्तादात्म्यात
25 तथा चाचेतनकार्यत्वं सिद्धमित्याह—**तथा** सतीति। तर्हि प्रकृतौ रागाद्यङ्गीकारे घटादीनामपि तथात्वप्रसङ्ग इत्याह—**रागादिमत्त्वे**ति। घटादिष्वपि रागादयः सन्त्येव, सूक्ष्मत्वान्नोपलभ्यन्त इत्यत्राह—**सौक्ष्म्यं चे**ति। तर्हि चैतन्यमपि घटादिषु सदैव सूक्ष्मत्वान्नोपलभ्यत इति वक्तुं शक्यत इति। यद्वा, प्रकृतौ रागादेः सूक्ष्मत्वान्न घटादौ तत्प्रसङ्ग इत्याशङ्क्य तत्र सूक्ष्मचैतन्याभ्युपगमेऽपि न घटादौ चैतन्यप्रसङ्ग

इत्याह—**सौक्ष्म्यमिति**। यत एवं प्रसङ्गः तस्मात् कार्यकारणयोरेवं व्यवस्था न त्वनेवमित्याह—**तस्मादिति**। व्यभिचारात् कारणेष्वसतामेव धर्माणां कार्येषु दर्शनात् सतामेव चादर्शनादिति। प्रकृतमनुसरामः, किमनेन कार्यकारणयोः साधर्म्यवैधर्म्यनिरूपणेनेत्याह—**किमनेनेति**। तदेवं कृतिचैतन्ययोः सामानाधिकरण्यस्यावाधितत्वाच्चेतिता च स एव न इति सुस्थम्। तृतीयपादं सोपस्कारं व्याचष्टे—**यदि चेति**। तुरीयं व्याचष्टे—**अथेति**। को नियन्ता? नियतशरीरादिपरिग्रहे बुद्धेर्विलीनत्वाद्विद्यमानस्य चात्मनो निरतिशयत्वादिति। तर्हि नित्या प्रकृतिरेव नियन्त्री भविष्यतीत्यत्राह—**प्रकृतेरिति**। निरतिशयत्वेन तस्याः सर्वपुरुषसाधारणत्वादिति। नियन्तुरभावे किं स्यादत आह—**तथा चेति**। ननु विलीयमाना बुद्धिः स्वगतां धर्माधर्मरूपवासनां प्रकृतावाधाय विलीयते, अतो बुद्ध्याहितवासनानुवृत्तेः प्रकृतिरसाधारणी स्यादित्याह—**पूर्वबुद्धीति**। नायं धर्मधर्मिणोस्तादात्म्यवादिनः सांख्यस्य सिद्धान्त इत्याह—**बुद्धीति**। ननु स्थूलरूपनिवृत्तावपि सूक्ष्मरूपा बुद्धिरवतिष्ठते, ततः सर्वथा विनाशाभावादतः, तदाश्रयवासनानुवृत्तेर्नापसिद्धान्तदोष इत्याह—**सौक्ष्म्यादिति**। यदि सूक्ष्मरूपावस्थितयैव बुद्ध्या भोगनियमो भवेत् तर्हि मुक्तावपि तथावस्थितयैव तया भोगप्रसङ्ग इत्याह—**मुक्तावपीति**। नन्वनुवर्त्तमानापि बुद्धिर्मुक्तौ कर्मवासनारहितत्वान्न पुनः संसारहेतुरित्याह—**निरधिकारित्वादिति**। यदि सत्यामपि बुद्धावधिकारायत्तः संसारः, अत एवाप्रसुतस्वभावात् तत्तत्कार्यपरिणामोन्मुखी बुद्धिरेव प्रवृत्तिरस्तु, तथाधिकारवत्या बुद्धेरेव तत्तदभिमानादिव्यापारमाश्रित्यहङ्कारादिव्यपदेशोऽस्तु, किं व्यापारवद्धर्मिभेदकल्पनाप्रयासेनेत्याह—**तर्हीति**। प्रकृत्यादिशब्दानामेकार्थत्वे तद्भेदप्रतिपादक आगमो विरुध्येत "अजामेकाम्" इत्यादिः। तथा—

> "दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
> भौतिकास्तु शतं पूर्णं सहस्रं चाभिमानिकाः।
> बौद्धादशसहस्रं हि तिष्ठन्ति विगतज्वराः" इति।

तत्राह—**सैव हीति**। यथैकस्यैव शरीरान्तवर्त्तिनो वायोरूर्ध्वाधोगमनादिविशेषणात् प्राणापानादिव्यपदेशः तथैकस्या एव बुद्धेस्तत्तद्व्यापारभेदात् प्रकृत्यादिव्यपदेश इत्यागमोऽपि संगंस्यत इति। अस्तु तर्हि बुद्धेरेव प्रकृत्यादिभावस्ततः किमित्यत आह—**अतोऽपीति**। बुद्धेरेव प्रकृतित्वोपपादनादप्यचेतनकार्यत्वादिति हेतुरसिद्धस्तस्याः कार्यत्वाभावादिति। बुद्धेरेव संसारापवर्गादिवमेव चेत्याह—**अधिकारेति**। कोऽयमधिकार इत्यत्रोक्तं **वासनायोगः**—इति। सा वासना च कर्मजन्यौ धर्माधर्माविति।

यदि बुद्धेरेव संसारापवर्गौ सैव पुरुषः स्यात्, तस्य च कूटस्थनित्यस्य कथं ज्ञानादिविकारः, विकारे वा कथं कूटस्थत्वमित्याशङ्क्याह—**धर्मधर्मिणो**रिति । यद्वा, कर्त्रैव चेतन इत्युक्तं, तत्र चेतनस्य विकारत्वेन कूटस्थनित्यताविरोध इत्याशङ्क्याह—**धर्मधर्मिणो**रिति । न हि भिन्नस्य धर्मस्योत्पादविनाशाभ्यां धर्मिणः कूटस्थत्वं विरुध्यत इति । भेद एव कुत 5 इत्यत आह—**भेदश्चे**ति । अहं जानामि ज्ञास्याम्यज्ञासिषमित्यतीतानागतवर्त्तमानज्ञानानुगतः पुरुषोऽहमास्पदमनुभूयत इति प्रत्यक्षमेव भेदे प्रमाणमिति । तथापि धर्मधर्मिणोर्गौरोऽयं शुक्लोऽयमिति सामानाधिकरण्यप्रतीतिदर्शनात्तस्याश्चात्यन्तभिन्नयोर्घटपटयोरदर्शनादभेदोऽप्यस्त्वित्याशङ्क्य सामानाधिकरण्यं यथासंभवं विकल्प्य सर्वथैतद् भेदस्यैव साधकमित्याह—**न चे**ति । अनेकापेक्षया हि किञ्चिदेकं साधारणं भवति, न त्वेकस्यैवैकम् । सुगममन्यत् । 10 न चातिप्रसङ्गः, कार्यकारणाभिधेयाभिधायकविषयविषयिभाववत् स्वभावत एव सामानाधिकरण्यनियमोपपत्तेरिति भावः । तस्मादात्मनो ज्ञानाद्यनित्यधर्मकत्वे दोषकणोऽपि नास्तीत्युपसंहरति—**तस्मात्सर्वमवदातम्**—इति ॥१४॥

विवेकः

तत्र भोग एव न, पुष्करपलाशवन्निर्लेपत्वात्तस्येति **सांख्य**प्रत्यूहमपाकर्तुं तन्मतमुत्थापयति—**एतेने**ति । भोगापूर्वयोरचेतनधर्मत्वव्युत्पादनेनेत्यर्थः । तद्व्युत्पादने 15 तन्निरासानुपपत्तेस्तद्विशदयति—**एवमि**ति । प्रकृतेर्व्यवच्छिनत्ति—**अकारण**मिति । महदादितो व्यावर्त्तकमाह—**अकार्य** इति । अकारणत्वोपपादकं श्रुतिसिद्धं जन्यानाश्रयत्वरूपं कौटस्थ्यमाह—**कूटस्थे**ति । कूटस्थो नित्य इत्यर्थे तु अकार्यत्वोपपादकमपि तत्र मानमाह—**चैतन्यरूप** इति । स्वप्रकाश इत्यर्थः । तस्याकारणत्वेऽपि संसारमुपपादयितुमाह—**आदी**ति । आदेर्निखिलकार्यप्रथमोत्पन्नस्य महत्तत्त्वस्य कारणं तेन 20 महदादितो व्यवच्छेदः । कारणमित्येतावता पुरुषाद्यवच्छिन्नत्वेऽपि व्यवच्छेदकान्तरमाह—**अचेतने**ति । अत्र हेतुमाह—**परिणामिनी**ति । तथा च परिणामित्वाद् घटवदचेतनत्वमनुमेयमिति भावः । तत्र प्रकृतौ मानमाह—**तत** इति । प्रकृतेरित्यर्थः । तथा च महदादिलक्षणं कार्यमेव मानमत्रेति भावः । आदिपदादहङ्कारपञ्चतन्मात्राणां परिग्रहः । अतएव "प्रकृतेर्महान् महतोऽहङ्कार(?)पञ्चतन्मात्राणी"ति तत्सिद्धान्त इति 25 भावः । ननु नित्यमेव चैतन्यं साक्षाद्विषयसम्बद्धमस्तु, किम्महदादिप्रणाल्या इत्याशङ्क्य निषेधति—**न ही**ति । चितिः पुरुषात्मकं चैतन्यं विषयबन्धनस्वभावा विषयसम्बन्धस्वभावा । **अनिर्मोक्षे**ति । चितेः सार्वदिकत्वेन सर्वदैव चितेः

पुरुषस्य विषयसम्बन्धे मोक्षो न स्यादित्यर्थः । तयोरनित्यसम्बन्धोपगमे तु आवश्यको महदादिसर्ग इति भावः । **नापी**ति । प्रकृतिरेव साक्षाद्विषयसम्बन्धस्वभावा, चितिश्च तत्सम्बधेनैव तत्सम्बद्धेति न तदप्रकाश इति भावः । चितितत्सम्बन्धयोर्नित्यतया सर्वदैव चितेर्विषयोपधाने तथाप्यनिर्मोक्ष इत्याह—**तथापी**ति । प्रकृतिरेव साक्षाद्विषयसम्बद्धा तस्याश्च नित्यत्वेन प्रकृत्यात्मकतत्सम्बन्धस्यानिर्मोक्षापात इति भावः । 5
ननु विषय एव चैतन्यसम्बन्धभावः, तस्य च यावत्सत्त्वं तादृशस्वभावत्वेऽपि तन्निवृत्तौ तत्स्वभावस्यापि निवृत्तेर्नानिर्मोक्ष इत्यभिप्रायेणाह—**नापि घटादिरेवे**ति । आहत्य साक्षात् चितिसम्बधः । **दृष्टादृष्टे**ति । इदं दृष्टमिदं न दृष्टम्, इदमिदानी दृष्टं न तदानीमिति वा यो व्यवहारः स न स्यात्, यावत्सत्त्वमेव विषयस्य चैतन्यसम्बन्धस्वभावादिति भावः । **नापीन्द्रिये**ति । वहिरिन्द्रियेत्यर्थः । इन्द्रियं विषयसम्बद्धं तदेव चिति- 10
विषययोः सम्बन्धः तन्निवृत्तौ विषयाणां चितिसम्बन्धाभावात् मोक्षः स्यात् इत्यर्थः । **व्यासङ्गे**ति । तदापत्तेरित्यर्थः । वहिरिन्द्रियाणि स्वविषयसम्बद्धानि तत्सम्बद्धा च चितिः, तत्सम्बन्धेन चितिसम्बन्धत्वे एकदा सर्वेषां तद्विषयाणां प्रकाशप्रसङ्गः, न त्वेकतरस्यैवेत्यर्थः । **नापीन्द्रियमनोद्वारे**ति । चितिसम्बद्धमनःसंयुक्तेन्द्रियसम्बद्धो विषय इत्यनया परम्परया चितेर्विषयसम्बन्ध इत्यर्थः । **वराहे**ति । तत्र हि नरत्वस्य तादृशसम्बन्धेन 15
चितिसम्बन्धस्य न प्रकाशः, प्रकाशश्च वराहत्वादिनैव । तथा च यतो नरत्वाप्रकाशः, व्याघ्रत्वादिना च तेन सम्बन्धेनार्थस्याध्यारोपस्तादृशः कश्चिदुपेयः, तस्यैवाहमित्यभिमानजनकत्वाचाहङ्कार इति नात्मेति भावः । बुद्धितत्त्वं साधयति—**नाप्यहङ्कारे**ति । तद्व्यापारविरामेऽपि उक्तानामहङ्कारपर्यन्तानां व्यापारविरामेऽपि । **श्वासे**ति । जीवनयोनियत्नावस्थानादित्यर्थः । न च स मनोव्यापार एवास्त्विति वाच्यं, मनोव्यापारप्रयत्नस्य 20
इच्छाजन्यत्वनियमादिति भावात् । तथा च जीवनयोनियत्नव्यापारकत्वेन तदुपेयमिति सिद्धम् । तस्येतरविलक्षणं तद्धर्मान्तरमपि वर्णयन्नुपसंहरति—**तस्मादि**ति । एतासु जागरस्वप्नसुषुप्तिदशासु सव्यापारं श्वासप्रश्वासजनकप्रयत्नवत् एकं लाघवसहकारेण एकत्वेन सिद्धम् अनुवर्त्तते, अननुवर्त्तने तु निरुक्तव्यापारानुवृत्तिर्न स्यादिति भावः । अनुभववासना अनुभवरूपा वासना सूक्ष्मरूपेणैवावस्थितस्यानुभवस्य स्मृतिजनकत्वमिति तत्सिद्धान्तादिति 25
वैधर्म्यान्तरमाह—**तदि**ति । तत् महत्तत्त्वाख्यमन्तःकरणम् उपारूढः तत्समवेतवृत्तिरूपज्ञाने विषयतया सम्बन्धः पुरुषस्य निर्लेपस्यापि आत्मन उपधानीभवति सम्बन्धो भवति । तथा च तथाविधपरम्परासम्बन्धेनैव यदा पुरुषस्तत्सम्बद्धस्तदा संसारी, तादृशसम्बन्धापगमेन तदसम्बद्धे च मुक्त इति ध्येयम् । ननु कृतिरूपव्यापारत्वात् बुद्धितत्त्वमेव कर्तृ, तथा

च पुरुषः कर्त्तेति कथमभिमान इत्यत्राह--**निष्क्रियेऽपी**ति। निर्द्धर्म्मिकेऽपीत्यर्थः। पुरुषे कर्त्रभिमानमुक्त्वा कर्त्तरि पुरुषाभिमानमाह--**तस्मिन्नि**ति। बुद्धितत्त्व इत्यर्थः। परस्परस्मिन् परस्पराध्यास इति सिद्धम्। ननु धर्माधर्मयोः कृतिसामानाधिकरण्ये तावपि तत्रैव स्यातामित्यत्रेष्टापत्तिमाह--**तत्रैवे**ति। बुद्धितत्त्व एवेत्यर्थः। ननु परस्परस्मिन्
5 परस्पराध्यासो भ्रम इत्युक्तं, तस्य च बाधकं विना कुतो भ्रमत्वमित्यत्राह--**पुरुषस्त्वि**ति। तथा च निर्द्धर्म्मकत्वबोधिका श्रुतिरेव तद्भ्रमत्वव्यवस्थापिकेति भावः। **निर्लेप** इति। लेपोऽपूर्वतत्फले, तच्छून्ये इत्यर्थः। इन्द्रियादीनां व्यापारतो भेदकानाह--**आलोचन**मिति। निर्विकल्पकमित्यर्थः। इन्द्रियाणां बहिरिन्द्रियाणां तत्सन्निकर्षेण तस्यैव साक्षात् जननादिति भावः। विकल्पः सविकल्पकं, व्यापार इत्यनुपज्यते, एवमग्रेऽपि।
10 तेषामेवैकदाऽनुपपत्तिरूपव्यासङ्गेन मनसः सिद्धेर्निर्विकल्पकानान्त्वतीन्द्रियाणां युगपदुत्पादस्यापि सविकल्पकतया तथात्वेनैव कल्पनीयत्वादिति भावः। अभिमानः नरोऽहं व्याघ्रोऽहमित्याद्यहमाकारोऽनुभवः, तन्नियामकत्वेनैव प्राक् तस्य साधितत्वादिति भावः। कृत्यध्यवसायः मयेदं कर्त्तव्यमित्याकारोऽनुभवः। बुद्धेर्बुद्धितत्त्वस्य भावाष्टकसम्पन्नतया तत्रैव कृतेरुदयादिति भावः। ननु मयेदं कर्त्तव्यमित्यस्य कृतिविषयस्य घटादेर्मत्कृतिसाध्यत्वं विषयः,
15 मयेत्यस्य पुरुषेणेत्यर्थः। एतच्चानुपपन्नं पुरुषस्य निर्द्धर्म्मकत्वेन तत्र कृतिवृत्त्याख्यज्ञानयोरसम्बन्धात्, तथात्वे च घटादिना चैतन्यस्य सम्बन्धाभावात् कथं प्रकाशः, वृत्तिरूपबुद्धेर्जड़त्वेनाप्रकाशत्वादित्याशङ्कायामाह--**सा ही**ति। सा वक्ष्यमाणकृत्यध्यवसायरूपा, हिर्हेतौ, यत एवंरूपा, अतो नानुपपत्तिरिति बोधायाह--**अंशत्रयवती**ति। पुरुषोपरागः पुरुषवैशिष्ट्यं, विषयोपरागः स्वनिष्ठव्यापारविषयस्य घटनीलादेर्वैशिष्ट्यं, व्यापारावेशः स्वव्यापारस्य
20 कृतेर्वैशिष्ट्यम्। आकारोपदर्शनेनांशत्रयं घटयति--**भवति ही**ति। तत्र तेपूपरागेषु मध्ये दर्पणस्य दर्पणवृत्तिधर्मे मुखोपरागः मुखतादात्म्यं भेदाग्रहात्तादृशभ्रमविषयतामापन्नः, अतएवातात्त्विकः। अत्र च महत्तत्त्वं दर्पणस्थानीयं, तन्निष्ठश्च धर्मो वृत्तिरूपं ज्ञानं, तत्र चैतन्यस्याभेदारोपात् स्वाभेदारोपविषयज्ञानसम्बन्धेन चैतन्यस्य घटप्रकाशकत्वं, चैतन्याभेदारोपविषयत्वादिति भावः। प्रकृते च दर्पणस्थानीयं महत्तत्वं, निःश्वासश्चेतना,
25 भेदाग्रहः अभिहननं, तेन सम्बन्धेनारोपः, मलिनिमस्थानीयं वृत्तिरूपज्ञानम्। **एतदुभये**ति। विषयोपरागलक्षणज्ञानयोः स्वाश्रयाभेदारोपविषये पुरुषवैशिष्ट्यं भासते इति तदुभयायत्तता। बुद्धिज्ञानोपलब्धयस्तन्नये भिन्नभिन्ना इति दर्शयति—'एवंरूपव्यापारलक्षणायाः' निरुक्तकृत्यध्यवसायरूपो व्यापारो लक्षणं व्यावर्त्तकं यस्यास्तद्रूपायाः। एतेन ज्ञानोपलब्धिभ्यां भेदो दर्शितः। विषयस्य घटादेश्चैतन्येन समं य उपरागः सम्बन्धस्तल्लक्षणं तत्स्वरूपं

तेन ज्ञानेन पुरुषोपरागस्य उपरक्तपुरुषस्य बुद्धितत्त्वे अभेदारोपविषयस्य पुरुषस्येति यावत्। **दर्पणे**ति। बुद्धितत्त्वं दर्पणं, मुखमात्मा, दर्पणमलिनिमा च बुद्धितत्त्वनिष्ठं ज्ञानं, तत्र मुखं मलिनमितिवत् तत्र चेतनोऽहं जानामीति। ननूक्तप्रणाल्या ज्ञानं बुद्धेरेवास्तु, अहं सुखी अस्मीति प्रतीतिबलात् सुखादयः पुरुष एव सन्तु? तथा च कूटस्थश्रुतिविरोध इत्याशङ्कायामुपसंहरति—**तदेवमि**ति। एवं ज्ञानस्य बुद्धिनिष्ठत्वव्य- 5
वस्थितौ अष्टौ धर्म्मा ज्ञानेच्छाकृतिद्वेषसुखदुःखधर्माधर्मरूपाः, तन्नये संस्काराभावात् तत्सामानाधिकरण्येन ज्ञानसामानाधिकरण्येन कृतिसामानाधिकरण्येन इति **केचित्**। 'असति बाधक' इति विशेषणान्न व्यभिचारः। अध्यवसीयमानत्वात् ज्ञायमानत्वात्। **न चे**ति। तथा च न व्युत्पादितारोपसम्भ[व] इति भावः। अनुकूलतर्कमाह—**पुरु-षस्ये**ति। तथा च कूटस्थताप्रतिपादिका श्रुतिरेवात्रानुकूलतर्क इति भावः। 'प्रागेव' 10
दूरे निरस्तम्, वक्ष्यमाणयुक्त्या। **केचित्तु** प्रागेव पूर्वमेव 'प्रत्यात्मनियमाद्भुक्ते' रित्यादिना निरस्तमित्यर्थमाहुः।

कर्तृधर्माः कृतिसमानाधिकरणाः अदृष्टरूपा नियन्तारः प्रतिनियतभोगसाधनानीति तवैवास्माकञ्च मतमिति पूरणीयम्। विशेषमाह—**चेतिते**ति। कर्त्तैव चेतिता पुरुषः, असति बाधके तत्रैवाध्यवसीयमानत्वादिति हेतुः। अन्यथा पुरुषधर्माधर्मयोरनुपगमे 15
अन्यनिष्ठस्यादृष्टस्यैवान्यसंसारहेतुत्वे कस्याप्यपवर्गो न स्यात्, यस्य कस्यचित् महत्तत्त्वस्य वा निवृत्तौ अपवर्गे सर्वस्यैवापवर्गापत्तिः। न च तदीयमहत्तत्त्वनिवृत्तिस्तस्यापवर्ग इति वाच्यं, दृष्टं विशेषं विना तदीयतानियामकसम्बन्धस्य दुर्वचत्वात्। न च यस्य यत्र भेदाग्रहः प्रागुक्तस्तदुच्छेदेनैव तस्यापवर्ग इति वाच्यं, तत्रैव तस्यातथाविधो भेदाग्रह इत्यत्रापि नियामकाभावात्, महत्तत्त्वस्य सादितयापि न परीहारः। धर्मादावित्यादिपदाद्- 20
धर्मग्रहणं, व्यक्त्यपेक्षया च बहुवचनमपेक्षाबुद्धिचिकीर्षादीनामप्यादिपदग्राह्यत्वे तदपेक्षया तदिति **केचित्**।

चेतनोऽपि चेतन एव, तेनाचेतने तादात्म्येन कर्तृव्यवच्छेदो लब्धः, कर्त्तैव नाकर्त्ता, तेन विशेषणसङ्गत्या चेतनत्वावच्छेदेन कर्त्रन्यत्वव्यवच्छेदो लभ्यते। **कृती**ति। कर्त्ता चेतनो वा, चेतनः कर्त्ता वा, चैतन्यप्रकारिकायाः कर्तृत्वप्रकारिकाया वा प्रमितेर्विषय- 25
त्वात्, चेतनवत् कर्तृवद्वेति प्रयोगः। स्वरूपासिद्धिं शङ्कते—**न चे**ति बाधकमाह—**परिणामित्वादि**ति। कर्त्ता न चेतनः परिणामित्वादित्यर्थः। **न कर्तृत्वेऽपी**ति। बुद्धितत्त्वत्वेन भवदभिमतं कर्तृपरिणामित्वादित्यपि स्यादित्यर्थः। ततः किमित्यत्राह—

**तथाचे**ति। स्वाभाविकी' तात्त्विकी। बाधं शङ्कते—**दृष्टत्वादि**ति। कृत्याश्रयत्वेन बुद्धेरनुभवसिद्धत्वादित्यर्थः। अयं प्रतिबन्दितया उक्तो हेतुः, न दोषः नास्मदनुमाने दृष्टान्ततयाऽप्रयोजकत्वशङ्काप्रसञ्जकः। **तुल्यमि**ति। कर्त्तुरपि चेतनत्वेनानुभवसिद्धत्वात् तत्र तदभावसाधने बाध इत्यर्थः। बाधकं कर्त्तुश्चैतन्याभावसाधकम्। **अचेत**नेति। अत्र
5 कार्यत्वमेव विवक्षितम्। 'अचेतने'ति तर्कस्फोरणाय। अत्रानुकूलतर्कमाह—**कार्य-कारणे**ति। अकर्तृकार्यत्वादकर्तृत्वमपि सिद्ध्येदिति प्रतिबन्दिसत्त्वेऽपि मूलदोषमाह—**नासिद्धेरि**ति।

साधकाभावमुक्त्वा बाधकमाह—**प्रत्युते**ति। **वीतराग** इति। वीतरागस्य नीरागस्य जन्म न दृश्यते, अपि तु सरागस्यैव जन्म। स च राग इष्टसाधनताधीसाध्य
10 उपायेच्छात्वात्। न च तदानीं स्तनपानादेरिष्टसाधनतानुभावकसामग्र्यस्ति इति स्मरणं वाच्यं, तच्च संस्कारजन्यं, स च जन्मान्तरोत्पन्न एव वाच्यः, एवं पूर्वपूर्वजन्मन्यपि स्वीकारे अनादितायां पर्यवसानमित्यर्थः। तस्य तज्जातीयस्य कारणात्मकत्वे कारणवृत्तित्वे। अत्रेष्टापत्तावाह—**तथा चे**ति। सैव प्रकृतित्वेन भवदभिमतैव बुद्धिर्महत्तत्त्वं, न तु प्रकृतिः, न बुद्ध्युत्पादिका। **भावे**ति। ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखधर्माधर्मास्तदष्टकम्।
15 एतदेव तैर्ज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यधर्माधर्मरूपमुच्यते। तत्र द्वेषेच्छे वैराग्यावैराग्ये सुखदुःखे ऐश्वर्यानैश्वर्ये कृतिश्च स्वकारणीभूतेच्छाकारणज्ञानासमानकारणतया अज्ञान मिति ध्येयम्। यद्यप्येतेषामन्यतमस्यैव हेतुत्वं सम्भवति, तथापि सर्वेषामेव प्रत्येकं हेतुत्वसम्भवप्रदर्शना'याष्टके'त्युक्तम्। यद्वा एकतमस्य हेतुत्वे अन्येषां पक्षे सन्देहे तदधीनं सन्दिग्धोपाधित्वं मा प्रसाङ्क्षीदिति तेषामपि पक्षवृत्तिताबोधनाय तथाभिधानम्।
20 अत्र स्थूलतदन्यतमत्वस्योपाधित्वं शङ्कते—**स्थूलतामि**ति। अत्र प्रकृतौ। तथाच साधनाव्यापकत्वं पक्ष एवेति भावः। तथा सूक्ष्मतया प्रकृतिवृत्ति। इष्टापत्तावाह—**तथापी**ति। तथाचेत्यर्थः। हेतुः अचेतनकार्यत्वम्। ननु प्रकृतेश्चैतन्ये तत्परिणामतया तदभिन्नानां घटादीनां चैतन्यं स्यादिति शङ्कते—**तथासती**ति। रागादिमत्त्वे तत्परिणामस्य घटादे रागादिमत्त्वमपि स्यादित्याह—**रागादी**ति।
25 घटादीनमित्यनुषज्यते। **सौक्ष्म्यश्चे**ति। घटादीनां सूक्ष्मं रागादिकमस्ति। तथाच तदापादने इष्टापादनमित्यर्थः। **समानमि**ति। तथा चैतन्यापादनेऽपि तथैव इष्टा-पादनमित्यर्थः। उक्तापादनेऽप्रयोजकत्वमाह—**तस्मादि**ति। यज्जातीयात् यज्जातीयधर्मकात्। 'यज्जातीयं' यज्जातीयधर्मकम्। **व्यभिचारादि**ति। धर्मसामान्यनिरूपितव्याप्तौ कपालजन्ये घटेऽकपालात्मके आगन्तुकधर्मनिरूपितायां तत्र सक्रियारब्धे निष्क्रिये गुणनिरूपितायाञ्च

विरुद्धगन्धरसवदारब्धे व्यभिचारादित्यर्थः। वक्ष्यमाणयुक्त्याऽजन्यत्वमेव रागादिमतोऽसिद्धमित्यभिप्रेत्याह—**किमनेनेति**। कारिकाया द्वितीयार्द्धं व्याकरोति—**यदि चेत्या**दिना। 'सोपाधित्वे' बुद्धिसम्बन्धेन विषयोपरक्तत्वे। 'स्वरूपेण' विषयानुपरागेण। विलीयते च बुद्धिः, अनादेर्भावस्य, आदिमत्त्वे च बुद्धेः। तस्या **बुद्धेरनुत्पत्तिदशायां को नियन्तेति**। एतस्यैव पुरुषस्य इयं बुद्धिर्विषयोपरागरूपा नान्यस्येत्यत्र किं नियामकं, 5 पुरुषस्य निर्द्धर्मकत्वात्, प्रकृतेरेकतयाऽनियामकत्वात्, बुद्धेरेव तदानीमसत्त्वेनादृष्टस्य तन्निष्ठस्य नियामकत्वासम्भवादित्यर्थः। **पूर्वेति**। पूर्वबुद्धिनिष्ठाया वासनाया उत्तरबुद्धेस्तत्पुरुषीयतानियामिकाया अनुवृत्तेः सत्त्वात् प्रकृतेः 'साधारण्येऽपि' बुद्धिरसाधारणी तत्पुरुषीयैव। नन्वाश्रयनिवृत्त्या स्फुटतयैवाश्रितन्निवर्त्तते, न तु सूक्ष्मतयापि। तथा च निवृत्तावपि पूर्वस्यावस्थिततद्वासनाया नियामकत्वं स्यादित्याह—**सौक्ष्म्यादिति**। 10 अयमसंसाररूपो दोषः, स न। **मुक्तावपीति**। तदानीमपि सूक्ष्मतया वासनानुवृत्तिरिति भावः। 'प्रवृत्तिः' संसारः। 'निरधिकारत्वात्' तत्त्वज्ञानेन सूक्ष्मताया अपि वासनाया निवृत्तित्वात्। 'नैवं' न पुनः संसारः। 'साधिकारा' संसारदशायां वासनावती, मुक्तिकाले 'प्रसुप्तस्वभावा' तत्त्वज्ञानेन सुप्तवासना बुद्धिरेव प्रकृतिर्नित्यास्तु, 'कृतं' व्यर्थम्। **अर्थान्तरेति**। प्रकृतिनिष्ठकार्यकारणभावनिरूपकमर्थान्तरं, तत्र प्रकृतिः 15 कारणं कार्य्येऽहङ्कारमनसी, इत्थं 'कल्पनया'। यथाश्रुते मनःपदस्यार्थान्तरवत्तयास्माभिरप्युपगमादसङ्गत्यापत्तेरिति **केचित्**। वस्तुतस्तु अस्त्वित्यस्य त्वन्मत इत्यादिः। विभुत्वेऽपि बुद्धेः करणस्वभावेन व्यासङ्ग उपपद्यतामिति हृदयम्।

'सैव' बुद्धिरेतद्वदिति बौद्धव्याकारकत्वाद् बुद्धिः, अहमिति प्रमाविषयत्वात् अहङ्कारः, निखिलप्रपञ्चमूलत्वात् प्रकृतिः, सुखादिकरणत्वाच्च मन इत्यर्थः। **शारीरेति**। 20 यथा एक एव वायुःप्राणनादियोगात् प्राणादिपञ्चसंज्ञाभागित्यर्थः। 'आगमः' बुद्धिप्रकृत्यहङ्कारमनसां पार्थक्यप्रतिपादकः। पूर्वं प्रमाणाभावादसिद्ध इत्युक्तम्, इदानीं बाधकादपि तथेत्याह—**इतोऽपीति**। हेतुरचेतनकार्यत्वरूपः रागादिमति स्वरूपासिद्धः। नित्यतायां बुद्धौ मोक्षबन्धौ व्युत्पादयति—**अधिकारनिवृत्त्या चेति**। मिथ्याज्ञानवासनानिवृत्त्येत्यर्थः। 'अप्रवृत्तिः' तदधीनात्यन्तिकी दुःखनिवृत्तिः, 'वासनायोगः' 25 समवायेन तद्वत्त्वं, तेन विषयतया अन्यसमवेतवासनावत्त्वेऽपि न संसारः, 'ततः' मिथ्याज्ञानवासनायाः 'संसारः' धर्माधर्मयोरुत्पादः। एतेन जीवन्मुक्तस्य भोगार्थं विहितनिषिद्धचरणेऽपि नादृष्टान्तरोत्पत्त्या मुक्तिविरोध इत्युक्तम्। एतावता बुद्धिरेव पुरुषः तत्रैव च भावाष्टकमिति सिद्धम्, कार्य्यरूपेण तस्य नाशे नित्यत्वविरोधात्।

कौटस्थ्यश्रुतिविरोधमाशङ्क्याह—**धर्मेति**। तथा च धर्मस्यैव तत्र नाशो न तु धर्मिण इति न विरोधः। **अत्यन्तेति**। भेदाभेदनिरासाय विरुद्धधर्माध्यास एव लक्षणं ज्ञापकं यस्य स तथा। **घटपटादिवदिति**। षष्ठ्यन्ताद्वतिः, अध्यक्षेणेच्छे-त्याद्यध्यक्षेण इत्यर्थः। अत्यन्तपदेन सूचितमर्थं साधयति—**न चेति**। ननु नीलः पट [इति ?]वदहं
5 प्रिय इति सामाण्याधिकरण्यानुभवात् सुखात्मकत्वमपि स्यादित्याशङ्क्य निषेधति—**न चेति**। **तद्धीति**। प्रथमे सामान्यस्य एकानुपूर्वीकस्य वाच्यतयाधिकरणत्वं, द्वितीये एकस्य ज्ञानस्य विषयतया तत्त्वं, तृतीये तु समानम् एकमधिकरणं यस्य तत्त्वं समानस्य एकस्याधिकरणत्वं वा, चतुर्थे समानस्यैकस्य एकनिरूपिताधारत्वस्याधेयत्वस्य वान्यस्याधि-करणत्वं, पञ्चमे एकस्य एकनिरूपितविशेषणत्वस्य विशेष्यत्वस्य वा अपरस्य तादृशत्व-
10 स्याधिकरणत्वं, यद्वा एकस्य सम्बन्धत्वस्य एकप्रतियोगिकसंयोगसमवायान्यतरस्य अधिकरणत्वम्। **भेदेऽपीति**। आद्यत्रयं भेदेऽपि, अन्त्यत्रयं भेद एव उपपद्यमानम-भेदं न व्यापकतया स्पृशति। नाभेदव्याप्यं निरुक्तं किञ्चिदपि त्रयं व्यभिचारि, त्रयञ्च विरुद्धमिति भावः। भिन्नप्रवृत्तिनिमित्तयोरेकार्थे वृत्तिरूपञ्च सामानाधिकरण्यं प्रियात्मपदयोः शक्त्याऽसिद्धं लक्षणया च व्यभिचारीति ध्येयम्। अन्योन्याभावत्वम्
15 अव्याप्यवृत्ति अभावविभाजकोपाधित्वात् संसर्गाभावत्ववदिति चाप्रयोजकं संयोगिभेदस्यैव तथात्वसिद्ध्याऽर्थान्तरं चेति भावः ॥१४॥

स्यादेतत्। नित्यविभुभोक्तृसद्भावे सर्वमेतदेवं स्यात्। स एव कुतः? भूतानामेव चेतनत्वात्। कायाकारपरिणतानि भूतानि तथा, अन्वयव्यतिरेकाभ्यां तथोपलब्धेः। कर्मज्ञानवासने तु सर्वत्र प्रतिभूतनियते अनुवर्तिष्येते, यतो भोगप्रतिसन्धाननियम इति चेत्। उच्यते—

**नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्।**
**वासनासंक्रमो नास्ति न च गत्यन्तरं स्थिरे ॥१५॥**

न हि भूतानां समुदायपर्यवसितं चैतन्यम्। प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात्। नापि प्रत्येकपर्यवसितं, करचरणाद्यवयवापाये तदनुभूतस्य स्मरणायोगात्। नापि मृगमदवासनेव वस्त्रादिषु संसर्गादन्यवासनाऽन्यत्र सङ्क्रामति। मात्रानुभूतस्य गर्भस्थेन भ्रूणेन स्मरणप्रसङ्गात्। न चोपादानोपादेयभावनियमो गतिः। स्थिरपक्षे परमाणूनां तदभावात्। खण्डावयविनं प्रति च विच्छिन्नानामनुपादानत्वात्। पूर्वसिद्धस्य चावयविनो विनाशात् ॥१५॥

आमोदः

इदानीं भूतचैतनिकमुत्थाप्य निराकरोति—**स्यादेतदिति**। **सर्वमिति**। 'प्रत्यात्मनियमाद्भुक्ते'रिति [१।४], संस्कारः पुंसएवेष्ट' इति [१।१३]; कर्तृधर्मनियन्तार' [१।१४] इत्यादि यत् तत् सर्वमित्यर्थः। घटादिचैतन्यनिराकरणायाह—**कायाकारेति**। सति शरीरे चेतयतेऽसति न चेतयते इत्यन्वयव्यतिरेकाभ्यां शरीर एव तस्योपलब्धेरित्याह—**अन्वयेति**। **कर्मज्ञानवासने**—अदृष्टसंस्कारौ तौ च **प्रतिभूतं** प्रतिकायसन्तानं 'नियते' ततश्चैत्रदृष्टं मैत्रो न स्मरति, न वा कृतहानाकृताभ्यागमादित्याह—**कर्मेति**। एतच्च—**वात्सीपुत्राणां वैभाषिकाणाञ्च**मते। अन्यैरदृष्टानभ्युपगमात्।

**नान्यदृष्टमिति**। बाल्य[ल?]शरीरावच्छेदेनानुभूतं युवा न स्मरेत्। शरीरस्यक्षणिकत्वादुभयदशावर्ति 'नैकं भूतम्' 'अपक्रमाद्' विनाशात्। वस्त्रादौ मृगमदवासनेव देहान्तरनिष्ठा वासना देहान्तरं संक्रामतीत्यपि नास्ति, अतिप्रसङ्गात्। ननु परमाणूनामुपादानोपादेयभावा'द्वासनासंक्रमः' स्यादित्यत आह—**न चेति**। 'स्थिर'पक्षेऽस्याऽसम्भवादिति भावः।

'समुदायपर्यवसितं' कायाकारपरमाणुपुञ्जपर्यवसितं करादिभावापन्नपरमाणुपुञ्जपर्यवसितं वा। आद्यं दूषयति—**प्रतिदिनमिति**। तस्मिन् दूषणे सत्यपि दूषणान्तरमाह **नापीति**। **मात्रेति**। 'गर्भस्थेनानुभूतस्य' 'स्मरणप्रसङ्गादि'-

१. "तदसम्भवादिति" आमोदसम्मतः पाठः।

त्यर्थः । यथाश्रुते नु [तु?] इष्टापत्तावपि दोषाभावात् । उपादानवासना उपादेये संक्रामति मातृभ्रूणयोस्तु न तथा, इत्यत आह—**न चेति** । **तद-सम्भवादिति** । उपादानोदेयभावाऽसम्भवादित्यर्थः । **खण्डावयविनमिति** । तथा च कराद्यपाये तदनुभूतस्मरणं न स्यात् । तत्र खण्डशरीरे करादे[?]
5 रेव उपादानत्वात् खण्डावयविस्थलेऽन्त्यावयवोचेदस्ति, तदा तत एव स्मरणं स्यादित्यत आह—-**पूर्वेति** ॥ १५ ॥

बोधनी

एवं सांख्यं निरस्यापूर्वस्यात्मधर्मत्वे साधिते पुनरपि चार्वाकः प्रत्यवतिष्ठते—**स्यादेतदिति** । यदि भोक्ता नित्यो विभुश्च स्यात् ततस्तस्य सर्वदेहप्राप्त्यविशेषाद् भूतगतैरतिशयैर्न भोगनियमः स्यादित्यात्मसमवायोऽपूर्वस्य स्यात्, तादृशस्तु भोक्ता कुतः
10 प्रमाणात् सिध्येत् । न कुतश्चिदित्यर्थः । ननु ज्ञानसमवायिकारणत्वेनानुमास्यत इत्यत्राह—**भूतानामिति** । भूतानामेव चेतनत्वे घटादेरपि तत्त्वप्रसङ्गमाशङ्क्य विशिनष्टि—**काया-कारेति** । तानि भूतानि तथा चेतनानीत्यर्थः । भूतत्वाविशेषे कुतोऽयं विवेक इत्यत्राह—**अन्वयेति** । यथा सुराकारपरिणतानामेव भूतानां मदशक्तिर्नान्येषां तथैतदपि । तदुक्तं सूत्रकारेण "मदशक्तिवद् विज्ञानम्" इति । यदि शरीरादिव्यतिरिक्तः
15 चेतनो न स्यात् तर्हि किमाश्रयावदृष्टसंस्कारौ भोगं प्रतिसंधानं च नियच्छतस्तत्राह—**कर्मेति** । स्मृतिहेतुः संस्कारो ज्ञानवासना, सा तावदनुभवसामानाधिकरण्यात् तदधारेषु वर्त्स्यत इति । कर्मजनितौ धर्माधर्मौ कर्मवासना, सा तावन्नास्त्येव । यद्यपि स्यात् तथापि भूतानामेव कर्तृत्वात्तेष्वेव नियता वर्त्स्यत इत्युच्यत इति ।

अन्यैरनुभूतं नान्यः स्मरतीति तावदविवादम् । अनेनात्मनः शरीरादिव्यतिरेके
20 प्रमाणमभिसंधत्ते, स्मृतिः पूर्वापरप्रत्ययाभ्यां सहैककर्तृका, ताभ्यां सहैककर्तृत्वेन प्रतिसंधीय-मानत्वात्, न यदेवं, न तदेवं यथा देवदत्तस्य स्मृतिर्यज्ञदत्तस्य पूर्वापरप्रत्ययाभ्यां न प्रतिसंधीयते न तथाचेयं तस्मान्न तथेति । ततः किमित्यत आह—**नैकमिति** । न तावच्छरीरावयविसमवेतं चैतन्यं, तस्यावस्थाभेदेष्वन्यत्वात् तत्र पूर्वानुभूतस्योत्तरावस्थायाम-स्मरणप्रसङ्गः । तर्हि करचरणाद्यन्यतमावयवसमवेतं भविष्यतीति । अत्राप्येतदेवावतिष्ठते
25 नैकमवयवभूतं चैतन्यं तस्यावयवस्य कदाचिद्विच्छेदात् । तत्र च तदनुभूतस्यावयवान्तरेणा-स्मरणप्रसङ्गः । यद्वा, आद्यपादेनावयविचैतन्यस्य निरासः, द्वितीयेनावयवचैतन्यस्येति । ननु पूर्वावयविगता वासनोत्तरस्मिन्नवयविनि संक्रामति विच्छिन्नावयवगता च तिष्ठत्स्ववयवे ष्विति । अत्राह—**वासनासंक्रम** इति । सर्गादिव वासनायाः संक्रमणे संक्रान्तमातृवासनेन

गर्भस्थेन मात्रानुभूतस्य स्मरणप्रसङ्गः। ननूपादानोपादेयभावस्तु नियामिका गतिर्भविष्यति। न ह्यवयवि नाम किञ्चिदस्ति, किन्तु प्रतिक्षणभङ्गुराः परमाणव एव तत्त्वम्। तेन पूर्वैः परमाणुभिरुत्तरेषामुपादीयमानत्वमस्ति। मातृभ्रूणयोस्तु तदभावान्नातिप्रसङ्ग इत्याह—**न चेति**। न च स्थिरपक्षे परमाणूनां नित्यत्वेनोपादेयभावोऽस्तीत्याद्यपादस्य निगदव्याख्यातत्वाद् द्वितीयं व्याचष्टे—**न हीति**। द्वितीयव्याख्याने त्वाद्यस्यैव 5 विवरणं द्वितीयमेवार्थान्तरेण व्याचष्टे—**नापीति**। द्वितीयव्याख्याने तु द्वितीयमिदानीं व्याचष्टे—**नापीति**। तृतीयं व्याचष्टे—**नापि मृगमदेति**। तुरीयं व्याचष्टे—**न चेति**। मा भूत्परमाणूनामुपादानोपादेयभावः, अवयवावयविनोस्तु भविष्यतीत्याशङ्क्याह—**खण्डावयविनमिति**। न ह्यनुभवितारो विच्छिन्ना अवयवाः खण्डावयविनमारभन्ते तस्य तिष्ठद्भिरेवारम्भादिति। अखण्डं तु पूर्वावयविनं प्रति 10 विच्छिन्ना एवोपादानभूता इत्यत्राह—**पूर्वसिद्धस्येति**। किमनेन, स हि तदारब्धः पूर्वावयवीति। तद्विच्छेदे विनष्ट एव क इदानीं प्रतिसन्दध्यात्। अत्र पूर्वशरीरस्याप्युत्तरं प्रत्यनुपादानत्वादित्याद्यपि द्रष्टव्यम् ॥१५॥

विवेकः

ननु भूतातिरिक्तश्चेत् चेतनं सम्भवेत् तदा निर्दोषतया भोगशून्यो नित्यविभुभोक्तृजातीयो भगवानदृष्टाधिष्ठातृतया सेत्स्यति, चैतन्यस्य भूतत्वव्याप्यत्वेतु भूतस्यदृष्टाधिष्ठा- 15 तुर्योग्यानुपलब्ध्या बाधेनाभूतचैतन्याभावेनादृष्टं केनाधिष्ठेयं, तथा च 'सर्वमि'ति न्यायोऽपि बाधकरणाद्धेय एवेत्याशयेनाह—**स्यादेतदित्यादि**। विभुर्महाननित्यांशवैयर्थ्यात् तादृशस्य भोक्तुः सद्भावे तज्जातीयेन भगवताधिष्ठानेन सर्वमेतत् सर्वमचेतनम् एवं चेतनाधिष्ठितं स्यात्, स एव नित्यविभुभोक्तैव कुतः प्रमाणात् से [ त् ]स्यति, भूतानामेव चेतनत्वात् भूतस्य निवृत्त्या चैतन्यस्याभूतनिवृत्तत्वात् भूतेनाधिष्ठानं चादृष्टस्य योग्यानु- 20 पलम्भबाधितमिति भावः। **प्रकाशकृतस्तु** भूतचैतन्ये प्रकृतसिद्धावपि नित्यविभुभोक्तृनिरासपरेयं शङ्केत्याहुः। भूतचैतन्यवादिनं प्रसङ्गादुत्थाप्य निराकरोतीति **केचित्**। **परे** तु एतदेवमित्यस्य "वीतरागजन्मादर्शनादि"ति न्यायेन रागादिमतोऽनादित्वमित्यर्थं कल्पयित्वा प्रकृतप्रसङ्ग इत्याहुः। मदुक्तयुक्त्यैव सांख्यमतनिरासो युक्तः, न तु नास्तिकयुक्त्या, इत्यभिप्रायेणैव तदुत्थानं नित्यविभुर्भूतभिन्न इति **सांख्यमत**मित्यप्याहुः। 25 ननु भूतचैतन्येऽविशेषात् घटादेरपि तत्त्वं स्यादित्यत्राह—**कायेति**। तथा चेतनानि। **अन्वयेति**। अन्यथा विभुत्वाविशेषात् तत्रापि आकाशादेस्तत्त्वं दुर्वारं स्यादिति भावः। **कर्मेति**। कर्मवासना धर्माधर्मौ ज्ञानवासना भावनाख्यः संस्कारः प्रतिभूतनियते स्वका-

रणीभूतकर्मज्ञानाधिकरणसन्ताननियते तत्त्वानतिप्रसक्ते इति यावदनुवर्त्तिष्येते स्थास्यतः स भूतत्वव्यप्यो यथा रूपं विशेषगुणश्च चैतन्यमिति प्रयोगः। एतत् स्मरणाधिकरणं, यद्येतत् स्मृतिजनकानुभवाधिकरणं न स्यात् एतत्स्मृत्यधिकरणं न स्यात् मतवदित्यत्र तर्के व्याप्तिग्रहमूलमाह—

5 **नान्येति**। नन्वनुभवस्मृत्योरेकमेव भूतमधिकरणं तथा चोपपादकस्य परानभ्युपगतत्वेन विपर्यये सिद्धसाधनमित्यत्राह—**नैकमिति**। स्मृत्यधिकरणत्वेनाभिमतं भूतं न तज्जनकानुभवाधिकरणत्वेनाभिमतादभिन्नमित्यर्थः। अत्र हेतु 'रपक्रमात्'। तदधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वादित्यर्थः। ननु 'नान्यदृष्टमि'त्यत्र व्याप्तौ तज्जन्यसंस्कारानाधारत्वमुपाधिः। बालशरीरवृत्तितज्जनकवासनायाः शरीरान्तरावृत्तित्वात् पक्ष एव साधना-

10 व्यापकत्वं तत्र नष्टे बालशरीरे तद्वासना विनाश्रयं कथं स्थास्यतीत्यतो वासना संक्रामतीति यदि तेनोच्यते तत्राह—**वासनेति**। वासना न संक्रमवती अमूर्त्तत्वादिति हेतुः। नन्विदं मृगमदवासनायां वस्त्रादिसंक्रमवत्यां व्यभिचारि। न च तत्र मृगमदस्यैव संक्रमो न वासनाया इति वाच्यं, योग्यस्यानुपलम्भबाधितत्वात्, अयोग्ये च मानाभावात्; न चातिप्रसङ्गः सन्निधानस्य नियामकत्वे मातृवासनाया गर्भस्थे संक्रमप्रसङ्ग इति वाच्यम्,

15 उपादानोपादेयभावस्य नियामकत्वादित्यत्राह—**न चेति**। स्थिरे स्थिरपक्षे पूर्वस्यावयविन उत्तरावयविनं प्रति उपादानत्वाभावान्नोक्तस्य नियामकत्वं पुञ्जात् पुञ्जोत्पत्तिनये च सम्भवत्यनतिप्रसङ्ग इति भावः।

भूतानां समुदायः समुदितं भूतं तच्च कायादि तद्रूपं तत्पर्य्यवसितं तद्वृत्ति चैतन्यम् इत्यनेन तज्जन्यवासनाया अपि तथात्वं बोध्यम्। **प्रतिदिनमिति**। तृतीयमान-

20 परिणामभेदकालोपलक्षणम्, एवमग्रेऽपि। **प्रत्येकेति**। विशिष्य करादौ यत्र न तादृशो विरुद्धधर्म्माध्यास इत्यर्थः। सत्यपि पूर्वदोषे दूषणान्तरदानायाह—**नापीति**। **केचित्** स्मरणायोगादस्मरणापत्तेः संसर्गात् सन्निधानात् दूषयति—**मात्रेति**। सन्निधानस्य तत्रापि सत्त्वादिति भावः। भ्रूणेन गर्भस्थशरीरेण। **न चेति**। उपादानेनानुभूतम् उपादेयेनैव स्मर्य्यते इति नियमगतिर्म्मम मते तदभावात् परमाणु-

25 शरीरयोरुपादानोपादेयभावाभावात्। तथा चोपादानपरमाणुनानुभूतमुपादेयं स्मरतीति कल्पयितुं न शक्यत इति भावः। स्मृतेरपि परमाणुवृत्तित्वोपगमे तु अध्यक्षाभावादिति ध्येयम्। विच्छिन्नानां तदातननाशप्रतियोगिनाम् अवयविनोऽन्त्यावयविनः कार्य्यत्वेन प्रतीयमानस्य पूर्वमवयवावयविसमुदायवृत्तित्वमुक्तम्, इदानीमन्त्यावयविन्येव तदिति न पौनरुक्त्यम् ॥१५॥

अस्तु तर्हि क्षणभङ्गः।

न चातिशयोऽप्यतिरिच्यते, किन्तु सौसादृश्यतिरस्कृतत्वाद् द्रागेव न विकल्प्यते, कार्यदर्शनादध्यवसीयते, अन्त्यातिशयवत्। तथा च भूतान्येव तथा तथोत्पाद्यन्ते, यथा यथा प्रतिसन्धाननियमादयोऽप्युपपद्यन्ते। क्षणिकत्वासद्धावेवमेतत्, तदेव त्वन्यत्र विस्तरेण प्रतिषिद्धम्। 5

अपि च—

**न वैजात्यं विना तत्स्यान्न तस्मिन्ननुमा भवेत्।**
**विना तेन न तत्सिद्धिर्नाध्यक्षं निश्चयं विना॥१६॥**

न हि करणाऽकरणयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्रमित्यभ्युपगमे क्षणिकत्वसिद्धिः। तथैकव्यक्तावप्यविरोधात्, 'तद्वा तादृग्वे'ति न कश्चिद्विशेष इति न्यायात्। ततस्तावनादृत्य वैजात्यमप्रामाणिकमेवाभ्युपेयम्। एवञ्च कारणवत् कार्येऽपि किञ्चिद्वैजात्यं स्याद् यस्य कारणापेक्षा, न तु दृष्टजातीयस्येति शङ्कया न तदुत्पत्तिसिद्धिः। दृष्टजातीयमाकस्मिकं स्यादिति चेन्न। तत्रापि किञ्चिदन्यदेव प्रयोजकं भविष्यतीत्यविरोधात्। न कार्यस्य विशेषस्तत्प्रयुक्ततयोपलभ्यते। नापि कार्यसामान्यस्यान्यत् प्रयोजकं दृश्यत इति चेत्; तत्किं कारणस्य विशेषः स्वगतस्तत्प्रयोजकतयोपलब्धः? कारणसामान्यस्य वाऽन्यत् प्रयोज्यान्तरं दृश्यते? यतो विवक्षितसिद्धिः स्यात्। शङ्का तूभयत्रापि सुलभेति। कार्यजन्माजन्माभ्यामुन्नीयत इति चेन्न। सहकारिलाभालाभाभ्यामेवोपपत्तेः। उन्नीयतां वा, कार्येषु शङ्किष्यते, निषेधकाभावात्। न हि धूमस्य विशेषं दहनप्रयोज्यं प्रतिषेद्धुं स्वभावानुपलब्धिः प्रभवति। कार्यैकनिश्चयस्य तदनुपलब्धेरेवानिश्चयोपपत्तेः। कार्यस्य चातीन्द्रियस्यापि संभवात्। अत एवानुपलब्ध्यन्तरमपि निरवकाशमिति। एवं विधिरूपयोर्व्याप्तिरूपयोर्वा जात्योर्विरोधे सति न समावेशः। समाविष्टयोश्च परापरभावनियमः। अन्यूनानतिरिक्तवृत्तिजातिद्वयकल्पनायां प्रमाणाभावात्। व्यावर्त्यभेदाभावेन विरोधानवकाशे भेदानुपपत्तेः। परस्परपरिहारवत्योश्च समावेशे गोत्वाश्वत्वयोरपि तथाभावप्रसङ्गात्। सामग्रीविरोधान्नैवमिति चेत्, कुत एतत्? परस्परपरिहारेण सर्वदा व्यवस्थितेरिति चेत्, नेदमप्यध्यक्षम्। एकदेशसमावेशेन तु सामग्रीसमावेशोऽप्युन्नीयते। [1]यावत्कार्ययोः परस्परपरिहृतिस्वभावत्वादिति चेत्; तर्हि कम्पशिंशपयोः परस्परपरिहारवत्योर्न समावेशः स्यात्। दृश्यते तावदिदमिति चेत्; गोत्वाश्वत्वयोरपि न द्रक्ष्यत इति का प्रत्याशा? तथा च गतमनुपलब्धिलिङ्गेनापि, क्वचिदपि विरोधासिद्धेः। ततो विपक्षे बाधकाभावात् स्वभावहेतुरप्यपास्तः। नन्वस्ति तत्। तथाहि—वृक्षजनकपत्रकाण्डाद्यन्तर्भूता शिंशपासामग्री। सा वृक्षमतिपत्य भवन्ती स्वकारणमेवातिपतेत्। एवं, शाखादिमन्मात्रानुबन्धी वृक्षव्यवहारः, तद्विशेषानुबन्धी च शिंशपाव्यवहारः। स कथं तमतिपत्यात्मानमासादयेदिति चेत्; एवं तर्हि शिंशपासामग्र्यन्तर्भूता चलनसामग्री, ततस्तामतिपत्य चलनादिरूपता

10, 15, 20, 25, 30

---

१. यावत्तत्° इति मुद्रितपाठः।

भवन्ती स्वकारणमेवातिपतेत्; तथा शाखादिमद्विशेषानुबन्धी शिंशपाव्यवहारः, तद्विशेषानुबन्धी च चलनव्यवहारः। स कथं तमतिपत्यात्मानमासादयेदिति तुल्यम्! नोदनाद्यागन्तुकनिबन्धनं चलनत्वं, न तु तद्विशेषमात्राधीनमिति चेत्, यदि नोदनादयः स्वभावभूतास्ततस्तद्विशेषा एव। अथाऽस्वभावभूतास्ततः सहकारिण एव, ततस्ता-
5 नासाद्य निर्विशेषैव शिंशपा चलनस्वभावत्वमारभत इति। तथा च कुतः क्षणिकत्व-सिद्धिः? स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाद्भवन्तीति चेत्, एवं तर्हि वृक्षसामग्र्यामागन्तुकसहकार्यनुप्रवेशादेव शिंशपाऽपि जायत इति न कश्चिद्विशेषः। एवमेतत्। किन्तु शिंशपाजनकास्तरुसामग्रीमुपादायैव, चलनजनकास्तु न तामेव, किन्तु मूर्तमात्रं, तथा दर्शनादिति चेत्; मैवम्। कम्पजनकाः शिंशपाजनकविशेषा
10 अपि सन्तस्तानतिपतन्ति, न तु वृक्षजनकविशेषाः शिंशपाजनकास्तानिति नियामका-भावात्। शिंशपाजनकास्तद्विशेषा एव, कम्पकारिणस्तु न तथा, किन्त्वागन्तवः सहकारिण इति चेत्; एवं तर्हि तानासाद्य सदृशरूपा अपि केचित्कम्पकारिणोऽना-सादितसहकारिणस्तु न तथा। तथा च 'तद्वा तादृग्वे'ति न कश्चिद्विशेषः स्यात्। तस्माद्विरुद्धयोरसमावेश एव। समाविष्टयोश्च परापरभाव एव। अनेवम्भूतानां
15 द्रव्यगुणकर्मादिभावेनोपाधित्वमात्रम्। तेषान्तु विरुद्धानां न समावेशो व्यक्तिभेदात्। जातीनाञ्च भिन्नाश्रयत्वात्। तथा च कुतः क्षणिकत्वम्? वैजात्याभ्युपगमे च कुतोऽनुमानवार्ता? मा भूदनुमानमिति चेन्न। तेन हि विना न तत्सिध्येत्। न हि क्षणिकत्वे प्रत्यक्षमस्ति। तथा निश्चयाभावात्। गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्, अन्यथाऽतिप्रसङ्गात्।

20 ननु वर्तमानः क्षणोऽध्यक्षगोचरः। न चासौ पूर्वापरवर्तमानक्षणात्मा। ततो वर्तमानत्वनिश्चय एव भेदनिश्चय इति चेत्; किमत्र तदभिमतमायुष्मतः? यदि धर्म्येव नीलादिर्न किञ्चिदनुपपन्नम्। तस्य स्थैर्यास्थैर्यसाधारण्यात्। अथ धर्मः, तद्भेदनिश्चयेऽपि धर्मिणः किमायातम्? तस्य ततोऽन्यत्वात्। वर्तमाना-वर्तमानत्वमेकस्य विरुद्धमिति चेत्। यदि सदसत्त्वं तत्; तन्न। अनभ्युपगमात्।
25 ताद्रूप्येणैव प्रत्यभिज्ञानात्। सदसत्सम्बन्धश्चेत्; किमसङ्गतम्? ज्ञानवत्तदुपपत्तेः। क्रमेणानेकसम्बन्ध एकस्यानुपपन्न इति चेन्न। उपसर्पणप्रत्ययक्रमेणैव तस्याप्युपपत्तेः। प्रत्यभिज्ञानमप्रमाणमिति चेत्; अस्ति तावदतो निरूपणीयं, क्षणप्रत्ययस्तु भ्रान्तोऽपि नास्तीति विशेषः ॥१६॥

### आमोदः

अस्तु तर्हीति। तथा च परमाणूनामुपादानोपादेयभावसिद्धौ वासना-संक्रमः स्यादिति नातिप्रसङ्ग इति भावः। क्षणिकत्वे विप्रतिपत्तिः—सत्त्वं
30 क्षणमात्रवृत्त्यनेकवृत्तिधर्मव्यापकताव्याप्यं न वा? एवं च यत् सत् तत् क्षणिकं यथा घटः संश्चविवादाध्यासितशब्दादिरित्यनुमानं पराभिमतम्। सत् स्वोत्पत्त्यव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगि न वा? स एव क्षणमात्र-

वृत्याधारताप्रतियोगित्वव्याप्या न वा? उपादानत्वमुपादेयसमानकालीनं न वा? तद्घटध्वंसः **तद्घटोत्पत्यव्यवहितोत्तरक्षणवर्ती** न वेति। ननु यद्यजनकाज्जनकमतिशयितं स्यात्तदा ताद्रूप्येण गृह्येत, न च गृह्यते, तस्मान्न ततो भिन्नमित्यत आह--**न चेति**। **अतिरिच्यते** विविच्य गृह्यते। यद्वा अतिरतिक्रमे, चेतनं ज्ञानं तथा चातिशयोऽपि न ज्ञायत इत्यर्थः। पूर्व- 5
बीजापेक्षया सुसदृशत्वाद् 'द्रागेव' इन्द्रियायत्तमात्रेण न गृह्यत इत्यर्थः। तर्हि सद्भावे किं मानमत आह—**कार्येति**। **अध्यवसीयते**ऽनुमीयते। **अन्त्यातिशयः** सामग्री। प्रकृतमुपपादयति—**भूतान्येवेति**। 'आदि'पदाद्भोगादिनियमसंग्रहः। 'अन्यत्र'—**आत्मतत्त्वविवेके**, **तृतीयनिबन्धे** च।

अत्रापि लेशतो दूषयति—**न वैजात्यमिति**। 'वैजात्यम'ङ्कुरादिकुर्व- 10
द्रूपत्वमकुर्वतो बीजान्नाङ्गीकर्तव्यं यदि, तदा बीजत्वेनैवाङ्कुरकारणतेति न क्षणिकत्वसिद्धिरित्यर्थः। अस्तु तर्हि वैजात्यमत आह—**न तस्मिन्निति**। वैजात्ये कारणगते स्वीक्रियमाणे कार्ये धर्मादावपि तच्छङ्कयाऽनुमानं तु[न ?] स्यादित्यर्थः। मा भूदनुमानं, प्रत्यक्षमेव प्रमाणमस्तु, को दोष इत्यत आह—
**तेन विनेति**। अनुमानेन विना क्षणिकतैव न सिध्येदित्यर्थः। तर्हि प्रत्यक्षा- 15
देव क्षणभङ्गः सिध्येदित्यत आह—**नाध्यक्षमिति**। **निश्चयः** सविकल्पं तेन हि प्रत्यक्ष[ं]निर्विकल्पकमनुमीयते। न च क्षणिकत्वगोचरं सविकल्पक-मस्तीत्यर्थः।

सहकारिसमवहितं करोति, तदसमवहितं न करोतीत्यभ्युपगमः स्थैर्य-
मेव साधयेन्न क्षणिकत्वमित्याह—**न हीति**। कुत एवमत आह—**तथैकेति**। 20
सहकारिलाभालाभाभ्यां जनकत्वाजनकत्वे व्यक्त्यैक्येऽप्यविरुद्धे इत्यर्थः। **तद्वेति**। सा च व्यक्तिः सहकारिसमवहिता भवतु, तज्जातीयाऽन्या वेति न कश्चिद्विशेष इत्यर्थः। **तौ** सहकारिलाभालाभौ, **वैजात्यं** कुर्वद्रूपत्वम्। 'एवञ्च कार्येऽपि किञ्चिद्वैजात्यं', तथा च स एव वह्निजन्यो नान्य इति धूममात्रा-
द्वह्निमात्रं नानुमीयेतेत्यर्थः। **तदुत्पत्तिनिश्चयः** कार्यकारणभावनिश्चयः। 25
'दृष्टजातीयं' धूमत्वावच्छिन्नम्। 'किञ्चिदि'ति पिशाचादीत्यर्थः। तथा च धूममात्रं पिशाचवत् स्यात्, धूमविशेषस्तु वह्निरित्यर्थः। **यथादर्शनं**

व्यवस्थेति शङ्कते—**न कार्यस्येति**। न **विवक्षितसिद्धिः** कुर्वद्रूपत्वसिद्धिः। **उभयत्रेति**। कार्ये कारणे चेत्यर्थः। **कार्यजन्मेति**। कार्यदर्शनात् कुर्वद्रूपत्वं, तदभावात्तदभाव इत्यर्थः। अत्रान्यथासिद्धिमाह—**सहकारीति**। यदि च कार्ये वैजात्योन्नायकं नास्ति तदा तत्र शङ्का स्यादित्यत आह—**उन्नीयतामिति**। **स्वभावानुपलब्धिरिति**। योग्यानुपलब्धिरित्यर्थः। कथं न 'प्रभवती'त्यत आह—**कार्येति**। तर्हि कार्येणैवोन्नीयतामत आह—**कार्यस्येति**। **अनुपलब्ध्यन्तरमिति**। व्यापकानुपलब्धिरपीत्यर्थः। अतीन्द्रियस्यैव तद्व्यापकस्यैव सम्भवादिति भावः। इदानीं परापरभावानुपपत्तिं कुर्वद्रूपत्वजातौ बाधकान्तरमाह—**एवं विधीति**। **विधिरूपयोरिति** स्वमते, **व्यावृत्तिरूपयोरिति** परमते। **विरोधे सतीति**। परस्परात्यन्ताभावसमानाधिकरणत्वे सतीत्यर्थः। 'न समावेशः' न सामानाधिकरण्यं गोत्वाश्वत्ववत्। 'समाविष्टयोश्च' न्यूनाधिकयोरेव वृत्तित्वनियमः वृक्षत्वशिंशपात्ववत्। तदिह यदि शालित्वं व्यापकं तदा यवबीजे कुर्वद्रूपत्वं न स्यात्, यदि कुर्वद्रूपत्वमेव व्यापकं तदा कुशूलस्थेऽपि बीजे शालौ कुर्वद्रूपत्वं स्यादिति भावः। ननु समादि[वि ?]ष्टयोर्न्यूनाधिकदेशवृत्तित्वं सिद्धम्, अन्यूनानतिरिक्तदेशयोरपि जात्योः सम्भवादित्यत आह—**अन्यूनेति**। **व्यावर्त्येति**। यथा वृक्षत्वव्यावर्त्यमवृक्षरूपं शिंशपात्वव्यावर्त्यं वृक्षरूपमपि पनसादि, तथा घटत्वकलसत्वादीनां व्यावर्त्यभेदो नास्ति येन भेदः स्यादित्यर्थः। भिन्नवृत्तिनिमित्तकतया पर्यायशब्दोच्छेदप्रसङ्गश्चेति भावः। ननु परस्परात्यन्ताभावसमानाधिकरणयोश्च समावेशे को दोष इत्यत आह—**परस्परेति**। सामग्रीतोऽश्वसामग्री भिन्नेति न समावेश इत्याह—**सामग्रीति**। गूढाभिसन्धिराह—**कुत इति**। सामग्र्योरसाङ्कर्यं कुत इत्यर्थः। **परस्परेति**। सामग्र्योर्मिलनं क्वापि न दृश्यत इत्यर्थः। **नेदमिति**। सामग्र्योरतीन्द्रियत्वात् परस्परपरीहारेणावस्थानं 'नाध्यक्षमि'त्यर्थः। **यावदिति**। प्रत्युतेत्यर्थः। **कार्ययोरिति**। कार्योन्नेया सामग्री 'कार्ययोश्च' गवाश्वयोरसाङ्कर्येण सामग्र्योरसाङ्कर्यमुन्नीयत इत्यर्थः। **कम्पेति**। कम्पपरीहारेणापि निश्चला शिंशपा, शिंशपापरीहारेण पिप्पले कम्प इति सकम्पा शिंशपा नानुभूयेतेत्यर्थः। **अयमिति** समावेश इत्यर्थः। आशयमुद्घाटयति—**गोत्वेति**। **गतमिति**। कार्येण कारणानुमानं

गतम्। कारणाभावेन कार्याभावानुमानमपि गतम्। कारणाभावकार्य-योरविरोधात् समावेशसम्भवादित्यर्थः। **तत** इति। निर्वह्नित्वधूमत्वयोर्वि-रोधो यदि स्यात् तदा, यदि निर्वह्निः स्यान्निर्धूमः स्यादिति विपक्षबाधकं प्रवर्त्ततेत्यर्थः। **स्वभावहेतुरिति**। प्रसङ्गहेतुविपर्यय इत्यर्थः। **नन्वस्ती-**त्यादिना विपक्षबाधकप्रदर्शनस्यासंगतत्वापत्तेः। किन्तु 'स्वभावहेतु'स्ता- 5
दात्म[च ?]हेतुः। यथा वृक्षः शिंशपेति। **तदिति**। विपक्षबाधकमित्यर्थः। [स्वभावहेतुस्तादात्म[च ?]हेतु र्वा स्वभावहेतुर्यथा वृक्षः शिंशपा इति। **तदिति**। विपक्षे बाधकमित्यर्थः।] 'शिंशपासामग्री' यदि वृक्षसामग्रीं व्यभिचरेत् स्वकारणमेव व्यभिचरेद् इत्याह—**वृक्षेति**। स्वरूपव्यभिचारे विपक्षबाधक-मुक्त्वा व्यवहारव्यभिचारे तदाह—**एवमिति**। यथा शिंशपा वृक्षविशेषस्तथा 10
कम्पः शिंशपाविशेष इति तत्रापि विपक्षबाधकं तुल्यमित्याह—**एवं तर्हीति**। वृक्षशिंशपयोः स्वाभाविकः सामान्यविशेषभावो न तु शिंशपाकम्पयोर्येन साम्यं स्यादित्याह—**नोदनादीति**। **स्वभावभूता** इति। शिंशपास्वभावभूता इत्यर्थः। **कुत** इति। स्थिरायाः शिंशपाया नोदनादिसहकारिसमवधानात् कम्परूपकार्योत्पत्तेरित्यर्थः। 'भवन्ती'त्यत्र नोदनादय इत्यनुषङ्गः। **एवं** 15
**तर्हीति**। वृक्षशिंशपयोरपि सामान्यविशेषभावो माऽस्तु, तथाच कम्प इव शिंशपां शिंशपापि वृक्षव्यवहारं तत्सामग्रीं वाऽतिपतेदिति क्व विपक्षबाधक-मित्यर्थः। **एवमेतदिति**। वृक्षसामग्र्यामागन्तुकसहकार्यनुप्रवेशादेव शिंशपा जायते, परन्तु शिंशपयोत्पत्तौ यदवच्छेदकं तस्य वृक्षसामग्रीपरिहारो नास्ति। कम्पोत्पत्तौ यदवच्छेदकं तस्य शिंशपासामग्रीपरिहारोऽस्तीति कम्पः शिंशपां 20
व्यभिचरतीत्यर्थः। कम्पजनका नोदनादयः स्वभावभूता इति त्वया स्वीकृतम्। तथा च कम्प[:] शिंशपाविशेष एव स्यात्ततश्च मूर्तत्वं तदवच्छेद-कत्वं[?]स्यादतिप्रसङ्गादित्याह—**कम्पजनका** इति। निरस्तामपि शङ्कां परी-हारप्रकारभेदार्थं पुनराह—**शिंशपेति**। **तथ्वे**[द्वे ?]ति। सैव शिंशपा सह-कारिसमवहिता कम्पं जनयेत्तादृशी वेति न कश्चिद्विशेष इत्यर्थः। प्रकृतमुप- 25
संहरति—**तस्मादिति**। ननु भूतत्वमूर्तत्वादीनामपि परस्परात्यन्ताभाव-समानाधिकरणानां साङ्कर्यं दृश्यत एव इत्यत आह—**अनेवम्भूतानामिति**। परापरभावानायत्तत्वे सति समादि[वि ?]ष्टानां भूतत्वमूर्तत्वादीनामित्यर्थः।

**उपाधित्वं** न तु जातित्वम्। उपाधिसङ्करो न दोष इत्यर्थः। एवं सति दण्डित्वादण्डित्वकुण्डलित्वाकुण्डलित्वादीनां भूतत्वतदभावादीनां विरुद्धानामप्युपाधीनां समादे[वे ?]शः स्यादित्यत आह—**तेषान्त्विति**। 'व्यक्तिभेदात्' भिन्नव्यक्तिस्वभावत्वादित्यर्थः। ननु दण्डित्वमपि दण्ड एव कुण्डलित्वमपि
5 कुण्डलमेव, तेषां चानुगतत्वादनुगमकं दण्डत्वं कुण्डलत्वं च वाच्यम्। तथा च दण्डिकुण्डलित्वयोरेकत्र समावेशात्तदुभयं विरुद्धमपि समाविष्टमेवेत्यत आह—**जातीनान्त्वीति**। दण्डत्वकुण्डलत्वे न समवायेन वर्तेते पुरुषे, किन्तु दण्डकुण्डलयोरिति न समावेशः। समवायेनैव विरुद्धयोः समावेशनिषे[धा ?]त्। एतदेवाह—**भिन्नाश्रयत्वादिति**। परम्परासम्बन्धाश्रयत्वादित्यर्थः।
10 **तथा चेति**। कुर्वद्रूपत्वस्य जातित्वनिराकृतावित्यर्थः। अभ्युपेत्याह—**वैजात्येति**। धूमसामान्येन वह्निसामान्यानुमानं न स्यात्, ताद्रूप्येण कार्यकारणभावाभावात् कुर्वद्रूपत्वस्य चाग्रहणादिति भावः। चार्वाकमतमाश्रित्याह—**मा भूदिति**। अनुमानमन्तरेण क्षणिकत्वं न सिध्येदित्याह—**तेन हीति**। ननु प्रत्यक्षमेव क्षणिकत्वे मानम् इत्यत आह—**न हीति**। **तथा**
15 **निश्चयेति**। इदं क्षणिकमिति सविकल्पकाभावादित्यर्थः। ननु निर्विकल्पकेन क्षणिकताग्रहः स्यादित्यत आह—**गृहीतेति**। 'गृहीतं' निर्विकल्पकविषयीकृतं यत्र निश्चीयते सविकल्पकेन विषयीक्रियते तत्रैव प्रत्यक्षं प्रमाणं व्यवतिष्ठत इत्यर्थः। अन्यथा परमाण्वादीनामपि प्रत्यक्षतापत्तिरित्यत आह—**अन्यथेति**। ननु वर्तते घट इति प्रत्यक्षमेव क्षणिकत्वागोचर[म् ?]
20 इत्याह—**नन्विति**। 'वर्तमान'पदेन धर्मिविवक्षा चेत्, तदा तत्प्रत्यक्षताऽस्माभिरपि अभ्युपगम्यैवेत्याह—**यदीति**। स्थैर्यपक्षेऽपि तत्प्रत्यक्षताया अविरोध इत्याह—**तस्येति**। वर्तमानत्वं धर्मो नीलादीनां गृह्यते, तदाह—**अथेति**। 'तस्य' 'धर्मिणः'। 'ताद्रूप्येण' सत्त्वेन। **ज्ञानवदिति**। यथैकमपि ज्ञानं सदसत् गोचरयति, तथा नीलादीनामपि सदसत्सम्बन्धो न विरुद्ध
25 इत्यर्थः। ज्ञानमेकदैव सदसत्, सम्बन्धोऽक्रमिकस्तु सविरुद्ध इत्याह—**क्रमेणेति**। उपसर्पणं समवधानं, तत् 'प्रत्ययः' तत्कारणम्। प्रत्यभिज्ञानबलेन स्थैर्यसिद्धिमाक्षिपति—**प्रत्यभिज्ञानमि** ॥१६॥

## बोधनी

अत्र चार्वाक एव बौद्धमतावलम्बनेन प्रत्यवतिष्ठते—**अस्तु तर्हीति**। यदि स्थिरपक्षे गतिर्नास्ति तर्हि क्षणभङ्गमङ्गीकुर्म इति। ननु क्षणभङ्गवादे बीजादीनामङ्कुरादिकार्यानुगुणः कश्चिदतिशयः क्षितिसलिलादिभिराधीयत इति वक्तव्यम्, अन्यथा कुसूलस्थैरपि बीजैरङ्कुरारम्भप्रसङ्गात्। स चातिशयो बीजव्यतिरिक्तश्चेत् तस्यैवान्वयव्यतिरेकाभ्यां कारणत्वप्रसङ्गः, अव्यतिरेके तु बीजमात्रमेवेति कुसूलस्थानामप्यङ्कुरारम्भप्रसङ्ग 5 इत्यत आह—**न चेति**। सत्यमस्त्यतिशयः, स च भावान्न व्यतिरिच्यते, समर्थस्वभावं भावान्तरमेव क्षित्यादिर्जायत इत्यर्थः। अथवा प्रतिक्षणभङ्गे भेद उपलभ्येत, तदनुपलम्भान्नास्ति भङ्ग इत्यत्राह—**न चेति**। अतिशयो वैलक्षण्यं भेद इति यावत्, व्यतिरेको नास्तित्वं, न च भेदो नास्तीत्यर्थः। यद्वा, करणाकरणविरुद्धधर्मसंसर्गाद्धि पूर्वोत्तरयोः क्षणयोर्भेदाङ्गीकारः, तस्य सहकारिलाभालाभाभ्यामेकैकस्यैवोपपत्तेर्न भेदः 10 सिध्यतीत्यत्राह—**न चेति**। सहकारिजन्यातिशयस्य भावाद्व्यतिरेके तस्यैव कारणत्वप्रसङ्गात् न व्यतिरिच्यत इति वक्तव्यम्, तथा च सहकारिसमवधानाद्भावान्तरमेव जायत इति स्यादित्यत्र क्षणभङ्गसिद्धिरिति। एवं तर्हि पूर्वबीजवैलक्षण्येनोत्तरं बीजमनुभूयेतेत्यत आह—**किन्त्विति**। भिन्नो भावः सादृश्यतिरस्कृतभेदत्वादापाततः तथा न विकल्प्यते न निश्चीयते वर्तमानक्षणावगाहिना तु निर्विकल्पकेनानुभूयत एवेत्यर्थः। 15 पश्चाद्वा निश्चयः कुतस्त्य इत्यत्राह—**कार्यदर्शनादिति**। कुसूलस्थाद्विलक्षणभावानुत्पादे तद्वदेवानारम्भप्रसङ्गात् क्षित्यादिभिरङ्कुरसमर्थ भावान्तरं जायत इति निश्चिनुमः। **अन्त्यातिशयवदिति** यथा स्थिरवादिनोऽपि जनकावस्थायामजनकावस्थातोऽतिशयः कार्यदर्शनादवसीयते। यद्वा अन्त्योऽतिशयः सामग्री, सा यथा कार्यैकसमधिगम्या तथातिशयोऽपीति। यद्वा, अन्त्यातिशयो घटादेरन्यो विजातीयः कपालादिसंतानः, स यथा 20 प्रत्यक्षेणावसीयते तथा प्रतिक्षणभङ्गोऽपि विलक्षणकार्यदर्शनान्निश्चीयत इति। **अस्तु** क्षणभङ्गः, प्रकृते किमायातमित्यत्राह—**तथा चेति**। भूतानामुपादानोपादेयभावनियमेन प्रतिसंधानभोगनियमोपपत्तिरिति। सिद्धान्त्याह **क्षणिकत्वेति**। **अन्यत्रे**—ति। अन्यत्र आत्मतत्त्वविवेके न तावता श्रोतॄणां सन्तोष इत्यत्रापि किञ्चिदाह—**अपीति**। 25

यवाङ्कुरानारम्भकाद् बीजात्तदारम्भकस्य वैजात्यं कुर्वद्रूपं नाङ्गीक्रियेत तर्हि क्षणिकत्वं न सिध्येत्। एकजातीयत्वे हि तयोः सहकारिलाभालाभाभ्यामेवारम्भानारम्भनियमो वक्तव्यः, तस्य चैकस्यामेव व्यक्तौ सुवचत्वान्न क्षणिकत्वसिद्धिरिति भावः।

अस्तु तर्हि वैजात्यमित्यत्राह—**न तस्मिन्नि**ति। तस्मिन्नप्रामाणिक एव वैजात्येऽङ्गी-क्रियमाणे कारणवत् कार्येऽपि वैजात्यसंभावनया कार्यादिलिङ्गकमनुमानमेवोच्छिद्येत। नन्वनुमानोच्छेदोऽस्माकं चार्वाकाणामिष्ट एवेत्यत आह—**विना तेने**ति। न ह्यनुमानेन विना क्षणिकत्वसिद्धिः प्रमाणान्तराभावात्। नन्वस्ति प्रत्यक्षमित्यत्राह—
5 **नाध्यक्षमि**ति। कुत इत्यत्राह—**निश्चयं विने**ति। निश्चयो विकल्पस्तेन विना न निर्विकल्पमात्रं क्वचिदपि प्रमाणं, निश्चयश्चात्र नास्तीति।

व्याचष्टे–**न ही**ति। **तन्त्रं** प्रधानम् प्रयोजकमिति यावत्। कथं न सिद्धिर्यावता साजात्येऽपि करणाकरणलक्षणविरुद्धधर्मसंसर्गाद् व्यक्तिभेदः सिध्यतीत्यत्राह–**तथे**ति। एकजातीयवदेकस्यामपि व्यक्तौ सहकारिवशेन करणाकरणयोरविरोधादिति।
10 **तद्वे**ति। तत् पूर्वकालवर्तिबीजं, **तादृक्** तज्जातीयव्यक्त्यन्तरम्, यथा तज्जातीयस्यैव सतः करणाकरणे तथैकस्या एव व्यक्तेर्भविष्यत इत्यर्थः उपसंहरति—**तत** इति। **तौ** प्रमाणकौ सहकारिलाभालाभौ, **अप्रामाणिक**मिति वक्ष्यमाणोपयगितयोक्तम्, अभ्युपगन्तव्यं क्षणिकत्वसिद्धय इति शेषः। अस्तु वैजात्यमिष्टमेव हि नस्तदित्यत्र **न तस्मिन्ननुमा भवेदि**त्येतदुपपादयितुमुपक्रमते **एवमि**ति। यदि कारणेऽनुपलभ्यमानस्यैव वैजात्यस्य
15 कार्यप्रयोजकत्वेनाभ्युपगमः, तर्हि तद्वदेव कार्येऽप्यनुपलभ्यमान एव कश्चिज्जातिभेदः स्यात् यस्य वह्न्यादिकारणापेक्षा, न तु दृष्टधूमादिजातीयस्य वह्न्याद्यपेक्षेति शङ्कावकाशात् न प्रतिबन्धनिबन्धनं तदुत्पत्तिः सिध्यति, तत् कार्यलिङ्गकानुमानेनेति भावः। **दृष्टे**ति। यदि धूमाद्यवान्तरजातिभेदे वह्न्यादेरुपयोगः, तर्हि दृश्यमानं धूमादिजातीयमहेतुकं स्यात्, ततः कार्येऽवान्तरजातिशङ्कानवकाशेति। **ने**ति। वह्न्यादेर्धूमावान्तरजातिभेदोपयोगेऽपि न
20 धूमादिजातीयस्याकस्मिकत्वविरोधः, तत्रापि वह्न्यादेरन्यदेव किञ्चिदनुपलभ्यमानं प्रयोजकं भविष्यतीत्यप्रामाणिकमेवाभ्युपगच्छतः किं नाम दुर्लभमिति भावः। **न कार्यस्य विशेष** इति। धूमादिगतविशेषो न वह्न्यादिप्रयुक्ततयोपलभ्यते, नापि कार्यमात्रस्य धूमादिजातीय-स्यान्यत् प्रयोजकं दृश्यते, तेनानुपलभ्यमानयोः प्रयोज्यप्रयोजकत्वकल्पनमेव विरोध इति। **तत्किमि**ति। वह्न्यादिकारणगतो विशेषो धूमादिसामान्यप्रयोजको नोपलभ्यते।
25 वह्न्यादिविशेषस्य धूमादिप्रयोजकत्वे वह्न्यादिसामान्यस्यान्यत्प्रयोजनं वक्तव्यमर्थक्रियाविरहिणः सत्त्वानुपपत्तेः। तच्च नोपलभ्यते, तेन समानस्तादृशो विरोध इत्यनुपलभ्यमानोऽपि कारणगतो विशेषः शङ्किष्यते निषेधकाभावादित्याशङ्क्य सा तर्हि कार्यगतविशेषे सुलभे-त्याह—**शङ्का त्वि**ति। यद्वा, कार्यगतविशेषे शङ्कामात्रमेव न तु निश्चयोऽनुपलम्भा-दित्याशङ्क्य कारणगतेऽपि शङ्कामात्रमेवेत्याह—**शङ्का त्वि**ति। **कार्ये**ति। ननु मा

भूत्कारणगतो विशेषः प्रत्यक्षः, तथापि न तत्र शङ्कामात्रं, किं तर्हि कुसूलस्थालवालस्थयोः कार्यारम्भानारम्भाभ्यामनुमीयतेऽस्ति वैजात्यमिति । **नेति** । कार्यजन्माजन्मनोरन्यथा-सिद्धत्वान्न ताभ्यां वैजात्यं सिद्धयतीत्यभ्युपेत्याह—**उन्नीयतामिति** । निश्चीयतां कारणगतो विशेषः, कार्यगतविशेषस्य निश्चयाभावेऽपि शङ्कोत्पद्यते, साधकवत् बाधक-स्याप्यभावाद् । अनुपलब्धस्यैव कारणगतस्य कल्पनादर्शनाच्च शङ्कोपपत्तेः शङ्कामात्रेणापि 5 प्रतिबन्धमूलं तदुत्पत्तिर्न सिध्यतीति भावः । कार्यगतविशेषं स्वरूपानुपलब्धिरेव निषेत्स्य-तीत्यत आह—**न हीति** । किमिति न प्रभवति तत्राह—**कार्येति** । शङ्क्यमानस्य कार्यगतविशेषस्यातीन्द्रियत्वेन कार्यलिङ्गेन निश्चेतव्यत्वात् कार्यानुपलब्ध्यैवानिश्चयोपपत्ते-रिति । अस्तु तर्हि कार्यानुपलब्ध्या तत्प्रतिषेधोऽत आह—**कार्यस्येति** । कार्यगतविशेष-वत्तत्कार्यमपि किञ्चिदतीन्द्रियमस्तीति संभावनायां कार्यानुपलब्धिः, तं प्रतिषेधति—**अत** इति । 10 **अत एव**, यत एव स्वभावानुपलब्धिर्न प्रभवति अत एवेत्यर्थः । सन्ति हि षोडशानुप-लब्धयः—स्वभावानुपलब्धिः, स्वभावविरुद्धकार्यानुपलब्धिः, स्वभावविरुद्धव्याप्तोपलब्धिरिति चतस्रः, कार्यानुपलब्धिस्तद्विरुद्धकार्यविरुद्धव्याप्तोपलब्धयश्चेति चतस्रः, तथा व्यापकानुपल-ब्धिस्तद्विरुद्धविरुद्धकार्यविरुद्धव्याप्तोपलब्धयश्चेति चतस्रः । तत्र चानुपलब्धिकार्यप्रतिषेध-सामर्थ्यादुपलब्धीनामप्यनुपलब्धिव्यवहारः । सर्वासामासां न कार्यगतातीन्द्रियविशेषनिषेधे 15 सामर्थ्यम् । अतीन्द्रियेण सह विरोधित्वकार्यकारणत्वव्याप्यव्यापकत्वानामशक्यनिश्चेय-त्वादित्यर्थः । एवं वैजात्याङ्गीकारे कार्यलिङ्गकमनुमानं न सिध्यतीत्युक्तम् ।

इदानीमनुपलब्धिलिङ्गकं स्वभावहेतुकं च यथा न सिध्यति तथा दर्शयितुं भूमिकामारचयन् वैजात्याभ्युपगमे बाधकान्तरमाह—**एवमिति** । यथातथा वा भवतु जातिस्वरूपं, सर्वथा तु तस्य कुर्वत्त्वजातिभेदस्य बीजत्वेन सहैकस्यां व्यक्तौ न समावेशः 20 संभवति । कुर्वत्त्वाकुर्वत्त्वयोर्विरोधाद् यदि समावेशः स्यात्ततस्तस्य शालित्वं प्रति परत्वं वा स्याद् वृक्षत्ववत्, अपरत्वं वा स्याच्छिंशपात्ववदिति । न चोभयमपि संभवति, परत्वे शालिजातीयं सर्वमपि कार्यं कुर्यात्, अपरत्वे त्वशालिजातीयमङ्कुरं न कुर्यादिति भावः । अत्र परापरभूतयोर्जात्योरसमावेश एव साध्यः समाविष्टयोस्तु परापरभावः प्रसङ्गादुक्त इति । उत्तरस्मिन्साध्ये हेतुमाह—**अन्यूनेति** अनुवृत्ताकारावभासिनी 25 हि प्रतीतिर्जातिसद्भावे प्रमाणम् । तस्याश्चैकयैव जात्योपपत्तौ न तावत्स्वेव पिण्डेषु जात्यन्तरे प्रमाणमस्तीति । व्यावृत्तिरूपयोरपि जात्योः समावेशे परापरभाव एवेत्याह—**व्यावर्त्येति** । अपोह्यभेदेनापोहानां विरोधस्ततश्च तेषां भेद इत्यपोहवादः । तत्र तावत्स्वेव पिण्डेषु अपोहद्वयानाधारेषु सत्सु कुतोऽपोह्यभेदः कुतस्तरां तन्निबन्धनो

विरोधः कुतस्तमां वापोहभेद इति। पूर्वसाध्यसिद्ध्यर्थमनिष्टप्रसङ्गमाह--**परस्परेति**। **तथा भावः** समावेशस्तस्माद्भिन्नयोरपरापरभूतयोः परस्पराभावाविनाभाविनोरेकत्र न समावेशः, समावेशो वा जगति विरोधोच्छेद एव स्यादिति भावः। शङ्कते--**सामग्रीति**। न हि गोत्वाश्वत्वयोरसमावेशे परस्परपरिहारवत्त्वं प्रयोजकं किन्तु
5 तदभिव्यञ्जकव्यक्त्युत्पादकसामग्रीविरोधः, तस्माद्विरुद्धयोः समावेशे नातिप्रसङ्ग इति भावः। गूढाभिसन्धिः सिद्धान्ती पृच्छति--**कुत एतदिति**। गवाश्वयोर्विरुद्धसामग्रीकत्वं कुतः प्रमाणादवगम्यत इति। इतर आह--**परस्परेति**। सामग्र्योः परस्परपरिहारस्थितेर्विरोधोऽवगम्यत इति। **नेदमिति**। सामग्र्योः परस्परपरिहारेणावस्थानम्। इदं न प्रत्यक्षं सामग्र्योर्नित्यं कार्यकल्पत्वादिति, प्रत्युत
10 सामग्रीसमावेश एवानुमातुं शक्यत इत्याह। **एकदेशेति**। त्वन्मते गोत्वाश्वत्वयोरेकस्यां व्यक्तौ समावेशात् सामग्र्योरपि समावेशसंभवोऽनुमीयेत यावद् बाधकदर्शनं तावदिति। यद्वा, विरुद्धयोरसमावेशः सामग्रीविरोधादिति वदता विरुद्धयोरप्येकदेशसमावेशाङ्गीकाराद् विरुद्धयोरपि सामग्र्योः समावेशसम्भवोऽनुमीयत इत्यर्थः। शङ्कते--**तत्कार्ययोरिति**। न वयं कार्ययोः परस्परपरिहारेण स्थितेः सामग्र्योः परस्पर-
15 परिहारस्थितिं कल्पयामः, येन कार्ययोः समावेशसंभवात् सामग्रीसमागमोऽपि कल्प्येत, किन्तु सामग्रीद्वयकार्ययोर्गवाश्वयोः परस्परपरिहृतस्वभावत्वादितरेतराभावत्वादिति यावत्, अस्ति ह्येकदेशसमाविष्टयोरपि परस्परपरिहृतस्वभावत्वमिति भावः। गूढाभिसन्धिमुद्घाटयन्नाह--**तर्हीति**। यदीतरेतराभाववत्त्वेन गवाश्वयोः सामग्रीविरोधादसमावेश इति कल्प्यते तर्हि कम्पशिंशपयोरप्यसमावेशः स्यात्। कम्पशब्दश्चात्र कम्परूपार्थक्रिया-
20 कारिणं शिंशपावान्तरजातिविशेषमाह, तेनायमर्थः कारणवैजात्यमभ्युपगच्छता ह्यकम्पकारिणः शिंशपात्वात् कम्पकारिणो वैजात्यमभ्युपगन्तव्यम्, ततश्च कम्पजनकाजनकयोः शिंशपातदवान्तरविशेषयोरसमावेशप्रसङ्गः। तयोरपि परस्पराभावत्वादिति। यद्वा, कार्ययोः परस्परपरिहारेण स्थितेः सामग्रीविरोध इति तत्कार्ययोरित्यनेनाशङ्क्य यदि क्वचित्परस्परपरिहारदर्शनेन सामग्रीविरोधमुन्नीय कार्ययोः सर्वदा सर्वत्रासमावेशः कल्प्येत
25 तर्हि कम्पशिंशपयोः कदाचिदसमावेशदर्शनात् सर्वदा सर्वत्रासमावेशप्रसङ्ग इति परिहारमाह--**तर्हीति**। **दृश्यत** इति। परस्परपरिहारेऽपि कम्पशिंशपयोः **समावेशो दृश्यते** न तु गोत्वाश्वत्वयोरिति नाप्रसङ्गातिप्रसङ्गाविति। **गोत्वाश्वत्वयोरिति**। परस्परपरिहारवतोरपि क्वचित्समावेशदर्शनादत्रापि तत्संभावना दुष्परिहरेति। एवं तावज्जनकाजनकयोः समावेशाङ्गीकारे सर्वत्र गवाश्वादिविरुद्धसमावेशसंभावना निष्प्रत्यूहं प्रवर्तत इति

स्थितम्। एवं भूमिकामारचय्य तत्र विवक्षितमनुमानाभावं निवेशयति—**तथा चेति**। कार्यलिङ्गवदनुपलब्धिलिङ्गकेनापि गतमिति। तथा चेति परामृष्टं हेतुं स्पष्टयति—**क्वचिदपीति**। एषा हि बौद्धपरिभाषा अनुपलब्धिरसद्व्यवहारयोग्यत्वं प्रतिबन्धबलेना-नुमापयति। प्रतिबन्धश्चानुपलब्धेः सद्व्यवहारविरोधात्सिद्ध्यति यथाह न गोत्वमस्ति अश्वत्वादिति गोत्वविरुद्धाश्वत्वोपलब्धिरूपा गोत्वानुपलब्धिर्गोत्वाभावं गमयतीति। तत्र यदि विरुद्धयोरपि समावेशः स्यात् तदानुपलब्धेरपि सद्व्यवहारयोग्यत्वसमावेशसंभवेना-सद्व्यवहारयोग्यतया प्रतिबन्धासिद्धेर्गतमनुपलब्धिलिङ्गकमिति। अत एव स्वभावहेतुरपि निरस्त इत्याह—**तत** इति।

तादात्म्येन प्रतिबद्धो हेतुः स्वभावः, यथा शिंशपात्वं वृक्षत्वस्य। क्वचिदपि विरोधासिद्धाववृक्षेऽपि शिंशपात्वसमावेशसम्भवात्तस्य प्रतिबन्धो नास्तीति। स्वभाव-हेतोर्विपक्षे बाधकमाशङ्कते—**नन्विति**। वृक्षसामग्र्यन्तर्भूता शिंशपासामग्री तदविना-भूता तत्कारणिकेति यावत्। ततश्चावृक्षे वृक्षसामग्र्यभावेन स्वभावसामग्र्यभावाच्छिंशपा न भवति। तेनावृक्षलक्षणे विपक्षेऽपि शिंशपात्वस्य सामग्र्यभावो बाधकमित्यर्थः। शिंशपाव्यवहारेण वृक्षव्यवहारे साध्येऽप्येतदेव विपक्षे बाधकमित्याह—**एवमिति**। यदि च शिंशपाव्यवहारो वृक्षव्यवहारमतिपतेत् ततस्तयोः सामान्यविशेषभावो न स्यादिति भावः। यद्यप्यत्र क्वचिदपि विरोधासिद्धौ शिंशपातद्व्यवहारयोर्वृक्षतद्व्यवहारातिपातेऽपि न विरोध इत्यपि परिहारः संभवो तथापि परिहारवैभवादन्यथा परिहरति—**एवं तर्ही-ति**। एवंविधस्य विपक्षे बाधकस्य तुल्यत्वाच्छिंशपात्वावान्तरजातिविशेषेण कम्प-कारित्वेन शिंशपात्वानुमानं तद्व्यवहारेण शिंशपाव्यवहारानुमानं प्रसज्येत। न च तच्छक्यं शिंशपात्वानन्तर्भूतस्य पलाशादेरपि कम्पजनकत्वादिति।

**नोदनादीति**। यथा वृक्षसामग्रीविशेषः शिंशपासामग्री, नैवं शिंशपा-सामग्र्यन्तर्भूता कम्पसामग्री, किन्तु नोदनाभिघाताद्यागन्तुकहेतुकत्वाच्चलत्वस्य शिंशपा-त्वातिपातेऽपि न कश्चिद्विरोध इति। एतद्विकल्प्य निराचष्टे—**यदीति**। किं नोदनादयो भवन्मतानुरोधेन शिंशपास्वभावभूता भवेयुः, अस्मन्मतानुरोधेनास्वभावभूता वा? पूर्वत्र शिंशपाविशेषा एव नोदनादयः अशिंशपायाः शिंशपास्वभावत्वायोगात्, तत्र च पूर्वोक्तं शिंशपातुल्यत्वं तदवस्थमेव। उत्तरत्र कम्पजनने शिंशपायाः सहकारिणो नोदनादयः स्युरिति। सन्तु सहकारिणः का नो हानिरित्यत्राह—**तत** इति। **निर्विशेषैव** जातिभेदं व्यक्तिभेदं विनेति यावत्। **चलस्वभावान्** चलनात्मकान् स्वभावान् धर्मान्,

चलनात्मिकाः क्रिया इत्यर्थः। पुनः शङ्कते—**स्वभावभूता** इति। स्वभावभूताः शिंशपायाः स्वभावभूता एव नोदनादयः ते चागन्तुकनोदकादिसहकारिसंनिधानाधीनजन्मानः, ततश्चागन्तुकसहकार्यनुप्रवेशाच्चलनजननस्वभावं शिंशपान्तरं जायत इति क्षणिकत्वं सिद्ध्यति, सिद्ध्यति चाशिंशपाया अपि चलद्रूपत्वं नोदनाद्यागन्तुकसहकारिणां
5 पलाशादावपि संभवादिति। तर्हि शिंशपाया अपि वृक्षातिपातः स्यादित्याह—**एवं तर्ही**ति। शङ्कते—**एवमि**ति। एवमविशेषे सत्येतत्त्वदुक्तं स्यात्, किंतु विशेषोऽस्तीत्यर्थः। यथा वृक्षसामग्र्यामागन्तुकशिंशपाबीजत्वादिसहकार्यनुप्रवेशात्, शिंशपोत्पत्तिरित्येतत्सत्यं, तथाप्ययं विशेषोऽस्तीति तमेव विशेषमाह—**शिंशपे**ति। उपादायैव शिंशपा जनयन्तीति शेषः। न तामेव शिंशपासामग्रीमुपादायैव चलत्वं
10 जनयन्ति किन्तु मूर्त्तमात्रमुपादाय, पलाशादीनामपि कम्पदर्शनात्। शिंशपासामग्री तरुसामग्रीं न व्यभिचरति, चलसामग्री तु शिंशपासामग्रीं व्यभिचरतीति विशेष इत्यर्थः। निराकरोति—**नैवमि**ति। विशेषा एव केचित्स्वपरसामान्यं व्यभिचरन्ति केचिन्नेति न नियमहेतुरस्तीति। दर्शनं त्वन्यत्र नोदनादीनामस्वभावभूतानामेव सहकारित्वादुपपन्नमिति भावः। एवं नोदनादीनां स्वभावत्वे दूषिते प्रामाणिकं सहकारिवादम-
15 गत्यावलम्बते—**शिंशपे**ति। तद्विशेषा एव=वृक्षजनकविशेषा एव, तथा=शिंशपाया एव जनकविशेषाः, ततश्च सिद्धः कम्पशिंशपयोर्विशेष इति पूर्वोक्तमेव निराकरणं स्मारयति—**एवं तर्ही**ति। सदृशरूपा=जातिभेदसामर्थ्यविरहिण इत्यर्थः। **न तथा**—न कम्पकारिण इत्यर्थः। जात्यभेदेऽपि व्यक्तिभेदादेव सिध्यति क्षणिकत्वमित्यत्राह—**तथा चे**ति। एकजातीयस्यैव सहकारिलाभात् कार्यजनकत्वाङ्गीकारे सति
20 पूर्वैव शिंशपाव्यक्तिः सहकारिसन्निधानात् कम्पहेतुर्वा भवेत्, स्वोत्पत्त्यनन्तरमेव न दृष्टा पूर्वव्यक्तिः, तज्जातीया तत्संतानान्तःपातिनी त्वन्या सहकारिसमवधानात् कार्यजननीह भवेदित्यत्र न कश्चिद्विशेषः उभयत्रापि सहकार्यायत्तत्वात्कार्यकारणस्य; तथा च न क्षणिकत्वसिद्धिरिति। तदेवं विरुद्धयोरेव क्वचित्समावेशो क्वचिदपि विरोधासिद्धेर्विपक्षे बाधकाभावात् स्वभावहेतुर्न सिध्यतीत्युक्ते तस्य विपक्षे बाधकमाशङ्क्य यथा तन्न सिध्यति
25 तथोक्तम्। इदानीं प्रकृतमुसंहरति—**तस्मादि**ति। ननु नीलमुत्पलं चलतीत्यादौ विरुद्धानामपरापरभूतानामेव नीलत्वादिसामान्यादीनां समावेशो दृश्यते। न च तत्र परापरभावः, नीलस्य परत्वे रक्तमुत्पलं न स्यात्, उत्पलस्य परत्वे नीलं नीलीपुष्पं न स्यात्, न च नास्ति विरोधः? कुर्वत्त्वबीजत्वयोरविरोधप्रसङ्गात्, तत्कथमयं नियम

इत्याह—**अनेवमिति**। अनेवंभूतानां विरोधे सति समाविष्टानां समावेशो सत्यपरापर-भूतानां च द्रव्यगुणकर्मस्वरूपेणोपाधित्वमात्रं, न सामान्यरूपेण समाविष्टत्वम्। तथा हि नीलगुणयोगात् नीलमुत्पलं न तु नीलत्वयोगात्, तथा द्रव्यसंबन्धाद् द्रव्यं नीलं न तु द्रव्यत्वयोगादिति। एवं चलनयोगात् चलं न तु चलत्वयोगादिति। जात्यात्मकानां तु सामान्यानां विरोधे सति न समावेश इतीमं तात्पर्यगोचरमर्थं पृथक्कृत्याह—**तेषां त्विति**। कुत इत्यत आह—**व्यक्तिभेदादिति**। सामान्यव्यञ्जकानामाश्रयाणां भेदादिति। भिद्यन्तां व्यञ्जकानि किमायातमसमावेशस्य तत्राह—**जातीनामिति**। व्यक्त्याश्रयत्वाज्जातीनां तद्भेदेन तदाश्रयाणां जातीनां च न समावेशः। तस्माद्विरुद्धानां नीलत्वोत्पलत्वचलत्वादीनां गुणद्रव्यकर्मव्यक्तिसमवेतत्वेन नैकव्यक्तिसमावेशः, समाविष्टानां गुणादिव्यक्तीनां न विरोध इत्यर्थः। मा भूत्तर्हि कुर्वत्त्वबीजत्वयोः समावेश इत्यत्र न वैजात्यं विनेत्येतदेव स्मारयति—**तथा चेति**। अस्तु तर्हि समावेश इत्याशङ्क्य महता प्रबन्धेनोपपादितमनुमानभङ्गमुपसंहरति—**वैजात्येति**। विना तेन न तत्सिद्धिरित्येतच्छङ्कापूर्वकं व्याचष्टे—**मा भूदिति**। कुतः प्रमाणान्तरात् तस्य क्षणिकत्वसिद्धिरिति। ननु प्रत्यक्षमेव तत्र प्रमाणमित्यत्र नाध्यक्षं निश्चयं विनेत्येतदुत्तरयति—**न हीति**। क्षणिकमेतदिति निश्चयस्य विकल्पस्याभावादिति। मा भूद्विकल्पः, निर्विकल्पकमध्यक्षं तत्र प्रमाणमित्यत्राह—**गृहीतेति**। निर्विकल्पकेन गृहीते विकल्पिते चार्थे तस्य प्रत्यक्षस्य प्रामाण्यादिति विपर्यये बाधकमाह—**अन्यथेति**।

यद्यनिश्चित एवार्थे प्रत्यक्षं प्रमाणं स्यात् किमिति वर्ह्यक्षणिकत्व एव तत्प्रमाणं न स्यात् इति चोदयति—**नन्विति**। द्वितीयप्रत्यक्षं तावद्धर्मिणं घटोऽयमिति वर्त्तमानत्वविशिष्टमेवावगाहते, वर्त्तमानस्य चातीतानागतात्मकत्वविरोधात्। तेन वर्त्तमानत्वं निश्चाययदेव प्रत्यक्षं धर्मिणः पूर्वापराभ्यां भेदं निश्चाययतीति क्षणिकत्वे प्रमाणमिति विकल्पं दूषयितुं पृच्छति—**तदिति**। तद् वर्त्तमानत्वं किमित्यभिमतं, किं नीलादिधर्मिस्वरूपमेव, अथवा तद्धर्मकालविशेषसंबन्ध इति भावः। द्वितीये दूषणमाह—**अथेति**। तस्य वर्त्तमानत्वधर्मस्यातीतानागतत्वाभ्यां भेदनिश्चयेऽपि धर्मिणो नीलादेर्न भेदः सिध्यति। तस्य धर्मिणस्ततो धर्मादन्यत्वादिति। बौद्धः स्वाभिसन्धिमुद्घाटयति। **वर्त्तमानेति**। न वयं धर्मिमात्रनिश्चयाद्धर्मभेदनिश्चयाद्वा धर्मिणो भेदं ब्रूमः, किन्तु वर्त्तमानत्वावर्त्तमानत्वलक्षणविरुद्धधर्मसंसर्गादिति दूषयति—**यदीति**। सदसत्त्वरूपं तावद्वर्तमानत्वावर्त्तमानत्वमेकस्य धर्मिणो नाभ्युपगच्छाम इति। कुत इत्याह—**ताद्रूप्येणे**ति। शङ्कते-**सदसदिति**। सता वर्त्तमानेन कालेन संबन्धो वर्त्तमानत्वम्,

असताऽतीतेनानागतेन वाऽवर्तमानत्वमिति किमसंगतमिति। यथा प्रत्यभिज्ञानमेकमेव वर्त्तमानत्वं सच्च विषयीकरोति असच्चातीतत्वम्, यथा वा अघटं भूतलमिति ज्ञानं भावाभावौ, तथैक एव धर्मी सदसद्भ्यां संभन्त्स्यते, को विरोध इति। नन्वस्तु युगपदेकस्यानेकसंबन्धो न तु क्रमेण, तथा हि यद्येकसम्बन्धक्षणे भावः संबन्ध्यन्तरेणापि
5 सम्बद्धुं समर्थः, तर्हि तदानीमेव तेनापि संबध्येत, समर्थस्य क्षेपायोगात्। असमर्थश्चेन्न पश्चादपि। तदन्यदेव पश्चात्संबध्यत इति सिद्धः क्षणभङ्ग इत्याशयेन शङ्कते **क्रमेणेति**। प्रत्यभिज्ञया तावदेकत्वं प्रतीयत इत्युक्तं, न चैकस्यानेकसंबन्धोऽनुपपन्न इति केवलमत्र सम्बन्धक्रमे कारणं वक्तव्यं, तच्च संबन्धिसन्निधापकानां क्रम एवेत्याह—**उपसर्पणेति**। ननु प्रत्यभिज्ञायाः प्रामाण्ये सति सर्वमेतदेवं स्यात्, तदेवासिद्ध-
10 मित्याह—**प्रत्यभिज्ञानमिति**। मा भूत् प्रामाण्यसिद्धिस्तथापि भवन्तं विजयामह इत्याह—**अस्ति तावदिति**। स्थैर्यसाधकं प्रत्यभिज्ञानं तावदस्ति, अन्यथा धर्मिण एवासिद्धौ तत्राप्रामाण्यविधानायोगात्। तेन धर्ममात्रप्रामाण्यमेव तस्य निरूपणीयम्। क्षणिकत्वे तु प्रमाणाभासोऽपि नास्तीति ॥१६॥

विवेकः

**अस्तु तर्हीति**। तथा च भोगकुर्वद्रूपात् स्मृतिकुर्वद्रूपाच्च परमाणुपुञ्जात् भोगस्मृती-
15 स्तां किन्नित्यनिष्ठभोक्तृत्वेनेति भावः। तथा पूर्वोत्तरशरीरयोरुपादानोपादेयभावाद्वासना-संक्रमेण स्मृतिनियम उपपत्स्यत इति भाव इति तु **प्रकाशकृतः**। **अस्त्विति**। अत्रायं घट एतदधिकरणद्वितीयक्षणवृत्तिनाशप्रतियोगी एतद्वृत्तिप्रागभावप्रतियोगित्वात् एतत्पूर्वनष्ट-वत्। यद्वा एतद्घटः नैतदुपादेयवृत्तिः एतद्रूपप्रागभावकालीनत्वात् तद्वदेव, अथवा एतत्प्रागभाववृत्तिः नैतत्प्रतियोगिवृत्तिः एतत्प्रागभाववृत्तित्वात् तद्वदेव, किं वा अयम्
20 एतत्प्रागभाववानसत्त्वात् आकाशवदित्यादयो न्यायनयानुसारीयाः प्रयोगाः। एवं तदनुसारेणापि सार्द्धद्विकात्मको न्यायो बोध्यः। ननु **क्षणभङ्गनये** फलानुपधायकव्यक्तेः फलोपहितव्यक्तिर्विलक्षणावश्यं वाच्या यत्सत्तासत्ताभ्यां कार्य्योत्पादानुत्पादौ तच्च वैलक्षण्यं सहकारिसाहित्यं वा जातिभेदो वा यः कुर्वद्रूपत्वेन गीयते। आद्ये, लक्षणभङ्गः सहकारिसाहित्यासाहित्याभ्यामेव कार्य्योत्पादानुत्पादयोरुपपत्तेः। अन्त्ये, योग्यव्यक्तिवृत्ति-
25 तया घटत्वादिवत् इन्द्रियसन्निपातमात्रेणैव तद्ग्रहापत्तिरित्यत्राह—अतिशयः कार्य्योत्पाद-नियामकं कुर्वद्रूपत्वम्। अपिरवधारणे। अतिरिच्यते न गृह्यते। च पुनरर्थोऽतिशयान्वयी। तथाचातिशयस्तु गृह्यत एवेति नेत्यर्थः, किन्तु कदाचित् गृह्यत इत्यर्थः। अत्र तु

दोषमाह—**सौसादृश्येति**। कदा गृह्यते कदा नेत्याकांक्षायामाह—**किन्त्विति**। द्राक् कार्य्यदर्शनं विना न विकल्प्यते। एवकारव्यवच्छेद्यं स्पष्टयति—**कार्य्यदर्शनादिति**। तथा च कार्य्यमेव वैसादृश्यमिति। यद्यपि कार्य्ये दर्शनकाले आश्रयस्याविद्यमानतया न तत्राध्यवसायस्तथापि कार्य्यजनकत्वेनानुमितिरेवाध्यवसायः। अन्त्यातिशयः सामग्री सा यथा कार्य्यदर्शनादवसीयते न तथा कुर्वद्रूपत्वमपि सौसादृश्यतिरस्काराद् द्रागेवाग्रह इति भावः। तथा तथा प्रतिसन्धानादि कुर्वद्रूपत्ववति। **प्रतिसन्धानेति**। आदिपदाद्भोग-नियमपरिग्रहः। दूषयति—**क्षणिकत्वेति**। अन्यत्र **आत्मतत्त्वविवेकादौ**।

शिष्याकांक्षामनुसृत्य संक्षेपेण क्षणभङ्गबाधिकां युक्तिमाह—**अपि चेति**।

वैजात्यं फलाव्यवहितप्राक्कालातिरिक्तव्यावृत्तं निखिलफलोपहितवृत्तिकुर्वद्रूपत्वाख्यं विना तत्क्षणिकत्वं न स्यात् न सिद्ध्यति स्थिर एव वीजादौ सहकारिसमवधानासम-वधानाभ्यां कार्य्योत्पादानुत्पादसम्भवादिति भावः। तस्मिन् वैजात्ये ऐन्द्रियकवृत्तौ अतीन्द्रिये चाभ्युपगम्यमानेऽनुमानुमितिर्न भवेत् धूमादिलक्षणे कार्य्येऽपि धूमत्वव्याप्याया-स्तादृश्या एव जातेर्वह्निकार्य्यतावच्छेदकत्वशङ्कया धूमसामान्ये व्यभिचारसंशयादिति भावः। धूमस्यापि किञ्चित् कार्य्यं प्रति कुर्वद्रूपत्वेन तत्रापि तव मते तस्याः जातेः सम्भवात्, सम्भवति चागुरौ विशेषधर्मे सामान्यधर्म्मस्य कार्य्यतानवच्छेदकत्वादिति हृदयम्। मास्त्वनुमा किन्नश्छिन्नमित्यत्राह—**विनेति**। तेनानुमानेन विना तस्य कुर्वद्रूपत्वरूपवैजात्यस्य क्षणिकत्वस्य वा न सिद्धिः, कार्य्येण सत्त्वेन वा हेतुना तस्य त्वयानुमेयत्वादिति। ननु मास्तु तयोरनुमानम्, अध्यक्षमेव तत्र मानमङ्गीकार्य्यमित्यत्राह—**नाध्यक्षमिति**। अध्यक्षं निर्विकल्पकं निश्चयात् सविकल्पकात् विना न सिद्ध्यति, तस्य तदेकोन्नेयत्वात्; अन्यथा तादृशवैजात्यक्षणिकत्वयोरभावगोचरमेवाध्यक्षमस्तीत्यपि वक्तुं सुकरत्वात् तदभाव एव सिद्ध्येत्। अभावस्य तुच्छतया नाध्यक्षगोचरत्वमिति चेत्, अनुगताकारस्यापि त्वन्मते अलीकत्वात् नाध्यक्षविषयतासम्भव इति भावः।

वैजात्यं विना न क्षणिकत्वमित्युपपादयति—**न हीत्यादि**। कारणाकरणयोः कार्य्योपधानानुपधानयोः तज्जातीयस्य वीजजातीयस्य सतः कार्य्याव्यवहितप्राक्क्षणे तदतिरिक्तक्षणे च सतः सहकारिलाभालाभौ तत्समवधानासमवधाने तन्त्रं प्रयोजकम्। **तथेति**। यथा क्षणिकतापक्षे सहकारिसमवधानासमवधानाभ्यां कार्य्यकरणाकरणे तथा एकव्यक्तावेव ताभ्यां तयोरविरोधात्। **तत्त्वेद्धेति**। यत् सहकारिणा समवधाने कार्य्यो-पहितं तदेव तदसमवधाने कार्य्यानुपहितमित्यस्मन्नये। **तादृग्वेति**। या व्यक्तिः

सहकारिसमवधाने कार्य्योपहिता तादृशैवावान्तरवैजात्यरहितैरतद्भिन्ना व्यक्तिः सहकार्य्य-
समवहिता कार्य्यानुपहिता त्वन्मते इति हेतोर्न कश्चिद्विशेषः। 'अवान्तरवैजात्यं तत्रे'ति
न्यायात् इत्यन्यथोपपत्तेः सम्भवात्। तौ सहकारिलाभालाभौ अनादृत्य कार्य्योपधानापधान-
प्रयोजकत्वेनानुपगम्य वैजात्यं कुर्वद्रूपम् अप्रामाणिकमिति वक्ष्यमाणयुक्त्या अनुमानाध्यक्ष-
5 योरभावद्योतनायैवेति वैजात्यान्वयि। एवञ्च योग्यवृत्तेरयोग्याया जातेरुपगमे तु कारणवत्
बीजादाविव कार्य्येऽपि धूमादौ यस्य कारणापेक्षा यदवच्छिन्नस्य वह्निकारणत्वं न तु
दृष्टजातीयस्य धूमत्वावच्छिन्नस्य न तदुत्पत्तिसिद्धिर्न धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चयः;
तथाचाविच्छिन्नमूलादिविशिष्टधूमसामान्येनापि वह्न्यनुमानं न स्यादिति भावः।
ननु धूमत्वं कार्य्यमात्रवृत्तितयावश्यं कार्य्यतावच्छेदकं वाच्यं, न चान्यत्
10 कारणं तथा दृश्यते इति वह्निनिष्ठकारणतानिरूपितकार्य्यतावच्छेदकमेव तद्वाच्यमिति
नोक्तशङ्का स्यादित्यभिप्रायेणाह—**दृष्टे**ति। तत्रापि धूमत्वावच्छिन्नेऽपि। **अन्यदि**ति।
तथा च न तत्र वह्निव्यभिचारशङ्कानिरास इति भावः। शङ्कते—**ने**ति। कार्य्यस्य धूमस्य
विशेषोऽवान्तरवैजात्यं तत्प्रयोज्यतया वह्निजन्यतावच्छेदकतयोपलभ्यते निश्चीयते।
सामान्यस्य अन्यत् वह्निभिन्नं, तथा चोपस्थितधूमत्वावच्छिन्नवह्नित्वावच्छिन्नयोरेव प्रयोज्य-
15 प्रयोजकभावः कल्प्यत इति भावः। कारणस्य बीजजातीयस्य स्वगतो विशेषः कुर्वद्रूपत्व-
रूपः तत्प्रयोजकतयाऽङ्कुरजनकतावच्छेदकत्वेन कारणसामान्यस्य बीजत्वावच्छिन्नस्य अन्यत्
अङ्कुरात् तेन रूपेणार्थक्रियाकारित्वस्य तेन रूपेण सत्त्वमिति तदुपगमादिति भावः।
विवक्षितं बीजत्वादन्यत् कुर्वद्रूपत्वमेवाङ्कुरजनकतावच्छेदकमित्येवंरूपम्। उभयत्र धूमे
बीजाङ्कुरे च। ननु शङ्कामात्रं शङ्कापिशाचीवत् न प्रमाणप्रवृत्तिविरोधि मया तु कार्य्य-
20 जन्माजन्मभ्यां कुर्वद्रूपत्वमुन्नीयते तदभावश्च। तथा च विरुद्धधर्म्माध्यासाद्भेदसिद्धौ
सिद्ध्यति क्षणिकत्वमित्यक्षरतात्पर्य्याभ्यामाह—**कार्य्ये**ति। **सहकारी**ति। तथाचाङ्कुरो-
पहितं बीजम् अङ्कुरानुपहितबीजवृत्त्यत्यन्ताभावप्रतियोग्यङ्कुरोपधानप्रयोजकधर्म्मवत् तदुप-
हितत्वात् बीजभिन्नाङ्कुरप्रयोजकवदित्यनुमानेन तत्साधने सहकारिसमवधानेनार्थान्तरमिति
भावः। नन्वेकत्र धर्म्मिणि सहकारिलाभालाभौ विरुद्धाविति सहकारिसमवधानप्रयोजकतयापि
25 तदनुमेयमित्यत आह—**उन्नीयतां वे**ति। **कार्य्ये त्वि**ति। तथाचोन्नयनमेवोक्तव्यभि-
चारशङ्कया अनुमित्यसम्भवे दुःशकमिति भावः। शङ्क्ष्यते वह्निप्रयोज्यातीन्द्रियो धर्म्मः
निषेद्धुं धूमनिष्ठनिषेधप्रतियोगितया निश्चाययितुं स्वभावानुपलब्धिर्योग्यानुपलब्धिः तस्या-
योग्यत्वादिति भावः। ननु यथा तव मनस्त्वादेरतीन्द्रियस्याप्यभावो घटादौ योग्यानुपलब्धि-
गम्यः, तथा कार्य्यैकनिश्चयस्य वस्तुनः कार्य्यानुपलब्धिसहकारिणो भावस्य **योग्यानुप-**

लब्ध्यान्यथा स्यादित्यत्राह—**कार्यैकेति**। तदनुपलब्ध्या कार्य्यानुपलब्ध्या निश्चयस्यैवोपपत्तेः; न तु तदभावोपलब्धिस्तत इति भावः। ननु यत् येन रूपेण सत् तत् तेन रूपेणार्थक्रियाकारि, न च धूमोऽवान्तरतादृशविशेषणार्थक्रियाकारीति तेन सन्न स्यादित्यत्राह—**कार्य्यस्येति**। तथा च तेनार्थक्रियाकारित्वाभावोऽसिद्ध इति भावः। अतएवोक्तप्रणाल्या व्यभिचारसंशयग्रस्तत्वादेव अनुपलब्ध्यन्तरं व्यापकानुपलब्धिरूपम्। 5

नन्वियं शङ्का शङ्कापिशाचीवदप्रतिबन्धिका स्यादित्यरुचेर्दोषान्तरमाह—**एवमिति**। 'भावरूपयोः' स्वमते, 'व्यावृत्तिरूपयोः' परनये। जात्योः तद्व्यवहारास्पदयोर्विरोधे परस्परस्य परस्परात्यन्ताभावसामानाधिकरण्येन समावेशः नैकाधिकरणवृत्तित्वं, समाविष्टयोर्मध्ये एकतरस्य परापरभावनियमः। एकस्य तदेकतरसमानाधिकरणात्यन्ताभावप्रतियोगित्वे सति तदभाववदवृत्तित्वम् अपरत्वं, स्वाभावसमानाधिकरणत्वे सति स्वव्यापकत्वरूपञ्च 10 परत्वमावश्यकमित्यर्थः। प्रकृते च शालित्वकुर्वद्रूपत्वयोर्मिथोऽत्यन्ताभावसमानाधिकरणयोः समावेशस्त्वयोच्यते, स चानुपपन्न इति भावः। ननु समाविष्टयोर्नोक्तपरापरभावनियमः, बुद्धित्वोपलब्धित्वघटत्वकलसत्वादौ तदभावादित्यत्राह—**अन्यूनेति**। घटत्वं न कलसत्वभिन्नत्वे सति जातिः, कलसत्वान्यूनानतिरिक्तदेशत्वात् कम्बुग्रीवादिमत्त्ववच्चेत्यर्थः। अत्रानुकूलतर्कमाह—**प्रमाणाभावादिति**। एकयैव जात्योभयव्यवहारोपपत्तौ तद्भेदे 15 मानाभावादित्यर्थः। प्रमाणाभावमुक्त्वा व्यापकानुपलब्धिबाधमाह—**व्यावर्त्येति**। व्यावर्त्यमधिकरणं तज्जात्यपेक्षया या जातिर्भिन्ना तदन्यतरावच्छिन्नभेदसामानाधिकरण्यवृत्तित्वन्तदन्यतरत्वे आवश्यकं यथा पृथिवीत्वभिन्नं द्रव्यत्वं द्रव्यत्वपृथिवीत्वान्यतरत्वञ्च तदेकतरपृथिवीत्वावच्छिन्नभेदसमानाधिकरणवृत्ति, न चान्यूनानतिरिक्तवृत्ति, तदुपगमे तथा सम्भव इति विरोधानवकाशः, निरुक्तधर्म्मस्य जातिनिष्ठजातिभेदव्यापकस्याभावे भेदस्य 20 जातिभेदस्य जातावनुपपत्तेः तथाभावप्रसङ्गात्। तथा च परस्परेण परस्पराभावानुमानं न स्यादिति भावः। गोत्वाश्वत्वाश्रयसामग्र्योर्विरोधात् नैवं तयोः समावेशः। एतत्सामग्र्योर्विरोधस्वरूपं शङ्कते—**परस्परेति**। परस्परसामग्र्योः परस्परसामग्र्यभावव्याप्यत्वेनैव निश्चयादित्यर्थः। इदं तयोः परस्पराभावव्याप्यत्वं गोत्वाश्वत्वयोरेकदेशसमावेशात्, क्वचिदेकदेशे सामानाधिकरण्यसन्देहात्, तदाश्रयसामग्र्योः क्वचित् समावेशोऽपि 25 उन्नीयते। सन्दिह्यते **यावदिति**। यत इत्यर्थे पुनः शङ्कते—**कार्य्ययोरिति**। गोत्वावच्छिन्नाश्रयत्वावच्छिन्नयोः परस्परपरिहृतिस्वभावत्वात् तत्त्वावच्छिन्नभेदवत्त्वात् नैवं न तत्सामग्र्योः समावेशः। **तर्हीति** तन्नये कर्म्मणो धर्म्मिभिन्नत्वेन कम्पस्य चन्दने

अचलशिंशपायाञ्च मिथोविरोधदर्शनाच्च न शिंशपायां सामग्र्योः समावेशः। गोत्वाश्वत्व-
योरित्यत्र समावेश इत्यनुषज्यते। अस्तु तयोरपि क्वचित् समावेशः। किमेतावतेत्यत्राह—
**तथाचे**ति। **अनुपलब्धी**ति। गोत्वव्यापकाश्वाभावाभावेनाश्वत्वेन गोत्वाभावानुमानं न
स्यादित्यर्थः। एवं सास्नावत्त्वेनापि अश्वत्वाभावानुमानं न स्यादित्यर्थः, उक्तप्रणाल्या तत्र
5 विरोधाकल्पनात्। अत्र वदन्ति—गोत्वेन सममश्वत्वादीनां विरोधस्तावत् प्रामाणिकस्तत्र
च गोत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वे सति गोत्वात्यन्ताभावसमानाधिकरणजातित्वा-
वच्छेदेनैव स कल्प्यते, जातित्वञ्च नित्यसमवेतमात्रमधिकस्य वैयर्थ्यात् नित्यत्वोपादानात्
संयोगादेस्तथात्वेऽपि न क्षतिः। यत्र च द्वयोरेव न जातित्वं यथा भूतत्वविभुत्वयोस्तत्र
भूतत्वसमानाधिकरणात्यन्ताभावप्रतियोगिभूतत्वाभाववद्वृत्तेर्यद्भूतत्वनिष्ठं सामानाधिकरण्यं
10 तत्र जातिमात्रनिरूपितत्वाभावः कल्प्यते, मात्रोपादानान्मूर्त्तत्वस्य जातित्वेऽपि न क्षतिः।
यद्वा आकाशावृत्तिजातीनां मनोनिष्ठात्यन्ताभावप्रतियोगिजातित्वमेवाकाशवृत्तित्वावच्छेदकं
सति सम्भवे त्यागायोगादिति। नन्वेवं घटत्वपृथिवीत्वयोरपि समावेशो न स्यात् तयोरपि
मिथोऽत्यन्ताभावसमानाधिकरणत्वादिति चेन्न, तत्र मृत्तिकात्वादिव्याप्यनानाजातिस्वीकारात्।
घटपदशक्यतावच्छेदकन्तु संस्थानविशेषवत्वं, न च संयोगविशेषस्य तत्त्वेन तत्र च
15 कर्म्मसंयोगजन्यतावच्छेदकजातिभ्यां साङ्कर्य्यभयेन तस्यापि नानात्वेनाननुगमतादवस्थ्यमिति
वाच्यं, कर्म्मादिजन्यतावच्छेदकजातेर्नानात्वोपगमेऽपि क्षतेरभावात्, अत्र चानुगतव्यव-
हारात् तदैक्यस्यावश्यमुपेयत्वात्। न च शब्दविशेषजनकतावच्छेदकजात्या साङ्कर्य्यमिति
वाच्यम्, अनुगतकारणासम्भवेन शब्दवृत्तिजातेरेव नानात्वोपगमेन विलक्षणशब्दं प्रति
तादृशसंस्थानविशेषस्यैव तथात्वोपगमात्। भवतु वा यत्किञ्चिद्घटत्वमादाय तत्त्वावच्छिन्न-
20 कार्य्यतानिरूपितकारणताशालिसंयोगत्वमेवानुगतो धर्मः। एवं घटत्वान्तरमादायापि।
इत्थं यदि नाना तदा अस्तु। वस्तुतस्तु एकस्या एव शक्तेस्तद्धर्म्मावच्छेद्यत्वोपगमात्
शक्यतावच्छेदके च शक्तेरनुपगमेऽप्यक्षतेर्नानार्थताशक्तिभेद एवेति दिक्। वस्तुतस्तु
यत्र जातौ विरोधः प्रामाणिकः, तत्र तथा कल्प्यते तस्य चाधिकरणतावच्छेदकैककल्पना-
याम्मानाभावः। अन्यथा सामानाधिकरण्यावच्छेदकधर्म्मान्तरस्य कल्पनापत्तेः। अतएवोपाधौ
25 तत्त्वावच्छेदकधर्म्मान्तरनिरुक्त्यसम्भवेऽपि न क्षतिरिति। कार्य्येण कारणानुमानं प्राक्
निराकृतं निराकृतञ्चानुपलब्धिलिङ्गकमपि, सम्प्रति तादात्म्यहेतुकमपि अनुमानं निरस्यति—
**तत** इति। तादृशवैजात्यनिबन्धनव्यभिचारसंशयेन तदुत्पत्त्यनिश्चयाद्विरोधानिश्चयाच्च
तदुभयरूपं यद्विपक्षे हेतोर्वृत्तितायां बाधकं तस्यासम्भवादिति। स्वभावहेतुस्तादात्म्यहेतुः,
तथा च यावद्विशेषबाधाद् गतमनुमितिसामान्येनैवेति भावः। विपक्षे बाधकान्तरमाह—

**नन्विति** । तत् विपक्षे बाधकम् । **वृक्षजनकेति** । वृक्षोपहितेत्यर्थः । वृक्षसामग्रीघटिता शिंशपासामग्रीति फलितम् । 'वृक्षमतिपत्य भवन्ती' वृक्षत्वेन जनयन्ती 'स्वकारणं' शिंशपाकारणम् 'अतिपतेत्' तादात्म्येन व्यभिचरेत, न शिंशपासामग्री स्यादिति यावत् । शिंशपाव्यवहारहेतुकवृक्षव्यवहारसाध्यकानुमाने विपक्षे बाधकमाह—**एवमिति** । 'तद्विशेषानुबन्धी' शाखादिमद्विशेषानुबन्धी तं वृक्षव्यवहारम्, अतिपत्य तद्भेदाधिकरणी- 5 भूयात्मानमासादयेत्, शिंशपाव्यवहारः स्यादित्यर्थः । कार्य्यनिष्ठातीन्द्रियवैजात्यशङ्कया कार्य्यकारणभावनिश्चयासम्भवे सहचारदर्शनमात्रप्रयुक्त एव वाच्यस्तथाचातिप्रसङ्ग इत्याह— **एवन्तर्हीति** । चलदलः कम्पवत्पत्रः न त्वश्वत्थः सहचारावसायासम्भवात् । तथा च चलदलेन शिंशपायास्तद्व्यवहारेण च तद्व्यवहारस्य चानुमानं न स्यादित्यर्थः । सहचारावसायस्याविशेषादिति भावः । 'सः' चलदलादिव्यवहारः, 'तं' शिंशपाव्यवहारम् । 10 **नोदनादीति** । तथा च विना शिंशपासामग्रीं नोदनादिघटिता सामग्री, तत्र च चलनोत्पत्तेर्नशिंशपासामग्र्यन्तर्भूतत्वं चलनसामग्र्या इति भावः । कम्पवत् नोदनस्यापि शिंशपात्मकत्वे उक्तप्रणाल्या तत्सामग्र्या अपि तत्सामग्रीघटितत्वमेव । तथा च न विशेष इत्याह—**यदीति** । 'नोदनादयः' शिंशपावृत्तित्वेन प्रतीयमानाः 'स्वभावभूताः' स्वधर्म्मि- णोऽभिन्नाः 'तद्विशेषाः' शिंशपाविशेषाः । तथा च तत्सामग्र्यपि तत्सामग्र्यन्तर्भूतैवेति 15 भावः । 'तान्' नोदनादिरूपसहकारिणः, 'निर्विशेषा' कुर्वद्रूपत्वाद्यनुगतजातिरहिता, 'चलस्वभावं' चलनम् । शङ्कते—**स्वभावेति** । क्वचित् स्वभावभूता अपि चलननोद- नादयः । अन्यत्र तज्जातीये आगन्तुकस्य शिंशपां प्रत्यजनकस्यानुप्रवेशात् तद्घटितसामग्र्या भवन्ति उत्पद्यन्ते । तथा च व्यभिचारितया न तेन तदनुमानमिति भावः । **आगन्तुकेति** । वृक्षाजनकेत्यर्थः । **न कश्चिदिति** । तथा च शिंशपातोऽपि 20 वृक्षानुमानं न स्यादिति भावः । 'एवं' वक्ष्यमाणम् । एतद्विपक्षबाधकमस्तीति प्राक्तन- मनुषज्यते । यद्वा एवमेतत् यदभिहितम् । यद्वा तुल्यत्वं तत्तथैव किन्त्वयं विशेषः । शिंशपाजनकास्तरुसामग्रीमुपादायैव शिंशपाफलोपहिताः । एवमग्रेऽपि । 'तामेव' शिंशपासामग्रीमेव 'तान्' शिंशपाजनकान् अतिपतन्ति तदजन्यान् जनयन्ति । 'तान्' वृक्षजनकान् इत्यत्र तद्विशेषा एव वृक्षजनकसामग्री विशेषा एव न तथा न शिंशपाविशेषाः 25 शिंशपां प्रत्यजनकाः सहकारिणो येषां ते तथा । एवं सहकारितोपगमे तानागन्तुकान् सहकारिणः सदृशरूपाः, न तु कुर्वद्रूपत्वजात्या विसदृशाः केचिन्मूर्ताः । साङ्कर्य्यबाधकेन कुर्वद्रूपत्वं निरसितुमुपसंहरति—**तस्मादिति** । विरुद्धायाः परस्परावच्छिन्नभेदसमानाधि- करणयोर्जात्योरिति शेषः । ननु विरुद्धयोरपि भूतत्वविभुत्वयोः परापरभावानापन्नयोरपि च

विभुत्वसर्वमूर्त्तसंयोगित्वयोः समावेशो दृश्यते तत् कथन्नियम इत्यत्राह—**अनेवमिति**। समाविष्टत्वे सति परापरभावानापन्नानामित्यर्थः। उपाधितामात्रं न तु जातित्वम्। ननु जातिवदुपाधिर्नाम पदार्थान्तरं न श्रूयते इत्यत्राह—**द्रव्यगुणादिभावेने**ति। आदिपदात् कर्म्मविशेषयोः परिग्रहः। **तेषामि**ति। समानकालीनानां द्रव्याणामेकमात्रवृत्तिगुणानां
5 कर्म्मणां विशेषाणाञ्च व्यक्तिभेदाद्भिन्नाश्रयत्वेनैव प्रमाणसिद्धत्वात्, एककालावच्छेदेन समानाधिकरणावृत्तित्वादिति यावत्। नन्वेवं जात्योरपि विरुद्धयोः समावेशोऽप्रसक्त एव किं प्रतिषेधेनेत्यत्राह—**जातीनामि**ति। भिन्नाश्रयत्वात् एककाले नानाधिकरणत्वादिति नाप्रसक्तप्रतिषेध इति भावः। **प्रकाशकृतस्तु**—ननु द्रव्यत्वगुणत्वकर्म्मत्वानां परापरभावो वाऽसमावेशो वेति शिष्यजिज्ञासायामाह—**तेषान्त्वि**ति। द्रव्यत्वादीनामित्यर्थः।
10 व्यक्तीनां तत्तदाश्रयानां व्यञ्जकानां भेदात् विरुद्धधर्माध्यासेन भिन्नत्वेनैव प्रमाणसिद्धत्वात्। ननु जातौ समावेशाभावे साध्यव्यक्तोनां भेदादिति व्यधिकरणमित्याशङ्क्य निष्कृष्याह—**जातीनामि**ति। भिन्नाश्रयत्वात् भिन्नभिन्नवृत्तित्वेनैव प्रमाणसिद्धत्वादित्याहुः। **परे** तूपाधीनां विरुद्धानामपि समावेशे सास्नावत्वकम्बुग्रीवादिमत्त्वयोरपि समावेशः स्यादित्यत्राह—**तेषामि**ति। तेषामुपाधीनां विरुद्धानां परस्पराभावव्याप्यानां सास्नावत्वकम्बुग्रीवादि-
15 मत्त्वानान्तु न समावेशः, सामानाधिकरण्यं व्यक्तिभेदाद्भिन्नाश्रयत्वेनैव प्रमाणसिद्धत्वात्। अयम्भावः—जातीनामुक्तो नियमः उपाधीनान्तु विरुद्धानामपि समावेशासमावेशपरापरभावेषु नियमो नास्ति, किन्तु यथाप्रमाणं व्यवस्थेति। ननु द्रव्यादीनामुपाधित्वे तेषामननुगततया कथमनुगतव्यवहार इति परम्परया जातिरेवोपाधिरिति वाच्यं, तथा च कथमसमावेश इत्यत्राह—'जातीनामि'ति। सास्नात्वकम्बुग्रीवात्वादिजातीनां भिन्नाश्रयत्वात्
20 समवायसम्बन्धेन भिन्नाश्रय एव वृत्तिमत्त्वात् मया च तेनैव सम्बन्धेनासमावेशोऽभिहितः, न तु परम्परयापीति भाव इत्याहुः। **केचित्तु** सास्नादिमत्वकम्बुग्रीवादिमत्वभूतत्वविभुत्वादिनाखण्डपदार्थान्तरं विशिष्टस्यानतिरेकात्, किन्तु सास्नाकम्बुग्रीवादिविशेषगुणविशेषपरिमाणविशेषात्मकं तेषाञ्चाननुगतानामनुगतव्यवहाराप्रयोजकत्वेन जातिविशेषोऽपि सास्नात्वादि तत्र निवेश्यं, तत्र सास्नादिलक्षणद्रव्यादीनाञ्चेत् समावेशः शङ्क्यते स नास्ति
25 प्रकृते इत्याह—'तेषान्त्वि'ति। सास्नादिलक्षणद्रव्यगुणानां विरुद्धानां समावेशो नास्त्येव व्यक्तिभेदात् भिन्नाभिन्नाश्रय एव वृत्तेर्जातीनां सास्नात्वादीनां समवायेनैव सास्नादिष्वेव वृत्तेः, न तु गवादिषु, तत् कुतः समावेश इत्याहुः। **तथाचे**ति। उक्तयुक्त्या कुर्वद्रूपत्वे निरस्ते इत्यर्थः। तन्निरासे चोपष्टम्भकान्तरमाह—**वैजात्य** इति। अतीन्द्रियस्य जातित्वोपगम इत्यर्थः। तत्क्षणिकत्वं कुर्वद्रूपत्वं वा क्षणिकत्वे तादृशि वैजात्ये वा गृहीते

निर्विकल्पकविषयीकृतं, निश्चीयत इति निश्चयो निश्चयविषयः, एवम्भूतो योऽर्थस्तत्रैव तस्य प्रत्यक्षस्य प्रामाण्यात्, अन्यथा विनापि निश्चयं तत्र निर्विकल्पकमभ्युपेत्य प्रत्यक्षप्रमाणोपन्यासे तादृशवैजात्याभाव एव निर्विकल्पकेन विषयीकृत इति अभ्युपगमेन तदभाव एव स्यादित्यर्थः ।

नन्विदानीं घट इति प्रत्यक्षप्रयोज्यम् इदानीं घट इति वाक्यं दृश्यते, इदानीमिति च विशेषविधेरितरनिषेधफलकतया इदानीमेवेति तदर्थः । तथा च तादृशवाक्यार्थसमानविषयकप्रत्यक्षात्मकवक्तृवाक्यार्थज्ञानस्यापि स एव विषय इति क्षणिकत्वनिश्चयसत्त्वात् निर्विकल्पकमप्यस्तीत्याह—**नन्विति** । असौ इदानीन्त्वेन प्रतीयमानः वर्त्तमानत्वनिश्चयः, इदानीं घट इति निश्चयः । गूढाभिसन्धिराह—**किमिति** । तत् वर्त्तमानत्वं यदि धर्म्येव नीलादिस्तदा वर्त्तमान इत्यस्य नीलादिमानित्यर्थो जातः, तदेव चेत् क्षणिकत्वं तदा तद्वदेव तदापतितं न तु नीलादेः, तस्य वर्त्तमानात्मकनीलादेस्तत्प्रत्ययस्य स्थैर्य्यास्थैर्य्यसाधारणत्वात्, उभयथाप्युपपद्यमानत्वात्, न तत् क्षणिकत्वे मानमिति भावः । तस्य नीलादेर्धर्मो वर्त्तमानत्वं तस्य वर्त्तमानत्वस्य पूर्वपूर्वक्षणवृत्तेर्भेदनिश्चयेऽपि धर्म्मिणो नीलादेः किमायातं तस्य नीलादेस्ततो वर्त्तमानत्वरूपाद्धर्म्माद्वर्त्तमानावर्त्तमानत्वं यदि सदसत्त्वं तदा न तत्रास्तीत्येवोत्तरम् । अत्रापसिद्धान्तमपवदति—**अनभ्युपगमादिति** । सदसत्त्वस्य मया तत्रानुपगमात् नापसिद्धान्तमिति शेषः । अनभ्युपगमे हेतुमाह—**ताद्रूप्येणैवेति** । तत्त्वेनैव प्रत्यभिज्ञानादित्यर्थः । वर्त्तमानावर्त्तमानत्वं सदसतोर्ध्वंसप्रतियोगिनोः कालिकसम्बन्धेन वर्त्तमानत्वञ्चेत् किमसङ्गतं नेदं विरुद्धम् । **ज्ञानेति** । प्रतियोगिध्वंसोभयावगाहिनो ज्ञानस्य । यथा विषयतया उभयसम्बन्धित्वं न विरुद्धं तथा कालिकविशेषणतयापीत्यर्थः । **क्रमेणेति** । उपदर्शितञ्च ज्ञानमेकदैव उभयसम्बद्धमिति भावः । उपसर्पणं समवधानं, प्रत्ययः कारणं, तथाचानेककारणसमवधानक्रमेण क्रमिकानेकसम्बन्धः स्यादित्यर्थः । **इदानीमेवेति** । न वाक्यार्थः, प्रत्यभिज्ञानबाधादिति भावः । अत्र शङ्कते—**प्रत्यभिज्ञानमिति** । अतः स्वस्मिन् प्रत्यभिज्ञाने निरूपणीयं प्रमात्वाप्रमात्वान्यतरत् । वस्तुतस्तु धियामौत्सर्गिकं प्रामाण्यमेवेति भावः ॥१६॥

स्यादेतत्। मा भूदध्यक्षमनुमानं वा क्षणिकत्वे, तथापि सन्देहोऽस्तु। एतावताऽपि सिद्धं समीहितं चार्वाकस्येति चेत्; उच्यते—

**स्थैर्यदृष्ट्योर्न सन्देहो न प्रामाण्ये विरोधतः।**
**एकतानिश्चयो येन क्षणे तेन स्थिरे मतः ॥१७॥**

5 न हि स्थिरे तद्दर्शने वा स्वरसवाही सन्देहः। प्रत्यभिज्ञानस्य दुरपह्नवत्वात्। नापि तत्प्रामाण्ये। स हि न तावत्सार्वत्रिको, व्याघातात्। तथाहि—प्रामाण्यासिद्धौ सन्देहोऽपि न सिद्ध्येत्, तत्सिद्धौ वा तदपि सिद्ध्येत्। निश्चयस्य तदधीनत्वात्। कोटिद्वयस्य चादृष्टस्यानुपस्थाने कः सन्देहार्थः ?। तद्दर्शने च कथं सर्वथा तदसिद्धिः ?। एतेनाऽप्रामाणिकस्तद्व्यवहार इति निरस्तम्। सर्वथा प्रामाण्यासिद्धौ
10 तस्याप्यसिद्धेः। प्रकृते प्रामाण्यसन्देहो, लूनपुनर्जातकेशादौ व्यभिचारदर्शनादिति चेन्न। एकत्वनिश्चयस्य त्वयाऽपीष्टत्वात्। अनिष्टौ वा न किञ्चित्सिद्ध्येत्। सिद्ध्यतु यत्र विरुद्धधर्मविरह इति चेत्; तेनैव स्थिरत्वमपि निश्चीयते। स इह सन्दिह्यते इति चेत्; तुल्यमेतत्। क्वचिन्निश्चयोऽपि कथञ्चिदिति चेत्; समः समाधिः ॥१७॥

आमोदः

15 चार्वाक 'समीहितमि' ति स्थैर्यासिद्धिरूपम्। **स्थैर्येति**। स्थैर्ये तावन्न 'सन्देहः', प्रत्यभिज्ञानविषयत्वात्। 'दृष्टिः' प्रत्यभिज्ञानम्। तदपि मानसप्रत्यक्षम्। तत्रापि न सन्देह इत्यर्थः। **सन्देहोऽपीति**। कोटिनिश्चयस्य सन्देहप्रयोजकत्वादित्यर्थः। **तत्सिद्धौ** सन्देहसिद्धौ, **तदपि** प्रामाण्यमपि। 'निश्चयस्य तदधीनत्वात्' सन्देहव्यापकत्वात्तेन विना सन्देहा-
20 नुपपत्तेरित्यर्थः। 'कः सन्देहार्थः' कः सन्देहपदार्थः। **तद्दर्शने** वा कोटिदर्शने वा न 'तदसिद्धिः' न प्रामाण्यासिद्धिः, सन्देहप्रामाण्यस्यैव कोटित्वात्। **तद्व्यवहारः** प्रामाण्यव्यवहारः, स्थैर्यव्यवहारो वा, तस्याप्यसिद्धेरिति। अप्रामाणिकत्वे तद्व्यवहारे वा प्रमाणापेक्षा, प्रामाण्यस्थैर्ययोस्तदपेक्षा वेत्यर्थः। प्रत्यभिज्ञानप्रामाण्ये विप्रतिपत्तिर्न तु सर्वत्र प्रामाण्य
25 इत्यत आह—**प्रकृत** इति। क्षणिकमप्येकमेवं न सिध्येदेवं सतीत्यर्थः। **एकत्वेति**। **न किञ्चिदिति**। क्षणिकमप्येवं किञ्चिन्न सिध्येदित्यर्थः। **क्वापीति**। क्षणिके वस्तुनीत्यर्थः। **सम** इति। प्रत्यभिज्ञाविषये घटादौ विरुद्धधर्मसंसर्गाभावादित्यर्थः ॥१७॥

बोधनी

एवं सौगतसमयसिद्धक्षणिकत्वालम्बिनि चार्वाकस्य प्रत्यवस्थाने दूषिते स एवान्यथा प्रत्यवतिष्ठते—**स्यादेतद्**िति। न खलु क्षणिकत्वे प्रमाणाभावमात्रेण स्थिरत्वं सिद्ध्यति किन्तु संदेह एव, तथापि भूतचैतन्यसंभावनया न तद्व्यतिरिक्तश्चेतनः सिद्ध्यतीत्युच्यत इति। किमयं सन्देहः स्थैर्ये ? तद्दर्शने वा दर्शनप्रामाण्ये वा ? तत्रापि प्रामाण्यमात्रे किं वा प्रत्यभिज्ञानप्रामाण्ये ? तत्रापि सर्वत्र प्रकृते वेति ? तत्र न प्रथमद्वितीयावित्याह— 5 **स्थैर्यदृष्ट्योरि**ति। प्रत्यभिज्ञानस्य दुरपह्नवत्वादिति भावः। न तृतीय इत्याह— **न प्रामाण्ये**—इति। अनेकप्रमाणाधीनत्वात् सन्देहस्य प्रामाण्यमात्रासिद्धौ संदेहो न सिध्येत्। तत्सिद्धौ न प्रामाण्यमात्रासिद्धिरिति संदेहसिद्धिप्रामाण्यमात्रासिद्ध्योः परस्पर-व्याघातात्। नापि चतुर्थपञ्चमावित्याह—**एकते**ति। येन विरुद्धधर्मसंसर्गविरहेण क्षणैकत्वग्राहिणः प्रत्ययस्य प्रामाण्यं निश्चित्य क्षणिकस्य भावस्यैकत्वं निश्चिनोषि **तेनैव** 10 स्थिरमपि भावं निश्चिनुया इति व्याचष्टे—**न ही**ति। यद्यपि वादिविप्रतिपत्तेरा-हार्यः संदेहः, तथापि न स्वरूपतः स्थैर्ये तद्दर्शनसद्भावे वा सन्देहोऽस्ति। प्रत्यभिज्ञानस्य विषयतः स्वरूपतश्च दुरपह्नवत्वादिति। सामान्यतो विशेषतश्च ज्ञानात् प्रामाण्यसंदेह इत्यपि नास्तीत्याह—**नापी**ति। तत्र सामान्यसंदेहनिराकरणहेतुतया विरोध इत्येत-द्व्याचष्टे—**स ही**ति। सर्वज्ञानप्रामाण्यविषयस्तावन्न संदेहः संभवतीति व्याघातमे- 15 वाह—**तथाही**ति। संदेहग्राहकज्ञानस्य प्रामाण्यसिद्धेः सन्देहोऽपि सिध्येत् तस्य सन्देहस्य सिद्धौ तदपि प्रामाण्यमपि सिध्येदिति कुत इत्यत आह—**निश्चयस्ये**ति। सन्देहस्वरूपनिश्चयस्य सन्देहग्राहिज्ञानप्रामाण्याधीनत्वादिति निश्चयवत्तस्य तदधीनत्वादिति केचित्पठन्ति। तत्रायमर्थः—यथा निश्चयः प्रामाण्याधीनस्तथा संदेहोऽपीति। इतश्च सर्वथा प्रामाण्यासिद्धौ सन्देहो न सिध्येदित्याह—**कोटिद्वयस्ये**ति। निदर्शनं 20 निश्चयः भवतु दर्शनं, तेन चोपस्थाप्यतां कोटिद्वयं, को विरोध इत्यत्राह—**तद्दर्शने चे**ति। कोटिद्वयनिश्चयार्थमपि संदेहः प्रामाण्यमपेक्षत इत्यर्थः। यद्वा, कासांचिज् ज्ञान-व्यक्तीनां प्रामाण्यं कासांचिच्चाप्रामाण्यं दृष्टवतः कस्यांचित्प्रमाणमप्रामाणं वेति संदेहः स्यात्। सर्वथा प्रामाण्यासिद्धौ कोटिद्वयानुपस्थानात्संदेहो न सिध्यतीति कथं प्रामाण्यमात्रस्य सन्देहग्रस्तत्वे प्रमाणव्यवहारो लौकिकानामित्यत्र यत्प्रतिविधानं चार्वाकस्य, अप्रामाणिकः 25 प्रमाणव्यवहार इति। तदपि पूर्वोक्तव्याघातेन निरस्तमित्याह**एतेने**ति। व्याघातमेव स्फुटयति—**सर्वथे**ति। अप्रामाणिकोऽयं व्यवहार इत्यस्यापि प्रमाणसिद्धत्वादिति। एवम्—

'सन्देहगोचरः सर्वं कस्य चिन्न कथंचन।
प्रतिष्ठामिति वादोऽयं चार्वाकस्य निराकृतः' ॥इति॥

अथोत्तरमर्थं व्याख्यास्यंस्तं निराकरणीयं विशेषतः प्रामाण्यसन्देहं सहेतुकमाशङ्कते—**प्रकृत** इति। व्याचष्टे—**ने**ति। तथाप्येकस्मिन्क्षणे भावस्यैकत्वनिश्चयोऽस्ति।
5 तत्रैकोऽयमित्यबाधिताकारं ज्ञानमेव शरणं, तच्च कालभेदेऽपि समानमिति भावः। विपक्षे दण्डमाह—**अनिष्टावि**ति। एकस्तावन्न सिध्यति, तदसिद्धौ नानेकोऽपीति शङ्कते—**सिद्ध्यत्वि**ति। यत्रैकस्मिन् क्षणिके भावे विरुद्धधर्मसंसर्गो नास्ति स एकः सिद्ध्यतु विरुद्धधर्मसंसृष्टविषयं प्रत्यभिज्ञानं प्रमाणं, न प्रत्यभिज्ञानमात्रम्। स्थिरे तु विरुद्धधर्मसंसर्गोऽस्तीति भावः। **तेनैवे**ति। तेन विरुद्धधर्मसंसर्गविरहेण
10 पूर्वमुपपादितेनेति शङ्कते—**स** इति। विरुद्धधर्मविरहः स्थिरेऽपि संदिग्ध इति त्वयोपपादितेऽपि मया संसर्गस्यापाद्यमानत्वाद्विप्रतिपत्तेः संशयगोचरः स्यादिति भावः। यदि निश्चितेऽपि सन्देहस्तर्हि क्षणेऽपि विरुद्धधर्मासंसर्गः संदिग्धः स्यादित्याह—**तुल्यमि**ति। यदिक्षणिकस्यैक्यानिश्चये न किंचित्सिध्येदिति तर्केण तत्र निश्चयः, तर्हि स्थिरस्याप्यभावे सर्वस्यादृष्टगोचरत्वात् क्वचित्प्रवृत्तिः कुतश्चिन्निवृत्तिश्च न स्यादिति सर्वलोकयात्रो
15 च्छेदप्रसङ्गोऽत्रापि सम इत्याह—**क्वचिदि**ति ॥१७॥

विवेकः

[१]**चार्वाकसमीहितं** स्थिरस्यात्मनोऽसिद्धिरूपम्। ननु कुत्र सन्देहः? स्थैर्ये वा, प्रत्यभिज्ञानात्मकतद्बुद्धौ वा, स्थैर्यवति स्थैर्यप्रकारकत्वलक्षणप्रामाण्ये वा? तथा च प्रामाण्यसंशयान्निश्चितेऽपि संशयः स्यादिति भावः। उत्तरक्षणवर्त्तिनि पूर्वक्षणवर्त्त्यभेदावगाहिनि प्रत्यभिज्ञाने, पूर्वक्षणवर्त्तिनि तदभेदावगाहिनि प्रसिद्धे पूर्वक्षणवर्त्त्यभेदवति पूर्व-
20 क्षणवर्त्त्यभेदप्रकारकत्वलक्षणप्रामाण्ये वा? तत्र प्रथमद्वितीययोराह—**स्थैर्ये**ति। स्थैर्यस्य प्रत्यभिज्ञया तस्याश्चानुव्यवसायेन निश्चयादिति हेतुः। तृतीये त्वाह—**न प्रामाण्य** इति। त्वन्मते तादृशप्रामाण्यस्याप्रसिद्धेरित्यर्थः। चतुर्थे त्वाह—**एकते**ति। पूर्वक्षणवर्त्तिनि पूर्वक्षणवर्त्त्यभेदावगाहिनि ज्ञाने येन हेतुना प्रामाण्यनिश्चयः, तेन प्रत्यभिज्ञायामपि कोऽसौ हेतुरित्याकाङ्क्षायामाह—'येन' विरुद्धधर्माध्यासाभावेन पूर्वक्षणवर्त्तिनि पूर्वक्षणवर्त्त्यभेदो
25 निश्चितः, तेन स्वविशेष्यवृत्तिना विरुद्धधर्मानध्यस्तविशेष्यकत्वेन इति यावत्। 'स्थिरे' स्थैर्य्यविषयकप्रत्यभिज्ञायां प्रामाण्ये इत्यर्थः। स्वरसवाहीत्यनेन विप्रतिपत्तिजन्मन

---

१. चार्वाकसमीहितमिति शङ्करगुणानन्दसम्मतः पाठः।

आहार्यसंशयस्य प्रयोजकत्वमिति सूचितं, प्रत्यभिज्ञानस्येति तत्संशये च तस्यैव प्रति-बन्धकत्वादिति भावः। तथा चोक्तं न हि जानन्न जानामीति कश्चित्प्रत्येति तत्प्रामाण्ये स्थैर्यवति स्थैर्यप्रकारकत्वलक्षणे सः सन्देहः सार्वत्रिकः निखिलस्थैर्यप्रकारकज्ञानीयः, प्रामाण्यस्य स्थैर्यवति स्थैर्यप्रकारत्वस्य सिद्धौ तत्प्रामाण्यसिद्धौ तदपि स्थैर्यपि तत्प्रामाण्या-श्रयेणैवसिद्ध्येत्, निश्चयस्य स्थैर्यप्रामाण्याश्रयस्य तदधीनत्वात्, विशेष्ये स्थैर्यसत्त्वव्याप-कत्वात्, तथा च सिद्धं नः समीहितमिति भावः। **प्रकाशकृतस्तु** तत्सिद्धौ सन्देहसिद्धौ तदपि प्रामाण्यमपि सिद्ध्येत्। क्वचिदवश्यं तन्निश्चयताविषयतामासादयेत्। तत्र हेतुः निश्चयस्य प्रामाण्यनिश्चयस्य तदधीनत्वात्। स प्रामाण्यसंशयोऽधीनो यस्य तत्त्वात्, संशयानुव्यवसायप्रामाण्यनिश्चयाधीनसिद्धिकत्वादित्यर्थः। एतन्मते च प्रामाण्य-सामान्यमेवाक्षिप्तमित्याहुः।

अनुपस्थानेऽस्मरणे कः सन्देहार्थः, कः सन्देहकोटिः, कः सन्देहपदार्थ **इत्यन्ये**। तद्दर्शने कोटिद्वयस्य दर्शने तदसिद्धिः प्रामाण्यासिद्धिः, तद्व्यवहारः निरुक्तप्रामाण्यव्यवहारः, व्यवह्रियतेऽनेनेति व्युत्पत्त्या प्रामाण्यनिश्चयः, व्यवहारपदस्य भावसाधनत्वे तु अप्रामाणिको भ्रमाधीन इत्यर्थः। अप्रामाणिको व्यधिकरणप्रकारकः, तथा च तेन कोट्युपस्थित्या स्यात् सन्देह इति भावः। तस्यापि प्रामाण्यभ्रमस्यापि क्वचित् प्रमितमिति न्यायादिति भावः। **प्रकाशकृतस्तु** प्रामाण्यसामान्य **एव** संशयमाक्षिप्य सर्वथा प्रामाण्यासिद्धौ प्रामाण्यसामान्यासिद्धौ तस्यापि तद्व्यवहारे अप्रामाणिकत्वस्यापीत्यर्थमाहुः। प्रकृते वर्त्त-मानक्षणवर्त्तिनि पूर्वक्षणवर्त्तिनोऽभेदावगाहिनि प्रत्यभिज्ञाने प्रामाण्यस्य पूर्वक्षणवर्त्तिनि पूर्वक्षणवर्त्त्यभेदप्रकारकत्वस्य तत्रैव तदभेदावगाहिनि प्रसिद्धस्य सन्देहः। तदभेदप्रकार-कत्वस्याप्रामाण्येन सहचारदर्शनस्थलमाह—लूनेत्यादि। **व्यभिचारदर्शने**ति। तत्प्रकार-कत्वस्य प्रामाण्याभाववद्वृत्तित्वदर्शनात्। एकत्वनिश्चयस्य तत्क्षणवर्त्तिन्यपि तत्क्षणवर्त्त्य-भेदप्रकारकत्वनिश्चयस्य तदसिद्ध्येदिति तत्क्षणवर्त्तिन्यपि तदभेदो, न वा तद्घटितं प्रामाण्यं, तथा च प्राग्वत् व्याघात एवेति भावः। सिद्ध्यतु तत्क्षणवर्त्त्यभेद-स्तद्घटितञ्च प्रामाण्यं विरुद्धधर्मविरहस्तद्वद्विशेष्यकत्वं वा। स्थिरमपि उत्तरक्षणवर्त्तिन्यपि पूर्वक्षणवर्त्त्यभेदः तत्प्रामाण्यञ्च। स विरुद्धधर्मविरहः तत्क्षणवर्त्तिन्यपि तत्र तत्सन्देहः सम्भवति इत्याह—**तुल्यमि**ति। एतत् सन्देहविषयत्वं क्वचित् कदाचित् निश्चयोऽपि विरुद्धधर्मविरहस्य कथञ्चित् युक्त्यवतारेण ॥१७॥

नन्वेतत्कारणत्वं यदि स्वभावो भावस्य नीलादिवत्तदा सर्वसाधारणं स्यात्। न हि नीलं किञ्चित्प्रत्यनीलम्। अथौपाधिकं, तदा उपाधेरपि स्वाभाविकत्वे तथात्वप्रसङ्गः। औपाधिकत्वे त्वनवस्था। अथाऽसाधारणत्वमप्यस्य स्वभाव एव, तत उत्पत्तेरारभ्य कुर्यात्, स्थिरस्यैकस्वभावत्वादिति चेत्; उच्यते—

5 **हेतुशक्तिमनादृत्य नीलाद्यपि न वस्तु सत्।**
**तद्युक्तं तत्र तच्छक्तमिति साधारणं न किम् ॥१८॥**

सर्वसाधारणनीलादिवैधर्म्येण काल्पनिकत्वं कार्यकारणभावस्य व्युत्पादयता नीलादि पारमार्थिकमेवाभ्युपगन्तव्यम्। अन्यथा तद्वैधर्म्येण हेतुफलभावस्यापारमार्थिकत्वानुपपत्तेः। न च कार्यकारणभावस्याऽपारमार्थिकत्वे नीलादि पारमार्थिकं 10 भवितुमर्हति, नित्यत्वप्रसङ्गात्। तस्मादस्य पारमार्थिकत्वेऽपरमपि तथा, न वोभयमपीति कथमेकमनेकं परस्परविरुद्धं कार्यं कुर्यात्?। तत्स्वभावत्वादिति यदि, तदोत्पत्तेरारभ्य कुर्यादविशेषादित्यपि न युक्तं, तत्तत्सहकारिसाचिव्ये तत्तत्कार्यं करोतीति स्वभावव्यवस्थापनात्। इदञ्च, साधारणमेव, सर्वैरपि तथोपलम्भात्। न हि नीलादेरप्यन्यत्साधारण्यमिति ॥ १८ ॥

आमोदः

15 इदानीं प्रकारान्तरेण कारणत्वमाक्षिपति—**नन्वि** [**न्वे** ?] ति। **सर्वेति**। दण्डो घटस्येव घटस्यापि कारणं स्यात्, कारणत्वस्वाभाव्यादित्यर्थः। ननु घटनियतपूर्ववर्तित्वौपाधिकं दण्डस्य घटकारणत्वम्। अयमुपाधिः पटं प्रति नास्तीति कथमविशेष इत्यत आह—**अथेति**। उपाधिरपि दण्डस्वभाव एव। तथा च स एव सर्वान् प्रत्यविशेष इत्याह— 20 **उपाधेरपीति**। ननु दण्डस्य घटकारणत्वमेव स्वभावस्तथा च कथं पटं कुर्यादित्याह—**अथेति**। तर्हि प्रतिक्षणमेव घटं कुर्यात्, स्वभावस्य तावदस्थ्यादित्यर्थः॥

**हेतुशक्तिमिति**। कार्यकारणता च तिरस्कारश्चेत्, तदा कादाचित्कत्वेनानुभूयमानं नीलाद्यपि वास्तवं न भवेदित्यर्थः। 'उत्पत्तेरारभ्य 25 कुर्यादि'त्यत्र साधारण्यप्रसङ्गे व [च ?] समाधिमाह—**तद्युक्तमिति** घटानुकूलसहकारि 'युक्तं' दण्डादि घटे 'शक्तमि'ति सर्वैरेव ज्ञायत इति। कारणत्वमपि साधारणमेवेति। नोत्पत्तेरारभ्य करणं, न च नीलादिवैधर्म्यमपीत्यर्थः। **साधारणमिति**। नीलादिसाधारणमेवेत्यर्थः। नीलादिपारमार्थिकत्वेऽपि कार्यकारणभाव एव तन्त्रमित्युपपादयति—**सर्वेति**।

अस्येति । नीलादेरित्यर्थः । **अपरमपि** कारणत्वमपीत्यर्थः **कथमिति** । 'एकं दण्डादि 'अनेकं' घटा [घटग?] वाभ्याजनादि कथं कुर्यादित्यर्थः । **इदमिति** । सहकारिसमवहितं सत् करोतीत्येतदित्यर्थः । साधारण्यमाह—**सर्वैरिति** । अन्यदिति । सर्वैस्तथोपलम्भादन्यदित्यर्थः ॥१८॥

### बोधनी

संप्रति चार्वाकः स्थिरपक्षे कारणत्वानुपपत्त्या प्रत्यवतिष्ठते—**नन्विति** । स्थिरस्य 5 भावस्य कारणत्वं यदि स्वभावतः स्वतः सिद्धं यथा नीलस्य नीलत्वं तर्हि तद्वत्साधारणं स्यात्, तत्र चैकस्मात्कारणात्सर्वकार्योत्पत्तिः प्रसज्यत इति नीलादीनां साधारण्यं दर्शयति—**न हीति** । शङ्कते—**अथेति** । औपाधिकत्वे ह्यसाधारण्यमुपपद्यते यथा तस्यैव नीलस्य प्रत्यक्षत्वादेरिति । विकल्प्य निराचष्टे—**तदा उपाधेरिति** । येनोपाधिना भावः कारणं भवति स चोपाधिर्भावस्य स्वभावो वा स्यादौपाधिको वा ? पूर्वत्र पूर्ववत्त- 10 स्यापि तथात्वं साधारण्यं प्रसज्येत, उत्तरत्र तस्यापि तथात्वप्रसङ्गादनवस्था, तस्मात्पारमार्थिकनीलादिवैधर्म्यात्काल्पनिकोऽयं कार्यकारणभाव इति । **अथेति** । यथा कारणत्वमस्य स्वभावः तथा किंचिदेव कार्यं प्रति न सर्वमिति कारणत्ववदसाधारण्यमप्यस्य स्वभावः, ततश्च नोक्तप्रसङ्ग इति । तर्हि यं यं कार्यविशेषं प्रति कारणत्वमस्य स्वतः सिद्धं तं तं सर्वदा कुर्यात्स्थिरस्यैकस्वभावत्वात्कालभेदेन स्वभावभेदानुपपत्तेरित्याशयेनाह— 15 **उत्पत्तेरिति** । **उच्यत**—इति । हेतुशक्तिं कारणत्वमनादृत्य पारमार्थिकत्वेनाभ्युपगम्यमानं नीलाद्यपि वस्तु न पारमार्थिकं सद्भवति कुतश्चित्कारणाल्लब्धस्वरूपं पारमार्थिकं स्यात् । इतरथा नित्यत्वेनासत्त्वप्रसङ्गात् । तेन नीलादेः पारमार्थिकत्वं वदता कारणस्यापि परमार्थिकत्वं वक्तव्यम्, अन्यथा नीलादेरप्यपारमार्थिकत्वापत्तेः, तथा च कथं तद्वैधर्म्येण कारणत्वस्यापारमार्थिकत्वं सिध्येदिति । प्रतिनियतमेव कारणत्वं भावानां 20 स्वभावः । न च तत्र कार्यविशेषाणां सततोत्पादकत्वप्रसङ्ग इत्याह—**तद्युक्तमिति** । तैस्तैः सहकारिभिर्युक्तं तत्तत्कारणं तत्र तत्रान्वयव्यतिरेकवत्सु कार्यविशेषेषु शक्तं, तस्मात्कार्यविशेषाणामेव सहकारिक्रमवशात् क्रमेणैवोत्पत्तिरुपपन्नेति । कथं तर्हि पारमार्थिकत्वे कारणत्वस्य नीलादिवैधर्म्यं तत्राह—**इतीति** । कार्यविशेषनियतं सहकार्यधीनं च कारणत्वं किं न साधारणं, साधारणमेव सर्वैस्तथोपलम्भनियमात् । न हि नीलादेरन्यत्साधा- 25 रण्यम् । अतो न नीलादिवैधर्म्यं कारणत्वस्येति । तत्र पूर्वार्द्धं व्याख्यातुं तावद्वस्तुसत्त्वं नीलादेरवश्याङ्गीकार्यं यथा तथाह—**सर्वेति** । अनुपन्यस्तस्यापि कार्यभावस्य कारणत्वमतुल्ययोगक्षेमत्वाद्वा कारणत्वस्य संबन्धिरूपत्वेन तत्स्वरूपान्तर्गतत्वाद्वोपादानमित्यस्तु

पारमार्थिको नीलादिस्ततः किमित्यत आह—**न चेति**। किमित्येवमित्यत्राह—**नित्यत्वेति**। नित्यस्यार्थक्रियाविरहादसत्त्वमेव स्यात्, न च नित्यत्वं कादाचित्कत्वादिति भावः। अत्रार्थतः सिद्धमुपसंहरति—**तस्मादिति**। अस्य=नीलादेः अपरमपि–कारणत्वमपि। तथा=पारमार्थिकम्। न चोभयमपि पारमार्थिकं स्यादिति
5 तृतीयपादं व्याचिख्यासुस्तन्निराकरणीयां शङ्कामुत्थाप्य निराकरणं प्रतिजानीते कथमित्यादिना न युक्तमित्यन्तेन। अन्तरा पूर्वपक्ष्येव सिद्धान्तिनो मतमाशङ्क्य निराकरोति—**तत्स्वभावत्वादित्यादिना**। अविशेषात्कार्यकारणस्वभावस्योत्पत्तिप्रभृत्यविशेषात्तथैव व्याचष्टे—**तत्तदिति**। तुरीयपादं व्याचष्टे—**इदं चेति**। इतिशब्दव्याख्यानम्। नन्वस्तु सर्वैरुपलम्भः, न तन्नीलादीनां साधारण्यं किन्तु सर्वान् प्रति तत्त्वं, कारणत्वस्य
10 तु नैवंविधं साधारण्यमस्ति नियमस्योक्तत्वादित्यत्राह—**न हीति**। न तावन्नीलादेः सर्वदेशकालव्यापित्वं साधारण्यमस्त्यव्यापकत्वदनित्यत्वाच्च। न च सर्वान्प्रत्यपि नीलत्वमित्यपि संभवति। नीलत्वस्य कारणत्ववत्प्रतियोग्यपेक्षनिरूपणीयत्वाभावात्। ततः सर्वैः सर्वदा तथोपलम्भादेव साधारण्यम्, इदं च कारणत्वेऽप्यविशिष्टमिति ॥१८॥

विवेकः

अलौकिकपरलोकसाधनत्वं प्रकारान्तरेणाक्षिपति—**नन्विति**। सर्वसाधारण्यं
15 सर्वनिरूपितत्वं, तथाच घटस्य कारणमपि घटेतरस्य निखिलस्य स्यादित्यर्थः। **अथेति**। तथाचोपाधिर्येन निरूप्यते तेनैव तदिति नातिप्रसङ्ग इति भावः। सोऽप्युपाधिस्तस्य स्वभावो वा औपाधिको वा? आद्ये, तदुपाधेरिति समानाधिकरणं स्वभावत्वे कारणत्वाभिमतस्वभावत्वे तथात्वप्रसङ्गः सर्वसाधारण्यप्रसङ्गः, तथापि न तेनातिप्रसङ्गवारणमिति भावः। द्वितीये त्वाह—**औपधिकत्व** इति। अस्य कारणत्वस्य। तथाचासाधारणत्व-
20 स्वभावकं कारणत्वं दण्डादेः स्वभाव इति नातिप्रसङ्ग इति भावः। दूषयति—**तत** इति। स्वभावबलादित्यर्थः। उत्पत्तेरारभ्य यावत्सत्त्वं यन्निरूपितं कारणत्वं तत् कुर्यात्। **स्थिरस्येति**। क्षणिकतानये तु फलानुपहिते कारणत्वमेव नास्तीति नातिप्रसङ्ग इति भावः। एकस्वभावत्वात् तत्कार्य्यकारित्वैकस्वभावत्वात् तदस्वभावत्वे तु कदापि न कुर्य्यादिति भावः।

25 नन्वर्थक्रियाकारित्वमेव त्वन्मते नीलादेः सत्त्वं तच्च कारित्वं साधारणमसाधारणं वा? आद्येऽतिप्रसङ्गः, अन्त्ये स्वभावत्वानुपपत्तिरिति युक्त्या निरस्ते कारणत्वे नीलाद्यपि वस्तु सत्पारमार्थिकं न स्यात्। तथाच क्व नीलादिरूपवैधर्म्यदृष्टान्तेन कारणत्वस्य सर्वसाधारण्यमित्याह—**हेतुशक्ती[क्तिमि?]ति**। हेतुशक्तिः[?] कारणत्वम् अनादृत्य सर्व-

साधारण्यप्रसङ्गेन निरस्य उत्पत्तेरारभ्य कुर्यादित्यत्राह—य [त१] द्युक्तमिति । तैः सहकारिभिर्युक्तं तेन तेन सम्बन्धेन समवहितं तत्कारणत्वेनाभिमतं तत्र शक्तं तत्फलोपहितम् । ननु मया कारणत्वस्य सर्वसाधारण्यप्रसङ्गे त्वया नीलादेरपारमार्थिकत्वप्रसङ्ग इति प्रतिवन्दिमात्रमुक्तं तच्च न सदुत्तरमित्याह—इतीति । सर्वैस्तथा प्रतीयमानत्वरूपं यन्नीलादेः साधारण्यं कारणत्वं तन्न किम् अपितु भवत्येवेत्यर्थः । 5

परमार्थिकमेवेति । असतो दृष्टान्तत्वानुपपत्तेरिति भावः । नित्यत्वेति । अतद्व्यावृत्तिवत् अकारणस्य तन्मते नित्यत्वं, यद्वा तत्कार्य्यत्वेनाभिमतानाम् अहेतुकत्वेन नित्यत्वप्रसङ्गादित्यर्थः । अस्य नीलादेः अपरमपि कारणत्वमपि पारमार्थिकमिति विपरिणामेन योज्यम् । एवमग्रेऽपि । नीलादिकारणत्वे दण्डनिष्ठकारणत्वस्य घटनिरूपितस्वभावे दोषान्तरं पूरयति—कथमिति । एकं दण्डादि परस्परविरुद्धं घटगवाभ्याजनादि, तथाच गवाभ्याजनं घटनिरूपितकारणतानिरूपितकार्यताशालि यदि स्यात्, तदा घटः स्यादिति भावः । दण्डनिष्ठानि नानाकारणत्वानि तन्निरूपितानीत्यभिप्रेत्याह—तत्स्वभावत्वादिति । तथाचानायत्यैव भूतचैतन्यवादो वाच्यः, आत्मानो ज्ञानादिकं प्रति हेतुत्वासम्भवादिति भावः 10

न चेति नित्यत्वेन कालतः विभुत्वेन देशतो व्यतिरेकाभावः सूचितः । एतच्चापाततः । विभुत्वेऽपि संयोगेन गुणादौ विभ्वन्तरेण तदभावस्यानपवादादिति ध्येयम् । सोपाधेः शरीरविशिष्टस्यासौ व्यतिरेकः तथाभूतस्य व्यतिरेकाप्रतियोगिनः उपाधिसम्बन्धेऽपि शरीरादिसम्बन्धेऽपि अनधिकारादयोग्यत्वात् । तेनात्मना स उपाधिः शरीरादिरूपस्तस्यात्मनः स्यादुपाधिः तज्जनितो वा तदजन्योऽपि नित्योऽनित्यो वा अनित्यो व्यापको न वा पूर्ववद्व्यतिरेकाभावेन तत्रापि जनकतानुपपत्तेरित्यर्थः ॥१८॥ 15 20

स्यादेतत्। अस्तु स्थिरं, तथापि नित्यविभोर्न कारणत्वमुपपद्यते। तथा ह्यन्वयव्यतिरेकाभ्यां कारणत्वमवधार्यते, नान्वयमात्रेण, अतिप्रसङ्गात्। न च नित्यविभूनां व्यतिरेकसंभवः। न च सोपाधेरसावस्त्येवेति साम्प्रतम्; तथाभूतस्योपाधिसंबन्धेऽप्यनधिकारात्। जनितो हि तेन स तस्य स्यात्, नित्यो वा?। न प्रथमः, पूर्ववत्। नापि द्वितीयः, पूर्ववदेव। तथापि चोपाधेरेव व्यतिरेको, न तस्य, अविशेषात्। तद्भूत इति चेन्न। स चोपाधिश्चेत्यतोऽन्यस्य तद्भूतपदार्थस्याभावात्। भावे वा स एव कारणं स्यात्। अत्रोच्यते—

**पूर्वभावो हि हेतुत्वं मीयते येन केनचित्।**
**व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि ॥१६॥**

भवेदेवं यद्यन्वयव्यतिरेकावेव कारणत्वं, किन्तु कार्यान्नियतः पूर्वभावः। स च क्वचिदन्वयव्यतिरेकाभ्यामवसीयते, क्वचिद्धर्मिग्राहकात्प्रमाणात्। अन्यथा कार्यात् कारणानुमानं क्वापि न स्यात्। तेन तस्यानुविधानानुपलम्भात्। उपलम्भे वा कार्यलिङ्गानवकाशात्, प्रत्यक्षत एव तत्सिद्धेः। तज्जातीयानुविधानदर्शनात्सिद्धिरन्यत्रापि न वार्यते। तथापि [१]वस्तुगत्यानुविहितान्वयव्यतिरेकमेव कार्यात्कारणं सिद्ध्येत्, अन्यत्र तथा दर्शनादिति चेन्न। बाधेन सङ्कोचात्, विपक्षे बाधकाभावेन चाव्याप्तेः, दर्शनमात्रेण चोत्कर्षसमत्वात्। अस्य च ईश्वरे विस्तरो वक्ष्यते। सर्वव्यापकानां सर्वान्प्रत्यन्वयमात्राविशेषे कारणत्वप्रसङ्गो बाधकमिति चेन्न। अन्वयव्यतिरेकवज्जातीयतया विपक्षे बाधकेन च विशेषेऽनतिप्रसङ्गात्। तथा हि—कार्यं समवायिकारणवद् दृष्टमित्यदृष्टाश्रयमपि तज्जातीयकारणकम्, आश्रयाभावे किंप्रत्यासन्नमसमवायिकारणं स्यात्? तदभावे निमित्तमपि किमुपकुर्यात्? तथा चानुत्पत्तिः सततोत्पत्तिर्वा सर्वत्रोत्पत्तिर्वा स्यात्। एवमपि निमित्तस्य सामर्थ्यादेव नियतदेशोत्पादे स एव देशोऽवश्यापेक्षणीयः स्यात्। तथाच सामान्यतो देशसिद्धावितरपृथिव्यादिबाधे तदतिरिक्तसिद्धिं को वारयेत्? एवमसमवायिनिमित्ते चोहनीये ॥ १६ ॥

आमोदः

**तत्रापीति**। तथा च नालौकिकस्य परलोकसाधनस्य सिद्धिः। धर्माधर्मौ प्रति आत्मनः कारणत्वाभ्युपगमादित्यर्थः। **न च नित्येति**। नित्यत्वान्न कालकृतो विभुत्वाच्च न देशकृतो व्यतिरेको 'नित्यविभूनामि'त्यर्थः। **सोपाधेरिति**। शरीरादिमत इत्यर्थः। **तथाभूतस्येति**। नित्यविभोरित्यर्थः। कथमेतदित्यत आह—**जनितो हीति**। यददृष्टेन यच्छरीरं जनितं तदेव तस्योपाधिर्वक्तव्यः। अन्यथाऽतिप्रसङ्गात् तथा च भवेदेवं यद्यदृष्टं प्रत्यात्मनः

१. कोष्ठगत्या इति आमोदसम्मतः पाठः।

कारणत्वं स्यात्, तदेव तु नास्ति, नित्यविभुत्वेन व्यतिरेकाभावादित्याह—**न प्रथम** इत्यादि । **पूर्ववदेवेति** । नित्यविभुत्वेन व्यतिरेकाजनकत्वासम्भावादेवेत्यर्थः । नित्यस्यापि व्यतिरेकमभ्युपेत्याह—**तथापीति** । **स चेति** । तथाचोभयोरपि नित्यत्वान्न व्यतिरेक इति भावः । **तद्वत** इति । न त्वात्मादिरित्यर्थः । 5

**पूर्वभाव** इति । अनन्यथासिद्धनियत 'पूर्वभाव' इत्यर्थः । **येन केनचिदिति** । अन्वयव्यतिरेकाभ्यां वा, धर्मिग्राहकमानेन वेत्यर्थः । प्रकृतमधिकृत्याह—**व्यापकस्यापीति** । **अन्यथेति** । कारणत्वमन्तरेणेत्यर्थः ।

**अन्यथेति** । यद्यन्वयव्यतिरेकादेव कारणत्वं स्यादित्यर्थः । **तेनेति** । अनुमात्रा कार्येण वेत्यर्थः । ननु यत्कार्यं कारणं प्रति लिङ्गं तत्कार्यजातीयं 10 प्रति अन्वयव्यतिरेकौ दृष्टावेव । अतोऽनुमानं स्यादित्यत आह—**तज्जातीयेति** । **अन्यत्रापीति** । नित्यविभावित्यर्थः । द्रव्यत्वेन गुणं प्रति कारणता तत्रापि स्यादेव । रूपादिकं प्रति घटादिद्रव्यस्यान्वयव्यतिरेकदर्शनादित्यर्थः । **कोष्ठगत्येति** । वस्तुगत्येत्यर्थः । **बाधेनेति** । विभोर्बाधेन व्यभि [ति ?] रेकवत्येव तत्सङ्कोचादित्यर्थः । व्यतिरेकवदेव कारणत्वमिति व्याप्तौ 15 विपक्षबाधकत्वान्नास्तीत्याह—**विपक्षेति** । दण्डादौ दर्शनमात्रादन्यत्रापि तथा स्यादित्यत्राह—**दर्शनमात्रेणेति** । **अस्य चेति** । उत्कर्षसमजात्युत्तरस्येत्यर्थः । विशेषविरोधप्रस्तावे **पञ्चमस्तबके** । एवं सति घटपटादिकमपि प्रत्याकाशादीनां कारणत्वं स्यादित्याह—**सर्वेति** । **अन्वयेति** । घटादिकं प्रत्याकाशादीनां न तावत् समवायिकारणत्वं सम्भवति, पृथिवीत्वावच्छिन्नं प्रति 20 पृथिवीत्वावच्छिन्नस्यैव समवायिकारणत्वस्यान्वयव्यतिरेकसिद्धत्वात् । नाप्यसमवायिकारणत्वं, द्रव्ये तदसम्भवात् । नापि निमित्तकारणत्वम्, अन्यथासिद्धत्वादित्यर्थः । 'अन्वयव्यतिरेकवज्जातीये' ति स्फुटयति—**कार्यमिति** ।

विपक्षबाधकं स्फुटयति—**आश्रयाभाव** इत्यादि । ननु निमित्तकारण- 25 मेवाश्रयः स्यादित्यत आह—**एवमपीति** । तर्हि तदेव समवायिकारणं स्यादित्यर्थः । नित्यकारणविभुभोक्तृसिद्धिमभिप्रेत्याह—**तथा चेति** । ज्ञानादीनां समवायिकारणं सिध्यद् अष्टद्रव्यातिरिक्तद्रव्यमादायैव सिध्यतीत्यर्थः ॥१९॥

बोधनी

एवं तावत् क्षणिकत्वप्रतिक्षेपेण स्थिरत्वसमर्थनम्। न च गत्यन्तरं स्थिर इत्येतस्मिन्व्यवस्थिते भूतचैतन्यासम्भवात्तद्व्यतिरिक्तश्चेतन इति सिद्धम्। तत्राह—**स्यादेतद्**ि ति। भवतु भूतं स्थिरं मा भूच्चैतन्यं तथापि भवदभिमतस्य नित्यविभोरात्मनः कारणत्वं नोपपद्यते, येनास्य ज्ञातृत्वं भोक्तृत्वमित्यादिकं सर्वमुपपद्येतेति भावः।
5 किमिति नोपपद्यत इत्यत्राह—**तथा ही**ति। अतिप्रसङ्गात्कार्यमात्रं प्रत्येव नित्यविभूनां कारणत्वप्रसङ्गादिति भावः। ततः किमित्यत्राह—**न चे**ति। व्यतिरेको हि देशतः कालतो वा स्यादिति केवलस्यासम्भवेऽपि शरीराद्युपाधिविशिष्टस्य व्यतिरेकः सम्भवतीत्याशङ्क्याह—**सोपाधेरि**ति। कुत इत्यत्राह—**तथाभूतस्ये**ति। नित्यविभोः कारणत्व इवोपाधित्वसम्बन्धेऽप्ययोग्यत्वादिति। तदेवोपपादयति—**जनित** इति। तेन
10 नित्यविभुना जनित उपाधिस्तस्य सम्बन्धी स्यात् नित्यो वेति। पूर्ववदिति। नित्यविभोर्व्यतिरेकासम्भवः कार्यजनन इवोपाधिजननेऽपि तुल्य इति। **पूर्ववदे**वेति। तज्जनितत्वमिवोपाधेस्तत्सम्बन्धित्वमपि तदन्वयव्यतिरेकाभ्यामवसेयमन्वयमात्रस्य सर्वात्मसाधारण्यात्। तेनास्यैवायमात्मन इत्यासाधारणसम्बन्धित्वमपि व्यतिरेकाभावे दुरवधारणमिति। यद्वा, नित्यत्वेऽप्युपाधेस्तत्सम्बन्धस्यानित्यत्वादात्मनैव जनयितव्यत्वाच्चोपाधिस्वरू-
15 पजननवत्सम्बन्धजननमपि न सम्भवतीत्युक्तं **पूर्ववदेवे**ति। अस्तूपाधिस्तत्सम्बन्धश्च तथाप्युपाधेरेव व्यतिरेकः स्यात् न त्वात्मन इत्याह—**तथापी**ति। उपाधिव्यतिरेकाव्यतिरेकयोस्तद्वत आत्मनः सर्वत्र सर्वदान्वयाविशेषादिति। अथवा नित्योऽप्युपाधिर्व्यापको वा स्यादव्यापको वेति विकल्पं हृदि निधाय व्यापकत्वे दोष उक्तः **पूर्ववदे**वेति। निरुपाधिकसमयवदेवेत्यर्थः। अव्यापकत्वे दोषमाह—**तथापि चे**ति।
20 शङ्कते—**तद्वतः**—इति। विशेषणस्योपाधेर्व्यतिरेके विशिष्टः तद्वानेव व्यतिरिच्यत इति। दूषयति—**ने**ति। उपाधिमानुपाधिश्चेत्यतो द्वयान्यस्य तद्वतो विशिष्टस्य पदार्थान्तरस्य नैयायिकैरनभ्युपगमादिति। तद्वतः पदार्थान्तरस्यभावेऽपि व्यतिरेकवतः तस्यैव कारणत्वं स्यान्नात्मनो व्यतिरेकाभावादित्याह—**भावे** वेति॥

**अत्रोच्यत**—इति। न तावदन्वयव्यतिरेकावेवकारणं, नापि तावेव तन्निश्चयोपायः।
25 किं तर्हि? कार्यान्नियतः पूर्वभावः कारणत्वं, निश्चीयते च धर्मिग्राहकप्रमाणादिनापि। तस्मान्नित्यविभोरपि कारणत्वसोपाधित्वनिश्चयौ सम्भवतः। एवमनभ्युपगमे ज्ञानादिकार्यलिङ्गेनात्मादेः समवायिकारणस्य प्रतीतिर्न स्यात्, इति व्याचष्टे—**भवेदेवमि**ति। व्यतिरेकहीनस्यात्मानो न कारणत्वं भवेद्यदि तावेव कारणत्वं स्यादिति। किं तर्हि

कारणत्वमित्यत्राह—**किन्त्विति**। येन केनचिदित्यादिकं व्याचष्टे—**स चेति**। तुरीयपादं व्याचष्टे—**अन्यथेति**। कुत इत्यत आह—**नेइति**। येन कार्येण लिङ्गेन कारणमनुमीयते तेन तत्सिद्धेः, तस्य कारणस्य सिद्धेरिति। यद्यप्यनुमित्सिते विशेषे अन्वयव्यतिरेकयोरनुपलम्भस्तथापि तज्जातीयेषु विशेषान्तरेषु तदुपलम्भादन्यत्रापि तज्जातीयदर्शनेन तज्जातीयकारणविशेषानुमानं सिध्यतीत्याशङ्क्याह—**तज्जातीयेति**। 5
अन्यत्रापि व्यतिरेकविरहिण्यपि आत्मादावपि समवायिकारणवद् रूपादिषु गृहीतान्वयव्यतिरेकस्य तज्जातीयज्ञानादिकार्यदर्शनात्समवायिकारणत्वेनात्मनोऽनुमानं सुकरमिति भावः। यद्यप्यनुपलब्धान्वयव्यतिरेकस्यापि कारणस्यानुमानं स्यात्। तथापि वस्तुगत्यानुविहितान्वयव्यतिरेकमेव कारणं कार्यात् अनुमीयते रूपज्ञानादिना चक्षुराद्यनुमाने तथादर्शनादित्याह—**तथापीति**। **नेति**। अन्वयव्यतिरेकवतः कारणत्वमिति व्याप्तेरदृष्टचरस्य 10
धर्मिणः सिद्धिर्न स्यादिति बाधकतर्केण नित्यविभुकारणव्यतिरिक्तविषयत्वेन संकोचादिति। न परं संकोचः व्याप्तिरेव नास्ति, व्यतिरेकविरहिणः कारणत्वे बाधकाभावादित्याह—**विपक्षेति**। अन्यत्र तथा दर्शनादिति यदुक्तं तत्राह—**अन्यत्रेति**। विपक्षे बाधकमन्तरेण साहचर्यदर्शनमात्रेण साध्यधर्मिणि धर्मान्तरापादन उत्कर्षसमा नाम जातिरिति। एतदेव कथमित्यत आह—**अस्य चेति**। क्षित्यादिकं सकर्तृकं 15
कार्यत्वाद्धटवदितीश्वरानुमाने तत एव शरीरिकर्तृकं स्यादिति प्रसङ्ग उत्कर्षसमा जातिरिति प्रतिपादयद्भिर्व्याप्तिमन्तरेण साहचर्यमात्रदर्शनेन धर्मान्तरोत्कर्षस्य जातित्वं तत्र विस्तरेण वक्ष्यत इति नेदानीं प्रपञ्च्यत इति। यद्वा, किमिदानीमयं न प्रपञ्च इत्यत्राह—**अस्येति**। नन्वस्ति बाधकं नित्यविभूनां सर्वकार्यं प्रति कारणत्वप्रसङ्गः, अन्वयमात्रस्याविशेषात्, तेन व्यतिरेकवत एव कारणत्वमिति व्याप्तिः सिद्ध्यतीत्याह—**सर्वव्यापकानामिति**। **नेइति**। रूपादिकार्यं प्रति यज्जातीयं कारणं घटाद्यन्वयव्यतिरेकवद् दृष्टं, 20
ज्ञानादिकार्यस्यापि तज्जातीयमेव कारणमनुमीयते। तज्जातीयत्वं नाम समवायिकारणजातीयत्वं सहकारिसमवधाननिबन्धनकारणयोगित्वं च। तत्र समवायिकारणत्वं द्रव्यस्यैव न गुणादेरिति ज्ञानादीनां द्रव्याश्रयत्वं तावत्सिध्यति। न चातिप्रसक्तिः, द्रव्यान्तरस्याकाशादेः सहकारिसन्निधिकृततत्कारणाभावात्, अतस्तद्व्यतिरिक्तद्रव्यभेदस्यैव ज्ञानकारणत्वेन सिद्धिरिति तदेवोपपादयति—**तथा हीति**। **तज्जातीयकारणकमिति**= 25
दृष्टसमवायिकारणजातीयकारणकमित्यर्थः। अनुमातव्यमिति शेषः। असमवायिनिमित्ताभ्यामेव कार्योत्पत्तौ किं समवायिनेत्यत्राह—**आश्रयेति**। समवायिप्रत्यासन्नं ह्यसमवायिकारणं, कथं तत्तदभावे भविष्यतीति मा भूत्समवायिवदसमवाय्यपीत्यत्राह—**तदभाव**

इति। असमवायिकारणोत्पादकस्य हि निमित्तत्वम्, अतस्तदभावे तदपि न स्यादिति। तथापि किमायातमित्यत्राह—**तथा चेति**। कारणमात्रस्याभावे कार्यस्योत्पत्तिरेव न स्यात्, निरपेक्षस्यैवोत्पत्तौ तस्य कादाचित्कत्वकाचित्कत्वे अपि न स्यातामिति। तर्हि निमित्तकारणमेवास्तु मा भूतां समवाय्यसमवायिनी तत्सामर्थ्यादेव देशकालनियतोत्पत्तिर्भ-
5 विष्यतीत्यत्राह—**एवमिति**। समवाय्यसमवायिनोरभावे निमित्तमपि न स्यादित्युक्तम्। एवमपि यदि निमित्तसामर्थ्यादेव नियतदेशोत्पत्तिः कार्यस्याभ्युपगम्येत भवत्वेवं, तथापि यस्मिन्देशे कार्यमुत्पद्यते स देशोऽपेक्षणीयः कार्येण, स एव नः समवायिकारणमिति। नन्वस्तु तावता समवायिनः सिद्धिः किमायातमात्मसिद्धेरित्याह—**तथा चेति**। सामान्यतस्तावत्कश्चिद्देशो भवतैवाभ्युपगतः, तत्र ज्ञानादयः पृथिव्याद्यष्टद्रव्याश्रया न भवन्ति
10 मानसप्रत्यक्षत्वात्, य उक्तसाध्या न भवन्ति न त उक्तसाधना यथा रूपादयः पृथिव्या इत्यनेन पृथिव्याद्याश्रयत्वस्य बाधे सति सामान्यतो दृष्टानुमानपूर्वकात् परिशेषानुमानादष्ट-द्रव्यातिरिक्तद्रव्यसिद्धेः को वारयिता, न कश्चित्। तथा हि ज्ञानादयः क्वचिदाश्रिताः कार्यत्वाद्रूपादिवदिति सामान्यत आश्रयसिद्धौ ज्ञानादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रयास्तदा-श्रयत्वबाधे सति कार्यत्वात्, न यदेवं न तदेवं यथा रूपमिति। समवायिवदसमवायिनि-
15 मित्ते च कारणे बाधकबलादेवोहनीये इत्याह—**एवमिति**। समवायिमात्रकारणत्वेऽपि तन्नित्यत्वात् कार्यस्य सततोत्पत्त्यादिप्रसङ्गः, असमवायिमात्रकारणत्वे इन्द्रियार्थसन्निकर्षं विनापि आत्ममनःसंनिकर्षादेव बाह्यार्थविषयज्ञानोत्पादप्रसङ्गः, निमित्तमात्रादुत्पत्तावपि आत्ममनःसंनिकर्षाभावेऽपि तदुत्पादप्रसङ्ग इत्यादि बाधकमूहनीयम् ॥१९॥

विवेकः

द्वितीयः द्वितीयस्य प्रथमः। **नित्येति पूर्ववदेवेति**। तस्य व्यापकत्वे कालतो
20 देशतश्चाव्यापकत्वे च कालत एव न व्यतिरेक इति भावः। द्वितीयस्य द्वितीये त्वाह—**तथापि चेति**। न तस्य नात्मनः अविशेषादिति अनुपहितपक्षे यो दोषः उक्तस्तस्यो-पहितपक्षेऽप्यविशेषादित्यर्थः। तद्वतः उपाधिमतः स व्यतिरेकः स आत्माऽभावो वा केवलादतिरिक्तस्य विशिष्टस्य वा स एव विशिष्ट एव न तु केवल आत्मा।

व्यापकस्यापि नित्यस्य 'पूर्वभावो' नियतपूर्ववर्त्तित्वं हेतुत्वव्यवहारविषयः 'येन केनचित्' न त्वन्वयव्यतिरेकाभ्यामेव 'मीयते' ज्ञानादिकं प्रति आत्मनो येनानुमीयते
25 तदाह—**धर्म्मिधीरिति**। बुद्ध्यादिकं ससमवायिकारणकं भावकार्य्यत्वादित्यनुमानेन पक्षधर्म्मताबलादात्मा सिद्ध्यन् बुद्ध्यादिकारणत्वेनैव सिद्ध्यति। अनेनैव प्रमाणेनात्मा

सिद्धः, अन्यथा तदसिद्धौ कस्य व्यतिरेकाप्रतियोगितया कारणत्वाभावः साधनीय इति भावः ।

एवं व्यतिरेकाप्रतियोगितया कारणत्वाभावसाधनम् अन्वयव्यतिरेकावेव व्यतिरेकघटितमिति तु विवक्षितम् । अन्वयव्यतिरेकयोरेकोऽस्तु कारणताग्राहकं, तथापि यत्र कार्य्येण कारणानुमानं तत्र पक्षधर्म्मताबललभ्यकारणताव्यक्तौ न तौ तद्ग्राहकावित्याह— 5
**अन्यथेति** । पक्षधर्म्मताबललभ्यान्वयव्यतिरेकयोस्तद्ग्राहकत्व इत्यर्थः । कार्य्याद्धूमादिलक्षणात् कारणं वह्न्यादि नानुमीयते, तेन पक्षधर्म्मताबललभ्यव्यक्तिविशेषेण तस्य धूमादेरन्वयाद्यनुविधानानुपलम्भादित्यर्थः कार्य्यलिङ्गानवकाशात् तेन लिंगेनानुमित्यनुत्पादात् । **प्रत्यक्षत एवेति** । तथाच न पक्षतेति भावः । अन्यत्रापि नित्यव्यापकेऽपि कार्य्यजातीयं स्वगुणं प्रति कारणजातीयस्य घटादेस्तथा दर्शनादित्यर्थः । **कोष्ठगत्या** 10
वस्तुगत्या, न तु तज्ज्ञानं जनकमित्यर्थः । तथाच तादृशान्वयव्यतिरेकप्रतियोगिशालित्वं कारणत्वव्यापकं तन्निवृत्त्या तत्र तन्निवृत्तिरिति भावः । व्यापकताग्राहकमाह—**अन्यत्रेति** । **बाधेनेति** । धर्म्मिग्राहकमानेन सिद्धे व्यतिरेकाप्रतियोगिनः कारणत्वे अस्य व्यापकत्वस्य सङ्कोचाद्व्यतिरेकप्रतियोगिनिष्ठकारणत्वं तद्व्याप्यत्वं, न तु कारणत्वमिति भावः । यथोपदर्शितव्याप्तावप्रयोजकत्वमाह—**विपक्ष इति** । अव्याप्तेर्यथोपदर्शितव्याप्तेर- 15
भावात् । ननु दण्डादौ तथा दर्शनादिदमभिधीयते इत्यत्राह—**उत्कर्षेति** । उत्कर्षसमाख्यजात्युत्तरत्वात् । अस्य चोत्तरस्य ईश्वरे तत्साधनप्रस्तावे विस्तरः । असत्त्वं बाधकम्, कारणत्वस्य व्यतिरेकप्रतियोगित्वाभाववद्वृत्तित्वे बाधकं, तथा च विपक्षे बाधकाभावो नेति वार्त्तमिति भावः । **अन्वयव्यतिरेकवदिति** । यज्जातीये सहकारिसमवधानप्रयुक्तं कार्य्योपधानं तदसमवधानप्रयुक्तञ्च तदनुपधानं तत्तथा । न चाकाशे 20
सहकारिसमवधानतद्व्यतिरेकप्रयुक्ते ज्ञानाद्युपधानानुपधाने इति न तत्र तत् कारणमिति तत् कस्य हेतोरिति चेत्, तादृशस्य स्वभाववादस्येष्टार्थत्वादिति प्रागभिधानात् । ननु यत्र कुत्रचिदुत्पद्यतां ज्ञानमिति तेनैवोपहितमाकाशमपि स्यात्, कालवदित्यत्राह—
**विपक्षेति** । ज्ञानादिकारणत्वव्यवहारविषयत्वाभाववान् आकाशादिर्विपक्षः कारणत्वस्य तद्बाधकेन तद्वृत्तित्वबाधकेनानन्यथासिद्धत्वेन विशेषे नियतपूर्ववर्त्तित्वेऽसति प्रसङ्गात् 25
आकाशसाधारण्याभावात् । यद्वा अन्वयव्यतिरेकवज्जातीयतया स्वसमवेतकार्य्यं प्रति तत्समवायि घटादिकम् अन्वयव्यतिरेकवदतथात्मनोऽपि द्रव्यत्वेन तज्जातीयतया स्वसमवेतज्ञानादिकं प्रत्येव हेतुत्वं, न तु शब्दादिके तस्य तत्रासमवायात्, तत्र च स्वभावस्य तत्प्रागभावस्य वा नियामकत्वात् । ननु रूपादिकं दर्शनबलात् समवा-

यिजन्यमस्तु, ज्ञानादिकं तत्समवायिकारणमन्तरेणैव स्यात्, तत्राह—विपक्ष इति। 'वा'–कारः समुच्चये। 'आश्रयाभाव' इत्यनेन मूल एव तदभिधेयम्। तज्जातीयकारणकं समवायिकारणकं किमिति समवायिकारणप्रत्यासन्नकारणस्यैव तत्त्वादिति भावः। तथाच कारणसामान्यानुपपत्तिः, विनैव कारणम् उत्पत्त्युपगमे च सततोत्पत्तिः, आश्रयस्या-
5 नियामकत्वे तु सर्वत्रोत्पत्तिः। ननु ध्वंसादिवत् विनापि समवाय्यसमवायिकारणं निमित्त-कारणसामर्थ्यादेव ज्ञानादि नियतदेशोत्पत्तिकं स्यादित्याह—एवमपीति। समवायि-कारणत्वं विनापीत्यर्थः। **स चेति**। **स** एवेति भावः। तस्य च तत्समवायित्वं मनोऽन्तरेण साधनीयमित्यभिसन्धिः। वस्तुतस्तु अन्योन्याभावरूपः व्यतिरेकः समवायि-कारणताग्रहकः, अन्यथा स्वाभाववति स्वस्मिन् समवेतोत्पत्तेर्व्यभिचारस्य वज्रलेपत्वापत्तेः
10 नित्यव्यापकस्यापि नानुपपन्न इति **मणिकृच्चरणाः**। स्वासमवेतकार्यमात्रं प्रति स्वात्मनो निमित्तकारणताप्रवादस्तु न श्रद्धेयः अस्तु वा अदृष्टद्वारा तथा, अदृष्टं प्रति समवायि-कारणता, अन्यत्र चादृष्टसम्बन्धेनैव निमित्तता तेन सम्बन्धेन व्यतिरेकः सुलभ एव। यदि च स्वस्वजन्यान्यतरहेतुत्वमेव स्वस्य हेतुता तथापि नानुपपत्तिः। विवेचयिष्यते चाधिकमीश्वरसाधानप्रस्तावे ॥१९॥

15 **इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो**
**मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता।**
**देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः**
**साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥२०॥**

॥ इति श्रीन्यायकुसुमाञ्जलौ प्रथमस्तबकः ॥

आमोदः

स्तबकार्थमुपसंहरन्नेवाशंसामाह—इत्येवे [षे ?] ति। 'इति'-शब्द
20 उपसंहारे, यद्वा 'एषा' इत्यर्थे इत्येषेत्यखण्ड एव शब्दः। 'असौ देवो मम मनसि साक्षादेवासक्तिमभिरतिं बध्नातु,' मम मनस्यासक्तो भवत्वित्यर्थः। **साक्षितयेति**। तस्यामासक्तौ स्वयमेव साक्षी भवत्वित्यर्थः। 'यस्य एषा' अनेन स्तवकेन यत् साधितमदृष्टं सैव 'सहकारिशक्तिः'। सहकारिणि सिद्धान्तिनामेकवाक्यतामाह—**मायेति**। दुःखेन मायाऽप्युन्नीय-
25 तेऽदृष्टमपीत्यदृष्टमेव **एकदण्डिनो**[माया?]प्रभवं विश्वमित्यनेनाचक्षते; **सांख्या** अपि प्रकृतिपदेनादृष्टमेवाचक्षते, मूलकारणं प्रकृतिरित्यादि;

त्रिदण्डिनोऽप्यविद्याप्रभवं विश्वमित्याचक्षाणा अविद्यापदेनादृष्टमेवाहुः। 'प्रबोध'स्तत्त्वज्ञानं तन्नाशयत्वादविद्यापि ततो बिभेति। भोगद्वाराऽदृष्ट-स्यापि तन्नाश्यतया तदपि ततो बिभेतीति साम्यात्। 'प्रपञ्चो' गोघटादि कार्यजातं तस्य 'रचना' निर्माणं तत्प्रति यः 'कल्लोलः' सांख्यादिसिद्धान्त-प्रवादः, स एव 'कोलाहलो' ऽनभिव्यक्तविशेषमु [यु ?]क्तिको वचनसन्दर्भः, 5 यस्मिन् विषये 'वित[र ?]तः' शान्तः। 'शान्तो' द्वेषादिहीनः, तथा चादृष्टसहकृत ईश्वर एव प्रपञ्चकारणं, न तु माया प्रकृतिरविद्या वेत्यर्थः। यद्वा साक्षादिति। साक्षितयेति। सन्निहितेनैव सम्बाधं [सम्बन्धः ?], तेनाभिरतिबन्धे 'साक्षादेव साक्षी', न तु श्रुतादिसाक्षीत्यर्थः। यद्वा 'साक्षादेवाभिरतिं बध्नातु' साक्षात्कारविषयो भवत्वित्यर्थः, मननस्य 10 जातत्वात् ॥२०॥

॥इति प्रथमः स्तबकः॥

बोधनी

एवं भगवतः परमेश्वरस्य विचित्रविश्वप्रसङ्गेन प्रपञ्चरचनायां सहकारिकारणं तदुपज्ञसंप्रदायकं च धर्माधर्माख्यमलौकिकं हेतुं प्रसाध्य परिच्छेदार्थमुपसंहरन्नयमेव, भगवतः सहकारिशक्तिनियमेऽपि, च तत्तद्वादिभिः तत्तत्प्रवृत्तिनिमित्तयोगेन मायादिशब्दै-र्जगत्कारणत्वेनाभिलप्यत इति प्रतिपादयन्नुत्तरोत्तरं समीचीनतरन्यायपरिस्फूर्त्तये स्वचेतसि 15 भगवतः सान्निध्यं प्रार्थयते—इत्येषेति। इति=एवमुपपादितैषा असमा प्रत्यात्मस-मवेतत्वेनासाधारणी विचित्रा धर्माधर्माख्या शक्तिर्नैयायिकैर्देवस्य सहकारिशक्तिरिति व्युत्पादिता। जीवादृष्टसापेक्षो भगवान् जगन्ति निर्मिमीत इति तेषां च स्थितिः। माध्यमिकैस्तु दुरुन्नीतितः स्वरूपसामर्थ्यादिवमियमित्युन्नेतुमशक्यत्वाद् इन्द्रजालादिमाया-सादृश्यान्मायेति। सांख्यैस्तु मूलकारणत्वात्प्रकृतिरिति, ते हि प्रकरोति प्रपञ्चमिति 20 प्रकृतिशब्दं निराहुः। वेदान्तवादिनस्तु प्रबोधात्तत्वसाक्षात्काराद्बिभेति तिरोधत्ते इत्यविद्येति। यथा हि मिथ्याज्ञानं तत्त्वज्ञानेन विनश्यति तथा धर्माधर्मावप्युत्पन्नतत्त्वज्ञानस्य भोगद्वारेण विलीयते, ततस्तयोरेवाविद्यात्वादविद्यामात्रविलसितः प्रपञ्च इति तेषामाघोषः। एवं तत्तत्प्रवृत्तिनिमित्तवशेन मायादिशब्दैरुदिता यस्य सहकारिशक्तिरसौ देवो गुणतयाधिष्ठान-मतीत्यावस्थित एवोपरतजगन्निर्माणादिव्यापारः सोऽस्मदीयं समस्तव्यापारं साक्षात् 25 कुर्वन्मम चेतसि संनिधत्तामिति ॥२०॥

उदयनगम्भीरभावप्रकटननिपुणेन वरदराजेन ।
व्याख्यात एव गहनः कुसुमाञ्जलेः प्रथमखण्डः ॥

॥इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ न्याय-
कुसुमाञ्जलिटीकायां प्रथमः परिच्छेदः ॥

विवेकः

एतावता प्रबन्धेनादृष्टे साधनत्वं व्यवस्थाप्याश्रयासिद्धिं निराकृत्याविद्यादिबोधका-
नागमानन्यथासिद्धयन् स्तवकार्थमुपसंहरति—

5 इत्येषेति । 'इति'–रुपसंहारद्योतनाय 'असौ' स्वप्रसिद्धो देवः 'मम' चेतसि 'रतिं'
स्वविषयामनुवृत्तिं 'बध्नातु' स्थिरीकरोतु । तत्रेतिकर्त्तव्यतामाह—साक्षादिति ।
साक्षात्कारविषयीभूतेत्यर्थः । साक्षात्कारिप्रकाराकाङ्क्षायामाह—'साक्षितया' सद-
सत्कर्माधिष्ठातृतयेत्यर्थः । तथा च येन येन रूपेण मननं तेनैव साक्षात्फलप्रयोजकत्व-
मादर्शितम् । द्वितीये स्तवकार्थोपयोगार्थमाह—शान्त इति । द्वेषादिहीन इत्यर्थः ।
10 तथाच तद्वचसि नाप्रामाण्यशङ्केत्यर्थः । 'प्रपञ्चः' कार्यजातं तस्य 'रचना' निर्माणं तस्य
यः 'कल्लोलः' सांख्यादिसिद्धान्तप्रवादः स एव 'कोलाहलो'ऽनाभिव्यक्तिविशेषतया
तत्सदृशः स 'विरतो' यस्मादस्मदुपदर्शितयुक्त्या तेषां बाधादिति भावः । 'यस्य' देवस्य
'एषा' प्रथमस्तवकव्यवस्थापिततत्साधनताका धर्माधर्मरूपा 'सहकारिशक्तिः' सहकारि-
कारणम् 'असमा' विचित्रा कार्यवैचित्र्येण कारणस्य साधितचित्रताका । ननु मायादिकं
15 तस्य सहकारित्वेनान्यैरुच्यते, तद्विरुद्धमित्यत्राह—मायेति । ऐन्द्रजालिकमायासारूप्य-
माह—दुरुन्नीतिः इति । दुःखेन या उन्नीतिरुन्नयनं तादृग् धर्मेणौपचारिकं
मायापदमत्र इति भावः एवमग्रेऽपि । मूलत्व[ा]दिति । निखिलकार्यं प्रति साक्षा-
त्परम्परया प्रयोज[क]त्वात, सांख्यव्युत्पत्त्या 'प्रकृत'रप्येवम् । 'प्रबोध'स्तत्त्वसाक्षात्कारः
त'द्धयत'स्तद्विरोधितया उत्पन्ने तत्त्वसाक्षात्कारे अविद्यावत्कायव्यूहद्वारा भोगेनादृष्टमपि
20 न पश्यतीति विद्याविरोधित्वमेव सारूप्यम् ॥२०॥ इति

श्रीगुणानन्दविद्यावागीशभट्टाचार्यविरचितः कुसुमाञ्जलि-
प्रथमस्तवकतात्पर्यविवेकः ॥१॥

# न्यायकुसुमाञ्जलौ द्वितीयस्तबकः

तदेवं सामान्यतः सिद्धेऽलौकिके हेतौ तत्साधनेनावश्यं भवितव्यम्। न च तच्छक्यमस्मदादिभिर्द्रष्टुम्। न चादृष्टेन व्यवहारः। ततो लोकोत्तरः सर्वानुभावी सम्भाव्यते। ननु नित्यनिर्दोषवेदद्वारको योगकर्मसिद्धसर्वज्ञद्वारको वा धर्मसम्प्रदायः स्यात्, किं परमेश्वरकल्पनयेति चेत्। अत्रोच्यते—

**प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात् ॥** 5
**तदन्यस्मिन्ननाश्वासान्न विधान्तरसम्भवः ॥१॥**

तथा हि। प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वे सति तद्विशेषत्वात् अप्रमावत्। यदि च तावन्मात्राधीना भवेदप्रमापि प्रमैव भवेत्। अस्ति हि तत्र ज्ञानहेतुः। अन्यथा ज्ञानमपि सा न स्यात्। ज्ञानत्वेऽप्यतिरिक्तदोषानुप्रवेशादप्रमेति चेत्। एवं तर्हि दोषाभावमधिकमासाद्य प्रमापि जायेत, नियमेन तदपेक्षणात्। अस्तु दोषाभावोऽधिको, भावस्तु नेष्यते इति चेत्। भवेदप्येवं, यदि नियमेन दोषैर्भावरूपैरेव भवितव्यम्, न त्वेवम्। विशेषादर्शनादेरभावस्यापि दोषत्वात्। कथमन्यथा ततः संशयविपर्ययौ। ततस्तदभावो भाव एवेति कथं स नेष्यते। 10

स्यादेतत्। शब्दे तावद्विप्रलिप्सादयो भावा एव दोषाः, ततस्तदभावे स्वत एव शाब्दी प्रमेति चेन्न। अनुमानादौ लिङ्गविपर्यासादीनां भावानामपि दोषत्वे तदभावमात्रेण प्रमाऽनुत्पत्तेः। अन्यत्र यथा तथाऽस्तु, शब्दे तु विप्रलिप्साद्यभावे वक्तृगुणापेक्षा नास्तीति चेन्न। गुणाभावे तदप्रामाण्यस्य वक्तृदोषापेक्षा नास्तीति विपर्ययस्यापि सुवचत्वात्। अप्रामाण्यं प्रति दोषाणामन्वयव्यतिरेकौ स्त इति चेन्न। प्रामाण्यं प्रत्यपि गुणानां तयोः सत्त्वात्। पौरुषेयविषये इयमस्तु व्यवस्था, अपौरुषेये तु दोषनिवृत्त्यैव प्रामाण्यमिति चेन्न। गुणनिवृत्त्याऽप्रामाण्यस्यापि सम्भवात्। तस्या अप्रामाण्यं प्रति सामर्थ्यं नोपलब्धमिति चेत्। दोषनिवृत्तेः प्रामाण्यं प्रति क्व सामर्थ्यमुपलब्धम्?। लोकवचसीति चेत्। तुल्यम्। तदप्रामाण्ये दोषा एव कारणं, गुणनिवृत्तिस्त्ववर्जनीयसिद्धसन्निधिरिति चेत्। प्रामाण्यं प्रति गुणेष्वपि तुल्यमेतत्। गुणानां दोषोत्सारणप्रयुक्तः सन्निधिरिति चेद्, दोषाणामपि गुणोत्सारणप्रयुक्त इत्यस्तु। निःस्वभावत्वमेवमपौरुषेयस्य वेदस्य स्यादिति चेत्, आत्मानमुपालभस्व। तस्माद्यथा द्वेषरागाभावाविनाभावेऽपि रागद्वेषयोरनुविधाननियमात् प्रवृत्तिनिवृत्तिप्रयत्नयो रागद्वेषकारणकत्वं, न तु निवृत्तिप्रयत्नो द्वेषहेतुकः, प्रवृत्तिप्रयत्नस्तु सत्यपि रागानुविधाने द्वेषाभावहेतुक इति विभागो युज्यते, विशेषाभावात्, तथा प्रकृतेऽपि। 15 20 25 30

तथापि वेदानामपौरुषेयत्वे सिद्धे, अपेतवक्तृदोषत्वादेव प्रामाण्यं सेत्स्यति, ततः सिद्धे प्रामाण्ये गुणाभावेऽपि तदिति दोषाभाव एव हेतुरकारणं गुणा इति चेन्न। अपेतवक्तृगुणत्वेन सत्प्रतिपक्षत्वप्रसङ्गात्। स्वत एव प्रामाण्यनिश्चयः, किन्तु शङ्कामात्रमनेनापनीयते दोषनिबन्धनत्वात्तस्य तदभावेऽभावात्, अतो नेदमनुमानवत् 5 सत्प्रतिसाधनीकर्त्तुमुचितमिति चेत्। न। गुणनिवृत्तिनिबन्धनायाः शङ्कायाः सुलभत्वात्। तस्याः केवलाया अप्रामाण्यं प्रत्यनङ्गत्वान्न शङ्केति चेत्, दोषनिवृत्तेरपि केवलायाः प्रामाण्यं प्रत्यनङ्गत्वान्न तया शङ्कानिवृत्तिरिति तुल्यमिति।

एवं प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत्। यदि तु स्वतो ज्ञायेत, कदाचिदपि प्रामाण्यसंशयो न स्यात्, ज्ञानत्वसंशयवत्। 10 निश्चिते तदनवकाशात्। न हि साधकबाधकप्रमाणाभावमवधूय समानधर्मादिदर्शनादेवासौ, तथा सति तदनुच्छेदप्रसङ्गात्। अथ प्रमाणवदप्रमाणेऽपि तत्प्रत्ययदर्शनाद्विशेषादर्शनाद्भवति शङ्केत्यभिप्रायः, तत् किं प्रमाणज्ञानोपलम्भेऽपि न तत्प्रामाण्यमुपलब्धं, प्रमाणज्ञानमेव वा नोपलब्धम्? आद्ये कथं स्वतः प्रामाण्यग्रहः? प्रत्ययप्रतीतावपि तदप्रतीतेः द्वितीये, कथं तत्र शङ्का? धर्मिण एवानुपलब्धेरिति। यदपि 15 झटिति प्रचुरतरसमर्थप्रवृत्त्यन्यथानुपपत्त्या स्वतः प्रामाण्यमुच्यते, तदपि नास्ति। अन्यथैवोपपत्तेः। झटिति प्रवृत्तिर्हि झटिति तत्कारणोपनिपातमन्तरेणानुपपद्यमाना तमाक्षिपेत्, प्रचुरप्रवृत्तिरपि स्वकारणप्राचुर्यम्, इच्छा च प्रवृत्तेः कारणम्, तत्कारणमपीष्टाभ्युपायताज्ञानम्, तदपि तज्जातीयत्वलिङ्गानुभवप्रभवम्, सोऽपीन्द्रियसन्निकर्षादिजन्मा, न तु प्रामाण्यग्रहस्य क्वचिदप्युपयोगः। उपयोगे वा स्वत एवेति 20 कुत एतत्?। ततः समर्थप्रवृत्तिप्राचुर्यमपि प्रामाण्यप्राचुर्यात्, तद्ग्रहणप्राचुर्याद्वा। स्वतस्त्वं तु तस्य कोपयुज्यते। न हि पिपासूनां झटिति प्रचुरा समर्था च प्रवृत्तिरम्भसीति पिपासोपशमनशक्तिस्तस्य प्रत्यक्षा स्यात्।

स्यादेतत्। प्रामाण्यग्रहे सति सर्वमेतदुपपद्यते। स च स्वतो यदि न स्याद्, न स्यादेव; परतः पक्षस्याऽनवस्थादुःस्थत्वादिति चेन्न। तदग्रहेऽप्यर्थसन्देहादपि 25 सर्वस्योपपत्तेः। न चानवस्थाऽपि, प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमात्। अन्यथा स्वतः पक्षेऽपि सा स्यात्। लिङ्गं निश्चितमेव निश्चायकम्, ततस्तन्निश्चयार्थमवश्यं लिङ्गान्तरापेक्षायामनवस्थेति चेत्। तत् किमनुपपद्यमानोऽर्थोऽनिश्चित एव स्वोपपादकमाक्षिपति, येनानवस्था न स्यात्। प्रत्यक्षेण तस्य निश्चयात्तस्य च सत्तयैव निश्चायकत्वान्नैवमिति चेत्। ममापि प्रत्यक्षेण लिङ्गनिश्चयात्तस्य च सत्तयैव निश्चाय- 30 कत्वान्नैवमिति तुल्यम्। लिङ्गज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चयः स्यादिति चेत्। अनुपपद्यमानार्थज्ञानस्य प्रामाण्यानिश्चये कथं तन्निश्चय इति तुल्यम्। न हि निश्चयेन स्वप्रामाण्यनिश्चयेन वा विषयं निश्चाययति प्रत्यक्षम्, अपि तु स्वसत्तयेत्युक्तमिति चेत्। तुल्यम्। तथापि यदि तल्लिङ्गाभासः स्यात्तदा का वार्त्तेति चेत्। अनुपपद्यमानोऽप्यर्थो यद्याभासः स्यात् तदा का वार्त्तेति तुल्यम्। सोऽपि प्रामाण्यमाक्षि- 35 पतीत्युत्सर्गः। स च क्वचिद्बाधकेनापोद्यत इति चेत्। लिङ्गेऽप्येवमिति तुल्यम्। तर्हि प्रामाण्यानुमानेऽपि शङ्का तदवस्थैवेति निष्फलः प्रयास इति चेत्। एतदपि

तादृगेव। अनुपपद्यमानोऽर्थएवासौ तथाविधः कश्चिद् यः स्वप्नेऽपि नाभासः स्यात्ततो नाशङ्केति चेत्। लिङ्गेऽप्येवमिति समः समाधिः। कः पुनरसावर्थो यः स्वप्नेऽपि नाभासः स्यात्, यदनुपलम्भे विभ्रमावकाशो यादृगुपलम्भे च तद्बाधव्यवस्था। अन्यथा हि, तथाभूतस्यापि व्यभिचारे साऽपि न स्यात्। मा भूदितिचेन्न, भवितव्यं हि तत्त्वातत्त्वविभागेन। अन्यथा व्याघातात्। कथं हि नियामकनिःशेषविशेषोपलम्भेऽपि विपरीतारोपः? तथाभावे वा तदतिरिक्तविशेषानुपलम्भे कथं बाधकम्। तदभावे त्वबाधस्य कथं भ्रान्तत्वमिति। 5

स्यादेतत्। परतः प्रमाण्येऽपि नित्यत्वाद्वेदानामनपेक्षत्वं, महाजनपरिग्रहाच्च प्रामाण्यमिति को विरोधः?। न। उभयस्याप्यसिद्धेः। न हि वर्णा एव तावन्नित्याः। तथा हि। इदानीं श्रुतपूर्वो गकारो नास्ति, निवृत्तः कोलाहल इति प्रत्यक्षेणैव शब्दध्वंसः प्रतीयते। न हि शब्द एवान्यत्र गतः। अमूर्त्तत्वात्। नाप्यावृतः। तत एव संबन्धविच्छेदानुपपत्तेः। नाप्यनवहितः श्रोता। अवधानेऽप्यनुपलब्धेः। नापीन्द्रियं दुष्टं, शब्दान्तरोपलब्धेः। नापि सहकार्यन्तराभावः। अन्वयव्यतिरेकवतस्तस्यासिद्धेः। नाप्यतीन्द्रियम्। तत्कल्पनायां प्रमाणाभावात्। अन्यथा, घटादावपि तत्कल्पनाप्रसङ्गात्। न च शब्दस्य नित्यत्वसिद्धौ तत्कल्पनेति युक्तम्। निराकरिष्यमाणत्वात्॥ 10 15

ते त्वेकदेशिनो नैवमिच्छन्ति, तान् प्रत्युच्यते। विवादाध्यासितः शब्दप्रध्वंसः, इन्द्रियग्राह्यः, ऐन्द्रियकाभावत्वात्, घटाभाववत्। नैतदेवम्, इन्द्रियाऽसन्निकृष्टत्वादतीन्द्रियाधारत्वाद्वेति चेन्न। इदं ह्युपाध्युद्भावनं वा स्यात्, व्यापकानुपलब्ध्या सत्प्रतिपक्षत्वं वा?। न प्रथमः, स्वरूपयोग्यतां प्रति सहकारियोग्यताया अनुपाधित्वात्, तस्यास्तामपेक्ष्यैव सर्वदा व्यवस्थितेः, नाप्यैन्द्रियकाधारत्वप्रयुक्तमभावस्य प्रत्यक्षत्वम्, धर्माद्यभावस्यापि तथात्वप्रसङ्गात्। अत एव, नोभयप्रयुक्तम्। नापि द्वितीयः, प्रथमस्यासिद्धेः। अस्ति हि श्रोत्रशब्दाभावयोः स्वाभाविको विशेषणविशेष्यभावः। विशेष्यस्यातीन्द्रियत्वात् कथमैन्द्रियकविशिष्टज्ञानविषयत्वम्, तथा विशेष्यमव्यवस्थापयतश्च कथं विशेषणत्वमिति चेन्न। तथा विशेष्यव्यवस्थापनायाः फलत्वात्। न तु तदेव विशेषणत्वम्, आत्माश्रयत्वप्रसङ्गात्। विशेषणभावेन समवायाभावयोर्ग्रहणं, तथा ग्रहणमेव च विशेषणत्वमिति। 20 25

तस्मात्, संबन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वमेव हि तयोः। सैव च विशिष्टप्रत्ययजननयोग्यता, विशेषणतेत्युच्यते। सा चात्र दुर्निवारा, प्रतियोग्यधिकरणेन स्वभावत एवाभावस्य मिलितत्वात्। तथापि तया तथैव प्रतीतिः कर्त्तव्येति चेन्न। गृह्यमाणविशेष्यत्वाऽवच्छिन्नत्वाद् व्याप्तेः। अन्यथा, संयुक्तसमवायेन रूपादौ विशिष्टविकल्पधीजननदर्शनाद् गन्धादावपि तथात्वप्रसङ्गात्। तथापि नेन्द्रियविशेषणतया कस्यचिद् ग्रहणं दृष्टम्, अपि त्विन्द्रियसंबद्धविशेषणतया, सा चातो निवर्त्तत इति चेन्न। अस्य प्रतिबन्धस्य इन्द्रियसन्निकृष्टार्थप्रतिसंबन्धिविषयत्वात्। अन्यथा संयुक्तसमवायेन गन्धादावुपलब्धिदर्शनात् समवायेनादर्शनात् 30 35

शब्दस्याग्रहणप्रसङ्गात्। नाप्यभावत्वे सत्यतीन्द्रियाधारत्वात् सत्प्रतिपक्षत्वं, योग्यताविरहप्रयुक्तत्वाद् व्याप्तेः। न चाऽतीन्द्रियाधारत्वमेव तस्य योग्यताविरहः। तद्विपर्ययस्यैव योग्यतात्वापत्तेः। न चैवमेव, धर्मादिप्रध्वंसग्रहणप्रसङ्गात्। दृश्याधारत्वं दृश्यप्रतियोगिता चेति द्वयमप्यस्य योग्यतेति चेन्न। उभयनिरूपणीयत्व-
5 नियमानभ्युपगमात्! प्रतियोगिमात्रनिरूपणीयो ह्यभावः। अन्यथेह भूतले घटो नास्तीत्येषाऽपि प्रतीतिः प्रत्यक्षा न स्यात्। संयोगो ह्यत्र निषिध्यते, तदभावश्च भूतलवद् घटेऽपि वर्त्तते, तत्र यदि प्रत्यक्षतया भूतलस्योपयोगो, घटस्यापि तथैव स्यादविशेषात्। अथ घटस्याऽन्यथोपयोगः, भूतलस्याप्यन्यथैव स्यादविशेषात्। कथमन्यथेति चेत्। प्रतियोगिनिरूपणार्थमभावसन्निकर्षार्थञ्च। तत्र प्रतियोगिनि-
10 रूपणं स्मरणलक्षणमनुपलभ्यमानेनापीति, न तदर्थमध्यक्षगोचरत्वमपेक्षणीयमन्यतरस्यापि; कुत उभयस्य। सन्निकर्षस्तु, भूतलघटसंयोगाभावस्येन्द्रियेण साक्षान्नास्ति, येनास्ति तेनापि यदीन्द्रियं न सन्निकृष्येत, कथमिव तं गमयेत्। न चोपलब्धोपलभ्यमानाभ्यामेवेन्द्रियं सन्निकृष्यते। इतरेतराश्रयप्रसङ्गात्।

## आमोद

द्वितीयां विप्रतिपत्तिं निरस्यन्नाह—**तदेवमिति**। अनिर्णीतकारण-
15 विशेषत्वं सामान्यम्। **तत्साधनेनेति**। यागहिंसादिनेत्यर्थः। **नचेति**। यागादीनां हितसाधनत्वं हिंसादीनामहितसाधनत्वम् चास्मदादिपरोक्षमित्यर्थः। तर्हि हितसाधनत्वमहितसाधनत्वं चाज्ञात्वापि प्रवृत्तिनिवृत्ती स्याताम्, को दोष इत्यत आह—नचेति। **तत** इति। यदुपदेशादस्मदादीनां प्रवृत्तिनिवृत्ती इति शेषः। लोकोत्तरत्वमस्मदादिविलक्षणत्वम्। **सर्वानु-**
20 **भावीति**। हितसाधनमहितसाधनं च सर्वमुपदेशद्वाराऽनुभावयतीत्यर्थः। यद्वा सर्वमनुभावयितुं बोधयितुं शीलमस्येति सर्वानुभावीति। 'न चादृष्टेन व्यवहार' इति यागादि स्वर्गस्साधनताबोधक शब्दरूपी व्यवहार उक्त इत्यन्ये। स्तवकेन निरसनीयामन्यथासिद्धिमाह—**नन्विति योगेति**। योगकर्मभ्यां सिद्धा ये सर्वज्ञाः कपिलादयस्तद्द्वारक इत्यर्थः। सम्प्रदीयते
25 गुरुणा शिष्यायेति 'सम्प्रदायो' वेदः, धर्मगोचरः सम्प्रदायः धर्मसम्प्रदायः। **किमिति**। परमेश्वरोऽभ्युपदेष्टृत्वेनादृष्टाधिष्ठातृत्वेन कल्पनीयस्तत्र: वेदो नित्य एव न वक्तारमपेक्षते। अदृष्टं चास्मदादिभिरधिष्ठेयमनधिष्ठितमेव वा प्रवर्तयिष्यते। तेन तदर्थमपि नेश्वरापेक्षा। प्रामाण्यं च वेदस्य नित्य [नि] र्दोषत्वात् स्वत एवोत्पद्यते ज्ञायते चेति **मीमांसकाः**।
30 कपिलादय एव वक्तारोऽदृष्टाद्यधिष्ठिताः सर्वज्ञाश्चेति **सांख्याः**।

अत्रोभयत्रापि कारिकया दूषणं संगृह्णाति प्रमाया इति परतन्त्रत्वात्' गुणजन्यत्वात्। गुणश्च वक्तृवाक्यार्थयथार्थज्ञानम्। तच्च वक्तारमन्तरेण कथं स्यादिति भावः। ननु नित्यत्वेऽपि वेदस्य महाजनपरिग्रहादेव प्रामाण्यं निश्चित्य यागादौ प्रवर्तस्यत इत्यत आह--**सर्गेति**। सांख्यमतं दूषयति--**तदन्यस्मिन्निति**। कपिलादेः सार्वज्ञे प्रमाणाभावाद् भ्रमादिसम्भावनाया 5 'मनाश्वासादित्यर्थः। ननु सांख्यमते दूषितेऽपि मीमांसकमते न दोषः सर्गादिसम्भवेऽपि ब्रह्माण्डान्तरवर्तिभिरेव कपिलादिभिरागत्य प्रलयानन्तरं वेदप्रद्योतनं स्यादित्यत आह--**न विधान्तरेति**। प्रमाया गुणजन्यत्वं साधयति--प्रमेति। ज्ञानत्वावच्छिन्नं प्रति यो 'हेतु' रात्ममनोयोगादिस्त 'दतिरिक्तो' यो 'हेतुः' प्रकृते गुणस्त 'दधीनेत्यर्थः'। येषामात्ममनः प्रभृतीनाम- 10 नित्यज्ञानत्वावच्छेदेन कारणत्वं तदतिरिक्तमनित्यप्रमात्वावच्छिन्नकार्यं प्रति कारणमवश्यमङ्गीकर्तव्यम्। अन्यथाऽनित्यप्रमात्वमाकस्मिकं स्यात्। स्याच्चाप्रमायामपि प्रमात्वम्, अविशिष्टकारणजन्यत्वात्। स च कारणविशेषः शाब्द्यां प्रमायां वक्तृवाक्यार्थयथार्थज्ञानमेव। तथा चानित्यप्रमात्वमनित्य ज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणताभिन्नकारणताप्रतियोगिककार्यता- 15 वच्छेदकम्। अनित्यज्ञानत्वान्यकार्यतावच्छेद [क] धर्मत्वात्, अप्रमात्ववत्; घटवद्वा। अनित्यप्रमात्वं कार्यतावच्छेदकमित्येव साध्यम्। पक्षधर्मताबला [द्] क्तानुमानार्थसिद्धिः। अनित्यप्रमा प्रमाऽप्रमोऽभयहेतुर्नित्यहेतुजन्या, जन्यत्वादप्रमावत्। अनित्यप्रमा प्रमाऽप्रमान्यतरप्रतिबन्धकजन्या, प्रमाऽप्रमान्यतरत्वादप्रमावदित्यादीनामप्युक्तानुमान एव तात्पर्यम्। **कार्यत्वे सती** 20 ति तु स्वसिद्धेश्वरज्ञाने व्यभिचारवारणाय। अत्र विपक्षसाधकमाह--**यदि हीति** 'तावन्मात्राधीना' ज्ञानहेतुमात्राधीना। ज्ञानहेतुमात्राधीनत्वेन प्रमावृत्तिधर्मेणाप्रमायां प्रमात्वापादनं व्यधिकरणमिति चेत्, न। प्रमाकार्यत्वे सत्यप्रमाकारणविलक्षणकारणजन्या यदि न स्यादप्रमा स्यादिति विवक्षितत्वात्। यद्वा प्रमात्वं यदि ज्ञानसामग्रीमात्रप्रमात्वप्रयोज्यवृत्ति स्याद- 25 प्रमावृत्ति स्यादप्रमात्ववदित्यत्र तात्पर्यत्वात्। आपादकासिद्धिमपाकरोति--**अस्ति हीति**। 'तत्र' प्रमायाम्। 'सा' प्रमा। ननु ज्ञानहेतुमात्राधीनत्वेऽपि अप्रमायां दोषसमवहितसामग्रीजन्यतया कथमप्रमायाः प्रमातादात्म्यमिति शङ्कते--**ज्ञानत्वेऽपीति**। एवं तर्हि ज्ञानविशेषवत् प्रमाविशेषोऽप्रमा

स्यादिति। दोषे सत्यपि स्वाभिमतमाह—एवं तर्हीति। तथा च ज्ञानहेत्व-
तिरिक्तहेतुजन्यत्वं सिद्धमेवेत्यर्थः। भावस्त्विति। तथा च कथं गुणसिद्धिर्येन
तदधिकरणतया ईश्वरः सिद्धयेदिति भावः। भवेदेवमिति[1]। प्रमायामागन्तु-
कभावानपेक्षत्वं स्वतस्त्वं भवेद् यदि दोषाभावो भावो न भवेदित्यर्थः।

5 अभावस्यापिति। सथा च तदभावो भाव एव। विशेषदर्शनं प्रमा-
कारणमित्यागन्तुकभावानपेक्षा प्रमायामवर्जनोयेत्यर्थः। विशेषादर्शनस्य
दोषत्वमुपपादयति—कथमिति। यद्यपि विशेषदर्शनस्य प्रमामात्रं प्रति न
हेतुत्वम्, विशेषप्रमायां व्यभिचारात्, तत्रापि तद्धेतुत्वेनानवस्थानात्।
विशेषदर्शने सत्यपि पीतः शङ्ख इत्यपि भ्रमदर्शनात्। किञ्च विशेषदर्शनप्रति-
10 बन्धकपित्तादीनामेव दोषत्वे सम्भवति विशेषादर्शनं न दोषो येन विशेषदर्शनं
गुणः स्यात्। अत एव पित्ताद्युत्कर्षेण भ्रमोत्कर्षोऽप्युपपद्यते। तथापि संशय-
विपर्ययोत्तरप्रमायां विशेषदर्शनस्य कारणत्वे क्लृप्तेऽन्यत्रापि तदेव कारणम्।
दोषोऽपि विशेषादर्शनमेव। पित्तादीनां विशेषदर्शनप्रतिबन्धकतयाऽन्यथा-
सिद्धत्वादिति दिक्।

15 ननु शब्दे वक्तृवाक्यार्थयथार्थज्ञानं यदि गुणः स्यात्, तदा तदनु-
रोधेनेश्वरः सिद्धयेत्। न त्वेवं; यतः शाब्दभ्रमे विप्रलिप्सादिर्भाव एव दोष-
स्तथा च शाब्दप्रमायां तदभावो गुण इति शंकते—स्यादेतदिति। अनुमा-
नादौ लिङ्गभ्रमाद् यौगपद्याभावे सत्यपि यथा सल्लिङ्गपरामर्शो गुणस्तथा
शब्देऽपि विप्रलिप्साद्यभावेऽपि वक्तृयथार्थज्ञानमवश्यमपेक्षणीयमिति परि-
20 हरति—अनुमानादाविति। नत्वे[नन्वे]कत्र प्रमाणे या गतिः सा प्रमाणा-
न्तरेऽपीति न नियमस्तथा च शब्दे दोषाभावाधीनैव प्रमा, न तु भावरूप-
गुणाधीनेति शङ्कते— अन्यत्रेति। एवं तर्हि नियमान्वयादिशालिनो वक्तृ-
यथार्थज्ञानस्य गुणस्याभावे शब्दादप्रमैव स्यादिति परिहरति—गुणाभाव
इति। यद्वा प्रतिवन्दिमाह—गुणाभाव इति। ननु गुणाभावादप्रमामेव
25 शब्दो जनयेदिति नाशङ्कनीयम्, यतस्तत्र दोषस्यैव कारणत्वावधारणादिति
शङ्कते—अप्रामाण्यमिति। तयोरिति। अन्वयव्यतिरेकयोरित्यर्थः। तथा
च शाब्द्यां प्रमायां वक्तृयथार्थज्ञानापेक्षाऽऽवश्यकीति भावः। ननु यत्र वक्ता

---

१. भवेदेवमिति शंकरसम्मतः पाठः।

सम्भाव्यते तत्र ज्ञानं गुणोऽस्तु । वेदे तु वक्तृसम्भावनैव नास्ति, कस्य ज्ञानं गुणो भवेदिति शङ्कते—पौरुषेयेति । अपौरुषेयत्वेनाभिमतं गुणनिवृत्त्याऽप्रमाणमेव भवेदित्याह—गुणेति । तस्या इति । गुणनिवृत्तेरित्यर्थः । तुल्यमिति । लौकिकवाक्ये गुणनिवृत्तेरेवाप्रामाण्यदर्शनात् , भ्रान्तप्रतारकवाक्ये संवादिनीश्वरज्ञानस्य गुणस्य सत्त्वादिति भावः । तदप्रामाण्ये लौकिकवाक्याप्रामाण्ये वक्तुर्यथार्थज्ञानाभावः सन्नपि न तन्त्रमित्याह—प्रामाण्यमिति । ननु वक्तुर्यथार्थज्ञानं तत्र [यत्र] प्र [भ्र] मादयो दोषा उत्सारिता भवन्तीति तत्रैव गुणोऽन्यथासिद्ध इति शङ्कते—गुणानामिति । तर्हि भ्रमादीनामपि गुणोत्सारकतयैवान्यथासिद्धिः स्यादिति परिहरति—दोषाणामपीति निःस्वभावत्वमिति । गुणदोषयोरभावात् प्रामाण्याप्रामाण्य [यो]र्बहिर्भूतत्वमित्यर्थः । आत्मानमिति । पौरुषेयत्वाङ्गीकारे प्रामाण्यमेव वेदस्य सिध्यतीति तदनङ्गीकर्तुस्तवैव दोषोऽयमित्यर्थः । तस्मादिति । यथा रागद्वेषौ वृत्तिनिवृत्ती प्रत्येकं जनयतो न त्वेकाभावेनापरमन्यथासिद्धं, तथा गुणदोषौ प्रामाण्याप्रामाण्ये जनयतो न त्वेकाभावेनापरान्यथासिद्धिरित्यर्थः । विशेषाभावादिति । अन्वयव्यतिरेकयोरुभयत्र सत्त्वविशेषादित्यर्थः ।

ननु वक्तृदोषासत्त्वेन प्रामाण्यश्चेन्निश्चितं वेदस्य, तदा प्रामाण्यं प्रति गुणस्य तत्रैव व्यभिचार इति कथमत्रापि कारणत्वमिति शङ्कते—तथापीति । न 'चापौरुषेयविषयेयं व्यवस्थे' त्यनेन पौनरुक्त्यम् । अत्रापेतवक्तृदोषत्वेन वेदप्रामाण्यनिश्चयानन्तरं गुणव्यभिचारस्य तत्रानुक्तस्यात्रोक्तत्वात् । वेदो न प्रमाणमपेतवक्तृगुणत्वादिति सत्प्रतिपक्षमाह—अपेतेति । अपसिद्धान्तमाशङ्कमानः पूर्वपक्षी झटिति संवरणेन सिद्धान्तमुद्धरन्नाह—[१]अत एवेति कथमप्रामाण्यशङ्कापनय इत्यत आह—दोषेति । तस्येति । अप्रामाण्यस्येत्यर्थः । अत इति । न मया प्रामाण्यमनुमानं प्रयुक्तमित्यर्थः । गुणनिवृत्तीति । प्रामाण्यं प्रति गुणस्य हेतुत्वावधारणात् कारणनिवृत्तौ च कार्यनिवृत्तेरावश्यकत्वादप्रामाण्यशङ्कया भवितव्यमेवेत्यर्थः । ननु गुणनिवृत्तिमात्रं न शङ्काधायकं किन्तु दोषसहितम् । नित्ये च वेदे दोषो नास्तीति तत्र कथं शङ्का स्यादिति शङ्कते—तस्या इति । दोषनिवृत्तिमात्रमपि न प्रामाण्ये

१. अत एव इति शंकरसम्मतः पाठः ।

तन्त्रं येनाप्रामाण्यशङ्कामपनयेत् , किन्तु गुणनिवृत्त्यधीना शङ्का स्यादेवेति परिहरति—दोषेति । ननु प्रमाया गुणजन्यत्वे स्तम्बादिशुकबालकादि-वाक्यात् कथं प्रमा स्यात् , कथं वा धूमभ्रमाद्वह्निमत्येव वह्निज्ञानं प्रमा स्यात् , सल्लिङ्गपरामर्शाभावादिति चेत् , न । तत्रेश्वरयथार्थलिङ्गज्ञानस्य 5 गुणत्वात् । एवं सत्यप्रमा क्वापि न स्यादिति चेत् , यत्र विषयासत्त्वं तत्र सम्भवात् । न हि तत्रापीश्वरज्ञानं सम्भाव्यते । तदियता प्रबन्धेन प्रामाण्यस्य गुणजन्यत्वं साधितं, गुणश्च वक्तृयथार्थवाक्यार्थज्ञानमिति ईश्वर-सिद्धिरित्युक्तम् ।

इदानीं प्रामाण्यस्य ज्ञप्तौ परतस्त्वं प्रसाध्यते—एवमिति । तथा च 10 वेदेऽप्याप्तोक्तत्वात् प्रामाण्यं ग्राह्यम् । आप्तश्च ईश्वर एवेति तत्सिद्धिरिति भावः । विपक्षबाधकमाह—यदित्विति । न हि ज्ञाने संशयः सम्भवतीति भावः । यत्तु प्रथममप्रामाण्याभाव एव प्रामाण्यमनुमीयत इति केषा-ञ्चिन्मतं तत्रेदं चिन्त्यम्—अप्रामाण्यस्यापि प्रथमं धर्म्यनुपस्थितिः, परैरपि तस्य नित्यानुमेयत्वाभ्युपगमात् । येन प्रकारेण तदुपस्थितिः, स प्रकारः 15 प्रामाण्योपस्थितयेऽप्यनुसन्धीयतामिति । ननु गृहीतेऽपि प्रामाण्ये संशयः स्यादित्यत आह—न हीति । 'आदि'—पदादसाधारणविप्रतिपत्तिसंग्रहः । ननु प्रमापि प्रमेत्येव गृह्यते क्वचित् , तथा च प्रमैवेयं प्रमात्वेन गृहीता-ऽप्रमा वेति संशयः कथं न स्यादिति शङ्कते—अथेति । अयं संशयः प्रामाण्याश्रयज्ञानधर्मिको वाऽप्रामाण्यविषयकज्ञानधर्मिको वा ? द्वयमपि दूष-20 यति—तत् किमिति । ननु प्रवृत्तिः प्रामाण्याग्रहाधीना । तथा च स्वतः प्रामाण्यग्रहमन्तरेण कथं झटिति प्रचुरा समर्थात् प्रवृत्तिरित्यर्थापत्तिबाधितं परतः प्रामाण्यबोधकमनुमानमित्यत आह—यदपीति । अन्यथैवेति । स्वत इत्यादि प्रामाण्यग्रहमन्तरेणैवेत्यर्थः । अन्यथोपपत्तिमाह—झटितीति । तोयं पिपासोपशमनकारणं तोयत्वात् पूर्वंपीततोयवदित्यनुमानादिच्छा, तया च 25 प्रवृत्तिः । पुनरनुमानम् , पुनरिच्छा, पुनः प्रवृत्तिरिति झटिति प्रचुरप्रवृत्तिः, सा तु प्रामाण्यग्रहमपि नापेक्षते, दूरे स्वतः प्रामाण्यग्रहमित्यर्थः ।

ननु लिङ्गानुसन्धानविलम्बेनेष्टसाधनताज्ञानविलम्बः स्यादित्यत आह—सोऽपीति तोयत्वमत्र लिङ्गम् । तच्च प्रत्यक्षदृष्टमित्यर्थः। क्वचिदिति। झटिति

प्रवृत्त्यादिस्थले इत्यर्थः । उपसंहरति—तत इति । प्रामाण्यग्रहप्राचुर्यांद्वेत्यभ्यु-पगमवादः । ननु स्वतस्तस्याप्रयोजकत्वे झटिति प्रवृत्तिर्न स्यात्, लिङ्गानु-सन्धानेन विलम्बादित्यत आह—नहीति । पिपासोपशमनग्रहमन्तरेण त्वन्मतेऽपि न प्रवृत्तिरिति झटिति प्रचुरप्रवृत्त्यन्यथानुपपत्त्या सापि प्रत्यक्षा स्यादित्यर्थः । सर्वमिदमिति[1] । प्रामाण्यव्यवहारो निष्कम्पप्रवृत्तिः, प्रवृत्तेश्च 5 सामर्थ्यमिति 'सर्वमि' त्यर्थः । अर्थसन्देहादपि प्रवृत्तिः तया प्रामाण्या-नुमानम्, ततश्च तद्व्यवहार इति सर्वं प्रथमप्रामाण्यग्रहेऽप्युपपद्यते एवोक्तमाह—तद्ग्रह इति । भवतु वा प्रवृत्तौ प्रामाण्यग्रहापेक्षा, तथापि नानवस्थेत्याह—न चेति । विषयान्तरसंचारेण प्रामाण्यग्रहधारा-विच्छेदात् । अन्यथा भट्टमिश्रयोः सुतरामनवस्था । गुरोरपि स्वतस्त्वं 10 परग्राह्यमेव । तस्यापि स्वग्राह्यत्वं परग्राह्यमित्यनवस्थेत्यर्थः । 'प्रामाण्यग्रहाधीन एवार्थनिश्चय' इत्यभिमानेनाह—लिङ्गमिति । भट्टमते तुल्यतामुपपादयति—तत् किमिति । अनुपपद्यमानोऽर्थस्तन्मते ज्ञातताज्ञानं विना नोपपद्यत इति तदन्यथानुपपत्त्या ज्ञानमर्थापत्तेरनुमितेर्वा विषय इति ज्ञानं गृह्यमाणं प्रामाण्योपहितमेव गृह्यते । तथा च 15 ज्ञातताज्ञानगोचरप्रामाण्यग्रहं विना कथं ज्ञाततानिश्चय इति समानमि-त्यर्थः । ननु ज्ञानेन घटादौ ज्ञातता जनिता, सा घटनिष्ठरूपादिवत् प्रत्यक्षैवेति तन्निश्चयो न तज्ज्ञानप्रामाण्यनिश्चयाधीनो येनानवस्था स्यादित्याह—प्रत्यक्षेणेति । तज्जातीयत्वादिकमपि प्रामाण्यग्रहलिङ्गम् । तदपि मानसप्रत्यक्षमेवेत्याह—ममापीति । लिङ्गज्ञानमप्रामाण्यशङ्का- 20 त्वदूरस्थं [शङ्कादुःस्थं] कथं लिङ्गनिश्चायकं स्यादिति शङ्कते—लिङ्गज्ञा-नस्येति । अनुपपद्यमानार्थज्ञानमप्रामाण्यशङ्कादूर [दुः] स्थं कथं निश्चायकं स्यादिति समानमित्यर्थः । अनुपपद्यमानार्थनिश्चायकं प्रत्यक्षमेव तत्र तत्प्रामाण्यग्रहो [हि न] तन्त्रमिति यदि ब्रूषे, तदपि समानमेवेत्याह—नहीति । ननु लिङ्गाभासशङ्कानिरासार्थमवश्यं प्रामाण्यग्रह इति शङ्कते—तथापी 25 ति । तदपि समानमेवेत्याह—अनुपपद्यमानोऽ [ऽद्य] र्थ इति । सोऽपीति । अनुपपद्यमानोऽर्थं इत्यर्थः । अपरीक्षितलिङ्गजाप्रामाण्यानुमितिः क्वचिदाभासी

---

१. सर्वमिदमिति शंकरसम्मतः पाठः ।

भूतापीति प्रामाण्यसमाश्वासः क्वापि न स्यादित्याह—तर्हीति। प्रमा[स]हिता ज्ञातता प्रामाण्यं न व्यभिचरति। भ्रमसहितायां क्वचिद्व्यभिचारेऽपि न दोष इत्याशङ्कते—अनुपपद्यमान इति। तद्वति तत्प्रकारकज्ञानादि-लिङ्गमपि न व्यभिचरतीति तुल्यतया परिहरति—लिङ्गेऽप्येवमिति।
5 सुहृद्भावेन पृच्छति—कः पुनरिति। उत्तरम्—यदिति। यस्य गन्धवत्तादेरनुपलम्भेऽपि भ्रमावकाशः तस्यैवोपलम्भे नैतज्जलं किन्तु पृथिव्येवेति तत्त्वम्। सापीति। विभ्रमाभावव्यवस्थापीत्यर्थः। अत्रान्तरे माध्यमिकः शङ्कते—मा भूदिति। "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे" रिति भावः। शून्यजा [ता] पि तवाभिमता प्रमाणमन्तरेण कथं सिद्ध्येत्?
10 कथं वा त्रैकाल्यासिद्धिरपि तवाभिमतो हेतुः सिद्ध्येदित्याशयेनाह—भवितव्यमिति। अन्यथेति। निषेधकप्रमाणमन्तरेण निषेधानुपपत्तेः। प्रवृत्तिविलोपश्चेत्यादि बहुमुखो व्याघात इत्यर्थः। प्रकृताभिप्रायेणाह—कथमिति। शुक्तित्वादिग्रहे रजतत्वारोपो यदि, तदा कस्यान्यस्य धर्मस्य ग्रहे तद्बाधव्यवस्था तथा च शुक्तित्वादिरेव तादृशो धर्मो यस्मिन्ननुपलब्धे
15 विपरीतारोपसम्भावना न भवतीति भावः।

प्रमायाः पारतन्त्र्यमुत्पत्तौ ज्ञप्तौ च प्रसाध्य सर्गप्रलयसम्भवादिति कारिकाभागं व्याख्यातुं शब्दानित्यतां साधयितुं शङ्कते स्यादेतदिति। अनपेक्षत्वं वक्तृगुणानपेक्षत्वमित्यर्थः। तथा च कथमीश्वरसिद्धिरिति भावः। महाजनपरिग्रहादिति। न त्वाप्तोक्तत्वात्। तथा च क्वेश्वरसिद्धिरिति
20 भावः उभयस्यापीति सर्गप्रलयसम्भवेन न वेदनित्यत्वं न वा महाजन-परिग्रह इत्यर्थः। न हीति। कुतस्तदानुपूर्वीघटितो वेद इति शेषः। तत एव अमूर्त्तत्वादेवेत्यर्थः। भट्टमते शब्दस्य विभुत्वादस्मन्मते शब्दसम-वायस्य श्रोत्रसम्बन्धात्, तस्य च नित्यत्वानुविच्छेद इति भावः।

मनः संयोगादीनामतीन्द्रियत्वेऽपि श्रोतुरवधानेन शब्दान्तरोप-
25 लब्धेस्तत्समवधानं सिद्धमिति तदतिरिक्ताभिप्रायेणाह तत्कल्पनायामिति। एतावता योग्यानुपलब्धिः साधिता। तथा च घटाद्यभावग्रहे सा यथेन्द्रियसहकारिणी, तथा शब्दाभावग्रहेऽपीति भावः। तत्कल्पनेति। अतीन्द्रियसहकारिकल्पनमित्यर्थः। तथा च तदभावादेव शब्दानुपलम्भ इति

न योग्यानुपलब्धिरिति भावः। अधिकरणयोग्यताऽभावग्रहे तन्त्रमिति शब्दाभावो नाध्यक्षः। न चेन्द्रियविशेषणतया पदार्थान्तरग्रहोऽपीत्येकदेश्य-भिप्रायं निराकर्त्तुमाह—ये त्विति। अन्त्यशब्दध्वंसे भागासिद्धिवार-णायाह—**विवादाध्यासित** इति। श्रूयमाणशब्दध्वंस इत्यर्थः। अतो नान्त्यशब्दध्वंसे भागासिद्धो हेतुः। **ऐन्द्रियकेति**। ऐन्द्रियकप्रतियोगिकाभा- 5 वत्वादित्यर्थः। न च मूर्त्तत्वाभावेऽनैकान्तिकमिदम्। गुणादौ तस्यापि प्रत्यक्ष-त्वात्। 'अभाव' पदेन ध्वंसस्य वा विवक्षितत्वात्। योग्यायोग्यमूर्तघटित-त्वेन वायुवनस्पतिसंयोगवन्मूर्तवत्त्वस्यैवातीन्द्रियत्वाद्वा। **एकदेशी** स्वाभि-प्रायमाह—**नैतदिति**। शब्दध्वंसो न प्रत्यक्ष इत्यर्थः। **इन्द्रियासन्निकृष्टत्वा-दिति**। इन्द्रियविशेषणतया अप्रत्यासत्तित्वादिति भावः। **अतीन्द्रियाधार-** 10 **त्वादिति**। अतीन्द्रियमात्राधारत्वादित्यर्थः। तेन पृथिवीत्वादौ परमाण्वादि-वृत्तितायामपि न व्यभिचारः। अतीन्द्रियाधाराभावत्वादिति कृतेऽपि गोत्वा-त्यन्ताभावान्योन्याभावयोर्व्यभिचारतादवस्थ्यात् 'मात्र' पदमवश्यं देयम्। ननु वायुस्पर्शध्वंसे तथापि व्यभिचार इति चेत्, न। आश्रयनाशमात्र-जन्यस्य तस्य तदनाधारत्वात्। अत एवाश्रयनाशजन्यगुणध्वंसात्यन्ता- 15 भावस्य केवलान्वयित्वसिद्धिः। **इदमिति**। उक्तद्वयं स्वव्यतिरेकद्वारा उपा-धिर्वा इन्द्रियग्राह्यं प्रति इन्द्रियसन्निकृष्टत्वमैन्द्रियकाधारत्वं च व्यापकं तदनुपलब्ध्या सत्प्रतिपक्षत्वं चेत्यर्थः। यद्यप्यैन्द्रियकाधारत्वं च व्यापकं तदनुपलब्ध्या सत्प्रतिपक्षत्वं चेत्यर्थः। यद्यप्यैन्द्रियकाधारत्वं नेन्द्रिग्राह्यत्व-व्यापकं त्रसरेणा[वा ?]त्मनि च व्यभिचारात्, तथापि द्रव्यभिन्नत्वेन हेतु- 20 र्विशेषणीयः। न च समवाये व्यभिचारः, तस्यापि स्वरूपसम्बन्धेनाधारत्वात्। **स्वरूपयोग्यतामिति**। 'इन्द्रियग्राह्य' इति इन्द्रियग्रहणयोग्य इत्येव साध्यार्थः, तथा च इन्द्रियसन्निकर्षस्तत्र सहकारियोग्यता, स कथमुपाधिः स्यात्, साध्यव्यापकत्वात्। न हि यत्र स्वरूपयोग्यता तत्र सहकारियोग्यतावश्यकता, भक्षितनष्टबीजादौ व्यभिचारात्। **तस्या** इति। स्वरूपयोग्यतायाः, सहकारि- 25 योग्यतामपेक्ष्यैवाव्यवस्थितेरित्यकारप्रश्लेषः। यद्वा स्वरूपयोग्यता फलो-पहितं स्वरूपं साध्यम्, तत्र च सहकारियोग्यता नोपाधिः, पक्षवृत्तित्वेन साधनव्यापकत्वात्। एतदेवाह—**तस्या** इति। तथा च नाकारप्रश्लेषः। नेन्द्रियसन्निकर्षः शब्दध्वंसप्रत्यक्षतायामुपाधिर्भवितुमर्हति। शब्दध्वंसस्य सर्व-

दैवेन्द्रियसन्निकृष्टत्वेन पक्षादव्यावृत्तेरित्यर्थः। द्वितीयोपाधित्वं निरस्यति—नापीति। समव्याप्तोपाध्यभिप्रायेणाह—धर्मादीति। अत एवेति। धर्माभावप्रत्यक्षत्वापत्तेरित्यर्थः। उभयेति। ऐन्द्रियकाधारत्वमिन्द्रियसन्निकृष्टत्वं चेत्यर्थः। धर्माभावे च प्रयोजकमेवास्तीति भावः। सत्प्रतिपक्षं दूषयति—
5 नापीति। प्रथमस्येति। इन्द्रियासन्निकृष्टत्वस्य हेतोरित्यर्थः। एतदेवोपपादयति—अस्ति हीति। ननु श्रोत्रमतीन्द्रियं कथं विशिष्टप्रत्यक्षे विशेष्यं स्यात्? एवं शब्दध्वंसोऽपि न विशेषणीभवितुमर्हति, विशेष्ये श्रोत्रे व्यावृत्तबुद्ध्यजनकत्वादित्याशङ्कते—विशेष्यस्येति। तथेति। व्यावृत्तत्वेनेत्यर्थः। परिहरति—तथेति। व्यावृत्तत्वेन विशेष्यव्यवस्थितिर्हि विशिष्टबुद्धिरेव। सा च स्वरूप-
10 सतो विशेषणविशेष्यभावादेव उत्पद्यत इति को दोष इत्यर्थः। तदेवेति। व्यावृत्तत्वेन विशेष्यव्यवस्थापनमेवेत्यर्थः। आत्माश्रयमेवाह—विशेषणभावेनेति। अनयैवानुपपत्त्या भट्टैः समवायोऽपि नाङ्गीक्रियत इति तमादायैव परिहृतम्। यद्यपि प्रत्यनुमाने योग्यताविरहः साध्यस्तत्र चेन्द्रियासन्निकृष्टत्वं न हेतुर्व्यभिचारात्, योग्यस्यापि घटादेरिन्द्रियासन्निकृष्टत्वात्, तथापि
15 सार्वत्रिकमिन्द्रियसन्निकृष्टत्वं हेतुः, फलोपधानभावो वा साध्यस्तत्र चासिद्धिरुक्ता। सम्बन्धं विनापि विशेषणत्वमुपपादयन्नुपसंहरति—तस्मादिति। सम्बन्धान्तरं संयोगसमवायौ तावन्तरेणेत्यर्थः। उपश्लिष्टस्वभावत्वं सम्बद्धस्वभावत्वम। तयोरिति। श्रोत्रशब्दध्वंसयोरित्यर्थः। तथापि कथं विशिष्टप्रत्यय इष्यत आह सैवेति। विशिष्टप्रत्ययजननयोग्यतेति। विशिष्टप्रत्यय-
20 जननयोग्यं स्वरूपद्वयमेव स्वरूपसम्बन्ध इत्यर्थः। प्रतियोगीति। शब्दप्रतियोगो, तदधिकरणेनाकाशेनेत्यर्थः। तयेति। विशेषणतयेत्यर्थः। तथैवेति। अधिकरणविशेष्यकैवेत्यर्थः। तथा च शब्दाभाववदाकाशमिति विशिष्ट 'प्रतीतिः' स्यादिति भावः। गृह्यमाणेति। तादृशप्रतीतौ विशिष्य योग्यता तन्त्रं, प्रकृते च श्रोत्रमतीन्द्रियं कुतो विशेषणमात्रज्ञानमिह विशेषणतया
25 भवतीत्यर्थः।

अत्रानुरूपमुदाहरणं विपक्षदण्डमुखेनाह—'अन्यथेति। स्पर्शगन्धादयः संयुक्तसमवायेन गृह्यन्ते, न त्वधिकरणविशेषणतया प्रथमं भासन्ते। अन्यथा तदधिकरणवायुचम्पकभागाद्यननुमानापत्तेरिति भावः। इन्द्रिय-

सम्बद्धविशेष[ण] तैव प्रत्यासत्तिः, न त्विन्द्रियविशेषणतेत्याह——**तथापीति**। **अस्यप्रतिबन्धस्येति**। इन्द्रियसम्बन्ध[द्ध] विशेषणतयैव प्रत्यासत्त्याऽभावो गृह्यते। ननु साक्षाद्विशेषणतयेति स्वरूपस्य प्रतिबन्धस्य यत्रेन्द्रियसन्निकृष्टोऽर्थो भूतलादिः प्रतिसम्बन्धी द्वितीयः सम्बन्धी यस्य विशेषणस्य तद्विषयत्वादित्यर्थः। अन्यत्र परम्परागर्भः समवायः प्रत्यासत्तिरिति शब्देऽपि तथा 5 स्यात्। तथा च यथा शुद्धसमवायः शब्दे प्रत्यासत्तिस्तथा शुद्धा विशेषणताऽभावग्रहे हेतुरेष्टव्येत्याह——**अन्यथेति**। द्वितीयं सत्प्रतिपक्षं प्रतिक्षिपति——**नापीति**। शब्दे वायवीयस्पर्शादौ च व्यभिचारवारणायाह——**अभावत्वे सतीति**। ध्वंसत्वे सतीति। अतो नात्यन्ताभावेनान्योन्याभावेन वा व्यभिचारः——अतीन्द्रियमात्राधारत्वादिति वा हेतुः। अयोग्यत्वेनोपाधिना 10 सत्प्रतिपक्षस्य हीनबलत्वमाह——**योग्यतेति**। ननु स्थापनानुमाने यत् साध्यं तत् कथमत्रोपाधिः स्यात् साधनव्यापकत्वादिति चेत्, न। योग्यतावच्छेदकरूपविरहस्य उपाधित्वात्। न च पूर्वसाधनव्यतिरेकपर्यवसायितया तथाप्युपाध्याभासोऽयमिति वाच्यम्। दूषकताबीजसत्त्वेन तादृशस्याप्युपाधित्वात्। न च सत्प्रतिपक्षोच्छेदः। स्थापनाया आभासत्वे तस्य सावकाशत्वात्। यथा 15 शब्दोऽनित्यो गुणत्वादित्यत्र श्रावणत्वेन सत्प्रतिपक्षेऽगुणत्वं नोपाधिः। जलपरमाणुरूपादौ साध्याव्यापकत्वादित्येके। तन्न। एवमपि सत्प्रतिपक्षोच्छेदात्। तत्रोपाधिविरहस्य साध्याव्यापकत्वग्रहाधीनत्वात्। तदग्रहश्च व्यभिचारग्रहाधीनः। तथा च यदि पूर्वसाधने व्यभिचारग्रहस्तदा तत एव हीनबलत्वं व्यभिचाराग्रहे उपाधि[धे] रेव ग्रहाद् द्वितीयस्य हीनबलत्वमतः 20 पूर्वसाधनव्यतिरेको नोपाधिः, न त्वतीद्रियाधारत्वेनायोग्यः शब्दध्वंसः कथं प्रत्यक्ष इत्यत आह——**न चेति**। एवं सति ऐन्द्रियकाधारत्वेनाभावस्य योग्यता स्यात्तत्रेष्टापत्तौ बाधकमाह——**न चैव** मित्यादि। धर्मादिध्वंसे दृश्यप्रतियोगित्वाभावादयोग्यत्वमिति शङ्कते——**दृश्येति**। तर्हि दृश्यप्रतियोगित्वमेव लाघवादभावग्रहे योग्यतावच्छेदकमस्तु किं दृश्याधारतयेत्याह—— 25 **उभयेति**। नियमाभावमेव दर्शयति——**प्रतियोगिमात्रेति**। प्रतियोगिज्ञानमात्रनिरूपणीय इत्यर्थः। मात्रपदेनाधिकरणग्रहं व्यवच्छिनत्ति। अधिकरणग्रहनिरूपणीयत्वे विपक्षदण्डमाह——**अन्यथेति**। न त्वधिकरणस्य भूतलस्य ग्रहोऽस्त्येवेति कुतो व्यभिचार इत्यत आह——**संयोगो हीति**। न तु घट

इत्यर्थः। भूतले घटस्य कराद्विद्यमानस्य संसर्गाभावत्रयस्यासंभावात् संयोगस्य च यथायथं तत्त्रितयसत्त्वादिति भावः। ननु तथापि भूतलसंयोगाधिकरणं तत्र निरूपितमेवात आह—**तदभावश्चेति**। तथा च यत्र घटो ध्वस्तोऽन्यत्र वा गतस्तत्र तस्याधिकरणस्याग्रहादभावग्रहः कथं स्यादित्यर्थः। ननु भूतले घटो नास्तीति धीर्न तु घटसंयोगो नास्तीति। तथा च संयोगस्तत्र कथं प्रतियोगीति चेत्? सत्यम्। घटोऽस्तीति प्रतीतिर्यथा घटसंयोगविषया तथा घटो नास्तीति प्रतीतेरपि तत्संसर्गविषयतौचित्यात्। ननु तथाप्यधिकरणज्ञानं वृत्तमेव भूतलस्याधिकरणत्वात्, न तु यावदधिकरणज्ञानस्य हेतुत्वं घटात्यन्ताभावादेरप्यग्रहप्रसङ्गादत आह—**तत्र यदीति**। उभयाधारतायां भूतलमात्राधेयतया तद्ग्रहे विनिगमनाविरह इति भावः। यद्वा, अभावज्ञानविषयीभूतयावदधिकरणकप्रत्यक्षफलोपधानस्य हेतुत्वादिति भावः। न तु ध्वंसस्य प्रतियोगी प्रकृते संयोगः। सोऽपि प्रतियोगिनो घटस्य यावत् स्मरणं न भवेत् तावन्न स्मर्येत। अस्मृतप्रतियोगिकश्चाभावो दुर्ग्रह इति तदर्थं घटस्मरणापेक्षेत्याशंक्याह—**अथेति**। भूतलमपि तथैवोपयुज्यताम्, न तु भावग्रहे तदुपयोग इत्यर्थः। **कथमिति** कोऽन्यः प्रकार इत्यर्थः। तमेव प्रकारं स्पष्टयति—**प्रतियोगीति**। तर्हि घटवद्भूतलस्यापि स्मृतस्यैव घटभूतलसंयोगध्वंसप्रतीतिरस्तु किं भूतलस्यापि सन्निकर्षेणेत्यत आह—**सन्निकर्षस्त्विति**। संयोगध्वंसे ग्राह्ये इन्द्रियसम्बद्धविशेषणताप्रत्यासत्तिनिर्वाहार्थं भूतलोपयोग इत्यर्थः। नन्वेवमधिकरणग्रहणमभावोपलब्धौ तन्त्रमित्यायातम्। तदुपलम्भमन्तरेण सन्निकर्षस्यैवाभावादित्यत आह—**नचेत्यादि**। सन्निकर्षघटकतया भूतलसन्निकर्षोपयोगे सामग्र्यधीनं तज्ज्ञानमपि जायते। ननु तज्ज्ञानमपि तन्त्रम्। सन्निकर्षस्य च उपलम्भसापेक्षत्वे उपलम्भे सति सन्निकर्षः। सन्निकर्षे च सत्युपलम्भ इत्यन्योन्याश्रय इत्यर्थः। नन्विन्द्रियसन्निकर्षानन्तरं भूतलोपलम्भोऽस्ति। उपलब्धेनोपलभ्यमानेन वा भूतलेनाभावसन्निकर्षः स्यात्। कान्योन्याश्रय इति चेत्, न। भूतलानुपलम्भदशायामप्यभावेन सम्बन्धे समवधानविशेषणतायाः प्रत्यासत्तेः सम्भवादिति भावः।

बोधिनी।

अथ द्वितीयं परिच्छेदमारभमाणस्तन्निराकरणीयामाशङ्कामुत्थापयितुं यथा साधितपूर्वेणेश्वरसिद्धिस्तथादर्शयति—**तदेवमिति**। तदिति वाक्योपक्रमे, एवमित्युक्तप्रकारपरामर्शः, **सामान्यतः** समान्यतो दृष्टेन पूर्वोक्तानुमानेन **अलौकिके हेतौ** अदृष्टे सिद्धे कार्यत्वात्तस्य **तत्साधनेन** ज्योतिष्टोमादिनाऽवश्यं भवितव्यम्। न च तत्साधनमस्मदादिभिः पिशितलोचनैः शक्यदर्शनम्। न च तथादृष्टेन तेनानुष्ठानरूपो व्यवहारः 5 सम्भवति। तस्मादतीन्द्रियार्थसाक्षात्कारैकक्षमः सर्वातिशायी कश्चिदस्ति यदुपज्ञोऽयमर्वाचीनानां तद्विषयो व्यवहार इति।

अत्रान्यथासिद्धिं मीमांसकः शङ्कते। **नन्विति**। नित्यत्वेन पुरुषानुप्रवेशाभावान्निर्दोषं स्वतः सिद्धप्रामाण्यं च वेदमेव मूलमवलम्ब्यायं धर्मसंप्रदायोऽस्तु, तन्नित्यत्वासिद्धावपि सांख्यादिमतावलम्बनेन कर्मयोगसिद्धसाक्षात्कारविषयीकृतधर्माधर्माः कपिलादय 10 एव सन्तु मूलमस्य किमनेन परमेश्वरणानपेक्षितसमुद्रवालुकाकीटसंख्यादिसर्वविषयनित्यज्ञानेनेति तदुत्तरत्वेन परिच्छेदप्रतिपाद्यमर्थं संकलय्याह—उच्यते—**प्रमायाः परतन्त्र इति**। न तावत् स्वतः प्रामाण्यं, प्रमायाः कारणगुणतन्त्रत्वात्। न च वेदस्य नित्यत्वं, शब्दस्यैवानित्यत्वात्, परतन्त्रपुरुषपरम्परातन्त्रतया प्रवाहाविच्छेदलक्षणं नित्यत्वमस्त्विति चेत् तदपि नास्ति, सर्गप्रलययोः सम्भवेन प्रवाहस्यैव विच्छेदात्। न च कपिलादिद्वारा 15 सम्प्रदायसिद्धिः। ततः परमेश्वरादन्यस्मिन् कपिलादौ प्रमाणत्वेन विस्रम्भाभावात्, न च योगबलप्रभाविता भावना प्रमात्मकमेव साक्षात्कारं करोतीति नियमः, ततो नित्यसर्वज्ञस्य सिद्धिरिति।

प्रमापारतन्त्र्यं तावदनुमानेन प्रतिपादयति—**तथाहीति**। प्रमात्वं नामौपाधिकसामान्यविशेषः। तस्य नित्यत्वेनानुत्पाद्यत्वात्, तदाश्रयो यथार्थानुभवलक्षणो ज्ञानविशेषः 20 प्रमाशब्देन पक्षीक्रियते। ज्ञप्तिपक्षे त्वविरोधात् प्रमाशब्देन प्रमात्वमेव पक्षीक्रियते, सेयं प्रमाऽप्रमासाधारणज्ञानसामान्यहेत्वधीना भवति, कार्यत्वे सति ज्ञानविशेषत्वादप्रमावदिति। व्याप्तिद्वयमत्राभिसंहितं—यो यत्कार्यविशेषः स तत्सामान्यहेत्वतिरिक्तहेत्वधीनः, यथा कलमाङ्कुरः, न ह्यङ्कुरविशेषः कलमाङ्कुरोऽङ्कुरसामान्यहेतोर्बीजादेवभवति किन्तु तद्विशेषात् कलमबीजात्, कार्यविशेषश्चेयं प्रमा तस्मात् तथेत्येका सामान्यव्याप्तिः। अपरा 25 च—यो ज्ञानविशेषः स ज्ञानसामान्यहेत्वतिरिक्तहेतुको यथाऽप्रमेति विशेषव्याप्तिरिति। ज्ञानं नाम ज्ञानत्वादिव्यञ्जिका विषयप्रवणा व्यक्तिः, तद्विशेषत्वानुभवत्वादिति। अत्र द्रव्यविशेषस्याकाशादेः, ज्ञानविशेषस्य चेश्वरप्रमाया नित्यत्वाद्धेत्वपेक्षैव नास्ति,

दूरे तत्सामन्यातिरिक्तहेत्वधीनत्वम् । ततश्च तद्विशेषत्वमनैकान्तिकं मा भूदित्युक्तं— **कार्यत्वे सतीति** । पक्षीकृतस्यापि कार्यत्वेन विशेषणान्नेश्वरप्रमांशे बाधादयः प्रादुष्यन्ति । अनुमानस्य विपक्षे बाधकं [अनुग्राहकं] तर्कमाह—**यदीति** । **तावन्मात्राधीना**=ज्ञानसामान्यहेतुमात्राधीनेति । कुत इत्यत आह—**अस्ति हीति** । यदि तत्र ज्ञानहेतुर्न स्यात् तदा
5 कारणाभावेन कार्यं ज्ञानमपि न स्यादित्याह—**अन्यथेति** । **ज्ञानत्वेऽपीति** । ज्ञानत्वाभ्युपगमेन तद्धेतुत्वाभ्युपगमं सूचयति—**एवं तर्हीति** । यदि दोषान्वयादप्रमा स्यात् तर्हि तद्विरोधिनी प्रमा दोषाभावादेव भवेदित्यधिकहेतुरङ्गीकृतः स्यादिति । **अस्त्विति** । एवमनित्यस्यापि वेदस्य प्रामाण्यं सिद्ध्यतीति भावः । **भवेदपीति** । भावात्मनोऽधिकस्यानङ्गीकारो भवेदपीति **कथमन्यथेति** । विशेषादर्शनस्यादोषत्वे कथं ततो विशेषा-
10 दर्शनादप्रमात्मकौ संशयविपर्ययौ स्यातामिति वक्रकोटरादेः शुक्तिकात्वस्य विशेषस्यादर्शने हि तयोरुत्पत्तिरिति । सन्तु तर्ह्यभावा अपि दोषाः ततः किमित्यत्राह—**तत इति** । अभावात्मनो दोषस्याभावो भाव एवेति । कथं स भावः प्रमाहेतुर्नेष्यत इति ।

अस्त्वेवं प्रत्यक्षे विशेषादर्शनादेरभावस्य दोषत्वं, न तु प्रमाणान्तरम् इत्याह—**स्यादेतदिति** । शब्दे तावद्भावात्मकाएवदोषाःतदभावे सति स्वत एवातिरिक्तभावानपेक्षाज् ज्ञानकार-
15 णादेव शब्दात्प्रमोत्पद्यत इति दृष्टम् । शब्दे तावदेवम् , अनुमानादावपि तथा द्रष्टव्यमिति तावच्छब्दस्यार्थः । नेति । अनुमाने लिङ्गविषयविपर्यासविरुद्धत्वादीनामभावानां दोषत्वे सत्यपीत्यपिशब्दो भिन्नक्रमः, अवधारणे वा । भावरूपदोषाभावमात्रेण लैङ्गिकज्ञानहेतोर्दृष्टसहचाराद् दृष्टव्यभिचाराच्च लिङ्गाद्व्याप्तिलक्षणगुणाभावे प्रमानुत्पत्तेस्तत्रापीष्टत्वात् । न च व्याप्तिरप्यनुमितिज्ञानमात्रे हेतुर्न प्रमाया इति युक्तम् । व्याप्त्यभावेऽपि मैत्रीतनयत्वादेवा-
20 नुमितिज्ञानोत्पत्तेः । अत्रादिशब्दाभ्यामर्थापत्तिमनुपपद्यमानविपर्यासदर्शनं च संगृह्णातीति । **अन्यत्रेति** । अनुमानादावतिरिक्तभावापेक्षाऽस्तु मा वा, न हि नस्तत्र निर्भरः, शब्दे तु दोषाभावे सत्यपि न भूयः प्रमोत्पत्तौ गुणापेक्षाऽस्तीति नः समीहितम् वेदप्रामाण्योपयोगित्वादिति । तदेतदनिष्टप्रसङ्गमुद्भाव्य शङ्कितं, तत्समाधिमत्रापि समीकुर्वन् परिहरति— **न गुणाभाव** इत्यादिना तुल्यत्वादित्यन्तेन । तर्हि पौरुषेयवाक्ये गुणान्वयव्यतिरेकदर्शनात्
25 तदधीनमस्तुप्रामाण्यम् , अपौरुषेये तु वेदे तदसंभवाद्दोषाभावमात्राधीनं प्रामाण्यमङ्गीकर्त्तव्यमित्याह—**पौरुषेयेति** । तदेतत्परिहरन् प्रसङ्गं तावदाह—**गुणनिवृत्त्येति** । तत्समाधिमाशङ्क्य साम्यापादनेन परिहरति—**तस्या** इति । यदि लोकवचसि दोषनिवृत्तेः प्रामाण्ये हेतुत्वमुपलब्धं तर्हि गुणनिवृत्तेरप्रामाण्यहेतुत्वमपि तत्रैवोपलब्धमिति शङ्कोत्तराभ्यामेवमाह—

लोकेति। ननु तस्य लोकवचसोऽप्रामाण्ये दोषा एव कारणमनन्यथासिद्धान्वयव्यतिरेकत्वात्, गुणनिवृत्तिस्तु विरोधिदोषसंनिधानान्तरीयकेत्याह—**तदप्रामाण्य इति**। तर्हि प्रामाण्यकारणेषु गुणेषु सत्सु तद्विरोधिनां दोषाणां निवृत्तिरप्यवर्ज्जनीयसंनिधिरिति स्यादित्याह—**प्रामाण्यं प्रतीति**। यदि गुणानामन्यत्रोपक्षयेण प्रमायामहेतुत्वं तर्हि दोषाणामपि तथात्वेनाप्रमायामहेतुत्वं भवेदिति शङ्कोत्तराभ्यामाह—**गुणानामिति**। 5 ननु प्रामाण्याप्रामाण्ययोरेवं वक्तृगुणदोषाधीनत्वे सति वक्तृविधुरस्य वेदस्योभयोरप्यभावेन प्रामाण्याप्रामाण्ययोरन्यतरस्वभावत्वमपि न स्यादित्याह—**निःस्वभावत्वमिति**। **आत्मानमिति**। अपौरुषेयं वेदवाक्यमातिष्ठमानमिति शेषः, न तु गुणवद्वक्तृकत्वेन वेदस्य प्रामाण्यमङ्गीकुर्वतोऽस्मानिति भावः। उक्तमर्थं दृष्टान्तमुखेन विशदयन्नुपसंहरति—**तस्मादिति**। द्वेषरागाभावाविनाभावेऽपीत्यस्य प्रवृत्तिनिवृत्तप्रयत्नयोरित्यनेन सम्बन्धः; 10 न त्वित्यस्य युज्यते इत्यनेन। **विशेषाभावादिति**। द्वेषानुविधायिनो निवृत्तिप्रयत्नाद्रागानुविधायिनः प्रवृत्तिप्रयत्नस्यैतदनुविधायित्वे विशेषाभावादिति। न चात्र द्वेषाभाव एव प्रवृत्तेः कारणमिति युक्तम्, उपेक्षाज्ञानादपि प्रवृत्तिप्रसङ्गात्। तथा प्रकृते प्रामाण्यविषयेऽपि दोषगुणाभावाविनाभावेऽपि प्रामाण्याप्रामाण्ययोरन्यथासिद्धगुणदोषानुविधाननियमात्तद्धेतुकत्वम्। न त्वप्रमा दोषहेतुका; प्रमा तु सत्यपि गुणानुविधाने दोषाभावहेतुकेतिविभागो 15 युक्त इति।

नन्वस्तु गुणानुविधानं प्रामाण्यस्य तथापि न तद्धेतुकत्वमित्याह—**तथापीति**। वेदानां प्रामाण्यमपौरुषेयत्वं च तावत्सिद्धं तेन दोषाभावमात्रेण प्रामाण्यं सेत्स्यतीति सिध्यत्येव ततो गुणाभावेऽपि दोषाभावादेव वेदे तत्प्रामाण्यं दृष्टमिति व्यभिचारादकारणं गुणाःसर्वत्र दोषाभावस्तु कारणमव्यभिचारादिति। **नेति**। न तावदद्यापि वेदानामपौरुषेय- 20 त्वेन प्रामाण्यमिति सिद्धं येन तत्र गुणव्यभिचारोऽतिदिश्येत। लोकाधीननिर्णयो हि वेदो लोके चाव्यभिचाराद् गुणः प्रामाण्यहेतुरिति स्थितम्, तत्र यदि वेदस्यापौरुषेयत्वमाश्रित्य दोषाभावात् प्रामाण्यमुच्येत तदा गुणाभावादप्रामाण्यमपि वक्तुं शक्यत इति। **स्वत इति**। न तावद्वेदानां प्रामाण्यमपेतवक्तृदोषत्वेनानुमीयते, स्वतो बोधजनकत्वेन निश्चिते प्रामाण्ये हेत्वन्तरादप्रामाण्यशङ्कायां तन्निराकरणमात्रमप्रामाण्यकारणदोषाभावावधारणेन क्रियते। 25 तदाहुः—

तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धौ प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते। (श्लो० वा,) इति।

ततो नेदमपेतवक्तृदोषत्वं सप्रतिसाधनीकर्त्तुं युक्तमिति । **नेति** । दोषाभावे तद्दोषनिबन्धनाप्रामाण्यशङ्कानिवृत्तावपि प्रामाण्यहेतुगुणनिवृत्तिनिबन्धनायास्तस्याः स्वस्थत्वात् । न हि स्वतः प्रामाण्यनिश्चय इत्यग्रे निवेदयिष्याम इति भावः । **तस्याइति** । न तावद्दोषसंसर्गमन्तरेण केवलाया गुणनिवृत्तेःप्रामाण्यहेतुत्वं लोके दृष्टं, न चापौरुषेये 5 दोषः सम्भवति । तेन गुणनिवृत्तिमात्रेण नाप्रामाण्यशङ्केति । **दोषनिवृत्तेरपीति** । गुणसहिताया एव दोषनिवृत्तेः प्रामाण्यहेतुत्वं लोके दृष्टमिति न दोषनिवृत्तिमात्रेणाप्रामाण्यशङ्का निवर्त्तत इति ।

यच्च ज्ञानानां स्वरूपात्स्वग्राहकाद्वा प्रामाण्यं ज्ञायते नान्यस्माद् गुणसंवादादिज्ञानादिति स्वतः प्रामाण्यमुक्तं परैस्तदपिनिराकुर्वन्नुत्पत्तिवज् ज्ञप्तिरपि परत इत्याह । **एवमिति** । 10 स्वविषयनान्तरीयस्यार्थक्रियादेः कारणगुणस्य या विज्ञानान्निश्चितप्रामाण्यैः प्रवर्तकज्ञानैः सह सजातीयत्वानुसंधानमभ्यासदशापत्तिः, तद्दशापन्नानां ज्ञानानामन्तरेणाप्यर्थक्रियादिविज्ञानं तज्जातीयतानुसन्धानादेव प्रामाण्यं निश्चीयते, तेन तत्र सांशयिकत्वमसिद्धं भवेदित्यत उक्तम्—**अनभ्यासदशायामिति** । न च व्यभिचारव्यावर्त्तनायैव हेतोर्विशेषणम् । रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वादित्युक्तावसिद्धिपरिहारार्थमपि दृष्टत्वा- 15 दिति । तज्जातीयत्वाननुसंधानदशायां हि जाते ज्ञाने निश्चितेऽपि तत्स्वरूपे प्रामाण्यं प्रति संशेरते ज्ञातारः किमिदं प्रमाणमप्रमाणं वेति । तस्माज् ज्ञानस्वरूपाद् स्वग्राहकाद्वा न प्रामाण्यनिश्चयः, किन्तु परतोऽर्थक्रियादिविज्ञानाद्, यथैवाप्रामाण्यनिश्चयः परतो विसंवादादेरिति । सांशयिकत्वात्संशयत्वादित्यर्थः । साध्यविपर्ययाङ्गीकारेऽनिष्टप्रसङ्गमाह—**यदीति** । यथा हि निश्चिते ज्ञानस्वरूपे संशयो नास्ति ज्ञानमिदं न 20 वेति, तद्वत्प्रामाण्येऽपि संशयः कदाचिदपि न स्यात् तस्यापि निश्चयात्, निश्चितेच विषये संशयस्यानुत्थानादिति । ननु निश्चितेऽपि प्रामाण्ये ज्ञानत्वादेः प्रामाण्याप्रामाण्ययोःसाधारणधर्मस्य दर्शनात् संशयः स्यादित्यात्राह—**नहीति** । असत्येव च साधकबाधकप्रमाणाभावे समानधर्मदर्शनादेः संशयहेतुत्वे को दोषस्तत्राह—**तथा सति**—इति । विशेषदर्शनोत्तरकालेऽपि समानधर्मादिदर्शनस्य संशयहेतोः सत्त्वादिति । **अथेति** । ज्ञानेन 25 सह गृह्यमाणेऽपि प्रामाण्ये प्रमाणज्ञानेष्विवाप्रमाणज्ञानेष्वपि प्रामाण्यदर्शनादिदं प्रमाणज्ञानमिदं त्वप्रमाणमिति नियामकविशेषादर्शनाच्च संशयोपपत्तिरिति भेदतद्विशेषोपलम्भे संशयस्यानुत्पत्तेः, प्रामाण्यसंशयवादिनापि तदनुपलब्धिरवश्यं वक्तव्येति मन्वानो विकल्प्य दूषयति—**तत्किमिति** । **धर्मिण एवेति** । उपलब्धे हि धर्मिणि धर्मविषयकः संशयो न त्वनुपलब्ध इति । अत्रायं संक्षेपः गृह्यमाणं हि ज्ञानं यद्यप्रमाणविलक्षणं ।

न गृह्येत ततः प्रामाण्यमेव न गृहीतं स्यात्, अथ तथा गृह्येत ततो न कदाचिदपि प्रामाण्ये संशयः स्यादिति। एवं स्वपक्षे साधनमभिधायेदानीं स्वतः प्रामाण्यं ज्ञायत इत्यत्र परोक्तं प्रमाणं दूषयितुमनुभाषते—**यद्पीति**। **समर्था** संगतार्था प्रयोजनाविसंवादिनीति यावत्। यदाह भाष्यकारः—"सामर्थ्यं पुनरस्याः फलेनाभिसंबन्धः" इति। तदेत्प्रवृत्तिसामर्थ्यं प्रवर्त्तकविज्ञानस्य प्रामाण्यमन्तरेणानुपपद्यमानं तदाक्षिपति। तस्यापि प्रवृत्तेः 5
प्रामाण्यसंशयादप्युपपत्तिमाशङ्क्योक्तं—**प्रचुरेति**। संशयेन हि कदाचित् कस्यचित्प्रवृत्तिः स्यात्, न तु प्रचुरेति। नन्वस्तु ततः प्रामाण्यनिश्चयोऽपि स तु स्वत एवेति कुत इत्यत्रोक्तं—**झटितीति**। प्रमाणान्तरानपेक्षमेव ज्ञानोत्पत्त्यनन्तरं भवन्ती तादृशी प्रवृत्तिः स्वतः प्रामाण्यनिश्चयं गमयति। ततश्च परतस्त्वानुमानं बाधप्रतिरोधयोरन्यतरदोषकलुषितमिति भावः। दूषयति—**तदपीति**। कुत इत्यत्रोक्तम्—**झटितीति**। न तु तत्रैवोपयोगः 10
प्रामाण्यग्रहस्येति दर्शयंस्तत्कारणपरम्परां दर्शयति—**इच्छा चेति**। दृष्टार्थेषूपयोगाभावेऽप्यदृष्टार्थेषु ज्योतिष्टोमादिषु प्रागेव प्रवृत्तेः प्रामाण्यनिश्चयोपयोगमाशङ्क्याह। **उपयोगे चेति**[१]। तज्जातीयत्वलिङ्गेन प्रामाण्यनिश्चयोपपत्तेः न स्वतस्त्वे वोपयोग इति समर्थप्रवृत्तेरप्यन्यथोपपत्तिमाह—**ततः समर्थेति**। यतः प्रामाण्यग्रहस्य न प्रवृत्तिं प्रत्युपयोग इति कथं प्रमाणादप्यगृहीतप्रामाण्यात् समर्था प्रवृत्तिरित्यत्राह—**तद्ग्रहणेति**। प्रवर्त्तक- 15
विज्ञानप्रामाण्यग्रहणावश्यंभावेऽपि विशिष्टप्रवृत्तेर्न तद्ग्राहकादेव तद्धर्मप्रामाण्यग्रह इत्येतद् दृष्टान्तेनोपपादयति—**न हीति**। न हि पिपासाशमनशक्तिमिति विशिष्टा प्रवृत्तिः पाथः स्वरूपग्राहकात्प्रत्यक्षादेव तच्छक्तिग्रहणमपेक्षते, साजात्यलिङ्गेनापि तद्ग्रहोपपत्तेः। तथा प्रवर्तकविज्ञानस्वरूपग्राहिणः प्रमाणादन्येनापि तज्जातीयत्वादिना लिङ्गेन तत्प्रामाण्यानुमानमविरुद्धमिति। 20

**स्यादेतदिति**। **सर्वमिदं** प्रवृत्त्यादिकमिति। **नेति**। मा भूदनवस्था दुःस्थत्वात् परतः प्रामाण्यग्रहः। तथापि न स्वतस्त्वसिद्धिः, प्रामाण्याग्रहेऽप्यर्थग्रहोपपत्तेरर्थसंदेहेऽपि न प्रवृत्त्युपपत्तेरिति। ननु प्रमाण्ये कदाचिज् ज्ञातव्ये भवत्येवानवस्थेत्याशङ्क्य न तावत्फलज्ञानमाश्रित्येयं प्रसज्यत इत्याह—**न च इति**। यथा ह्यर्थे गृह्यमाणे न तद्विषयकज्ञानप्रामाण्यग्रहापेक्षा, तथा प्रवर्तकविज्ञानप्रामाण्ये गृह्यमाणेऽपि न तद्ग्राहिणो गुणसंवादि- 25
विज्ञानस्य प्रामाण्यग्रहापेक्षा। तेन यदि कदाचित् कस्यचित् केनचित् प्रामाण्यं जिज्ञास्येत तदा तदन्येनागृहीतप्रामाण्येनैव गृह्यत इति नानवस्थेति। अवश्यज्ञेयत्वाभ्युपगमे दोषमाह—

१. उपयोगे वेति प्रकाशितपुस्तकपाठः।

**अन्यथेति**। न तावन्मीमांसकस्यापि ज्ञानं स्वयमेव प्रामाण्यं गृह्णाति स्वस्यैवाग्रहणात्। अतः स्वग्राहिणो ज्ञाततालक्षणफलाद्यन्यथानुपपत्तिरूपात्प्रमाणाद्गृह्यत इति वक्तव्यं, तत्र चार्थापत्तिजन्यप्रामाण्यविषयविज्ञानस्याप्यर्थापत्त्यन्तरेण प्रामाण्यं ग्रहीतव्यम्, एवं तस्य तस्यापीत्यनवस्था प्रसज्यत इति, माभूत् फलज्ञानप्रामाण्यस्यावश्यं ज्ञेयत्वं, मा च भूत् 5 तत्रानवस्था, तथापि प्रमासाधनमाश्रित्यानवस्था प्रसज्यत इत्याह—**लिङ्गमिति**। प्रवृत्ति-सामर्थ्यं तज्जातीयत्वं वा प्रामाण्यलिङ्गं निश्चितमेव सत्प्रवर्तकज्ञानस्य प्रामाण्यं निश्चाययति, लिङ्गनिश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयादेवेति तदवश्यम् निश्चेतव्यम् तदपि लिङ्गान्तरेण निश्चितेन निश्चेयं, तन्निश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयादिति। लिङ्गज्ञानप्रामाण्यं निश्चेतुमेव परम्परा व्यवतिष्ठते इत्यत्रापि प्रामाण्यस्यावश्यज्ञेयत्वानभ्युपगमेन सुगमः परि-10 हार इति मन्वानः परस्यापि समानमेतदित्याह—**तत्किमिति**। निश्चित एवानुपपद्यमानोऽपि स्वोपपादकमाक्षिपति। तन्निश्चयश्च तज्ज्ञानप्रामाण्यनिश्चयात् सोऽप्यनुपपद्यमानार्थान्तर-निश्चयादिति सुतरामनवस्थेति। **प्रत्यक्षेणे**त्यादिशङ्का, तदुत्तरं च सुगमम्। **लिङ्गज्ञान-स्येति**। सत्तामात्रावस्थितेन चक्षुरादिना जातेऽपि लिङ्गज्ञाने तत्प्रामाण्यानिश्चये कथं लिङ्गनिश्चयः, प्रामाण्यनिश्चयश्च लैङ्गिक एवेत्यनवस्था सुस्थेति। तदन्यत्रापि तुल्यमि-15 त्याह—**अनुपपद्यमानेति**। **न हीति**। अनुपपद्यमानग्राहकं च प्रत्यक्षमिति शेषः। तदन्यत्रापि तुल्यं लिङ्गग्राहकस्यापि तुल्यं प्रत्यक्षत्वादित्याह-**तुल्यमिति**। लिङ्गग्राहक-स्यापि प्रत्यक्षत्वादिति **तथापीति**। सत्तामात्रेण प्रत्यक्षस्य निश्चायकत्वेऽपि तस्य तदा-भासादविवेचितत्वात्तदवगतं प्रामाण्यलिङ्गं कदाचिदाभासः स्यात्। अतस्तत्प्रामाण्यं ज्ञेयमिति। तदप्यनुपपद्यमानग्राहिणोऽपि प्रत्यक्षस्य तुल्यमित्याह **अनुपपद्यमान** 20 **इति**। **सोऽपि इति**। अनुपपद्यमानाभासोऽपि इति। लिङ्गाभासोऽप्येवमित्याह-**लिङ्-गेऽपि-इति**। यदि लिङ्गाभासेनापि प्रामाण्यानुमानं तर्हि तदनुमितप्रामाण्यज्ञानस्याप्य-प्रामाण्यशङ्का निवृत्तेति व्यर्थः प्रामाण्यानुमानप्रयास इत्याह-**तर्हि-इति**। अर्थापत्ति-वादिनोऽपि तुल्यमेतदित्याह-**एतदपि-इति**। ननु तर्हि यदन्तरेण हि यन्नोपपद्यते न तत् यदन्तरेणपि भवतीति संभवति, तस्मादनुपपद्यमानस्याभासत्वं न संभवतीत्याह **अनुप-**25 **पद्यमान इति**। तर्हि तदविनाभूतस्य तेन विनापि भानासंभवात् लिङ्गाभासोऽपि न संभवतीत्याह **लिङ्गेऽपि-इति**। अत्रान्तरे पार्श्वस्थः पृच्छति-**कः पुनरिति**। योऽसौ युवाभ्यामुच्यते नाभासः स्यादिति कोऽसावर्थ इति। उत्तरं **यद नुपलम्भे-इति**। यस्य तदितरव्यावर्तकधर्मविशिष्टस्य वस्तुनोऽनुपलम्भे भ्रान्तिर्भवति यादृशस्यो-पलम्भे चासौ न भवति सोऽर्थः स्वप्नेऽपि नाभासः स्यादिति। अनाभासस्योपलक्षणा-

न्तरमाह—**बाध इति**। बाधके तदितरव्यावर्तकधर्मानुपलम्भोपलम्भाभ्यां हि ज्ञानयोर्बाध्यबाधकव्यवस्थेति। यद्वा, यादृशस्योपलम्भे बाधकं व्यवतिष्ठते नातः परं भवति सोऽप्यर्थः। अन्यथेत्यस्य विवरणं **तथाभूतस्यापि व्यभिचार इति**। **सापि**=बाधक व्यवस्थापि न स्यात्। न ह्युभयोरप्यविशिष्टायां व्यभिचारशङ्कायामेकं बाधकमितरद् वाध्यमिति व्यवस्था सिध्येदिति। सापि मा भूत् का नो हानिरित्याह—**मा भूत्** 5 इति। **भवितव्यम्** इति। वाधकज्ञानविषयस्तत्त्वं, बाध्यज्ञानविषयश्चातत्त्वमिति हि तत्त्वातत्त्वव्यवस्या,। ततो बाध्यबाधकव्यवस्थाभावेन तत्त्वातत्त्वविभागोऽपि न स्यादिति। मा भूद्विभागोऽपीत्यत्राह—**अन्यथा इति**। मा भूदित्यस्यापि निर्णयस्य तत्त्वाभावेन व्याघातादिति। यादृगुपलम्भ इत्यादिनोक्तमेवार्थमुपपादयन्नाह—**कथं हि**-इति। तथाभावेवेति नियामकनिःशेषविशेषोपलम्भे वेति। 10

अथ पूवपक्षैकदेश्याह—**स्यादेतत्** इति। अस्तु परतः प्रामाण्यं प्रमाणानां तथापि वेदानां वक्तृगुणज्ञानादिनिरपेक्षमेव प्रामाण्यं सिद्‌ध्यति, नित्यत्वेन तदनपेक्षत्वात् महाजनपरिग्रहाच्च प्रामाण्यसिद्धेः, ततः प्रमायाः पारतन्त्र्येऽपि नेश्वरसिद्धिरिति भावः। **न—इति**। नित्यत्वस्य तदधीनानपेक्षत्वस्य चासिद्धेः। यद्वा, नित्यत्वस्य परिग्रहस्य च, यद्यपि सिद्धः परिग्रहस्तथापि नित्यत्वे वेदस्य निर्मूलतया असत्कल्प एवेति भावः। 15 नित्यत्वासिद्धिमाह—**न हि-इति**। वर्णानामेवानित्यत्वे कुतस्तत्समूहात्मकस्य वेदस्य नित्यत्वं, कुतस्तरां तत्समूहात्मनो वाक्यस्य, कुतस्तमां तत्समूहात्मनां वेदानामिति तावच्छाब्दस्यार्थः। कथं वर्णानामनित्यत्वमित्यत आह—**तथा हि** इति। विशेषतः सामान्यतश्च शब्दानां ध्वंसरूपमनित्यत्वं श्रोत्रप्रत्यक्षेणानुभूयत इति। नन्वयं शब्दानुपलम्भ एव, स च ध्वंसं विनाप्युपपद्यत इत्यत्राह—**न हि** इति। अमूर्त्तत्वस्य 20 निष्क्रियत्वव्याप्तेरिति। अमूर्त्तत्वादेव शब्दस्येन्द्रियसंबन्धविच्छेदलक्षणमावरणमपि घटादेरिव न घटत इत्याह—**नापि** इति। नापि सत्येवेन्द्रियसंबन्धे श्रोतुरनवधानादनुपलब्धिरिन्द्रियदोषाद्वा संभवतीत्याह—**नाप्यनवहितः** इति। नन्वदुष्टेऽपि श्रोत्रेन्द्रिये तदनुपलम्भोपपत्त्यर्थं प्रतिशब्दं तत्सहकारिणां भेदाच्छब्दान्तरोपलम्भेऽप्यनुपलम्भः शब्दान्तरस्योपपद्यते, तेन न तदनुपलम्भः सहकार्यन्तराभावादित्यत आह— 25 **नापि सहकारी**—इति। शब्दोपलम्भं प्रत्यन्वयव्यतिरेकवतः सहकारिणः प्रत्यक्षेणासिद्धिरिति। तस्यातीन्द्रियत्वादनुपलब्धिरित्यत्राह—**नापि**—इति। श्रुतस्य शब्दस्याभावेनैवोत्तरकालमनुपलम्भोपपत्तेः, सहकारिकल्पनायां प्रमाणाभावादिति। तथापि एतत्कल्पने

ध्वस्तेऽपि घटेऽनुपलम्भः सहकारिविरहादिति स्यादित्याह—**अन्यथा इति**। ननु घटादौ न तत्कल्पनमनित्यत्वात्, तस्मान्नित्यस्य शब्दस्यानुपलम्भः सहकारिविरहनिबन्धन एवेति तत्कल्पना युक्तेत्यत्राह—**न च शब्दस्य**—इति।

ये तु नैयायिकैकदेशिनः शब्दध्वंसस्य प्रत्यक्षत्वं नेच्छन्ति तान्प्रति तत्रानुमानम-
5 भिदध्मह इत्याह—**ये तु** इति। आद्यादिशब्दप्रध्वंसव्यावर्त्तनायोक्तं—**त्रिचादाध्या-सितः**—इति। **ऐन्द्रियकाभावत्वात्**—इति। ऐन्द्रियकस्य प्रतियोगिनः प्रध्वंसाभावत्वादित्यर्थः। तथा च न साध्याविशिष्टत्वं, नापि परमाणुवर्तिना घटरूपाभावेनव्यभिचार इति। एकदेशी शङ्कते—**नैतदेवम्**—इति। अभावस्य तावदिन्द्रियेण संयुक्तादिविशेषण-विशेष्यभावसन्निकर्षः, न चायं श्रोत्रेण तदाश्रयस्य शब्दप्रध्वंसस्यास्ति, न चासंयुक्त-
10 मिन्द्रियेण गृह्यते, अतीन्द्रियाकाशाश्रयश्च शब्दप्रध्वंसस्ततोऽपि नेन्द्रियेण गृह्येतेति। तदेतद्विकल्प्य दूषयति—**न इति**। इदं द्वयमप्युपाध्युद्भावनं स्यात् ऐन्द्रियकत्वाभावत्वस्यै-न्द्रियकत्वेन न स्वाभाविकः संबन्धः, घटाद्यभावे त्वैन्द्रियकत्वस्येन्द्रियसंनिकर्षैन्द्रियका-धारत्वयोरन्यतरप्रयुक्तत्वादिति। यद्वा, इन्द्रियग्राह्यत्वस्येन्द्रियसन्निकर्षः, ऐन्द्रियकाधारत्वं वा व्यापकं घटाभावादिषु दृष्टं, तच्च शब्दप्रध्वंसान्निवर्त्तत इति न तस्यैन्द्रियकत्वम्—इति।
15 **सत्प्रतिपक्षत्वम्**—इति। तत्र न तावदुपाध्युद्भावनपक्षः संभवतीत्याह—**प्रथमः** इति। इन्द्रियसंनिकर्षस्य तावदनुपाधित्वमाह—**स्वरूप** इति। शब्दप्रध्वंसस्येन्द्रियग्रहणं प्रति स्वरूपयोग्यता तत्र साध्यते, सा च यावत्स्वरूपभाविनोति न तां प्रत्यागन्तुकस्य सहकारियोग्यतारूपस्येन्द्रियसन्निकर्षस्योपाधित्वं साध्यव्यापकत्वाभावादिति। ऐन्द्रियका-धारत्वस्याप्यनुपाधित्वमाह—**नापि इति**। तत्र मानसप्रत्यक्षात्माऽऽधाराणां धर्माधर्म-
20 संस्काराणां प्रध्वंसस्य मानसत्वप्रसङ्गः। इन्द्रियसन्निकर्षस्योपाधित्वेऽपि मनःसंयुक्तात्म-विशेषणत्वे धर्माद्यभावस्य प्रत्यक्षत्वप्रसङ्गो द्रष्टव्य इति भावः। **अत एव इति**। यत इन्द्रियसन्निकृष्टत्वैन्द्रियकाधारत्वयोर्द्वयोरपि धर्माद्यभावे व्यभिचार इति। नापि सत्प्रतिपक्ष-त्वमित्याह—**नापि द्वितीयः**—इति। तयोरुपाधित्वस्य व्यभिचारदूषितत्वात् सत्प्रतिपक्ष-त्वमपि निरस्तमेवेति भावः। तत्र प्रथमस्येन्द्रियासंनिकृष्टत्वस्य स्वरूपासिद्धेरपि न
25 सत्प्रतिपक्षत्वमित्याह—**प्रथमस्य** इति। असिद्धिमेवाह—**अस्ति हि इति**। **स्वा-भाविकः** संयोगसमवायादिसंबन्धान्तरनिरपेक्ष इति। ननु यदि श्रोत्रविशेषणतया शब्दाभावोऽपि गृह्येत ततः शब्दाभावविशिष्टत्वेन श्रोत्रं ग्रहीतव्यं, न चैतत्संभवति श्रोत्रस्यातीन्द्रियत्वादित्याह—**विशेष्यस्य इति**। विशिष्टज्ञानविषयत्वाभावे को दोष-

स्तत्राह—**तथा इति**। न हि स्वजन्यविशिष्टज्ञानविषयत्वेन विशेष्यमनवच्छिन्दतो विशेषणत्वं नाम। विशेष्यव्यवस्थापकस्यैव विशेषणत्वादिति भावः। **न इति**। तथा विशेष्यव्यवच्छेदो विशेषणस्य फलं, न तु विशेषणत्वमिति। कुत इत्यत आह। **आत्माश्रय इति**। कथमित्यत्राह। **विशेषणभावेन इति**। विशेषणभावो हि सन्निकर्षः समवायाभावयोर्ग्रहणहेतुः। 5

तत्र यदि विशेष्यस्थापनमेव विशेषणत्वं तदा विशेषणभावेन तयोर्ग्रहणं, विशेषणभावश्च तथाग्रहणमेवेत्यात्माश्रयत्वं दृष्टान्तार्थं समवायोपसंग्रहणमिति। ततश्चैवमङ्गीकार्यमित्याह—**तस्मात् इति**। अस्त्वेवं सम्बन्धः, विशेषणता तु कथं तयोः सिध्येत्, सम्बन्धान्तरपूर्वकत्वात् तस्या इत्यत्राह। **सैव इति**। तदुपश्लिष्टस्वभावतैव नीलोत्पलादिष्वपि विशेषणता, तस्या एव विशिष्टप्रत्ययजननयोग्यतारूपत्वाद् योग्यतैव 10 विशेषणमिति भावः। सा च योग्यताऽत्र शब्दप्रध्वंसे दुर्वारा प्रतियोगिनः शब्दस्याधिकरणेनाकाशेन सम्बन्धान्तरमन्तरेणैव शब्दाभावस्योपश्लिष्टत्वादित्याह। **सा चात्र इति**। नन्वस्तु योग्यतैव विशेषणत्वं, विशेष्यव्यवस्थापनं च तत्फलम्, तथापि यद्यस्ति शब्दाभावस्य स्वभावत उपश्लेषादाकाशं प्रति विशेषणता, तर्हि तथा विशेष्यव्यवस्थापनेन प्रतीतिरुत्पादयितव्या, भूतलादिविशेषणे घटाभावादौ तथा दर्शनात्। न च तत्सम्भवति 15 विशेष्यस्याकाशस्यातीन्द्रियत्वादित्याशयेनाह। **तथापि इति**। **न इति**। विशेष्यग्रहणयोग्यताप्रयुक्तं तन्न तु विशेषणत्वमात्रप्रयुक्तम्, तन्मात्रप्रयुक्तायां व्याप्तौ बाधकमाह—**अन्यथा इति**। यथा रूपादौ विशेषणे गृह्यमाणे द्रव्यमपि तद्विशिष्टं गृह्यते, तथा गन्धादावपि स्यात्, तत्रापि सन्निकर्षस्य विशेषणत्वस्य चाविशेषात्। न हि तदस्ति विशेष्यस्यायोग्यत्वात् तत्र इति। नन्वस्तु विशेषणतया ग्रहणं, तथापि अघटं भूतल- 20 मित्यादाविन्द्रियसम्बद्धविशेषणतयैवाभावस्य ग्रहणं दृष्टं, न तु क्वचिदिन्द्रियविशेषणतया, सा चेन्द्रियसम्बद्धविशेषणता ततः शब्दाभावान्निवर्तमाना स्वव्याप्यमिन्द्रियग्राह्यत्वमप्युपादायैव निवर्तत इति व्यापकानुपलब्धिरेव तस्यानैन्द्रियकत्वे प्रमाणमित्याह। **तथापि इति**। **न इति**। यो हीन्द्रियेण साक्षात्सम्बद्धुमयोग्यस्तत्सम्बन्धिनार्थान्तरेण सम्बध्यते तद्विषय एवायं प्रतिबन्धः, न त्विन्द्रियग्राह्याभावमात्रविषय इति। क्वचिद् 25 व्यवधानदर्शनादन्यत्रापि तथाभ्युपगमेऽनिष्टमाह। **अन्यथा इति**। तदेवमिन्द्रियसन्निकृष्टत्वस्यासिद्ध्युद्भावनेन प्रतिपक्षत्वं निराकृतम्, इदानीमतीन्द्रियाधारत्वस्य निराचष्टे। **नापि इति**। शब्दादिभिर्व्यभिचारनिवृत्त्यर्थमुक्तमभावत्वे **सति इति**। कुत इत्यत

आह । **योग्यता इति** । परमाणुगतद्व्यणुकप्रध्वंसादेः सपक्षत्वाभिमतस्य नातीन्द्रिया-
धारत्वादतीन्द्रियत्वं, किन्तु स्वरूपयोग्यताविरहात् ततो व्याप्यत्वासिद्धो हेतुरिति ।
नन्वस्तु योग्यताविरह एव प्रयोजकः, स त्वतीन्द्रियाधारतैवाभावस्येत्यत्राह । **न च
इति** । नन्वापद्यतामैन्द्रियकाधारतैव योग्यतेत्यत्राह । **न चैवम् इति** । ऐन्द्रियका-
5 ऽत्माधारो हि धर्मादिप्रध्वंस इति । **दृश्याधारत्वम् इति** । ततश्च न धर्माद्यभावस्य
प्रत्यक्षत्वापत्तिरदृश्यप्रतियोगिकत्वात्, नापि शब्दाभावस्यातीन्द्रियाधारत्वात् तस्येति ।
**न इति** । न ह्याधारेणापि निरूपणीय इति । कथं तर्ह्यभ्युपगम इत्यत्राह । **प्रति-
योगि इति** । आधारनिरूप्यत्वेऽनिष्टमाह । **अन्यथा इति** । किमिति न स्यादत
आह । **तत्र इति** । तयोर्यदि भूतलमाधारोऽभावनिरूपणे प्रत्यक्षतयोपयुज्यते घटोऽपि
10 तथा स्यात् आधारत्वाविशेषात्, तथा च परोक्षे घटे इह घटो नास्तीति प्रतीतिर्न
स्यादिति भावः । **अथ इति** । प्रकारभेदं सूचयन्नार्थस्तु शब्दः प्रतियोगिनः संसर्गस्य
निरूपणाय घटस्योपयोगः । तच्च स्मर्यमाणेनापि तेन सिध्यतीति भावः तदेतद् भूतल-
स्यापि तुल्यमित्याह । **भूतलस्य इति** । विवक्षितमन्यथोपयोगं प्रश्नपूर्वकमाविष्करोति ।
**कथम् इति** । न तावत्प्रतियोगिनिरूपणे तयोः प्रत्यक्षत्वोपयोग इत्याह—**तत्र इति** ।
15 प्रतियोगिनः संसर्गस्य तावन्निरूपणं स्मरणलक्षणं तदानीमनुभवस्यासंभवात्, स्मरणं
चाप्रत्यक्षेणापि तन्निरूपकेण संसर्गिणा भवतीति न भूतलघटयोरन्यतरस्यापि प्रत्यक्षत्वेन
प्रतियोगिनिरूपणोपयोगः किमुतोभयोरिति । अभावसन्निकर्षार्थत्वेऽपि भूतलस्य न
प्रत्यक्षत्वेनोपयोग इति दर्शयिष्यन् सन्निकर्षं तावदाह—**सन्निकर्षस्तु इति** । न
तावदिन्द्रियेण साक्षात्सन्निकर्षः संयोगः समवायो वाऽभावस्यास्ति । येन भूतलेन विशे-
20 षणविशेष्यभावेन सन्निकर्षोऽस्ति तेनापि यदीन्द्रियं न सन्निकृष्येत तदाऽव्यवहितस्यापि
सम्बन्धाभावात्कथमिव तमभावं गमयेदिति । ननु सन्निकर्षार्थत्वेऽपि भूतलस्य प्रत्यक्षत्वे-
नोपयोगः अनुपलब्धस्यानुपलभ्यमानस्य चेन्द्रियसन्निकर्षाभावादित्यत आह । **न च
इति** । इन्द्रियसन्निकर्षादुपलम्भ उपलम्भादिन्द्रियसन्निकर्ष इतीतरेतराश्रयप्रसङ्गादिति ।

विवेक

द्वितीयां विप्रतिपत्तिमवतारयितुमाह—**तदेवमिति**। **तदिति** वाक्योपक्रमे। एवं प्रतिनियतभोगलक्षणेन कार्येण सिद्धे सामान्यत इत्यनिरूपित कारणविशेष इत्यर्थः। अत एव तन्निरूपणमुचितमिति भावः। अलौकिके हेतौ परलोकस्य धर्माधर्मरूप इति यावत्। तत्साधनेन यागादिनैव भवितव्यमन्यत्र परलोकार्थिनो वृत्तेर्वाधादिति भावः। तद्यागादि तत्साधनत्वेनेति यावत्। अस्मदादिभिरसर्वज्ञैः द्रष्टुं शब्दशब्दोपजीविमानातिरिक्तमानेन 5 ज्ञातुं न शक्यम्। अज्ञाते को दोष इत्यत्राह **नचादृष्टेनेति** अदृष्टेन हिताहितसाधनत्वेन व्यवहारः। प्रवृत्तिनिवृत्त्यादिरूपः। तृतीयार्थश्च ज्ञाने विषयतया हेतुतावच्छेदकमतो व्यवहारवान् लोकोत्तरः अस्मदादिविलक्षणः। वैलक्षण्यैकदेशमाह—**सर्वानुभावीति** सम्भाव्यते साध्यते। यदुक्तकाद् वेदाद्यागादेर्हितादिसाधनत्वमवगत्य व्यवहारोऽस्माकमिति शेषः। अत्रान्यथासिद्धिमाह—**नन्विति** नित्यत्वेन निर्दोषो भ्रमाद्यजन्यो यो 10 वेदस्तद्द्वारकः तज्जन्येष्टानिष्टसाधनताज्ञानाधीनः तथा चाप्रयोजकत्वमिति भावः। अभ्युपेत्य वाक्यार्थप्रमायाहेतुभावमाह—**योगेति**। योगकर्मभ्यां सिद्धाः समुत्पन्नतत्त्वसाक्षात्काराः अत एव सर्वज्ञाः। तथा च श्रुतिः—**यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति**। तद्द्वारकस्तत्कर्तृकवेदद्वारकः धर्मसम्प्रदायः धर्मानुकूलक्रियानुष्ठानम्। इदमुपलक्षणम्। अधर्मजनकक्रियानिवृत्तिरित्यपि बोध्यम्। **केचित्तु,** धर्मसम्प्रदायो वेद इत्याहुः। तेषां 15 नित्यनिर्दोषवेदद्वारकत्वं। पूर्ववेदश्रवणाधीनोच्चारणविषयत्वमिति ध्येयम्। नित्यनिर्दोषवेदद्वारक इत्यत्राह—**प्रमाया इति**। जन्यप्रमायाः। तत्त्वावच्छिन्नायाः परतन्त्रत्वात्। तद्विशेषशाब्दप्रमाया अपि तत्त्वं वाच्यम्। यत्सामान्ययोरिति न्यायात्। गुणश्च प्रकृते वक्तृवाक्यप्रमैव, तत्प्रमाश्रय एव वक्ता भगवान् ईश्वरः इतिभावः। ननु वक्तुः स्वातन्त्र्यमविवक्षितं तथा चाध्यापकपरम्परीयवाक्यप्रमैव[1] तथास्तु किमीश्वरेणेत्यत्राह—**सर्गेति** 20 तथा च सर्गादौ अध्यापकाभावात् प्रमाया व्यभिचारेण न हेतुत्वसंभव इतिभावः। ज्ञप्तिपक्षे तु प्रमाया वेदजन्यज्ञाने प्रामाण्यप्रमयोः परतन्त्रत्वात् अनुमेयत्वात्। न च प्रवृत्तिसम्वादादेर्हेतोस्तत्र संभव इति, आप्तवक्तृकत्वमेव तत्र हेतुः। न च वक्तारं विना तदिति भगवान् सेत्स्यति। ननु महाजनपरिग्रहादेव तद्ग्राह्यमित्यात्राह—**सर्गेति**। **सर्गादौ** महाजनपरिग्रहाभावात् कथन्तेन तद्ग्राह्यम् तदग्रहे वा कथं वहुवित्तायाससाध्ये 25 प्रवृत्तिरिति भावः। योगकर्मसिद्धिसर्वज्ञद्वारक इत्यत्राह—**तदन्यस्मिन्निति**। नित्यसर्व-

---

१—ख० वाक्यार्थप्रमैव।

विषयकज्ञानवतोऽन्यस्मिन् अनित्यज्ञानवत्त्वेऽनाश्वासात् तस्य भ्रमप्रमादादिसंभवादि-
त्यर्थः। उपसंहरति—**न विधान्तरेति**। ईश्वरं विना प्रकारान्तरस्य संभवस्तत्र नास्तीति
भावः। अत्र जन्यप्रमात्वं कार्यतावच्छेदकं न वेति विप्रतिपत्तिः। जन्यप्रमामात्रेऽनुगत-
गुणासंभवे तु प्रमात्वमनेकवृत्तिकार्यतावच्छेदकव्यापकम् न वेति तद्व्यक्तित्वावच्छिन्नं प्रति
5 तत्प्रागभावव्यक्तेर्हेतुत्वात्। सिद्धसाधनवारणायानेकवृत्तीति। तस्य दोषाभावजन्यताव-
च्छेदकत्वोपगमे तु कार्यताभावनिष्ठकारणतानिरूपितत्वेनविशेषणीयम्। **तथाहीत्यादि**।
जन्यप्रमात्वं जन्यज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणतातिरिक्तकारणतानिरूपितकार्यता-
वच्छेदकं जन्यज्ञानत्वान्यत्वे सति कार्यतावच्छेदकत्वात् अप्रमात्ववदित्यर्थः। आत्ममनो-
योगत्वाद्यवच्छिन्नकारणतानिरूपित तदववच्छेदकत्वमादायार्थान्तरवारणाय साध्येऽतिरिक्ता-
10 न्तम्। जन्यज्ञानत्वे व्यभिचारवारणाय हेतौ सत्यन्तम्, आत्मत्व-द्रव्यत्व-नीलघटत्वादौ
तद्वारणाय विशेष्यम्। तच्च बाधकाभावे सति कार्यमात्रवृत्तित्वेन सिद्धमिति भावः।
ननु जन्यत्वसंयोगत्वादीनां सामान्य-विशेषभावापन्नानामप्येकधर्मावच्छिन्नकारणतानिरूपित-
कार्यतावच्छेदकत्वमेव सिद्धयत्वित्यतिरिक्तान्तविशेषणं व्यर्थमित्यभिप्रेत्य तादृशकारणता-
निरूपितकार्यतावच्छेदकत्वे—बाधकम् तर्कमाह[1] यदिचेति। तावन्मात्राधीनभवेत्, जन्यज्ञान-
15 त्वावच्छिन्नकार्यतानिरूपितकारणतानिरूपितकार्यतावच्छेदकं प्रमात्वं भवेत् तदाऽप्रमावृत्ति
भवेत् जन्यज्ञानवृत्तिवदित्यर्थः। अप्रमाप्रमास्यादित्येननाप्ययमेवार्थः विवक्षित विवेकेन
लभ्यते। दृष्टान्तासिद्धिमुद्धरति—**अन्यथेति**। जन्यज्ञानत्वस्यावृत्तित्व इत्यर्थः। ज्ञानं
जन्यज्ञानं, साऽप्रमा। सम्बन्धिनिष्ठाधेयतानिरूपकं यत्तन्न तद्वदिति व्याप्तेरित्यर्थः। अत्र
साधनाव्यापकत्वसन्देहाधीनसन्दिग्धोपाधिं दोषजन्यवृत्तित्वं शंकते **ज्ञानत्वेऽपीति**।
20 **एवमिति** यथानन्यथासिद्धान्वयव्यतिरेकबलादप्रमां प्रतिं दोषो हेतुरुच्यते तथा प्रमां प्रत्यपि
दोषाभावः स्यादित्यर्थः। दोषाभावोऽधिकः प्रमां प्रत्यसाधारणो हेतुः। भावस्तु तादृशो
नेष्यते। अन्यथा विशेषादर्शनस्यादोषत्वे। **संशयेति**—व्यधिकरणप्रकारकज्ञानासाधारण-
कारणस्यैव तत्त्वादिति भावः। अत एव न त्वागन्तुकभावहेतुजन्यत्वम् प्रमानुत्पत्तेरिति।
यद्यपि तत्रानुमितिसामान्ये क्लृप्तकारणपरामर्शस्य सत्त्वेऽनुमितिर्भवत्येव। तदभावे तु
25 सामान्यसामग्र्यभवादेव न सा, तथापि परामर्शसामान्यस्य तत्सामान्ये कारणताग्राहकान्वय-
व्यतिरेकवत् यथार्थवाक्यार्थज्ञानस्यापि[2] शाब्दप्रमायां तत्सत्त्वाद्धेतुत्वमवर्जनीयमित्यत्र
तात्पर्यम्। तदप्रामाण्यस्य शाब्दप्रमायां विपर्ययस्यापि वैपरीत्यस्यापि। तथा चाप्रमायां गुणा-
भावो हेतुर्न दोष इति अप्रमैव स्वतः स्यादिति भावः। तयोरन्वयव्यतिरेकायोस्तुल्यत्वादिति।

१—ख० तर्कमाह इति पाठो नास्ति। २—ख० ज्ञानस्येति पाठो नास्ति।

वस्तुतस्तु विसंवादिशुकवाक्ये दोषाणां व्यभिचारो न तु गुणाभावस्येति विशेषोऽपि ध्येयः। **पौरुषेयविषये इति**। सवक्तृकवाक्यजन्यशाब्दबोध एवान्वयव्यतिरेकाभ्यां वाक्यार्थज्ञानस्य कारणत्वव्यवस्थेत्यर्थः। तस्याः गुणनिवृत्तेः। **गुणेष्वपीति**। गुण एव प्रमां प्रति हेतुः; दोषनिवृत्तेस्त्ववर्जनीयः सन्निधिरित्यर्थः एवं गुणाभावदोषाभावयोरप्रमाप्रमे प्रति प्रयोजकत्वे निःस्वभावत्वम् प्रमाभ्रमोभयाजनकत्वम्। **अपौरुषेयस्येति**। 5 गुणदोषोभयाभावसम्पत्तये **आत्मानमिति**। तथा च गुणाभावस्य तत्र सत्त्वमभ्युपगम्याभ्युपेयताम् वा गुणदोषयोर्हेतुत्वमिति तावतैव च सिद्धन्नः समीहितमिति भावः। रागद्वेषाभावाविनाभावेऽपि द्वेषाभावरागाभावव्याप्यत्वेऽपि रागद्वेषयोरनुविधाननियमात्। उपेक्षणीयस्थले प्रवृत्तिनिवृत्त्यापत्तेः रागद्वेषकारणकत्वम्। उपेक्षणीयस्थले उभयापत्तिवारणायाह— **नन्विति**। युज्यत इत्यत्रान्वयि। विशेषाभावात् राग एव प्रवृत्तौ हेतुः। तदभावो द्वेष 10 इत्यस्य बाधकस्याभावात् सिद्ध इति। **स्वयम्भुरेष भगवान्** इत्यादिप्रमाणोपष्टम्भेन सेत्स्यतीति दोषाभावादुत्पन्नायां प्रमायां प्रामाण्यं ज्ञास्यत इत्यर्थः। प्रसिद्धे निश्चिते। **गुणाभावेऽपीति**। तथा च व्यभिरात् गुणो न हेतुरिति भावः। **अपेतेति**। तथा च क्व तत्र प्रामाण्यज्ञप्तिर्येन व्यभिचारज्ञानमपौरुषेयत्वबोधकञ्चान्यथैव[1] समर्थयिष्यत इति भावः। **अतएवेति**। तथा च निश्चितप्रामाण्ये क्व सत्प्रतिपक्षतेति भावः। **किन्त्विति**। 15 निश्चितेऽपि प्रामाण्ये यत्र प्रामाण्यं निश्चितं तत्र दोषजन्यत्वसंशये औचित्यावर्जितस्तावत् दोषजन्ये प्रामाण्यप्रकारकत्वस्य प्रमात्वाभाववति प्रमात्वप्रकारकत्वलक्षणाप्रामाण्याव्याप्यस्य संशयो जायते **ततः**[2] प्रकारकज्ञाने भ्रमत्वसंशयादार्थः[3] प्रामाण्यसंशयः; सदोषाभावजन्यज्ञाने सति उक्तसामग्रीविघटनान्न जायत इत्यर्थः। अनेन दोषाभावज्ञानेन दोषनिबन्धनत्वात् तस्य प्रामाण्यसंशयकारणीभूतभ्रमत्वसंशयस्य तदभावे 20 दोषाभावजन्यत्वे निश्चते नियमात् नियमेन दोषजन्यत्वसंशयाभावात्। **अत इति**। निश्चिते सत्प्रतिपक्षानवकाशादिति भावः। गुणनिवृत्तिनिबन्धनायाः गुणनिवृत्तिजन्यत्वशंकानिबन्धनाया उक्तक्रमेण प्रामाण्यज्ञानेऽप्रामाण्यशंकानिबन्धनायाः प्रामाण्यशंकायाः[4] सुलभत्वात्। तथा च तदपनोदनाय गुणजन्यत्वमपि निश्चीयतामिति

---

१—ख० "अपौरुषेयत्वबोधकवाक्यं स्वयम्भुरित्यादिकञ्चान्यथैव समर्थयिष्यत इति भावः, इति पाठः।

२—क० तत् इति पाठः।

३—क० दर्थ इति पाठः।

४—क० शंकायां इति पाठः।

भावः । अत्र वदन्ति । घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वादि न कार्यतावच्छेदकम् ; आर्थसमाजसिद्धत्वात् ; तद्विशेष्यकज्ञाने तद्ज्ञानसामग्री तत्प्रकारकज्ञाने च तज्ज्ञानम् विधेयताख्यं तत्प्रकारकताशालिज्ञाने चासंसर्गाग्रहादिर्हेतुस्तद्व्यक्तिनिष्ठप्रकारतानिरूपित-तद्व्यक्तिविशेष्यताके चासंसर्गाग्रहप्रत्यासत्तेरेव प्रयोजकता; अन्यथा यावन्तो विशेष्यवृत्तयो
5 व्यतिरेणो धर्मास्तद्विशेष्यकत्वस्यापि कार्यतावच्छेदकत्वेऽनन्तकार्यकारणभावकल्पनापत्तेः । भवतु वा प्रमात्वमेव कार्यतावच्छेदकम् ; तथापि शाब्दप्रमात्वादेस्तत्त्वे प्रमाणाभावात् । शाब्दप्रमासामग्र्याः समाजादेव शाब्दप्रमोत्पत्तेः । एतेन प्रमाणमित्यादयो व्याख्याताः । वक्तृवाक्यार्थज्ञानानुविधानन्तु शब्दप्रयोगकारणीभूतेष्टसाधनताज्ञानोपक्षीणमिति नान्वय-व्यतिरेकाभ्यामपि तत्र[१] तद्धेतुता शाब्दप्रमात्वादेः कार्यतानवच्छेदकत्वेऽपि प्रमासामान्ये
10 ग्राह्यप्रमायाः गुणत्वेनापि भगवत्सिद्धिरिति तु **मिश्राः** । विशेष्यवृत्तिविशेषणज्ञानमेव **इत्यपरे च** । न च विशेषणत्व-विशेष्यत्वयोरननुगमात् नेदमिति वाच्यम् ; घटत्ववति घटत्वप्रकारकज्ञाने घटत्वनिष्ठफलीभूतज्ञानीयप्रकारतानिरूपितविशेष्यताशालिवृत्तिविषयता-सम्बन्धेन घटत्वज्ञानत्वेन हेतुत्वोपगमात् **एवमित्यादि** । अनभ्यासदशाप्रामाण्यं[२] अनभ्या-सदशापन्नज्ञानप्रामाण्यमिति यावत् ; परतो ज्ञायते न स्वाश्रयग्राह्यं स्वाश्रयाग्राह्यम् स्वा-
15 श्रयाग्राह्यत्वे सति ग्राह्यम्वा सांशयिकत्वात् ; प्रामाण्याप्रमाण्यमात्रकोटिकसंशयकोटित्वात् अप्रामाण्यवत् प्रामाण्याभाववत् । भावद्वयमात्रकोटिकसंशयोपगमे त्वप्रमात्वमपि दृष्टान्तः । अत्र विषयपरिशोधकन्तर्कमाह—**यदि त्विति** । कदाचिदपि सत्याश्रये तथा च प्रामाण्यं यदि स्वाश्रयग्राह्यं स्यात् ; सति स्वाश्रये प्रामाण्यसंशयाजन्यसंशयविषयो न स्यादिति फलति ; सांशयिकत्वादित्यस्यापि एतदापत्त्यभावे तात्पर्यमित्यप्याहुः ।
20 ज्ञानत्ववदिति तन्मतेदृष्टान्तः, आश्रयेत्यत्र आश्रयलौकिकप्रत्यक्षोक्तौ **मुरारिमिश्रेण-वादः** । तदनुसारेणैवन्यायतर्कादि वोध्यम् । भट्टमतन्तु ज्ञाततानिरासेनैव निरसनीयम् । इच्छादिपक्षकं घटत्ववति घटत्वप्रकारकज्ञानजन्यत्वानुमानेन **न्यायनये**ऽपि प्रामाण्य-ग्रहात् ; ज्ञानत्वावच्छिन्नव्यापकताकज्ञानाधीनानुमित्या विद्यमाने व्यवसाये प्रामाण्यं-गृह्यत इति भट्टमतं । पक्षतावच्छेदकादिकोटौ दैवात् प्रामाण्यविषयतामादाय सिद्धसा-
25 धनापनुत्तये तदविशिष्टत्वम्वा प्रामाण्यस्य वाच्यम् ; अनुमितिर्वा तादृशी यावत्त्वेन विशेषणीयेति **मिश्राः** । तदनुसारेणैव न्यायतर्कावनुसन्धेयौ । तर्कमूलीभूतव्याप्तिग्राह-कमाह—**निश्चित** इति । तदनवकाशात् निश्चयविरोधिसंशयानवकाशात् । ननु

१—ख० तत्रेतिपाठो नास्ति ।

२—क० अनभ्यासदशाप्रामाण्यम्, अनभ्यास दशेति पाठः ।

सत्यपि कोटिनिश्चये समानधर्मादर्शनादेव तत्संशयः स्यादित्याशंङ्कायामाह—**नहीति**। साधकबाधकप्रमाणाभावं कोटिनिश्चयाभावमवधूय विना। **समानेति**। आदि पदादसमानधर्मपरिग्रहः। असौ संशयः। **तदनुच्छेदेति**। तथा च संशयोच्छेदाय निश्चयानुसरणस्य वैयर्थ्यमापद्येतेति भावः। प्रमाणवत् प्रमायामिव अप्रमाणेऽपि अप्रमायामपि तत्प्रत्ययदर्शनात् प्रत्यये प्रामाण्यप्रकारकत्वदर्शनात्। न च सत्यपि समानधर्मदर्शने 5 विरोधिनिश्चये जागरूके तावित्यत आह—**विशेषादर्शनात्** प्रमात्ववति प्रमात्वप्रकारकत्वतदभावयोरनिश्चयात्। शंका प्रमात्ववति प्रमात्वप्रकारकत्वलक्षणप्रामाण्यस्य; तथा च विषयीभूतप्रामाण्यस्यापि संशयो न दुरुपपाद इति भावः। प्रमाणज्ञानोपलम्भेऽपि तद्वति प्रमात्वप्रकारकज्ञानोपलम्भेऽपि तत्प्रामाण्यं प्रमात्ववति प्रभात्वप्रकारकत्वरूपं[1] नोपलब्धं; प्रमाणज्ञानमेवेत्यादि **मुरारिभट्टावधिकृत्य**। गुरुनये ज्ञानस्याज्ञेयत्वाप्रसक्तेः। अतएव वक्ष्यति 10 प्रत्ययप्रतीतावपीति। वस्तुतस्तु अत्र प्रमात्वप्रकारकं ज्ञानं प्रमा न वेति संशयाकारात्, गुरुनये घटेन्द्रियसन्निकर्षादिप्रभवज्ञाने विषयितासम्बन्धेन घटादे[2]रेव भानं न तु प्रमाणत्वस्य ज्ञानत्वादेरिति तेन रूपेणाज्ञानं नाप्रसक्तमिति ध्येयम्। **धर्मिण इति**। उद्देश्यविधेयभावापन्नज्ञानसामान्य एव धर्मितावच्छेदकरूपेण धर्मिधियो हेतुत्वावधारणादिति भावः। वस्तुतस्तु धर्मितावच्छेदकांशे यत्र विशिष्टवैशिष्ट्याकारता यथा दण्डो रक्तो 15 द्रव्यमित्यादौ तत्र दण्डत्वावच्छेदेन रक्तत्वनिश्चयो हेतुरवश्यं वाच्यः। अन्यथा दण्डो रक्तो न वेति संशयानन्तरं रक्तत्वांशे दण्डत्वावच्छेदेन संशायाकारं विशिष्टावच्छेदेन द्रव्यत्वविधायकम् ज्ञानमापद्येत। प्रकृते च पुरोवर्तिनि रक्तत्वप्रकारकं ज्ञानम् प्रमाणं[3] वेति संशयस्य तादृशविषयताशालितया ज्ञानं पुरोवर्तिरजतत्वप्रकारकमिति निश्चयोऽवश्यमपेक्षणीय इति संक्षेपः। **झटितीति**। लिङ्गज्ञानादिविलम्बद्योतनाय। **प्रचुरेति**। समूहालम्बन- 20 ज्ञानेन विंशत्यङ्गुल्यवच्छेदेन[4] यत्र नानाप्रवृत्तयः तत्र नाना व्याप्[5]यादिप्रतिसन्धानेनेति विलम्बद्योतनाय। **समर्थेति** निष्कम्पेत्यर्थः। तच्च प्रामाण्यनिश्चयस्यापेक्षणीयताप्रतिपादनाय स्वकारणाप्राचुर्यं। तत्तद्गोचरप्रवृत्तिकारणतावच्छेदकावच्छिन्नानां स[6]मवधानम् कानितत्तत्कारणतावच्छेदकावच्छिन्नानीत्यपेक्षाययामाह—**इच्छा चेति**। इच्छा

१—क० प्रकारकरूपमिति पाठः।
२—ख० घटादावभानम् इति पाठः।
३—ख० प्रमाणंचेति पाठः।
४—क० अंगुलव्यवच्छेदेन इतिपाठः।
५—'लिंगव्याप्यादि' इति पाठः।
६—क० समवधानशालि इति पाठः।

स्वविषयिका, तत्कारणं तादृशेच्छाकरणम् । ननु निष्कम्पप्रवृत्तिप्राचुर्ये तदुपयोगोऽस्तीत्यतआह—**उपयोगेवेति** । कुत इति । झटिति तत्तत्कारणोपनिपातेनैव तदुपपत्तेरिति भावः । प्रामाण्यस्य तत्राहेतुत्वादाह—**तद्ग्रहणेति** । शक्तिस्तन्मतेऽतीन्द्रियपदार्थविशेषः । स्वमते च कारणत्वं तदपि कालादिघटितमूर्त्तिकत्वेनातीन्द्रियमिति भावः ।
5 **अनवस्थेति** । अत्र कारणमुखी साद्धयी अद्धयी फलमुखी, तथाहि समर्थया प्रवृत्त्या तदनुमेयं, सा च प्रवृत्तिः प्रामाण्यावधारणसाध्या; तच्च प्रवृत्त्यन्तरात् तदपि प्रामाण्यावधारणादित्येका अपरा प्रमाण्यानुमितिजनकः परामर्शो निश्चितप्रामाण्यक एवानुमितिहेतुर्वाच्यः । एवं तत्परामर्शप्रामाण्यानुमापकः परामर्शोपीत्येवंरूपा इतरा च प्रामाण्यनिश्चयो निश्चितप्रामाण्यक एव निश्चयकार्यकारी वाच्यः । एवं तत्तत्प्रामाण्यनिश्चयोऽपीत्येवमाकारा ।
10 आद्यायामाह—**तद्ग्रहेऽपीति** । प्रामाण्यग्रहेऽपि अर्थसन्देहादपि सर्वस्य समर्थप्रवृत्तिलक्षणकार्यस्येत्यर्थः । पक्षान्तरे तदग्रहेऽपि प्रामाण्याग्रहेऽपि अर्थस्य लिंगस्य सन्देहासन्देहयोग्यादगृहीतप्रामाण्यकात् परामर्शात्सर्वस्य प्रामाण्यानुमितिलक्षणकार्यस्य फलमुखीं तामुद्धरति । **नचेति** । अन्यथा निश्चितप्रामाण्यकस्यैव निश्चयस्य निश्चयकार्यकारित्वे स्वतः[१] पक्षेऽपि साऽनवस्था स्यात् । तथाहि **गुरुनये** व्यवसायस्य घटत्ववति घटत्वप्रकारत्वोप-
15 गमेऽपि तत्तत्प्रामाण्यघटितानामनन्तानां प्रामाण्यानां न तद्विषयता तदनुभवात्[२] । तथा च प्रमात्ववति प्रमात्वप्रकारकत्वग्रहार्थं तथाविधं ज्ञानान्तरमुपेयम् । तथा चानवस्था । एवं **मुरारिभट्टयोर्मते**ऽपि अनुव्यवसायज्ञाततालिङ्गकानुमितीआदाय बोध्ये । **भट्टमते** दूषणान्तरावतारणाय पुनर्मध्यमां[३] शंकते—**लिंगमिति** । निश्चितं । निश्चितप्रामाण्यकेन विषयीकृतं तन्निश्चयार्थं प्रामाण्यनिश्चयेन निश्चयकार्यकारित्वार्थं लिंगान्तरापेक्षायाम्([४]निश्चित-
20 प्रामाण्यकलिंगान्तर निश्चयापेक्षायाम् ) नुपपद्यमानो अर्थो विशिष्टज्ञाततारूपोऽनिश्चित एव निश्चितप्रामाण्यकेन विषयीकृत एवार्थोपपादकम् प्रमारूपं । तस्यानुपपद्यमानस्य तन्निश्चयस्य तु सत्त्वयैव न तु प्रमात्वेन । 'निश्चितस्यैव तुल्यमित्यनेन प्रत्यक्षेण लिङ्गनिश्चयादिति प्राप्तम् । तत्रशंकते—**लिङ्गज्ञानस्येति** । विषयमनुपपद्यमानमर्थं निश्चययति निश्चयकार्यं करोति । प्रत्यक्षं साक्षात्कारि । **तथापीति** । तथा च[५] तद्व्यावर्त्तये प्रामाण्यनिश्च-

---

१—क० "अतः पक्षेपि" इति पाठः ।
२—क० "तदनभवात्" इति पाठः ।
३ – क० "मा शंकते" इति पाठः ।
४ – ख० कोष्ठगतः पाठोऽनास्ति ।
५—ख० 'चासतां व्यावृत्तये' इति पाठः ।

योऽपेक्षणीय इति भावः। **सोऽपीति**। आभासीभूतोऽनुपपद्यमानोऽर्थः गमकतौपयिक-रूपसम्पत्तिमत्तया निश्चितःप्रामाण्यं प्रमात्वेन प्रमामाक्षिपति इत्युत्सर्गः आक्षिपत्येव। स च आक्षेपः बाधकेन भ्रमत्वग्राहकेण मानेनापोद्यते भ्रमत्वेन ज्ञाप्यते। यद्वा सोऽर्थो गमकतौपयिकेन निश्चितस्तदाक्षिपतीत्युत्सर्गः। बाधकापोद्यं[1] एवायमर्थः। बाधकन्तु तन्निश्चयस्य भ्रमत्वेन ज्ञानं तेनापोद्यत। तत्राक्षेपो न भवतीत्यर्थः। 5

ननु अनुमितिजनकपरामर्शे यदि प्रामाण्यं गृहीतं तदा प्रामाण्यानुमित्यनुव्यवसाये प्रमात्वव्याप्यवद्विशेष्यकत्वस्य दर्शनात् प्रमात्वज्ञाने प्रामाण्यसंशयो नोत्पद्यते अन्यदा तु जायत एवेति निष्फलः प्रमात्वानुमित्यर्थः प्रयासः। तत्प्रमात्वसंशयाधीनतत्संशयस्यानुच्छे-दादित्यक्षरतात्पर्याभ्यामाहुः[2]—**तर्हीति**। तर्हि अनुमितिजनकपरामर्शे प्रामाण्यग्रहे प्रामाण्यानु-माने प्रमात्वानुमितौ तादृशमेव ज्ञाततालिंगकप्रामाण्यानुमितौ कश्चिद् ज्ञातताविशेषः यः 10 स्वप्नेऽपि नाभासः। यद्धि जन्यायामनुमितौ कदापि नाप्रामाण्यशंकासमर्थप्रामाण्यादि-रूपलिङ्गजानुमितावपि एवं नाप्रामाण्यशंकेति प्रश्नस्योभयसमाधेयत्वेऽपि शिष्यावबोधाय प्रश्नपूर्वकं व्युत्पादयति—**कः पुनरिति**। यत्प्रकारकज्ञाने स्वप्नदशायामपि नान्यथा स्यात्, न व्यधिकरणप्रकारकं ज्ञानमुत्पद्यते। उत्तरं—**यदनुपलम्भ इति**। यस्य शुक्तित्वादेरनु-पलम्भे विभ्रमस्य रजतादिभ्रमस्यावकाश उत्पत्तिस्तस्य स्वरूपेणोपलम्भानुपलम्भौ न प्रयोजकौ 15 इति बोधयितुमुक्तम्। **यादृगिति**। तस्य तत्र रजतत्वादिप्रकारकज्ञानस्य बाधव्यवस्था तत्त्वधीः। अन्यथा तथाभूतस्यापि आरोप्याभावव्याप्यवद्विशेष्यकस्यापि व्यभिचारेभ्रमत्वं[3]-मिति यावत्। सा भ्रमत्वव्यवस्था न स्यात्। पक्षान्तरे तथाभूतस्यापि प्रकारीभूतविरुद्ध-विशेष्यकत्वेनाज्ञातस्यापि भ्रमत्वे सा भ्रमत्वव्यवस्था न स्यात्। भ्रमोऽयमिति ज्ञानस्यापि प्रमात्वे मानाभावादिति भावः। **केचित्तु** सापि भ्रमत्वाभावव्यवस्थापीत्यर्थः। 20 सर्वस्यैव ज्ञानस्य भ्रमत्वादिति भावः[4] इत्याहुः। शून्यतावादी प्रत्यवतिष्ठते **भाभूदिति**। **भवितव्यं हीति**। अन्यथा प्रामाणिकी शून्यतैव कथमुपेयते भवद्भिरिति भावः। अन्यथा लोकमर्यादातिक्रमे शून्यतासिद्धेरपि प्रमाणाधीनत्वव्याघातात्। तथा च कथं तदभ्युपगमोऽपीति भावः। यदनुपलम्भइत्यादिकमुक्तं तत्सप्रमाणयति। **कथं हीति**। **नियामकेति**। व्यावर्तकधर्मेत्यर्थः। तथाभावे वा तदुपलम्भेऽपि विपरीतारोपे वा 25 तदतिरिक्तस्य व्यावर्तकधर्मातिरिक्तस्य विशेषस्य बाधव्यवस्थापकस्यानुपलम्भे प्रमाणं कथं

---

१—ख० पाद्यएव। २—ख० तात्पर्यादाह इति पाठः।
३—ख० भ्रमत्व इति यावत्। ४—ख० भावः इति नास्ति।

बाधकं भ्रमत्वज्ञापकं तदभावे भ्रमत्वज्ञापकाभावेऽबाध्यस्यभ्रमत्वेनाप्रमितस्य भ्रान्तत्वं; तथा च लोकमर्यादातिक्रम इति भावः। तत्र **गुरोर्भट्टस्य** च मतं स्वप्रकाशज्ञातता-निराकरणेनैव निराकरिष्यते। **मिश्रमते** तु चिन्त्यते। ज्ञानस्य पुरोवर्ति विशेष्यकत्वे घटत्वप्रकारकत्वे चानुव्यवसाय एव मानम्; अत एव पुरोवर्तिनि घटत्वप्रकारकज्ञान-5 वानहमिति तदाकारं प्रतियन्ति। तत्र पुरोवर्तिनि इदन्त्वमिव घटत्वमपि उपनयमर्यादया भासते बाधकाभावात्। तथा च प्रामाण्यं ज्ञातुं न किंचित् अवशिष्यते इति भावः। यदि च विशेष्यत्वप्रकारत्वयोः प्रागनुपस्थितयोः प्रकारत्वं नोपेयते, तदा विशेष्यता-सम्बन्धेन घटवत्त्वे सति प्रकारतासम्बन्धेन घटत्ववत्त्वमेवास्तु। प्रामाण्यं तज्ज्ञानमेव लाघवात् समर्थप्रवृत्त्यौपयिकं[1] न चेत् इदन्त्वमपि पुरोवर्तिनि न भासत इति वाच्यम्। 10 विशेष्यतांशे घटस्य प्रकारतया स्वरूपतो ज्ञानानुपपत्तेः। तथाविधविशिष्टज्ञाने तथाविध-विशेषणज्ञानस्य हेतुतया तत्र तद्बाधात्। लौकिकप्रत्यक्षानुव्यवसायात् पूर्वं कदाचित् विनश्यदवस्थस्य निर्विकल्पस्य संभवेऽप्यन्यत्र तादृशज्ञानस्यासंभवाच्चेति। नहि प्रमेयत्वादिना घटस्य ज्ञाने स्वरूपतः प्रकारत्वमीक्षामहे। फलीभूतज्ञाने प्रमात्वभाने बाधकाभावात् स्वरूपतो नान्यप्रकारकत्वमिति चेत्तुल्यम्। प्रकृतेऽपि संशयानुपपत्ति-15 बलात् प्रकृते तथा कल्प्यत इति चेत् जातित्वादिप्रकारकज्ञानानुव्यवसाये स्वरूपतो जातिभानानुपपत्तेः। नहि प्रमेयत्वादिज्ञानस्वरूपं तद्विशिष्टज्ञानमानुभविकम्। न च तदापादकाभावः। उपस्थितभेदाग्रहस्य[2] तादृशविषयताशालितत्प्रकारकं ज्ञानं प्रति हेतुत्वेन तेन तदापत्तेर्वज्रलेपत्वात्।

अपि च उपनायकज्ञानस्यापि फलीभूतज्ञानसमानविषयताशालिज्ञान एव जनकत्वात् 20 न तत्संभवः। नहि जात्वपि विनश्यदवस्थसन्निकर्षेण जनिते घटत्वनिर्विकल्पके जागरूके जातित्वदिप्रकारकोपनायका[3]ज्ज्ञानाच्छुद्धस्य घटस्योपनयः। न वा द्रव्यत्वेन पटस्य घटत्वेन घटस्य उपस्थितावुपनयमर्यादया द्रव्यत्वेन घटस्य भानम्। वस्तुतस्तु जात्यतिरिक्ता-नां स्वरूपतः प्रकारता नास्तीति सिद्धान्त प्रवादरक्षायै तत्प्रकारकज्ञाने तद्विशेष्यकज्ञानस्यैव हेतुत्वमत एव च निर्विकल्पकोत्तरमपि न स्वरूपतोद्रव्यस्य प्रकारतेति। अपि च प्रामाण्य-25 संशयानन्तरमयं घटो नवेति संशयस्तावदानुभविको, न तु घट इदं न वेति, न वा द्रव्यं घटो न वेत्यादि तत्र च यद्विशेष्यकत्वावच्छेदेन यत्प्रकारकत्वप्रकारकं धर्मिज्ञानं तद्धर्मावच्छेदेन तस्य संशय इति नियामकं वाच्यम्। तथा च इदन्त्वेनानुव्यवसायेन धर्मिभानावश्य-

---

१—ख० प्रवृत्तौपयिकम्। २—क० तदाग्रहस्य।
३—ख० कापनायकात् इति पाठः।

कत्वम्। अत एवार्थसंशयार्थं पुनर्धर्मिभानार्थमपि नायासः, प्रामाण्यसंशयस्यैव ताद्रूप्येण तद्विषयत्वात्। अत्र वदन्ति संशयानुपपत्त्या विधेयताख्यप्रकारताशालिनः स्वातन्त्र्येण वैशिष्ट्यभानेऽनुव्यवसायसामग्र्या स्वसामर्थ्यं व्यवसायस्यैव प्रतिबन्धकत्वं कल्प्यते। घटत्वप्रकारकज्ञानविशेष्यत्वोपस्थितेरुत्तेजकतया च न द्वितीयानुव्यवसायेन प्रामाण्यग्रहः। यदि चेदन्त्ववति तत् प्रकारकत्वलक्षणमपि प्रामाण्यं नानुव्यसायविषयः। तदा 5
तत्प्रकारकत्वतद्वद्विशेष्यकत्वयोरन्यतरभानसामग्र्येवास्तु स्वेतरद्ग्रहणप्रतिबन्धिका, अत एव तद्दण्डितया जानामि इत्यनुव्यवसाये दण्डत्वस्य स्वातन्त्र्येण प्रकारत्वेऽपि न तद्घटितप्रामाण्यग्रहः तत्प्रकारकत्वस्याभानात्। किं च घटविशेष्यकत्वे सति घटत्वप्रकारकत्वमात्रप्रामाण्यं समूहालम्बनभ्रमसाधारणत्वात् किन्तु घटविशेष्यकत्वावच्छेदेन घटत्वप्रकारकत्वं घटत्वनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकत्वं 10
वा। सत्यपि तेन सम्बन्धेनासंसर्गाग्रहे तादृशविशिष्टवैशिष्ट्यबोधे तत्सामग्र्या असामर्थ्यं प्रतिबन्धकत्वम्वा व्यवसायस्य कल्प्यतेऽन्यथानुपपत्तेः सर्वदा सत्त्वात्। अत एवेदम् घटत्वेन जानामि नेदमिति दर्शनात् पुरोवर्तिविशेष्यकत्वावच्छेदेन घटत्वप्रकारकत्वभानेऽपि न तत्रैव पुरोवर्तिनि घटत्वस्य स्वातन्त्र्येण तथा विशिष्टवैशिष्ट्यभानं तावद्ग्रहस्यैवप्रामाण्यव्यवहारौपयिकत्वात् समर्थप्रवृत्त्यौपयिकत्वाच्चातो वस्तुतो यद्घटवृत्ति- 15
विशेष्यत्वं तदवच्छेदेन ज्ञानेन प्रकृतोपयोगः। तस्यानतिप्रसक्तत्वेऽपि प्रामाण्यव्यवहाराद्यनुपयोगित्वात् तदुपयोगिग्रहस्यैव प्रकृते विचार्यत्वात्। यत्तु एकसम्बधेन तद्वति सम्बन्धान्तरेण च तत्प्रकारकज्ञानेऽतिप्रसक्तत्वात् येन सम्बन्धेन तद्वत्त्वं तेन सम्बन्धेन तत्प्रकारकत्वमेव तद्वाच्यम्। तथा च तद्ग्रहादेव प्रामाण्यग्रह इति तन्न घटे घटत्वप्रकारकमिति ज्ञाने येन सम्बन्धेन विशेष्यतानिरूपितप्रकारताज्ञानं वस्तुतस्तुतत्सम्बन्धनिरूपित- 20
प्रकारताज्ञान एव प्रामाण्यभानात् एतन्निष्ठं प्रकारकत्वं न समवायनिरूपितमिति ज्ञानं च घट इति ज्ञानानन्तरं समवायो नात्र वैशिष्ट्यमिति ज्ञानवदप्रयोजकम्। अतएव तादात्म्यारोपे रजतत्ववति रजतत्वप्रकारकत्वस्यातिप्रसक्तत्वात्। मुख्यविशेष्यतागर्भन्तद्वाच्यं तद्ग्रहेणानुव्यवसायसामर्थ्यमिति परास्तम्। वस्तुतो यन्मुख्यं विशेष्यं तद्भान एव तद्भानोपगमात्। न च मुख्यत्वग्रहोऽपि तदुपयोगी तत्रामुख्यत्वग्रहश्च न सम्बन्धभेदग्रहानु- 25
बन्धोपयोगी। वस्तुतस्तु तादात्म्यारोपे रजतत्ववति रजतत्वप्रकारकत्वरूपप्रमाण्यापगमेऽपि न क्षतिरिति ध्येयम्। न च यद्धर्मावच्छेदेन प्रामाण्यसंशयो दृश्यते तदवच्छेदेन तद्भान एवानुव्यवसायसामर्थ्यादिति व्यवसायस्य वा प्रतिबन्धकत्वं कल्प्यतामिति वाच्यम् तदवच्छेदेन प्रामाण्यग्रहत्वापेक्षया प्रामाण्यग्रहस्यैव लघुत्वादिति समासः।

वेदजन्यप्रमावक्तृवाक्यार्थज्ञानजन्या शाब्दप्रमात्वादित्यत्र अनित्यवाक्यजत्वमुपाधिं शंकतेस्यादिति। परतः प्रामाण्येऽपि लौकिकवायजप्रमायावक्तृवाक्यार्थप्रमाजन्यत्वेऽपि साधनाव्यापकत्वार्थमाह—**नित्यवात् वेदानामिति**। तथा च नानित्यवाक्यजत्वं पक्ष इति भावः।

5 ननु तत्र किं प्रामाण्यग्राहकमाप्तवक्तृकत्वस्य त्वयानुपगमात्तत्राह—**महाजन परिग्रहादिति**। तदनादारे आप्तवक्तृकत्वे किं मानमिति भावः। प्रामाण्यमित्यस्यावधार्यत इति शेषः। दूषयति—नेति। उभयस्य वेदानां नित्यत्वस्य सर्गादौ महाजनपरिग्रहस्यचासिद्धेः। तत्र वेदानां ध्वंसाप्रतियोगित्वरूपं नित्यत्वं सर्गप्रलयसंभवेन न निराकर्तुं शक्यम्। आनुपूर्व्याश्च तत्तद्व्यवधानगर्भतयाऽननुगमेन पदार्थान्तरमेव तैरुपेयम्। सा च द्विविधा, पुरुष-
10 विपक्षाधीना तदितरा च। आद्या लौकिकवाक्ये, इतरा च नित्या वेदा इति मतानुसरणेऽपि वर्णानामनित्यत्वेन तदनित्यत्वमित्याह—न हि वर्णा इति। एवेत्यनेनाभ्युपेत्य तन्मतमानुपूर्व्या व्यवच्छेदः। हि हेतौ। वर्णा एव यतो न नित्यास्ततोऽसिद्धिरिति। तावदिति वादोपक्रमे, इतीति विशेषणं तत्र करणाकांक्षायामाह—**प्रत्यक्षेणैवेति**। इन्द्रियेणैवेत्यर्थः। एवकारस्तत्प्रतीतिव्यक्तौ कारणान्तरव्यवच्छेदाय। **नहीति**। तथाचात्यन्ताभावविषयिकैव
15 सा प्रतीतिरिति भावः।

ननु यथाघटापनयनानन्तरं भूतले इदानीं घटो नास्तीति प्रत्ययस्यात्यन्ताभावविषयत्वं न ध्वंसविषयत्वं तथात्रापि भविष्यतीत्यभिप्रायिकशङ्कां निराकुरुते-**अन्यत्रेति**। अनुपलम्भसम्पादनायामूर्त्तत्वादित्यत्रगत्यभावमात्रं साध्यमखण्डाभावतया विशिष्टाभाव एव वा, उभयथापि शब्दः पक्षः नाप्यावृतः न श्रोत्रसम्बन्धप्रतिबन्धकसम्बन्धवान् अपि नासाध्य-
20 स्यैव समुच्चयो न प्राक्तनहेतोरमूर्त्तत्वस्य समभिव्याहारादेव तल्लभ्यते। शब्दो न श्रोत्रप्रतियोगिकसम्बन्धध्वंसवान् अमूर्त्तत्वादित्याह—**तत एवेति**। हेतुश्चश्रोत्रान्यत्वेन विशेष्यः तेन न तत्र व्यभिचारः। **केचित्तु** नाप्यवृत इत्यत्र तत एवेत्येवहेतुः, सम्बन्धविच्छेदानुपपत्तेरिति तु आवरणपदार्थविवेचनपरमित्याहुः।

अनवहितः विषयान्तराकृष्टचित्तः अजिज्ञासुरिति केचित्। **नापीति**। श्रोत्रं
25 तदा न शब्दग्रहप्रतिबन्धकसमवहितं तदा शब्दोपलब्धिजनकत्वादित्यर्थः। अन्वयव्यतिरेकवतो योग्यस्य तस्य तदानुपलम्भप्रयोजकाभावप्रतियोगिनस्तत्सहकार्यन्तरकल्पनायामिति श्रोत्रमनोयोगादेः शब्दान्तरसाक्षात्कारबलेनैव सत्त्वादिति भावः। **अन्यथेति**। तदा विद्यमानस्यैव घटस्य तत्रानुपलम्भस्तादृशसहकारिणोभावादिति। तस्यानित्यत्वमेव

स्यादित्यर्थः । शब्दनित्यत्वस्य प्रत्यभिज्ञावलेनसिद्धौ **एकदेशिनो** । नैयायिकैकदेशिनः, एवं शब्दध्वंसस्यप्रत्यक्षत्वं । **विवादेति** । प्रत्यक्षप्रतियोगिक इत्यर्थः । तेनाद्यन्तशब्द-ध्वंसयोर्न भागबाधासिद्धी । शब्देत्युपरञ्जकमात्रम् पक्षतावच्छेदकावच्छेदेन सिद्धेरुद्देश्यत्वे-ऽशतः सिद्धसाधनानवकाशात् तत्सामानाधिकरण्येन तद्धेतुविवादाध्यासितेत्यस्य व्यर्थतापत्तेः इन्द्रियग्राह्यः । तज्जन्यग्रहणयोग्यः । अतो न तदनुपहितव्यक्तौ व्यभिचारः । 5
ऐन्द्रियकाभावत्वात् । ऐन्द्रियकमात्रप्रतियोगिताकाभावत्वात् । मात्रेत्यनेन मूर्तत्वाव-च्छिन्नाभावादौ न व्यभिचारः । यद्वा ऐन्द्रियकत्वेन योग्यानुपलब्धिरेवोपलक्षिता । नातो व्यभिचारः । अभावपदं वा ध्वंसपरं । **इदंहीति** । तथा च नैतदेवमित्यस्यायं हेतुर्न साध्यव्याप्यः, इन्द्रियासन्निकृष्टत्वात् इन्द्रियासन्निकर्षसमानाधिकरणत्वात् । सामानाधि-करण्यसम्बन्धेन तदेव वा हेतुः एवमग्रेपि । यथाश्रुते सत्प्रतिपक्षेण पौनरुक्त्यापत्तेः सत्प्रति 10
पक्षे तु नैतदेवमित्यस्य एतच्छब्दध्वंसरूपं, नैवम् न साध्यवदित्यर्थोऽवसेयः । **इन्द्रियेति** । साक्षात्कारहेतुतत्सन्निकर्षानाश्रयत्वादित्यर्थः । इन्द्रिविशेषणता च न तथेति भावः । अतीन्द्रियाधारत्वात् ऐन्द्रियकानाधारत्वात् । अभावत्वेन विशेषणाच्च न शब्दे व्यभि-चारः । **स्वरूपेति** । इन्द्रियस्वरूपयोग्यत्वे साध्ये सहकारियोग्यतायास्तत्फलोपधानप्रयोज-कत्वेन इन्द्रियसन्निष्कर्षस्यानुपाधित्वात् । अव्यापकत्वात् सन्निकर्षं विना साक्षात्कारविषय- 15
तामनासाद्य नष्टे गन्धादौ अभावत्वेन विशेषणेऽपि आश्रयनाशजन्ये तन्नाशे तदेवाह—
**तस्या इति** । तस्याः स्वरूपयोग्यतायाः ताम् सहकारियोग्यतामपेक्ष्यैव । तद्वृत्येव अव्यव-स्थितेरित्यकारप्रश्लेपः । **सर्वदेति** । कालिकसम्बन्धेनापि व्यापकत्वस्य निराकरणाय । वस्तुतस्त्वनुव्यवसायबलेन इन्द्रियविशेषणतापि प्रत्यासत्तित्वेन कल्पनीयेति ध्येयम् । केचित्तु प्रत्यक्षविषयत्वमेव साध्यं, हेतुश्च ऐन्द्रियकाभावत्वरूपा स्वरूपयोग्यता तत्र चेन्द्रियसन्निकृष्टत्वं 20
नोपाधिः साधनव्यापकत्वात् । व्यवस्थितेरिति च यथाश्रुतमेव कल्प्यते तदनुरोधेन इन्द्रिय-विशेषणताया प्रत्यासत्तित्वमित्याहुः । तन्न । ऐन्द्रियकाभावत्वस्य साक्षात्काराविषयप्रागभाव-विशेषे व्यभिचारित्वात् नित्यत्वेन विशेषणेऽपि आश्रयनाशजन्यगन्धादिध्वंसे तथा विद्य-मानाश्रयत्वेन विशेषणेऽपि प्रतियाग्यादिज्ञानं विना यस्य ध्वंसविशेषस्य न साक्षात्कारस्तत्र तथेति न किंचिदेतत् । **धर्माभावस्येति** । समव्याप्तस्यैवोपाधितानये, विषमव्याप्तस्याप्युपा- 25
धित्वे तु व्यापकताग्राहकः कार्यकारणभाव एववाच्यः । धर्माभावप्रत्यक्षतानिराकरणाय नियामकान्तरस्योपेयत्वे तस्यैव तथात्वमिति न साध्यव्यापकतेति भावः । अत एव ऐन्द्रियकाधारकत्वस्योक्तयुक्त्याऽन्यथासिद्धत्वादेव नोभयप्रयुक्तम् । ऐन्द्रियकाधारत्वेन्द्रिय-काभावत्वोभयप्रयुक्तमपि तु लाघवादावश्यकत्वाच्चैन्द्रियकाभावत्वप्रयुक्तमेवेति भावः ।

केचित्तु उभयेति ऐन्द्रियकाधारत्वेन्द्रियसन्निकृष्टत्वरूपोभयप्रयुक्तत्वमित्यर्थः। द्वितीयःसत्प्रतिपक्षरूपः पक्षः। प्रथमस्येन्द्रियासन्निकृष्टत्वस्यासिद्धेरिति प्रकृतार्थमित्यनुकूलव्याप्तिविशिष्टपक्षधर्मत्वासिद्धेः। तत्र व्याप्त्यसिद्धिः स्वरूपायोग्यतां प्रतीत्यनेनैव दर्शितेति तामुपेक्ष्य पक्षवृत्तित्वाभावं दर्शयति। **अस्तिहीति**। केचित्तु शब्दध्वंसस्य तादृशविषयत्वे विप्रतिपन्नं प्रति स्वरूपयोग्यतासाधनस्यार्थान्तरत्वेन स्थापनायां प्रत्यक्षविषयत्वमेव साध्यं, हेतुश्च योग्यानुपलब्धिविशिष्टत्वमेवैन्द्रियकाभावत्वेत्यनेन तस्यैवोपलक्षणात्। तत्र च इन्द्रियसन्निकृष्टत्वेन सत्प्रतिपक्षोद्भावकं प्रति स्वरूपासिद्धिरेवोक्तेत्याहुः। स्वाभाविकसम्बन्धान्तरं विना साक्षादिति वा शंकते। **विशेष्यस्येति**। श्रोत्रस्येत्यर्थः। **ऐन्द्रियकेति**। लौकिकप्रत्यक्षविशेष्यत्वमुपनयमर्यादया मानसप्रत्यक्षे तथात्वं स्यादित्यत आह **तथेति**। स्वप्रत्यक्षात्पूर्वं श्रोत्रविशेष्यकज्ञानं प्रकारीभूयाभासमानस्य शब्दध्वंसस्य साक्षात्कारे कथं विशेषणत्वं तद्ग्राहकं तदानीं तद्विविशेष्यकज्ञाने प्रकारकत्वरूपविशेषणत्वस्याभावादित्यर्थः। पूर्वपक्षस्याप्रसक्तप्रतिषेधतयाऽसंभवदुक्तिकतेत्याह—**न तथेति**। तथा विशेष्यव्यवस्थापनायास्तद्विशेष्यकज्ञानप्रकारतायाः फलत्वात् विशेषणत्वमित्यस्य तद्ग्राहकमितिशेषः। आत्माश्रयं विवृणोति—**समवायेति**। तेन तद्दृष्टान्तबलेनापि विशेषणतायाः प्रत्यासत्तित्वसाधनम् शक्यमिति ध्वनितम्। पूर्वपक्षस्यावोधपूर्वकत्वं व्युत्पाद्य स्वाभिप्रायं स्पष्टयति—**यस्मादिति**। नन्वेतावता स्वरूपसंबन्ध उक्तः। विशेषणतायास्तु नाद्यापि वार्त्तेत्यत आह—**सैव चेति**। अत्र श्रोत्रेण शब्दध्वंसस्य प्रतियोग्यधिकरणेन शब्दसमवायिनाऽभावस्य ध्वंसस्य तया विशेषणतया तथा प्रतीतिः तद्विशेषणकस्वाश्रयविशेष्यिका प्रतीतिः। कर्त्तव्यैव। तथा च श्रोत्रशब्दध्वंसविशेषणता यदि विशेषणतात्वे सति साक्षात्कारहेतुःप्रत्यासत्तिः, तदा तदाश्रयविशेष्यकप्रत्यक्षजनिका स्यात् कपाले घटध्वंसविशेषणतावदितिभावः। अत्रोपाधिमाह—**गृह्यमाणेति**। योग्याश्रयनिरूपितत्वमात्रोपाधिरित्यर्थः। **संयुक्तसमवायेनेति**। इदमुपलक्षणम्। गन्धादिध्वंसादिविशेषणतायां व्यभिचारोऽपि वोध्यः। कस्यचिदस्य अभावस्येति विशेष्यम्। अतः शब्दध्वंसात्। **अस्येति**। अभावो नेन्द्रियेणसाक्षात्सम्बन्धग्राह्यो स्वभावत्वादित्यत्र योग्यानुपलब्धिविशिष्टतदिन्द्रियसाक्षात्संबन्धाभाव उपाधिरित्यर्थः। चक्षुर्निष्ठरासभादौ चक्षुरग्राह्ये व्यभिचारवारणाय विशिष्टान्तम् प्रतियोगिविशेषणमस्येति इन्द्रियसन्निकृष्टार्थं प्रति सम्बन्धःपरम्परासम्बन्धः। एतस्य च साधारणत्वेन साक्षादसम्बन्धे तात्पर्यात् सहचारदर्शनबलादेव व्याप्तेः प्रवृत्तौ प्रतिबन्दिमाह—**अन्यथेति**। शब्दो न साक्षात्सम्बन्धग्राह्यः गुणत्वादित्यपि स्यादित्यर्थः। द्वितीयं सत्प्रतिपक्षं शंकते। **नापीति**। शब्दे व्यभिचारवारणाय—**अभात्वे सतीति**। तथा च शब्दध्वंसो न

प्रत्यक्षः अभावत्वे सति ऐन्द्रियकानाधारत्वादिति फलति। अत्र योग्यताविरहस्योपाधित्वमाह—**योग्यतेति**। **न चेति**। तथा च साधनव्यापकत्वमिति भावः। योग्यतापत्तेः। योग्यतात्वापत्तेः। न चैवमेव स एव योग्यता इत्यर्थः। अस्य अभावस्य। ननु धर्माभावे तत्सत्त्वेऽपि प्रत्यक्षत्वाभावात् व्याप्तं मास्तु, मास्तु सा योग्यता किन्तु अभावप्रत्यक्षेऽधिकरणप्रत्यक्षस्य हेतुत्वेन तदभावात्। तदभाव इति। व्याप्तिग्रहोऽस्त्विति शंकामपाकरोति। **न उभयनिरूपणीयत्वेति**। उभयनिरूपणाधीननिरूपणविषयत्वस्य अभावे अभ्युपगमादित्यर्थः। तथा च तन्निरूपणमेव न हेतुस्तत्र द्वरे साक्षात्कार इति भावः। अन्यथा तदधिकरणध्वंसप्रत्यक्षे तत्प्रत्यक्षस्य हेतुत्वे। **इह भूतल इति**। कदाचिद् घटवतीत्यादि। घटो नास्ति देशान्तरे विद्यमानः स घटो नास्ति तदानीं च घटस्य न प्रत्यक्षमिति भावः। **संयोगो हीति**। तद्घटीयसंयोगविशेष एव निषिध्यते। 10
ध्वंसप्रतियोगितया विषयीक्रियते। न च घटः संसर्गाभावप्रतियोगी प्रतियोगिमत्यत्यन्ताभावस्य तत्काले च ध्वंसप्रागभावयोरसंभावादिति भावः। तस्य संयोगविशेषस्य ध्वंसप्रत्यक्षतया भूतलस्य भूतलप्रत्यक्षस्य घटस्यापि घटप्रत्यक्षस्यापि स्यात् उपयोगोऽविशेषादिति। भूतलवृत्तिध्वंसप्रत्यक्षत्वस्येव घटवृत्तिध्वंसप्रत्यक्षत्वस्यापि तत्र सत्त्वादित्यर्थः।

ननु तद्ध्वंसप्रत्यक्षे तदधिकरणप्रत्यक्षं हेतुः तथा च भूतलमात्रप्रत्यक्षादेव ध्वंसस्य 15
प्रत्यक्षं स्यात्। न चैवं पिशाचसंयोगध्वंसोऽपि भूतलेऽध्यक्षः स्यादित्यत्राह—**घटस्येति**। घटयोग्यत्वस्यान्यथोपयोगः ननु तत् प्रत्यक्षे तत्प्रत्यक्षस्य हेतुतया तथा च तद्भावेऽपि तत्प्रत्यक्षं स्यादेवेति भावः। उत्तरं **भूतलस्यापीति**। तथा त्र ध्वंसप्रत्यक्षेतदधिकर णप्रत्यक्षस्यापि न हेतुत्वमिति भावः। अविशेषात्। तद्ध्वंसाधिकरणत्वस्य घट इव भूतलस्यापि सत्त्वात् पृच्छति—**कथमिति**। केनान्येनोपयोगो भूतलस्येत्यर्थः। तत्र योग्यत्व- 20
स्योपयोगमाह—**प्रतियोगीति**। प्रत्यक्षरूपप्रतियोगिज्ञानार्थमित्यर्थः। स्वरूपसतोभूतलस्योपयोगमाह—**अभावेति**। अत्र तयोर्मध्ये तदानीं प्रतियोगिनः संयोगस्य निरूपणं ज्ञानं प्रागुपजातप्रत्यक्षजनितसंस्काराधीनस्मरणरूपमनुपलभ्यमानेनापि तदानीमप्रत्यक्षेणापीति हेतोस्तदर्थं ध्वंसस्य प्रत्यक्षार्थं ततस्तदानीमध्यक्षगोचरत्वमपेक्षणीयमन्यतरस्यापि भूतलघटयोरेकतरस्यापि। सन्निकर्षार्थश्चेति विवृणोति—**सन्निकर्षस्त्विति**। **भूतलेपि** भूतलघटयोर्यः 25
संयोगस्तद्ध्वंसस्येत्यर्थः। येन भूतलेन अस्ति तस्य सन्निकर्षः। गमयेत्। ज्ञापयेत्। उपलब्धेति। प्रत्यक्षीकृत—प्रत्यक्षीक्रियमाणाभ्यामेवेत्यर्थः। तथा चेन्द्रियसन्निकर्षार्थमेवाधिकरणप्रत्यक्षस्योपयोग आवश्यक इति भावः। **इतरेतरेति**। प्रत्यक्षे सन्निकर्षस्ततश्च प्रत्यक्षमित्यर्थः।

तस्मात् सन्निकर्षे सति योग्यत्वाद् भूतलमप्युपलभ्यते, न तु तस्योपलभ्यमानत्वमभावोपलब्धेरङ्गमिति युक्तमुत्पश्यामः। प्रकृते तु न प्रतियोगिनिरूपणार्थं तदुपयोगः। तस्य संयोगवदाधारानिरूप्यत्वात्। नाऽपि सन्निकर्षार्थं, तदभावस्य साक्षादिन्द्रियसन्निकर्षादिति। न चेदेवं, कुत एषा प्रतीतिरिदानीं श्रुतपूर्वः शब्दो नास्तीति। अनुमानादिति चेन्न। शब्दस्यैव पक्षीकरणे हेतोरनाश्रयत्वात्। अनित्यत्वमात्रसाधने अभावस्य नियतकालत्वासिद्धेः। आकाशस्य पक्षत्वे तद्वृत्तयाऽनुपलभ्यमानत्वस्य हेतोरनैकान्तिकत्वात्। शब्दसद्भावकालेऽपि तस्य सत्त्वात्। एवं कालपक्षेऽपि दोषात्। अहमिदानीं निःशब्दश्रोत्रवान्, शब्दोपलब्धिरहितत्वात्, बधिरवदिति चेन्न। दृष्टान्तस्य साध्यविकलत्वाद्, व्याहतत्वाच्च। बधिरश्च श्रोत्रवांश्चेति व्याहतम्। तस्यापि च श्रवसो निःशब्दत्वे प्रमाणं नास्ति। अनुपभोग्यस्य उत्पादवैयर्थ्यं प्रमाणमितिचेन्न। आद्यादिशब्दवदुपपत्तेः। तेषां शब्दान्तरारम्भं प्रत्युपयोगोऽन्त्यस्य न तथेति चेन्न। अन्त्यत्वासिद्धेः। सर्वेषां चोत्पादवतां प्रयोजनतदभावयोरस्मादृशैरनाकलनात्। सुषुप्त्यवस्थायां श्वासप्रश्वासप्रयोजनवच्च तदुपपत्तेः। आरम्भे सति प्रयोजनमवश्यमिति व्याप्तेः। न त्वापाततः प्रयोजनानुपलम्भमात्रेणारम्भनिवृत्तिः। तथा सति कर्णशष्कुल्यवच्छेदोत्पाद एव नभसस्तं प्रति निवर्त्तेत। बधिरस्य तेनानुपयोगात्। विवादकाले बधिरकर्णः शब्दवान्, योग्यदेशस्यानावृतकर्णशष्कुलीसुषिरत्वात् तदितरकर्णशष्कुलीशुषिरवदिति। निःशब्दाः पणववीणावेणवः तदेकज्ञानसंसर्गयोग्यत्वस्य तदनुपलम्भेऽप्युपलभ्यमानत्वात्। यद् यदेकज्ञानसंसर्गयोग्यस्य अनुपलम्भेऽप्युपलभ्यते तत्, तदभाववत यथा अघटं भूतलमितिचेन्न। एकज्ञानसंसर्गयोग्यत्वाभावात्, शब्दस्य श्रौत्रत्वाद्वीणादीनां चाक्षुषत्वात्। अभिमानमात्रादितिचेन्न, तथापि शब्दप्रध्वंसस्यातद्देशत्वाद्, अत्यन्ताभावस्य च कालाऽनियमात्।

स्यादेतत्। शब्दवदाकाशोपाधयो हि भेर्यादयः। तेन तेषु विधीयमानः शब्द आकाश एव विहितो भवति। प्रतिषिद्ध्यमानश्च तत्रैव प्रतिषिद्धो भवति। शरीरे सुखादिवदिति चेन्न। तत्र सोपाधावात्मनि प्रत्यक्षसिद्धे सुखादिनिषेधस्यापि प्रत्यक्षसिद्धत्वात्। न चैवमिहापि, तदुपहितस्य नभसोऽप्रत्यक्षत्वात्। उपाधयस्तावत् प्रत्यक्षाइति चेन्न। तैरभावानिरूपणात्। निरूपणे वा प्रत्यक्षेणापि ग्रहणप्रसङ्गात्। न चैवं सति पारमार्थिकाधिकरणनिरूपणीयत्वमभावस्य। न च तेऽपि प्रत्यक्षसिद्धाः। सर्वत्र शब्दकारणव्यवधानेऽप्युपलब्धस्य शब्दस्य नास्तीताप्रतीतेः। आनुमानिकैस्तैस्तथाव्यवहार इति चेन्न। हेतोस्तद्वृत्तयाऽनुपलभ्यमानत्वस्यानैकान्तिकत्वात्। अभावप्रतीतिकाले सन्दिग्धाश्रयत्वाच्च। उपलभ्यमानविशेष्यत्वपक्षे चाऽसिद्धेः। इन्द्रियव्यवधानाच्छब्दलिङ्गस्य चानुपलम्भात्।

अपि च नष्टाश्रयाणां द्रव्यगुणकर्मणां नाशोपलम्भः कथम्? न कथञ्चिदिति चेत्, आश्रयनाशात् कार्यनाश इति कुत एतत्? अनुमानतस्तथोपलम्भादिति चेन्न। तुल्यन्यायेनोक्तोत्तरत्वात्। तन्तुषु नष्टेष्वपि यदि पटो न नश्येत्तद्वदेवोपलभ्येतेति चेत्। एतस्य तर्कस्यानुग्राह्यमभिधीयताम्। यदत्रोपलभ्यते न तत् कार्यपरम्परावत्, योग्यस्य तथानुपलभ्यमानत्वे सति उपलभ्यमानत्वादिति चेन्न। तन्त्ववयवानां

पटानाधारत्वे साध्ये सिद्धसाधनात्। पटप्रध्वंसवत्त्वे साध्ये बाधितत्वात्। तस्य स्वप्रतियोगिकारणमात्रदेशत्वात्। ये पटध्वंसवन्तस्तन्तवस्तदभाववन्त एते अंशव इति साध्यमिति चेन्न। तन्तुनाशोत्तरकालं पटनाशात् तद्वृत्तानुपपत्तेः। योग्यतामात्रसाधने च पटप्रध्वंसासिद्धेः। तस्य नाशानाशयोः समानत्वात्। अनन्यगतिकतया विशिष्टनिषेधे कृते विशेषणानामप्यभावः प्रतीतो भवति। गुणक्रियावत्पटाधारास्तन्तवो न सन्ति स्वावयवेष्विति हि प्रत्यय इति चेत् तथापि गुणकर्मणां पटस्य च प्रध्वंसः किमधिकरणः प्रतीयते इति वक्तव्यम्। अंश्वधिकरण एवेति चेद्, भ्रान्तिस्तर्हीयम्। तस्यातद्देशत्वात्। आश्रयावच्छेदकतया तेषामपि अदूरविप्रकर्षेण तद्देशत्वम्, एवम्भूतेनापि देशेन तन्निरूपणं, योग्यताया अव्यभिचारादिति चेत्। न तर्हि प्रतियोगिसमवायिदेशेनैव प्रध्वंसनिरूपणमिति नियमः, प्रकारान्तरेणापि निरूपणात्। तस्माद् यस्य यावती ग्रहणसामग्री तं विहाय तस्यां सत्यां तदभावो यत्र क्वचिन्निरूप्यो देशे काले वा।

इयांस्तु विशेषः। सा सती चेत्, प्रत्यक्षेण, असत्येव ज्ञाता चेत्, अनुमानादिनेति स्थिति।

एतेन "सद्ग्रयामभावो निरूप्यते" - इत्यादिशास्त्रविरोधः परिहृतो वेदितव्यः। उभयनिरूपणीयप्रतियोगिविषयत्वादनुमानविषयत्वाच्च। अन्यथा, आश्रयासिद्धिप्रसङ्गात्। तत्रापि न ग्रहणे नियमो, ज्ञानमात्रन्तु विवक्षितम्, तावन्मात्रस्यैव तदुपयोगात्, क्वचिद् ग्रहणस्य सामग्रीसम्पातायात्तत्वाद्। यदि चाधिकरणग्रहे शास्त्रस्य निर्भरः स्याद्, "वह्नेर्दाह्यं विनाश्यानुविनाशवत्तद्विनाशः" (न्या० ४ अ० १ आ० २७ सू०) इति नोदाहरेत्, असिद्धत्वात्। न हि वह्निविनाशस्तदवयवपरम्परास्वनिरूप्यः। तासामनिरूपणात्। नाऽप्यन्यत्र गमनाभावादिना पारिशेष्यादनुमेयः। हेतोरेव निरूपयितुमशक्यत्वात्। आश्रयानुपलब्धेः। नापि निमित्तविनाशात् सर्वमिदमेकवारेण सेत्स्यतीति युक्तम्। तस्यानैकान्तिकत्वात्। तेजसा विशेषितत्वादयमदोष इति चेन्न। व्याप्त्यसिद्धेः। न हीन्धनविनाशात्तेजोद्रव्यमवश्यं विनश्यतीति क्वचित् सिद्धं, प्रत्यक्षवृत्तेरनभ्युपगमात्। तस्माद् यत्त्यागेनाऽन्यत्र गमनं न सम्भाव्यते, तेन निमित्तादिनाऽपि देशेन प्रध्वंसो निरूप्यत इत्यकामेनापि स्वीकरणीयम्। गत्यन्तराभावात्। अत एव तमसः प्रत्यक्षत्वेऽप्यभावत्वमामनन्त्याचार्याः।

एतेन शब्दप्रागभावो व्याख्यातः।

### आमोद

ननु भूतलोपलम्भश्चेन्न लिङ्गं कथं नियमतस्तत्र तत्सत्त्वमित्यनुपपत्तिं निरस्यन्नेवोपसंहरति—तस्मादिति। ननु योग्यानुपलब्ध्या घटसंयोगाभावः कथं ग्राह्यः? एकप्रतियोगिनाशे प्रतियोग्युपलम्भकयावत्कारणसत्त्वात्। तत्तद्व्याप्येतरयावत्तदुपलम्भकसत्त्वे अनुपलम्भस्य योग्यानुपलब्धित्वादिति चेत्? न। एकधर्मावच्छेदेन यत्र द्वयोर्बहूनां वा कारणत्वं तत्रैककारण-

समवधान एव प्रतियोग्युपलम्भकयावत्समवधानस्य विवक्षितत्वात् । तत्र हि प्रतियोगित्वेनैव द्वयोः संयोगोपलम्भकता, तथा चैकसमवधानेऽपि तदवतारग्रहोऽस्तु । अन्यथा प्रदीपसौरालोकादीनां घटोपलम्भकत्वेनैकतर-समवधाने घटाभावेऽप्युपलभ्येत, यावद्घटोपलम्भसमवधानविरहात् ।
5 तत्र बाह्यालोकत्वेनैव कारणत्वमिहापि प्रतियोगित्वेनेति तुल्यम् । न चैक-प्रतियोगिसन्निकर्षाभावात् संयोगग्रहप्रसङ्गः, व्यासज्यवृत्तिधर्मग्रहे व्यासज्य-वृत्तिसन्निकर्षस्य तन्त्रत्वात् । न च तादृशसन्निकर्षश्चेत् प्रतियोग्युपलम्भ-कस्तदा तदभावोऽपि कथं गृह्यत इति वाच्यम्, तस्य प्रतियोगिव्याप्यत्वे-नैव पर्युदस्तत्वात् । एवं चैतदनुरोधेन प्रतियोगिसत्त्वविरोध्यनुपलम्भो योग्या-
10 नुपलम्भ इत्युक्तम् । ननु घटानुपलम्भः प्रतियोगिसत्त्वविरोधी, न त्वालोक इत्यत्र तद्व्याप्येतरतदुपलम्भकयावत्सत्त्वमेव प्रयोजकं वाच्यम् । तथा च तदावश्यकमिति । नन्वेवं घटाभावः क्वापि न सिद्ध्येत् । तत्संसर्गा-भावेनैव तत्प्रतीतेरुपपत्तेरिति चेत् ? मैवम् । तत्समवायिकारणे तद्ध्वंस-प्रतीतेस्तत्संसर्गध्वंसानालम्बनत्वात् । तत्संसर्गस्य तत्र समवायलक्षणत्वात् ।

15 **प्रकृते** त्विति । शब्दध्वंस इत्यर्थः । **तदुपयोग** इति । अधिकरण-प्रत्यक्षोपयोग इत्यर्थः । **तस्येति** । शब्दस्येत्यर्थः । **संयोगवदिति** व्यतिरेक-दृष्टान्तः । **सन्निकर्षार्थमिति** सन्निकर्षघटकमित्यर्थः । **तदभावस्येति** । शब्द-ध्वंसस्य साक्षादेव श्रोत्रसन्निकृष्टत्वादित्यर्थः । **न चेदेवमिति** । यदि शब्द-ध्वंसो न प्रत्यक्ष इत्यर्थः । **श्रुतपूर्व** इति । ध्वंसप्रतीतिपर्यवसानार्थम् । न
20 त्विदानीं श्रुतपूर्वः शब्दो नास्ति योग्यत्वे सत्यनुपलभ्यमानत्वादित्यनुमाना-देव तत्प्रतीतिरिति शङ्कते—**अनुमानादिति** । ध्वस्तः शब्दो धर्मी तदा नास्ति इति नेदमनुमानमिति परिहरति—**शब्दस्येति** । ननु सामान्यतः शब्देऽनित्यत्वं सिद्धचेदेतादृशप्रतीतिविषयतामादाय सिद्ध्यतीत्याशङ्कां निरा-करोति—**अनित्यत्वेति** । तथा च शब्दोऽनित्य इत्येव प्रतीतिः स्यान्न
25 त्विदानीं शब्दो नास्तीति प्रतीतिः । तत्र तस्यासामर्थ्यादित्यर्थः । न त्विदानीमाकाशं शब्दाभाववत् तद्वत्तयाऽनुपलभ्यमानत्वादित्यनुमानमाशङ्क्य निराकरोति—**आकाशस्येति** । अनैकान्तिकत्वमेव स्फुटयति—**शब्देति** । सत्यपि शब्दे आकाशस्य तद्वत्तयाऽनुपलभ्यमानत्वादित्यर्थः । **अहमिदानीमि**

ति। यद्यप्येतावतापीदानीं श्रुतपूर्वः शब्दो नास्तीति प्रतीतिर्नोपपद्यते, तथाप्यनेनानुमानेन शब्दध्वंसः प्रत्येतुं शक्यत एवैतावता शङ्काशूकोपपाद्यतया पश्चादुक्तमपि व्याघातं प्रथमं स्फुटयति—**बधिर** इति। अदृष्टविशिष्टकर्णशष्कुल्यवच्छिन्नं नभो बधिरे नास्तीत्यर्थः। अदृष्टं शब्दग्रहे सहकारि न तु तद्घटितमेव श्रोत्रमिति न व्याघात इत्यनुशयेन साध्यवैकल्यं 5
स्फुटयति—**तस्यापि** चेति। बधिरकर्णे शब्दोत्पत्तेः प्रयोजनाभावादसत्त्वमित्याह—**अनुपभोग्यस्येति**। आद्यादीत्यादिपदेनानुपभोग्यशब्दान्तरसंग्रहः। **तेषामिति**। आद्यादिशब्दानामित्यर्थः। **अन्त्यस्येति**। बधिरकर्णोत्पन्नस्येत्यर्थः।

बधिरकर्णेऽन्त्यशब्द एवोत्पद्यते इत्यत्र न प्रमाणमित्याह—**अन्त्य-** 10
**त्वेति**। बधिरकर्णोत्पन्नशब्दस्यापि प्रयोजनं किञ्चिद् भविष्यतीत्याह—**सर्वेषामिति**। **श्वासेति**। तेन जीवनावच्छेदेन यथा प्रयोजनं तथा कालकलावच्छेदादेवान्त्यशब्दस्यापि प्रयोजनसत्त्वादित्यर्थः। आरम्भस्तावदस्तु, सामग्रीसद्भावात् बधिरकर्णे शब्दस्य क्रमेण प्रयोजनं गवेषणीयमित्याह—**आरम्भ** इति। उपयोगस्यापाततोऽदर्शनेनारम्भनिवृत्तौ बधिरकर्णशष्कुल्यपि 15
निवर्ततामित्याह—**तथा सतीति**। यदा बधिर समानदेशवर्तमानानामबधिराणां शब्दश्रवणमस्ति तदा बधिरस्यापि श्रोत्रे शब्देनोत्पत्तव्यमिति। साध्यवैकल्यमनुमानेन द्रढयति—**विवादेति**। यदा बधिरकर्णस्य शब्दवत्तायां विवदाम तदेत्यर्थः। पूर्वोक्तरीत्यनुपपादनेऽपि शब्दध्वंससिद्धिमात्रमभिप्रेत्याह—**निःशब्दा** इति। एकज्ञानसंसर्गयोग्यता चात्र नियता विवक्षिता। 20
अतो न समूहालम्बने घटमादायैकज्ञानसंसर्गयोग्यत्वाद् व्यभिचारः। अत्र स्वरूपासिद्धिमाह—**एकेति**। तामेव स्फुटयति **शब्दस्येति**। ननु शब्दवती वीणा वीणायां वा शब्द इत्युपनीतभानाभिमानिक्येकज्ञानसम्बन्धयोग्यता अस्त्येवेत्यत आह—**अभिमानेति**। **निःशब्दा** इति। शब्दध्वंसवन्त इति साध्ये बाधः। शब्दात्यन्ताभाववन्त इति साध्ये ध्वंसो न सिद्ध्येदित्याह— 25
**तथापीति**।

ननु वीणायां शब्दध्वंसः साध्यमान आकाश एव सेत्स्यतीति न बाध इति शङ्कते—**स्यादेतदिति**। आकाशस्य उपाधयो भेर्यादय इति तत्र विधिनिषेधौ क्रियमाणावकाश एव पर्यवस्यत इत्यर्थः। **शरीर** इति।

सुखवच्छरीरं सुखाभाववच्छरीरमितिवत् पादे मे वेदना शिरसि मे सुखमिति हि प्रतियन्तीत्यर्थः। यद्यपि गन्धविभुत्वयोः शरीरे विधीयमानयोरपि नात्मनि विधिनिषेधौ, तथापि यदवच्छेदेन यद्वर्तते तत्रेयं गतिरिति भावः। अवच्छेद्यं यत्र प्रत्यक्षं तत्र प्रत्यक्षेणावच्छेदकौ विधिनिषेधौ तथा,
5 प्रकृते तु नावच्छेद्यस्याकाशस्य प्रत्यक्षतेत्याह—तत्रेति। उपाधिप्रत्यक्षतामात्रं तत्र तन्त्रं, न तूपाधेयप्रत्यक्षतापीति शङ्कते—उपाधय इति। तैरिति। शब्दाभावस्य तत्रावृत्तेरिति भावः। निरूपणे वा सिद्धं नः समीहितमित्याह—निरूपणे वेति। समीहितमेव स्फुटयति—न चैवमिति। एकदेशिनः प्रतियोगिसमवायिकारणनिरूप्यत्वमभावस्याहुस्तद्भग्नमित्यर्थः। अधि-
10 करणस्य पारमार्थिकत्वं प्रतियोगिसमवायिदेशत्वम्। तेऽपीति। वीणादयोऽपीत्यर्थः। तथा च तत्र नास्तितताप्रतीतिर्न स्यादित्यर्थः। अनुमितेषु वीणादिषु शब्दनास्तितानुमानमित्याशङ्कते—आनुमानिकैरिति। तथा व्यवहारः शब्दनास्तिताव्यवहारः। अनैकान्तिकत्वादिति। दूरव्यवहिततया शब्दवतोऽपि वीणादेस्तद्वत्तयाऽनुपलम्भसम्भवादिति भावः। सन्दिग्धेति। तदा वीणादे-
15 र्नाशसम्भवे सन्दिग्धाश्रयत्वादित्यर्थः। इदानीं सा वीणा शब्दाभाववतीति विशिष्टप्रतीत्यनुदयादिति भावः। ननु शब्दवत्तयाऽनुपलभ्यमानत्वे सत्युपलभ्यमानत्वादिति हेतुकर्तव्येति तत्राह—उपलभ्यमानेति। असिद्धेरिति। स्वरूपासिद्धेरित्यर्थः। स्मर्यमाणत्वादिना तूपलभ्यमानत्वसिद्धौ नियतकालाभावप्रतीत्यनुदय इति भावः। असिद्धिमेव स्फुटयति—इन्द्रियेति। ननु
20 प्रत्यक्षासम्भवेऽपि अनुमानं स्यादत आह—शब्दलिङ्गस्य चेति। ननु यदि प्रतियोगिसमवायिदेशयोग्यताऽभावग्रहे तन्त्रं तदाश्रयनाशे यत्र द्रव्यादिनाशस्तद्द्रव्यादिध्वंसः कथं प्रत्यक्षः स्यादित्याह—

अपि चेति। तदुपलम्भे न क्षतिरित्याह—न कथञ्चिदिति। तर्हि सिद्धान्तभङ्ग इत्याह—आश्रयेति। तुल्येति। पट इदानीं ध्वंसप्रतियोगी
25 अनुपलभ्यमानत्वादित्याश्रयासिद्धमनैकान्तिकञ्च पटावयवः। पटः ध्वंसवानिति च तत्र बाधितमित्यर्थः। तद्वदेवेति। पूर्ववदेवेत्यर्थः। यद्वा, पटवानत्र तन्तुरुपलभ्येतेत्यर्थः। एतस्येति। तर्कस्य, स्वातन्त्र्येणाप्रमाणत्वात्। यदत्रोपलभ्यते इति। अंश्वादिकमित्यर्थः। तथानुपलभ्यमानत्वे सतीति। कार्यपरम्परावत्त्वेनानुपलभ्यमानत्वे सतीत्यर्थः।

**तन्त्विति**। अंशूनां पटाधारत्वं सिद्धम्। पटध्वंसवत्त्वञ्च बाधितमित्यर्थः। बाधमाह—**तस्येति**। ध्वंसस्य प्रतियोगिसमवायिकरणातिरिक्तानाश्रयत्वादित्यर्थः। ननु तन्तूनां पटध्वंसवत्त्वम् अंशूनां तन्तुध्वंसवत्त्वञ्च साध्यमतो न सिद्धसाधनम्, न वा बाध इत्याशङ्कते—**य इति**। **तद्वत्तेति**। तद्वत्त्वं तन्तूनामेव पटध्वंसवत्त्वं बाधितमित्यर्थः। ये तन्तवः 5 पटध्वंसाधारयोग्यास्तदभाववन्त एव तेंऽशव इत्यत्र दोषमाह—**योग्यतेति**। **तस्येति**। पटध्वंसानाधारसमयेऽप्यतादृशयोग्यतासम्भवादित्यर्थः। **अनन्यगतिकतयेति**। पटध्वंसप्रतीतेरिहानुमानेनोपपादयितुमशक्यत्वमनन्यगतिकत्वं प्रकृते विशेषणसिद्धौ न चेन्मानं तदा विशिष्टाभावसाक्षात्कारो विशेषणाभावमादायैव पर्यवस्यतीति भावः। एतावतापि प्रतियोगिसम- 10 वायिदेशनिरूप्यत्वं न ध्वंसस्य समाहितं तच्च प्रकृतमित्याह—**तथापीति**। तस्य पटध्वंसस्य **अतद्देशत्वात्** तन्तुदेशत्वाभावादित्यर्थः। **आश्रयावच्छेदकतयेति**। पटध्वंसाश्रयाणां तन्तूनामाधारतयांशवोऽवच्छेदकास्ते च सन्निकृष्टा एव। तथा च तत्रैव पटध्वंसा अपि प्रतीयन्ताम् को दोष इत्यर्थः। तन्निरूपणयोग्यतायाः अभावप्रत्यक्षयोग्यतायाः अव्यभिचारादिति। 15 अन्वयव्यतिरेकसिद्धत्वादित्यर्थः। एवं सति शब्दध्वंसः प्रत्यक्ष इति सिद्धं नः समीहितमित्याह—**तर्हीति**। उपसंहरति—**तस्मादिति**। प्रतियोगितद्व्याप्येतरतदुपालम्भकसामग्रीसत्त्वं प्रकृतेऽप्यस्तीति भावः। न च शब्दव्यञ्जकनादाद्यभावादुपालम्भकसामग्रीविरह इति वाच्यम्। समानदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादर्शनात्। वाद्यादिव्यञ्ज- 20 कताया निषेधात्।

ननु प्राङ्नास्तितास्थले योग्यानुपलम्भाभावात् कथमभावनिश्चय इत्यतआह—**इयानिति**। योग्यानुपलम्भः स्वरूपसन्नेव प्रत्यक्षसहकारी प्राङ्नास्तितास्थले नास्तीति ज्ञातः सन् लिङ्गं भवतीत्यर्थः। यत्र नोपलब्धः चैत्र इति ब्रूते तत्रानुमानं, यत्र तु स्मरणार्हस्यास्मरणादिना लिङ्गेन 25 चैत्राभावं निर्णीय ब्रूते नासीत्तत्र चैत्र इति, तत्र शब्देन प्राङ्नास्तितां गृह्णाति। स एव चादिपदग्राह्यः। **एतेनेति**। यत्र क्वचिद्देशे काले वेत्यभ्युपगमेनेत्यर्थः। **सद्भ्यामिति** ज्ञाताभ्यामित्यर्थः। प्रतियोग्यधिकरणाभ्यामिति शेषः। तथा च प्रतियोग्याश्रयाकाशज्ञानं विनापि

निरधिकरणशब्दाभावप्रतीतौ न क्षतिः। ननु तर्हि निरधिकरणाभावप्रतीतिरस्तीति ग्रन्थविरोध इत्यत आह उभयेति। उभयनिरूप्यो यत्र प्रतियोगी तत्र तदभावोऽपि तथेत्यर्थः। अधिकरणज्ञानं विना यत्र न प्रतियोगिज्ञानं संयोगादिस्थले तदभिप्रायकत्वाद् ग्रन्थस्य शास्त्रविरोधपरी-
5 हारप्रकारान्तरमाह—अनुमानेति। अधिकरणनिरूप्यतायां तत्र प्रमाणमाह—अन्यथेति। तत्रापीति। उभयनिरूप्यप्रतियोगिस्थलेऽप्यनुमाने च नानुभवनियमः। स्मर्यमाणाश्रयकस्यापि संयोगादिध्वंसस्यांशौ पटध्वंसवद् भूतलादौ च तत्कालनष्टप्रतियोगिकादौ निरूपणादित्यर्थः। अत एव नोभयसंयोगिनिरूप्यत्वं संयोगध्वंसस्येति भावः। तावन्मात्रस्यैवेति।
10 अभावसाक्षात्कारे व्यापकाभावेन व्याप्याभावानुमाने चाधिकरणज्ञानमात्रस्यैवोपयोगित्वादित्यर्थः। तर्हि भूतलादिघटपुरः सरः कथमघटं भूतलमिति प्रत्यय इत्यत आह—क्वचिदिति। अपसिद्धान्तं परिहरन्नाह—यदि चेति। उदाहरणाभावे हेतुमाह—असिद्धत्वादिति। असिद्धत्वमेव स्फुटयति—नहीति। ननु दाह्यनाशानन्तरं वह्निरिह नष्टः। अन्यत्र गमनाभावे
15 सति योग्यतायामिहानुपलभ्यमानत्वादित्यनुमानाद्वह्निनाशसिद्धिः स्यादिति शङ्कते—नापीति। हेतोरिति। वह्निनाशवतो देशस्यानुपलम्भात् कुत्र पक्षे हेतुरयमुपसंक्रियेतेत्यर्थः। ननु वह्नितदवयवपरम्परा नष्टा नष्टनिमित्तत्वादित्यनुमानाद्वह्न्यादिनाशसिद्धिः स्यादिति शङ्कते नापीति। सर्वमिदमिति। वह्नितदवयवपरम्परानाशरूपमित्यर्थः। सर्वेषामिन्धननि-
20 मित्तकत्वाविशेषादिति भावः। अनैकान्तिकत्वादिति। दण्डादिनाशेऽपि घटाद्यनाशादित्यर्थः। ननु तैजसत्वे सति नष्टनिमित्तकत्वादिति हेतुः स्यादित्यत आह—तेजसेति। व्याप्यत्वासिद्धिमेवाह—नहीति। अवश्यमिति स्फुटार्थम्। ननु प्रत्यक्षत एव व्याप्तिः सेत्स्यतीत्याह—प्रत्यक्षेति। वृत्तिर्व्यापारः। अनभ्युपगमादिति त्वयेति शेषः। निमित्तादिनेति। अर्धदग्धेनेन्धनादिनेत्यर्थः।
25 गत्यन्तरेति। अनुमानस्यात्र निरस्तत्वादित्यर्थः। अन्यथा तेजोध्वंसात्मकं तमोऽपि न प्रत्यक्षं स्यादित्याह—अत एवेति तेजोध्वंसाश्रयस्य तेजोऽवयवस्य तत्रानुपलब्धेरिति भावः। एतेनेति। शब्दध्वंसप्रत्यक्षताव्युत्पादनेन शब्दप्रागभावप्रत्यक्षतापि व्याख्यातेत्यर्थः। संसर्गाभावग्रहे प्रतियोगियोग्यतामात्रस्यैव प्रयोजकत्वात्। नत्वधिकरणयोग्यतापीति भावः।

बोधनी

यदि भूतलसन्निकर्ष एवोपपुज्यते न तु तदुपलम्भः, कथं तर्हि भूतले घटो नास्तीति भूतलोपलम्भेनैवाभावोपलम्भ इतीमामाशङ्कां निराकुर्वन्नुपसंहरति—**तस्मादिति**। तर्हि शब्दाभावेऽप्युभयार्थमेवाधिकरणमपेक्षणीयम्, न च तत्सम्भवतीत्यप्रत्यक्षत्वमेव तस्येत्यत्राह—**प्रकृते त्विति**। **तस्य** प्रतियोगिनः शब्दस्येति। अथेदानीमैन्द्रियकानुमानस्यानुग्राहकं[१] तर्कमाह। **न चेदेवमिति**। न चेच्छब्दाभावः श्रोत्रेण गृह्यते ततः कारणाभावादेषा प्रतीतिर्न स्यादिति। नन्वस्त्वनुमानादियं प्रतीतिरित्याह। **अनुमानादिति**। नास्तीदानीं शब्दः अनुपलभ्यमानत्वादित्यनुमाने तावदाश्रयासिद्धो हेतुः, असतः शब्दस्याश्रयत्वानुपपत्तेरिति। तर्हि सन्तमेव शब्दं पक्षयित्वा तस्य कृतकत्वेनानित्यत्वं साधयाम इत्यत्राह—**अनित्यत्वेति**। तत्र हि शब्दः कदाचित् प्रध्वंसिष्यत इत्येतावदेव सिध्येत् न त्विदानीं नास्तीति। तर्हीदानीं निःशब्दमाकाशं तद्वत्तयाऽनुपलभ्यमानत्वाद्यथा घटवत्तयाऽनुपलभ्यमानं भूतलं विघटमित्यनुमानं[२] भविष्यतीत्यत्राह—**आकाशस्येति**। शब्दसद्भावकालेऽप्याकाशस्यातीन्द्रियत्वेन[३] तद्वत्तयाऽनुपलम्भात्। यद्वा, आद्यादिशब्दानां सतामेवानुपलम्भादिति भावः। कालेऽपि पक्षे पूर्वस्य हेतोरनैकान्तिकत्वमित्याह। **एवमिति**। अनुमानान्तरमाशङ्क्य निराकरोति। **अहमिदानीमिति**। व्याहतिं तावद्विभजते। **बधिर इति**। साध्यवैकल्यं विभजते—**तस्यापीति**।

ननु यदि बधिरेणानुपलभ्यमानः शब्दस्तच्छ्रोत्रप्रदेशे भवेत् ततोऽयं व्यर्थं स्यात् न च व्यर्थस्योत्पत्तिः संभवति, भोक्तॄणामुपभोगायैव तत्तददृष्टवशात्सर्वस्योत्पत्तेः। तस्मान्नास्ति तत्र शब्द इत्याह—**अनुपभोग्यस्येति**। **नेति**। अनुपभोग्यानामेवाद्यादिशब्दानामुत्पाददर्शनान्नानुपभोग्यत्वस्यानुत्पादेन व्याप्तिरिति। नन्वाद्यादिशब्दानामनुपभोग्यानामपि न वैयर्थ्यं शब्दान्तरारम्भोपयोगात्, अन्त्यस्य तूपयोगान्तराभावादानर्थक्यमेव स्यादित्याह **तेषामिति**। **नेति**। बधिरश्रवणसमवेतस्यापि शब्दस्यान्त्यत्वासिद्धेः शब्दान्तरारम्भेणैवोपयोगः सिद्ध्यतीति। किं चास्मदादिभिरनुपलम्भात् प्रयोजनस्याभावो न निश्चेतुं शक्योऽयोग्यत्वेनाप्युपपत्तेरित्याह—**सर्वेषामिति**। यथा हि सुषुप्तावस्थायामस्मदादिभिरनाकलितप्रयोजनयोरेव श्वासप्रश्वासयोरुत्पादस्तथा बधिरकर्णगतस्यापि शब्दस्य भविष्यतीति उक्तमेवोपपादयति—**आरम्भे हीति**। यदि तु प्रयोजनानुपलम्भमात्रेणाऽऽरम्भो निवर्तेत तदा बधिरस्य कर्णशष्कुल्या नभसोऽवच्छेदोत्पाद एव न स्यात् बधिरस्य तेनावच्छेदेनानुपयोगात् इत्याह—**तथा सतीति**। तदेवं बधिरकर्णस्य

१. क. ग्राहकान्तरमाह। २. क. निघंट° मु° पाठः। ३. क. सम्भव° मु° पाठः।

निःशब्दत्वे प्रमाणं नास्तीत्युक्तं सशब्दत्व एव प्रमाणमस्तीत्याह—विवादेति। यदा शब्दसंतानः प्रतीयते योग्ये च देशेऽनावृतकर्णविवरो बधिरस्तिष्ठति, तदा तत्कर्णो न शब्दवानिति परेणोच्यते तस्मिन् विवादकाल इति। तदेवम् 'अहमिदानीं निःशब्दश्रोत्रवान्' इति प्रयोगो दूषितः।

5 अथैकदेशी प्रयोगान्तरमाह—निःशब्दा इति। सशब्दानामपि वीणादीनामुपलभ्यमानत्वाद् व्यभिचारनिवृत्त्यर्थमुक्तं—तदनुपलम्भेऽपीति। शब्दानुपलम्भेऽपीत्यर्थः। तथापि धर्माद्यनुपलम्भेऽप्युपलभ्यमानेनात्मना व्यभिचारो मा भूदित्युक्तं—तदेकज्ञानसंसर्गयोग्यत्वे सतीति। तेन तद्विशेषणेन सह यदेकं ज्ञानं विशिष्टज्ञानमिति यावत्, तत्र संसर्गस्तद्विषयत्वं तद्योग्यत्वे सतीति विशेषणासिद्धो हेतुरित्याह—नेति। अयोग्यत्व-
10 मेवाह—शब्दस्येति। ननु सुरभि चन्दनमित्यादिषु भिन्नेन्द्रियग्राह्ययोरपि विशिष्टज्ञानविषयत्वं वक्ष्यति। सत्यं, तत्र गुणगुणिभावान्नदोक्ष्यतीति[1]। ननु परमार्थतस्तदभावेऽपि मधुरस्वरा वीणेति लौकिकानामभिमानस्तावद् दृश्यते, तन्मात्रादेवं सिद्धं तदेकज्ञानयोग्यत्वं हेतोर्विशेषणं भविष्यतीत्याह—अभिमानेति। अस्तु तथा नाम विशेषणत्वं, तथापि शब्दस्य वीणाद्यनाश्रयत्वेन तत्प्रध्वंसस्याप्यन्यदेशत्वान्निःशब्दा
15 वीणादय इति प्रतिज्ञा बाधितविषया स्यादित्याशयेनाह—तथापीति[2]। ननु वीणादिषु शब्दस्यात्यन्ताभावः साध्यते, न तस्य प्रध्वंसवत् प्रतियोगिदेशत्वम्। यदि तु स देशः प्रतियोगिनोऽपि कदाचित् स्यात् ततस्तत्रात्यन्ताभाव इति व्याहन्येतेत्यत्राह—अत्यन्ताभावस्येति। तदेदानीं शब्दो नास्तीति नियतकालतया शब्दाभावप्रतीतिर्न स्यात्, अत्यन्ताभावस्य सर्वदा सत्त्वात्सिद्धसाधनत्वं च तदा स्यादिति भावः।

20 स्यादेतदिति। भेर्याद्यवच्छिन्ने ह्याकाशे शब्दः समवैति विभुकार्याणामसमवायिकारणदेशानुरोधित्वात्, तेन शब्दवत् आकाशदेशस्योपाधिषु भेर्यादिषु विधीयमानो निषिध्यमानो वा[3] शब्दस्तदुपहित आकाश एव विहितो निषिद्धोवा भवति। यथा शरीरावयवे विधीयमाना निषिध्यमाना वा सुखादयस्तदुपहित आत्मनि तथात्वं लभन्ते, तस्माद् भेर्यादिषु निरूप्यमाणः शब्दध्वंस आकाश एव निरूपितो भवतीति। नेति। न हि
25 तत्र शरीरे निषिध्यमानानां सुखादीनामर्थादात्मनि निषेधः सिध्यति उपहितस्याऽऽत्मनः प्रत्यक्षसिद्धत्वेन तदाश्रयस्य सुखाद्यभावस्य प्रत्यक्षत्वोपपत्तेः, न चैवं विधा शब्दप्रध्वंसे संभवतीति। उपहितस्य नभसोऽप्रत्यक्षत्वेन तदाश्रयस्य शब्दप्रध्वंसस्याप्यप्रत्यक्षत्वादिति। ननूपहितस्याप्रत्यक्षत्वेऽप्युपाधयस्तावद् भेर्यादयः प्रत्यक्षाः ततस्तैरेव शब्दप्रध्वंसो निरूप्यत

१. गुणगुणिभावं वदन्नदो वक्ष्यति मु० पाठ।

२. विद्याद्याश्रयत्वेन तत्प्रध्वंसस्येतद् देश० मु० पाठः। ३. अपि मु० पाठः।

इत्याशयेनाह—**उपाधयइति**। नेति। आश्रयनिरूप्यत्वादभावस्य तेषां चानाश्रयत्वादिति भावः। अनाश्रयैरपि तैर्निरूपणे वा को दोषस्तत्राह—**निरूपणे वेति**। निरूपकाणां प्रत्यक्षत्वात्तन्निरूप्यस्याभावस्यापि प्रत्यक्षत्वप्रसङ्ग इति। किं च तैरेव निरूपणेऽभ्युपगतहानिरपि स्यादित्याह—**न चैवमिति**। तेषामभावानधिकरणत्वादिति। किं चाप्रत्यक्षेष्वप्युपाधिषु शब्दाभावस्योपलम्भान्न[१]तन्निरूप्यत्वमित्याह—**न च तेऽपीति**। शब्दस्य हि 5 निमित्तकारणानां भेर्याद्युपाधीनां कुड्यादिनाव्यवधानेऽपि पूर्वमुपलब्धस्य तस्याभावः प्रतीयत इति। ननु शब्दलिङ्गानुमितैर्वीणादिभिः पक्षीकृतैः शब्दाभावमनुमाय निःशब्दास्त इति व्यवहारः स्यात् इत्याह—**आनुमानिकैरिति**। **नेति** सशब्दा अपि हि ते तद्वत्तया नोपलभ्यन्ते तेषामश्रोत्रत्वादिति। **संदिग्धाश्रयत्वादिति**। तदानीं शब्दलिङ्गाभावात् नाशसंभवाच्चेति। तर्ह्युपलभ्यमाना भेर्यादय इति पक्षं विशेषयिष्याम इत्यत्राह—**उपलभ्य-** 10 **मानेति**। तदा हि विशेषणासिद्धः पक्षः स्यादिति। कुत इत्यत आह—**इन्द्रियेति**।

अधिकरणनिरूप्यत्वं प्रध्वंसस्य वदतां दूषणान्तरमाह—**अपि चेति**। प्रतियोग्याश्रया एव हि नाशस्याधिकरणं, ते च पूर्वमेव नष्टत्वात्तदानीं नोपलभ्यन्त इति। ननु मा भूत्तन्नाशोपलम्भ इत्याह—**कथं चिदिति**। तर्हि किंनिबन्धनोऽयं व्यवहारः स्यादित्याह—**आश्रयेति**। नन्वनुमानतः सिद्धैराश्रयैरानुमानिको नाशो- 15 पलम्भो भविष्यतीत्याह—**अनुमानत** इति। **नेति**। व्यवहितवीणाद्यनुमानेनानुमानिकस्तत्र शब्दाभावव्यवहार इत्यनेन तुल्यन्यायतयाश्रयासिद्धत्वादुपलभ्यमानत्वेन विशेषणेऽपि विशेषणासिद्धेश्चेति। यद्वा नष्टाश्रयाणां नाशस्य प्रत्यक्षेणानुपलम्भेऽप्याश्रयनाशादनुमानेनोपलम्भो भविष्यतीति शङ्कार्थः। उत्तरार्थस्त्वाश्रितविनाशब्दाश्रयनाशोऽपि न स्वाश्रयानाशे निरूपयितुं शक्यत इति। आश्रयविनाशात्कार्यविनाश इति व्यवहारस्य 20 निबन्धनमाशङ्कते—**तन्तुष्विति**। **तद्वदेव** विनाशात् पूर्वकालवदिति। **एतस्येति**। प्रमाणानुग्राहकत्वेन तर्कस्य न केवलस्यास्य व्यवहारमूलत्वमिति प्रमाणमाशङ्कते—**यद्वेति**। नष्टाश्रये पटादौ यदंश्वादिकमुपलभ्यते तत्स्वकार्यं तन्तवस्तत्कार्यं पटस्तत्कार्यं गुणकर्माणीत्येवं या कार्यपरम्परा तया तद्वन्न भवति तद्वत्तयोपलब्धुं योग्यस्य तथानुपलभ्यमानत्वे सति स्वयमुपलभ्यमानत्वादित्यनुमानमनुग्राह्यमत्रेति। नेति। 25 किमत्रांशवः पटानाधारा इति साध्यं, किं वा पटप्रध्वंसाधारा इति। पूर्वत्र सिद्धसाधनं तन्त्वाधारत्वात्पटस्य, उत्तरत्र बाधितविषयत्वं पटप्रध्वंसस्य स्वप्रतियोगिसमानदेशत्वेन तन्त्वाश्रयत्वादिति। दूषणद्वयपरिहारमाशङ्कते—य इति। पटप्रध्वंसवत्तन्त्वभाववन्तोंऽशव

१. °त्तन्नि° मु० पाठः

इति साध्यमिति । **नेति** । नष्टेषु तन्तुषु पटविनाशादसतां च तन्तूनां पटप्रध्वंसवत्त्वानुपपत्तेस्तदभावाश्रयत्वमंशूनां बाधितमिति । तर्हि पटप्रध्वंसाश्रययोग्यानां तन्तूनामभाववन्तोंऽशव इति साध्यमित्यत्राह—**योग्यतेति** । तस्य योग्यतामात्रस्य पटसद्भावकालेऽप्यविशेषात् न ततः प्रध्वंस एकान्ततः सिध्यतीति । ननु गुणक्रियाविशिष्टस्य पटस्या-
5 धारास्तन्तवोंऽशुषु न सन्तीति साधिते तन्तुपटविशेषणानां पटगुणादीनां अवस्थानासंभवादभावः सिध्यतीत्याह—**अनन्येति** । निषेधप्रतीतिरपि हि लौकिकी विशिष्टविषयेत्याह—**गुणक्रियावदिति** । एवमपि गुणकर्मणोरभावाधिकरणस्य पटस्य तदभावाधिकरणस्य च तन्तूनां तदानीमभावादधिकरणनिरूप्याभाववादिनो नायं प्रत्यय उपपद्यत इत्याह—**तथापीति** । अधिकरणमाशङ्कते—**अंश्विति** । तर्हि तस्य पटादिप्रध्वंसस्यांश्वधिकरण-
10 त्वाभावात्तदधिकरणत्वेन प्रतीतिर्भ्रान्तिरेव स्यादित्याह—**भ्रान्तिस्तर्हीति** । शङ्कते —**आश्रयेति** । अयमर्थः । गुणकर्मणोः पटस्य चाश्रयं पटं तन्तूंश्च प्रति परम्परया साक्षाच्चांशवः कारणं, तेनैभिरंशुभिरेवारब्धैस्तन्तुभिरारब्धः पट इति । एवं पटाद्यवच्छेदका अंशव इति तेषामप्यदूरविप्रकर्षेण गुणानामप्यभावदेशत्वमस्ति, तस्मादेवंभूतेन व्यवहितेनापि देशेनाभावो निरूपणीयः व्यवहितस्यापीदृशस्याभावनिरूपणे योग्यताव्याप्तेः । न हि
15 संभवति तन्तुप्रध्वंसवन्तोंऽशव इवि पटाभावस्तदाश्रयगुणाद्यभावो वा नास्तीति । **न तर्हीति** । तेन शब्ददेशस्याप्रत्यक्षत्वेऽपि शब्दप्रध्वंसप्रत्यक्षत्वोपपत्तिरिति किंनिरूप्यस्तर्हीत्याशङ्कामपनुदन्नुपसंहरति—**तस्मादिति** । यस्य भावस्य या ग्रहणसामग्री तं भावं तदविनाभूतमपि संनिकर्षं विहाय तस्यां सत्यां तस्य भावस्यभावो यत्कचिन्निरूप्यः न त्वधिकरण एवेति नियमः भावस्यात्मापि प्रत्यक्षसामग्र्येकदेश इति तं विहायइत्युक्तमिति ।

20 यद्यतीन्द्रियाधारेऽप्यभावः प्रत्यक्षः, कस्तर्हि प्रत्यक्षाप्रत्यक्षव्यवस्थाहेतुरित्यत्राह—**इयांस्त्विति** । येयमभावग्रहणसामग्री सा विद्यमाना चेत् प्रत्यक्षेण निरूप्यः इह घटो नास्तीति । अत्र हि प्रतियोगिस्मरणं तदनुपलब्धिरालोकादिसहकृतेन्द्रियव्यापारादयो विद्यन्ते सा तु सामग्र्यसती ज्ञायमाना चेदनुमानेन निरूप्यः । प्रक्तनाभावप्रतीतौ नेदानीमिन्द्रियव्यापारादयो विद्यन्ते किं तु प्राक्तना एवानुसंधीयन्त इति । यदि ह्याधारनिरूप्यो
25 भावो न स्यात् तर्ह्याधारप्रतियोगिभ्यां निरूप्योऽभाव इति प्रतिपादयता शास्त्रेण विरोधः स्यादित्यत्राह—**एतेनेति** । प्रतियोगिनिरूप्यत्वाभ्युपगमेन इति । कथमेतेनास्य परिहार इत्यत्राह—**उभयेति** । यस्याभावस्य प्रतियोगी भावद्वयनिरूप्यः यथा संयोगः, तदभावः सद्भ्यां संयोगिभ्यां निरूप्यते तद्विषयं शास्त्रमिति अनुमेयाभावविषयं वा शास्त्रमित्याह—**अनुमानेति** । किं तत्राधारोऽपि निरूपणीय एवेत्याह-**अन्यथेति** । यत्राप्यधिकरणनिरूप्यत्वं

तत्रापि न तस्य प्रत्यक्षत्वेनोपयोग इत्याह—**तत्रापी**ति। नन्विह भूतले घटो नास्तीत्यत्राश्रयः प्रत्यक्षेणैव गृह्यत इत्यत्राह **क्वचि**दिति। तत्राश्रयप्रत्यक्षग्रहणसामग्र्या अभावग्रहणसामग्र्या सह संनिधानात् तत्प्रत्यक्षत्वं, न त्वभावज्ञानाङ्गतयेति। कथमविशेषप्रवृत्तस्य शास्त्रस्यैतद्विषयत्वमवगम्यत इत्यत्राह—**यदि चे**ति। सूत्रकारो हि सर्वमनित्यमित्युक्ते तदनित्यत्वं नित्यमनित्यं वा नित्यं चेत्सर्वानित्यता स्यात् अनित्यस्यैव नित्यत्वात्। अथानित्यं तथापि सर्वानित्यता न स्यात्। 'अनित्यस्यैव[1] विनाशे सर्व[2] नित्यताप्रसङ्गादिति चोद्यं परिहरन्नाह 'तदनित्यत्वं वह्नेर्दाह्यं विनाश्यानुविनाशवत् तद्विनाशः' (न्या. सू. ४.१.२७) इति। अत्र हि यथाऽग्निर्दाह्यं काष्ठादि नाशयित्वा पश्चात्स्वयमपि विनश्यति, न च तदा काष्ठादिकमुज्जीवति, एवं सर्वानित्यत्वमपि सर्वं विनाश्य स्वयमपि विनश्यति न च सर्वनित्यता स्यादिति। वह्निविनाश उदाह्रियते तन्नोपपद्यते यद्यभावस्याश्रयनिरूप्यत्वं भवेदिति। कुत इत्यत आह—**असिद्धे**त्यादीति। वह्निविनाशस्याश्रयानिरूपणेनासिद्धत्वादिति। तदेवाह—**नही**ति। नन्वसंभवद्देशान्तरगमनतिरोधानस्यानुपलभ्यमानस्य वह्नेर्विनाशपरिशेषादनुमानतो विनाशः सिध्येदित्याशङ्क्याह—**नापी**ति। गमनाद्यभावस्य हेतोरप्यभावात्मकत्वादिति। निमित्तकारणस्य काष्ठादेर्विनाशे न तत्कार्यस्य वह्नेस्तदवयवानां च विनाशोऽनुमीयत इत्यत्राह—**नापी**ति। न हि निमित्तस्य दण्डचक्रादेर्विनाशे घटादिकार्यविनाशो दृश्यत इति। ननु मा भूदन्यत्र, अस्ति तेजोनिमित्ताभावस्य कार्याभावव्याप्तिरित्याह—**तेजसे**ति। अथापि व्याप्तेर्ग्राहकप्रमाणाभावादसिद्धिरित्याह—**ने**ति। तामेव दर्शयति—**न ही**ति। अतीन्द्रियाधारे तेजोविनाशे प्रत्यक्षप्रवृत्त्यनभ्युपगमात् तेन सह दुर्ग्रहा व्याप्तिरित्युपसंहरति—**तस्मा**दिति। **गत्यन्तरस्य** आश्रयनिरूप्यत्वलक्षणस्याभावादिति। अत्राचार्यसम्मतिं दर्शयति—**अत एवे**ति। यत एवाभावप्रत्यक्षस्याधिकरणप्रत्यक्षतायां निर्बन्धो नास्ति अत एव यदि हि तस्य निर्बन्धः स्यात्तदाऽभावस्य तमसस्तेजोऽवयवाश्रयत्वात् तेषां चाप्रत्यक्षत्वादप्रत्यक्षता स्यादिति। एतेन प्रध्वंसप्रत्यक्षताप्रतिपादेन शब्दप्रागभावोऽपि प्रत्यक्ष इति सिद्धमेवेत्याह—**एतने**ति।

---

१. क. नित्य° पाठः। २. क सर्वा° पाठः।

विवेक

अङ्गं सहकारि । नन्वेवं पिशाचभूतलसंयोगध्वंसस्यापि कुतो न प्रत्यक्षमिति चेत्, योग्यप्रतियोगिकत्वाभावेनेत्युक्तप्रायत्वात् । नन्वेवमयोग्यघटितसन्निकर्षेण पृथिवीत्वादेरभावः प्रत्यक्षः स्यात् । न च प्रतियोगितावच्छेदकपृथिवीत्वत्वादेरयोग्यतया पिशाचवद् घटाभावस्येव न तत्प्रत्यक्षमिति वाच्यम् । पृथिवीत्वेन पृथिव्या एव तत्प्रतियोगितावच्छे-
5 कत्वोपगमात् । यदि चायोग्याया अपि पृथिव्याः संभवात् पृथिव्यवच्छिन्नाभावोऽपि **न योग्य इति** संभाव्यते तदा घटादावेवाधेयताविशेषेणावच्छेदकत्वं तत्प्रतियोगिताया इति चेत्, न । योग्यप्रतियोगिकत्वेन तस्य योग्यत्वेऽपि सहकार्यन्तराभावेन तदा तदनुपधानात् । जातेरिव तदभावस्यापि योग्यव्यक्तिघटितसन्निधेरेव ग्राहकत्वात् । फलोप-धाननियामकस्य सकलाभावसाधारणस्य कस्यचिदनिरुक्तिः । मनस्त्वाभावस्य घटे प्रत्यक्षता
10 प्रवादो न श्रद्धेयः । अन्योऽन्याभावे च योग्याधिकरणकत्वमेव योग्यताफलोपधान-नियामकन्तु भिन्नमेव यथाफलं वाच्यम् । वस्तुतस्तु अभावयोग्यताया एकस्या अभावेऽपि न क्षतिः । इदं बहुलं प्रत्यक्षालोकविवेकेऽनुसन्धेयम् । प्रकृते शब्दध्वंसप्रत्यक्षे प्रतियोगि-निरूपणार्थं तत्साक्षात्कारार्थं तदुपयोगः । अधिकरणप्रत्यक्षोपयोगः । **संयोगवदिति** । व्यतिरेके दृष्टान्तः आधारानिरूप्यत्वात् । आधारसाक्षात्काराधीनसाक्षात्काराविषयत्वात् ।
15 सन्निकर्षार्थमित्यस्य श्रोत्रसन्निकृष्टाधिकरणान्तरस्योप**योग इति** शेषः । तदभावस्य शब्दध्वंसस्य श्रुतपूर्व इत्यस्य अत्रेत्यादिः । एतच्च प्रतीतेर्ध्वंसविषयतापर्यवसानाय कुत-इत्यत्रोत्तरम्—**अनुमानादिति** । श्रुतपूर्वइदानीन्तन ध्वंसवान् इदानीं योग्यताविशिष्टायाः अनुपलब्धेरिति प्रयोगः । तत्राह । **हेतोरिति** । विना पक्षभानमनुमितेरनुदयेन तत्रोपलभ्यमानत्वस्यावश्योपगमात् इत्यर्थः । न चोपलब्धिः श्रावणीयत्वेन विशेणीयेति
20 वाच्यम् । श्रवणायोग्ये तदानीन्तने व्यभिचारात् । तत्र योग्यशब्दत्वेन विशेषणेन इदानीमिति हेतुप्रविष्टमुपलब्धावनु अभावाधारतया अवच्छेदकतया वा । आद्ये यत्र तदानीन्तनश्रावणोपलब्धावसंभवः । तत्र हेत्वप्रसिद्धेरन्त्ये हेतोरिति **दोषानतिवृत्तिः** । इदानीं कालावच्छेदेनानुपलभ्यमानत्वम् अविद्यमाने शब्देऽसम्भवात् इदानीं कालस्य तेनासंबन्धादित्यर्थः । तदानीं विद्यमानशब्दस्य पक्षत्वे तदानीमनुपलभ्यमानत्वं
25 तत्रविद्यमाने स्वरूपासिद्धं तत्राविद्यमाने च बाध इति भावः । अनित्यत्वमात्रं ध्वंसप्रतियोगित्वमात्रं तथा च इदानीमित्यस्य साध्येऽप्रवेशो हेतावप्यप्रवेशः शब्दत्वमात्रञ्च हेतुरिति नोक्त दोष इति भावः । नियतकालता इदानीं वृत्तिता ।

ननु इदानीमाकाशं तच्छब्दध्वंसवत् तच्छब्दवत्तया अनुपलभ्यमानत्वात् इत्यत्र पक्षतावच्छेदकीभूतदानींतनकालावच्छेदेन साध्यसिद्धिर्नियतकालं भविष्यतीत्याशंक्य निषेधति **आकाशस्येति**। अनैकान्तिकत्वं विवृणोति **शब्दसद्भाव इति**। आकाशस्य प्रत्यक्षाविषयतया सर्वदैव तद्वत्तयाऽप्रत्यक्षत्वादिति भावः। वस्तुतस्तु ध्वंसत्वेन साध्यतायां घटादावेव व्यभिचारः स्फुट इति ध्येयम्। निःशब्दश्रोत्रवान् प्राक् श्रुतशब्दाभाववच्छ्रोत्र- 5 वान् तेन ध्वंसपर्यवसानम्। शब्दोपलब्धीत्यस्य तदित्यादिः व्याप्तिश्च सामान्यमुखी। सन्निधिक्रमेण प्रथमं व्याघातं विशदयति—**बधिरश्चेति**।

ननु बधिरपदेन पाण्यादिपिहितकर्णशष्कुलीको विवक्षित इत्यत्राह—**तस्यापि चेति**। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रं बधिरस्य च तत्सत्त्वेऽपि अदृष्टविशेषा- भावादेव न शब्दसाक्षात्कार इति प्रमाणं शंकते **ऽनुपभोग्यस्येति**। आद्यादीत्यादि- 10 शब्दादन्त्यपरिग्रहः। ननु आद्यशब्दस्योपभोग्यता न प्रकाशः शब्दान्तरारम्भकतयैव उपभोग्यत्वमन्त्यस्य तु तादृशध्वंसजनकतया इत्यक्षरतात्पर्याभ्यामाह—**तेषामिति**। शब्दान्तरारम्भ इत्युपलक्षणम्। शब्दान्तरध्वंसारम्भ इत्यपि बोध्यम्। अन्त्यस्य बधिरश्रोत्रैः उत्पत्तिप्रतियोगितया भवदभिमतस्यान्त्यत्वासिद्धेः निष्प्रयोजनत्वासिद्धेः। कर्णशष्कुल्यवच्छेदश्च नभसा तत्संयोगः तत्प्रतीति कर्णस्य तदीयताप्रतिपत्तये तत्कार्णमिति 15 फलितार्थः। तत्संयोगसामग्र्येव **मानमिति** यदि तदा समानं शब्देऽपि इत्यभिप्रायेणाह— **विवादेति**। प्रकृतहेतुमत्त्वमेव विवादविषयत्वं तेन न भागासिद्धिः। एतच्च बधिरश्रोत्रत्वस्य दृष्टान्ततावच्छेदकत्वनिराकरणपरम्। तेन यथोक्तहेतुशून्यतादृश- श्रोत्रस्योक्तहेतौ दृष्टान्तत्वाबाधेऽपि न क्षतिरिति मन्तव्यम्। नन्वात्मपक्षकशब्दध्वंसा- नुमानस्य दुष्टत्वेऽपि वीणादिपक्षकं शब्दाभावग्राहकमनुमानव शब्दानित्यत्वसाधकम् 20 इत्याशंकते—**निःशब्दा इति**। यथोपस्थिति प्रत्येकमेव पक्षत्वम् तदेकज्ञानसंसर्गयोग्यत्वे तेन शब्देन एकज्ञानविषयतायोग्यत्वे तदनुपलम्भेऽपि अत्र पतितमुपनयज्ञानमर्यादया नैकज्ञानविषयत्वमसिद्धमित्याह—**अभिमानेति**। निःशब्दा इत्यत्र ध्वंसो निरर्थः। अत्यन्ताभावो वा। संसर्गाभावत्वमात्रम्वा। आद्ये बाधः द्वितीयतृतीययोः साध्यत्वे च उद्देश्यासिद्धिरित्याह—**अत्यन्ताभावस्य चेति**। कालाऽनियमात्। कालो नियतो यस्य 25 स तथा प्रकृते च ध्वंस एव तद्भिन्नत्वात् अत्यन्ताभावस्य तथा च नोद्देश्यसिद्धिरितिभावः।

ननु भेर्यादौ साध्यमानः शब्दध्वंसो नभस्येव सेत्स्यति इत्याह **स्यादेतदिति**। शब्दवदाकाशस्य शब्दवत्तायामिति यावत्, उपाधयः। अवच्छेदकाः। तेन तदवच्छिन्ना-

धारतानिरूपकत्वेन तेषु भेर्यादिषु तत्रैवाकाश एव अत्र समुचितं दृष्टान्तमाह—सुखादिवदिति—यथा शरीरे विधीयमानं सुखमात्मनि विहितं भवति तत्र च निषिध्यमानं तत्रैव निषिद्धमिति आत्मनि समवायितया विशेषणतया च भासेते सुखतन्निषेधौ तदाधारतावच्छेदकतया च शरीरादि न चात्र तत्संभव इत्याह—तत्रेति। तैरुपाधि-
5 भिरभावस्य शब्दध्वंसस्यानिरूपणात्तेषां तद्रहितत्वादित्यर्थः। ननु अवच्छेदकतासम्बन्धेन तन्नाशस्यापि तद्वृत्तित्वात् तत्र तत्प्रत्ययः स्यादित्यात्राह—निरूपणेति। प्रत्यक्षेणापि भेर्यादिनापि अपिना स्वाभिमतमाकाशादिना निरूपणं समुचितं तथा च दृश्याधारत्व-दृश्यप्रतियोगित्वयोर्द्वयोरेव संभवात् शब्दध्वंसप्रत्यक्ष एवेति सिद्धं नः समीहितमिति भावः। समीहितसिद्धिं विशदयति—नचैवमिति। पारमार्थिकाधिकरणं प्रतियोगि-
10 समवायि अभावस्य ध्वंसस्य। न च तेऽपीति। भेर्यादयः तथा च न पक्षज्ञानमिति भावः। हेतोरिति। व्यवधानकाले एकज्ञानसंसर्गयोग्यत्वगर्भहेतोरसिद्धितया तद्वत्तयाऽनुपलभ्य-मानत्वमेव हेतुकार्यं तच्चानवच्छेदकीभूतघटादावनैकान्तिकमित्यर्थः। अभाव प्रतीतिकाल इति। तथा च इदानीं शब्दध्वंसवती वीणेति व्यवहारो न स्यात्तदानीं वीणावर्तमान-त्वस्य सन्दिग्धत्वादिति भावः। ननु श्रोत्रोपलम्भविषयत्वेन हेतुर्विशेष्यः तेन घटादौ न
15 व्यभिचार इत्याशंक्य निषेधति—उपलभ्यमानत्वेति। इन्द्रियव्यवधानादित्युपलक्षणम्। श्रोत्रायोग्यत्वादित्यपि बोध्यम्। शब्देऽनैकान्तिकं चेति ध्येयम्। भवतु यत्रावच्छेदक संभवस्तत्र यथा तथा यत्र तु न तत्संभवस्तत्र तत्कथमित्यभिप्रेत्याहापि चेति। तत्र तदानीमधिकरणप्रत्यक्षासंभवादिति भावः। यद्यपि द्वितन्तुकादिपटस्य एकतन्तुनाशाद्यत्र नाशस्तत्राधिकरणान्तरे पटध्वंसस्य प्रत्यक्षसिद्धतया तद्व्यक्त्यनधिकरणकालवृत्ति-
20 तद्व्यक्तिसमवेतनाशं प्रति तद्व्यक्तिनाशस्य कारणत्वं नाशक्यकल्पनम्। तथापि यत्र नैवम् दर्शनन्तत्र तद्व्यक्तिसमवेतनाशं प्रति तदकल्पनात् तदभिप्रायकोऽयं ग्रन्थः। वस्तुतस्तु तद्व्यक्तिसमवेतस्यरूपादेर्नाशस्य प्रामाणिकत्वे ततस्तदुत्पत्ति घटत्वादिव-द्रूपादेरतथात्वे तु कुतस्तस्मादपि तत्संभव इति भावः। तुल्येति। पटो नाशप्रतियोगी अनुपलभ्यमानत्वादित्याद्यसिद्धम् तन्त्ववयवः पटनाशवानतद्वत्तयाऽनुपलभ्यमान-
25 त्वादिति च बाधितमनैकान्तिकं च यन्नाशात्पटस्य नाशस्तस्यापि पक्षत्वे तत्तथेत्यादि शब्दध्वंसग्राहकमानमेव द्रष्टव्यमित्यर्थः। तत्तद्विद्यमानेष्वेव तन्तुषु। एतस्येति। तर्कस्य स्वातन्त्र्येणाप्रमाणत्वादितिभावः। यदत्रोपलभ्यतइति। अंशवः। अंश्वादिकमित्यर्थः। कार्यपरम्पराभाववत् स्वप्रयोज्याभाववत्। योग्यस्येति। योग्यताविशिष्टानुपलब्धेरित्यर्थः। अत्रात्यन्ताभावमादायार्थान्तरमाह—तन्त्ववयवानामिति। पटानाधारत्वे पटसंस-

र्गाभावत्वे बाधितत्वादिति। अनैकान्तिकस्याप्युपलक्षणम्। तस्य ध्वंसस्य प्रतियोगिकारणं तत्समवायिदेशत्वादित्यनेन दैशिकविशेषणताविशेषेण तथात्वलाभः। तेन कालिकविशेषणतयाऽन्यत्र वृत्तावपि न क्षतिः। ननु पटध्वंसवत्तन्तुनाशः साध्यस्तत्रपटध्वंसस्य विशेषणतया विशिष्टसिद्धात्। तदपि तत्र सिध्यतीत्याशंक्य निषेधति—य इति। तन्त्विति। तथा च साध्यासिद्धिरितिभावः। तद्वृत्तानुपपत्तेः। पटध्वंसवत्ताया 5 अत्यन्तानुपपत्तेः। योग्यतामात्रसाधने पटध्वंसयोग्य तन्तुनाशस्यसाधने तस्य योग्यतामात्रस्य पटनाशानाशयोः समानत्वात् शंकते। अनन्देति। विशेषणानामित्यस्यापीति शेषः। विशेषणत्वेन च विशेष्यान्वयिना तादृशनिषेधेनाप्यन्वयो लब्धः। विशिष्टनिषेधप्रतीतेराकारमाह गुणेत्यादि तथापीति। तथा च बाधादेरविशेषणत्वं न तेषामिति भावः। भ्रान्तिरिति। न च ततोऽर्थसिद्धिरितिभावः। भ्रमत्वमुपपादयति—तस्येति। पटा- 10 दिध्वंसस्यांशुवृत्तित्वादित्यर्थः। आश्रयावच्छेदकतया गुणकर्माद्याश्रयतया तेषामंश्वादीनामदूरविप्रकर्षेण तादृशपरम्परासम्बन्धेन तद्देशत्वं। तन्तुसमवेतगुणाद्याधारत्वं। ननु तथापि तेषां प्रतियोगिसमवायित्वाभावात् कथं तत्र ध्वंसनिरूपणमित्यत्राह—एवम्भूतेनापीति। प्रतियोगिसमवायिभिन्नेनापीत्यर्थः। तन्निरुपणयोग्यताया ध्वंसविशिष्टज्ञानस्याव्यभिचारात्। अभ्रान्तत्वात्। केचित्तु तन्निरूपणयोग्यताया ध्वंसप्रत्यक्षस्याव्यभिचारात् अन्वयव्यतिरेक 15 सिद्धत्वादित्यर्थ इत्याहुः। तेषां विनेन्द्रियसम्बन्धविशेषणतादिकमभावप्रत्यक्षं दुरुपपादमिति अत्र प्रतिभाति। पक्षधरमिश्रास्तु वायुस्पर्शध्वंसस्य कालिकविशेषणतयापि प्रत्यक्षमभ्युपगतवन्तः प्रकारान्तरेणापि प्रतियोगिसमवायिभिन्नेनापि एतावता प्रतियोगिसमवायि भिन्नस्यापि प्रतियोग्यधिकरणत्वं स्वाधिकरणत्वञ्च व्यवस्थापितम्। तथा च ध्वंसादिप्रत्यक्षे भवतु प्रतियोग्यधिकरणत्वे सति यत् स्वाधिकरणं तत्प्रत्यक्षं हेतुस्तादृशं च वीणादिकमे- 20 वेति शब्दध्वंसप्रत्यक्षमप्रत्यूहमेवेति सिद्धम्। एकदेशिमतं निरस्य योग्यप्रतियोगिकस्यैवाभावस्य फलोपधाने नियमाकमाह—तस्मादिति। तं प्रतियोगिनं तद्व्याप्यञ्च। तथा च प्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भकतावच्छेदका यावन्तः प्रत्येकं यत् तदवच्छिन्नसमवधानमनुपलब्धौ योग्ततेति निरुक्तं भवति। प्रतियोगिनम् तत्सन्निकर्षञ्च विनैवाभावोपलब्धेरुक्तमितरदन्तं यावत्त्वोपादानात् नान्धकारे घटाभावप्रत्यक्षं चाक्षुषं तच्चाक्षुष- 25 प्रत्यक्षहेतोरालोकसमवधानस्य तत्रासत्वात्। ननु सन्निकर्षस्य प्रतियोगिव्याप्यतादैशिकी कालिकी वा। नाद्यः न हि यत्रेन्द्रियसन्निकर्षस्तत्र प्रतियोगी व्यभिचारात्, अत एव नान्योऽपि। न च यदा प्रतियोगिवृत्तिरिन्द्रियसन्निकर्षस्तदा प्रतियोगीति वाच्यं। प्रतियोगिनाशानन्तरमपि विनश्यदवस्थस्य तत्संयोगस्य विद्यमानत्वेन व्यभिचारताद-

वस्थ्यात् । अविनश्यदवस्थत्वेन विशेषणेऽपि समवायात्मकसन्निकर्षस्य प्रतियोग्यनधिकरण-
कालेऽपि सत्त्वात्तथा न च यदा प्रतियोगिवृत्तित्वविशिष्टस्तदा **प्रतियोगीति** तदर्थः ।
प्रतियोगिवृत्तित्वविशिष्टस्यैव व्याप्यत्वे इतरांशस्य व्यर्थत्वात् । न च व्याधिकरणेन
समवधानादेरध्यक्षविशेषणत्वेऽपि व्याप्यत्वमक्षतमिति वाच्यम् । एवं सत्यालोकादेरपि
5 तद्वृत्तित्वविशिष्टस्य तद्व्याप्यतया विनापि तत्समवधानम् घटाभावादेश्चाक्षुषत्वप्रसङ्गः ।
अतएव प्रतियोगिघटितप्रत्यासत्त्या यस्योपलम्भकत्वमिति तद्व्याप्यार्थमित्यपास्तम् ।
आलोकस्यापि तथात्वात् । अपि च कुत्रालोकसमवधानमपेक्षितम् । यत्र कुत्रापिचेदति-
प्रसङ्गः । अभावेचेदसंभवः । यत्राभावः प्रत्येतव्यस्तत्र चेत् , रूपादौ घटाभावादेरध्यक्षता-
नुपपत्तिः । तत्र संयोगेन तत्समवधानासंभवात् । न च यत्राभावः प्रत्येतव्यस्तज्जातीये
10 येन सम्बन्धेनालोकसमवधानं हेतुस्तेन तत्र तदुपधानं वाच्यम् । अतएवोद्भूतरूपमहत्त्वा
देरपि रूपादौ सामानाधिकरण्येनेति साम्प्रतम् । वाय्वादौ घटाभावादेरप्रत्यक्षत्वापत्ति-
स्तत्रोद्भूतरूपासमवधानात् । न चेष्टापत्तिः तत्रोद्भूतरूपाभावस्यानध्यक्षतापत्तेः ।
उद्भूतत्वस्य तत्साक्षात्कारहेतोस्तत्रासमवधानात् । प्रतियोगिघटितप्रत्यासत्त्या तस्य
तद्धेतुत्वात् । तदपि तद्व्याप्यमिति चेत् । न । विनापि आलोकं घटाभावादेरध्यक्षतापत्ते-
15 रुक्तत्वात् । किंचैवमाश्रयनाशजन्यसंयोगनाशस्यापि अप्रत्यक्षत्वप्रसंगः । प्रतियोगिप्रत्यक्षस्य
हेतोर्यावत्तदाश्रयप्रत्यक्षस्य तत्रासत्त्वात् एवं प्रतियोग्युपलम्भप्रागभावं विनापि तन्न स्यात्
तस्यापि तत्र हेतुत्वात् । यत्तु तदुपलम्भं प्रत्यसाधारणत्वमेव तद्व्याप्यत्वेनोक्तमिति तत्तु
दुर्वचतयोपेक्षितम् । अत्र वदन्ति विनापि यदुपलम्भकं यदभावोपलम्भो दृश्यते तदेव
तत्तद्व्याप्यपदेनाभिधातव्यम् । उक्तैक्यं च नोपादेयमनुभवातिक्रमे चोपेक्षणीयत्वमेवेति दिक् ।

20 सा योग्यताविशिष्टानुपलब्धिः सती चेत् फलाव्यवहितप्राक्कालवृत्तिश्चेत् तदा
प्रत्यक्षेणेन्द्रियेणाभावो निरूप्यते इत्यनुषज्यते । यदि च सती ज्ञाता च तदापि समानविषये
प्रत्यक्षसामग्र्या बलवत्त्वात् प्रत्यक्षेणैवेत्यत **उक्तमसत्येवेति** । यथा प्राङ्नास्तिता-
स्थलेऽनुमानादिनेत्यादिपदादाप्तोपदेशग्रहणमिति प्रकाशः । तत्र ज्ञातानुपलब्धेः व्याप्य-
वद्विशेष्यकत्वलक्षणप्रामाण्यव्याप्यदर्शनसत्त्वात् अप्रामाण्यशंकाव्युदासे उपयोगः ।

25 वस्तुतस्तु आदिपदात् संशयोत्तरप्रत्यक्षकारणपरिग्रहो ध्येयः । एतेन विनाप्यधि-
करणमभावप्रत्यक्षताव्युत्पादने सद्भ्यामित्यादिशास्त्रस्य यो विरोधः स परिहृतः परिहार
विषयो वोद्धव्यः । अग्रिमविशेषविषयत्वव्यवस्थापनेनेत्यर्थः । सद्भ्यां प्रामाणिकाभ्यां
प्रतियोग्यधिकरणाभ्यां तृतीया च विशेषणे तच्च विषयतया प्रतियोग्यधिकरणविशिष्ट-
निरूपणकर्मत्वमभावस्येति सिद्धम् । नैकेन नैकमात्रेण । यद्वा ज्ञानजनकत्वमेव तृतीयार्थः ।

तथा च प्रतियोग्यधिकरणज्ञानजन्यत्वं निरूपणे लभ्यते। **उभयेति**। आश्रयनिरूपणाधीन-निरूपणविषयो यत्र प्रतियोगी संयोगादिरूपः तत्र तज्ज्ञानार्थमधिकरणज्ञानमुपयुज्यत इत्यर्थः। वस्तुतो घटपटसंयोगो नास्तीत्याकारप्रत्यये प्रतियोगिकोटिप्रविष्टतयाधिकरणधी-नियम इत्यर्थोऽवसेयः। **अनुमानेति**। यत्राधिकरणं पक्षीकृत्याभावोऽनुमीयते तत्र पक्षज्ञान-तया तज्ज्ञानमुपयुज्यत इत्यर्थः। अन्यथा तत्राधिकरणाज्ञाने। **आश्रयासिद्धीति**। पक्षाज्ञान- 5 प्रसङ्गादित्यर्थः। न ग्रहणनियमः। नाधिकरणप्रत्यक्षनियमः। एवमग्रेऽपि। तद्विनाशः। तस्य तत्त्वज्ञानस्य मिथ्याज्ञानं विनाश्यनन्तरं **विनाश इति** अत्रवह्नि विनाशं नोदाहरेत् असिद्धत्वात्। वह्निविनाशस्य दार्व्यविनाशस्यचानिश्चयात्। तदेव व्युत्पादयति-**नहीत्यादि**। तासां तदवयवपरम्पराणां ध्वंसप्रत्यक्षात्प्राक्काले अनिरूपणात्। असत्त्वेनाप्रत्यक्षात्। **नापीति**। वह्निरेतन्निष्ठध्वंसप्रतियोगी एतद्विभागानुकूलक्रिया- 10 शून्यत्वे सति अत्रैव प्रागुपलब्धत्वे च योग्यताविशिष्टे तदनुपलम्भत्वात् अनुमेय इत्यर्थः। पारिशेष्यादिति च तत्तद्व्यभिचारवारकविशेषणवैशिष्ट्यबोधनाय दूषयति—**हेतोरेवेति**। तदानीं वह्नेरप्रत्यक्षतया तत्र क्रियाशून्यत्वतादृशोपलम्भरहितत्वयोः ग्रहत्वात् तव मत इति च शेषः। आश्रयस्य वह्नेस्तदानीमनुपलब्धेरप्रत्यक्षत्वात्। **नापीति**। वह्नितदवयवपरम्परा इदानीं ध्वंसप्रतियोगिनी नष्टनिमित्तत्वात् द्वित्ववदित्यर्थः। **सर्वमिद-** 15 **मिति** वह्नितदवयवपरम्परायाश्च नाशो गमनाभावश्चेति सर्वमत्र चावयवनाशो गमना-भावश्च सम्भवाभिप्रायेण साध्यते तेन प्रकृते तु तदभावेऽपि न क्षतिरिति ध्येयम्। तस्य नष्टनिमित्तकत्वस्य तेजसा तेजस्त्वेन विशेषितत्वात्। उत्तहेतोरिन्धनविनाशात्। अनिमित्तीभूतेन्धननाशाव्यवहितोत्तर**मवश्यमिति** तेन क्वचित्तथाभावेऽपि हेतुरनैका-न्तिकएवेति भावः। द्रव्यनाशं प्रति समवायिनाशादेः कारणत्वेन कल्पनात् तं विना न 20 तदुत्पत्तिरिति तत्समवायिनाशस्तत्रावश्यं वक्तव्यः। निरुपाधिसहचारबलाच्च ग्राह्या व्याप्तिः। न च तथा सम्भवः। विना प्रतियोगिसमवायिकारणप्रत्यक्षं तद्ध्वंसस्य तव मते साक्षात्काराभावेन सहचारादर्शनादित्याह—**प्रत्यक्षेति**। निमित्तादिनार्द्धदग्धे-न्धनादिनेति केचित्। प्रकाशकृतस्तु—अवयवपरम्परानाशाद्यत्र घटस्य नाशस्तत्र हेतुः भूतले घटो नष्ट इति प्रत्यायाद् भूतलादिनेति पर्यवसन्नम् व्याख्यातवन्तः। आदिपदात् 25 अनिमित्तीभूततादृशभूतलपरिग्रह अत एव यत एव देशान्तरेणापि ध्वंसनिरूणम् भावत्वं उद्भूतानभिभूतरूपाणि यावन्ति तेजांसि तेषां तद्वृत्तित्वावच्छिन्नप्रतियोगिताकसंसर्गाभाव एव तमः। तादृशः **क्वचिन्नाशोऽपीति**। स च प्रतियोगिसमवायिप्रत्यक्षं विना न प्रत्यक्ष इति प्रत्यक्षत्वविरुद्धधर्माध्यासेन तथाभ्युपगमो विरुद्ध इत्यर्थः। यद्यपि तत्र ध्वंसानिरूपणात्

अविरोधितयाऽत्यन्ताभावस्यैव तत्र सम्भवस्तथापि तिमिरप्रत्यक्षकाले पूर्वं यत्तेजः तत्रासीत्। तदत्यन्ताभावस्य तत्रासंभवेन तत्संयोगध्वंसोऽपि तिमिरघटकोऽनायत्या वाच्यः न तत्प्रति-योगिसमवायिनोऽपि तदानीमध्यक्षमस्तीति हृदयम् ।

एकदेशिनस्तु तादृशतेजःसामान्याभावमेव तिमिरमुपगच्छन्ति । व्याख्यातः प्रतियोगिसमवायिनः प्रत्यक्षं विनापि प्रत्यक्षविषयतया व्याख्यातः । एतच्चाग्निमानित्यानुमान-हेतुसिध्यर्थमुपयोक्ष्यते ।

एवं स्थिते अनुमानमप्युच्यते । शब्दोऽनित्यः उत्पत्तिधर्मकत्वाद् घटवत् । न चेदं, प्रत्यभिज्ञानबाधितम् । तस्य ज्वालादिप्रत्यभिज्ञानेनाविशेषात् । नैवमबाधि-तस्य तस्य स्वतः प्रमाणत्वादिति चेत्, तुल्यम् । ज्वालायां तन्नास्ति, विरुद्धधर्माध्यासेन बाधितत्वात्, अन्यथा भेदव्यवहारविलोपप्रसङ्गो निमित्ताभावात्, आकस्मिकत्वे वा अतिप्रसङ्ग इति चेत्, तुल्यम् । शब्देऽपि तीव्रतीव्रतरत्वमन्दमन्दतरत्वादेर्भावात् तदिह न स्वाभाविकमिति चेन्न । स्वाभाविकत्वावधारणन्यायस्य तत्र तत्र सिद्धस्यात्रापि तुल्यत्वात् । न ह्यपां शैत्यद्रवत्वे स्वाभाविके तेजसो वा औष्ण्यभास्वरत्वे इत्यत्रान्यत् प्रमाणमस्ति प्रत्यक्षाद्विना । तत्तथैव युज्यते, अन्यस्योपाधेरनुपलम्भान्नियमेन तद्गत-त्वेन चोपलम्भादिति चेत्, तुल्यमेतत् । तथाप्यतीन्द्रियान्यधर्मत्वशङ्का स्यादिति चेत्, एतदपि तादृगेव । तत् किं यद्गतत्वेन यदुपलभ्यते, तस्यैव स धर्मः ? ।

नन्वेवं पीतशङ्खो, रक्तः स्फटिको, नीलः पट इत्यपि तथा स्यादविशेषात् । न । पीतत्वादीनामन्यधर्मत्वस्थितौ शङ्खादीनां च तद्विरुद्धधर्मत्वे स्थिते जवाकुसुमाद्यन्व-यव्यतिरेकानुविधानाच्च बाधेन भ्रान्तत्वावधारणात्, न चेह तारतारतरत्वादेरन्यधर्मत्व-स्थितिः । नापि शुकसारिकादिगकाराणां तद्विरुद्धधर्मत्वं, नाप्यन्यस्य तद्धर्मिणो-ऽन्वयव्यतिरेकावनुविधत्ते । तथापि शङ्का स्यादिति चेत्? एवमियं सर्वत्र । तथा च न क्वचित् किञ्चित् कुतश्चित् सिद्ध्येत् । न चैतच्छङ्कितुमपि शक्यते । अप्रतीते-संस्काराभावात् । संस्कारानुपनीतस्य चारोपयितुमशक्यत्वात् । न च ध्वनिधर्मा एव-गृह्यन्ते । स्पर्शाद्यनन्तर्भावेण भावेषु त्वगादीनामव्यापारात् । न च श्रवणेनैव तद्ग्रहणम् । अवायवीयत्वेन तस्य वायुधर्माग्राहकत्वात् चक्षुर्वत् तारतारतरत्वादयो वा न वायुधर्माः श्रावणत्वात् कादिवत् । वायुर्वा न श्रवणग्राह्यधर्मा मूर्त्तत्वात् पृथिवीवत् । यदि च नैवं, कादीनामपि वायवीयत्वप्रसङ्गः । ततः किम् ? अवयविगुणत्वेऽ-नित्यत्वम्, परमाणुगुणत्वेऽग्रहणम्, द्वयमप्येतदनिष्टं भवतः । अवश्यञ्च श्रवसा ग्राह्यजातीयगुणवता भवितव्यम्, बहिरिन्द्रियत्वाद् घ्राणादिवत् । सन्तु ध्वनयोऽपि नाभसाः, तथा च तद्धर्मग्रहणं श्रवसोपपत्स्यत इति चेन्न । तारस्तारतरोवाऽयङ्गकार इत्यत्र ध्वनीनामस्फुरणात् । न च व्यक्त्या विना सामान्यस्फुरणम् । कारणाभावात् । व्यक्तिस्फुरणसामग्रीनिविष्टा हि जातिस्फुरणसामग्री । कुत एतत् ? अन्वयव्यतिरेका-भ्यां तथाऽवगमात् । ऐन्द्रियकेष्वेव घटादिषु सामान्यग्रहणात्, अतीन्द्रियेषु च मनःप्रभृतिष्वग्रहणात् । स्वरूपयोग्यतैव तत्र निमित्तम्, अकारणं व्यक्तियोग्यतेति

चेत् । एवं तर्हि सत्ता द्रव्यत्वपार्थिवत्वादीनां स्वरूपयोग्यत्वे परमाण्वादिष्वपि ग्रहणप्रसङ्गः । अयोग्यत्वे घटादिष्वपि तदनुपलम्भापत्तिरिति दुरुत्तरं व्यसनम् । तस्माद् व्यक्तिग्रहणयोग्यताऽन्तर्गतैव जातिग्रहणयोग्यतेति तदनुपलम्भे जातेरनुपलम्भ एव । तथा च न तारत्वादीनामारोपसम्भव इति स्वाभाविकत्वस्थितौ विरुद्धधर्माध्यासेन भेदस्य पारमार्थिकत्वात् प्रत्यभिज्ञानमप्रमाणमिति न तेन बाधः ॥ 5

नापि सत्प्रतिपक्षत्वम् । मिथो विरुद्धयोर्वास्तवतुल्यबलत्वाभावात् । एकस्यान्यतमाङ्गवैकल्यचिन्तायामस्य वैकल्ये तस्यैवोद्भाव्यत्वात्, अवैकल्ये त्वदीयेनैव विकलेन भवितव्यमिति हीनस्य न सत्प्रतिपक्षत्वम् । तथापि नित्यः शब्दोऽद्रव्यद्रव्यत्वादित्यत्रापि साधनदशायां किञ्चिद्वाच्यमिति चेदसिद्धिः । द्रव्यं शब्दः साक्षात्सम्बन्धेन गृह्यमाणत्वाद् घटवदिति सिद्ध्यतीति चेन्न । एतस्याप्यसिद्धेः । न हि श्रोत्रगुणत्वे, 10 द्रव्यत्वे वाऽसिद्धे साक्षात्संबन्धे शब्दस्य प्रमाणमस्ति । परिशेषोऽस्ति । तथा हि । सदाद्यभेदेन सामान्यादित्रयव्यावृत्तौ, मूर्त्तद्रव्यसमवायनिषेधेन कर्मत्वनिषेधाद् द्रव्यगुणत्वपरिशेषे संयोगसमवाययोरन्यतरः संबन्ध इति चेन्न । बाधकबलेन परिशेषे द्रव्यत्वस्यापि निषेधाल्लिङ्गग्राहकप्रमाणबाधापत्तेः । बाधके सत्यपि वा द्रव्यत्वाप्रतिषेधे, कर्मत्वादीनामप्यप्रतिषेधप्रसक्तौ परिशेषासिद्धेः, तस्मादेकदेशपरिशेषो 15 न प्रमाणं, सन्देहसङ्कोचमात्रहेतुत्वात् । अथ द्रव्यत्वे किं बाधकम्? उच्यते, शब्दो न द्रव्यं, बहिरिन्द्रियव्यवस्थाहेतुत्वात्, रूपादिवदिति परिशेषाद् गुणत्वेन समवायिसिद्धौ, लिङ्गग्राहकप्रमाणबाधितत्वाद्, नाव्यवहितसंबन्धग्राह्यत्वेन द्रव्यत्वसिद्धिः । न चासिद्धेन सत्प्रतिपक्षत्वम् । असिद्धस्य हीनबलत्वात् ।

ननु शब्दस्तावदश्रोत्रगुणो नैवेति त्वयैव साधितं प्रबन्धेन । न च श्रोत्रगुणः, 20 तेन गृह्यमाणत्वात्, यद् येनेन्द्रियेण गृह्यते नासौ तस्य गुणः, यथा गृह्यमाणो गन्धादिः । श्रोत्रं वा न स्वगुणग्राहकम्, इन्द्रियत्वाद् घ्राणवदिति न गुणत्वसिद्धिरिति चेत् । ततः किम्? । न चैतदपि । घ्राणादिसमवेतगन्धाद्यग्रहे स्वगुणत्वस्याऽप्रयोजकत्वात् । अयोग्यत्वं हि तत्रोपाधिः । अन्यथा, सुखादिर्नात्मगुणः, तेन गृह्यमाणत्वाद् रूपादिवत् । न वा तेन गृह्यते, तत्समवेतत्वाददृष्टवत् । आत्मा वा न 25 तद्ग्राहकः, तदाश्रयत्वाद्, गन्धाद्याश्रयघटादिवदित्याद्यपि शङ्केत । तस्मात् स्वगुणः परगुणो वाऽयोग्यो न गृह्यते, गृह्यते तु योग्यो योग्येन, तत् किमत्राऽनुपपन्नम् । अवश्यञ्च श्रोत्रेण विशेषगुणग्राहिणा भवितव्यम् । इन्द्रियत्वात् । अन्यथा तन्निर्माणवैयर्थ्यात्, तदन्यस्येन्द्रियान्तरेणैव ग्रहणात् । न च द्रव्यविशेषग्रहणे तदुपयोगः । विशेषणयोग्यतामाश्रित्यैवेन्द्रियस्य द्रव्यग्राहकत्वात्, न द्रव्यस्वरूपयोग्यतामात्रेण । 30 अन्यथा चान्द्रमसं तेजः स्वरूपेण योग्यमिति तदप्युपलभ्येत । आत्मा वा मनोग्राह्य इति सुषुप्त्यवस्थायामप्युपलभ्येत । अनुद्भूतरूपेऽपि वा चक्षुः प्रवर्त्तेत, तस्माद् गुणयोग्यतामेव पुरस्कृत्येन्द्रियाणि द्रव्यमुपाददते, नातोऽन्यथेति स्थितिः । अतएव नाकाशादयश्चाक्षुषाः ।

अस्तु तर्हि शब्दो नित्यः, नित्याकाशैकगुणत्वात्, तद्गतपरममहत्परिमाणवदिति प्रत्यनुमानमिति चेन्न । अकार्यत्वस्योपाधेर्विद्यमानत्वात् । अन्यथा, आत्मवि- 35

शेषगुणा नित्याः, तदेकगुणत्वात्, तद्गतपरममहत्त्ववदित्यपि स्यात्। अस्य प्रत्यक्ष-बाधितत्वादहेतुत्वमिति चेन्न। निरुपाधेर्बाधानवकाशात्। स्वभावप्रतिबद्धस्य च तत्परित्यागे स्वभावपरित्यागप्रसङ्गात्। तस्माद् बाधेन वोपाधिरुन्नीयते, अन्यथा वेति न कश्चिद्विशेषः।

5 एतेन श्रावणत्वाच्छब्दत्ववदित्यपि परास्तम्। अत्रापि तस्यैवोपाधित्वात्। अन्यथा गन्धरूपरसस्पर्शा अपि नित्याः प्रसज्येरन्। घ्राणाद्येकैकेन्द्रियग्राह्यत्वाद् गन्धत्वादिवदित्यपि प्रयोगसौकर्यात्।

आमोद

**एवमिति**। प्रत्यक्षतस्तावच्छब्दानित्यत्वं साधितमनुमानेनापि साध्यत इत्यर्थः। **उत्पत्तिमत्त्वादिति**। सत्तावच्छिन्नप्रागभाव प्रतियोगित्वादित्यर्थः।
10 नाशकत्वाभिमतशब्दान्तरसत्त्वेऽपि स एवायं गकार इति प्रत्यभिज्ञानं नित्यत्वविषयकमित्यनुमानेनानुमानं बाधितमित्याह—**न चैतदिति**। प्रत्यभिज्ञानस्य विरुद्धधर्मसंसृष्टत्वेन भ्रान्तत्वमित्याह—**तस्येति**। **अत एवेति**। अप्रामाण्यशङ्काविरहादित्यर्थः। शब्दे विरुद्धधर्मसंसर्गो नास्ति ज्वालायां तु विरुद्धपरिमाणयोगोऽस्तीति न तुल्यतेत्याह—
15 **ज्वालायामिति**। **अन्यथेति**। यदि विरुद्धधर्माध्यासेनापि भेदो न स्यादित्यर्थः। **निमित्तेति**। भेदव्यवहार **निमित्तेति** भेदव्यवहारनिमित्तस्य विरुद्धधर्मसंसर्गस्याभावादित्यर्थः। ननु कस्मादेव भेदव्यवहारः स्यादत आह—**आकस्मिकत्व इति**। **तुल्यमिति**। गकारेऽपि विरुद्धधर्मसंसर्गस्य सत्त्वादित्यर्थः। **तदिति**। तीव्रमन्दत्वादिकमित्यर्थः। अवधारणन्यायमेवाह—**नहीति**।
20 अत्रापि तीव्रमन्द इत्यनुभवसत्त्वादित्यर्थः। **तत्तथैवेति**। औष्ण्यादिकं स्वाभाविकमेवेत्यर्थः। **तथापीति**। यद्यपि नान्य उपाधिरुपलभ्यत इत्यर्थः। **एतदपीति**। औष्ण्यादिकमपीत्यर्थः। ननु प्रकृतेऽपि ध्वनिधर्मा एव तारत्वादयः स्युरित्यत आह—**न चेति**। शुकेत्यादिना तदनुमापकजातिभेदोऽपि तारत्वाद्यतिरिक्तोऽस्तीति सूचितम्। **शङ्का स्यादिति**। अननुभूयमानधर्म्य-
25 न्तरशङ्का स्यादित्यर्थः। **एवमिति**। अनया शङ्कया चार्वाकमते क्वचित् किञ्चिन्न सिद्ध्येदित्यर्थः। अननुभूतधर्मिधर्मशङ्काकोटिस्मरणं चानुभवाधीनम्, अनुभवश्च नास्त्येवेत्याह—**न चेति**। ननु ध्वनिरूपस्य वायोरेव-धर्मास्तारत्वादयः शब्दे समारोप्यन्तामित्यत आह—**नचेति**। त्वचा गृह्य-

माणस्य वायुधर्मस्यारोपे दोषमाह—**स्पर्शादीति**। **अवायवीयत्वेनेति**। अवायवीयबहिरिन्द्रियत्वेनेत्यर्थः। वायुधर्मा वायुमात्रधर्माऽतो न सत्तादिना व्यभिचारः। **न वायुधर्मा** इति न वायुमात्रधर्मा इत्यर्थः। **श्रावणत्वादिति** श्रोत्रमात्रबहिरिन्द्रियग्राह्यत्वादित्यर्थः। **न श्रोत्रमात्रग्राह्यधर्मेति**। न श्रोत्रग्राह्येतरजातिमानित्यर्थः। **यदि चेति**। यदि वायवीयोऽपि धर्मः श्रोत्रग्राह्यः 5 स्यादित्यर्थः। **ततः किमिति**। **सांख्यमतमाश्रित्य शङ्का**। आद्यमनिष्टं भवत एव उत्तरं तु द्वयोरपीत्यर्थः। ननु वायवीयेनैवेन्द्रियेण वायुधर्मास्तारत्वादयः गृह्यन्तां को दोष इत्यत आह—**अवश्यमिति**। श्रोत्रं तावन्नाभसमित्युभयसिद्धम्। तेनावश्यं ग्राह्यजातीयविशेषगुणवता भाव्यम्। स च गुणः शब्द एव। तत्रैव तारत्वादिकं गृह्यत इत्यर्थः। श्रोत्रस्य नाभसत्वे 10 प्रमाणमिदमित्येके। **नाभसा** इति नभो गुणा इत्यर्थः। **तारो गकार** इति वर्णात्मक एव शब्दो गृह्यते, न तु ध्वन्यात्मक इत्याह—**तार इति**। **कारणाभावादिति** व्यक्तिग्रहकारणानामेव जातिग्राहकत्वात्तानि चात्र सन्तीत्यर्थः। तदेवाह—**व्यक्तीति**। **कुत एतदिति**। व्यक्तिभानेऽपि सामान्याग्रहात्, अन्यथा गौरयमश्वो वेति संशयो न स्यादिति भावः। **तथावगमा-** 15 **दिति**। जातिग्रहे व्यक्तेरवश्यं भानादित्यर्थः। तथा च प्रत्यक्षेण सामान्ये गृह्यमाणे व्यक्तिभानमावश्यकमिति भावः। यद्वा व्यक्तौ गृह्यमाणायां जातिरवश्यं भासते। तत्पदवाच्यत्वे तु सन्देहः। रत्नत्वे ब्राह्मणत्वेऽस्यैवमेवेति तदनुरूपावेवान्वयव्यतिरेकौ दर्शयति। **ऐन्द्रियकेष्विति**। ननु मनस्त्वं स्वरूपायोग्यमतो न गृह्यते, न तु व्यक्तेरयोग्यतयेत्याशङ्कते— 20 **स्वरूपेति**। **परमाण्वादिष्विति**। परमाण्वादिगतत्वेनेत्यर्थः। **अयोग्यत्व** इति। सत्तादीनामित्यनुषङ्गः। उपसंहरति—**तथा चेति**। प्रत्यभिज्ञानमप्रमाणमिति। यदि व्यक्तेरभेदं गृह्णाति तदेवम्। यदि च तज्जातीयत्वविषयता तदा भिन्नविषयतया न बाधकत्वशङ्कैवास्तीति भावः। ननु तारत्वमन्दत्वे न जाती सप्रतियोगिकत्वात्। गन्धत्वादिना परापरभा- 25 वानुपपत्तेश्च गन्धादिव्याप्यनानातारत्वाद्यङ्गीकारे वा [चा] नुगतप्रतीत्यनुदयः। जातित्वेऽपि नानयोर्विवादः। य एव गकारस्तार आसीत् स एवायं मन्द इति सामानाधिकरण्यग्रहात्। तारमन्दगकारयोरभिभाव्याभिभावकभावोऽपि नास्तीति येन भेदः स्यात्। किन्तु तद्व्यञ्जकवा-

योरेव तथात्वादिति चेत्, न। इक्षुक्षीरादिमाधुर्यवत्। शुकसारिकामनुष्यप्रभवेषु स्फुटतरवैजात्यानुभवात् कथमन्यथा शुकाद्यनुमानम्? न चैतदुपाधिकम। उपाधेरननुभवात् तारत्वादयोऽपि गत्वादिव्याप्या नाना जातय एव। अनुगतधीस्तु सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वादनुगतादुपाधेः। नचोपाधेरज्ञानेऽपि तदनुगतबुद्धे [रे] वमिति वाच्यम्, स्वाभाविकत्वेनोपाधिस्फुरणावश्यकत्वात्। स्फुरणे वा नानुगतबुद्धिरपि सर्ववर्णसाधारणीति दिक्। तुल्यबलेन सत्प्रतिपक्षे दूषणमाह––मिथ इति। अन्यथा वस्तुनो विरुद्धद्वैरूप्यापत्तेरिति भावः। अस्येति। स्थापनानुमानस्येत्यर्थः। **तस्यैवेति**। वैकल्यप्रयोजकदोषस्येत्यर्थः। ननु यदाऽहमेव स्थापनावादी तदा मयाप्येवं वक्तुं सुकरमिति भट्टः शङ्कते––तथापीति। न विद्यते द्रव्यं समवायिकारणं यस्य द्रव्यस्य तद् द्रव्यद्रव्यं तथा वा समवेतद्रव्यत्वादित्यर्थः। **असिद्धिरिति** तत्र विशेष्यपदं प्रागभावे व्यभिचारवारणाय, विशेषणपदं च घटादौ व्यभिचारवारणाय। असिद्धिरिति वाच्येति शेषः। स च विशेषणविशेष्ययोर्द्वयोरपीति भावः। विशेष्यासिद्धि परिहरति––द्रव्यमिति। गूढाभिसन्धिराह––एतस्यापीति। द्रव्यत्वे श्रोत्रेणाजः संयोगः गुणत्वे च समवाय इति उभयथापि नासिद्धिरित्याह––**सदाद्यभेदेनेति**। सत्तावत्त्वजातिसत्त्वादिनेत्यर्थः। यथा शब्दस्य कर्मादित्वे बाधकमस्ति तथा द्रव्यत्वेऽपि, तथा च गुणत्वमेवास्य परिशेषलब्धम्। तेन गुणत्वे सत्येवास्य साक्षात्सम्बन्धेन गृह्यमाणत्वं लिङ्गं सेत्स्यतीति तद्ग्राहकेण प्रमाणेन द्रव्यत्वमस्य बाधितमित्याह––बाधकबलेनेत्यादि। ननु द्रव्यत्वे बाधकं न गवेषणीयमत आह––बाधक इति। तथा च कर्मत्वेऽपि बाधकं माऽन्विष्यतामिति न परिशेषप्रसिद्धिरित्यर्थः। **सन्देहेति**। द्रव्यत्वगुणत्वकोटिकसन्देहस्य तादवस्थ्यादित्यर्थः। ननु द्रव्यत्वे बाधकमेव नास्तीत्याह––अथेति। बहिरिन्द्रियेति। रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यादिना यच्च जरादीनां तैजसत्वादिव्यवस्थापनं तत्प्रयोजकत्वं हेतुः। रूपत्वादौ च द्रव्यत्वाभावरूपसाध्यसत्त्वादेव न व्यभिचारः। **चक्षुरग्राह्यजातिमत्त्वमनेन** विवक्षितमित्यन्ये। **नाव्यवहितेति**। न साक्षात्सम्बन्धग्राह्यत्वेनेत्यर्थः। **प्रबन्धेन** श्रवसा ग्राह्यजातीयगुणवता न भवितव्यमित्यादिनेत्यर्थः। **तेन गृह्यमाणत्वादित्यत्र** विशेषव्यासौ सत्ता

दृष्टान्तः। सामान्यव्याप्तिमाह—**यद् येनेति**। **ततः किमिति**। **गुणत्वं** प्रासैत्सीत्, द्रव्यत्वमपि भवदभिमतं न सिद्धमित्यर्थः। तत् किं तवापि गुणत्वे विप्रतिपत्तिरित्याह—**न चैतदिति**। प्रथमानुमाने श्रोत्रग्राह्यगुणत्वव्याप्यजातिशून्यत्वस्य, द्वितीयानुमाने चायोग्यगुणवत्त्वस्योपाधित्वादिति भावः। विपक्षबाधकतर्कशून्यं चैतदनुमानद्वयमिति प्रतिवन्दिद्वारेण स्फुटयति—**अन्यथेति**। सुखं नात्मग्राह्यं तत्समवेतत्वादित्यर्थः। **न तद्ग्राहक इति** न सुखग्राहक इत्यर्थः। **किमत्रेति**। श्रोत्रस्य स्वगुणग्राहकत्वे शब्दस्य वा श्रोत्रग्राह्यत्व इत्यर्थः। किञ्च बलवदत्र प्रमाणमस्तीत्याह—**अवश्यश्चेति**। स च विशेषगुणः शब्द एव पर्यवस्यतीत्यर्थः। **अन्यथेति**। यदि शब्दं न गृह्णीयादित्यर्थः। ननु रूपादिग्रहणार्थमेव श्रोत्रनिर्माणं स्यादत आह—**तदन्यस्येति**। ननु शब्दो द्रव्यमेव तद्ग्रहणेन श्रोत्रनिर्माणं सफलं स्यादित्याह—**न चेति**। तर्हि तत्र विशेषगुणेनापि भवितव्यमन्यथा किमुपग्रहेण तद्ग्रहणं स्यादतद्गुणत्वात्, तारत्वादीनां च जातित्वात्। स्फोटस्याप्रामाणिकत्वादिति भावः। **त्वचेति**। अनुद्भूतस्पर्शतया त्वगिन्द्रियस्य तत्राप्रवृत्तेरित्यर्थः। **सुषुप्तौति**। तदानीं योग्यविशेषगुणविरहादेव मनसस्तत्राप्रवृत्तेरित्यर्थः। **अनुद्भूतेति**। उष्मादावित्यर्थः। एतच्च परमते। तन्मते उद्भूतस्पर्शवत्त्वस्यैव योग्यतात्वात्। **तस्मादिति**। शब्देन तादृशः कोऽपि गुणो येन तस्य द्रव्यस्य ग्रहणं श्रोत्रेण भवेत्। तेन गुण एव शब्दः श्रोत्रेण गृह्यत इत्यवश्यमङ्गीकार्यम्। नचाकाशग्रहणे श्रोत्रस्योपयोगः, तस्य नीरूपबहिर्द्रव्यत्वेनाप्रत्यक्षत्वादिति भावः। **अत एवेति**। चक्षुर्योग्यविशेषगुणरहितत्वादेवेत्यर्थः। सत्प्रतिपक्षान्तरं शङ्कते-**अस्त्विति**। **आकाशैकगुणत्वादिति**। आकाशमात्रसमवेतत्वादित्यर्थः। तेन संयोगादौ न व्यभिचारो न वाच्यार्थविशेषणत्वम्। यद्वा, ध्वंसानवच्छिन्नसत्तावत्त्वं नित्यत्वमिह साध्यं, तथा च शब्दप्रागभावध्वंसयोर्विशेषपदार्थे च व्यभिचारवारणार्थं **गुणपदमिति**। वस्तुतस्तु ध्वंसाप्रतियोगित्वमेव साध्यम्। आकाशमात्रवृत्तिश्च हेतौ आकाशे तदा समवेतत्वमात्रं, तथा च प्रागभावे व्यभिचारवारणाय **गुणपदमिति** वदन्ति। **अकार्यत्वस्येति**। न च पूर्वसाधनव्यतिरेकरूपत्वादनुपाधित्वमिति वाच्यम्। साध्यव्यापकतानिश्चयात्। किं च प्रयोगपौर्वापर्यमनियतमिति प्रथमप्रयोगे स्यादेवानु-

पाधीत्युत्तरप्रयोगे तु नायमुपाधिरिति कथं स्यादिति भावः। न चायं साधनव्यापकत्वादनुपाधिः। पक्ष एव तदव्यापकत्वात्। अप्रयोजकत्वमाह—**अन्यथेति**। सुखादीनामनित्यत्वं प्रत्यक्षमिति। प्रत्यक्षबाधितमिदमनुमानमित्याह—**अस्येति**। **उपाधेरिति**। एतच्च पक्षवृत्तिनि साधने।
5 **स्वभावेति** स्वाभाविकः सम्बन्धो व्याप्तिः। स्वाभाविकत्वं त्वनौपाधिकत्वमेव, तथा च उपाधिमन्तरेण स्वाभाविकसम्बन्धविरहो न स्यादित्यर्थः। **एतेनेति**। सोपाधित्वेनेत्यर्थः। ननु कोऽत्रोपाधिरित्यत आह—**तस्यैवेति**। अकार्यत्वस्यैवेत्यर्थः। **सिद्धान्तिमते** शब्दत्वं जातिरिति दृष्टान्तः, न तु **परमते**, तेन शब्दजात्यनङ्गीकारात्। कालश्च न दृष्टान्तः प्राभाकरैस्तस्य
10 षडिन्द्रियवेद्यत्वानभ्युपगमात्। अत्राप्रयोजकत्वमप्याह—**अन्यथेति**।

बोधनी

एवं प्रध्वंसस्य प्रत्यक्षत्वात्प्रध्वंसाभावोपलक्षितवस्तुलक्षणमनित्यत्वं प्रत्यक्षसिद्धमेवेति व्यवस्थिते तत्रानुमानमस्तीत्याह—**एवमिति**। ननु स एवायं गकारेति प्रत्यभिज्ञानेन पूर्वापरकालयोः स्थिरत्वं "तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यती"ति न्यायान्नित्यत्वमपि सेत्स्यति तेनानित्यत्वानुमानं बाधितविषयं स्यादित्याह—**न चेदमिति**। ननु शब्दप्रत्यभिज्ञानस्याबाधितत्वात्स्वतः प्रामाण्याच्च न भ्रान्तत्वमित्याह—**नैवमिति**। तदेतदुभयं
15 ज्वालाप्रत्यभिज्ञानेऽपि तुल्यमित्याह—**तुल्यमिति**। ननु ज्वालाप्रत्यभिज्ञानेऽपि तदबाधितविषयत्वं नास्ति, अपचयोपचयलक्षणविरुद्धधर्माध्यस्तविषयत्वादित्याह—**ज्वालायामिति**। **अन्यथेति**। यदि विरुद्धधर्माध्यस्तस्या[1]पि भेदो न स्यादिति। ततश्च भेदग्राहिविरुद्धधर्मसंसर्गग्राहिणा प्रत्यक्षेणानन्यथासिद्धेन प्रत्यभिज्ञानमन्यथासिद्धं बाध्यत इति चोद्याभिप्रायः। तदेतद्विरुद्धधर्माध्यस्तस्तद्विषयत्वं शब्दप्रत्यभिज्ञानेऽपि
20 तुल्यमित्याह—**तुल्यमिति**। कुत इत्याह—**शब्देऽपीति**। ननु तीव्रादिकमिह शब्दे न स्वाभाविकं व्यञ्जकध्वनिधर्मस्यैव तस्य शब्द आरोप्यमाणत्वादित्याह—**तदिहेति**। **नेति**। यदि हि यतः कुतश्चिन्न्यायाद्यस्य कस्य चिद्धर्मस्य यं कंचिद्धर्मिणं प्रति स्वाभाविकत्वमवधार्येत तर्हि तेनैव न्यायेन तीव्रत्वादीनामपि शब्दं प्रति स्वाभाविकत्वमवधार्यतामिति तमेव न्यायमाह—**नहीति**। तद्धर्मसामानाधिकरण्येन प्रत्यक्षमेव द्रवादिषु
25 शैत्यादीनां स्वाभाविकत्वे प्रमाणं नान्यत्, तदिहापि समानं तीव्रोऽयं गकार इति प्रत्यक्षेण प्रतीतेरिति भावः। शङ्कते—**तत्तथेति**। तद् द्रवत्वादि तथैवाबादीनां स्वाभाविकमिति

---

१. ०ध्यस्तं स्यादि० मु० पाठः।

युक्तं, तद्धर्मकस्यान्यस्योपाधेरनुपलम्भादवादिगतत्वेन च शैत्यादीनामुपलम्भादिति। अन्यस्येति शङ्कोपक्रमः प्रत्यक्षेण प्रतीतेरिति केचित्। तदपि तुल्यं तीव्रत्वादीनामित्याह—**तुल्यमिति**। ननु मा भूदन्यधर्मत्वेनोपलम्भः तीव्रत्वादीनां, तथाऽप्यतीन्द्रियाणां व्यञ्जकध्वनीनां धर्माः स्युरिति शङ्कावकाशः स्यादित्याह—**तथापीति**। तर्हि शैत्यादीनामप्यतीन्द्रियधर्मत्वशङ्का स्यादित्याह—**एतदपीति**। गूढाभिसंधिः पृच्छति—**तत्किमिति**। 5
स एवाभिसंधिमुद्घाटयति—**नन्विति**। तर्हि पीतत्वादीनां शङ्खादिगतत्वेनोपलम्भाचेऽपि तेषां स्वाभाविकाः स्युरिति। **नेति**। पीतत्वादीनां शङ्खादिधर्मत्वे बाधकमस्ति, न तीव्रत्वादीनां शब्दधर्मत्व इति। यथाहुराचार्याः—

'यो ह्यन्यरूपसंवेद्यः संवेद्येतान्यथा पुनः।
स मिथ्या न तु तेनैव यो नित्यमवगम्यते' इति॥ (श्लो० वा०) 10

ननु बाधकादर्शनेन ते स्वाभाविकाः स्युरिति पीतः शङ्ख इत्यादिषु तद्गतत्वेनोपलम्भस्य भ्रान्तत्वोपलम्भादत्रापि शङ्का स्यादित्यत्राह—**तथापीति**। **एवमिति**। साधर्म्यमात्रेण शङ्कायामुष्णोऽग्निरित्यादावपि सा स्यादिति। ततः किमित्यत्राह—**तथा चेति**। क्वचिदपि विशेषाय कुतश्चित्प्रमाणात्कस्य चिद्धर्मिणः कश्चिद्धर्म इति न स्यात्। यद्वा, कस्यचित्प्रमातुः क्विञ्चित्प्रवृत्तिनिवृत्त्यादिकं न सिध्येदिति। तारत्वतारतरत्वादेरन्यत्राननु- 15
भूतत्वान्न तद्विषयः संस्कारः, तदभावे च न तेनोपस्थापनं, न च तदनुपनीतस्यास्मृतस्येति यावदन्यत्रारोपः संभवति, तेन भ्रान्तिज्ञानकारणाभावात् तीव्रत्वादिप्रत्ययानां भ्रान्तत्वशङ्काऽपि न युक्तेत्याह—**न चेति**। न च ध्वनिधर्मत्वेन तेषामस्त्यनुभव इति युक्तं वक्तुम्, तद्धर्मत्वे तेषामग्रहणस्यैव प्रसङ्गादित्याह—**न च ध्वनिर्मेति**। स्पर्शादिनियतविषयाणि त्वगादीन्द्रियाणि, न च तीव्रत्वादेः स्पर्शादिष्वन्तर्भाव इति। तर्हि श्रोत्रेण 20
गृह्यतामित्यत्राह—**न चेति**। न ह्यवायवीयस्य श्रोत्रस्य वायुधर्मतारत्वादिग्राहकत्वं संभवति चक्षुर्वदिति। दृश्यत एव श्रोत्रेण ग्रहणमिति चेत्, तत एव तर्हि न वायुधर्मा इत्याह—**तारतारतरत्वादय इति**। तेषामवायवीयत्व एवानुमानान्तरमाह—**वायुर्वेति**।

तेषां वायुधर्माङ्गीकारेऽनिष्टप्रसङ्गमाह—**यदि च नैवमिति**। श्रोत्रग्राह्याणमेव वायवीयत्वदर्शनादिति भावः। सन्तु कादयो वायवीयाः। उक्तं च—'वायुः शब्दतामा- 25
पद्यत' इत्याशयेन पृच्छति—**ततः किमिति**। उत्तरम्-**अवयविगुणत्व इति**। वायुधर्मा भवन्तः कादयः किमवयविनस्तस्य भवेयुः वायुपरमाणोर्वा; पूर्वत्र कादीनामनित्यत्वप्रसङ्गः, उत्तरत्रेन्द्रियग्राह्यता न स्यात् तद्गतस्पर्शवदिति। न चैवमस्त्विति

वाच्यमित्याह—द्वयमिति । न परं वायुधर्मत्वे बाधकमाकाशधर्मत्वे साधकमप्यस्ति वर्णानामित्याह—अवश्यमिति । सन्त्विति । ततश्च श्रोत्रग्राह्यत्वेन तारत्वादीनां शब्दधर्मत्वसिद्धिरिति । नेति । तारोऽयं ककार इति प्रतीतिस्तत्र, न च तारत्वादिमत्तया ध्वनयः परिस्फुरन्तीति न ते ध्वनिधर्माः किन्तु वर्णधर्मा एवेति भावः । मा भूद् 5 ध्वनीनां स्फुरणं, तथापि तद्धर्माणामेव तीव्रत्वादीनां स्फुरणं भविष्यतीत्यत्राह—न चेति । व्यक्तया विना गृह्यमाणतयेति शेषः । विशेषरूपाणां ध्वनीनां सामान्यात्मानस्तीव्रत्वादयः कथमिव तेष्वगृह्यमाणेषु स्फुरेयुरिति ।

यद्वा, विशेषरूपेण ध्वनीनामस्फुरणेऽपि सामान्यात्मना स्फुरणात्तद्धर्मस्य तीव्रत्वादेर्ग्रहणोपपत्तिरित्याशङ्क्याह—न चेति । कारणाभावमेवाह—व्यक्तीति ।

10 व्यक्तिस्फुरणसामग्र्येकत्वं जातिस्फुरणस्य कुतोऽवधृतमित्याह—कुत एतदिति । उत्तरम्—अन्वयेति । अन्वयव्यतिरेकावेव दर्शयति—ऐन्द्रियकेष्विति । सतीन्द्रिये व्यक्तिग्राहिणि सामान्यग्रहादसति चाग्रहादिति । ननु तत्र सामान्यस्य स्वरूपयोग्यता सदसत्त्वनिमित्तत्वाद् ग्रहणाग्रहणयोरन्यथासिद्धावन्वयव्यतिरेकावित्याह—स्वरूपयोग्यतेति । तद्विकल्प्य दूषयति—एवं तर्हीति । उपसंहरति—तस्मादिति । यस्मा-15 द्व्यक्तिग्रहे सत्येव जातिग्रहणमिति । ततः किमित्यत्राह—तथा चेति । ध्वनिधर्मत्वे तीव्रत्वादीनामग्रहणप्रसङ्गात् न तद्धर्माणामेव तेषां शब्द आरोप इति संभवतीति । किं ततोऽपीत्यत्राह—इतीति । ततश्च तीव्रत्वादेः स्वाभाविकत्वसिद्धौ तीव्रमन्दयोर्गकारयोर्भेदस्य वास्तवत्वेन शब्दप्रत्यभिज्ञानस्याप्रमाणत्वान्न तेनानित्यत्वानुमानबाध इति ।

न च केनापि प्रमाणेन सत्प्रतिपक्षत्वं संभवतीत्याह—नापीति । न तावत्तुल्यबलेन, 20 परस्परविरुद्धयोः सिद्धवस्तुविषययोः प्रमाणयोर्वास्तवतुल्यबलत्वाभावाद् वस्तुनो द्वैरूप्यप्रसङ्गात्, अतोऽन्यतरस्य वैकल्ये तदेव दूषणं वाच्यम् उपजीव्यत्वादस्य वैकल्ये तदा त्वदीयनित्यत्वानुमानं विकलं स्यादिति न तस्य प्रतिपक्षत्वमिति । मा भूद्वस्तुतः समाधिकहीनबलवतः सत्प्रतिपक्षत्वं, तथाप्याभिमानिकतुल्यबलत्वेनानेन सत्प्रतिपक्षत्वोद्भावने सति किञ्चिद् दूषणं तर्कस्य वक्तव्यमित्याह—तथापीति । यद्वा, प्रतिपक्षत्वासम्भवेऽपि 25 स्वपक्षसाधनाय प्रयुक्तेऽस्मिन्नित्यत्वानुमाने किमपि दूषणं वक्तव्यमित्याह—तथापीति । उत्तरमाह—असिद्धिरिति । शब्दस्य द्रव्यत्वमसिद्धमितिय । द्रव्यत्वसिद्धावनुमानमाह—द्रव्यमिति । गुणादिभिरनैकान्तिकता मा भूदित्युक्तं—साक्षादिति । परिहरति—नेति । साक्षात्संबन्धो नाम संयोगः समवायो वा तदन्यतरसिद्धेर्द्रव्यत्वगुणत्वयोरन्यतर-

सिद्ध्यधीनत्वान्न ततः प्राक् साक्षात्सम्बन्धः सिध्यतीति परिशेषानुमानेन तत्सिद्धिमाह—**परिशेष** इति। 'सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' इति (वै० सू० १. १. ८.)। सत्तादिमत्त्वेन सामान्यविशेषसमवायेभ्यो व्यावृत्तस्य मूर्त्तद्रव्यासमवायेन कर्मणोऽपि व्यावृत्तौ द्रव्यत्वगुणत्वयोरन्यतरपरिशेषे साक्षात्संवन्धसिद्धिरिति। तर्हि कर्मत्वादिवद् द्रव्यत्वेऽपि बाधकसद्भावेन गुणत्वस्यैव 5 परिशेषात् साक्षात्संवन्धग्राहिणा परिशेषानुमानेनैव द्रव्यत्वानुमानस्य बाधप्रसङ्ग इत्याह—**नेति**। अन्यथा द्रव्यत्वगुणत्वयोरपि परिशेषो न स्यादित्याह—**बाधक** इति। न चायं परिशेषः प्रमाणं पदार्थषट्कविषयस्य सन्देहस्य द्रव्यगुणविषयत्वे संकोचमात्रहेतुत्वेन संशयादनिस्तारादित्युपसंहरन्नाह—**तस्मादिति**। **अथेति**। येन ततोऽपि परिशेषालिङ्गग्राहकप्रमाणबाधः स्यादिति। तदाह—**उच्यते** इति। द्रव्यत्वासिद्धौ न चासिद्धविशेषणा- 10 द्रव्यद्रव्यत्वादित्यनेन सत्प्रतिपक्षत्वमनित्यत्वानुमानस्येत्याह—**न चासिद्धेनेति**। यद्वा, नास्मत्प्रतिपक्षस्य स्वरूपसिद्धिरिति।

ननु श्रोत्रव्यतिरिक्तानां पृथिव्यादीनां गुणः शब्दो नेति भवद्भिरेव परिशेषानुमानेन साधितम्। वयं तु श्रोत्रगुणो नेति अनुमानद्वयेन साधयामः। ततश्च गुणत्वस्यैवासिद्धौ द्रव्यत्वमेव परिशिष्यत इति। केचित्तु: शब्दः श्रोत्रगुणो नेति पठन्ति। तत्रायमर्थः। 15 महता प्रबन्धेन शब्दस्य श्रोत्रग्राह्यत्वं प्रतिपादयता त्वयैव श्रोत्रगुणो नेति साधितं भवति कथमेतेनैतत्प्रतिपादितं भवेदित्यत्रोक्तं—**न श्रोत्रगुण** इति। न हि श्रोत्रग्राह्यः शब्दः तद्गुणो भवतीति। मा भूद् गुणत्वसिद्धिर्द्रव्यत्वं तु कुतस्त्यमित्याह—**ततः किमिति**। यद्वा, अनुग्राहकतर्काभावेऽनुमानमात्रान्न किञ्चित्सिध्यतीति सोपाधित्वादप्रयोजकत्वं वानुमानद्वयमित्याह—**न चैतदपीति**। स्वगुणत्वस्यैव ग्रहणप्रयोजकत्वेऽनिष्टमाह—**अन्यथे**- 20 **ति**। उपसंहरति—**तस्मादिति**। इन्द्रियत्वहेतोरप्रयोजकत्वायोक्तं—**योग्येनेति**। एवं शब्दस्य गुणत्वे बाधकमाशङ्क्य निरस्तम्। साधकमप्याह—**अवश्यं चेति**। तदर्थस्य श्रोत्रविषयस्य शब्दस्येति। ननु द्रव्यविशेषस्यैव सतः शब्दस्य ग्रहणार्थं श्रोत्रनिर्माणस्तु इन्द्रियान्तराणां तत्रासामर्थ्यादित्यत्राह—**न चेति**। इन्द्रियं द्रव्यगतविशेषगुणग्रहणयोग्यतां सहकारित्वेनाश्रित्यैव द्रव्यं गृह्णाति नान्यथेति। द्रव्यस्य स्वरूप- 25 योग्यतामात्रेणेन्द्रियग्राह्यत्वेऽनिष्टमाह—**अन्यथेति**। उपसंहरति—**तस्मादिति**। **अत एवेति**। यत एव विशेषगुणग्रहणपुरस्कारेणैवेन्द्रियग्राह्यत्वं द्रव्याणामिति शब्दस्य श्रोत्रगुणत्वेनाद्रव्यद्रव्यत्वमसिद्धं तर्हीदमेव प्रतिसाधनमस्त्विति प्राभाकरः प्रत्यवतिष्ठन्ते—**तर्हीति**। **नेति**। अत्राकार्यत्वौपाधिकत्वात्तदेकगुणत्वमप्रयोजकमिति तस्यैव प्रयोज-

क्त्वेऽनिष्टमाह—अन्यथेति। अत्र ह्यकार्यत्वस्योपाधित्वं त्वयाप्यङ्गीकार्यमिति भावः। नन्वात्मगुणानां नित्यत्वानुमानस्य तदनित्यत्वग्राहिमानसप्रत्यक्षबाधादप्रामाण्यं, न त्वकार्यत्वोपाधिकत्वादित्याह—अस्येति। नेति। यद्ययं निरुपाधिस्तदा बाध एव न स्यादिति। कुत इत्यत आह—स्वभावेति। यदि हि केनचित्स्वभावस्तं प्रतिबद्धस्तस्यैव
5 नित्यत्वप्रयोजकत्वेऽनिष्टमाह—अन्यथेति।

विवेकः

एतावता प्रबन्धेन शब्दध्वंसस्य प्रत्यक्षता विप्रतिपन्नमेकदेशिनं निरस्य प्रकृतमाह। **एवमिति**। व्यवस्थिते प्रत्यक्षेणानित्यतया व्यवस्थापितेऽनुमानमपि तदनित्यताग्राहकं तर्करसिकं प्रत्युच्यते—**उत्पत्तिधर्मकत्वात्**। जन्यतासम्बन्धेनप्रागभाववत्त्वात्। प्रागभावजन्यत्वादिति वार्थः। न च ध्वंसस्य प्रतियोगिद्वारा तज्जन्यत्वं मानाभावात्, अन्यथा
10 दण्डद्वारा तत्प्रागभावस्यापि घटजनकतापत्तेः। अभावजन्यत्वमात्रोक्तौ तु समवायिकारणनाशादिजन्यनाशे व्यभिचार इति—**प्रागिति**। एतच्च न्यायनये तेन परमाणुरूपनाशं प्रति द्व्यणुकस्य वैशेषिकनये प्रतिबन्धकतया द्व्यणुकप्रागभावजन्ये रूपादिध्वंसे न व्यभिचारः। प्रतियोगितासम्बन्धेन जन्यत्वोक्तौ प्रागित्यस्य वैयर्थ्यं, प्रागभावत्वमखण्डमेवेत्यप्याहुः। **केचित्तु** ध्वंसे व्यभिचारवारणाय सत्त्वेन भावत्वेन वा हेतुर्विशेषणीय इत्याहुः। पक्ष-
15 तावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात। न ध्वनावंशतः सिद्धसाधनम् अन्यथा तु वर्णत्वमेव पक्षतावच्छेदकम् इदमनुमानं प्रत्यभिज्ञानेन श्रूयमाणगकारे चिरश्रुतगकाराभेदावगाहिना बाधितं युक्त्यन्तरसहकारेण तच्च विरोधिगुणातिरिक्तानाश्यस्य सत्यपि विरोधिगुणे प्रत्यभिज्ञाबलेनानाशे तावत्कालं स्थिरश्चैनं कः पश्चान्नाशयिष्यतीत्यादिन्यायेनापि अनित्यत्वमेवेति मणिकृतपादाः। तस्य स एवायं गकार इति प्रत्यभिज्ञानस्य
20 ज्वालादीत्यादिपदात्सैवेयम् गुर्जररागिणीरित्यादिग्रहणम्[1]। **अविशेषात्**। विशेषादर्शनदशायामप्रमात्वेन अन्यदा तु तज्जातीयाभेदावगाहितया नैवं नाविशेषः। अबाधितस्य भ्रमत्वग्राहकप्रमाणाविषयस्य स्वतः स्वकीयाद्धर्मात् ज्ञानत्वरूपात्। तथाचेदं प्रमा-भ्रमत्वग्राहकप्रमाणाविषयत्वे सति ज्ञानत्वादिति फलति। तुल्यम्=ज्वालादिप्रत्यभिज्ञायामपि निरुक्तहेतोः सत्त्वं तथा च तत्रैव व्यभिचारात् न तस्य हेतुत्वमित्यर्थः। ज्वालायां तदभेदप्रत्यभिज्ञाने तद्भ्रमत्वग्राहकप्रमाणाविषयत्वम् नास्ति। किन्तत्प्रमाणमित्यत्राह—
25 **विरुद्धेति**। तथा च तदवृत्तिधर्मवति तद्वृत्तिधर्मशून्ये वा तदभेदावगाहित्वमेव तदिति भावः। निरुक्तस्य भ्रमत्वव्याप्यत्वग्राहकमनुकूलतर्कमाह—**अन्यथेति**। भेदव्यवहार-

---

१. क. गुर्जरीत्यादेर्ग्र०।

विलोपप्रसंगः = तत्प्रामाण्यधीविलोपप्रसंगः । **निमित्तेति** । विरुद्धधर्मवति तद्भेद प्रकारकज्ञानत्वमेव तत्प्रामाण्यग्राहकम् निमित्तम् विरुद्धधर्मस्य भेदव्याप्यत्वं तच्चेन्नोपेयते तदा न तेन तत्प्रामाण्यं ज्ञायत इति । आकस्मिकत्वे वा विनैवानुकूलतर्कं[1] सहचारदर्शनमात्रेण व्याप्तिग्रहे वा अतिप्रसंगः । तत्रैव पक्षेतरत्वस्य साध्यव्यापकत्वज्ञानाधीनोपाधित्वप्रसंगः । **तीव्रेति** । तारेत्यर्थः । तत्तीव्रत्वादीह शब्दे न्यायस्य हेतोर्यत्र तत्र सिद्धस्य एतदवधारकत्वेन अभ्युपगतस्य औष्ण्यभास्वरत्वे इत्यत्र स्वाभाविकेत्यनुषञ्जनीयम् । शंकते— **तदिति** तत् शैत्यद्रवत्वादि तथैव स्वरादीनां स्वाभाविकमेव प्रयुज्यते अत्र हेतुरित्युच्यते । तमेव हेतुमाह—**अन्यस्येति** । इतरघटितसन्निकर्षेणानुपलभ्यमानत्वे सति तद्विशेष्यकलौकिकसाक्षात्कारप्रकारत्वादित्यर्थः । तुल्यं तीव्रत्वादेः शब्दास्वाभाविकहेतोः सत्त्वं तुल्यं शैत्यादि स्वाभाविकत्वेऽन्यघटितसन्निकर्षेणाग्रहणेनान्यस्यास्फुरणं प्रयोजकन्तत्रान्यथासिद्धिमाह—**तथापीति** । एतदतीन्द्रियान्यधर्मत्वशंकाभवनम् तादृगेव शैत्यादावपि । तथा च तत्रापि अवादिस्वाभाविकत्वं न सिध्येदितिभावः । निरुक्तहेतोः सत्यन्तस्य एवं सन्देहे विशेष्यमात्रं हेतुकार्यं तच्च न साधकमित्याकुलः पृच्छति—**तत् किमिति**—अनुभूयते लौकिकं साक्षात्क्रियते । अभ्युपगमेऽतिप्रसंगमाह—**नन्वेवमिति** । पीतः शंख इत्यत्र पीतिपित्तिम्न अनुभूयमानत्वेऽन्तराप्युपलम्भापत्तिरत आह—**रक्त इति** । अत्रापि जवादीनां चक्षुषो यत्रानवस्थानं तत्र स्वच्छद्रव्याभिहतचक्षुषा परावृत्त्य तदनुभूय स्फटिके आरोप्यत इति वाच्यम् । तथा च जवात्वादेरपि ग्रहणप्रसंग इति जवादिसन्निधानलक्षणदोषाद्यदि स्मर्यमाणारोपत्वमुपैति तदा स्थलान्तरमाह—**नील इति** । तद्विरुद्धधर्मत्वे पीतत्वाद्यभावव्याप्यशंखत्वादिमत्त्वे स्थिते निश्चिते ।

ननु स्फटिकत्वादिरक्तत्वाभावव्याप्यमेव यदा तदा तत् तथाऽनुभूयते । यदा तु न तथाऽनुभूयते तदा तथैव तदित्येव कथं न स्यादित्यत्राह—**जवाकुसुमेति** । विना पाकं तत्र रक्तरूपोपपत्तौ तन्नाशे वा कारणाभावात् जवासन्निधाने तथोपलम्भस्तदसन्निधाने तदनुपलम्भो न स्यात् । न च तत्सन्निधानासन्निधाने तदुत्पत्तिनाश हेतुरितिभावः । बाधेन भ्रमत्वग्राहकेण पीतः शंखेत्यादिप्रत्ययानां भ्रान्तत्वावधारणात् । तद्विरुद्धधर्मत्वं तारत्वादिविरुद्धधर्मत्वम् । **तद्धर्मिणः**—तारत्वादिधर्मिणः । **अनुविधत्ते**—तारोगकार इति प्रतीतिः । एवं नियमे तादृशी शंका ततः किमत आह—**तथाचेति** क्वचित् अवादावपि किञ्चित् शैत्यवत्त्वादि । यद्वा यद्धर्मत्वेन तच्छक्यते तत्रापि तत् सत्त्वं न स्यात् तत्रापि तथा शंकासंभवादित्यर्थः । इत्थं प्रणाल्या तारत्वादेरप्रमाणिकत्वे

[1] क. विनानु० ।

दोषान्तरमाह—**न चेति**। एतत्तारत्वादिशंकितुमन्यधर्मत्वेनापि शक्यतेऽपि आरोपविषयत्वे प्रयोजकधर्मिज्ञानाभावात्। ननु संस्कारोपनीते तत्रारोपो भविष्यतीत्यत्राहाप्रतीत इति। असत्ख्यातिश्च निरसनीयेति भावः। आरोप्यत्वमपि निराकरोति संस्कारेति। इतरघटितसन्निकर्षेणानुपलभ्यमानत्वे सति इत्यस्यासिद्धिं शंकते। **न च ध्वनीति**।
5 धर्मा एव गृह्यन्ते। दूषयति—**स्पर्शेति**। ध्वनेर्वायवीयत्वनये त्वचैव तद्ग्रहोवाच्यः। न च स्पर्शाद्यंशे लौकिकातिरिक्तज्ञानं त्वगादिना जन्यत इत्यर्थः। स्पर्शाद्यभावग्रहे व्यभिचारादाह—**भावेष्विति**। अवायवीयत्वेन वाय्वन्यबहिरिन्द्रियत्वेन वायुधर्मा ग्राहकत्वात् वायुगुणाग्राहकत्वात्। वायुमात्रधर्माग्राहकत्वादिति **प्रकाशः**। अत्र मनसि व्यभिचारवारणाय—**बहिरिति**। आत्मादौ तद्वारणाय **इन्द्रियेति**। चक्षुरादेस्तादृश-
10 द्रव्यग्राहकत्वात्। **गुणेति**। वायुधर्माः वायुधर्ममात्रधर्माः अतो नोपक्रान्तध्वनिधर्म-विरोधः। सत्तायां व्यभिचारवारणाय **मात्रेति** श्रवणग्राह्यधर्माः श्रोत्रगुणवान्, पृथिव्यादीनां श्रोत्रसत्तावत्त्वेन व्यभिचारवारणाय **गुणेति**। अत्र वायुधर्मस्य ध्वनेरस्मरणत्वे तद्गतजातीनां तारत्वादीनां सुतरां श्रवणाग्राह्यत्वसिद्धिरित्यभिसन्धिः। विपक्षे बाधकमाह-**यदि चेति**। नन्वस्माभिः नाभ्युपेयते परमाणुः। त्रुटावेव विश्रामोपगमात् तद्-
15 गुणत्वे च नातीन्द्रियत्वमत आह—**अवश्यमिति**। **ग्राह्येति**। स्वग्राह्येत्यर्थः। तथा-चाकाशस्य शब्दवत्त्वे आवश्यके वायोरपि तद्वत्त्वं न कल्प्यत इति भावः। व्यक्तिं विना जातेः स्फुरणं व्यक्तिविषयकोजातिलौकिकसाक्षात्कारः निर्विष्टानियता अन्वय-व्यतिरेकौ दर्शयति—**घटादिष्वित्यादि**। तावन्यथासिद्धयति। **स्वरूपेति**। तत्र साक्षात्कारे परमाण्वादिषु परमाण्वादिघटितसन्निकर्षेणेत्यर्थः। व्यक्तियोग्यतान्तर्भूतैव-
20 स्वाश्रयलौकिकसाक्षात्कारसामग्रीनियतैव जातिग्रहणयोग्यता तल्लौकिकसाक्षात्कारसाम-ग्रीति। तदनुपलम्भे व्यक्त्यनुपलम्भे उपसंहरति—**तथाचेति**। न च तत्र ध्वनीनां ध्वनित्वेनाज्ञानेऽपि तारत्वेनैव भानमिति वाच्यम्, ध्वनित्वग्रहप्रतिबन्धकदोषकल्पनायां गौरवात् तदुत्पादकसंख्यादेरभावाच्चेति तावत्। न च स्मर्यमाणस्य ध्वनिधर्मस्यैव तत्रारोप इति वाच्यम्। अगृहीततादृशध्वनेरपि तथाप्रत्ययात् जन्मान्तरीयसंस्कारोद्बो-
25 धकल्पने च मानाभावात्। धर्मिज्ञानसमवधानादेव तद्भानादिति दिक्।

अत्रानुगतप्रत्ययान्यथानुपपत्त्या गत्वादीनां तारत्वादिव्यापकत्वोपगमेऽपि तारत्वादि-स्त्रीपुंस्प्रभवत्वादितत्तद्दिग्देशजत्वादीनानाजातीनां मिथोव्याप्यव्यापकभावे नास्ति विनिगमकं कार्यतावच्छेदकाननुगमवत् प्रतिबन्धकाननुगमस्याप्यदोषत्वात् तारत्वस्य तद्व्यापकत्वेऽपि न क्षतिः तथापि तारस्त्रीशुकप्रभवतद्देशप्रभवत्वधर्मेकैव जातिरेवमनन्तजातिस्वीकारो

ऽनयात्या यदा तु यद्व्याप्यतया या गृह्यते तदा सैव तदनुमापिकेति वदन्ति। प्रत्यभिज्ञा तु तज्जातीयभेदावगाहनीति न बाधसम्भवः। न च द्रव्यत्वावच्छिन्नभेदाभाव-संसर्गेण घटः पटः इत्यभेदावगाहिज्ञानापत्तिरिति वाच्यम्, तादृशप्रत्यक्षोपगमे क्षतेर-भावात्। शब्दप्रयोगे तु यदवस्थितप्रतियोगिताकभेदाभावस्य संसर्गता तादृशधर्मस्य समभिव्याहृतपदाधीनोपस्थितिप्रकारत्वमपि तन्त्रम्। 'सएवायम्' गकार इत्येव च तत्त्वं 5 तथा तत्र तत्त्वावच्छिन्न भेदाभावावगाहने बाधकरणेन गत्वावच्छिन्नतदभावस्यैव संसर्गतोपेयते। अत एव पटेऽपि तदेव द्रव्यमिदमिति घटे न द्रव्यत्वाववच्छिन्नभेदाभाव-संबन्धेन प्रत्यभिज्ञानमिष्यत एवेति समासः।

सत्प्रतिपक्षत्वम्। अद्रव्यद्रव्यत्वादिना जन्यमाश्रित्याह-मिथ इति। एकस्य तदन्य-तरस्यान्यतमांगं व्याप्तिपक्षधर्मतान्यतरवत् अस्यमदुक्तसाधनस्य वैकल्ये संसर्गस्य वैकल्ये- 10 त्वदीयेन हेतुना। ननु यदा त्वया स्थापना कृता तदास्य प्रकारस्य सम्भवेऽपि मया यदा स्थापना क्रियते, तदा त्वदुक्तहेतुनापि यथोपदर्शितयुक्त्या सत्प्रतिपक्षता न स्यात्। तदानीमंगवैकल्याभावभाने च इदानीमपि सत्प्रतिपक्षता न स्यादित्यभिप्रायेणाह—तथापी-ति। अकारप्रश्लेषशंकया अनित्यत्वसाध्यकत्वभ्रमनिराकरणाय वैपरीत्येन प्रयुक्तो नित्यः शब्द इति एवमग्रेऽपि यथायथमनुसन्धेयम्। अद्रव्यद्रव्यत्वादिति। न विद्यते द्रव्यं सम- 15 वायि यस्य तदद्रव्यम्। तत्त्वे सति द्रव्यत्वात्। असिद्धेरिति। द्रव्यासमवेतस्य चासिद्ध्या स्वरूपासिद्धेरित्यर्थः। विशेष्यासिद्धिं परिहरति—द्रव्यमिति। संयोगसमवायान्यतर-सम्बन्धेन प्रतीयमानत्वादित्यर्थे सिद्धे व्यर्थविशेषणतया व्याप्यत्वासिद्धेः संयोगेन ग्राह्यत्वस्य तस्यैवाव्यभिचारात् तावन्मात्रस्याप्यसिद्धेः। न्यायनये स्वरूपासिद्धेः। तत्रास्माभिः संयोगानुपगमात्। यदि च परम्परासम्बन्धेनाग्राह्यत्वे सति ग्राह्यत्वं तत्तदापि 20 न स्वाज्ञानरूपासिद्धेः। तामेव व्युत्पादयति नहीति। साक्षात्सम्बन्धेन परम्परा सम्बन्धेनागृह्यमाणत्वे सति गृह्यमाणत्वे श्रोत्रगुणत्वसिद्धौ बाधः। द्रव्यत्वसिद्धौ च सिद्ध-साधनम्। उभयथापि साधक-बाधकप्रमाणाभावात्। आश्रयविशेषणासिद्ध्यासिद्धिर्वा। परिशेषोऽस्तीत्यत्र साक्षात्सम्बन्धेन प्रमाणमित्यनुषज्यते। सदादीति। आदिपदात् समवायीत्वादिपरिग्रहः। मूर्तद्रव्येति। अत्र मूर्तपदस्यभावसाधनत्वे स्वरूपासिद्धिरिति 25 तद्भ्रमनिरासाय-द्रव्येति। अत्र कर्मत्वं मूर्तगुणस्याप्युपलक्षणम्। बहिरिन्द्रियग्राह्यत्वेन भूतान्यगुणत्वनिषेध इत्यपि बोध्यम्। द्रव्यगुणत्वे द्रव्यश्रोत्रगुणत्वे संयोगेत्यस्येन्द्रिये-त्यादिः। तेनैव श्रोत्रसमवायसिद्ध्या प्रकृतसिद्धिर्ध्येया। लिङ्गग्राहकेति। लिङ्गग्राहक-प्रमाणोपजीविना प्रमाणेन द्रव्यत्वसाधकानुमानस्य बाधपत्तेरित्यर्थः। उपसंहरति—तस्मा-

**दिति**। द्रव्यत्वे बाधके सत्यपि एकदेशस्य कर्मत्वादेः परिशेषोऽभावावधारणं न प्रमाणं द्रव्यत्वे संदेहस्य कर्मत्वाद्यंशे संकोचकत्वात् अपनोदकत्वात् न तु सन्देहसामान्यबाधस्तावता द्रव्यादेव तदसंभवादिति भावः। **बहिरिति**। घटग्राहकेन्द्रिय ग्राह्यत्वादित्यर्थः। आत्मनि व्यभिचारवारणाय **बहिरिति**। घटग्राहकत्वम् विषयाधिपत्येन तेन मनसोऽपि
5 तथात्वेन नासिद्धिः चक्षुरग्राह्यबहिरिन्द्रियग्राह्यजातिमत्वादित्यर्थः। रूपादीत्यतद्गुण बहुव्रीहिणारसादि परमिति तु **प्रकाशः**। तत्राग्राह्यत्वमविषयत्वमात्रं तदयोग्यत्वं वा। आद्ये कुलालविशेषजन्यतावच्छेदकघटवृत्तिजातिविशेषस्य त्वचैव ग्रहे तद्वति व्यभिचारः अन्त्ये जात्पुपादानव्यर्थता। उष्मवाय्वोः प्रत्यक्षतानये सार्थक्यमित्यपि **केचित्**। **इति परिशेषाद्** द्रव्यत्वारम्भे गुणत्वेन श्रोत्रगुणत्वसिद्धौ समवायिसिद्धौ श्रोत्र-
10 समवायरूपसाक्षात्संबन्धग्राह्यत्वसिद्धौ—**अव्यवहितेति**। साक्षादित्यर्थः। **असिद्धे** द्रव्यत्वे यज्जातं तदुपसंहारति **न चेति**। असिद्धेन अद्रव्यद्रव्यत्वेन सत्प्रतिपक्षत्वं समीचीनपक्षत्वं दृष्टान्ताभावात् सामान्यमुखीं व्याप्तिमित्यर्थः। यदूयेनेति। एतच्चध्वनेर्वायवीयत्वनये तेन तत्र न व्यभिचारः। **गृह्यमाण इति**। हेतुमत्तावोधनाय घटादौ व्यभिचारवारणाय उक्तमिन्द्रियेति। द्रव्यत्वत्वनिरासेनैव त्वदुक्तहेतुरसिद्धो व्युत्पादितः।
15 मम चानित्यत्वसाधने गुणत्वसाधने गुणत्वसिद्ध्यासिद्धिर्न प्रयोजकेत्यभिप्रायेणाह—**ततः किमिति**। ततो गुणत्वासिद्धेः। किमन्यत्वसाधनस्य। नन्वेवं षड्भावनिषेधेऽभावत्वं पर्यवशेषितम्। तथा च भावत्वगर्भो हेतुस्तवासिद्धो जात इत्यत्राह—**न चैतदिति**। शब्दस्य श्रोत्रगुणत्वासाधनमपि नेत्यर्थः। तत्राग्राह्यत्वेऽन्यथा सहचारदर्शणमात्रेण व्याप्तेर्ग्रहे। **तेनेति**। सम्पातायताम्। तत्समवेतत्वात्। **तद्ग्राहक इति**। अत्र स-
20 न्निकर्षघटकतातिरिक्तरूपेण यद्ग्राहकत्वं तन्निषेधः साध्यः तेन न दृष्टान्तासिद्धिः। योग्येन तत्साक्षात्कारजनकतावच्छेदकावच्छिन्नेनास्मदनुमानस्य श्रोत्रगुणत्वसाधकस्य अप्रयोजकत्वे नित्यसन्देहापत्तिरतआह—**अवश्यमिति**। तथा च शब्दस्य गुणत्वे सिद्धे इतरगुणत्वबाधकारणात् श्रोत्रगुणत्वं सेत्स्यतीति भावः। **तन्निर्माणेति**। श्रोत्रस्य स्वरूपतोऽनिर्माणेऽपि कर्ण शष्कुल्यवच्छेदकस्यादृष्टभेदस्य च निर्माणमेव **सविशेषणे हीति** न्यायेन
25 तन्निर्माणं तदन्यस्य शब्दान्यस्य द्रव्यविशेषग्रहे शब्दस्वरूपद्रव्यग्रहे तदुपयोगः श्रोत्रोपयोगः। **विशेषेति**। विशेषगुणं विषयीकुर्वदेव शब्दावृत्तिसंख्यायास्तन्नये श्रावणत्वात्। तद्गुणग्राहकत्वेन तदग्राहकत्वेन साध्ये स्वरूपासिद्धिः स्यादत उक्तम्—**विशेषेति**। बहिर्द्रव्यसाक्षात्कारे उद्भूतस्पर्शवत्त्वेनापि योग्यत्वे तस्य चातथात्वे त्वाह—**आत्मा वेति**। न च त्वङ्मनोयोगाभावादेव तदनुपलम्भस्तदेति वाच्यम्। तस्य ज्ञानसामान्यहेतुत्वे

मानाभावात् रससाक्षात्कारकाले तदाश्रयगुडादेःसाक्षात्कारप्रसंगाच्च । बलवत्त्वकल्पनायां च गौरवात् । सुषुप्त्युपपत्तिस्तु बहिरिन्द्रियजवृत्तीनां तत्र मनोयोगं विनैवानुत्पत्तेः, अनुमित्यादीनां तज्जनकज्ञानाभावात् । एवं स्मरणस्य संस्कारोद्बोधकाभावात् । आत्मप्रत्यक्षस्य तु मनःक्रियोत्पत्तिसमयोत्पन्नगुणोपधानेन तद्विभागोत्पत्तिसमये तदुत्पादेऽपि तदुपधानेन संयोगनाशोत्पत्तिक्षणे नोत्पादः अविश्यदवस्थस्यैवासमवायिकारणत्वोपगमादुत्तरसंयोगोत्पत्तिसमये च ज्ञानस्यैव नाशात् । तदनन्तरं तत्प्रत्यक्षमिति । 5

नन्वेवं मनोविभागसमयोत्पन्नज्ञानस्य संस्काराजनकतया तन्नाशकदुर्भिक्षम् । चरमज्ञानवत्त्वस्य क्षणिकत्वेऽपि अक्षतेः । उत्तरोत्पन्नमात्रमेव तन्नाशकम् । अपेक्षाबुद्धेश्च नाशे स्वजन्यद्वित्वादिसाक्षात्कारोपि विशिष्य कारणान्तरमित्याहुः । परे तु विजातीयमेव मनःसंयोगं ज्ञानहेतुमभ्युपेत्य स स्वापं समर्थयन्ति । गुणयोग्यतां 10 व्यवस्थापकगुणयोग्यतां पुरस्कृत्य तदधीनं तत्साक्षात्कारं जनयन्त्येव । उपाददते गृह्णन्ति । आकाशेति । आकाशान्यसमवेतगुणत्वादित्यर्थः । असमवेते तन्नये रूपादिसमवाये च व्यभिचारवारणाय—गुणेति । **तद्गतेति** । आकाशगतेत्यर्थः । परममहत्त्वत्वं जातिभेदोऽतो न वैयर्थ्यम् । उपाधेः पक्षधर्मावच्छिन्नसाध्यव्यापकस्य दुष्टहेतोरप्रयोजकत्वमुपाधेः साध्यव्यापकताग्राहकञ्च तर्कमाह—**अन्यथेति** । निरुपाधेः पक्षधर्मस्य 15 बाधः साध्यवदन्यपक्षत्वम् पक्षधर्मत्वे सति बाधितसाध्यकत्वस्य सोपाधित्वव्याप्यत्वग्राहकमाह—**स्वभावेति** । निरुपाधिसहचारबलेन निश्चितव्याप्तिकस्य तत्परित्यागे हेतुमति साध्यपरित्यागे प्रकृतहेतोर्गृहीतम् यत् साध्यव्याप्यत्वं तत्स्वरूपः स्वभावस्तत् त्यागापत्तिः बाधेनोपाधेरुन्नयनमात्मविशेषगुणपक्षकानुमानम् अन्यथा प्रकृते श्रावणादिति ध्वनिस्तथा च एवेति भावः । शब्दत्वेति । तस्य च जातित्वाभावेऽपि अनुगतप्रत्ययबलात् अखण्डोपाधितास्त्येवेति भावः । तन्नये षडिन्द्रियवेद्यः कालो दृष्टान्त इति केचित् । कालोपाधेस्तथात्वेऽपि महाकालत्वे मानभाव इत्यपरे । शब्दवृत्तिसादृश्यमपि नित्यं श्रावणञ्चेत्यपि आहुः । तस्यैव तव कार्यत्वस्यैव । घ्राणादीति । घ्राणरसनयोस्तद्वद्ग्राह्यत्वमात्रं हेतुः । आदिपदग्राह्यं यदा चक्षुस्त्वग्वा तत्र संयोगादौ व्यभिचारवारणाय । एकेति । तन्मात्रग्राह्यजातिमत्त्वादिति तदर्थः । समवायनिरुपकत्वादेरपि तन्निरूपणत्वान्न दृष्टान्तासिद्धिः । 25 न वा त्र्यणुकसंयोगादौ व्यभिचारः । 20

विरोधव्यभिचारावसम्भावितावेवाऽत्रेत्यसिद्धिरवशिष्यते। साऽपि नास्ति। तथा हि शब्दस्तावत् पूर्वोक्तन्यायेन स्वाभाविकतीव्रमन्दतरतमादिभावेन प्रकर्षनिकर्षवानुपलभ्यते। इयञ्च प्रकर्षनिकर्षवत्ता कारणभेदानुविधायिनी सर्वत्रोपलब्धा। अकारणका हि नित्याः प्रकर्षवन्त एव भवन्ति, यथाऽऽकाशादयः। निकृष्टा एव 5 वा, यथा परमाण्वादयः। न तु किञ्चिदतिशयानाः कुतश्चिदपकृष्यन्ते। तदियं नित्येभ्यो व्यावर्त्तमाना कारणवस्तु च भवन्ती जायमानतामादायैव विश्राम्यतीति प्रतिबन्धसिद्धौ प्रयुज्यते। शब्दो जायते, प्रकर्षनिकर्षाभ्यामुपेतत्वान्माधुर्यादिवत्। अन्यथा नियामकमन्तरेण भवन्ती नित्येष्वपि सा स्यात्, नियमहेतोरभावात्। शब्दादन्यत्रेयं गतिरिति चेन्न। साध्यधर्मिणं विहायेति प्रत्यवस्थानस्य सर्वानुमान- 10 सुलभत्वात्। न चेद् व्यञ्जकतारतम्याद् व्यञ्जनीयतारतम्यम्, अस्वाभाविकत्वप्रसङ्गात्। व्यवस्थितञ्च स्वाभाविकत्वम्। न च व्यञ्जकोत्पादकाभ्यामन्यस्यानुविधानमस्ति। न च स्वभाविकत्वौपाधिकत्वाभ्यामन्यः प्रकारः सम्भवति।

स्यादेतत्। तथाप्युत्पत्तेर्नित्यत्वेन को विरोधो येन प्रतिबन्धसिद्धिः स्यात्?। असिद्धे च तस्मिन्, भवतां व्यापकत्वासिद्धोऽस्माकमप्रयोजकः। सौगतानां सन्दिग्ध- 15 विपक्षवृत्तिरयमुपक्रान्तो हेतुरिति चेन्न। इदं ह्युत्पत्तिमत्त्वं विनाशकारणसन्निधि- विरुद्धेभ्यो नित्येभ्यः स्वव्यापकनिवृत्तौ निवर्त्तमानं, विनाशकसन्निधिमति विनाशिनि विश्राम्यतीति। विनाशकारणसन्निधानेनावश्यं जायमानस्य भवितव्यमिति कुतो निर्णीतमिति चेत्। न। तदसन्निधानं हि न तावदाकाशादेरिव, स्वभावविरोधात्। उत्पत्तिविनाशयोः संसर्गदर्शनात्। अविरुद्धयोरसन्निधिस्तु देशविप्रकर्षाद् हिम- 20 वद्विन्ध्ययोरिव स्यात्। देशयोरपि विप्रकर्षो विरोधाद्वा हेत्वभावाद्वा? पूर्वोक्तादेव न प्रथमः। द्वितीयस्तु पटकुङ्कुमयोरिव स्यात्। यदि हि कुङ्कुमसमागमादर्वागिव प्रध्वंसकसंसर्गादर्वागेव पटो विनश्येत्। यथा हि विनाशकारणं विना न विनाशः, तथा यदि कुङ्कुमसमागमं विना न विनाशः पटस्येति स्यात्। कस्तयोः संसर्गं वारयेत्? तस्मादविरुद्धयोरसंसर्गः कालविप्रकर्षनियमेन व्याप्तः, स चातो निवर्त्तमानः स्वव्याप्य- 25 मुपादाय निवर्त्तत इति प्रतिबन्धसिद्धिः।

स्यादेतत्। यद्येवमस्थिरः शब्दः कथमर्थेन सङ्गतिरस्योपलभ्यते इति चेत्। यथैवार्थस्यास्थिरस्य तेन। जातिरेव पदार्थः, न व्यक्तिरिति चेन्न। शब्दात्तदलाभप्र- सङ्गात्। आक्षेपत इति चेत्, कः खल्वयामाक्षेपो नाम? न तावदनुमानम्। अनन्ताभिः सह सङ्गतिवदविनाभावस्यापि ग्रहीतुमशक्यत्वात्। शक्यत्वे वा, सङ्गतेरपि तथैव 30 सुग्रहत्वात्। व्यक्तिमात्ररूपेणाऽविनाभाव इति चेन्न। व्यक्तित्वस्य सामान्यस्या- भावात्। भावे वा, तदाक्षेपेऽपि विशेषानाक्षेपात्। वाच्यत्वमपि वा तथैवास्तु, किमाक्षेपेण? सङ्गतेरविरोधादिति। अर्थापत्तिराक्षेप इति चेन्न। व्यक्त्या विना किमनुपपन्नम्? जातिरिति चेन्न। तन्नाशानुत्पाददशायामपि सत्त्वात्। तथापि न व्यक्तिमात्रं विनेति चेन्न। मात्रार्थाभावात्। व्यक्तिज्ञानमन्तरेण जातिज्ञान- 35 मनुपपन्नमिति चेन्न। तदभावेऽप्युत्पादात्। व्यक्तिविषयत्वं विना जातिविषयता

तस्यानुपपन्नेति चेन्न । एवं तर्ह्येकज्ञानगोचरतायां किमनुपपन्नं किं प्रतिपादयेदिति ? जातीनामन्वयानुपपत्त्या व्यक्तिरवसीयते इति चेन्न, परस्पराश्रयप्रसङ्गात् ।

स्यादेतत् । प्रतिबन्धं विनाऽपि पक्षधर्मताबलाद् यथा लिङ्गं विशेषे पर्यवस्यति, तथा सङ्गतिं विनाऽपि शब्दः शक्तिविशेषाद्विशेषे पर्यवस्यति, स एवाऽऽक्षेप इत्युच्यते इति चेद्, न तावत् प्रतीतिः क्रमेण । अपेक्षणीयाभावेन विरम्य व्यापारायोगात् । 5
जातिप्रत्यायनमपेक्षते इति चेत्, कृतं तर्हि शब्दशक्तिकल्पनया । तावतैव तत्सिद्धेः । ओमिति चेन्न । व्यक्त्यनालम्बनाया जातिप्रतीतेरसम्भवादित्युक्तत्वात् । प्रमाणान्तरापातप्रसङ्गाच्च । स्मरणं तदित्ययमदोष इति चेन्न । अननुभूतान्वयप्रसङ्गात् । अस्त्वेकैव प्रतीतिरिति चेत्, कृतं तर्हि शक्तिभेदकल्पनया । एवञ्च यथा सामान्यविषया शक्तिरेकैव तद्वृति पर्यवस्यति, तथा सामान्याश्रया सङ्गतिस्तद्वृति पर्यवस्येदिति । 10

न च नित्या अपि वर्णाः स्वरानुपूर्व्यादिहीनाः पदार्थैः सङ्गम्यन्ते, न च तद्विशिष्टत्वमपि तेषां नित्यम्, तस्मात्तत्तज्जातीयक्रोडनिविष्टा एव पदार्थाः पदानि च संबध्यन्ते नातोऽन्यथेति, नैतदनुरोधेनापि शब्दस्य नित्यत्वमाशङ्कनीयमिति । यदा च वर्णा एव न नित्यास्तदा कैव कथा पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां, कुतस्तराञ्च तत्समूहरचनाविशेषस्वभावस्य वाक्यस्य, कुतस्तमां 15
तत्समूहस्य वेदस्य ॥ १ ॥

## आमोद

ननु कण्टकोद्धारो न्यून इत्यत आह—**विरोधेति** । **अप्रसिद्धिरिति** । अन्यतराप्रसिद्धिरित्यर्थः । गन्धासामानाधिकरणनित्यभूतविशेषगुणत्वात् । गन्धासमानाधिकरणनित्यभूतैकवृत्तिगुणत्वादिष्वप्यकार्यत्वमेवोपाधिरिति भावः । **पूर्वोक्तेति** । तद्गततयोपाधिमन्तरेणोपलम्भेनेत्यर्थः । प्रकर्ष- 20
निकर्षौ जातिरूपौ शब्दत्वरसत्वादिव्याप्यौ नानैवेति न जातिसंकरः । **स चेति** । कालविप्रकर्ष इत्यर्थः । **अत इति** । उत्पत्तिविनाशकारणसमवधानादित्यर्थः **स्वव्याप्यमिति** । असंसर्गमित्यर्थः । **प्रतिबन्धसिद्धिरिति** यदुत्पत्तिमद्भावस्वरूपं तद्विनाशि तद्विनाशकारणसमवधाननियतमिति प्रतिबन्धद्वयसिद्धिरित्यर्थः । न चात्राप्यप्रयोजकत्वशंका । अन्वयव्यतिरे- 25
काभ्यामुत्पत्तिमत्त्वविनाशकसमवहितत्वयोः सुदृढ़प्रमाणावधृतनियमत्वादिति भावः । एवं शब्दोऽनित्यः प्रत्यक्षविशेषगुणत्वात्, प्रत्यक्षानात्मगुणत्वात्, इन्द्रियवृत्तिगुणत्वात्, इन्द्रियव्यवस्थाहेतुगुणत्वात्, भूतप्रत्यक्षगुणत्वादित्यूह्यम् ।

नन्वेवं गृहीतसङ्गतिकशब्दनाशे कथमगृहीतसङ्गतिकशब्दादर्थावगम इति शङ्कते--**यद्येवमिति**। एवं सति गृहीतसङ्गतिकघटाद्यर्थनाशे घटन्तरोपस्थितिः कथमिति तुल्यानुपपत्तिः। तत्र यदि घटत्वादिसामान्यमवच्छेदकं तदा घटपदेऽपि घटपदत्वमवच्छेदकमिति तुल्यमित्याह--
5 **यथेति**। ननु व्यक्तिशक्तावानन्त्यादिदोषात् विशिष्टशक्तौ च गौरवात् जातिरेव पदार्थं इत्याह--**जातिरेवेति**। तथा च नोक्तदोषो जातेर्नित्यत्वादिति भावः। आक्षेपान्तरं नानुमानान्तरमनन्ताभिर्व्यक्तिभिरविनाभावाग्रहात्। ग्रहे वा शक्तिग्रहेऽप्येवमस्तु इत्याह--**न तावदिति**। व्यक्तित्वमेवाविनाभावावच्छेदकं स्यादिति शङ्कते--**व्यक्तिमात्रेति** जातेरपि
10 व्यक्तित्वमस्ति। न च तत्सामान्यं व्यापकतावच्छेदकप्रकारिकैवानुमितिर्व्यक्तिविशेषानुपस्थितिश्चेत्याह--**व्यक्तित्वस्येति**। अभ्युपेत्याह--**वाच्यत्वमपीति**। यद्यप्याक्षेपकयोः प्रतीतिभेदः तत्र तन्त्रं जातिव्यक्त्योः समानसंवित्संवेद्यत्वनियमतयानाक्षेपः। प्रकृते अनुमानं न वा अर्थापत्तिः तथापि गोत्वं गवादि[गवा]विषयकप्रतीतिविषयो जातित्वात्
15 गोभिन्नभावत्वादित्याद्यवष्टम्भेन जातिज्ञानं व्यक्त्यविषयकमपि साधयितुं (शक्यं) तत्रेयमाशङ्केति द्रष्टव्यम्। जातिर्व्यक्तिं विना न तिष्ठति व्यक्तिज्ञानं विना न ज्ञायते वा जातिविषकं ज्ञानम् व्यक्तिविषयतां विना न सम्भवति वा? तत्राद्ये तावदाह--**तन्नाशेति**। **न व्यक्तिमात्रमिति**। व्यक्तिसत्त्वान्तरीयकमेव जातिसत्त्वमित्यर्थः। **परेण** प्रलयानभ्युपगमात्।
20 **मात्रार्थेति**। व्यक्तिसामान्यं विनेति यदि मात्रार्थस्तदा विशेषानुपस्थित्यादिकं दोष (उपस्थितौ वा शक्तिग्रहोऽपि तथैव स्यात्) इत्यर्थः। द्वितीयस्य चतुर्थेऽन्तर्भावात् तृतीयमाशङ्क्य दूषयति--**व्यक्तिज्ञानमित्यादि**। **तदभावेऽपीति**। व्यक्तिज्ञानाभावेऽपीत्यर्थः। न हि व्यक्तिज्ञानमन्तरेण जातिज्ञानमित्यर्थः। प्रत्युत जातिमात्रसविकल्पकपक्षे वैपरीत्यमेवेति भावः। **तथा च**
25 समानसंवित्संवेद्यत्वमेव नाक्षेप्याक्षेपकभाव इत्याह--**एवं हीति**। गामानयेत्यत्रानयनानुपपत्तिर्जाताविति लक्षणया व्यक्तेरुपस्थितिरिति शङ्कते--**जातीनामिति**। **परस्परेति**। जातिज्ञाने सति लक्षणया व्यक्तिज्ञानं व्यक्तिमादायैव च जातिमा नित्यर्थः। लक्षणीयस्य प्रकारान्तरेणोपस्थिते **लक्षणा**। प्रकृते च गोत्वेनैवोपस्थिते क्व लक्षणेति भावः।

---

१. जातिज्ञानमित्यर्थः।

**प्राभाकरमतं शङ्कते—स्यादेतदिति**। विशिष्य प्रतिबन्धज्ञानं विनापि यथा लिङ्गं विशेषपरं तथा सङ्गतिग्रहं विनापि शब्दः स्वरूपसद्व्यक्तिविशेषपर्यवसन्नः स्यात्। न ह्यनुमितौ विशेषव्याप्तिग्रहोऽप्युपयुक्तः किन्तु स्वरूपसत्या एव व्याप्तेर्विशेषपर्यवसानादर्शनादिहापि तथैव कल्पनीयमित्यर्थः। जातिशक्तिज्ञानाद्व्यक्तिज्ञानं जातिज्ञानानन्तरं वा जायते। 5
जातिज्ञानमेव वा व्यक्तिविषयम्? तत्र नाद्य इत्याह—**न तावत् प्रतीतिरिति**। **अपेक्षणीयान्तराभावेनेति**। व्यक्त्युपस्थिताविति शेषः। व्यक्तौ स्वरूपसती शक्तिर्जातिज्ञानसहकृतव्यक्त्युपस्थापिकेति क्रमसिद्धिरिति शङ्कते—**जातीति**। जातिप्रतीतिः प्रथमं यदि तदा सैव व्यक्तिप्रतीतिहेतुः कृतं व्यक्त्यंशशक्तिकल्पनयेत्याह—**कृतमिति**। ननूक्तजातिधीरेव व्यक्तिधीहेतुः, 10
को दोष इत्याह—**ओमिति**। एकस्यामुभयविषयकसंविदि हेतुहेतुमद्भाव इत्याह—**व्यक्त्यनालम्बनाया इति**। यदि च मनोजातिज्ञानमपेक्ष्य व्यक्तिज्ञानं जनयेत् तदा जातिज्ञानं लिङ्गज्ञानवन्मानान्तरं स्यादित्याह—**प्रमाणान्तरेति**। व्यक्तिज्ञानं यदि प्रमा स्यात् तदा भवेदेवं तच्च स्मृतिरूपमित्याह—**स्मरणमिति**। एवं सत्यननुभूता व्यक्तिर्न भासेतेत्याह—**अननुभूतेति**। 15
जातिज्ञानमेव व्यक्तिविषयकमिति द्वितीयविकल्पमाशङ्कते **अस्त्वित्यादि**। एवं सत्येकैव शक्तिर्जातिव्यक्तिनिष्ठास्तु तथा च सिद्धं नः समीहितमिति परिहरति—**कृतमिति**। प्रकृतमुपसंहरति—**एवं चेति**। यदुक्तं यथार्थस्यास्थिरस्य तेनेति तदेवायातम्। यथा पटत्वसामान्यविषया **पटपदस्य** शक्तिर्व्यक्तौ पर्यवस्यति। न च तत्र पृथक् शक्तिः, तथा 20
पटत्वसामान्याश्रयैव शक्तिः पदानां शक्तिः स्वरूपमती पदार्थे ज्ञाता **नैयायिकानां** तथा ममापि जातौ ज्ञाता व्यक्तौ स्वरूपसती शक्तिरस्तु, इयमेव हि शब्दशक्तिः। यद्वा, शब्दानित्यत्वेऽपि न दुर्ग्रहः समयग्रह इत्यर्थः। ननु या चान्वयांशे जातिशक्तावेव व्यक्त्युपस्थितिरस्तु, न हि ज्ञानाद्व्यक्तिज्ञानं पृथगिति, येन तत्रापि शक्तिः कल्प्येत। किं च 25
गोत्वमनुगमकं विशेषणं च गौर्गोपदवाच्य इत्यर्थः। तथा च नागृहीतविशेषणान्यायेन तत्रैव शक्तिरुचिता जातौ व्यक्तेर्विशेषणत्वेऽप्यानन्त्यव्यभिचाराभ्यां न तत्र शक्तिः जातिर्वा स्वत एव व्यावृत्ता विशेषपदार्थवदिति न तत्र व्यक्तेर्विशेषणत्वमिति चेत्, न। नियमतो यद्विषयकं ज्ञानं येन पदेन

जन्यते तत्पदं तत्र शक्तं जन्यते च जातिविषयकं ज्ञानं गवादिपदेनेत्युभयमपि तत्पदशक्यमिति भावः। पटशब्दे वाचकत्वव्यवहारं करोतीति योत्तरपटत्व-विशिष्टपदाश्रिता। अपि च वर्णनित्यत्वेऽपि ज्ञानरूपानुपूर्वीविशेषघटितपदानामनित्यतया त्वन्मतेऽपि कथं शक्तिग्रह इत्याह—**न चेति**। उपसंहरति—**तस्मादिति**। पदार्थेसु गोत्वघटत्वादिका जातिः। पदेषु गोत्तरौत्वघोत्तरट-त्वादिकमुपाधिरित्यर्थः। **नैतदनुरोधेनेति**। शक्तिग्रहानुरोधेनेत्यर्थः।

इदानीं वक्तृतया ईश्वरसिद्धिमभिप्रेत्याह—**यदि च वर्णा एवेति**। पदानां नित्यत्वस्य च कैव कथेत्यन्वयः।

### बोधनी

तदेवमनित्यत्वानुमानस्य बाधः सत्प्रतिपक्षत्वं च निराकृतम्, विरोधव्यभिचारौ
10 त्वसंभावितावेव सपक्षवृत्तिसद्भावाद्विपक्षे वृत्त्यभावाच्चेत्याह—**विरोधेति**। तस्मादन्य-तरासिद्धिरेव संभाव्यतया विशिष्टा, सापि निराक्रियत इत्याह—**अत्रेति**। हेतुसिद्धा-वनुमानं विपक्षस्तस्य प्रतिबन्धसिद्धिं तावदाह—**शब्दास्तावदिति**। **पूर्वोक्तन्यायेने-ति**। तीव्रत्वादीनामन्यधर्मत्वेनानुपलम्भः शब्दगतत्वेनोपलम्भः शब्दधर्मत्वेनैवोपलम्भो बाधकाभाव इत्यादिर्यः पूर्वमुक्तस्तेनेति। ततः किमित्यत्राह—**इयं चेति**। सर्वत्र
15 माधुर्यादौ कारणप्रकर्षनिकर्षानुधायिनी दृष्टेत्यन्वयं दर्शयित्वा व्यतिरेकमपि दर्शयति—**अकारणका हीति**। ततोऽपि किमित्यत्राह—**तदियमिति**। तस्मादियं प्रकर्षनिकर्ष-वत्तेति। तत्रानुमानं तदनुग्राहकं च दर्शयति—**शब्दो जायते इति**। नियामकं कारण-प्रकर्षनिकर्षरुपमन्तरेण शब्दे भवन्ती प्रकर्षनिकर्षवत्ता गगनादिष्वपि भवेत्, शब्द एव नाकाशादिष्वस्तीति नियमहेत्वभावादिति। ननु शब्दव्यतिरिक्तस्य प्रकर्षनिकर्षवत्त्वं
20 जायमानतया व्याप्तं तद्दर्शनान्न तु प्रकर्षनिकर्षवत्तामात्रमित्याह—**शब्दादिति**। **नेति**। बाधकाभावेऽपि व्याप्तिसङ्कोचे सर्वानुमानोच्छेदः स्यादिति। ननु व्यञ्जकानां ध्वनीनां प्रकर्षनिकर्षाभ्यां व्यञ्जनीयस्य शब्दस्य तद्वत्ताभिमानः, ततश्चासिद्धो हेतुरित्याशङ्क्याह—**न चेति**। प्रसज्यतां कामं, तदेव नः समीहितम्। अत्राह—**व्यवस्थितश्चेति**। ध्वनि-धर्माणामारोपस्यासंभवादिति। ननु मा भूद् व्यञ्जकोपाधित्वं तारतारतत्वादिस्तथापि
25 कथं कारणप्रकर्षाद्यनुविधानं कथं वा स्वाभाविकत्वं सिध्यतीत्यत्राह—**न चेति**। औपधिकत्वनिषेधेन परिशेषात् सिध्यति गत्यन्तराभावादिति।

तदेवमनित्यत्वानुमानस्य स्वरूपासिद्धिर्निराकृता, संप्रति व्याप्यत्वासिद्धिं निराकर्तु-

माशङ्कते—**तथापी**ति। भवतां नैयायिकानाम्, अस्माकं मीमांसकानामिति। नेति। उत्पत्तिमत्त्वं हि विनाशकारणसंनिधानेन व्याप्तं, तत इदं तत्सन्निधिविरुद्धेभ्यो नित्यत्वेभ्यः स्वव्यापकस्य विनाशकारणसन्निधानस्य निवृत्त्या निवर्त्तमानमनित्य एवावतिष्ठत इति व्यापकानुपलब्धिर्विपक्षे बाधकमिति। ननु स्यादेवं यद्युत्पत्तिमत्त्वस्य विनाशकारणसन्निधानेन व्याप्तिः स्यात्, सैव कुतो विपक्षे बाधकात्सिध्यतीत्याह—**विनाशकारणसंनिधानेने**ति। विनाशकारणासन्निधानं ह्युत्पत्तिमतो न तावद्भावाभावयोरिव स्वभावविरोधाद्भवति घटादिषु तयोः संसर्गदर्शनादित्याह—**तदसंनिधानमि**ति। तर्ह्यविरुद्धयोरेव हिमवद्विन्ध्ययोरिवासंसर्गोऽस्त्वित्यत्राह—**अविरुद्धयोरि**ति। अस्तु तर्हि देशविप्रकर्षादिवेत्यत्राह—**देशयोरपी**ति। सोऽपि देशयोः स्वभावविरोधात् संसर्गहेत्वभावाद्वा भवतीति ततः किमित्यत आह—**पूर्वोक्ता**दिति। यदि हि तद्देशयोः स्वभावविरोधः स्यात् ततस्तदाश्रययोरुत्पत्तिविनाशयोरपि संसर्गो न स्याद्, दृश्यते चासावित्युक्तमेवेति। **द्वितीयस्त्वि**ति। विनाशकारणजायमानत्वयोर्हेत्वभावादसंसर्गस्तु यथा पटकुङ्कुमयोरविरुद्धदेशस्वभावतया क्वचित्संसृष्टयोरपि संसर्गहेत्वभावात् क्वचिदसंसर्गः तथा कदाचित्स्यादिति। कथं च तथा स्यादित्याह—**यदि ही**ति। यथा हि कुङ्कुमसंसर्गात्प्रागेव क्वचित्पटविनाशाद्धेत्वभावेन तयोरसंसर्गः, तथा यदि विनाशकारणसमागमात् प्रागेव जायमानस्य विनाशः कदाचित्स्यात् तदा जायमानविनाशकारणयोरसंसर्गः स्यात्, न त्वेतत्संभवतीति। यदि वा यथा विनाशकारणसमागमे सत्येव विनाशः पटस्य नासतीति दृश्यते, तथा यदि कुङ्कुमसमागमे विनाशो नासतीति स्यात् तदा पटकुङ्कुमयोरपि संसर्गोऽवश्यंभावो भवेत्, न त्वेतदस्तीत्याशयवानाह—**यथे**ति। यत एवं देशविप्रकर्षो नास्ति तस्मादविरुद्धस्वभावयोरसंसर्गः कालविप्रकर्षेणेत्यवशिष्यते, स च कालविप्रकर्ष अत उत्पत्तिमद्विनाशकारणाभ्यां व्यावर्त्तमानः स्वव्याप्यं तयोरसंसर्गमप्युपादायैव निवर्त्तत इति उत्पत्तिमत्त्वस्य विनाशकारणसंसर्गेण सिद्धः प्रतिबन्धः इत्याह—**तस्मादि**ति।

शब्दनित्यत्ववादी प्रकारान्तरेण प्रत्यवतिष्ठते—**स्यादेतदि**ति। प्रत्युच्चारणं भिन्नानां शब्दानामानन्त्यव्यभिचाराभ्यां दुर्ग्रहः संबन्ध इति। **यथे**ति। यथा ह्यस्थिरस्यैवार्थस्य शब्देन संबन्धग्रहणं तथा शब्दस्याप्यस्थिरस्यार्थेनेति। येन हेतुनाऽस्थिरस्य व्यक्तिरूपस्यार्थस्य संगतिर्दुर्ग्रहेति तेनैवास्माकं जातिरेव पदार्थ इति सिद्धान्त इत्याह—**तेने**ति। यदि जातिरेव पदार्थः तर्हि शब्दाद् व्यक्तिप्रतीतिर्न स्यादित्याह—**ने**ति। ननु शब्दप्रतिपन्नाया जातेराक्षेपाद् व्यक्तिर्लप्स्यत इत्याह—**आक्षेपत** इति। **कः खल्वि**ति। न कश्चिदिति भावः। अत एवाह—**न तावदि**ति। आनन्त्यदोषो हि संगतिग्रह

इवाविनाभावग्रहेऽपि सुलभ इति । ननु सर्वव्यक्त्यनुगतेन व्यक्तिमात्ररूपेणाविनाभावः शक्यग्रह इत्याह—**व्यक्तिमात्ररूपेणे**ति । **ने**ति । न तावज्जातिं व्यक्तिं चान्तरा व्यक्तित्वं नाम सामान्यमस्ति, भावेऽपि तदेव जातेराक्षिप्येत न व्यक्तय इति । यदि च व्यक्तित्वसामान्यमभ्युपगम्येत ततः शब्दवाच्यमेव तदस्तु, तस्यैकत्वेन संगतिग्रहस्य 5 सुकरत्वात् । किमाक्षेपतः सिद्ध्येदित्याह—**वाच्यत्वमपी**ति । अपिरवधारणार्थः । ननु मा भूदाक्षेपोऽनुमानम्, अर्थापत्तिर्भविष्यतीत्याह—**अर्थापत्ति**रिति । तस्या हि नाविनाभावग्रहापेक्षेति भावः । **व्यक्त्या विने**ति । **न किञ्चिदि**ति शेषः । **जातिः** । तदाश्रया हि सेति । **ने**ति । व्यक्तीनां विनाशदशायामपि जातेरवस्थानान्न व्यक्त्या विना जातिरनुपपन्नेति । **तथापी**ति । यद्यपि काश्चिद्व्यक्तीरन्तरेणाप्यत्रतिष्ठत इति । 10 **ने**ति । उक्तं हि न व्यक्तिजातिव्यतिरिक्तमन्यत्किञ्चिदस्तीति : **व्यक्तिज्ञान**मिति । ततो जातिज्ञानाद् व्यक्तिज्ञानाक्षेप इति । नेति । शब्दात्केवलजातिज्ञानस्य भवद्भिरभ्युपगमादिति । **व्यक्तिविषयत्वमि**ति । तेन जातिज्ञानादात्मनो व्यक्तिविषयतामाक्षिपतो व्यक्तिज्ञानसिद्धिरिति । **ने**ति । एवं हि जातिव्यक्त्योरेकज्ञानविषयत्वमेवोक्तं स्यात्, तत्रोभयोरपि ज्ञातत्वाविशेषात् किमनुपपन्नं प्रतिपादकं भवेत् किं वा प्रतिपाद्यं भवेत् । 15 अत्रानुपपन्नमात्रनिराकरणप्रकरणे किं प्रतिपादयेदिति प्रक्रियाया असंगतत्वात् प्रमादकृतः पाठ इति संप्रदाय इति । **जातीना**मिति । गोत्वशुक्लत्वादीनां परस्परमन्वयानुपपत्त्या तदन्वयसिद्ध्यर्थं व्यक्तिः प्रतीयत इति । यद्वा, जातीनामनेकव्यक्त्यन्वयः प्रतीयमानो नान्तरेण व्यक्तिमुपपद्यत इति व्यक्तिरवसीयत इति । **ने**ति । प्रतीते ह्यन्वये तदन्वयानुपपत्त्या व्यक्तिः प्रतीयते, प्रतीतायां च व्यक्तौ तदन्वयप्रतीतिरितीतरेतराश्रयत्वम् । किं 20 च, जातिप्रतीतौ सत्यां तदन्वयानुपपत्त्या व्यक्तिप्रतीतिः; व्यक्तिप्रतीतौ च सत्यां जातिरित्यात्माश्रयत्वं व्यक्तिप्रतीतिपुरस्कारेण जातिप्रतीतेरुक्तत्वात् । पश्चिमे तु व्याख्याने शब्दात्प्रतीतासु व्यक्तिसु जातेस्तदन्वयप्रतीतिस्तदन्वयप्रतीत्या च व्यक्तिप्रतीतिरितीतरेतराश्रयत्वं व्याख्येयमिति ।

तर्हि विशेषपर्यवसानमेवाक्षेप इत्याह—**स्यादेतदि**ति । यथा हि लिङ्गं साध्यसा-25 मान्येनैव गृहीतव्याप्तिकमपि पक्षधर्मतासहायं साध्यविशेषे पर्यवस्यति, तथा शब्दो जात्या गृहीतसंगतिरपि शक्तिविशेषाद्व्यक्तौ पर्यवस्यतीति । **न तावदि**ति । किमयं शब्दो जातिव्यक्त्योः प्रतीतिं क्रमेण जनयेद्युगपद्वा ? न तावत् क्रमेण, शक्तिविशेषादेव प्रतीतिं जनयतः शब्दस्यापेक्षणीयान्तराभावेन विरम्य ज्ञानोत्पादनव्यापारायोगादिति । ननु जातौ गृहीतसंगतिः शब्दः तद्विषयं ज्ञानं जनयित्वा तदपेक्ष एव व्यक्तिं प्रत्याययतीत्याह—

**जातिप्रत्यायन**मिति। यदि व्यक्तिज्ञानोत्पादने जातिज्ञानापेक्षा तर्हि किं तत्रापि शब्दव्यक्तिकल्पनयेत्याह– **कृतं तर्ही**ति। कुत इत्यत आह–**तावतैवे**ति। जातिज्ञानेन व्यक्तिज्ञानसिद्धेरिति। ननु जातिज्ञानेनैव तत्सिद्धिमनुज्ञायत एवेत्याह– **ओ**मिति। **ने**ति। **उक्तत्वादि**ति। न च व्यक्त्या विना जातिस्फुरणमित्यत्र लिङ्गमपि पक्षधर्मतासहकृतमेकमेव सामान्यविशेषविषयं ज्ञानं जनयतीति भावः। यदि 5 च शब्दव्यापारो जातिज्ञान एव पर्यवस्यन् न व्यक्तिज्ञानं यावद् गच्छेत् तर्हि व्यक्तिज्ञान-जनकं जातिज्ञानं सप्तमं प्रमाणमापद्येत, अनुमानार्थापत्त्योर्निरस्तत्वादसंभवाच्चान्येषामित्य-भिप्रायवानाह–**प्रमाणान्तरे**ति। ननु शब्दप्रतीताज्जातिः साहचर्याद्व्यक्तिं स्मारयति न तु प्रमापयति, ततो न प्रमाणान्तरापात इत्याह–**स्मरण**मिति। **ने**ति। तर्ह्यननु-भूतानां गवादिव्यक्तीनां समभिव्याहृतपदार्थान्वयप्रतीतिर्न स्यादिति। तदेवं क्रमेण प्रती- 10 तिर्निराकृता, संप्रति यौगपद्यं निराकर्तुं शङ्कते–**अस्त्वि**ति। शब्दादेव जातिव्यक्ति-गोचरा प्रतीतिरेकैव जायते न च प्रमाणान्तरापत्तिर्दोष इति। **कृतं तर्ही**ति। न हि कार्याभेदे कारणभेदशक्तिकल्पनायां प्रमाणमस्तीति। एवमुपपादितं दृष्टान्तप्रकारं दार्ष्टान्तिके निगमयति–**एवं चे**ति। शक्तिभेदाभावे सति यथा गोत्वादिसामान्यविषया शब्दश-क्तिस्तद्वति विशेषे पर्यवस्यति तमपि विषयीकरोतीति यावत्, तथा गोशब्दत्वादिसामा- 15 न्यश्रया या वाचकत्वशक्तिस्तद्वति गोशब्दे पर्यवस्यति, सैव तस्यापि शक्तिर्भवति, नान्या कल्प्यत इत्यर्थः।

सन्तु वर्णाः स्वरूपेण नित्यास्तथाप्यनित्यानामेव संगतिग्रहोऽभ्युपगन्तव्यः स्वरानु-पूर्व्यादिविशिष्टानां तेषां वाचकत्वाद्व्यञ्जकध्वनिधर्मायत्तत्वाच्च स्वरादीनामित्याह–**न चे**-ति। कथं तर्ह्यनित्यानामेव पदार्थानां पदानां चानन्त्यव्यभिचारादिपरिहारेण संगतिग्रह 20 इत्याशङ्क्य सुहृद्भावेन दर्शयन्नुपसंहरति–**तस्मादि**ति। **एतदनुरोधेन**=संगतिग्रहानु-रोधेनेति। तदेवं वर्णानामनित्यत्वं प्रसाध्य वेदानित्यत्वमाह–**यदा वर्णा** इति। एवं तावत्प्रमायाः परतन्त्रत्वादिति व्याख्यातम्॥१॥

विवेक

स्वस्थापनायां हेत्वाभासान्तराभावं दर्शयति–**विरोधे**ति। असिद्धिः=स्वरूपासिद्धिः अवशिष्यते। प्रकृते निषेधप्रतियोगितया दर्शयितुं प्रकर्षनिकर्षवत्ता प्रकर्षत्वनिकर्षत्वो- 25 भयाश्रयवत्ता कारणभेदानुविधायिनी कारणभेदजन्यत्वव्याप्ता। प्रमाणमाह–**उपलब्धे**ति। प्रकर्षत्वे सति यत्र निकर्षत्वं तत्कार्यतावच्छेदकमिति फलितम्। प्रत्येकनियमे व्यभिचार-

माह—**अकारणका इति**। प्रकर्षनिकर्षभ्यामिति। प्रकर्षनिकर्षपदवाच्यवत्वादित्यर्थः। जातिविशेष एव लाघवात् तत्पदवाच्यः न तु ज्ञानादि तेन शिल्पात्मकज्ञानविशेष-स्यापि किंचिदपेक्षया प्रकर्षनिकर्षतया तद्वत्यात्मनि न व्यभिचारः, पदार्थप्रवेशाच्च रसशब्दसाधारणैकप्रकर्षत्वादेरसत्त्वेऽपि न क्षतिः। **आकाशादयः**। तत्परिमाणानि
5 परमाणवस्तत्परिमाणानि यद्यपि परमाणुपरिमाणे महत्त्वापेक्षया निकर्ष इव द्व्यणुकपरि-माणापेक्षया उत्कर्षोऽप्यस्ति। तत्रोत्कृष्टव्यवहारात्। तथापि गुणत्वव्याप्यव्याप्यैक-जात्याश्रयापेक्षया उभयवत्त्वम् बोध्यमिति न व्यभिचारः। **किञ्चिदतिशयानाः** किंचिद-पेक्षयातिशयवन्तः सन्तः अप्रकृष्टा भवन्ति प्रकर्षत्वनिकर्षत्वोभयवतःकार्यतावच्छेदकत्वा वश्यकत्वमति फलितम्। अतएवाह **तदियमिति**। जायमानतामुत्पत्तिं। प्रकर्षेति। प्रकर्षत्व-
10 निकर्षत्वोभयोऽपेतत्वादित्यर्थः। न च रसशब्दसाधारणैकप्रकर्षत्वाद्यभाव इति वाच्यम्। प्रकर्षपदवाच्यत्वे सति निकर्षपदवाच्यत्वस्यानुगतत्वादिति भावः इति **मणिकृतो वदन्ति**। भवन्ती तदुभयवत्ता। साध्यधर्मिणं पक्षं तमेव विहाय वर्तते। यो धर्मः, पक्षेतरत्वरूपः तेन प्रत्यवस्थानस्य तस्योपाधित्वेनोद्भावनस्य। **सर्वत्रेति**। तथा च कथकसम्प्रदायानुरोधात् उपाधित्वेन नासावुद्भाव्य इति फलितम्। व्यंजकस्य वायोस्तार-
15 तम्यात् तदुभयवत्त्वात्। व्यङ्ग्यस्य शब्दस्य तारताम्यं तदुभयत्त्वधीः। इष्टापत्तावाह— **व्यवस्थितमिति**। औपाधिकत्वमन्यवृत्तेरन्यत्रारोपितविषयत्वं परम्परासम्बन्धेन प्रतीय-मानत्वञ्च। **न चेति**। व्यंजकत्वे च बाधकादुत्पादकत्व एव विश्राम इति भावः।

को विरोधः। उत्पत्तिमत्वस्य नित्यत्वाभावव्याप्यत्वग्राहकस्तर्कः। प्रतिबन्धसिद्धिः। प्रकृतहेतोः प्रकृतसाध्यव्याप्यत्वनिश्चयः। अस्य निग्रहस्थानेष्वपरिगणनात् कथमुद्भावनमित्या-
20 कांक्षायामाह। **असिद्धे चेति**। तस्मिन् प्रतिबन्धे व्याप्यत्वासिद्ध इति। व्याप्तिपक्ष-धर्मत्वाभ्यां निश्चयः सिद्धिः तदभावोऽसिद्धिरिति तवाभ्युपगमादिति भावः। **अप्रयोजक इति**। तेन रूपेण एव स्वातन्त्र्ये नास्य तैर्निग्रहस्थानत्वव्युत्पादनादिति भावः। **सन्दिग्धेति**। तथा चानैकान्तिक भेद एवायमिति ध्येयम्। उपक्रान्त उत्पत्तिरूपः। इदं हीत्यादिस्वस्योत्पत्तिमत्त्वव्यापकं स्वाश्रयविनाशकारणसमवधानम्
25 तन्निवृत्त्या तन्निवर्तमानं विनाशिनि विश्राम्यति तन्मात्रवृत्तिर्भवति। अत्र स्वव्यापक-निवृत्तिर्नास्तीत्यत्राह—**विनाशकसन्निधिमतीति**। यत्र नित्ये स्वव्यापकनिवृत्ति-र्नास्ति तत्रापि वर्ततामित्यत्राह—**विनाशकारणसन्निधिविरुद्धेभ्यो नित्येभ्य इति**। एतदभावव्याप्यनित्यत्ववद्भ्य इत्यर्थः। विनाशकारणसन्निधानस्य उत्पत्तिव्यापक-त्वमाक्षिपति—**विनाशेति**। **अवश्यमिति**। तथा च न तन्निवृत्त्या तन्निवृत्तिर्यतस्त-

दसन्निधानमाकाशादेः नित्यस्य यः स्वभावो नित्यत्वं तेन विरोधात् यथा तथा जायमानस्य यः स्वभाव उत्पत्तिस्तद्विरोधादिति न उत्पत्तिविनाशयोः उत्पत्तिविनाशप्रतियोगित्वयोः संसर्गः सामानाधिकरण्यमविरुद्धयोरविरुद्धजातीययोः असन्निधिरसामानाधिकरण्यं विनाशकासन्निधानं देशविप्रकर्षात् उभयोर्यौ देशौ तयोर्विप्रकर्षात् मिथोभिन्नस्वभावत्वात्। हिमवदिति। अत्र कुङ्कुपटयोरिवेत्यपि अनुषञ्जनीयम्। यद्वा विरोधादिति विशेष- 5 विकल्प एव हिमवदिति दृष्टान्तः विरोधात् सामानाधिकरण्यनिरूपकत्वेनाभिमतयोः परम्पराभावव्याप्यत्वात्। पूर्वोक्तात् उत्पत्ति विनाशयोः संसर्गदर्शनात् कुंकुमेति। यथा कुंकुमतत्पटव्यक्त्योरसामानाधिकरण्यं तथा कस्याश्चित् उत्पत्तिस्तदसामानाधिकरण्यं स्यादित्यर्थः। पटो विनश्येदिति। कारणं विना कार्यानुत्पत्तेरिति भावः। यथाहीति। सामग्रीसत्त्वे कार्यावश्यंभावात्। कुंकुमसमागस्य च तदहेतुत्वादिति भावः। 10 तयोरुत्पत्तिविनाशकसमवधानयोरविरुद्धयोरविरुद्धजातीययोः कालविप्रकर्षेण एकतरा-श्रयस्य तदितरसमवधानं विनैव नष्टत्वेन व्याप्तः। सः निरुक्तः कालविप्रकर्षः अतो जायमानत्वविनाशकसन्निधानाभ्यां स्वव्याप्यमसंसर्गः प्रतिबन्ध उत्पत्तेर्विनाशतत्कारणसन्नि-धाननिरूपितं व्याप्यत्वम्। एवमुक्तयुक्त्या अस्य शाब्दबोधजनकज्ञानविषयशब्दस्य यत्र शब्दे संगतिर्गृहीता स न तदातनज्ञानविषयः। यश्च तथा तत्र न संगतिग्रहः। अगृहीत- 15 संगतिकाच्च कार्योपगमेऽतिप्रसंगइति भावः। यथेति। तथा चाभ्युपगम्यतां समानप्रकारकत्वेन कार्यकारणभावः समान्यलक्षणप्रत्यासत्तिर्वेति भावः। तेन शब्देन सह एवकारव्यवच्छेद्यं स्पष्टयति। न व्यक्तिरितीति। अस्या व्यक्तेरलाभप्रसंगात् अनुपस्थितिप्रसंगात्। आक्षेपत इत्यस्य व्यक्त्युपस्थितिरिति शेषः। अनन्ताभिर्व्यक्तिभिः सामान्यप्रत्यासत्तिमभ्युपेत्य शक्यते वा तथैव अविनाभावस्यैव। 20

ननु या जातिः सा सामानाधिकरण्यसम्बन्धेन व्यक्तित्ववतीति व्याप्तिबलात् व्यक्तित्वा-क्षेपएव संसर्गमर्यादया व्यक्तिं गोचरयतीत्याह—मात्रे व्यक्तिमात्र इति। व्यक्तिमात्रस्य तत्सामान्यस्य रूपं धर्मो व्यक्तित्वं तेन सह सामानाधिकरण्यसंबन्धेनाविनाभावस्ता-दात्म्येन वा जातेर्व्यक्तित्वस्य सामान्यादिवृत्तित्वेन सामान्यत्वाभावात् सखण्डत्वे चाननुगमता-दवस्थ्यात्। अखण्डतत्स्वीकारे च केवलान्वयिस्वीकारे चापसिद्धान्तस्तवेति भावः। 25 भावे वा अखण्डव्यक्तिस्वीकारे वा तदाक्षेपे संसर्गमर्यादया व्यक्त्याक्षेपेऽपि विशेषा-नाक्षेपात्। विशेषेण गोत्वादिना तदनाक्षेपात् तथा च नोद्देश्यस्यसिद्धिरिति भावः। तावद्दूरमनपेक्षणीयत्वे त्वाह-वाच्यत्वमपीति। सामानाधिकरण्यसम्बन्धेन गोत्वविशिष्ट-व्यक्तित्वशक्तादेव पदाद्व्यक्तिलाभस्तु किमुक्तप्रणाल्येति भावः। यद्वा व्यक्त्यानन्त्यात्

व्यभिचारेण दूषितमपि दूषणान्तरदानार्थमाह—**व्यक्तिमात्रेण** व्यक्तित्वेनाविनाभाव इत्यर्थः। तदाक्षेपेऽपि व्यक्तित्वेनाक्षेपेऽपि विशेषेण गोत्वादिना अनाक्षेपात् तथैव बोधोपगमत्वादाह—**वाच्यत्वमपीति**। तथैव व्यक्तित्वेन रूपेण तदवच्छिन्नप्रतियोगिताकाभावज्ञाने तत्प्रकारकज्ञानमात्रं हेतुः फलीभूताभावज्ञाने च प्रतियोगितया न निखिल
5 प्रतियोगिनां भानमावश्यकं मानाभावात्। पक्षधर्मताबलेन च विशेषणलाभ इत्याशयेनाक्षिपति। **अर्थापत्तिरिति**। **तन्नाशेति**। तथा च न कालिकाविनाभाव इति भावः। यत्र गोरभावस्तत्र गोत्वाभाव इति गव्येव व्यभिचारि। यत्र गोत्वं सा गौरिति च गोत्वत्वानुपस्थित्या दुर्ग्रहमिति भावः।

ननु यत्किंचित्गोनाशादिकाले गोत्वसत्त्वेऽपि न निखिलगवादेस्तदा नाश इति। प्रलयन्तु
10 अस्माभिर्नेपियत इति न व्यभिचार इत्यभिप्रायेणाह—**व्यक्तिमात्र इति**। जातिरनुपपन्नेतिशेषः। अत्र व्यक्तिमात्रं गोमात्रम्वा व्यक्तित्वेन व्यक्तिमात्रम्वा। आद्ये गोत्वेन गवानुपस्थितेर्न तथा ज्ञानं तदुपस्थितौ वा किमाक्षेपेण तावतैव समीहितसिद्धेः। द्वितीये अप्रसिद्धिः। व्यक्तिसामान्याभावस्य यावत्त्वेन रूपेण व्यक्तीनामभावश्चेत् तदा त्वाह **मात्रार्थेति**। मात्रार्थो यावत्वं तदवच्छिन्नाभावात् तदवच्छिन्नाभावस्य सर्वत्र सत्त्वात् तथा
15 च व्यभिचार इति भावः। इदमुपलक्षणं व्यक्तित्वादिनाक्षेपोऽपि गोत्वादिना तदलाभप्रसंगोऽपि ध्येयः। **व्यक्तिज्ञानमिति**। वह्निं विना धूमवदिति भावः। एतावता व्यक्तिज्ञानं जातिज्ञानहेतुरिति विवक्षितं तत्राह—**तदभावेऽपीति**। उत्पादात् जातिज्ञानस्यान्यथा जातिज्ञानात् पूर्वमेव व्यक्तिज्ञानावश्यकत्वे किमाक्षेपेणेति भावः। तस्य जतिज्ञानस्यैकज्ञानगोचरतायां जातिव्यक्त्योः। भट्टमतं निराकृत्य मण्डनमतमाह—
20 **जातीनामिति**—अन्वयाद्यनुपपत्त्या आनयनान्वयाद्यनुपपत्त्या लक्षणया व्यक्तिरवसीयते **अन्योन्येति**। आनयनान्यथानुपपत्त्या लक्षणया तदुपस्थितिः आनयनपदादानाच्चानयनत्वं तत्र गवान्वयानुपपत्त्या तथा वाच्यम्। तथा च गवोपस्थितावानयनोपस्थितिः तदुपस्थितौ च गवोपस्थितिरित्यन्योन्याश्रय इति।

परे तु जातिज्ञाने सति लक्षणया व्यक्तिज्ञानं व्यक्तिमादाय च जातिभानमित्यर्थ
25 इत्याहुः। केचित्तु या व्यक्तिर्योग्यताबलाद् भासते तया समं सम्बन्धज्ञाने तदुपस्थितिः तदुपस्थितौ च तत्सम्बन्धज्ञानमित्यन्योन्याश्रय इति वदन्ति।

वस्तुतस्तु शुद्धजातौ कदाप्यप्रयोगात्तत्र शक्तौ न मानं लक्ष्यार्थेन परम्परासम्बन्धनिर्वाहाय तत्र सम्बन्धत्वकल्पने च गौरवं गोत्वं शक्त्या गौर्लक्षणया स्वरूपतः उपतिष्ठते

तयोश्च परस्परमन्वय इति चेत् अव्युत्पत्तेः सम्बन्धितावच्छेदकं विना ततः स्वरूपेणानुपस्थितेश्चेत्यादि बोध्यम् ।

ननु यथा वह्नित्वेन वह्निसामान्यनिरूपितव्याप्तिज्ञानं पक्षधर्मताबलात् वह्निविशेषधियं जनयति । अन्वयव्यतिरेकाभ्यां तथैव हेतुहेतुमद्भावात् तथा स्वरूपतो जातिशक्ततया पदज्ञानं जनयति । तद्विशेषलाभश्च योग्यता बलादिति गुरुमतमवतारयति— 5
**स्यादेतदिति** । प्रतिबन्धं फलीभूतज्ञानभासमाननिरूपितव्याप्यत्वग्रहं विशेषणसाध्यविशेषे पर्यवस्यति तद्गोचरामनुमितिं जनयति । शक्तिविशेषात् । स्वरूपतोजातिविषयकात् व्यक्तिविषयकादिति तु **प्रकाशः विशेषं वदति** । विशेषे योग्यतासहकारेण व्यक्तिविशेषे पर्यवस्यति ज्ञानं जनयति । व्यक्तावाक्षेप इति ग्रन्थं संगमयति—**स एवेति** । दूषयति ।
**न तावदिति** । प्रतीतिर्जातिव्यक्त्योः क्रमेणेति विरम्य व्यापाराभावात् विलम्ब्य जनयिष्यति 10
इत्यत्र हेत्वभावात् विलम्बे हेत्वभावादिति यावत् । **जातीति** । तथा चापेक्षणीयाभावोऽसिद्ध इति भावः । शब्दशक्तिकल्पनया शब्दस्य व्यक्तौ कूटशक्तिकल्पनया तावतैव तज्जनितजातिज्ञानेनैव तत्सिद्धेर्व्यक्तिधीसिद्धेः । **व्यक्त्यनालम्बनाया इति** । तथाच न क्रम इति भावः । एतद्व्याप्तेरनुपगमे त्वाह प्रमाणान्तरेति । यदसाधारणं सहकार्यसाद्येत्यादिव्याप्तेरिति भावः । स्मरणमिति । तथा च प्रमां जनयति इत्येव नास्तीति भावः । 15
तद्व्यक्तिज्ञानमननुभूतेषु तस्य स्मरणासंभवादिति भावः । यद्यपि व्यक्त्यन्तरविषयकस्मरणादेव योग्यताबलात् व्यक्तिविशेष लाभ इति शक्यं वक्तुं तथापि क्रमिककल्पने मानाभावो ध्येयः । एका जातिव्यक्त्युभयविषयिका शक्तिः जात्यंशे ज्ञाता व्यक्तौ स्वरूपसती प्रयोजिकेति या कल्पना तया कृतं सा व्यर्थेत्यर्थः । जातिगोचरशक्तिज्ञान एव विषयतया व्यक्तिरवच्छेदिकेति भावः । 20

ननु गोत्वविशिष्टशक्ततया पदज्ञानत्वापेक्षया गोत्वशक्ततया पदज्ञानत्वमेव गोत्वविशिष्टशाब्दबोधे हेतुर्लाघवात् यादृशं च विशिष्टं कार्यतावच्छेदककोटौ निविशते तत्रैव तत्समभिव्याहृत विभक्त्यर्थाद्यन्वय इति नातिप्रसंगः । भवतु वा स्वरूपसत्येव शक्तिस्तन्नियामिका गोत्वस्यैव तत्र कारणतावच्छेदकत्वम् न व्यक्तेः इत्येव जातिशक्तिवादपदार्थः । न च गोत्वत्वादिना गोत्वशक्तिभ्रमेण तत्र गृहीतशक्तित्रयेण तत्र गृहीतशक्तिकम्वा यत्पदं तत्रापि लाघवात् गोत्वशक्ततया ज्ञानत्वमेव कारणतावच्छेदकमिति 25
तत्रापि गोत्वप्रकारकशाब्दबोधस्य गोपदाद्वा गोत्वविशेष्यकबोधस्य प्रसंग इति वाच्यम् । गोत्वविशेष्यकाणां शक्तिग्रहप्रकारवैचित्र्येण नानाप्रकारकबोधानां दर्शनेन तत्रैकप्रकारकतद्ग्रहे तदतिरिक्ततद्बोधवारणाय कारणतावच्छेदके प्रकारीभूतधर्मनिवेशस्यावश्यकत्वात् ।

न च गोत्वेन गवि शक्तिग्रहे गोभिन्नस्यापि तेन रूपेण शाब्दबोधविषयतावारणाय व्यक्तेरपि तत्र निवेश इति वाच्यम् । योग्यतावलेन व्यक्त्यन्तरभानस्यापि तत्र न्यायनये इष्टत्वात्, अस्माकन्तु गोत्वेन गोशाब्दबोधत्वस्य कार्यतावच्छेदकत्वेनानतिप्रसंगात् । यत्तु प्रकारताख्यविलक्षणविषयतया गोत्वं कारणतावच्छेदकं तत्तु व्यक्तिशक्तेरेव भंग्यन्तरे-
5 णाभिधानमात्रमित्यरुचेः प्रतिवन्दिमाह—**एवञ्चेति** । पर्यवस्यति वोधं जनयति । सामान्याश्रया घटशक्ततावच्छेदकपदत्वाश्रया तद्वति घटपदे पर्यवस्यति तत्कार्यं करिष्यति । तथा च शब्दानित्यत्वेऽपि न क्षतिरिति भावः । स्वरउदात्तादिः आनुपूर्वीति । अन्यथा जराराजनदीदीनयोरविशेषप्रसंग इति भावः । तथा च वर्णानां नित्यत्वेऽपि स्वरत्वादेरनित्यतयाननुगमेन शक्तिग्रहे प्रकारान्तरमवश्यमास्थेयमिति फलति ।
10 उपसंहरति—**तस्मादिति** । जातिक्रोडनिविष्टाः जातिविशिष्टाः अर्थाः शक्याः पदानि न तु तत्तत्पदत्वानि संवन्ध्यन्तरे शक्तानि । अन्यथा अन्यप्रकारः । एतदनुरोधेन तथाविध-शक्तिग्रहानुरोधेन । कैव कथा नित्यत्ववार्ता । तत्समूहरचनानुपूर्वीस्वभावघटकीभूतो धर्मः ।

परतन्त्रपुरुषपराधीनतया प्रवाहाविच्छेदमेव नित्यतां ब्रूम इति चेत् । एतदपि नास्ति । सर्गप्रलयसम्भवात् । अहोरात्रस्याहोरात्रपूर्वकत्वनियमात्, कर्मणां विषम-
15 विपाकसमयतया युगपद्वृत्तिनिरोधानुपपत्तेर्वर्णादिव्यवस्थाऽनुपपत्तेः, समयानुपलब्धौ शाब्दव्यवहारविलोपप्रसङ्गाद्, घटादिसम्प्रदायभङ्गप्रसङ्गाच्च कथमेवमिति चेत् । उच्यते—

**वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत् ॥**
**उद्भिद्वृश्चिकवद्वर्णा मायावत् समयादयः ॥ २ ॥**

20 तत्पूर्वकत्वमात्रे सिद्धसाधनाद्, अनन्तरतत्पूर्वकत्वे अप्रयोजकत्वाद्, वर्षादि-दिनपूर्वकतद्दिननियमभङ्गवदुपपत्तेः । राश्यादिविशेषसंसर्गरूपकालोपाधिप्रयुक्तं हि तत् । तदभाव एव व्यावृत्तेः । तथेहापि सर्गानुवृत्तिनिमित्तब्रह्माण्डस्थितिरूपकालो-पाधिनिबन्धनत्वात्तस्य तदभाव एव व्यावृत्तौ को दोषः । न च तदनुत्पन्नमनश्वरं वा अवयवित्वात् ।। वृत्तिनिरोधस्यापि सुषुप्त्यवस्थावदुपपत्तेः । न ह्यनियतविपाकसमयानि कर्माणीति न तदानीं कृत्स्नान्येव भोगविमुखानि । न ह्यचेतयतः कश्चिद्भोगो नाम ।
25 विरोधात्, कस्तर्हि तदानीं शरीरस्योपयोगः ? । तं प्रति न कश्चित् । तर्हि किमर्थमनु-वर्त्तते ? उत्तरभोगाऽर्थं, चक्षुरादिवत् । प्राणिति किमर्थम् ? श्वासप्रश्वाससन्तानेना-युषोऽवस्थाभेदार्थम्, तेन भोगविशेषसिद्धेः । एकस्यैव तत् कथञ्चिदुपपद्यते, न तु विश्वस्येति चेत् । अनन्ततया, अनियतविपाकसमयतया, उपमर्द्योपमर्दैकस्वभावतया च कर्मणां, विश्वस्यैकस्य वा को विशेषो येन तन्न भवेत् । भवति च सर्वस्यैव सुष्वापः
30 क्रमेण, न तु युगपदिति चेन्न । कारणक्रमायत्तत्वात् कार्यक्रमस्य । न च स्वहेतुवलायातैः कार्यैः क्रमेणैव भवितव्यम्, अनियतत्वादेव सर्वग्रासवत् । ग्रहाणां ह्यन्यदा

समागमानियमेऽपि तथा कदाचित् स्यात्। यथा कलायनियमेऽपि सर्वमण्डलोपरागः स्यात्, त्रिदोषसन्निपातवद्वा। यथा हि वातपित्तश्लेष्मणां चयप्रकोपप्रशमक्रमाऽनियमेऽपि एकदा सन्निपातः स्यात्तदा देहसंहारः, तथा कालानलपवनमहार्णवानां सन्निपाते ब्रह्माण्डदेहप्रलयावस्थायां युगपदेव भोगरहिताश्चेतनाः स्युरिति को विरोधः ?। तथापि, विदेहाः कर्मिण इति दुर्घटमिति चेत्। किमत्र दुर्घटम् ?। 5 भोगनिरोधवच्छरीरेन्द्रियविषयनिमित्तनिरोधादेव तदुपपत्तेः।

वृश्चिकतण्डुलीयकादिवद् वर्णादिव्यवस्थाप्युपपद्यते। यथा हि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयादाद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुलकणादाद्यो, वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः, एवं क्षीरदधिघृततैलकदलीकाण्डादयः। तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकास्तत्तत्कर्मोपनिबद्धभूतभेदहेतुका एव, 10 स एव हेतुः सर्वत्रानुगत इति सर्वेषां तत्सान्तानिकानां समानजातीयत्वमिति किमसङ्गतम् ?। गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना। न गतम्, योनिजेष्वेव व्यवस्थापनात्, मानसास्त्वन्यथाऽपीति। गोमयवृश्चिकादिवद् इदानीमपि किं न स्यादिति चेन्न। कालविशेषनियतत्वात् कार्यविशेषाणाम्, न हि वर्षासु गोमयाच्छालूक इति हेमन्ते किं न स्यात् ? 15

समयोऽप्येकेनैव मायाविनेव व्युत्पाद्यव्युत्पादकभावावस्थितनानाकायाधिष्ठानाद् व्यवहारत एव सुकरः। यथा हि मायावी सूत्रसञ्चाराधिष्ठितं दारुपुत्रकमिदमानयेति प्रयुङ्क्ते, स च दारुपुत्रकस्तथा करोति तदा चेतनव्यवहारादिवत् तद्दर्शी बालो व्युत्पद्यते, तथेहापि स्यात्। क्रियाव्युत्पत्तिरपि तत एव कुलालकुविन्दादीनाम्।

सर्गादावेव किं प्रमाणमिति चेत्। विश्वसन्तानोऽयं दृश्यसन्तानशून्यैः 20 समवायिभिरारब्धः। सन्तानत्वादारणेयसन्तानवत्। वर्त्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः, नित्यत्वे सति तदारम्भकत्वात् प्रदीपपरमाणुवदित्यादि। अवयवानामावापोद्वापादुत्पत्तिविनाशौ च स्यातां, सन्तानाऽविच्छेदश्चेति को विरोध इति चेन्न। एवं तर्हि घटादिसन्तानाविच्छेदोऽपि स्यात्, विपर्ययस्तु दृश्यते। कर्त्रादिभोगविशेषसम्पादनप्रयुक्तोऽसाविति चेन्न। द्व्यणुकेषु तदभावात्। 25 तथा च तदवयवानामपगमाभावेऽनादित्वप्रसङ्गे द्व्यणुकत्वव्याघातः। तस्माद् यत्कार्यं यन्निबन्धनस्थिति, तदपगमे तन्निवृत्तिः, यद् यद्धेतुकं तदुपगमे तस्योत्पत्तिः। न च कार्यस्य स्थितिनिबन्धनं नित्यमेव। नित्यस्थितिप्रसङ्गात्। न च नित्य एव हेतुः, अकादाचित्कत्वप्रसङ्गात्। तदतिनिस्तरङ्गमेतत्।

ईदृश्याञ्च वस्तुस्थितौ भोगोऽपि कर्मभिरेवमेव वस्तुस्वभावानतिक्रमेण 30 सम्पादनीय इति द्व्यणुकवत् पिपीलिकाण्डादेर्ब्रह्माण्डपर्यन्तस्यापि विश्वस्येयमेव गतिरिति प्रतिवन्धसिद्धिः। तथा च ब्रह्माण्डे परमाणुसाद्भवितरि परमाणुषु च स्वतन्त्रेषु पृथगासीनेषु तदन्तःपातिनः प्राणिगणाः क्व वर्त्तन्ताम् ? कुपितकपिकपोलान्तर्गतोदुम्बरमशकसमूहवद्, दवदहनदह्यमानदारूदरविघूर्णमानघुणसङ्घातवत्, प्रलयपवनोल्लासनीयौर्वानलनिपातिपोतसांयात्रिकसार्थवद्वेति ॥ २ ॥ 35

आमोद

ननु वेदा एव ध्वंसप्रतियोगिनः इति न तन्नित्यतां ब्रूमोऽपितु वेदप्रवाहः कदापि नोच्छिद्यत इत्याह—**परतन्त्रेति**। तथा च शिष्योपाध्याये परम्पराधीनत्वात् सर्वदा वेदानुवृत्तिर्न त्वीश्वरवक्तृकतयेति भावः। तज्जातीयानुपूर्वीज्ञानजन्यानित्यज्ञानजन्यत्वमेव परतन्त्रपुरुषपरम्पराधीनत्वम्। प्रलये 5 बाधमाशङ्कते—अहोरात्रेति। सम्प्रति तथा दर्शनादिति भावः। कर्मणां धर्माधर्माणां विषमविपाकसमयतया क्रमिकसहकारिसमवधानतया युगपद्वृत्तिनिरोधो यौगपद्येन भोगवैमुख्यम्। **वर्णादीति**। वर्णानां ब्राह्मणत्वादीनां या व्यवस्था ब्राह्मणत्वादिपूर्वकत्वनियमः, तदनुपपत्तेरनुपपतिप्रसङ्गादित्यर्थः। **समयेति**। वृद्धव्यवहाराधीनः सङ्केतग्रहः सर्गादौ न 10 स्यादित्यर्थः। **घटपटादीति**। कुविन्दकुलालादीनामुच्छेदे सर्गादौ कथं तन्निर्माणशिक्षा स्यादित्यर्थ। **कथमिति**। उक्तबाधकेभ्यः कथं प्रलयसिद्धिरित्यर्थः।

**वर्षादिवदिति**

वर्षादिनपूर्वकत्वे साध्ये यथा वर्षाप्रथमदिवसान्यराशिविशेष उपाधिः; तेन न वर्षादिनत्वरूपसाधनव्यापकमिति। तथाऽहोरात्रपूर्वकत्वेऽहोरात्रस्य 15 साध्ये भवो ब्रह्माण्डस्थितिकालः स एवोपाधिरित्यर्थः। सुषुप्तौ यथा कर्मणां युगपद्वृत्तिनिरोधस्तथाऽन्यत्रापि स्यादित्याह—**वृत्तिरोध** इति। यथा तण्डुलीयशाकवृश्चिकयोस्तत्पूर्वकत्वेऽप्याद्यौ तौ तण्डुलकणगोमयाभ्यां भवतः, तथा ब्राह्मणत्वादीनां तत्पूर्वकत्वेऽपि सर्गादौ तज्जनकधर्मोपगृहीतभूतभेदात् स्यादित्याह—**उद्भिदिति**। प्रयोज्यप्रयोजककायाधिष्ठानादीश्वरतयैव व्यव- 20 हारान्मायादिव्यवहारादिव तद्दर्शी व्युत्पन्नः स्यादित्याह—**मायावदिति**।

अहोरात्रस्याहोरात्रपूर्वकत्वं साध्यम्, अव्यवहिताहोरात्रपूर्वकत्वम्वा ? नाद्य इत्याह—**तदिति**। पूर्वसर्गाहोरात्रपूर्वकत्वस्य मयाप्युपगमादित्यर्थः। द्वितीयं त्वाह—**अनन्तरेति**। वर्षर्तुप्रथमदिनस्य यथा न वर्षादिना व्यवहितपूर्वकत्वं तथा प्रकृतेऽपि स्यादित्थंः। ननु व्यभिचारे 25 चावश्यमुपाधिरित्यत आह—**राश्यादीति**। कर्कटप्रथमांशानवच्छिन्नकर्कटसिंहाद्यन्यतरावच्छिन्नाहोरात्रत्वं वर्षादिनपूर्वकत्वे साध्ये उपाधिः। अयं च वर्षादिनत्वरूपसाधनावच्छिन्नसाध्यव्यापकः। यथाश्रुते शरत्प्रथमदिने

साध्याव्यापकत्वं स्यात्। न च साधनव्यापकत्वं कर्कटप्रथमांशावच्छिन्नदिने साधनाव्यापकत्वाद्यथा तथा ब्रह्माण्डस्थित्यवच्छिन्नप्रथमाहोरात्रातिरिक्ताहोरात्रस्याव्यवहिताहोरात्रपूर्वकत्वमित्यर्थः। तथा च वर्षादिनमव्यवहितवर्षादिनपूर्वकम्, वर्षादिनत्वादिति प्रयोग उपाधिरुक्त इति। भवोपाधित्वमेव स्फुटयति—**तथेहापीति**। तस्याव्यवहिताहोरात्रपूर्वकत्वस्य तदभाव एव उक्तोपाध्यभाव एवेत्यर्थः। उपाधेः साधनाव्यापकत्वमाशङ्क्याह—**न चेति**। अवयवित्वं च ब्रह्माण्डस्यागमसिद्धम्। **सुषुप्तीति**। पुरुषस्य यदा सुषुप्तिः तदा सर्वाणि कर्माणि भोगविमुखानीत्यर्थः। ननु सुषुप्तावपि भोगः स्यादित्यत आह—**न हीति**। **विरोधादिति**। सुखदुःखसाक्षात्कारस्यैव भोगत्वादिति भावः। **तं प्रतीति**। सुस्वापवन्तमित्यर्थः। **तदुत्तरेति**। तस्यैवोत्तरभोगार्थमित्यर्थः। **चक्षुरादिवदिति**। अन्यथा निमीलितनयनस्य चक्षुरपि न स्यादित्यर्थः। **प्राणितीति**। अभुञ्जानस्य जीवनमनुपपन्नमित्यर्थः। आयुषोऽवस्थाविशेषो बाल्यादिः, तस्याप्युपयोगमाह—**तेनेति**। यद्यपि सकलवृत्तिनिरोधे सुषुप्तस्य श्वासप्रश्वाससन्तानोऽप्यसम्भवी तथापि वृत्तिरोधो भोगवैमुख्यमिति। **अनन्ततयेति**। एकस्याप्यनन्तानि कर्माणि अनियतविपाकसमयानि च, उपमर्द्योपमर्दकस्वाभाव्यं प्रतिबध्यप्रतिबन्धकभावः। भवति ह्युत्कटेन कर्मणा अनुत्कटकर्मप्रतिबन्ध इत्यर्थः। **भवतीति**। तथा च प्रलयेऽपि युगपत्कर्मनिरोधो मा भवत्विति भावः। कारणयौगपद्ये कार्ययौगपद्यस्यावश्यकत्वमित्याह—**कारणेति**। ब्रह्माण्डरूपो देहः ब्रह्माण्डदेहः। **तथापीति**। अवच्छेदकं देहमन्तरेण कर्माण्यनुवर्तिष्यन्त इत्यसम्भवीत्यर्थः। **क्षीरेति**। परमाणोरक्षीरादेव क्षीरादयः। परमाणौ क्षीरत्वादिजातेरभावात् कदलीकाण्डं च दग्धवेत्रबीजात्। नन्वेवमननुगमः। सर्गादौ ब्राह्मणस्य ब्राह्मणपूर्वकत्वं नास्ति, इदानीं तु तदस्ति इत्यत आह—**स एवेति**। अदृष्टविशेषोपगृहीतभूतभेदत्वं सर्गादाविवेदानीमप्यनुगतमेवेत्यर्थः। **गतमिति**। व्यभिचारादित्यर्थः। **योनिजेष्विति**। योनिजमात्रवृत्तिगोत्वावान्तरजातिभेदात गोपूर्वकत्वानुमानमित्यर्थः। **इदानीमपीति**। विनापि ब्राह्मणादिकम् इदानीमपि ब्राह्मणाद्युत्पद्यतामित्यर्थः। **कालविशेषेति**। सर्गाद्यकाल एव तददृष्टसहकारीत्यर्थः। इदानीं ब्राह्मणः सहकारी तेन सर्गाद्यकालब्राह्मणयोर्वैजात्यावच्छेदेन कारणता, ब्राह्मण-

मात्रे त्वदृष्टविशेषोपगृहीतभूतभेद एव हेतुरिति भावः। **समयोऽपीति**। प्रयोज्यप्रयोजकशरीरोपग्रहेण ईश्वर एव तटस्थान्मन्वादीन् व्युत्पादयतीत्यर्थः। तत्र प्रयोज्यवृद्धेर्गवादिपदजन्यत्वज्ञानं यद्यपि भ्रान्तं तथापि सास्नादिमती व्यक्तिः गोपदवाच्येति निकटस्थज्ञानमभ्रान्तमभ्रान्तमेवेति भावः। दृष्टान्तं
5 विवृणोति—**यथा हीति**। **अत एवेति**। कुलालादिशरीरोपग्रहेण घटादिनिर्माणं कुर्वाणमीश्वरं दृष्ट्वाऽन्यस्तत्र व्युत्पद्यत इत्यर्थः। अत एव नमः कुलालेभ्यः कर्मारेभ्य इत्यादिश्रुतिरपीति भावः। **विश्वसन्तानोऽयमिति**। मानुषपशुगो-ब्राह्मणादिरूपोऽयमिदानीं वर्तमानः पक्षः। **दृश्यसन्तानशून्यैरिति**। स्वसमान-जातीयसहकारिशून्यैः समवायिभिः परमाणुभिरारब्ध इति साध्यं, तथा
10 च गामन्तरेण गौः ब्राह्मणान्तरेणापि ब्राह्मण इत्यादि सिद्ध्यति। **सन्तानत्वा-दिति**। समानजातीयकार्यप्रवाहत्वादित्यर्थः। **आरणेयेति**। यैस्तेजः परमाणु-भिरारणेयवह्निप्रवाहो जनितः, तत्र वह्निर्न सहकारीति दृष्टान्तः। तथा च ब्राह्मणप्रवाहस्यापि मूलभूतो ब्राह्मणो न ब्राह्मणसहकृतैः परमाणुभिरा-रब्धः, किन्त्वदृष्टविशेषोपगृहीतैरिति भावः। एतेन ब्रह्माण्डपक्षत्वे आश्रया-
15 सिद्धिः, कार्यमात्रपक्षत्वे क्रमारम्भेण सिद्धसाधनमित्यादि परास्तम्। यद्वा द्रव्यत्वं प्रागभावसमानकालीनकार्यद्रव्यानधिकरणवृत्तिधर्मत्वात्, शब्दत्ववत्। यद्वा कार्यद्रव्यत्वं स्वाधिकरणानधिकरणकालवृत्तिध्वंसप्रतियोगिवृत्तिकार्य-मात्रवृत्तिधर्मत्वात्, एतत्प्रदीपत्ववत्। यद्वा परमाणवः कार्यद्रव्यासमाना-धिकरणकालिकपरमाणुक्रियातिरिक्तक्रियावन्तः मूर्तत्वादिवत्, एतदन्य-
20 गुणवत्त्वं चात्र नोपाधिः पक्षेतरतुल्यत्वात्। **वर्तमानेति**। ब्रह्माण्डे चागम एव मानमिति नाश्रयासिद्धिः। परम्परारम्भकत्वविवक्षया आरब्धब्रह्माण्डा-न्तरा इति साध्यमन्यथा त्वारब्धब्रह्माण्डान्तरमूलद्व्यणुका इति साध्यम्। तत्र कपालादिषु व्यभिचारवारणाय—**नित्यत्वे सतीति**। व्योमादौ तद्वार-णार्थमारम्भकत्वादिति। द्रव्यारम्भकत्वादित्यर्थः। अवापोद्वापौ उपगमा-
25 पगमौ यावत्प्रत्यभिज्ञमवयवस्थितिरिति मीमांसकसिद्धान्तात्। **एवं हीति**। घटपटादीनामत्यन्तमुच्छेदो न स्यादित्यर्थः। **विपर्ययस्त्विति**। घटादीनाम-त्यन्तोच्छेदस्त्वयापि स्वीक्रियतेऽनुभूयते च, तेन तत्तुल्यन्यायतया समवाय्य-समवायिनाशे ब्रह्माण्डनाशोऽपि कथं न स्यादित्यर्थः। ननु घटादिध्वंसः कुलालादिदुःखानुभवरूपभोगसम्पादकतया स्वीक्रियताम्। ब्रह्माण्डध्वंसे तु

नैवमिति तद्ध्वंसो नाभ्युपेयत इति शङ्कते—भोगेति। द्व्यणुकनाशे कस्यापि न दुःखानुभव इति सोऽपि न स्यादित्यत आह—द्व्यणुकादिष्विति। ननु तत्राप्यवयवोपगमाधीन एव द्रव्यध्वंसव्यवहारोऽस्तु, को दोष इत्यत आह—तथा चेति। तथा च सन्तानमत्यन्तमुच्छिद्यत इति नियम इति भावः। यन्निबन्धनस्थितीति। अदृष्टं समवाय्यादि वा यत्कार्यस्थितिप्रयोजकं तद्विनाशे 5 तत्कार्यं विनश्यतीत्यर्थः। नित्यस्थितीति। कार्यस्येत्यनुषङ्गः। न चेति। हेतोर्नित्यत्वे कार्यमपि नित्यं स्यात्, कादाचित्कत्वे नियामकाभावादित्यर्थः। निस्तरङ्गं निःशङ्कम्। एतदिति। अनुमानद्वयोपपत्तेः साध्यद्वयमित्यर्थः। ननु कर्मभिर्भोगसम्पादनं क्रमिकमेवास्तु, तथा च कुतः प्रलय इत्यत आह—ईदृश्यामिति। कार्याणां स्वनिबन्धनस्थितिकत्वसिद्ध्यै कर्मभिरपि भोग 10 एवमेव। वस्तुस्वभावानतिक्रमेणैव सम्पादनमिति [ नीय इति ] योजना। इयमेवेति। पिपीलिकाण्डानात्यन्तोच्छेदः तन्मूलकपरमाणूनामुत्पादितसजातीयत्वं चेत्यर्थः। ननु ब्रह्माण्डनाशेऽपि गिरिसागरादीनां तादवस्थ्यात् क्व लय इत्यत आह—तथा चेति। क्व वर्तन्तामिति। आश्रयनाशेन नश्यन्तीत्यर्थः। ब्रह्माण्डवर्तीनि कार्यद्रव्याणि ब्रह्माण्डे नश्यति नश्यन्ति विनश्यदा- 15 धारत्वात्, दह्यमानाधारत्वात्, विलीयमानाधारत्वात् इति। अत्र हेतुत्रये दृष्टान्तत्रयं द्रष्टव्यम्॥ २॥

बोधनी।

अथ द्वितीयं पादं व्याचिख्यासुः शङ्कते—परतन्त्रेति। पूर्वपूर्वोच्चारयितृपुरुषपरतन्त्रोत्तरोच्चारयितृपरम्पराप्रवाहस्याविच्छेदो नित्यता, सा च प्रत्युच्चारणविनाशिनोऽपि संभवतीति। एतदपीति। एतत्प्रवाहाविच्छेदलक्षणमपि नित्यत्वमिति। सर्गप्रलययोर- 20 संभवे पराभिमतसाधनान्याशङ्कते—अहोरात्रस्येति। विप्रतिपन्नमहोरात्रमव्यवहिताहोरात्रपूर्वकमहोरात्रत्वात् अद्यतनाहोरात्रवत्, अन्यथाऽद्यतनमपि तथा न स्यात् नियामकाभावात्। किञ्च, कर्मणां धर्माधर्माणाम् विषमोऽनेकः फलकालः तेनैकस्मिन् भुक्तफले कर्मणि क्षीयमाणे कर्मान्तरमुपतिष्ठते फलान्तरोत्पादनेनेत्येककर्मिणः कियन्त्यपि कर्माणि युगपन्निरुद्धवृत्तीनि न संभवन्तीति किमुतानन्तानां कर्मिणामनन्तानि कर्माणि 25 तदापि कस्याचित्कर्मणो विपाकावश्यम्भावात्। प्रयोगश्च—विवादाध्यासितानि कर्माणि न युगपन्निरुद्धवृत्तीनि विषमविपाकसमयत्वात् इदानीं भुक्तभुज्यमानभोक्ष्यमाणकर्मवदिति।

किञ्च, सर्गादिभुवां जातिविशेषव्यवस्थापकस्योत्पादकजातिविशेषस्याभावाद् ब्राह्मणत्वादि-वर्णव्यवस्था न स्यात्, विप्रतिपन्ना ब्राह्मणाः ब्राह्मणसंतानजन्मानः ब्राह्मणत्वादद्यतनवत् । किञ्च, सर्गादौ सर्वेषामव्युत्पन्नत्वेन समयग्रहणानुपपत्तौ शब्दव्यवहारोऽपि लुप्येत । विप्रतिपन्नः शाब्दव्यवहारः वृद्धव्यवहारपूर्वकः शाब्दव्यवहारत्वात् अद्यतनवत् । किञ्च, 5 तदानीं कस्यचिदादर्शकस्याभावाद् घटादिनिर्माणसंप्रदायो न स्यात् विप्रतिपन्नं घटादि-निर्माणं तथा भूतादर्शकज्ञानपूर्वकं घटादिनिर्माणत्वादद्यतनवत इत्येतैर्हेतुभिर्युगपत्सर्गप्रलययो-रसंभवे सति कथं वेदसंप्रदायविच्छेदः स्यादिति ॥

पञ्चापि साधनानि दूषयति—**उच्यते वर्षादिवदिति** । न तावदहोरात्रपूर्वकत्वे अहोरात्रत्वं प्रयोजकं, भवस्य ब्रह्माण्डस्थितेस्तत्रोपाधित्वात् । यथा वर्षादिदिनस्य तद्दिन-10 पूर्वकत्वे तद्दिनत्वमप्रयोजकं राश्यादिसंसर्गोपाधित्वात् । तस्य च कर्मणां युगपद्वृत्ति-निरोधोऽपि सुषुप्तिदशायामिव संभवति । ब्राह्मणत्वादिनियमोऽपि गोमयादिजातानामिव वृश्चिकादीनामुपपद्यते । समयग्रहोऽपि सर्गादौ स्वयमेव परिगृहीतप्रयोज्यप्रयोजकवृद्ध-शरीरव्यवहारस्य परमेश्वरस्य व्यवहारत एव सुकरः, यथेन्द्रजालिकस्थसूत्रप्रोता दारुमय-पुत्रिका इदमानयेति नियुज्य तथा कुर्वन्तीभिस्ताभिर्मायाव्यवहारे तद्दर्शिनां, बालानां 15 तया घटादिक्रियासंप्रदायोऽपि गृहीतकुलालादिविग्रहेण भगवतैव सिध्यतीति ।

प्रथमं पादं व्याचष्टे—**तत्पूर्वकत्वमात्र** इति । सर्गादिवर्त्तिनोऽहोरात्रस्याहोरात्र-पूर्वकत्वे साध्ये सिद्धसाधनं, तस्यापि पूर्वसर्गान्तिमाहोरात्र पूर्वकत्वात् । किञ्च संप्रति-पन्नाहोरात्रपक्षीकरणे सिद्धसाधनं सर्गादिवर्त्तिनस्त्वाश्रयासिद्धिरिति भावः । नन्वव्यव-हिताहोरात्रपूर्वकत्वं साध्यत इत्यत्राह—**अनन्तरेति** । तत्राहोरात्रत्वमप्रयोजकं संप्रतिपन्नाहो-20 रात्राणामनन्तरतत्पूर्वकत्वस्योपाध्यन्तरप्रयुक्तत्वादिति । अप्रयोजकत्वमेव दृष्टान्तेन दर्शयति—**वर्षादीति** । यथा हि वर्षाशरदित्यादौ ऋतुमध्यन्दिनानां तत्तदृतुदिनपूर्वकत्वे तद्दिनत्व-मप्रयोजकं संप्रतिपन्नाहोरात्राणां तत्तदृतूनां प्रथमदिनेषु व्यभिचारात् । यद्वा, वर्षर्त्तोरा-दिदिनस्य तद्दिनपूर्वकत्वे साध्ये तद्दिनत्वमप्रयोजकमभ्युपगम्यते तथाहोरात्रत्वमप्रयोजक-मुपपद्यत इति कस्तत्रोपाधिर्येन तद्दिनत्वस्य नियमो भज्यत इत्यत्राह—**राश्यादीति** । 25 राश्यादिविशेषैरादित्यस्य संसर्गात्मको यः कालोपाधिस्तत्प्रयुक्तं तद्दिनपूर्वकत्वं तस्य कालोपाधेरभावे तद्दिनपूर्वकत्वं तस्य कालोपाधेरभावे तद्दिनपूर्वकत्वस्यापि व्यावृत्तेः साध्या-भावाविनाभावात्ययत्वादिति **यावदिति** । दार्ष्टान्तिकत्वेऽप्यप्रयोजकत्वमुपाधिप्रदर्शने-नाह—**तथेति** । सर्गस्यानुवृत्तौ निमित्तभूता या ब्रह्माण्डस्थितिः सा स्वरूपमात्मा यस्य

कालोपाधेः स एव निबन्धनमनन्तराहोरात्रपूर्वकत्वस्य; तस्मात्सर्गादौ तस्योपाधेरभावे साध्यव्यावृत्तिर्नानुपपन्नेति। ननु ब्रह्माण्डस्य सर्वदावस्थानात् कथं च तदभावः तत्राह—**न चेति**। तत् ब्रह्माण्डमुत्पन्नं विनश्वरं च सावयवत्वादिति।

अथ द्वितीयं पादं व्याचष्टे—**वृत्तिनिरोधस्यापीति**। दृष्टान्तं विभजते—**न हीति**। अनियतविपाकसमयानीत्येतावता सुषुप्तिदशायां कृत्स्नान्यपि भोगाविमुखानि 5 न हि भवन्ति, किंतु भोगविमुखान्येव। सुषुप्तस्य भोगोत्पादः किमिति न स्यात् अत्राह—**न हीति**। अचैतन्यं सुषुप्तिमूर्छादिः, भोगश्च सुखाद्यनुभवः। तत्र यदि सुषुप्तस्य भोगः स्यात् तदाऽस्त्यनुभवो नास्ति चेति विरोधः स्यादिति। यदि तदा न भोगः कश्चित्तर्हि भोगसाधनस्य शरीरस्य क्वोपयोग इत्याह—**कस्तर्हीति**। गूढाभिसन्धिराह **तं प्रतीति**। तं = सुषुप्तमिति। अज्ञातपराभिसन्धिः पृच्छति—**किमर्थमिति**। 10 स्वाभिसन्धिमुद्घाटयन्नुत्तरमाह—**उत्तरेति**। यथा हि ज्ञानजननार्थानि चक्षुरादीनि तदानीं ज्ञानमनुत्पादयन्त्यपि जाग्रद्दशायां तदुत्पादनायानुवर्त्तन्ते तथा शरीरमप्युत्तरभोगायेति। कस्तर्हि उत्तरकालं यावत्तावदवस्थितस्य प्राणनस्य तदानीमुपयोग इत्याह—**प्राणितीति**। प्राणनं नाम = शरीरान्तर्वर्त्तिनो वायोर्गतिविशेष इति। **श्वासेति**। प्राणाख्यस्य वायोः कालावच्छेदेन संबन्ध आयुरिति। अवस्थाभेदो वा किमर्थ इत्याह— 15 **तेनेति**। अस्मिन्नवस्थाभेदे असौ भोगोऽस्मिंस्त्वयमित्यवस्थाभेदेषु भोगविशेषाः प्राणिनां नियताः, ततस्तत्सिद्ध्यर्थोऽवस्थाभेद इति। नन्वस्त्वेकस्यात्मनः कर्मणां युगपद्वृत्तिनिरोधः, न तु विश्वस्यात्मवर्गस्य, न ह्यनन्तानां भोक्तृणामनन्तानि कर्माणि युगपन्निरोत्स्यन्त इति संभवतीत्याह—**एकस्यैवेति**। **अनन्तेति** अनन्तत्वादीनि हि कर्मणां युगपन्निरोधविरोधीनि; तानि च कर्मणामेकत्वानेकत्वयोरविशिष्टानि। तत्र यद्येकस्य 20 सुषुप्तिदशायां तथाभूतानामेव कर्मणां युगपन्निरोधः संभवति। किमिति विश्वस्यायं न संभवेदिति। किंच, सुषुप्तिरपि सर्वस्य भवति न त्वेकस्यैवेत्याह—**भवति चेति**। तेन कर्मिणामेकानेकत्वकृतो विशेषो नास्तीति। ननु सत्यमस्ति सर्वस्यापि सुस्वापः, स तु क्रमेण न युगपदित्याह—**क्रमेणेति**। ततश्च न तन्निदर्शनेन युगपत्प्रलयः सिध्यतीति भावः। **नेति**। सुषुप्तेः कारणक्रमवशात् क्रमः, न युगपन्निरोध- 25 विरोधादिति। ननु सुषुप्तेरिव प्रलयस्यापि कारणानि क्रमेण भवन्ति दृश्यन्ते, तद्वत्सर्वदापि किमिति न भवन्तीत्यत्राह—**न चेति**। न हि कचित्कदाचिद्वा क्रमभावीनि कारणानीति सर्वत्र सर्वदा वा तैस्तथा भवितव्यं स्वहेतूनां क्रमयौगपद्यवशेन संभवत्क्रमयौगपद्यानां कारणानामनियतत्वात् **क्रमस्येति**। एकदा क्रमभाविनामेवान्यदा यौगपद्यं

दृष्टमित्याह—**सर्वग्रासवदिति**। तदेव विभजते—**ग्रहाणामिति**। अत्रैव दृष्टान्तान्तरमाह—**त्रिदोषेति**। तदेव विभजते—**यथा हीति**। वातादिदोषाणां चयप्रकोपप्रशमा न नियताः कदाचिद्धि कश्चिच्चीयते कुप्यति शाम्यति वेति, न तु युगपत्सर्वेऽपि। यथाह—**वाहटः**।

5 चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु।
वर्षादिषु च पित्तस्य श्लेष्मणः शरदादिषु। इति

तत्रैकैकमात्रकोपे रोगः स्यात्। कदाचित् त्रयाणां सन्निपातो युगपत्कोपः स्यात्। तदा देह एव प्रलीयते। तदप्याह।

"रोगस्तु दोषवैषम्याद्दोषसाम्यमरोगता।
10 वातः पित्तं कफश्चेति त्रयो दोषाः समासतः।
विकृता विकृता देहं घ्नन्ति ते वर्त्तयन्ति च"। इति

पक्षेऽप्याह—**तथेति**। ब्रह्माण्डात्मनो देहस्य, कालानलः पित्तं, संहारपवनो वातः, महार्णवः श्लेष्मेति, तेषां कोपे तदपि प्रलीयते। तदा च भोग्यभोगसाधनयोरसंभवे भोगरहिताः कर्मिणस्तिष्ठन्तीत्यविरुद्धमिति। **तथापीति**। न सन्ति देहाः, 15 सन्ति च तेषां निमित्तानि कर्माणीति व्याहतमिति। **किमत्रेति**। यथा हि तदानीं सत्स्वेव कर्मसु तन्निरोधात् भोगो निरुध्यते, तथाऽत एव भोगसाधनदेहादिनिरोधोऽपि घटिष्यत इति।

तृतीयं पादं व्याचष्टे—**वृश्चिकेति**। दग्धाद्वेत्रबीजात् कदलीकाण्डोत्पत्तिरित्यादयः। पक्षेऽप्याह—**तथेति**। तेषां मानुषादीनाम्। **तत्तत्कर्मेति**। तत्तन्मानुषत्वादि- 20 जातिभेदनिमित्तादृष्टवदात्मसंयुक्तारम्भकपरमाणुभेदहेतुका इति। तर्हि वैजात्यात्कारणस्य कार्यसाजात्यं न स्यादित्यत्राह—**स एवेति**। अद्यतनानामप्यदृष्टोपनिबद्धभूतभेदहेतुकैव जातिव्यवस्था, ततश्च न कारणवैजात्यमिति। यदि सर्वत्र कर्मोपनिबद्धभूतभेदहेतुर्जातिनियमः, तर्ह्युत्पादकजातिपूर्वकत्वमुत्पाद्यजातीनामिति नियमो निरस्तः स्यादित्याह—**गतं तर्हीति**। **न गतमिति**। न च सोऽपि नियमः सर्वथा निरस्यत इति। 25 कथमित्याह—**योनिजेष्विति**। योनिजेष्वेवायं नियमो नायोनिजेष्विति केवलं व्यवस्थाप्यते, तेन मानसानामन्यथात्वमपि संभवतीति। नन्वद्यत्वेऽपि यथा गोमयाद् वृश्चिका जायन्ते तथा मनसाऽपि केचिज्जायन्तामित्याह—**गोमयेति**। **नेति**। कालविशेषलक्षणसहकारिविरहादित्यर्थः। तत्रैव दृष्टान्तमाह—**न हीति**। तथा सर्गादावेवादृष्टोपनिबद्धभूतहेतुको जातिनियमः, नेदानीमपीति सिद्ध एव।

संग्रहस्य तुरीयं पादं व्याचष्टे—**समयोऽपीति**। मायाविनेत्येतद्विभजते—**यथा हीति**। शब्दव्युत्पत्तिवद् घटादिनिर्माणव्युत्पत्तिरपि कुलालादिभावव्यवस्थितकायानधिष्ठाय पटादिकं निर्मिमाणेनैवेश्वरेण सुकरेत्याह—**क्रियाव्युत्पत्तिरपीति**।

ननु सर्गप्रलययोः सिद्धौ सर्वमेतदेवं स्यात्, तयोरेव सिद्धिः कुतस्त्येत्याह—**सर्गादाविति**। सर्गसिद्धौ तावदनुमानमाह—**विश्वसंतानोऽयमिति**। अवयवावयवविप्रवाहः संतानः, सिद्धसाध्यतानिवृत्त्यर्थमुक्तं—**विश्वेति**।— **दृश्यसंतानशून्यैरिति**। यथा ह्यद्यत्वे घटादिकार्याणि तदारम्भकैः परमाणुभिः तदारम्भात् पूर्वदृश्यमानमृत्पिण्डादिकार्यसंतानवद्भिरारभ्यन्ते, नैवं सर्वदापीति। कदाचिद्दृश्यसंतानशून्यैरनारब्धसर्वकार्यैः स्वरूपेणावस्थितैरिति यावत्। परमाणुभिर्विश्वं कार्यमारभ्यते यथा ह्यरणिजनितोऽग्निः संतानान्तरशून्यैरेवारणिवर्त्तिभिराग्नेयपरमाणुभिरारभ्यत इति। प्रलयेऽपि प्रमाणमाह—**वर्तमानेति**। यदि संतानारम्भकत्वादित्येवोच्येत द्व्यणुकादिभिर्व्यभिचारः स्यात्, न हि ते पूर्वमुत्पादितसंतानान्तराः अथ चारम्भकाः, अतस्तदवच्छेदायोक्तं—**नित्यत्वे सतीति**। पूर्वत्राप्यर्थतः प्रलयः सिध्यति, अत्रापि सर्ग इति द्रष्टव्यम्। अनुमानयोर्विपक्षे बाधकं पृच्छति—**अवयवानामिति**। यथा ह्यद्यत्वे तन्त्वाद्यवयवानां संयोगविभागाभ्यामेव पटादेरुत्पत्तिविनाशौ संतानानुच्छेदेन दृश्येते तथैव सर्वदापि तौ स्यातां, किमत्र बाधकमिति। **एवं तर्हीति**। यदि संतानानुच्छेदः स्यात् तर्ह्यवयवावापोद्धारलक्षणो विनाशोऽपि न स्यात्, दृश्यते चासाविति। **कन्थादीति**। न संतानत्वप्रयुक्तः पटादेर्विनाशः, किन्तु विनष्टपटावयवारब्धकन्थादिद्वारभोगविशेषप्रयुक्त इति। **कर्त्रादिभोगविशेषेति** पाठे त्वयमर्थः—पटादेः कर्तॄणां कुविन्दादीनां पटाद्युत्पादनद्वारेण ये भोगास्तेषां तद्विनाशमन्तरेणानुपपत्तेस्तत्प्रयुक्तो विनाश इति। **द्व्यणुकेष्विति**। द्व्यणुकेषु तस्य भोगविशेषस्य विनष्टद्व्यणुकावयवद्वारस्य द्व्यणुकोत्पादनद्वारस्य वा न संभव इति। ततः किमित्यत्राह—**तथा चेति**। तस्माद्भोगविशेषस्याप्रयोजकत्वात्कार्यस्योत्पत्तिविनाशयोः समवायिकारणसंयोगविभागावेव निबन्धनमङ्गीकर्तव्यमित्याह—**तस्मादिति**। अस्त्वेवं, तथापि कार्यस्थितिनिबन्धनमुत्पत्तिहेतुश्च किमिति सर्वदा न स्यातामित्यत्राह—**न चेति**। निरस्तः **प्रवाहोऽनादिमानित्यत्रेति**।

यदि कार्योत्पत्तिविनाशयोर्भोगविशेषोऽप्रयोजकः तर्हि भोगार्थः कर्मभिः सर्वेषामुत्पाद इति सिद्धान्तोऽव्य।कुप्येतेत्यत्राह—**ईदृश्यामिति**। इयं तावदर्थस्थितिर्न च तत्र सिद्धान्तहानिः। कर्माण्येव वस्तुस्थितिमनतिक्रामन्ति तद्भोगसमर्थवस्तूत्पादनद्वारेण भोगविशेषं

सम्पादयन्ति, तेन येषां वस्तूनामुच्छेदस्वभावो न तेषामनुच्छिन्नानां भोगसाधनत्वम्, अन्यथा नानापुरुषादृष्टोत्पादितस्यैकस्यैव पटस्य परःसहस्रं वत्सरानवस्थितस्य क्रमेण भोगसाधनत्वप्रसङ्ग इति भावः। तस्माद्यथा द्व्यणुकेषु भोगाभावेऽपि स्थितिनिबन्धनहेत्वोरपगमोपगमाभ्यामेव विनाशोत्पत्ती तथैव विश्वस्यापि कार्यस्य ते भविष्यत इत्याह—
5 इति **द्व्यणुकवदि**ति। एवं विपक्षे बाधकसद्भावात्सृष्टिप्रलयानुमानयोः सिद्धः प्रतिबन्ध इत्याह— **इती**ति। तदेवमापरमाणोर्ब्रह्माण्डस्य विनाशसिद्धौ कैव कथा तदन्तर्वर्त्तिनः कार्यस्येत्याह—**तथा चे**ति। तदन्तर्वर्त्तिभिः सह विनश्यतीत्यत्र निदर्शनान्याह—
**कपिकपोल** इति ॥ २ ॥

## विवेक

**परतन्त्रे**ति। अध्याप्याव्यापकाभावापन्नेत्यर्थः। एतेन ध्वंसाद्यप्रतियोगित्वव्य-
10 वच्छेदः। नित्यता वेदस्य तत्प्रवाहाविच्छेदमव्ययीभावतया नपुंसकत्वम्। **सर्गे**ति। वेदत्वं सजातीयानुपूर्वीज्ञानाधीनज्ञानजन्यत्वव्याप्यं सर्गाद्युत्पन्नवेदे व्यभिचारित्वात्। कालत्वं न वेदव्याप्यम् प्रलये व्यभिचारित्वादिति फलितार्थः। सर्गप्रलयबाधकेन हेत्वसिद्धिमाशंकते—
**अहोरात्रस्ये**ति। अहोरात्रपूर्वकत्वेत्यस्याव्यवहितेत्यादिः। तेन सर्गान्तरीयाहोरात्रपूर्वकतया न बाधकत्वासंभवः। सर्गादौ बाधकमुक्त्वा प्रलये बाधकमाह—**कर्मणा**मिति।
15 विपाकः प्रतिबध्यत्वं तस्य वैषम्यम् एककालासम्भवरूपम्। तथा भोगजनककर्मत्वं च नैककालप्रतिबध्यवृत्ति सकलभोगजनकवृत्तित्वात् धर्मवदिति फलति। बाधकान्तरमाह—
**वर्णादी**ति। वर्णाः ब्राह्मणादयः आदिपदात् गवादिपरिग्रहः तेषां व्यवस्था सजातीयजन्यत्वव्याप्यत्वं। तथा च न कार्यकारणभावस्तेषां संभवेदिति भावः। सर्गादौ समयस्य व्यवहाराधीनशक्तिग्रहस्यानुपपत्तौ। **शाब्दे**ति। इतरेषां शक्तिग्राहकाणां तादृशशक्तिग्राहकोपजीवकत्वादिति भावः। घटादिसम्प्रदायः घटादिनिर्माणज्ञानम्। उपदेशकाभावात्
20 तस्य भंगप्रसंगादित्यर्थः। कथमेवं। कथं सर्ग-प्रलययोः संभवः।

**वर्षादी**ति। वर्षादिदिनरूपहेतुवदित्यर्थः। आदिपदाच्छरदादिपरिग्रहः। यथा वर्षादिदिनत्वरूपो हेतुः कर्कटप्रथमांशाष्टप्रहरान्यत्वरूपेण उपाधिना सोपाधित्वेन नाव्यवहितवर्षादिदिनकत्वनिरूपितनियमवान्। तथाहोरात्ररूपोऽपि हेतुः ब्रह्माण्डध्वंसाजन्य
25 ब्रह्माण्डोत्पत्तिदिनान्यत्वरूपेण भवेनोपाधिना सोपाधिक इति नाव्यवहिताहोरात्रनिरूपितनियमवान्। कर्मणां विषमविपाकेत्यादिद्वितीयबाधकमुद्धरति। **वृत्ती**ति। यथा सुषुप्त्यवस्थायां तत्पुरुषीयकर्मजातस्य भोगाद्यजनकत्वम्। तथा च निखिलभोक्तृनिष्ठादृष्टानामपि

स्यात् । तथा च तत्पुरुषीयभोगजनककर्मत्वव्यापकत्वं यथा एककाले फलानुत्पादया-
वदाश्रयकान्यत्वे साध्ये अप्रयोजकन्तथा भोगजनककर्मत्वव्यापकत्वमपीत्यर्थः । **वर्णादीति** ।
तृतीयं बाधकमुद्धरति—**उद्भिदिति** । उद्भित् तण्डुलीयकादिः वृश्चिकः कीटविशेषः ।
यथा तण्डुलकणात् उद्भिद्बीजाच्च उद्भिदुत्पत्तिः गोमयात् वृश्चिकाच्च वृश्चिकस्य
कार्यस्य वैजात्यस्वीकारेण न व्यभिचारः । तथा भगवन्मुखादितोऽपि कश्चिद् 5
ब्राह्मणादिः कश्चिद्ब्राह्मणादित एव । वर्णपदं गवादेरुपलक्षणं तेन न समाधानन्यूनता ।
समयानुपपत्तिरिति चतुर्थं बाधकमुद्धरति—**मायावादिति** । सूत्रसंचाराधिष्ठितदारुपुत्रस्य
घटादिगोचरक्रियादर्शनाद्यथाशक्तिग्रहस्तथा भगवत एव प्रयोज्यवृद्धस्य सतः
शब्दाज्ज्ञानानुपपत्तावपि बालो व्युत्पद्यत इत्यर्थः । आदिपदात् घटसम्प्रदायेत्यादिपञ्चम-
बाधकोद्धारः । सोऽपि मायावदित्यर्थः । 10

अहोरात्रपूर्वकत्वमात्रेऽहोरात्रस्याहोरात्रपूर्वकत्वव्याप्यत्वे साध्ये । एवमग्रेऽपि ।
मात्रेणाव्यवधानांशव्यवच्छेदः । सिद्धसाधनं सर्गान्तरीयाहोरात्रमादाय तच्च न
बाधकमिति भावः । अनन्तरेति । न अनन्तरं व्यवधानं यत्रेति व्युत्पत्त्याऽव्यवधानेत्यर्थः
तदहोरात्रं वर्षादिदिनपूर्वदिने धर्मपरे तादात्म्येन वा नियमः तद्दिनं वर्षादिनम् ।
अधिकरणतया सहनिरूपकत्वं नियमः सम्बन्धः । यथा वर्षादिने वर्षादिनाव्यवहित- 15
पूर्वकत्वनियमे साध्येऽप्रयोजकत्वं तथात्रापीत्यर्थः । ननु वर्षादिनतत्पूर्वकत्वयोर्निरुपाधि-
सहचारबलान्नियमसिद्धेर्वर्षादिनमात्रवृत्तिधर्मस्य नाप्रयोजकत्वम् इत्याशंकते तत्रो
पाधिमाह—**राश्यादीति** । राशिः कर्कटः तस्य विशेषः । प्रथमांशाष्टप्रहरात्मकत्वं
तस्य निरूपकतया संसर्गो यत्र तदन्यत्वरूपस्तद्विशिष्टकालस्तादात्म्येन उपाधिरित्यर्थः ।
तदन्यत्वमुपाधिरिति तु फलितम् । तत् हेतुमति साध्यं तदभावएवोपाध्यभाव एव 20
तद्व्यावृत्तिः साध्यस्य व्यावृत्तिः । सर्गानुवृत्तिनिमित्तेति । ब्रह्माण्डे परमाणुसाद्भविष्यतीति
वक्ष्यमाणप्रलयसाधकोपष्टम्भसूचनं । **ब्रह्माण्डस्थितीति** । ब्रह्माण्डनाशजन्यब्रह्माण्डोत्पत्ति-
दिनानीत्यर्थः । उपाधेरप्रसिद्धिमुद्धरति—न चेति । तद्ब्रह्माण्डमवयवित्वात् समवेत-
द्रव्यत्वात् । कृत्स्नानि तत्पुरुषनिष्ठानि । सुषुप्तौ भोगाभावं साधयति । **नहीति** । विरोधात् ।
सामान्याभावस्य विशेषाभावव्याप्त्वादिति भावः । तदानीं सुषुप्तिदशायाम् । तर्हि भोगासत्त्वे 25
उपयोगः प्रयोजनम् । विरोधादिति । सुखदुःखसाक्षात्कारस्यैव तत्त्वादिति वा अर्थ इति
भावः । **तं प्रतीति** । अन्यनिष्ठं तु साक्षात्कारादिकं विषयतया जनयत्येव इति भावः ।
**चक्षुरादीति** । निमिलितनयनस्येत्यादिः । यदा साक्षात्कारादिकं न जनयति तदा किमर्थं

शरीरानुवृत्तिः ? उत्तरोत्तरेति । तदेव शरीरमनन्तरं भोगं जनयिष्यतीति तदेव प्रयोजन-
मन्तरा च प्राक्तननाशस्य शरीरान्तरोत्पादस्य च कल्पने गौरवमिति भावः । **प्राणितीति** ।
मृतशरीरवत् तदा तदवस्थानादेव उक्तप्रयोजनद्वयनिर्वाहादितिभावः । आयुषोऽवस्थाभेदः ।
कौमारादिव्यवस्थापकजीवनावच्छिन्नतत्तदुत्सववर्त्तित्वादिः । तत्र द्वाराकांक्षायामाह —
5 **श्वासेति** । तस्यापि प्रयोजनमाह—तेनेति । तत्तदवस्थायां ज्योतिर्गणनादिप्रकारेण राज्य-
भोगादिनिश्चयः । शंकते—एकस्येति । एकस्य-पुंसः एतन्निखिलस्वनिष्ठकर्मणां भोगवैमुख्यं
कथञ्चिददृष्टादिवशात्त्वङ्मनोयोगनिवृत्त्या विश्वस्य निखिलसंसारिणः अनन्ततया विशिष्य
परिचेतुमशक्यसंख्यतया । **नियतेति** । एकदा लब्धवृत्तिकान्यतरेत्यर्थः । उपमर्द्येति ।
स्वप्रतिबद्ध्यप्रतिबन्धककर्मसमानाधिकरणतयेत्यर्थः । प्रतिबन्धे विश्वस्य एकदा यानि
10 कर्माणि तेषां को विशेषो वैलक्षण्यम् । इदमेकदा भोगवैमुख्यम् । ननु ईदृशः कश्चि-
दस्ति यस्य कर्माणि युगपन्निरुद्धवृत्तीनि न भवन्ति इत्याशंकायामाह । भवतीति । सर्वस्यैव
सुष्वाप इति । तथा च नास्त्येव तादृशः कश्चिदिति भावः । शंकते । **क्रमेणेति** ।
सर्वस्यैवात्मनः क्रमेण कर्माणि तथा भवन्ति न तु एकदेत्यर्थः । भवति इत्यधिकृत्य चेदिति
पर्यन्तमेकशंकायाम् सुष्वापपदं निरुद्धवृत्तिकनिखिलस्वनिष्ठादृष्टकत्वपरं तेन प्रलयाक्षेपो-
15 पत्तिः । कार्यं वृत्तिनिरोधरूपम् । ब्रह्माण्डदेह इति रूपकम् । विदेहा इत्यस्यैकदेत्यादिः ।
कर्मिणि इत्यस्य च सर्व इति कर्मवत्तापपरिग्रहश्चाभ्युपेत्य सर्वमुक्ति तद्व्यावृत्तये भोगेति ।
तथा च न तदर्थं देहावस्थावश्यकत्वमिति भावः ।

उद्भित्पदार्थमाह—**तण्डुलीयकेति** । अल्पस्वरतया वृश्चिकपदस्य कारिकाक्रम
त्यागः । एतत्क्रमेणैव विशदयति । **यथा हीति** । **अरणेरिति** । परमाणूप-
20 लक्षणम् । **कदलीकाण्डेति** । दग्धवेत्रबीजाद्यस्य कदलीकाण्डाच्चापरस्य चोत्पादः ।
**मानुषपश्विति** । सामान्यतः गोब्राह्मणेति विशेषतः एवेति । सजातीयहेतुकस्य
व्यवच्छेदाय मानुषत्वादिजातेराकस्मिकत्वं निरस्यति । स **चेति** । सर्वत्र
मनुष्यत्वाद्यवच्छिन्ने समानजातीयत्वं मनुष्यत्वाद्यवच्छिन्नम् । **गतमिति** । सर्गाद्यतद्वयक्तौ
व्यभिचारादिति भावः । **योनिजेष्वेवेति** । गोजन्यतावच्छेदकान्तरजातिरेव अत्र
25 हेतुरित्यर्थः । सुसदृशतया च जातिद्वयं विविच्य न गृह्यत इति भावः । मानसा
इत्यागमप्रमाणकं शंकते—इदानीमिति । तथा विनैव सजातीयघटितां सामग्रीं किन्न
स्यात् ? गवादिकं किन्नोत्पद्येत ? तथा करोति, तादृशक्रियावान् । तर्कितेऽपि बाधक-
साधकप्रमाणाभावात् सर्गादौ सन्देहात् सर्गप्रलयसंभवाच्च हेतोः सन्दिग्धासिद्धिमुद्दिधीर्षुः
शंकते । **सर्गेति** । विश्वेत्यादि । विश्वस्य दृश्यद्रव्यस्य सन्तानायेति व्युत्पत्त्या विश्वसन्तान-

पदं द्व्यणुकपरं । तदपि धर्मोपलक्षणम् । तेन द्व्यणुकत्वं पक्षः दृश्यसन्तानपरं च कार्य-
द्रव्यमात्रपरं तच्छून्यत्वं व्याप्यवृत्तितदत्यन्ताभाववत्त्वं तद्भेदवत्त्वं वा तदारब्धत्वं तज्जन्य-
वृत्तित्वम् । सन्ततित्वादित्यस्य सकलद्व्यणुकवृत्तिधर्मत्वमर्थः । तथा च द्व्यणुकत्वं कार्य-
द्रव्यशून्यसमवायिजन्यवृत्तिद्व्यणुकत्वव्यापकधर्मत्वात् । आरणेयसन्तानपदं स्ववृत्तिधर्मोपलक्षण-
तया सत्तापरं तथा च स एव दृष्टान्तः । अत्र पक्षधर्मतावलात् तादृशकालविशेषसिद्धिः । 5
स्वानधिकरणीभूतस्य कालस्यापि अव्यवहितप्राक्कालवर्त्तिनः कारणत्वमिष्यते अन्यथासिद्धि-
ग्राहकाभावात् । कार्यद्रव्यवत्त्वं च सम्बन्धसामान्येन नित्यरूपाधारब्धवृत्तितया च दृष्टान्त-
समन्वयः । विभून्यपि संयोगेन कार्यद्रव्यवन्त्येव, ईश्वरज्ञानादिकञ्च विषयितया ।
**तथेति** । तेनैव नार्थान्तरम् । घटात्यन्ताभावस्यापि कार्यद्रव्यजनकत्वात् अर्थान्तरवार-
णायोक्तं—**समवायिभिरिति** । जन्यमात्रस्यैव कालोपाधित्वात् कार्यद्रव्यकालीनानां 10
तेषां न तदनधिकरणत्वमिति । केचित्तु विश्वसन्तानपदं कथञ्चिद्व्युत्पत्त्या विशिष्टब्राह्म-
णादिपरम् । दृश्यसन्तानपदं च सजातीयपरं शून्यत्वञ्च तदसहकृतत्वं तथा च
ब्राह्मणादिः सजातीयासहकृतसमवायिजन्यवृत्तिधर्मवान्, अनादितावच्छेदककार्यमात्रवृत्ति-
जातिमत्त्वात् वह्निवत् । हेतुप्रविष्टधर्मेणैव साजात्यं बोध्यम् । सत्ताद्रव्यत्वादिवारणाय
**मात्रेति** । वह्निद्व्यणुकमादाय दृष्टान्तसमन्वयः । कार्यत्ववारणाय जातीति । एवञ्च 15
ब्राह्मणादेर्ब्राह्मणादिपूर्वकत्वरूपनियमरूपो बाधको निरस्तः प्रलय इत्याहुः ।

**प्रकाशकृतस्तु** समयसमवायिभिन्नवृत्तिध्वंसप्रतियोग्यवृत्तिकार्यद्रव्यप्रागभावकाली-
नारम्भकातिरिक्तकार्यद्रव्यानधिरणवृत्तिध्वंसप्रतियोगिवृत्तिकार्यमात्रवृत्तिधर्मत्वात् शब्दत्व-
वत् । अत्र महाप्रलयमादायार्थान्तरवारणाय कार्यद्रव्यप्रागभावकालीनेति ध्वंसविशेषणम्,
कार्यचरमध्वंसप्रागभावात्मकचरमभावाधिकरणकालमादायार्थान्तरवारणाय कार्यपदस्य भाव- 20
कार्यपरतया कार्यद्रव्येति पदयोरन्यतरान्तरर्भावेन साध्यद्वयं प्रागभावपदस्य वस्तुप्रागभाव-
परत्वे कार्यद्रव्यप्रागभावपदयोर्वैकल्पिकोपादानेन तथा कार्यद्रव्यानधिकरणत्वञ्च कार्यद्रव्य-
शून्यत्वं तथा चोत्पत्तिकालावच्छेदेन कपालादेरपि तथात्वादर्थान्तरवारणायारम्भकातिरिक्तत्वं
तदनधिकरणविशेषणम् । अनवच्छिन्नकार्यशून्यत्वाधारतावत्त्वेऽस्य तात्पर्यम् । तेनेदानी-
न्तनकालस्याप्याकाशाद्यवच्छेदेन कार्यद्रव्यशून्यत्वात् न तद्दोषतादवस्थ्यम् । 25

वस्तुतस्तु कार्यद्रव्यजनकभिन्नत्वारम्भकातिरिक्तान्तार्थः । न चेदानीं कालस्तथेति
ध्वंसत्वे व्यभिचारवारणाय भाववर्तित्वेन हेतुर्विशेषणीयः । ध्वंसप्रतियोगित्वे व्यभिचार
वारणाय मात्रेतीत्याहुः ।

ब्रह्माण्डपरमाणवः इत्येतस्य ब्रह्माण्डे परमाणवः इति विग्रहः । आरम्भकत्वञ्च सप्तम्यर्थः । तथात्वं च साक्षात्परम्परासाधारणमिति नासिद्धिः । **वर्तमानेति** । प्रमाण सूचनाय । **पूर्वेति** । सजातीयसामग्रीसमवधानकालोत्पत्तिकतज्जातीयध्वंसजन्यतदारम्भका इत्यर्थः । इत्थञ्च यदा तत्सामग्र्यसमवधानकाले ब्रह्माण्डध्वंसः स एव प्रलयः । अतएव
5 वक्ष्यति ब्रह्माण्डे च परमाणुसाद्भविष्यतीत्यादि । नित्यत्वे सत्यनादितावच्छेदकद्रव्यवृत्ति-जात्यवच्छिन्नकार्यतानिरूपितकारणतावत्त्वादित्यर्थः । व्याप्तिश्च सामान्यमुखी यन्नित्यत्वे सत्यनादितावच्छेदकद्रव्यवृत्तियद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावत्तज्जातीयसामग्र्यसम-वधानकालोत्पत्तिकतत्तज्जातीयध्वंसजन्यतज्जातीयारम्भकमित्येवंरूपा । घटध्वंसाजन्यघटा-रम्भककपालादौ व्यभिचारवारणाय—**नित्यत्वे सतीति** । चैत्राद्यारम्भकपरमाणौ
10 तादृशध्वंसजन्यतदानारम्भकतद्वारणाय—**अनादितावच्छेदक इति** । पार्थिवानुष्णाशीतस्पर्शस्य निरुक्तध्वंसजन्यतया तदारम्भकपरमाणौ तद्वारणाय—**द्रव्येति** । कारणत्वं च साक्षात्परम्परा-साधारणप्रयोजकत्वमात्रं तेन न स्वरूपासिद्धिः, प्रदीपपरमाणुवत् । ननु सजातीयसाम-ग्र्यसमवधानकालोत्पत्तिकत्वमनुपादेयम् । तथा च ब्रह्माण्डसन्ततेरनाद्यनन्तत्वेन प्रलय-सिद्धिरित्यभिप्रायेण शंकते-**अवयवानामिति** । अवापोद्वापौ उपगमापगमौ उत्पत्तीत्यस्य
15 ब्रह्माण्डेत्यादिः । निरुपाधिसहचारभङ्गप्रसङ्गं वाधकमभिप्रेत्य सहचारस्थलमाह—**एवम् हीति** । इष्टापत्तिं निरस्यति—**विपर्यय इति** । ननु घटादिसन्तानाविच्छेदे कुलालादे-स्तदुत्पादनप्रयुक्तभोगो न स्यादिति तत्सन्तानविच्छेदः ब्रह्माण्डे तु नैवमित्याह—**कर्त्रादीति** । असौ घटादिसन्तानस्यात्यन्तो विच्छेदः । तदभावात् भोगसम्पादनाभावात् तथा द्व्यणुकस्यापि तथोच्छेदो न स्यादित्यर्थः । तथा च भोगासम्पादकतया द्व्यणुकत्वं
20 जन्याणुत्वम् । यन्निबन्धनस्थिति यन्नाशनाश्यम् । **न च कार्यस्येति** । कार्यस्य स्थितिनिबन्धनं विरोधिगुणसमवधानकालीनमिति । **नित्यं** कार्यकालीनाभावाप्रतियोग्येव । नित्येत्यत्र कार्यस्येत्यनुषज्यते । अनाशप्रसंगादित्यर्थः । एतावता ब्रह्माण्डस्य नाशो व्युत्पादितः । ब्रह्माण्डान्तरसामग्र्यसमवधानस्यासंभवं निराकरोति । **न च नित्यएवेति** । निस्तरङ्गं निष्प्रत्यूहम् । एतदुक्तानुमानद्वये भोगोऽपि निरुक्तसहचारबलसिद्धव्याप्यविरोधेन कर्म-
25 भिस्संपादनीयः । नन्वेतावता ब्रह्माण्डस्य विलयेऽपि प्राणिनामवस्थानात् तद्भोगसम्पा-दनाय द्रव्यान्तराणि कार्याणि स्युरित्याशंकायामाह—**तथा चेति** । क्व वर्तन्ताम् नाश्रयादित्यत्र द्वितीयः । महापवनक्षुभितविलीयमानाश्रयत्वादित्यत्र तृतीयः । नष्टेषु च सर्वेषु प्राणिषु भोगासम्पादकतया निखिलकार्यद्रव्यस्यैव नाश इति हृदयम् ॥२॥

अपि च—

**जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्म्मणोः ॥**
**ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ ३ ॥**

पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसम्भवाः, ततः कामाऽवर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः । 5 पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादितः, इदानीन्तु जातेषु लौकिकव्यवहारमाश्रित्य । पूर्वं सहस्रशाखः समस्तो वेदोऽध्यगायि, ततो व्यस्तः, ततः षडङ्ग एकः, इदानीन्तु क्वचिदेका शाखेति । पूर्वम् ऋतवृत्तयो ब्राह्मणाः प्राद्योतिषत, ततोऽमृतवृत्तयः, सम्प्रति मृतप्रमृतसत्यानृतकुसीदपाशुपाल्यश्ववृत्तयो भूयांसः । पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः, 10 ततो वैश्यावेशिनोऽपि, सम्प्रति शूद्रान्नभोजिनोऽपि । पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, सम्प्रत्यघभुज एव । पूर्वं चतुष्पाद् धर्म आसीत्, ततस्तनूयमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे दानैकपात्, सोऽपि पादो दुरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यते । इदानीमिव 15 सर्वत्र दृष्टान्नाधिकमिष्यते इति चेन्न ।

स्मृत्यनुष्ठानानुमितानां शाखानामुच्छेददर्शनात् । स्वातन्त्र्येण स्मृतीनामाचारस्य च प्रामाण्यानभ्युपगमात् । मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात् । आचारात् स्मृतिः स्मृतेश्चाचार इत्यनादिताऽभ्युपगमे अन्धपरम्पराप्रसङ्गात् । आसंसारमनाम्नातस्य च वेदत्वव्याघातेनानुमानायोगात् । उत्पत्तितोऽभिव्यक्तितोऽभिप्रायतो 20 वाऽनवच्छिन्नवर्णमात्रस्य निरर्थकत्वात् । यदि च शिष्टाचारत्वादिदं हितसाधनं कर्त्तव्यं वेत्यनुमितं किं वेदानुमानेन, तदर्थस्यानुमानत एव सिद्धेः । न च धर्मवेदनत्वादिदमेवानुमानमनुमेयो वेदः । प्रत्यक्षसिद्धत्वात् । अशब्दत्वाच्च ॥

अथ शिष्टाचारत्वात् प्रमाणमूलोऽयमिति चेत् । ततः सिद्धसाधनम् । प्रत्यक्षमूलत्वाभ्युपगमात् । तदसम्भवेऽप्यनुमानसम्भवात् । नित्यमज्ञायमानत्वात्तदप्र- 25 त्यायकं, कथमनुमानं, कथञ्च मूलमिति चेत् । वेदः किमज्ञायमानः प्रत्यायकोऽप्रत्यायक एव वा मूलं, येन जडतम ! तमाद्रियसे । अनुमितत्वाज्ज्ञायमान एव इति चेत् । लिङ्गमप्येवमेवास्तु । अनुमेयप्रतीतेः प्राक्तनी लिङ्गप्रतीतिरपेक्षिता, कारणत्वात्, न तु पश्चात्तनीति चेत् । शब्दप्रतीतिरप्येवमेव । आचारस्वरूपेण शब्दमूलत्वमनुमीयते, तेन तु शब्देन कर्त्तव्यता प्रतीयते इति चेन्न । आचारस्वरूपस्य प्रत्यक्षसिद्धत्वेन 30 मूलान्तरानपेक्षणात् । तत्कर्त्तव्यतायास्तु प्रत्यक्षाभावादप्रमिततया च शब्दानुमानानवकाशात् प्रत्यक्षश्रुतेरसम्भवाच्छिष्टाचारत्वेनैव कर्त्तव्यतामनुमाय तया मूलशब्दानुमानम्, तथा च किन्तेन ? तदर्थस्य प्रागेव सिद्धेः । तथाप्यागममूलत्वेनैव तस्य

१. तस्मात्कर्त्तव्यतायां—मु० पाठः

प्राप्तेरिति चेत्। अत एव तर्हि तस्य प्रत्यक्षानुमानमूलत्वमनुमेयम्। आदिमतस्तत्त्वं स्यादयं त्वनादिरिति चेत्। आचारोऽपि तर्हि प्रथमतस्तथा स्यादयं त्वनादिर्विनाऽप्यागमं भविष्यति। आचारकर्त्तव्यतानुमानयोरेवमनादित्वमस्तु किन्नश्छिन्नमिति चेत्। प्रथमं तावन्नित्यानुमेयो वेद इति, द्वितीयं च देशनैव धर्मे प्रमाणमिति।
5 अथायमाशयः। वैदिका अप्याचाराः राजसूयाश्वमेधादयः समुच्छिद्यमाना दृश्यन्ते, यत इदानीं नानुष्ठीयन्ते, न चैते प्रागपि नानुष्ठिता एव, तदर्थस्य वेदराशेरप्रामाण्यप्रसङ्गात, समुद्रतरणोपदेशवत्। न चैवमेवास्तु, दर्शाद्युपदेशेन तुल्ययोगक्षेमत्वात्। एवं, पुनः स कश्चित् कालो भविता यत्रैते अनुष्ठास्यन्ते, तथाऽन्येऽप्याचाराः समुच्छेत्स्यन्ते अनुष्ठास्यन्ते चेति न विच्छेदः। ततस्तद्वदागममूलतेति चेत्। एवं तर्हि
10 प्रवाहादौ लिङ्गाभावे कर्त्तव्यत्वागमयोरननुमानादसत्यां प्रत्यक्षश्रुतौ आचारसङ्कथाऽपि कथमिति सर्वविप्लवः। तस्मात् प्रत्यक्षश्रुतिरेव मूलमाचारस्य, सा चेदानीं नास्तीति शाखोच्छेदः।

अधुनाप्यस्ति सान्यत्रेति चेदत्र कथं नास्ति ?। किमुपाध्यायवंशानामन्यत्र गमनात् ? तेषामेवोच्छेदाद्वा ? आहोस्वित् स्वाध्यायविच्छेदात् ? न प्रथमद्वितीयौ।
15 सर्वेषामन्यत्र गमने उच्छेदे वा नियमेन भारतवर्षे शिष्टाचारस्याप्युच्छेदप्रसङ्गात्, तस्याध्येतृसमानकर्तृकत्वात्। अन्यत आगतैराचारप्रवर्त्तने, अध्ययनप्रवर्त्तनमपि स्यात्। न तृतीयः। आध्यात्मिकशक्तिसम्पन्नानामन्तेवासिनामविच्छेदे तस्यासम्भवात्।

तस्मादायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात्
20 स्वाध्यायानुष्ठाने शीर्यमाणे कथञ्चिदनुवर्त्तते। विश्वपरिग्राहाच्च न सहसा सर्वोच्छेद इति युक्तमुत्पश्यामः।

### आमोद

प्रलयानुमाने प्रकारान्तरमाह—**अपि चेति**। तेन जन्मादिह्रासानामत्यन्तह्राससाधकत्वात् प्रत्येकमेव प्रलयानुमापकत्वम्। अत्र पक्षे **सम्प्रदायः** कार्यप्रवाहः, अथ वा सम्प्रदीयते शिष्याय गुरुणेति सम्प्रदायो वेदः,
25 तस्यात्यन्तह्रासः साध्यः। जन्मादिह्रासो दृष्टान्तः। स जन्मादिह्रासोऽपि लिङ्गमेव। यदि शाखोच्छेदो न भवेत्तदा पूर्ववदेव जन्मसंस्काराद्यनुवृत्तिरिदानीमपि स्यान्न चानुवर्तते। तेनानुमीयते तद्बोधकवेदोच्छेद इति। तत्र जन्मोच्छेदमाह—**पूर्वमिति**। **अपत्यैकेति**। न च रागानुबन्धोऽपि तत्र। **तत इति**। रागस्य प्राधान्यं पुत्रैषणाया गौणत्वमित्यर्थः।
30 **इदानीमिति**। काममात्रपरत्वं काकतालीयन्यायेनापत्योत्पत्तिरपि इत्यर्थः। **पशुधर्मेति**। पशोरिव धर्मो ग्राम्यधर्मः, तत्प्रभवभूयिष्ठाः प्रजाः इत्यनुषङ्गः,

ग्राम्यधर्मातिरेकप्रभवा इत्यर्थः । संस्कारह्रासमाह—**पूर्वं चरुप्रभृतिष्विति** । प्रभृतिपदेन पुरोडाशादिग्रहः । संस्कृतापत्योत्पादनार्थं संस्काराः सम्यगवहिता इत्यर्थः । **क्षेत्रे** योनौ, पुत्रेष्ट्यादिना पुरुषे तत् । विद्याह्रासमाह—**पूर्वमिति** । **व्यस्त** इति । असम्पूर्ण इत्यर्थः । **एक** इति । वेद इत्यनुषङ्गः । **क्वचिदिति** । कस्मिन्नपि पुरुप इत्यर्थः । नानार्थमेकमेवोदाहरणं विद्याशक्ति-स्वाध्यायेषु दर्शितम् । अत एवादिपदन्तु शक्तिस्वाध्यागे प्रागुक्तमपि तदुदाहरणं पश्चाद्दर्शितमिति बोध्यम् । आदिपदग्राह्यमाह—**पूर्वमृतेति** ।

> ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम् ।
> मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ।
> सत्यानृतं तु वाणिज्यं कुशीदञ्च कलान्तरम् ॥

**पाशुपाल्यं** गोरक्षादिः । **श्ववृत्तिः** सेवा । **भूयांस** इति ब्राह्मणा इत्यनुषङ्गः । **वैश्यावेशिनोऽपि** वेश्यातिथयः । **अमृतं विघसो** यज्ञशेष-भोजनशेषयोः । **अनुभुजो** भृत्यसहभुजः । **अघभुजः** स्वार्थसाधितभुजः । **चतुष्पादिति** । तपोज्ञानयज्ञदानानि चत्वारि पादाः । **त्रिपादिति** । ज्ञानयज्ञ-दानादयः । **द्विपादिति** । यज्ञदानपादः । द्यूतोत्कोचाद्यागतं **दुरागतं विपादिका** पादस्फोटः । शाखोच्छेद्यमाक्षिपति—**इदानीमिति** । **अनुष्ठानमाचारः** । ननु स्मृत्याचारादावेव कार्यतामिष्टसाधनतां वा बोधयेतां किं वेदनेत्यत आह—**स्वातन्त्र्येणेति** । वेदानुप[ा]यज्ञता **स्वातन्त्र्यम्** । तथा च विवादपदं स्मृतिः स्मृत्यर्थानुभावकवेदमूला, न्यायमूलकमहाजनपरिगृहीतस्मृतित्वात्, प्रत्यक्ष-वेदमूलकस्मृतिवत् । लोभमूलिका तु या यूपहस्तिबन्धनादिस्मृतिः सा महाजनपदेनैव निरस्ता । एवं मङ्गलाद्याचारो वेदमूलकः, अलौकिकाव-गीतशिष्टाचारत्वात्, दर्शाद्याचारवदिति स्मृत्याचारयोरपि वेदमूलत्वानु-मानात् । ननु मन्वादयः एव स्मृत्याचारप्रयोक्तारस्ते च सर्वज्ञा एवेति किं वेदानुमानेनेत्यत आह—**मन्वादीनामिति** । ननु स्मृत्याचारयोरेव परस्पर-मूलमूलिभावोऽस्तु, किं तन्मूलवेदनेत्यत आह—**आचारादिति** । **अपरि-चितस्य** वेदत्वव्याघातो वेदनाजनकत्वव्याघातश्चेत्याह—**आसंसारमिति** । **उत्पादित** इति स्वमते । **अभिव्यक्तित** इति परमते । **अभिप्रायत** इत्युभयमते मौनिश्लोकवत् । **निरर्थकत्वादिति** अर्थाप्रतिपादकत्वादित्यर्थः । **हितसाधन-**

**मिति** स्वमते कर्तव्यमिति **गुरुमते** । **तदर्थस्य** वेदनार्थस्य । नन्विदमेवानुमानं वेद इत्येव नित्यानुमेयो वेद इति ब्रूम इत्यत आह—**न चेति** । अनुमान-मनुमितिकरणम् । तच्च ज्ञायमानं लिङ्गं, तच्चाचारस्वरूपमेव, तच्च प्रत्यक्षं न त्वनुमेयमित्यर्थः । **अशब्दत्वादिति** । वेदो हि शब्द उच्यते, आचारश्च 5 न शब्दस्तथा च कथं वेद इत्यर्थः ।

ननु सामान्यतः प्रमाणमूलत्वं साध्यं तदेव सिद्धयत् पक्षधर्मताबला-द्वेदमूलकत्वे पर्यवस्यतीति शङ्कते—**अथेति** । ईश्वरप्रत्यक्षमूलकत्वेन सिद्ध-साधनमित्याह—**तत** इति । **तदसम्भवेऽपीति** । त्वया तदनभ्युपगमेऽपी-त्यर्थः । **अनुमानेति** । सामन्यतो दृष्टस्य तत्रैव पर्यवसानादित्यर्थः । 10 यदनुमानं मूलत्वेन कल्पनीयं तद्विशिष्य चेन्न ज्ञायते तदाऽनुमिति-जनकत्वाभावादनुमानमेव न भवति, अत एव ( मूलमिति ) शङ्कते—**नित्यमिति** । त्वन्मते नित्यानुमेयो वेदोऽप्येवमेवेत्याह—**वेदः किमिति** । ननु विशेषाकारेण वेदो न ज्ञायते, सामान्यतस्तु ज्ञायत इत्याशङ्कते—**अनुमितत्वादिति** । लिङ्गमपि सामान्यत एव ज्ञायत इति परिहरति—15 **लिङ्गमिति** । न त्वियमाचारकर्तव्यता अनुमानमूला तदाचारकर्त्तव्यता-त्वान्मतवदित्यनुमेयम् । तथा च पक्षीकृतायाः पूर्वमेव सिद्धेः परिहरति—**शब्द** इति । इयमाचारकर्त्तव्यता वेदमूलेति न वेदानुमानम्, अपि त्वयमाचारो वेदमूल इति वेदानुमानम्, अनुमिताच्च वेदात् कर्तव्यताज्ञान-मिति न तुल्यतेत्याशङ्कते—**आचारेति** । आचारस्वरूपसिद्धयर्थं यदि 20 वेदानुमानं तदा तद्व्यर्थमिति परिहरति—**आचारस्वरूपस्येति** । अथाचार-कर्तव्यताया एव वेदमूलकत्वानुमानं, तथा च सिद्धैव सेति व्यर्थं वेदानुमा-नम् । मङ्गलं कर्तव्यम् शिष्टाचारत्वादित्यनुमानादेव कर्तव्यतासिद्धेरित्युप-संहरति—**तस्मादिति** । यद्यप्यनुमानादाचारकर्तव्यता सिद्धयति, तथापि व्याप्तिबलात् वेदन(य)ापि सेद्धव्यम् इत्याह—**तथापीति** । यथा शिष्टाचार-कर्तव्यताया वेदमूलकत्वेन व्याप्तिस्तथा प्रत्यक्षानुमानमूलकत्वेनापीति 25 ताभ्यामपि कथं न सेद्धव्यमित्याह—**अत एवेति** । अत्रादिमत्त्वमुपाधिरि-त्याह—**आदिमत** इति । आचारस्यागममूलत्वेऽप्यादिमत्त्वमुपाधिर्होलाका-द्याचारस्त्वनादिरागममन्तरेण स्यादित्याह—**आचारोऽपीति** । ईश्वरसिद्धि-

भिया प्रत्यक्षमूलकतां निरस्यन्नाशङ्कते—आचारेति। एवं सति वेदस्त-न्मूलं न सिद्ध्येदिति नित्यानुमेयो वेद इति तव सिद्धान्तो भज्येत इत्याह—प्रथममिति। द्वितीयमिति। अनुमानस्यापि धर्मे प्रमाणत्वाभ्युपगमाद्देशनैवे-त्यवधारणानुपपत्तिरित्यर्थः।

ननु प्रत्यक्षवेदमूलानां राजसूयाश्वमेधादीनाम् इदानीमनुष्ठानेऽपि क्रमेणानुष्ठानं तावदस्ति, तत्रैव परेषां सर्गप्रलयव्यवहारोऽस्माकमियमेव च प्रवाहानादिता राजसूयादिदृष्टान्तेनैवाष्टकाहोलाकाद्याचाराणां च वेदमूलत्व-मपि सेत्स्यतीत्याशङ्कते—अथेति। ननु राजसूयादिपरवेदानामप्रामाण्य-मस्तु, को दोष इत्यत आह—न चेति। तर्हि दर्शादिपराणामपि तथात्वं स्यादित्यर्थः। यदा पुनरेते विवादविषया आचारा उच्छेदानन्तरमनुष्ठा-स्यन्ते तदा केन लिङ्गेन तेषां कर्तव्यताऽनुमीयेत। शिष्टाचारस्य तदानीम-भावात् लिङ्गाभावादेव च नागमोऽनुमानमपीति तदनुष्ठानमेव पर्यवसन्न-मिति परिहरति—एवं तर्हीति। प्रकृतमुपसंहरति—तस्मादिति। भट्टमते प्रच्छन्नशाखतां शङ्कतेऽधुनापीति। परिहरति—कथमिति। अध्ययनयोग्य-तायास्तुल्यत्वादिति भावः। तस्येति। आचारस्याध्येतैवोत्सर्गतोऽनुष्ठाता दृष्ट इत्यर्थः। तथा चोच्छिन्नशाखबोधितानुष्ठानेन व्यभिचारः। आध्यात्मिकी शक्तिर्ग्रहणधारणादिसामर्थ्यम्। तथा च भारतवर्षान्यदेशः स्मृत्याचारवेदाध्ययनशून्यः, देशत्वादेतद्देशवदित्यत्र तात्पर्यम्। एतद्देशवदन्य-देशेऽपि वेदाध्ययनशून्यत्वमुपसंहरन्नाह—तस्मादिति।

बोधनी

न केवलमनुमानं दर्शनं च प्रलयसद्भावानुगुणमित्याह—अपि चेति। जन्मादेर्ह्रासदर्शनात्स्वाध्यायाध्ययने कर्मणोऽनुष्ठाने पुरुषाणां शक्तेश्च ह्रासदर्शनात् संप्रदायस्य ह्रासोऽवगम्यत इति। जन्मनो ह्रासं व्याचष्टे—पूर्वं हीति। पूर्वं श्रुतयः स्मृतिदर्शनात्तत्स्मृतयश्च पूर्वतमविशिष्टाचारदर्शनादिति, बीजाङ्कुरन्यायेनानादित्वेन स्मृत्या-चारयोः प्रामाण्यसिद्धेः किं शब्दानुमानेनेत्याशङ्क्याह—आचारादिति। अन्धानां मुग्धरूपस्मरणतुल्यताप्रसङ्गात्। यथा हि तद् रूपनिर्णयसापेक्षं तथा धर्मनिर्णये स्मृत्या-चारः स्मृतेरनुभवापेक्षत्वादाचारस्य प्रमेयत्वेन प्रमाणापेक्षत्वात्, अतस्तयोरेवान्योन्यमूल-त्वाभ्युपगमेऽन्धवाक्यपरम्परातुल्यता प्रसज्यत इति। तर्हि तयोर्वेदमेव मूलमनुमास्यामः

स तु वेदो मन्वादीनां प्रत्यक्षः इदानीमुच्छिन्न इति नाभ्युपगच्छामः, किन्तु तैरपि पूर्वस्मृत्यादिना तैरपि पूर्वतमस्मृत्यादिना, ततश्च सर्वेषां नित्यानुमेयस्यैव वेदस्य मूलत्वान्न शाखोच्छेदः, नाप्यन्धपरम्पराप्रसक्तिरिति प्राभाकरस्तत्राह—**आसंसारमिति**। यदि सर्वैरप्यनाम्नातः तर्हि वेद एव स न स्यात्। वेदो नाम शुश्रूषाराधितगुरुमुखादिगतं द्विजातिभिरधीयमानं क्रमस्वरादिविशेषोपेतं वर्णकदम्बकं न तु वर्णमात्रम्, न चैतन्नित्यमनुच्चारितस्य सम्भवति, तेन नित्यानुमेयो वेद इति परस्परपराहतं वचनमिति। इतश्च न वेदत्वं तस्येत्याह—**उत्पत्तित** इति। धर्माधर्मयोरावेदनाद्वेदः, वेदत्वं चानुपूर्व्या विशिष्टानां वर्णानां न केवलानाम्, आनुपूर्वी च वर्णानामुत्पत्तितो भवति यथा नैयायिकानाम्, अभिव्यक्तितो वा यथा वैय्याकरणानाम्, अभिप्रायतो वा यथा न्यूनवाक्यप्रयोगे वक्त्रभिप्रायावच्छिन्नैर्वर्णैर्वाक्यपूरणेनार्थप्रतीतिः। त्रिधा चेयमानुपूर्वी नित्यमनुच्चारितानां न सम्भवतीत्यनर्थकत्वाद्वेदत्वव्याघात इति। ननु मा भूद् वेदत्वं तथापि शिष्टैराचर्यमाणत्वादष्टकादेरिष्टसाधनत्वं कर्तव्यत्वं च ज्योतिष्टोमवदनुमाय तत्र चानुमेयवेदस्य प्रामाण्यमपि निश्चित्य मन्वादयः स्मरिष्यन्ति अनुष्ठास्यन्ति चेत्यत्राह—**यदि हीति**। तदर्थस्य=अनुमेयवेदप्रमेयस्य शिष्टाचारत्वानुमानेनैव सिद्धेरिति। धर्माधर्मविदकत्वं हि वेदत्वं, तच्च शिष्टाचारानुमानस्यास्तीति तदेवानुमेयो वेदो भविष्यतीत्यत्राह—**न** चेति। शिष्टाचारस्य प्रत्यक्षत्वान्न तावदनुमेयत्वम् अशब्दात्मकत्वादिति।

ननु यदि वयं शिष्टाचारत्वेन कर्तव्यत्वहितसाधनत्वे अनुमास्यामः, ततो वेदानुमानमनर्थकं स्यात्। प्रमाणमूलमात्रमनुमीयत इत्याह—**अथेति**। तत्र च पक्षधर्मताबलाद्वेदमूलत्वमेव सिध्यतीति भावः। **तत** इति। आचारस्वरूपस्य प्रत्यक्षमूलत्वात्सिद्ध साधनमिति। ननु शिष्टाचारस्येष्टसाधनत्वे प्रत्यक्षमूलत्वासम्भवाद्वेद एव मूलं भविष्यतीत्यत्राह—**तदसंभवेऽपीति**। तत्रापि शिष्टाचारत्वानुमानस्य मूलत्वासम्भवात्सिद्ध साधनतैवेति। अथवा धर्मादीनां कस्यचिल्लोकोत्तरस्य प्रत्यक्षत्वाभ्युपगमात् न वेदमूलत्वसिद्धिः, अर्वाचीनानां च मन्वादीनां प्रत्यक्षत्वासम्भवे शिष्टाचारानुमानमूलत्वासम्भवात्सिद्धसाधनतेति। **नित्यमिति**। न तावदाचाराणां श्रेयःसाधनत्वेन व्याप्तं किमपि लिङ्गमिदं नामेति विशेषतो मन्वादिभिरुपगतम्। यथा हि वयं शिष्टानाचरतो दृष्ट्वा कर्तव्यताज्ञानमन्तरेण तदसंभवात्तस्य च ज्ञानस्य प्रत्यक्षमूलत्वासम्भवात् किमप्येषामनुमानं मूलमिति सामान्यतोऽनुमिमीमहे, तथा मन्वादयोऽपि विशिष्टानामाचारमूलं किमप्यस्त्यनुमानमिति सामान्यतोऽनुमिन्वते, न तु लिङ्गविशेषम्। नित्यं च विशेषतोऽज्ञायमानं लिङ्गं कथं प्रत्यायकं भवेत्, अप्रत्यायकं च कथमनुमानं कथं वाऽनुष्ठातॄणां

कर्तव्यज्ञानस्य मूलं ततो वेदत्वस्यैव सिद्धेः कथमनुमानेन सिद्धसाधनतेति भावः। **वेद** इति। नित्यानुमेयत्वपक्षे विशेषरूपेणाज्ञातो वेदः कथं प्रत्यायको भवेत् कथं च वा मूलमिति। **अनुमितत्वादि**ति। अभियुक्ततराचरितत्वेनाष्टकादेरिष्टसाधनत्वकर्तव्यत्वे तावदभ्युपगम्य तत्प्रतिपादक एव वेदविशेषोऽनुमीयते, तेन विशेषतो विज्ञात एवेति। **लिङ्गमपी**ति। शिष्टाचारात्तन्मूलत्वेनानुमीयमानं लिङ्गमपि विशिष्टमेवेति। **अनुमेये**ति। 5 अत्र ह्याचारस्य हितसाधनत्वकर्तव्यतयोरनुमापकं लिङ्गम् अनुमेयं, तच्च यदि ताभ्यामेवानुमीयते न ततोऽनुमेयप्रतीतेर्लिङ्गप्रतीतिरिति स्यात्, तच्चायुक्तमिति। तदेतद्वे-दानुमानेऽप्यविशिष्टमित्याह—**शब्दे**ति। आचाराद्धि कर्तव्यतां ज्ञात्वा तज्ज्ञानमूलं वेदोऽस्माभिरनुमीयते यथा, तथा मन्वादिभिरपि प्रमेयभूतकर्तव्यतावगतेः पश्चात्तन्निर्णायक-प्रमाणभूतवेदावगतिरिति। ननु स्यादेवं यदि कर्तव्यतया वेदोऽनुमीयते न त्वेवमित्याह— 10 **आचारे**ति। **ने**ति। आचारकर्तव्यताया हि मूलान्तरापेक्षेति। तर्हि तयैव वेदोऽनुमास्यत इत्यत्राह—**तत्कर्तव्यतायास्त्व**ति। ततः किमित्यत्राह—**अप्रमित-तये**ति। मा भूच्छब्दानुमानं प्रत्यक्षवेदेनैव तु कर्तव्यताप्रतीतिरस्त्वित्यत्राह—**प्रत्यक्षे**-ति। आचारमूलस्य नित्यानुमेयत्वाभ्युपगमादिति। तस्माच्छिष्टाचारत्वेन कर्तव्यतामनुमाय वेदोऽनुमातव्यः। सा चेदनुमिता किं तेनानुमितेन वेदेन, तत्प्रमेयस्य 15 कर्तव्यताया अनुमानादेव सिद्धेरिति। नन्वनुमानादेवाचारकर्तव्यतावगमेऽपि वेदमूलतैव तस्या अनुमीयते। कर्तव्यताया वेदमूलत्वेन ज्योतिष्टोमादौ व्याप्त्यवधारणादित्याह— **तथापी**ति। यदि व्याप्तिबलादागमो मूलमनुमीयते तर्ह्यत एवानुमीयमानस्य वेदस्य प्रत्यक्षानुमानयोरन्यतरमूलत्वमनुमीयताम्, आगमत्वस्य तन्मूलत्वेन लोके व्याप्त्यवधारणा-दित्याह-**त एवे**ति। एतच्च प्रकृतानुपयोगेऽपि परेषामनिष्टमित्येतावता प्रसञ्जितमिति। 20 **आदिमत** इति। आगमस्य प्रत्यक्षानुमानमूलत्वं दृष्टम्, अयं त्वनुमीयमानो वेदागमो-ऽनादिरतः कथमस्य तन्मूलतेति तदेतदाचारेऽपि वक्तुं शक्यत इत्याह—**आचारोऽपी**-ति। य आचार आचरित्रा स्वयमेव मूलभूतमागममुपलभ्य प्रवर्तितः तस्यैवेदं प्रथमस्य ज्योतिष्टोमादेरागममूलत्वमुपलब्धम्। अयं त्वष्टकाद्याचारः पूर्वपूर्वाचारपरम्परोपलम्भ-मात्रेणानुष्ठीयमानोऽनादिरतोऽयमागमनिरपेक्षो भविष्यतीति। ननु मा भूदागमो मूल- 25 माचारस्य शिष्टाचारत्वेन कर्तव्यतानुमानमेव मूलं भविष्यति, शिष्टानामपि पूर्वानाचरतो दृष्ट्वा कर्तव्यतामनुमायाचारस्तेषामपि पूर्वतरानाचरतो दृष्ट्वा इत्याचारात् कर्तव्यतानुमानं, तदनुमानाच्चाचार इति अनन्ताभ्युपगमान्नेतरेतराश्रयत्वादिदोषप्रसक्तिरित्याह—**आचारे**-ति। **किन्नश्छिन्न**मिति। स्मृत्याचारयोर्मूलभूतो वेदो नित्यानुमेयः, चोदनैव धर्मे

प्रमाणमिति राद्धान्तद्वयमपि छिद्यते, अनुमानस्यैव धर्ममूलत्वाभ्युपगमादिति। पुनरपि नित्यानुमेयवेदवादिनामेवाशयमाशङ्कते—**अथायमिति**। प्रत्यक्षवेदमूलानामपि च तावदाचरितपूर्वाणामाचाराणामुच्छेदो दृश्यते, न हि ते पूर्वमप्यनाचरिता वक्तुं युक्तं तद्विषयस्य वेदस्यानुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्। न च तस्याप्रामाण्यमेवास्त्विति युक्तम्,
5 अनुष्ठीयमानार्थदर्शपौर्णमासादिवाक्यैरश्वमेधादिवाक्यानां प्रामाण्यहेत्वविशेषात्। पूर्वकालवदुत्तरकालमनुष्ठास्यन्ते च कदाचिदश्वमेधादयस्तद्वदन्येऽप्यप्रत्यक्षवेदमूला आचारत्वादेवोच्छेत्स्यन्ते पुनरनुष्ठास्यन्ते चेति तेषामपि विच्छेदेन भवितव्यम्। अतोऽनादित्वाभावादाचारपरम्परामूलत्वासंभवेनाश्वमेधादीनामिवाष्टकादीनामप्याचारस्यागमो मूलं, स चानुमेय इति भावः। विवादपदाचारा वेदमूला उच्छेदानन्तरभावित्वात् राजसूयाश्वमेधादिवदिति।
10 **एवं तर्हीति**। यद्येषामुच्छेदस्तर्हि किं मूलाः पुनः प्रवर्तन्ताम्। न तावत्कर्त्तव्यतानुमानम् अनुमेयवेदो वा मूलं संभवति, तल्लिङ्गस्याचारस्य तदानीमभावात्, न वाऽश्वमेधादिवत्प्रत्यक्षश्रुतिरस्ति तदाचारस्वरूपस्य परिप्लवः स्यात्, न केवलं वेदमूलत्वमस्येत्युपसंहरति—**तस्मादिति**। तदेवं नित्यानुमेयत्वेन शाखानामुच्छेदाभावं वदन्तो निरस्ताः। संप्रति मतान्तरमाशङ्कते—**अधुनापीति**। स्मृत्याचारयोर्मूलभूता श्रुतिरिदानीमपि
15 देशान्तरेऽधीयते तेन न तच्छाखोच्छेद इति। तदपि विकल्प्य दूषयति—**अत्रेति**। स्वाध्याय इत्यध्ययनमुच्यते अध्येतृसमानकर्तृकत्वादिति। न ह्यनधीयानानामनुष्ठेयज्ञानासंभवादनुष्ठानं संभवतीति। देशान्तरादागतैरध्येतृभिराचाराः प्रवर्त्तिष्यन्त इत्यत्राह **अन्यत इति**। आध्यात्मिकी शक्तिर्वक्ष्यमाणायुरादिकम्। तस्य स्वाध्यायविच्छेदस्य। तस्मात्स्वाध्यायविच्छेदोऽपि तावदस्मत्पक्षानुगुण एव भवेदित्याह **न तस्मादिति**।
20 आयुरादीनां ग्रहणादिशक्तेश्च प्रत्यहमपचयादेव स्वाध्यायानुष्ठानयोर्विशेषणं न तूपचितेष्वेव तेषु। तत्र कथंचित् केषुचिदेव पुरुषेषु कस्याश्चिच्छाखायाः स्वाध्यायानुष्ठानमनुवर्तते, परिग्रहीतॄणामनेकत्वाच्चेषां युगपदनुच्छेदाच्च नैकदैव सर्वस्य स्वाध्यायस्य कर्मानुष्ठानस्य वोच्छेद इति। अनेन शक्तेः स्वाध्यायकर्मणोरित्येतद्विवृतमिति द्रष्टव्यम्।

### विवेकः

ननु कालत्वं वेदव्याप्यं कालमात्रवृत्तिधर्मत्वादित्यनुमानेन कालत्वस्य वेदव्याप्यत्वे
25 सिद्धे कालसामान्यं पक्षीकृत्य वेदानुमानमेव प्रलयबाधकं स्यादित्यभिप्रेत्य वेदशून्यं कालं साधयति। **जन्मेत्यादि**।

सम्प्रदीयते गुरुणा शिष्यायेति व्युत्पत्त्या साम्प्रदायो वेदस्तस्य ह्रासः

सजातीयानधिकरणवृत्तिध्वंसप्रतियोगित्वं मीयतामनुमीयताम्। जन्मादेर्ह्रासदर्शनात् जन्मादिकं दृष्टान्तीकृत्येति फलितम्। प्रयोगः—वेदत्वम्, आश्रयानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति, कार्यमात्रवृत्तिधर्मत्वात्, मानसप्रजाजन्मत्वादिवत इत्याद्युन्नेयम्। अत्र शक्तिपदं ब्रह्मचारिभिः शक्यते इति व्युत्पत्त्या ब्रह्मचारिणामातिथ्यश्रवणपरम्। कर्मपदं तपश्चर्यादिपरम् तेन न विवरणन्यूनतेति ध्येयम्। दृष्टान्तमेव व्याकरोति। **पूर्वमित्यादि**। 5
मानस्यः विनैव मैथुनं संकल्पमात्रसंभवाः। प्रजाः पुलस्त्यादयः पूर्वमासन् नत्विदानीं वर्तन्ते तादृशजन्मत्वे साध्यमस्तीति भावः। एवमग्रेऽपि आगमिकञ्च एतत्। कामावर्जनीयजन्मानः देशकालविषयादिव्यवस्थावत् कामसंभवाः। इदानीमिति च पूर्वपूर्वेषामत्यन्तह्रासबोधनाय। **पश्विति**। पशोरिव यो धर्मः ग्राम्यधर्मः तद्भवभूयिष्ठास्तत्प्रभवा एव प्रायशो दृश्यन्ते। तथा च ब्रह्माण्डान्तर्वर्तिनः प्राणिनो ब्रह्माण्डे सामग्र्यसमवधानकालोत्पत्तिक- 10
ब्रह्माण्डनाशे म्रियन्ते, तदवधिजीवित्वात्। यद्यदेकावधिजीवि तत्तन्नाशे म्रियते इत्यत्र तादृशमशकसमूहो दृष्टान्तः हेतुश्चागमसिद्धः इत्यवधेयम्। एवं महादहनदह्यमानत्वात् इत्यादिहेतुरुन्नेयः। सर्वत्र यथाक्रमं तादृशघुणसंघातादि दृष्टान्तः। प्रजासंस्कारदृष्टान्तं व्याकरोति-पूर्वमित्यादि। चरुप्रभृतिषु चरुपुरोडशादिषु। समाधायिषतेति व्यवहारमाश्रित्येतिपर्यन्तं सर्वत्रानुषङ्गेन विशेष्यम्। अपत्योत्पादनाय संस्काराः समाधायिषत सम्यगाहिताः। 15
क्षेत्रप्रभृतिषु गर्भादिषु। आदिपदात् तद्वत्यां स्त्रियाम्। विद्यादेः ह्रासमाह—**पूर्वमित्यादि**। व्यस्तः द्वित्रा वेदाः षडङ्गानि शिक्षाकल्पादीनि अध्येतृज्ञानविषयतया यस्यास्ति षडङ्ग एव सहस्रऋगाद्यन्यतमः। आदिपदग्राह्यं व्याकरोति **पूर्वमित्यादि**।

ऋतमुच्छशिलं प्रोक्तममृतं स्यादयाचितम्।
मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्॥ 20

सत्यानृतं तु वाणिज्यं कुसीदञ्च कलान्तरम् पाशुपाल्यञ्च गोरक्षादि। श्ववृत्तिः = सेवा। वेश्यावेशिनः वेश्यातिथयः। संवृत्ता इति प्राक्तनमेष्वनुषज्यते। अमृतभुजः = यज्ञशेषभुजः। विघसभुजः = अतिथिशेषान्नभोजनाः अन्नभुजः = शेषान्नभोजनाः। अनुभुजः भृत्यैः सहभुजः अघभुजः = स्वार्थसाधितभुजः। चतुष्पादिति। तपोज्ञानयज्ञदानानि चत्वारि। एवमेषा पूर्वपूर्वत्यागेन ह्रासः। दुरागतं = घूतोत्कोचाद्या- 25
गतम्। विपादिका = पादस्फोटः। पूर्वं सहस्रशाखो वेदो अध्यगायीत्यत्र शंकते। इदानीमिवेति। इदानीमध्ययनविषयावेदत्वं नाध्ययनविषयवेदनिष्ठान्योऽन्याभावप्रतियोगितावच्छेदकं स्वव्यापकत्वात्, वेदत्ववदित्यर्थः। स्मृतिरष्टकादिकर्तव्यताबोधिका।

अनुष्ठानम् कर्मव्युत्पत्त्या मङ्गलादि। शाखानां वेदानामुच्छेददर्शनात् उच्छेदस्य प्रामाणिकत्वात्। तथा च **बाध इति भावः**।

ननु तादृशस्मृत्याचारयोर्वेदमूलकत्वमेव नेष्यत इत्यत्राह—स्वातन्त्र्येणेति। इतर-प्रामाण्यानपेक्षप्रामाण्यकं मूलमकृत्वेत्यर्थः।

5 ननु मन्वादीनां स्वार्थगोचरप्रत्यक्षमेव प्रमाणस्तीत्यत्राह—मन्वादीनामिति। इतर प्रामाण्यानधीनप्रामाण्यकत्वस्य प्रयोजनं भङ्ग्या कथयति। आचारादित्यादि। अन्धेति। तिमिरपरिसहचारदर्शनबलेन तथा व्यवस्थितेरिति भावः। ननु तादृशस्मृत्याचार-मूलीभूतो नित्यानुमेयतया नाध्ययनविषय इति न बाध इत्यत्राह—**आसंसार इति**। अमाम्नातस्यानुपूर्वीविशेषविशिष्टतयानवगतस्यानुमानायोगात् प्रमानुमितेर्वेदत्वेन

10 तद्विषयत्वासंभवात्। उत्पत्तित्त इति। स्वमते **अभिव्यक्तित इति** परमते अभिप्रायतयेत्ति। उभयमतेऽवच्छिन्नत्वमानुपूर्वी विशेषानवच्छिन्नत्वं निरर्थकत्वात्। अर्थाबोधकत्वात्। ननु वेदाधीनं प्रवर्त्तकज्ञानमिदानीमपेक्षितमानुपूर्वीज्ञानस्य तद्धेतुत्वेनु उच्छिन्नवेदादपि तदशक्यमित्यनायत्या अर्थज्ञापकत्वज्ञानमेव तद्धेतुरिति वाच्यमित्यत्राह। यदि चेति। हितसाधनमिति स्वमते। उभयमते त्वाह कार्यमिति। अनुमितमित्यु-

15 पलक्षणम्। स्मृतमित्यपि वाच्यम्। किमित्यस्य प्रवर्त्तकज्ञानार्थमिति शेषः। तदर्थस्य तत्प्रयोजनस्यानुमानादिति स्मृतेरप्युपलक्षणम्। प्रत्यक्षसिद्धत्वादिति। तेन नित्यानु-मेयत्वम्। अशब्दत्वादतो न वेदत्वमिति भावः। शिष्टचारत्वात् प्रमाजन्याचारत्वात्। प्रमाणमूलःप्रमित्यधीनः। अत्र च पक्षधर्मताबलात्प्रमायां वेदजन्यत्वसिद्धिरिति भेदः। प्रत्यक्षेत्यस्यास्माभिरीश्वरेत्यादिः। तदसंभवे तदनभ्युपगमेऽनुमानसंभवात् तन्मूलकत्वो-

20 पगमात्। नित्यमित्यस्य **विशिष्येति शेषः**। कथमनुमानं कथमनुमितिकरणं तदजनने तज्जन्या प्रमितिः कथं मूलमाचारस्य। अज्ञायमानविशिष्टत्वं वेदं प्रमाजनन द्वारामूलमाचारस्य अनुमितित्वात्। तदर्थज्ञापकत्वेन लिंगेऽप्येवमेव। वह्निज्ञापकत्वे-नैव ज्ञातस्य लिङ्गस्य त्वया गमकत्वोपगमादिति भावः। ननु तदर्थज्ञापकत्वेन लिंगस्य ज्ञानं तदर्थप्रतीतौ स्यात्। सैव कथं लिङ्गं विनेति शंकते—अनुमेयेति। मंगलादि-

25 कर्तव्यताप्रतीतेरित्यर्थः। लिंगप्रतीतिर्विशिष्य न पश्चात्तनी न तदर्थप्रतीत्यनन्तरोत्पादिका।

ननु लौकिक-शिष्टाचारत्वेन वेदमूलत्वमेवानुमेयं नातः प्रत्यक्षादिना अर्थान्त-मित्याशंकते—**आचारस्वरूपेणेति**। तत्फलमाह—**तेनेति**। ननु वेदस्य तादृशाचार-जनकत्वं साक्षात्तत्कारणप्रयत्नजनकज्ञानद्वारा वा। नाद्य इत्याह—आचारेति। प्रत्यक्षसिद्धत्वेन

वेदासमवहितमितिभावः। प्रमाणशब्दत्वेन मूलान्तरानपेक्षणात्। वेदजन्यत्वात् तथा च वाध इति भावः। द्वितीये त्वाह—**तस्मादिति**। प्रमिततया मंगलादिकर्तव्यतायास्तज्ज्ञापकतया शब्दानुमामानवकाशप्रत्यक्षश्रुतेरसंभवात्। विभक्त्यादिसमभिव्याहृततया ज्ञानयोः श्रुतेरसंभवात्। तदर्थस्य तत्प्रयोजनकर्तव्यताप्रतीतेः प्राक्सिद्धत्वेऽपि व्याप्तिबलात् तत्र वेदानुमानमित्याह—**तथापीति**। तस्य-तादृशाभावस्य। अत एव सहचारदर्शनमात्रप्रवृत्तव्याप्तिनिश्चयादेव तस्य वेदस्य लौकिकवाक्यवत्। प्रत्यक्षेति। प्रत्यक्षमूलकत्वोपगमे च सिद्धं नः समीहितमिति भावः। प्रमाणशब्दत्वेन प्रत्यक्षादिमूलकानुमितावुपाधिमाह—**आदिमत इति**। शब्दस्येति शेषः। साधनव्यापकत्वम् दर्शयति। **अयमिति**। वेद इत्यर्थः। इदं प्रथमः सादिः तथा स्यात् आगममूलः स्यात्। दर्शादेरेव सादित्वमभ्युपेत्य एवम्। अयं मंगलाद्याचारः। **अनादित्वमिति**। तथा च तयोरेव मूलमूलीभाव इति भावः। एवं मूलमूलीभावापन्नयोः नित्यानुमेयो वेद इति तादृशाचारस्य संभवमूलान्तरत्वेन वेदमूलकत्वादिति भावः। नन्वाचारस्यातथात्वेऽपि तथाविधस्मृतिमूलीभूतवेदस्य तथात्वात् तथात्वं स्यादत आह—**द्वितीयमिति**। देशनैवेति। धर्मत्वावच्छेदेन देशनाप्रमाणकत्वमित्यर्थः।

ननु मंगलाद्याचारो वेदमूलकः उच्छेदानन्तरमप्यनुष्ठीयमानत्वात् राजसूयवदित्यनुमानाद् वेदमूलकत्वं तत्र स्यादित्यभिप्रायेण दृष्टान्ते हेतुमत्त्वं साधयति। अथेत्यादि। समुच्छिद्यमानाः इदानीङ्कालत्वव्यापककादाचित्काभावप्रतियोगिनः। अत्र हेतुर्यत इति। कृतिसाध्यत्वे सति इदानीन्तनकृत्यफलत्वादित्यर्थः। राजसूयत्वं भविष्यदनुष्ठानविषयवृत्ति, अनादितावच्छेदकत्वे सति अनुष्ठीयमानमात्रवृत्तित्वात्। सन्ध्यात्ववदित्यनुमाने हेत्वसिद्धिमुद्धरति—**न चैत इति**। नानुष्ठिताः नानुष्ठानविषयाः। यथाश्रुते प्रागपीत्यस्य वैयर्थ्यात्। तदर्थस्यानुष्ठानैक्यप्रयोजनस्य। अप्रामाण्येति। तद्बोधितकृतिसाध्यत्वस्य तत्र वाधः। एवं तदप्रामाण्यमेव। दर्शादीति तुल्यवत् प्रमाणत्वेनोभयत्र महाजनपरिग्रहादिति भावः। एते राजसूयादयः अन्येऽप्याचाराः होलाकादयः। निगमयति—तत इति। उच्छेदानन्तरमनुष्ठीयमानत्वादित्यर्थः। **तद्वदिति**। उदाहरणैकदेशानुवादेन तत्सूचनं। प्रवाहादौ उच्छेदानन्तरं प्राथमिकानुष्ठाने लिंगाभावे तथाविधाचारविषयत्वस्य लिंगस्य तदानीं ज्ञापकाभावेनाज्ञाने। उपसंहरति—**शाखोच्छेद इति**। यद्यपि सहस्रशाखाविदो व्यासादय इदानीमपि सन्ति तथापि तदध्ययनाभाव एव तदुच्छेद इति **मणिकृतः**। **भट्टमतं** शंकते—अधुनापीति। असौ उच्छिन्नत्वेनाभिमतशाखावेदवत्त्वेन भावितत्तद्देशगताप्तवाक्यात्तत्र एतदभावनिश्चयो देशान्तरत्वे तु तत्त्वादेवेति युक्तिं युक्त्यन्तरेणाप्युपष्टभ्नाति। अत्रेत्यादि। तस्य

तादृशाचारस्य। अध्येत्रित्याध्यापयितुरुपलक्षणम्। आध्यात्मिकशक्तिर्मेधादिः। तस्य स्वाध्यायविच्छेदस्यानुवर्तते यत्किंकित्स्वाध्यानुष्ठानम्। इदानीं सर्वानुच्छेदे युक्तिमाह—**विश्वेति**।

गतानुगतिको लोक इत्यप्रामाणिक एवाचारो, न तु शाखोच्छेदः, अनेकशाखा- 5 गतेतिकर्त्तव्यतापूरणीयत्वात्, एकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्गादिति चेत्। एवं हि महाजनपरिग्रहस्योपप्लवसम्भवे वेदा अपि गतानुगतिकतयैव लोकैः परिगृह्यन्ते इति न वेदाः प्रमाणं स्युः, तथा च वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः।

एतमेव[1] च कालक्रमभाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः प्रतिविहितमतो नोक्त- दोषोऽपि, न चायमुच्छेदो ज्ञानक्रमेण येन श्लाघ्यः स्याद्, अपि तु प्रमादमदमानाऽऽ- 10 लस्यनास्तिक्यपरिपाकक्रमेण, ततश्चोच्छेदानन्तरं पुनः प्रवाहः, तदनन्तरञ्च पुनरुच्छेद इति सारस्वतमिव स्रोतः, अन्यथा कृतहानप्रसङ्गात्। तथा च भाविप्रवाहवद्भवन्न- प्ययमुच्छेदपूर्वक इत्यनुमीयते। स्मरति भगवान् व्यासो गीतासु भगवद्वचनम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।<br>
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥<br>
15 परित्राणाय साधूनां विनाशाय च दुष्कृताम्।<br>
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥ इति

कः पुनरयं महाजनपरिग्रहः?। हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिः, स ह्यत्र न स्याद् ऋते निमित्तम्। न ह्यत्रालस्यादिर्निमित्तम्। दुःखमयकर्मप्रधानत्वात्। नाप्यन्यत्र सिद्धप्रामाण्येऽभ्युपायेऽनधिकारेणाऽस्मिन्ननन्यगतिकतयाऽनुप्रवेशः। परैः 20 पूज्यानामप्यत्राप्रवेशात्। नापि भक्ष्यपेयाद्यद्वैतरागः, तद्विभागव्यवस्थापरत्वात्। नापि कुतर्काभ्यासाऽऽहितव्यामोहः, आकुमारं प्रवृत्तेः। नापि सम्भवद्विप्रलम्भपाषण्डसंसर्गः पित्रादिक्रमेण प्रवर्त्तनात्। नाऽपि योगाभ्यासाभिमानेनाव्यग्रताभिसन्धिः, प्राथमिकस्य कर्मकाण्डे सुतरां व्यग्रत्वात्। नापि जीविका, प्रागुक्तेन न्यायेन दृष्टफलाभावात्। नापि कुहकवञ्चना, प्रकृते तदसम्भवात्।

25 सम्भवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे। तथा हि। भूयस्तत्र कर्मलाघव- मित्यलसाः। इतः पतितानामप्यनुप्रवेश इत्यनन्यगतिकाः। भक्ष्याद्यनियम इति रागिणः। स्वेच्छया परिग्रह इति कुतर्काऽभ्यासिनः। पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः। "उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते" इत्यादिश्रवणादव्यग्र- ताऽभिमानिनः। सप्तघटिकाभोजनादिसिद्धेर्जीविकेत्ययोग्याः। आदित्यस्तम्भनं, 30 पाषाणपाटनं, शाखाभङ्गो, भूतावेशः, प्रतिभाजल्पनं धातुवाद इत्यादिधन्धनात् कुह- कवञ्चिताः। ततस्तान् परिगृह्णन्तीति सम्भाव्यते। अतो न ते महाजनपरिगृहीता इति विभागः।

१—एनमिति पाठान्तरम्।

स्यादेतत्। यद्येवं सर्वकर्मणां वृत्तिनिरोधो न किञ्चिदुत्पद्यते, न किञ्चिद्विनश्यतीति स्तिमिताकाशकल्पे जगति कुतो विशेषात् पुनः सर्गः ?। प्रकृतिपरिणतेरिति साङ्ख्यानां शोभते। ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते। वासनापरिपाकादिति सौगतमतमनुधावति। कालविशेषादिति चोपाधिविशेषाभावादयुक्तम्। असताञ्चोपलक्षणानां न विशेषकत्वं, सर्वदा तुल्यरूपत्वात्। न च ज्ञानद्वारा, अनित्यस्य 5 तस्य तदानीमभावात्। नित्यस्य च विषयतः स्वरूपतश्च अविशेषादिति चेन्न। शरीरसंक्षोभश्रमजनितनिद्राणां प्राणिनामायुःपरिपाकक्रमसम्पादनैकप्रयोजनश्वाससन्तानाऽनुवृत्तिवन्महाभूतसंप्लवसंक्षोभलब्धधसंस्काराणां परमाणूनां मन्दतरतमाऽऽदिभावेन कालावच्छेदैकप्रयोजनस्य प्रचयाख्यसंयोगपर्यन्तस्य कर्मसन्तानस्येश्वरनिःश्वसितस्याऽनुवृत्तेः। कियानसावित्यत्राविरोधादागमप्रसिद्धिमनतिक्रम्य तावन्तमेव कालमित्यनु- 10 मन्यते। ब्रह्माण्डान्तरव्यवहारो वा कालोपाधिः। तदवच्छिन्ने काले पुनः सर्गः। यथा खल्वलाबुलतायां विततानि फलानि, तथा परमेश्वरशक्तावनुस्यूतानि सहस्रशोऽण्डानीति श्रूयते। तस्मादेवं विच्छेदसम्भवे कस्य केन परिग्रहो, यतः प्रामाण्यं स्यात्। ज्ञापकश्चायमर्थो न कारकः ततः कारकाभावान्निवर्त्तमानं कार्यं ज्ञापकाभिमतः कथङ्कारमास्थापयेत्। 15

स्यादेतत्। सन्तु कपिलादय एव साक्षात्कृतधर्माणः कर्मयोगसिद्धास्त एव संसाराङ्गारेषु पच्यमानान् प्राणिनः पश्यन्तः परमकारुणिकाः प्रियहितोपदेशेनानुग्रहीष्यन्ति, कृतं परमेश्वरेणानपेक्षितकीटादिसंख्यापरिज्ञानवतेति चेन्न। तदन्यस्मिन्ननाश्वासात्। तथा ह्यतीन्द्रियार्थदर्शनोपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कारमुत्पादयति, यतः समाश्वसिमः। प्रमाणान्तरसंवादादिति चेन्न। अहिंसादि- 20 हितसाधनमित्यत्र तदभावात्। आगमोऽस्तीतिचेन्न। भावनामात्रमूलत्वेन तस्याप्यनाश्वासविषयत्वात्। एकदेशसंवादेनापि प्रवृत्तिरिति चेन्न, स्वप्नाख्यानवदन्यथापि सम्भवात्। न चानुपलब्धे भावनाऽपि। चौरसर्पादयो ह्युपलब्धा एव भीरुभिर्भाव्यन्ते। न च कर्मयोगयोर्हितसाधनत्वं कुतश्चिदुपलब्धम्। न चैतयोः स्वरूपेणोपलम्भः क्वचिदुपयुज्यते, भावनासाध्यो वा। न चास्मिन्नन्वयव्यतिरेकौ सम्भवतः। 25 देहान्तरभोग्यत्वात् फलस्याप्रतीततया तदनुष्ठाने तदभावाच्च। न च कर्तृभोक्तृरूपोभयदेहप्रतिसंधानादेव तदुपपद्यते। तदभावात्। न ह्येतस्य पूर्वकर्मणः फलमिदमनुभवामीति कश्चित् प्रतिसन्धत्ते। केचित्तथा भविष्यन्तीति सम्भावनामात्रेप्यनाश्वासात्। विनिगमनायां प्रमाणाभावात्। प्रतिपन्निशीथनिद्राणप्रातः प्रतिबुद्धसमस्तोपाध्यायवदन्योन्यसंवादात् कपिलादिषु समाश्वास इति चेन्न। एकजन्मप्रतिसन्धान- 30 वज्जन्मान्तरप्रतिसन्धाने प्रमाणाभावात्। तथापि च अधिकारिविशेषेण ब्राह्मणत्वाद्यप्रतिसन्धानेऽनुष्ठानरूपस्याश्वासस्याभावात्। न हि पूर्वजन्मनि मातापित्रोर्ब्राह्मण्यात्तदुत्तरत्र ब्राह्मण्यमिति नियमो, येन सर्गादौ वर्णादिधर्मव्यवस्था स्यात्। ईश्वरवददृष्टविशेषोपनिबद्धभूतविशेषानुपलम्भात्। अतीन्द्रियार्थदर्शित्त्वेचानाश्वासस्योक्तत्वात्।

एतेन ब्रह्माण्डान्तरसञ्चारिवर्णव्यवस्थया सम्प्रदायप्रवर्त्तनमपास्तम्। सञ्चार- 35 शक्तेरभावात्। वर्णान्तरसञ्चरणमेव हि दुष्करं, कुतो लोकान्तरसञ्चारः, कुतस्तराञ्च

ब्रह्माण्डान्तरगमनम् । अणिमादिसम्पत्तेरेवमपि स्यादितिचेन्न । अत्रापि प्रमाणाभावात् सम्भावनामात्रेण समाश्वासानुपपत्तेः । आद्यमहाजनपरिग्रहान्यथाऽनुपपत्तिरेवात्र प्रमाणमिति चेत् । न । एवम्भूतैककल्पनयैवोपपत्तौ भूयःकल्पनायां गौरवप्रसङ्गात् । विदेहनिर्माणशक्तेरणिमादिविभूतेश्चावश्याभ्युपगन्तव्यत्वात् । अस्त्वेक एवेति चेत्,
5 न तर्हीश्वरमन्तरेणान्यत्र समाश्वास इति ॥ ३ ॥

आमोदः

शाखोच्छेदेऽनिष्टमाह—**अनेकेति** । महाजनपरिग्रहादेव तत्राश्वास इत्यभिप्रेत्याह—**एवमिति** । **वेदा** इति । तत्रापि महाजनपरिग्रहादेव प्रामाण्यमभ्युपेयमित्यर्थः । उच्छिन्नशाखवेदाभ्युपगमे नाश्वासो वृश्चिकभीः । तथा सति सर्ववेदाप्रामाण्यमाशीविषमुखम् । शाखोच्छेदाहितमनाश्वासं
10 परिहरति—**एनमिति** । **महर्षिभिः** स्मृत्याचारप्रणेतृभिः । अन्यथा शाखान्तरोक्ताङ्गशङ्कया एकशाखावोधितेऽपि कर्मण्यनाश्वासः स्यादित्यर्थः । नन्वध्येतृभिरप्रामाण्यशङ्कया शाखान्तरं त्यक्तम् । अतोऽनुवर्तमानशाखायामप्यप्रामाण्यशङ्का तदवस्था इत्यत आह—**न चेति** । शाखान्तरमप्यप्रामाण्यशङ्कया न त्यक्तमित्यर्थः । कथं तर्हि त्याग इत्यत आह—**अपि त्विति** ।
15 तथा च वेदा उच्छेत्स्यन्ति वेदत्वात् उच्छिन्नशाखावत्, ह्रसमानत्वं वा हेतुर्जन्मादिदृष्टान्त इत्यर्थः । सर्गप्रलयमुपसंहरति—**ततश्चेति** । **तदनन्तरं पुनः प्रवाहः** इत्यत्रानुकूलतर्कमाह—**अन्यथेति** । पूर्वजन्मार्जितानामदृष्टानां हानं भोगाजनकत्वं स्यात्, यद्यग्रे शरीरप्रवाहो न स्यादित्यर्थः । **तथा चेति** । कृतहानप्रसङ्गादेवेत्यर्थः । **आत्मानं सृजामीति** अस्य शरीरसम्बन्धं करोमी-
20 त्यर्थः । **सम्भवामीति** । शरीरवान् भवामीत्यर्थः ।

एवं तर्हि महाजनानां बुद्धर्षभादीनां परिग्रहादस्मदागम एव प्रमाणमित्यनुशयवान् पृच्छति । **बुद्धः कः पुनरिति** । हेतुदर्शनं धर्मातिरिक्तवक्ष्यमाणहेतुदर्शनम् । हेतुदर्शनशून्यतामाह—**नहीति** । **नापीति** । **सिद्धप्रामाण्य** ईदृशाभ्युपायान्तराभावादित्यर्थः । **परैः** पाखण्डैः । **भक्ष्येति** । सर्वं
25 भक्ष्यं सर्वं पेयमित्यद्वैतराग इत्यर्थः । **कुतर्कः** क्षणिकत्वाद्यनुकूलतर्काभासः । **योगाभ्यासेति** । सन्ध्योपासनादिपरित्यागे सत्यव्यग्रो योग भवति इत्यभिमानः । **प्राथमिकस्य ब्रह्मचारिणः** । **जीविका** धार्मिकत्वख्यापनेन जीवनोपायधनलाभः । **प्रागुक्तेनेति** । **यो वैनं पूजयिष्यति स किमर्थमित्यादिना** ।

कुहकवञ्चना ऐन्द्रजालिकवञ्चना। अलसाः तद्वन्ध [धन्ध] व्यावर्तीय उदुम्बर-गर्तीय तन्त्र [न्तु] वायादयः (?) अनन्यगतिकाः कीर्तिप्रज्ञाकरादयः रागिणः शरभादयः। कुतर्काभ्यासिनः काणाचार्या [ द ] यः। पाखण्डसंसर्गिणः शौण्डिकादयो बौद्धविशेषाः। अव्यग्रताभिमानिन सुभूत्यादयो बौद्धाः। अयोग्याः सामान्यश्रवणकादयः। कुहकवञ्चनाहेतूनाह आदित्येति। तानिति। 5 बौद्धागमानित्यर्थः। ते बौद्धागमाः।

प्रकृतिपरिणतेरिति। सत्त्वरजस्तमःस्वभावा प्रकृतिः पङ्गुः, चेतनोपरागमन्तरेण न प्रवर्त्तते। यदि तु चेतनस्य पुरुषस्योपरागः प्रकृतौ स एव परिणामस्तत इत्यर्थः। तदुक्तं पङ्ग्वन्धवदुभयोरपि सम्बन्धस्तत्कृतः सर्गः इति। ब्रह्मेति। घटादिभावेन ब्रह्मैव परिणमत इति भास्करीयास्त्रि- 10 दण्डिनः। एकदण्डिनस्तु प्रपञ्चस्य मिथ्यात्वमाहुः। वासनेति। अनादि-वासनाधीना संवृतिस्तन्मात्राधीना घटादिव्यवहृतिर्न तु घटादिः पारमार्थिकः इत्यर्थः। कालविशेषादिति। कालोपाधिरेव कश्चित्तादृशो यत्र पुनः सर्गस्तदा स्याद् यदि प्रलयावस्थायां सूर्यपरिस्पन्दाः कालोपाधयः स्युरित्यर्थः। ननु सर्वसर्ग एव ये सूर्यस्पन्दास्तएव कालोपाधयः स्युरित्यत 15 आह—असतामिति। ते यद्यज्ञाता एव कालमवच्छिन्द्युस्तदातिप्रसङ्ग इत्यर्थः। ननु ज्ञानद्वारावच्छेत्स्यन्तीत्यत आह—ज्ञानेति। प्रलये ज्ञानाभावादित्यर्थः। ननु नित्यज्ञानमस्त्येव तदानीमपीत्यत आह—नित्यस्य चेति। यद्युपाधयस्तदा स्युस्तदा नित्येन ज्ञानेन विषयीक्रियेरन्नित एव तदानीं न सन्तीत्यर्थः। महाभूतेति प्रलयोपक्रमे महाभूतानां जलादीनां 20 यः संक्षोभस्तेन नोदनेन परमाणूनां यत् कर्मोत्पन्नं तेन पुनर्वेगस्तेन पुनः कर्मेति कर्मसन्तान एवानुवर्तते। तेन कर्मणाऽदृष्टसहकारेण परमाणुद्वयसंयोगमुत्पाद्य द्व्यणुकादिक्रमेणारम्भ इत्यर्थः। प्रचयो द्रव्यारम्भकसंयोगमात्रमत्र विवक्षि-तम्। आगमेति। ब्रह्मवर्षशतान्तकालस्यैवागमप्रतिपादितत्वादित्यर्थः। ब्रह्माण्डान्तरसूर्यादिस्पन्दा एव वा तत्रोपाधय इत्याह—ब्रह्माण्डान्तरेति। 25 ब्रह्माण्डनानात्वे प्रमाणमाह—यथा खल्विति। एवमिति। तथा च प्रलयानन्तरं यथा वेदा ईश्वरेण प्रगीयन्ते तथा महाजना अपि मन्वादयो मनसैव सृज्यन्ते इत्यवश्यमभ्युपेयमित्यर्थः। किं च प्रमाया गुणजन्यत्वं

साधितमेव । तथा च वक्तृवाक्यार्थयथार्थज्ञानं विना वैदिकी प्रमा न स्यादितीश्वरसिद्धिः । सिद्धं प्रामाण्यं महाजनपरिग्रहेण ज्ञाप्यते इति ज्ञापकाश्रायमिति अयं महाजनपरिग्रहः ।

तदन्यस्मिन्ननाश्वासादिति व्याख्यातुमुपक्रमते--सन्त्विति । धर्मः
5 कार्यत्वमिष्टसाधनत्वं वा अदृष्टमेव वा निरिन्द्रियप्रदेशे मनसोऽवस्थानं वा, योग आत्मचिन्तनाभ्यासजनितः संस्कारः । तेन सिद्धाः परमवशोकारमापन्नाः । प्रियम् आपातरमणीयं, हितमायतिशुद्धम् । कपिलादीनामतीन्द्रियार्थदर्शने प्रमाणाभावादित्युपपादयति—तथा हीति । स्वप्नेति । स्वप्नकथनेऽप्येकदेशसंवादोऽस्त्येवेत्यर्थः । ननु हितसाधनत्वं यागादीनामुपलब्धमेव,
10 तैः संस्कारश्च स्यादित्यत आह—न चेति । कर्मयागादि योगश्चापवर्गसाधनत्वम् । ननु यागादि उपलभ्यत एव परेण क्रियामाण इति कथमनुप लम्भ इत्यत आह–न चैतयोरिति । स्वरूपेण हितसाधनत्वप्रकाराभावेन । ननु यागादीनामन्वयव्यतिरेकाभ्यामेव हितसाधनत्वं ग्रहीष्यते दण्डादीनामिव इत्यत आह--न चास्मिन्निति । हितसाधनत्वग्रहमन्तरेण यागादावप्रवृत्तेः
15 कस्यान्वयव्यतिरेकौ ग्राह्यावित्याह–अप्रतीतेति । चैत्रकृतो यागश्चैत्र एव स्वर्गिशरीरेण तत्फलं भुङ्क्ते इति प्रतिसन्धाय हितसाधनत्वग्रहादुपदेशः स्यादित्यत आह--न चेति । एतादृशं प्रतिसन्धानमेव नास्तीत्यर्थः । केचिदिति । कपिलादीनामेवं प्रतिसन्धानं सम्भवत्येवातस्तदुपदेशादस्मदादीनां प्रवृत्तिस्तदा तदा स्यात् यद्ययमर्थः प्रमितः स्यात् । नचैवमित्यर्थः ।
20 विनिगमनायामिति । कपिलादीनामिवास्मदादीनामपि तादृशप्रतिसन्धानप्रसङ्गादित्यर्थः । कपिलादयो बह्वः सम्भूय संवादेन यागादीनां हितसाधनत्वं ग्रहीष्यन्तीति तेषु समाश्वासः स्यादित्याशङ्कते--प्रतिपदिति । ननु जन्मान्तरप्रतिसन्धानमपि स्तनपानादौ क्लृप्तमेवास्ति इत्यनुशयेनाह-- तथा हीति । अनुष्ठानरूपस्येति । अनुष्ठानप्रयोजकस्येत्यर्थः । ननु ब्राह्म-
25 णत्वादिनिश्चयो हि पूर्वजन्मब्राह्मणत्वप्रतिसन्धनादेव स्यादित्यत आह— न हीति । यः पूर्वसर्गे ब्राह्मणशरीरावच्छिन्नः, स एवाग्रिमसर्गेऽपि इति यदि नियमो भवेत् तदेदं प्रतिसन्धानं घटेत, नत्वेवमित्यर्थः । नन्वदृष्टविशेषोपगृहीतभूतभेदारभ्यत्वज्ञानादेव ब्राह्मणत्वादिनिश्चयः स्यादित्यत आह– ईश्वरवदिति । न विधान्तरसंभव इत्युक्तं, तत्र विधान्तरशङ्कां निरस्यति–

एतेनेति । वर्षान्तरम् इलावृत्तभारतादि लोकान्तरम् भुवनान्तरम् । तत्रापीति । ईश्वरादन्यत्रेत्यर्थः । आद्येति । यद्यणिमादिसम्पन्नस्यायमुपदेश इति न निश्चयस्तदाद्यमहाजनपरिग्रह एव न स्यादित्यनुपपत्तिरेव । तन्न प्रमाणमिति शङ्कते—आद्येति । एवमिति । तर्हि एक एव लाघवात् कल्पनीयः स चेश्वर एवेत्यर्थः । विदेहेति । देहविनाकृतस्यैव निर्माणशक्तिरणिमादिशक्तिश्च एकस्यैवाभ्युपगम्यतामित्यर्थः । अणिमादावपि करणाद्युपग्रहो नास्तीति भावः न तर्हीति । तादृशश्चेश्वरएवेति ।।३।।

बोधनी

ननु यद्ययमष्टकाद्याचारः प्रमाणमूलः स्यात् ततस्तन्मूलस्य वेदस्येदानीमनुपलम्भादुच्छेदः कल्प्येत, अयं त्वप्रामाणिक एव । 'गतानुगतिको लोको न लोकस्तत्त्वचिन्तकः' इति तालतलबन्धनन्यायेन प्रवर्त्तत इत्याह—गतानुगतिक इति । ननु महाजनपरिग्रहात्प्रामाणिकत्वमेव तेषामङ्गीकृत्य शाखोच्छेद एव किमिति न कल्प्य इत्यत्राह—अनेकशाखेति । सर्वशाखाप्रत्ययमेकं कर्मेति न्याया 'प्रयोगविधयः शाखान्तरगतानप्यङ्गविधीनुपसंहृत्य कर्माणि प्रयुञ्जते, तेन नानाशाखाविहितेतिकर्तव्यतापूरणीयेषु कर्मसु शाखोच्छेदपक्षे कयाचिदुच्छिन्नया विहितमङ्गान्तरं किमपि कदाचित्स्यादिति शङ्कावकाशान्नैकस्मिन्नपि कर्मणि एतावदिदमित्याश्वासः स्यादिति । नेति । यदि महाजनपरिगृहीतोऽप्याचारोऽप्रमाणः स्यात् तर्हि वेदा अपि तथा भवेयुः, न हि ततोऽन्यत्तेषामपि प्रामाण्ये कारणम् । तत्र च शाखोच्छेदलक्षणाद्वृश्चिकभयादपसर्पन् कृत्स्नवेदाप्रामाण्यरूपे आशीविषमुखे निपतितः स्यादिति । इतश्च शाखोच्छेदोऽवगम्यत इत्याह—एतमेवेति । कालक्रमवशाद्भाविना शाखोच्छेदेनानुष्ठातॄणां त्वदुक्तमार्गेण भाविनमनाश्वासमाङ्क्य कल्पसूत्रकारैर्नानाशाखागतान्यङ्गान्युपसंहृत्य स्मरद्भिरनाश्वासप्रतिविधानं कृतं शाखोच्छेदाभावे कल्पसूत्राणि निष्फलानि भवेयुरिति । ततश्च यदुक्तमेकस्मिन्नपि कर्मण्यनाश्वासप्रसङ्ग इति तदपि निरस्तमित्याह—अत इति । अथैवमित्यारभ्य वाऽनाश्वासपरिहारतया व्याख्येयमिति । उच्छिन्नस्यैव विश्वस्य पुनरपि भविता प्रवाह इति प्रतिपादयिष्यन्पुनः प्रवृत्तिविधुरादपवर्गरूपादुच्छेदस्य भेदं तावदाह—न चायमिति । श्रवणादिगतस्य विविक्तात्मविषयस्य ज्ञानस्य क्रमेण परिपाकविशेषेण भवन्मोक्षाख्य उच्छेदः श्लाघ्यो भवति आत्यन्तिकत्वात्, अयं तु प्रमादादिपरिपाकक्रमेण । अतः प्रवाहोच्छेदयोः पुनः प्रवृत्तिरिति । अस्तु वर्तमानप्रवाहस्य विच्छेदः, भाविप्रवाहस्तु कुतस्त्य इत्यत्राह—

अन्यथेति। यद्युच्छेदानन्तरं पुनः प्रवाहो न स्यात् तदा कृतस्य कर्मणः फलभोगमन्तरेणैव नाशः स्यादिति। ननु भवतु भाविनः प्रवाहस्योच्छेदः पुनः प्रवाहश्च भावी, तथापीतः पूर्वमपि प्रवाहोच्छेदो कथं सिध्यत इत्यत्राह—**तथा चेति**। वर्तमानोऽयं प्रवाहः प्रवाहोच्छेदपूर्वकः प्रवाहत्वाद्भाविप्रवाहवत्। प्रवाहविच्छेदयोः पुनः
5 प्रवृत्तावागमसंवादं दर्शयति—**स्मरति चेति**। महाजनपरिग्रहाद् वेदस्य प्रामाण्यमित्युक्तं, तत्र कोऽयं परिग्रहो नामेत्याह—**कः पुनरिति**। **हेतुदर्शनशून्यैरिति**। दृष्टहेतुदर्शनशून्यैरिति। वेदपरिग्रहे न कश्चिद् दृष्टो हेतुरित्याह—**न ह्यत्रेति**। न च सिद्धपुरुषार्थावगत्युपाय आगमान्तरेऽनधिकारिणः केचिद् गत्यन्तराभावादर्थसंदेहादेवात्र प्रवर्तन्ते। यद्ययं वेदागमः प्रमाणं स्यात् ततः पुरुषार्थसिद्धिः, नो चेत् पूर्वावस्थाया न
10 हानिरिति। न तु प्रामाण्यनिश्चयादिति वाच्यमित्याह—**नापीति**। परैर्बौद्धैः, सम्मतानामप्यत्र प्रवेशो नास्ति किमु तैरपि त्यक्तानामिति। न चागमान्तराणां भक्ष्याभक्ष्यविभागपरत्वात्सिद्धप्रामाण्यान्यपि तानि परित्यज्य स्वैरभक्षणाद्यर्थमत्र प्रवर्तन्त इत्यत्राह—**नापीति**। भक्ष्यस्य पेयस्य वा भक्ष्येण पेयेन च सह द्वैतं नास्ति किं तु सर्वं भक्ष्यं च पेयं चैकत्वमेव तयोरिति कामयमाना इति। नापि कुतर्काभ्यासवन्तस्तैः
15 कुतर्कैरप्रमाणमेवेदं प्रमाणतया निश्चित्य प्रवर्तन्ते तदभ्यासविरहिणामेव कुमाराणां प्रवृत्तेरित्याह—**नापीति**। नापि संभवद्विप्रलम्भैः षडङ्गैः संसर्गेण तैर्विप्रलब्धाः प्रवर्त्तन्ते, पितृपितामहादयोऽत्र प्रवृत्ता इत्यवगम्य प्रवृत्तेरित्याह—**नापीति**। नापि योगमभ्यस्यता मया तूष्णीमास्यत इति व्यपदेशेनाव्यग्रतां निर्व्यापारतां फलत्वेनाभिसंधायात्र प्रवृत्तिरित्याह —**नापीति**। कर्मकाण्डे ह्ययं प्राथमिकः प्रवर्तते न तु ब्रह्मकाण्डे "ऋणानि
20 त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति वचनात् तत्र चास्यानेकधाऽनुष्ठानव्यग्रत्वात्। यद्वा, अन्तिममोक्षाश्रममप्राप्तः प्राथमिकस्तस्य कर्मकाण्डव्यग्रत्वादिति। नापि जीविकाऽत्र प्रवृत्तेर्निमित्तं, 'दृष्टलाभफला नापि' (न्या० कु० १। ८) इत्यनेन निरस्तत्वादित्याह —**नापीति**। नापि कुहकानां वञ्चकानां वञ्चना प्रवृत्तेर्निमित्तं वेदागमे वञ्चनाया असंभवादित्याह—**नापीति**। न ह्यत्रादित्यस्तम्भादीनामुपाया उपदिश्यन्त इति।

25 अत्रासंभवन्तः सर्व एवैते दृष्टहेतवो बौद्धाद्यागमपरिग्रहे संभवन्तीत्याह—**संभवन्ति त्विति**। संभवमेव दर्शयति—**यथा हीति**। बौद्धादयोऽपि विहारकुहरकोटरेषु चक्षुषी निमील्य निर्व्यापारा आसत इत्यलसास्तान् बौद्धाद्यागमान् परिगृह्णन्तीति संबन्धः। इतः वैदिकात् पथः, रागिणः भोज्याद्यद्वैतरागिणः स्वेच्छया परिग्रहः पित्रादीनां नियामकानामभावात्।

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।

आदित्यस्तम्भनादीनामुपायस्य बौद्धाद्यागमेषूपदिष्टत्वात् कुहकवञ्चिताः परिगृह्णन्ति । अतः यत एव दृष्टहेतवः संभवन्तीति ।

तदेवं प्रसङ्गाद्वेदप्रामाण्यहेतोर्महाजनपरिग्रहस्य स्वरूपं दर्शयित्वाऽधिकृतयोरेव 5
सृष्टिप्रलययोः किंचनाशङ्कते **स्यादेतदि**ति । विश्वोत्पत्तिनाशयोर्निमित्तानां कर्मणां प्रलयावस्थायां युगपन्निरुद्धवृत्तित्वेन कस्यचिदपि वस्तुन उत्पत्तेर्विनाशस्य चासंभवात् स्तिमिताकाशसदृशं जगदवतिष्ठते, तदा चागन्तोः कुतो हेतुविशेषात् पुनः सर्गः ? न हि तदा हेतुविशेषः कुतश्चिदस्ति, न हि तमन्तरेणाहेतुकः सर्गः सम्भवतीति । प्रकृतेर्महदादिरूपेण परिणतेः पुनः सर्गोऽस्त्वित्यत्राह—**प्रकृतिपरिणतेरि**ति । मातुल- 10
दुहितेव दाक्षिणात्यानां न तु प्रामाणिकानाम्, प्रकृतितन्नित्यत्वयोरप्रामाणिकत्वात्तत्परिणतिहेतोरागन्तुकस्याभावाच्चेति । **ब्रह्मपरिणतेरि**ति भास्करगोत्र एव युज्यते कुलवधूरिव श्रोत्रियगोत्रे । वासना नाम=आलयसंततिपतितानां ज्ञानक्षणानां पूर्वं पूर्वं विज्ञानं, तस्य परिपाकः सहकारिलाभस्तस्मादिति सौगतमतमनुधावति वेशवनितेव धनवन्तमिति । कालविशेषावच्छिन्नया भगवतः सिसृक्षया सहकृतैर्भोक्तृकर्मभिः परमाणुषु क्रियोत्पत्तौ तेषां 15
परस्परसंयोगाद् द्व्यणुकादिक्रमेण पुनः सर्ग इति नैयायिकानां मतमाशङ्क्याह—**कालविशेषा-दि**ति । कालस्य स्वतो भेदाभावादुपाधिविशेषाद्विशेषो वक्तव्यः, प्रलये च कालावच्छेदकस्योपाधेरभावादिति न संगच्छत इति । नन्वसन्त एव तदानीमुपाधयः सर्वकालमुपलक्षयिष्यन्ति असतामेवोपलक्षणत्वाविरोधादित्यत्राह—**असतां चे**ति । कुत इत्यत आह—**सर्वदे**ति । प्रलयारम्भात् प्रभृतिसर्वोपाधीनामसत्त्वेनाविशेषान्नैवागन्तुकसर्ग- 20
कालस्य विशेषकत्वमिति । ननु मा भूवन्नसन्तो विशेषकाः सर्वदा तुल्यरूपत्वात् तथापि तद्विषयं विज्ञानं कदाचिदुपपद्यते, ततश्चागन्तुकज्ञानावान्तरव्यापारद्वारा तेषामेव विशेषकत्वं भविष्यतीत्याशङ्क्याह—**न च ज्ञानद्वारे**ति । तच्च ज्ञानमस्मदादीनां भवेदीश्वरस्य वा ? नाद्यः-तस्यानित्यत्वेन प्रलये विनाशाच्छरीरेन्द्रियादिकारणाभावेन पुनरनुत्पादाच्च । न द्वितीयः तस्य नित्यसर्वविषयस्य च स्वरूपतो विषयतश्चाविशेषकत्वात् । ततश्च 25
सर्गादावागन्तोः कस्यचिद्धेतोरभावादनुत्पत्तिः सर्वदा उत्पत्तिर्वा सर्वस्य स्यात्, न तु कदाचिदुत्पत्तिरिति चोद्याभिप्रायः । नेति । मा भूवन्नन्ये प्रकृतिपरिणामादयः सर्गस्य निमित्तं, कालविशेषस्तु भविष्यति । अस्ति च तदानीं तस्योपाधिविशेष

ईश्वरनिःश्वसितलक्षणः । कथमशरीरस्य तस्य निश्वसितमित्यत उक्तं–**परमाणूनां कर्मसंतानस्येति** । परमाणवो हीश्वरशरीरं साक्षात्प्रयत्नाधिष्ठेयत्वात्, तेन तदाश्रयं कर्मेश्वरनिःश्वसितं भवति । तथा च श्रुतिः-"अस्य महतो भूतस्य निःश्वसितमेतत्" इति । ननु यदि परमाणुषु कर्म स्यात् तर्हि संयोगस्यावर्जनीयत्वाद् द्व्यणुकादिक्रमेण तदानीमेव
5 विश्वं जगदुत्पद्येत, अत उक्तं–**प्रचयेति** । प्रचयाख्यमेव संयोगं तदा कर्मारभते न तु कार्यारम्भकं, तर्हि किमर्थं कर्मसंतानोऽनुवर्त्तत इत्यत उक्तं–**कालावच्छेदैकप्रयोजनस्ये-** इति । इयन्तं कालं प्रलीनं ब्रह्माण्डमिति प्रलयकालावच्छेद एव प्रयोजन तस्य नान्यत् । सर्वस्मिन्नेव प्रलीने कुतः कर्मण एवोत्पत्तिरित्यत उक्तं–**महाभूतेति** । महाभूतानां पृथिव्यप्तेजोवाय्ववयविनां संप्लवो=विनाशः तदर्थं यः संक्षोभोऽभिघातस्तेन तदारम्भकेषु
10 परमाणुषु कर्मोत्पत्तिद्वारेण वेगाख्यः संस्कार उत्पद्यते, तेन चावयविनाशोत्तरकालमपि मन्दतरतमादिभावेन कर्मसंतानोऽनुवर्त्तते, कार्यान्तराभावेऽपि कालावच्छेदकप्रयोजनमीश्व-रनिश्वसितमनुवर्त्तत इत्यत्र दृष्टान्तः–**शरीरेति** । यथा हि निद्राणानां प्राणिनामेतावा-नस्यायुषो भोग इदानीं परिपक्वः इदानीं त्वेतावानित्यायुःपरिपाकक्रमसंपादनैकप्रयोजनः श्वाससंतानोऽनुवर्त्तते, इतरथा हि तदानीं जीवनकालावच्छेदयोग्यक्रियाभावादियन्तं
15 कालमनेन जीवितमतोऽयमायुर्भागः पक्व इति तत्क्रमो न स्यादिति । यद्यत्र कश्चित्पृच्छेत् कियन्तं कालमसौ प्रलयोऽनुवर्त्तत इति, तत्रैवमुत्तरितव्यमित्याह–**कियानसाविति** । प्रमाणविरोधाभावादागमप्रसिद्ध्यनुसारेण यावन्तं कालं सर्गानुवृत्तिस्तावन्तं कालमिति । यद्वा, यावानागमेषूपदिश्यते तावानिति । सर्वथा ब्राह्मेण मानेन वर्षशतमिति । उपाध्यन्तरमाह–**ब्रह्माण्डान्तरेति** । यदेकस्मिन् ब्रह्माण्डे विनष्टे ब्रह्माण्डान्तरमुत्पद्यते तद्व्यवहारो वा तत्समये
20 भाविनो ब्रह्माण्डान्तरस्यानुवृत्तिकालं यावदन्यस्य प्रलय इत्यर्थः । सन्ति च बहूनि ब्रह्माण्डानी-त्याह–**यथा खल्विति** । श्रुतिरेवात्र प्रमाणमित्यर्थः । परमप्रकृतमुपसंहरति–**तस्मादिति** । उक्तैर्हेतुभिरेव सर्वेषां विच्छेदे परिग्राह्यपरिग्रहीतृपरिग्रहाणामभावान्न तद्द्वारेण प्रामाण्यं शक्याभ्युपगममिति । परिग्रहमङ्गीकृत्याप्याह–**ज्ञापकश्चेति** । महाजनपरिग्रहः खलु प्रामाण्यस्य ज्ञापकः । ननु ज्ञापकानि च कारकोत्पादितानीति केवलं ज्ञापयन्ति, शब्दानां
25 च मूलप्रमाणवत्ता प्रामाण्यकारणं, न हि सा नित्यस्य संभवति, स्वतः प्रामाण्यमित्युक्तं, ततः कारकाभावान्निवर्त्तमानं प्रामाण्यं ज्ञापकाभिमतः परिग्रहः सन्नपि कथं व्यवस्थापयेत् । न हि सहस्रचक्षुषाऽपि नभसि नभस्वति वा रूपं शक्यसंपादमिति ।

ततोऽन्यस्मिन्ननाश्वासादित्येतदवतारयितुं शङ्कते–**स्यादेतदिति** । नित्यनैमित्तिकेन कर्मणा चित्तप्रवृत्तिनिरोधात्मकेन योगेन सिद्धास्तज्जमितधर्मसहकृतेन मनसाऽतीन्द्रियार्थ-

दर्शनसमर्थास्तत एव साक्षात्कृतधर्माधर्माः कपिलहिरण्यगर्भादय एव सन्त्युपदेष्टारस्तेषामेव कारुण्यनिष्ठानां संसारिचेतनानुग्रहार्थमुपदेशसंभवात् । एतावानेव हि तेभ्यो भवदभिमतस्येश्वरस्य विशेषः, यत्कृमिकीटसंख्यादिसर्वविषयं ज्ञानं नाम, तच्चानपेक्षितं धर्माधर्मोपदेशस्येति । तदुत्तरत्वेन संग्रहमुपादत्ते **श्रुत** इति । अनाश्वासमेवोपपादयति—**तथा हीति** । न तावद् दर्शनोपायो भावनेति वक्ष्यामः, यद्यपि स्यात्तथापीति । नन्वहिंसादिषु संवादाभावेऽपि दृष्टार्थेषु प्रमाणान्तरसंवाददर्शनाददृष्टार्थस्यापि तत्साधर्म्यात्समाश्वास इत्याह-**एकदेशेति** । स्वप्ने श्रुतस्याख्यानस्य । यद्वा स्वप्नस्येदमिति । स्वप्नफलप्रतिपादकस्यैकदेशसंवादेऽपि न प्रामाण्यं, तद्वदपि संभवेदिति । एवं भावनामभ्युपगम्योक्तं सापि नास्तीत्याह—**न चेति** । स्मृतिहेतुः संस्कारो वासना, सा कथमननुभूतपूर्वं भवेदिति । किंच, कर्मयोगयोरनुष्ठानेन हि कपिलादयः सिध्यन्ति, तदनुष्ठानं च तयोर्हितसाधनत्वज्ञानात्, तज्ज्ञानोपायश्च तदानीं नास्तीत्याह—**न च कर्मयोगयोरिति** । हितसाधनत्वाभावेऽपि कर्मयोगयोः स्वरूपोपलम्भामात्रेण तदनुष्ठानं भवेदित्यत्राह—**न चैतयोरिति भावनासाध्यो वेति** । न हि स्वरूपोपलम्भो भावनासाध्यो वा भवति प्रत्यक्षत्वात्स्वरूपस्य । यद्वा, कर्मयोगयोर्हितसाधनत्वोपलम्भो भावनासाध्यो वा नोपयुज्यतेऽनाश्वासादिभिः । **न चास्मिन्निति** । कर्मयोगयोरतीन्द्रियार्थप्रदर्शनसाधनत्व इति । किंच, तयोस्तत्साधनत्वमवगम्यानुतिष्ठतः फलसाधनादन्वयव्यतिरेकौ स्यातां, तत्साधनत्वप्रतीतौ कथमनुष्ठानं कथं च फलदर्शनं कथमन्वयव्यतिरेकावित्याह-**अप्रतीतयेति** । तदसंभवात्फलस्यान्वयव्यतिरेकयोर्वाऽसंभवादिति । ननु मा भूतामेकस्मिन् देहे, तथापि योऽहं देहान्तरमधिष्ठाय कर्माकरवं सोऽहं देहमधिष्ठाय तस्य कर्मणः फलमनुभवामीति कर्तृभोक्तृदेहयोरात्मनः प्रतिसंधानादन्वयव्यतिरेकौ स्यातामित्यत्राह—**न चेति** । मा नामार्वाचीनः प्रतिसंधत्तां, विशिष्टाः केचित्प्रतिसंधास्यन्तीत्यत्राह—**केचिदिति** । कुतो वा नाश्वास इत्याह—**विनिगमनायामिति** । अनुभवत्येवेत्यवधारणायामिति । **प्रतिपदिति** । यथा ह्यनध्यायकाले वर्जिताध्ययनानां पुनरध्यायकाले स्मरणम्, उपाध्यायानामन्योन्यसंवादेन पूर्वाधीतस्वाध्यायप्रतिसंधानं निश्चीयते, तथा कपिलादीनामन्योन्यसंवादात् सर्गादौ प्रतिसंधानावधारणेति । **नेति** । कथं हि संस्कारोच्छेदकैर्मरणजननक्लेशैः कालविप्रकर्षेण चान्तरितं जन्मान्तरानुभूतं प्रतिसंधीयत इति । जन्मान्तरानुभूतं प्रतिसंदधद्भिरपि कपिलादिभिः सर्गादिभुवां ब्राह्मणत्वादिवर्णविशेषस्याज्ञानादधिकारिविशेषेण धर्मविशेषेणानुष्ठानं न संभवति । न हि तदानीं ब्राह्मणेन ब्राह्मण्यामुत्पत्तिरस्ति, न च पूर्वजन्मनि ब्राह्मणमातापितृजन्यत्वेन जन्मान्तरे ब्राह्मणत्वं भवति

यतस्तत्प्रतिसंधानेनैतन्निश्चीयेतेत्याह—**तथा चेति**। यद्वा, **तथा चेति** जन्मान्तरीयप्रतिसंधानाभाव इत्यर्थः, "न हि पूर्वजन्मनी" ति तदभ्युपगमेनोक्तमिति। नन्वीश्वरवद्वर्णविशेषं कपिलादयोऽपि ज्ञास्यन्तीत्यत्राह—**ईश्वरवदिति**। स हि तज्जातिविशेषे निमित्तमदृष्टविशेषसहकृतभूतभेदारब्धशरीरत्वं जानाति नित्यसर्वज्ञत्वेनादृष्टविशेषवेदित्वात्तस्य, नैवं कपिलादयः तेषामदृष्टविशेषज्ञानहेतोर्भावनाया निरस्तत्वादिति। तर्हि ब्रह्माण्डान्तरवर्तिनो ब्राह्मणा ब्राह्मणादिवर्णान् तत्र संचार्य तत्तद्वर्णविशेषप्रयुक्तान् धर्मान् व्यवस्थापयन्तीत्यत्राह—**एतेनेति**। एतेन वक्ष्यमाणेन संचरणशक्त्यभावेनेति। **अणिमादीति**। अणिमा, महिमा, लघिमा, गरिमा, प्राप्तिः, प्राकाम्यमीशित्वं, वशित्वमित्येभिरैश्वर्यैः संपन्नाः कपिलादयः। ततस्तेषां किन्नाम दुष्करमिति। नेति। अत्राणिमादिसंपत्ताविति। तत्र संभावना तावदस्तीत्यत्राह **संभावनेति**। **आद्य इति**। अत्र कपिलादीनामैश्वर्येऽतीन्द्रियार्थदर्शित्वे च तदानीन्तनमहाजनपरिग्रहान्यथानुपपत्तिः प्रमाणमिति। **नेति**। विशिष्टैकरूपकल्पनयापि परिग्रहस्योपपत्तौ न भूयसां विशिष्टानां कल्पनायां प्रमाणमस्तीति। नन्वेककल्पनायामपि तस्य विदेहस्यैव निर्मातुं शक्तिरणिमाद्यैश्वर्यसंपत्तिश्च कल्प्येतेति कल्पनागौरवमस्त्येवेत्यत्राह—**विदेहेति**। अनेककल्पनायामपि तदविशिष्टमेवेत्यर्थः। अस्तु तर्हि कपिलादीनामन्यतमः स एकः किमीश्वरेणेत्यत्राह—**अस्त्विति** ॥३॥

विवेकः

तटस्थः शंकते—**गतेति**। यथा प्रहते वर्त्मनि प्रथममेको गतः तदनुगतिकश्च तेन वर्त्मनाऽन्यो लौकिकस्तथा होलाकाद्याचारमपि कल्पयित्वा प्रथममेकोऽनुष्ठितवान्। तद्दर्शनाच्चान्योऽपीत्यर्थः। अप्रामाणिकः, प्रमाणाबोधितकर्त्तव्यताकः। शाखोच्छेदेऽनिष्टमाह—**अनेकेति**। तथा च जैमिनिः सर्वशाखाप्रत्ययमेकं कर्मेति। उपप्लवे प्रमाणमूलकत्वाग्राहकत्वे तत्र च वेदशंकयाऽभ्युपगतप्रमाणभावकविद्यमानवेदस्याननुष्ठानलक्षणमप्रामाण्यम्। वृश्चिकभीराशीविषमुखनिपातश्च। वेदमात्रस्यैव अप्रमाणमूलत्वापातः। प्रतिविहितं स्मृतिप्रणीता। मनुशाखोच्छेदोपगमे तस्याः शाखाया महाजनैरप्रमाणत्वेन निश्चयादेव नाध्ययनमिति स्यात्, तथा च तन्मूलकाचारोऽपि तथा स्यादिति नोच्छेद इत्याह—**नचेति**।

ज्ञानक्रमेणाप्रमाणत्वनिश्चयेन अत एव श्लाघ्यः वृथाकर्मणां दुःखैकफलत्वादिति भावः। भाविनं प्रलयं सर्गं तदनन्तरं च प्रलयमुपसंहरति। **अतश्चेति**। उच्छेदानन्तरं पुनः प्रवाहः सर्गः तत्प्रलयानन्तरं किमर्थं सर्ग इत्याकांक्षायामाह—**अन्यथेति**। कृतानां कर्मणां

धर्माधर्मरूपाणां तादृशकालप्रतिबद्धानां हानप्रसंगात् फलाजनकत्वात्। तथा च तच्छंकया अननुष्ठानमापतेदिति भावः। अतीतं प्रलयं भविसर्गं दृष्टान्तेन साधयति। **तथाचेति**। अयं विद्यमानः सर्गः उन्नीयते सर्गत्वरूपहेतुना। अत्रोपष्टम्भकमाह **स्मरति चेति**। धर्मस्य ग्लानिः प्रलयात्मककालविशेषप्रतिबन्धेन फलाजननम्। अधर्मस्य प्रलयजनकपापस्याभ्युत्थानं प्रलयचरमक्षणोपधानमात्मानं सृजामि सर्गानुकूलं शरीरं परिगृह्णामि। तत्किमर्थमित्याकांक्षायामाह—परित्राणायेत्यादि। दुष्कृतामसाधूनां ततः किमित्यत्राह—धर्मेति। वेदसामान्यग्राहकत्वेनोक्तम्। महाजनपरिग्रहं पृच्छति—**कः पुनरिति**। अयं वेदः प्रामाण्यग्राहकत्वेनाभिमतः हेतवो बौद्धागमोपग्रहे वक्ष्यमाणाः ग्रहणधारणे वेदानामनुष्ठानं तदर्थस्य। आदिपदात्तन्निषिद्धाननुष्ठानपरिग्रहः। **निमित्तमिति**। सर्वत्राग्रेऽनुषञ्जनीयम्। परैः पाषण्डैः। योगेति। योगाभ्यास एव कर्तव्यो न तु तपश्चर्यादिः। तत्र देहचेतसोर्वैयग्र्यादित्यभिमान इत्यर्थः। प्राथमिकस्य ब्रह्मचारिणोः व्यग्रत्वात्। वेदग्रहणधारणादिषु प्रागुक्तेन विफला विश्ववृत्तिर्नेत्यादिना इतः आस्तिकमार्गात्। **उभयोरिति**। अत्यन्तमलिनः कायो देही चात्यन्तनिर्मल इति पूर्वार्द्धमस्य। ते बौद्धागमाः किंचिद्भावरूपं तेन न किंचिद्विनश्यतीति अस्य न वैयर्थ्यं पूर्वमभावोत्पतेरनाक्षेपादिति ध्येयम्। स्तिमितं निःशब्दं शोभत इति सोपहासं कुतो विशेषात्। तदैव तादृशस्तत्परिणाम इत्याक्षेपस्यानुवृत्तेरिति भावः। एवमग्रेऽपि। वासनापरिपाकः स्मृतिस्तत एव घटादिव्यवहारस्तु बाह्यवस्तुनि पारमार्थिक इत्यर्थः। ननु तदानीं कालोपाधेरसंभवेऽतीता एव ते विशेषाः स्युरित्यत्राह—**असतामिति**। उपलक्षणानामुपाधीनाम् ज्ञानद्वारेति। तद्विषयकं ज्ञानमेव तत्तद्विषयकमित्यर्थः। तस्य ज्ञानस्य। सिद्धान्तयति नेति। **सुषुप्तिवदिति**। दृष्टान्तानुसारेणाह—**शरीरेति**। महाभूतं समुद्रपर्वतादिस्तत्संक्षोभस्तन्नोदनाधीनं कर्म तेन लब्धः जनितः संस्कारो वेगः। वीजमुक्त्वा प्रयोजनमाह—**कालेति**। प्रचयाख्यसंयोगपर्यन्तस्य द्व्यणुकारम्भकसंयोगसीमकस्यानुवृत्तेरित्यत्राविशेषात्। पुनः सर्ग इत्यग्रेतनमनुषज्जते। असौ प्रलयात्मकः कालः। आगमेति। ब्रह्मवर्षशतात्मकः तथा परिस्पन्दस्यैव तदुपाधित्वमाह—**ब्रह्माण्डान्तरेति**। व्यवहार इति। करणव्युत्पत्त्या परिस्पन्दपरः। नानाब्रह्माण्डे मानमाह यथेति। ज्ञापकः प्रामाण्यस्यायमर्थो महाजनपरिग्रहरूपः तत्कारकं यथार्थवाक्यार्थज्ञानम्।

तदन्यस्मिन्नाश्वासादिति कारिकांशं व्याकर्तुमाह—**सन्त्विति** वेदकर्तृत्वापादकवाक्यार्थज्ञानवत्तामाह-साक्षादिति। धर्मा हिताहितसाधनानि, अदृष्टमात्रपरस्तदिति केचित्। तद्गोचरसाक्षात्कारे हेतुमाह—योगेति। योगेन सिद्धाःयोगजप्रत्यासत्तिमन्तः स चादृष्ट-

विशेषः संस्कारविशेषोवेत्यग्रे वक्ष्यते। संसाराङ्गारेषु संसारात्मकज्वलदङ्गारेषु पच्यमानात् नरकभागिनः। उपदेशप्रयोजकमाह—**परमेति**। प्रियं प्रीतिजनकम्, स्वर्गादिजनकमग्निष्टोमादि हितमनिष्टनिवर्त्तकं प्रायश्चित्तादि, तदुपदेशेन प्रियमापातरमणीयं, हितं परिणतिशुद्धमिति केचित्। अनुग्रहः उपकारः। कृतं व्यर्थं परमेश्वरेण 5 त्वदुपगमसिद्धेन। भावना संस्कारविशेषः चित्ताभिनिवेशो वा। अभ्युपगमेऽपीत्यनेन तेषामतीन्द्रियदर्शित्वे मानाभावं सूचयति। भगवत्साधकमानादेव तत्सिद्ध्युपगमे तु लाघवात्। प्रतिसर्गमेकमेव तथाविधः कल्प्यते। स एव भगवान्नीश्वर इति भावः। असौ भावना। सत्यमेवेति। कामातुरकामिनीसाक्षात्कारस्यासत्यस्यापि दर्शनादिति भावः। प्रमाणान्तरेण प्रत्यक्षादिना संवादात् समाश्वासः। अतीन्द्रियार्थे तदसंभवमाह 10 —**अहिंसादीति**। हितं प्रत्यवायानुत्पादः। साधनञ्च क्षेमसाधरणं तदनुपगमे तु अतद्गुणसंविज्ञानबहुव्रीहिणा यागादिपरन्तत्। तदभावात् प्रमाणान्तरसंवादाभावात्। आगमः समानविषयकवेदान्तरं शाखाभेदेन तेषां नानात्वात् अस्ति। समाश्वासबीजं शंकते। **एकदेशेति**। तथा च सूत्रं मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमिति। स्वाप्नेति। तस्यापि अंशे प्रामाण्येऽपि यथाऽप्रामाण्यं तथात्रापि स्यादिति संभवेदित्यर्थः। ननु महाजन- 15 परिग्रह एव प्रामाण्यग्राहकः स्यादित्यरुचेराह—न चेति। न वेत्यर्थः। विभाव्यन्ते भावनया साक्षात्क्रियन्ते। कर्मयोगादियोगश्चित्तवृत्तिनिरोधः। तथा चानाश्वासात्। कपिलादीनां योग एव प्रवृत्तिर्न स्यात्-कुतस्तदधीनसाक्षात्कारानुकूलो व्यापार इति भावः। एतयोः कर्मयोगयोः स्वरूपेण यागत्वादि नोपयुज्यते। वाक्यार्थज्ञानतयोपदेशाय प्रभवति। भावनेति। यागत्वादेः प्रत्यक्षत एवोपलम्भसंभावादिति भावः। अस्मिन् यागादिहित- 20 साधनत्वेऽन्वयव्यतिरेकौ ग्राहकौ। कार्यादावपि तदसंभवमाह—**अप्रतीतयेति**। कर्तृभोक्तारौ यागादिजनककृतितज्जन्यभोगावच्छेदकौ देहौ तयोः प्रतिसन्धानेनैकार्थीयत्व-प्रत्यभिज्ञानेन तदन्वय-व्यतिरेकज्ञानम्। तदभावात् तादृशप्रतिसन्धानस्यासंभवात्। केचित् कपिलादयः तथा तादृशप्रतिसन्धानवन्तः। विनिगमनायामिति। कपिलमन्वादीनां बहूनामेव योगसिद्धानां श्रवणात् कस्य तादृशप्रतिसन्धातृत्वं कल्पनीयमित्यत्र विनिगम- 25 काभावादित्यर्थः। कपिलादीनामिव आत्मतत्त्वाविशेषादस्मदादीनामपि तादृशप्रतिसन्धातृत्वं प्रसंगादित्यर्थः इति केचित्। नन्वस्तु विनिगमनाविरहात् सर्वेषां कपिलादीनां तादृशप्रतिसन्धातृत्वं तेषाञ्च परस्परं संवादात् तज्ज्ञानेनाप्रामाण्यसन्देह इत्यत्राह—**प्रतिपदिति**। निद्राणतोपपत्तये निशीथान्तरेऽध्ययनव्यासंगेन निद्राणतायाः सर्वेषामसंभवादिति। उपाध्यायवदिति षष्ठी समर्थाद्वतिः जातिस्मरणादौ जन्मान्तरप्रतिसन्धानदर्शनाद्दो-

पान्तरमाह—तथापीति। वेदाध्ययनतदर्थानुष्ठाने योऽधिकारी तद्विशेषणं यद्ब्राह्मणत्वादि तदितरत्वेनास्यानिश्चये कपिलादीनां तत्तदनुष्ठानं न स्यात्तथा च तदधीनानामन्यानुष्ठानानामप्यसंभवात्। पूर्वहेतुदर्शनशून्यानुष्ठानरूपमहाजन-परिग्रहेण समाश्वास इत्याखण्डलार्थः। आश्वासस्य वेदप्रामाण्यग्राहकस्य। ननु कर्तृत्वभोक्तृत्वानुसन्धानवत् पूर्वजन्मशरीरवृत्तिब्राह्मणत्वादेर्जन्मान्तरेऽपि शरीरान्तरे निश्चयः स्यादित्यत्राह—न हीति। उत्तरत्र जन्मा- 5 न्तरीणशरीरे। ईश्वरवत् ईश्वरेणेवानुपलम्भात्। कपिलादीनामतीन्द्रियार्थदर्शित्वे कपिलादीनामनाश्वासस्य प्रमाणाभावस्य। न विधान्तर इति कारिकांशं व्याकर्तुमेतेनेति। वर्षान्तरं भारतादिलोकान्तरं भुवनान्तरमत्रापि कपिलादेराणिमादिसम्पत्तावप्यनुपपत्तिं तत्र प्रमाणयति—आद्येति। तत्र तेषामणिमादिसम्पत्तौ। विदेहेति। देहं विनैव कर्तृत्वस्येत्यर्थः। विविधदेहनिर्माणशक्तेरित्यर्थः इति तु प्रकाशः। भूयः कल्पनायां भूयसां 10 तादृशानां कल्पनायां न। हीति। स एवास्माकमीश्वर इति भावः ॥३॥

**कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्**
**हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ॥**
**तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं**
**विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥४॥** 15

॥ श्रीन्यायकुसुमाञ्जलौ द्वितीयस्तबकः ॥

### आमोदः

अन्तेष्वपि तमेव देवं प्रति नमन् भूयासम् भविष्यामीति योजना। यो जगत् कार्यजातं कारं कारं कृत्वा कृत्वा संहरन्, हारं हारं हृत्वा हृत्वा सृजन्, क्रीडतीव देवं स्तुत्यं, निरवग्रहो अप्रतिबद्धः, स्फुरन्नाविर्भवन्, अभिध्यानस्य इच्छाया अनुभावो यस्येत्यर्थः ॥४॥

॥ इति द्वितीयस्तबकः ॥

### बोधनी

यद्येक एवाङ्गीक्रियते स तर्हीश्वर एव स्यात् तमन्तरेणान्यत्र कपिलादावनाश्वास- 20 स्योक्तत्वादिति परिच्छेदार्थं संकलय्य दर्शयन् सर्वास्वपि जातिष्वात्मनः परमेश्वरं प्रति प्रणतिं प्रार्थयते—कारं कारमिति। संसारिचेतनवर्गसमवेतमदृष्टं माया, तद्वशाद-

लौकिकमन्यत्रादृष्टचरमद्भुतमयं विचित्रं च जगत्कृत्वा कृत्वा पुनः संहृत्य पुनरपि कुर्वन् ऐन्द्रजालिक इवेन्द्रजालं यः क्रीडति तं देवं, **निरवग्रहस्फुरदभिध्यानानुभावं** निरवग्रहम् = अप्रतिघातं, स्फुरत् प्रकाशमानम्। अभिध्यानं सर्वानपि विषयानदृष्ट-परमाण्वादीनभिध्याय व्यवस्थितं ध्यानं ज्ञानं, तदेव तस्यानुभावो=महिमा यस्य तथोक्तः। 5 यद्वा, अनुभावः = क्रियाशक्तिः, अप्रतिहते सर्वविषये ज्ञानशक्तिक्रियाशक्ती यस्य स तथा। नित्यज्ञानत्वेन विश्वासभुवां कपिलादीनां निरस्तत्वात् तस्यैकभुवं शिवं प्रति नमन्, भूयासमन्त्येष्वपि जननेषु नीचास्वपि जातिषु वर्तमानं शिवं प्रति नमन् भूयास-मिति यावत्। यदि शिवं प्रति नमन् भवे, अन्त्येष्वपि भूयासम्, अन्यथा तूत्तमेष्वपि न भूयासमित्यर्थः ॥४॥

इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ न्यायकुसुमाञ्जलिटीकायां द्वितीयः परिच्छेदः ॥

विवेकः

10 स्तवकार्थमुपसंहरन्नग्रिमग्रन्थविघ्नापनुत्तये मङ्गलं कृतमुपनिबध्नाति—**कारं कार-मिति**। तं शिवं प्रति नमन् भूयासम् कीदृशं तं? देवं स्तुत्यम् स्तुतिप्रयोजकरूपमाह— निरवग्रहेति। निष्प्रतिबन्धं स्फुरदिच्छाप्रभावमव्याहतेच्छमिति यावत। विश्वासैकभुवं भ्रमप्रमादादिदोषरहितं भवं जगन्मूलकारणं यः यज्जगत्कार्यजतं कारं कारं कृत्वा कृत्वा संहरन् हारं हारं हृत्वा हृत्वा कुर्वन् क्रीडति क्रीडतीव। कथङ्कारमित्यत्राह अलौकिकाद्भुत-15 मयमिति क्रियाविशेषणम्। मायावशात् सृष्टिसंहारहेत्वदृष्टसहकारेण एतावता सर्गप्रलय-संभवे नानादिता संसारप्रवाहस्य निरस्ता इति ॥४॥

समाप्तश्चायं द्वितीयस्तवकविवेकः।

नन्वेतदपि कथं? तत्र बाधकसम्भवात्। तथा हि—यदि स्यादुपलभ्येत। अयोग्यत्वात् सन्नपि नोपलभ्यते इति चेदेवं तर्हि शशशृङ्गमप्ययोग्यत्वान्नोपलभ्यते इति स्यात्। नैतदेवम्। शृङ्गस्य योग्यतयैव व्याप्तत्वादिति चेत्। चेतनस्यापि योग्योपाधिमत्तयैव व्याप्तत्वात् तद्बाधे सोऽपि बाधित एवेति तुल्यम्। व्यापकस्वार्थाद्यनुपलम्भेनाप्यनुमीयते नास्तीति। को हि प्रयोजनमन्तरेण किञ्चित् कुर्यादिति। 5
उच्यते—

**योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्॥**
**क्वायोग्यं बाध्यते शृङ्गं क्वानुमानमनाश्रयम्॥ १॥**

स्वात्मैव तावद् योग्यानुपलब्ध्या प्रतिषेद्धुं न शक्यते, कुतस्त्वयोग्यः परमात्मा। तथाहि—सुषुप्त्यवस्थायामात्मानमनुपलभमानो नास्तीत्यवधारयेत्। कस्यापराधेन पुनर्योग्योऽप्यात्मा तदानीं नोपलभ्यते? सामग्रीवैगुण्यात्। ज्ञानादिक्षणिकविशेषगुणोपधानो ह्यात्मा गृह्यते इत्यस्य स्वभावः। ज्ञानमेव कुतो न जायते इति चिन्त्यते। पश्चाद्वा कथमुत्पत्स्यते इति चेत्, मनसोऽनिन्द्रियप्रत्यासन्नतयाऽजननात्तत्प्रत्यासत्तौ च पश्चाज्जननात्। 10

मनोवैभववादिनामिदमसम्मतम्। तथाहि—मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात्, सर्वदा विशेषगुणशून्यद्रव्यत्वात्, नित्यत्वे सत्यनारम्भकद्रव्यत्वात्, ज्ञानासमवायिकारणसंयोगाधारत्वादित्यादेरिति चेन्न। सर्वेषामापाततः स्वरूपासिद्धत्वात्। तथाहि—यदि रूपाद्युपलब्धीनां क्रियात्वेन करणतया मनोऽनुमितिर्न तदा द्रव्यत्वसिद्धिः। अद्रव्यस्यापि करणत्वात्। 15

अथासामेव साक्षात्कारितयेन्द्रियत्वेन तदनुमातव्यम्, 20

तथापि व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। तत्र यदि कर्णशष्कुलीवन्नियतशरीरावयवस्योपाधित्वं, तदा तावन्मात्रे वृत्तिलाभः। तद्दोषे च वृत्तिनिरोधः श्रोत्रवत् प्रसज्ज्येत। ततः शरीरमात्रमुपाधिरवसेयः। तथा च तदवच्छेदेन वृत्तिलाभे शिरसि मे वेदना, पादे मे सुखमित्याद्यव्याप्यवृत्तित्वप्रतीतिविरोधः। असमवायिकारणानुरोधेन विभुकार्याणां प्रादेशिकत्वनियमात्। शरीरतदवयवादिपरमाणुपर्यन्तोपाधिकल्पनायां कल्पनागौरवप्रसङ्गो नियमानुपपत्तिश्चेति ततोऽन्यदेवैकं सूक्ष्ममुपाधित्वेनातीन्द्रियं कल्पनीयम्। तथा च तस्यैवेन्द्रियत्वे स्वाभाविकेऽधिककल्पनायां प्रमाणाभावाद्धर्मिग्राहकप्रमाणबाधः। अथ ज्ञानक्रमेणेन्द्रियसहकारितया तदनुमानं, ततः सुतरां प्रागुक्तदोषः। यदि च मनसो वैभवेऽप्यदृष्टवशात् क्रम उपपाद्येत, तदा मनसोऽसिद्धेराश्रयासिद्धिरेव वैभवहेतूनामिति। 25 30

अथ यत्रादृष्टस्य दृष्टकारणोपहारेणोपयोगः, तत्र तत्पूर्णतायां कार्यमुत्पद्यत एव। अन्यथा अन्त्यतन्तुसंयोगेभ्योऽपि कदाचित् पटो न जायेत, जातोऽपि वा कदाचिन्निर्गुणः स्यात्ः बलवता कुलालेन दृढदण्डनुन्नमपि चक्रं न भ्राम्येत। यत्र तु दृष्टानुपहारेणादृष्टव्यापारस्तत्र तद्वैगुण्यात् कार्यानुदयः। यथा परमाणुकर्मणः। 5 तदिहापि यदि विषयेन्द्रियात्मनां समवधानमेव ज्ञानहेतुः, तदा तत्सद्भावे सदैव कार्यं स्यात्, न ह्येतदतिरिक्तमप्यदृष्टस्योपहरणीयमस्ति, न च सदैव ज्ञानोदयः, ततोऽतिरिक्तमपेक्षितव्यम्। तच्च यद्यपि सर्वाण्येवेन्द्रियाणि व्याप्नोति, तथापि करणधर्मत्वेन क्रियाक्रमः सङ्गच्छते। अकल्पिते तु तस्मिन्नायं न्यायः। प्रतिपत्तुरकरणत्वाच्चक्षुरादीनामनेकत्वादिति चेत्।

10 नन्वेवमपि युगपज्ज्ञानानि मा भूवन्, युगपज्ज्ञानं तु केन वार्यते। भवत्येव समूहालम्बनमेकं ज्ञानमिति चेन्न। एकेन्द्रियग्राह्येष्विव नानेन्द्रियग्राह्येष्वपि प्रसङ्गात्। तेष्वपि भवत्येवेति चेन्न। व्यासङ्गकाले ज्ञानक्रमेण विवादविषये क्रमानुमानात्। बुभुत्साविशेषेण व्यासङ्गे क्रियाक्रम इति चेन्मैवम्। न ह्येष बुभुत्साया महिमा यदबुभुत्सिते विषये ज्ञानसामग्र्यां सत्यामपि न ज्ञानमपि तु न तत्र संस्कारातिशया- 15 धायकः प्रत्ययः स्यात्। यदि त्वबुभुत्सिते विषये सामग्रीमेव सा निरुन्ध्यात्, घटायोन्मीलितं चक्षुः पटं नैव दर्शयेत् तस्माद् बुभुत्सापीन्द्रियान्तरादाकृष्य बुभुत्सितार्थग्राहिणीन्द्रिये मनो निवेशयन्ती युगपज्ज्ञानानुत्पत्तावुपयुज्यते, न तु स्वरूपतः। विभुनोऽपि मनसो व्यापारक्रमात् क्रम इति चेन्न। तस्य संयोगातिरिक्तस्य कर्मरूपत्वे वैभवविरोधात्। गुणरूपत्वे नित्यस्य क्रमानुपपत्तेः। अनित्यस्य च नित्यैकगुण- 20 स्याविभुद्रव्यसंयोगासमवायिकारणकत्वेन तदन्तरेणानुपपत्तेः। तदपि कल्पयिष्यते, इति चेत्, तदेव तर्हि मनःस्थाने निवेश्यतां लाघवाय। तस्मादण्वेव मन इति॥

तथा च, तस्मिन्ननिन्द्रियप्रत्यासन्ने निरुपधानत्वादात्मनः सुषुप्त्यवस्थायामनुपलम्भः। एतदेव मनसः शीलमिति कुतो निर्णीतमिति चेत्, अन्वयव्यतिरेकाभ्याम्। न केवलं तस्य, किन्तु सर्वेषामेवेन्द्रियाणाम्। न हि विशेषगुणमनपेक्ष्य 25 चक्षुराद्यपि द्रव्ये प्रवर्त्तते। स्वापावस्थायां कथं ज्ञानमिति चेत् तत्तत्संस्कारोद्बोधे विषयस्मरणेन स्वप्नविभ्रमणामुत्पत्तेः। उद्बोध एव कथमिति चेत्? मन्दतरतमादिन्यायेन बाह्यानामेव शब्दादीनामुपलम्भाद्, अन्ततः शरीरस्यैवोष्मादेः प्रतिपत्तेः, यदा च मनस्त्वचमपि परिहृत्य पुरीतति वर्त्तते, तदा सुषुप्तिः।

आमोदः

॥ अथ तृतीयस्तबकः ॥

**तदभावावेदकेत्यादितृतीयां विप्रतिपत्तिं दूषयितुमुपन्यस्यति—**

**30 नन्विति। एतदपीति। अन्यथासिद्धिनिराकरणमपीत्यर्थः। प्रकृते बलवद्बाधकसत्त्वात्साधकमप्यप्रयोजकमपीति भावः। अत्र योग्यानुपलम्भसहायं**

प्रत्यक्षमेव बाधकं शङ्कते—**यदीति**। यदि क्षित्यादि सकर्त्तकं स्यात्त-द्वत्तयोपलभ्येतेत्यर्थः। तथा च योग्यानुपलब्ध्या यदि ईश्वरात्यन्ताभावा-न्योन्याभावौ साध्येते, तदा सिद्धसाधनं। प्रागभावप्रध्वंससाधने तु परस्या-पसिद्धान्त इति निरस्तम्। अयोग्ये योग्यानुपलब्धिर्न बाधिकेत्यशङ्कते—**अयोग्यत्वादिति**। तर्हि पशुत्वाच्छशे शृङ्गमपि सिध्येदित्याह—**तर्हीति**। 5 शृङ्गं योग्यानुपलब्ध्या बाधितुं शक्यते तस्य योग्यतयैव व्याप्तत्वात्, नत्वीश्वर इत्याह **नैतदिति**। शरीरविशिष्ट एव कर्त्ता स च योग्य एवेति। तत्रापि योग्यानुपलब्धिर्बाधिकेत्याह—**चेतनस्यापीति**। तद्वाध इति। विशेषणस्य बाधे विशिष्टमपि बाधितमिति तथा च प्रत्यक्षत एव बाधः सिद्ध इत्यर्थः। यद्वा शरीररूपबाधानुपलब्धिबाधपरोऽयं 10 ग्रन्थोऽग्रे व्यापकान्तरानुपलब्धिबाधपरः अत एव व्यापकस्वार्थादित्यग्रे व्यापकं विशिनष्टि—**स्वार्थादि(ति)**। स्वप्रयोजनादिव्यापकश्चासौ स्वार्थादिश्च कर्म्मधारयः। स्वेष्टसाधनताया व्यापकत्वमेव दर्शयति—**को हीति**।

योग्याऽदृष्टिः=योग्यानुपलब्धिः। अयोग्ये परमात्मनि योग्यविशेषगुणोप-धानाभावात्परमात्मा अयोग्यः। तत्र योग्यानुपलब्धिर्नाभावग्राहिकेत्यर्थः। 15 शृङ्गं यदि योग्यसंस्थाननियतं न भवति, तदा तदप्ययोग्यं न बाध्यते, अथ तन्मात्रनियतं तदा बाध्यत एवेत्याह—**प्रतिबन्धिरिति**। एतदेवाह—**क्वायोग्यमिति**। ईश्वरो न कर्त्ता, अशरीरित्वादित्यादिव्यापकानुपलब्धि-लिङ्गकमनुमानं वाच्यं, तच्च सिद्ध्यसिद्धिपराहतमित्याह—**क्वानुमानम-नाश्रयमिति**। ननु योग्यविशेषगुणो यदि स्यान्मनोग्रहे चरमलिङ्गपरा- 20 मर्शोपहितं स्यात्तथा च नानुमितिः क्वापि भवेदिति चेन्न। तृतीयलिङ्ग-परामर्शस्यानुद्भूतत्वेनायोग्यत्वादाद्यन्तशब्दवत्। यद्वात्ममनःसंयोगविशेष-स्यात्मग्राहकत्वात्तदानीमभावान्नात्मग्रहः स च फलबलकल्पनीय एव। योग्यविशेषगुणोपधानमात्मग्रहे नियामकमिति व्यवस्थापयितुमाह—**स्वात्मैवेति**। अन्यथा सुषुप्त्यवस्थायामनुभवत्वमात्र व्यतिरिक्तो गृह्येतेत्यत 25 आह—**सुषुप्तीति**। एतदेव स्पष्टयितुं पृच्छति—**कस्येति**। क्षणिकगुणो-पधानः=क्षणिकगुणविशिष्टः। क्षणिकेति च परममहत्त्वव्यावृत्तये। ननु यत एव ज्ञानाग्रहस्तत एव नात्मग्रह इत्याह—**ज्ञानमेवेति**। द्रव्यसाक्षात्कारे सामान्य-योग्यतायां विशेषगुणोपधानस्य तन्त्रत्वेन क्लृप्तत्वात्। अत्रापि तथैव कल्प-

यितुमुचितम्। अतस्तदनुत्पादमेव समर्थयति––**मनस इति**। इन्द्रियाप्रत्यासन्नत्वमित्यर्थः। आद्यक्षणे घटादेरपि स्पर्शरहितत्वाद्व्यभिचारः स्यादत उक्तम्––**सर्वदेति**। गुणादौ व्यभिचारादाह––**द्रव्यत्वादिति**। एवमग्रेऽपि। अनारम्भकत्वं=द्रव्यानारम्भकत्वम्। अन्त्यावयविनि व्यभिचारवारणाय––
5 **नित्यत्वे सतीति**। हेतुत्रये कालादिश्चतुर्थे त्वात्मा दृष्टान्तः। सुखादिकं, मूर्त्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमत्, अनित्यत्वे सति नित्यवृत्तिविशेषगुणत्वात्, शब्दवदिति प्रतिरोधादिति चेन्न। मूर्त्तत्वस्याप्रयोजकत्वात्, व्यापकभावेऽपि विशेषगुणानर्थस्योक्तत्वात्। यद्वा सुखाद्युपलब्धिः, सकरणिका; क्रियात्वाच्छिदिक्रियावदित्यनुमानं न द्रव्यत्वपर्यव-
10 सन्नमित्यर्थः। सुखाद्युत्पत्तिनियतदेशत्वे न स्यादित्यर्थ इत्येके। अणुनैव मनसा ज्ञानक्रम उपपद्यत इति धर्मिग्राहकमानबाध इत्येके। **आपातत इति**। मनो द्रव्यत्वसिद्धिपर्यन्तमित्यर्थः। क्रमेणानुधर्मिग्राहकमानबाधोऽनुमानानामिति भावः। स्वरूपासिद्धिन्तावत्स्पष्टयति––**तथा हीति**। सुखसाक्षात्कार, इन्द्रियकरणकः, साक्षात्कारत्वात्, रूपसाक्षात्कारवदित्युमानेन
15 करणमिन्द्रियं सिध्यति। इन्द्रियत्वं च स्मृत्यजनकवृत्तिज्ञानकारणमनःसंयोगाश्रयत्वमितिसिद्धं मनोद्रव्यत्वमिति न हेतवः स्वरूपासिद्धा इत्यर्थः। **अद्रव्यस्यापीति**। अनुमितौ ज्ञानस्यापि कारणत्वादिति भावः। द्रव्यत्वपर्यवसानं शङ्कते––**अथेति**। आसां=सुखाद्युपलब्धीनाम्। **इद्रियत्वेनेति**। मनःसंयोगाश्रयत्वघटितत्वादिन्द्रियत्वस्येति भावः। परिहरति––**तथा-
20 पीत्यादिना धर्मिग्राहकप्रमाणबाध इत्यन्तेन**। ननु शरीरमात्रस्योपाधित्वे को दोष इत्यत आह––**तथा चेति**। शरीरावच्छेदेनैव सुखोत्पत्तिरिति किमियं राजाज्ञेत्यत आह––**असमवायीति**। विभुकार्य्याणां=विभुविशेषगुणानामित्यर्थः। तेन परमाणुवृत्त्येकत्वासमवायिकारणकाणुवृत्तित्वादिना न व्यभिचारः। विभुकार्यविशेषगुणस्य स्वासयवायिकारणत्वान्मनोदेशत्वं
25 च साध्यं तेन मनोवैभववादिनां शरीरवच्छेदेनैव सुखादि न पादादिमात्रावच्छेदेनेति भावः। ननु कश्चिदेवावयव उपाधिः स्यादिति न ततो गौरवमत आह––**नियमेति**। पाणिः पादो वेति नियमो न स्यादित्यर्थः। **धर्मिग्राहकेति**। यद्यपि इन्द्रियत्वेन मनःसिद्धिर्नवैभवव्यतिरेकपर्यवसन्ना, तथाप्युक्ततर्कसाचिव्येनाप्युक्तसिद्धिपर्यवसन्नैवेति धर्मिग्राहकमानबाध

इत्यर्थः । ज्ञानानां क्रमः क्रमिकसहकारिसापेक्षः । तच्च सहकारि मन एव स्यादित्याशङ्क्य निराकरोति--अथेति । प्रगुक्तदोषः स्वरूपासिद्धिलक्षणः । न हि तादृशं सहकारि द्रव्यमेव भविष्यतीति नियम इति भावः । अणुनैव मनसा ज्ञानक्रम उपपद्यते इति धर्मिग्राहकमानबाध इत्येके । अदृष्टाधीनश्चेत् ज्ञानक्रमस्तदा मनःस्थानेऽदृष्टमेवाभिषिच्यतां किं मन- 5 सेत्याश्रयासिद्धा एव हेतव इत्याह--यदि चेति । ननू नाश्रयासिद्धिर्यतो दृष्टं किञ्चिदुपहत्यैवादृष्टस्यापि जनकत्वमिह वाच्यं, तच्च दृश्यं मन एवेत्याशंक्याह--अथ चेदित्यन्तेन । करणधर्मत्वेन एककरणमेकत्रैका- वच्छेदेनैकदैकजातीयानेकामेवक्रियां जनयति न त्वनेकाम् । एकत्रेत्यनेन कुठारकृतयुगपन्ना[ना] तृणच्छेदक्रियाव्यभिचारवारणम् । एकजातीया- 10 मित्यग्निसंयोगाद्युगपद्रूपरसादिषु एकावच्छेदेनेत्येकेन शब्देन युगपदनेक- शब्दोत्पत्तावेकदेत्यनेनायुगपन्नानाज्ञानोत्पत्तौ नचैकामेकावच्छेदेनेत्येनैक- त्रेतिगतार्थे परमाण्वच्छेदेनैव परमाणुकर्मणाजनितेषु व्यभिचारवारणे तदुपयोगात् । नायं न्यायो न करणधर्मन्यायः । प्रतिपत्तुरेवायं धर्मः किन्न स्यादत आह--प्रतिपत्तुरिति । एकस्य कर्त्तुरेतादृश नानाक्रियाजनकत्व- 15 स्यादृष्टत्वादित्यर्थः । एवं सत्येकमेव ज्ञानं नानाविषयकं स्यादेतावतापि करणधर्म्मत्वानपायादित्याह--नन्वेवमिति । उत्क्रमबुद्ध्वा शंकते-- भवत्येवेति । उक्तं स्पष्टयति--एकेति । दीर्घशष्कुलीभक्षणे रूपादीना- मेकदा ज्ञानमभिप्रेत्याह--तेष्वपीति । तदसिद्धिमाह--व्यासङ्गेति । व्यास- ङ्गानुपपत्तिरेव मनोऽणुत्वे प्रमाणमित्यर्थः । विषयसम्बन्धस्य बहिरिन्द्रियस्य 20 मनःसम्बन्धविच्छेदो हि व्यासङ्गः । यतो भवति तूत्पद्यासमयत्वज्ञापितं न एतमिति । क्रमानुमानात् । ननु न संबन्धविच्छेदो व्यासङ्गपदार्थः, किन्तु प्रतिबन्धः । तथा चान्यसामाग्र्यां सत्यामपि वुभुत्साप्रतिबन्धेन नान्यत्र ज्ञानं जायते इति व्यासङ्गच्छलेन क्रमासिद्धिरित्याह--वुभुत्सेति । बुभुत्साया नैतादृशसामर्थ्यमित्याह--न ह्येष इति । तर्हि वुभुत्सायाः 25 क्व उपयोग इत्याह--अपि त्विति । वुभुत्साज्ञानोत्पत्तिमेव कथं न नियमयतीत्यत आह--यदीति । संस्कारातिशयाधानबुभुत्साप्रयोजने सत्येवं ज्ञानोत्पत्तावप्युपयोगमाह--तस्मादिति । न तु स्वरूपत इति । मनोनिवेशनं द्वारीकृत्येत्यर्थः । व्यापारं विकल्पयति--तस्येति । व्यापारः

कर्म वा। गुणो वा। गुणोऽपि नित्यो वाऽनित्यो वा। आद्ये कर्मेति। अन्त्ये नित्येति। तृतीये त्वाह--अनित्यस्य चेति। अनित्यपदस्नेहे एकपदं द्वित्वादौ व्यभिचारवारणाय विभुमनोव्यापारो यदि नित्यवृत्त्येकगुणः स्यात्तदा मूर्त्तसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्यजातिमान् स्या- 5 दित्यर्थः। अत्रेष्टापत्तिमाह तदपीति। मनोवैभवेऽपि तादृशमूर्त्ते तद्वार- णार्थं कल्पनीयमित्यर्थः। तदेवं तर्हि मन एव तथा क्लृप्तद्वैभवकल्पना त्यज्यतामित्याह--तदेवेति। उपसंहरति--तस्मादिति।

प्रकृतमुपपादयति--तथा चेति। निरूपधानत्वात्=योग्यविशेषगुणशून्य- त्वात्। एतदेवेति। योग्यविशेषगुणोपहितात्मग्राहकत्वमित्यर्थः। स्वापेति। 10 तदा बहिरिन्द्रियसम्बन्धविच्छेदतादवस्थ्यादित्यर्थः। स्वप्नविभ्रमाणां स्वप्नानुभावानामुद्बोधकं वेद्यमिति। उद्बोधकं किमित्यर्थः। मन्देति। तथा च शब्दाद्यनुभव उष्णस्पर्शानुभवो वा उद्बोधकमित्यर्थः। यद्वा उद्बोध एव कथं स्वप्नानुभवः आरोपविषयाज्ञानात् सादृश्याज्ञानाच्चेति शेषः, कदा- चिद्वायुना श्रोत्रसम्बन्धो मनः क्रियते कदाचित्त्वक्संवन्धैश्च अतस्त 15 दारोपविषयस्य शाब्दस्पर्शादेर्ग्रहात् स्मृतस्य विषयस्यारोपः। दोषो- त्काट्यानारोप्यारोपविषयसादृश्यापेक्षेत्यर्थः। उद्बोधिका च निद्रेतिभावः उष्मादेरिति--उष्मस्पर्शादेरित्यर्थः। स्वापमुपपाद्य सुषुप्तिमुपपादयति-- यदा त्विति। पुरीतन्मनोवहनाडीति शेषः।

बोधनी

अथ तदेवमीश्वरविषयस्योपदेशलिङ्गानुमानस्यान्यथासिद्धिर्निराकृता। अथेदानीं तदभावा- 20 वेदकप्रमाणसद्भावादित्याशङ्कितं, तस्य कालात्ययापदिष्टत्वं निराचिकीर्षुः स्मारयति तावत्-- नन्वेतदपीति। मा भून्नित्यवेदद्वारा वा कपिलादिद्वारा वा धर्मसंप्रदायस्तथाप्येतदीश्वर- द्वारकत्वमपि कथं सिध्यति, तत्रेश्वरे बाधकसद्भावात्। यद्वा, यद्यप्यन्यथासिद्धिर्निराकृता, तथाप्येतत्परोक्तं कालात्ययापदिष्टत्वं कथं निरसनीयम्। यद्वानन्यथासिद्धमप्येतत्कथं साधकं तत्रानुमाने बाधकसद्भावादिति। बाधकसद्भावमेवोपपादयितुमुपक्रमते--तथा हीति। 25 तत्र प्रत्यक्षानुपलम्भेन बाधकं तावदाह--यदि स्यादिति। न चोपलभ्यत इति शेषः। तर्केणानेनानुगृहीतं प्रत्यक्षं जगत्कर्तुरभावमावेदयतीति भावः। सिद्धान्ती शङ्कते--, अयोग्यत्वादिति। योग्यानुपलम्भो हि बाधक इति। एवं तर्हीति। न चासत्त्वा-

दिति शेषः । शशशृङ्गप्रतिबन्दीमुन्मोचयन् सिद्धान्ती शङ्कते—**नैतदेवमिति** । शृङ्गस्य रूपवत्वमहत्त्वाभ्यां प्रत्यक्षयोग्यत्वेन गवादिशृङ्गे व्याप्तिदर्शनादस्यापि शृङ्गस्य सतो योग्यतया भवितव्यम्—तस्माच्छशशृङ्गस्य सतो योग्यानुपलम्भोऽस्तीति । इतरः पुनरीश्वरस्यापादयति—**चेतनस्येति** । चेतनादियोगिनो हीश्वरस्य शरीराद्युपाधिसंबन्धोऽवश्यंभावी तत्कारणकत्वाच्चेतनादेर्योग्यं च शरीरादि, तथा च तस्यानुपलम्भेन बाधात् 5 तद्वतोऽपि बाधः स्यादिति न केवलं प्रत्यक्षमनुमानमपि बाधकमित्याह—**व्यापकेति** । कर्तृव्यापकत्वेन स्वप्रयोजनसिद्धिः कुलालादिषूपलब्धा, न च साऽनवाप्तावाप्तकामविरहिणि जगत्कर्तरि संभवति । तस्माद्व्यापकानुपलब्ध्या जगत्कर्तुरभावोऽनुमीयत इति स्वार्थस्य कर्तृव्यापकत्वमेवाह—**को हीति** । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायादिति । तदेवं प्रत्यक्षानुमानबाधितविषयमीश्वरानुमानमिति पूर्वपक्षिते सिद्धान्तमाह— 10 **उच्यत इति** । अयोग्यत्वात्परमात्मनस्तस्मिन् योग्यानुपलब्धिः कुतो भवेत , न कुतश्चिदित्यर्थः । यद्वा, योग्येऽपि स्वात्मन्युपलब्धिर्नाभावं गमयितुमलं, कुतोऽयोग्ये परमात्मनि । ततश्चोन्मोचिता शशशृङ्गप्रतिवन्दिर्न हि शृङ्गमयोग्यमनुपलब्ध्या बाध्यते, किन्तु योग्यमेव । न च परमात्मात्मा योग्य इति न तावत्प्रत्यक्षबाधः, न च व्यापकानुपलब्धिलक्षणमन्यद्वाऽनुमानं बाधकमीश्वरस्यानभ्युपगमेनाश्रयासिद्धेरिति व्याचष्टे— 15 **स्वात्मैवेति** । स्वात्मनः प्रत्यक्षयोग्यत्वं सुख्यहं दुःख्यहमित्यादिप्रतीतिसाक्षिकमेवेति । किमिति स्वात्मा योग्योऽप्यनुपलब्ध्या न प्रतिषेद्धुं शक्यत इत्यत्राह— **तथा हीति** । जाग्रदवस्थायामुपलम्भदर्शनात्सिद्धं स्वात्मनो योग्यत्वमन्यदा नापैतीति भावः । पृच्छति—**कस्येति** । स्वरूपयोग्यस्यापि सहकारिविरहादनुपलम्भो युक्त इत्याह—**सामग्रीवैगुण्यादिति** । का तर्हि स्वात्मनो ग्रहणसामग्री 20 यद्वैगुण्यात्तदानीमनुपलम्भ इत्यत्राह—**ज्ञानादीति** । जानाम्यहमिच्छाम्यहमित्यादिरूपेणैवात्मनो ग्रहणदर्शनाद् ज्ञानादिविशेषगुणोपगृहीतत्वमात्मनो ग्रहणसामग्रीति । सुषुप्तिसमये कस्यापराधेन ज्ञानमेव न जायते, कस्यानुग्रहाद्वाऽन्यदा जायत इत्याह— **ज्ञानमेवेति** । मनसो बाह्येन्द्रियप्रत्यासत्तिभावाभावाभ्यां जननाजनने इत्याह— **मनस इति** । तदेतन्मनसोऽनिन्द्रियप्रत्यासन्नत्वं कौमारिला न सहन्ते विभुत्वान्मनस 25 इत्याह—**मनोवैभववादिनामिति** । तेषां मनोवैभवहेतूनुपन्यस्यति—**तथा हीति** । न हि द्रव्यसमकालं तत्समवेतानां स्पर्शादीनामुत्पत्तिः कार्यकारणयोः पौर्वापर्यनियमात, तेनानुत्पन्नस्पर्शैः प्रथमक्षणावस्थिते घटादिद्रव्येऽनैकान्तिकत्वमाशङ्क्योक्तं **सर्वदेति** । आकाशादिरत्र दृष्टान्तः । **विशेषगुणशून्यद्रव्यत्वादिति** । अत्रापि सर्वदेत्यनु-

षज्यते । दिक्कालावत्र दृष्टान्तः । अनारम्भकद्रव्यत्वमन्त्यावयविनोऽप्यस्तीति तद्व्या-
वृत्त्यर्थमुक्तम्—**नित्यत्वे सतीति**। अनारम्भकत्वमिति च द्रव्यारम्भकत्वमिह
विवक्षितम् । आकशादय एव दृष्टान्ताः । ज्ञानस्यासमवायिकारणमात्ममनसोः संयोगः,
तदाश्रयत्वान्मनसो वैभवमनुमीयते, आत्मवत्सर्वत्रोपलभ्यमानकार्यत्वादात्मवदित्यादि-
5 शब्दार्थः । **नेति**। द्रव्यत्वासिद्ध्या चतुर्णां हेतूनामापाततः स्वरूपासिद्धिर्निरूपण-
दशायां तु धर्मिग्राहकप्रमाणबाध इति भावः । स्वरूपासिद्धिं तावदाह—**तथाहीति**।
अद्रव्यमपि ह्यदृष्टप्रयत्नसंयोगादिक्रियाकरणं दृष्टमिति ।

यद्यासां सुखाद्युपलब्धीनां साक्षात्काररूपत्वादिन्द्रियस्यैव तत्साधनत्वाच्चेन्द्रियतया
मनोऽनुमीयते, तथा च द्रव्यत्वं सिध्यति द्रव्यस्यैवेन्द्रियत्वादित्युच्येत तथापि व्यापकत्वे
10 तस्योपाध्यवच्छेददेनैवेन्द्रियत्वं वक्तव्यम्, न हि कर्णशष्कुल्यनुपहितमाकाशं श्रोत्रं भवती-
त्याह—**अथेति**। अस्तु तर्हि शरीरावयवः कश्चिदत्रोपाधिरित्यत्राह—**तत्र यदीति**।
दृश्यते चावयवान्तरे शरीरमात्रेऽपि मनसो वृत्तिरिति भावः । ततः किमित्यत आह—
**तत इति**। ततोऽपि किमित्यत आह—**तथा चेति**। ननु न कर्णशष्कुलीवन्नियतः
शरीरावयवः कश्चिदुपाधिः, किन्तु शरीरं तदवयवाश्चानियमेनोपाधयः सन्तु, तेन व्याप्य-
15 वृत्तिरवयवान्तरवृत्तिश्चोपपत्स्यत इत्यत्राह—**शरीरतदवयवेति**। किंच सर्वेषामप्यवयवा-
नामुपाधित्वे शिरसि सुखमित्ययं नियमो नोपपद्येत, अवयवान्तराणामप्युपाधित्वेन तत्रापि
सुखाद्युत्पत्त्युपलम्भयोः प्रसङ्गादित्याह—**नियमानुपपत्तिश्चेति**। यतो नियतस्य
शरीरावयवस्योपाधित्वे सुखादीनामप्यनियतत्वप्रतीतिविरोधः, शरीरमात्रस्योपाधित्वे च
व्याप्यवृत्तित्वप्रतीतिविरोधः, शरीरतदवयवानामनियमेनोपाधित्वे कल्पनागौरवप्रसङ्गो नियमा-
20 नुपपत्तिश्चेत्येते दोषाः प्रादुष्युः तस्मादेवमङ्गीकार्यमित्याह—**ततोऽन्यदिति**। आशुतर-
संचारीत्युपसंख्यानं कार्यं, तेन शिरःपादयोर्युगपदुपलम्भाभिमानः सिध्यतीति । अस्तु
तावदुपाधिः, ततः किमित्यत आह—**तथा चेति**। तस्यैवोपाधित्वेनाङ्गीकृतस्य
शरीरसंयुक्तत्वे सति साक्षात्प्रतीतिसाधनत्वेनेन्द्रियलक्षणलक्षितत्वादिन्द्रियत्वे स्वभावतः सिद्धे
तदेवास्तु मन इति । तथा चाणुत्वेनैव मनसिसिद्धे धर्मिग्राहकप्रमाणबाधो वैभवहेतूनामिति ।
25 तदेवं सुखादिसाक्षात्कारसाधनत्वेन साक्षान्मन इन्द्रियत्वकल्पनायां धर्मिग्राहकप्रमाणबाध उक्तः।
यदा बाह्येन्द्रियेषु युगपद्विषयैः संयुक्तेष्वपि सत्सु यत्सन्निधानक्रमाज्ज्ञानोत्पत्तिक्रमः प्रक्रमते,
तेनेन्द्रियसहकारिणा केनचिद्भवितव्यमिति युगपज्ज्ञानानुत्पत्तिलिङ्गेन मनोऽनुमीयते, तदा
स्फुट एव धर्मिग्राहकप्रमाणबाध इत्याह—**अथेति**। व्यापकत्वे हि तस्य युगपत्सर्वेन्द्रिय-
सन्निकर्षसंभवात् संयुक्तैरिन्द्रियैर्युगपज्ज्ञानोदयप्रसङ्गात्, ज्ञानक्रमार्थं कल्प्यमानस्याणुत्वेनैव

सिद्धिरिति। न च विभुत्वेऽपि मनसोऽदृष्टस्यापि ज्ञानोत्पत्तिहेतुत्वात् तत्क्रमवशादेव ज्ञानक्रम उपपद्यत इति वाच्यम्, युगपज्ज्ञानानुत्पत्तेरन्यथासिद्धत्वेन प्रमाणाभावात् मनस एवासिद्धिप्रसङ्गादित्याह—**यदि चेति**।

अत्र शङ्कते—**अथेत्यादिना चेदित्यन्तेन** द्वेधा ह्यदृष्टस्य कारणत्वं दृष्टकारणोपहारमात्रेण, तदनपेक्षं स्वयमेव चेति। तत्र पूर्वत्र दृष्टकारणसाकल्ये कार्यमुत्पद्यत एव न पुनस्तस्मिन्सत्येवादृष्टवैकल्यादेव कार्यानुत्पत्तिरिति। अन्यथा द्रव्यगुणकर्मणां सत्स्वेव दृष्टकारणेषु कदाचिददृष्टवैकल्यादनुत्पादः स्यात् न चैतदस्ति। यत्र तु साक्षाददृष्टस्यैव कारणत्वं यथा परमाणोराद्यकर्मणि—तदुक्तम्—"अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि" इति (वै. सू. ५. २. २३)—तत्रादृष्टवैकल्यादेव कार्यानुत्पत्तिरिति। अस्त्वेवं प्रकृते किमायातमित्यत आह—**तदिहापीति**। विषयेन्द्रियात्मनां साहित्येऽपि सुषुप्त्यादौ ज्ञानानुदयात्तदतिरिक्तं किमप्यदृष्टोपहरणीयं दृष्टं कारणमस्ति तन्मन इति मनःसिद्धेर्नाश्रयासिद्धिरिति। तथापि तस्य विभुत्वाङ्गीकारे युगपज्ज्ञानोत्पत्तिप्रसङ्गस्तदवस्थ इत्यत्राह—**तच्चेति**। विभुत्वेऽपि तस्य कारणत्वेन कल्प्यमानत्वात्, करणानां च क्रमेण क्रियाकरणस्वभावत्वात् ज्ञानक्रम उपपद्यत इति। ननु कल्पितेऽपि मनसि यदि करणधर्मत्वादेव ज्ञानक्रमः तर्हि क्लृप्तस्यैवात्मनो बाह्येन्द्रियाणां चानेन न्यायेन क्रियाक्रमोऽस्तु किं मनःकल्पनयेत्यत्राह—**अकल्पिते त्विति**। कुत इत्यत आह—**प्रतिपत्तुरिति**।

करणधर्मोऽयं न तु कर्तृधर्मः कर्ता चात्मा करणत्वेऽपि चक्षुरादीनामनेकत्वादेकस्य चैकैकज्ञानोत्पादनाविरोधात् पञ्चभिरपीन्द्रियैर्युगपच्च ज्ञानान्युत्पाद्येरन्। कल्पिते तु मनसि तस्यैकत्वात्करणत्वाच्च न युगपज्ज्ञानानुत्पत्तिरुपपन्नेति निराकरोति—**नन्वेवमिति**। मा नाम भूत् पञ्चानां ज्ञानानां युगपदुत्पत्तिस्तथापि गंधादिसंयुक्तघ्राणादिपञ्चेन्द्रियव्यापिना मनसा गन्धादिपञ्चकविषयैकज्ञानोत्पत्तिर्भवन्ती गीर्वाणशापेनापि नापयाति, तच्चानिष्टमिति। उक्तमर्थं यथावदजानानश्चोदयति—**भवत्येवेति**। इष्यत एतत्सेनावनादिष्वनेकालम्बनमेकं ज्ञानमतो नानिष्टमिति स्वाभिसन्धिमुद्घाटयन्नाह—**नेति**। अनेकेन्द्रियग्राह्यगन्धरसादिविषयैकज्ञानोत्पत्तिरापद्यते, तच्चानिष्टमिति। अत्र सांख्यः शङ्कते—**तेष्वपीति**। दीर्घशष्कुलीं भक्षयतः पुरुषस्य तद्गतगन्धरसस्पर्शशब्दादिविषयमेकमुत्पद्यत एव ज्ञानं ततो नेदमप्यनिष्टमिति। न तत्राप्यनेकविषयमेकं ज्ञानमुत्पद्यते किन्त्वनेकमेव, भिन्नानां क्रमवतामेव ज्ञानानां कालभेदः सूक्ष्मत्वान्नोपलभ्यत इत्येवाङ्गीकर्तव्यमिति। कुत इत्यत्राह—**व्यासङ्गेति**। आत्मेन्द्रियविषयसमवधाने सत्यपि यदा कस्मिंश्चिदेव विषये ज्ञानमुत्पद्यते न सर्वेषु

तस्मिन्व्यासङ्गकाले ज्ञानक्रमदर्शनादन्यदापि मनसः क्रमकरणस्वभावोऽनुमीयत इति तत्रान्यथासिद्धिमाशङ्कते---बुभुत्सेति। व्यासङ्गकाले ज्ञानक्रमो बुभुत्सातत्क्रमप्रयुक्तो न तु मनसः क्रमकरणस्वभावप्रयुक्त इति। मैवमिति। न हि बुभुत्साया एष महिमाऽस्ति यत्तस्व्यतिरेके ज्ञानव्यतिरेक इति, किन्तु सामग्रीव्यतिरेकादेव ज्ञानव्यतिरेक
5 इति। कस्तर्हि बुभुत्साया महिमेत्यत्राह---अपि त्विति। स्वसामग्र्या जायमानः प्रत्ययो बुभुत्सया दृढतरसंस्काराधानसमर्थो भवतीति। ज्ञानमात्रोत्पत्तावपि बुभुत्सोपयोगेऽनिष्टमाह---यदि त्विति। यदि बुभुत्सा न कारणं तर्हि बुभुत्सितावुभुत्सितयोरविशेषेण ज्ञानं जायेत। न च मधुरतरसङ्गीतमादरेणाकर्णयतः सन्निहितेष्वपि विषान्तरेषु युगपदेव ज्ञानोत्पत्तिर्दृश्यत इत्याशङ्क्याह---तस्मादिति। यतो ज्ञानोत्पत्तौ
10 बुभुत्सायाः साक्षादनुपयोगस्तस्माच्चत्रापि मनःसंयोगक्रमादेव ज्ञानक्रमस्तत्संयोगक्रम एव बुभुत्साया उपयोग इत्यर्थः। पुनरपि ज्ञानक्रमवादी शङ्कते---विभुनोऽपीति। नेति। तस्य व्यापारस्य संयोगरूपत्वे तावन्न क्रमः संभवति विभुत्वान्मनसः, तदतिरेकेण तु कल्प्यमानस्य कर्मत्वेऽपि विभुत्वव्याघातः, गुणत्वेऽपि तस्य नित्यत्वाभ्युपगमे क्रमोत्पत्तिरिति न संभवति, अनित्यत्वे तु विभुद्रव्यैकगुणस्याप्यविभुद्रव्यसंयोगासमवायिकारण-
15 कत्वेन व्याप्तेराकाशैकगुणे शब्दे भेर्यायविभुद्रव्यसंयोगासमवायिकारणकत्वदर्शनेनावधारणादविभुद्रव्यमन्तरेण तदनुपपत्तेरसमवायिसंयोगाधिकरणं किञ्चिदविभुद्रव्यं कल्पनीयम्। यदि तदपि कल्प्येत तर्हि कल्पनालाघवाय तदेवाऽस्तु मन इत्युपसंहरति---तस्मादिति।

उपपादितमर्थमनुपजीव्य पूर्वप्रक्रान्तमेवोपक्रम्याह--- तथा चेति। यथोक्तमार्गेणाणुनि मनसि तस्यानिन्द्रियप्रदेशावस्थानोपपत्तौ मनःसहकारिविधुरैरिन्द्रियैः ज्ञानादिविशेष-
20 गुणानुत्पादादात्मनो निरुपधानत्वात् सुषुप्तावस्थायामनुपलम्भः सिध्यतीति। एतदिति। विशेषगुणोपहितमेवात्मानं गृह्णातीत्येतदेवेति। विशेषगुणोपधानानुपधानयोरात्मनो ग्रहणाग्रहणाभ्यां तन्निश्चितमित्याह---अन्वयेति। न केवलम् मनस एवेदं शीलं किन्तु सर्वेन्द्रियाणामपीत्याह---केवलमिति। एतदेवोपपादयति न हीति। अन्यथा वाय्वादावपि चक्षु प्रवर्त्तेतेति भावः। स्वप्ने वा कथं सुषुप्तिवन्मनसो व्याप्रियमाणेन्द्रिय-
25 संयोगाभावात् ज्ञानोत्पत्तिरित्याह---स्वप्नेति। तत्तद्विषयेन्द्रियव्यापाराभावेऽपि पूर्वानुभवजनितसंस्कारोद्बोधप्रभावितत्तद्विषयस्मरणसहकृतं मनः स्वप्नभ्रमानुत्पादयतीत्याह ---तत्तदिति। तदानीं बाह्यविषयानुपलम्भे संस्कारोद्बोध एव कुत इत्याह---तदुद्बोध इति। मन्देति। तदापि बाह्येन्द्रियाणां मन्दतरतमादिभावेन व्यापारानुवृत्तेः शब्दाद्युपलम्भात्तदनुपलम्भेऽप्यन्ततो गत्वा शरीरोष्मादेस्त्वगिन्द्रियेणोपलम्भासंभवात

संस्कारोद्बोधोपपत्तिरित्याह—अन्तेति। यदा तु मनस्त्वगिन्द्रियेणाप्यसंयुक्तं पुरीतति, तदा स्वप्नस्याप्यभावात् सुषुप्तिरेव स्यादित्याह—यदा त्विति।

विवेकः

तृतीयां विप्रतिपत्तिं निरसितुमुत्थापयति—**नन्विति**। इदं यथोपदर्शित-प्रमाणेन ईश्वरसाधनं तत्र वेदानां सकर्तृकत्वे सति बलवति बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वादिति भावः। **यदीति**। वेदो यदि सकर्तृकः स्यात् सकर्तृकत्वेनोपलभ्येत 5
इति तु योग्यानुपलम्भसहकृतप्रत्यक्षेण बाधादित्यर्थः। अनुपलम्भमात्रस्य तत्सहकारित्वेऽनिन्द्रियमात्रोच्छेद इति योग्यतावच्छेदकविशिष्टस्य तथात्वं वाच्यं, न च तत्प्रकृत इत्याह—**अयोग्यत्वादिति**। सन्नपि वेदः सकर्तृकत्वेन सन्नपि न तद्रूत्त्वेनोपलभ्यत एवं तर्हि अयोग्यं शृङ्गं पशुत्वेन शशे सिद्ध्येदित्यादि शङ्कते **एवं चेति**। शशशृङ्गे शशे धर्मिणि 10
शृङ्गं शृङ्गस्य शृङ्गत्वस्य तस्य तादात्म्येन शृङ्गत्वावच्छिन्नस्यैव वा चेतनस्य चेतनत्वावच्छिन्नस्य योग्योपाधिः = योग्यस्योपाधिः। योग्यता च तद्व्याप्यत्वात्। तद्बाधे योग्यताबाधे सोऽपि अयोग्यचेतनात्मापि बाधितः। शृंगत्वस्येव चेतनत्वस्यापि योग्यताव्याप्तत्वात् कथमयोग्यश्चेतनः स्यादित्याखण्डलार्थः। योग्योपाधिः शरीरत्वमिति तु प्रकाशः। तस्य च कर्तुः शरीरनियमेन शरीरिकर्तृकत्वबाध एव कर्तृसामान्य- 15
बाधे विश्राम्यति। शरीरिकर्तृकत्वञ्च योग्यमेवेत्यभिमानः। व्यापकानुपलम्भबाधं शङ्कते—**व्यापकेत्यादि**। चेतनस्यापीत्यपि शरीरित्वव्यापकानुपलम्भ एव। व्यापकेत्यादि तु व्यापकान्तरानुपलम्भपरमित्यपरे। स्वार्थः सुखदुःखान्यन्तराभाववत् तदनुपलम्भेन तदभावेनानुमीयते-**नास्तीति**। शरीरभिन्नत्वावच्छेदेन कर्तृत्वाऽभावोऽनुमेयः प्रयोजनवत् कर्तृकत्वाभावेन सकर्तृकत्वाभावो वा वेदेऽनुमेय इत्यर्थः। अनुकूलतर्कमाह— 20
**को हीति**। चेतनस्यायोग्यताव्याप्यत्वे प्रमाणाभावः। सहचारदर्शनमात्रात्तत्त्वे पृथिवीत्वस्यापि तत्त्वप्रसंगः घ्राणाद्यवच्छेदप्रसङ्ग इति त्वपेक्षितम् एवं शरीरिकर्तृकत्व-शून्यत्वं तत्प्रतियोगिकशून्यत्वं तथावच्छिन्नप्रतियोगिताकशून्यत्वंवा। आद्ये घटादि-साधारण्यं अन्त्येऽन्वयेऽप्रसिद्धिः, सकर्तृकत्वस्यैव तन्नये प्रतियोगितावच्छेदकत्वात्। तथा च सकर्तृकत्वाभावः जन्यतया कर्तुरेवाभावो वा प्रत्यक्षेण गृह्येत इति वक्तव्यम्। 25
तद्दूषयति। **योग्येति**। अयोग्ये प्रतियोगितावच्छेदककोटिप्रविष्टे प्रतियोगिनि वा कुतो योग्यादृष्टिर्योग्यानुपलब्धिः संसर्गाभावग्राहिकेति शेषः। पिशाचवद् घटाभाववद् मूर्त्तसामान्याभाववच्चेति समुचितदृष्टान्तोऽपि ध्येयः।

नन्वेवं शृङ्गमप्ययोग्यं योग्यानुपलब्ध्या न बाध्येत इत्यत्राह—**प्रतिबन्धिरिति।** यद्ययोग्यं शृङ्गं प्रामाणिकं स्यात् बाधो नास्त्येव कुतः प्रतिबन्धिः पशुत्वादिकं च व्याप्तिग्राहकाभावान्न प्रमाणमिति भावः। अथ शृङ्गं प्रमाणमेव तदा त्वाह—**क्वेति।** अयोग्यं शृङ्गं बाध्यत इति यत्त्वयोच्यते तत् क्व कथमर्थ-
5 वदित्यर्थः। एवं प्रयोजनवत् कर्तृकत्वमिति न तत्प्रतियोगितावच्छेदकमुक्तयुक्तेः। ईश्वरं पक्षीकृत्य प्रयोजनाभावेन प्रवृत्त्यभावः साध्यते इति व्यापकानुपलम्भार्थो वाच्यस्तत्राह—**क्वानुमानमिति।** ईश्वरस्याश्रयस्य पक्षस्य सिद्धौ धर्मिग्राहक-मानबाधः, असिद्धौ चाश्रयासिद्धिरित्यर्थः। योग्यानुपलब्ध्यभावं विशदयति—**स्वात्मैवेति।** सुषुप्तिसमये स्वात्मविशेषगुणरूपव्यञ्जकाभावात् न प्रतिषिध्यते,
10 नाभावप्रतियोगितया गृह्यते स्वात्माभावो न प्रत्यक्ष इति यावत्। आशयमविद्वान् पृच्छति—**कस्येति।** उत्तरं—**सामग्रीति।** क्षणिकः आशुविनाशी चतुर्थ-क्षणवृत्तिनाशप्रतियोगितमात्रवृत्तिजातिमानिति यावत्। द्वित्वविभागादिवारणाय विशेष-त्वेन गुणो विशेष्यः योग्यत्वेन विशेषितं तु नाशप्रतियोगित्वमात्रं क्षणिकत्वमिन्द्रिय-मात्रस्य स्वव्यवस्थापकगुणपुरस्कारेण वृत्तिरिति भावः। ज्ञानमेवेत्यत्र तदानीमिति
15 प्राक्तनमनुषज्यते **अनिन्द्रियेति।** इन्द्रियाप्रत्यासन्नतयेत्यर्थः। त्वङ्मनोयोगस्य-जन्यज्ञानमात्रहेतुत्वे इन्द्रियमात्रं त्वगेव नो चेत् बहिरिन्द्रियजज्ञानानुत्पादेन प्रयोजकत्व-मुक्तं एवमनुमित्याद्यनुत्पादेऽपि परामर्शाद्यभावो बोध्यः। इदं मनस इन्द्रियाप्रत्यासन्नत्वं द्रव्यत्वमात्रं स्पर्शवति व्यभिचारीति स्पर्शरहितत्वमुत्पत्तिकालावच्छेदेनावयविनोऽपि तत्त्वात् तद्वारणाय—**सर्वदेति।** गुणादिवारणाय च विशेष्यम्। अत्र स्पर्शरहितत्वेन
20 विशेषितं स्वरूपतो द्रव्यत्वमेव हेतुः। नो चेत् द्रव्येतरासमवेतत्वे सति समवेतत्वमात्रं द्रव्यत्वं प्रकृते बोध्यम्। तन्नये तमसि रूपवति निःस्पर्शे व्यभिचारमाशंक्य हेत्वन्तर-माह—**सर्वदेति।** अनुद्भूतविशेषगुणानुपगमे घ्राणादौ व्यभिचारमाशंक्य—**नित्यत्व इति** अनारम्भकत्वं द्रव्यसमवाय्यन्यत्वं तच्चान्त्यावयविनि व्यभिचारीति सत्यन्तं नित्ये गुणादौ तद्वारणाय विशेष्यम्। परमाणुबाधनाय च द्रव्यानारम्भकत्वं हेतुत्रये तु कालो
25 दृष्टान्तः। अतिरिक्तकालदिशोरनुपगमे दृष्टान्तासिद्धिमाशंक्याह—**ज्ञानेति।** चक्षुः शरीरादिवारणाय—**समवायीति।** आत्मा दृष्टान्तोऽवसेयः। **आपातत इति।** यावन्नो धर्मिणो द्रव्यत्वं सिद्धमित्यर्थः। तत्सिद्धौ वक्ष्यमाणक्रमेण सर्वेषामेवानुमानानां धर्मिग्राहक-मानबाध इति भावः। क्रियात्वेन = कार्यत्वेन सुखोपलब्धिः सकरणिका कार्यत्वादिति प्रयोगः। अद्रव्यस्य लिङ्गज्ञानादेः। इन्द्रियत्वेनेति प्रकारत्वम् तृतीयार्थः।

तथा चैतस्य साध्यतावच्छेदकत्वलाभः। तथा च सुखलौकिकसाक्षात्कार इन्द्रियजः जन्यसाक्षात्कारत्वाद्वा रूपसाक्षात्कारवदिति प्रयोगोऽवसेयः। विषयप्रत्यासन्नतया जन्यत्वं च वाच्यं तेन ज्ञानमात्रस्य त्वग्जन्यतया नार्थान्तरम्। विषयप्रत्यासन्नत्वग्जन्यज्ञानस्य च स्पर्शविषयत्वनियमात् न तादृशजन्यतयैवार्थान्तरमिति ध्येयम्। व्यापकस्य विभुनः निरुपाधेरनवच्छिन्नस्य। अनवच्छिन्नस्य श्रोत्रत्वे दूरस्थशब्दसाक्षात्कारापत्त्या कर्णशष्कुली- 5 वदत्रापि व्यासङ्गानुपपत्त्या तत्कल्पनाया आवश्यकत्वादिति भावः। विभुनीन्द्रिये य उपाधिस्तदवच्छेदेनोत्पन्न एव गुणस्तेन गृह्यत इति श्रोत्रदर्शनात् गूढाभिसन्धिराह— **तत्रेत्यादि**। शरीरावयवस्य हस्तपादादेर्वृत्तिलाभस्तदवच्छेदेनोत्पन्नस्यैव गुणस्य ग्राहकत्वं प्रसज्येतेत्यग्रेतनेनान्वयो भविष्यति। वृत्तिनिरोधो ग्राहकत्वाभावः। उपाधिः शरीरमात्र- मवसेयः। तदवच्छेदेन वृत्तिलाभे तस्यैव ग्राह्यगुणावच्छेदकत्वे विभुकार्याणां विभुकार्य- 10 विशेषगुणानाम्। असमवायीति। निमित्तसंयोगविशेषोपलक्षणम् उपाधिकल्पनायाम् उपाधित्वाभ्युपगमे। नियमेति। सर्वस्यैव सुखाद्यभावाय एकमिति नानात्वेनैव नियमानुप- पत्तिरिति भावः। एतच्चैकात्मसमवेतसुखाद्युपलम्भनियामकमभिप्रेत्य सूक्ष्मं शरीरपरिमाणाप- कृष्टपरिमाणवत्, अन्यथा तद्दोषतादवस्थ्यात्। **अनीन्द्रियमिति**। योग्यानुपलम्भवारणाय। इन्द्रियत्वे सुखग्राहकेन्द्रियत्वे। **स्वाभाविकेति**। उपाध्यन्तरानुप्रवेशवारणाय अधिकस्य 15 विभुनः इन्द्रियत्वकल्पनायाम्। **धर्मीति**। धर्मेणावच्छेदकीभूतोपाधिग्राहकं प्रमाणं तेनोक्तयुक्त्या विभुन इन्द्रियत्वबाध इत्यर्थः। **ज्ञानक्रमेणेति**। युगपद्विषयप्रत्यासत्त्या सहकारिमत्स्विन्द्रियेषु एकदा साक्षात्काराजनकत्वं सहकारिवैकल्यप्रयुक्तं योग्यानां कार्योपजनकत्वादित्यनुमानं सहकार्यन्तरवैकल्यबाधसहकारेण यत् संयोगवैकल्यं विषयी- करोति तदेव मन इत्यर्थः। प्रागुक्तदोषः धर्मिग्राहकप्रमाणबाधरूपो दोषः। विभुत्वे 20 तत्संयोगवैकल्यानुपपत्तेरिति भावः। ननु संयोगवैकल्यासंभवेऽपि अदृष्टरूपसहकारि- वैकल्यात् क्रमः स्यादित्याशङ्क्य निराकरोति—**यदि चेत्यादि**। तदा ज्ञानोपपादकतया मनसोऽसिद्धेः अदृष्टवशादेव क्रमोत्पत्तेरिति भावः।

ननु सत्यां दृष्टसम्पत्तौ ज्ञानाद्यनुत्पत्तिर्नादृष्टवैकल्याद्दृष्टा इति मतेन मनसोऽन्य- थासिद्धिरिति नासिद्धिरित्याशङ्कते—**नन्वित्यादि**। अन्त्यतन्तुसंयोगे प्रतिबन्धकद्रव्या- 25 भावसहितेऽदृष्टव्यापारः अदृष्टस्य जनकता। **परमाणुकर्मणेति**। खण्डप्रलये सत्यपि परमाणुकर्मणि अदृष्टाभावादेव नारम्भकसंयोगोत्पत्तिः। न हि तत्र दृष्टवैगुण्यं किञ्चि- दस्तीति भावः। **सर्वदैवेति**। एकदा नानेन्द्रियाणां तादृशज्ञानजननं स्यादित्यर्थः। अतिरिक्तं मनो लक्षणम्। **तथापीत्यादि**। यदात्मसहकारेण यत्कालावच्छेदेन यस्य

यज्ज्ञानजनकत्वं तदात्मसहकारेण तज्ज्ञानभिन्नज्ञानजनकत्वसामान्याभावस्य तत्र तत्काला-वच्छेदेन वृत्तित्वनियमात् ज्ञानक्रम इत्यर्थः। एकस्यैवालोकस्य ज्ञायमानलिंगस्य वा नानात्मसहकारेण एककालावच्छेदेन नानाज्ञानजनकत्वात् व्यभिचारादाह—यदात्म-सहकारेणेति। तदात्मसहकारेणैव विभिन्नकालावच्छेदेन नानाज्ञानजनकत्वादाह—
5 यत्कालावच्छेच्देन इत्यादि। तस्मिन् मनसि नायं न्यायः एकदा उक्तस्वभावालम्बनेन नानाज्ञानजननाभावोपपादनं। **प्रतिपत्तुरिति।**

तत्रात्मसहकारित्वाभावादेव विशिष्टाभावसत्त्वात्। एकदा एककाले नानाज्ञान-जननेऽपि तत्स्वभावसंभवादिति भावः। अकरणत्वात् आत्मसहकारेण ज्ञानाजनक-त्वात् स्वस्मिन् स्वसहकारित्वाभावादिति भावः। यच्च **प्रकाशकृता** ज्ञानकरणमेकत्रात्मनि
10 एकदा एकमेव ज्ञानं जनयतीति स्वभावबलाज्ज्ञानक्रम इत्यवष्टम्भेन इदं व्याख्यातम् तत्र व्याप्तौ करणत्वांशस्य व्यर्थत्वात् प्रतिपत्तुरकरणत्वादिति सन्दर्भविरुद्धमिव प्रतिभाति। **चक्षुरादीनामिति।** तेषां स्वस्वविषये एकदा ज्ञानजननेऽपि उक्तस्वभावाक्षतेरिति। गूढाभिसन्धिराह—**नन्वेवमिति।** युगपज्ञानं नानासन्निकर्षजमेकं ज्ञानम्। आशयमविद्वान् शङ्कते—**भवत्येवेति।** आशयमुद्घाटयति **नेत्यादि।** प्रसङ्गात् युगपज्ज्ञानस्य
15 भवत्येव युगपज्ज्ञानं दीर्घशष्कुलीभक्षणादौ। तथाच तदेव मनोऽणुत्वे बाधकमिति भावः। **व्यासङ्गकाल इति।** इदमुपलक्षणम्। जातिसङ्करापत्तिश्च बोध्या। कर्व्वुरवत् चित्रज्ञाने च मानाभाव इति भावः। विवादविषये दीर्घशष्कुलीभक्षणादौ। **बुभुत्सेति।** तथा च बुभुत्सासत्त्वात् तत्र युगपज्ज्ञानोपगमे कुतो मनोऽणुत्वमिति भावः। सामग्र्यां सत्यां फलाभावस्य ब्रह्मणापि दुरुपपादत्वादिति भावः। एवन्तर्हि
20 बुभुत्सायाः कुत्रोपयोग इत्यत्राह—**अपि त्विति।** तत्राबुभुत्सिते। तथा च विलक्षण-संस्कार एव बुभुत्सातन्त्रमिति भावः। **यदीति।** अबुभुत्सितविषयकज्ञाने इतरबुभुत्सा यदि प्रतिबन्धिकेत्यर्थः। उभयबुभुत्सयामुभयत्र ज्ञानोत्पत्तेराह—**अबुभुत्सित इति।** घटाय घटज्ञानाय घटबुभुत्सायै इति यावत्। इन्द्रियान्तरादबुभुत्सितानुग्राहकात्। निवेशयन्ती संयोजयन्ती। तस्य क्रमनियामकव्यापारस्य। **संयोगातिरिक्तस्येति।** तस्य त्वया
25 नित्यत्वोपगमे न व्यापारत्वासंभवादिति भावः। **क्रमानुपपत्तेरिति।** तथा च न तत्क्रमेण ज्ञानक्रम इति भावः। **अनित्यस्य चेति।** जलपरमाण्ववयविस्नेहे व्यभिचारवारणाय नित्यत्व(?)नित्यसमवेतत्वे। **गुणेति।** कर्मणि तद्वारणाय। परमाणुवेगे तद्वारणाय वेगान्य-त्वेन हेतुर्विशेष्यः। संयोगासमवायिकारणत्वञ्च कार्यैकार्थसमवायप्रत्यासत्त्या संयोग-कारणत्वम्। तेन शब्दविभागजशब्दे न व्यभिचारः। तत्रापि निमित्तवायुसंयोगस्य

तादृशप्रत्यासत्त्या हेतुत्वात्—अविश्विति। तस्यानुमितौ विषयतासम्पत्तये संयोगसमवायिकारणकगुणत्वव्याप्यजातिमत्त्वस्य साध्यत्वे तु क्रमनियामकव्यापारव्यक्तौ संयोगसमवायिकारणत्वासिद्ध्या प्रकृतानुपयोगो ध्येयः।

तदपि तादृशव्यापारजनकसंयोगाश्रयविभुद्रव्यमपि। न चादृष्टाकृष्टम् स्पर्शवदण्वेव मनोऽस्तीति वाच्यम्। सुखादिसाक्षात्कारत्वावच्छिन्नं प्रति मनस्त्वेन कारणत्वं तच्च 5 मनस्त्वं लाघवाज्जातिरूपमेव कल्प्यते, कल्पने च स्पर्शस्यापि न कल्पनं तुल्यन्यायात् क्लृप्तासु व्यक्तिषु च विनिगमनाविरहेणाक्लृप्तस्य प्रमाणेन विषयीकरणादिति दिक्।

मनसोऽणुत्वे साधकान्तरमुपसंहारव्याजेन दर्शयन्नात्मनोऽनुपलम्भनं दर्शयति। तथा चेति। अनिन्द्रियप्रत्यासन्ने इन्द्रियाप्रत्यासन्ने न च वैभवे तथात्वसंभव इति भावः। एवं च बहिरिन्द्रियजप्रत्यक्षसामग्रीन्युदस्ता। आत्मनोऽनुपलम्भं व्युत्पादयति— 10 निरुपधानत्वादिति। मनोयोग्यविशेषगुणोपधानाभावादित्यर्थः। इदमुपलक्षणम् संस्कारोद्बोधकाभावेन स्मृतेः परामर्शादिरभावाच्चानुमित्यादेरपि सामग्र्यभाव इत्यपि बोध्यम्। तथा चात्मनस्तदानीमप्रत्यक्षत्वमपि मनोऽणुत्व एव सम्भवति। तथा हि क्रियाविभागादिन्यायेन हि मनोयोगो जायमानोऽसमवायी। तत्र क्रियोत्पत्तिकाले विभागोत्पत्तिकालेऽपि पूर्वोत्पन्नविशेषगुणोपधानेनात्मनः प्रत्यक्षत्वं सम्भवति। न च संयोग- 15 नाशक्षणे विनश्यतस्तथात्वासंभवात्। एवं संयोगोत्पत्तिक्षणेऽपि न तत्संभवः पूर्ववर्त्तिनस्तत्संयोगस्याभावात्। एवं च प्रागुक्तविशेषगुणानां तदानीमभावेन तदुपधानाभावात् नात्मप्रत्यक्षमिति प्रणाल्या स्वस्वापसंभवः। न च वैभवे तथा संभव इति भावः। न च वैभवे त्वङ्मनोयोगाभावादपि स्वस्वापसंभवः। तदवान्तरजातिभेदोपगमे च जातिसङ्करः। कर्मयोगादिजन्यतावच्छेदकजातिनानात्वकल्पना चातीव गौरवग्रस्तेति 20 ध्येयम्। एवं मनसो व्यासङ्गकाले द्रव्यस्य त्वया च प्रत्यक्षवारणायापि तत्प्रतिबन्धकत्वकल्पने च गौरवमवसेयम्। एतदेव विशेषगुणोपधानेनैव साक्षात्कारजनकत्वं सर्वेषामिति स्वव्यवस्थापकविशेषगुणोपधानेनैव प्रवृत्तेरित्यर्थः। विशेषगुणं स्वव्यवस्थापकम्— द्रव्येष्विति। तमः प्रत्यक्षे प्रसक्तिवारणाय। ननु मनसो बहिरिन्द्रियप्रत्यासत्त्यभावे कथं स्वप्नज्ञानं मनः प्रत्यासत्त्यभावात्। बहिरिन्द्रियाणामसामर्थ्यात्। मनसश्च बहिर- 25 स्वातन्त्र्यादित्याशयेन शङ्कते—स्वापेति। विषयस्मरणेनेति तथा चोपनयसहकारेण जनकत्वात् न स्वातन्त्र्यमिति भावः। ज्ञानस्यैवोद्बोधकत्वं मन्वानं शङ्कते— उद्बोधक एवेति। मन्दतरतमेति तथा च स एव शङ्कानुभव उद्बोधक इति भावः। त्वङ्मनोयोगस्य ज्ञानमात्रहेतुत्वनयमाश्रित्याह—अन्तत इति। वस्तुतस्तु अदृष्टादेरेव

तत्रोद्बोधकत्वमिति ज्ञानाभावेऽपि न क्षतिरिति ध्येयम्। मनोऽणुत्वसाधिकां सुषुप्तिमुपसंहारव्याजेन सूचयति—यदा चेति। त्वचमपीत्यपिना बहिरिन्द्रियान्तर-समुच्चयः न च वैभवे तत्परिहार इति भावः।

स्यादेतत्। परात्मा तु कथं परस्यायोग्यः। न हि साक्षात्कारिज्ञानविषय-
5 तामेवायं न प्राप्नोति। स्वयमप्यदर्शनप्रसङ्गात्। नापि ग्रहीतुरेवायमपराधः। तस्या-पि हि ज्ञानसमवायिकारणतयैव तद्योग्यता। नापि कारणस्य। साधारणत्वात् न ह्या-संसारमेकमेव मनः एकमेवात्मानं गृह्णातीत्यत्र नियामकमस्ति। स्वभाव इति चेत्, तर्हि मुक्तौ निःस्वभावत्वप्रसङ्गः। तदेकार्थताया अपायादिति। न। भोजकादृष्टोपग्रहस्य नियामकत्वात्। यद्धि मनो यच्छरीरं यानीन्द्रियाणि यस्यादृष्टेनाकृष्टानि, तानि
10 तस्यैवेति नियमः। तदुक्तं प्राक्-प्रत्यात्मनियमाद्भुक्तेरिति। एतेन परबुद्ध्यादयो व्याख्याताः॥

तदेवं योग्यानुपलब्धिः परात्मादौ नास्ति, तदितरा तु न बाधिकेति तवापि सम्मतम्। अतः किमधिकृत्य प्रतिबन्धिः। न हि शशशृङ्गमयोग्यानुपलब्ध्या कश्चि-न्निषेधति। न च प्रकृते योग्यानुपलब्धिं कश्चिन्मन्यते। अथायमाशयः। अयोग्य-
15 शशशृङ्गादावनुपलब्धिर्न बाधिका स्यादिति। ततः किं? तत् सिध्येदिति चेत् एव-मस्तु यदि प्रमाणमस्ति। पशुत्वादिकमिति चेत्। परसाधने प्रतिबन्धिस्तर्हि न तद्-बाधने। तत्रैव भविष्यतीति चेत्। तत् किं तत्र प्रतिबन्धिरेव दूषणम्। अथ कथ-ञ्चित्तुल्यन्यायतया योग्या एव परात्मबुद्ध्यादयस्ते च बाधिता एवेत्यपहृतविषय-त्वम्? न प्रथमः। अव्याप्तेः। न हि पशुत्वादेः शशशृङ्गसाधकत्वेन कार्यत्वादेः
20 कर्तृमत्त्वादिसाधकत्वं व्याप्तं, येन तस्मिन्नसति तत्प्रतिषिद्ध्येत। न द्वितीयः। मिथोऽनुपलभ्यमानत्वस्य वादिप्रतिवादिस्वीकारात्। तथापि पशुत्वादौ को दोष इति चेत्। न जानीमस्तावत्तद्विचारावसरे चिन्तयिष्यामः।

स्यादेतत्। यत्प्रमाणगम्यं हि यत्, तदभाव एव तस्याभावमावेदयति। यथा रूपादिप्रतिपत्तेरभावश्चक्षुरादेरभावम्। कायवाग्व्यापारैकप्रमाणकश्च पराऽऽत्मा,
25 तदभाव एव तस्याभावे प्रमाणमङ्कुरादिषु। तन्न। तदेकप्रमाणकत्वासिद्धेः। अन्यथा सुषुप्तोऽपि न स्यात्। श्वाससन्तानोऽपि तत्र प्रमाणमिति चेन्न। निरुद्धपवनोऽपि न स्यात्। कायसंस्थानविशेषोऽपि तत्र प्रमाणमिति चेन्न, विषमूर्च्छितोऽपि न स्यात्। शरीरोष्मापि तत्र प्रमाणमिति चेन्न। जलावसिक्तविषमूर्च्छितोऽपि न स्यात्।

तस्माद् यद्यत् कार्यमुपलभ्यते तत्तदनुगुणश्चेतनस्तत्र तत्र सिद्ध्यति। न च
30 कार्यमात्रस्य क्वचिद् व्यावृत्तिरिति। न च त्वदभ्युपगतेनैव प्रमाणेन भवितव्यं नान्येनेति नियमोऽस्ति। न च प्रमेयस्य प्रमाणेन व्याप्तिः। सा हि कार्त्स्न्येन वा स्यादेकदेशेन वा स्यात्?। न प्रथमः। प्रत्यक्षाद्यन्यतमासद्भावेऽपि तत्प्रमेयाव-स्थितेः। न द्वितीयः। पुरुषनियमेन सर्वप्रमाणव्यावृत्तावपि प्रमेयावस्थितेः। अनि-यमेनासिद्धेः। न हि सर्वस्य सर्वदा सर्वथाऽत्र प्रमाणं नास्तीति निश्चयः शक्य

इति। कथन्तर्हि चक्षुरादेरभावो निश्चेयः ? व्यापकानुपलब्धेः। चरमसामग्री निवेशिनो हि कार्यमेव व्यापकं, तन्निवृत्तौ तथाभूतस्यापि निवृत्तिः। योग्यमात्रस्य कदाचित् कार्यं, तन्निवृत्तौ तथाभूतस्याऽपि निवृत्तिः। अन्यथा तत्रापि सन्देहः। प्रकृतेऽपि व्यापकानुपलब्ध्या तत्प्रतिषेधोऽस्तु, न। आश्रयासिद्धत्वात्। न हीश्वरस्तज्ज्ञानं वा क्वचित् सिद्धम्। आभासप्रतिपन्नमिति चेन्न। तस्याश्रयत्वानुपपत्तेः। 5
प्रतिषेध्यत्वानुपपत्तेश्च ॥ १ ॥

आमोदः

कुतस्त्वयोग्यपरमात्मेति यदुक्तं तत्र पृच्छति—**परमात्मेति**। द्रव्ययोग्यतायाः सर्वसाधारण्यादिति भावः। तथा च योग्यानुपलब्ध्या तदभावोऽपि निश्चेय इति हृदयम्। **तस्यापीति**। ज्ञानसमवायिकारणत्वं च सर्वेषामेव ग्रहीतॄणामित्यर्थः। मनसः स्वभाव एव तादृशो यदेकात्मग्राहित्वमित्याह—**स्वभाव इति**। **मुक्ताविति**। यद्येकमेव मनः एकात्मग्राहकमिति स्वभावस्तदा मुक्तौ जीवन्मुक्तौ निःस्वभावत्वप्रसङ्गः। तदा बहूनामेव मनसामेकात्मग्राहकत्वात्। यदि पुनरेकं मन एकमेवात्मानं गृह्णातीति स्वभावस्तदा मुक्तौ परममुक्तौ निःस्वभावत्वप्रसङ्ग इत्यर्थः। तदा हि तदात्मनो मोक्षे तदीयमेव मनोऽन्यादृष्टाङ्गं सत् अन्यमात्मानं गृह्णातीति निःस्वभावत्वमेवाह—**तदेकार्थताया इति**। तदेकार्थग्राहकत्वापायादित्यर्थः। **नियामकत्वादिति**। स्वादृष्टाकृष्टमेव मनसः तदितरानुपलब्धिमात्रं संमतमिति स्वात्मग्राहकत्वमिति स्वाभाव्यादित्यर्थः। तदेवाह—**यद्धीति**। **तस्यैवेति**। तन्मात्रग्राहकाण्येवेत्यर्थः। **व्याख्याता**। स्वमात्रवेद्यत्वेनेत्यर्थः। प्रकृतमुपसंहरति। **तदेवमिति**। **तत्रापीति**। तथा चक्षुरादीनामपि विलोपः स्यादिति भयेनेति भावः। **अत इति**। योग्यानुपलब्ध्या शशे शृंगाभावस्यैव निश्चयादित्यर्थः। एतदेव सोत्प्रासं स्फुटयति—**नहीति**। **प्रकृत इति**। परमात्मनीत्यर्थः। अयोग्यमेव शृंगं शशे सिद्ध्येदिति शङ्कते—**अथेति**। सिद्धान्त्याह—**ततः किमिति**। पूर्वपक्षवाद्याह—**तदिति**। इत्यापत्तिमापादयन्तावदाह—**एवमिति**। अपि त्वयोग्यशृंगे प्रमाणमेव नास्तीति भावः। आदिपदान्मृगत्वादिग्रहः। **परसाधनमिति**। परस्य नैयायिकस्य ईश्वरसाधने प्रतिवन्धिः यदीश्वरः सिद्धचेत् शशेऽपि शृंगं सिद्धचेदित्यर्थः। तथा चार्थान्तरमिति भावः। **न तद्बाधन इति**।

न त्वीश्वरसाधने किंचिदनेन दूषणमभिधीयत इत्यर्थः । **तत्रैवेति** । ईश्वरा-नुमान इत्यर्थः । **अथेति** । यथा शशे शृंगं बाधितं तथा परमात्मापि बाधित इत्यर्थः । **अव्याप्तेरिति** । प्रतिबन्धिनामात्माहेत्वाभासो नास्त्येव किन्तु शशशृंगादिसिद्धिर्व्यापिका तन्निवृत्तौ क्षितिकर्तृत्वानुमानमपि निवर्त्तत इति
5 प्रदिवंधिर्दूषणं भवेत्, तादृशी च व्याप्तिर्नास्तीति भावः । व्याप्तिमेव दर्शयति—**नहीति** । **तस्मिन्निति** । शृंगसाधने सति कर्तृत्वसाधनं निवर्त्ते-तेत्यर्थः । तस्मिन् सतीति पाठे तु तस्मिन् सकर्तृत्वसाधने सति तच्छश-शृंगं सिद्ध्येदित्यर्थः । **मिथ इति** । तथा च योग्यानुपलब्ध्या न परमात्मव्यतिरेक-सिद्धिर्येन बाधः स्यादित्यर्थः । अर्थान्तत्वरूपदोषो न साधनदोष इत्या-
10 शयेन पृच्छति—**तथापीति** । शृंगस्य योग्यसंस्थाननियतत्वेन प्रत्यक्षबाध एव स्फुट इति नागरकोक्तिमाश्रित्याह—**नेति** । तथाप्यज्ञानमप्रतिभा वेत्याशयेनाह—**तद्विचारेति** । संशयाभावाद्विचार एव तत्र न प्रवर्त्तत इति भावः । **यत्प्रमाणगम्यमिति** । यदेकप्रमाणगम्यमित्यर्थः । अतो धूमा-भावेऽपि वह्निरिति न व्यभिचारः पूर्वकायविशिष्ट एव कर्तेत्युक्तमिदानीं
15 कायव्यापारविशिष्टः कर्त्तेति विशेषणस्य प्रत्यक्षेण बाधात् विशिष्टस्यापि बाध एवेति योग्यानुपलब्धिरेवोक्ता भवति—**अन्यथेति** । यदि कायव्यापार-मात्रं परमात्मनि प्रमाणं भवेदित्यर्थः । **श्वासेति** । तदेकप्रमाणगम्यत्वं दूषयित्वा उपपत्तिसौकर्य्यादितदुक्तं संस्थानविशेषः शरीरावयवादिसौप्त्यं च जीवित्वलिङ्गं सुषुप्त्याद्यवस्थासु परात्मनि यथा नैकमनुगतं किन्तु क्वचिदिति
20 तथा क्षित्त्यादिकार्यत्वमपीश्वरे प्रमाणमस्तीति न प्रमाणसामान्यनिवृत्ति-रित्युपसंहरन्नाह—**तस्मादिति** । **क्वचिदिति** । सुषुप्त्याद्यवस्थास्वित्यर्थः । ननु कायवाग्व्यापारादन्यत्परमात्मनि प्रमाणं नास्त्येवेत्यत आह—**नचेति** । इदानीं प्रमाणनिवृत्तावपि प्रमेयं न निवर्त्तत इत्याह—**न च प्रमेयस्येति** । येन प्रमाणनिवृत्तौ प्रमेयं निवर्त्तेतेति शेषः । **कार्त्स्न्येनेति** । सकलप्रमाण-
25 सत्त्वे सत्येव प्रमेयसत्त्वमेवंरूपा व्याप्तिरित्यर्थः । **एकदेशेति** । एकदेश-प्रमाणे सत्येव प्रमेयसत्त्वमित्येवंरूपा व्याप्तिरित्यर्थः । **न प्रथम इति** । न हि स्वर्गादौ प्रमेये कृत्स्नानि प्रमाणानि सन्तीत्यर्थः । **एकदेशः** पुरुषापेक्षया प्रमाणापेक्षया वा नाद्य इत्याह—**पुरुषेति** । न हि कस्यचि-त्पुरुषस्य सर्वाणि प्रमाणानि प्रमेयव्याप्तानि व्यभिचारस्योक्तत्वादित्यर्थः ।

यत्र यत्र प्रमेयं तत्र किञ्चित्कस्यचित्प्रमाणस्मस्त्येवेति द्वितीयमाशङ्क्याह—अनियमेनेति। कस्यचित्पुरुषस्य किञ्चित्प्रमाणमस्त्येव तथा चात्मनि प्रमाणनिवृत्तिरसिद्धैवेत्यर्थः। एतदेवाह—नहीति। कथन्तर्हीति। यदि प्रमाणनिवृत्तौ न प्रमेयनिवृत्तिरित्यर्थः। उन्मीलिताक्षस्यालोकरूपसाक्षात्कारएव चक्षुर्व्यापकः। तदभावादेव प्रसन्नान्धस्य चक्षुरभावोऽनुमीयत इत्यर्थः। 5 एवं श्रोत्राद्यभावेऽपि एतदेवाह—चरमेति। तथाभूतस्य चरमसामग्रीनिवेशिनः। योग्यमात्रस्य स्वरूपयोग्यमात्रस्य बीजादेः कदाचिदंकुरोत्पत्त्या तज्जातीये स्वरूपयोग्यत्वं निश्चीयत इत्यर्थः। तन्निवृत्तावपीति। यत्र कदाचिदपि नांकुरः शिलासकलादौ तत्र स्वरूपायोग्यत्वं निश्चीयत इत्यर्थः। यद्येवं भुक्तविनष्टबीजादेरपि स्वरूपयोग्यत्वप्रसङ्गः तथापि 10 तज्जातीयत्वेन तस्यापि स्वरूपयोग्यत्वमिति निश्चय इति भावः। अन्यथेति। यज्जातीयस्य कदाचिदपि कार्यं न दृश्यते तज्जातीये स्वरूपयोग्यतां प्रत्यापाततः सन्देह एवेत्यर्थः। प्रकृत इति। ईश्वरो न कर्त्ता शरीरादिरहितत्वात्। न ज्ञानं नित्यं ज्ञानत्वादित्याद्यनुमानम् ईश्वरानुमाने बाधकमित्यर्थः। आभासेति। असत्ख्यात्युपस्थितमित्यर्थः। तस्येति। ईश्वरे 15 कर्तृत्वं न निषेद्धुं शक्यते निषेधाश्रयस्य प्रमाविषयत्वनियमादित्यर्थः। नन्वीश्वर एव नेष्यते न तु कर्तृत्वं तत्रेत्यत आह—प्रतिषेध्यत्व इति। प्रमितस्यैव प्रतियोगित्वादित्यर्थः ॥१॥

### बोधनी

एवं तावद्योग्यस्यापि स्वात्मनोऽनुपलब्धिकारणमुक्तम्। इदानीं तु कुतस्त्वयोग्यः परमात्मेत्यत्र शङ्कते—स्यादेतदिति। न कथञ्चिदयोग्य इत्यर्थः। न तावत्स्वरूप- 20 योग्यता नास्तीत्याह—न हीति। अयं परमात्मा, स्वयं स्वेन परमात्मनापीति। न च प्रमातृत्वरूपसहकारियोग्यता नास्तीत्याह—नापीति। तद्योग्यता = गृहीतत्वयोग्यतेति। न च करणरूपसहकारियोग्यताविरह इत्याह—नापीति। नन्वस्ति एकाकीयस्य मनसः परमात्मानं प्रत्ययोग्यतेत्याशङ्क्याह—साधारणत्वादीति। सर्वेषां मनसां सर्वात्मनः प्रति साधारणत्वादिति। साधारण्यमेवाह—न हीति। 25 न ह्येकस्यात्मनः सर्वदैकमेव मन इत्यत्र नियमहेतुरस्तीति। नन्वस्ति मनःस्वभाव एव नियामक इत्याह—स्वभाव इति। यदि तदेकात्मसंबन्धित्वमस्य स्वभावास्तर्हि मुक्ता-

त्मनां मनःसम्बन्धाभावात् स्वभावहानिः स्यादित्याह—**मुक्ताविति**। सिद्धान्ती नियम-हेतुमाह—**नेति**। यस्यात्मनो यद्भोजकमदृष्टमसाधारणं तेनोपनीतं मनस्तस्यैव ज्ञानहेतुर्नान्यस्य शरीरादीनामप्यसाधारणादृष्टाकृष्टत्वमेवासाधारण्ये हेतुः, व्युत्पादितं चैतदन्यत्रेति। एतेन मनसोऽसाधारण्येन परात्मवत्परबुद्ध्यादयोऽप्यप्रत्यक्षा इति व्याख्याता
5 इत्याह—**एतेनेति**।

तदेवं "**योग्यादृष्टिः कुतोऽयोग्ये**" इत्येतद् व्याख्यायोपसंहरति—**तदेव-मिति**। द्वितीयं पादं व्याचष्टे—**तदितरेति**। तृतीयं व्याचष्टे—**न हीति**। **किन्तु योग्यानुपलब्ध्येति**। न च प्रकृते परमात्मनीश्वरे योग्यानुपलब्धिरस्तीत्याह—**न चेति**। तस्मान्न प्रतिबन्धिरिति पराशयमाशङ्कते—**अथेति**। यद्ययोग्यस्य शशशृङ्गस्या-
10 नुपलब्धिर्न बाधिका स्यात् ततो बाधकाभावमात्रात् किं तच्छृङ्गं सिध्यति। अयमत्राभि-सन्धिः—अयोग्यानुपलब्धिप्रतिपादनेन बाधकाभावमीश्वरस्य सिध्यति न तु सद्भाव इति। केचित्तु व्याचक्षते यदि शशशृङ्गमप्ययोग्यं तदा तस्यानुपलब्धिर्न बाधिका स्यादिति। उत्तरम्—**ततः किमिति**। बाधकाभावात्किमायातं शशशृङ्गस्येति शङ्कितुर्भावाविष्करणं तत्सिध्येदिति। बाधकाभावादीश्वरवन्न शशशृङ्गं सिध्येदिति। निराकरोति—**एवम-**
15 **स्त्विति**। स्यादेवं यदि शशशृङ्गस्यास्तित्वे प्रमाणं स्यात्, तत्तु नास्ति। न हि वयं बाधका-भावमात्रेणेश्वरमभ्युपगच्छामः किन्तु साधकसद्भावादेवेति भावः। शृङ्गेऽपि प्रमाणमाशङ्कते—**पशुत्वादिकमिति**। शशः शृङ्गवान् पशुत्वात् गवादिवदिति। हन्तैवमश्वारूढो-ऽश्वस्यैवास्मार्षीरित्याह—**परसाधन** इति। प्रथममीश्वरस्यानुपलब्ध्या बाधकमभिधाय तदबाधे शृङ्गस्याप्यबाधः तद्बाधे तस्यापि बाध इति बाधने प्रतिबन्धिमुद्भावयितुमुपक्रान्तः
20 संप्रति परसाधने प्रतिबन्धिमुद्भावयसि परेण हीश्वरसाधने कार्यत्वादिति हेतौ प्रयुक्ते शशोऽपि शृङ्गवान् पशुत्वादित्यादि वक्तुं संगच्छत इति। तर्हि परसाधन एतत्प्रतिबन्धि-र्भविष्यतीत्यत्राह—**तत्रेति**। तदेतद्विकल्प्य निराकरोति—**किं तत्रेति**। यदि कार्यत्वं कर्त्तारं साधयेत पशुत्वमपि शृङ्गं साधयेदिति किं प्रतिबन्धिरेव दूषणं किं वा योग्यानुपलब्ध्या पशुत्वस्येव कार्यत्वादेरपि बाधितविषयत्वमिति येन तस्मिन् व्यापके
25 पशुत्वादेः शृङ्गादिसाधनत्वेऽसति तत्कार्यत्वादेः कर्तृत्वसाधनं व्याप्यभूतं प्रतिषिध्येतेति। **मिथोऽनुपलभ्ये** इति। यदि परात्मादेर्योग्यानुपलब्धिर्बाधिका स्यात् तदा परस्पर-मनुपलभ्यमानयोरेव वादिप्रतिवादिनोः परस्पराङ्गीकारो न स्यादिति। ननु मा भूदिदं परसाधने दूषणं, तथापि शृङ्गसाधनतया प्रयुक्ते पशुत्वादौ को दोष इत्याह—**तथापी-ति**। पृच्छतोऽयमाशयः—य एवात्र दोषः स एवेश्वरानुमाने भविष्यतीति अनवसर-

स्यान्नेदमिह वक्तव्यमित्याह—न जानीमस्तावदिति ।

तदेवं प्रत्यक्षस्य बाधकत्वं निराकृतम्, इदानीं तु व्यापकानुपलब्धिलक्षणमनुमान-मङ्कुरादिषु कर्तृबाधकमाशङ्कते—स्यादेतदिति । तन्नेति । परमात्मन इति शेषः । कायवाग्व्यवहारैकप्रमाणकत्वेऽनिष्टमाह—अन्यथेति । न हि तस्य कायिको वाचिको वा व्यापारोऽस्तीति । निरुद्धपवनः प्राणानायम्य तूष्णीमासीनः । शेषं सुगमम् । यस्मान्न 5 कायवाग्व्यापारैकप्रमाणकः परमात्मा तस्मादेवमङ्गीकर्त्तव्यमित्याह—तस्मादिति । तथापि विश्वकर्त्तुः कथं सिद्धिरित्यत्राह—न च कार्यमात्रस्येति । न वयं कार्यप्रमाणकत्वं चेतनस्याभ्युपगच्छाम इत्यत्राह—न चेति । किं चास्तु स्वदभ्युपगमे तदेव प्रमाणं तथापि तदभावान्नाभावश्चेतनस्येत्याह—न च प्रमेयस्येति । व्याप्त्यभावमेव विक-कल्प्याह—सा हीति । प्रमेयस्यहिप्रमाणव्याप्तिः सर्वैः प्रमाणैरिति प्रमाणकार्त्स्न्येनाभ्युप- 10 गम्येत किं वा येन केनचित्प्रमाणैकदेशेन ? तत्र कृत्स्नप्रमाणव्याप्तौ प्रत्यक्षाद्यन्यतम-निवृत्तावपि प्रमेयं निवर्त्तेत, न चैतदस्ति । द्वितीयेऽपि यदि नियतस्यैकस्य पुरुषस्य तर्ह्येकस्य सर्वप्रमाणविधिनिवृत्तावपि प्रमेयं निवर्तेत, अथानियमेन सर्वेषां न हि तदा सर्वपुरुषाणां यत्किञ्चिदपि प्रमाणं नास्तीति निश्चेतुं शक्यत इति । ननु यदि न प्रमेयस्य प्रमाणव्याप्तिः कथं तर्हि रूपादिज्ञानाभावात्तदेकप्रमाणकस्य चक्षुरादेरभावनिश्चय इत्याह—कथं तर्ही- 15 ति । उत्तरम्—व्यापकेति । न हि तत्रापि प्रमाणाभावादनिश्चयः । किं तर्हि ? व्यापकानुपलब्धेरिति । ननु कथं रूपादिज्ञानं चक्षुरादेर्व्यापकं, न हि कार्यं कारणस्य व्यापकं वैपरीत्यादित्यत्राह—चरमेति । चरमसामग्रीत्वेन निविशमानस्य हि कारणस्य कार्यमेव व्यापकं यथा अन्त्यतन्तुसंयोगस्य पटस्तेन तस्य व्यापकस्य कार्यस्य निवृत्तौ व्याप्यभूतस्यैव कारणस्य निवृत्तिरवसीयते, न तु प्रमाणनिवृत्त्या प्रमेयनिवृत्तिरित्यर्थः । किञ्चित्तु कारण- 20 मस्मिन्सत्येव भवति नासतीति कार्यं प्रति योग्यतया निविशते यथा तन्त्वादयस्तस्यापि कदाचिद्भवत्कार्यं व्यापकं न हि सर्वदा कार्यानन्वितं कारणमिति शक्यं वक्तुम् । तस्मात्तस्य कदाचित्कस्यापि कार्यस्य निवृत्तौ तथाभूतस्य योग्यतयानिष्टस्यापि निवृत्तिः । अन्यथे-ति । यदि विधानद्वयमपि चक्षुरादौ नास्ति तदा रूपादिज्ञानाभावान्न तत्राप्यभावनिश्चयः किंतु संदेह एव स्यादिति । यद्वा, योग्यतामात्रस्य कदाचित् कार्यं न तु व्यापकं तेन 25 कारणस्य निवृत्तौ कदाचित्कस्यापि कार्यस्य निवृत्तिस्तद्व्यतिरेकेणास्य निवृत्तिरन्यथा कार्यनिवृत्तौ तत्रापि कारणेऽपि संदेहो नाभावनिश्चय इति । केचित्तु न तन्निवृत्तौ तथाभूतस्यापि निवृत्तिरिति नञ्प्रश्लेषेण पठन्ति । तत्रायमर्थः । ननु चरमसामग्रीनिवेशिन इति विशेषणं योग्यस्येत्येवोच्यतामित्यत्राह—योग्यतामात्रस्येति । तस्य कार्यं न

व्यापकम् । तस्मात्कार्यनिवृत्तौ योग्यतामात्रस्यननिवृत्तिः । अन्यथेति । चक्षुरादेश्चरम-सामग्रीनिवेशाभावे तत्रापि नाभावनिश्चयः, संदेह एवेति ।

चक्षुरादिवत्प्रकृतेऽपीश्वरे व्यापकस्य प्रयोजनादेरनुपलब्ध्या व्याप्यस्य कर्त्तुः प्रति-षेधोऽस्तु न प्रमाणाभावेनेत्याह—**प्रकृतेऽपीति** । नेति । प्रतिषेधादिकरणस्यासिद्धि-5 मेवाह—**न हीति** । न ह्यनाश्रय एव सर्वकर्तृत्वस्य विषयत्वस्य वा प्रतिषेधः संभवतीति **आभास** इति ॥ तेनाश्रयत्वोपपत्तिरिति । नेति । न परमाभासप्रतिपन्नस्या-श्रयतानुपपत्तिः । प्रतिषेधप्रतियोगित्वं च नोपपद्यत इति ॥ १ ॥

विवेकः

तत्तदाऽऽत्मग्राहकता नियमेनापि मनोऽवैभवं व्यवस्थापयिष्यन् प्रत्यात्मनियमाद् भुक्तेरिति कारिकार्द्धं व्यचिख्यासुः शङ्कामवतारयति—**स्यादेतदिति** । असौ परात्मा 10 स्वयमपि परस्यापि । अपराधः आत्मविषयकसाक्षात्कारजननायोग्यता । तस्यापि ग्रहीतुरपि **तद्योग्यता** आत्मसाक्षात्कारजननयोग्यता सा चाविशिष्टैवेति स्वात्मवत् परात्मनोऽपि ग्रहणप्रसङ्ग इति भावः । ग्रहीतुर्ग्राह्यत्वाभिमतपरकीयात्मनः अपबाधः । साक्षात्कार-प्रतिबन्धकात्मत्ववत्त्वं, **तस्यापि** परत्मनोऽपि ज्ञानसमवायित्वं स्वसाक्षात्कारजनकता तद्विषयतेति यावत् । अत एव तद्योग्यता नात्मस्वरूपप्रतिबन्धकवत्तेति केचित् । करण-15 स्यात्मसाक्षात्कारजनकस्य मनसः अयमवराबाध इत्यनुषज्यते । तस्य परात्मगोचर-साक्षात्कारजननासामर्थ्यमर्थः । **साधारणत्वादिति** । निखिलमनसामेव निखिला-नुग्रहसामर्थ्यवत्त्वादित्यर्थः । साधारण्ये युक्तिमाह—**नहीति** । तथा च नियामका-भावादेव साधारण्यमिति भावः । शङ्कते—**स्वभाव इति** । आत्ममात्रगोचर-साक्षात्कारजनकत्वं मनोविशेषस्वभावः । अभावे च न नियमाकान्तरापेक्षेति भावः । 20 **मुक्ताविति** । तदा तद्गोचरज्ञानजनने निःस्वभाववत्त्वोपपत्तेः । स्वभावस्य तु यावद्वस्तु-भावित्वादिति । मुक्तिस्तु आत्मगोचरसाक्षात्कारजननाभावकालोपलक्षणम् । तदेकात्मतया-तदेकात्मगोचरसाक्षात्कारजननस्य, यद्वा एवमेव मन एकात्मग्राहकं तथा च मनोऽन्तर-ग्राह्य एव आत्मान्तरे स्वात्मग्राहकस्य मनसो न सामर्थ्यमिति स्वभावादेव नात्मान्तरग्रह इति शङ्कते—**स्वभाव इति** । मुक्तौ जीवन्मुक्तौ निःस्वभावत्वप्रसङ्गात् । कुत इत्यत 25 आह—**तदेकेति** । एकस्यात्मनो नानामनोग्राह्यत्वाभावस्यापायादित्यर्थः । तदा नानामनसामेव तत्तच्छरीरावच्छेदेन ज्ञानजनकत्वादिति भावः । **आकृष्टानीति** । न च तद्वैभवे तदाकर्षणसंभव इति भावः । नचादृष्टविशेषस्य संबन्धतयैवाकर्षणमिति

वाच्यम् । एकस्यैव विभुमनसो निखिलात्मसम्बन्धितया अतिप्रसङ्गस्य दुरुद्धरत्वादिति तदुक्तमिति । अदृष्टाभावे च केनाकर्षणं नियामकमिति भावः । यच्छरीरं यानीन्द्रियाणीति दृष्टान्तार्थम् । तेनाप्यतिप्रसङ्गवारणशक्यतोपदर्शनाय वोपात्तम् । अदृष्टविशेषस्यैव तदीयतानियामकत्वाच्च कामिन्यादिशरीरस्यापि भोक्त्रदृष्टाकृष्टत्वात् न तदीयतेति ध्येयम् । **परबुद्ध्यादय इति** । तत्रापि स्वाश्रयादृष्टाकृष्टत्वस्यैव नियामकत्वमिति भावः । तथा च भगवद्बुद्ध्यादेर्न योग्यानुपलब्ध्या बाध इति । स्वासमवेतं ज्ञानादिकमेव साक्षात्कारसामान्यप्रतिबन्धकम् तदसमवेतान्यविशेषो वा तथा इतो न परात्मसाक्षात्कारः सामानाधिकरण्येन तेषां स्वासमवेतसाक्षात्कारे तथात्वाच्च न ज्ञानादीनां साक्षात्कारः । आत्मत्वद्रव्यत्वादिकञ्च न स्वासमवेतमिति तत्साक्षात्कार इत्यपि वदन्ति । तदितरानुपलब्धिमात्रं न बाधिका नाभावग्राहिका, अयोग्ययानुपलब्ध्या निषेधति नास्तीति प्रतिपद्यते । प्रकृते परात्मपरबुद्ध्यादौ ततोऽनुपलब्धिमात्रस्य बाधकत्वे किं = का क्षतिः । शङ्कते—**तदिति** । अयोग्यं शृङ्गं शशे सिद्ध्येत् । **यदीति** । तथा च नास्त्येव प्रमाणम् कुतस्तत् सिध्येदिति भावः । प्रमाणं शङ्कते—**पशुत्वादिकमिति** । प्रमाणमस्तीत्यनुषज्यते । **परेति** । परस्य नैयायिकस्य कार्यत्वादिभिर्यदि ईश्वरसाधनम् तत्र प्रतिबन्धिस्तद्दृष्टान्तेन त्वया साधनान्तरमुक्तं तच्चार्थान्तरग्रस्तमित्यर्थः । न तथा साधने परसाधनबाधने अनेन तत्र दोषानाधानादिति भावात् । तत्रैव परसाधनबाधन एव तथा च नार्थान्तरमिति भावः । **प्रतिबन्धिरेवेति** । दूषणान्तरस्य तेनाधातुमशक्यत्वात् । सैव दूषणं तत्र तद्दृष्टान्तेन शृङ्गदृष्टान्तेन कथञ्चित् शृङ्गपरात्ममात्रवृत्तिधर्मेण परात्मबुद्ध्यादयो योग्यायोग्यतया साध्यन्ते तथा च योग्यानुपलब्ध्यैव ते परबुद्ध्यादयो बाधिताः । क्षित्यादावनुमाने को दोष इत्याशंकायामाह—**अपहृतविषयत्वमिति** । तस्मिन् पशुत्वादेः शृङ्गादिसाधकत्वेऽसति तदभावादिति यावत् । तत्कार्यत्वादेः कर्तृमत्त्वसाधकत्वम् व्यापकाभावेन व्याप्याभावावश्यकत्वादिति भावः । **मिथ इति** । तथा च तेन तत्र योग्यत्वसाधने बाध इति भावः । **चिन्तयिष्याम इति** । शृङ्गत्वस्य योग्यसंस्थानविशेषव्यंग्यतया योग्यत्वनियमेन बाध एव तत्र दोष इत्यादि ।

ननु मास्तु प्रत्यक्षबाधः व्यापकानुपलब्धिबाधस्तु स्यादित्याशङ्कते **स्यादेतदिति** । **यत् प्रमाणगम्यम्** यदेकप्रमाणगम्यम् । तेन धूमाभावेऽपि न वह्न्यभावसिद्धिः । रूपादेरित्यादिपदात् रसादिपरिग्रहः । सत्यांचेतरसामग्र्यामित्यपि बोध्यम् । तेनालोकाद्यसमवधानरूपाद्यप्रतिपत्तौ न व्यभिचारः । अन्यथा परात्मनो वाग्व्यापारादि-

व्यवहारैकप्रमाणकत्वे तत्र परात्मनि एवमग्रेऽपि। **कार्यमात्रस्येति**। कारकमधिकृत्य नो चेत् प्रमाणमात्रस्येति वाच्यम्। न च न वा कार्त्स्येन कृत्स्न-प्रमाणेन एकदेशेन यत्किंचित् प्रमाणेन प्रमाणत्वरूपेण प्रमाणेनेति वा **पुरुषेति** यत्किंचित्पुरुषीयप्रमाणसामान्यव्यावृत्तावपि। अनियमेन पुरुषविशेषानियन्त्रितप्रमाण-
5 सामान्याव्यावृत्तेः। व्यापकानुपलब्धेः व्यापकाभावोपलब्धेः। किन्तद्व्यापकमित्यत्राह—**चरमेति**। स्वोत्तरभाविकारणानपेक्ष इत्यर्थः। एतच्च व्याप्तिग्रहोपयोगिसामग्री-विशिष्टत्वमेव च। प्रकृतोपयोगिसामग्रीपदं कारणमात्रपरं वा। तथा च चरमकारणत्वविशिष्ट-त्वलाभः। योग्यमात्रस्य योग्यतावच्छेदकत्वविशिष्टस्य कदाचित्कार्यं कार्यतावच्छेद-कावच्छिन्नोपहितवृत्तित्वं **व्यापकमिति** प्राक्तनमनुषज्यते। योग्यमात्रस्य नित्यत्वे
10 सति योग्यस्य कार्यं फलोपधानं यथाश्रुते फलानुपहितबीजादिसत्त्वाद् व्यभिचारः। अन्यथा निरुक्तकार्यनिवृत्त्यनिश्चये सन्देहः तन्निवृत्त्यनिश्चयः। **प्रकृतेऽपीति**। ईश्वरो न कर्त्ता सुखादिशून्यत्वात्। ईश्वरसमवेतं न ज्ञानं नित्यत्वात्। ईश्वरज्ञानं न प्रत्यक्षमिन्द्रिया-जन्यत्वादित्यादौ क्वचिदित्यस्य चरम इति शेषः। **आभासेति**। असत्ख्यात्युपस्थित-मित्यर्थः। तस्य असत्ख्यात्युपनीतस्य आश्रयत्वानुपपत्तेः। कर्तृत्वाभावसाध्यकानुमाने
15 पक्षत्वानुपपत्तेः। ननु मास्तु तथा, क्षितिपक्षकेश्वरकर्तृकत्वाभावसाध्यकमनुमानं स्या-दित्यत्राह—**प्रतिषेध्यत्वेति** ॥ १ ॥

**व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता ॥**
**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता ॥ २ ॥**

न चैतदाभासप्रतिपन्नस्यास्तीति कुतस्तस्य निषेधाधिकरणत्वं निषेध्यता वेति।
20 कथं तर्हि शशशृङ्गस्य निषेधः? न कथञ्चित्। स ह्यभावप्रत्यय एव। न चायम-पारमार्थिकप्रतियोगिकः परमार्थाभावो नाम। न चापारमार्थिकविषयं प्रमाणं नामेति[1] ॥ २ ॥

अपि च—

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ॥**
25 **न तस्यां नोपलम्भोऽस्ति नास्ति साऽनुपलम्भने ॥ ३ ॥**

केन च शशशृङ्गं प्रतिषिध्यते? सर्वथाऽनुपलब्धस्य योग्यत्वासिद्धेः। तदि-तरसामग्रीसाकल्यं हि तत्। ननूक्तमाभासोपलब्धं हि तत्। अत एवाशक्यनिषे-

---

१. अपारमार्थिकविषयं प्रमाणं तथा नामेति बोधिनीसम्मतः पाठः।

धमित्युक्तम्। अनुपलम्भकाल आभासोपलम्भसामग्र्या अभावात्तत्काले चानुपलम्भाभावादिति। कस्तर्हि शशशृङ्गं नास्तीत्यस्यार्थः ?। शशे अधिकरणे विषाणाभावोऽस्तीति ॥ ३ ॥

आमोदः

आश्रयः प्रतियोगी च द्वयमपि प्रमितमेवाभावनिरूपकमिति कुत एतदित्यत आह— 5

**व्यावर्त्त्येति** । व्यावर्त्यो निषेध्यस्तदभाववत्तेत्यर्थः । **भाविकी** । स्वाभाविकी । अभावविरहात्मत्वमभावविरहत्वस्वाभाव्यमित्यर्थः । तथा चोभयं प्रमितमेव वाच्यमित्यायातमिति भावः । न चाशरीरकर्तृत्वज्ञानमीश्वरानुमितिरयथार्थेति साध्यमिति वाच्यम् अयथार्थाद्याभासाधीनमननेन ज्ञाप्यं तत्राभासनिरासादयथार्थ्यं बाधितमिति । **न चैतदिति** । विशेष्यत्वं भाविकप्रतियोगित्वं चेत्यर्थः । शशशृङ्गस्य=शशीयशृङ्गस्य । **स हीति** । स यतोऽभाव प्रत्यय एव त्वया वाच्यः । तस्य च प्रतियोगिकत्वव्यवस्थापनादित्यर्थः । ननु शशशृङ्गमपि प्रामाणिकमस्तु को दोष इत्यत आह—**न चेति** । किञ्च योग्यानुपलब्ध्याऽभावः प्रतीयते ॥२॥ 10

सा च तत्तद्व्याप्येतेरेत्यादिरूपा प्रकृते च शशशृंगादिप्रमापकं नास्त्येवेत्याह—**अपिचेति** । 15

**दुष्टा**—दोषघटितोपालम्भसामग्री शशशृंगादेर्योग्यता वाच्या, तस्यां सत्यांमुपालम्भो नास्ति, अनुपलम्भे च दोषघटिता सामग्री नास्तीति क तत्र योग्यानुपलब्धिरित्यर्थः ।

**केन चेति** । कीदृशेनानुपलम्भनेत्यर्थेनायोग्यानुपलब्धेन । अनुपलम्भमात्रन्त्वतिप्रसक्तमितिभावः । **केन चेति** । अपि तु न केनापीत्यर्थ इत्येके । **तदितरेति** । तत्तद्व्याप्येत्यर्थः । अशक्यनिषेधत्वमेवाह—**अनुपलम्भकाल इति** । **कस्तर्हीति** । यदि तत्प्रतिषेद्धुन्न शक्यते इन्यर्थः । **शश इति** । तथा चाधिकरणस्य प्रतियोगिनश्च प्रमितत्वमेवेति भावः ॥ ३॥ 20

बोधनी ।

उभयोरप्यनुपपत्तिमुपपादयति **व्यावर्त्त्येति** । व्यावर्त्यस्य = निषेध्यस्य । अभाववत्ता = तत्संबन्धिता । भाविकी = पारमार्थिकी । विशेष्यता नामाभावाधिकरणतेति । 25

यावत्पारमार्थिकी चाभाववत्ता पारमार्थिकस्यैव भावस्य न चाभासप्रतिपन्नस्येति भावः। निषेध्यस्य प्रतियोगिनः परमार्थतोऽभावविरहात्मत्वं हि प्रतियोगिता निषेध्यत्वमिति यावत्, न चैतदप्याभासप्रतिपन्नस्यास्तीति। यथाहुः "लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिद्ध्यते" इति। **न चैतदिति**॥ विशेष्यप्रतियोगिनोर्दर्शितं रूपमिति।
5 **कथं तर्हीति**। यद्यसिद्धस्यैतन्नास्तीति। उत्तरं **न कथञ्चिदिति**। शशशृङ्गप्रतियोगिको निषेधो न कथञ्चित्संभवतीति। कुत इत्यत्राह **स हीति**। स हि निषेधोऽभावप्रत्यय एव प्रतीयते। **नेति**। प्रत्ययः प्रमाणं प्रमाणत्वेनैव, स हि निषेधोऽभ्युपगम्यत इत्यर्थः। ततः किमित्यत्राह **न चेति**। मा भूदभावः पारमार्थिकः, ततोऽपि किमित्यत आह **तथेति**। न चेत्यनुषञ्जनीयमिति ॥२॥

10 न केवलमाभासप्रतिपन्नस्य पारमार्थिकप्रतिषेधप्रतियोगित्वमेव नास्ति प्रतिषेधमात्रविषयत्वमपि न संभवतीत्याह **अपि चेति**। यद्यपि तदतिरिक्तसामग्रीसाकल्यमेव योग्यता, तथापि कल्पितस्य शशशृङ्गस्य दुष्टैव सामग्री योग्यता, अन्यथोपलम्भस्याप्यदुष्टत्वेनोपलम्भस्यापि तात्त्विकस्य प्रसङ्गात्। ततः किम्? तस्यां तादृश्यां योग्यतायां सत्यां शशशृङ्गादेर्नानुपलम्भोऽस्ति, अपि तूपलम्भ एव स्यात्तस्या आभासोपलम्भव्याप्तेः,
15 अत एवानुपलम्भकाले योग्यता नास्ति।

तस्माद्योग्यतानुपलम्भयोरेकतरसन्निधानेऽन्यतरस्याभावात् समुदायसाध्यमभावावधारणं दुष्करमिति व्याख्यातुमुपक्रमते **केनेति**। योग्यानुपलम्भेनेति चेत्त्राह **सर्वथेति**। कदाचिदुपलम्भे ह्यन्वयव्यतिरेकाभ्यां शक्यज्ञाना सामग्रीति। **आभासेति**। तेन सर्वथानुपलब्धिरसिद्धेति। तदुत्तरत्वेन श्लोकार्धं विवृणोति **अत एवेति**। **कस्तर्हीति**।
20 यद्यशक्यनिषेधम् इति। सुहृद्भावेनाह **शशेति**। प्रमाणसिद्धमेव विषाणं निषिद्ध्यते न त्वाभासप्रतिपन्ने तादृशमेवेति ॥ ३ ॥

विवेकः

उभयानुपपत्तिः कुत इत्यपेक्षायामाह—**व्यावर्त्येति**।

व्यावर्त्यं प्रतिषेध्यं तस्य योऽभावस्तस्य भाविकी पारमार्थिकी या तद्वत्ता सैव तस्य विशेष्यता तत्साध्यकानुमानाश्रयता नचासति भाविकी सत्तेति भावः। अभावविरहात्मत्वम्
25 अभावाभावत्वं तेन नात्यन्ताभावप्रतियोगितावच्छेदकेऽतिव्याप्तिः। तादात्म्यसम्बन्धेन प्रतियोगिनोऽपि अन्योऽन्याभावाभावत्वात् तत्प्रतियोगिनि नाव्याप्तिः। संसर्गाभावप्रतियोगितैव लक्ष्येत्यपरे। तज्ज्ञानप्रतिबन्धकज्ञानविषयत्वविरहत्वमित्यपरे। वस्तुतस्तु

---

१—क. प्रमाणसिद्धं शशाधिकरणत्वेन प्रमाणासिद्धमेव।

स्वरूपसम्बन्धविशेष एवानेनोपलक्षित इति नात्माश्रयाद्यवकाशः इति ध्येयम्। वस्तुन इति सावधारणम्। उत्तरं न **कथञ्चिदिति**। स ह्यभावप्रत्यय अत्र परमार्थसत्प्रतियोगिकाभावस्यैव प्रत्यय इत्यर्थः। अभावस्य पारमार्थिकत्वेनासत्प्रतियोगिकत्वसंभवः। सदसतोः सन्बन्धस्य त्वयाप्यनभ्युपगमादित्याह—**न चेति**। **न चापरमार्थेति**। अपरमार्थविषयकत्वेन प्रमाणत्वं नचाप्रमाणाद्वस्तुसिद्धिः। तद्विषयकत्वे तु सतो 5 नासत्प्रतियोगिकत्वं प्रामाणिकमिति भावः ॥२॥

ननु कर्तृत्वेन संसारित्वस्य संसारिभिन्नत्वेन कर्तुर्वा नित्यत्वेन ज्ञानस्य ज्ञानत्वेन नित्यस्य वा अभावसिद्धिरेव तद्बचाप्रतिबन्धिका बाधिका स्यादित्याशङ्क्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावे बाधकमाह—**अपि चेति**।

असत्प्रतियोगिकाभावे बाधकमाह—अपि चेति अन्ये। असत्प्रतियोगिताकाभावा- 10 चत्र दोषान्तरमाह—**अपि चेति प्रकाशः**।

शशश्रृङ्गादियोग्यता शशीयत्वेन यः श्रृंगस्याभावो गवि गृह्यते तत्र यानुपलब्धौ विशेषणभूता प्रतियोगितद्व्याप्येतरप्रतियोगितावच्छेदकप्रकारेण प्रतियोग्युपलम्भकसामग्री सा दोषघटितैव त्वया वाच्या तस्यां दोषघटितायां तादृशसामग्र्यां नोपलम्भः प्रतियोगितावच्छेदकप्रकारेण प्रतियोगिनोऽनुपलम्भः नास्ति तथा चानुपलब्धिरेवास्ति कं विशेषणी- 15 कृता योग्यता स्यादिति भावः। अनुपलम्भे प्रतियोगितावच्छेदकरूपेण प्रतियोगिनोऽनुपलम्भे सति नास्ति सा दोषघटिता तादृशोपलम्भसामग्री तथा च योग्यता नास्ति। न च तद्रहितानुपलब्धिरभावग्राहिकेति प्रागेव व्यवस्थापितमितिभावः। एवमसत्प्रतियोगिताकाभावं प्रत्यपि बोध्यम्।

कारिकां विवृणोति—**केन चेति**। कया सामग्र्या चेत्यर्थः। प्रकाशकारस्तु न 20 केनापीत्यर्थः। अनुपलब्धस्य शशीयत्वेनानुपलब्धस्य श्रृङ्गस्य सतः शशश्रृङ्गस्यासत्ख्यातिसिद्धस्य वा योग्यतासिद्धेः। प्रतियोगितावच्छेदकत्वविशिष्टप्रतियोग्युपलब्धिं विना तदुपलम्भकाप्रसिद्ध्या योग्यत्वासिद्धेः। इदमुपलक्षणम् अभावोपलब्धौ प्रतियोगितावच्छेदकविशिष्टोपलम्भस्य हेतुत्वात् तं विना तदनुपपत्तेः। न वा तथोपलम्भाप्रसिद्धौ तदभावसम्भव इति मिश्राः। **तदितरेति**। प्रतियोगितद्व्याप्येतरप्रतियोगिता- 25 वच्छेदकावच्छिन्नोपलम्भकारणसाकल्यमित्यर्थः। साकल्यपदं वा समवधानपरम् तद्योग्यत्वम्। **नन्विति**। तथा च सर्वथानुपलम्भत्वमेवासिद्धमिति भावः। **उत्तरमत एवेति**। यदि च शशीयतया श्रृङ्गं नास्तीति स्वरसवाही प्रत्ययस्तदा सर्वानुपपत्तिपरिक्रियैव

सामग्री कल्पयिष्यत इति तु नव्याः। असत्ख्यातिनिरासाच्च नासत्प्रतियोगिकाभावः सम्भव इति तु ध्येयम् ॥३॥

स्यादेतत्। यद्यपीश्वरो नागवतो, यद्यपि च नाभाससिद्धेन प्रमाणव्यवहारः शक्यसम्पादनः, तथाप्यात्मानः सिद्धास्तेषां सार्वज्ञ्यं निषिध्यते, क्षित्यादिकर्तृत्व-
5 ञ्चेति। तथाहि—मदितरे न सर्वज्ञाश्चेतनत्वादहमिव, न च ते क्षित्यादिकर्त्तारः पुरुषत्वादहमिव। एवं, वस्तुत्वादेरपीति। तदेतदपि प्रागेव परिहृतम् ॥ तथाहि—

**इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे ॥**
**नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा ॥ ४ ॥**

प्रमाणेन प्रतीतानां चेतनानां पक्षीकरणे सिद्धसाधनम्। ततोऽन्येषामसिद्धौ हे-
10 तोराश्रयासिद्धत्वम्। आत्मत्वमात्रेण सोऽपि सिद्ध इति चेत्। कोऽस्यार्थः?। किमात्मत्वेनोपलक्षिता सैव वस्तुगत्या सर्वज्ञविश्वकर्तृव्यक्तिः, अथ तदन्या, आत्मत्वमेव वा पक्षः?। सर्वत्र पूर्वदोषानतिवृत्तेः। अथायमाशयः—आत्मत्वं न सर्वज्ञसर्वकर्त्तृव्यक्तिसमवेतं, जातित्वात्, गोत्ववदिति। तदसत्। निषेध्यासिद्धेर्निषेधस्याशक्यत्वात्। तथा चाऽप्रसिद्धविशेषणः पक्ष इत्याश्रयासिद्धिरिति स एव दोषः ॥४॥

आमोदः

15 उक्तसंकलनाय वृत्तं कीर्त्तयति **यद्यपीति**। दृष्टान्तलाभार्थमाह—**मदितर इति**। **न सर्वज्ञा इति**। किञ्चिदनभिज्ञा इत्यर्थः। अन्यथा मीमांसकमते साध्याप्रसिद्धेरिति। न चात्मत्वमसर्वज्ञत्वव्याप्यं ज्ञानत्वमनित्यत्वव्याप्यमित्यादिप्रकारेण सत्प्रतिपक्षत्वं विपक्षे बाधकाभावात्। प्रसिद्धानामात्मनां पक्षत्वे सिद्धसाधनमित्याह—**इष्टेति**। ईश्वरपक्षत्वे हेतोराश्रयासिद्धिः
20 इत्याह—**हेत्वसिद्धिरिति**। अगोचरेऽनुपस्थिते गोचरतादशायां बाध एवेतिभावः। **नान्येति**। आत्मत्वेनाप्रसिद्ध एव पक्षस्तदाश्रयासिद्धिः। अथ सिद्धा एव तदा सिद्धसाधनमित्यर्थः। **जातावपीति**। आत्मत्वं सर्वज्ञवृत्तिः इति कृतेऽपि साश्रयासिद्धिस्तथैव पूर्वन्यायेनैव सर्वज्ञवृत्तित्वस्य निषेध्यस्याप्रसिद्धौ सन्देहसिषाधयिषयोरभावात् आश्रयासिद्धिरेवेत्यर्थः। **सर्वत्रेति**। यदि
25 सैवास्मदभिमतैव सिद्धा तदा बाधस्तदन्या चेत्तदा सिद्धसाधनम्। आत्मत्वं न सर्वज्ञमित्यत्रापि सिद्धसाधनमेवेत्यर्थः। जातावपि तथैव सेति प्रकारान्तरेण योजयितुमाह **अथायमिति**। आगमश्च लोकश्चेत्यागमलोकौ। यद्वा आगमस्य

लोकः समूहः। आगमो यदि प्रमाणं तदा ईश्वरो न सर्वज्ञ इत्यादौ धर्मिग्राहकमानबाध एव। अथ न प्रमाणं तदा नेश्वरधर्मिसिद्धिरित्याश्रयासिद्धिरित्यर्थः ॥४॥

बोधनी

प्रकृतेऽपि प्रमाणसिद्धं निषेधाधिकरणं दर्शयन्नाह। **स्यादेतदिति**। तस्यामेव प्रतिज्ञायां वस्तुत्वद्रव्यत्वादयोऽपि हेतव इत्याह **एवमिति**। यथाहुः— 5

"प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च।
अभावकरणे शक्तं को नु तं कथयिष्यति"॥ (श्लो० वा० पृ० ८५)।

एतदप्याश्रयासिद्धत्वादिना दत्तोत्तरमित्याह **तदेतदिति**।

तदेव विकल्प्योपपादयति **इष्टसिद्धिरिति**। उभयवादिसिद्धेषु पक्षीकृतेषु सिद्धसाधनं तेषामसर्वज्ञत्वासर्वकर्तृकत्वयोः अस्माकमपि सिद्धत्वात् भवतामगोचरेऽपीश्वरे 10 पक्षीकृते हेतोराश्रयतोऽसिद्धिः। नन्वात्ममात्रे पक्षीकरणे सोऽपि तन्मात्रतया गृह्यत इत्यस्ति सामान्यतः सिद्धिरित्यत उक्तम् **नान्या सामान्यतः सिद्धिरिति**। उभयसिद्ध्यनुभयसिद्धिभ्यामन्यतः सिद्धिर्नाम न काचिदस्ति। न ह्युभयीमपि विधामतिक्रम्य विधान्तरमस्ति।

आत्मत्वजातावपि पक्षीकृतायां यथेष्टसिद्ध्या पक्षत्वातिपातेनाश्रयासिद्धिः तथा 15 सैवाश्रयासिद्धिः स्यात्। निषेधस्य सर्वज्ञत्वादेः क्वचिदप्यसिद्धेरप्रसिद्धविशेषणत्वात्पक्षस्येति व्याचष्टे **प्रमाणेनेति**। तृतीयं पादं व्याचिख्यासुः शङ्कते **आत्मत्वमात्रेणेति**। विकल्प्य दूषयति **कोऽस्यार्थ इति**। भवतोऽसिद्धाप्यस्मदभिमतैव सर्वज्ञसर्वकर्तृव्यक्तिरात्मत्वेनोपलक्षिता कं पक्षीक्रियेत तस्या अप्यात्मत्वोपलक्षितत्वेन वस्तुगत्या सिद्धत्वात्। अथ तदन्या संप्रतिपन्नैव व्यक्तिः, अथ वात्मत्वमात्रमेव। प्रथमे हेत्वसिद्धिगोचर 20 इति स्यात्। द्वितीयेत्विष्टसिद्धिरिति स्यात्। तृतीयेऽपि सैव, आत्मत्वस्यासर्वज्ञत्वासर्वकर्तृकत्वयोः सिद्धत्वादिति। तुरीयपादं व्याचिख्यासया शङ्कते **अथायमिति**। तत्राश्रयासिद्धिसिद्धसाधने न स्यातामिति भावः। **तदसदिति**। न हि मीमांसकस्य सर्वज्ञत्वादिकं क्वचित्सिद्धमिति। किमतोऽनुमानस्येत्यत आह **तथा चेति**। साध्यविशिष्टस्य पक्षत्वाद् विशेष्याप्रसिद्धाविव विशेषणाप्रसिद्धावपि विशिष्टस्यासिद्धेराश्रयस्य 25 पक्षस्याभावेन हेतुराश्रयासिद्धो भवतीति ॥ ४ ॥

विवेकः

**सर्वज्ञत्वमिति** । अत्र प्रमेयत्वाव्यापकविषयताप्रतियोगिज्ञानवत्त्वं साध्यमतो नासिद्धिः । एवं क्षित्यादिकर्तृत्वप्रतिषेधस्यापि क्षित्याद्यविषयककृतिमत्त्वे तात्पर्यम् । अतएव चेतनत्वपर्यन्तहेत्वनुधावनमिति ध्येयम् । पुरुषत्वादात्मत्वात् । **एवमिति** । अत्र च ज्ञानाभाववत्त्वं साध्यमनुसन्धेयम् । न च नित्यज्ञानादिमति भगवति भवता तथाऽभ्युपेयत इति भावः । 5 **तदेतदिति** । प्रसिद्धात्मातिरिक्तस्यात्मत्वेन पक्षीकरणे प्रागुक्तो दोषोऽसत्ख्यात्याऽसम्भवरूपस्तेनैवेदम् परिहृतम् परिहृतप्रायम् ।

अस्फुटमर्थं कारिकया संगृह्य स्फुटयति ।

**इष्टेति** । प्रसिद्धेंऽशे प्रसिद्धेष्वात्मसु इष्टसिद्धिः सिद्धसाधनम् । भवन्मते प्रमाणागोचरे भगवति हेत्वसिद्धिः । उक्तानां हेतूनां पक्षवृत्तित्वेनाज्ञानरूपासिद्धिः । 10 ननु विशिष्य तदसिद्धावपि आत्मत्वेन सामान्येन सिद्धे तस्मिन् हेतुसिद्धिर्भविष्यतीत्याशङ्कयाह—**नान्येति**। सा सिद्धिर्यदि प्रमारूपा तदा तत एवेश्वरसिद्धिरसत्ख्यातिश्चेत्, न सल्लिङ्गपरामर्श इति कुतः साध्यप्रमाणं वाऽसत्ख्यातिरपि प्रामाणिकीति भावः । नन्वात्मत्वं पक्षयित्वा ज्ञानाद्यभाववत्त्वं साध्यन्तत्राह—**जातावपीति** । तथैव प्रसिद्धात्मपक्षकत्व एव सा इष्टसिद्धिः । यदि च सर्वज्ञक्षित्यादिकर्त्रसमवेतत्वं साध्यते तदा सा 15 हेत्वसिद्धिः हेतोः कारणस्य साध्यप्रसिद्धिरूपस्य साध्याप्रसिद्धया तद्व्याप्यत्वेन हेतोरज्ञानरूपा स्वरूपासिद्धिर्वा । **ततोऽन्येषामिति** । प्रयोगबाहुल्येन बहुवचनमतएवाग्रे **सोऽपीति** वक्ष्यति । तदन्या संसार्यात्मव्यक्तिः । **आश्रयासिद्धिरिति** । साध्यसन्देहरूपायाः पक्षतायाः साध्याप्रसिद्धया अभावेन पक्षताविरहादाश्रयासिद्धिः । स एव हेतोः पक्षताविशिष्टवृत्तित्वरूपो दोषः ॥४॥

त्वदुपगतागमप्रसिद्धस्यैवेश्वरस्यासर्वज्ञत्वमकर्तृत्वञ्च साध्यते इति चेन्न ।

20

**आगमादेः प्रमाणत्वे बाधनादनिषेधनम् ॥**
**आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धता ॥ ५ ॥**

निगदव्याख्यातमेतत् ॥ ५ ॥

चार्वाकस्त्वाह, किं योग्यताविशेषाग्रहेण ? । यन्नोपलभ्यते तन्नास्ति, विपरीतमस्ति । न चेश्वरादयस्तथा । ततो न सन्तीत्येतदेव ज्यायः । एवमनुमानादिविलोप 25 इति चेत् । नेदमनिष्टम् । तथा च लोकव्यवहारोच्छेद इति चेन्न । सम्भावनामात्रेण तत्सिद्धेः । संवादेन च प्रामाण्याभिमानादिति ।

---

१. त्वदभ्युपगमलोकप्रसिद्धया च

अत्रोच्यते—

**दृष्टयदृष्टयोः क्व सन्देहो भावाभावविनिश्चयात् ॥**
**अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम् ॥ ६ ॥**

सम्भावना हि सन्देह एव। तस्माच्च व्यवहारस्तस्मिन् सति स्यात्। स एव तु कुतः ?। दर्शनदशायां भावनिश्चयात्, अदर्शनदशायामभावावधारणात्। तथा 5 च गृहाद् बहिर्गतश्चार्वाको वराको न निवर्त्तेत। प्रत्युत, पुत्रदारधनाद्यभावावधारणात् सोरस्ताडं शोकविकलो विक्रोशेत्। स्मरणानुभवान्नैवमिति चेन्न। प्रतियोगिस्मरण एवाभावपरिच्छेदात्, परावृत्तोऽपि कथं पुनरासादयिष्यति। सत्त्वादिति चेदनुपलम्भकालेऽपि तर्हि सन्तीति न तावन्मात्रेणाभावावधारणम्। तदैवोत्पन्ना इति चेन्न। अनुपलम्भेन हेतूनां बाधात्। अबाधे वा स एव दोषः। अत एव प्रत्य- 10 क्षमपि न स्यात्, तद्धेतूनां चक्षुरादीनामनुपलम्भबाधितत्वात्। उपलभन्त एव गोलकादय इति चेन्न। तदुपलब्धेः पूर्वं तेषामनुपलम्भात्। न च यौगपद्यनियमः। कार्यकारणभावादिति ॥

एतेन, न परमाणवः सन्ति अनुपलब्धेः। न ते नित्या निरवयवा वा पार्थिवत्वात् घटादिवत्। न पाथसीयपरमाणुरूपादयो नित्याः, रूपादित्वात्, दृश्यमानरू- 15 पादिवत्। न रूपत्वपार्थिवत्वादि नित्याकार्यातीन्द्रियसमवायि जातित्वात् शृङ्गत्ववत्। नेन्द्रियाणि सन्ति, योग्यानुपलब्धेः। अयोग्यानि च शशशृङ्गप्रतिबन्धिनिरसनीयानीत्येवं स्वर्गापूर्वदेवतानिराकरणं नास्तिकानां निरसनीयम्।

मीमांसकश्च तोषयितव्यो भीषयितव्यश्चेति ॥ ६ ॥

## आमोदः

उद्धता स्फुटेत्यर्थः। अथ वा उद्धता कार्यक्षतिकरीत्यर्थः। निगदः 20 स्वरूपाभिधानं तेनैव व्याख्यातमित्यर्थः ॥५॥

चार्वाकास्त्विवति। योग्यानुपलब्धे निषेधसाधकत्व इति शेषः। विपरीतमिति। उपलभ्यत इत्यर्थः। तथेति। उपलभ्यत इत्यर्थः। एवमिति अनुपलम्भेन पक्षे साध्याभावावधारणात्कानुमानमित्यर्थः। तथा चेति। अनुमानप्रामाण्यानभ्युपगमे इत्यर्थः। संभावनेति। वह्निं संभाव्य वह्न्यर्थी प्रवर्त्तते 25 न तु निश्चित्येत्यर्थः संवादेनेति। प्रवृत्तिसामर्थ्येनेत्यर्थः।

दृष्टयदृष्टयोरिति। संभावनापि प्रवर्त्तिका नोपपद्यते दृष्टानुपलम्भे भावस्यैव निश्चयात्। अदृष्टानुपलम्भेऽभावस्यैव निश्चयान्न सन्देहः। तथा च साधकबाधकमानान्यतरसत्त्वे सन्देहस्य सम्भावनाया अनुपपत्तिरित्यर्थः। किञ्च प्रत्यक्षमपि प्रमाणमभ्युपगतं न स्यादित्याह—अदृष्टीति। 30

हेतौ चक्षुरादावदृष्ट्याऽनुपलम्भेन बाधिते क्व प्र [त्य] क्षमित्यर्थः। न निवर्त्तेतेति। पुत्रादिभिस्तदनुपलम्भेनाभावावधारणादित्यर्थः। प्रत्युतेति। चार्वाकेणापि बहिर्गतेन पुत्रादीनामभावावधारणादित्यर्थः। स्मरणानुभवादिति। स्मरण-रूपोपलम्भकसत्त्वादित्यर्थः। यद्वा अनुभवग्रहणस्मरणे प्रमाणे सूचनाय—
5 प्रतियोगीति। सुतरामभावावधारणादित्यर्थः। कथं चेति। अभावस्यैवाव-धारणात्प्राप्तिरसम्भावितेत्यर्थः। हेतूनामिति। पुत्राद्युत्पादकानामित्यर्थः। स एवेति। अनुपलम्भमात्रेणाभावानवधारकत्वलक्षण इत्यर्थः। अत एवेति। अनुपलम्भेन हेत्वभावावधारणादित्यर्थः। नन्वदृष्टविशेषोपगृहीतं गोलकमेव चक्षुरिति न तदनुपलम्भ इत्याह—उपलभ्यन्त इति। उपलब्धेरिति। यदा
10 गोलकादिप्रत्यक्षमुत्पद्यते। तत्पूर्वं गोलकादीनामनुपलम्भादित्यर्थः। ननु यदैव गोलकादीनामुपलम्भस्तदैव तत्सत्त्वाधीनं प्रत्यक्षमुत्पद्यत इत्यत आह—न चेति। उपलम्भेन्द्रिययोर्युगपदुत्पन्नयोः पौर्वापर्याभावादित्यर्थः। एतेनेति। अनुपलम्भमात्रस्य निषेधासाधकत्वेनेत्यर्थः। प्रमाणान्तरं तन्निषेधकं नास्त्ये-वेति भावः। अनुपलब्धेरिति। अनुपलभ्यमानत्वादित्यर्थः। पार्थिवत्त्वादिति।
15 पृथिवीत्वजातिमत्त्वादित्यर्थः। नित्येति। नित्यत्वं ध्वंसाप्रतियोगित्वम्, अकार्य्यत्वं प्रागभावाप्रतियोगित्वं तथा च प्रागभावाप्रतियोगित्वे सति ध्वं-साप्रतियोगि यदतीन्द्रियं तत्समवेतत्वाभावः साध्य इति। निरसनीयमिति। हेतूनामाश्रयासिद्धेर्बाधाच्चेति भावस्तोषयितव्यः। अनुपलम्भमात्रस्याभावसाध-कत्वनिरासात्स्वर्गापूर्वादीनां सिद्धेः। भीषयितव्य इति। योग्यानुपलम्भस्या-
20 भावसाधकत्वस्थितौ अयोग्यस्य क्षित्यादिकर्त्तुः सिद्धिरित्यर्थः ॥६॥

### बोधनी

त्वदभ्युपगमैरिति। नैयायिकाभ्युपगमैर्लोकप्रसिद्ध्या चाश्रयः सेत्स्यतीति। नेति। किमाश्रयग्राहकोऽयमागमादिः प्रमाणमाभासो वा? प्रमाणत्वे तत एव धर्मिग्राहकप्रमाणात् बाधितविषयं निषेधानुमानमात्मानमेव नासादयेत्। आभासे तु पूर्वोक्तै-वाश्रयासिद्धिरागमादिप्रमाणोपन्यासेन तिरोभूता तत्परित्यागे पुनरुद्भूता स्यादिति।
25 संग्रहस्याविवरणे कारणमाह—निगदेति। निगदः पाठः, स एव व्याख्यानमस्येति ॥५॥

तदेवमनुपलब्धिमात्रं न बाधकं योग्यानुपलब्धिस्तु नास्तीति मीमांसके निरस्ते परमनास्तिकः चार्वाकः प्रत्यवतिष्ठत इत्याह—चार्वाकस्त्वित्ति। सिद्धान्ती शङ्कते

**एवमिति** । इतर आह **नेदमिति** । प्रत्यक्षैकप्रमाणवादिनो हि वयमिति । **तथा चेति** । प्रायशो व्यवहाराणामनुमानाधीनत्वादिति । **नेति** । धूमादिदर्शनेऽग्निसंभावनामात्रेण व्यवहरन्ति न तु निश्चयात्, अतो न तदर्थमनुमानप्रामाण्यमङ्गीकर्त्तव्यमिति । कथं तर्हि व्यवहर्तॄणां प्रमाणमूलोऽयं व्यवहार इत्यभिमान इत्यत्राह **संवादेन चेति** । संभावना-मात्रेण प्रवर्त्तमाना यादृच्छिककार्थसंवादेन प्रवर्त्तकविज्ञानस्य प्रामाण्यमभिमन्यन्ते न तु 5 निश्चायकत्वादिति ।

**अत्रोच्यत इति** । सन्देहात् प्रवृत्तिरिति तावन्न संभवति, भवत्पक्षे संदेहस्यै-वासंभवात् । दृष्टौ सत्यामदृष्टौ वा सत्यां क्व कस्मिन्विषये दृष्टेऽदृष्टे वा सन्देहः स्यादुभयोरप्युभयत्रापि न संभवति । संशयस्य हेतुर्विषयश्च नास्तीत्यर्थः । कुतः भावा-भावनिश्चयात् दृष्टयदृष्टयोरित्येव दर्शनदशायां भावावधारणादर्शनदशायां वाऽभावाव- 10 धारणात् अतो व्यवहारार्थमनुमानादिकमेवाङ्गीकरणीयम्, तच्चानुपलम्भमात्रेणाभावनिश्चये दुर्लभम् । न केवलम् अनुमानादिकमेव, प्रत्यक्षमपि तद्धेतौ चक्षुरादावनुपलब्धिमात्रेण बाधिते कारणाभावात् कार्याभाव इति न्यायेन दुर्लभमिति **सर्वोपप्लव इति** ।

ननु मा नाम भूत्संदेहः संभावनया व्यवहारमभ्युपगच्छतः किमायातमिति शङ्का-मपनुदन्व्याचष्टे **संभावना हीति** । ततः किमित्यत आह **तथा चेति** । गृहान्त- 15 र्वर्त्तिनोऽपि निर्गतस्याभावावधारणात् विलीयेयुरिति भावः । **स्मरणेति** । बहिर्निर्गते-नापि पुत्रादीनां स्मरणेनोपलम्भात् नोक्तः प्रसङ्ग इति । **नेति** प्रतियोगिस्मरणसह-कृतस्यैवानुपलम्भस्याभावविशेषपरिच्छेदहेतुत्वान्न स्मरणोपलम्भो न केवलमभावपरिच्छेदं प्रतिबध्नाति प्रत्युतोन्मथ्नातीति यदृच्छया परावृत्तोऽपि न पुनः पुत्रादीनासादयेदित्याह **परावृत्तोऽपीति** । तेऽपि नासादयेयुरिति भावः । ननु परावृत्तिकाले तेषां सत्त्वादा- 20 सादयिष्यन्तीत्याह **सत्त्वादिति** । अनुपलम्भकाल इति स्पष्टः परिहारः नानुपलम्भ-कालेऽपि सन्तः पुत्रादयः पुनरासाद्यन्ते । किन्तु यदोपलभ्यन्ते तदैवोत्पन्ना अन्य एवेत्याह **तदैवेति** । **नेति** । तदुत्पत्तिहेतूनां तदानीमनुपलम्भेन बाधितत्वात्तदुत्पत्तेरसंभवाद-नुपलम्भेऽपि वा तेषामबाधे स एवानुपलम्भमात्रेण नाभावावधारणमिति दोषः स्यादिति संग्रहस्योत्तरधर्मं व्याचष्टे **अत एवेति** । यत एवानुपलम्भमात्रेणासत्त्वाङ्गीकार इति । 25 **उपलभ्यन्त इति** । स्पष्टम् । तन्मतमङ्गीकृत्यैवाह **नेति** । गोलकादयः स्वोपलब्धेः पूर्वमनुपलम्भेनासन्तः कथं स्वस्वविषयमुपलम्भमुत्पादयेयुरिति । तर्हि स्वोपलम्भकाल एव सन्तः स्वविषयमुपलम्भान्तरमारभेरन्नित्यत्राह **न चेति** । न हि चक्षुरादीनां स्वविषयो-पलम्भस्य च कार्यकारणभावायौगपद्यं भवतीति ।

एवं तावदनुपलम्भमात्रेण ईश्वरनिषेधोऽशक्य इत्युक्तम्, इदानीमनेनैव मार्गेण तेषां परमाण्वादिनियमोऽपि न सिध्यतीत्याह एतेनेति। एतेन निरसनीयमिति सम्बन्धः। तत्र परमाणूनां परमेश्वरस्येव योग्यानुपलम्भाभावेन प्रत्यक्षेण बाधः, तत्सर्वज्ञत्व-सर्वकर्तृत्वयोरिव तेषां नित्यत्वनिरवयवत्वयोर्निषेधे धर्मिग्राहकप्रमाणबाधः। तज्ज्ञानं
5 पक्षीकृत्य सर्वविषयत्वनिषेधवत् पाथःपरमाणुगतरूपादिविशेषगुणानां नित्यत्वनिषेधे चाश्रया-सिद्धिः, आत्मत्वं पक्षयित्वा तस्य सर्वज्ञसर्वकर्तृव्यक्तिसमवायनिषेधवद्रूपत्वादेरतीन्द्रियाश्रय-त्वनिषेधे चाप्रसिद्धविशेषणः पक्षः, इन्द्रियासत्त्वहेतोर्योग्यानुपलम्भस्य विशेषणासिद्धिः। यद्ययोग्यानीन्द्रियाणि सन्ति तर्हि शशशृङ्गमप्ययोग्यमस्ति चेति प्रतिबन्धिग्रहणेनेमानि निरसनीयानि इत्येतदपि परमात्मयोग्यत्वप्रतिपादनेन निरसनीयम्। तथा स्वर्गादिनिरा-
10 करणमपि निरसनीयम्। स्वर्गादिनिराकरणप्रदर्शनेन मीमांसको भीषयितव्यः, तन्निषेधं दर्शयित्वा च परितोषयितव्यः। यद्वा, ईश्वरनिराकरणनिषेधेन तस्य भीषणमितरनिरा-करणनिषेधेन तोषणमिति ॥ ६ ॥

विवेकः

त्वदिति = त्वदुपगमेन। आगमेन लोकप्रसिद्ध्या सिद्धस्य विषयस्य विषयता चाद्यन्तिमयोः। प्रतिपत्त्यनुबन्धिनी मध्यमस्य। त्वदुपगमस्य शङ्कायां प्रथमो-
15 द्दिष्टत्वेऽपि आगमादेरिति आगमस्य प्राधान्यसूचनाय तथोपलभ्यन्ते ॥५॥

शङ्कते—**वरमिति**। अनुपलभ्यमानस्य वह्नेरभावावधारणादित्यर्थः। नेदमनिष्टं प्रत्यक्षमात्रप्रमाणतावादिनश्चार्वाकस्य। शङ्कते—**तथा चेति**। धूमदर्शनानन्तरं वह्न्यर्थि-व्यवहारो न स्यादित्यर्थः। तत्सिद्धेः व्यवहारसिद्धेः। सम्भावना च न प्रमेति भावः। नन्वेवं तादृशे वह्निज्ञाने प्रमाव्यवहारो न स्यादित्यत्राह—**संवादेनेति**। प्रमाविषयविषयक-
20 त्वाभिमानेनेत्यर्थः। परमार्थसत् लक्षणस्य प्रमाविषयस्य सम्भावनाविषयत्वस्य तैरनुपग-मात्। निर्विकल्पकपृष्ठभाविसविकल्पकस्यात्र प्रमापदार्थत्वे यथाश्रुतमेव।

**दृष्ट्यदृष्ट्योरिति**। सप्तम्यन्तं दृष्टिपदञ्च करणव्युत्पत्त्या दृष्टिसामग्रीपरम्। अदृष्टि-रनुपलब्धिः। तथा च दृष्टिसत्त्वे भावनिश्चयात् न सन्देहः अनुपलब्धिसत्त्वे चाभाव-निश्चयात् न सन्देहः। ननु निश्चयत्वसंशयत्वेन कार्यतावच्छेदके उभयप्रकारकसामग्री-
25 समाजादुत्पद्यमानं संशयतामाप्नोति। इत्थं च दृष्ट्यदृष्ट्योः समाजात् संशयो भवन्न कामप्यनुपपत्तिमादधाति इत्यनुशयादाह—**अदृष्टीति**। अदृष्ट्याऽनुपलम्भेन विना दृष्टिं हेतौ प्रत्यक्षस्य इन्द्रियादौ बाधिते प्रत्यक्षमपि दुर्लभम् कारणं विना कार्यासम्भावादिति।

तथा चात्मतत्त्वविवेकः––"अतीन्द्रिये इन्द्रियाद्युच्छेदप्रसङ्गादिति। **सन्देह एवेति**। उत्कट-
कोटिकसन्देहस्यैव तथात्वादिति भावः। एकमात्रकोटिकत्वे तु प्रमात्वस्यापत्तिरिति
ध्येयम्। **तथा चेति**। अनुपलम्भमात्रस्यैवाभावप्रमापकत्वे पुत्रादिभिः सर्वत्रैव देशेऽनु-
पलम्भेन चार्वाकाभावप्रमातः चार्वाकाभावादसंश्चार्वाकः न निर्वर्तेतेत्यर्थः। नन्वनुप-
लम्भोऽभावप्रमापको नोच्यतेऽपि तु तदवधारकः। तच्चावधारणमसतिबाधके प्रमात्वे 5
पर्यवस्यदित्यत्र च बाधकमेवास्तीत्यत्राह––**प्रत्युतेति**। शोकविकलः शोकेन कातरः
स्मरणानुभवात् स्मृतिरूपोपलम्भसत्त्वात्। नैवम्, नानुपलम्भहेतुकोऽभावनिश्चयः। स्मरणस्य
प्रामाणिकत्वबोधनायानुभवपदमिति तु प्रकाशः। **प्रतियोगीति**। तथा चाभाववारणाय
प्रतियोगिस्मरणमनुकूलमेवोपदर्शितमिति भावः। यद्यपि प्रतियोगिमत्तया तत्तदधिकरणा-
नुपलम्भसम्भवः। तथापि क्षणिकतानये यद्वृत्तया यदुपलब्धं तस्येदानीमसत्त्वमेवावधारितम्। 10
इदानीमुत्पन्ने च तादृशस्यानुपलम्भो अस्त्येवेत्यभिप्रायेणेदम्। परावृत्तोऽपि वा देशान्तरा-
च्चार्वाकः कथं पुत्रादीनासदयिष्यति। अनुपलम्भः तदभावसिद्धेरिति भावः। **शङ्कते**
**सत्त्वादिति**। **पुत्रादेरित्यादिः**। सन्ति पुत्रादयः पूर्वोत्तरकालमध्यकालवृत्तितानियमादिति
भावः। **तदैवेति**। तथा च पूर्वापरकालसत्त्वम्। **नैकस्येति**। कारिकाद्वितीयार्धमत्रापि
योजयति––**अनुपलम्भेनेति**। हेतूनां तदोत्पन्नहेतूनां स एव नानुपलम्भमात्राद- 15
भावावधारणमित्यात्मकः। अन्यथापि कारिकार्धं योजयति––**अत एवेति**। **शङ्कते––**
**उपलभ्यन्त इति**। विभक्तिविपरिणामेन तद्धेतवः। तेषां चक्षुरादीनामस्माभिरतीन्द्रिय-
त्वानुपगमादिति भावः। तदुपलब्धेः गोलकाद्युपलब्धेः। तेषां गोलकानां यौगपद्य-
नियमः। गोलकतदुपलम्भयोर्यौगपद्यमेव। तथा च ततः प्रागसत्त्वेऽपि न क्षतिरिति
भावः। **कार्येति**। न प्रागसतः कारणत्वसंभव इति भावः। 20

एतेनानुपलम्भमात्रस्यानिश्चायकत्वेन हेत्वन्तरानाश्चाप्रयोजकत्वेनाश्रयासिद्धत्वेन
साध्याप्रसिद्ध्यादिना च यथायोगमनुपलब्धेरित्यत्र शशविषाणादिकं दृष्टान्तोऽवसेयः।
पार्थिवत्त्वादि पृथिवित्वादि। न नित्येत्यादि न नित्यसमवेतं। नाकार्यसमवेतं नाती-
न्द्रियसमवेतमिति प्रत्येकं साध्यम्। जातित्वात् धर्मत्वात् तेषां तन्मात्रस्यैव साध्यव्याप्यत्वात्।
ननु योग्यानुपलब्ध्याऽयोग्यानि तानि स्थास्यन्ति इत्यत्राह––**अयोग्यानि चेति**। 25
**मीमांसकश्चेति**। अनुपलम्भमात्रस्यासाधकत्वेन स्वार्गापूर्वादिसिद्ध्या तोषणं
तेनेश्वरबाधनाच्च भीषणम्॥६॥

यद्येवमनुपलम्भेनादृश्यप्रतिषेधो नेष्यते, अनुपलभ्योपाधिप्रतिषेधोऽपि तर्हि नेष्टव्यः। तथा च कथं तथाभूतार्थसिद्धिरपि अनुमानबीजप्रतिबन्धासिद्धेः। तदभावे शब्दादेरप्यभावः। प्रामाण्यासिद्धेः। सेयमुभयतःपाशा रज्जुः॥

अत्र कश्चिदाह। मा भूदुपाधिविधूननं, चतुःपञ्चरूपसम्पत्तिमात्रेणैव प्रतिबन्धनिर्वाहात्। तस्याश्च सपक्षासपक्षदर्शनादर्शनमात्रप्रमाणकत्वात्। यत्र तु तद्भङ्गः, तत्र प्रमाणभङ्गोऽप्यावश्यकः। न ह्यस्ति सम्भवो दर्शनादर्शनयोरविप्लवे हेतुरुपप्लवत इति। अप्रयोजकोऽपि तर्हि हेतुः स्यादिति चेत्, भूयोदर्शनाविप्लवे कोऽयमप्रयोजको नाम? न तावत् साध्यं प्रत्यकार्यमकारणं वा। सामान्यतो दृष्टानुमानस्वीकारात्। नापि सामग्र्यां कारणैकदेशः। पूर्ववदभ्युपगमात्। नापि व्यभिचारी। तदनुपलम्भात्। व्यभिचारोपलम्भे वा स एव दोषः। न च शङ्कितव्यभिचारः। निर्बीजशङ्कायाः सर्वत्र सुलभत्वात्। नापि व्याप्यान्तरसहवृत्तिः। एकत्रापि साध्येऽनेकसाधनोपगमात्। नाप्यल्पविषयः, धूमादेस्तथाभावेऽपि हेतुत्वात्।

ननु धूमो वह्निमात्रे अप्रयोजक एव, तन्निवृत्तावपि तदनिवृत्तेः। आर्द्रेन्धनवत्त्वं वह्निविशेषं प्रति तु प्रयोजकः, तन्निवृत्तौ तस्यैव निवृत्तेरित्येतदप्ययुक्तम्। सामान्याप्रयोजकतायां विशेषसाधकत्वायोगात्तदसिद्धौ तस्यासिद्धिनियमात्। सिद्धौ वा सामान्यविशेषभावानुपपत्तेः। नापि क्लृप्तसामर्थ्येऽन्यस्मिन् कल्पनीयसामर्थ्योऽप्रयोजकः, नाशे कार्यत्वसावयवत्वयोरपि हेतुभावादिति।

तदेतदपेशलम्। कथं हि विशेषाभावात् कश्चिद्व्यभिचरति, कश्चिच्च नेति शक्यमवगन्तुम्। अतो निर्णायकाभावे सति साहित्यदर्शनमेव शङ्काबीजमिति क्वासौ निर्बीजा। एवं सत्यतिप्रसक्तिरपि चार्वाकनन्दिनी नोपालम्भाय। स्वभावादेव कश्चित् किञ्चिद्व्यभिचरति, कश्चिच्च नेति स्वभाव एव विशेष इति चेत्। केन चिह्नेन पुनरसौ निर्णेय इति निपुणेन भावनीयम्। भूयोदर्शनस्य शतशः प्रवृत्तस्यापि भङ्गदर्शनात्। यत्र भङ्गो न दृश्यते तत्र तत् तथेति चेत्। आपाततो न दृश्यते इति सर्वत्र कालक्रमेणापि न द्रक्ष्यते इति को नियन्तेति? तस्मादुपाधितद्विरहावेव व्यभिचाराव्यभिचारनिबन्धनं, तदवधारणञ्चाशक्यमिति।

ननु यः सर्वैः प्रमाणैः सर्वदाऽस्मदादिभिर्यद्वत्तया नोपलभ्यते नासौ तद्वान्। यथा वकः श्यामिकया, नोपलभ्यते च वह्नौ धूम उपाधिमत्तयेति शक्यमिति चेन्न। अस्याप्यनुमानतया तदपेक्षायामनवस्थानात्। "सर्वादृष्टेश्च सन्देहात् स्वादृष्टेर्व्यभिचारतः" सर्वदेत्यसिद्धेः।

तादात्म्यतदुत्पत्तिभ्यां नियम इत्यन्ये।

तत्र तादात्म्यं विपक्षे बाधकाद्भवति। तदुत्पत्तिश्च पौर्वापर्येण प्रत्यक्षानुपलम्भाभ्याम्। न ह्येवं सति शङ्कापिशाच्यवकाशमासादयति, आशङ्क्यमानकारणभावस्यापि पिशाचादेरेतल्लक्षणाविरोधेनैव तत्त्वनिर्वाहादिति। न। एवमप्युभयगामिनोऽव्यभिचारनिबन्धनस्यैकस्याऽविवेचनात्, प्रत्येकं चाव्यापकत्वात्। कुतश्च कार्यात्मानौ कारणमात्मानञ्च न व्यभिचरत इति?

अत्रोच्यते—

**शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ॥**

**व्याघातावधिराशङ्का तर्कः शङ्काऽवधिर्मतः ॥ ७ ॥**

कालान्तरे कदाचिद् व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्क्येत। तदाकलनञ्च नानुमानमवधीर्य कस्यचित्। मुहूर्त्तयामाऽहोरात्रपक्षमासर्त्वयनसंवत्सराऽऽदयो हि भाविनो भवन्मुहूर्त्ताद्यनुमेया एव। अनवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वात्। अनाकलने वा, कमाश्रित्य व्यभिचारः शङ्क्येत? तथा च सुतरामनुमानस्वीकारः। एवञ्च देशान्तरेऽपि वक्तव्यम्।

स्वीकृतमनुमानम्। सुहृद्भावेन पृच्छामः, कथमाशङ्का निवर्त्तनीया? इति चेन्न। यावदाशङ्कं तर्कप्रवृत्तेः। तेन हि वर्त्तमानेनोपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयतेच्छा विच्छिद्यते। विच्छिन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति, अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिरिति किमनुपपन्नम्?

आमोद

यद्येवमित्यादिना व्यभिचार इति पर्य्यन्तं शङ्का यद्यनुपलम्भमात्राद-भावो न सिद्ध्येत् तदा उपाध्यभावाग्रहात्प्रतिबन्धो न सिद्ध्येत्। तथाचानुमानतो नेश्वरसिद्धिरिति शङ्कार्थः। तथाभूतार्थसिद्धिर्नित्यसर्वज्ञकर्तृसिद्धिः कथन्नेत्यत आह—अनुमानेति। नन्वनुमानान्मासैत्सीदागमादेव सेत्स्यतीत्यत आह—तदभाव इति। ननु कथमनुभूयमानस्य शब्दादेरभाव इत्यत आह—प्रामाण्येति। अनुमेयप्रामाण्यस्य शब्दादेरनुमानाभावेऽसत्कल्पत्वादित्यर्थः। उभयत इति। अनुपलम्भमात्रस्याभावसाधकत्वे स्वर्गाद्यसिद्धिरेकः पाशः योग्यानुपलम्भस्याभावसाधकत्वे सत्ययोग्योपाधेरनिरासात्प्रतिबन्धासिद्धिरपरः पाशः।

एकदेशिमतमुपन्यस्य निरस्यति—अत्र कश्चिदिति। चत्वारि रूपाणि केवलान्वयिनि केवलव्यतिरेकिण्यपि चत्वारि अन्वयव्यतिरेकिणि पञ्चरूपाणि—तस्या इति। रूपसंपत्तेरित्यर्थः। तद्भंग इति। यत्र सहचारदर्शनव्यभिचारदर्शनयोरयाथार्थ्यं तत्र प्रमाणस्यापि भङ्ग इत्यर्थः। कुत एतदित्यत आह—न हीति। दर्शनादर्शनप्रामाण्याधीनमेवानुमानप्रामाण्यं यत इत्यर्थः। अपव्याख्यानमन्यत्। न हीति। यद्यनौपाधिकत्वग्रहो न तन्त्रमित्यर्थः। भूय इति। भूयोदर्शनं चेदविप्लुतं यथार्थं तदा चतुः-

पञ्चरूपसम्पत्तौ क्वाप्रयोजकत्वमित्यर्थः। न तावत्साध्यमित्यादिहेतुत्वा-दित्यन्तमप्रयोजक इत्यनुवर्तनीयम्। सामान्यत इति। रसेन रूपानुमान-स्वीकारात्। सामग्र्यामिति। सामग्रीमध्यनिविष्टः कारणैकदेश एकं कारणम्। यद्वा सामग्र्यां व्याप्यभूतायां कारणमेकमप्रयोजकमित्यर्थः।
5 पूर्ववदिति। अन्त्यतन्तुसंयोगस्यापि लिङ्गत्वस्वीकारात्पूर्वं कारणं तल्लिङ्गतया कारणीभूतज्ञानविषयतया यस्यास्तीति तत्पुर्ववदित्यर्थः। तदनुपलम्भादव्यभिचारादनुपलम्भादित्यर्थः। निर्बीजेति। भूयोदर्शनविप्ल-वस्तद्बीजं नास्त्येवेत्यर्थः। अनेकेति। धूमालोकादीत्यर्थः। तथाभूतस्या-पीति। अल्पविषयो वह्न्यधिकरणमव्याप्तो धूमादिरपि हेतुरित्यर्थः। ननु
10 धूमो हि स्वकारणीभूतमार्द्रेन्धनप्रभवं वह्निं साधयति, तथा च वह्निसामान्ये तस्याप्रयोजकत्वमित्याशङ्कते—नन्विति। तन्निवृत्तौ। धूमनिवृत्तौ तस्यैव। वह्निविशेषस्यैव वह्निसामान्यस्यायोगोलकादौ धूमनिवृत्तावपि दर्शनात्। यदि च वह्निसामान्यं प्रति धूमः प्रयोजकः स्यात्, तदा धूमनिवृत्तौ निवर्त्तेतेत्यर्थः। सामान्येति। धूमाद्वह्निविशेषः सिध्यन् सामान्याक्रान्त
15 एव सिध्यति, तथा च वह्निमात्रेऽपि स प्रयोजक इत्यर्थः। तदसिद्धाविति। सामान्याव्याप्यत्व इत्यर्थः। विशेषस्य सामान्यव्याप्यत्वात्, सामान्य-व्याप्यस्य सुतरां विशेषव्याप्यत्वमित्यर्थः। क्लृप्तसामर्थ्यं इति। प्रथमं यस्य लिङ्गत्वग्रह इत्यर्थः। तथा च व्याप्यात्तव सहवृत्तिरित्यनेन न पौनरुक्त्यम्। नाश इति। ध्वंसप्रतियोगित्वे गुणादिसाधारणे भावकार्यत्वस्य
20 हेतुत्वे गृहीते द्रव्ये ध्वंसप्रतियोगित्वे सावयवत्वमपि हेतुरनुमत एवेत्यर्थः। तदेतदिति। मा भूदुपाधिविधूननमित्यादीत्यर्थः। अपेशलममनोहरं तच्च युक्त्यसहत्वात्तदेवाह—कथं हीति। विशेषाभावादिति। सोपाधित्वानुपा-धित्वलक्षणविशेषाभावादित्यर्थः। निर्बीजशङ्कायाः सर्वत्रेति यदुक्तं तत्राह तत इति। सहचारदर्शनमेव शङ्काबीजमित्यर्थः। चार्वाकनन्दिनी। अनु-
25 मानप्रतिद्वन्द्वित्वेन चार्वाकाह्लादिकेत्यर्थः। स्वभावादेवेति। यथा किञ्चिदेव कस्यचित्कारणं कार्यं वा तथा किञ्चिदेव कस्यचिद्व्याप्यं व्यापकं वेत्यर्थः। केनेति। स्वभावविशेषोऽपि निरुपाधित्वग्रहनिरूपणीय एवेत्यर्थः। ननु भूयो-दर्शनेनैव स्वभावविशेषो निर्णय इत्यत आह—भूयोदर्शनस्येति। पार्थिवत्वाल्लौहलेख्यादावित्यर्थः। ननु तत्र भङ्गस्यैव दर्शनात् भूयोदर्शनम-

तन्त्रं तथा च भङ्गादर्शनसहितं भूयोदर्शनमेव स्वभावग्राहकमिति शङ्कते--यत्रेति। को नियन्तेति। अनौपाधिकत्वनिश्चयं विनेत्यर्थः। उपाधितद्विरहनिश्चयावेव व्यभिचाराव्यभिचारग्रहनिबन्धनमिति उपसंहरति--तस्मादिति। तदवधारणमिति। उपाधितदभावनिश्चय इत्यर्थः। उपाधितद्विरहावधारणस्य शक्यतामशङ्कते-- 5

नन्विति। तदपेक्षायामिति। उपाधिविरहावधारणापेक्षायामित्यर्थः। सर्वैः प्रमाणैरित्यनुमाने दूषणान्तरमाह--सर्वादृष्टेश्चेति। सकलानुपलम्भः स्वानुपलम्भश्च हेतुरसिद्ध इत्यर्थः। बौद्धमतमुपन्यस्य निरस्यति--तादात्म्येति। एतदवधारणप्रकारमाह--तत्रेति। यदि शिंशपा वृक्षत्वं व्यभिचरेत् स्वात्मानमपि व्यभिचरेत् इति विपक्षबाधकादित्यर्थः। प्रत्यक्षानुप- 10 लम्भाभ्याम् अन्वयव्यतिरेकाभ्याम्। आशङ्क्यमानेति। वह्निमन्तरेण पिशाचादेव धूमोत्पत्तिस्तदाशंक्येत यदि पिशाचान्वयव्यतिरेकौ स्यातामित्यर्थः। इदमपि चार्वाको दूषयति--एवमपीति। ग्राहकाननुगम इत्यर्थः। ग्राहकाननुगमो न दोष इत्यत आह--कुत इति। विपक्षबाधके विपक्षबाधकापेक्षायामनवस्थानादित्यर्थः। तदेव चार्वाकमतमवस्कन्दति-- 15

शङ्का चेदिति। देशान्तरकालान्तराश्रयधूमस्य व्यभिचारशङ्का तयोरुपस्थितौ स्यात्। उपस्थितिश्च तयोरनुमानादेवेत्यर्थः। न चेद् व्यभिचारःशङ्का तदा निःप्रत्यूहमेवानुमानम् शङ्कानिवृत्त्युपायं सुहृद्भावेन पृष्टः सन्नाह--तर्क इति। शङ्काया अवधिर्निवर्त्तकस्तर्क इत्यर्थः। ननु तर्कमूलभूतायामपि व्याप्तौ शङ्का तदवस्थेत्याह--व्याघातेति। तर्कमूलव्याप्तौ स्वक्रियाव्याघात 20 एव शङ्कोत्पत्तिविरोधीत्यर्थः। न हि धूमार्थं वह्निमुपाददानस्य वह्निं विना धूम इति शङ्कोदेतीति भावः। मुहूर्त्तेति। अयं मुहूर्त्तो भाविमुहूर्त्तपूर्ववर्ती, मुहूर्त्तत्वात् पूर्वमुहूर्त्तवत्, इत्यनुमानादेवं यामादिष्वपि। ननु स्मृतदेशकालावाश्रित्य शङ्का स्यादत आह--अनवगतेष्विति। ननु सामान्यलक्षणयोपस्थितौ देशकालावाश्रित्य शङ्का स्यात्। साध्यात्यन्ताभावसमाना- 25 धिकरण्यं साधने वर्त्तते न वेति वा शङ्का स्यात्, न ह्यत्र देशकालान्तरभाव इति चेत्, न, व्याप्तिग्रहाभावव्यभिचारशङ्कयोश्चार्वाके व्याप्त्यनभ्युपगमे दोषानवकाशात्, सामान्यलक्षणायाश्च तेनाभ्युपगमात्, प्रत्यक्षप्रामाण्यग्रहा-

र्थमप्यनुमानस्वीकारात्, इदमसाधकमनुपलभ्यमानव्यभिचारशङ्काग्रस्तत्वात् इत्यस्य स्वव्याघातकत्वेन जात्युत्तरत्वात्, अयथार्थे वा एतस्यैवानुमानस्य स्वीकारादिति भावः। ननु तर्कात्कथं शङ्कानिवृत्तिरित्यत आह—तेन हीति। धूमस्य वह्निसम्बन्धः सोपाधिर्नवा धूमो वह्निं व्यभिचरेन्नवा इति संशयेन 5 वह्निं विनापि धूमोऽस्तीति विपक्षजिज्ञासा जन्यते। सा च यदि वह्निं विनापि धूमः स्यात् वह्न्यकारणकः स्यात् तथा च धूमार्थिनां वन्हौ नियता प्रवृत्तिर्नस्यात् इत्यनिष्टप्रसंगेन निवर्त्तत इत्यर्थः। निराकुलो निःशङ्क अधितिष्ठति व्याप्यत्वेन पक्षधर्मत्वेन चावधारयति। अधिष्ठिता-त्परामृश्यमाणात् क्रिया अत्रानुमितिः।

बोधनी

10 चार्वाकः सिद्धान्तिनं प्रत्याह **यद्येवमिति**। मा भूत्प्रत्यक्षत्वाद्यनुपलम्भपिशाचाद्यु-पाधिनिषेधः, ततः किमित्यत्राह **तथा चेति**। तथाभूतस्य = यथाज्ञानमेवास्थितस्य। यद्वा अनुमित्सितस्य जगत्कर्त्तुरिति। कथमसिद्धिरित्यत्राह **अनुमानेति**। निरुपाधिको हि संबन्धः प्रतिबन्ध इति। अनुमानाभावे शब्दादेरपि प्रमाणस्याभाव इत्याह **तदभाव इति**। प्रामाण्यग्राहिणस्तज्जातीयत्वानुमानादेरपि प्रामाण्याभावापराधेन 15 शब्दादिप्रामाण्यासिद्धेरिति। एवं चानुपलम्भमात्रस्यानिषेधकत्वेऽनुमानाद्युच्छेदादीश्वरो न सिध्येत्, निषेधकत्वे तु तत एव निषिध्येतेति। सेयं शिरोद्वयेऽपि पाशवती रज्जुरित्याह **सेयमिति**।

अत्रैकदेशिनः परिहारं दूषयितुमुपन्यस्यति **अत्र कश्चिदिति**। किमनेनोपाधि-विधूननव्यसनेन केवलान्वयिकेवलव्यतिरेकिणोश्च रूपसंपत्तिमात्रेण प्रतिबन्धसिद्धेर्न हि 20 तयोर्विपक्षसपक्षाभावेन तद्व्यावृत्त्यनुवृत्ती संभवतः। अन्वयव्यतिरेकिणस्तु पञ्चरूपसंपत्ति-मात्रेण तस्य सपक्षविपक्षयोर्भावेन तदनुवृत्तिव्यावृत्त्योः संभवादिति। न च रूपसंपत्त्यव-धारणेऽप्युपाधिविधूननमुपयुज्यत इत्याह **तस्याश्चेति**। कथं तत्प्रमाणकत्वं तस्या इत्यत्राह **यत्र त्विति**। तयोर्भङ्गे प्रमाणभङ्गस्यावश्यकत्वादिति। कस्मादेवमित्यत्राह **न हीति**। हेतोश्चतुःपञ्चानां रूपाणां विप्लवो हेतुविप्लवः। प्रमाणविप्लवा-25 विप्लवयोर्हि प्रमेयविप्लवाविप्लवौ भवत इति भावः। यदि दर्शनादर्शनाभ्यामेव प्रतिबन्ध-सिद्धिस्तर्हि मैत्रीतनयत्वादिरपि हेतुः स्यादित्याह **अप्रयोजक इति**। तयोरविप्लवे तु नाप्रयोजको नाम कश्चिदस्तीत्याह **भूयोदर्शनेति**। स एवाप्रयोजकत्वेन संभाविता-

नाशङ्क्य निराकरोति **न तावदिति**। अनुमानसूत्रे पूर्ववच्छेषवदिति कार्यकारणानु-
मानेन परिगृह्य सामान्यतो दृष्टमित्यकार्याकारणभूतस्य सलिलादिविषयवलाहकाद्यनुमानस्यापि
स्वीकारादिति। **नापीति**। सामग्री कार्यलिङ्गं तदेकदेशोऽप्रयोजकः स्यादित्यपि
न युक्तम्। पूर्वं = कारणं यस्यास्ति लिङ्गत्वेन तत्पूर्ववदिति। पूर्ववतोऽपि तत्र सूत्रे-
ऽनुमानत्वेन स्वीकारादिति। **नापि व्यभिचारीति**। न हि मैत्रीतनयत्वादेर्व्यभि- 5
चार उपलभ्यते तदुपलम्भे वा व्यभिचार एव दोषः स्यान्नाप्रयोजकत्वमिति। **न चेति**।
तथा च सर्वोऽपि हेतुरप्रयोजकः स्यादिति। **नापि व्याप्यान्तरेति**।
स्पष्टम्। **नाप्यल्पविषय इति**। न हि धूमादिः सपक्षव्यापक इति। स एव तत्र
किञ्चिदाशङ्क्य निराकरोति **नन्विति**। न हि धूमः स्वनिवृत्तावप्यनिवर्तमाने वह्नौ
प्रयोजको नामेति। कुत्र तर्हि प्रयोजक इत्यत्राह **आर्द्रेन्धनवन्तमिति**। तस्यैव 10
वह्निविशेषस्यैवेति। कुतो युक्तमित्यत्राह **सामान्येति**। न हि संभवति वह्निविशेषं
साधयति न तु सामान्यमिति सामान्यासिद्धौ विशेषस्यासिद्धेर्नियतत्वात्। यदि वा तदापि
विशेषः सिध्येन्न तर्हि सामान्यविशेषभावः स्यात्, न हि तस्मिन्नसिद्धेऽपि सिध्यतस्तद्विशेष-
त्वमिति। सकलसपक्षवर्तिनि हेत्वन्तरे सत्येकदेशवृत्तिरप्रयोजको यथा निषिद्धत्वे सति
हिंसात्वम्। निषिद्धत्वं हि सकलञ्जभक्षणादेरप्यधर्मत्वसिद्ध्यर्थं क्लृप्तसामर्थ्यमिति। तदेव 15
सर्वत्राधर्मत्वे प्रयोजकं हिंसात्वं च नैवं विधमप्रयोजकमित्याशङ्क्याह **नापि क्लृप्तेति**।

अत्र सामर्थ्यं व्याप्तिस्तस्या अनुमितिज्ञानोत्पादने लिङ्गसहकारित्वादिति तदेक-
देशिमतं पूर्वपक्षी दूषयति--**तदेतदिति**। किमुपाधिविधूननेन भूयःसाहचर्यदर्शने
सति कोऽयमप्रयोजको नामेत्येतदशोभनं शङ्कितव्यभिचारस्याप्रयोजकत्वादुपाधिविधून-
नायत्तत्वाच्च शङ्कानिरासस्येति भावः। तदेवोपपादयति--**कथं हीति**। निश्चिता- 20
व्यभिचारो हि हेतुर्गमकः, अन्यथातिप्रसङ्गात्। तन्निश्चयश्च न साहचर्यमात्रात्सिध्यति
भूयःसहचरितानामपि क्वचिद् व्यभिचारदर्शनात्, तस्माद् व्यभिचार्यव्यभिचारिणोः साहचर्ये
विशेषाभावात्तन्मात्रेणाव्यभिचारनिश्चयानुपपत्तेर्व्यभिचारशङ्कानिरसनहेतुः कश्चिदन्वेष्टव्यः, स
चोपाधिविधूननमेवेति भावः। तत्र यदुक्तं निर्बीजशङ्का न युक्तेति तदप्यत एव निरस्तमि-
त्याह--**अत इति**। निर्णायकविशेषादर्शने सति साहचर्यमेव व्यभिचार्यव्यभिचारिणोः 25
साधारणधर्मत्वात्संशयहेतुर्भवतीति। एवं च यदि भूयोदर्शने सत्यपि शङ्का स्यात् सर्वत्रापि
सा स्यादित्येकदेशिना चार्वाकं प्रत्यापादिताऽतिप्रसक्तिरनुमानप्रामाण्यमनिच्छतस्तस्य नोपा-
लम्भाय भवति प्रत्युत नन्दनायेत्याह—**एवं सतीति**। यद्वा, अनुमानमिच्छतः
सिद्धान्तिनो नोपालम्भाय तस्योपाधिविधूननेन शङ्कानिवारणाभ्युपगमादिति। एकदेश्याह—

**स्वभावादेवे**ति। तेनाव्यभिचारः स्वभावमात्राधीनः न तु तदर्थमन्योऽन्वेष्टव्य इति। इतर आह—**केने**ति। सत्यमेवं, स तु स्वभावो निर्णीत एव व्यभिचारशङ्कां निवर्त्तयतीति। तन्निर्णयार्थमन्योऽन्वेष्टव्य इति। तर्हि भूयोदर्शनमेवास्तु निर्णायकमित्यत्राह—**भूयोदर्शनस्ये**ति। शङ्काया एव बीजमेतदित्युक्तमिति भावः। **यत्रे**ति। तद्=अदृष्ट-
5 भङ्गम्। तथा अव्यभिचारस्वभावमिति। **आपातत** इति। सर्वत्र सर्वदाऽव्यभिचारो न भूयोदर्शनमात्रात्सिध्यतीति तत एवं वक्तव्यमित्याह—**तस्मा**दिति। तर्ह्यनुपलम्भे नोपाधिविरहोऽवधार्यत इत्यत्राह—**तदवधारण**मिति। अनुपलम्भमात्रस्य निषेधकत्वाभ्युपगमादिति।

तर्ह्यनुमानान्निषेत्स्यत इत्याह—**नन्वि**ति। वह्नौ = वह्निसंबन्ध इति। **ने**ति।
10 अस्याप्यनुमानस्योपाध्यभावनिश्चयायानुमानान्तरापेक्षायां तस्य तस्यापीत्यनवस्थेति। किं च, सर्वैः सर्वदोपाधिमत्तया धूमस्यानुपलम्भो नासर्वज्ञेन निश्चेतुं शक्यत इति सन्दिग्धासिद्धो हेतुरित्याह—**सर्वादृष्टे**श्चेति। अस्तु तर्हि स्वेनैकेनानुपलम्भो हेतुस्तत्राह—**स्वादृष्टे**रिति। न ह्येकेन तद्व्याप्यनुपलम्भस्तदभावव्याप्त इति सर्वदा स्वादृष्टिरप्यसिद्धेत्याह—**सर्वदे**ति। **असिद्धे**रिति। कदाचिदपि न द्रक्ष्यत इति निश्चयासंभवाभावादिति।
15 तदेवमेकदेशिनं निराकृत्य बौद्धमतं दूषयितुमुपन्यस्यति—**तादात्म्ये**ति। यस्य य आत्मा वा यत्कार्यं तयोस्तेनात्मना कारणेनाविनाभावः, अन्यथा तदात्मकत्वव्याघातात् कार्यकारणभावभङ्गप्रसङ्गाच्च, ततोऽविनाभावनिश्चयार्थमुपाधिविधूननापेक्षेति। यथाह—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमो दर्शनान्न न दर्शनात्। इति।

20 तादात्म्यतदुत्पत्योरेव निश्चयः कुतस्त्य इत्यत्राह **तत्रे**ति। अवृक्षे शिलादौ शिंशपात्वस्यानुपलब्धिबाधितत्वाद् वृक्षः शिंशपेति निश्चीयते। तदुत्पत्तिस्तु पूर्वापरभावेन प्रत्यक्षानुपलम्भाभ्यां सिध्यति "प्रत्यक्षानुपलम्भपञ्चकेन तदुत्पत्तिनिश्चयः" इति हि बौद्धाः। तत्र पौर्वापर्येण वह्निधूमयोरुपलम्भौ प्रत्यक्षद्वयम्। वह्न्यनुपलम्भे धूमानुपलम्भः अन्यस्मिन्पूर्वभावेनोपलब्धेऽपि धूमस्यानुपलम्भ इत्यनुपलम्भत्रयमिति प्रत्यक्षानुपलम्भपञ्चकम्। अन्येषां
25 तु वह्नेर्धूमस्य पौर्वापर्यस्य च त्रीणि प्रत्यक्षाणि वह्नेर्धूमस्य च द्वावनुपलम्भाविति। नन्वेवमप्यदृश्यभावः पिशाचादिर्धूमस्य कारणं, वह्निस्तु नान्तरीयकसन्निधिर्न वेति शङ्कायां न तदुत्पत्तिसिद्धिरित्यत्राह **न ह्येवमि**ति। पिशाचादेस्तु पौर्वापर्येण प्रत्यक्षानुपलम्भगोचरत्वरूपस्य कारणलक्षणस्य विरोधाभावेन तत्त्वस्य कारणत्वस्य निर्वाहान्न शङ्कावकाशः इति नानेनापि प्रकारेणाविनाभावनिश्चय इत्याह **नैवमि**ति। कुत इत्यत

आह उभयेति । किमत्र क्वचित्तादात्म्यमव्यभिचारनिबन्धनमन्यत्र तदुत्पत्तिरिति विषयव्यवस्थयोच्यते किं वा स्वतन्त्रमुभयं तादात्म्यं तदुत्पत्तिर्वेति । नाद्यः, अनुवृत्तस्याव्यभिचारनिबन्धनस्याविवेचनात् तदविवचने च तस्यानिक्षितत्वात् । नाप्युत्तरः, तादात्म्यस्य तदुत्पत्तावभावात् तस्याश्चेतरत्राभावादव्यापकत्वादत एव नापि संभूयेति भावः किं च उपाधिविधूनापेक्ष एव ताभ्यामप्यविनाभावनिश्चय इत्याह कुतश्चेति । 5 तदेवमनुमानस्याव्यभिचारनिश्चयापेक्षत्वात्तस्य चोपाधिनिषेधायत्तत्वात्तन्निषेधे योग्यानुपलम्भाभावादनुपलम्भमात्रस्य च निषेधकत्वानङ्गीकारादनुमानेन च तन्निषेधेऽनवस्थाप्रसङ्गात् । बौद्धनीतिनिरासाच्चानुमानादिविलोपप्रसङ्ग इति ।

चार्वाके प्रत्यवस्थिते परमसिद्धान्त्याह अत्रोच्यत इति । उपाधिविरहस्य दुरवधारणत्वेनानुमानकुलोत्सादनी शङ्कास्ति चेत् तत एवानुमाऽस्त्येव तत्कालतद्देशयोः 10 सहदृष्टस्य किं कालान्तरे देशान्तरे वाऽविनाभावो भविष्यति न वेत्येवं व्यभिचारस्य शङ्कनीयत्वात् कालान्तरभाविनमसन्निहितं च देशमनाकलय्य शङ्कानुपपत्तेस्तदाकलनस्य चानुमानमवधीर्याशक्यत्वादिति हृदयम् । तदनाकलने तु शङ्कैव न स्यान्निराश्रयत्वादित्यभिसन्धायोक्तं न चेच्छङ्का ततस्तरामिति । न चेच्छङ्का, ततः शङ्काभावादेव सुतरामनुमाऽस्त्येव शङ्कानिरासप्रयासस्याप्यभावः । स्वीकृत्यैवानुमानं कथमियं व्यभिचार- 15 शङ्का निवर्त्तनीयेति तत्त्वबुभुत्सया पृच्छतः । उत्तरम् । अर्थक्रमानुरोधेन पाठक्रममनादृत्य तर्कः शङ्कावधिर्मत इति । तावदेवावकाशः शङ्कापिशाच्या यावत्तर्केण नागतं, समागतस्तु तर्कः शङ्काया अवधिरन्तो मतो न्यायविदाम् । ननु तर्कोऽप्यविनाभावमूल एव प्रवर्तमानोऽन्यथासिद्धिशङ्कया तर्कान्तरमेक्षत इति अनवस्थातादवस्थ्यात् पुनरप्यनुमानं दत्तजलाञ्जलिः स्यादित्यत उक्तं व्याघातावधिराशङ्केति । अयमाशयः—किमियमाशङ्काऽर्थ- 20 क्रियार्थिनो लौकिकस्य, हेतुफलभावं जिघांसतः परीक्षकस्य वा ? प्रथमे क्रियाव्याघातावधिराशङ्का लोकस्य न तु यथा क्रियाव्याघातादयोऽवतरन्ति तथा भवतीत्यर्थः । तथा च द्वित्रिस्थानपर्यवसानान्नानुमानप्रामाण्यविघातः । द्वितीये तु शङ्कैव न स्यात् तस्या अपि कस्यचित् फलत्वात्तया हेतुफलभावप्रत्यक्षे प्रामाण्यनिश्चयोऽपि न स्यात् तस्या अपि तथाभावात्, सोऽयं व्याघात इति । 25

व्याचष्टे कालान्तर इति । भवन्मुहूर्त्ता अनुमेया इति । वर्त्तमानमुहूर्त्तादयो भाविमुहूर्तादिवन्तः मुहूर्त्तत्वादतीतमुहूर्त्तवदिति । मा भूदनुमानं स्मरणं तु भविष्यति कालान्तर इत्यात्राह अनवगतेति । भाविनः कालस्य प्रत्यक्षासंभवादिति सर्वथा चानाकलने निर्विषया शङ्कैव न स्यादित्याह अनाकलन इति । तर्हि ननु माभूद्

व्यभिचाराशङ्केत्यत्राह **तथा चेति**। तुरीयं पादं व्याचिख्यासुः शङ्कते स्वीकृतमिति। सुहृद्भावेनैवोत्तरमाह **नेति**। द्वयी हि शङ्कारीतिः किमस्य हेतोरनेन साध्येन संबन्धः उपाधिरस्ति वा न वेत्येका, अन्या तूपाधिशङ्कानिमित्ता हेतोः साध्यव्यभिचारशङ्का, तत्रोभयत्रापि तर्कप्रवृतेः शङ्कानिवृत्तिरिति। कथं तर्हि ततस्तन्निवृत्तिरित्यत्राह **तेन हीति**।
5 यद्यत्रोपाधिः स्यात् तदायत्तो वा हेतोर्व्यभिचारस्तत एवं स्यादिति। प्रामाणिकत्यागा-प्रामाणिकस्वीकारात्मकानिष्टमुपजनयता तर्केण पक्ष एव जाता विपक्षजिज्ञासात्मिकेच्छा विच्छिद्यते; तद्विच्छेदे चानुमाता निरस्तान्तरायेण भूयोदर्शनेनावधारिताव्यभिचारं लिङ्गं निःशङ्क एवानुमितिज्ञानोत्पादे विनियुङ्क्ते, विनियुक्ताच्च कारणलिङ्गादनुमितिक्रियानिष्पत्ति-रिति न संकटं किञ्चिदिति॥

विवेकः

10 **तथाभूतार्थसिद्धिः**। अतीन्द्रियेश्वराद्यनुमानं वा स्यात्। अनुमानस्यानुमितेर्बीजस्य प्रतिबन्धासिद्धेर्व्याप्तिनिश्चयस्यायोग्योपाधिशङ्काया अभावात्। ननु मा भूदनुमानेन तत्सिद्धिरागमस्तु स्यात्तत्राह—**तदभाव इति**। अनुमानाप्रामाण्ये शब्दादेरप्यभावः न प्रामाण्यम्। **प्रमाण्यासिद्धेः**। तत्प्रामाण्ये मानाभावात् तस्यानुमेयत्वादिति भावः। यद्वा तस्य शब्दस्य प्रामाण्यं प्रमाजननौपयिकः सम्बन्धः समयरूपस्तस्यासिद्धेराद्य-
15 व्युत्पत्तेरनुमानाधीनत्वादिति भावः। **उभयत इति**। अनुपलम्भस्य बाधकत्वे तत एव ईश्वरादिवारणम्, अबाधकत्वेऽयोग्योपाधिशङ्कया प्रतिबन्धानिश्चय इति नानुमानेन तत्सिद्धिरिति। उभयथैव नेश्वरसिद्धिरिति भावः। **चतुरिति**। पक्षसपक्ष-सत्त्वविपक्षासत्त्वाबाधितत्वासत्प्रतिपक्षितत्वानि पञ्चरूपाणि तेषु केवलव्यतिरेकिणि न सपक्षसत्त्वं केवलान्वयिनि च न विपक्षासत्त्वमङ्गमिति तयोश्चत्वारि रूपाणि अन्वयव्यति-
20 रेकिणि तु पञ्चैव। प्रतिबन्धस्य निर्वाहश्च निश्चयः तस्याः सपक्षसत्त्वविपक्षासत्त्वरूपायाः सम्पत्तेः तद्भङ्गः सपक्षसत्त्वविपक्षासत्त्वयोर्भङ्गः प्रमाणभङ्गः दर्शनादर्शनरूपप्रमाण-भङ्गश्च तत्र तयोरप्रामाण्यमिति यावत्। तदेवाह—**नहीति**। ग्राहकस्य प्रामाण्ये ग्राह्याबाधादिति भावः। हेतुरूपं हेतोः रूपद्वयं सपक्षविपक्षसत्त्वासत्त्वरूपं यद्वा यत्र तद्भङ्गः उक्तसम्पत्तिभङ्गस्तत्र प्रमाणभङ्गः तत्रैव लिङ्गस्याप्रामाण्यं तदेवाह **नहीति**। **दर्शनादर्श-**
25 **नयोरिति**। सम्पत्तिपञ्चकोलक्षणम्। हेतुरूपविप्लवश्च हेतोरप्रामाण्ये भूयोदर्शनाविप्लवे व्याप्तिग्राहकाविप्लवे **सामान्यत इति**। रसेन रूपस्य पृथिवीत्वादिना द्रव्यत्वादेर-नुमानाभ्युपगमादित्यर्थः। **सामग्र्यामिति**। सामग्र्यां साध्यायां कारणैकदेशो

नाप्रयोजक इत्यर्थः । **पूर्ववदिति** । पूर्वं कारणम् प्रतिबन्धकाभावविशिष्ट-मन्त्यतन्तुसंयोगादि तद्विषयतया यस्यास्ति लिङ्गज्ञानस्य तस्य पटाद्यनुमितिजनकत्वोपगमात् पटादेश्च सामग्रीव्यापिका तथा च व्यापकव्यापकस्य सुतरां व्यापकत्वात् नाप्रयोजकत्वम् । तत्रेत्यर्थः यद्वा सामग्र्यां प्रयोजकत्वेनाभ्युपगतायां पटादौ साध्ये कारणैकदेशस्तथा इत्थं च यथाश्रुतमेव सम्यग् । स एव व्यभिचार एव न त्वप्रयोजकनामा 5 तदन्यः । **निर्बीजेति** । उपाधिज्ञानाद्यनाहितायास्तच्छङ्कापिशाच्याः सर्वत्र सम्भवादित्यर्थः । स्वल्पविषयः साध्याव्यापकः । तन्निवृत्तौ धूमसामान्यनिवृत्तौ तदनिवृत्तेः वह्निसामान्यानिवृत्तेः आर्द्रेन्धनवन्तम् आर्द्रेन्धनप्रभवम् वह्निविशेषम् दाहसमर्थं तेन तन्निवृत्तावपि न तादृशवह्निद्व्यणुकादिनिवृत्तिः यद्वा विशेषस्यैवार्थविवरणम् आर्द्रेन्धनवन्तमिति । **सामान्येति** । वह्निसामान्यव्याप्यस्य तद्विशेषानुमापकत्वायोगा- 10 दित्यर्थः । तदसिद्धौ सामान्यासत्त्वे विशेषासत्त्वनियमात् तथा च विशेषव्यभिचारिणः कथं तत्साधकत्वमित्यर्थः । सिद्धौ सामान्यासत्त्वेऽपि विशेषस्य सत्त्वे । **सामान्यविशेषेति** भावपरम् । **नाश इति** । भावकार्यत्वस्य गुणादिनाशानुमापकत्वेन सामान्यतस्तद्धेतुत्वे क्लृप्तेऽपि सावयवत्वस्य समवेतद्रव्यत्वरूपस्यापि नाशानुमापकत्वाङ्गीकारादित्यर्थः ।

**कथं हीति** । तथा च यो विशेषो वाच्यः स एव प्रयोजक इति भावः । निर्णायकं 15 विशेषदर्शनादि । साहित्यदर्शनम् भूयोदर्शनम् समानधर्मदर्शनतया व्यभिचारशङ्काबीजं सर्वत्र तस्यासुलभत्वादित्यतिप्रसक्तिस्त्वया याभिहिता सानुमानप्रामाण्यविद्वेषिण चार्वाकस्य आनन्दजननी । शङ्कते—**स्वभावादिति** । स्वभावविशेषो नियामकः । अत्र यथा कारणत्वं स्वरूपविशेषः नियतपूर्ववर्तित्वादिभिर्व्यवस्थाप्यते तथा व्याप्यव्यापकभावोऽपि ग्राहकाणि अनुगतानि वक्तव्यानि । अत एवानुमितौ नानियतहेतुकत्वं कारणत्वञ्च स्वरूपाणामननु- 20 गमेऽपि न क्षतिरित्यस्य भावं वर्णयन्ति । भङ्गो व्यभिचारिसाधारण्यं तद् भूयोदर्शनम् तथा स्वभावविशेषनिर्णायकम् । अशक्यम् अयोग्यस्यापि तस्य सम्भवात् न योग्यानुपलब्ध्या तदवधारणमनुपलब्धिमात्रन्तु नावधारकमभ्युपेयते भवतेति भावः ।

हेतोरज्ञानरूपामसिद्धिमाह—**सर्वेति** । स्वादृष्टेर्व्यभिचारात् सर्वदा स्वादृष्टेरसिद्धेः । बौद्धोक्तं नियमग्राहकमाह—**तादात्म्येति** । नियम इत्यस्य निश्चीयत इति शेषः । तादात्म्यं 25 शिंशपायाः वृक्षतादात्म्यम् विपक्षे बाधकात् तत्सामग्रीजन्यत्वस्वरूपविशेषदर्शनात् प्रत्यक्षानुपलम्भौ अन्वयव्यतिरेकौ आशङ्क्यमानकारणभावस्य एतल्लक्षणाविरोधेन साध्यं कार्यं लिङ्गव्याप्यताग्राहकतादात्म्यतदुत्पत्त्यविरोधेन तत्त्वनिर्वाहात् उपाधित्वनिर्वाहात् । एतल्लक्षणाविरोधेनान्वयव्यतिरेकयोः कारणताग्राहकत्वाविरोधेनेति प्रकाशः । उभयसम्बन्धिनः

तादात्म्यतदुत्पत्तिसाधारणस्याव्यभिचारनिबन्धनस्य व्याप्तिग्राहकतापच्छेदकस्य निर्वचनात् । स्वनिरुक्तेः किन्तावत्तत्रेत्याह—**प्रत्येकञ्चेति** । चकारात् समुदितस्यापि तथात्वं समुच्चितं । ननु ग्राहकाननुगमो न दोषायेत्याशङ्क्याह—**कुतश्चेति** । तर्कोत्थापकतया तद्धेतुः तस्यापि व्याप्तिग्रहमूलत्वेनानवस्था स्यादिति भावः ।

5 कालान्तरे देशान्तरे च वर्तमानधूमादौ व्याभिचारस्य पिशाचादेरुपाधित्वस्य वा शङ्का चेत् तदा कालान्तरदेशान्तरयोः पिशाचादेश्चोपस्थितयेऽनुमावश्यमस्त्येवेति वाच्यम् । नात्रेतादृशी **शङ्का** ततस्तराम् अनुमा इति जल्पेन प्रतिवादिनं निरस्य तत्त्वबुभुत्सुं प्रत्याह—**व्याघातेति** । यत्र धूमादौ व्याप्तिग्रहे जायमाने व्यभिचारशङ्का तस्यास्तर्क एवावधिः सामग्रीविघटकः । ननु सर्वत्रैव व्याप्तिग्रहे जायमानेऽवश्यमेव व्यभिचारशङ्का 10 स्याचतस्तर्केऽपि व्याप्तिमूलके तदुपपत्तये तर्कान्तरापेक्षायामनवस्था स्यादित्येवमात्मिका शङ्का पूर्वपक्षो यस्तदवधिर्व्याघातः व्याघातेन तन्निरासः कर्तव्यः । यदि सर्वत्र तच्छङ्कते तदा धूमाद्यर्थं वह्नयादौ तवैव प्रवृत्तिर्न स्यादित्यनेन तस्य पूर्वपक्षस्य निरसनं कार्य्यमित्याखण्डलार्थः ।

**भाविनमिति** । अतीतस्याप्युपलक्षणम् एवमग्रेऽपि । कालस्यातीन्द्रियत्वनियत-15 तया वर्तमानकालस्याप्यनुमेयत्वमेवेति ध्येयम् । शङ्क्येत धूमादौ व्यभिचारः भवदिति । विद्यमानाः मुहूर्तादयः मुहूर्त्तादिप्रागभावावच्छिन्नाश्चरममुहूर्त्ताद्यन्यमुहूर्त्तादित्वात् । अतीतमुहूर्त्तादिवदित्यनुमानेन ज्ञेया इत्यर्थः ।

ननु मास्त्वनुमानं तेषां स्मृतिस्तु स्यादित्यत्राह—**अनवगतेऽष्विति** । न च सामान्यलक्षणप्रत्यासत्त्यावगतेषु तेषु शङ्का स्यात् सामान्यप्रत्यासत्तेस्तैरनुपगमात् । 20 उपगमेऽपि सिद्धान्तत्वात् । **यावदिति** । तर्काभावातिरिक्तनिखिलसंशयहेतुसमवधाने तर्केण प्रतिबन्धादेव संशयानुपपत्तेरित्यर्थः । ननु विरोध्य विषयकेण तर्केण कथन्तत् प्रतिबन्ध इत्याकाङ्क्षायामाह—**तेन हीति** । अयमर्थः लाघवज्ञानादिसहकारेण धूमत्वावच्छेदेन वह्निजन्यताग्रहात् तमुपजीव्य तदवच्छेदेन वह्निव्याप्यत्वग्रहेण स्वारसिकव्यभिचारसंशयादेः का वार्ता विरोधिनिश्चयस्य जाकरूकत्वादित्याहार्यसंशय एव तथा वाच्यः, तस्य च 25 सत्त्वे एव विशेषदर्शने उत्तेजकेच्छाधीनोत्पत्तेः संभवात्तत्र स एव संशयः, प्रतिबन्धकः इच्छाघटिता तत्सामग्रीवेत्यन्यदेतत्, तत्र तेन प्रवर्त्तमानेन तर्केण संशयकोटावनिष्टमुपजनयता धूमादिग्राहकप्रमाणविरोधित्वज्ञानमुत्थापयता इच्छा तादृशसंशयहेतुः विच्छिद्यते । प्रतिवद्ध्यते, द्वेषस्येव प्रमाणविरोधित्वज्ञानस्यापीच्छां प्रति प्रतिवन्धकत्वादिति भावः ।

विभिन्नविपक्षेच्छः तेन विगतविपक्षवृत्तित्वादिज्ञानानुकूलेच्छासामग्रीकः भूयोदर्शनोपलब्ध-साहचर्यम्। भूयोदर्शनेन विषयीकृतसहचारमभितिष्ठति व्याप्तिमत्तया निश्चिनोति। वस्तुतस्तु साहचर्यं व्याप्तिः अधिष्ठानं च पक्षधर्मतया निश्चयः क्रियाया अनुमिते-र्निष्पत्तिरुत्पादः।

ननु तर्कोऽप्यविनाभावमपेक्ष्य प्रवर्त्तते, ततोऽनवस्थया भवितव्यम्। न। 5 शङ्काया व्याघातावधित्वात्। तदेव ह्याशङ्क्यते, यस्मिन्नाशङ्क्यमाने स्वक्रियाव्या-घातादयो दोषा नावतरन्तीति लोकमर्यादा। न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते। तथा सति शङ्कैव न स्यात्, सर्वं मिथ्या भविष्यतीत्यादिवत्। तथापि, अतीन्द्रियोपाधिनिषेधे किं प्रमाणमित्युच्यतामिति चेत्। न वै कश्चि-दतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति, यस्याभावे प्रमाणमन्वेषणीयम्। केवलं साहचर्ये 10 निबन्धनान्तरमात्रं शङ्क्यते ततः शङ्कैव फलतः स्वरूपतश्च निवर्त्तनीया। तत्र फलमस्या-विपक्षस्यापि जिज्ञासा तर्कादाहत्य निवर्त्तते। ततोऽनुमानप्रवृत्तौ शङ्कास्वरूपमपीति सर्वं सुस्थम्। न चैतदनागमं, न्यायाङ्गतया तर्कं व्युत्पादयतः सूत्रकारस्याभिमतत्वात्। अन्यथा तद्व्युत्पादनवैयर्थ्यात्।

तदयं संक्षेपः। यत्रानुकूलतर्को नास्ति सोऽप्रयोजकः। स च द्विविधः, शङ्कि- 15 तोपाधिर्निश्चितोपाधिश्च।

यत्रेदमुच्यते—

यावच्चाव्यतिरेकत्वं शतांशेनापि शङ्क्यते।
विपक्षस्य कुतस्तावद् हेतोर्गमनिकाबलम्॥

तत्रोपाधिस्तु, साधनाव्यापकत्वे सति साध्यव्यापकः। तद्धर्मभूता हि व्याप्ति- 20 र्जवाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते इति॥

तदिदमाहुः—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशाऽवधारणा॥ इति,

तदनेन विपक्षदण्डभूतेन तर्केण सनाथे भूयोदर्शने, कार्यं वा कारणं वा तती- 25 ऽन्यद्वा समवायि वा संयोगि वा अन्यथा वा भावो वाऽभावो वा सविशेषणं वा निर्विशेषणं वा लिङ्गमिति निःशङ्कमवधारणीयम्। अन्यथा तदाभास इति रहस्यम्॥

तादात्म्यतदुत्पत्त्योरप्येतदेव बीजम्। यदि कार्याऽऽत्मानौ कारणमात्मानञ्चाति-पतेतां, तदा तयोस्तत्त्वं व्याहन्येत। अत एव, सामग्रीनिवेशिनश्चरमकारणादपि कार्यमनुमिमते सौगता अपि। तस्माद्विपक्षबाधकमेव प्रतिबन्धलक्षणम्। तथाहि— 30 शाकाद्याहारपरिणतिविरहिणि मित्रातनये न किञ्चिदनिष्टमिति नासौ तस्य व्यापिका, व्यापिका तु श्यामिकायाः, कारणत्वावधारणात्। कारणञ्च तत् तस्य, तदतिपत्य भवति चेति व्याहतम्। एवमन्यत्राप्यूहनीयमिति॥

क्व पुनरप्रयोजकोऽन्तर्भवति? न क्वचिदित्येके। यथाहि, सिद्धसाधनं न बाधितविषयम्,। विषयापहाराभावात्। नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः। कालातीतविलोपप्रसङ्गात्। न चानैकान्तिकादिः। व्यभिचाराद्यभावात्। तथाऽयमपि। सूत्रं तूपलक्षणपरमिति ॥

5 तदसत्। विभागस्य न्यूनाधिकसंख्याव्यवच्छेदफलत्वात्। क्व तर्हि द्वयोरन्तर्निवेशः? असिद्ध एव। तथाहि व्याप्तस्य हि पक्षधर्मताप्रतीतिः सिद्धिः। तदभावोऽसिद्धिः। इयञ्च व्याप्तिपक्षधर्मतास्वरूपाणामन्यतमाऽप्रतीत्या भवन्ती यथासङ्ख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते। मध्यमाऽप्याश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या वेति द्वयी। तत्र चरमा सिद्धसाधनमिति
10 व्यपदिश्यते। व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात्। न त्वेवं बाधे, व्याप्तेरेव प्रथमं विघटनादिति विशेषः।

यत्त्वप्रयोजकः सन्दिग्धानैकान्तिक इत्यनैकान्तिकेऽन्तर्भाव्यते। तदसत्। व्याप्त्यसिद्ध्या हि निमित्तेन व्यभिचारः शङ्कनीयः, अन्यथा वा? प्रथमे, असिद्धिरेव दूषणमुपजीव्यत्वात्, नानैकान्तिकमुपजीवकत्वात्। अन्यथा शङ्का त्वदूषणमेव: निर्णीते
15 तदनवकाशादिति ॥ ७ ॥

## आमोदः

कारिकायां तृतीयपदं व्याख्यातुमाशङ्कते।

**नन्विति।** **स्वक्रियेति।** धूमार्थं वह्न्युपादानं स्वक्रिया सा व्याहता भवत्यतः शङ्कैवैतादृशी न भवतीति नानवस्थेत्यर्थः। **तथा सतीति।** हेतुफलभावाभावे हेतुमन्तरेण शङ्कैव नोत्पद्येतेत्यर्थः। शङ्काया अपि फलत्वा-
20 दिति भावः। **सर्वमिति।** अनया शङ्कया निश्चयेन वा क्वचिदपि प्रवृत्तिनिवृत्ती न स्यातामिति नैतादृशो शङ्का न वैतादृशो निश्चयः तथा प्रकृतेऽपीत्यर्थः। **तथापीति।** योग्यानुपलब्ध्या योग्योपाधीनामभावनिश्चयेऽपीत्यर्थः। **न वै इति।** परमाण्वादिलक्षणमिहोपाधिः स्यादिति शङ्कायास्तस्य वस्तुनः साध्याव्यापकत्वग्रहेण साधनव्यापकत्वग्रहेण वा निरासः सुकर एवेति भावः।
25 **केवलमिति।** धूमस्य वह्निसम्बन्धे कश्चिदुपाधिः स्यादिति या शङ्का तस्याः फलं या विपक्षजिज्ञासा वह्नीतरजन्यो धूमो यदि वह्निजन्यः स्यात्तथा च कादाचित्को न स्यान्न वा धूमार्थिनां नियमतस्तदुपादानं स्यादित्यादि सापि तर्केणापनीयते इत्यर्थः। **तत इति।** विरोधिजिज्ञासानिवृत्तावित्यर्थः। शङ्कास्वरूपं शङ्कायोग्यतां निवर्तत इत्यर्थः। जिज्ञासापि विरोधिविषयत्वेन
30 संशयवदनुमितिप्रतिबन्धिकेति भावः। तथा चानुमाने वर्तमाने शङ्कान्तरं

नोत्पद्यत इति भावः । ननु त्वया स्वातन्त्र्येणोक्ते कः श्रद्धास्यतीत्यत आह—
**नैतदिति** । मदुक्तप्रकारमन्तरेण न्यायांगतैव तर्कस्य न स्यादित्याह—**अन्य-
थेति** । ननु भूयोदर्शनाविप्लबोऽयमप्रयोजक इत्यत्र किमुत्तरमित्यत आह—
**तदयमिति** । तथा च व्याप्यत्वासिद्ध एवाप्रयोजकसन्दिग्धानैकान्तिको वा
इति हृदयम् । **स चेति** । अनवतीर्णानुकूलतर्को हेतुरित्यर्थः । **शङ्कितोपा-** 5
**धिरिति** । साधनाव्यापकत्वेन शङ्कितो यथा मित्रातनयत्वेन श्यामत्वे साध्ये
शाकपाकजत्वं साध्याव्यापकत्वेन शङ्कितो यथा तुल्ययोगक्षेमत्वे उभयत्र वा
यथा शाकपाकजत्वस्यैव औत्पत्तिकनवश्यामत्वं प्रति कारणत्वाग्रहदशायां
शाकपाकजत्वस्यैव निश्चितोपाधिरार्द्रेन्धनादि । यत्र शङ्कितोपाधौ अव्यति-
रेकित्वमन्वयः । **विपक्षस्येति** । सप्तम्यर्थे षष्ठी । **शतांशेनापीति** । अनवती- 10
र्णतर्कस्य विपक्षगामितां प्रत्यनुत्कटापि शङ्का यावत्स्यादित्यर्थः । **गमनिका-
बलम्** । गमकत्वसामर्थ्यं वा उपाधिपदप्रसिद्धिमाश्रित्याह—**तद्धर्मेति** । एतेन
समव्याप्त एव उपाधिपदशक्तिः विषमव्याप्तौ तु दूषकत्वं भक्तिनिबन्धन
औपाधिकपदप्रयोग इत्युक्तं भवति । अत्र प्राचीनसम्मतिमाह—**अन्य
इति** । सोपधय इत्यर्थः । परप्रयुक्तानाम् उपाधिगतानां—**तैरिति** । 15
सोपाधिभिरित्यर्थः । **दृष्टैरपि** व्यापकांशावधारणा अनुमितिस्तु इष्टेत्यर्थः ।
स्वाभाविकः संबन्धो व्याप्तिरित्यनुगमकं सर्वसाधारणम् अतः परेषां व्याप्ति-
प्रकारकपरिसंख्यानमनुक्तमित्यभिप्रेत्य तर्कोपयोगमुपसंहरन्नाह—**तदनेनेति** ।
विपक्षदण्डभूतेन विपक्षशंकानिवर्त्तकेन—**अन्यथा त्विति** । यत्र विपक्षदण्डभूतो
नास्ति तर्कस्तदित्यर्थः । बीजभूतं तर्कमाह—**यदि हीति** । ननु बौद्धानां 20
तादात्म्यतदुत्पत्तिस्वरूपमेव व्याप्तिर्न तु तद्ग्राहकं तथा च कथं तदुभयरूपा-
नुकूलतर्केण तदुभयग्रह इत्यत आह—**तस्मादिति** । प्रतिबन्धलक्षणं प्रतिबन्ध-
ग्राहकं न तु तत्स्वरूपमित्यर्थः । **अत एवेति** । तादात्म्यतदुत्पत्ती अन्तरेणापि
स्वाभाविकसंबन्धबलेनैवानुमानमित्यर्थः । लक्षणस्यातिव्याप्तिं निरस्यति—
**शाकेति** । तत्रोपाधिसंभवात् स्वाभाविकत्वलक्षणमेव नास्तीत्यर्थः । शाका- 25
द्याहारपरिणतेरुपाधेः साधनाव्यापकत्वमाह—**शाकाद्याहारेति** । **स श्यामो**
मित्रातनयत्वादित्यत्र मित्रातनयत्वस्य उपाधौ व्यभिचारशङ्कानिवर्त्तकस्तर्को
नास्ति येन व्यापकता गृह्येतेत्यर्थः । साध्यव्यापकतामाह—**व्यापिका त्विति** ।
अत्र विपक्षबाधकमाह—**कारणं चेति** । **एवमिति** । तद्यथार्द्रेन्धनं धूमस्य

व्यापकं वह्नेरव्यापकमित्यर्थः। अप्रयोजकस्य व्याप्यत्वासिद्धेऽन्तर्भावं सिद्धान्तिहृदिस्थमबुद्ध्वा पूर्वपक्षयति—**क्व पुनरिति**। एके मीमांसकाः—नैयायिकैकदेशिनश्च। तेषां तस्य स्वातन्त्र्याभ्युपगमात्। एकदेशी प्रपञ्चयति—**यथा हीति**। सिद्धसाधनवदयमपि स्वतन्त्र एवेत्यर्थः। **कालातीतेति**। एवं सति बाधस्याप्यपक्षधर्मतान्तर्भाव एव स्यादित्यर्थः। अनैकान्तिकादिरित्यादिपदाद्विरुद्धासिद्धसत्प्रतिपक्षाणामुपग्रहः। **व्यभिचारादीति**। साध्याभाववद्वृत्तित्वादीत्यर्थः। आदिपदात्सपक्षविपक्षव्यावृत्तत्वादिसंग्रहः। **तथाऽयमपीति**। सिद्धसाधनवदयमप्रयोजकोऽपि स्वतन्त्र एवेत्यर्थः। एकदेशी सूत्रविरोधं परिहरति—**सूत्रमिति**। हेत्वाभासपंचकपरिगणनसूत्रं सिद्धसाधनाप्रयोजकाद्युपलक्षणतया संगृह्णातीत्यर्थः। **विभागस्येति**। विभागपरं सूत्रं न्यूनाधिकसंख्याव्यवच्छेदकफलकमेव, अन्यथा परिगणनवैयर्थ्यापत्तेः। प्रमाणादिविभागसूत्रेऽप्यनाश्वासप्रसङ्गात्। न च तत्रार्थापत्त्यादीनामुपलक्षणतया सूत्रेण संग्रहेऽपि सूत्रकृताप्यप्रतिषिद्धत्वात्। न च तत्प्रामाण्यं सिद्धसाधनाप्रयोजकयोस्तु हेत्वाभासत्वं सूत्रकृता न निषिद्धमित्युपलक्षणतायामेव सूत्रतात्पर्यमिति वाच्यम्। अन्तर्भावे सति बहिर्भावायोगात्। तथा च अर्थापत्त्यादीनाम् अन्येषां मतसिद्धप्रामाण्यानां सूत्रकृता निषेधः। ननु तेषामपि सूत्रकृता प्रमाणत्वमङ्गीकृतम्। सिद्धसाधनाप्रयोजकयोस्तु न केनापि हेत्वाभासत्वं स्वीक्रियते येन सूत्रकृता निषिद्ध्येतेति भावः। अन्तर्भावयितुं पृच्छति—**क्व तर्हीति**। असिद्ध एवेति। व्याप्यत्वासिद्धेः आश्रयासिद्धेः चैवेत्यर्थः। विशेषद्वयं निःक्रष्टुमसिद्धसामान्यलक्षणमाह—**व्याप्यस्येति**। प्रतीतिः प्रमितिः सिद्धिर्लिङ्गस्येति। **इयमपीति**। एतादृशी असिद्धिरित्यर्थः। **अन्यतमेति**। सति ज्ञाने विषयाभावात् सति विषये ज्ञानाभावाद्वा मध्यमापीति आश्रयासिद्धिरपीत्यर्थः। **आश्रयस्वरूपेति**। यथा गगनकमलं सुरभीति। तद्विशेषणमाश्रयविशेषणं सन्देहः सिषाधयिषा वा तदप्रतीत्या तद्योग्यताविरहेण यद्वा सन्देहसिषाधयिषायोग्यताप्रतीतिगर्भैव पक्षतेत्यर्थः। चरमा पक्षतारूपपक्षाविशेषणाप्रतीत्या या सा सिद्धसाधनमित्यर्थः।

नन्वियमपि व्याप्यत्वासिद्धावेव किमिति न प्रवेश्यत इत्यत आह—**व्याप्तिस्थिताविति**। ननु बाधोऽपि सिद्धसाधनवत्पृथङ्न स्यात् इत्यत आह—**न त्वेवमिति**। व्याप्तेरेवेति। यद्यप्येवमपि व्याप्यत्वासिद्धौ व्यभिचारे बाध-

स्यान्तर्भाव आयाति, तथाप्युपजीव्यत्वमिति भावः । सिद्धसाधनं तूपजीव्यमपि न स्वतो दूषकमित्यन्यत्र विस्तरः ।

एकदेशिमतमाह—यत्त्विति । विपक्षबाधकतर्कानवतारे हेतोर्विपक्षगामिताशङ्कायामप्रयोजकसन्दिग्धानैकान्तिकत्वमित्यर्थः । व्यभिचारशङ्कायामपि व्याप्यत्वासिद्धिरेवोपजीव्येति तत्रैवाप्रयोजकान्तर्भाव इत्यर्थः । अन्यथा 5 शङ्का त्विति । निर्बीजशङ्काप्यतिप्रसङ्गादेव न दूषिकेत्युक्तमिति भावः ॥७॥

## बोधनी

ननु यदि तर्केण व्यभिचारशङ्कानिवृत्तिः तर्हि तर्कस्याप्यविनाभावापेक्षत्वात्तत्रापि शङ्कानिवृत्त्यर्थं तर्कान्तरापेक्षायामनवस्था स्यादित्याशङ्क्याह नन्विति । अत्रोत्तरत्वेन तृतीयं पादमवतारयति नेति । नानवस्थया भवितव्यम्, न हि यत्र यत्राविनाभावग्रहस्तत्र सर्वत्र शङ्कोदय इति । व्याघातावधित्वमेवाह तदेव हीति । यस्मिन्नाशङ्क्य- 10 माने लोकस्य व्यवहारव्याघातादयो न प्रादुष्यन्ति तत्रैव शङ्का न सर्वत्रेति । कुत इत्यत आह न हीति । न हि कार्यकारणभावोऽपि न स्यादिति शङ्कायाः संभवस्तस्या अपि कस्यचित्कार्यत्वादिति न केवलं शङ्कानुदयः सर्वमपि कार्यजातं मिथ्या कार्यकारणभङ्गादित्यादि च बाधकमूहनीयमित्याह सर्वमिति । यद्वा, सर्वं व्यभिचरिष्यतीतिवत्सर्वं मिथ्या भविष्यतीत्यपि शङ्काया अनुत्थानं तस्या अपि सर्वान्तर्भावेन मिथ्यात्वेन व्याघाता- 15 दिति प्रसङ्गादुच्यतइति । नन्वसार्वत्रिकत्वेऽपि यत्र कुत्रचिदपि संभवन्तीत्याशङ्कोपाधिनिषेधेनैव निवर्तनीया, तत्रैन्द्रियकस्य योग्यानुपलम्भेन निषेधेऽप्यतीन्द्रियस्य कथं निषेध इत्याह तथापीति । न वै क्वचिदिति । प्रसक्तं हि प्रतिषिध्यत इति । तर्हि भूयोदर्शनेनैव प्रतिबन्धसिद्धेस्तर्कः शङ्कावधिरित्यादिकमरण्यरुदितं स्यादित्यत्राह—केवलमिति । न तावत् भूयोदर्शनमात्रात्प्रतिबन्धनिश्चयः, नापि सर्वत्रोपाध्याशङ्का, किन्तु 20 निबन्धनान्तरकृतस्यापि साहचर्यस्य क्वचिद्दर्शनात् किमत्रापि निबन्धनान्तरमस्ति वा न वेति क्वचिच्छङ्का जायते, सा च हेतोर्विपक्षसंसर्गशङ्कां फलति, ततो न प्रतिबन्धनिश्चयः स्यात्, तेन हेतोः साध्यसंसर्गे निबन्धनान्तरशङ्का स्वरूपतः फलतश्च प्रतिबन्धनिश्चयार्थं निबन्धनीया । तत्र या फलभूता धूमवानपि पर्वतः किमनग्निः स्यादिति पक्ष एव विपक्षत्वेन जिज्ञासा सा तर्केण साक्षान्निवर्तते । यदि तथा स्याद् धूमस्याकारणत्वेन कादाचि- 25 त्कत्वभङ्गप्रसङ्गः दुष्टत्वं वाग्नेरनियतत्वान्नियतस्य च हेत्वन्तरस्याभावादिति । ततो निवृत्तव्यभिचारशङ्को निष्कलङ्को भूयोदर्शनेनावधृतप्रतिबन्धाल्लिङ्गाल्लिङ्गिनमनुमिनोति, तत

उपाधिशङ्कास्वरूपमपि निवर्तते, न चोपाधिशङ्काऽप्यनुमानप्रवृत्तेः पूर्वमेव निवर्तनीया विपक्षजिज्ञासानिवृत्त्यैवानुमानप्रवृत्तेः, पाश्चात्त्या तूपाधिशङ्कानिवृत्तिर्वस्तुगत्योक्ता, न त्वनुमानप्रवृत्त्युपयोगित्वेनेति । न च तर्कसनाथेन भूयोदर्शनेन निश्चितप्रतिबन्धं लिङ्गमनुमानाङ्गमित्ययमर्थः स्वमनीषिकामात्रकल्पित इत्याह **न चैतदि**ति ।

5 "अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः" इति तर्कं लक्षयित्वा वादसूत्रे प्रमाणतर्कसाधनोपालम्भ इति न्यायाङ्गतां तर्कस्य व्युत्पादयतः सूत्रकृतो न्यायोपकारकत्वस्याभिमतत्वात्, अन्यथा तर्कस्य न्यायानङ्गत्वे तद्व्युत्पादनमनर्थकं स्यात् प्रयोजनान्तराभावादिति विस्तरतः प्रतिपादितमर्थं शिष्यानुकम्पया संक्षिप्य वक्ष्याम इत्याह **तदयमि**ति । यत्र हेतावुपाधिविधूननेन भूयोदर्शनसहायकमाचरन्ननुकूलस्तर्को नास्ति

10 सोऽप्रयोजकः, उपाधिमानप्रयोजक इत्युक्तं भवति तत्र शङ्कितोपाधेरप्रयोजकत्वे मीमांसावार्त्तिकमुदाहरति **यावच्चे**ति । कोऽसावुपाधिर्नाम यद्वा न प्रयोजक इत्यत्राह **उपाधिस्त्वि**ति । एकस्मिन्साध्ये साधनत्वेनोपप्लवमानयोः यः साधनाव्यापकत्वे सति साध्यसमव्याप्तिकः स इतरस्य साध्यसंबन्धे उपाधिः स्यात्, तत्र साध्यव्यापक इत्येवोच्यमाने अनित्यत्वसाधने सावयवत्वे कृतकत्वमुपाधिः स्यात्, अथ साधनाव्यापक

15 इत्येवाभिधीयते तदा कृतकत्वे सावयवत्वमुपाधिः स्यात्; न चैतद्युक्तमुभयस्यापि प्रयोजकत्वादिति । एवं लक्षणकमुपाधिशब्दप्रवृत्तिनिमित्तमाह **तद्धर्मे**ति । संसृज्यमाने तद्धर्मविरहिणि धर्मिणि स्वधर्मिप्रतिभासनिमित्तत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति । अत्रापि वार्त्तिकमुदाहरति **तदिदमाहु**रिति । येऽपि वैशेषिकादयः "अस्येदं कार्यं कारणं संयोगि समवायि विरोधि चेति लैङ्गिकम्" इति (वै. सू. ९. २. १.) वदन्ति, तेषामपि

20 तत्प्रतिबन्धनिश्चये तर्कसनाथं भूयोदर्शनमेव निदानम्, न च तस्मिन्सति सविशेषनिर्विशेषयोर्बलाबलं प्रति कश्चिद्विशेषः, अन्यथा यदि तर्कसनाथं भूयोदर्शनं न स्यात् ततस्तत् सर्वं लिङ्गाभासं भवेदित्याह **तदनेने**ति ।

तादात्म्यतदुत्पत्तिनिबन्धनः प्रतिबन्ध इति वदतामपि तन्निश्चयोपायस्तर्क एवेत्याह **तादात्म्ये**ति । तत्र तर्कं दर्शयति **यदि ही**ति । तयोः कार्यात्मनोस्तत्त्वं

25 कार्यत्वमात्मत्वं चेति यतस्तर्क एव प्रतिबन्धबीजं न तु कार्यत्वमात्मत्वं वा, तत एव बौद्धानामयमभ्युपगमः सिद्ध्यतीत्याह **अत एवे**ति । तस्माद्विपक्षे दण्डभूतस्तर्क एव प्रतिबन्धहेतुः सर्वत्रेत्युपसंहरति **तस्मादि**ति । विपक्षे बाधकाभावेन सोपाधिकमुदाहरति **तथा ही**ति । श्यामत्वे साध्ये मैत्रातनयत्वस्य हेतोः शाकाद्याहारपरिणतिरुपाधिः पक्षभूते मैत्रातनये शाकाद्याहारपरिणतेरसत्त्वे बाधकाभावेन तद्विरहसंभवेन साधनं

मैत्रातनयत्वं प्रति तस्या अव्यापकत्वात्, साध्यां श्यामिकां प्रति च कारणत्वेन व्यापकत्वात्कारणातिपाते च कार्यासंभवप्रसङ्ग इति विपक्षे बाधकेन कार्यं प्रति कारणत्वस्य व्यापकत्वसिद्धेः। इदं च शङ्कितोपाधेः प्रयोजकस्योदाहरणं शाकादिपरिणतेर्मैत्रातनयत्वं प्रति व्यापकत्वानिश्चयात् निश्चितोपाधेस्त्वधर्मत्वसाधनं निषिद्धत्वोपाधिकं हिंसात्वं गमकमिति सव्यभिचारादिषु कुत्रान्तर्भावो अप्रयोजकस्येति प्रसङ्गात् पृच्छति **क्व पुन** इति। 5
तत्रैकदेश्युत्तरमाह **न क्वचिदिति**। कथं सव्यभिचारादिषु पञ्चस्वनन्तर्भूतो हेत्वाभासः स्यादित्याशङ्क्याह **यथा हीति**। सिद्धसाधनवदयमपि पृथगेव हेत्वाभास इति सन्दिग्धसाध्यधर्मविशिष्टस्य पक्षत्वात् साध्यनिर्णये सति तदभावादपक्षधर्मः सिद्धसाधनमिति सिद्धान्तदृष्ट्याशङ्क्याह **नापीति**। एवं कालातीतोऽपि न पृथक् हेत्वाभासः स्यात् तत्रापि विपर्ययनिर्णयेन साध्यसन्देहाभावात् सपक्षधर्मतोपपत्तेरिति। **न चेति**। 10
विरुद्धत्वादेस्तत्संभावनैव नास्तीति भावः। दार्ष्टान्तिके निगमयति **तथायमपीति**। यद्यनयोर्नान्यत्रान्तर्भावः कथं तर्हि "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति विभागोद्देशसूत्रमित्यत आह **सूत्रं त्विति**। **विभागस्येति**। अन्यथा विभागोद्देशोऽनर्थकः स्यादिति। यद्यनयोर्हेत्वाभासान्तरत्वं न स्यात् तर्हि सव्यभिचारादिषु कस्मिन्नन्तर्भाव इत्याह **क्व तर्हीति**। **असिद्ध एवेति** 15
तयोर्निवेश इत्यनुषङ्गः, सिद्धिनिरूपणपुरःसरमसिद्धिप्रकारानभिसन्धाय तत्रैवानयोरन्तर्भाव-मुपपादयति **तथा हीति**। तत्रान्यथासिद्धोऽप्रयोजकः, मध्यमाप्याश्रयासिद्धिर्द्विधा भवति। आश्रयस्य धर्मिणोऽभावात्। तद्विशेषणस्य सन्दिग्धसाध्यधर्मवत्त्वस्याभावा-द्विशेष्याभाव इव विशेषणाभावेऽपि विशिष्टाभावस्याविशिष्टत्वात्तयोर्द्वितीया सिद्धसाधन-मिति, तत्र कालातीतविलोपप्रसङ्ग उक्त इति चेत्तत्राह **व्याप्तिस्थिताविति**। 20
सिद्धसाधने हि सत्यामेव व्याप्तौ पक्षत्वमात्रविघटनादाश्रयासिद्धिरेव, बाधितविषये तु व्याप्तेरेवाहत्य भङ्गः, पश्चात्तु साध्यविपर्ययनिर्णयात् पक्षत्वातिपात इत्यनयोर्विशेष इति। अप्रयोजकस्य व्याप्त्यसिद्धावन्तर्भावं मन्यमानो मतान्तरमाशङ्क्य दूषयति **यत्त्विति**। प्रथमे व्याप्त्यसिद्धिं निमित्तीकृत्य व्यभिचारशङ्केत्यत्र पूर्वसिद्धासिद्धिरेव दूषणं स्यान्न तु तदुपजीवनेन प्रवृत्ता व्यभिचारशङ्का, अन्यथा व्याप्तिनिर्णये तु व्यभिचारशङ्कात्मकं 25
दूषणमेव नोदेतीति निर्णीते विषये शङ्काया निरवकाशत्वादिति ॥७॥

विवेकः

ननु मास्त्वाहार्यशङ्कया व्याप्तिग्रहपरिभवः स्वरसवाहिन्यातीन्द्रियोपाधिशङ्कया तु स्यात्। तद्व्यतिरेकनिश्चयाभावादित्याशंकते—**तथापीति**। तत्र साध्यव्यापकतया

साधनाव्यापकतया वा निश्चितेऽतीन्द्रिये साधनाव्यापकत्वस्य साध्यव्यापकत्वस्य वा संशयात् तत्संशयः। किम्वा सामान्यत एव कश्चिदुपाधिरत्र भविष्यति इत्येवमाकारो नाद्य इत्याह—**न वै कश्चिदिति**। तादृशस्य गुरुत्वाद्दृष्टादेस्तु तत्प्रमाणेन साध्याव्यापकत्वस्य साधनव्यापकत्वस्य वाग्रहात् एतच्छङ्काया एवाभावादिति भावः।
5 साहचर्यनिबन्धनमात्रं हेतौ सामानाधिकरण्यनियामकमात्रम्। मात्रपदेन विशिष्य तदुपस्थितिव्यावृत्तिः विपक्षवृत्तित्वजिज्ञासाव्यभिचारसंशयः। कार्ये कारणोपचारात् सत्तर्कादिविपर्ययः पर्यवसानत्वम्वा निवर्तते प्रतिबध्यते। निवर्तेत इति पाठे नोत्पद्येत इत्यर्थः। एवमग्रेऽपि ततोऽनुमानप्राप्तौ व्याप्तिनिश्चये जाते उपाधिसंशयोऽपि तेन निवर्तते। व्याप्ये उपाध्यसंभवादिति भावः। सत्तर्कस्य व्याप्तिग्रहोपयोगित्वमनागमम् न
10 सिद्धान्तसिद्धम्।

शङ्कितोपाधेरनुमानप्रत्यूहत्वे प्राचां सम्मतिमाह—**यत्रेदमिति**। विपक्षस्य साध्याभाववतो हेतोरव्यतिरेकित्वं हेतुव्यतिरेकशून्यत्वं हेतुमत्त्वमिति यावत्। **शतांशेनापीति**। तदंशे अनुत्कटकोटिकसंशयस्यापि[1] विरोधिता न जायमानकारणं व्याप्तिनिश्चयः।

**साधनाव्यापकत्व इति**। यद्धर्मावच्छिन्नसाधनतावच्छेदकावच्छिन्नवन्निष्ठा-
15 भावप्रतियोगितावच्छेदकं तद्धर्मावच्छिन्नसाध्यतावच्छेदकावच्छिन्नवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं तत् तदवच्छिन्नत्वेन रूपेण तस्योपाधित्वं यथा श्रुतिसाध्यव्यापकत्वस्य साधनाद्यवच्छिन्नतद्व्यापकाव्यापकत्वं यत्किञ्चिद्धर्मावच्छिन्नतद्व्यापकत्वञ्च वह्निसाध्यके धूमादिहेतौ व्यंजनवन्नातिप्रसक्तमिति ध्येयम्। गुणकर्मान्यत्वविशिष्टसत्तावान्, सत्त्वादित्यत्र जन्यत्वावच्छिन्नविशिष्टस्यानतिरिक्तत्वाच्चस्य च गुणेऽपि
20 सत्त्वादिति भावः। सत्त्वाव्यापके स्पर्शवत्त्वादौ जन्यत्वावच्छिन्नसत्त्वाव्यापकेऽति व्याप्तिवारणाय साध्यतावच्छेदकेति। द्रव्यं विशिष्टसत्त्वादित्यादौ तत्रैवातिव्याप्तिवारणाय च साधनत्वावच्छेदकेति साध्यसाधनयोः तद्धर्मावच्छिन्नत्वञ्च एकसम्बन्धेन सामानाधिकरण्येन च तेन विशेषणतासम्बन्धेन जन्यत्वाधिकरणवृत्तित्वविशिष्टव्यापके कालिक-
सम्बन्धेन च तदधिकरणवृत्तित्वविशिष्टसाधनाव्यापके तत्रैव नातिव्याप्तिः न वा स्पर्शवान्
25 परिमाणात् मनोऽन्यत्वे सत्यणुत्वाद्वेत्यत्र नित्यत्वाधिकरणसाध्यसाधनाव्यापके पृथिवीत्वाभावादौ नातिप्रसङ्गः। साध्यवत्त्वसाधनवत्त्वे साध्यत्वसाधनत्वावच्छेदकसम्बन्धेन प्रतियोगित्वे च एकसम्बन्धावच्छिन्ने तेन न सम्बन्धभेदनिबन्धनो दोषः **प्रपञ्चितामि-**

---

१—ख. तदंशेऽनुत्कटकोटिकसंशयस्यापि विरोधितालाभाय इति मणिकारः। बलं व्याप्तिनिश्चयः।

**दमनुमानमणिपरीक्षायाम्** । दूषणौपयिकरूपं निरुच्य उपाधिपदस्य योगार्थमाह—**तद्धर्मेति** । विषमव्याप्तेः तु दूषणौपयिकमात्रमादाय प्रयोगः शक्त्या लक्षणया वेत्यन्यदेतत् ।

अन्ये निरुपाधितो भिन्नाः सोपाधय इति यावत् । परप्रयुक्तानामुपाधिवृत्तीनामुपजीवकाः परम्परया तत्प्रकारकज्ञानविषयाः तैः सोपाधिभिः हेतुभिः पक्षे दृष्टैरपि न साध्यस्य निश्चयः व्याप्यत्वेन तेषामनवधारणादिति भावः । 5

प्रागुक्तमननुगमसुद्धरति—**तदनेनेति** । विपक्षादंनुभूतेन व्यभिचारधीप्रतिबन्धकेन सनाथे व्यभिचारज्ञानविरहरूपसहकारिसम्पन्नेऽन्यथाकार्यकारणान्यत् । उक्तेष्वेव त्रिषु प्रपञ्चमाह—**समवायीत्यादि** । असमवायि समवायिभिन्नं लिङ्गमिति व्याप्तिपक्षधर्मतावदिति निःशङ्कमवधारणीयम् निश्चेयम् अन्यथा व्याप्तिपक्षधर्मताशून्यस्तदाभासो लिङ्गाभासः । परोक्ततादात्म्यतदुत्पत्तावपि व्याप्तिग्राहकत्वे एतदेव बीजं व्यभिचारशङ्कानिरासकं तर्कस्योपपादकत्वमेव दर्शयति—**सामग्रीनिवेशिन इति** । सामग्रीव्याप्यात् अत एव चरमकारणात् स्वोत्तर भाविकारणानपेक्षात् ढक्कातारणादितः कार्य्यं शब्दादिप्रतिबन्धलक्षणं व्याप्तिग्राहकं तर्कस्य सत्त्वासत्त्वयोर्व्याप्तिग्राहकत्वेऽन्वयव्यतिरेकौ दर्शयति—**तथा हीति** । तस्य व्यतिरेकात् तद्व्यतिरेकमन्वयात्तदन्वयमाह—**व्यापिका त्विति** । 10 15

पञ्चसु हेत्वाभासेषु क्वाप्रयोजकोऽन्तर्भवति । **न क्वचिदिति** । अतिरिक्त एव हेत्वाभास इत्यर्थः । न बाधितविषयं न बाधरूपहेत्वाभासान्तर्गतम् । विषयापहारः, साध्याभाववत् पक्षकत्वं तस्य पक्षकत्वाभावात् । **कालातीतेति** । बाधेऽपि तादृशपक्षाभावात् । तस्यापि स्वरूपासिद्धिविशेषप्रसङ्गादित्यर्थः अनैकान्तिकादिपदादप्रसिद्धहेत्वाभासान्तरपरिग्रहः व्यभिचारादित्यादिपदात् तल्लक्षणग्रहणम् । सूत्रं व्यभिचारविरुद्धप्रकरणसमातीतकाला इत्यात्मकमुपलक्षणमिति । सिद्धसाधनानुरोधेन तथात्वस्यावश्यकत्वादिति भावः । 20

**न्यूनेति** । न्यूनताया उद्देशवलेनाधिकस्य निवृत्तिः सामान्यतः प्राप्तस्य विशेषरूपेणाभिधानस्य इतरव्यवच्छेदपरत्वव्युत्पत्तिबलेन प्राप्तत्वादिति भावः । पृच्छति **क्वेति द्वयोः**, सिद्धसाधनाप्रयोजकत्वयोः । उत्तरम् । **असिद्ध एवेति** । पूर्वापरकालवर्त्त्यभेदरूपम् । **स्मरणाभिव्याप्यस्येति** । तदभावत्वं तत्प्रतिबध्यज्ञानविषयत्वम् । तथा च व्याप्तिविशिष्टपक्षधर्मतानिश्चयप्रतिबध्यज्ञानविषयत्वं फलितम् । प्रतिबध्नीतश्च व्याप्तिपक्षधर्मतानिश्चयौ । 25

---

१—ख. विपक्षदण्डभूतेन । व्यभिचारबाधप्रतिबन्धकेन ।

व्याप्यत्वाभावव्याप्तिनिश्चयाभावपक्षधर्मत्वाभावपक्षधर्मत्वनिश्चयाभावा न तन्निश्चयः तद्भावनिश्चयस्येव तन्निश्चयाभावस्याप्यनुपपत्तेः । तत्र व्याप्यभावव्याप्तिनिश्चयाभावौ व्याप्यत्वासिद्धिः पक्षधर्मत्वाभावतन्निश्चयाभावौ च स्वरूपासिद्धिरिति विभागः । अनैकान्तिकत्वे विरुद्धान्यत्वस्य च निवेशान्न तत्रातिप्रसङ्गः । सिद्ध्यभावनिश्चयविरोधित्वं च
5 सिद्धावस्तीति तत्संग्रहः । अन्यतमाऽप्रतीत्या अन्यतमप्रतीतिविरोधितया अन्यथासिद्धिः । आश्रयासिद्धिः, आश्रयः पक्षः तद्विशेषणस्यासिद्धिः । तदपि विशेषणं द्विरूपम् । ज्ञायमानम्, अज्ञायमानञ्च, ज्ञायमानं पर्वते काञ्चनमयत्वादि इतरच्च सिद्ध्यभावात्मकं तदभावश्च सिद्धिरिति ध्येयम् । तद्विशेषणं पक्षत्वाप्रतीत्या तदभावेन प्रतीतिपदं प्रामाणिकत्वसूचनाय साधकबाधकमानाभावरूपपक्षत्वमाशङ्क्य सिद्ध्यभावमात्रस्य तत्त्वमालम्ब्य
10 निराकरोति ।

**न त्विति** । व्याप्तिरेवेत्येव तेन पक्षत्वव्यवच्छेदः उपजीव्यत्वाच्च पृथगाभासत्वमिति भावः । **व्याप्त्यसिद्ध्या हीति** । यद्यप्यनैकान्तिकत्वसन्देहात् व्याप्त्यसिद्धिवत् अनैकान्तिकत्वधियापि व्याप्त्यसिद्धिः अन्यथा निश्चितव्यभिचारस्याप्यदोषत्वप्रसंगः तथापि व्याप्त्यसिद्धेरप्याभासत्वमवर्जनीयमेव परिभाषामात्रे विवादस्त्वप्रयोजक इति ध्येयम् ।
15 **अन्यथेति** दूषणत्वेनाभिमताया शङ्काया नेत्यर्थः । अत एवाह **निर्णीत इति** ॥७॥

उपमानन्तु बाधकमनाशङ्कनीयमेव, विषयानतिरेकादिति केचित् । तथाहि— न तावदस्य विषयः सादृश्यव्यपदेश्यं पदार्थान्तरमेव सम्भावनीयम् ।

**परस्परविरोधे हि न प्रकारान्तरस्थितिः ॥**
**नैकताऽपि विरुद्धानामुक्तिमात्रविरोधतः ॥ ८ ॥**

20 न हि भावाभावाभ्यामन्यः प्रकारः सम्भावनीयः, परस्परविधिनिषेधरूपत्वात् । न भाव इति भावनिषेधमात्रेणैवाभावविधिः । ततस्तं विहाय कथं स्ववचनेनैव पुनः सहृदयो निषेधेन्नाभाव इति । एवं, नाभाव इति निषेध एव भावविधिः । ततस्तं विहाय स्ववाचैवानुन्मत्तः कथं पुनर्निषेधेन्न भाव इति । अत एवम्भूतानामेकताप्यशक्यप्रतिपत्तिः । प्रतिषेधविध्योरेकत्रासम्भवात् । तस्माद्भावाभावावेव तत्त्वम् ॥

25 भावत्वेऽपि गुणवन्निर्गुणं वेति द्वयमेव पूर्ववत् । पूर्वं द्रव्यमेव । उत्तरञ्चाश्रितमनाश्रितं वेति द्वयमेव पूर्ववत् । तत्रोत्तरं समवाय एव । अनवस्थाभयात् । आश्रितन्तु सामान्यवन्निःसामान्यञ्चेति पूर्ववत् द्वयमेव । तत्र प्रथममपि स्पन्दोऽस्पन्द इति द्वयमेव । एतच्च यथासङ्ख्यं कर्म गुण इति व्यपदिश्यते । निःसामान्यं निर्गुणमाश्रितन्त्वेकाश्रितमनेकाश्रितं वेति प्रागिव द्वयमेव । एतदपि यथासंख्यं विशेषः

सामान्यञ्चेत्यभिधीयते। तदेतत्सादृश्यमेतास्वेकां विधामासादयन्नातिरिच्यते। अनासादयन्न पदार्थीभूय स्थातुमुत्सहते।

एतेन शक्तिसंख्यादयो व्याख्याताः। ततोऽभावेन सह सप्तैव पदार्था इति नियमः। अतो नोपमानविषयोऽर्थान्तरमिति ॥ ८ ॥

आमोदः

**केचिदिति**। वैशेषिकादयः भवदभिमतोपमितिविषयस्यानुमानिकत्वमेवेति तेषामाशयः। विषयाभावमेवोपपादयति—**यथा हीति**। जरन्मीमांसकाभिमतमुपमानं निराकरोति—**न तावदिति**। सादृश्यपदार्थान्तरत्वं निराकर्त्तुं भूमिकामारचयति—**परस्परेति**। कारिकां व्याचष्टे—**न हीति**। **एवम्भूतानामिति**। परस्परविरुद्धानामित्यर्थः। न हि य एव भावः स एवाभाव इति संभवतीति भावः। **उत्तरमिति** अनाश्रितो निर्गुणो भावः समवाय एवेत्यर्थः। समवायस्यानाश्रितत्वे मानमाह—**अनवस्थेति**। विपक्षबाधकतर्कानवतारे हेतोर्विपक्षगामिताशङ्कायामप्रयोजकस्य सन्दिग्धानैकान्तिकत्वमित्यर्थः। व्यभिचारशङ्कायामपि व्याप्यत्वासिद्धिरेवोपजीव्येति तत्रैवाप्रयोजकान्तर्भाव इत्यर्थः। समवाये समवायांगीकारेऽनवस्था क्वचिदनङ्गीकारे प्रथम एव विश्राम इत्यर्थः। **एतच्चेति**। यद्याश्रितः सामान्यवान् निर्गुणः स्पन्दात्मा तदा कर्मैव। अथाश्रितः सामान्यवान्निर्गुणः स एवास्पन्दात्मा तदा गुण एवेत्यर्थः। **यथासंख्यमिति**। निःसामान्यं निर्गुणमेकाश्रितं चेत्तदा विशेषः एतादृशमनेकाश्रितं, तदा सामान्यमेवेति कथं सादृश्यं पदार्थान्तरं स्यादित्यर्थः। एतदेवाह—**तदेतदिति**। **नातिरिच्यत इति**। षट्पदार्थाद्बहिर्भूतं न भवतीत्यर्थः। यद्यप्ययं परिशेषः कर्माद्यपि हापयति, तथापि तत्र प्रमाणमन्यत्रोक्तमनुसन्धेयम्। अत्र तु प्रमाणाभाव एव परिशेषेण दर्शित इति भावः।

**एतेनेति**। प्रमाणाभावेनैव परिशेषमुखेन दर्शितेनेत्यर्थः। आदिपदात्सांख्याभिमतप्रधानादिसंग्रहः। **अर्थान्तरमिति**। पदार्थान्तरमित्यर्थः ॥८॥

बोधनी

तदेवं प्रत्यक्षानुमानयोस्तदभावावेदकत्वं निराकृत्य सम्प्रत्युपमानस्य निराचिकीर्षुरेकेषां मतं तावदुपन्यस्यति **उपमानं त्विति**। क्लृप्तप्रमाणविषयातिरिक्तविषयासंभवादुप-

मानस्य पृथक्प्रामाण्यमेव नास्ति कुतस्तेन बाध आशङ्क्येतेति । विषयानतिरेकमेवाह **न तावदिति** । पदार्थान्तरं हि भवत् सादृश्यं किं भावाभावाभ्यामन्यत्किं वोभयात्मकं किमुत भावात्मकमेव षट्पदार्थातिरेकेणेति विकल्पं हृदि निधाय सामान्येन कोटिद्वयाति-रेकस्यापि न संभवतीत्याह ।

5 **परस्परेति** । भावाभावयोः परस्परप्रतिक्षेपत्वलक्षणस्वरूपत्वाद्भावनिषेधोऽभाव-विधिः स्यात् तन्निषेधश्च भावविधिः, तेन ताभ्यामन्यः प्रकारः संभवति न कस्यापीति शेषः । हि यस्मात्तस्माद्दूरे सादृश्यस्य विशेषस्य प्रकारान्तरस्थितिवार्तेति भावः । न च क्वापि विरुद्धानामैकात्म्यं विरुद्धत्वादेव अन्यथा विरोध एव न स्यात् । तथा च कथं परस्परविरुद्धभावाभावात्मकं भवेत्सादृश्यमिति भावः । किं च आस्तां तावद्वस्तुगतो 10 विरोधः, वचनमात्रस्यैव विरोधात् भावाभावात्मता निरस्तेत्याह **उक्तीति** ॥

एतेनैव भावत्वेऽपि षट्पदार्थातिरेको निरस्तः । परस्परविरोधिसगुणनिर्गुणादि-व्यतिरेकेण प्रकारान्तरासंभवादुभयात्मकत्वासंभवाच्चेति व्याचष्टे **न हीति** । भवतु भावात्मकमेव तत्त्वान्तरमित्यत्रापि श्लोकं व्याचक्षाण आह **भावत्वेऽपीति** । **पूर्ववदिति** । भावाभावयोरिव परस्परविधिनिषेधरूपत्वात्सगुणनिर्गुणयोरित्यर्थः । 15 एवमुत्तरेष्वपि द्रष्टव्यम् । समवायस्याश्रितत्वे बाधकम् **अनवस्थेति** । आश्रितत्वं नाम समवायस्य समवायित्वमेवाद्रव्यत्वेन संयोगासम्भवात् । तत्र च समवायस्या-श्रितत्वाभ्युपगमेऽनवस्था स्यात् । इह पटे रूपसमवाय इति प्रतीतिस्तु विशेषणविशेष्य-भावमात्रनिबन्धनेति, तदेवं पदार्थव्यवस्थितौ यदि सादृश्यं सगुणत्वादिविधास्वन्तर्भवेत् पदार्थषट्कान्नातिरिच्यते, अनन्तर्भावे वा पदार्थ एव न स्यादित्याह **तदिति** । शक्ति-20 संख्यादीनामपि षट्पदार्थान्तरत्वमनेनैव मार्गेण निराकृतमिति प्रसङ्गादाह **एतेनेति** । उपसंहरति **तत** इति । ततश्चाप्रमाणत्वादेव न बाधकमिति ॥ ८ ॥

विवेकः

**उपमानन्त्विवति** उपमानत्वेन यदभिमतं तन्न क्लृप्तप्रमाणाबाध्यबाधकक्लृप्त-प्रमितिसामग्र्यसमवधानकाले ज्ञानाजनकत्वात्मवदित्यर्थः । **केचित्** वैशेषिकादयः । जरन्मीमांसकमतमुत्थाप्य एव निराकुर्वते । **तथा हीति** । तथा च क्लृप्तप्रमिति-25 सामग्र्यसमवधानकाले प्रमित्यजनकत्वं स्वरूपासिद्धमिति भावः । न तत्प्रत्यक्षम् सत्यपि इन्द्रियसन्निकर्षादौ तदग्रहात्, नानुमेयम्, लिंगाप्रतिसन्धानेऽपि प्रथनादित्यादि । **पदार्था-न्तरमिति** । तत्र भावषट्कं जातिवृत्तित्वात् नाभावस्तत्समवेतत्वादितिभावः ।

परस्परविरोधे परस्पराभावरूपत्वविरोधशालिनि प्रकारान्तरस्य व्यवस्थितिः नेत्यर्थः। ननु विधिनिषेधात्मकं चित्रमेवास्तु इत्यत आह—**नैकतापीति**। प्रतियोग्यभावयोर्नैकत्र तादात्म्यसंभव इत्यर्थः।

पूर्ववत् असंभवत् प्रकारान्तरमेवमग्रेऽपि आश्रितम् समवेतम्। **तत इति**। यद्यप्येवं विकल्पेनाक्लृप्तपदार्थकल्पनमेव दुःशकम् तथापि तदन्यत्वे सति तद्वृत्तिधर्म- 5 वत्त्वेनैवोपाधिना तद्बुद्ध्युपपत्तेरतिरिक्तकल्पने मानाभावे तात्पर्यम् ॥८॥

स्यादेतत्। भवतु सामान्यमेव सादृश्यं, तदेव तस्य विषयः स्यात्। तत्सदृशोऽयमिति हि प्रत्ययो नेन्द्रियजन्यः, तदापातमात्रेणानुत्पत्तेरिति चेन्न। पूर्वपिण्डानुसन्धानरूपसहकारिवैधुर्येणानुत्पत्तेः। सोऽयमिति प्रत्यभिज्ञानवदिति।

नन्वेतत्सदृशः स इति नेन्द्रियजन्यम्। तेन तस्यासम्बन्धात्। न चेदं स्मरणम्। 10 तत्पिण्डानुभवेऽपि विशिष्टस्याननुभवात्। न चैतदपि, अयं स इति विपरीतप्रत्यभिज्ञानवदुपपादनीयम्। तत्तेदन्तोपस्थापनक्रमविपर्ययेऽपि विशेष्यस्येन्द्रियेण सन्निकर्षाविरोधात्। तस्य सन्निहितवर्त्तमानगोचरत्वात्। प्रकृते तु तदभावात्। तस्मात्, तत्पिण्डस्मरणसहायमेतत्पिण्डवर्त्तिसादृश्यज्ञानमेव तथाविधं ज्ञानमुत्पादयदुपमानं प्रमाणमिति। 15

एतदपि नास्ति।

**साधर्म्यमिव वैधर्म्यं मानमेव प्रसज्यते ॥**
**अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृतं न किम् ॥ ९ ॥**

यदा हि एतद्विसदृशोऽसौ इति प्रत्येति, तत्रापि तुल्यमेतत्। न हि तत्प्रत्यक्षमसन्निकृष्टविषयत्वात्। न स्मरणम्। विशिष्टस्याननुभवात्। नोपमानमसादृश्य- 20 विषयत्वात्। नन्वेतद्धर्माभावविशिष्टत्वमेव तस्य वैधर्म्यं, तच्चाभावगम्यमेवेष्यते। न च प्रकृतेऽपि तथाऽस्तु। सादृश्यस्य भावरूपत्वादिति चेन्न। इतो व्यावृत्तधर्मविशिष्टताया अपि वैधर्म्यरूपत्वात्। तस्य च भावरूपत्वात्।

स्यादेतत्। तद्धर्मा इह न सन्तीत्यवगते, अर्थादापद्यते इहाविद्यमानास्तत्र सन्तीति। न हि तद्विधर्मत्वमेतस्योपपद्यते, यद्येतद्विधर्माऽसौ न भवतीति चेत्। एवं 25 तर्हि प्रकृतमप्यर्थापत्तिरेव। न हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्षसिद्धमपि तस्यैतत्सादृश्यविशिष्टत्वं विनोपपद्यते।

एतेन दृष्टासन्निकृष्टप्रत्यभिज्ञानं व्याख्यातम्। तत्रापि तद्धर्मशालित्वं तस्य स्मरणाभिव्यक्तमनुपपद्यमानं तदिदन्तास्पदस्यैकतां व्यवस्थापयति। तस्मान्नोपमानमधिकमिति ॥ ९ ॥ 30

आमोदः

**सामान्यमेवेति**। तद्गतभूयः सामान्यवत्त्वमित्यर्थः। नेन्द्रियज इत्युपलक्षणं नानुमानिको न शाब्द इति द्रष्टव्यम्। तत्र च शब्दलिङ्गानुसन्धानमन्तरेणापि जायमानत्वादिति द्रष्टव्यम्। इन्द्रियजत्वमेव व्यवस्थापयति—**पूर्वेति**। प्रतियोगिस्मरणविलम्बेन विलम्ब इत्यर्थः।

5 शावरमुपमानं शङ्कते—**नन्विति**। गवये दृष्टे गवयसदृशो गौरिति प्रतीतिर्भवति सैवोपमितिरिति भावः। **तेनेति**। विशेष्येण गवेत्यर्थः। **विशिष्टस्येति**। गवयसादृश्यविशिष्टस्य पिण्डस्य पूर्वमननुभावादित्यर्थः। नन्वयं स इति विपरीतप्रत्यभिज्ञानं यथाऽसन्निकृष्टविशेष्यकं तथा प्रकृतमपि स्यादत आह—**न चेति**। तत्र य एवेदन्ताश्रयः इन्द्रियसन्निकृष्टः स एव 10 तत्ताश्रयोऽपीति विशेष्यसन्निकर्षोऽस्त्येवेति भावः। **तस्येति**। प्रत्यक्षस्येति भावः। प्रकृते प्रत्यभिज्ञानस्य वा। अत्र करणफले विवेचयति—**तस्मादिति**। एवं सत्येतद्विधर्मा स इत्यपि मानान्तरं स्यादत आह—**साधर्म्यमिति**। ननु तत्प्रतियोगिकमत्र वैधर्म्यम् एतत्प्रतियोगिकवैधर्म्यमन्तरेण नोपपद्यत इत्यर्थापत्त्यैवासन्निकृष्टवैधर्म्यग्रह इत्यत आह—**अर्थापत्तिरिति**। एवन्तर्हि 15 गवयगतं गोसादृश्यं गवि गवयसादृश्यमन्तरेणानुपपद्यमानं तदाक्षिपेदिति त्वदभिमतमुपमानमर्थापत्तिरेवेत्यर्थः। **तुल्यमेतदिति**। तदप्युपमानं स्यादित्यर्थः। गत्यन्तरं निरस्यति—**नहीति**। **विशिष्टस्येति**। वैधर्म्यविशिष्टस्येत्यर्थः। ननु तद्गतधर्माभावः स्मृत्युपनीते करभादावभावाख्यप्रमाणगम्य एवेति न तत्रोपमानमित्याशङ्कते—**नन्विति**। **इत इति**। गवये धर्मिणि 20 ग्रीवत्वादयो न सन्ति तद्वत्त्वमपि गोवैधर्म्यं करभे तच्च नाभावाख्यप्रमाणगम्यमित्यर्थः। द्वितीयार्धं व्याख्यातुमाशङ्कते—**स्यादेतदिति**। **तद्धर्म्मा इति**। करभधर्म्मा गवि न सन्तीत्यवगते गवि ये धर्मा न सन्ति ते करभे सन्तीति ज्ञानमेव गोविधर्मा करभ इति ज्ञानपर्यवसन्नमित्यर्थापत्तिरेव तदा प्रकृतेऽप्यर्थापत्तिरेव स्यादित्यर्थः। एतच्च प्रागेव व्याख्यातम्—**एतेनेति**। 25 दृष्ट एव योऽसन्निकृष्टस्तस्य मध्ये प्रत्यभिज्ञानमर्थापत्तिफलतयेत्यर्थः। एतदेवाह—**तत्रापीति**। **तद्धर्म्मशालित्वं** यावत्तद्धर्मशालित्वं तत्तावच्छिन्नयावत्तद्धर्म्मवत्त्वमिदन्तावच्छिन्नस्य तत्तेदन्तावच्छिन्नधर्मभेदमन्तरेणानुपपद्यमानं तदभेदं विषयीकरोतीत्यर्थः। एतच्च सोऽयमयं स इत्युभयत्र समानम्।

बोधनी

तदेवं तत्त्वान्तरभूततत्रान्तर्भूतसादृश्यविषयमुपमानं पृथक्प्रमाणमिति गुरुमतं निराकृत्य भाट्टमतं निराचिकीर्षुः शङ्कते स्यादेतदिति। पदार्थान्तरावयवादिवर्त्तीनि सामान्यान्येव पदार्थान्तरस्यावयवादिषु वर्त्तमानानि सादृश्यं न तु तत्त्वान्तरम्, तथाहुः—

"सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
भिन्नप्रधानसामान्यवर्ति सादृश्यमुच्यते" ॥ 5

इति। न च तत् प्रत्यक्षविषयः संभवतीत्याह गोसदृशोऽयमिति। न पूर्वेति। प्रतियोग्यनुसन्धानस्येन्द्रियसहकारिणो वैधुर्येणेन्द्रियसन्निपातमात्रात्सादृश्यज्ञानानुपपत्तिः। न च तावतेन्द्रियजन्यत्वहानिः प्रत्यभिज्ञानवदिति। तस्मिन्सन्निहितपदार्थप्रतियोगिकसादृश्यविशिष्टा सन्निहितपदार्थविषयमेतत्सदृशः स इति ज्ञानमुपमानफलं भविष्यति। न ह्येतदिन्द्रियेण जन्यते व्यवहितस्येन्द्रियेण संबन्धाभावादित्याह नन्विति। न चेदं स्मरणं 10 व्यवहितस्य पिण्डस्य सादृश्यविशिष्टतयाननुभूतत्वादित्याह न चेदमिति। ननु तत्सदृशोऽयमिति ज्ञानं तावदैन्द्रियकं, तस्माच्चैतत्सदृशः स इति ज्ञानस्य तत्तेदन्ताक्रमविपर्यय एव विशेषः। न च तावता प्रत्यक्षत्वहानिः सोऽयमिति प्रत्यभिज्ञानवदयं स इति विपरीतप्रत्यभिज्ञानस्याप्यैन्द्रियकत्वेनेष्टत्वादित्यत्राह न चैतदिति। उभयमपि प्रत्यभिज्ञायां विशेषस्यैकत्वात्तस्य च सन्निहितवर्त्तमानत्वादिन्द्रियसन्निकर्षे न कश्चिद्विशेषः, एतत्सदृशः स 15 इत्यत्र तु विशेष्यस्यासन्निहितत्वेनेन्द्रियसन्निकर्षासंभवात्तत्सदृशोऽयमित्येतस्मान्महान्विशेष इति। तस्मादसन्निहितपिण्डस्मरणसहायं तत्प्रतियोगिकसन्निहितपिण्डवर्त्तिसादृश्यज्ञानमेव तथाविधसन्निहितपिण्डप्रतियोगिकासन्निहितपिण्डवर्त्तिसादृश्यविषयं विज्ञानं जनयत्तदुपमानं नाम प्रमाणान्तरमास्थेयमित्युपसंहरति तस्मादिति। तदेतदतिप्रसङ्गापादनेन दूषयति एतदपीति।

तर्ह्यसन्निहितपिण्डवर्त्तिवैसादृश्यज्ञानं जनयत्तत्प्रतियोगिकसन्निहितपिण्डवर्त्तिवैसादृश्यज्ञानं सप्तमं प्रमाणं प्रसज्येत, तुल्यन्यायत्वात्। अथ तद्वैधर्म्यमेतस्य प्रत्यक्षसिद्धमन्यथानुपपद्यमानं तस्यैतद्वैधर्म्यं कल्पयतीति न तत्र प्रमाणान्तरप्रसक्तिरिति चेत् तर्हि तत्सादृश्यविशिष्टत्वमेतस्य प्रत्यक्षसिद्धं तस्यैतत्सादृश्यं विनानुपपन्नं तस्यैतत्सादृश्यं कल्पयदर्थापत्तिरेव स्यादिति व्याचष्टे यदा हीति। ननु सन्निहितपिण्डगतधर्माभावविशिष्टत्वमेव सन्निहितस्य तद्वैधर्म्यं तत्राभावरूपत्वादभावप्रमाणस्यैव विषयः, सादृश्यस्य 25 तु भावरूपत्वात्प्रमाणान्तरमन्वेषणीयमित्याशयादाह-न चेति। नेति। इतः पुरोवर्त्तिनः पिण्डाद्व्यावृत्तधर्मयोगोऽपि वैधर्म्यं, तस्य च भावत्वान्नाभावप्रमाणविषयतेति।

उत्तरार्धं व्याचष्टे स्यादेतदिति। व्यवहितपिण्डवर्त्तिधर्माभाववत्त्वं तत्राविध-

मानधर्मत्वं वा सन्निहितस्य तावत्प्रत्यक्षं, तच्च व्यवहितस्यैतद्धर्माभाववत्त्वेनात्राविद्यमान-धर्मवत्त्वेन वा विनानुपपद्यमानं तत्कल्पयतीति न तदर्थं प्रमाणान्तरं मृग्यमिति । तर्हि सादृश्यमर्थापत्तिरेव गमयेत् तुल्यन्यायत्वादित्याह **एवं तर्हीति** ।

**एतेनेति** । पूर्वं मथुरायां पश्चाच्चोज्जयिन्यां दृष्टस्य पुनः प्रत्यभिज्ञानसमये
5 चाद्य सन्निकृष्टस्य यत्प्रत्यभिज्ञानं य एव मथुरायां दृष्टः स एवोज्जयिन्यां दृष्ट इति तदप्यर्थापत्तिरिति व्याख्यातं कथमिति तत्राह **तत्रापीति** । मथुरायां दृष्टपुरुषवर्त्ति-स्वरवर्णादिशालित्वमुज्जयिनीदृष्टस्येदानीं स्मर्यमाणमुभयत्रापि दृष्टस्यैकतामन्तरेणानुपपद्य-मानं तां कल्पयतीति । यद्वा, दृष्टस्यासन्निकृष्टस्य चैकगोचरं यत्प्रत्यभिज्ञानमयं स इति विपरीतप्रत्यभिज्ञानं तदप्यर्थापत्तिरेव, तत्र सन्निकृष्टस्य पिण्डस्य ये धर्मा उपलभ्यन्ते
10 तद्धर्मशालित्वमसन्निकृष्टस्य स्मर्यमाणं तस्य सन्निकृष्टस्य चैकतामन्तरेणानुपाद्यमानं तयोस्तां कल्पयति, इदन्ताश्रय एव तत्ताश्रय इति व्यवस्थापयति । न हि तत् प्रत्यक्षफलम्, अयं स इत्यसन्निकृष्टपर्यवसायित्वात्तेन चेन्द्रियसन्निकर्षाभावादिति । तस्मात्सामान्यरूपसादृश्य-विषयत्वेऽप्युपमानस्य प्रमाणान्तरत्वाभावात् सिद्धं विषयानतिरेकादबाधकत्वमिति उपसंहरति **तस्मादिति** ॥ ९ ॥

विवेकः

15 ननु निरुक्तसादृश्यग्राहकतयैव उपमानं सिध्यतु इत्याशङ्कते—**स्यादेतदिति** । सामान्यमुक्तोपाधिरूपम् । **पूर्वेति** । उपमानेऽपि तत्सहकारिताया परेणाभ्युपेयत्वादिति भावः । **सोऽयमिति** । अन्यथा तद्ग्राहकत्वेनापि अतिरिक्तमानं स्यादिति भावः ।

असन्निकृष्टविशेष्यकसन्निकृष्टप्रतियोगिकसादृश्यपरिच्छेदार्थमुपमानं प्रमाणमिति । शावरं मतमाह—**नन्विति** । तेन विशेष्यभूतेन तस्य इन्द्रियस्य विशिष्टस्य सादृश्य-
20 विशिष्टस्य एतदपि एतद्विशेष्यकं सादृश्यज्ञानम् । **तत्तेदन्तेति** । उद्देश्यविधेयभावविपर्यये ऽपीत्यर्थः, तस्य बहिरिन्द्रियस्य लौकिकसन्निकृष्टवर्त्तमानविशेष्यस्यैव ज्ञानजनकत्वात् तदसंभवात् विशेष्येन्द्रियसन्निकर्षाभावात् । **प्रमाणमिति** । निर्व्यापारस्य फलायोग-व्यवच्छिन्नस्य करणत्वमभिप्रेत्य अन्यथा तत्तत्पिण्डज्ञानमेव पुरोवर्तिविशेष्यकसादृश्यधी-व्यापारकं प्रमाणमिति ध्येयम् ।

25 तद्विधर्मा एष इति प्रत्ययानान्तरम् एतद्विधर्मा स इति प्रत्ययबलात् मानान्तरं स्यादित्याह—**साधर्म्यमिवेति** । साधर्म्यं सादृश्यज्ञानं वैधर्म्यं वैधर्म्यज्ञानं मानं मानान्तरम् । ननु पुरोवर्तिनि तद्वैधर्म्यं तस्यैतद्वैधर्म्यं विनानुपपद्यमानं तत् प्रत्याययति इत्याशङ्क्य

तुल्यत्वमाह—**अर्थापत्तिरिति**। **प्रकृत [म्] इति**। एतन्निष्ठतत्सदृश्यस्यापि तत्रैतत् सादृश्यं विनानुपपत्तेस्तस्यापि प्रत्यायकत्वमित्यर्थः। असादृश्यविषयत्वात् सादृश्याविषयकत्वात्। अभावगम्यमनुपलब्धिरूपमानगम्यम् इत इति। एतद्वृत्तिभावभूतधर्मस्येत्यर्थः। यथा धिक्करभमित्यादिवैधर्म्यज्ञानाधीनमप्युपमानं नैयायिकैरुपेयते तथा तद्वैधर्म्यधीरपि स्यात्। अननुगमश्चोभयसमाधेय इति चेत्। न। यो यत् सदृशो विधर्मा वा स तत्सदृशस्तद्विधर्मा चेति सामान्यतो व्याप्त्यवधारणादनुमानेनैव तदर्थसिद्धेर्मानान्तराकल्पनात्। न च पक्षविशेष्यकलिङ्गपरामर्शासम्भवात् न तदिति वाच्यम्। अवर्तमानासन्निकृष्टलिङ्गपक्षकानुमानाभावेन सैव तदुपपत्तेः। लिङ्गपक्षकविशिष्यावगाहिज्ञानादेव पक्षविशेष्यकानुमितेरुपगमात्। साध्तविशेष्यकानुमितौ साध्यज्ञानस्य प्रतिबन्धकत्वात्। भावसाध्यकविशेष्यकानुमितेरसिद्ध्या तद्विधेयकानुमितित्वस्यैव कार्यतावच्छेदकत्वेनान्यादृशानुमितेरयोगाच्चेति भावात्। ननु पूर्वं यो दृष्ट इदानीं च स्मृतिविषयस्तत्र दर्शनविषये स्मृतिविषयाभेदः प्रतीयते तदेवोपमानफलं स्यादिति मतं निराकरोति। **एतेनेति**। तत्रापि प्रागुक्तप्रणाल्या तद्वृत्तियावद्धर्मवैशिष्ट्यावगाहिज्ञानादभेदोऽनुमीयत इत्यर्थः इति **केचित्**। **प्रकाशकृतस्तु** ननु सोऽयमिति प्रत्यभिज्ञानानन्तरमनुभवस्मृतिकालयोर्मध्यकालावस्थानं तस्य प्रतीयते तदेवोपमानफलं स्यादित्याशङ्क्याह—**एतेनेति**। दृष्टस्य प्रत्यभिज्ञाविषयस्य यदसन्निकृष्टं मध्यकालावस्थानं तस्य प्रत्यभिज्ञानं निश्चयः। तद्धर्मशालित्वं पूर्वापरकालं व्यावर्त्य—भेदरूपस्मरणाभिव्याप्यस्येति व्यक्तं प्रत्यभिज्ञायमानमनुपपद्यमानमेकतामध्यकालावस्थानं व्यवस्थापयतिनिश्चययतीत्यर्थ इत्याहुः ॥९॥

एवं प्राप्ते अभिधीयते—

**सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ॥**
**प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ॥ १० ॥**

यथा गौस्तथा गवय इति श्रुतातिदेशवाक्यस्य गोसदृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयमसौ गवयशब्दवाच्य इति भवति मतिः। सेयं न तावद् वाक्यमात्रफलम्, अनुपलब्धपिण्डस्यापि प्रसङ्गात्। नापि प्रत्यक्षफलम्, अश्रुतवाक्यस्यापि प्रसङ्गात्। नापि समाहारफलम्, वाक्यप्रत्यक्षयोर्भिन्नकालत्वात्। वाक्यतदर्थयोः स्मृतिद्वारोपनीतावपि गवयपिण्डसम्बन्धेनापीन्द्रियेण तद्गतसादृश्यानुपलम्भे समयपरिच्छेदासिद्धेः। फलसमाहारे तु तदन्तर्भावे अनुमानादेरपि प्रत्यक्षत्वप्रसङ्गः। तत् किं तत्फलस्य तत्प्रमाणबहिर्भाव एव?, अन्तर्भावे वा कियती सीमा? । तत्तदसाधारणेन्द्रियादिसाहित्यम्।

अस्ति तर्हि सादृश्यादिज्ञानकाले विस्फारितस्य चक्षुषो व्यापारः। न। उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यतदर्थस्मृतिमतः कालान्तरेऽप्यनुसन्धानबलात् समयपरिच्छेदोपपत्तेः ॥ १० ॥

आमोदः

विषयाभावेनोपमानाक्षेप्तारं प्रत्याह—एवं प्राप्त इति।

5 सम्बन्धस्येति। गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदवाच्योऽयमित्याकारः गवयत्वविशिष्टो धर्मी गवयपदवाच्योऽयमित्याकारो वा, गवयपदं गवयत्वप्रवृत्तिनिमित्तकमित्याकारको वा उपमानफलं विदुरिति पदद्वयमध्ये इति पूरणीयः।

उपमानप्रवृत्तिप्रकारमुपदर्शयति—यथेति। फलं दर्शयति—अयम-
10 साविति। नन्वेतद्वाक्यस्यैव फलं स्यादित्याह—सोऽयमिति। अनुपलब्धपिण्डस्य गोसदृशोऽयमिति शब्दोपलम्भेऽपि सम्बन्धापरिच्छेदादित्यर्थः। ननु वाक्यप्रत्यक्षयोर्मिलितयोरेवैतत्फलं स्यादित्याह—नापीति। भिन्नकालत्वादिति। तथा च समाहारभाव इति भावः। ननु स्मृत्यारूढेन वाक्येन सह प्रत्यक्षस्य समाहारः स्यादित्यत आह—वाक्यतदर्थयोरिति। पिण्ड-
15 प्रत्यक्षतायामपि गवयगतगोसादृश्याग्रहे समयग्रहो नोक्तसमाहारे सत्यपीति न तत्फलसिद्धिरित्यर्थः। फलसमाहारे त्विति। स्मृत्यारूढवाक्यस्य फलं सादृश्यस्य स्मरणं प्रत्यक्षस्य च इन्द्रियस्य सन्निकर्षस्य यत् फलं गवये स्मर्यमाणसादृश्यानुभवः, तत्समाहारस्योपमितिकरणत्वेन यदि तस्यास्तत्प्रमाणत्वम्, तदाऽनुमितिरपि प्रत्यक्षलिङ्गपरामर्शजन्या प्रत्यक्षप्रमाणफलमेव
20 स्यादित्यर्थः। तत्र सापेक्षमाह—तत् किमिति। एवं सति प्रत्यक्षफलेनालोचनेन जनितं सविकल्पकं प्रत्यक्षं न स्यादित्यर्थः। सविकल्पकं प्रत्यक्षफलजन्यं प्रत्यक्षमेव, न तूपमितिः। प्रत्यक्षफलजन्यापि प्रत्यक्षान्तर्भूतेति किमत्र नियामकमित्याह—अन्तर्भाव इति। अत्र नियामकमाह—तत्तदिति। सविकल्पककाले चक्षुर्व्यापारप्रौढ्यम्, उपमितिकाले तु नैवमित्यर्थः।
25 एतदेवाह—उपलब्धेति ॥१०॥

बोधनी

अथ सिद्धान्ती प्रमाणान्तरत्वमङ्गीकृत्यैवोपमानस्य नियतविषयत्वादबाधकत्वं वक्तुमुपक्रमते एवमिति। गवयादिसंज्ञायाः संज्ञिना गवयादिना सह संज्ञासंज्ञिलक्षणस्य

संबन्धस्य प्रमितिरुपमानस्यैव फलं प्रत्यभिज्ञानादिना तदसिद्धेरिति संज्ञासंज्ञिसंबन्धप्रतीतिस्तावदस्तीत्याह **यथा गौरिति**। तस्याः प्रत्यक्षादिभिरसाध्यत्वमाह **सेयमिति**। ननु नगरस्थस्य वाक्यं वनस्थस्य गवयेनेन्द्रियसन्निकर्ष इति भिन्नकालतया तयोः स्वरूपतः समाहाराभावेऽपीन्द्रियसन्निकर्षसमये वाक्यतदर्थयोः स्मर्यमाणत्वेन समाहारसंभवात्तत्फलमेवास्त्वित्यत्राह **वाक्यतदर्थयोरिति**। न ह्यसत्येवेन्द्रियसंबन्धे उत्पद्यमानं प्रत्यक्षेऽन्तर्भवतीति। 5 ननु सादृश्योपलम्भे तावदुत्पद्यते, तच्च प्रत्यक्षफलं, तेन वाक्यफलस्य वाक्यार्थस्मरणस्य प्रत्यक्षफलस्य सादृश्यज्ञानस्य च समाहारादुत्पद्यमानः समयपरिच्छेदस्तयोरेवान्तर्भवेदित्यत आह **फलसमाहारेति**। अनुमेयादिज्ञानमपि हि प्रत्यक्षफललिङ्गादिज्ञानहेतुकमेवेति। ननु यदि समयं परिच्छिन्दतः सादृश्यज्ञानस्य समाहारादुत्पद्यमानप्रत्यक्षफलस्यापि प्रत्यक्षेऽनन्तर्भावः, तर्हि विकल्पजनकं निर्विकल्पकमपि प्रत्यक्षे नान्तर्भवेत् अनुमानादि- 10 कमपि तथा स्यादिति नियमहेतुर्वाच्य इति पृच्छति **तत्किमिति**। नियमहेतुमाह **तत्तदिति**। साक्षात्कारादिरूपस्य यस्य ज्ञानविशेषस्य यदसाधारणं कारणमिन्द्रियादि तदनुवृत्तौ जायमानं ज्ञानं तस्य प्रमाणस्य फलं भवति, तन्निवृत्तौ तु ततो बहिर्भवतीति। यदीन्द्रियव्यापारानुवृत्तावुत्पद्यमानं प्रत्यक्षफलं तर्हि समयं परिच्छिन्दतः सादृश्यज्ञानस्य कालेऽप्यस्ति चक्षुर्व्यापार इति समयपरिच्छेदोऽपि प्रत्यक्षफलं स्यादित्याह **अस्ति तर्हीति**। **नेति**। 15 न खलु तत्र सन्नपि चक्षुर्व्यापारः कारणं व्यभिचारात्—भवति हि वाक्यार्थस्मरणाभावेन केवलं सादृश्यविशिष्टतया पिण्डमनुभूतवतः पश्चादुपरतेन्द्रियव्यापारस्यैव वाक्यार्थस्मरणे सति गोसदृशपिण्डस्मरणादेव समयपरिच्छेदः, यो गवयपदवाच्यः स गोसदृश इति ॥१०॥

## विवेकः

सम्बन्धस्य शक्तेः संज्ञायाः गवयपदादेः संज्ञिना गवयत्वविशिष्टादिना विदुरिति च 20 वाक्यार्थकर्मकत्वम्। **अयमसाविति** अयं गवयत्वविशिष्ट इत्यर्थः। अत्र चेदन्त्वमुपलक्षणम् विशेषणमितरदित्यवधेयम्।

वाक्यस्य गोसदृशगवय इत्यतिदेशवाक्यस्य मात्रेत्यनेन सादृश्यविशिष्टपिण्डज्ञानव्यवच्छेदः अश्रुतातिदेशवाक्यस्यानवगतातिदेशवाक्यार्थस्य समाहारस्य शब्देन्द्रिययोः परस्परसहकृतयोः। **वाक्येति**। वाक्येन स्वार्थानुभवस्तेन च तत्स्मृतिरिति। 25 तद्द्वाराऽसतोऽपि शब्दस्य इन्द्रियसहकारिकत्वमित्याखण्डलार्थः। **तद्गतेति** इन्द्रियस्य विषयसन्निकर्षातिरिक्तव्यापारकत्वमदृष्टचरमिति भावः। प्रत्यक्षफलस्य सादृश्यविशिष्ट-

पिण्डधियः समाहारे सहकारितामात्रेण प्रत्यक्षप्रमाणान्तर्भावे प्रत्यक्षात्मकपरामर्शजन्यतयानुमितेस्तत्कारणस्यापि प्रत्यक्षत्वापत्तिः। आशयमुद्घाटयितुं शङ्कते तदिति। तत्फलस्य = प्रत्यक्षफलस्य तत्प्रमाणबहिर्भावः। साक्षात्कारभिन्नत्वं तथा च निर्विकल्पकफलस्य विशिष्टधियोऽपि तद्बहिर्भावापत्तेरिति भावः। निर्विकल्पकफलस्यापि साक्षा- 5 त्कार्यन्तर्भावे कियती मर्यादा या सादृश्यप्रत्यक्षफलस्य तद्बहिर्भावः। उत्तरम्—तत्तदिति। इन्द्रियसन्निकर्षजन्यत्वमित्यर्थः। आत्मानुमित्यादेरपि मनःसंयोगजन्यतयातिप्रसक्तेराह—असाधारणेति। कारणताविशेषलाभाय शङ्कते। अस्तीति। व्यापारः गवयेन संयोगरूपः। तथा च तज्जन्यतया ततोऽपि ज्ञानं साक्षात्कारि स्यादिति भावः ॥१०॥

10 ननु च वाक्यादेवानेन समयः परिच्छिन्नः—गोसदृशस्य गवमशब्दः संज्ञेति, केवलमिदानीं प्रत्यभिजानात्ययमसाविति प्रयोगाद्वाऽनुमितः यो यत्रासति वृत्त्यन्तरे वृद्धैः प्रयुज्यते स तस्य वाचको यथा गोशब्द एव गोः, प्रयुज्यते चायं गोसदृशे, इति किमुपमानेनेति। न—

**सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ॥**
15 **समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥११॥**

न हि गवयशब्दस्य सादृश्यं प्रवृत्तिनिमित्तम्, अप्रतीतगूनामव्यवहारप्रसङ्गात्। न चोभयमपि निमित्तम्, स्वयं प्रतीतसमयसंक्रान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः। गवयत्वे ह्ययं व्युत्पन्नो वृद्धव्यवहारान्न सादृश्ये। कथमेतन्निर्धारणीयमिति चेत्। वस्तुगतिस्तावदियं, तदापाततः सन्देहेऽपि न फलसिद्धिः। गन्ध- 20 वत्त्वमिव पृथिवीत्वस्य, गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणमिदमेव वा निमित्तमित्यनिर्धारणात् ॥ ११ ॥

आमोदः

स्वगोत्रविमतिमुत्थापयति—नन्विति। प्रत्यभिजानातीति। यो गोसदृशो धर्मी गवयशब्दवाच्यतयावगतः, तमिदानीं साक्षात्करोमीत्यर्थः। शब्दविधयाऽनुमानेऽन्तर्भावमुक्त्वा साक्षादेवानुमानान्तर्भावमाह—प्रयोगे 25 त्विति। प्रयोगमाह यो यत्रे त।

सादृश्यस्येति। उपाधित्वेन गुरुत्वादप्रवृत्तिनिमित्तमित्यर्थः। तर्हि गवयत्वं प्रवृत्तिनिमित्तमादाय समयग्रहः स्यादत आह—निमित्तस्येति। तदुपस्थापकाभावात् तदप्रतीतिरित्यर्थः। समय इति। गवयत्वेन प्रवृत्ति-

निमित्तेन गवयपदवाच्योऽयमित्याकार इत्यर्थः। गवयपदस्यागृहीतसमयतया गवयत्वानुपस्थापकत्वादिति भावः। **पूर्वमिति**। अतिदेशवाक्यश्रवणसमय इत्यर्थः।

ननु सादृश्यमेव प्रवृत्तिनिमित्तं स्यादित्यत आह—**न हीति**। **अप्रतीतेरिति**। आरण्यकेन गोरग्रहे तत्सादृश्याग्रहादित्यर्थः। मिलितस्यानिमित्तत्वे हेतुमाह—**स्वयमिति**। अयमिति अतिदेशवाक्यप्रयोक्तेत्यर्थः। **वस्तुगतिरिति**। सादृश्यस्य गुरुत्वेन प्रवृत्तिनिमित्तत्वानुपपत्तेः। अप्रतीतपूर्वमपि समयपरिच्छेदाच्चेति भावः ॥११॥

## बोधनी

अत्र जरन्नैयायिक आह **नन्विति**। नगरस्थेनैव वाक्यमात्रात्समयः परिच्छिन्नः, वनस्थेन तु केवलं प्रत्यभिज्ञायते सोऽयं गवयशब्दवाच्य इति, तेन शब्दप्रमाणक एव समय इति। आधुनिकस्त्वाह **प्रयोगाद्वेति**। गोसदृशो गवय इत्यत्र गोसदृशे वस्तुनि गवयशब्दप्रयोगमुपलभ्य तस्मादेव हेतोर्गोसदृशस्य गवयवाच्यत्वमवसेयमिति। तदेव दर्शयति **यो यत्रेति**। गौणलाक्षणिकप्रयोगैर्व्यभिचारो मा भूदित्युक्तम् **असति वृत्त्यन्तर इति**। पक्षद्वयमप्युपसंहरति **तत्किमिति**।

**सादृश्यस्येति**। प्रतीते हि प्रवृत्तिनिमित्ते संबन्धग्रहस्तदत्र वाक्ये प्रतीतं सादृश्यं न निमित्तं, निमित्तं तु गवयत्वं प्रतीतं, तस्मान्न तावद्वाक्यमात्रेण सम्बन्धग्रहः, नाप्यनुमानेन तद्वाचकत्वज्ञानमन्तरेणासति वृत्त्यन्तर इति विशेषणस्यासिद्धेरिति।

**न हीति**। यदि गोसादृश्यं निमित्तं स्यात् तदा नित्यवनवासिनां गवयपदेन व्यवहारो न स्यात्, तेषां गोरप्रतीतौ तत्प्रतियोगिकस्य सादृश्यस्य गवयेऽवगन्तुमशक्तेरिति। तर्हि तेषां गवयत्वं नागरिकाणां तु गोसादृश्यमित्युभयं विकल्पेन निमित्तमस्त्वित्यत आह **न चोभयमिति**। तदा हि कथमारण्यकस्तेनाप्रतीतं गोसादृश्यविषयं समयं परस्मै प्रतिपादयितुमतिदेशवाक्यं प्रयुञ्जीतेति। **कथमेतदिति**। गवयत्व एव न सादृश्येऽपीत्येतत्तत्राप्रतीतगुणत्वेन तस्य सादृश्ये व्युत्पत्तिर्न संभवतीत्युत्तरमुक्तप्रायमेवेति। मन्वानोऽन्यथा परिहरति **वस्तुगतिरिति**। ननु वस्तुगतिरित्येतावता न तत्प्रतिपादनमन्तरेण निर्धारणा सिध्यतीत्यत्राह **तदापातत** इति। तत्रापाततः प्रतिपादनं यावन्निमित्तसन्देहेऽपि न पराभिमतस्य वाक्यादेव समयपरिच्छेद इत्यस्य फलस्य सिद्धिरिति कुत इत्यत आह **गन्धवत्त्वमिति**। यथा हि गन्धवती पृथिवीत्यत्र गन्धवत्त्वं पृथिवीशब्द-

प्रवृत्तिनिमित्तस्य पृथिवीत्वस्योपलक्षणं, तथा गोसादृश्यं गवयशब्दप्रवृत्तिनिमित्तस्योपलक्षणम्। यद्वा इदं सादृश्यमेव किं निमित्तमिति न निर्धायते, सदृश्यमेव निमित्तमिति निर्धारणाधीनश्च वाक्यादेव संबन्धग्रह इति न पराभिमतसिद्धिरिति ॥११॥

विवेकः

इन्द्रियसन्निकर्षविगमेऽपि तत्तज्ज्ञानवतः समयपरिच्छेदादिन्द्रियसन्निधेर्व्यभि-
5 चारितया न हेतुत्वमित्याह—नेति। वाक्यात् = अतिदेशरूपात् परिच्छेदकस्याकारमाह—**गोसदृशेत्यादि**। अयमसाविति यो मया गवयशब्दवाच्यत्वेनावगतः स एवायमिति अनुमितः समयः। लक्ष्ये लक्षणधीप्रतिपाद्ये व्यभिचारादाह—असति **वृत्त्यन्तर इति**।

**सादृश्यस्येति**—निगदव्याख्यातम्। अव्यवहारप्रसङ्गात् गवयपदजन्यशाब्द-
10 प्रत्ययाद् व्यवहारो न स्यात्। उभयं सादृश्यं गवयत्वञ्च। अपि एवार्थः।

स्वयंप्रतीतस्य गवयत्वविशिष्टे समयस्य संक्रान्तये बोधनायायमतिदेष्टा। वस्तुगतिरिति लाघवसहकारेण जातेरेव तत्परिच्छेदादिति भावः। सन्देहेऽपि। यद्यपि योग्यतासन्देहे जायत एव शाब्दबोधस्तथापि तात्पर्यसन्देहेऽस्य तात्पर्यम्। तथा च इति अनिर्धारणादित्यस्य तात्पर्यनिर्णयादित्यर्थोऽवसेयः ॥ ११ ॥

15 स्यादेतत्। पूर्वं निमित्तानुपलब्धेर्न फलसिद्धिरिदानीन्तु तस्मिन्नुपलब्धे तदेव वाक्यं स्मृतिसमारूढं फलिष्यति, अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्गपर्यवदातस्य कालान्तरे। न च वाच्यं-'वाक्येन स्वार्थस्य प्रागेव बोधितत्वात् प्रागेव पर्यवसितमिति'। गोसादृश्यस्योपलक्षणनिमित्तत्वयोरन्यतरत्र तात्पर्ये सन्देहात्, इदानीन्तु गवयत्वेऽवगते तर्कपुरस्कारात् सादृश्यस्योपलक्षणतायां व्यवस्थितायां, गङ्गायां घोष
20 इतिवदन्वयप्रतिपत्तिरिति चेत्, न—

**श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ॥**
**पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः ॥ १२ ॥**

गोसदृशो गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ विशेषसन्देहेऽपि वाक्यस्य पर्यवसितत्वेन मानान्तरोपनीतानपेक्षणात्। रक्तारक्तसन्दे-
25 हेऽपि घटो भवति इति वाक्यवत्, अन्यथा वाक्यभेददोषात्। न च गङ्गायां घोष इतिवत् पदार्था एवान्वयाऽयोग्याः, येन प्रमाणान्तरोपनीतेनाऽन्वयः स्यात्। प्रतीतवाक्यार्थबलायातोऽप्यर्थो यदि वाक्यस्यैव, दिवाभोजननिषेधवाक्यस्यापि रात्रिभोजनमर्थः स्यात्। तस्माद्यथा गवयशब्दः कस्यचिद्वाचकः शिष्टप्रयोगादिति

सामान्यतो निश्चितेऽपि विशेषे मानान्तरापेक्षा, तथा गोसदृशस्य गवयशब्दो वाचक इति वाक्यान्निश्चितेऽपि सामान्ये विशेषवाचकत्वेऽस्य मानान्तरमनुसरणीयमिति ।

अस्त्वनुमानम् । तथा हि—गवयशब्दो गवयस्य वाचकः, असति वृत्त्यन्तरेऽभियुक्तैस्तत्र प्रयुज्यमानत्वात्, गवि गोशब्दवदिति चेन्न, असिद्धेः । न ह्यसति वृत्त्यन्तरे तद्विषयतया प्रयोगः सङ्गतिमविज्ञाय ज्ञातुं शक्यते । सामानाधिकरण्यादिति चेन्न । 5 पिण्डमात्रे सिद्धसाधनात्, निमित्ते चासिद्धेः, सादृश्यस्यानिमित्तत्वादित्युक्तम् ।

ननु व्याप्तिपरमिदं वाक्यं स्यात् । यो गोसदृशः स गवयपदार्थ इति । तथा च वाक्यादवगतप्रतिबन्धोऽनुमिनुयात् । अयमसौ गवयो गोसदृशत्वादतिदेशवाक्यावगतपिण्डवदिति । न । विपर्ययात्, न हि गोसदृशं बुद्धावारोप्यानेन पृष्टः स किंशब्दवाच्य इति, किन्तु सामान्यतो गवयपदार्थमवगम्य स कीदृगिति । तथा 10 च यद्योगप्राथम्याभ्यां तस्यैव व्याप्यत्वं, ततः किं तेन? प्रकृतानुपयोगात् ।

अथ किंलक्षणकोऽसाविति प्रश्नार्थः । तदा व्यतिरेकपरं स्यात् । लक्षणस्य तथाभावात् । तथा च गोसदृशो गवय इत्यस्यार्थो यो गवय इति न व्यवह्रियते नासौ गोसदृश इति । एवञ्च प्रयोक्तव्यम्—अयमसौ गवय इति व्यवहर्त्तव्यः गोसदृशत्वात्, यस्तु न तथा, नासौ गोसदृशो यथा हस्ती । न च हस्त्याऽऽदीनां विपक्षत्वे 15 प्रमाणमस्ति, सर्वाप्रयोगस्य दुरवधारणत्वात्, कतिपयाव्यवहारस्य चानैकान्तिकत्वात् ।

ननु लिङ्गमात्रे प्रश्नो भविष्यति—कीदृक् किं लिङ्गमिति । न । न ह्यनेन लिङ्गमविज्ञाय गवयशब्दस्य वाचकत्वं कस्यचिद्वाच्यत्वं वाऽवगतं, येन तदर्थं प्रश्नः स्यात् । प्रवृत्तिनिमित्तिविशेषलिङ्गे प्रश्नो, येन निमित्तेन गवयशब्दः प्रवर्त्तते तस्य किं लिङ्गमिति चेन्न । न हि तदवश्यमनुमेयमेवेत्यनेन निश्चितं, यत इदं स्यात् । ज्ञानोपायमात्र- 20 प्रश्ने तद्विशेषेणोत्तरमिति चेन्न । अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत् । पर्यायान्तरं वा । यथा गवयमहं कथं जानीयामिति प्रश्ने, वनं गतो द्रक्ष्यसीति । यथा वा कः पिक इत्यत्र कोकिल इति । तस्मान्निमित्तभेदप्रश्न एवायं, गवयो गवयपदवाच्यः कीदृक् केन निमित्तेनेति युक्तमुत्पश्यामः ।

तस्य च निमित्तविशेषस्य साक्षादुपदर्शयितुमशक्यत्वात् पृष्टस्तदुपलक्षणं 25 किञ्चिदाचष्टे, तच्चोपमानसामग्रीसमुत्थापनमेव । तस्य च प्रमाणस्य सतस्तर्कः सहायतामापद्यते, सादृश्यस्यैव निमित्ततायां कल्पनागौरवम्, निमित्तान्तरकल्पने च क्लृप्तकल्प्यविरोध इति तदेव निमित्तमवगच्छतीति ।

लक्षणन्त्वस्यानवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानम् । वाक्यार्थश्च क्वचित् साधर्म्यं क्वचिद्वैधर्म्यमतो नाव्यापकम्, तस्मा- 30 न्नियतविषयत्वादेव न तेन बाधो, न त्वनतिरेकादिति स्थितिः ॥ १२ ॥

आमोदः

**न फलसिद्धिरिति । न समयनिश्चय इत्यर्थः । सन्देहाकारमाह— गन्धवत्त्वमिति । इदानीमिति । गवयपिण्डोपलम्भकाल इत्यर्थः ।**

**अङ्गं** शिक्षाकल्पव्याकरणादि। **उपाङ्गं** तद्विवरणमहाभाष्यादि। **प्रागेव** वाक्यश्रवणकाल एव। **तर्केति**। गवयत्वदर्शनानन्तरं गौरवाख्यतर्कावतारादित्यर्थः। तथा च गोसदृशपदमेव लक्षणया गवयत्वोपस्थापकमित्यर्थः।

**श्रुतान्वयादिति**। श्रूयमाणपदकदम्बेऽत्रैवान्वयोपपत्तौ न लक्षणाकल्पनेत्यर्थः। लक्षणास्थलमाह—**पदार्थेति**। गङ्गायां घोष इत्यत्र पदार्थान्वयानुपपत्त्या तदाक्षिप्तेन तदुपलक्षितेन तीरेण सङ्गतिरन्वयबोध इत्यर्थः।

**मानान्तरेण** प्रत्यक्षेण यदुपनीतं गवयत्वं तदपेक्षणादित्यर्थः। **रक्तारक्तेति**। प्रवृत्तिनिमित्तसन्देहोऽपि वाक्यस्य पर्यवसितत्वादिति भावः। **अन्यथेति**। पर्यवसितेऽपि वाक्ये पुनरन्वयबोधकतायामित्यर्थः। लक्षणावैलक्षण्यमाह—**न वेति**। ननु वाक्यार्थप्रतीत्यनन्तरं गौरवावतारेण तदेव वाक्यं गवयत्वमादायान्वयबोधकं स्यादित्यत आह—**प्रतीतेति**। विशेषानिश्चयेऽपि सामान्यतो ज्ञानं नानुपन्नमित्याह—**तस्मादिति**। **विशेषवाचकत्व इति**। गवयत्वप्रवृत्तिनिमित्तकत्वे सति मानान्तरमुपमानमनुसरणीयमित्यर्थः। नच यष्टीः प्रवेशयेत्यत्रेव तात्पर्यानुपपत्तिरत्र लक्षणाबीजमस्तु, व्युत्पित्सुव्युत्पादनायातिदेशवाक्यं कथं गोसादृश्यं गुरु गृहीत्वा पर्यवस्येत्तथा च गवयत्वे लाक्षणिकं वाक्यमेव गोसदृशपदद्वयात्मकं गोपदं सदृशपदं वा लाक्षणिकमस्तु, पदान्तरं तन्नियामकमिति वाच्यम्, प्रवृत्तिबोधने तात्पर्यं विनापि स्वरूपाख्यानमात्रेऽपि समयग्रहसम्भवात्, धिक्करभमिति। निन्दावाक्यश्रवणानन्तरमपि करभपदसमयसम्भवात्। यत्तु यष्टीः प्रवेशये' त्यादावप्यन्वयानुपपत्तिर्लक्षणाबीजम्, तत्तुच्छम्। प्रथमं तात्पर्यज्ञाने तदनुपपत्तिरेव तद्बीजमुपजीव्यत्वात्। तदज्ञाने च नान्वयानुपपत्तिरपि। **अत्रेति**। गवयत्वविशिष्टे पिण्ड इत्यर्थः। **गोशब्दवदिति**। असति वृत्त्यन्तरे वृद्धैर्यः शब्दो यत्र प्रयुज्यते स तस्य वाचक इति सामान्यव्याप्तौ दृष्टान्तः। **असिद्धेरिति**। विशेषणविशेष्यभागयोः समयग्रहात् पूर्वमज्ञानादित्यर्थः। एतदेवाह—**न हीति**। ननु यो गोसदृशः स गवयशब्दवाच्य इति सामानाधिकरण्यादेव तत्र प्रयुज्यमानत्वं प्रतीतमिति नासिद्धिरित्याह—**सामानाधिकरण्यादिति**। स पिण्डो गवयपदवाच्य इति यदि साध्यं, तदा सिद्धसाधनम् इत्याह—**पिण्डमात्र इति**। गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदस्य वृद्धैः प्रयुज्यमानत्वमज्ञातमेवेत्याह—**निमित्ते चेति**। प्रकारान्तरेणानुमानमत्र शङ्कते—**नन्विति**।

विपर्ययादिति। व्याप्यव्यापकभावस्य प्रकृते वैपरीत्यादित्यर्थः। वैपरीत्यमेवाह--न हीति। यो गोसदृशः स किं शब्दवाच्य इति यदि प्रश्नः स्यात्तदा यो गोसदृशः स गवयशब्दवाच्य इत्युत्तरं स्यात्, न त्वेवमित्यर्थः। यद्योगेति। यच्छब्दप्रयोगः प्रथमाभिधानं च व्याप्यस्यैव तस्योद्देश्यत्वात्, व्यापकस्य च विधेयत्वादित्यर्थः। तथाभावादिति। व्यतिरेक्यनुमानरूप- 5
त्वादित्यर्थः। व्यतिरेकव्याप्त्यनुसारेण प्रयोगमाह--एवं चेति। न चेति। तथा च व्यतिरेकदृष्टान्ताभावान्न व्याप्तिग्रह इत्यर्थः। ननु हस्तिनि गवयपदं बहुभिर्न प्रयुज्यते इति स एव व्यतिरेकदृष्टान्त इत्यत आह--सर्वेति। अनैकान्तिकत्वादिति। वीणादीनां बहूनां गोपदाव्यवहारेऽपि गोपदवाच्यत्वाभ्युपगमादित्यर्थः। न च व्यवहारसाध्यकलक्षणोच्छेदः स्यादिति 10
वाच्यम्। यथा पृथीवीत्वं पृथिवीपदवाच्यत्वे निमित्तमुपलब्धं, तथा न पूर्वं गवयत्वमुपस्थितमित्यर्थः। न हीति। यदि गवयपदं वाचकं किञ्चिच्च तस्य वाच्यमिति सामान्यतो ज्ञानं स्यात्, तदा विशेषे तत्र लिङ्गे प्रश्नः स्यादित्यर्थः। अवृत्तीति। तथा च गोसादृश्योपन्यासस्तल्लिङ्गतयोचित इति शङ्कार्थः। न हीति। एवं सति प्रमाणाभावे उचितो, न तु लिङ्ग 15
इत्यर्थः। अत्रैव प्रश्न इति शङ्कते--ज्ञानेति। सामान्यप्रश्ने विशेषान्तरेणाप्युचितमुत्तरमिति लिङ्गोपन्यासमात्रप्रयुक्तमित्याह--नेति। इन्द्रियसन्निकर्षेणोत्तरमाह--यथाबलमिति। पर्यायान्तरेणाह--यथेति। केन निमित्तेनेति। केन निमित्तावच्छिन्नो धर्मी गवयपदवाच्य इति प्रश्नार्थ इत्यर्थः। साक्षादिति। प्रत्यक्षत इत्यर्थः। किञ्चिदिति। गोसादृश्यादीत्यर्थः। 20
उपमानसामग्रीति। तस्योपलक्षणस्यातिदेशवाक्यावगतस्य संज्ञिन्यनुसन्धानमित्यर्थः। तर्कमेव दर्शयति—सादृश्येति। क्लृप्तेति। गवयत्वं दृश्यमानमन्यत्तु कल्पनीयमित्यर्थः। तदेवेति। दृश्यमानं गवयत्वमित्यर्थः। न च सादृश्यनिमित्तता गौरवपराहता चेत्, तदा गवयपदं गवयत्वप्रवृत्तिनिमित्तम् इतराप्रवृत्तिनिमित्तत्वे सति प्रवृत्तिनिमित्तत्वात्, यन्नैवमित्यनु- 25
मानमस्त्विति वाच्यं, गवयत्वे प्रत्यक्षीकृते फलस्यैव सिद्धेस्तदानीं व्यतिरेकव्याप्त्यादिप्रतिसन्धाने प्रमाणाभावादित्यर्थः। अनवगतेति। अनवगतसङ्गतिर्या संज्ञा गवयपदं करभपदं वा तत्समभिव्याहृतं यद्वाक्यं साधर्म्यपरं वैधर्म्यपरं वा तस्य योऽर्थः साधर्म्यंवैधर्म्यं वा तस्य संज्ञिनि गवयत्ववि-

शिष्टे गवयपिण्डे करभत्वविशिष्टे करभपिण्डे वाऽनुसन्धानं प्रत्यक्षेणानुभव इत्यर्थः। अत्र सादृश्यज्ञानं करणं ज्ञायमानं सादृश्यं वेति मतभेदः। प्रकृत-मुपसंहरति—**तस्मादिति** ॥१२॥

बोधनी

**स्यादेतदिति**। मा भूत् सादृश्यं निमित्तं मा च भून्निमित्तस्य गवयत्वस्याप्रतीतेः
5 पूर्वं समयग्रहस्तथापि पश्चाद्वनगतस्य प्रवृत्तिनिमित्तोपलम्भे सति तत्सहकृतं प्रागनुभूतमति-देशवाक्यमेव स्मृतिस्थं तत्र फलिष्यति संबन्धग्रहं, यथा ह्यध्ययनसमये पाठमात्रगृहीतो वेदः पश्चादङ्गोपाङ्गस्मृतः तस्य वाक्यार्थज्ञानं प्रसूत इति। ननु युक्तं तत्राङ्गाध्ययनात्पूर्वं वाक्यार्थप्रतिपादनाय गृहीतस्य वेदस्यापर्यवसानादङ्गादिसहकृतस्य तस्यैव धर्मादिज्ञान-हेतुत्वम्, अत्र त्वतिदेशवाक्यस्य स्वार्थप्रतिपादनेन पर्यवसानादयुक्तः समयपरिच्छेदहेतु-
10 भाव इत्याशङ्क्याह **न च वाच्यमिति**। अतिदेशवाक्यमपि न तावत्पर्यवस्यति। गोसदृशपदस्य तात्पर्यानवधारणेनार्थानिश्चयात्पदार्थपूर्वकत्वाच्च वाक्यार्थस्य गवयत्वावगतौ तु तर्कं पुरस्कृत्य गोसदृशपदस्योपलक्षणपरत्वसिद्धौ च गवयत्वविषयं समयवाक्यमेव प्रतिपादयति। यथा गङ्गायां घोष इत्यत्र मुख्यार्थबाधेन गङ्गापदस्य तीरोपलक्षणत्वस्थितौ पश्चादन्वयप्रतिपादनम्। तर्कश्चात्र—सादृश्यस्य गवयत्वातिरेकिणः निमित्तत्वे क्लृप्त-
15 कल्प्यविरोधः, सादृश्यमात्रनिमित्तत्वेऽतिप्रसङ्गः, गोसदृशस्य निमित्तत्वे विशेषणस्य गोरप्य-भिधाने शक्तिकल्पनागौरवमिति वक्ष्यते। तस्माच्छब्द एव समये प्रमाणमिति।

**न, श्रुतान्वयादिति**। श्रुतानामेव तदर्थानामाकाङ्क्षासन्निधियोग्यतावशेन परस्पर-मन्वयादेव पर्यवसितमतिदेशवाक्यं नान्यत्प्रत्यक्षोपनीतं गवयत्वादिकमाकाङ्क्षति वाक्यार्थप्रति-पादनायेति शेषः। गङ्गायां घोष इत्यत्र तु गङ्गापदस्य मुख्यार्थेन पदार्थान्तराणामनन्वयात्
20 मुख्यार्थलक्षितेन तु कूलेन सह संगतिरिति व्याचष्टे **गोसदृश इति**। कोऽसौ गोसदृश इति विशेषसन्देहेऽपि यो गोसदृशः स गवयशब्दवाच्य इति सामान्येनैवान्वयसिद्धेर्न मानान्तरोपमेयविशेषाकाङ्क्षा वाक्यस्य, न हि पटो भवतीति वाक्यं रक्तत्वादि-निश्चयादृते न पर्यवस्यतीति, यदि हि वाक्यमेव सामान्येनान्वयं प्रतिपाद्य विशेषा-वगत्युत्तरकालं तदन्वयमपि प्रतिपादयेत् तदा वाक्यभेदः स्यादित्याह **अन्यथेति**।
25 गङ्गायां घोष इत्यत्र मुख्यार्थस्यान्वयायोग्यत्वात्तीरलक्षणयैवान्वयप्रतीतिः, नैवमत्र सामान्य-स्यैवान्वययोग्यत्वादिति विशेष इत्याह **न चेति**। ननु पर्यवस्यतां नाम वाक्यं, तथापि तत्प्रतिपादितार्थबलायत्तः समयपरिच्छेदस्तस्यैव वाक्यस्यार्थः स्यादित्यत्राह **अथेति**।

यथा हि भवतः साधुत्वादेव गवयपदस्य सामान्यतोऽर्थवत्त्वे सिद्धेऽपि विशेषज्ञानार्थं वाक्यापेक्षा तथा गोसदृशस्य वाचक इति वाक्यादवगतेऽपि तद्विशेषार्थं मानान्तरमित्युपसंहरति **तस्मादिति** ।

अस्तु तर्ह्यनुमानं प्रमाणं संज्ञासंज्ञिसम्बन्धे इत्याह **अस्त्विति** । **नासिद्धेरिति** । विशेषस्येति शेषः । विशेषणासिद्धिमेवाह **न हीति** । संगतिग्रहे हि सति 5 मुख्यवृत्त्यवगमेन वृत्त्यन्तरासत्त्वं ज्ञातुं शक्यते, तदसत्त्वविशेषिताच्च च प्रयोगात्सङ्गतिग्रह इतीतरेतराश्रयप्रसङ्ग इति । अस्तु तर्हि गोसदृशपदेन सामानाधिकरण्यात् गवयपदस्य गोसदृशविषयत्वसिद्धेर्गवयत्वस्य तत्सदृशत्वात्तद्वाचकत्वसिद्धिरित्याह **सामानाधिकरण्यादिति** । **नेति** । सामानाधिकरण्येन गोसदृशपिण्डमात्रविषयताप्रयोगः स्यात्, तेन च तन्मात्रवाचकत्वमेव सिध्येत् नाभिमतं गवयत्ववाचकत्वमिति । न च निमित्तेन च गवयत्वेन 10 सामानाधिकरण्यं सिद्धं गवयत्वस्याप्रतीतेः, प्रतीतेन तु सादृश्येन सामानाधिकरण्यसिद्धावपि नास्त्युपयोगस्तस्यानिमित्तत्वादित्याह **निमित्त इति** ।

**नन्विति** । गवयपदवाच्यं पृष्टः साक्षात्तत्प्रतिपादनाशक्तेः तदनुमानसामग्रीं व्याप्तिमेवाचष्टे यो गोसदृशः स गवयपदवाच्य इति, ततः श्रोतुरनुमानप्रवृत्तेर्नावकाशः प्रमाणान्तरस्य इति । **नेति** । व्याप्यव्यापकयोर्विपर्ययादिति तमेवाह **न हीति** । अस्तु 15 तर्हि यो गवयपदार्थः स गोसदृश इति वाक्यार्थः, तत्राह **ततः किमिति** । न हि गवयपदार्थं जिज्ञासमानस्य व्याप्यत्वेन तस्य निर्देश उपयुज्यत इति ।

**अथेति** । असौ गवयपदार्थवाच्य इति । **तदेति** । लक्षणप्रश्ने सत्युत्तरवाक्यं केवलव्यतिरेकिहेतुप्रतिपादनपरं स्यात् लक्षणस्य केवलव्यतिरेकित्वात् । तदुक्तं तार्किकरक्षायाम्—"असाधारणधर्मत्वात् व्यतिरेक्येव लक्षणम्" इति । विवृतश्च सारसंग्रहेऽस्यार्थ 20 इति । व्यतिरेकिपरत्वे चातिदेशवाक्यस्यायमर्थः स्यादित्याह **तथा चेति** । एवं वाक्यावगतव्यतिरेकव्याप्त्या च नागरिकेण लक्षणज्ञानार्थमेवमनुमानप्रयोगः कार्य इत्याह । **एवं चेति** । तथा नाम प्रयुक्तम् इत्यत्राह **न चेति** । येन विपक्षात् व्यतिरेकः सिध्येदिति । हस्त्यादिषु गवयपदाप्रयोगस्तेषां विपक्षत्वे प्रमाणमित्याशङ्क्याह **सर्वेति** । मा भूत्तर्हि व्यतिरेकिरूपलिङ्गविशेषप्रश्नः, सामान्यप्रश्नस्तु भविष्यति केन लिङ्गेन गवयपदार्थं 25 जानीम — इति तदेतदाह **नन्विति** । **नेति** । जिज्ञासितविषयो हि प्रश्नः, यद्यनेन प्रष्ट्रा गवयपदप्रवृत्तिनिमित्तं ज्ञात्वा तस्य लिङ्गमात्रमेवाविज्ञातं जिज्ञास्येत तदा हि तदेव पृष्टं भवेदस्य तु प्रवृत्तिनिमित्तमेवावगतं जिज्ञासमानस्य तदेवं प्रष्टुं युक्तमिति । तर्हि

प्रवृत्तिनिमित्तमेव जिज्ञासमानस्य तत्र ज्ञानोत्पादाय लिङ्गप्रश्नो भविष्यतीत्याह **प्रवृत्तिनिमित्तेति**। **नेति**। स्पष्टम्। ननु ज्ञानोपायमात्रं जिज्ञासुरप्राक्षीदितरस्तु लिङ्गस्य तदुपायत्वात् तेनैवोपायेनोदेतीतरदित्याह **ज्ञानोपायेति**। तर्हि ज्ञानोपायत्वाविशेषात्प्रत्यक्षं पर्यायान्तरं वोत्तरयेदित्याह **नेति**। न हि तल्लिङ्गैकवेद्यमिति भावः। गत्यन्तरा-
5 भावादयमेव प्रश्नवाक्यार्थ इत्याह **तस्मादिति**। तर्हि गवयत्वमेवोपदिशेत् न गोसादृश्यं तत्राह **तस्य चेति**। किमनेनोपमानस्य सिध्यतीत्यत्राह **तच्चेति**। तद्वाक्यं सादृश्यात्मकमुपलक्षणं वोपमानसामग्रीं वाक्यार्थस्मरणसहकृतसादृश्यप्रत्यभिज्ञानरूपामुत्थापयतीति किमेतावता गवयत्वमेव प्रवृत्तिनिमित्तमिति सिध्यतीत्यत्राह—**तस्य चेति**। तर्कस्वरूपमाह—**सादृश्यस्येति**।

10 एवमुपमानस्य प्रमाणान्तरेभ्यो विषयभेदाद् भेदं दर्शयित्वा लक्षणतोऽप्याह **लक्षणं त्विति**। अनवगतस्यार्थसंबन्धया गवयादिसंज्ञया समभिव्याहृतं यद्वाक्यमतिदेशवाक्यमिति यावत्, तस्य योऽर्थस्तस्य संज्ञिनि गवयादिपिण्डे यदनुसंधानमयमसौ गोसदृश इत्यादिप्रत्यभिज्ञानं तदुपमानमिति। नन्वव्यापकमेतत्, कीदृगश्व इति हि प्रश्ने गवयादिविलक्षणः केसरादिमानश्व इति वैधर्म्यरूपवाक्यार्थप्रत्यभिज्ञानस्याप्युपमानत्वेनेष्टत्वादित्यत्राह
15 **वाच्यार्थश्चेति**। ननु तथाप्यव्यापकः 'कीदृक्करभ' इति पृष्टेनोदीच्येनोदीरितं 'दीर्घग्रीवः प्रलम्बोष्ठः कठोरतीक्ष्णकण्टकाशी पशुः करभ' इति वाक्यं श्रुतवतो दाक्षिणात्यस्योत्तरापथे पुनस्तादृशपिण्डे तांस्तान् धर्मान् प्रत्यभिजानानस्यायं करभशब्दवाच्य इति। यथोक्तं तार्किकरक्षायाम्—

अत्रातिदेशवाक्यार्थस्त्रिविधः परिगृह्यते।
20 साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः॥ इति।

परमप्रकृतमुपसंहरति **तस्मादिति**। नियतविषयत्वात्संज्ञासंज्ञिसंबन्धमात्रविषयत्वादिति॥ १२॥

विवेकः

न फलसिद्धिर्न समपरिच्छेदः। इदानीं गवयत्वसन्निकर्षोत्तरं तस्मिन्निमित्ते गवयत्वरूपे फलिष्यति समयं परिच्छेत्स्यति। **अज्ञेति**। व्याकरणमहाभाष्यादिज्ञानसंस्कृतान्तः-
25 करणस्येत्यर्थः। अन्यथा तत्रापि प्रमाणान्तरमापतेदिति भावः इति वाच्यम्। न च तर्कपुरस्कारात् लाघवज्ञानवशात्।

**श्रुतेति**—श्रुतानां गवयपदवाच्यगोसदृशानां तादात्म्येन सम्बन्धेन योऽन्वयबोधस्तस्य जननात् पर्यवसितं वाक्यं नान्यत् गवयत्वस्य गवयपदप्रवृत्तिनिमित्तत्वं नेच्छति

नाकाङ्क्षति बुद्धीनामिति न्यायादिति भावः। नन्वेवं गङ्गायां घोष इत्यादौ इत्याह— **पदार्थेति**। पदार्थे स्वशक्ये प्रवाहरूपे घोषवसतेरयोग्यतयाऽन्वयवैधुर्यात् अन्वयबोधाजननात् तदाक्षिप्तेन शक्यसम्बन्धेनोपस्थापितेन तीरेण संगतिरन्वयबोधजननं सामान्यधिकरण्यमत्र शाब्दमार्थञ्चानुसन्धेयम्।

विशेषसन्देहेऽपि यथोक्ततात्पर्यसन्देहेऽपि। **मानान्तरेति**। शक्यसम्बन्धोपस्थापितगवयत्वगोचरशाब्दबोधजनकत्वादित्यर्थः। **अन्यथेति**। यद् वाक्यमन्वयबोधमजीजनत् यच्च जनयिष्यति तत्र साकाङ्क्षत्वनिराकाङ्क्षत्वविरुद्धधर्माध्यासे वाक्यस्य भेदः स्यात्। तथा च तदेव वाक्यमित्युक्तं भग्नं स्यादिति भावः। वाक्यार्थभेदात् पारिभाषिको वा वाक्यभेदोऽत्रार्थः। जनितान्वयबोधतया पर्यवसितस्यापीतरबोधजनकत्वे पीनो देवदत्त इत्यादिवाक्यस्यापि रात्रिभोजित्वरूपार्थभेदप्रसङ्गाद्वाक्यभेदप्रसङ्ग इत्यर्थः। अपभ्रंशवारणाय। **शिष्टेति**। निश्चितेऽपि सामान्ये सामान्यतो निश्चितेऽपि यद्यपि तात्पर्यवशात् सादृश्यसामानाधिकरण्येनान्वयोपपत्तावपि यष्टीः प्रवेशयेत्यत्रेव लक्षणा स्यादेव तथापि उपलक्षणीभूतसादृश्यप्रकारकान्वये गृहीततात्पर्यस्यापि तथा फलसिद्धेरानुभविकत्वे तात्पर्यम्। अस्य गवयत्वविशिष्टस्यात्र गवयत्ववति असिद्धेर्निरुक्तहेतोस्तदानीं पक्षवृत्तित्वानिश्चयात्शङ्कते— **सामानाधिकरण्यादिति**। अतिदेशवाक्यादेव तत्सिद्धिर्भविष्यतीत्यर्थः। **सिद्धसाधनादिति**—तथा च नानुमानमिति भावः। **सादृश्यस्येति**। इदञ्च सम्पातायातम् तन्निमित्तत्वेऽनुमानवैफल्यात् शब्दादेव तदुपपत्तेरिति ध्येयम्।

प्रकारान्तरेणानुमानमाशङ्कते—**नन्विति**। गवयो गवयपदवाच्यः। विपर्ययात्। व्याप्यव्यापकभावयोरुद्देश्यविधेयभावविपर्ययात् तमेवाह—**न हीति**। **यद्योगेति**। यद्यपि प्रकृते यद्योगवार्तापि न प्राथम्यञ्च गोसदृश इत्यस्यैव तथापि यत्प्राक्प्रतीतम् तत्रैव यद्योगप्राथम्याभ्यां व्याप्तिग्रहो न सादृश्यं तथेति भावः। वस्तुतस्तु सामानाधिकरण्यमात्रे गृहीततात्पर्यस्य फलसिद्धावस्य तात्पर्यम्।

**अथेति**। गन्धवती पृथिवीतिवदिति भावः। तथाभावात् व्यवहारसाध्यकव्यतिरेकिणोऽपि लक्षणत्वात्। लक्षणत्वतात्पर्यवशायातां व्यतिरेकव्याप्तिमुपदर्शयति—**यो गवय इतीत्यादि**। स्वार्थानुमाने प्रयोगस्याप्रयजकत्वेऽपि परार्थानुमानमभिप्रेत्याह— **एवमिति**। दूषयति। **न चेति**। तेषां विपक्षत्वानिश्चयदशायामपि च फलमानुभविकमिति भावः।

**न हीति**। वह्नेः किं लिङ्गमिति प्रश्ने धूम इतिवत् गोसादृश्यमात्रमभिदध्यात्। न गवयपदवाच्यत्वमपि इति भावः। इदं लिङ्गप्रश्नविषयः स्यात्।

अविशेषादिति। तथा च तत्रापि फलं स्यादिति भावः। प्रश्नार्थं विवृणोति गवय इत्यादि।

नन्वेवं साक्षादेव प्रवृत्तिनिमित्तमुपदर्शयेत् तत्राह—तस्येति। तच्च वाक्यम्। तस्य चेति। तर्कमात्रञ्च न निश्चायकमिति भावः। वस्तुतस्तु इदमुपमिनोमीत्यनु-
5 व्यवसायसाक्षिको जातिविशेषस्तत्रास्त्येव। तत्र च सादृश्यज्ञानादिकमवश्यं कारण-मभ्युपेयम्। अन्यत्र तथा। ननु तत्र च व्याप्तिज्ञानादिकसाहचर्यकल्पनैव गरीयसी न वा शाब्दत्वानुमितित्वयोरन्यतरकल्पनायाम् तत्र विनिगमनापि, अत एवेदं ज्ञानमनुमिति-त्वप्रकारकप्रमाविशेष्यत्वतद्भिन्नत्वप्रकारकप्रमाविशेष्यत्वान्यतरवत् वस्तुत्वात् इत्यनुमानं लाघवसहकारात् तत्रानुमितित्वे पर्यवस्तीति परास्तम्। एवं शाब्दत्वजातेरपि तत्र साधन-
10 सम्भवात् इतरप्रमाणसमाहारतुल्ययोगक्षेमश्च प्रामाणान्तरेणास्य समाहार इति समासः।

कारणलक्षणमाह—अनवगतेति। अनवगता संगतिर्यस्या एवम्भूतायाः संज्ञा गवयपदात्मिका तत्समभिव्याहृतवाक्यार्थः तत्पदवाच्यत्वसामानाधिकरण्येन प्रतिपादितो वाक्यार्थः। सादृश्यं वैधर्म्यं वा यस्य संज्ञिनि गवयत्वादिविशिष्टेऽनुसन्धानं निश्चयः। अनवगतेत्यनेनात्रापि सिद्धेर्विरोधित्वं ध्वनितम्। वाक्यार्थश्चेति। साधर्म्यवैधर्म्ययोः
15 संशयकारणताविशेषावच्छेदकत्वेनानुगम इति केचित्। यदि च किं ज्वर-प्रशमनहेतुरिति प्रश्ने बृहती सदृशी तथेत्युच्चरिते सादृश्यादिप्रतिसन्धानानन्तरं जाति-विशेषस्य तद्धेतुतावच्छेदकत्वादिपरिच्छिन्नहेतावप्यनुमिनोमीत्यनुव्यवसायः। तदा संगत्यादिपदं सम्बन्धिकपरमिति ध्येयम्। अत्र च सादृश्यवत्तया पिण्डधीः करणम् संस्कारोद्बोधद्वारा अतिदेशवाक्यार्थस्मृतिर्व्यापार इति मिश्राः। एतन्नये च अतिदेश-
20 वाक्यार्थस्मरणाव्यवहितोत्तरं सादृश्यविशिष्टज्ञानेऽपि नोपमितिरिति ध्येयम्। सादृश्य-ज्ञानम् करणं तद्विशिष्टधीर्व्यापारः अतिदेशवाक्यार्थस्मृतिश्चोपमितौ सहकारि इत्यपरे। नव्यास्तु अतिदेशवाक्यार्थधीरेव करणं तथाविधस्मरणमेव व्यापारः सादृश्यविशिष्टं पिण्डज्ञानं चाबाधितत्वज्ञानवत् सहकारीति वदन्ति। अत्राप्यतिदेश-वाक्यार्थानुभवाव्यवहितोत्तरं सादृश्यविशिष्टज्ञानेऽप्युपमितिर्दुष्करैव प्रतिभाति।
25 वाक्यार्थज्ञाने च तादृशशाब्दत्वमेव कारणतावच्छेदकं ज्ञानत्वस्य लघुत्वेऽपि संशयान्यत्व-प्रवेशे गौरवात्। न च स्मरणात्मकव्यापाराभावादेव संशयव्यावृत्तिरिति वाच्यम्। व्यापारं प्रति स्वरूपायोग्यवृत्तेस्तु न तथात्वमित्यपि वदन्ति। मणिकृतस्तु उपमिति करणत्वमेव लक्षणम्। उपमितित्वञ्च जातिविशेषोऽनुभवसाक्षिकः। तस्य लक्ष्यता-वच्छेदकत्वे तु यत्किंचिदुपमितिमादाय तद्वृत्तिप्रत्यक्षावृत्तिधर्मसमवायिकरणत्वमेव

लक्षणमिति तदभिसन्धिर्दीधितिकृद्वर्णनाऽस्त्येवेति ज्ञेयः। तेन उपमानेन बाधः क्षित्यादौ कर्तुः ॥१२॥

शब्दोऽपि न बाधकमनुमानानतिरेकादिदिति वैशेषिकादयः। तथा हि—यद्यप्येते पदार्था मिथः संसर्गवन्तो वाक्यत्वादिति व्यधिकरणं, पदार्थत्वादिति चाऽनैकान्तिकं, पदैः स्मारितत्वादित्यपि तथा। यद्यपि चैतानि पदानि स्मारितार्थसंसर्गवन्ति तत्स्मारकत्वादित्यादौ साध्याभावः। नह्यत्र मत्वर्थः संयोगः समवायस्तादात्म्यं विशेषणविशेष्यभावो वा सम्भवति। ज्ञाप्यज्ञापकभावस्तु स्वातन्त्र्येणानुमानान्तर्भाववादिभिर्नेष्यते। न च लिङ्गतया ज्ञापकत्वं यल्लिङ्गस्य विषयस्तदेव तस्य, परस्पराश्रयप्रसङ्गात्—तदुपलम्भे हि व्याप्तिसिद्धिस्तत्सिद्धौ च तदनुमानमिति।

तथाप्याकाङ्क्षादिमद्भिः पदैः स्मारितत्वाद् गामभ्याजेति पदार्थवदिति स्यात्। न च विशेषासिद्धिर्दोषः संसर्गस्य संसृज्यमानविशेषादेव विशिष्टत्वात्। यद्वा—एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्त्वे सति तत्स्मारकत्वात् गामभ्याजेति पदवत्। न चैवमर्थासिद्धिः। ज्ञानावच्छेदकतयैव तत्सिद्धेः। तस्य च संसृज्यमानोपहितस्यैवावच्छेदकत्वान्न विशेषाप्रतिलम्भ इति ॥

अत्रोच्यते—

**अनैकान्तः परिच्छेदे सम्भवे च न निश्चयः ॥**
**आकाङ्क्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ॥ १३ ॥**

एते पदार्था मिथः संसर्गवन्त इति संसृष्टा एवेति नियमो वा साध्यः, सम्भावितसंसर्गा इति वा? न प्रथमः। अनाप्तोक्तपदकदम्बस्मारितैरनैकान्तात्। आप्तोक्तया विशेषणीयमिति चेन्न। वाक्यार्थप्रतीतेः प्राक् तदसिद्धेः। न ह्यविप्रलम्भकत्वमात्रमिहाप्तशब्देन विवक्षितं, तदुक्तेरपि पदार्थसंसर्गव्यभिचारात्, अपि तु तदनुभवप्रामाण्यमपि। न चैतच्छक्यमसर्वज्ञेन सर्वदा सर्वविषये सत्यज्ञानवानयमिति निश्चेतुम्। भ्रान्तेः पुरुषधर्मत्वात्। तत्र क्वचिदाप्तत्वमनाप्तस्याप्यस्तीति न तेनोपयोगः। ततोऽस्मिन्नर्थेऽयमभ्रान्त इति केनचिदुपायेन ग्राह्यम्। न चैतत् संसर्गविशेषमप्रतीत्य शक्यम्। बुद्धेरर्थभेदमन्तरेण निरूपयितुमशक्यत्वात्। पदार्थमात्रे चाभ्रान्तत्वसिद्धौ न किञ्चित्। अनाप्तसाधारण्यात्। एतेषां संसर्गेऽयमभ्रान्त इति शक्यमिति चेन्न। एतेषां संसर्गे इत्यस्या एव बुद्धेरसिद्धेः। अननुभूतचरे स्मरणायोगात् तदनुभवस्य लिङ्गाधीनतया तस्य च विशेषणासिद्धत्वेनानुपपत्तेरिति।

नापि द्वितीयः, योग्यतामात्रसिद्धावपि संसर्गाऽनिश्चयात्, वाक्यस्य च तदेकफलत्वात्, योग्यतामात्रस्य प्रागेव सिद्धेः। अन्यथा तदसिद्धावासन्नसाकाङ्क्षपदस्मारितत्वादित्येव हेतुः स्यात। तथा चाऽग्निना सिञ्चेदित्यादिना स्मारितैरनैकान्तः। तथाविधानां सर्वथा संसर्गायोग्यत्वादिति।

द्वितीयेऽपि प्रयोगे हेतुराकाङ्क्षादिमत्त्वे सतीति। तत्र केयमाकाङ्क्षा नाम ? न तावद्विशेषणविशेष्यभावः, तस्य संसर्गस्वभावतया साध्यत्वात्। नाऽपि तद्योग्यता, योग्यतयैव गतार्थत्वात्। नाप्यविनाभावः। नीलं सरोजमित्यादौ तदभावेऽपि वाक्यार्थप्रत्ययात्। तत्रापि विशेषाक्षिप्तसामान्ययोरविनाभावोऽस्तीति चेन्न। 'अहो विमलं
5 जलं नद्याः कच्छे महिषश्चरती'त्यादौ वाक्यभेदानुपपत्तिप्रसङ्गात्। नापि प्रतिपत्तुर्जिज्ञासा। पटो भवतीत्यादौ शुक्लादिजिज्ञासायां, रक्तः पटो भवतीत्यस्यैकदेशवत् सर्वदा वाक्यापर्यवसानप्रसङ्गात्।

गुणक्रियाद्यशेषविशेषजिज्ञासायामपि पदस्मारितविशेषजिज्ञासा आकाङ्क्षा। पट इत्युक्ते किंरूपः कुत्र किं करोतीत्यादिरूपजिज्ञासा। तत्र भवतीत्युक्ते किं
10 करोतीत्येषैव पदस्मारितविषया, न तु किंरूप इत्यादिरपि। यदा तु रक्त इत्युच्यते, तदा किंरूप इत्येषाऽपि स्मारितविषया स्याद्, इति न किञ्चिदनुपपन्नमिति चेत्।

एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान्। किमस्यां जातायामन्वयप्रत्ययोऽथ ज्ञातायामिति। तत्र प्रथमे नानया व्यभिचारव्यावर्त्तनाय हेतुर्विशेषणीयः, मनःसंयोगादिवत् सत्तामात्रेणोपयोगात्। आसत्तियोग्यतामात्रेण विशिष्टस्तु निश्चि-
15 तोऽपि न गमकः। अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ व्यभिचारात्। द्वितीयस्तु स्यादपि, यद्यनुमानान्तरवत्तत्सद्भावेऽपि तज्ज्ञानवैधुर्यादन्वयप्रत्ययो न जायते। न त्वेतदस्ति, आसत्तियोग्यतामात्रप्रतिसन्धानादेव साकाङ्क्षस्य सर्वत्र वाक्यार्थप्रत्ययात्, निवृत्ताकाङ्क्षस्य च तदभावात्।

कथमेष निश्चयः, साकाङ्क्ष एव प्रत्येति, न तु ज्ञाताकाङ्क्ष इति चेत्, ताव-
20 न्मात्रेणोपपत्तावनुपलभ्यमानज्ञानकल्पनाऽनुपपत्तेः, अन्यत्र तथा दर्शनाच्च। यदा हि दूराद् दृष्टसामान्यो जिज्ञासते कोऽयमिति, प्रत्यासीदंश्च स्थाणुरयमिति प्रत्येति, तदाऽस्य ज्ञातुमहमिच्छामीत्यनुव्यवसायाभावेऽपि स्थाणुरयमित्यर्थप्रत्ययो भवति। तथेहाप्यविशेषाद् विशेषोपस्थानकाले संसर्गावगतिरेव जायते, न तु जिज्ञासावगतिरिति। न च विशेषोपस्थानात् प्रागेव जिज्ञासाऽवगतिः प्रकृतोपयोगिनी, ताव-
25 न्मात्रस्यानाकाङ्क्षत्वात्। न चैवम्भूतोऽप्ययमैकान्तिको हेतुः। यदा ह्ययमेति पुत्रो राज्ञः पुरुषोऽपसर्यतामिति वक्तोच्चारयति, श्रोता च व्यासङ्गादिना निमित्तेनायमेति पुत्र इत्यश्रुत्वैव राज्ञः पुरुषोऽपसार्यतामिति शृणोति, तदाऽस्त्याकाङ्क्षादिमत्त्वे सति पदकदम्बकत्वं, न च स्मारितार्थसंसर्गज्ञानपूर्वकत्वमिति।

स्यादेतत्। यावत्समभिव्याहृतत्वेन विशेषिते हेतौ नायं दोषः, तथाविधस्य
30 व्यभिचारोदाहरणाऽसंस्पर्शात्। कुतस्तर्हि कतिपयपदश्राविणः संसर्गप्रत्ययः ?। अलिङ्ग एव लिङ्गत्वाध्यारोपात्। एतावानेवायं समभिव्याहार इति तत्र श्रोतुरभिमानः। न। तत्सन्देहेऽपि श्रुतानुरूपसंसर्गावगमात्। भवति हि तत्र प्रत्ययो, न जाने किमपरमनेनोक्तमेतावदेव श्रुतं, यद्राज्ञः पुरुषोऽपसार्यतामिति। भ्रान्तिरसाविति चेद्, न तावदसौ दुष्टेन्द्रियजा, परोक्षाकारत्वात्। न लिङ्गाऽऽभासजा, लिङ्गा-
35 भिमानाभावेऽपि जायमानत्वात्। एतादृक्पदकदम्बप्रतिसन्धानमेव तां जनयतीति चेत्। यद्येवमेतदेवादुष्टं सदभ्रान्तिं जनयत् केन वारणीयम् ?। व्याप्तिप्रतिसन्धानं

विनापि तस्य संसर्गप्रत्यायने सामर्थ्यावधारणात्, चक्षुरादिवत्। नास्त्येव तत्र संसर्गप्रत्ययोऽसंसर्गाग्रहमात्रेण तु तथा व्यवहार इति चेत्। तर्हि यावत्समभि-व्याहारेणापि विशेषणेनाप्रतिकारः, तथाभूतस्यानाप्तवाक्यस्य संसर्गज्ञानपूर्वकत्वा-भावात्। असंसर्गाऽग्रहपूर्वकत्वमात्रे साध्ये न व्यभिचार इति चेत्। एवन्तर्हि संसर्गो न सिद्ध्येत्। आप्तवाक्येषु सेत्स्यतीति चेन्न। सर्वविषयाऽऽप्तत्वस्यासिद्धेः। 5
यत्र क्वचिदाप्तत्वस्यानैकान्तिकत्वात्। प्रकृतविषये चाप्तत्वसिद्धौ संसर्गविशेषस्य प्रागेव सिद्ध्यभ्युपगमादित्युक्तम्।

न च सर्वत्र जिज्ञासा निबन्धनम्, अजिज्ञासोरपि वाक्यार्थप्रत्ययात्। आका-ङ्क्षापदार्थस्तर्हि कः ?। जिज्ञासां प्रति योग्यता। सा च पदस्मारिततदाक्षिप्तयोरविना-भावे सति श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावः। न चैषोऽपि ज्ञानमपेक्षते, प्रतियो- 10
गिनिरूपणाऽधीन निरूपणत्वात्, तदभावनिरूपणस्य च विषयनिरूप्यत्वादिति ॥१३॥

## आमोदः

**शब्दोऽपीति**। **अनुमानानतिरेकादिति**। तथा चानुमाननिरासेनैव तद्बाधनिरासादित्यर्थः। शेषो वान्यथाऽबाधकत्वे तद्धेतुत्वानुपपत्तेः। यद्वा, शब्दोऽपि न बाधको न विपरीतप्रमाजनकः, **अनुमानानतिरेकाद्**-नुमानाभिन्नत्वादित्यर्थः। यद्वा, ल्यब्लोपे पञ्चमी, अनुमानानतिरेकं 15
प्राप्य शब्दो न बाधकः, तस्य च पूर्वं बाधकत्वनिरासात्। न चानुमाना-भिन्नानामा (?) चाप्रकृतेरित्यादीनां बाधकत्वमेवेति वाच्यं, तद्बाधकाभि-मतशब्दानाम् अन्यप्रमाकरणादित्यर्थः। **वैशेषिकाद्यनुमानाभासमाशङ्कते**—**व्यधिकरणमिति**। स्वरूपासिद्धमित्यर्थः। **तथेति**। अनैकान्तिकमित्यर्थः। वह्निना सिञ्चतीत्यादाविति भावः। पदपक्षतामाशङ्कते—**यद्यपीति**। 20
साध्याभावः सिषाधयिषा विषयधर्माभाव इत्यर्थः। तदेवाह—**न हीति**। विशेषणविशेष्यभावः पदार्थनिष्ठो न तु पदनिष्ठ इति भावः। ननु पदानि ज्ञापकानि ज्ञाप्यश्च संसर्ग इत्येवं संसर्गवत्त्वं स्यादत आह—**ज्ञाप्येति**। ननु लिङ्गतया ज्ञापकत्वमङ्गीक्रियत एव, स एव मत्वर्थः स्यादत आह—**लिङ्गतयेति**। लिङ्गस्य तत्स्मारकत्वादित्यस्य यल्लिङ्गतया ज्ञापकत्वं तदेव तस्य 25
विषयः कर्मसाध्यमिति यावत्, न भवितुमर्हतीति योजना। परस्पराश्र-यमेवाह—**तदिति**। लिङ्गतया ज्ञापकत्वं यदि सिद्धं स्यात्, तदा व्याप्तिः सिद्ध्येत्, तत्सिद्धौ च साध्यसिद्धिरित्यन्योन्याश्रयः। पराभिप्रेतं प्रयोग-माह—**आकाङ्क्षेति**। एते पदार्थास्तात्पर्यविषयस्मारितार्थसंसर्गवन्तः इति

पक्षसाध्ये । नन्वनभिमतसंसर्गसिद्ध्याऽर्थान्तरं स्यादित्यत आह—न चेति । अनभिमतः संसर्गो द्विधा, अपक्षीकृतपदार्थसंसर्गः, पक्षीकृतपदार्थविपरीतसंसर्गश्च । तत्र आद्य आह—संसर्गस्येति । ये पदार्थाः पक्षीकृतास्तेषामेव पक्षधर्मताबलात् संसर्गपरिचायकत्वं, द्वितीयस्तु तात्पर्यविषयेति । विशेषणादेव निरस्त इति भावः । पदपक्षकानुमानमाह—एतानीति । अन्योदीरितवाक्येऽन्योदीरितपदकदम्बस्मारितार्थसंसर्गज्ञानपूर्वकत्वं नास्तीति व्यभिचारः स्यादत उक्तम्—तत्स्मारकत्वादिति । निराकाङ्क्षादौ व्यभिचारवारणयाद्यं विशेषणम् । अर्थासिद्धिरिति । संसर्गासिद्धिरित्यर्थः । ज्ञानेति । ज्ञानं सिद्ध्येत् स्वविषयमादायैव सिद्धयतीत्यर्थः । ननु यः कश्चित् संसर्गः सिद्धयेदित्यत आह—तस्येति । तथा च पक्षधर्मबलात् तत्तत्पदकदम्बस्मारिततत्तत्पदार्थसंसर्गविषयकज्ञानपूर्वकत्वं सिद्धयतीत्यर्थः ।

**परिच्छेदे** नियमे, साध्य इति शेषः । फलोपधाने साध्य इति यावत् । एवं सम्भवे स्वरूपयोग्यत्वे साध्य इत्यर्थः । द्वितीयानुमाने दूषणमाह—आकाङ्क्षेति । अबन्धना अव्याप्येत्यर्थः । अनैकान्तादिति । स्थिरजलादौ सेकादिसंसर्गफलोपधानाभावादित्यर्थः । वाक्यार्थेति । प्रकृतवाक्यार्थगोचरयथार्थज्ञानवत्त्वरूपाप्तत्वस्य प्रथममग्रहादित्यर्थः । नन्वविप्रलम्भकत्वमेवाप्तत्वं तच्च संसर्गसिद्धेः पूर्वमपि सुग्रहमित्याह—न हीति । पित्रादिवचनेऽपि कदाचिद्व्यभिचारदर्शनात्तेन हेतुविशेषणेऽपि व्यभिचारतादवस्थ्यादित्यर्थः । अपि त्विति । प्रकृतवाक्यार्थप्रमावत्त्वमित्यर्थः । क्वचित् प्रमावत्त्वमतन्त्रमेव, व्यभिचारानिवर्त्तकत्वादित्यत आह—यत्रेति । ननु पदार्थेऽयमभ्रान्त इति सुग्रहमेवेत्यत आह—पदार्थमात्र इति । असिद्धेरिति । वाक्यार्थानुभवात्पूर्वमिति शेषः । नन्वनुभवो मास्तु, स्मृत्यैवोपपत्तेरित्यत आह—अनुभूतेति । तर्हि अनुभव एवास्तु को दोष इत्यत आह—तदनुभवस्येति । विशेषणेति । आप्तोक्तत्वलक्षणविशेषणासिद्धेरित्यर्थः । तथा च व्यभिचार एवेति भावः । द्वितीय इति । सम्भावितसंसर्गा इति साध्यपक्ष इत्यर्थः । संसर्गानिश्चयादिति । तथा च निष्कम्पप्रवृत्त्यनुपपत्तिरेवेत्यर्थः । स्वरूपयोग्यताज्ञानेऽपि संसर्गार्थिनां निष्कम्पप्रवृत्त्यदर्शनादिति भावः । किं च अन्वयप्रयोजकरूपवत्त्वमिह योग्यता साध्या । सा च प्रागेव ज्ञातेति सिद्धसाधनमित्याह—योग्यतामात्रस्य चेति । सैव योग्यता हेतुविशेषणमिति भावः ।

**अन्यथेति**। योग्यताया एवासिद्धौ हेतुविशेषणासिद्धेरित्यर्थः। पदपक्षके दोषं पूर्वमुक्तं स्फुटयति--**एवमिति**। आकाङ्क्षायाः सत्तया हेतुतां व्यवस्थापयितु-माकाङ्क्षास्वरूपं परिच्छेत्तुमाह--**तत्रेति**। **तस्येति**। विशेषणविशेष्यभाव-स्येत्यर्थः। **योग्यतैवेति**। तस्या हेतुविशेषणतया पूर्वमेव ज्ञातत्वादित्यर्थः। ननु नीलं सरोजमित्यत्रापि नीलगुणविशेषसरोजद्रव्यविशेषाभ्यामाक्षिप्तयो- 5 र्गुणद्रव्ययोरविनाभावोऽस्त्येवेत्याह--**नापि विशेषेति**। अत्रातिव्याप्तिमाह--**अहो इति**। नदीकच्छयोरविनाभावेऽपि आकाङ्क्षाया अभावात्। अन्यथा तत्र वाक्यभेदप्रसिद्धिर्न स्यादित्यर्थः। **प्रतिपत्तुरिति**। प्रतिपाद्यपुरुषस्येत्यर्थः। एवं सति घटो भवतीत्यपि वाक्यं परिपूर्णमेव स्यात्, गुणविशेषे क्रियाविशेषे च प्रतिपत्तृजिज्ञासायाः सत्त्वात्। अन्यथा रक्तो पटो भवतीत्यत्रापि 10 वाक्यभेदः स्यात्। अत्रापि पटो भवतीत्येतावतैव पर्यवसानसम्भवादित्यर्थः। जिज्ञासाविशेष आकाङ्क्षा। तत्र विशेषं दर्शयति--**पदस्मारितेति**। या जिज्ञासा तद्वाक्यस्थपदस्मारितमर्थं विषयीकरोति सेत्यर्थः। एतदेवाह--**पट इति**। अभ्युपगम्योत्तरयति--**एवं तर्हीति**। जिज्ञासाज्ञानस्यान्वयव्य-तिरेकाभावात् स्वरूपसत्त्वे सा हेतुर्वाच्यः। तथा च तया हेतुविशेषणमनुपपन्न- 15 मित्यर्थः। नन्वासत्तियोग्यते एव हेतुविशेषणे स्यातां, न हि ते अपि स्वरूपसत्यौ तन्त्रे तयोर्भ्रमादन्वयबोधानुपपत्तिप्रसङ्गादित्यत आह—**आसत्तीति**। निराकाङ्क्षे व्यभिचारतादवस्थ्यादित्यर्थः। **व्यभिचारादिति**। राजपदार्थपुरुषपदार्थयोः संसर्गज्ञानपूर्वकत्वाभावादित्यर्थः। **द्वितीय इति**। आकाङ्क्षाज्ञानपक्ष इत्यर्थः। जिज्ञासाज्ञानस्यान्वयव्यतिरेकाभावादित्यर्थः। 20 **प्रतिसन्धानादेवेत्यभ्युपगमवादः**। तयोरपि स्वरूपसत्योरेव तन्त्रत्वात्। **तावन्मात्रेति**। जिज्ञासाज्ञानं यदि तन्त्रं स्यात्, तदाऽनुभूयेतेत्यर्थः। जिज्ञासायाः स्वरूपसत्या हेतुत्वं दृष्टान्तेनाह—**दूरादिति**। ननु तथापि जिज्ञासाज्ञानमान्तरालिकं स्वीक्रियतां, को दोष इत्यत आह—**विशेषेति**। जिज्ञासावगतिर्यदापेक्षिता तदा सम्भूतसामग्रीकेण शब्देन संसर्गधीरेव जन्यत 25 इत्यर्थः। ननु विशेषान्वयप्रतियोगिपदार्थान्तरस्मरणकालात् पूर्वमेव जिज्ञासावगतिः स्यादित्यत आह—**न चेति**। **तावन्मात्रस्येति**। पदस्मारि-ततत्तत्पदार्थसार्थगोचरजिज्ञासा तावदेकैव वक्तव्या, तदवगमाभिमतकाले चान्वयधीरेव जायत इत्यर्थः। **एवम्भूतोऽपीति**। आकाङ्क्षया विशेषितोऽ

पीत्यर्थः । हेतुसत्त्वे साध्याभावं दर्शयति—तदेति । अत्र च साध्याभावः पदस्मारितत्वांशवृत्तिरेका (?) मिति बोध्यम् । तथाविधस्येति । यावत्समभिव्याहृताकाङ्क्षादिमत्पदकदम्बकत्वात् । यद्यप्येवमपि न व्यभिचारोद्धारः, तथापि तस्य तद्भावनाशक्यत्वं हेतुज्ञानकालेऽवश्यं साध्यस्य सत्त्वा-
5 दित्यर्थः । गूढाभिसन्धिराह—कुतस्तर्हीति । अलिङ्ग एवेति । कतिपयपदमात्रस्यालिङ्गत्वात् । तत्रैव यावत्समभिव्याहृतत्वमारोपयतीत्यर्थः । श्रुतार्थरूपेति । यदेव श्रुतं तावत्पदार्थसंसर्गानुभवादित्यर्थः । न च लिङ्गविशेषणसन्देहेऽनुमितिर्भवतीति भावः । सन्देहाकारमेवाह—भवति हीति । असाविति । कतिपयपदश्राविणो या संसर्गावगतिरित्यर्थः । लिङ्गाभिमानिनो
10 लिङ्गनिश्चयः । स च विशेषणांशसंशयात् प्रकृते नास्तीत्यर्थः । एकदेशश्राविणो या भ्रान्तिः सा शब्दादेव जायते, न तु प्रमापि, येन तत्प्रमाणं स्याद् इत्याह—एतादृगिति । आशयमुद्घाटयति—यद्येवमिति । व्याप्तीति । एकदेशश्राविणः शब्दादेव संसर्गप्रत्ययाभ्युपगमादित्यर्थः । नास्त्येव तत्र संसर्गप्रत्ययो येन तद्वदन्यत्र संसर्गप्रमा स्यादित्यर्थः । अनाप्तोक्ते संसर्गज्ञान-
15 पूर्वकत्वं साध्यं नास्ति यावत्समभिव्याहृताकाङ्क्षादिमत्पदकदम्बकत्वं हेतुरस्तीति व्यभिचारमाह—तथाभूतस्येति । एतच्चान्वयप्रयोजकरूपवत्त्वं योग्यत्वमभिप्रेत्य । नन्वसंसर्गाग्रहपूर्वकाणीति साध्यम् । तच्चानाप्तोक्तत्वेऽप्यस्तीति न व्यभिचार इत्याह—असंसर्ग इति । एवं तर्हीति । ज्ञानावच्छेदकतया हि संसर्गः सिद्ध्येत, न चात्र ज्ञानपूर्वकत्वं साध्यमस्तीतीत्यर्थः ।
20 आप्तेति । तत्र संसर्गज्ञानपूर्वत्वं न बाधितमित्यर्थः । तर्ह्याप्तोक्तत्वेन हेतुर्विशेषणीयः, संसर्गज्ञानपूर्वकत्वं च तवाभिमतं साध्यं, तत्राह—सर्वविषयेति । यत्र क्वचिदिति । अनाप्तोक्तत्वस्य तथात्वात् तत्र व्यभिचार इत्यर्थः । प्रागेवेति । आप्तत्वग्रहदशायामित्यर्थः । तथा च न तेन हेतुं विशिष्य संसर्गसाधनम् । संसर्गस्य प्रागेव सिद्धेरिति भावः । पूर्वं सर्वमभ्यु-
25 पगमवादेनोक्तमिति स्फुटयन्नाह—न चेति ।

जिज्ञासामिति । सा चाजिज्ञासोरपि न तत्र व्यभिचार इत्यर्थः । संसर्गावगमेति । संसर्गप्रमेत्यर्थः । स्मारितयोरविनाभावो गुणवद् द्रव्यमित्यादौ, तदाक्षिप्तयोरविनाभावो नीलं सरोजमित्यादौ, विशेषाक्षिप्तसामान्ययोः । श्रोतरीति । वक्तरि संसर्गावगमप्रागभावस्यानाकाङ्क्षत्वद्योतना-

र्थम्। तदुत्पाद्येति । वाक्यान्तरोत्पाद्यसंसर्गावगमप्रागभावस्य निराकाङ्क्षेऽपि सत्त्वात् तद्वारणार्थं स्मारिततदाक्षिप्ताविनाभावे सतीति । जिज्ञासायोग्यतामाविष्कर्त्तुं न तु व्यावर्तनार्थम्, एतादृशस्थले जिज्ञासोत्पत्तुमर्हतीत्येतत्परम् । साधारणहेतुरपि प्रतियोगिविशेषाशङ्कितोऽत्रासाधारणः । न च प्रागभावादेव कार्यानुत्पत्तौ योग्यतासत्त्योरकारणतापत्तिः एवं सति दण्डा- 5
देरप्यकारणतापत्तेः । न च यत्र यत्र प्रागभावाभावस्तत्र कारणान्तराभाव आवश्यक इति तत एव कार्यानुत्पत्तौ किमाकाङ्क्षयेति वाच्यम् ? अन्यत्रापि प्रागभावस्याकारणतापत्तेः । न च तदुच्चारणजन्यसंसर्गावगमप्रागभावसिद्धचसिद्धिव्याघातो, निराकाकाङ्क्षे तत्र प्रागभावस्यासिद्धिः । न च तदुत्पाद्यसंसर्गज्ञानाभावे तत्प्रागभावाभावोऽपि दुर्निरूप इति वाच्यम् । संसर्गावगम- 10
त्वेनैव प्रतियोगिसिद्धिः । दुःखप्रागभावार्थिकायां युक्तौ यथा दुःखत्वेनैव प्रतियोगिता, न तु तदा मे भाविदुःखत्वेन, तस्मात्तदनुशयेन यत् किञ्चिदुक्तम् अभिधानपर्यवसानमाकाङ्क्षेति । तत्तुच्छम् । येन विना यस्य न स्वार्थान्वयानुभावकत्वं तदपर्यवसानमित्यपि संसर्गावगमप्रागभावपर्यवसन्नमेव । अभिधानं हि न शब्दप्रयोगः । तस्य निराकाङ्क्षेऽपि पर्यवसानात्, किन्त्वन्व- 15
यबोधः तदपर्यवसानं तदनुत्पत्तिः । सा च प्रागभाव एवेति घट्टकुट्यां प्रभातम् प्रत्यूषे चाधिकमन्वेष्टव्यम् । ननु प्रागभावोऽप्याकाङ्क्षा ज्ञायतामत आह—न चेति । संसर्गावगमस्य प्रागभावप्रतियोगिनः संसर्गसिद्धिमन्तरेण दुर्ग्रहत्वादित्यर्थः ॥१३॥

बोधनी

अथ प्रमाणान्तरस्यैव सतः शब्दस्याबाधकत्वं प्रतिपादयिष्यन्मतान्तरं तावदाह 20
**शब्दोऽपीति** । अनुमानानतिरेकात्तस्य चाबाधकत्वस्य स्थितत्वादिति शेषः । द्वयोरपि 'यद्यपि' शब्दयोः तथापीति वक्ष्यमाणेन संबन्धः । पदार्थत्वस्य घटपटादिभिरनैकान्तिकता, पदस्मारितत्वस्य तु गौरश्वः पुरुषो हस्तीत्यादिपदस्मारितैः, पदपक्षीकारेऽपि पूर्वोक्तदोषस्तावदस्ति, तन्निस्तारेऽपि साध्याभावेन बाधितविषयत्वं पदानां पदार्थसंसर्गेण सह संयोगादिसंबन्धलक्षणस्य मत्वर्थस्याभावाज्ज्ञापकत्वलक्षणस्य चानुमानप्रवृत्त्युत्तरकालीनत्वेन 25
ततः पूर्वं भवतामसिद्धत्वादिति । तर्हि लिङ्गतया ज्ञापकत्वमेव मत्वर्थः साध्यः स्यादित्याह **न च लिङ्गतयेति** । प्रसङ्गमेवाह **तदुपलम्भ इति** । तस्य लिङ्गतया ज्ञापकत्वस्य

साध्यस्योपलम्भे हि सति तेन सह शब्दलिङ्गस्य व्याप्तिनिश्चयः तन्निश्चये च ज्ञापकत्वानुमानमिति प्रकारान्तरासंभवेऽनतिरेक एव, पदार्थपक्षीकारेण तु तेषां मिथः संसर्गस्यैवमनुमानसंभव इत्याह **तथापीति**। नन्वेतावता संसर्गमात्रं सिध्येन्न तद्विशेष इत्यत्राह **न चेति**। पदस्मारितान् पदार्थविशेषान् पक्षीकृत्य तेषां संसर्गे साध्यमाने तद्विशेष 5 एव सिध्यतीति। **यद्वेति**। तथा ज्ञानपूर्वकत्वस्य साध्यत्वान्न साध्याभावः, न चानैकान्तिकता आकाङ्क्षादिमत्त्वेन विशेषणात्। तदितिपदार्थपरामर्श इति। नन्वेवं कुतः संसर्गवत्ता सिध्येत् कुतो वा तद्विशेष इत्यत्राह **न चैवमिति**।

तत्र प्रथमप्रयोगे दोषमाह **अनैकान्तेति**। यद्यत्र संसर्गवन्त एवेति परिच्छेदो नियमः साध्येत तदा नाप्तोक्तपदस्मारितैरनैकान्तो हेतुस्तेषां तन्नियमाभावात्, अथ संभवो 10 योग्यतामात्रं साध्येत तदा वाक्यफलं निश्चयो न सिध्येदिति। द्वितीयेऽप्याह **आकाङ्क्षेति**। आकाङ्क्षा नाम प्रतिपत्तुर्जिज्ञासा, सा च सत्तामात्रेणान्वयप्रतीतिहेतुस्ततः तथा न व्यभिचारव्यावर्त्तनाय हेतुर्विशेषणीयः, तर्हि योग्यतासन्निधिभ्यामेव विशेष्यत इत्यत्राह **योग्यासत्तिरिति**। न हि तावन्मात्रमन्वयप्रतीतौ निबन्धनमयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ वाक्यद्वयस्थयोः राजपुरुषयोः सतोरपि तयोरन्वय- 15 प्रतीत्यभावादिति।

आद्यं पादं व्याचष्टे **एत इति**। आप्तोक्तपदस्मारितत्वादिति हेतुः स्यादित्याह— **आप्तोक्तेति**। **नेति**। अस्मिन्नर्थेऽयमाप्त इति वाक्यार्थप्रतीतिपूर्वकमाप्तत्वमवगन्तव्यं, तदवगत्युरकालं च तद्विशिष्टहेतुना वाक्यार्थप्रतिपत्तिरिति परस्पराश्रयतापत्तिरिति भावः। प्रागाप्तत्वास्सिद्धिमाह **न हीति**। येन प्रागेव वाक्यार्थप्रतीतेस्तत्सिध्येत् इति। नन्वस्तु 20 वाक्यार्थज्ञानसत्यत्वमाप्तिस्ततः किमित्यत्राह **न चैतदिति**। क्वचिदाप्तत्वमवधार्य सर्वत्रायमीदृश इत्यनुमास्यामह इत्यत्राह **यत्र क्वचिदिति**। वाक्यार्थप्रतीतेः प्रागाप्तत्वासिद्धिमुपसंहरति **ततोऽस्मिन्निति**। ननु पदार्थास्तावत्प्रागेव प्रतीयन्ते तेषां सत्यत्वात्तत्राप्तिरप्यवधार्यत इत्यत्राह **पदार्थमात्रे चेति**। नन्वनवगतेऽपि वाक्यार्थे पदस्मारितानां पदार्थानां परस्परसंसर्गयोग्यतावदागमादेतत्संसर्गेऽयमभ्रान्त इति निश्चेतुं शक्यमित्याह 25 **एतेषामिति**। **नेति**। नहि तदानीमेषां संसर्ग इत्यनुभवात्मिकाः बुद्धिः सिध्यति कारणाभावादिति। तत एव न स्मरणात्मिकापीत्याह **अननुभूतेति**।

द्वितीयं पादं व्याचष्टे **नापि द्वितीय इति**। न परं साध्यासिद्धिः सिद्धसाधनं चेत्याह **योग्यतामात्रस्य चेति**। प्रागसिद्धौ दोषमाह **अन्यथेति**। उत्तरमर्धं व्याचक्षाणः पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीति प्रयोगं दूषयति **एवं द्वितीयेऽपीति**। एतच्च

पूर्वत्रापि द्रष्टव्यम् । स एव संभविनः पक्षानुपन्यस्य निरस्यति न तावदिति । साध्यत्वादिति । न साध्यमेव हेतुविशेषणमाकाङ्क्षा भवतीति । अस्तु तर्हि विशेषणविशेष्यभावयोग्यतैवाकाङ्क्षा तत्राह नापीति । तस्याः प्रागेव हेतुविशेषणत्वेनोपादानादिति । तर्हि पदस्मारितानां पदार्थानामन्योऽन्याविनाभाव एव आकाङ्क्षेत्यत्राह नापीति । नन्वस्ति तावद् गुणद्रव्यविशेषाभ्यां नीलसरोजाभ्यामाक्षिप्तयोः गुणद्रव्यसामान्ययोरविनाभावः, सोऽप्याकाङ्क्षेत्याह विशेषेति । यद्यविनाभाव आकाङ्क्षा तर्ह्यहो विमलं जलं नद्या इत्येतद्वाक्यगतस्य नदीपदस्य कच्छे महिषश्चरतीति वाक्यान्तरगतस्य कच्छपदस्य स्वार्थाविनाभावलक्षणं साकाङ्क्षत्वमस्तीत्यनयोर्वाक्यभेदो न स्याद्विभागे साकाङ्क्षाणामेकवाक्यत्वादित्याह नेति ।

ननु श्रोतुर्जिज्ञासा आकाङ्क्षा, तस्याश्च विमलं जलं नद्या इत्येतावतैव पर्यवसानाद्वाक्यभेदोपपत्तिरित्यत्राह—नापीति । ननु न वयं जिज्ञासामात्रमाकाङ्क्षेति ब्रूमः किन्तु पदस्मारितविशेषविषयम्, अतो नातिप्रसङ्ग इत्याह—गुणक्रियेति । सत्यमियमेवाकाङ्क्षा तथापि नैव हेतुविशेषणं संभवतीत्याह—एवं तर्हीति । जातायां जातमात्रायामज्ञातायामेवेति । नानयेति । न ह्यज्ञातमेव विशेषणं हेतोर्विपक्षाद् व्यावृत्तिं बोधयतीति मा भूदाकाङ्क्षा विशेषणमित्यत्राह—आसत्तीति । अयमेति पुत्रो राज्ञ इति एकं वाक्यं, पुरुषोऽपसार्यतामित्यपरं, तत्र राज्ञः पुरुष इत्यनयोर्योग्यतासत्ती स्तः तथापि नैकवाक्यत्वं क्रियान्तरसंबन्धेन निराकाङ्क्षत्वादिति । तर्ह्याकाङ्क्षापि ज्ञातैव विशेषणं भविष्यतीत्यत्राह द्वितीयस्त्विति । यथा हि सविशेषणेष्वनुमानान्तरेषु सत्यपि विशेषणे तज्ज्ञानाभावेनानुमानाप्रतीतिः तद्वदत्रापि सत्यामप्याकाङ्क्षायां तज्ज्ञानाभावे यदि संसर्गप्रतीतिर्न स्यात्स्यादपि तदा द्वितीयकल्पः, न चैतदस्ति योग्यतासत्तिमात्रं प्रतिसन्दधानस्याकाङ्क्षास्वरूपमात्रान्वयव्यतिरेकानुविधायित्वेनान्वयप्रतीतेर्दर्शनादिति ।

नन्वाकाङ्क्षासत्तैवान्वयप्रतीतिहेतुर्न तु ज्ञानमिति कुतो निश्चय इत्याह कथमिति । सत्तामात्रेणोपपत्तौ ज्ञानकल्पनायां प्रमाणाभावाच्छब्दादन्यत्र जिज्ञासाहेतुकेषु प्रत्यक्षेषु तावन्मात्रेण तदुपयोगदर्शनाच्चेत्याह नेति । अविशेषादिति जिज्ञासाहेतुकत्वेनाविशेषादिति । किञ्च संसर्गप्रतियोगिपदार्थविशेषस्मरणकाले तद्विषयजिज्ञासावगतिरपेक्षेत ततः प्रागेव वा ? न प्रथमः, घटमित्युक्ते पश्यतीतिपदस्मारिते क्रियाविशेषे तत्संसर्गस्यैवावगमात् । न द्वितीयः, पदस्मारितविशेषजिज्ञासाया एवाकाङ्क्षापदार्थत्वेन ततः प्राग्भाविन्यास्तस्या गुणक्रियाद्यशेषविषयत्वेनाकाङ्क्षानात्मनो वाक्यार्थज्ञानं प्रत्यनङ्गत्वादित्याह विशेषेति । अस्तु ज्ञातैवाकाङ्क्षा संसर्गज्ञानहेतुः अस्तु च हेतोर्विशेषणं, तथापि न वाक्यार्थप्रतीति-

रानुमानिकी विशेषणत्रयविशिष्टस्यापि पदार्थस्मारकत्वस्य हेतोरनैकान्तिकत्वादित्याह **न चैवंभूतोऽपीति**। **न चेति**। न हि राज्ञ इत्यादिपदत्रयस्मारितानां राजपुरुषापसारणानां संसर्गबुद्ध्या तदुच्चारितं राजपुरुषयोः पुत्रापसारणाभ्यां संसर्गज्ञानपूर्वकत्वादिति।

**स्यादेतदिति**। यावन्ति समभिव्याहृतानि पदानि तावतामाकाङ्क्षादिमत्त्वे सति 5 पदार्थस्मारकत्वं हेतुस्ततो न व्यभिचार इति यदि विशिष्टो हेतुः कुतस्तर्हि तदभावे संसर्गप्रत्यय इत्यत आह **कुत इति**। वाक्यैकदेश एव यावत्समभिव्याहृतत्वभ्रान्तिरित्याह **अलिङ्ग इति**। भ्रान्तिमेव दर्शयति **एतावानेवेति**। **एनेति**। यावत्समभिव्याहृतत्वसन्देहेऽपि संसर्गावगमान्न तदध्यारोपकारणमिति। नन्वसावेकदेशश्राविणः संसर्गप्रत्ययो भ्रान्तिरित्याह **भ्रान्तिरिति**। भवतु भ्रान्तिस्तथापि कुतश्चित्प्रमाणाभासाद्भवितव्यं, न तावत्प्रत्य- 10 क्षाभासात् लिङ्गाभासाद्वा भवति, तत्फलवैधर्म्यादित्याह **न तावदिति**। ननु स्यादेवं यदि कतिपयाग्रहणदूषितं पदकदम्बकप्रतिसन्धानमेव भ्रान्तिं जनयेत्तदेवादुष्टभ्रान्तिं जनयेन्नानुमानं लिङ्गाभिमानाभावेऽपि यथोक्तप्रकारेण प्रतीतिजननसामर्थ्यावधारणादित्याह **एतादृगिति**। ननु स्यादेवं यदि यावत्समभिव्याहृतत्वसन्देहेऽपि व्याप्तिप्रतिसन्धानविधुरस्य संसर्गावगमो जायेत, न त्वेतदस्तीत्याह **नास्त्येवेति**। कुतस्तर्हि तत्र संसर्गव्यवहार इत्यत्राह 15 **असंसर्गेति**। यदि यावत्समभिव्याहृतत्वविशेषणविधुरस्य संसर्गज्ञानपूर्वकत्वाभावो न दोषाय विशिष्टस्य हेतुत्वात् तर्हि तद्विशेषितेऽपि हेतावनैकान्तिकत्वं सुवचमित्याह **तर्हीति**। नन्वनाप्तवाक्यस्याप्यसंसर्गाग्रहपूर्वकत्वात्तावन्मात्रसाधने न व्यभिचार इत्याह **असंसर्गाग्रहेति**। एवं हि न कुतश्चिदपि वाक्यात् संसर्गावगतिः स्यादित्याह **एवं तर्हीति**। नन्वाप्तप्रणीतत्वेनापि हेतुं विशेषयिष्यामः, तथा च तस्य न व्यभिचार 20 इत्याह **आप्तवाक्येष्विति**। तदेतत्प्रथमानुमान एवाशङ्क्य निरस्तमित्याह **नेति**।

एवमाकाङ्क्षा नाम जिज्ञासेत्यङ्गीकृत्य तस्याः सत्ताया वाक्यार्थज्ञानहेतुत्वाल्लिङ्गविशेषणत्वं न संभवतीत्युक्तम्, इदानीं तु सत्तयापि हेतुत्वं नास्तीत्याह **न च सर्वत्रेति**। न हि प्रथममेव पूर्णवाक्यश्राविणो जिज्ञासापूर्वकः संसर्गप्रत्यय इति। यदि न जिज्ञासा का तर्हि वाक्यार्थप्रतीतिहेतुराकाङ्क्षेत्याह **कस्तर्हीति**। **जिज्ञासामिति**। अयमर्थः— 25 पदस्मारितस्य स्मारिताप्तस्य वा स्मारितेन तदाक्षिप्तेन वाऽविनाभावे सति श्रोतरि तत्पदार्थोत्पाद्यस्य संसर्गावगमस्य प्रागभावो जिज्ञासां प्रति योग्यता, सा चात्राङ्क्षेति। पदार्थविनाभाव आकाङ्क्षेत्युक्ते पटो भवतीति वाक्यं पदपदार्थस्य गुणाविनाभावेन तत्साकाङ्क्षत्वात् रक्तः पटो भवतीति वाक्यैकदेशवन्न पर्यवस्येदत उक्तं **पदस्मारितेति**। तर्हि नीलं सरोजमित्यत्र पदस्मारितयोर्नीलसरोजयोरविनाभावाभावा-

देकवाक्यता न स्यादत् उक्तं तदाक्षिप्तस्येति । तत्र च विशेषयोर्विनाभावेऽपि तदाक्षिप्तगुणत्वद्रव्यत्वसामान्ययोरविनाभावात्साकाङ्क्षत्वेनैकवाक्यतेति । तथाप्यहो विमलं जलं नद्याः कच्छे महिषश्चरतीति वाक्ययोर्भेदो न स्यात् नदीकच्छयोरविनाभावेन साकाङ्क्षत्वादत उक्तं तदुत्पाद्येति । अत्र हि पूर्ववाक्यस्थनदीपदार्थोत्पाद्यस्य जलसंसर्गावगमस्य न प्रागभावस्तथोत्तरवाक्यस्थकच्छपदार्थोत्पाद्यस्य महिषसंचरणसंसर्गावगमस्यापि न प्रागभावः, तेन तयोर्निराकाङ्क्षत्वान्नैकवाक्यतेति । अस्त्वियमाकाङ्क्षा ततः किमित्यत आह न चैष इति । तेन हेतुविशेषणत्वायोगान्नानुमानत्वमिति । कुतो नापेक्ष्यत इत्यत्राह प्रतियोगीति । संसर्गावगमप्रागभावोऽपि प्रतियोगिभूतसंसर्गावगमनिरूप्यः, स चाकाङ्क्षाधीननिरूपण इति इतरेतराश्रयत्वप्रसङ्ग इति । तदेवं शब्दमात्रस्यानुमानान्तर्भावं वदन्तो निरस्ताः ॥ १३ ॥

विवेकः

शब्द इति । शब्दो नानुमानबाध्यबाधकः, अनुमानाभिन्नत्वादित्यर्थः । अत्र शाब्दत्वमनुमितिभिन्नवृत्तिर्नवेत्याद्या विप्रतिपत्तयः । विधेयकोटावनुमितिसामग्रीजन्यमात्रवृत्तित्वादित्यादयः प्रयोगाः । तत्र यादृशानुमितिसामग्र्यव्यभिचारस्तत्र तत्परिशेषेण दर्शयति । तथा हीत्यादि । व्यधिकरणं पक्षतया । केचित् साध्येनापि सेकवह्निकरणकफलत्वादौ तथा । अनैकान्तिकं पदानि तज्ज्ञानानि वा । तत्स्मारकत्वादिति । अत्र योग्यतया विशेषणत्वानैकान्तिकत्वं प्रागुक्तं । तत्रापि यदि योग्यता न भ्रमज्ञापकत्वरूपसाध्यसत्त्वन्तदा स्वरूपायोग्यवारणमवश्यं कार्यम् । घटो घटभिन्न इत्यादौ योग्यताभ्रमेणापि तदसत्त्वाच्चेति ध्येयम् । ज्ञाप्येति । ज्ञाप्यो ज्ञाप्यत्वेनाभिमतः । संसर्गस्तस्य ज्ञापकभाव इत्यर्थः । स्वातन्त्र्येणानुमितिसामग्रीनैरपेक्ष्येण । न चेति । लिङ्गस्य तत्स्मारकत्वादित्यस्य यल्लिङ्गतया ज्ञापकत्वं तदेव तस्य लिङ्गस्य । कर्मसाध्ये तु नेति योज्यम् । परस्परेति । फलीभूतानुमितिमात्राधीनाव्यभिचारसम्पल्लिङ्गं न गमकं तथा दर्शनादिति केचित् । अत्र ज्ञापकत्वमात्रं साध्यं प्रमाणकत्वम्वा ? आद्ये संसर्गासिद्धिः । अन्त्ये प्रमाणत्वस्यार्थतथात्वघटिततया साध्यप्रसिद्धौ अनुमानप्रवृत्तिः । तत्र प्रवृत्तौ च सेत्यर्थ इति केचित् । मिश्रास्तु प्रकृतानुमितौ जातायां विशेषणज्ञानं तज्ज्ञाने च तथात्वं सामान्यलक्षणया तदुपगमे तु प्रमापकत्वे साध्ये त्वनाप्तोक्तेर्व्यभिचारो ध्येय इत्याहुः ।

तथापीति । अत्र एते पदार्थाः मिथः संसर्गवन्त इति प्राक्तनी प्रतिज्ञा बोध्या । पदार्थसंसर्गयोस्तात्पर्यविषयत्वविशेषणाच्च नानभिमतपदार्थयोरनभिमतसंसर्गेणाचार्थान्तरं

विशेष्यीभूतं पदार्थं पक्षयित्वा विवक्षितसम्बन्धेन विधेयपदार्थसाध्यकेऽस्य तात्पर्यम्, तेन नोद्देश्यप्रतीत्यलाभः। अत्र योग्यतावत् पदस्मारितत्वादित्येव व्यभिचारवारकं शाब्दानुमितिं प्रति चाकांक्षादिमत्त्वेन पदज्ञानमपि हेतुरिति तदुपपत्तेः। सामान्यमुखी च व्याप्तिर्नातो दृष्टान्तासिद्ध्यादि। आशयमविद्वान् शङ्कते—**न चेति**। आशयमुद्घाटयति—**संसर्ग-**
5 **स्येति**। तादृशसंसर्गस्य व्यापकतावच्छेदकत्वं पक्षधर्मताबलात्पदार्थो भासते तदीय एव संसर्गविशेषो भाषते प्रसिद्धानुमानवदिति भावः। प्रकारान्तरमाह—**यत्रेत्यादि**। एतानि पदानि विशिष्य तानि तानि। **स्मारितेति**। अत्रापि तात्पर्यविषयत्वेन पदार्थ-संसर्गौ विशेष्यौ तेन नार्थान्तरम्। निरुक्तपरामर्शस्य च तात्पर्यादिज्ञानसहकारेण तादृश-विशेष्यविशेषणभावापन्नधीजनकत्वं कल्पते। लाघवादित्यभिमानेनेदं तत्रापि तादृशि
10 ज्ञानविशेषे आकाङ्क्षादिज्ञानानां हेतुत्वेन तद्विशेषणमिति ध्येयम्। अवच्छेदकत्वात्। व्यापकतावच्छेदककोटिप्रविष्टत्वात्।

अत्रोद्देश्यतावच्छेदकव्यापकतासम्बन्धेन विधेयविशिष्टं साध्यसामानाधिकरण्यमात्रेण वा। (आ)द्य आह—**अनैकान्तिक इति**। द्रव्यं गन्धवदित्यादौ व्यभिचार इत्यर्थः। द्वितीये तु त्वाह—**संभव इति**। न निश्चयः। उद्देश्यतावच्छेदकावच्छेदेन
15 निश्चय इत्यर्थः। यद्वा तादृशपदार्थवत्त्वं साध्यं तद्योग्यत्वम्। आद्येऽनैकान्तः। पयसा सिञ्चतीत्यादौ अन्वयप्रयोजकरूपयोग्यतावत्पदस्मारिते स्थिरजले व्यभिचारः। अन्त्ये—न निश्चयः। न तत्पदार्थवत्त्वावधारणम्। ननु तवापि क्वचित् पदार्थतावच्छेदका-वच्छेदेन बोधः। क्वचिदन्यथेत्यत्र यथा बाधाबाधौ नियामकौ तथा ममापि बाधा भावरूपयोग्यताया एव च हेतुविशेषणत्वमिति नानैकान्तोऽपीत्यनुमानद्वयमेव दूषयति।
20 **आकाङ्क्षेति**। अहो विमलं जलं नद्याः कच्छेत्यादौ व्यभिचारात्। तात्पर्यगर्भसाध्याभावाद-बन्धनम् व्याप्यत्वाभावः। नत्वाकाङ्क्षया हेतुनिवेशान्न तथा तत्राह—**आकाङ्क्षेति**। तथा च न तस्या हेतुविशेषणत्वसंभव इति भावः।

शङ्कते। **आप्तोक्त्येति**। **वाक्यार्थेति**। तथा च प्रकृतवाक्यार्थयथार्थज्ञानवत्त्वघटितं तत् न हेतुविशेषणमिति भावः। अविप्रलम्भकत्वम् इतरदोषाभावस्यापि उपलक्षणम्।
25 अयथार्थबुबोधयिषैव वा विप्रलम्भः। तदुक्तेः शुकाद्युदीरिततादृशवाक्यस्य। **तदनुभवेति** तद्वृत्तिज्ञानसामान्ये भ्रमत्वाभावो वा यत्र क्वचिद् भ्रान्तत्वाभावो वा प्रकृतवाक्यार्थ-ज्ञानप्रामाण्यम्वा? आद्ये। **सर्वत्रायमिति**। द्वितीये त्वाह—**यत्र क्वचिदिति**। उपयोगो व्यभिचारवारणम्। तृतीये त्वाह—**अत इति**। बुद्धेस्तादृशविशिष्टवैशिष्ट्यावगा-हिन्या अर्थभेदं प्रकृतवाक्यार्थज्ञानं निरूपयितुम्। चतुर्थे त्वाह—**पदार्थेति**। ननु

प्रमात्वगर्भमाप्तोक्तत्वं न निवेश्यम्, किन्त्वेतेषाम् यः संसर्गस्तज्ज्ञानवदुक्तत्वमात्रम् । न चानाप्तोक्ते तेषां यः कश्चित्संसर्गः सिद्ध इति न व्यभिचार इत्यत्राह—**तेषामिति** । अयमभ्रान्तः तज्ज्ञानवान् । **शक्यमित्यत्र** निश्चेतुमिति प्राक्तनमनुषज्यते । संसर्गाप्रसिद्ध्या दुर्ज्ञेयत्वमाह—**नेति** । ननु तस्य स्मरणात्तथा धीः स्यादित्यत्राह—**अनन्विति** । लिङ्गाधीनतया प्रकृतलिङ्गज्ञानाधीनतया । तथा च परस्पराश्रय इति भावः । तदेकफल- 5
त्वात् तन्निश्चयैकफलत्वात् । तृतीयव्याख्यामनुसृत्याह—**योग्यतामात्रस्येति** । तस्या हेतुविशेषणत्वादिति भावः । तथा च सिद्धसाधनमपीति भावः । अन्यथा तस्या हेताव- प्रवेशे द्वितीयेऽपीत्यपिना प्रथमसमुच्चयः । तद्योग्यता विवक्षितसंसर्गयोग्यता **विशेषेति** । विशेषौ नीलसरोजे ताभ्यामाक्षिप्ते गुणद्रव्यसामान्ये । **वाक्येति** । नद्या इत्युभयसाकाङ्क्षः स्यादित्यर्थः । रक्तः पट इत्यत्र यथा पटपदं रक्तसाकाङ्क्षं तथा पटो भविष्यतीत्यत्रापि 10
पटपदं शुक्लादिसाकाङ्क्षं तथा च समभिव्याहृतपदस्मारितविषयजिज्ञासैव सा वाच्येत्या- खण्डलार्थः ।

**किं करोति** कीदृशधात्वर्थवान् । अनुमानान्तरवदिति व्यतिरेके दृष्टान्तः । तत्- सद्भावेऽपि स्वरूपसदाकाङ्क्षा सद्भावेऽपि शङ्कते—**कथमिति** । तथा दर्शनात् । स्वरूप- सत्त्या एव जिज्ञासायाः प्रयोजकत्वदर्शनात् । विशेषोपस्थापनकाले तत्तत्पदार्थोपस्थितिकाले 15
न जिज्ञासावगतिरिति मानसप्रत्यक्षसामग्र्यां प्रमाणमात्रापेक्षया दुर्बलत्वादिति भावः । **तावन्मात्रेति** । समभिव्याहृतपदोपस्थापितगोचरजिज्ञासाया एव तत्त्वोपगमादिति भावः । न च न वा । एवम्भूतोऽपि आकाङ्क्षया विशेषितोऽपि । **अश्रुत्वेति** । अजनितान्वयेऽपि तथा जिज्ञासायाः सम्पत्तये ।

**यावदिति** । श्रूयमाणयावत्समभिव्याहृतकत्वेनेत्यर्थः । **तथेति** । व्यभिचारोदाहरणं 20
यदुक्तं तत्र तथाविधस्य हेतोरभावादित्यर्थः । शङ्कते—**कुत इति** । उत्तरमलिङ्ग इति । अपक्षवृत्तौ पक्षवृत्तित्वज्ञानादित्यर्थः । दूषयति—**नेति** । संशयाकारमाह—**न जान इत्यादि** । पुनः शङ्कते—**भ्रान्तिरिति** । असौ भ्रान्तिः लिङ्गस्य निरुक्तविशिष्टस्य अभिमाननिश्चयः । **एतावदिति** । एवकारेण व्याप्तिज्ञानादिव्यवच्छेदः । तत्र तथाविध- संशयकाले । तर्हि असंसर्गाग्रहादपि व्यवहारे तथाभूतस्यासंसर्गाग्रहपूर्वकस्यानाप्तवाक्य- 25
स्याप्तीयभिन्नवाक्यस्य संसर्गज्ञानवदनुक्तस्येति यावत् । नन्वसंसर्गाग्रहपूर्वकत्वमेव साध्य- मित्याह । **असंसर्गेति** । शङ्कते—**आप्तेति** । तथा चाप्तोक्तमेव हेतुकार्यमिति भावः । दूषणान्तरमाह **न चेति** । सर्वत्र शाब्दज्ञानसामान्याव्यवहितपूर्ववृत्तिमत्क्वचिज्जिज्ञासेत्यनन्तरं निबन्धनमिति पाठः । अत्र सर्वत्र शाब्दबोधसामान्य इत्यर्थः ।

**सा चेत्यादि** । तेन वाक्येन उत्पाद्यो यः संसर्गावगमः तत्प्रागभावः घटकर्मत्व-मित्यादौ तेन वाक्येनोत्पद्यत्वाभावादेव जनितान्वयबोधे च इतरवाक्योक्ततत्प्रागभाव-सत्त्वेऽपि च न प्रसंगः । यत्र तादृशप्रागभावः तत्पुरुषीयार्थबोधं प्रति तत्प्रयोजकत्वमित्यर्थ-लाभाय—**श्रोतरीति** । स च प्रायशः कुत्रास्तीत्याकाङ्क्षायामाह—**स्मारितेति** ।
5 स्मारितयोरविनाभावे द्रव्यं गुणवदित्यादौ तदाक्षिप्तयोश्च नीलं सरोजमित्यादौ । एतच्च दिग्दर्शनमात्रं न तु लक्षणप्रविष्टं व्यर्थत्वादिति ध्येयम् ।

ननु एतादृश्येव लिङ्गविशेषणमस्त्वित्यत्र आह—**न चेति** । तस्यावगमरूपस्य प्रतियोगिनः विषयः संसर्गरूपः । **वस्तुतस्तु** शाब्दयामीत्यनुव्यवसायसाक्षिको जातिविशेष-स्तावत्सिद्ध एव तत्र चाकाङ्क्षादिधियोऽपि अन्वयव्यतिरेकात् कारणत्वमवश्यमुपेयम् । तत्र
10 चानुमितित्वे मानाभावः । न चानुमितित्वतदभावान्यतरसाधकं मानं लाघवादनुमितित्वं विषयीकरोतीति वाच्यं, व्याप्तिज्ञानादिकल्पनागौरवेण तत्कल्पनाया असम्भवात् फलमुख-गौरवज्ञानस्य क्वचित्कल्पनाबाधकत्वोपगमात् । वस्तुतस्तु तदव्यवहितप्राक्काले तत्रात्मनि परामर्शतदभावान्यतर सा (ध) कानुमानं क्लृप्तपरामर्शाभावमेव गोचरयतीति ध्येयम् । न वा तत्रानुमिनोमीति स्वरसवाही कस्यचिदनुभवः । इत्थञ्चानुमिताविव विशेषदर्शनजन्यतया
15 शाब्दबोधेप्यप्रामाण्यसंशयो न स्यादित्यप्याहुः । किं च घटो नास्तीत्यादावभावेऽनुयोगिता-सम्बन्धेन घटादिकं साध्यम् । न च तादृशसम्बन्धस्य व्यापकताघटकत्वं क्वचित्सिद्धमेवं घट इवेत्यादावनुसन्धेयमिति दिक् ॥१३॥

प्राभाकरास्तु—लोकवेदसाधारणव्युत्पत्तिबलेनाऽन्विताभिधानं प्रसाध्य वेदस्या-पौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव स्वातन्त्र्येण प्रामाण्यमा-
20 स्थिषत । लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरन्विताभि-धानबलायातेऽपि प्रतिपादकत्वेऽनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः । तदति-स्थवीयः—

**निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये ॥**
**व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥ १४ ॥**

25 यावती हि वेदे सामग्री, तावत्येव लोकेऽपि भवन्ती कथमिव नार्थं गमयेत् ? न ह्यपेक्षणीयान्तरमस्ति, लिङ्गे तु परिपूर्णेऽप्यवगते व्याप्तिस्मृतिरपेक्षणीयाऽस्तीति विलम्बेन किं निर्णेयम् ? । अन्वयस्य प्रागेव प्रतीतेः ॥

लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति चेन्न । तद्रहितस्यापि स्वार्थप्रत्यायने शब्दस्य शक्तेरवधारणात् । अन्यथा वेदेऽप्यर्थप्रत्ययो न स्यात्, तदभावात् । न

च लोके अन्यान्येव पदानि, येन शक्तिवैचित्र्यं स्यात्। अनाप्तोक्तौ व्यभिचारदर्शनात् तुल्यापि सामग्री सन्देहेन शिथिलायते इति चेन्न। चक्षुरादौ व्यभिचारदर्शनेन शङ्कायामपि सत्यां ज्ञानसामग्रीतस्तदुत्पत्तिदर्शनात्।

ज्ञायमानस्यायं विधिर्यत्सन्देहे सति निश्चायकं यथा लिङ्गं, चक्षुरादि तु सत्तयेति चेन्न। वाक्यस्य निश्चितत्वात्, फलप्रामाण्यसन्देहस्य च फलोत्तरकालीनत्वात्। आप्तोक्तत्वस्य चार्थप्रत्ययं प्रत्यनङ्गत्वात्। लोकेऽपि चाप्तत्वानिश्चयेऽपि वाक्यार्थप्रतीतेः। भवति हि वेदानुकारेण पठ्यमानेषु मन्वादिवाक्येषु अपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयः। न चासौ भ्रान्तिः, पौरुषेयत्वनिश्चयदशायामपि तथा निश्चयादिति ॥ १४ ॥ 5

आमोदः

प्रसङ्गादाह—प्राभाकरास्त्विति। अन्वताभिधानमिति। इतरान्विताभिधानमिति। इतरान्विता एव हि पदार्थाः पदैरभिधीयन्ते कथमन्यथाव्यवहाराद् व्युत्पत्तिग्रह इत्यादि शब्दखण्डे बहुशः। ननु यद्यनुमानभावेन शब्दो गमकस्तदा कथमनुवादकत्वप्रसिद्धिरत आह—अन्विताभिधानेति। शब्दस्यापि तत्रार्थे सामर्थ्यादनुवादकतेत्यर्थः। 10

निर्णीतशक्तेरिति ।३।१४ 15

वेदे शब्दशक्तिनिर्णयादित्यर्थः। प्रागिति। अनुमानात्पूर्वमित्यर्थः। कथमेवमित्याह—व्याप्तीति। निर्णीतशक्तित्वमाह—यावतीति। द्वितीयार्धं व्याचष्टे—लिङ्ग इति। लोक इति। तथा च लोके भिन्नैव सामग्रीति तद्विलम्बेन प्रथमं शब्दो मूक एवेत्यर्थः तद्रहितस्यापीति। वेद आप्तोक्तनिश्चयं विनापि प्रत्यायकत्वदर्शनादित्यर्थः। संसर्गज्ञानपूर्वकाणीति साध्यसिद्धावपि न प्रवृत्तिः। न हि ज्ञानाज्ञानं प्रवर्त्तकं किन्त्विष्टकाबद्धोदकप्रकारकं ज्ञानं, तच्च न प्रकृते घटः, संसर्गज्ञानपूर्वकत्वसिद्धावपि घटसंसर्गस्य ताद्रूप्येणासिद्धिरिति शब्दप्रमाणमितिभावः। शिथिलायत इति। स्वघटितप्रतीतिं न घटयतीत्यर्थः। ज्ञानसामग्रीत इति। इन्द्रियार्थसन्निकर्षे सति शैथिल्यादर्शनादित्यर्थः। सन्देहेन शिथिलायत इति। सन्देहविषयं विवेचयति। वाक्यस्येति। वाक्यं न सन्देहविषय इत्यर्थः। फलेति। फलं संसर्गबोधः, तत्प्रामामाण्ये न सन्देहः फलोत्पत्तौ सत्यां भवेदेवेत्यर्थः। अनङ्गत्वादिति। वेदे व्यभिचारदर्शनादित्यर्थं। ननु लौकिकत्वावच्छेदेनाप्तोक्तत्वनिश्चयो हेतुः स्यादित्यत आह—लोकेऽपि चेति। वाक्यप्रतीतिस्थलं दर्शयति—भवति हीति। गौडमीमांस- 20 25

कस्येति । वेदानभिज्ञत्वख्यापनाय तथात्वनिश्चयादिति बाधानवतारा-
दित्यर्थः ॥१४॥

बोधनी

संप्रति ये वैदिकस्य पृथक्प्रमाणत्वमङ्गीकृत्य लौकिकस्यानुमानान्तर्भावमातिष्ठन्ते तेषां मतमुपन्यस्य निरस्यति **प्राभाकरास्त्विति**। स्थूलतामेवाह **निर्णीतशक्तेरिति**। 5 लोकवेदसाधारणव्युत्पत्तिबलेन वाक्यार्थप्रतिपादने निर्णीतशक्तेर्वाक्यादेव वेदवल्लोकेऽपि वक्तृज्ञानानुमानात् प्रागेव वाक्यार्थनिर्णये जाते सति व्याप्तिस्मृतिसव्यपेक्षत्वेन विलम्बित-प्रवृत्तेः वक्तृज्ञानलिङ्गस्यैवानुवादत्वं भवेन्न वाक्यस्येति व्याचष्टे **यावतीति**। आकाङ्क्षादि-मत्प्रतियोग्यन्वितस्वार्थाभिधानशक्तिप्रतिसन्धानमेव हि वेदवाक्यार्थप्रतिपादनसामग्री, सा च लौकिकानामप्यविशिष्टेति कथमिव तानि न वाक्यार्थं प्रतिपादयेयुः। वक्तृज्ञानलिङ्गे 10 तु वाक्ये सति स्वार्थविषयज्ञानानुमानायार्थाभिधानशक्तिं तावत् प्रतिसन्धाय वाक्यस्य वक्तृज्ञानेन व्याप्तिरनुसन्धातव्या। ततश्च विलम्बकारिणो लिङ्गस्य निर्णेतव्यं नावशिष्यते। यथाहुः 'अश्वैरुपहृतः को हि गर्दभैः प्रार्थितुं क्षमः' इति। लोके वक्तुराप्तिनिश्चयः सामग्रीति वाच्यं व्युत्पत्तिकाले तस्यातन्त्रीकृतत्वादित्याह **लोके त्विति**। आप्तोक्तेरपि शक्त्यवधार-णोपयोगित्वे तद्विरहिणि वेदे वाक्यार्थप्रत्ययो न स्यादित्याह **अन्यथेति**। **न चेति**। 15 लौकिकवेदाधिकरणसिद्धान्तव्याकोपप्रसङ्गादिति। ननु तुल्यापि सामग्री अनाप्तवाक्येषु दृष्टव्यभिचारस्य पौरुषेयत्वसाधर्म्येण सर्वत्रापि व्यभिचारशङ्कायां नार्थप्रतिपादनसमर्था भवती-त्याह **अनाप्तोक्ताविति**। **नेति**। न हि दृष्टव्यभिचारं चक्षुर्ज्ञानं न जनयतीति।

ननु ज्ञायमानतया ज्ञापकत्वाद्वाक्येन लिङ्गस्य रीतिरनुसर्तव्या न तु चक्षुरादेरित्याह **ज्ञायमानस्येति**। किमत्र वाक्यस्य स्वरूपसन्देहो वाक्यार्थज्ञानजननं प्रतिबध्नाति, किं 20 वा वाक्यफलस्य ज्ञानस्य विसंवादात् प्रामाण्यसन्देहः। तत्र वाक्यं तावन्निश्चितमेव, ज्ञानप्रामाण्यसन्देहस्तु कथं ज्ञानोत्पत्तेः पश्चाद्भवन् पूर्वभाविनीं तदुत्पत्तिं प्रतिबध्नीयादित्याह **न वाक्यस्येति**। नन्वाप्तोक्तत्वसन्देहास्पदवाक्यस्य प्रत्यायकत्वं प्रतिबध्नातीत्यत आह **आप्तोक्तत्वस्येति**। वेदे तदभावेऽप्यर्थप्रत्यायकत्वदर्शनादनङ्गत्वमिति मा भूद्वेदे, लौकिके तु तदङ्गं भविष्यतीत्यत्राह **लोकेऽपीति**। वेदानुकारः स्वरविशेषस्तेन सादृश्याद्वेदत्वा-25 भिमानालम्बनमुक्तम्, मन्वादिवाक्येष्वत्यर्थसादृश्यात्। गौडो मीमांसकः पञ्चिकाकारः। गौडो हि वेदाध्ययनाभावादवेदत्वं न जानातीति गौडमीमांसकस्येत्युक्तमिति। ननु पौरुषेयत्वाग्रहणकृतोऽयं निश्चयो भ्रान्तिरित्यत आह **न चासाविति**। यदि हि तथा

स्यात्पौरुषेयत्वग्रहे सति बाध्येत तदग्रहकृतस्य भ्रमस्य तद्ग्रहणे निवर्त्तनीयत्वात्, न बाध्यते चायं निश्चय इति ॥ १४ ॥

विवेकः

व्युत्पत्तिबलेन शक्तिज्ञानसहकारेणान्विताभिधानमन्वितगोचरशाब्दबोधजनकत्वं प्रसाध्य निर्णीय। पदार्थानां प्रागवगतेराह—**सिद्ध इति।**

**निर्णीतेति।** निगदव्याख्यातमेतत्। परिपूर्णे लिङ्गतावच्छेदकावच्छिन्नेऽवगते 5 पक्षवृत्तितया तन्निश्चितेऽपि। एतच्च प्रभाकरमतमाश्रित्यास्माकन्तु परामर्शविलम्बोऽवसेयः। किं निर्णयम् = कथमनुमेयम्। उत्तरकालमपि सिद्धसाधनान्नानुमितिरित्याह—**अर्थस्येति।**

शङ्कते लोक इति। अत्र हितस्याप्तोक्तत्वेनानिश्चितस्य शब्दस्याप्तोक्तत्वनिश्चयरहितस्य पुंसो वा शक्तेः सामर्थ्यस्य। **अन्यानीति।** अत्र फलतावच्छेदकं 10 वैजात्याभावे तात्पर्यम्। व्यभिचारस्य भ्रमजनकत्वस्य प्रमित्यजनकस्य वा दर्शनात्तत्तुल्यापि वेदतुल्यापि शिथिलायते न निश्चायिका। लोके विधिः स्वभावः सत्ताया गमकम्। ननु लौकिकशब्दजन्यशाब्दत्वमेव कार्यतावच्छेदकम् तस्य स्यादित्यत्राह—**लोक इति** ॥१४॥

स्यादेतत्, नाप्तोक्तत्वमर्थप्रतीतेरङ्गमिति ब्रूमः, किन्त्वनाप्तोक्तत्वशङ्कानिरासः 15 स च क्वचिदपौरुषेयत्वनिश्चयात्, क्वचिदाप्तोक्तत्वावधारणादिति चेत्। तत् किमपौरुषेयत्वस्याप्रतीतौ सन्देहे वा वेदवाक्याद्विदितपदार्थसङ्गतेरर्थप्रत्यय एव न भवेत्, भवन्नपि वा न श्रद्धेयः?। प्रथमे सत्यादय एव प्रमाणम्। न चासंसर्गाग्रहे तदानीं संसर्गव्यवहारो, बाधकस्यात्यन्तमभावात्। तथापि तत्कल्पनायामन्वयोच्छेदप्रसङ्गात्। द्वितीये त्वश्रद्धा प्रत्यक्षवन्निमित्तान्तरान्निवर्त्स्यतीति वेदे यदि लोकेऽपि 20 तथा स्यादविशेषात्। अन्यथा वेदस्याप्यनुवादकताप्रसङ्गः।

तदुच्यते—

**व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात् पदैरमी ॥**
**अन्विता इति निर्णीते वेदस्यापि न तत् कुतः ॥ १५ ॥**

यदा ह्यपौरुषेयत्वनिश्चयात् प्राग् वेदो न किञ्चिदभिधत्ते इति पक्षः, तदाऽऽप्तो- 25 क्तत्वनिश्चयोत्तरकालं लोकवद् वेदेऽप्यपौरुषेयत्वनिश्चयात् पश्चादनुमानावतारः। इयांस्तु विशेषो—यदत्र पदार्थानेव पक्षीकृत्य निरस्तपुंदोषाशङ्कैराकाङ्क्षादिमद्भिः पदैः स्मारितत्वादाप्तोक्तपदकदम्बकस्मारितपदार्थवत् संसर्ग एवाहृत्य साध्यो बुद्धिव्यव-

हितस्त्वितरत्रेति फलतो न कश्चिद्विशेष—इति। तथा चान्विताभिधानेऽपि जघन्यत्वाद्वेदस्यानुवादकत्वप्रसङ्गः। न चैवं सति तत्र प्रमाणमस्ति। विशिष्टप्रतिपत्त्यन्यथानुपपत्त्या हि शब्दस्य तत्र शक्तिः परिकल्पनीया, सा चानुमानेनैवोपपन्नेति वृथा प्रयासः। तस्माल्लोके शब्दस्यानुवादकतेति विपरीतकल्पनेयमायुष्मताम्।

5 किं चदमन्विताभिधानं नाम ?। न तावदन्वितप्रतिपादनमात्रम्। अविवादात्। नापि स्वार्थाभिधायास्तत्र तात्पर्यम्। अविवादादेव। नापि सङ्गतिबलेन तत्प्रतिपादनं, वाक्यार्थस्यापूर्वत्वात्। नापि स्वार्थसङ्गतिबलेन, तस्य स्वार्थ एवोपक्षयात्। नापि सैव सङ्गतिरुभयप्रतिपादिका, प्रतीतिक्रमानुपपत्तेः। यौगपद्याभ्युपगमे तु योग्यत्वादिप्रतिसन्धानशून्यस्यापि पदार्थप्रत्ययवद् वाक्यार्थप्रत्ययप्रसङ्गात्। नापि सैव 10 सङ्गतिः स्वार्थे निरपेक्षा, वाक्यार्थे तु पदार्थप्रतिपादनाऽवान्तरव्यापारेति युक्तम्। तस्याः स्वयमकरणत्वात्। सङ्गतानि पदानि हि करणं, न तु सङ्गतिः। तथापि तत्प्रतिपादनानुगुणसङ्गतिशालीनि पदानीति चेत्। न तावद्वाक्यार्थप्रतिपादनानुगुणता सङ्गतेस्तदाश्रयत्वेन, सामान्यमात्रगोचरत्वात्। तद्धर्ममात्रगोचरत्वाद् वा। नापि तदनुगुणव्यापारवत्त्वेन, अकरणत्वादित्युक्तम्। तदनुगुणकरणव्यापारोत्थापकत्वा-15 त्तदनुगुणत्वेन नो विवादः।

अन्वित एव शक्तिरिति चेत्। उक्तमत्र वाक्यार्थस्यापूर्वत्वात् प्रतीतिक्रमानुपपत्तेश्चेति। स्मृतक्रियान्विते कारके स्मृतकारकान्वितायाञ्च क्रियायां सङ्गतिरतो नोक्तदोषावकाशः। नाऽपि पर्यायतापत्तिः, प्राधान्येन नियमात्। नापि पौनरुक्त्यं, विशेषाऽन्वये तात्पर्यात्। नापीतरेतराश्रयत्वम्, स्वार्थस्मृतावनपेक्षणात्। नापि 20 वाक्यभेदापत्तिः। परस्परपदार्थस्मृतिसन्निधौ तदितरानपेक्षणादिति चेत्। न। अन्विते सङ्गतिग्रह इति कोऽर्थः ? यदि यत्र सङ्गतिस्तद्वस्तुगत्या पादार्थान्वितं, न किञ्चित् प्रकृतोपयोगीति। नहि यत्र चक्षुषः सामर्थ्यमवगतं तद्वस्तुगत्या स्पर्शवदिति तद्वत्ताऽपि तस्य विषयः। अथान्विततयैव तत्र व्युत्पत्तिरित्यर्थः। तदसत्। प्रमाणाभावात्।

25 अन्वितार्थप्रतिपत्त्यन्यथानुपपत्तिरिति चेन्न। अनन्विताभिधानेनाप्युपपत्तेः। आकाङ्क्षाऽनुपपत्तिरस्तु, न हि सामान्यतोऽन्वितानवगमेऽन्वयविशेषे जिज्ञासा स्यात्। न। दृष्टे फलविशेषे रसविशेषजिज्ञासावदाक्षेपतोऽप्युपपत्तेः। शब्दमहिमानमन्तरेण यतः कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीतिः स्यात्। न चैवम्। ततः शब्दशक्तिरवश्यं कल्पनीयेति चेत्। कुतस्तर्हि कविकाव्यानि विलसन्ति। न हि 30 संसर्गविशेषमप्रतीत्य वाक्यरचना नाम। न च स्वोत्प्रेक्षायां प्रत्यक्षमनुमानं शब्दस्तदाभासा वा सम्भवन्ति, अन्यत्र चिन्तावशेन पदार्थस्मरणेभ्यः। असंसर्गाग्रहोऽसाविति चेत्। मम तावत् संसर्गग्रह एवासौ। तवाऽपि सैव पदावली क्वचिदन्वये पर्यवस्यति क्वचिदनन्वयाग्रहे इति कुतो विशेषात्। आप्तानाप्तवक्तृकतयेतिचेत्। किं तथाविधेन वक्त्रा तत्र कश्चिद्विशेष आहितः ? आहो वक्तैवावच्छेदकतया विशेषः ? प्रथमे अभिहितान्वयवादिनामिव तवापि शक्तिकल्पनागौरवम्। द्वितीये 35 तु वक्तुरिव पदानामप्यवच्छेदकतयैव विशेषकत्वमस्तु। एवं तर्हि पदानामप्यन्वय-

प्रतीतावस्त्युपयोगः। कः सन्देहः। परं पदार्थाभिधानेन, न त्वन्यथा। यथा तवैवाप्तस्य संसर्गपरतया पदसमभिव्याहारमात्रेण, न त्वन्यथा। अन्यथा तु गुरुमतविदामेव श्लोक आप्तपदप्रक्षेपेण पठनीयः—

प्राथम्यादभिधातृत्वात् तात्पर्योपगमादपि।
आप्तानामेव सा शक्तिर्वरमभ्युपगम्यताम्॥ इति॥　5

तस्मात् प्रकारान्तरेण संसर्गप्रत्ययो भवतु मा वा, पदार्थानामाकाङ्क्षादिमत्त्वे सति अभिहितानामवश्यमन्वय इति कुतोऽतिप्रसङ्गः।

न चैवं सति पदार्था एव करणं, तेषामनागतादिरूपतया कारकत्वाऽनुपपत्तौ तद्विशेषस्य करणत्वस्यायोगात्। तत्संसर्गे प्रमाणान्तरासंकीर्णोदाहरणाभावाच्च। पदानान्तु पूर्वभावनियमेन पदार्थस्मरणाऽवान्तरव्यापारवत्तया तदुपपत्तेः, व्यापार-　10
स्याव्यवधायकत्वादिति कृतं प्रसक्ताऽनुप्रसक्त्या॥ १५॥

आमोदः

निरासमिति ब्रूम इत्यनुषङ्गः। अपौरुषेयत्वनिर्णयो न वाक्यार्थप्रतीतावङ्गमित्याह—**तत् किमिति**। **सत्यादय** इति। वाक्यार्थप्रत्ययस्यानुभूयमानत्वेनापलापानर्हत्वादित्यर्थः। न त्वसंसर्गाग्रहमात्रं तत्रेत्याह—**न वेति**। संसर्गग्रहे बाधकाभावात् सामग्र्या स्वयैवोपपादितत्वादिति भावः।　15
अन्यथा प्रत्यक्षादावपि असंसर्गाग्रहादेव व्यवहारोपपत्तौ संसर्गग्रहः क्वापि न सिद्ध्येदित्याह—**तथापीति**। अन्वयग्रहोच्छेदात् प्रमाणाभावादन्वयस्यैवोच्छेद इत्युक्तमन्वयोच्छेद इति। **निमित्तान्तरादिति**। समर्थप्रवृत्तिजनकत्वादिलिङ्गादित्यर्थः। **अन्यथेति**। यद्यपौरुषेयत्वप्रतीतिः शाब्दान्वयबोधे हेतुस्तदेत्यर्थः।　20

तदेवाह—**व्यस्तेति**। अपौरुषेयत्वनिश्चयेन पुंदोषशङ्काया निरासादेते पदार्था मिथः संसर्गवन्तः व्यस्तपुंदूषणाशङ्कपदकदम्बस्मारितत्वादिति वेदेऽप्यनुमानस्यैव सम्भृतसामग्रीत्वादनुवादकमेव पर्यवसन्नमित्यर्थः। **तदिति**। अनुवादकमित्यर्थः। **कारिकार्थमाह—यदीति**। न किञ्चिदभिधत्ते नान्वयानुभावकः। **पश्चादिति**। उत्तरकालमित्यर्थः। ननु तथापि वक्तृज्ञाना-　25
वच्छेदकतया न संसर्गसिद्धिरित्यत आह—**इयानिति**। **बुद्धीति**। वक्तृज्ञानावच्छेदकतयेत्यर्थः। तथा च वाक्यार्थज्ञानस्यानुमानादेव सर्वत्रोत्पत्तेः शब्दो न मानान्तरमिति भावः। **इतरत्रेति**। लोक इत्यर्थः। **फलत इति**। लोके वेदे चानुमानादेव संसर्गसिद्धेरित्यर्थः। **जघन्यत्वादिति**। अनुमान-

प्रवृत्त्यनन्तरप्रवृत्तिकत्वादित्यर्थः। अनुवादकतेत्यापाततः वस्तुतस्तु शब्द-
प्रमाणमेव न सर्वत्रानुमानादेव संसर्गसिद्धेः। न चैवमिति। अनुमानादेवाव-
यवबोधोत्पत्तौ नान्विताभिधाने प्रमाणमस्तीत्यर्थः। तदेवाह—विशिष्टेति।
अन्वितप्रतिपत्तिरन्विताभिधाने प्रमाणं सा चानुमानाधीनैवेत्यर्थः।
5 विपरीतेति। लिङ्गस्यैव व्याप्तिस्मृतिविलम्बेनानुवादकताव्यवस्थापना-
दित्यर्थः। यद्वा, अन्विते शक्तिरिति विरुद्धलक्षणेत्यर्थः, अन्विताभिधानं
प्रसङ्गतो विकल्प्य दूषयति—किञ्चेति। अविवादादिति। मया पदाना-
मनुभावकत्वस्वीकारादित्यर्थः। नापीति। स्वार्थशक्तेरितरान्वितपदार्था-
नामनुभवतात्पर्यकत्वमप्युभयसिद्धमेवेत्यर्थः। नन्वन्वयांशेऽपि शक्तिरित्ये-
10 वान्विताभिधानम् इत्यत आह—नापीति। अन्वयांशस्यापूर्वतया तत्र
शक्त्यग्रहादित्यर्थः। स्वार्थशक्तिबलेनेत्यत्र वाक्यार्थप्रतिपादनमित्यनुषङ्गः।
तत्राविवादादिति दूषणे सत्येवाह—तस्येति। सङ्गतिबलस्य स्वार्थ-
स्मारकमित्यर्थः। ननु स्वार्थसङ्गतिरेवान्वयं पदार्थं वोपस्थापयतीत्येवा-
न्विताभिधानमित्याह—नापि सैवेति। ननु यौगपद्ये को दोष इत्यत आह—
15 यौगपद्येति। पदार्थोपस्थितौ योग्यताज्ञानमतन्त्रं, तथा वाक्यार्थोपस्थितावपि
स्यादित्यर्थः। नापीति। पदार्थप्रतिपादनावान्तरेत्युपलक्षणं, योग्यतादि-
ज्ञानसापेक्षेत्यपि द्रष्टव्यम्। तस्या इति। स्वतन्त्रेण तस्याः करणत्वे
शब्दाप्रामाण्यापत्तेरिति भावः। तदेवाह—सङ्गतानीति ननु न पदान्येव
करणं, किन्तु वाक्यार्थप्रतिपादनानुगुणसङ्गतिविशिष्टानीत्यायातान्वितेऽपि
20 शक्तिरित्याह—तथापीति। तदाश्रयत्वेनेति। वाक्यार्थाश्रयत्वेनेत्यर्थः।
तथा च क्वाद्ययांशेऽपि शक्तिरिति भावः। तर्हि किमाश्रया सङ्गतिरत
आह—सामन्येति। परमते हि ते जातिमात्रे। पदार्थर्थिवादिनः।
तद्वन्मात्रेति। स्वमतेनापीति। तदनुगुणेति। वाक्यार्थानुगुणेत्यर्थः।
पादार्थस्मरणं हि व्यापारः। स च पदार्थानां न सङ्गतेरिति भावः। ननु
25 पदानामपि पदार्थस्मरणं व्यापारो वाक्यार्थानुभवं प्रति सङ्गतिबलादेवेति,
कथं नान्वयेऽपि शक्तिरित्याह—तदनुगुणेति। एतादृशमन्वयाभिधानमस्म-
दभिमतमेवेत्यर्थः। ननु चान्वयविशिष्टे पदार्थे शक्तिरस्मदभिमतेति कुतो न
विवाद इत्याह—अन्वित एवेति। उक्तमिति। तत्र शक्तिग्रह एव न
सम्भवतीत्यर्थः। पदार्थस्मरणान्वयप्रतीत्योर्यौगपद्यमेवं स्यादित्याह—

**प्रतीतीति** । **उक्तदोषेति** । वाक्यार्थस्यापूर्वत्वान्न तत्र शक्तिग्रहो यौगपद्यञ्च प्रतीत्योः स्यादित्युक्तदोषौ न भवतः । अन्वयसामान्यज्ञानस्य पूर्वं जातत्वेऽपि विशेषग्रहो वाक्यादिति भावः । नन्वेवं घटशब्दानयनशब्दयोरेकार्थप्रतिपादकत्वात् पर्यायता स्यादित्यत आह—**नापीति** । कारकपदस्य प्राधान्येन कारकवाचकत्वं, क्रियापदस्य प्राधान्येन क्रियावाचकत्वमित्यर्थभेदान्न पर्यायितेत्यर्थः । ननु क्रियापदेनापि कारकमभिहितं कारकपदेनापीति पौनरुक्त्यमित्यत आह--नापीति । **विशेषेति**। विशेषप्रतिपत्तिमभिप्रेत्य विशेषदोपादानमतो न पौनरुक्त्यमित्यर्थः । ननु कारकपदेन कारकपदोपस्थितौ क्रियापदेन तदुपरक्तक्रियोपस्थितिः क्रियापदेन च क्रियोपस्थितौ कारकपदेन तदुपरक्तकारकोपस्थितिरित्यन्योन्याश्रय इत्यत आह—नापीति । स्मृतकारकपदमहिम्नैव क्रियोपरक्तकारकस्मृतिर्न तत्र क्रियापदापेक्षेति नान्योन्याश्रय इत्यर्थः । ननु कारकान्विता क्रिया, क्रियान्वितं च कारकमिति विशेषणविशेष्यभावभेदेन वाक्यभेद इत्यत आह—**नापीति** । वाक्यार्थयोः प्रत्येकं पर्यवसाने वाक्यभेदः, प्रकृते न तथा । नह्यत्रान्वयद्वयं किन्त्वेकमेव वाक्यार्थज्ञानमित्यर्थः । **तदितरानपेक्षणादिति** । वाक्यभेदे हि द्वितीयवाक्यार्थबोधे तदितरापेक्षणविलम्बः, प्रकृते तु न तथेत्यर्थः । **अन्वित इति** । यदन्वितं तत्र शक्तिरिति यदि तदा न विवादः । अथान्वयांशेऽपि शक्तिरिति तन्न, प्रमाणाभावादित्यर्थः । **तद्वत्तापीति** । स्पर्शवत्तापीत्यर्थः । न च व्यवहारादन्वित एव शक्तिरिति वाच्यम्, पदार्थमात्रशक्त्यैवान्वयबोधव्यवहारोपपत्तेः । **अन्वितेति** । पदार्थमात्रशक्त्यैवेत्यर्थः । **आकाङ्क्षेति** । जिज्ञासेत्यर्थः । जिज्ञासानुपपत्तिमेवाह—**न हीति** । **दृष्टे-रसविशेषेति** । दृष्टबीजपूरादाववश्यमत्र रसोऽस्ति, स किं मधुरस्तिक्तो वेति यथा जिज्ञासा, तदा घटमित्युक्ते क्रियान्वयस्तावदस्त्येव, सा चानयामि पश्यामि वेति जिज्ञासाविषय एवेत्यर्थः । **शब्दमहिमानमिति** । प्रकारान्तरोपस्थितिमादायापि चेदाकाङ्क्षा तदा पचतीत्युक्ते प्रत्यक्षाद्युपस्थितेन कलायादिनाप्यन्वयबोधः स्यात् । तथा च शब्दोपस्थापितक्रियाद्याकाङ्क्षयैवान्वयबोध इत्यन्विताभिधानमायातमित्यर्थः । **शब्दशक्ति-रिति** । अन्वयांश इति शेषः

अथ प्राभाकरमतेऽनुशयानो भट्ट आह—**कुतस्तर्हीति** । यदि प्रकरान्त-

रोपस्थितेन नान्वयबोधस्तदा रामो राजा बभूवेति कवीनां कथं संसर्गबोधो येन वाच्यनिष्पत्तिः स्यात्। तथा च चिन्तावशोपस्थिताः पदार्था एव संसर्गबोधे कारणमित्यर्थः। **स्वोत्प्रेक्षायामिति**। कवेः काव्यनिष्पादकसंसर्गबोध इत्यर्थः। **असंसर्गाग्रह इति**। वाक्यरचनाहेतुरिति शेषः।
5 **भट्ट आह—ममेति**। संसर्गग्रहे बाधकाभावादित्यर्थः। असंसर्गाग्रहमूलकपदावलीश्रवणमेव क्वचिदसंसर्गाग्रहप्रयोजकम् क्वचित्तु संसर्गग्रहप्रयोजकमित्यत्र किं नियामकमित्यर्थः। ननु तवापि कथं प्रत्यक्षोपस्थितं कलायमादाय नान्वयबोध इति चेत्, न। **शाब्दी ह्याकाङ्क्षेति** न्यायात्। शब्दोपस्थापितपदार्थान्वयबोधे शब्दोपस्थापितत्वस्यैव तन्त्रत्वात्। यत्र
10 च पश्यतः श्वेतमारूढमित्याह, तत्र प्रकारान्तरोपस्थिता एव पदार्था अन्वयबोधमापादयन्तीत्यर्थः। विनिगमकमाह—**गुरुः आप्तेति**। आप्तवाक्यं संसर्गज्ञानपूर्वकं संसर्गज्ञानहेतुः। अनाप्तवाक्यत्वसंसर्गाग्रहग्राहकमसंसर्गाग्रहहेतुरित्यर्थः। **कश्चिदतिशय इति**। स्ववाक्ये काचिच्छक्तिराहितेत्यर्थः। **अवच्छेदकतयेति**। आप्तोक्तमेव तन्त्रमित्यर्थः। **अभिहितान्वयवादिना-**
15 **मिवेति**। नैयायिकादीनां यथा पदार्थे शक्तिः, पदजन्यपदार्थोपस्थितेरेव तन्त्रत्वात्, तत्रान्वयधीहेत्वतिशयाधाने शक्तिर्वाक्यार्थधीशक्तिश्चेति गौरवम्, तथा तत्राप्याप्तोक्ते शक्त्यन्तरकल्पनमिति गौरवमित्यर्थः। **अवच्छेदकतयेति**। पदोपस्थापितत्वं तन्त्रमित्यर्थः। अयमभ्युपगमवादः। **एवं तर्हीति**। अवच्छेदकतया पदानामपि कारणकोटौ प्रवेशादित्यर्थः। **न त्वन्यथेति**।
20 पदार्थोपस्थान एव पदानामन्यथासिद्धत्वं न तु कारणत्वमपीत्यर्थः। **यथेति**। अन्यथावच्छेदकस्य कारणकोटिप्रवेशेन वाप्तानामपि कारणत्वप्रङ्ग इत्यर्थः। **अन्यथेति**। यद्यवच्छेदकेऽपि शक्तिरित्यर्थः।

**प्राथम्यादिति**। अवच्छेदकतया यथा पदानां प्रथमोपस्थितत्वं तथा त्वन्मते आप्तानामपीत्यर्थः। **अभिधातृत्वादिति**। यथा पदानामभिधायकत्वं
25 वाचकत्वं तथाप्तानामप्यभिधायकत्वं वक्तृत्वमित्यर्थः। **तात्पर्योपगमादिति**। यथा वाक्यार्थप्रतीतिप्रयोजनकत्वं तात्पर्यं पदानां तथाप्तानामपीत्यर्थः। **वरमिति**। स्वानभ्युपगमख्यापनाय पदार्थकरणत्वं भट्ट उपसंहरति—**तस्मादिति**। **प्रकारान्तरेणेति**। कविकाव्यस्थले संसर्गग्रहो वास्तु, असंसर्गग्रहो वा। वाक्यस्थले पदस्मारिताः पदार्था एव करणमित्यर्थः। अतिप्रसङ्ग

इति । प्रत्यक्षाद्युपस्थितैः कलायादिभिरित्यर्थः । तत्र पदोपस्थापितत्वा-
भावान्नातिप्रसङ्ग इति भावः । भट्टमुखेन प्रभाकरं निरस्य भट्टं निरस्यति—
नचेति । तत्संसर्ग इति । कविकाव्यस्थले तावदुत्पेक्षासहकृतं मन एव
संसर्गबोधहेतुः । व्यापाराभावाच्च नोत्प्रेक्षा मानान्तरमिति भावः । अन्यत्र
तु श्वेतरूपोऽयं धर्मी धावन्नश्वः खुरविक्षेपशब्दकारित्वे सति ह्रेषाकारित्वात् 5
परिदृष्टतथाश्ववदित्यनुमानादेव तथा संसर्गसिद्धिरित्यर्थः । नन्वनेक-
पदघटिते वाक्ये पदान्यप्यतीतान्येवेत्यत आह—पदानान्त्विति । स्मृति-
समारूढानि पदानि समूहालम्बनेनैकप्रत्येकपदस्मारिततत्तद्युक्तैरेकनाना-
पदार्थस्मृतिरूपव्यापारशालीनि करणमित्यर्थः । कृतमिति । शब्दप्रामाण्य-
प्रसङ्गागतमन्विताभिधाननिराकरणं तदनुप्रसक्तं च पदार्थकरणत्वनिराकरणं 10
तत्र च विस्तराभिधाने बहुगौरवं स्यादिति भावः ॥१५॥

बोधनी

स्यादेतदिति । शङ्कानिराकरणे अङ्गमित्यनुषङ्गः, तत् किमिति न श्रद्धेयः
प्रमाणत्वेनेति शेषः । सत्यादय इति । अर्थप्रत्ययस्यभावः शपथादिभाव्यः, सद्भाव एव
प्रतिपत्तृणां संसर्गव्यवहारदर्शनादवगम्यत इति भावः । व्यवहारस्यान्यथासिद्धिमाशङ्क्याह
न चेति । यदि बाधकाभावेऽपि असंसर्गाग्रह इति कल्प्येत तर्हि सर्वत्रापि तथात्वा- 15
पत्तेः संसर्गप्रत्यय एवोच्छिद्येत, तथा च शब्दप्रामाण्यमेव दत्तजलाञ्जलिः स्यादित्या-
शयवानाह तथापीति । भवन्नेवार्थप्रत्ययः केवलमश्रद्धेय इति पक्षे कथमियमश्रद्धा वेदे
निवर्त्तनीयेति पृच्छामः । यदि ब्रूयात् यथा प्रत्यक्षे बाधदर्शनादश्रद्धा निवर्त्तते तथैवा-
पौरुषेयत्वनिश्चयादिति, तर्हि लोकवाक्येऽपि पूर्वमेवार्थप्रत्ययो जायते तदश्रद्धा चाप्तोक्त-
त्वनिश्चयान्निवर्त्तत इत्यभ्युपगच्छेत्याह द्वितीये त्विति । 20

लोके पूर्वमर्थप्रत्ययानङ्गीकारे बाधकमाह अन्यथेति । यद्वा वेदेऽप्यपौरुषेयत्वनिश्च-
योत्तरकालमेवाभिधायकत्वे दोषमाह अन्यथेति । तदुच्यत इति । यथानुवादकत्वं वेदस्य
प्रसज्यते तथोच्यत इत्यर्थः । व्यस्तेति । अमी पदार्था मिथः संसर्गवन्तः निरस्तसमस्त-
दोषाशङ्कैः पदैः स्मारितत्वात् इत्यनुमानेन निर्णीते संसर्गे पश्चात्प्रवर्तमानस्य तदनुवादकत्वं
कुतो न स्यादिति । 25

यदा हीति । अपौरुषेयत्वनिश्चयेन दोषाभावे निश्चितेऽनुमानसामग्री
पूर्णेत्यनुमानादेव संसर्गसिद्धेर्वेदानुवाद एव स्यादिति किमविशेष एव सर्वथा लोकवेदयो-

रित्यत्राह **इयांस्त्विति**। वेदे वक्तुरभावात् पदर्थानेव पक्षीकृत्य तत्संसर्गः साध्यः, लोके तु वक्तृज्ञानविशेषणतयेत्येतावान्विशेषः। संसर्गस्यानुमानतः सिद्धिरित्यत्र फले तु न विशेष इति। **तथा चेति**। वेदेऽपि संसर्गस्यानुमानतः सिद्धावित्यर्थः। किञ्चैवमनुमानात्संसर्गसिद्धौ न तत्रान्विताभिधाने शब्दस्य प्रमाणमस्ति तत्प्रमाणस्यान्वितत्वेन प्रती-
5 तेरन्यथाप्युपपन्नत्वादित्याह **न चैवमिति**। वृथा प्रयासः। अन्विताभिधानकल्पन इति शेषः। तस्माल्लोक एव शब्दस्यानुवादकत्वमिच्छतो वेदस्याप्यनुवादकत्वमनिष्टं प्रसज्यत इति श्लोकार्थमुपसंहरति **तस्मादिति**। यद्वा लिङ्गेन निर्णीतेऽर्थे शब्दस्यानुवादकत्वं वदतो विलम्बितप्रवृत्तेर्लिङ्गस्यैवानुवादकत्वं न शब्दस्येति निर्णीतशक्तेर्वाक्याद्धीति, पूर्वश्लोकार्थोपसंहार इति।

10 एवमन्विताभिधानमङ्गीकृत्य लोकवेदयोस्तुल्यत्वमावेदितम्, इदानीं तदपि निराकुर्वन्नाह **किं चेदमिति**। **अविवादादिति**। अभिहितान्वयवादिनोऽप्यन्वितप्रतिपादनमात्रं संवदन्ति, तदभिधान एव हिते विवदन्त इति। **विवादादेवेति**। अन्वितप्रतिपादनोद्देशेन पदार्थानभिदधदति। पदानीत्यत्रापि नास्माकं विवाद इति। तद्यदि व्युत्पत्तिबलेनान्वितप्रतिपादनं तर्हि अनुभूतो वाक्यार्थो नावगम्येतेत्याह **नापि**
15 **संगतीति**। न च पदार्थविषयैव संगत्या वाक्यार्थप्रतिपादनं तस्याः पदार्थप्रतीतिमात्रोपक्षीणत्वादित्याह **नापि स्वार्थेति**। अर्थसंगतिरेव तत्रानुपक्षीणा वाक्यार्थेऽप्युपयुज्यत इत्युच्येत तर्हि पदार्थवाक्यार्थप्रतीत्योः पूर्वापरभावो न स्यादित्याह **नापि सैवेति**। अस्तु तर्हि यौगपद्यमित्यत्राह **यौगपद्येति**। अवगतपदार्थो हि तेषां योग्यतादिकं प्रतिसन्धातुं क्षमत इति। नन्वेकस्या एव संगतेः पदार्थवाक्यार्थप्रतीत्योः
20 क्रमेणैव हेतुत्वं काष्ठस्येव ज्वालापाकयोरित्यत्राह **नापि सैवेति**। करणानामेव ह्यवान्तरव्यापारापेक्षेति भावः। ननु तदनुवादकत्वं वदतो विलम्बितप्रवृत्तेर्लिङ्गस्यैवानुवादकत्वं संगतिमन्ति पदानि करणं तथापि वाक्यार्थानुगुणसंगतिभाञ्जि तानि तथा न तु केवलानि, ततश्च संगतिरपि करणशरीरानुप्रवेशिन्येवेत्याह **तथापीति**। **न तावदिति**। पदार्थविषयत्वेन संगतेस्त्वद्दृष्ट्या सामान्यमात्रविषयत्वादस्मद्दृष्ट्या तद्विशिष्टव्यक्ति-
25 मात्रविषयत्वाद्वा न तत्संसर्गात्मकवाक्यार्थप्रतिपादनानुगुणता संभवतीति पदार्थाश्रयत्वेऽपि संगतेर्वाक्यार्थप्रतिपादनानुगुणव्यापारवत्त्वेन तदानुगुण्यमस्तीत्यत्राह **नापि तदनुगुणेति**। उक्तं ह्येतत्संगतेरकरणत्वान्नावान्तरव्यापारयोगित्वमिति। नन्वस्तु पदानामेव करणत्वादवान्तरव्यापारः, स तु संगत्यधीन इति वाक्यार्थप्रत्ययानुगुणत्वं तस्या इत्यत्राह **तदनुगुणेति**। करणानां पदानां पदार्थप्रतिपादन-

लक्षणोऽवान्तरव्यापारः संगत्यधीन इत्यत्र नास्माकं विवाद इति। नन्वाकाङ्क्षादित्रयोपेतपदार्थान्तरान्वित एवार्थे संगतिरिति ब्रूमः, तत्रास्त्येव विवाद इत्याह **अन्वितेति**। विस्मरणमेवात्रापराध्यतीत्याह **उक्तमिति**। अथ संभावितसकलदोषपरिहारेण प्राभाकरः प्रत्यवतिष्ठते **स्मृतेति चेदि**त्यन्तेन। पदार्थान्तरस्मृतेन प्रतियोगिमात्रेण कारकेण क्रियया वाऽन्विते स्वार्थे क्रियायां कारके वा संगतिर्गृह्यते न तु विशेषान्विते, तथा च सर्वेष्वपि 5 वाक्येषु तथात्वाविशेषात् संगतिर्गृहीता स्यादिति, ततश्च न तावद्वाक्यार्थस्यापूर्वत्वदोषः पदार्थस्मृत्युत्तरकालभावित्वात्तदन्वयप्रतीतेः क्रमभावोऽपि संगच्छत इति तर्हि कारकपदस्य क्रियाप्यर्थः क्रियापदस्यापि कारकमिति तयोः पर्यायता स्यादित्यत्राह **नापीति**। ओदनमिति कारकपदमोदनत्वं निमित्तीकृत्य स्वेन रूपेणौदनमभिधत्ते, क्रियायां तु कदाचित् क्रियान्वितमिति कारकप्रतियोगित्वरूपेण तथा पचतिस्वरूपेण पाकमभिधत्ते—ओदनं तु 10 तत्प्रतियोगित्वमात्रेण, ततश्च स्वरूपाभिधानलक्षणस्य प्राधान्यस्य स्वार्थ एव नियतत्वान्न पर्यायतेति। यदि पदार्थस्यैवान्वितोऽर्थः तर्हि पदसंघातात्मनो वाक्यस्यापि स एवेति वाक्यार्थः पुनरुक्तः स्यादित्यत्राह **नापि पौनरुक्त्यमिति**। पदार्थविशेषविशिष्टेऽन्वये तात्पर्यं वाक्यस्य, न त्वेवं पदस्येति। यद्वा क्रियाकारकयोः पौनरुक्त्यमाशङ्क्य स्वार्थविशेषान्वयतात्पर्यभेदात्परिहारः। ननु क्रियाभिधाने सति तदन्वितं कारकमभिधेयं, कारकपदेन 15 तथा कारकाभिधाने सति तदन्वितक्रियाभिधेया क्रियापदेनेतीतरेतराश्रयत्वं स्यादित्याह **नापीति**। तथा स्यादयं दोषः यद्यभिहितेनार्थान्तरेणान्वितपदस्यार्थोऽत्राभिधीयते, न त्वेवं स्मारितेनान्वितस्याभिधानादन्वितस्यैव च स्मरणादिति। नन्वोदनं पचतीत्यत्र क्रियापदं कारकापेक्षं सत्समुच्चारितादन्येन तेमनादिनान्वितं स्वार्थमभिदध्यात्, एवमोदनमपि क्रियान्तरेणौदनमानयेत्यादिनान्वितमित्यर्थभेदाद्वाक्यभेदः स्यादित्यत्राह 20 **नापि वाक्यभेदेति**। सन्निधेरप्यन्वयहेतुत्वान्न सन्निहितमतिक्रम्यान्यदपेक्षत इति। यद्वा अन्विताभिधायीनि पदानि प्रत्येकं वाक्यानि भवेयुरित्याशङ्क्य यदि परस्परं स्मृतौ सन्निहितानामन्योन्याकाङ्क्षा न भवति तदा वाक्यभेदो भवेत्। यथाऽयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राजपुरुषयोर्यत्र तु स्मृतिसन्निहितानामन्योन्याकाङ्क्षाऽस्ति यथा राज्ञः पुरुषोऽपसार्यतामित्येतावन्मात्रोच्चारणे राजपुरुषयोस्तथैकवाक्यतेति परिहारः। अथ 25 सिद्धान्ती यावत्संभवं विकल्प्य दूषयति **नान्वित** इति। अन्वितमित्यत्रेतिशब्दो द्रष्टव्यः प्रकृतस्यान्विताभिधानस्य यत्र रूपवति तद्वत्ता स्पर्शवत्ता तस्य चक्षुषः अन्विते संगतिग्रह इत्यस्य प्रकृतोपयोगिनमर्थमाशङ्क्य प्रमाणाभावेन दूषयति **अथेति**।

नन्वस्ति प्रमाणमर्थापत्तिरित्याह **अन्वितेति**। **नेति**। आकाङ्क्षादिमत्पदार्थ-

प्रतिसन्धानादप्यन्वितप्रतीत्युपपत्तेरिति । ननु पचतीत्युक्ते किमोदनं तेमनं वेति कारकविशेषजिज्ञासा तावज्जायते, न चासावज्ञाते सामान्येऽवकल्प्यते तेन क्रियापदादेव कारकसामान्यान्वितां क्रियामयमज्ञासीदेवं कारकपदादेव क्रियासामान्यान्वितं कारकमित्यन्विते व्युत्पत्तिः कल्प्यत इत्याह **आकाङ्क्षेति** । **नेति** । क्रियाकारकयोरविना-
5 भावेनेतरेतरसामान्याक्षेपादपि विशेषजिज्ञासोपपद्यते, न हि चक्षुषा रूपेऽधिगते द्रव्ये रसविशेषजिज्ञासा भवन्ती रससामान्यस्य चाक्षुषत्वं कल्पयतीति । ननु यदि पदार्थमात्रपर्यवसितेषु पदेषु पदार्थेभ्य एवान्वयप्रतीतिः स्यात्तर्हि हेत्वन्तरप्रतीतेभ्योऽपि भवेन्न चैवमस्ति ततः पदान्येव यावदन्वयं गच्छन्तीत्याह **शब्देति** । अस्त्येव हेत्वन्तरप्रतीतेभ्योऽपि पदार्थेभ्योऽन्वयप्रतीतिरित्याह **कुतस्तर्हीति** । न ह्युत्प्रेक्षिते संसर्गे कर्त्तुः
10 प्रत्यक्षादीनि तदाभासा वा संभवन्ति । स्मृता एव पदार्थास्तत्र कारणम् । यथा चाहुः—

पश्यतः श्वेतमारूढं हेषाशब्दं च शृण्वतः ।
खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः ॥इति॥

**असंसर्गेति** । तेन न शब्दव्यभिचार इति । **मम** मे मतिः । तेन यतः कुतश्चिदपि स्मृतैरन्वयप्रतीतेर्नानिष्टप्रसङ्ग इति । न तवापि विशेषहेत्वभावेनायं विभागो युज्यत इत्याह
15 **तथापीति** विशेषहेतुमाह **आप्तेति** । विकल्प्य दूषयति **किमिति** । तथाविधेनाप्तेन वक्त्रा तेषु पदेष्वन्वयपर्यवसानानुगुणः कश्चिदतिशय आधीयते किमाप्तवक्तृत्वमेव वा तेषां विशेषः ? प्रथमे यथाभिहितान्वयवादिनां पदार्थप्रतिपादनानुगुणपदशक्तिव्यतिरेकेण पदप्रतिपादितानामेव पदार्थानां वाक्यार्थप्रत्यायनदर्शनात्तेष्वपि पदाभिधेया शक्तिरङ्गीकर्त्तव्येति गौरवमापद्यते तथा भवतोऽपि पदान्तरसाधारणशक्तिव्यतिरेकेणाप्तोक्तेषु
20 पदेष्वन्वयप्रतीत्यनुगुणस्याप्तेनाभिधीयमानस्यातिशयस्याभ्युपगमाद् गौरवम् । द्वितीये तु यथा तव वक्तुरवच्छेदकत्वेन पदविशेषकत्वं तथा ममापि पदानां पदार्थावच्छेदकत्वेनैव विशेषकत्वमस्तु न चातिशयाधानेनेति । यदि पदप्रतिपादितत्वविशेषेण पदार्था वाक्यार्थं गमयेयुः तर्हि नाभिमतान्वयसिद्धान्तसिद्धिरित्याशयेन पृच्छति **एवं तर्हीति** । गूढाभिसन्धिराह **कः सन्देहेति** । तर्ह्यन्विताभिधानमेवाङ्गीकृतं स्यादित्याशङ्क्याभिसन्धिमुद्घाट-
25 यन्नाह **परमिति** । अन्वयोद्देशेन पदार्थाभिधानेन पदानामुपयोगो न त्वन्विताभिधानेनेति । यद्याप्तानामन्वयप्रतीतावप्युपयोगः तदा शालिकानाथस्यायम्—

प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि ।
पदानामेव सा शक्तिर्वरमभ्युपगम्यताम् ॥

इति श्लोकः पदानामिति पदं प्रतिक्षिप्य तस्य स्थाने आप्तानामितिपदं प्रक्षिप्य

पठितव्य इत्याह **अन्यथा** त्विति । तथा पठति प्राथम्यादित्येतदुक्तं भवति । पदार्थेभ्यः पदानां प्राथम्यात्तेषामभिधातृत्वस्य च संप्रतिपन्नत्वादभिहितान्वयवादिभिरपि तेषां वाक्यार्थे तात्पर्यस्य चाभ्युपगमादन्वयप्रतीतिप्रतिपादने पदानामेव शक्तिरभ्युपगम्यतां न पदार्थानामिति हि श्लोकेन प्रतिपाद्यते । तत्र यदाप्तानां समभिव्याहारयोग्यपदोच्चारणव्यतिरेकेण पदेषु शक्त्याधानमप्यङ्गीक्रियते तदा पदेभ्य आप्तानामेव प्राथम्यादित्यादिहेतुभिः अन्वयप्रति- 5
पादने शक्तिरङ्गीक्रियतां न पदानामिति ।

तदेवं यतः कुतश्चिदपि प्रतीतेरन्वयप्रतीतिरस्त्येवेत्युक्तं, संप्रति नास्माकमत्र निर्बन्धः पदाभिहितानामन्वयप्रतीतिरित्येतावतैवास्मत्सिद्धान्तसिद्धेस्तत्र चातिप्रसङ्गाभावादित्युपसंहार-व्याजेनाह **तस्मादिति** । नन्वेवं वाक्यार्थबुद्धौ पदानामेव कारणत्वापत्तेः अशाब्दो वाक्यार्थः स्यादित्यत्राह **न चैवमिति** । पूर्वभावनियमो हि कारणत्वं, तत्कथं संसर्ग- 10
[१]प्रतीतानां पदार्थानां भवेत्, दूरे च कारणत्वविशेषः करणत्वमिति । न च शब्दादिप्रमाणव्यतिरेकेण पदार्थेभ्य एवान्वयप्रतीतिः क्वचिदपि दृश्यते येन पदार्थानामेव हेतुत्वं भवेदित्याह **प्रमाणान्तरेति** । पश्यतः श्वेतमित्यादौ तु व्याप्त्याद्य-नुसन्धानेनैव पदार्थैरन्वयप्रतीतिरित्यनुमानादित्वमेवेति भावः । पदानां तु करणत्वे न कश्चिद्दोष इत्याह **पदानां त्विति** । ननु तेषामपि पदार्थप्रतीतिव्यवधानेन न पूर्वभावो- 15
ऽस्तीत्यत उक्तम् **व्यापारस्येति** । यथाहुः—'पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्' इति ॥ १५ ॥

विवेकः

आप्तोक्तत्वं तन्निश्चयः अङ्गत्वम् वावच्छेदकम् । अनाप्तोक्ते **शङ्कते** । तज्ज्ञानम् क्वचिद्वेदे क्वचिदलौकिकानां स्वतः सिद्धानाप्तोक्तत्वज्ञानाभावे लौकिकवाक्यस्यापि प्रामाण्यमवर्जनीयम् । यदि च पौरुषेयत्वादिनिश्चयाधीन एव तन्निरासस्तथा तत्राह— 20
**तत्किमित्यादि** । **सत्यादय** इति । तत्र संसर्गप्रत्ययानुभवादिति भावः । तत्र शङ्कते—**न चेति** । अश्रद्धा भ्रमत्वज्ञानं तन्निमित्तान्तरात् स्वतःसिद्धकारणाभावादितोऽन्यथाऽ-पौरुषेयत्वनिश्चयादेव तन्निरासे । अयं भावः—अपौरुषेयत्वस्य प्रामाण्यव्याप्यतया निश्चय-दशायां तन्निरासकत्वमन्यथा वा अन्त्ये तत्त्वस्याप्रामाण्यव्याप्यनिश्चयदशायामपि तन्नि-रासकत्वप्रवृत्त्या आद्ये त्वाह—**अन्यथेति** । अनुमितिसामग्र्या बलवत्त्वात्तत्रानुमिते- 25

---

१ क संसर्गप्रत्ययपतितानामनागतानामिति पाठः

रेवोदयप्रसङ्ग इति भावः । अनुवादकत्वमित्युपलक्षणम् । ज्ञानजनकत्वमेव न स्यादित्यपि बोध्यम् ।

इतरत्र पौरुषेयत्वेन ज्ञाते तत्रानुवादकत्वे प्रसङ्गादभिहितान्वयवादं व्यवस्थापयितुमन्विताभिधानं प्रश्नपूर्वकं विकल्प्य निरस्यति—**किंचेत्यादि** । **अन्वितेति** । वस्तुतो 5 यदन्वितं तत्प्रतिपादनमात्रं । **नापीति** । इदं पदमितरान्वितं स्वार्थं प्रतिपादयतु एवम्भूतं यदुक्ततात्पर्यमुपयोग्यन्वयस्य तद्विषयत्वमित्यर्थः । **सङ्गतीति** । पदार्थवदन्वयस्यापि शक्तिविषयत्वमित्यर्थः । **वाक्यार्थस्येति** । तथा च न तत्र सङ्गतिग्रहसम्भव इति भावः । ननु पदार्थसङ्गतिग्रहस्यैवायं महिमा यत्पूर्वमपि वाक्यार्थमुपस्थापयति इति शङ्कते—**नापि स्वार्थेति** । तत्प्रतिपादनमित्यनुषज्यते । प्रतिपादनं स्मरणमनुभावनं वा 10 तदपीतरापेक्षमन्यथा वा । आद्ये—**तस्येति** । तस्य पदार्थसङ्गतिग्रहस्याननुभूते स्मरणासंभवादिति भावः । द्वितीयं शङ्कते । **नापि सैवेति** । प्रतीत्योः पदार्थस्मरणान्वयानुभवयोः क्रमः न स्यादित्यर्थः । इष्टापत्तावाह—**यौगपद्येति** । तथा च घटः कर्मत्वं वह्निना सिञ्चतीत्यादावपि अन्वयबोधः स्यादित्यर्थः । **पदार्थप्रतिसन्धानेति** । योग्यतादिज्ञानसहकार्यपेक्षेत्यपि बोध्यम् । तत्र सङ्गतिज्ञानमेव कारणं पदोपसर्जनीभूत- 15 तज्ज्ञानम्वा । आद्ये तस्या अपि पदानुरक्तताद्दशज्ञानसत्त्वेऽपि शाब्दबोधानुदयादिति भावः । तत्रानुभवं प्रमाणयति—**सङ्गतानीति** । द्वितीयं शङ्कते —**तथापीति** । पदानीत्यत्र कारणमित्यनुषज्यते तदाश्रयत्वेन वाक्यार्थविषयकत्वेन सामान्यमात्राश्रयत्वादिति **मीमांसकमते** । **तत्तदिति** । स्वमतेऽन्वयस्य अपूर्वत्वत्तत्र सङ्गतिज्ञानासंभवादित्युक्तत्वादिति भावः । **तदिति** । अन्वयानुभवानुगणो व्यापारः पदार्थस्मरणं तद्वत्त्वेन 20 उक्तजनकत्वेन तदनुगुणव्यापारकत्वेनेति पाठः सुगम एव । तत्र स्वातन्त्र्येण संगतिज्ञानमेव तथा पदोपसर्जनतया वा । आद्ये **अकरणत्वादिति** । द्वितीये त्वाह—**तदनुगुणेति** । **न नो इति** । अभिहितान्वयवाद एवान्वयमिति भावः । गूढाभिसन्धिः शङ्कते—**अन्वित एवेति** । आशयमविद्वान् इवाह—**उक्तानमिति** । आशयमुद्घाटयति । **स्मृतेति** । सामान्यतो नापूर्वत्वं शिष्टफलत्वमिति भावः ।

25 ननु क्रियाकारकान्वितशक्तत्वे द्वयोः पर्यायता न वा अभेदान्वयसम्भव इत्याशङ्कायामाह—**नापीति** । **प्राधान्येनेति** । क्रियापदं कारकान्वितक्रियाशक्तं कारकपदञ्च क्रियान्वितकारकशक्तमित्यर्थः । **पौनरुक्त्यमिति** । पदार्थोपस्थितिकाल एवान्वयस्योपस्थितित्वान्निराकाङ्क्षत्वमित्यर्थः । **विशेषेति** । समानाकारसिद्धेरेव निराकाङ्क्षत्वसम्पादकत्वादिति भावः । **नापीति** । कारकपदात् कारकोपस्थितौ तामपेक्ष्य क्रियापदं कारकान्वितां क्रिया-

मुपस्थापयेत्। क्रियापदात् तदुपस्थितौ च कारकपदं तदन्वितं स्वार्थमिति यः परस्पराश्रयः स नेत्यर्थः। स्मृतौ इतरान्वितस्वार्थस्मृतिजनने इतरपदजन्येतरस्मृत्यनपेक्षत्वादित्यर्थः। ननु क्रियाकारकपदे इतरान्वितस्वार्थविशेष्यकज्ञानजनके यदि, तदा विशेषणविशेष्यभावभेदेन वाक्यार्थयोर्भेदात् वाक्यभेदः स्यादित्याह—**नापीति**। **परस्परेति**। सामान्य इतरान्वितस्वार्थस्मृत्यनन्तरमाकाङ्क्षादिवशाद्यद्विशेष्यको यद्विशेषणकश्चान्वयबोधोऽनुभवसिद्धस्तद्विपरीतान्वयबोधानुकूलाकाङ्क्षादेस्तात्राभावे नानपेक्षणात् तदभावादिति यावत्। तथा च विशिष्टपदार्थोपस्थितेर्भिन्नरूपत्वेऽपि अन्वयानुभवस्यैकरूप्यान्न वाक्यभेद इति भावः। अन्विते शक्तिग्रह इत्यग्रहे विषयतया अन्वय इत्युपलक्षणम् विशेषणम्वा? आद्ये—**यदीति**। यत्र पदार्थे व्युत्पत्तिः सङ्गतिग्रहः। **न किंचिदिति**। नाभिहितान्वयवैलक्षण्यसम्पादनमित्यर्थः। तद्व्यत्यस्पर्श इति यावत्। तस्य चक्षुषः। द्वितीयं शङ्कते **अथेति**। प्रमाणाभावात्पदार्थमात्रशक्ततया ज्ञानादेवाकाङ्क्षादिवशादन्वयप्रतीत्युपपत्तौ तद्गोचरशक्तिज्ञानस्याप्रयोजकत्वादित्यर्थः। अनुपपत्तिरित्यस्य प्रमाणमिति शेषः। एवमग्रेऽपि। ननु तद्विषयकशाब्दबोधस्य तद्गोचरवृत्तिज्ञानजन्यत्वनियमात्तथात्वमिति चेन्न। तेन रूपेणान्वयबोधं प्रति तेन रूपेण तदधीनोपस्थितेरवश्यं वक्तव्यतया सामान्यतस्तथा हेतुत्वे मानाभावात्। किञ्च यत्संयोगेन समवायेन विशेषणतयैव वा इतरान्विते शक्तिग्रहस्तत्र सम्बन्धान्तरेण बोधो न स्यादन्वयत्वस्यैकस्याभावात्। भावे वा शक्तिग्रहेऽन्वयस्य संसर्गतयैव भानात्तस्याप्रयोजकत्वात् एवं संयोगादिव्यक्तिविशेषमादायापि व्यभिचारोऽनुसन्धेयः। आकाङ्क्षाजिज्ञासारूपा दृष्टे द्रव्ये यथा रसविशेषगोचरा जिज्ञासेत्यर्थः। ननु समभिव्याहृतपदार्थगोचरजिज्ञासाया एवाकाङ्क्षत्वेनाक्षेपाद्युपस्थितान्वयगोचरवशाच्छब्दबोधोपयोगिनी न स्यादित्याशङ्कते—**शब्दमहिमानमिति**। शङ्का चेयमर्थाध्याहारमतमनादृत्येति ध्येयम्।

अन्तरा गुरुमतमसहिष्णुर्भट्टः प्रत्यवतिष्ठते—**कुत इति**। स्वोत्प्रेक्षयाकाङ्क्षायां तादृशवाक्यार्थबोधे। प्रत्यक्षमित्यादौ इन्द्रियासन्निधानात् व्याप्त्यग्रहात्। पदादनुपस्थितेरित्यादायोऽनुसन्धेयाः। **पदार्थेति**। बहुवचनं नानास्थलमभिप्रेत्य स्मृतीनां युगपदनवस्थानात् करणत्वासंभवात्। **असौ** वाक्यरचनाहेतुः। **मम** व्यवस्थापितान्यथाख्यातेः संसर्गग्रह एव व्यवहारहेतुरिति। **तथापीति**। असंसर्गाग्रहस्यैव वाक्यरचनाहेतुत्वेनाप्तोक्तवदाप्तोक्तमपि वाक्यम् तादृगेव। तथा चानाप्तोक्तस्यापि संसर्गबोधकत्वे अन्यथाख्यात्यपत्तेः। आप्तोक्तत्वस्य वा विशिष्टबोधकत्वं स्यादिति विशिष्टप्रत्यायकवाक्यस्य विशिष्टधीपूर्वकत्वमवश्यं वाच्यम्। तथा च तदर्थमेव पदार्थाः करणमिति भावः। **आप्तेति**।

अत्रासद्संसर्गाग्रहवानाप्तो ध्येयः एव। स्वोक्ते पदसमूहे कश्चित् शाब्दबोधानुकूलोऽतिशयः शक्तिविशेषः आहितः जनितः। **वक्तैवेति**। आप्तोक्तपदत्वेन तद्धेतुत्वमित्यर्थः। **अभिहितेति**। पदेन स्वजन्यपदार्थोपस्थितौ शक्तिविशेषाधीनात्तज्जन्यैवोपस्थितिः शाब्दबोधजनिकेत्यभ्युपगमे यथा गौरवं त्वयोक्तं तत्तन्मतेऽप्यापतितमित्यर्थः। **द्वितीये त्विति**। तथा च
5 साधुशब्दाध्याहारनिराकरणमिति भावः। अस्त्युपयोगो भट्टनयेऽपि। **पदार्थाभिधान इति**। तथा च यत्र प्रकारान्तरेणैव पदार्थोपस्थितिस्तत्र किमर्थं पदापेक्षेति भावः। **पदसमभिव्याहारेति**। संसर्गप्रत्यायकपदज्ञाननिष्ठकारणतावच्छेदकतयेत्यर्थः। यद्यप्येतावता प्रकारान्तेणोपस्थितानां पदार्थानां शाब्दबोधविषयत्वं दुरुपपदमेत्र भट्टानां तथाप्यौत्प्रेक्षिकबोधे प्रकरान्तरासम्भवात् शाब्दबोधसामान्ये पदजन्यत्वमप्रयोजकम् अस्ति च तद-
10 वान्तरविशेषे शाब्दाद्याकाङ्क्षेति न्यायादिति भावः। **अन्यथेति**। **गुरुमतवादी हीति**। पदार्थकारणतावादं पदानामेवेति श्लोके प्रवेशेन दूषितवान्। पदार्थकरणतावाद्यपि आप्तानामेवेति पाठित्वा तद्दूषयेदित्यर्थः। प्राथम्यं कारणताग्रहे विशेषणतया प्रथमोपस्थितत्वं तच्च पदाप्तयोस्तुल्यम्। अभिधातृत्वं च पदपदार्थोपस्थित्यनुकूलशक्तिमत्त्वमाप्ते च पदोच्चारयितृत्वं तात्पर्यम्। पदे तादृशेच्छाविषयताविशेषः। आप्ते च तादृशेच्छावत्त्वम्।

15 भट्टः स्वमतमुपसंहरति **तस्मादिति**। कविकाव्यादिस्थले संसर्गानुभवः प्रकारान्तरेणोपनयादिवशात् भवतु मा वा प्रकारान्तरं विना शाब्दबोधो वा, मा वा असंसर्गाग्रहो वेति **प्रकाशः**। इदञ्चापाततो न विचारणीयमिति भावः। यत्र पदेनोपस्थापिताः पदार्थाः तत्रापि त एव करणम् न तु पदानि अवच्छेदकतयाऽन्यथासिद्धेरित्यर्थः। आकाङ्क्षादिमत्त्वमर्थानामेव धर्म इति नयेनेदमभिहितानां पदेनोपस्थितानाम्। **भट्टमतं**
20 दूषयति—**न चैवमिति**। ननु पदार्थानामकरणत्वे कथमौत्प्रेक्षिकं ज्ञानं कथम्वा श्वेतोऽश्वो धावतीति च धीरित्यत्राह—**तदिति**। अत्रोपनयसहकारेण प्रत्यक्षस्यानुमानस्य वा प्रमाणस्यैव संभवादित्यर्थः। ननु मास्तु पदार्थाः करणम् तज्ज्ञानं तु स्यादित्यत्राह—**पदानामिति**। व्यापारवत्तया पदज्ञानस्यैव करणत्वम्। न तदधीनार्थोपस्थितिव्यापारत्वादिति भावः। अव्यवधायकत्वात्। अन्यथासिद्धिसम्पादकत्वात्। यद्वा करणता-
25 घटकाव्यवधाननिर्वाहकत्वादित्यर्थः। तेनाव्यवहितपूर्वं तदसत्त्वेऽपि न क्षतिरिति भावः। **कृतमिति**। व्यर्थमित्यर्थकमव्ययम्। **प्रसक्तेति**। शब्दप्रमाणप्रस्तावप्रसक्तमन्विताभिधाननिराकरणम् तदर्थप्रसक्तमर्थकरणतानिराकरणम् ॥ १५ ॥

अस्तु तर्हि शब्द एव बाधकं सर्वज्ञे कर्त्तरि, तथा हि—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते ॥

इत्यादि पठन्ति। अस्यायमर्थः—न पारमार्थिकं चेतनस्य कर्तृत्वमस्ति, आभिमानिकं तु तत्। न च सर्वज्ञस्याऽभिमानो, न चासर्वज्ञस्य जगत्कर्त्तृत्वमस्ति। 5
उच्यते—

**न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता।**
**अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः ॥ १६ ॥**

यदि हि सर्वज्ञकर्त्रभावावेदकः शब्दो नाप्तोक्तः, न तर्हि प्रमाणम्। अथाप्तोऽस्य वक्ता, कथं न तदर्थदर्शी? अतीन्द्रियार्थदर्शीति चेत्। कथमसर्वज्ञः? कथं वा न 10 कर्त्ता? आगमस्यैव प्रणयनात्। न च नित्यागमसम्भवो विच्छेदादित्यावेदितम् ॥१६॥

आमोदः

**तर्हीति**। शब्दस्य स्वातन्त्र्येण प्रामाण्ये सतीत्यर्थः। **प्रकृतेरिति**। प्रकृतेरादिकारणस्य गुणैः सत्त्वरजस्तमोभिः क्रियमाणानि भूतभौतिकानि गोघटादीनि अहङ्कारेण बुद्धितत्त्वप्रथमविकारेण विमूढः आपादितमोहः आत्मा चेतनः कर्ताऽहमिति मन्यतेऽभिमन्यत इत्यर्थः। तथा च पारमार्थिकं कर्तृत्वं 15 प्रकृतेः, पुरुषस्य चितिशक्तेराभिमानिकमिति भावः। **न चेति**। दोषाभावादिति भावः। **जगदिति**। तावदुपादानगोचरापरोक्षज्ञानाभावादिति।

**न प्रामाण्यमिति**। अयमुपदर्शित आगम आप्तोक्तो न वा? अन्त्ये, न प्रमाणम्। आद्ये, प्रकृतवाक्यार्थगोचरसंसर्गयथार्थज्ञानवत्त्वमस्याभ्युपेयम्। अभ्युपेयतां, को दोष इत्यत आह—**अदृश्येति**। अदृश्यानि एतद्वाक्यप्रति- 20 पादितानि प्रकृतिपुरुषभूतानि यदि पश्यति नूनं सर्वज्ञ एवेत्यर्थः। नन्वयं नाप्तोक्तः, किन्तु नित्य इत्यत आह—**न चेति**। वाक्यत्वादिना पौरुषेयत्वसाधनात् सर्गप्रलयसाधनाच्चेति भावः ॥१६॥

बोधनी

अस्तु पृथक् प्रमाणं शब्दः, स एव तर्हि जगत्कर्तरि बाधकः स्यादित्याह **अस्त्विति**। कथमागमो जगत्कर्त्तारं बाधत इत्यत्राह **अस्यायमर्थ इति**। अस्तु तर्ह्याभिमानिकं कर्तृत्वम् 25 ईश्वरस्येत्यत्राह **न चेति**। अभिमानो नाम भ्रान्तिः, स कथं सर्वज्ञस्य स्याद्विशेषाग्रहणहेतुकत्वात्तस्या इति। अस्तु तर्ह्यसर्वज्ञ इत्यत्राह **न चासर्वज्ञस्येति**। **न प्रमाणमिति**।

न तावदनाप्तप्रणीतः शब्दो बाधकस्तस्याप्रमाणत्वात् । अथाप्तोक्तस्तर्हि तदर्थदर्शिना तेन भवितव्यं, यदि चातीन्द्रियमागमार्थं दृष्ट्वा तं प्रणयेत्स तर्हि सर्वज्ञः कर्त्ता च स्यात्, न च नित्य एवागमो बाधकः सर्गप्रलयसंभवेन तस्यापास्तत्वत्वादिति निगदव्याख्यातं व्याख्यानमिति ॥ १६ ॥

विवेकः

5 **प्रकृते**रित्यादिकारणस्य गुणैः सत्त्वादिभिः क्रियमाणानि कर्माणि भूतभौतिकानि अहंकारेण बुद्धितत्त्वप्रथमविकारेण मोहवानात्मा मूढबुद्धिस्तत्त्वप्रतिपत्तिरहितश्चेतनः मन्यते तादृशाभिमानवदगृहीतासंसर्गः तथा च कथमात्मत्वेनाभिमतस्य जगत्कर्तृत्वमित्यर्थः । नन्वाभिमानिकमेव जगत्कर्तृत्वमात्मनः स्यादित्यत्राह—**आभिमानिकमिति । न चेति ।** तस्य दोषाभावात् । जगन्निर्मातृत्वमनाहार्य्यस्तदभिमानः ।

10 बाधकत्वेनाभिमत आगम आप्तोक्तो न वा ? अन्त्ये न प्रमाणम् अनाप्तोक्तिः । अनाप्तोक्तं प्रमाणम् न, तथा च कथं तेन बाध इति भावः । आद्ये **नादृष्ट** इति ।

ननु भवतु तदर्थदर्शी कश्चित् नैतावता भगवत्सिद्धिरित्यत्राह—**अदृश्येति** । अतीन्द्रियदर्शित्वोपगम इत्यर्थः ।

ननु विनाप्याप्तं नित्यनिर्दोषत्वेनैवास्य प्रामाण्यं स्यादित्यत्राह—**न च**
15 **नित्येति** । क्षमः वक्तुं योग्यः । द्वितीयस्तवक एव दूषितत्वादिति भावः । अतदर्थदर्शी अतथादर्शी ॥ १६ ॥

अपि च—

**न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात् ॥**
**निरञ्जनावबोधार्थो न च सन्नपि तत्परः ॥ १७ ॥**

20 न ह्यसत्त्वपक्ष एवागमो नियतः । ईश्वरसद्भावस्यैव भूयःसु प्रदेशेषु प्रतिपादनात् । तथा चाग्रे दर्शयिष्यामः । तथा च सति क्वचिदसत्त्वप्रतिपादनमनेकान्तं न बाधकम् । सत्त्वप्रतिपादनमपि तर्हि न साधनमिति चेदापाततस्तावदेवमेतत् । यदा तु निःशेषविशेषगुणशून्यात्मस्वरूपप्रतिपादनार्थत्वमकर्तृकत्वागमानामवधारयिष्यते, तदा न तन्निषेधे तात्पर्यममीषामिति सत्त्वप्रतिपादकानामेवागमानां प्रामाण्यं भविष्यतीति । न च तेषामप्यन्यत्र तात्पर्यमिति वक्ष्यामः ॥ १७ ॥
25

आमोदः

नन्वागमप्रतिपादितोऽर्थः कथमन्यथाकर्त्तुं शक्यते इत्याह—न चेति। असावागमो वेद एकान्ततः कर्तृभावमेव नाभिधत्ते, किन्तु कर्तारमपि प्रतिपादयत्येवेत्यर्थः। ननु परस्परविरोधेनागमो न प्रमाणम् एवं तर्हीत्यत आह—निरञ्जनेति। अञ्जना धर्मान्तरवैशिष्ट्यं बोधयति, अतः सन्नप्ययमागमश्चेतनस्य कर्तृत्वाभावपरो न भवति इत्यर्थः। किन्तु 5 निरञ्जनत्वेन ध्येयतया बोधयतीति भावः। अग्र इति। **पञ्चमस्तवक** इत्यर्थः ॥१७॥

बोधनी

बाधकं शब्दमभ्युपगम्याप्याह **अपि चेति**। न चासावगमो जगत्कर्त्तुरसत्त्व एव नियतः सत्त्वस्यापि तेन प्रतिपादनोपलम्भात्, ततश्च तन्नियतत्वान्नानियतत्वात्तेनासत्त्वसिद्धिः, तर्हि तत एव सत्त्वमपि न सिध्येदित्यत उक्तम् **निरञ्जनेति**। चेतनस्याकर्तृत्वप्रतिपादक 10 आगमो विशेषगुणलक्षणाञ्जनरहितात्मस्वरूपप्रतिपादनार्थत्वेनान्यपरत्वान्नासत्त्वमावेदयति। तर्हि सत्त्वप्रतिपादकोऽप्यन्यपरः स्यादत उक्तं **न चासाविति**। सत्त्वावेदकस्य नान्यत्र तात्पर्यमिति पञ्चमे वक्ष्याम इति। **न हीत्यादिविवरणग्रन्थो** गतार्थः ॥ १७ ॥

विवेकः

दूषणान्तरमाह—**अपि चेति**। असौ आगमः क्वचित् शाखायां पुराणादौ वा। यद्वा क्वचिदनिर्वचनीयगुणगरिम्णि भगवति एकान्तो न असत्त्वमात्रवेदको। नन्वेवम् परस्पर- 15 विरोधेनागमानां प्रामाण्यमेव भज्येतेत्यत्राह—**निरञ्जनेति**। निरञ्जनत्वं निर्धर्मत्व मयबोधकत्वं ज्ञानात्मकत्वं बोधकः अप्यागमः। न तत्परः। न यथाश्रुतार्थकः किन्तु तद्रूपतया ध्येय इति तात्पर्यकः। नियामकः न्याय एवेति भावः। बहुप्रदेशेषु इत्यनेन अधिकरणत्वमाविष्कृतम्। अपातत इति। मया वेद एव साधकत्वेन नोच्यते त्वदभिमतन्तु बाधकम् बाधितमिति भावः। प्रतिपादनार्थत्वम् तेन रूपेण ध्येयत्व- 20 बोधनार्थकत्वम्। तेषाम् सत्त्वप्रतिपादकानाम् ॥ १७ ॥

अस्त्वर्थापत्तिस्तर्हि बाधिका, तथाहि—यद्यऽभविष्यन्नोपादेक्ष्यद्, न ह्यसावनुपदिश्य प्रवर्त्तयितुं न जानाति, अत उपदेश एवान्यथानुपपद्यमानस्तथाविधस्याभावमौदासीन्यं वाऽऽवेदयति । न । अन्यथैवोपपत्तेः ।

**हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा ॥**

5 **तदभावात् प्रवृत्तिर्नो कर्मवादेऽप्ययं विधिः ॥ १८ ॥**

बुद्धिपूर्वा हि प्रवृत्तिर्न बुद्धिमनुत्पाद्य शक्यसम्पादना, न च प्रकृते बुद्धिरप्युपदेशमन्तरेण शक्यसिद्धिः, तस्यैव तत्कारणत्वात् । भूतावेशन्यायेन प्रवर्त्तयेदिति चेत् । प्रवर्त्तयेदेव यदि तथा फलसिद्धिः स्यात् । न त्वेवम् । कुत एतदवसितम् ? उपदेशान्यथानुपपत्त्यैव । यस्यापि मते अदृष्टवशादेव भूतानां प्रवृत्तिस्तस्यापि
10 तुल्यमेतत् । यद्यस्ति प्रवृत्तिनिमित्तमदृष्टं, किमुपदेशेन । तत एव प्रवृत्तिसिद्धेः । न चेत्, तथापि किमुपदेशेन । तदभावे तस्मिन् सत्यप्यप्रवृत्तेः । नित्यः स्वतन्त्र उपदेशो न पर्यनुयोज्य इति चेत् । यूयं पर्यनुयोज्याः ? ये तमवधानतो धारयन्ति विचारयन्ति चेति ॥ १८ ॥

## आमोदः

यद्यभविष्यत् ईश्वर इति शेषः । न ह्यसाविति । असर्वज्ञत्वा-
15 पत्तेरिति भावः अर्थापत्तिं स्फुटयति—अत इति । अन्यथेति । ईश्वराभावमन्तरेणेत्यर्थः । औदासीन्यमिति । अनुपदेष्टृत्वमित्यर्थः । इमाममर्थापत्तिमाभासीकरोति नेति ।

तदेवाह—हेत्विति । उपदेशमन्तरेण प्रवृत्तिनिवृत्ती न स्यातामिति ईश्वरेणोपदेष्टव्यमवश्यमित्यर्थः । कुत एतदित्याह—हेत्वभाव इति । ननु
20 प्रवृत्तिरिष्टसाधनता प्रमासाध्या तत्र किमायातमत आह प्रमाणसामान्यसिद्धौ विशेषसिद्धिरावश्यिकीत्यर्थः । कर्मवाद इति । कर्मादृष्टम्, अदृष्टस्य प्रवर्त्तकत्वे किमुपदेशेनेति तुल्यमित्यर्थः । न चेति । यागादीष्टसाधनताबुद्धेः स्वर्गकामो यजेतेति उपदेशमात्रसाध्यत्वादित्यर्थः । भूतावेशेति । स्वयमधिष्ठाय परमनुष्ठापयत्वित्यर्थः प्रवर्त्तयेदेवेति । तावदनुष्ठानकाला-
25 पेक्षया उपदेशस्यैव लघुत्वादिति भावः । एतदिति । भूतावेशन्यायेन प्रवर्तने फलसिद्धिर्न भवतीत्येतदित्यर्थः । उपदेशेति । प्रकारान्तरेणोपपत्तिं पश्यन्नोपदिशेदित्यर्थः । कर्मवादेति । योजयति—यस्यापीति । नित्यत्व उपदेशस्य निरस्तमपि दोषान्तराभिधानाय शङ्कते—नित्य इति ।

यूयमिति । अदृष्टाधीनैव चेत् प्रवृत्तिस्तदा कथमुपदेशः प्रवृत्त्यर्थमाद्रियत इत्यर्थः ॥१८॥

बोधनी

अथार्थापत्तेर्बाधकत्वं निराचिकीर्षुः शङ्कते अर्थापत्तिस्तर्हीति । असौ सर्वज्ञः सर्वकर्त्ता वेदाननुपदिश्यैव ज्योतिष्टोमादौ पुरुषान् प्रवर्त्तयितुं कलञ्जभक्षणादिभ्यश्च निवर्त्तयितुं शक्नोत्येवेति तदर्थं तस्योपदेशो व्यर्थ इति । नान्यथेति । जगत्कर्त्तुः सत्त्व 5 एवोपदेशस्योपपत्तेः नासत्त्व इति । तदेवोपपादयन्नाह हेत्वभावात्र इति । न तावदसति हेतौ फलस्यासंभवादसत्युपदेशात्मके प्रमाणे ज्योतिष्टोमादेः स्वर्गादिसाधनत्वविषया प्रमा भवति, तदभावे च तत्रास्मदादीनां प्रवृत्तिः सिध्येदुपदेशश्च नोपदेष्टारं विनेति । ततस्तत्सिद्धिरितरथाऽयमनुयोगः प्रकारकर्मवशाद् भूतानां प्रवृत्तिरिति पक्षे सुलभः कर्मण एव प्रवृत्तिसिद्धेः किमुपदेशेनेति ॥ 10

बुद्धिपूर्वेति । न हीश्वरोऽपि वस्तुस्वभावातिक्रमेण प्रवर्त्तयतीति प्रकृते ज्योतिष्टोमादेः स्वर्गादिसाधनत्व इति । ननु यथा पिशाचादयः प्राणिन आविश्याबुद्धिपूर्वकमेव प्रवर्त्तयन्ति तथैवायं किमिति न प्रवर्त्तयेदित्याह भूतावेशेति । अबुद्धिपूर्वकत्वमनुतिष्ठतां फलाभावान्न तथा प्रवर्त्तयतीत्याह प्रवर्त्तयेदेवेति । अबुद्धिपूर्वानुष्ठाने फलाभाव आप्तोपदेशान्यथानुपपत्तेरेवावसेय इति । तुरीयं पादं व्याचष्टे यस्यापीति । तुल्यतामेवाह 15 यद्यस्तीति । न हि सत्यपि कारके ज्ञापकाभावेन कार्यं निवर्त्तत इति । तदभाव इति । न हि कारकाभावे ज्ञापकसंभवेन कार्यं भवतीति । नित्य इति । पर्यनुयोज्यस्तु कर्त्ता नास्तीति भावः । तथापि निरर्थकमिममुपदेशं धारयन्तः तदर्थं च विचारयन्तो यूयं मीमांसकाः पर्यनुयोज्या इत्याह यूयमिति ॥ १८ ॥

विवेकः

असौ ईश्वरः । आश्रयसिद्ध्यसिद्धिव्याघातमाशङ्क्याह—औदासीन्यमिति । 20 अस्मिन् कर्त्तृत्वमित्यर्थः । तथा च वेदकर्त्तृतया न तत्सिद्धिरिति भावः । अन्यथैव भवदुक्तसाध्यं विनैवोपपत्तेः ।

उपदेशस्य वेदार्थगोचरे प्रमाणेऽसति न प्रमा । तत्रानुकूलतर्कमाह—हेत्वभावे फलाभाव इति । तदभावात् प्रमाया अभावात् । न प्रवृत्तिः सम्वादिनी प्रमापदं निश्चयमात्रपरम् । पूर्वकाय एव तर्कः । विनापि ईश्वरं कर्मैव प्रवर्त्तयति इति वादेऽपि अयं विधि- 25 रुपदेशवैयर्थ्यसार्थक्यमुक्तयुक्त्यैव वाच्यम् । प्रकृते वेदार्थे शक्यसिद्धिः शक्योत्पादना

तस्यैवोपदेशस्यैव तत्कारणत्वादुपजीव्यत्वात् । यदि तदेति । स्वज्ञानचिकीर्षाद्यधीनकृति-जन्यानामेव कर्मणां फलजनकत्वादिति भावः । उपदेशे तथा कारणताबोधकवेदप्रामाण्या-न्यथानुपपत्तौ वेत्यर्थः । केचित्तु तदा भूतावेशन्यायेन फलसिद्धिः प्रवृत्तिसंभवः । एतत् तत् फलसिद्धिस्वरूपम् उपदेशेति । तदा उपदेशं न कुर्यादित्यर्थः इत्याहुः । प्रवृत्तिनिमित्तं
5 प्रवृत्तेः कारणम् । तत एव अदृष्टादेव । न चेददृष्टं तेन उपदेशेन तस्मिन् उपदेशेऽप्रवृत्तेः कार्यमात्रं प्रत्यदृष्टस्य निमित्तत्वादिति भावः । यूयमिति । प्रवृत्त्यर्थम् । तेषां कारणविचारादि किमर्थम् । तच्च भवद्भिः क्रियते प्रवृत्तौ तेषामनुपयोगादितिभावः ॥१८॥

न चार्थापत्तिरनुमानतो भिद्यते, लोके तदसंकीर्णोदाहरणाभावात्, प्रकारा-न्तराभावाच्च ।

10 तथा हि—

**अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ॥**
**न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥ १९ ॥**

जीवंश्चैत्रो गृहे नास्तीत्यनुपपद्यमानमसात वहिःसद्भावे तमापादयतीत्युदाह-रन्ति । तत्र चिन्त्यते—किमनुपपन्नं जीवतो गृहाभावस्येति, न ह्यनियम्यस्या-
15 नियामकं विना किञ्चिदनुपपन्नम् । अतिप्रसङ्गात् । ननु स्वरूपमेव तद् न ताव-द्बहिःसत्त्वेन कर्त्तव्यं, तदकार्यत्वात्तस्य, स्थितिरेवास्य तेन विना न स्यादि-त्यस्य स्वभाव इति चेत् । एवं तर्हि तन्नियतस्वभाव एवासौ व्याप्तेरेव व्यतिरे-कमुखनिरूप्यायास्तथा व्यपदेशात् । कथं वा बहिःसत्त्वमस्योपपादकम् ? । न हि अनियामको भवन्नप्यनियम्यमुपपादयति, अतिप्रसङ्गादेव । स्वभावोऽस्य यद-
20 नेन बहिःसत्त्वेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति चेत् । सेयं व्याप्तिरेवान्वय-मुखनिरूप्या तथा व्यपदिश्यते इति । न वयमविनाभावमर्थापत्तावपजानीमहे, किन्तु तज्ज्ञानम्, न चाऽसौ सत्तामात्रेण तदनुमानत्वमापादयतीति चेत् । न । अनुपपत्तिप्रतिसन्धानस्यावश्याभ्युपगन्तव्यत्वात् । अन्यथा त्वतिप्रसङ्गात्, अर्था-पत्त्याभासाऽनवकाशाच्च । यदा ह्यन्यथैवोपपन्नमन्यथाऽनुपपन्नमिति मन्यते
25 तदाऽस्य विपर्ययो, न त्वन्यथेति । तथापि कथमत्र व्याप्तिर्गृह्यतेति चेत् । यदाऽ-हमिह तदा नान्यत्र, यदाऽन्यत्र तदा नेहेति सर्वप्रत्यक्षसिद्धमेतत्, का तत्रापि कथन्ता ? । सर्वदेशाप्रत्यक्षत्वे तत्राभावो दुरवधारण इत्यपि नास्ति । तेषामेव संसर्गस्यात्मनि प्रतिषेधात् । अयोग्यानां प्रतिषेधे का वार्त्तेति चेत् । तदवयवानां तत्संसर्गप्रतिषेधादेवानुमानादन्येषां न काचित्, न ह्यकारणीभूतेन परमाणुना
30 नेदं संसृष्टमिति निश्चेतुं शक्यमिति । न चाऽविनाभावनिश्चयेनापि गमयन्नपक्षध-धर्मोऽर्थापत्तिरिति युक्तम् । पक्षधर्मताया अनिमित्तत्वप्रसङ्गात् । अविशेषात्, व्यधिकरणेनाविनाभावनिश्चयायोगाच्च—यद्व यत्र यदेति प्रकारानुपपत्तेः ।

प्रमाणयोर्विरोधे अर्थापत्तिरविरोधोपपादिका, न त्वेवमनुमानमित्यपि नास्ति। विरोधे हि रज्जुसर्पादिवदेकस्य बाध एव स्यान्न तूभयोः प्रामाण्यम्। प्रामाण्ये वा न विरोधः। स्थूलमिदमेकमितिवत् सहसंभवात्। चैत्रोऽयमयं तु मैत्र इतिवद्वा विषयभेदात्। प्रकृते क्वाप्यस्तीति सामान्यतो गेहस्यापि प्रवेशादेकविषयताऽप्य-स्तीति चेत्। यद्येवं क्वचिदस्ति क्वचिन्नास्तीतिवन्न विरोधः। अत्रापि विरोध एवेति चेद्, एकं तर्हि भज्येत। न भज्येत, अर्थापत्त्या उभयोरप्युपपादनादिति चेत्। किमनुपपद्यमानम्। विरोध एवान्यथानुपपद्यमानो विभिन्नविषयतया व्यवस्थाप-यतीति चेत्। अथाभिन्नविषयतयैव किं न व्यवस्थापयेत्?। व्यवस्थापनमवि-रोधापादनम्, एकविषयतयैव चानयोर्विरोधः, स कथं तयैव शमयितव्यः, न हि यो यद्विषमूर्च्छितः स तेनैवोत्थाप्यते इति चेत्। एकविषयतया अनयोर्विरोध इत्येतदेव कुतः? विभिन्नदेशस्वभावतयैव सर्वत्रोपलम्भादिति चेत्। नन्वियं व्याप्तिरेव। तथा च घट्टकुट्यां प्रभातमिति। धूमोऽपि वा अनुपपद्यमानतयैव वह्निं गमयेत्, न हि तेन विना असावुपपद्यते। विरोधोऽपि, धूमाद्वह्निना भवितव्यम्, अनुपलब्धेश्च न भवितव्यमिति। तथाचानुपलब्धेरर्वाग्भागव्यवस्थापनं, धूमस्य च व्यवधानेनानुपलभ्यवह्निविषयत्वस्थितिरर्थापत्तिरिति कुतोऽनुमानम्? वह्निमानय-मित्यनुमानं व्याप्तेः। अन्यथाऽनुमानाभावे विरोधासिद्धेः। अर्वाग्भागानुपलब्धि-विरोधेन परभागेऽस्य वह्निरित्यर्थापत्तिरेवेति चेन्न। व्याप्तिग्राहकेन प्रमाणेन विरो-धस्योक्तत्वात्। नाप्युत्तरार्थापत्तिः। अन्यथा पाण्डरत्वस्यापालालत्वविरोधेन पालालत्वस्थितिरप्यर्थापत्तिरेव स्यात्। तद्विशिष्टस्य तेनैव व्याप्तेर्नैवमिति चेत्। यद्येवमर्वाग्भागानुपलभ्यमानवह्नित्वेन विशिष्टस्य धूमस्य तेनैव व्याप्तेः कथमेवं भविष्यतीति तुल्यम्। केवलव्यतिरेक्यनुमानं पराभिमतमर्थापत्तिरन्वयाभावादिति चेत्। एवमेतावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः। तत्रानुमानव्य-वहारः कुत इति चेत्। अविनाभूतलिङ्गसमुत्पन्नत्वात्। साध्यधर्मेण विना ह्यभव-नमन्वयिन इव व्यतिरेकिणोऽप्यविशिष्टं, तन्निश्चयश्चाऽन्वयतिरेकाभ्यामन्यतरेण वेति। तस्मादर्थापत्तिरित्यनुमानस्य पर्यायोऽयं तद्विशेषवचनं वा पूर्ववदादिवदिति युक्तम्॥ १९॥

आमोदः

**लोक** इति। यदर्थापत्तावुदाहरणत्वेन प्रसिद्धं तदनुमानान्तर्गत-मेवेत्यर्थः। ननूदाहरणान्तरं भविष्यतीत्याह—**प्रकारान्तरेति**। फलव्या-पारयोर्वैजात्यं प्रमाणभेदकं, तच्च प्रकृते नास्तीति भावः।

**अनियम्यस्येति**।३।१९ अनियम्यस्याव्याप्यस्य **नायुक्तिर्नानुपपत्तिः**। **अनियन्ता** अव्यापको **नोपपादकः**। तथा च व्याप्येन व्यापकानुमान-मित्यर्थः। विरोधकरणिकायामर्थापत्तौ व्याप्यव्यापकभावस्फुरणं नास्तीति

मतान्तरमाशङ्क्य विरोधाभावेन प्रतिबन्द्या च दूषयति--न मानयोरिति। एतच्चाग्रे स्फुटीभविष्यति।

अतिप्रसङ्गादिति। एवं सति रासभं विना धूमोऽप्यनुपपन्नः स्यादित्यर्थः। ननु स्वरूपमेवेति। तेन विनाऽनुपपन्नमित्यनुषङ्गः। तन्नेति।
5 चैत्रस्वरूपमेव बहिःसत्त्वेन क्रियत इत्यसम्भवतीत्यर्थः। यद्वा, चैत्रस्य गृहाभावस्वरूपमेव बहिःसत्त्वेन क्रियत इत्यसम्भवतीत्यर्थः। स्थितिरेवास्येति। अस्य चैत्रस्य। गृहेऽसन्नयं यदि बहिरपि न स्यान्न स्यादेवेति। यद्वा, अस्य गृहनिष्ठचैत्राभावस्येत्यर्थः। तन्नियतेति। गृहनिष्ठाभावप्रतियोगी चैत्रो बहिःसत्त्वनियतस्वभावः। तथा च यदि चैत्रो बहिर्न स्यात् गृह-
10 निष्ठाभावप्रतियोगित्वे सति जीवी न स्यादिति व्यतिरेकव्याप्तेरेवेत्यर्थः। गृहासत्त्वस्य उपपादकत्वमुक्त्वा अन्वयव्याप्तिं व्यवस्थापयन् बहिःसत्त्वस्य उपपादकत्वमाह--कथमिति। क्रोडीकृत्येति। यत्र यत्र जीविगृहासत्त्वं तत्रावश्यं बहिःसत्त्वमिति व्याप्तिरावश्यकीत्यर्थः। तथा व्यपदिश्यत इति। उपपाद्योपपादकभावेनोच्यत इत्यर्थः। अज्ञाता व्याप्तिरर्थापत्तौ
15 तन्त्रमित्यनुमानादस्याभेद इत्याह--न वयमिति। अनुपपत्तिज्ञानमेव व्याप्तिज्ञानम्। तच्च त्वयाऽवश्यं मन्तव्यमित्याह--अनुपपत्तीति। अतिप्रसङ्गादिति। सर्वदैव कल्पनाप्रसङ्गादित्यर्थः। एवं हि स्वरूपसती यत्र व्याप्तिस्तत्रैव कल्पना स्यान्न तु व्याप्तिभ्रमेणापि येनार्थापत्त्याभासः स्यादित्यत आह--अथपित्त्येति। अन्यथैवेति। यत्र धूमेन रासभमनुप-
20 पत्तिभ्रमेण कल्पयति तत्रान्यथैवोपपन्नम्। अन्यथापीति। यत्र मृते देवदत्ते बहिःसत्त्वं कल्पयति तत्रान्यथाऽनुपन्नमित्यर्थः। कथमिति। गृहासत्वबहिःसत्त्वयोर्वैयधिकरण्यादित्यर्थः। स्वशरीरव्याप्तिग्रहमाह--यदेति। अधिकरणयोग्यतया तत्र तत्र स्वशरीरसंसर्गाभावः कथं प्रत्येतव्य इत्यत आह--सर्वदेशेति। तेषामेवेति। प्रतियोगिनां स्मृतानामात्मशरीरसंसर्गनिषेधा-
25 दित्यर्थः। ननु स्मृतस्यापि योग्यस्य प्रतियोगिनः संसर्गो निषिध्यते, न त्वयोग्यस्यापीत्याह--अयोग्यानामिति। तदवयवानामिति। योग्यप्रतियोग्यवयवानामित्यर्थः। अन्येषामिति। उदासीनपरमाण्वादीनामित्यर्थः। तत्संसर्गसम्भावनैव नास्तीति तत्संसर्गनिषेधाभावेऽपि न दोष इति भावः। ननु गृहाभावो हेतुर्गृहवृत्तिर्न देवदत्तवृत्तिदेवदत्तबहिःसत्त्वमपक्षधर्मतया नानु-

मातुमलमत आह--**न चेति**। देवदत्तो बहिः सन् जीवित्वे सति गृहनिष्ठा-भावप्रतियोगित्वादिति पक्षधर्मताऽस्त्येवेत्याह--**पक्षेति**। पक्षधर्मतां विनाऽर्थापत्तेरप्यनुपपत्तेरित्यर्थः। **अविशेषादिति**। अनुमानार्थापत्त्योरुभयो-रपि पक्षधर्मताया अविशेषादित्यर्थः। अविनाभावग्रहार्थं सामानाधिकरण्या-पेक्षायां पक्षधर्मताया अपि आवश्यकत्वं तदवृत्तेस्तत्राकल्पकत्वादिति 5 भावः। उपरि सवितेत्यादावपि भूमिः सन्निहितसवितृका आलोकवत्त्वा-दित्यादिना सामानाधिकरण्योपगमादिति भावः। यदि सामानाधिकरण्यं नोपेयं तदा यद् धूमवत्तद् वह्निमदित्यन्योन्याभावगर्भा, यत्र धूमस्तत्र वह्निरिति देशगर्भा, यदा धूमस्तदा वह्निरिति कालगर्भा च व्याप्तिः कथं गृह्येत इत्याह--**यत्रेति**। ननु जीवी क्वचिदस्ति गेहे च नास्तीति 10 प्रमाणयोर्विरोधज्ञानाद्बहिरस्तीति या कल्पना सा विरोधकारणिकार्थापत्ति-रस्तु। नह्यत्रानुपपत्तिज्ञानं तन्त्रम्, येन व्याप्तिज्ञानं स्यादित्यत आह--**प्रमाणयोरिति**। यद्येते प्रमाणे तदा न विरोधः, यदि तु विरोधस्तदान्यतरत् प्रमाणमित्याह--**विरोधे हीति**। अन्यथा वस्तु द्विरूपं स्यादिति भावः। नन्वत्र विषयभेदेऽपि चेत् प्रमाणयोः प्रवृत्तिस्तदा विरोध एवेत्यत आह-- 15 **प्रकृत इति**। **यद्येवमिति**। क्वचिदित्यनेन उभयत्रापि परस्परभिन्नस्यैव देशस्य विषयीकरणादित्यर्थः। **न विरोध इति**। वास्तवविरोधप्रतिसन्धाने सत्येवार्थापत्त्याऽविरोधेनोपपादनमित्यर्थः। तथाप्यर्थापत्तावनुपपद्यमानार्थ-ज्ञानमावश्यकमित्यभिप्रेत्याह--**किमिति**। एष विषयताप्रतिसन्धानाधीनो विरोधो भिन्नविषयतया व्यवस्थापना क्रियत इत्याह--**विरोध एवेति**। 20 गूढाभिसन्धिराह--**अथेति**। वास्तवो विरोधो यथा भिन्नविषयतया प्रति-सन्धानाधीनो दुष्परिहरः, तथा भिन्नविषयतयापीति भावः। अभिन्न-विषयतैव विरोधापादिका तत्कल्पना न तत्परीहारायेत्याशङ्कते--**व्य-वस्थापनमिति**। भिन्नविषयतया व्यवस्थापनमविरोधापादनं चेत्तदा वास्तवो मानयोर्विरोध एव नास्ति। क्वचिदस्ति इत्यस्य नेहातिरिक्तविषयमादाय 25 पर्यवसितत्वादिति दोषेऽसाववविरोधप्रतिसन्धानेऽपि व्याप्तिज्ञानमावश्यकमि-त्यत्राप्यनुमानप्रवेश एवेत्याशयेनाह--**एकेति**। घट्टकुट्यामित्यादि स्फुटम्। **प्रसिद्धे वाप्यसौ सम इति** कारिकाप्रतीकं व्याचष्टे **धूमोऽपीति**। अनुपपत्ति-करणिकायामर्थापत्तावमनुमानमन्तर्भाव्य विरोधकरणिकायामन्तर्भाव-

यति—विरोधोऽपीति। अर्वाग्भागावस्थापनमिति। वह्न्यभावस्येति शेषः। ननु पर्वते वह्निसंसर्गज्ञानमनुमितिः परभागावच्छेदेन पर्वते वह्निसंसर्गज्ञानं यत्र तत्र विरोधकरणिकार्थापत्तिरेव किं च यद्यनुमानं न प्रमाणं तदानुऽपलब्धेः प्रमाणस्य केन प्रमाणेन सह विरोधो
5 वक्तव्य इत्याशङ्कते—वह्निमानयमिति। अन्यथाऽनुमानाभाव इत्यादि यदुक्तं तत्तावत् परिहरति—व्याप्तीति। सामान्यलक्षणप्रत्यासत्त्या वह्निमत्तया प्रत्यक्षेण पर्वतस्यापि विषयीकरणादित्यर्थः। विरोधकरणिकामिह परिहरति—नापीति। अन्यथेति। यद्यपि वह्निमात्रे साध्ये पाण्डरत्वादिविशेषणत्वादाभासं पालालवह्नौ च साध्ये क्व विरोधकरणकत्वं,
10 तथापि प्रतीयमानपाण्डरत्वेन धूममात्रेण पालालत्वविशिष्टवह्निसिद्धिः स्यादिति भावः। तद्विशिष्टस्येति। पाण्डरत्वविशिष्टस्येत्यर्थः। तेनैवेति। पालालत्वविशिष्टवह्निनैवेत्यर्थः। तेनैवेति। परभागवर्तिवह्निनैवेत्यर्थः। अन्वयसहचार एव व्याप्तिग्राहको न तु व्यतिरेकसहचारोऽपीति केवलव्यतिरेक्यनुमानमेव न भवति किन्त्वर्थापत्तिः स इत्याह—केवलेति। कुत
15 इति। साध्याप्रसिद्ध्या पक्षधर्मतोपनयनवैयर्थ्याद्यनुमानवैधर्म्यादित्यर्थः। साध्यधर्मेणेति। अविनाभाव उभयत्रापि तुल्यः। स च क्वचिद् अन्वयमात्रादनौपाधिकात्, क्वचिदन्वयव्यतिरेकाभ्यां, क्वचिच्च व्यतिरेकमात्रादेव गृह्यत इत्यर्थः। उपसंहरति—तस्मादिति। तद्विशेषवचनमिति। अनुमानविशेषवचनं, केवलव्यतिरेकवचनमिति यावत्। पूर्ववदादीति। यथा
20 पारमर्षं सूत्रं "पूर्ववत् शेषवत् सामान्यतोदृष्टश्चेति" (न्या.सू.१.१.५) विशेषाभिधानमित्यर्थः। चिन्तितमिति। योग्यादृष्टिः कुतोऽयोग्ये (न्या.कु.३.१) इत्यादिनेत्यर्थः ॥१९॥

### बोधनी

तदेवमर्थापत्तेः पृथक्प्रमाणत्वमङ्गीकृत्य बाधकत्वं निरस्तम्, इदानीमनुमानान्तर्भावात्तन्निरासेनैव निरस्तमित्याह न चेति। अनुमानागोचरस्य प्रमेयस्याभावात् सामग्री-
25 भेदाभावाच्च ततो न भिद्यत इति। ननु व्याप्याद्व्यापकज्ञानमनुमानम्, अर्थापत्तिस्त्वनुपपद्यमानादुपपादककल्पना, ततः सामग्रीतो विषयतश्च भेद इत्याशङ्क्याह तथा हीति। यद्धि येन नियम्यते तस्य तेन विनानुपपत्तिर्नान्यस्य, तथा येन यन्नियम्यते तदेव तस्योपपादकं

नान्यत्, नियमश्च व्याप्तिरेव। ततश्चानुपपद्यमानोपपादकत्वाभ्यां व्याप्यव्यापकभाव एवाभिहितः स्यात्। अथ प्रमाणद्वयविरोधे सत्यविरोधापादनमर्थापत्तिरिति चेत्, मैवं व्याहतं भाषिष्ठाः। न हि विरोधिनोर्द्वयोरपि प्रामाण्यं संभवति रज्जुसर्पज्ञानयोरिवान्यतरस्य मिथ्यात्वावश्यम्भावात्, प्रमाणयोश्च सतोर्विरोध एव नास्ति स्थूलः शुक्ल इति वद् द्वयो समावेशसंभवात्। तस्माज्जीवतो गृहाभावात् बहिर्भावकल्पनमनुमानमेव व्याप्तिबलेन 5
जायमानत्वादन्यथानुमानतया प्रसिद्धेर्धूमादावपि असावनुपपत्तिः प्रमाणद्वयविरोधश्च सम इति तदपि प्रमाणान्तरमापद्येतेति व्याचष्टे **जीवंश्चैत्र** इति। किमनुपपन्नं न किञ्चिदिति। तदेवाह **न हीति**। **नन्विति**। गृहाभावस्वरूपमेव बहिर्भावेन विनानुपपन्नमिति। **तन्न तावदिति**। तत्स्वरूपमुत्पत्तौ तावन्न तेन विनानुपपन्नमिति। नन्वस्य गृहाभावस्य स्थितिस्तेन बहिर्भावेन विना नोपपद्यत इत्याह **स्थितिरेवेति**। हन्तैवं गृहाभावस्तेन 10
बहिर्भावेन नियतस्वभाव इत्युक्तं स्यादित्याह **एवं तर्हीति**। कुत इत्यत्राह **व्याप्तेरेवेति**। साध्येन विना नैव भवितव्यं साधनेनेति हि व्यतिरेकव्याप्तेर्व्यपदेश इति। द्वितीयं पादं व्याचष्टे **कथं वेति**। नन्वयं स्वभावोऽस्य बहिःसत्त्वस्य यदनेन गेहासत्त्वं क्रोडीकृत्य स्थातव्यमिति, सत्येव बहिःसत्त्वे गेहासत्त्वमिति यावत्, तदेतदाह **एवमिति**। तर्हीयं साध्येन सहैव साधनेन भवितव्यमित्यन्वयव्याप्तिरेवोक्ता भवेदित्याह **सेयमिति**। 15
**न वयमिति**। ज्ञातस्यैवाविनाभावस्यानुमानसामग्रीत्वादिति भावः। **नेति**। अनुपपत्तिश्चाविनाभाव एवेत्युक्तमिति भावः। **अर्थापत्त्याभासेति**। ज्ञानस्य हि हेतुत्वे तद्दोषाद्विपर्ययः संभवतीति[१]। गृहाभावबहिर्भावयोर्व्यधिकरणत्वाद्दुर्ग्रहा व्याप्तिरित्याशयेन पृच्छति **तथापीति**। क्वचित्सत्त्वस्य ततोऽन्यत्रासत्त्वेन क्वचिच्चासत्त्वस्य ततोऽन्यत्र सत्त्वेन व्याप्तेः सर्वेषां स्वात्मन्येवैकस्मिंश्च धर्मिणि सुग्रहत्वेन न काचिदत्र कथन्तेत्याह **यदाहमिति**। 20
ननु कथमेकत्र स्थितेन ततोऽन्यत्र स्वात्मनोऽभावः शक्यावगमः तेषां देशानामेवाप्रत्यक्षत्वेन योग्यानुपलम्भाभावादित्यशङ्क्याह **सर्वदेशेति**। न हि तेषु स्वात्मनो निषेधः किन्तु स्वात्मनि तेषां संसर्गस्य निषेधः। स्वात्मा च प्रत्यक्ष एव, प्रतियोगिनश्च ते स्मरणमात्रेणोपयुज्यन्ते न प्रत्यक्षत्वेनेति। स्वात्मनि वा कथमयोग्यानां प्रतिषेध इत्याह **अयोग्यानामिति**। तत्रायोग्याः परमाण्वादयो द्विविधाः आरब्धस्थूलकार्यावयवभूताः केवलाश्च। तत्र 25
पूर्वेषां स्वात्मनि निषेधः तदारब्धस्थूलावयविसंसर्गनिषेधादनुमानत एव सुकरस्तदसंसर्गस्य तदवयवासंसर्गेण व्याप्तेः, उत्तरेषां तु संसर्गनिषेधे न काचिद्वार्त्ता प्रमाणाभावेनाशक्य-

१ क. अन्यथा यत्रानुपपत्तेः सत्ता ततः सम्यगेव प्रत्ययः इतस्तत्र नाभासमपीति न कदाचित् विपर्ययः संभवतीत्यधिकः पाठो लभ्यते।

त्वादित्याह **तदवयवानामिति** । अस्त्येवाविनाभावनिश्चयोऽप्यङ्गमर्थापत्तेः, तथापि नानुमानत्वं पक्षधर्मत्वाभावादित्यत्राह **न चाविनाभावेति** । एवं ह्यनुमानेऽपि पक्षधर्मत्वं निमित्तं न स्यात् व्यधिकरणेनापि साधनेन साध्यसिद्ध्युपपत्तेरिति । न च व्यधिकरणेन साध्येनाविनाभावः शक्यनिश्चयः, यत्साधनं यत्र देशे यदा यस्मिन् कालेऽस्ति तत्र तदा
5 वा तत्साध्यमिति देशतः कालतो वा सामानाधिकरण्येनैवाविनाभावस्य निरूपणीयत्वादित्याह **व्यधिकरणेनेति** । अत्रापि हि देवदत्तं पक्षीकृत्य तस्य बहिःसत्त्वं गृहासत्त्वेन साध्यत इति पक्षधर्मत्वोपपत्तिरिति भावः ।

तृतीयं पादं व्याचष्टे **प्रमाणयोरिति** । ननु प्रकृतोदाहरणे जीवनग्राहकस्य गणितानुमानस्य क्वाप्यस्तीति सामान्यतः प्रवृत्तत्वेन सामान्यानुप्रवेशिनो गेहस्यापि क्रोडीकरणा-
10 दभावप्रमाणेन सहैकविषयताप्यस्तीत्याह **प्रकृत** इति । एवं तर्हि भिन्नसामान्यविशेषविषयतया न विरोध इत्याह **यद्येवमिति** । नन्वत्राप्यनिर्धारितदेशविषयोरस्तित्वनास्तित्वप्रमाणयोः एकस्य विषयेऽन्यस्यानुप्रवेशादस्त्येव विरोध इत्याह **अत्रापीति** । यद्यत्रापि विरोध एव तर्ह्यन्यतरद् बाध्येतेत्याह **एकमिति** । नन्वर्थापत्त्या भिन्नविषयत्वेन व्यवस्थापनान्नैकस्यापि भङ्ग इत्याह **न भज्येतेति** । सिद्धान्ती गूढाशयः पृच्छति **किमनुप-**
15 **पद्यमानमिति** । येनार्थापत्तिः प्रवर्त्तेतेति पूर्वपक्ष्याह **विरोध एवेति** । व्यवस्थापयति **प्रमाणद्वयमिति** । आशयमुद्घाटयन्नेव पुनः पृच्छति **अथेति** । अज्ञातपराशय एवेतर आह **व्यवस्थापनमिति** । ततः किमित्यत आह **एकविषयतयेति** । ततोऽपि किमित्याह **स कथमिति** । विषान्तरमूर्च्छितो विषान्तरेणैवोत्थाप्यो भवति न तु तेनैवेतदुक्तं **यद्विशेषेति** । आशयमाविष्कर्तुं पुनरपि पृच्छति **एकविषयतयेति** । पूर्वपक्ष्याह
20 **विभिन्नेति** । सिद्धान्ती स्वाशयमाविष्करोति **नन्वियमिति** । अयमस्तित्वनास्तित्वप्रमाणयोर्भिन्नदेशसंबन्धित्वस्वभावो व्याप्तिरेव स्वभावप्रतिबन्धलक्षणाद् व्याप्तेस्तथा चानुमानत्वप्रसङ्गभयाद् व्याप्तिं परिहर्त्तुं प्रवृत्तेन सैव स्वीकृता स्यात्, तथा च घट्टकुटीप्रभातम् । **घट्टकुटी नाम** शौल्किकशाला । यथा हि शौल्किकेभ्यो बिभ्यतो रात्रावेव शुल्कशालातिक्रमितव्येति गच्छतः पान्थस्य तस्यामेव प्रभाता शर्वरी तथेदमपीति ।
25 तुरीयं पादं व्याचष्टे **धूमोऽपि वेति** । यदि सतोरपि व्याप्तिपक्षधर्मत्वयोरनुपपद्यमानतया गृहाभावो बहिर्भावं गमयेत्ततोऽनुमानत्वोच्छेद इति । न केवलमनुपपत्तिः प्रमाणद्वयविरोधोऽपि तत्र वक्तुं शक्यत इत्याह **विरोधोऽपीति** । सति धूमे वह्निना भवितव्यमिति वह्नेः सत्तामेकं प्रमाणं गमयति, अनुपलब्धिश्चासत्तां प्रमाणस्य व्यवहितदेशवह्निविषयत्वव्यवस्थापनमर्थापत्तिरेव स्यादिति । ननु चैवमनुमानोच्छेदः धूमाद्वह्निना भवितव्यमित्यस्या-

नुमानत्वात्तस्य त्वनुपलब्धिविरोधपरिहाराय पर्वतापरभागावस्थापनमर्थापत्तिरिष्टैवेत्याह **वह्निमानयमिति** । **नेति** । न वयमिदानीं तेन धूमज्ञानजन्मना वह्निज्ञानेनानुपलब्धिविरोधं ब्रूमः येनानुमानमास्पदं लभेत, किं तर्हि ? पूर्वकालीनेन यत्र यत्र धूमस्तत्र तत्राग्निरस्तीति व्याप्तिग्राहकप्रमाणेनेदानीमनुसन्धीयमानेन, अतो न प्रमाणद्वयविरोधसिध्यर्थमनुमानाङ्गीकार इति, परभागावस्थापनं च नार्थापत्तिरित्याह **नापीति** । यदि तु 5
विरुद्धयोर्विषयव्यवस्थापनमेवार्थापत्तिः स्यात् ततः पाण्डरधूमस्य पालालाग्निना व्याप्तत्वेनापालालत्वविरोधात् पालालत्वंव्यवस्थापनमर्थापत्तिः स्यादित्याह **अन्यथेति** । ननु पाण्डरत्वविशिष्टस्य पालालत्वेन व्याप्तिर्भवन्ती पालालत्वव्यवस्थितिर्नार्थापत्तिरित्याह **तद्विशिष्टस्येति** । तर्हि विशिष्टस्य धूमस्य वह्निना परभागवर्तिना व्याप्तिर्भवन्ती परभागव्यवस्थितिर्वा कथमर्थापत्तिः स्यादित्याह **यद्येवमिति** । ननु यत्केवलव्यतिरेक्यनुमानत्वेन 10
नैयायिकानामभिमतं तदेवास्माकमर्थापत्तिरन्वयव्याप्त्यभावेन तस्यानुमानत्वायोगात् इत्याह **केवलव्यतिरेकीति** । अस्त्वन्वयो नास्तीत्येतावता विशेषणार्थापत्तिव्यवहारः, न तावताऽनुमानत्वहानिरित्याह **एवमति** । तत्र केवलव्यतिरेकिणि असत्येवान्वये किंनिबन्धनमनुमानत्वमित्याशङ्क्याह **अविनाभूतेति** । अविनाभावेन तन्निश्चयेन च मामकं ह्यनुमानं केवलव्यतिरेकिणि चाविनाभावस्तन्निश्चयश्चास्तीत्यनुमानमेव, केवलमेतावान् विशेषः 15
अन्वयव्यतिरेकिणि लिङ्गेऽन्वयव्यतिरेकाभ्यामविनाभावो निश्चीयते, नत्वन्वयिन्यन्वयेनैव व्यतिरेकिणि व्यतिरेकेणैवेति अर्थापत्तेरनुमानान्तर्भावमुपसंहरति **तस्मादिति** ॥१९॥

विवेकः

**नचेति** । तथा च कथमनुमानबाध्यबाधकत्वमिति भावः । **तदिति** । अनुमितिसामग्र्यव्यभिचारादिति भावः । ननु सत्यामप्यनुमितिसामग्र्यां नानुमिनोमि, अपि तु अर्थापयामीत्यनुभवात् सिद्धे फलवैजात्ये प्रमाणान्तरसमाहारवत् अनुमित्यनुत्पादः 20
कल्पनीय इत्यत आह—**प्रकारान्तरेति** । अनुमितित्वव्यधिकरणफलवैजात्याभावात् । तथा च तादृशो नास्त्येवेति भावः । **केचित्तु** लोके प्रसिद्धानि यान्यर्थापत्त्युदाहरणानि तानि अनुमितिसामग्र्यसंकीर्णानि तत्राप्रसिद्धान्युदाहरणानि तथा भविष्यन्तीत्यत आह—**प्रकारान्तरेति** । तथोदाहरणं नास्त्येवेत्यर्थः इत्याहुः ।

अनियम्यस्य अव्याप्यस्य अव्यापकं विना नानुपपत्तिरपि तु व्याप्यस्यैव व्यापकं विना 25
तथा च व्याप्यपरामर्शात् अनुमितिरेव स्यादिति भावः । व्यापकताज्ञानस्यानुमितिजनकतामतमाश्रित्याह—**नानियन्तेति** । तथा च व्यापकताज्ञानादेव स्यादिति भावः । प्रमाणयो-

विरोधज्ञानकरणिकामर्थापत्तिमपवदति—न सानयोरिति । विरोधिविषयकयोरन्यतरत्रा-
प्रामाण्यनियमादिति भावः । प्रतिवन्दिमाह—प्रसिद्ध इति । धूमलिङ्गकवह्न्यनु-
मितेरप्यर्थापत्तिः स्यादित्यर्थः । तं वह्निःसंभावमुपपादयति कल्पयति । अतिप्रसङ्गा-
दिति । विनापि रासभं धूमस्यानुपपत्तिप्रसिद्धादित्यर्थः । स्वरूपमेवेत्यत्र जीवतो
5 गृहाभावस्येत्यनुषज्यते । तत्स्वरूपं तदकार्यत्वादिति । अत्यन्ताभावस्य अकार्यत्वादेव
ध्वंसादेस्तदकार्यत्वात् ।

अत्यन्ताभावेऽपि वा तत्रास्य गृहाभावस्य । तथा व्यपदेशात् तेन विना तदनुपपन्न-
मिति व्यपदेशात् ।

ननु व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यानुमितिहेतुत्वे तद् विना व्यतिरेकव्याप्तिग्रहा-
10 धीनार्थापत्तिरेव स्यादित्यनुशयेनाह—कथञ्चेति । तथा च व्यतिरेकसहचारेणान्वय-
व्याप्तिरेव ग्रहात् न कारणबाधोऽनुमितेरिति भावः । अनियामकोऽव्यापकः भवन्नपि पक्षे
सन्नपि । तथापि तथा व्यपदिश्यते । उपपाद्योपपादकभावतया व्यपदिश्यतेऽनुमानं
अनुमितिम् । अतिप्रसङ्गात् विनाप्यनुपपत्तिज्ञानमर्थापत्तेः प्रसङ्गात् । इष्टापत्तावाह—स्वार्था-
पत्तीति अनवकाशात्तदनवकाशप्रसङ्गाच्च । क्वचित्तथैव पाठः । विपर्ययः उपपादकभ्रमः ।
15 अन्वयव्याप्तिं दर्शयति—यदेति । यदा नाहमिह तदान्यत्रेत्यर्थः । जीवित्वे सतीति
विशेषणात् न तदितरत्र व्यभिचारः । तथा च यत्र जीविते सति गृहनिष्ठाभावप्रतियोगित्वं
तत्र गृहातिरिक्तसत्त्वं यथाहमित्युदाहरणशरीरम् । व्यतिरेकव्याप्तिं दर्शयति—यदा
चेति । यदा गृहादन्यत्र न तदान्यत्र गृहे इत्युभयत्र नञ्व्यत्यासेनेयम् प्रकाशकृतस्तु—
यत्तदोर्व्यत्यासेन यदा नान्यत्र यदा गृहे तदा गृहादन्यत्र यदा नेह यदा न वहिः स न
20 तदान्यत्र तदा गृह इति योजयन्ति । शङ्कते—सर्वदेशेति । गृहभिन्नानां निखिलदेशाना-
मप्रत्यक्षत्वे प्रत्यक्षसामग्र्यभावे कथं तद्विशेष्यकोऽभावसाक्षात्कारः । तथा च न व्यतिरेक-
व्याप्तिनिरूपणमिति भावः । तेषां योग्यानां गृहातिरिक्तदेशाधीनधीःसंसर्गस्तस्यात्मनि
अशरीरे निषेधात् । योग्यानुपलब्ध्याऽभावसाक्षात्कारात् शङ्कते—अयोग्यानामिति ।
तदवयवानां योग्यावयवानां तत्संसर्गनिषेधादेव अवयविसंसर्गनिषेधादेव सति कारणाकारण-
25 संयोगेऽविनश्यदवस्थकार्यसंयोगनियमादिति भावः । अन्येषामुदासीनायोग्यानां का वार्ता
तत्संसर्गनिषेधावगमः कथं न कदाचिदिति यादृशदेशसत्त्वं प्रकृते तत्कल्पनीयम् । तद्देश-
वृत्तित्वाभावस्यैव व्याप्यत्वात् अन्यादृशादेव संसर्गाभावनिषेधाग्रहेऽपि न क्षतिरिति भावः ।
परमाणुनेति । अयोग्यदेशोपलक्षणम् शक्यमिति, तथा च तत्सत्त्वमपि न कल्पनीयमिति
भावः । विनापि पक्षधर्मतानिश्चयम् अविनाभावमात्रबलेन गृहनिष्ठाभावस्य देवदत्ते वहिः-

सत्त्वनिश्चायकत्वे धूमोऽपि वह्निं तथैव गमयेदित्याह—**पक्षधर्मताया** इति। अविशेषो गृहाभावेन धूमस्य। नन्वनुमिनोमीत्यनुव्यवसायसाक्षिकजात्यवच्छिन्नं प्रति पक्षधर्मतानिश्चयस्यान्वयव्यतिरेकान्नियामकमस्त्वित्यनुशयादाह—**व्याधिकरणेनेति**। साध्याभावाधिकरणं गृहमात्रवृत्ति तद्वृत्तिना गृहाभावेन बहिःसत्त्वनिरूपितव्याप्तेरनिश्चयात् व्यभिचारनिश्चयादित्यर्थः। ननु जीवी क्वचिदस्ति गृहे नास्तीति प्रमाणयोर्विरोधज्ञानाद्बहिरस्तीति या कल्पना सा विरोधिनोरधिकरणिकार्थापत्तिरस्तु इत्यत्राह—**प्रमाणयोरिति**। **सहेति**। अबाधिताभेदान्वयदर्शनादित्यर्थः। **विषयभेदादिति**। तथा च विरोध एव नेति भावः। शङ्कते—**प्रकृत इति**। **यद्येवमिति**। उभयत्र—**क्वचिदिति**। भिन्नभिन्नदेशपरमिति न विरोध इति भावः। उपपादनात्। विभिन्नदेशतया व्यवस्थापनात्। उपपादनादित्यत्रोपपाद्याकाङ्क्षायां पृच्छति—किमिति। व्यवस्थापयति। मानद्वयम्। **घट्टेति**। अर्थापत्तिप्रमाणरक्षाणाय व्याप्तिरूपा घट्टकुट्टीं परिजिहीर्षतस्तव तत्रैव प्रभातम्। तत्रैव ज्ञानम् पर्यवसन्नमित्यर्थः। **प्रसिद्ध वेति**। कारिकांशं व्याकरोति। **धूमोऽपि वेति**। तेन वह्निना असौ धूमः अर्वाग्भागव्यवस्थापनम् वह्न्यभावस्य।

ननु पर्वतो वह्निमान्निति ज्ञानमनुमानाधीनमेव वाच्यमन्यथानुमानप्रमाणाभावे कयोः प्रमाणायोर्विरोधज्ञानकरणिकापरभागावच्छेदेन वह्निव्यवस्थापिकार्थापत्तिः स्यादित्याह—**वह्निमानयमित्यादि**। **व्याप्तीति**। धूमत्वावच्छेदेन वह्निमत्त्वग्राहकप्रमाणेन पर्वतेऽपि वह्निसत्ताया विषयीकरणादित्यर्थः। **नापीति**। उत्तरं परभागावच्छेदेन वह्निसिद्धिरपि अर्थापत्तिर्नेत्यर्थः। **अन्यथेति**। अत्र विषयविरोधेन तद्ग्राहकमानयोरपि विरोधो ध्वनितः। शङ्कते—**तदिति**। पाण्डरत्वविशिष्टधूमस्य पालालत्वविशिष्टवह्निनैव व्याप्तेस्तत्र एव तत्सिद्धिरिति सा नार्थापत्तिरित्यर्थः। तेनैव परभागावच्छिन्नवह्निनैव एवं तत्सिद्धेरर्थापत्तित्वम् शङ्कते—**केवलेति**। अन्वयाभावात्, व्याप्तिप्रकारकपक्षधर्मताज्ञानाभावात्। एतावताऽन्वयव्याप्तिज्ञानाजन्यत्वेन। शङ्कते—**तत्रेति**। **अविनेति**। व्यभिचारज्ञानविरोधिप्रकारकपक्षधर्मताज्ञानसमुत्थेनेत्यर्थः। व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते इत्यनुसृत्याह—साध्यधर्मेण = साध्यतावच्छेदकावच्छिन्नेन विना तदवच्छिन्नाभाववतीति यावत्। अभवनम्, हेतुतावच्छेदकावच्छिन्नाभावः। अयं सहचारो व्याप्तिग्राहकोऽनुमानेऽन्वयसहचार इव व्यतिरेकिणोऽप्यविशिष्टस्तन्निश्चयोऽविनाभावनिश्चयः। **अन्वयेत्यादि**। तथा च सहचारगर्भाण्येव तल्लक्षणानि साध्यसाधनसहचारमात्रग्राह्यव्याप्तिकत्वमन्वयिनः साध्याभावसाधनाभावसहचारमात्रग्राह्यव्याप्तिकत्वं व्यतिरेकिणः। उभयसहचारग्राह्यव्याप्तिकत्वमन्वयव्यतिरेकिणो लक्षणानीति ध्येयम्। **अनुमानेति**—

केवलान्वय्यनुमानमित्युपगम्यते । अभ्युपगमे त्वाह तद्विशेषेति । केवलान्वय्यनुमानातिरिक्तानुमानमर्थापत्तिरित्यर्थः ॥ १९ ॥

अनुपलब्धिरस्तु न बाधिकेति चिन्तितम्। न च प्रत्यक्षादेरतिरिच्यते। तदुच्यते—

5 **प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात् ।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ॥ २० ॥**

या हि साक्षात्कारिणी प्रतीतिः सेन्द्रियकरणिका, यथा रूपादिप्रतीतिः । तथेह भूतले घटो नास्तीत्यपि । साक्षात्कारित्वमस्या असिद्धमिति चेन्न । एकजातीयत्वे ज्ञाताज्ञातकरणत्वानुपपत्तेः । न हि तस्मिन्नेव कार्ये तदेव करणमेकदा ज्ञात-
10 मज्ञातञ्चैकदोपयुज्यते, लिङ्गेन्द्रिययोरपि व्यत्ययप्रसङ्गाज्ज्ञानस्याकारणत्वप्रसङ्गाच्च । न हि तदतिपत्यापि भवतस्तत्कारणत्वं, व्याघातात् । तस्माज्ज्ञातानुपलब्धिजन्यस्यासाक्षात्कारित्वात् तद्विपरीतकारणकमिदं तद्विपरीतजातीयमिति न्याय्यम् ।

ननु क नाम ज्ञातानुपलब्धिरसाक्षात्कारिणीमभावप्रतीतिं जनयति । तद् यथा
15 निपुणतरमनुसृतो मया मन्दिरे चैत्रो न चोपलब्ध इति श्रुत्वा श्रोताऽनुमिनोति, नूनं नासीदेवेति । एतेन प्राङ्नास्तिताऽपि व्याख्याता । ननु तथाप्यवान्तरजातिभेदोऽस्तु अज्ञातानुपलब्धिजन्ये साक्षात्कारस्तु कुत इति चेत् । कारणविरोधात् कार्यविरोधेन भवितव्यमित्युक्तमेव । अनन्यत्रोपक्षीणेन्द्रियव्यापारानन्तरभावित्वाच्च । अधिकरणग्रहणे तदुपक्षीणमिति चेन्न । अन्धस्यापि त्वगिन्द्रियो-
20 पनीते घटादौ रूपविशेषाभावप्रतीतिप्रसङ्गात् । अस्ति हि तस्याधिकरणग्रहणम्, अस्ति च प्रतियोगिस्मरणम्, अस्ति च श्यामे रक्तत्वस्य योग्यस्याभावोऽनुपलब्धिश्च । अधिकरणग्राहकेन्द्रियग्राह्याभाववादिनोऽपि समानमेतदिति चेन्न । प्रतियोगिग्राहकेन्द्रियग्राह्योऽभाव इत्यभ्युपगमात् । ममापि प्रतियोगिग्राहकेन्द्रियगृहीतेऽधिकरणे अनुपलब्धिः प्रमाणमित्यभ्युपगम इति चेन्न । वायौ त्वगिन्द्रियोप-
25 नीते रूपाभावप्रतीत्यनुदयप्रसङ्गात् । तथापि तत्तत्र सन्निकृष्टमिति चेत् । हन्तैवमनन्यत्र चरितार्थमिन्द्रियमवश्यमपेक्षणीयं रूपाभावानुभवेन ।

स्यादेतत्, तथापि वस्त्वन्तरग्रह एव तस्योपयोग इति चेन्न । तस्य तं प्रत्यकारणत्वात्, कारणत्वे वा महान्धकारे करपरामर्शेन स्पर्शवद्द्रव्याभावं न प्रतीयात् । प्रतीयाच्च पुरोविस्फारिताक्षः पृष्ठलग्नस्याऽश्यामत्वम् । आर्जवावस्थानम-
30 प्यधिकरणस्योपयुज्यते इति चेत्, तर्हि नयनसन्निकर्षोऽप्युपयोक्ष्यते, तदेकसहकारिप्रभासन्निकर्षापेक्षणात् । अन्यथा वातायनविवरविसारिकरपरामृष्टेऽप्यधिकरणे तदुपलम्भप्रसङ्गाच्च ।

तथापि योग्यताऽऽपादनोपक्षीणश्चक्षुः। यदितरसामग्रीसाकल्ये ह्यनुपलभ्यमानस्याभावो निश्चीयते। तच्च चक्षुष्यधिकरणसन्निकृष्टे सति स्यादिति चेत्। ननु परिपूर्णानि कारणान्येव साकल्यम्। तथा च किं कुत्रोपक्षीणम्। अथान्योन्यमेलकं मिथः प्रत्यासत्त्यादिशब्दवाच्यं तदुपक्षयः न तर्हि क्वचिच्चक्षुः कारणं स्यादिति। न हि रूपाद्युपलब्धिमप्यसन्निकृष्टमेतदुपजनयति। अथाधिकरणसमवेतकिञ्चिदुपलम्भोऽपि तद्विषयाभावग्रहेऽनुपलब्धेरपेक्षणीयः, ततस्तत्रेदं चरितार्थम्, वाय्वादिषु तु रूपाद्यभावप्रतीतिरानुमानिकी। तथा हि अनुपलब्ध्या ह्यनुमीयते—अयं नीरूपो वायुरिति। न। असिद्धेः। न ह्युपलम्भाभावो भवतामभावोपलम्भः, उपलम्भस्यातीन्द्रियत्वाभ्युपगमात्। प्राकट्याभावेनानुमेय इति चेन्न। वायौ रूपवत्ताप्राकट्याभावस्याप्यसिद्धेः, रूपाभावेन समानत्वात्। व्यवहाराभावेनानुमेय इति चेन्न। कायवाग्व्यापाराभावेऽप्युपेक्षाज्ञानाभावाभ्युपगमात्, मूकस्वप्नोपपत्तेश्च। न च व्यवहाराभावमात्रेणानुमातुमपि शक्यते। अनैकान्तिकत्वादसिद्धेश्च।

तद्विषयस्तु व्यवहारस्तद्विषयज्ञानजन्यो वा ? तद्विषयज्ञानजनको वा ? तदाश्रयधर्मजनको वा ? तदभावश्च तज्ज्ञानतदाश्रयधर्माभावान्तर्भूत एवेत्यशक्यनिश्चय एव। आत्माश्रयेतरेतराश्रयचक्रकप्रवृत्तिप्रसङ्गात्। न चाज्ञातस्योपलम्भाद्यभावस्य लिङ्गता। न च प्राकट्याभावः सत्तामात्रेणोपलम्भाभावमावेदयतीति युक्तम्। लिङ्गाभावस्य तथात्वेऽतिप्रसङ्गात्। अविनाभावबलेन तु नियमे तत्प्रतिसन्धानापत्तेः। न ह्यविनाभावः सत्तामात्रेण ज्ञानहेतुं नियमयति, धूमादावपि तथाभावप्रसङ्गादिति। ज्ञानप्रत्यक्षत्वेन त्वद्दिशा भविष्यतीति चेन्न। शब्दध्वंसादिनोक्तोत्तरत्वात्। अपि च प्रतियोगिग्राहकेनेन्द्रियेणाधिकरणधर्मप्रतीतिरनुपलब्धेरङ्गमिति, तद्रहितायास्तस्याः कार्यव्यभिचाराद्व्यवस्थाप्येत, व्याप्तिबलाद्वा ?। न तावदुक्तरूपानुपलब्धिस्तां विना अभावप्रत्ययमजनयन्ती दृश्यते। नापि व्याप्तेः। तथा सति वायौ रूपाभावप्रत्ययस्तामाक्षिपेत्, एवम्भूतत्वात्। अनाक्षेपे वा, न तत्कारणको भवेत् न वा भवेत्। ततो न भवत्येव, लिङ्गात्तदुत्पत्तिरिति चेत्। ननु लिङ्गमपि सैव, न तत्त्वान्तरम्। यथा योनिसम्बन्धोऽलिङ्गदशायामिन्द्रियसन्निकर्षमपेक्षते, लिङ्गदशायान्तु तदनपेक्ष एव ब्राह्मण्यज्ञाने, तथैतत् स्यादिति चेन्न। कार्यजातिभेदात्तदुपपत्तेः। प्रकृते च तदनभ्युपगमात्। पारोक्ष्यापारोक्ष्ये विहायान्यथाऽप्यसौ भविष्यतीति चेन्न। अनुपलम्भात्। सम्भाव्यते तावदिति चेत्, सम्भाव्यतां, न त्वेतावताऽपि तमाश्रित्य करणनियमनिश्चयः।

अज्ञातकरणत्वाच्च। यदज्ञायमानकरणजं ज्ञानं तत्साक्षादिन्द्रियजं, यथा रूपप्रत्यक्षम्, तथा चेह भूतले घटो नास्तीति ज्ञानमिति। यथा वा स्मरणमज्ञायमानकरणजं साक्षान्मनोजन्म। कुतस्तर्हि न साक्षात्कार्यनुभवरूपम् ?। संस्कारातिरिक्तसन्निकर्षाभावादिति वक्ष्यामः।

तथापि भावविषये इयं व्यवस्था, अभावज्ञानं त्वज्ञातकरणत्वेऽपि न साक्षादिन्द्रियजं भविष्यतीति चेन्न। उत्सर्गस्य बाधकाभावेन सङ्कोचानुपपत्तेः। अन्यथा

सर्वव्याप्तीनां भावमात्रविषयत्वप्रसङ्गोऽविशेषात्। तथापि विपक्षे किं बाधकमिति चेत्। नन्विदमेव तावत्। अन्यदप्युच्यमानमाकर्णय। तद् यथा अकारणककार्यप्रसङ्गो, रूपाद्युपलब्धीनामपि वाऽनिन्द्रियकरणत्वप्रसङ्गः। न ह्यनुमित्यादिभिरुपलभ्यमानकरणिकाभिश्चक्षुरादिव्यवस्थापनम्, अपि त्वनुपलभ्यमानकरणिकाभी
5 रूपाद्युपलब्धिभिरेव। यद्यपि साक्षात्कारिताऽपि तत्रैव पर्यवस्यति, तथापि प्रथमतोऽनुपलभ्यमानकरणत्वमेव प्रयोजकं चक्षुरादिकल्पने। न ह्युपलभ्यमाने करणान्तरे साक्षात्कारिणीष्वपि तासु चक्षुराद्यनुपलभ्यमानं कश्चिदकल्पयिष्यत्। अत एव साक्षात्कारित्वेऽपि स्मृतेर्मन एव करणमुपागमन् धीराः। संस्कारस्त्वर्थविशेषप्रत्यासत्तावुपयुज्यते, इन्द्रियाणां प्राप्यकारित्वव्यवस्थापनात्।

10 भावावेशाच्च चेतसः। सर्वत्र हि बाह्यार्थानुभवे जनयितव्ये भावभूतप्रमाणाविष्टमेव चेत् उपयुज्यते नातोऽन्यथेति व्याप्तिः। तथैव शक्तेरवधारणात्। न ह्यनुपलब्धिमात्रसहायं तदभावेऽप्यनुभवमाधातुमुत्सहते। शब्दलिङ्गादेरपेक्षादर्शनात्। न च यत्र यदपेक्षं यस्य जनकत्वमुपलब्धं, तदेव तस्यैव तदनपेक्षं जनकमिति न्यायसहम्। आर्द्रेन्धनसम्बन्धमन्तरेणापि दहनाद् धूमसम्भावनापत्तेः। तथा च गतं
15 कार्यकारणभावपरिग्रहव्यसनेन ॥ २० ॥

## आमोदः

प्रसङ्गादाह—नचेति—

**तदुच्यत** इति। प्रत्यक्षाद्यनतिरेकित्वमुच्यत इत्यर्थः। विवादपदमनुपलब्धं ज्ञानं प्रत्यक्षम् इन्द्रियकरणकं वा अपरोक्षत्वात्, अन्यथानुपक्षीणेन्द्रियजन्यत्वात्, अज्ञातकरणत्वात्, भावावेशाच्चेति। अस्मदादिरा-
20 ज्यानुभवस्य भावभूतकरणसहकृतमनोजन्यत्वनियमादित्यर्थः। अत्र प्रथमं हेतुं साधयति—**या हीति**। नन्वपरोक्षत्वं साक्षात्त्वं तच्चासिद्धमिति शङ्कते—**साक्षादिति**। परिहरति—**नेति**। अभावं साक्षात्करोमीत्यनुव्यवसायसत्त्वेऽपि गत्यन्तरमाह—**एकेति**। एकजातीयमेवाभावज्ञानं ज्ञातयाऽनुपलब्ध्या क्वचिदनुपलब्ध्या च जन्यते इत्यज्ञातानुपलब्धिजन्यमभावज्ञानं
25 साक्षात्कारिजातीयमन्द्रियकरणकमेवेत्यर्थः। **व्यत्ययेति**। लिङ्गमज्ञातमिन्द्रियं च ज्ञातं करणं स्यादित्येवमपि प्रसज्यत इत्यर्थः। **ज्ञानस्येति**। ज्ञातानुपलब्धिस्थले च स्वरूपसत्येव जनिका स्याद्। तथैव सामर्थ्योपलब्धेरित्यर्थः। **न हीति**। ज्ञानं विनापि चेदनुपलब्धं ज्ञानमङ्गीकृतं तदा ज्ञातत्वमनुपलब्धेरतन्त्रमेवेत्यर्थः। **तद्विपरीतकारणकमिति**। स्वरूपसदनु-
30 पलब्धिजन्यमित्यर्थः। तद्विपरीतजातीयमिति। साक्षात्कारिजातीयमित्यर्थः।

तथा च सिद्धमिन्द्रियकरणकत्वादिति भावः। **निपुणतरमिति**। शब्दान्मैत्रानुपलब्धिज्ञानवतश्चैत्रस्य मैत्राभावानुमानमित्यर्थः। अनुमितिस्वरूपमाह—**नूनमिति**। **एतेनेति**। यत्रानुपलब्धिर्न शाब्दी किन्तु मैत्राभावं पृष्टः स्वयमेवानुपलब्धिं ज्ञात्वाऽनुमिनोति नासीत्तत्र चैत्र इति। अत्र हि स्मरणार्हस्य स्मरणाभावो लिङ्गं तेन प्राक्कालीना नास्तिता सिध्यति। 5 अत्राभावानुमितिकाले चैत्रस्य तत्र सत्त्वेऽपि न दोष इति भावः। ननु वा ज्ञातानुपलब्धिजन्ये ज्ञाने अनुपलब्धत्वं जात्यन्तरमेवास्तु, किं साक्षात्त्वेनेत्याशङ्कते **नन्विति**। पारोक्ष्यापारोक्ष्यलक्षणधर्मभेदश्चेत् कार्ये, तदा साक्षात्त्वमायातमित्यर्थः। नह्यज्ञातकारणजन्यं ज्ञानं न साक्षात्कारीति सम्भवति। तथा च कारणविरोध एवेति भावः। द्वितीयं हेतुं विवृणोति— 10 **अन्यत्रेति**। इन्द्रिस्याधिकरणग्रहे उपक्षय इत्याह—**अधिकरणेति**। परिहरति—**नेति**। अधिकरणग्रहस्य प्रकृते जातत्वान्नीलघटे पीतरूपाभावोऽन्येनापि गृह्येतेत्यर्थः। कारणान्तरविलम्बोऽपि नात्रेत्याह—**अस्ति हीति**। ननु तवापि त्वगिन्द्रियेण कथं तत्र न रूपाभावग्रह इति शङ्कते—**अधिकरणेति**। परिहरति—**नेति**। त्वगिन्द्रियं न रूपग्राहकमतो न तेन 15 रूपाभावो गृह्यत इत्यर्थः। **ममापीति**। प्रकृते त्वगिन्द्रियं न रूपग्राहकमतो न तदुपनीतेऽधिकरणे रूपाभावग्रह इत्यर्थः। **वायाविति**। तत्र प्रतियोगिग्राहकेणेन्द्रियेणाधिकरणानुपस्थितेरित्यर्थः। ननु प्रतियोगिग्राहकमिन्द्रियं वायुसन्निकृष्टमेतावतैव तत्र रूपाभावोऽनुपलम्भेन गृह्यत इति शङ्कते—**तथापीति**। अधिकरणसन्निकर्षमात्रेणाधिकरणग्रहोपक्षीणता न सम्भवति, 20 अतस्तदभावग्राहकमेव वक्तव्यमित्यर्थः। तत्रान्यथासिद्धिं प्रकारान्तरेणाशङ्कते—**तथापीति**। **तस्येति**। वस्त्वन्तरग्रहणस्य रूपाभावोपलम्भं प्रत्यनुपयोगात् न तेनान्यथासिद्धिरित्यर्थः। ननु वस्त्वन्तरग्रहणस्यापि कारणत्वं स्यादित्यत आह—**कारणत्व इति**। **न प्रतीयादिति**। तत्र वस्त्वन्तरस्य त्वगिन्द्रियेण ग्रहणादिति भावः। ननु तत्रापि स्पर्शवद् 25 द्रव्याभावं चक्षुरेवं कथं न प्रत्येति इत्यत आह—**महान्धकार इति**। इदं चक्षुःसामर्थ्याभवबोधनाय। अन्यथा चक्षुषैव तत्राभावप्रत्यय इत्यस्यापि वक्तुं सुकरत्वादिति भावः। **स्पर्शवदिति** च त्वगिन्द्रिययोग्यताघटनाय। दोषान्तरमाह—**प्रतीयाच्चेति**। **पुरो विस्फारिताक्ष इति**। वस्त्व-

**न्तरग्रहणाय** पृष्ठलग्नस्येत्यधिकरणग्रहणायाभिहितम् । **शङ्कते--आर्जवेति** । परिहरति--**तर्हीति** । आर्जवावस्थानस्य सन्निकर्षमात्रफलकत्वादित्यर्थः । **तदेकेति** । अन्यथा विस्फारिताक्षस्य वस्त्वन्तरग्रहणमपि न स्यादित्यर्थं । आर्जवावस्थाने व्यभिचारमाह--**वातायनेति** । **तदुपलभ्भेति** । पीते घटे श्यामाभावोपलभ्भप्रसङ्गादित्यर्थः । **तथापीति** । यद्यपि प्रकारान्तरोपक्षीणत्वमभावग्रहे नेन्द्रियस्य, तथापि तत्तद्व्याप्येतरयावत्तदुपलभ्भकसामग्रीसमवधाने सत्यनुपलम्भो योग्यानुपलभ्भः, स चाभावग्रहहेतुः । अयश्चाधिकरणे यत्र तिष्ठति तत्राभावग्रहस्तथा चाधिकरणे इन्द्रियसम्बन्धो योग्यताघटकत्वेनोपक्षीणो न स्वतन्त्र इत्यर्थः । **नन्विति** । एवं सतीन्द्रियसन्निकर्षोऽभावग्रहकारणमित्यायातमित्यर्थः । ननु कारणमेलकं घटयति चक्षुर्न तु कारणमपीत्याह--**अथेति** । एवमन्यत्रापि रूपादिग्रहे चक्षुः कारणं न स्यात्, मेलकघटकतयैवान्यथासिद्धेः । एतदेवाह--**न हीति** । ननु वातायनादावार्जवावस्थानसत्त्वेऽपि अधिकरणवृत्तिधर्मस्य चक्षुषा ग्रहणान्नाभावो गृह्यते, तस्य तत्र सहकारित्वस्य वक्तव्यत्वात् । तथा च चक्षुस्तत्रैवोपक्षीणमित्याह--**अथेति** । नन्वेवं वायावपि रूपाभावो न गृह्यते, चक्षुषा तद्वृत्तिधर्मान्तराग्रहात् इत्यत आह--**वाय्वादिष्विति** । तत्रानुपलब्धिः प्रमाणमेव न भवति किन्त्वनुमानमेवेत्यर्थः । **असिद्धेरिति** । ज्ञायमानानुपलम्भो लिङ्गं तज्ज्ञानं च दुरुपपादमित्यर्थः । ननु वायू रूपवत्तया नानुपलम्भविषयः, ताद्रूप्येण प्राकट्याभाववत्त्वात् इत्यनुमानमुपलभ्भे स्यादित्याह--**प्राकट्येति** । रूपवत्ताप्राकट्यस्यापि अभावो वायुधर्मिको दुर्ग्रह एव इत्याह--**वायाविति** । प्रकट्यं ज्ञातता । **रूपाभावेनेति** । प्राकट्याभाववत् रूपाभाव एव कुतो न गृह्यत इत्यर्थ । ज्ञानाभावानुमाने हेत्वन्तरमाह--**व्यवहाराभावेनेति** । अत्र व्यवहारविशेषाभिप्रायेणैकान्तिकत्वमाह--**कायेति** । ननु व्यवहारमात्राभावो लिङ्गं स्यादत आह--**न चेति** । स्वीयव्यवहाराभावोऽनैकान्तिकः सकलव्यवहाराभावश्चासिद्ध इत्यर्थः । ननु स्वकीयरूपवत्ताभावः स्वकीयरूपवत्ताव्यवहाराभावेनानुमेयस्तत्र च उपेक्षणीयज्ञानेऽनैकान्तिकत्वे सत्येवाह--**तद्विषय इति** । तत्राद्ययोस्तद्विषयकज्ञानाभावान्तर्भूतत्वेन साध्याविशेष एव । अन्त्ये तदाश्रयो धर्मो ज्ञातता, तदभावस्तदन्तर्भूत इति दुर्ग्रह एवेत्युक्तम् ।

आत्माश्रयेति । व्यवहाराभावान्तर्गततद्विषयकज्ञानाभावः तेनैव तदनुमानं चेत्, तदात्माश्रयः, तेन व्यवहाराभावो, व्यवहाराभावेन च तद्विषयकज्ञानाभाव एव चेदनुमेयस्तदा अन्योऽन्याश्रयः,। ज्ञानाभावेन प्राकट्याभावः, तेन च व्यवहाराभावः, व्यवहाराभावेन च ज्ञानाभाव एव चेदनुमेयस्तदा चक्रकमित्यर्थः। न चेति। तथा चातिप्रसङ्ग इत्यर्थः। 5
न च प्राकट्याभाव इति। तस्यैवं स्वभावकल्पने मानाभाव इति भावः। एतदेव विशदयति—लिङ्गेति। स्वरूपतालिङ्गाभावेन यत्र कुत्रचिद् वह्न्यनुमानप्रसङ्गात्। यद्वा, समव्याप्तिस्थले लिङ्गाभावोऽपि साध्याभावबोधक इति प्रकृतानुरूपमिति भावः। अविनाभावोऽपि तत्र बलं (?) ज्ञात एव वाच्योऽन्यथानुमानाभासानवकाशोऽतिप्रसङ्गश्चेत्याह—अविनाभावेति। ननु ज्ञानं योग्यमस्तु तदभावं योग्यानुपलम्भेन स्वरूपसत्तां गृहीत्वा तेन रूपाभावो वायावनुमीयताम् इत्याह—ज्ञानेति। त्वद्दिशेत्यपसिद्धान्तवारणाय। शब्दध्वंसादीति। पक्षादिविकल्पग्रस्तत्वादिति भावः। अकिरणागतधर्मान्तरग्रहे चक्षुरन्यथासिद्धमिति यदुक्तं तत्प्रकारान्तरेण दूषयति—अपि चेति। तामिति। अधिकरणवृत्तिधर्मप्रतीतिमित्यर्थः। तथा सतीति। रूपाभावप्रतीतिस्तदुभयसिद्धव्याप्तिश्चेत्तदाधिकरणवृत्तिधर्मान्तरप्रतीतिं सैवाक्षिपेदित्यर्थः। यदि नाक्षिपेत् तदा कारणमेव न स्यादथ वा रूपाभावप्रतीतिरेव न स्यादित्याह—अनाक्षेप इति। तत इति। स्वरूपसदनुपलब्धेरित्यर्थः। लिङ्गादिति। ज्ञायमानानुपलब्धेरित्यर्थः। सैवेति। अनुपलब्धिरेवेत्यर्थः। तदग्रहानुपपत्तिश्चोक्तेति भावः। यथेति। 20
विशुद्धमानापि (?) नृयोनिजत्वं स्वरूपसत् प्रत्यक्षसहकारिज्ञातं तु लिङ्गं यथा त्वयोच्यते तथानुपलब्धिरपि ज्ञाता चाज्ञाता भावधियं जनयेदित्यर्थः। कार्येति। दृष्टान्ते साक्षात्त्वमनुमितित्वं जातिभेदोऽस्ति। प्रकृते तु नास्तीत्यर्थः। अन्यथापीति। पारोक्ष्यमनुपलब्धं च जातिभेदः प्रकृतेऽपीति शङ्कते—पारोक्ष्येति। अनुपलम्भादिति। वायौ रूपाभावग्रहे भूतले घटाद्यभावग्रहे च साक्षात्त्वस्यैवोपलम्भात्। वैजात्यस्यानुपलम्भादित्यर्थः। करणेति। एकत्र ज्ञाताऽन्यत्राज्ञातानुपलब्धिः करणमिति वैजात्यमन्तरेण व्यवस्थापयितुमशक्यमित्यर्थः। अभावज्ञानस्य इन्द्रियकरणकत्वे साध्ये कारिकया संगृहीतम्—अज्ञातकारणत्वादिति। हेतुं विवृणोति अज्ञातेति। यदज्ञाय-

**मानेति**। ज्ञायमानकरणाजन्यं यदज्ञायमानकरणजन्यं तत् साक्षादिन्द्रियजमिति व्याप्तिः। तेनाज्ञायमानमनोजन्यानुमित्यादौ न व्यभिचार इति भावः। **कुतस्तर्हीति**। साक्षान्मनोजन्यत्वे स्मृतिरपि साक्षात्कारिणी स्यादित्यर्थः। **संस्कारेति**। स्मृतौ संयुक्तसमवेतविशेषणतासंस्कारद्वारैव मनः प्रत्यासत्तिरित्यर्थः। प्रत्यभिज्ञा तु चक्षुरादिसन्निकर्षजन्या तन्नाशेऽपि संयुक्तविशेषणतयाः प्रत्यासत्तेः सत्त्वात्। असन्निकृष्टैव वा तन्नाभासते। न हि यावत्प्रत्येतव्येन्द्रियसन्निकर्षः कारणमिति टीकाकृदभिधानादिति भावः। **इयमिति**। यदज्ञातकरणकं तत् साक्षात्कारीति व्यवस्थेत्यर्थः। **उत्सर्गस्येति**। भावाभावसाधारणव्यवस्थायां बाधकाभावादित्यर्थः। **अन्यथेति**। कार्यं सकारणकमेवेत्यादिव्याप्तीनामपीत्यर्थः। तथा च तद्ध्वंसेऽपि कारणापेक्षा न स्यादिति भावः। **विपक्ष इति**। अभावज्ञानमज्ञातकरणजमप्यस्तु, साक्षात्कारि च न स्यादित्यत्र किं बाधकमित्यर्थः। **ननु इदमेवेति**। निर्बीजशङ्कयाप्यनौपाधिकत्वभङ्गप्रसङ्ग एवेत्यर्थः। उत्सर्गस्य बाधकं विनाऽप्यपवादप्रसङ्गश्चेति वार्थः। **अकारणकेति**। अज्ञातकरणकं ज्ञानमिन्द्रियमक्षमन्तरेण भवत् कारणं विनैव स्यादित्यर्थः। **रूपादीति**। एवं रूपाद्युपलब्धावपीन्द्रियं करणं न स्यादित्यर्थः। तस्मादनुपलभ्यमानकरणकज्ञानत्वावच्छिन्नं प्रत्येवेन्द्रियजत्वकल्पनमावश्यकं, तथा चाज्ञातानुपलब्धिजन्यमभावज्ञानमपि तथा स्यादित्याह—**न हीत्यादि**। नन्वनुपलभ्यमानकरणत्वं नेन्द्रियकल्पने तन्त्रम्, किन्तु साक्षात्कारित्वं, तच्चानुलभ्यमानानुपलब्धिजन्याभावज्ञाने नास्तीति तत्रेन्द्रियजन्यत्वं न स्यादित्याह—**यद्यपीति**। **तत्रैवेति**। इन्द्रियकल्पन एवेत्यर्थः। **तथापीति**। उपलभ्यमानकरणकस्थलेऽनुपलभ्यमानस्य करणस्य केनाप्यकल्पनादनुपलभ्यमानकरणकत्वमेवेन्द्रियकल्पकमित्यर्थः। नन्वनुपलभ्यमानकरणकत्वेन चेदिन्द्रियजन्यत्वं साक्षात्त्वं वा, तदा स्मृतिरपि तथा स्यादित्यत आह—**अत एवेति**। इन्द्रियजन्यत्वं तु तत्रास्त्येव, ननु (तु) साक्षात्त्वं मनसः, षोढाप्रत्यासत्तिविरहादिति भावः। ननु संस्कारस्तत्र न कुतः करणमत आह—**संस्कारस्त्विति**। निर्व्यापारत्वेन तस्याकरणत्वादिति भावः। ननु मनोजन्यायां स्मृतौ संस्कारः किमिति कल्प्यत इत्यत आह—**इन्द्रियाणामिति**। ननु षोढाप्रत्यासत्तिविरहेऽप्यलौकिकप्रत्यक्षत्वं स्मृतौ

स्यादिति चेन्न, इन्द्रियजत्वेऽपि स्मृतौ जनकत्वावच्छेदकं नेन्द्रियत्वं, किन्तु मनस्त्वमिति न साक्षात्त्वं तत्रेति भावः। भावावेशादिति। भावस्यासाधारणकरणस्यावेशः प्रवेश इत्यर्थः। तथा च बहिःप्रमायां मनसो भावरूपकरणसहकारित्वनियमस्य दृष्टत्वादिन्द्रियलिङ्गसादृश्येष्वपि तदेव कल्पनीयमिति भावः। एवं च घटाभावो भूतल इत्यभावप्रमा मनोभिन्न- 5 भावरूपकरणजन्यप्रमात्वान्मनोवत् इत्यनुमानादिन्द्रियकरणत्वसिद्धिः। तदेवाह—सर्वत्र हीति। अविशिष्टं सहकृतं कथमेवमत आह। तथैवति। अवधारणस्थलमाह—न हीति। तदिति। मन इत्यर्थः। ननु शाब्दज्ञानादौ मनसो भावसहकारित्वमस्तु, अभावप्रमान्तु भावनिरपेक्षमनुपलब्धिमात्रसहायं जनयतु, को दोष इत्यत आह—न चेति। यत्र यस्य यत्सहकारि- 10 तन्निरपेक्षेणापि तज्जातीयजन्यजनकविप्लव इत्यर्थः। तथा च बहिःप्रमात्वावच्छेदेनैव भावसापेक्षत्वमित्यर्थः। यद्यपि परामृष्यमाणलिङ्गकरणतापक्षेऽभावस्यपि सहकारित्वं तथापि भावघटितकरणसापेक्षत्वमित्यर्थः। प्रकृते परामृष्यताघटितत्वान्न दोषः। अनुपलब्धिस्तु न परामृष्यताघटितेति न सा कारणमिति भावः ॥२०॥ 15

बोधनी

एवमर्थापत्तिर्न बाधिका न भिद्यते चानुमानादित्युक्तम्। अनुपलब्धेस्त्वबाधकत्वस्य चिन्तितपूर्वत्वादन्तर्भाव एव चिन्तनीय इत्याह **अनुपलब्धिस्त्वति**। तत्रावदिह भूतले घटो नास्तीति प्रतीतेरैन्द्रियकत्वे चतुरो हेतूनुपन्यस्यति **प्रतिपत्तेरिति**। विप्रतिपन्ना प्रतीतिरिन्द्रियकरणिका अपरोक्षरूपत्वात् रूपादिबुद्धिवदिति। अनन्यत्रोपक्षीणेन्द्रियान्वयव्यतिरेकानुविधायित्वात् अज्ञातकरणत्वाच्च। तथेयं प्रतीतिर्भावात्मकप्रमाणसहकृतेन मनसा 20 जायते बाह्यार्थानुभवत्वात्। भावरूपं च प्रमाणमिन्द्रियमेव परिशिष्यत इति भावः। भावावेशो भावप्रमाणसहकार इति। तत्राद्यं हेतुं विवृणोति **या हीति**। प्रतिवाद्यसिद्धो हेतुरित्याह—**साक्षात्कारित्वमिति**। नास्तीति बुद्धयः काश्चिदज्ञातकरणिकाः, काश्चिद् ज्ञातकरणिकाः, तत्र यद्युभयेऽप्यसाक्षात्कारजातीयाः तत इदं कारणवैचित्र्यं न स्यादिति। विपर्ययेऽनिष्टमाह **लिङ्गेति**। असाक्षात्कारिज्ञानजनकस्यापि लिङ्गस्य सत्तया 25 हेतुत्वं साक्षात्कारहेतोरपीन्द्रियस्य ज्ञायमानतया हेतुत्वं च प्रसज्येतेति। किं च यद्यज्ञातादपि करणात्तज्जातीयमेव ज्ञानं जायेत तदा तत्र कारणमेव तज्ज्ञानं भवेत् व्यतिरेकाभावा-

दित्याह **ज्ञानस्येति** । यत एवं तस्माज्ज्ञातानुपलब्धिजन्यस्यासाक्षात्कारित्वमभ्युपगच्छता-मवश्यमज्ञातानुपलब्धिजन्यस्य साक्षात्कारित्वमवर्जनीयमित्याह **तस्मादिति** ।

स्यादेवं यदि ज्ञातानुपलब्धिः कचिदसाक्षात्कारं जनयेत्, न चैवमस्तीत्याशयेनाह **ननु क नामेति** । तत्रोदाहरणेनोत्तरयति **तद्यथेति** । न हि तदा देशान्तरस्थस्य श्रोतुर्याग्यानुपलब्धिरस्ति किं त्वाप्तवाक्यावगतयानुमिनोतीति । एवं प्रातः कारणेऽनुप-लब्धस्य मैत्रस्य मध्यन्दिनसमयभाविप्रातस्तनाभावज्ञानमप्यनुमानफलमेव मध्यन्दिनानु-सन्धीयमानप्रातस्तनानुपलब्धिलभ्यत्वादित्याह **एतेनेति** । नन्वस्तु ज्ञातानुपलब्धिजन्याद-ज्ञातानुपलब्धिजन्यस्य जातिभेदः स तु साक्षात्काररूप इति कुत इत्याह **नन्विति** । न हि विधाद्वयव्यतिरेकेण ज्ञानावान्तरजातिभेद इत्यभिप्रायेणाह **कारणविरोधादिति** । द्वितीयं हेतुं विवृणोति **अनन्यत्रेति** । विशेषणासिद्धिमाशङ्कते **अधिकरणेति** । यथा हि धूमज्ञानोपक्षीणेन्द्रियव्यापारानन्तरभाविनो यदि वह्निज्ञानस्य नेन्द्रियहेतुकत्वं तथाधिकरण-ग्रहणोपक्षीणेन्द्रियव्यापारानन्तरभाविनो भावज्ञानस्यातद्धेतुकत्वमिति, तर्ह्यन्धस्यापि सामग्री-साकल्याद्रूपाभावप्रतीतिः स्यादित्याह **नेति** । योग्यस्य स्थूलद्रव्यसमवेतत्वादिति । ननु भवन्तोऽप्यधिकरणग्राहकेणेन्द्रियेण ग्राह्योऽभाव इति मन्यन्ते, तत्र चान्धस्य त्वगिन्द्रियेण रूपविशेषाभावप्रतीतिः प्रसज्येतेत्याह **अधिकरणेति** । **नेति** । ततश्च चाक्षुषरूप-प्रतीतिर्नान्धस्य स्यादिति । **ममापीति** । ततश्च चाक्षुषाधिकरणग्रहणाभावान्नान्धस्य रूपविशेषाभावप्रतीतिरिति । **नेति** । प्रतियोगिग्राहकेण चक्षुषा वायोरग्रहणात्तत्र रूपाभावप्रतीतिः कदाचिदपि न स्यादिति । नन्वगृह्णदपि चक्षुर्वायौ यावत्सन्निकृष्टं तावता रूपविशेषस्यानुपलब्धिरभावं गमयतीत्याह **तथापीति** । **हन्तैवमिति** । वायोर्ग्रहणाभावा-दनन्यत्राचरितार्थता त्वगन्धस्य च रूपाभावप्रतीत्यभावादवश्यापेक्षणीयत्वं चक्षुष इति ।

ननु मा भूदधिकरणग्रहणोपक्षयस्तथापि तत्र सन्निहितस्य यस्य कस्यचिद्वस्तुनो ग्रहण एवोपक्षीयत इत्याह **स्यादेतदिति** । **नेति** । अत्र ह्यन्वयव्यतिरेकानुविधाने सत्येवा-भावबुद्धेरनिन्द्रियहेतुकत्वमन्यत्र तदुपक्षयादुच्यते, स चाभावबुद्धिहेतौ कस्मिंश्चिद्वक्तव्यः, अन्यथा तदनुविधानानुपपत्तेः, न चात्र तस्य वस्त्वन्तरग्रहणस्य तदभावानुभवं प्रति कारण-त्वमस्तीति, यदि स्याचत्राह **कारणत्वे वेति** । अन्धकारे वस्त्वन्तरग्रहणाभावात्स्पर्शवद्विशे-षाभावप्रतीतिर्न स्यात् इति । **प्रतीयाच्चेति** । प्रतियोगिग्राहकेण तदा तदालोके विस्फारिता-क्षस्य पुरःस्थितवस्त्वन्तरग्रहणसंभवाच्चेति । उत्तरत्र शङ्कते **आर्जवेति** । आर्जवावस्था-नादधिकरणस्य नयनसन्निकर्षेऽपि तद्गताभावग्रहण एवोपयुज्यते न तु तद्ग्रहण इत्यङ्गी-कर्तव्यमित्याह **नयनेति** । कुत इत्यत्राह **तदेकेति** । आलोकसन्निकर्षस्तावदपेक्षणीयो

रूपाभावज्ञानेन तमन्तरेण तदनुपपत्तेः, स च तस्य नयनसन्निकर्षस्यैव सहकारी नानुपलब्ध्यादेः, तस्मान्नयनसन्निकर्षोऽप्यपेक्षणीय एव, न हि संभवति यस्य यत्सहकारितयैव कार्योपयोगस्तस्य तदनपेक्षायामप्यपेक्षेति। चक्षुस्सन्निकर्षानुपयोगेऽनिष्टमप्याह **वातायनेति**। तत्र हि सत्येवाधिकरणस्यार्जवावस्थाने तद्ग्रहणे चक्षुस्सन्निकर्षाभावादेव तस्य श्यामत्वाभावस्यानुपलम्भो भवति। 5

नन्वस्त्वपेक्षणीयश्चक्षुस्सन्निकर्षस्तथाप्यन्यत्रोपक्षयस्तस्येत्याह **तथापीति**। योग्यानुपलब्धिर्ह्यभावज्ञानहेतुः, योग्यता च प्रतियोगिव्यतिरिक्ताभावज्ञानकारणसाकल्यं, तच्च साकल्यं चक्षुःसन्निकर्षे सति भवति तस्यापि तत्कारणत्वात्। ततश्च सामग्रीसाकल्यापादनोपक्षीणं चक्षुर्नाभावज्ञानं यावत् गच्छतीति। **ननु परिपूर्णानीति**। न खलु साकल्यं नाम कारणेभ्यस्तत्त्वान्तरं तत्साध्यमस्ति यत्रोपक्षयः तस्य स्यात् किं तु परिपूर्णानां 10 कारणानामेव तथात्वादिति। नन्वस्ति मेलनं नाम तत्त्वान्तरमुपक्षयविषय इत्याह **अथेति**। एवं हि रूपादिज्ञानेष्वर्थसन्निकर्षसंपादनोपक्षीणं चक्षुर्न कारणं स्यादित्याह **तदुपक्षय इति**। नन्वभावाधिकरणसमवेतस्य कस्यचिद्वस्तुनः प्रतियोगिग्राहकेणेन्द्रियेणोपलम्भोऽभावग्रहणे सहकारित्वेनानुपलब्धेरपेक्षणीयस्तत्रेदमिन्द्रियमुपक्षीयत इत्याह **अथाधिकरणसमवेतकिञ्चिदिति**। तर्हि वायौ रूपाभावप्रतीतिर्न स्यात् तत्र वस्त्वन्तरस्य चक्षुषानुपलम्भादित्या- 15 शङ्क्य स एवाह **वाय्वादिष्विति**। न तत्राभावप्रमाणगम्योऽभावः अनुपलब्धिलिङ्गानुमेयत्वादिति। **नेति**। असिद्धेरनुपलब्धेरज्ञातासिद्धत्वादिति। न तावदभावप्रमाणात्सिध्यतीत्याह **न हीति**। ऐन्द्रियकस्याभावो हि भवतामभावगम्य इति। ननु रूपोपलम्भजन्यस्य प्राकट्यस्याभावेन वायौ रूपानुपलम्भोऽनुमीयत इत्याह **प्राकट्याभावेनेति**। वायौ रूपाभावस्यैव प्राकट्याभावस्यापि नाभावप्रमाणात्सिद्धिरित्याह **न** 20 **वायाविति**। नन्वस्तु वायौ रूपव्यवहाराभावेन प्राकट्याभावोऽनुमेय इत्याह **व्यवहाराभावेनेति**। व्यवहाराभावस्यानैकान्तिकत्वान्न प्राकट्याभावे ज्ञानाभावे लिङ्गतेत्याह **नेति**। इतश्चानैकान्तिकतेत्याह **मूकस्वप्नेति**। मूकतया वाचिकस्य व्यवहारस्याभावः, स्वप्नतया कायिकस्येति। ननु मा नाम हानोपादानलक्षणयोः कायवाग्व्यवहारयोः ज्ञानविशेषकार्यत्वात्तदभावात् ज्ञानमात्राभावः प्राकट्यमात्राभावो वानुमीयतां, ज्ञानमात्रस्य प्राकट्यमात्रस्य 25 च व्यवहारमात्रं कार्यम्, ततस्तदभावात् तयोरन्यतरस्याभावोऽनुमास्यत इत्याशङ्क्याह **न चेति**। यदि तावद्व्यवहाराभावमात्रमित्यत्र यः कश्चिद्व्यवहारो विवक्षितस्तदानैकान्तिकता यस्य कस्यचिद्व्यवहाराभावस्य येन केनापि ज्ञानाभावेन व्याप्तेः, तथापि कस्यापि व्यवहारस्य सर्वत्रासत्वादसिद्धेश्च तन्मात्राभाव इति।

अथ यद्विषयस्य ज्ञानस्य प्राकट्यस्य वाऽभावोऽनुमित्सितः तद्विषयव्यवहाराभाव एव लिङ्गमुच्यते तत्राह **तद्विषयस्त्विति**। कायिकवाचिकव्यवहारयोरुत्प्रेक्षाज्ञानव्याप्यत्वाद् व्यापिनश्च व्यवहारान्तरस्यानवगमात् तद्विषयो व्यवहारस्तद्विषयं ज्ञानं तदाश्रितं वा प्राकट्यलक्षणं धर्मं पुरस्कृत्य तज्जन्य इति वा तज्जनक इति वा निरूपणीयः। ततो 5 व्यवहाराभावश्चात्र तज्ज्ञानतदाश्रितधर्माभावपुरस्कारेणैव निरूप्येत। तच्चाशक्यमात्माश्रया-दिदोषप्रसङ्गात्। तथा हि तदा तद्विषयज्ञानव्यवहाराभावः तद्विषयज्ञानाभावे लिङ्गं तदपेक्ष-ज्ञानादिव्यापिनो व्यवहारान्तरस्याभावात्तद्विषयज्ञानमेव तज्जन्यव्यवहारोऽभ्युपगन्तव्यः, तथाचात्माश्रयत्वं तद्विषयज्ञानाभावादेव तद्विषयज्ञानाभावानुमानमिति। तदा तु तद्विषय-ज्ञानजनकस्य व्यवहारस्याभावो लिङ्गं तदा चक्षुरादिव्यापारस्य तज्जनकत्वात्तस्य च 10 ज्ञानस्य कार्यैकगम्यत्वात्तदभावोऽपि ज्ञानाभावावगम्यः, तथा चेतरेतराश्रयता तज्ज्ञाना-भावज्ञानात्तज्जनकव्यवहाराभावज्ञानं ज्ञानजनकचक्षुरादिव्यापाररूपव्यवहाराभावज्ञानाच्च तदभावज्ञानमिति। यदा च तदाश्रितधर्मजनकस्य व्यवहारस्याभावो लिङ्गं तदा प्राकट्याख्यधर्मस्य ज्ञानहेतुकत्वादात्माश्रयत्वमेव। अथ तु ज्ञानद्वारा चक्षुरादिव्यापार एव जनकः तदा चक्रकं भवति ज्ञानाभावाच्चक्षुरादिव्यापारलक्षणस्य व्यवहारस्याभावः 15 ज्ञानाभावश्च प्राकट्याभावात् स च तज्जनकव्यापाराभावात् स च ज्ञानाभावादिति। न च व्यवहाराभावमात्रेणेत्यादेरपरा व्याख्या—न केवलमनैकान्तिकः असिद्धिश्च व्यवहारा-भाव इत्याह **न चेति**। उक्तस्यैवानैकान्तिकत्वस्यानुभाषणं दृष्टान्तार्थमिति। व्यवहार-स्वरूपनिरूपणपुरःसरं व्यवहाराभावं निरूपयंस्तस्यासिद्धिमेवाह **तद्विषयस्त्विति**। ननु यदि विज्ञायमान एवानुपलम्भो यदि रूपाभावं गमयेत् अविनाभावेन तत एते दोषाः 20 प्रादुष्युः, न त्वेवमित्याशङ्क्याह **न चाज्ञातस्येति**। तथा सति लिङ्गतैव न स्यादिति भावः। ननूपलम्भलिङ्गस्य प्राकट्यस्याभावो लिङ्गिन उपलम्भस्याभावं गमयिष्यतीत्यत्राह **न चेति**। स हि लिङ्गाभाव इत्येव लिङ्गिनोऽभावं गमयेदविनाभावेन वा! प्रथमे धूमाभावोऽप्यग्न्यभावं गमयेत्, द्वितीये त्वविनाभावः स्वस्य हेतुस्वरूपस्य च प्रतिसन्धान-मपेक्ष्येत, अन्यथाऽतिप्रसङ्गादिति। ननु नैयायिकमतावलम्बेन प्रत्यक्षत्वमभ्युपगच्छामः, 25 ततोऽभावप्रमाणावगतेनैव ज्ञानाभावेन वायौ रूपाभावमनुमीमह इत्याह **ज्ञानप्रत्यक्षत्वे-नेति**। तर्हि प्रामाणिकं पन्थानमागतो यथा प्रमाणं वायौ रूपाभावश्चाक्षुष इत्यभ्युपगच्छ। न च कथं नामाचक्षुषे वायौ रूपाभावश्चाक्षुषः स्यादिति शङ्कावकाशः शब्दप्रध्वंस-प्रत्यक्षत्वसाधनेनाधिकरणप्रत्यक्षत्वस्यानङ्गत्वप्रतिपादनेन दत्तोत्तरत्वादित्याह **शब्देति**। तदेवं यदि प्रतियोगिग्राहिणेन्द्रियेणाधिकरणसमवेतधर्मोपलम्भः तद्विषयाभावग्रहे हेतुः ततो

वायौ रूपाभावप्रतीतिर्न स्यात् अनुमानतस्तदसिद्धेरित्युक्तम्, इदानीं तत्रैव दूषणान्तरमाह **अपि चेति**। तद्रहिताया वस्त्वन्तरप्रतीतिरहितायास्तस्या अनुपलब्धेः कार्यव्यभिचारात्सत्या-मप्यनुपलब्धौ कदाचित्कार्यस्याभावग्रहणस्यानुत्पत्तेः तत्प्रतीतिरप्यङ्गमिति व्यवस्थाप्येत व्यतिरेकाभावेऽप्यन्वयव्याप्तिबलाद्वेति। तत्र प्रथमे दूषणम्। **न तावदिति**। उक्तरूपप्रति-योगिग्राहकेन्द्रियसन्निकर्षैः सहितानां प्रतीतिर्द्वितीये दूषणम्—**नापि व्याप्तेरिति**। 5
सत्यां हि व्याप्तौ भवन् रूपाभावप्रत्ययः तां वस्त्वन्तरप्रतीतिमाक्षिपेदेवंभूतत्वादभावप्रत्ययस्य वस्त्वन्तरप्रतीतिव्याप्तत्वात्। यदि नाक्षिपेत् तर्ह्यभावप्रत्ययो वस्त्वन्तरप्रतीतिहेतुको न स्यात्स्वयं वा न भवेत् तत्कारणकस्य वस्त्वन्तरग्रहणस्याभावात्। अस्ति चायं वायाविति प्रतिक्षिप्तमपि पक्षं दूषणान्तरविवक्षयोपक्षिपति **तत इति**। ततः प्रमाणान्तरभूताया अनुपलब्धेर्वायौ रूपाभावप्रतीतिर्न भवतीत्येव किन्तु लिङ्गभूताया तदा च वस्त्वन्तर- 10
प्रतीतिर्नापेक्षणीयेति। **लिङ्गमपीति**। न हि तस्या एव कदाचिद्वस्त्वन्तरप्रतीति-रपेक्षणीयाऽन्यदापि युक्तमिति। ननु यथा ह्यलिङ्गदशायां मातापितृसम्बन्धश्चक्षुःसन्निकर्ष-मपेक्षते ब्राह्मण्यज्ञानेन तु लिङ्गावस्थायां तथेहापि स्यादित्याह **यथेति**। **नेति** तत्र हि ज्ञानात्मनः कार्यस्य पारोक्ष्यापारोक्ष्यलक्षणजातिभेदात् योनिसंबन्धस्येन्द्रियापेक्षा-नपेक्षयोरुपपत्तिरिह चोभयोरिति वस्त्वन्तरग्रहापेक्षतदनपेक्षानुपलब्धिकार्ययोरभावज्ञानयोः 15
पारोक्ष्याभ्युपगमेन जातिभेदाभावात् सहकारिवैचित्र्यानुपपत्तिरिति। ननु परोक्षत्वेऽपि वस्त्वन्तरग्रहणापेक्षानुपलब्धिजन्यस्य प्रकारान्तरेणाऽसौ जातिभेदो भविष्यतीत्याह **पारो-क्ष्येति**। **नेति**। पारोक्ष्यापारोक्ष्यव्यतिरेकिणो ज्ञानावान्तरजातिभेदस्याप्रामाणिकत्वादिति। **संभाव्यते इति**। यद्यपि न प्रमाणोपलम्भ इति शेषः। **संभाव्यतामिति**। न हि संभावनामात्रसिद्धं जातिभेदमाश्रित्यास्मिन् जातिभेदे वस्त्वन्तरग्रहापेक्षानुपलब्धिः कारण- 20
मस्मिंस्तु तन्निरपेक्षेति कारणनियमः शक्यनिश्चय इति।

तृतीयं हेतुमनूद्य व्याचष्टे **अज्ञातकरणत्वादिति**। साक्षादन्यत्रचरितार्थेनेन्द्रियेण जन्यमिति तत्रैवोदाहरणान्तरमाह **यथा वेति**। यदि स्मरणं साक्षान्मन इन्द्रियजं तर्हि सुखादिज्ञानवदस्य साक्षात्कारित्वानुभवत्वे न किमिति स्त इत्याह **कुत इति**।

**संस्कारेति**। न तावदनुभवत्वं संस्कारातिरिक्तासाधारणकारणाभावात्, नापि 25
साक्षात्कारित्वमिन्द्रियार्थसन्निकर्षासमुत्थत्वादिति वक्ष्यामश्चतुर्थे परिच्छेद इति। ननु आज्ञायमानकरणकेन ज्ञानेन्द्रियजेन भवितव्यमिति व्याप्तिर्भावज्ञानेषु नाभावज्ञानेष्वपीत्याह **तथापीति**। **नेति**। सामान्यतः प्रवृत्ताया व्याप्तेर्बाधकमन्तरेणाभावविषयत्वेन संकोचानु-पपत्तेस्तथापि वा संकोचेऽतिप्रसङ्ग इति। मा भूत्संकोचः तथाप्यज्ञायमानकरणकस्यैव

कस्यचिद् ज्ञानस्यानिन्द्रियजत्वे किं बाधकमित्याह **तथापीति**। बाधकमपि नोत्सर्गापवादेऽतिप्रसङ्ग इत्येतदेव बाधकं किमन्यन्मृग्यत इत्याह **नन्विदमिति**। नन्वन्यतः सिद्धायां व्याप्तावेव तद्वक्तुं युक्तं तत्सिद्धिश्च विपक्षे बाधकसद्भावादित्याशङ्क्याह **अन्यदपीति**। इह घटो नास्तीति बुद्धिरनिन्द्रियजा निर्हेतुकैव स्यात् हेत्वन्तरासंभवादिति बाधकान्तरमाह
5 **रूपादीति**। तासामनिन्द्रियजत्वमज्ञातकरणत्वाधीनसिद्धमिति भावः। तमेव स्फोरयति **न हीति**। उपलभ्यमानकरणिकास्वनुमित्यादिषु इन्द्रियस्य कारणत्वेनाव्यवस्थापनादनुपलभ्यमानकरणिकासु रूपादिबुद्धिषु तद्व्यवस्थापनादज्ञातकरणत्वमेवैन्द्रियकत्वे प्रयोजकमिति निश्चीयत इति। ननु रूपादिबुद्धीनां चक्षुरादिकरणत्वकल्पने तासां साक्षात्कारित्वमेव प्रयोजकं न त्वज्ञातकरणत्वमित्यत्राह **यद्यपीति**। रूपादिबुद्धीनां सत्यपि साक्षात्कारित्वे
10 प्रथमतः कार्यदर्शनसमय एव कारणमपेक्षमाणः कारणान्तराज्ञानेनैव चक्षुरादि कल्पयति, नतु तासां साक्षात्कारित्वमप्यनुसन्धाय, ततश्च प्रथमभाविनो ज्ञातकारणत्वस्यैव प्रयोजकत्वमिति तदेव व्यतिरेकमुखेन स्फोरयति **न हीति**। **अत एवेति**। यत एवाज्ञातकारणत्वमेव प्रयोजकमैन्द्रियकत्वे न तु साक्षात्कारित्वमत एवेति। संस्कार एव करणं स्मृतेः न तु मन इति चेत् तत्राह **संस्कारस्त्विति**। करणस्य मन इन्द्रियस्य विषयप्राप्तिरूपतया संस्कार
15 उपयुज्यते, न तु करणत्वेनेति।

तुरीयं हेतुमनूद्य व्याचष्टे **भावावेशाच्चेति**। बहिःस्मरणादन्तःसुखाद्यनुभवाच्चान्यत्र सर्वत्रेन्द्रियलिङ्गादिभावात्मककरणसहायमेव मनः प्रवर्त्तमानं दृष्टमतो व्याप्तिबलादभावानुभवेऽपि किमपि भावरूपं कारणमाविश्य मनः प्रवर्त्तत इत्यनुमीयते, तच्च कारणमिन्द्रियमेवावशिष्यत इत्यर्थः। ननु भावानामुपलम्भ एवायं नियमः, अभावानुभवे तु बहिर-
20 स्वतन्त्रमनुपलब्धिमात्रसहायं भविष्यतीत्यत्राह **न हीति**। अभावानुभवेऽपि शाब्दलैङ्गिकादौ मनसः शाब्दादिभावरूपकारणापेक्षादर्शनादिति। अन्यत्र तथादर्शनेऽपीह घटो नास्तीत्यत्रानुपलब्धिमात्रसहायं भविष्यतीत्याह **न चेति**। यद्वा भावानुभवे भावकारणापेक्षमप्यभावानुभवे तन्निरपेक्षमेव मनो भविष्यतीत्यत्र दोषान्तरमाह **न चेति**। **तथा चेति**। अपेक्षणीयत्वेनावधृतस्याभावेऽपि कार्योत्पत्त्यभ्युपगमे न किञ्चित्कस्यचित्कार्यं
25 कारणमिति वा परिगृह्येताविशेषादिति ॥ २० ॥

विवेकः

**न चेति**। प्रत्यक्षादेरित्यादिपदादनुमानपरिग्रहः। ज्ञातानुपलब्धेः तत्रैवान्तर्भावयिष्यमाणत्वादिति भावः। **प्रतिपत्तेरित्यादि**। योग्यानुपलब्धिकरणकत्वेनाभिमतं

ज्ञानमिन्द्रियकरणकं जन्यत्वे सति अपरोक्षत्वादनुपक्षीणेन्द्रियानुविधायित्वात् । अज्ञात-करणकत्वाच्च भावभूतासाधारणकरणं च तज्जन्यज्ञानत्वात् । मनसार्थान्तरवारणाया-साधारणेति । अत्र चेतरबाधादन्वयव्यतिरेकशालीन्द्रियस्यैव करणत्वं विषयीकरोतीति भावः । चेतसो जन्यज्ञानमात्रस्य भावावेशाद्भावभूतकरणत्वनियमात् । यद्वा चेतसो मनसो मानसज्ञानातिरिक्ते ज्ञाने भावभूतकरणसहकारेण ज्ञानजनकत्वनियमादित्यर्थोऽवसेयः। 5
शङ्कते । साक्षात्त्वमिति । अस्याः पक्षीभूतप्रतिपत्तेरेतेनानुपलब्धत्वं यदि ज्ञानत्व-व्याप्यजातिः स्यात् तथा च तदज्ञातकरणकवृत्तिर्न स्यात् । अन्यथा इन्द्रियमपि तदा तं साक्षात्कारिप्रत्ययमज्ञातमपि वा लिङ्गमनुमितिं जनयेदित्यर्थः । तदेव करणं यद्यज्ञातमेव तज्जातीयकार्यजनकं तदा ज्ञातं तत्करणं न स्यात् । ज्ञानात्पूर्वमेव स्वरूपसतस्तस्मात् फलोत्पत्तेः । ज्ञानस्येति तच्चेत्यर्थकं करणत्वेत्यस्य वा करणतावच्छेदकमर्थः । यथाश्रुते 10
तस्य सत्त्वे तज्ज्ञानं करणं तस्य नित्यप्रसङ्गो ध्येयः । यद्वा ज्ञानस्येति । स्वरूपसतोऽप्युपलक्षणम् । तथा च मिथो व्यभिचारात् उभयसाधारणानुगतधर्माभावाच्च तदवच्छिन्नं प्रति कारणत्वासम्भवादित्यर्थः । अत एवाह—न हीति । तद्विपरीतकरणकमज्ञातकारणकं तद्विपरीतजातीयमसाक्षात्कारविपरीतजातीयं साक्षात्कारीति यावत् ।

एतेनेति । सापि न ज्ञातानुपलब्धिजेत्यर्थः । व्याख्याता अनुमितिविजातीय- 15
भिन्नत्वेन तत्र मैत्राभावप्रश्नानन्तरमसत्यपि तदानीं गृहादिसन्निकर्षे तद्वत्तया स्मरणार्हस्येदानीमस्मरणेन प्रतिसंहितेन तत्र मैत्राभावं प्रतीत्योत्तरयति । नासीत्तत्र मैत्र इति । विस्तृतमिदमन्यत्र । तथापि ज्ञातानुपलब्धिजन्यज्ञानस्यानुमितित्वे नावान्तरजातिभेदः । साक्षात्काराद्यवृत्तिः । कारणेति । साक्षात्कारिविजातीये ज्ञानकरणकत्व-नियमेन तद्विपरीते साक्षात्कारित्वनियमादित्यर्थः । ननु यथा ज्ञानकरणकत्वाविशेषेऽप्यनु- 20
मितिशाब्दादाववान्तरवैलक्षण्यं तथाज्ञानकरणकत्वेऽप्यस्तु इत्यनुशयादुक्तम् । द्वितीयं हेतुं व्याकरोति । अनन्येति । असिद्धिं शङ्कते । अधिकरणेति । तत् इन्द्रियम् । रूपसामान्याभावस्य घटे बाधितत्वादाह—विशेषेति । तद्वृत्तियोग्यत्वमेव वैशिष्ट्यम् । शङ्कते—ममेति । तत्प्रतियोगिग्राहकमिन्द्रियं ततः वायौ । तथा च प्रतियोगिग्राहकेन्द्रियाधिकरणसन्निकर्षस्तत्सहकारी वाच्य इति भावः । 25

तथापीति । वस्त्वन्तरस्यालोकादेर्ग्रहणे प्रतियोगिग्राहकेन्द्रियस्योपयोगः । तस्य वस्त्वन्तरग्रहस्य तं भावग्रहं तथा च उक्तानिन्द्रियमन्यथासिद्धमित्यर्थः । वस्त्वन्तरग्रहणस्य भावग्रहं प्रति कारणत्वे वा । न प्रतीयादिति । त्वचा तत्र वस्त्वन्तरग्रहादिति भावः । ननु तत्र स्वशरीरप्रत्यक्षमेव त्वाचं फलबलात् कल्प्यताम् इत्यरुचेराह—प्रतीयाच्चेति

तत्र तदिन्द्रियजन्यवस्त्वन्तरग्रहणस्य भावात् । पृष्ठेति । इष्टापत्तिनिरासाय शङ्कते । **आर्जवेति** । **सन्निकर्षोऽपीति** । सत्यपि आर्जवावस्थाने सन्निकृष्टे भावाग्रहादिति भावः । इन्द्रियसन्निकर्षस्योपयोगे युक्त्यन्तरमाह—**तदेकेति** । चक्षुःसन्निकर्षमात्रं सहकारीत्यर्थः ।

5 ननु चक्षुःसन्निकर्षावच्छेदेनालोकसन्निकर्षो यत्र हेतुस्तत्र चक्षुःसन्निकर्षस्यापि विनिगमनाविरहेण हेतुत्वात् । साक्षात्त्वमत्र चार्जवावस्थानमधिकरणस्य तत्र चालोकसन्निकर्षः चाक्षुषत्वं वस्त्वन्तरग्रहणं चापेक्षते । न चैतावता साक्षात्त्वमित्यत्राह—**वातायनेत्यादि** । चक्षुःसन्निकर्षावच्छेदेनालोकसन्निकर्षस्याप्रयोजकत्वे तदुपलम्भप्रसङ्गात् । वातायनविसारितेत्यनेनाधिकरणज्ञानरूपसहकारिप्रदर्शनं चक्षुरसन्निकर्षश्चाधिकरणेन सूचितम् । 10 अत्र सति चालोकेनाधिकरणसन्निकर्षे सति च चाक्षुषे वस्त्वन्तरग्रहणमित्यपि बोध्यम् ।

चक्षुःसन्निकर्षादेरनुपलब्धिनिष्ठयोग्यताघटकतयावच्छेदकत्वेनान्यथासिद्धिं शङ्कते **तथापीति** । **तदितरेति** । प्रतियोगितद्व्याप्येतरेत्यर्थः । तेन विनापि प्रतियोगितदिन्द्रियसन्निकर्षाभावग्रहणम् । यद्यपि संयोगसाक्षात्कारे तदाश्रयप्रत्यक्षस्यापि हेतुत्वात् । तेन विनापि च संयोगानुपलब्धेर्योग्यतास्त्येवेत्यव्याप्तिः तथापि येन प्रतियोगिग्राहकेण 15 विनापि यत्र यदभावस्योपलम्भो दृश्यते तदितरत्वमेव तत्र निवेश्यम् । उक्तैक्यस्यानुपादेयत्वात् । एतन्नये च योग्यप्रतियोगिकस्यैव संसर्गाभावस्य ग्रहणम् तेन न प्रतियोगिग्राहकाप्रसिद्धिः, विवेचितमिदमन्यत्र भूयसेति नेह तन्यते । निश्चीयते । अज्ञातकरणेनानुभूयते । तद्योग्यतोपपादनम् । अवच्छेद्यावच्छेदकभावे विनिगमनाविरहात् नान्यथासिद्धिरिन्द्रियस्य इत्याह—**नन्विति** । ननु फलोपाधाननियामकं कारणानां मेलकं न तु मिलितं कारणम् । 20 कदाचिन्मिलनविशिष्टात् यत्किंचित्कारणादेव तदापत्तेः कारणतावच्छेदकपूर्ववर्त्तिताया अनपेक्षणीयत्वात्, अतस्तत्रेन्द्रियमन्यथासिद्धमित्याह—**अथेति** । एवं सति घटादिसाक्षात्कारेऽपि तथापत्तिरित्याह—**तदिति** । तदिन्द्रियम् । वातायनेत्यादिदोषं परिहरति—**अथेति** । अधिकरणेत्यस्य प्रतियोगिग्राहकेणेन्द्रियेत्यादिः । तदधिकरणघटितसन्निकर्षेणेति च बोध्यम् । तेन द्रव्यत्वादेस्तदा तथा ग्रहसत्त्वेऽपि न दोषः । यद्यप्यधिकरणग्रहस्य 25 तदिन्द्रियजन्यत्वमपेक्षणीयमित्येव शक्यम् । वायौ रूपाभावस्य चानुमेयत्वमिव तथाप्यसुरभौसौरभाभावस्य प्रभायां रक्ताभावादेरुपलम्भस्योपपत्तिरत्र ध्येया । तथानुपलब्धता निरुक्तयोग्यानुपलब्ध्या असिद्धेः अनुपलब्धिरूपलिङ्गस्याज्ञानरूपासिद्धेस्तामेवोपपादयति—**न हीति** । अभावोपलभ्यः योग्यानुपलब्धिगम्यः प्राकट्याभावेन रूपप्रकारकज्ञाततया अभावेनानुमेयः रूपवत्त्वोपलम्भाभावः निरुक्ताधिकरणवृत्तिधर्मग्रहाभावेन न तस्यापि निश्चयो वायोरित्याह—

**वायोरिति** । अनुमेयः । वायावुपलम्भाभावः । यद्यपि व्यवहाराभावोऽपि वायावुक्त-युक्त्या दुर्निरूपः । तथापि स्फुटत्वात् तदुपेक्ष्य दोषान्तरमाह—**न कार्येति** । नत्वनु-पेक्षणीयः तत्पुरुषीयोपलम्भाभाव एव तत्पुरुषीयतथाव्यवहाराभावे नानुमेयः । विषय-माहात्म्यादिति चानुपेक्षणीयत्वमित्यनुशयादाह—**मूकेति** । तथा च न तेनानुपेक्षोपलम्भा-भावानुमानसम्भव इति भावः । ननु तत्तत्पुरुषीयतदातनव्यवहाराभावस्य व्यभिचारित्वेऽपि 5 व्यवहारसामान्याभावेन तदनुमानं स्यादित्याह—**न चेति** । **अनैकान्तिकत्वादिति** । व्यवहारसामान्यशून्येऽपि उपलम्भसत्त्वादित्यर्थः । ननु निश्चिते व्यवहारसामान्यशून्यत्वे तत्रोपलम्भसत्त्वात् व्यभिचारनिश्चयः स्यात् । तन्निश्चयश्चाशक्य इत्यत्राह—**असिद्धे-श्चेति** । विपक्षवत् पक्षेऽपि तन्निश्चयाभावात् कथमनुमेत्यर्थः ।

किञ्च व्यवहारसामान्यभावो हेतुस्तद्विशेषाभावो वा? आद्येऽसिद्धिः वायौ 10 स्पर्शवत्त्वादिव्यवहारस्य सत्त्वात् अतस्तद्विशेषाभावो वाच्यः । विशेषश्च रूपवत्ताविषयकमेव व्यवहारस्य च सविषयकत्वाभावात् । तद्विषयकज्ञानजन्यत्वं तद्विषयकज्ञानजनकत्वं वा तद्वाच्यम् ज्ञानस्यापि तद्विषयकत्वं यदि तद्वृत्तिज्ञाततजनकत्वं तदा तदाश्रयप्राकट्यजनक-ज्ञानजन्यत्वादिकमेव तद्वाच्यम्, तत्र च विशेष्यीभूतव्यवहारवति विशेषणीभूतस्य ज्ञानस्य ज्ञाततया भाव एव तत्पर्यवसानं वाच्यम् । तत्राद्यद्वयं तज्ज्ञानाभावे पर्यवसन्नमन्त्यं च 15 तत्प्राकट्याभावेन । तत्र यदि ज्ञानाभावो नैव ज्ञानाभावानुमानं तदात्माश्रयः यदि च व्यवहाराभावेन ज्ञानाभावस्य ज्ञानाभावेन च व्यवहाराभावस्यानुमितिस्तदान्योन्याश्रयः । यदि च प्राकट्याभावेन ज्ञानाभावस्य ज्ञानाभावेन व्यवहाभावस्य व्यवहाराभावेन च प्राकट्याभावस्य च प्राकट्याभावेन ज्ञानाभावस्यानुमितिमानं तदा चक्रकमित्याखण्डलार्थः ।

ननु उपलम्भाभावः अज्ञात एव रूपाभावानुमापकः स्यादित्यत्राह—**न चेति** । 20 तर्ह्यनुमान एवानुपलब्धिप्रमाणान्तर्भावान्नातिरेकतेति भावः । तथात्वे गमकत्वे वह्निलिङ्गा-भावेनापि स्वरूपसत्ता वह्न्यभावगमकत्वप्रसङ्गात् ।

ननु धूमाभावो न वह्न्याभावव्याप्य इति न तथा प्राकट्याभावश्च ज्ञानाभाव-व्याप्यतया तं गमयेदित्यत्राह—**अविनाभावेति** । तस्य लिङ्गस्य ज्ञानापत्तेः । ज्ञानहेतुं नियमयति आश्रयमनुमापकीकरोति । **ज्ञानप्रत्यक्षेणेति** । तथा च योग्यानुपलब्ध्या 25 गृहीतेनैव ज्ञानाभावेन रूपाभावानुमानमित्यर्थः । **शब्देति** । शब्दध्वंसप्रत्यक्षताव्यवस्थापने नायोग्याधिकरणकाभावस्यापि अनुपलब्धिगम्यत्वात् । न वायौ रूपाभावस्यानुमेयत्वमेवेति **केचित्** । **परे** तु तद्यथा पक्षादिविकल्पेनानुमानं दूषितं तथात्रापीत्यर्थ इत्याहुः । तत्र चोपलम्भाभावस्याग्रहत्वे रूपाभावेन किमपराद्धमिति भावः **इत्यपरे** । **तद्रहिताया इति** ।

तथाविधधर्मग्रहाभावप्रयुक्तत्वस्याभावोपलब्धिव्यतिरेकग्रहादित्यर्थः । **प्रयुक्तश्च क्षेमसाधारणकार्यताविशेषः व्याप्तीति** । एषा चान्वयमुखी नातः पौनरुक्त्यमिति ध्येयम् । निरुक्तधर्मप्रतीतिमेवम्भूतत्वात् व्याप्यतावच्छेदकावच्छिन्नत्वात्तत्कारणकः । निरुक्तधर्मप्रतीतिहेतुकः तद्व्यापको वा न भवेत् ततः अनुपलब्धेः न भवति वायौ रूपाभावप्रत्ययः । 5 तत्करणज्ञान एव तस्या हेतुत्वात् व्यापकत्वाच्चेति भावः । तर्हि कुतः सेत्यत आह—**लिङ्गादति** । ज्ञानानुपलब्धिरूपादित्यर्थः । सैवानुपलब्धिरेव । तथा च व्यभिचार एवेति भावः । तस्याश्चोपलम्भो न सम्भवतीति प्रागेवोक्तम् । यद्यपि तथापि स्फुटत्वात्तदुपेक्ष्य व्यभिचार एवोपदर्शित इति ध्येयम् । **न तत्त्वान्तरमिति** । तदानीं ज्ञायमानं लिङ्गान्तरम् नास्तीत्यर्थः । व्यभिचारमुद्धरति—**यथेति** । योनिसम्बन्धःब्राह्मणमातापितृकत्वज्ञानम् 10 अलिङ्गदशायामनुमितिसामग्र्यप्रविष्टत्वदशायाम् तं ब्राह्मणेन्द्रियसन्निकर्षं तदनपेक्षः ब्राह्मणेन्द्रियसन्निकर्षानपेक्षः तथैव स्यादनुपलब्धिरप्यज्ञायमानतादशायां निरुक्तधर्मप्रतीतिमपेक्षते न ज्ञायमानतादशायामिति स्यात् । **कार्येति** । ब्राह्मण्यज्ञानरूपं यत्कार्यं तत्र प्रत्यक्षत्वानुमितित्वरूपजातिभेदादिन्द्रियसन्निधिसापेक्षत्वात् । नापेक्षयोरुपपत्तेरित्यर्थः । तदनभ्युपगमात् । **कार्ये जातिभेदानुपगमात्** । **पारोक्ष्यापारोक्ष्य इति** । दृष्टान्ते यदनुमितिरूपं पारोक्ष्यं 15 प्रत्यक्षरूपञ्चापारोक्ष्यजातिभेदः अनुपलब्धज्ञाने तदभावेऽपि भूतले घटाभावप्रतीताववान्तरजातिभेदोऽस्ति यत्र निरुक्तधर्मग्रहापेक्षा वायौ रूपाभावप्रत्यये तदनपेक्षेत्यर्थः । असौ अनुपलब्धप्रत्ययः । **अनुपलम्भादिति** । प्रत्यक्षत्वजातिविरुद्धानुपलब्धत्वजातेरनुपलम्भादित्यर्थः तथा च क्वानुपलब्धेःकरणत्वमिति भावः । यद्वा भूतले योग्यघटाभावोपलम्भस्तत्र वायौ रूपाभावप्रतीतिव्यावृत्तजातिभेदानुपलम्भात् । तथा च कुत्र तथाविधधर्मप्रतीतेर्हेतु- 20 त्वमिति भावः । सम्भाव्यते सन्दिह्यते निरुक्तजातिभेदः । सम्भाव्यतामिति । कार्यजातिभेदसम्भावनया तत्करणसम्भावनायामपि न प्रमाणान्तरावधारणमित्यर्थः ।

तृतीयं हेतुं व्याकरोति—**अज्ञातेति** । **यदिति** । ज्ञायमानकरणाजन्यं यद्यज्ञानं **तत्साक्षादिन्द्रियजम्** असाधारणेन्द्रियकरणकवृत्तिज्ञानव्याप्यजातिमत्त्वं साध्यम् । तथा च हेतावनुपादेयं जन्यत्वम् । **यथा वेति** । एतच्च स्मृतौ मनसोऽसाधारणकरणतानयमा- 25 श्रित्य । कुतस्तर्हीत्यनन्तरं स्मरणमित्यनुषज्यते । निरुक्तहेतुना साक्षात्त्वे साध्ये संस्कारजन्यत्वमुपाधिरित्यर्थः ।

**प्रकृत इति** । उपाधिं शङ्कते—**भावेति** । अभावाविषयत्वमित्यर्थः । अभावाज्ञानाजन्यत्वपक्षधर्मतावच्छिन्नसाध्यव्यापकश्चेदम् तेनोपनयवशादभावस्य प्रत्यक्षविषयत्वेन न साध्याव्यापकत्वं नोपेयेते च तैः सामान्यलक्षणायोगजप्रत्यासत्ती अतो न तज्जन्यत्व-

ज्ञाने साध्यव्यापकत्वमिति ध्येयम्। **अन्यथेति**। परामर्शादिजन्यत्वे नाभावानुमितावनुमितित्वादिसाधनेऽपि तस्योपाधित्वं स्यादित्यर्थः। इदमेवौत्सर्गिकत्वमेव। **अकारणकेति**। अज्ञातकरणकज्ञानसामान्ये इन्द्रियस्य कारणत्वात्। तद्भिनाऽभावप्रत्ययो न स्यादित्यर्थः। इत्थमनुपगमे रूपाद्युपलब्धीनामपि इन्द्रियकरणत्वं प्रामाणिकं न स्यादित्यर्थः। **तत्रैव पर्यवस्यति**। इन्द्रियकरणत्वे पर्यवस्यत्येव साधकतामाप्नोत्येव। तथाप्यभावोपलब्धौ साक्षात्कारित्वस्य सन्दिग्धतयाऽज्ञातकरणकानुभवत्वेन तत् तत्र प्रसाध्य हेतुकर्तव्यं तथा चावश्यकत्वात्तदेव तत्र हेतुकृतमित्यक्षरतात्पर्याभ्यामाह—**तथापीति**। व्याप्तिग्राहकं तर्कमाह—**न हीत्यादि**। **उपलभ्यमान इत्यादि**। न हि ज्ञानकारणके आत्मतत्त्वसाक्षात्कारादौ साक्षात्त्वे सत्यपीन्द्रियं तेन कल्पयितुं शक्यते परिशेषासम्भवादपि तु अज्ञातकरणके रूपाद्युपलम्भ एव तत्त्वेन तथा चेन्द्रियकल्पने तदेव प्रयोजकमित्यर्थः। यत एव इन्द्रियकल्पने तत्प्रयोजकमत एव विनापि साक्षात्त्वमज्ञातकरणत्वेन स्मृतेरपि मनःकरणकत्वमिच्छन्तीत्याह—**अत एवेति**। ननु विना प्रत्यासत्तिं कथमिन्द्रियस्य करणतेत्याह—**संस्कारस्त्विति** :

चतुर्थं हेतुं व्याचष्टे—**भावावेशाच्चेति**। भावभूतासाधारणकरणसहकारेणैव मनसो मानसातिरिक्तानुभवजनकत्वमिति व्याप्तेः। भावभूतकरणमवश्यमभावोपलब्धौ वाच्यम्। तथा चानुलब्धेः सहकारित्वमात्रं कल्प्यते न तु करणत्वमित्यर्थः। वाच्यानुभवे मानसभिन्नानुभवे तेन तदसहकारेण मानसाज्ञानस्मृतिजनकतया चेतसो न व्यभिचार इति भावः। प्रमाणाविष्टं तत्सहकृतं तथैव तादृशकरणसहकारेणैव चेतसः शक्तेः निरुक्तज्ञानजनकत्वस्यान्वयव्यतिरेकाभ्यां निश्चयात्।

ननु भाव एव तस्य भावभूतकरणसहकारित्वं न त्वभाव इत्याशङ्क्याह—**न हीति**। अनुपलब्धिमात्रेण भावभूतासाधारणव्यवच्छेदः। अभाव इत्यत्र सप्तम्यर्थो विषयता। यद्यपि व्याप्तौ भावांशस्य व्यर्थतान्यथा क्वचिदिन्द्रियसहकारिकत्वदर्शनात् व्याप्तिज्ञानादेरपि करणता न स्यात्। तथाप्युक्तवक्ष्यमाणयुक्त्यवष्टम्भेनेदमपि प्रमाणतामासादयतीत्यभिप्रायेणेदमिति ध्येयम्॥ २०॥

अपि च

**प्रतियोगिनि सामर्थ्याद्व्यापाराव्यवधानतः ॥**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ॥ २१ ॥**

यद्धि प्रमाणं यद्भावावगाहि, तत् तदभावावगाहि यथा लिङ्गं शब्दो वा। घटाद्यवगाहि चेन्द्रियमिति। अन्यथा हि शब्दादिकमपि नाऽभावमावेदयेद्, भाव एव सामर्थ्यावधारणात्। न चैवमेव न्याय्यम्। देवदत्तो गेहे नास्तीति शब्दात्, मया तत्र जिज्ञासमानेनापि न दृष्टो मैत्र इत्यवगतानुपलब्ध्यानुमानादप्यवगतेः। ग्राहयतु वाश्रयमिन्द्रियम्। तथापि न तेनेदं व्यवधीयते व्यापारत्वात्, अन्यथा सर्वसविकल्पकानां प्रत्यक्षत्वाय दत्तो जलाञ्जलिः स्यात्।

नन्वेवं सति धूमोपलम्भोऽप्यस्य व्यापारः स्यात्, तथा च गतमनुमानेनापीति चेन्न। यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्। न च धूमाद्युपलब्धिमन्तरेण चक्षुषो वह्निज्ञानकारणत्वं न निर्वहति, संयोगवदिति।

अस्ति च भावाभावविपर्ययः। सोऽयं यस्य दोषमनुविधत्ते, तदेवात्र करणमिति न्याय्यम्। न चानुपलब्धिः स्वभावतो दुष्टा, नाप्यधिकरणग्रहणं प्रतियोगिस्मरणं वा स्वभावतो दुष्टम्। अनुत्पत्तिदशायामनुत्पत्तेरुत्पत्तिदशायाञ्च स्वार्थप्रकाशनस्वभावताया अपरावृत्तेः। असंसृष्टयोरधिकरणप्रतियोगिनोः संसृष्टतया प्रतिभानं दुष्टम्, संसृष्टयोश्चासंसृष्टतयेति चेत्। नन्वयमेव विपर्ययः। तथा च आत्माश्रयो दोषः। तस्माद् दुष्टेन्द्रियस्य तद्विपर्ययसामर्थ्ये अदुष्टस्य तत्समीचीनज्ञानसामर्थ्यमपि। तथा च प्रयोगः—इन्द्रियमभावप्रमाकरणं, तद्विपर्ययकरणत्वात्, यद् यद्विपर्ययकरणं तत् तत्प्रमाकरणं यथा रूपप्रमाकरणं चक्षुरिति।

विकल्पनात् खल्वपि। अघटं भूतलमिति हि विशिष्टधीरवश्यमिन्द्रियकरणिका स्वीकर्त्तव्या प्रमाणान्तरं वा सप्तममास्थेयम्। यथा हि विशेष्यमात्रोपक्षीणमिन्द्रियमकरणमत्र, तथा विशेषणमात्रोपक्षीणा अनुपलब्धिरपि न करणं स्यात्। स्वस्वविषयमात्रप्रवृत्तयोः प्रमाणयोः समाहारः कारणमिति चेन्न। विषयभेदे फलवैजात्ये च तदनुपपत्तेः। न हि मृत्सु तन्तुषु च व्याप्रियमाणयोः कुलालकुविन्दयोः समाहारः स्यात्। नापि घटपटादिकारिणां चक्रवेमादीनां समाहारः क्वचिदुपयुज्यते। तत्र कर्बुरकार्याभावान्न तथा, प्रकृते तु विशिष्टप्रत्ययस्य परोक्षापरोक्षरूपस्य दर्शनात्तथेति चेन्न। विरुद्धजातिसमावेशाभावात्। भावे वा करम्बित एव कार्ये द्वयोरपि शक्तिरभ्युपगन्तव्या दर्शनबलात्, न हि नियतविषयेण सामर्थ्येन कर्बुरकार्यसिद्धिः। अन्यत्रापि तथाप्रसङ्गात्। ननूभयोरप्युभयत्र सामर्थ्ये कोऽर्थो मिथःसन्निधानेनेति चेन्न। तत्सन्निहितस्यैव तस्य तत्र सामर्थ्यादिति। एतेन सुरभि चन्दनमित्यादयो व्याख्याताः। तथाचाभावविषयेऽपीन्द्रियसामर्थ्यस्य दुरपह्नवत्वादलमसद्ग्रहेणेति ॥ २१ ॥

आमोदः

किञ्चाभावप्रमायामिन्द्रियाण्येव करणमित्याह—प्रतियोगिनीति। अधिकरणग्रहे च नेन्द्रियमन्यथासिद्धमित्याह—व्यापारेति। अक्षाश्रयत्वादिति। येन दुष्टेन यदप्रमा जन्यते तेनैवादुष्टेन तत्प्रमापीत्यन्यत्र दृष्टमिह च इन्द्रियमेव दुष्टमभावप्रमाजनकमनुपलब्धेर्दोषाभावात्; तथा चाभावप्रमापि तेनैव जननीयेत्यर्थः। इन्द्रियाणि करणमिति शेषः। विकल्पनादिति। घटाभाववद् भूतलमिति विशिष्टज्ञानस्य भावविषयत्वेनानुपलब्धिजन्यत्वाभावादिन्द्रियमेव करणं वाच्यम्। तथा चाभवांशेऽपि तदेव करणमित्यर्थः।

यद्धीति। उपमानभिन्नमितिशेषः। तेनोपमानेन व्यभिचारः। घटाद्यभावावगाहि चेन्द्रियमित्युपनयः। तस्मात्तदभावावगाहीति निगमनं बोध्यम्। अन्यथा हीति तत्रापि प्रमाणान्तरं कल्पनीयं स्यादित्यर्थः। न चैवमेवेति। शब्दादीनामभावाग्राहकत्वमेवेत्यर्थः। ग्राहयतु वेत्यनास्थायाम्, अधिकरणसाहित्येनैवाभावग्रहणान्नाधिकरणग्रहपुरःसरमेवाभावज्ञानमिति भावः। अन्यथा इन्द्रियसन्निकर्षेण निर्विकल्पकेन वा व्यवहितमिन्द्रियमपि सविकल्पकं न जनयेदित्याह—अन्यथेति। धूमोपलम्भ इति। तृतीयलिङ्गपरामर्श इत्यर्थः। अस्येति। चक्षुष इत्यर्थः। लिङ्गपरामर्शो न चक्षुर्व्यापारः, तेन विनापि इन्द्रियेण लैङ्गिकज्ञानजननादित्याह—यथेति। क्रियापदं व्यापारपरम्। संयोगवदिति। व्यतिरेकदृष्टान्तः, इन्द्रियसंयोगवदित्यर्थः। तन्तुसंयोगवदिति वा। अक्षाश्रयत्वादिति व्याचष्टे अस्ति चेति। अनुपलब्धिरेव दुष्टा स्यादित्याह—न चेति। स्वभावत इति। इन्द्रियगतदोषद्वारा तु दुष्टैवेत्यर्थः। एवमुत्तरत्रापि। न च चक्षुर्गतपित्तादिसहकारितैवानुपलब्धेर्दुष्टत्वमिति वाच्यम्। विवादपदमभावभ्रम इन्द्रियजन्यः लिङ्गाभासाद्यजन्यभ्रमत्वादित्यत्र तात्पर्यात्। अनुत्पत्तीति। अभावादेव तदा दुष्टत्वाभावादित्यर्थः। उत्पत्तीति। स्वार्थविषयकस्य तदानपायात् क्व दुष्टत्वमित्यर्थः। अभाववति भावविपर्ययमधिकृत्य दोषमाह—असंसृष्टयोरिति भाववत्यभावविपर्यये दुष्टत्वमाह—संसृष्टयोरिति। नन्विति। सम्बोधने प्रतिभासनमिह विपर्ययः, न च स एव दोषः सन् आत्मानमपि जनयतीत्यर्थः। स्वाभिमतमुपसंहरति तस्मादिति। अभावप्रमाकरणमिति। विवादाध्या-

सिताभावप्रमाकरणमित्यर्थः । अतो न भागबाधः । यद्यदिति । दोषस्य करणत्वाभावान्न तेन व्यभिचार इति भावः । इदं खल्वपीति । निपात-समुदाय उदाह्रियत इत्यर्थः । अघटमिति । भावविशेष्यिका अभावविशेषणिका धीरित्यर्थः । यथेति । इन्द्रियानुपलम्भयोः प्रत्येकमात्रसामर्थ्यादित्यर्थः ।
5 नन्विन्द्रियसंस्कारयोर्यथा प्रत्यभिज्ञानजनकत्वं तथेहेन्द्रियानुपलम्भयोः स्यादित्याह—स्वस्वेति । विषयभेद इति । घटयोर्भावाभावमात्रविषय-पर्यवसन्नत्वात् न विशिष्टावगाहनसामर्थ्यमित्यर्थः । फलभेद इति । इन्द्रि-यस्यापरोक्षज्ञानं फलम्, अनुपलब्धेस्तु परोक्षमित्यर्थः । प्रत्यभिज्ञाने तु संस्कारस्य करणत्वभावादिन्द्रियस्यैव करणत्वमतः सर्वांशे साक्षात्कारित्वम् ।
10 तत्त्वांशे च इन्द्रियसम्बद्धविशेषणतैव प्रत्यासत्तिरिति भावः । विषयभेदो-दाहरणमाह—मृदिति । फलभेदोदाहरणमाह—घटेति । तत्रेति । अकर्बु-रत्वं घटपटात्मकस्य कार्यस्य, प्रकृते तु कर्बुरत्वमेवेत्याह—प्रकृत इति । अत्रापि न कर्बुरत्वं बाधादित्याह—विरुद्धेति । अभ्युपेत्याह—भावे वेति । तथा च अभावांशेऽपि चक्षुषः सामर्थ्यं त्वयावगतमिति सिद्धं समीहितमित्यर्थः ।
15 अन्यत्रापीति । घटपटादावपीत्यर्थः । कोऽर्थ इति । केवलेनेन्द्रियेणानुप-लम्भेनैव वा विशिष्टप्रत्ययसम्भवादित्यर्थः । तत्सहितस्यैवेति । अनुपलब्धि-सहितस्यैवेन्द्रियस्य विशिष्टबुद्धौ सामर्थ्यादित्यर्थः । एतेनेति । सौरभविशेष-णत्वेऽपि चन्दनविशेष्यकत्वेन तदपि चाक्षुषमित्यर्थः । तथा चेति । यथा सुरभि चन्दनमित्यत्र सौरभांशेऽपि चाक्षुषत्वं तथात्राप्यभवांशेऽपि चाक्षुष-
20 त्वमित्यर्थः ॥ २१ ॥

### बोधनी

अपरानपि चतुरो हेतूनुपन्यस्यति अपि च प्रतियोगिनीति । इन्द्रियाणि पक्षः, अभावज्ञानकारणमिति साध्यमध्याहार्यमभावप्रतियोगिनि घटादौ समर्थत्वात् शब्दलिङ्गादि-न्द्रियस्यावान्तरव्यापारत्वादधिकरणग्रहणेन व्यवधानाभावात् । इदं चाभावग्रहणेऽधिकरण-ग्रहणस्योपयोगमङ्गीकृत्योक्तम्, अभावविषयविपर्ययज्ञानहेतूनां दोषाणामिन्द्रियाश्रयत्वात्
25 अघटं भूतलमिति विशिष्टबुद्धेरिन्द्रियहेतुत्वाच्चेति । तत्राद्यं व्याचष्टे यद्धीति । भावग्राहिणः प्रमाणस्य तदभावेऽपि सामर्थ्यानङ्गीकारेऽनिष्टमाह अन्यथेति । शब्दादेरप्यभावाना-पादकत्वमस्त्वित्यत्राह न चैवमेवेति । मैत्रो नास्तीत्याप्तवाक्यावगतानुपलब्धिलिङ्गादपि

तदभावावगतेरिति । द्वितीयं विवृणोति । **ग्राहयत्विति** । आश्रयग्रहणव्यापृतमपीन्द्रियमभावबुद्धेः कारणं तस्येन्द्रियस्यावान्तरव्यापारत्वेन तदव्यवधायकत्वादिति । यद्यवान्तरव्यापारोऽपि व्यवदध्यात् ततः सविकल्पकज्ञानानां प्रत्यक्षत्वं न स्यात् निर्विकल्पकज्ञानव्यवहितत्वादिन्द्रियस्येत्याह **अन्यथेति** । यदि व्यवधानेऽपीन्द्रियमेवाभावज्ञाने कारणं स्यात् तर्ह्यवान्तरव्यापारीकृतधूमज्ञानमिन्द्रियमेवाग्निं ग्राहयेत्, तत्र चाभावप्रमाणवदनुमानमपि दत्तजलाञ्जलिः 5 स्यादित्याह **नन्विति** । तदवान्तरव्यापारलक्षणमपि दृष्टोपवल्गितमित्याह **नेति** । न हि यद्येन जन्यते तत्सर्वं तस्य व्यापारः, किन्तु येन विना यस्य यदुत्पादनं न संभवति स एव तस्य कारणस्य तस्मिन् कार्ये जनयितव्येऽवान्तरव्यापारः । न च वह्निसंयोगमन्तरेणेव धूमोपलम्भमन्तरेण चक्षुर्न वह्निज्ञानमुत्पादयति पुरोवर्तिनि वह्नौ तमन्तरेणैव तदुत्पादनदर्शनादिति । 10

तृतीयं विवृणोति **अस्ति चेति** । अस्ति तावद्विद्यमान एव वस्तुनि नास्तीति विपर्ययात्मकोऽभावप्रत्ययः यस्मिन् दुष्टे सति भवति तदेवादुष्टसमीचीनाभावज्ञानकारणं भवितुं युक्तमिति । ततः किमायातमिन्द्रियकरणत्वस्येत्यत्राह **न चेति** । न तावदनुपलब्धेरभावात्मिकायाः दोषाश्रयत्वं संभवति । न चाधिकरणग्रहणस्य प्रतियोगिस्मरणस्य वा स्वगतो दोषः संभवति । कार्यप्रतिबन्धको हि दोषः, तयोस्तावदुत्पन्नयोरर्थप्रकाशात्मनः 15 कार्यस्य केनापि प्रतिबन्धायोगात् अनुत्पन्नयोश्च कार्याभावस्य स्वभावनिबन्धनत्वेन दोषानधीनत्वात्तस्मादिन्द्रियदोषादेवाभावविपर्यय इति शिष्यत इति भावः । दुष्टं हेत्वन्तरमाशङ्कते **असंसृष्टयोरिति** अभावे भावविपर्ययो दृष्टान्तार्थ इति । **नन्वयमिति** । तथा प्रतिभानमेव विपर्ययो न त्वन्यस्तावत्साध्यः, तथा च ततो विपर्ययोत्पत्तौ विपर्ययादेव विपर्ययः स्यादिति परिशेषसिद्धमर्थमुपसंहरति **तस्मादिति** । उक्तमर्थं प्रयोगमारोपयति 20 **तथा चेति** ।

चतुर्थं हेतुं व्याचष्टे **विकल्पनादिति** । नन्विन्द्रियस्य विशेष्यभूतभूतलोपक्षेप्यभावप्रमाणेन विशिष्टधीः सेत्स्यति किं सप्तमेनेत्यत्राह **यथा हीति** । **अत्रेति** । अघटं भूतलमिति विशिष्टबुद्धावित्यर्थः । ननु प्रत्येकासामर्थ्ये तयोः समाहारः कारणमस्तु न तु सप्तमस्यावकाश इत्याह **स्वस्वविषयेति** । **नेति** । भावाभावरूपविषयभेदे परोक्षापरोक्ष- 25 लक्षणफलवैजात्ये च सति येनेन्द्रियानुपलब्ध्योः समाहारः संभवतीति विषयभेदे फलवैजात्ये च समाहाराभावमेवोदाहरणेन दर्शयति **न हीति** । ननु तत्रोदाहरणे कर्बुरस्य घटपटात्मकस्य कार्यस्याभावात्समाहाराभावः न तु विषयभेदात्फलवैजात्याद्वा, इह स्वभावविशिष्टे भावविषयस्यानुपलब्धीन्द्रिययोरनुगुणपरोक्षापरोक्षात्मनः प्रत्ययस्य दर्शनाद्युक्तः

समाहार इत्याह **तत्रेति । नेति ।** न हि मिथोविरुद्धे परोक्षापरोक्षत्वे एकत्र ज्ञाने समाविशत इति दर्शनबलात्समावेशाङ्गीकारे तत्र विशिष्टकार्येऽनुपलब्धेरिन्द्रियत्वद्वयोरपि शक्तिरङ्गीकार्या, तदा च प्रत्यभिज्ञानवत् प्रत्यक्षफलमेव ज्ञानं भवेदिति भावः । ननु स्वस्वविषयमात्रपर्यवसितयोरेव समाहारः कारणमस्तु किं शक्त्यन्तरकल्पनयेत्यत्राह
5 **न हीति ।** प्रत्यभिज्ञादावपि नियतविषययोरेव संस्कारेन्द्रिययोः समाहारादेव सिद्धे-रिन्द्रियशक्तिकल्पनं न स्यादिति । नन्वनुपलब्धीन्द्रिययोः प्रत्येकं भावाभावविषय-शक्त्यभ्युपगमेऽन्यतरेणैव विशिष्टधीसिद्धेः किं परस्परसाहित्येनेत्याह **नन्विति । नेति ।** अनुपलब्धिसहितस्यैवेन्द्रियस्य तत्र शक्तिर्न केवलस्य, न चान्यसाहित्यमात्रेणै-न्द्रियकत्वविरोधः प्रत्यभिज्ञानादिवदिति । सुरभि चन्दनमित्यादिप्रत्ययेष्विवात्रापि समाहारः
10 कारणं स्यादित्याशङ्क्याह **एतेनेति ।** अन्यसहितस्येन्द्रियस्य विशिष्टधीहेतुत्वप्रतिपा-दनेन तेऽपि प्रत्यया गन्धादिज्ञानसहकृतया त्वचा चक्षुषा वा जायन्ते न त्विन्द्रिय-समाहारेणेति व्याख्यात इति । एवमुक्तप्रकारेण विशिष्टज्ञान इवेन्द्रियस्याभावेऽपि सामर्थ्यमवर्जनीयमित्युपसंहरति **तथा चेति ॥ २१ ॥**

विवेकः

यद्वा इत एवारुचेराह—**प्रतियोगिनीत्यादि ।** इन्द्रियाणि अभावोपलब्धिकरण-
15 तावच्छेदकवन्तीति च प्राकरणिकं साध्यं बोध्यम् । प्रतियोगिनि सामर्थ्यात् । प्रतियोगि-ग्राहकवृत्तिप्रमाणतावच्छेदकवत्त्वादित्यर्थः । साध्येऽवच्छेदकोपादानात् न व्यक्तिविशेषे व्यभिचारः । अत्र च विशिष्य रूपतदभावौ हेतुसाध्ययोः अभावप्रतियोगितया निवेश्यौ तेन शक्यतावच्छेदकत्वाभावग्राहकतावच्छेदकशून्ये उपमाने न व्यभिचारः ।

नन्वधिकरणग्राहकान्यथासिद्धस्येन्द्रियस्य तत्र कारणताभावात् कथमनुमिति-
20 रित्यत्राह—**व्यापारेति । अक्षेति ।** तद्भ्रमकारणीभूतदोषाश्रयत्वादित्यर्थः । दृश्यते हि शैत्याभावमात्रे तु पित्तदोषाश्रयत्वं चक्षुरादेरिति घटाभाववद् भूतलमिति बुद्धिविशेषः नेन्द्रियातिरिक्तसाधारणकरणकः इन्द्रियासाधारणकरणकत्वात् रूपप्रत्यक्षवदित्यत्र स्वरूपा-सिद्ध्यप्रयोजकत्वशङ्कायामाह—**विकल्पनादिति ।** स चेदनुपनुपलब्धिमात्रकरणकः तदा भूतलविषयता न स्यात् । यदि चोभयकरणक एव तदा जात्योः सङ्करो व्याप्यवृत्तित्वं
25 वा इति इन्द्रियकरणकत्वमिन्द्रियातिरिक्ताकरणकत्वञ्च तत्रावश्यमुपेयमिति नोक्तदोष इति भावः । **व्यापारत्वादिति ।** अधिकरणज्ञानं नेन्द्रियव्यवधायकं तद्व्यापारत्वात् संयोगवदित्यर्थः । अन्यथा तज्जनकतयैवान्यथासिद्धत्वे सविकल्पकस्य इन्द्रियजन्यनिर्विकल्प-

कजन्यत्वेन तत्र इन्द्रियाहेतुत्वप्रत्यक्षत्वं न स्यादित्यर्थः। अस्य इन्द्रियस्य क्रियया अजनने तथा च यद्धर्मावच्छिन्नं जनयित्वैव यद्धर्मावच्छिन्नं जनयति तदेव तत्र तस्य व्यापारो न च चक्षुरादेर्धूमोपलम्भस्तथेत्यर्थः **संयोगवदिति**। व्यतिरेकदृष्टान्तः। वस्तुद्वय-संयोगवदित्येके। यद्यपि विनापि संयोगं धूमोपलम्भत्वद्वारापि इन्द्रियस्य हेतुत्वात् संयोगोऽप्यव्यवधायको न स्यात् इति शक्यत एव वक्तुं। तथापि अतीतानागत-स्थले धूमोपलम्भस्य व्यापारत्वासम्भवे तात्पर्यम्। **अस्ति चेति**। यद्यपि दृष्टदुष्टत्वं दोषसहकारेण तत्तद्भ्रमजनकत्वं तद्व्याप्यविशिष्टमन्यथा पदज्ञानादेः दुष्टत्वं न स्यात्। स्वरूपतो विषयतः वैलक्षण्याभावात्, तथापि शंखो न श्वेत इति ज्ञाने चक्षुर्निष्ठपित्तदो-षजन्यत्वेन पीतः शंख इति भ्रमवच्चक्षुर्जन्यत्वानुमाने तात्पर्यम्। स्वभावदुष्टा पित्तदोषवती। **स्वार्थेति**। तथा च न विषयकृतं दुष्टत्वमिति भावः। **असंसृष्टयोरिति**। तथा च बाधितविषयतया विषयकृतमेव तदिति भावः। **नन्वयमिति**। अधिकरणप्रति-योगिनोरुपादानं दृष्टान्ततया न तु प्रकृते तस्य तथात्वं विवक्षितमिति ध्येयम्। **तद्विपर्ययेति**। अभावविपर्ययेत्यर्थः **यदिति**। चाक्षुषम् अभावप्रमाकरणवृत्ति अभावभ्रमकरणवृत्तिजातित्वात् ज्ञानत्ववदित्यर्थः। यथाश्रुते व्यक्तिभेदव्यभिचारात् अभावभ्रमदोषमात्रजातिविशेषसम्भवे तु न तस्यास्तद्भ्रमकरणवृत्तित्वमिति न व्यभिचारः। इन्द्रियानुपलब्ध्योरधिकरणाभावरूपस्वविषयकज्ञानजनकं परस्परसहकारेणार्थसमाज-सिद्धमित्याशङ्कते—**स्वस्वेति**। करणं फलोपधाननियामकम्, यद्वा कृदभिहितो भाव इति न्यायात् समाहृते प्रमाणे तथेत्यर्थः। **विषयभेद इति**। इन्द्रियस्याभावेऽनुप-लब्धेश्च भावे पर्यवसन्नत्वात् सहकारित्वमनयोः। **फलेति**। तज्जातीयज्ञानम्प्रति तस्य करणत्वात्। नत्वेकं ज्ञानं तादृशोभयजातीयं जात्योः सङ्करप्रसङ्गात् अव्याप्यवृत्तित्व-प्रसङ्गाद्वेत्यर्थः। विषयभेदे फलाभावोदाहरणमाह—**मृदिति**। फलवैजात्येन च तदाह **नापीति**। शङ्कते—**तत्रेति**। कर्बुरत्वं घटपटमेकत्वम्। **विरुद्धेति**। परस्प-रात्यन्ताभावसमानाधिकरणेत्यर्थः। परोक्षत्वस्य जातित्वाभावेऽपि परोक्षत्वव्याप्यानुप-लब्धत्वस्य तैस्तथात्वमुपेयत इति भावः। अव्याप्यवृत्तित्वे वा तात्पर्यम्। **करम्बित एवेति**। तथा चाभावांशेऽपीन्द्रियस्य करणत्वोपनये सिद्धमेवेहितमिति भावः। अन्यत्र घटपटादावपि। तथा च क्व साङ्कर्यस्यापि दोषत्वमिति भावः। **कोऽर्थ इति**। एकेनाप्युभयत्र समर्थेन फलसम्भवादिति भावः। **एतेनेति**। तत्रापि सौरभांशे चक्षुष एव प्रमाणत्वादिति भावः॥ २१ ॥

स्यादेतत्, नागृहीते विशेषणे विशिष्टबुद्धिरुदेति, तत्कार्यत्वात्। न च विशिष्टसामर्थ्ये केवलविशेषणेऽपि सामर्थ्यम्, केवलसौरभेऽपि चक्षुषो वृत्तिप्रसङ्गात्। अतोऽभावविशेषणग्रहणाय मानान्तरसम्भवः।

अपि च कथमनालोचितोऽर्थ इन्द्रियेण विकल्प्येत ?। न च मानान्तरस्याप्येषा रीतिः। अनुमानादिभिरनालोचितस्याप्यर्थस्य विकल्पनात्। अप्राप्तेश्च। न ह्यभावेनेन्द्रियस्य संयोगादिः सम्भवति। न च विशेषणत्वं, सम्बन्धान्तरपूर्वकत्वात् तस्य। अवश्याभ्युपगन्तव्यत्वाच्चानुपलब्धेः, न हि तदुपलब्धौ, तस्याभावोपलम्भ इति चेत्। उच्यते—

**अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ॥**
**प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः ॥ २२ ॥**

स ह्यर्थविशेषणीभविष्यन् केवलोऽपि विस्फुरेद् यस्यावच्छेदकज्ञानं न व्यञ्जकम्। स च विकल्पयितव्य आलोच्यते, यो विशेषणज्ञाननिरपेक्षेणेन्द्रियेण विज्ञाप्यते। यस्तु तत्पुरःसर एव प्रकाशते, तत्र तस्य विकल्पसामग्रीसमवधानवत एव सामर्थ्यान्नायं विधिः। स्वभावप्राप्तौ सत्यामत्यधिका प्राप्तिः प्रतिपत्तिबलेन रूपादावभ्युपगता, इह त्वनवस्थादुस्थतया न तदभ्युपमो, न तु स्वभावप्रत्यासत्तिरेतावतैव विफलायते। न चेदेवं प्रमाणान्तरेऽपि सर्वमेतद् दुर्घटं स्यात्। तथा हि—सर्वमेव मानं साक्षात्परम्परया वा निर्विकल्पकविश्रान्तम्। न ह्यनुमानादिकमप्यनालोचनपूर्वकम्। ततोऽनालोचितोऽभावः कथमनुपलब्ध्याऽपि विकल्प्येत। न च तया तदालोचनमेव जन्यते, प्रतियोग्यनवच्छिन्नस्य तस्य निरूपयितुमशक्यत्वात्, शक्यत्वे वा किमपराद्धमिन्द्रियेण। तथा सम्बन्धान्तरगर्भत्वनियमेन विशेषणत्वस्य, मानान्तरेऽपि कः प्रतीकारः? तदभावस्य तदानीमपि समानत्वात्। परस्य तादात्म्यमस्तीति चेत्। ननु यद्यसावस्ति, अस्त्येव, न चेन्नैव। न ह्यभ्युपगमेनार्थाः क्रियन्ते, अनभ्युपगमेन वा निवर्त्तन्ते इति। अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिद्ध्येद्, न तु मानान्तरत्वम्। अन्यथा भावोपलम्भेऽप्यभावानुपलब्धिरेव प्रमाणं स्याद्, नेन्द्रियम्। अभावोपलम्भे भावानुपलम्भवद् भावोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति॥ २२॥

### आमोदः

ननु सौरभस्य चाक्षुषत्वेऽपि तदुपनायकं घ्राणं प्रमाणान्तरमेव तथाभावस्य विशेषणस्य ग्रहार्थमनुपलब्धिः प्रमाणं स्यादिति शङ्कते—स्यादेतदिति। किञ्चेन्द्रियजे विशिष्टज्ञाने तदाभावो विशेषणं भासेत यदि पूर्वं निर्विकल्पकविषयता स्यान्न चैवमित्याह—अपि चेति। न वा इन्द्रियेण सहायस्य प्रत्यासत्तिः संयोगसमवायात्मिका सम्भवतीत्याह—अप्राप्तिश्चेति। तदेवाह न हीति। समवायस्तु नातिरिक्तो न वा प्रत्यक्ष

इति न तदर्थमपि विशेषणताकल्पनमिति भावः। किञ्चानुपलब्धिस्त्वयापि तत्राभ्युपगन्तव्येत्याह––अवश्याभ्युपगन्तव्यत्वादिति।

अभावस्य निर्विकल्पकवेद्यताप्रसङ्गमपाकरोति––अवच्छेदेति। प्रतियोग्यादिविशिष्ट एव तत्र प्रमाणप्रवृत्तेः प्राथमिकविशिष्टज्ञानसामग्रीसत्त्वान्निर्विकल्पकवेद्यतैव नेत्यर्थः। ननु प्रतियोगिस्मरणं तटस्थम् 5 अधिकरणोपरागोऽपि नावश्यक इति केवलाभावोऽपि निर्विकल्पकेन गृह्यतां, को दोष इत्याह––अग्रेऽन्व इति। तर्हि इन्द्रियेण तन्निर्विकल्पकमस्तु को दोष इत्यर्थः। विषयमुखीं व्याप्तिमाह––स हीति। प्रमाणमुखीं व्याप्तिमाह––स चेति। व्याप्त्योस्त्ववच्छेदमात्रं फलतस्तु न कोऽपि विशेषः, निर्विकल्पकविषयोऽप्यभावश्चाक्षुषज्ञाने विशेषणतया भासत इत्युभयत्रैव 10 विवक्षितम्। नायं विधिरिति। निर्विकल्पकपूर्वकत्वनियम इत्यर्थः। प्राप्त्यनन्तरेऽनवस्थानादित्युपपादयति––स्वभावेति। स्वभावसम्बन्धेनैवाभावो भूतलादौ विशेषणं रूपादौ च प्राप्त्यनन्तरमनुभवबलादित्यर्थः। ननु इहापि वैशिष्ट्यानुभवबलात् सम्बन्धान्तरं स्यादित्यत आह––इह त्विति। अत एव समवायेऽपि न समवायान्तरं तद्विरहेऽपि स्वभावविशेषणतैवेति 15 भावः। यद्यप्येवं समवायवद् वैशिष्ट्यमप्यायाति तथाप्यन्यत्र विस्तरेण प्रतिपादितमनुसन्धेयम्। निर्विकल्पकागोचरोऽभावोऽनुपलब्ध्यापि प्रमाणेन ग्रहितुं शक्य इत्याह––सर्वस्येति। यद् यत् प्रमाणं तत्सर्वं निर्विकल्पकविषयविषयकमेवेति व्याप्तेरित्यर्थः अनालोचनपूर्वकमिति। निर्विकल्पकविषयविषयकमित्यर्थः। यद्वा, प्रत्यक्षेण व्याप्तिग्रहे तत्रापि निर्विकल्पका- 20 पेक्षाऽस्त्येवेत्यनुमानमपि निर्विकल्पकपूर्वकमेव परम्परयेत्यर्थः। अन्यत्रापि दुर्घटत्वं योजयति––सम्बन्धान्तरेति। तवाप्यनुपलब्ध्या अभाववैशिष्ट्यप्रतीतिः स्वरूपसम्बन्धेनैव निर्वहेत्, न तु वैशिष्ट्येन, तत्रापि वैशिष्ट्यान्तराभ्युपगमेऽनवस्थानादित्यर्थः। परस्य भट्टस्य। तन्मतेऽधिकरणरूपत्वादभावस्य। अस्त्येवेति। ममापि तेनैवाभिमतनिर्वाहात्। परन्तु भावा- 25 भावयोस्तादात्म्यं नास्तीति भावः। ननूक्तं त्वयाप्यनुपलब्धिरप्यवश्याभ्युपगन्तव्या इत्यत आह––अवश्येति। सहकारिता तस्या अस्त्येवेति भावः। ननु भावोपलब्धौ कथमभावोपलब्धिः कारणमत आह––वज्रलेपेति नियतपूर्ववर्त्तित्वादित्यर्थः॥ २२॥

बोधनी

अथानुपपत्तिचतुष्टयेनाभावप्रत्यक्षत्वं पूर्वपक्षी प्रतिक्षिपति **स्यादेतदिति**। अघटं भूतलमिति विशिष्टबुद्धेः पूर्वमेव विशेषणस्याभावस्य ग्रहणं वक्तव्यं विशेषणग्रहणकार्यत्वात् विशिष्टबुद्धे र्न च विशिष्टे सामर्थ्यमस्तीति विशेषणेऽपीन्द्रियस्य सामर्थ्यमतिप्रसङ्गात्, तस्मादभावात्मनो विशेषणस्य ग्रहणाय षष्ठं प्रमाणमास्थेयम्। यदि चाभाव ऐन्द्रियकः 5 सविकल्पको ग्राह्यः, ततो निर्विकल्पकेनासौ पूर्वं ग्रहीतव्यः निर्विकल्पपूर्वकत्वात् सविकल्पकस्य। न चाभावे निर्विकल्पकसंभवः प्रतियोग्यवच्छेदेनैव तस्य स्फुरणात्। न च षष्ठप्रमाणवादिनोऽप्ययं प्रसङ्गः ऐन्द्रियकविकल्पस्यैव तत्पूर्वकत्वनियमात्। न चाभावस्येन्द्रियेण प्राप्तिः संभवति संयोगादीनां भावधर्मत्वात्, विशेषणविशेष्यभावलक्षणस्य च संबन्धस्य संयोगसमवायादिसम्बन्धान्यतरपूर्वकत्वेनैव दण्डिनीलोत्पलादिषु दृष्टत्वात्। 10 किञ्च अभावप्रत्यक्षत्ववादिनापि प्रतियोगिनोऽनुपलब्धिरवश्यमिन्द्रियसहकारित्वेनाप्यङ्गीकर्त्तव्या, तथा चोभयसिद्धा सैवाभावज्ञानहेतुरस्त्विति समाधत्ते—

**उच्यत इति**। अवच्छिद्यतेऽनेनेति अवच्छेदः प्रतियोगी, तद्ग्रहणस्याभावनिरूपणेऽवश्यम्भावः। प्रतियोगिनिरूपणाधीननिरूपणोऽभाव इति यावत्। तस्माद्विशेषणत्वेऽपि न केवलस्याभावस्य पूर्वं ग्रहणं, नापि विकल्पवेद्यत्वेऽपि पूर्वमालोचन- 15 मास्थेयम्। एतदुक्तं भवति—न हि पूर्वग्रहणे विशेषणत्वं प्रयोजकम्, नाप्यालोचनीयत्वेन विकल्पवेद्यत्वं किन्तु प्रतियोगिनिरपेक्षनिरूपणीयत्वं ज्ञानसमवायादौ तथावसायात्। अथाभावज्ञानस्यावच्छेदग्रहो ध्रुवो नाङ्गीक्रियेत तर्हि केवलस्याभावस्य पूर्वग्रहणमालोचनं च को नाम नाङ्गीकुर्यात्। विशेषणविशेष्यरूपस्य सम्बन्धस्य सम्बन्धान्तरपूर्वकत्वनियमाभ्युपगमे च सम्बन्धान्तरस्यापि सम्बन्धपूर्वकत्वप्रसङ्गेऽनवस्थाप्रसङ्गः। न चेदय- 20 मस्मदुक्तप्रकारोऽङ्गीक्रियेत। ततः प्रमाणान्तरपक्षोऽपि दुर्घटः स्यादिति। तत्राद्यचोद्योत्तरतयाद्यं पादं व्याचष्टे **स हीति**। एषां हि दण्डकुण्डलादीनामर्थानाम् अर्थान्तरज्ञाननिरपेक्षैःस्वविषयैरेव ज्ञानैरितरेतरव्यवच्छेदः सिद्ध्यति, त एव विशेषणीभवन्तः केवला अपि स्फुरेयुः। एषां तु ज्ञानसमवायाभावादीनां स्वस्वगोचरं ज्ञानव्यञ्जकमात्रं न तु व्यवच्छेदकं, न हि ते प्रतियोगिज्ञाननिरपेक्षैरेवेन्द्रियैः स्वविषयज्ञानैः स्वेतरव्यवच्छिन्नाः 25 प्रतीयन्ते तेषां केवलस्फुरणमन्तरेणैव विशिष्टज्ञानगोचरत्वमिति द्वितीयस्यापि चोद्यस्य तमेवोत्तरतया व्याचष्टे **स च विकल्पयितव्य इति**। तैरेव विकल्पवेद्यैः भवद्भिः पूर्वमालोचनविषयैर्भवितव्यं ये प्रतियोगिज्ञाननिरपेक्षै रेवेन्द्रियैः ज्ञाप्यन्ते, यथा घटादयः, ये तु प्रतियोगिज्ञानपुरःसरमेव जायन्ते यथा ज्ञानादयः तेषां निर्विकल्पकवेद्यत्वासम्भवात् न तत्पूर्वकत्वमिति।

अथ पाठक्रममनादृत्यार्थक्रमेण द्वितीयं पादमवसरे व्याख्यास्यंस्तृतीयचोद्योत्तरतया तृतीयं व्याचष्टे स्वभावेति ॥ स्वाभाविके हि विशेषणविशेष्यसम्बन्धे सत्यपि रूपादिष्वधिकः समवायादिसम्बन्धो दृष्टत्वादेव स्वीक्रियते, न तु तद्धेतुकत्वेनाभावेऽपि स्वभावतः प्राप्तिरस्ति न च सम्बन्धान्तरं दृश्यत इति भावः । तथापि तदभ्युपगमोऽनवस्थादुस्थ इत्याह इह त्विति ॥ एतावता सम्बन्धान्तराभावमात्रेणेति तुरीयं पादं व्याचष्टे न चेदेवमिति । दौर्घट्यमेवाह तथा हीति । प्रत्यक्षं साक्षादनुमानादीनि तु परम्परया निर्विकल्पकपूर्वकाणि तेषां प्रत्यक्षपूर्वकत्वात् तस्य च निर्विकल्पकपूर्वकत्वादिति ॥ यतः सर्वस्यापि प्रमाणस्यायं स्वभावः तस्मादनुपलब्ध्या प्रमाणान्तरभूतयाप्यालोचितपूर्व एवाभावो विकल्पनीय इत्याह तत इति । अस्तु तर्ह्यनुपलब्ध्यैवालोचनमित्यत्राह न चेति । आलोचनविषयत्वसम्भवे वाभावस्यास्माकमपीन्द्रियेण तदालोचनं भविष्यतीत्याह शक्यत्वे वेति । एतेन द्वितीयः पादो व्याख्यातः । षष्ठेनापि प्रमाणेनाभावः कस्यचिद्विशेषणत्वेन विशेष्यत्वेन वा ग्राह्यः, ततश्च सम्बन्धान्तरपूर्वकत्वनियमे विशेषणविशेष्यभावस्यानवस्थाप्रसङ्गस्तवापि तुल्य इत्याह तदभावस्येति । ननु संयोगाद्यभावेऽपि तादात्म्यात्मकं सम्बन्धान्तरमभ्युपगम्यते भाट्टैस्ततो न तुल्यत्वमित्याह परस्येति । यदि हि तादात्म्यं प्रमाणतोऽस्ति ततोऽस्तीति स्यात्, न चैवं प्रमाणाभावादित्याशयेनाह नन्विति । नन्वस्माभिस्तावदेतदभ्युपगम्यत इत्यत्राह न हीति । न ह्यभ्युपगमतदभावमात्राभ्यां वस्तुनः सदसत्त्वसिद्धिरिति । यत्त्ववश्याभ्युपगन्तव्यत्वादनुपलब्धेः सैव प्रमाणमस्त्विति तत्राह अवश्येति । यद्यवश्याभ्युपगम्यत्वमात्रेणानुपलब्धेः प्रमाणान्तरत्वमपि सिद्ध्येत् तर्हि भावोपलम्भेऽपि तदभावानुपलब्धिरेव प्रमाणं भवेत् भावोपलम्भसमयेऽभावानुपलब्धेरवर्जनीयत्वादित्याह अन्यथेति ॥२२॥

## विवेकः

तत्कार्यत्वात् विशिष्टधियः । अत इति । अभावज्ञानात्मकविशेषणज्ञाने समर्थतया उपलब्धेरुपनयसहकारेणाधिकरणेऽपि सामर्थ्यमिति भावः । अपि चेति । अलौकिकप्रत्यक्षविषयत्वस्य निर्विकल्पकविषयत्वव्याप्तिरिति भावः । अप्राप्तेश्चेति । अभावो नेन्द्रियग्राह्य इन्द्रियाप्रत्यासन्नत्वादित्यर्थः । न हीति । अभावो नेन्द्रियसंयोगी न वा तत्समवायी, अभावत्वादिति प्रयोगः । न चेति । अभावो नेन्द्रियेण साक्षात्परम्परया विशेषणतावान् सम्बन्धान्तररहितत्वात् । यद्येन संबन्धान्तररहितं तेन तद्विशेषणतावत्, यथा मेरुणा विन्ध्य इति सामान्यतः प्रयोगः । समवायस्तु तन्नये नातिरिच्यते अतो न तत्र व्यभिचारः । सम्बन्धान्तरपूर्वकत्वात, तद्व्याप्यत्वात् । नन्वभावप्रत्ययान्यथानुपपत्त्या विनैव

सम्बन्धान्तरं विशेषणता स्वीक्रियतां तथा व्याप्तिबलात् संबन्धान्तरं वा सिध्येदित्यत्राह—अवश्येति। अनुपलब्धेरेवावश्यक्लृप्ताया अभावप्रत्ययोपपत्तौ न ततः तादृशी कल्पनेति भावः। आवश्यकत्वमेवाह—न हीति।

प्रत्यक्षत्वस्य निर्विकल्पकविषयत्वसम्बन्धे इतरज्ञानाजन्यज्ञानविषयत्वस्योपाधेः पक्षे
5 साधनाव्यापकत्वमाह—अवच्छेदेति। अभावप्रतियोगिज्ञानाधीनविषयत्वनियमादित्यर्थः। अग्रौव्ये प्रतियोगिज्ञानस्याभावप्रत्ययाहेतुत्वे प्रसिद्धे सिद्धसाधनात्। इष्टापत्तेः विपर्यये च स्वरूपासिद्धेः सम्बन्धो हि न सम्बन्ध एव तत्सम्बन्धर्तां नाप्नोति इति क्वचित् सम्बन्धे शुद्धा विशेषणतैव वाच्या, तत्रापि च सम्बन्धान्तराभ्युपगमेऽनवस्थेत्याह। प्राप्त्यन्तर इति। प्रथमतो विशिष्टधीसामग्रीसत्त्वे सैव तन्निर्विकल्पकमिति व्यवस्था इत्यनुपगम्य यदि
10 सहचारदर्शनमात्रबलेन प्रत्यक्षविषयत्वनिर्विल्कपकविषयत्वयोर्व्याप्तिरुपेयते तदज्ञान-विषयत्वेनाज्ञातकरणकज्ञानविषयत्वेनैव वा तद्व्याप्तेरिन्द्रियादन्योऽनुपलम्भोऽपि अभाव-ग्राहकतया दुर्घटः स्यादित्याह—न चेदिति। न हीति। न च व्याप्त्योरविशेषः। अभावस्य सविकल्पकैकवेद्यता हि प्रतियोगिनमभावत्वं चादाय तत्राद्यमादाय प्रथम-व्याप्तिरत एवोक्तम् यस्यावच्छेदकज्ञानमव्यञ्जकमिति। द्वितीये स चेति। विशेष-ज्ञाननिरपेक्षेण विशेषणप्रकारकसामग्र्यसमवहितेनाभावत्वं च पूर्वानुपस्थितमपि प्रकारीभूय
15 भासत इति साक्षात्कारकालेऽभावत्वविशिष्टज्ञानसामग्रीनियमादिन्द्रियस्य तद्ग्राहकत्वद-शायान्न तदसमवधानमिति भावः। तत्पुरःसर एव विशिष्टज्ञानसामग्र्यनन्तरमेव तत्र विषये तस्येन्द्रियस्य नायं विधिः। आलोचितार्थग्राहकत्वम्। नन्वभावस्य ज्ञानमात्रे प्रतियोगिधीर्हेतुः। तत्प्रत्यक्षसामान्ये वा लौकिकत्वेन विशेषिते तत्र वा आद्ये अभाववान् इत्यनुमितौ व्यभि-चारः। द्वितीये तदनुव्यसायादावेव तथा। तृतीये इदं नीलमिति तमोविशेष्यकप्रत्यक्षे
20 सः। तत्रापि तेजोऽभावत्वभाने च इदमभावो न वेति संशयो न स्यात्। अभावत्वेन च लौकिकप्रत्यक्षे तदुपगमे तु विना प्रतियोगिज्ञानमभावत्वेन प्रत्यक्षं मास्तु। शुद्धाभावगो-चरन्तु निर्विकल्पकं को वारयति? एतेन तमसि तेजोऽभावत्वभानेऽपि दोषवशादिदन्ता-वच्छेदेन तद्ग्रहात् तथा संशयसमर्थनं प्रत्युक्तं वेदितव्यम्। किं च प्रतियोगिज्ञानम-प्रतियोगिज्ञानम्वा यत्किंचित्तज्ज्ञानम्वा। आद्ये न्यायाभावेऽन्यायत्वेन भानानुपपत्तिः। अन्त्ये
25 प्रतियोग्यंशवैयर्थ्यम्, ज्ञानमात्रस्यैव प्रतियोगिविषयत्वात्। यस्य च ज्ञानं तस्य प्रतियोगि-तासम्बन्धेनासंसर्गग्रहेऽपि तदनुपस्थितस्य शुद्धाभावस्य प्रत्यक्षापत्तिरेतेनाधिकरणज्ञानमपि व्याख्यातम्।

ननु योग्यानुपलब्धिरभावप्रत्यक्षे सहकारिणी तस्याश्च तत्तदवच्छेदेन घटाभावत्वादि-

प्रकारकप्रत्यक्षत्वं कार्यतावच्छेदकं ताश्च विशेषसामग्र्य इति तत्सहकारेणैव सामान्यसामग्र्याः कार्याजकत्वात्। प्रतियोगिनाभावत्वेन वाऽनुपहितस्य नाध्यक्षमिति चेन्न। भूतलत्वाद्यवच्छेदेन घटत्वेन पटोपलम्भाभावस्याह—घटाभावत्वादिना भूतलत्वाद्यवच्छेदेन ज्ञानत्वमेव कार्यतावच्छेदकं योग्यता च तल्लौकिकप्रत्यक्षे तत्तद्देशकालप्रतिनियतान्वयव्यतिरेकनियतसिद्ध्या प्रतियोगिकानवगतिरनुपलब्धेः अवच्छेदिका मानाभावात् विनिगमनाविरहाच्च। 5 तथा च योग्यताबलात् शुद्धतत्प्रत्यक्षं दुर्वारमेव। एतेनानुपलब्धेर्मानान्तरमपि प्रतिक्षिप्तं ध्येयम्। अत्राहुः अभावस्य लौकिकप्रत्यक्षे स्वप्रतियोगिज्ञानं हेतुः येन तज्ज्ञानं तेन रूपेण तेन सह प्रतियोगितासम्बन्धेन संसर्गग्रहोऽपि सहकारी अभावत्वं चानुयोगिताविशेषः पूर्वानुपस्थितमेव प्रकारीभूतं भासते इतरीयाभावे चेतरीयतया प्रत्यक्षे भानं नेष्यते, प्रमेयत्वं नास्तीत्यादौ च सम्बन्धान्तरावच्छिन्नप्रतियोगिताकप्रमेयत्वाभावो विशेषण- 10 ताविशेषावच्छिन्नप्रतियोगितया भासते। नन्वभावान्तरं सम्बन्धश्च प्रतियोगितावच्छेदकोऽभावप्रतियोगिनोः सम्बन्धमर्यादयैव भासते घटत्वावच्छिन्नतत्तत्सम्बन्धावच्छिन्नप्रतियोगितातादृशानुमितयोस्तत्सम्बन्धाभ्युपगमात्। विलक्षणप्रतियोगिताविशेष एव तथा भासत इत्यपि केचित्। इदन्न प्रमेयमित्यत्र चाप्रमेयप्रतियोगिताको भेद एव प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वेन भासत इति ध्येयम्। यदि चेतराभावस्यापि इतरीयत्वेन भानं 15 तदा प्रतियोगितासम्बन्धेन विशिष्टवैशिष्ट्यभानसामग्री तल्लौकिकप्रत्यक्षे हेतुर्वाच्या। सामग्री च विशिष्टस्यासाधारणतत्तत्कारणान्वय एवेति न तत्र साधारणकारणप्रवेशवैयर्थ्यदोषः। अत एव विशिष्टज्ञाने विशिष्टभानसामग्रीं हेतुमुपगच्छन्ति। यद्वा भावग्राहकेन्द्रियसन्निकर्षस्यैव घटाभावत्वादिना प्रत्यक्षत्वं कार्यतावच्छेदकं विना च प्रतियोगितावच्छेदकप्रकारेण विशेषणज्ञानं सामान्यसामग्र्यभावादेव न तथा 20 बोधः। इत्थं चेदन्तादिनापि प्रत्यक्षविशेषणतात्वं फलबलात् कल्प्यते। न च घटे घटाभावाभावत्वेन प्रत्ययवत् सन्निकर्षवशाद्घेत्याकारापत्तिरिति वाच्यम्। अभावाभावस्यातिरिक्तस्यैवोपगमात् अन्यथा तु घटाभावो नास्तीति प्रतीतिनियामकदैशिकत्वस्यविशेषाभाववद् भावेऽपीष्यते यतो नास्तीत्याकारोऽवभासः। तथा च तादृशप्रत्यासत्तिर्घटाभावाभावत्वादिना प्रत्यक्षत्वमेव कार्यतावच्छेदकमिति न कश्चिद्विशेषः यदि च ज्ञानादाविव 25 नृसिंहाकारज्ञानमभावेऽपीष्यते तथा भवत्वभावस्य तथाविधनिर्विकल्पकविषयता सविकल्पकैकवेद्यताप्रसिद्धिस्तु ज्ञानादेरिव सम्बन्धिनमादाय एव इति समासः। सत्यां सम्भवत्यामधिकरणप्राप्तिः अधिकरणसंयोगादिरूपा प्रतिपत्तिबलेन प्रमाणबलेन अनवस्थेति अतिरिक्तसम्बन्धे बाधकसत्त्वेनेत्यर्थः। एतावता सम्बन्धान्तरविरहेणानुमानादिकमपीति।

तथा चातीन्द्रियाणामनुमानादिविषयता भज्येतेति भावः । तयानुपलब्ध्या तस्याभावस्यालोचनजन्य एव । **न चेदेवमिति** । वैशिष्ट्यान्तराभ्युपगमेऽपि योजयति । **तथेति** । तन्मतेऽपि विशिष्टधीवलेनाभावस्य विशेषणतास्वीकारः अवश्यम्भावादिति भावः । परस्य भट्टस्य धर्मधर्म्यभेदवादिनः । असौ अधिकरणतादात्म्यरूपः सम्बन्धः अस्त्येव तर्ह्यभावप्रत्यक्षं संयोगादेरेव संभवात् । न चेत् नास्ति चेत् तादात्म्यं तदा न विशेषणतायाः सम्बन्धान्तरव्याप्तेः । वस्तुतस्तु अधिकरणेनाभावतादात्म्यं नास्त्येव प्रमाणबाधितत्वात् । न हि प्रमाणबाधितं भवदभ्युपगममात्रेणैव सिध्यति । मया वा नाभ्युपेयत । तत्रैतावता निवर्त्तते न वा त्वदनभ्युपगमेनैव शुद्धा विशेषणता निवर्त्तते । भवदभ्युपगममात्रेणैव सिध्यति अपि तु व्यवस्थायाः प्रमाणमेव सीमेत्याह—**न हीति** । तस्या अनुपलब्धेरभावप्रतीतौ कारणत्वं सिध्यतु मानान्तरत्वमनुपलब्धेः **अन्यथेति** यद्यप्यधिकरणप्रतियोग्यनुपरक्ताभावप्रत्ययविशेषानुपगमात्तत्रावश्यं प्रतियोग्यनुपलम्भस्यैव भावोपलम्भे तथात्वाभावः । सत्यपि अभावोपलम्भे भावानां निर्विकल्पोपगमात्तथापि पृथक्त्वपरत्वादिभावाभिप्रायकमेतत् तत्र च तथाविधनिर्विकल्पके मानाभावादित्यन्यत्र विस्तरः ॥ २२ ॥

**प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः**
**प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।**
**तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं**
**देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥ २३ ॥**

इति तृतीयः स्तबकः ॥ ३ ॥

आमोदः

**प्रत्यक्षादिभिरिति** । एभिः प्रत्यक्षादिभिर्यन्मुखवीक्षणैकविधुरैर्धर्मिग्राहकमानबाधितैरात्मापि नासाद्यते स्वरूपमपि न लभ्यते तैर्विरोधोदयस्तावद्दूरेऽधरोऽधमः, एवं प्रमाणविरोधे निरस्ते उद्भवदतिश्रद्धाः वयं तमेकं प्रपद्यामहे । देवनामपीन्द्रोपेन्द्रादीनां देवमाराध्यं सर्वमनुविधेयं व्याप्यं यस्य असमा विलक्षणा स्वच्छन्दाऽप्रतिहता लीला इच्छा कृतिर्वा सैव उत्सवो यस्य ॥ २३ ॥

**॥ इति तृतीयस्तवकः ॥**

बोधनी

अथ परमेश्वरप्रतिपत्तिव्याजेन परिच्छेदार्थमुपसंहरति प्रत्यक्षेति । बाधकत्वेन शङ्किता-नामपि सर्वेषां प्रमाणानां कार्यत्वेनेश्वरायत्तात्मलाभत्वादनुमानस्याश्रयासिद्धेरपि तदधीनत्वा-दागमस्य च प्रामाण्येऽपि तत्परतन्त्रत्वादुक्तम् यन्मुखवीक्षणेति । प्रत्यक्षस्योत्पत्तौ तदपेक्षायामपि प्रामाण्ये तदनपेक्षत्वादुक्तम् प्राय इति । तदयमर्थः—एवमीश्वरस्याधरैर्वा-क्प्रवर्त्तमानैस्तमपि विषयीकर्त्तुमशक्नुवद्भिरिति यावत् । यन्मुखवीक्षणैकविधुरैरात्मापि 5
नासाद्यते, तैः प्रत्यक्षादिभिस्तस्य विरोधो बाधश्च दूरे, तमेवम्भूतं सर्वेषां परमपुरुषार्थप्राप्ति-हेतुत्वादनुविधेयमेकं समेनाधिकेन वा द्वितीयेन रहितम् असमायां स्वच्छन्दतः प्रवृत्तायां जगन्निर्माणलक्षणायां लीलायामवद्धरतिं परमेश्वरमुद्भवदतिश्रद्धावन्तो वयं प्रपद्यामह इति ॥ २३ ॥

इति श्रीमद्रामदेवमिश्रसूनोर्वरदराजस्य कृतौ न्यायकुसुमाञ्जलिटीकायां
तृतीयः परिच्छेदः ॥

विवेकः

बहुविघ्नशङ्कया मध्यमङ्गलमाचरन् स्तवकार्थमुपसंहरति—प्रत्यक्षादिभिरिति । 10
यन्मुखवीक्षणैकविधुरैर्यद्ग्राहकप्रमाणविरुद्धैः । प्रत्यक्षादिभिरात्मस्वरूपमेव न लभ्यते । प्राय इति । प्रत्यक्षस्य तद्ग्राहकप्रमाणोपजीवकतानिरासाय । एभिस्तैः प्रत्यक्षादिभिरेवो-पजीव्यविरोधादिदोषादप्राप्तस्वरूपतया दुर्बलैः विरोधोदयः ईश्वरबाधनं नास्त्येव । एवं निरस्ते प्रमाणविरोधे उद्भवन्ती अतिशयिता श्रद्धा मुक्तिरूपफलावश्यम्भावनिर्णयो येषां ते वयं तमेव प्रपद्यामहे—उपास्महे । तं कीदृशम् ? देवानामिन्द्रादीनामपि देवं स्तुत्यं 15
सर्वानुविधेयं सर्वाणि अनुविधेयानि यस्य तम् । यद्वा सर्वत्रानुविधेयम् अनुविधानमधिष्ठानं यस्य तमेकं क्षितिकर्तृनिष्ठान्योन्याभावाप्रतियोगिनमसमा इतरविलक्षणा सर्वविषयत्वादि-शालिनि अप्रतिहता या लीला इच्छा कृतिर्वा उत्सवो नित्यं दुःखासत्त्वं च यस्य तमिति ॥२३॥

तृतीयस्तबकविवेकः समाप्तः ।

## चतुर्थः स्तबकः ।

ननु सदपीश्वरज्ञानं न प्रमाणं, तल्लक्षणायोगात्, अनधिगतार्थगन्तुस्तथाभावात्, अन्यथा स्मृतेरपि प्रामाण्यप्रसङ्गात् । न च नित्यस्य सर्वविषयस्य चानधिगतार्थता, व्याघातात् । अत्रोच्यते—

**अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक् ।**
**यथार्थानुभवो मानमनपेक्षतयेष्यते ॥ १ ॥**

न ह्यधिगतेऽर्थे अधिगतिरेव नोत्पद्यते, कारणानामप्रतिबन्धात् । न चोत्पद्यमानाऽपि प्रमातुरनपेक्षितेति न प्रमा, प्रामाण्यस्यातदधीनत्वात् । नापि पूर्वाविशिष्टतामात्रेणाप्रामाण्यम् । उत्तराविशिष्टतया पूर्वस्याप्यप्रामाण्यप्रसङ्गात् । तदनपेक्षत्वेन तु तस्य प्रामाण्ये तदुत्तरस्यापि तथैव स्यादविशेषात् । छिन्ने कुठारादीनामिव परिच्छिन्ने नयनादीनां साधकतमत्वमेव नास्तीत्यपि नास्ति, फलोत्पादानुत्पादाभ्यां विशेषात् । तत्फलं प्रमैव न भवति, गृहीतमात्रगोचरत्वात् स्मृतिवदिति चेत् । न । यथार्थानुभवत्वनिषेधे साध्ये बाधितत्वात् । अनधिगतार्थत्वे सिद्धसाधनात्, साध्यसमत्वाच्च । व्यवहारनिषेधे तन्निमित्तविरहोपाधिकत्वात्, बाधितत्वाच्च । न चानधिगताऽर्थत्वमेव तन्निमित्तं, विपर्ययेऽपि प्रमाव्यवहारप्रसङ्गात् । नापि यथार्थत्वविशिष्टमेतदेव, धारावहनबुद्ध्यव्याप्तेः । न च तत्तत्कालकलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनीयम् । क्षणोपाधिनामनाकलनात् । न चाज्ञातेष्वपि विशेषणेषु तज्जनितविशिष्टता प्रकाशते इति कल्पनीयम्, स्वरूपेण तज्जननेऽनागतादिविशिष्टतानुभवविरोधात् । तज्ज्ञानेन तु तज्जनने सूर्यगत्यादीनामज्ञाने तद्विशिष्टतानुत्पादात् । न चैत्तस्यां प्रमाणमस्ति । नन्वनुपकार्यानुपकारकयोर्विशेषणविशेष्यभावे कथमतिप्रसङ्गो वारणीयः ? । व्यवच्छित्तिप्रत्यायनेन व्यवच्छित्तौ स्वभावेन, अन्यथा तवाप्यनवस्थानादिति ।

ज्ञाततैवोपाधिरिति चेत् । न । निराकरिष्यमाणत्वात् । तत्सद्भावेऽपि वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात् । जनकागोचरत्वेऽप्युत्तरोत्तरस्मृतौ पूर्वपूर्वस्मरणजनितज्ञाततावभासनात् । अस्तु वा प्रत्यक्षे यथा तथा, गृहीतविस्मृतार्थश्रुतौ का वार्त्ता । अप्रमैवासाविति चेत् । गतमिदानीं वेदप्रामाण्यप्रत्याशया, न ह्यनादौ संसारे स्वर्गकामो यजेतेति वाक्यार्थः केनचिन्नावगतः, सन्देहेऽपि प्रामाण्यसन्देहात् । न च तत्रापि कालकलाविशेषाः परिस्फुरन्ति । न चैकजन्मावच्छेदपरिभाषयेदं लक्षणं, तत्राप्यनुभूतविस्मृतवेदार्थं प्रति अप्रामाण्यप्रसङ्गात् । कथन्तर्हि स्मृतेर्व्यवच्छेदः ? अननुभवत्वेनैव । यथार्थो ह्यनुभवः प्रमेति प्रामाणिकाः पश्यन्ति । 'तत्त्वज्ञानाद्' इति सूत्रणात्, 'अव्यभिचारि ज्ञानमिति' च । ननु स्मृतिः प्रमैव किं न स्याद्, यथार्थज्ञानत्वात् प्रत्यक्षाद्यनुभूतिवदिति चेत् । न । सिद्धे व्यवहारे निमित्तानुसरणात्, न

च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात्। न च स्मृतिहेतौ प्रमाणाभियुक्तानां महर्षीणां प्रमाणव्यवहारोऽस्ति, पृथगनुपदेशात्। उक्तेष्वन्तर्भावादनुपदेश इति चेत्। न। प्रत्यक्षस्यासाक्षात्कारिफलत्वानुपपत्तेः, लिङ्गशब्दादेश्च सत्तामात्रेण प्रतीत्यसाधनत्वादिति।

एवं व्यवस्थिते तर्क्यतेऽपि—यदियमनुभवैकविषया सती तन्मुखनिरीक्षणेन 5 तद्यथार्थत्वायथार्थत्वे अनुविधीयमाना तत्प्रामाण्यमव्यवस्थाप्य न यथार्थतया व्यवहर्त्तुं शक्यते इति। व्यवहारेऽपि पूर्वानुभव एव प्रमितिरनपेक्षत्वात्। न तु स्मृतिः, नित्यं तदपेक्षणात्। असमीचीने ह्यनुभवे स्मृतिरपि तथैव।

नन्वेवमनुमानमप्यप्रमाणमापद्येत, मूलप्रत्यक्षानुविधानात्। न, विषयभेदात्।

आगमस्तर्हि न प्रमाणं, तद्विषयमानान्तरानुविधानात्। न। प्रमातृभेदात्। 10 धारावाहिकबुद्धयस्तर्हि न प्रमाणम्, आद्यप्रमाणानुविधानात्। न। कारणविशुद्धिमात्रापेक्षया प्रथमवदुत्तरासामपि पूर्वमुखनिरीक्षणाभावात्, कारणबलायातं काकतालीयं पौर्वापर्यमिति।

यदि हि स्मृतिर्न प्रमितिः पूर्वानुभवे किं प्रमाणम्। स्मृत्यन्यथानुपपत्तिरिति चेत्। न। तया कारणमात्रसिद्धेः, न तु तेनानुभवेनैव भवितव्यमिति नियामकम् 15 मस्ति। अननुभूतेऽपि तर्हि स्मरणं स्यादिति चेत्, किं न स्यात्। न ह्यत्र प्रमाणमस्ति। पूर्वानुभवाकारोल्लेखः स्मृतेर्दृश्यते, सोऽन्यथा न स्यादिति चेत्। तत् किं बौद्धवद्विषयाकारान्यथानुपपत्त्या विषयसिद्धिस्त्वयापीष्यते, तथाभूतं ज्ञानमेव वा तत्सिद्धिः? आद्ये तद्वदेवानैकान्तिकत्वम्। न हि यदाकारं ज्ञानं, तत्पूर्वकत्वं तस्येति नियमः, अनागतज्ञाने विभ्रमे च व्यभिचारात्। द्वितीये तु स्मृतिप्रामा- 20 ण्यमवर्जनीयम्। मा भूत् पूर्वानुभवसिद्धिः, किं नश्छिन्नमिति चेत्। न तर्हि स्मृत्यनुभवयोः कार्यकारणभावसिद्धिरिति। न। तदप्रामाण्येऽपि पूर्वाऽपरावस्थावदात्मप्रत्यभिज्ञानप्रामाण्यादेव तदुपपत्तेः। योऽहमन्वभवममुमर्थं, सोऽहं स्मरामीति मानसप्रत्यक्षमस्तीति।

न च गृहीतग्राहित्वमीश्वरज्ञानस्य, तदीयज्ञानान्तरागोचरत्वाद् विश्वस्य। 25 न च तदेव ज्ञानं कालभेदेनाप्रमाणम्, अनपेक्षत्वस्यापरावृत्तेः। तथापि वा अप्रामाण्येऽतिप्रसङ्गादिति॥ १॥

## आमोदः

**सत्त्वेऽपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमुपस्थाप्य निराकरोति—नन्विति। न प्रमाणमिति। न प्रमेत्यर्थः। तथा चाप्रमामूल- 30 कत्वान्न वेदः प्रमाणमित्यर्थः। न वा तन्मात्रप्रमाणकं स्वर्गापूर्वाद्यपि**

परमार्थसदित्यायातम्, अलौकिकं परलोकसाधनं नास्तीति भावः। **अनधिगतार्थगन्तुरिति** अगृहीतग्राहिणो ज्ञानस्येत्यर्थः। **तथाभावात्** प्रमात्वाद्। अनधिगतार्थत्वविशेषणव्यावृत्त्यर्थमाह—**अन्यथेति**। **व्याघातादिति**। अनधिगतार्थत्वेन नित्यत्वव्याघातादित्यर्थः।

5 **अव्याप्तेरिति**। धारावहनबुद्धिषु। **अधिकव्याप्तेरिति**। संशयविपर्ययस्वप्नबुद्धिषु। **अपूर्वदृगिति**। अपूर्वार्थदर्शनमित्यर्थः। परमतं दूषयित्वा स्वमते लक्षणमाह—**यथार्थ** इति। **यथार्थ** इति विपर्ययव्यावर्तनाय। **अनुभव** इति स्मृतिव्यावर्तनाय। विशेष्यवृत्त्यप्रकारकं ज्ञानम्, व्यधिकरणप्रकारानवच्छिन्नविषयताप्रतियोगिज्ञानं वा, यत्र यदस्ति तत्र 10 तस्यानुभवो वेत्यर्थः। ननु स्मृतिरपि यथार्था प्रमास्तु, किमनुभवपदेनेत्यत आह—**अनपेक्षतयेति**। स्वजनकानुभवयाथार्थ्यानपेक्षतयेत्यर्थः। स्मृतेस्तु तत्सापेक्षत्वमिति भावः।

नन्वधिगतेऽर्थेऽधिगत्यन्तरोत्पादे पिष्टपेषणं स्यादत आह—**न हीति**। कारणबलेन तथा सम्भवादित्यर्थः। ननु द्वितीयज्ञानकर्तव्यं प्रथमेनैव 15 कृतमिति न तत् प्रमाणं प्रमातुरपेक्षितमित्याह—**न चेति**। प्रामाण्यस्य स्वकारणाधीनस्य प्रमातुरपेक्षामन्तरेणाप्युपपत्तेरन्यथा शत्रुवैभवादिज्ञानमप्रमैव स्यादित्यर्थः **पूर्वाविशिष्टेति**। पूर्वज्ञानान्यूनानतिरिक्तविषयतेत्यर्थः। ननु त्वयैवोक्तमनपेक्षतयेति, तथा च सर्वज्ञानं द्वितीयानपेक्षं प्रमाद्वितीयं तु पूर्वापेक्षमिति न प्रमेत्यत आह—**तदिति**। उत्तरज्ञानस्यापि पूर्वज्ञानान- 20 पेक्षतया प्रामाण्यं स्यादेव। तन्मते विशिष्टज्ञानस्याव्यवहितविशेषणज्ञानजन्यत्वाभावात्। ननु निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपातात्, द्वितीयादिज्ञानं यद्युत्पद्यते, तदा प्रमाणजन्यत्वान्न प्रमा इत्यत आह—**छिन्नेति**। **गृहीतमात्रेति**। मात्रपदमनुमित्यादौ व्यभिचारवारणार्थम्। **बाधितत्वादिति**। द्वितीयादिज्ञानेऽपि यथार्थत्वस्यानुभवत्वस्य चानु- 25 भवसिद्धत्वादित्यर्थः। ननु धारावहने द्वितीयादिज्ञानं प्रमात्वेन न व्यवहर्तव्यम्, अधिगतार्थगन्तृत्वात् स्मृतिवदित्यभिमतम्, अत आह **व्यवहारेति**। निमित्तं च यथार्थानुभवत्वं तत्रास्त्येवेत्यर्थः। **बाधितत्वादिति**। तत्र प्रामाण्यव्यवहारस्य सर्वसिद्धत्वादित्यर्थः। **विपर्यय** इति। तद्वैशिष्ट्यांश इत्यर्थः।

नापीति। यथार्थत्वे सत्यगृहीतग्राहित्वमित्यर्थः। ननु स्वोत्पत्तिक्षणगोचर-
त्वात् धारावाहिकबुद्धिष्वप्यगृहीतार्थगन्तृत्वमस्त्येवेत्याह--न चेति। अना-
कलनात् अप्रत्यक्षत्वात्। ननु कालकलाऽनाकलनेऽपि तद्वैशिष्ट्याकलनाद-
गृहीतग्राहित्वं स्यादित्यत आह--न चेति। विशेषणानां स्वसत्तामात्रेण
स्वविशिष्टप्रत्ययजननेऽनागतविशेषणवैशिष्ट्यं क्वापि नानुभूयेतेत्यर्थः। 5
ननु ज्ञानमात्रं विशेषणस्य तन्त्रं, न तु तत्स्वरूपमपीत्यदोष इत्यत आह--
तदिति। सूर्यगत्यादीनां क्षणावच्छेदकानां भट्टाभिमतविशिष्टतां दूषयति--
न चेति। ननु विशेषणेन विशेष्ये वैशिष्ट्यमुपकारो यदि नाधीयते
तदा विशेषणविशेष्यभाव एव न स्यादित्याह--नन्विति। विशेषणविशेष्य-
भावेऽन्यथोपपत्तिमाह--व्यवच्छिनत्तीति। व्यवच्छित्तिरतद्व्यावृत्तिः, विशेष- 10
णात्यन्ताभाववदन्योन्याभाव इति यावत। विशेषणस्य चोपकारकत्वम्
अतद्व्यावृत्तिबोधजनकज्ञानविषयत्वमिति भावः। ननु वैशिष्ट्याधानमन्त-
रेण व्यवच्छित्तिप्रत्यायनमेव कथं स्यादित्यत आह--व्यवच्छिनत्तीति।
विशेषणस्वाभाव्यादेव तदुत्पत्तेरित्यर्थः। तत्रापीति। वैशिष्ट्येऽपि वैशिष्ट्या-
न्तराधीनेऽनवस्थानादन्यथा वैशिष्ट्यस्यापि तदीयत्वनियमो न स्यादिति 15
भावः। ननु भूतलादो स्वभाववैशिष्ट्यं प्रतीयते, न तु संयोगसमवायौ
तत्र सम्भवत इति चेन्न; स्वरूपसम्बन्धेनैव तद्व्यवहारोपपत्तेः। अन्यथा
वैशिष्ट्यस्यैकत्वे घटवत्यपि घटाभाववैशिष्ट्याधीनो घटाभावव्यवहारोऽपि
स्यात्। प्रत्यभावव्यक्ति वैशिष्ट्यभेदे च स्वरूपसम्बन्धेनैवान्यथासिद्धौ
किमनन्तवैशिष्ट्यकल्पनया? न चात्र समवायप्रतिबन्दिः, वैशिष्ट्ये वैशि- 20
ष्ट्याभावप्रतीते स्वरूपसम्बन्धेनैव त्वयाप्युपपादनात्। अन्यथाऽनवस्था-
प्रसङ्गात्। वस्तुतस्तु प्रत्यक्षमपि सखेऽन्वेष्टव्यम्। न चाभाववैशिष्ट्यानु-
भवादस्तु समवाय इति वाच्यम्। प्रध्वंसस्यापि समवेतकार्यत्वेन नाशे
भावो मज्जनापत्तेरिति धारावाहिकबुद्धिषु पूर्वपूर्वज्ञानादिना ज्ञाततैवानधि-
गतार्था भासते इति शङ्कते—ज्ञाततैवेति। स्मृतेरपीति। तत्राप्यनुभवाहित- 25
ज्ञातताभावात् अनधिगतार्थगन्तृत्वं स्यादित्यर्थः। ननु जनकीभूतानुभव-
विषयस्यैव स्मरणे भानम्। तथा च कथं ज्ञातता स्मरणे भासतामित्यत
आह—जनकेति। अनुभवेन स्मरणजननेऽयं नियमो यदनुभवस्यैव स्मरणे
भानं, न तु स्मृत्या स्मृतिजनन इति भावः। ननु स्मरणजनने जनकस्मर-

णाविषयस्य जन्यस्मृतिविषयत्वेऽतिप्रसङ्ग इत्याह—अस्तु वेति । का वार्त्तेति । सा प्रमाऽप्रमा वेत्यर्थः। किञ्चित् समयागृहीतग्राहित्वेन प्रमा चेत्तदा व्याप्तिरिति । सर्वपूर्वकालागृहीतग्राहित्वमेव प्रामाण्यं तस्याश्च तदभावात् अस्या अपि अप्रमात्वमेवेत्याह—अप्रमैवेति । गतमिति । वेदार्थस्यापि
5 कस्मिंश्चिज्जन्मनि पुरुषेणानुभवात् । न च तत्रापीति । कालकलानामपदार्थत्वेन वाक्यार्थाविषयत्वादित्यर्थः । ननु तज्जन्मनि अगृहीतग्राहित्वं लक्षणं विवक्षितमत आह—न चेति । अनुभूतेति । तज्जन्मन्येवानुभूतः अप्यविस्मृतो येन पुंसा यस्य वेदस्यार्थस्तं प्रति तस्य वेदस्याप्रामाण्यप्रसङ्गादित्यर्थः। कथमिति । यद्यनधिगतार्थत्वं न विशेषणमित्यर्थः । अनुभवत्वेनेति । तद्व्य-
10 वच्छेदार्थमेव लक्षणेऽनुभवत्वप्रक्षेपादित्यर्थः । अननुभवत्वेनेत्यपि क्वचित्पाठः। स्मृतेरननुभवत्वादनुभवत्वविशेषणेनैव वारणादित्यर्थः । प्रामाणिका इत्यर्थः। प्रामाणिकानाम् एतादृशं दर्शनमित्यर्थः । तत्त्वज्ञानादिति । तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या शास्त्रस्याभिधानात्, शास्त्रञ्च वाक्यतयाऽनुभवमेव जनयतीति भावः । अव्यभिचारि ज्ञानमिति । "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभि-
15 चारी" ति (न्या० सू० १।१।४) प्रत्यक्षलक्षणे ज्ञानपदस्यानुभवपरत्वस्यावश्यकत्वात्, स्मृतेः प्रत्यक्षभिन्नत्वादिति भावः । नन्विति । तथा च किमनुभवोपादानेन इत्यर्थः । स्मृतौ प्रमाव्यवहाराभावात् तत्करणे संस्कारे प्रमाणव्यवहाराभावाच्च न तथेत्याह—सिद्ध इति । अव्यवस्थयेति । अनुभवपदवद् यथार्थपदमपि तर्हि त्यज्यताम् । अस्तु ज्ञानत्वमेव प्रमात्वम्, एवं
20 सति भ्रमेऽपि किन्न स्यात् प्रामाण्यमित्यर्थः । पृथगिति । प्रत्यक्षादिभ्य इत्यर्थः । उक्तेष्विति । प्रत्यक्षादिष्वित्यर्थः । प्रत्यक्षस्येति । स्मृतेरसाक्षात्कारित्वस्य सर्वमतसिद्धत्वादित्यर्थः । लिङ्गशब्दादेरिति । ज्ञायमानलिङ्गादेः स्मृतौ व्यभिचारादिति भावः । अनपेक्षतयेति । विवृणोति—तर्क्यतेऽपीति । अनुविधीयमानेति कर्तरि प्रत्ययः । व्यवहारेऽपीति । यथार्थव्यवहारेऽ
25 पीत्यर्थः । असमीचीन इति । रज्जुं भुजङ्गतयाऽनुभूतपलायितस्य तथैव स्मृतिदर्शनादित्यर्थः । अनुमानेऽप्येतादृशं सापेक्षत्वमस्तीत्यप्रामाण्यापत्तिरित्याह—नन्विति । विषयेति । जनकज्ञानस्य लिङ्गविषयत्वात् जन्यस्य च लैङ्गिकविषयत्वादित्यर्थः । आगम इति । शब्दजन्यज्ञानस्य मूलभूतकर्तृज्ञानसमानविषयत्वादित्यर्थः । परिहरति—प्रमात्रि त्व । स्मृतौ त्वेकप्रमातृ-

कत्वमिति भावः। ननु विषयप्रमातृभेदाद्धारावाहिधियः पूर्वव्यपेक्षाः प्रमाणं स्युरित्यत आह—धारेति। न चात्र मानाभावः। अयं वक्तृज्ञानान्यूनानतिरिक्तविषयकतद्भिन्नतत्समानकालीनतादृशज्ञानवान्, अनीश्वरात्मत्वात्, मैत्रवदिति धारावहनबुद्धौ मानात्। यद्वेन्द्रियार्थसन्निकर्षाधारस्तृतीयक्षणः तदिन्द्रियार्थसन्निकर्षोत्पत्त्याधारः, अव्यासक्तमनसो यावत्सहकारिसाकल्ये सत्यनाद्येन्द्रियसन्निकर्षाधारत्वात्, द्वितीयक्षणवदित्यनुमानात्। तत्रापि स्मृतिवत् सापेक्षत्वात्। प्रमातृभेदादिति वक्तुरेव तादृशं ज्ञानं न तु श्रोतुः, तथा च श्रोतारं प्रति तत्प्रमाणमेवेति भावः। कारणेति। विशेषणांशविषयत्वमत्र कारणविशुद्धिः। विशेष्यांशविषयत्वं तु नोत्तरोत्तरज्ञाने प्रयोजकं, तस्य स्वकारणबलायातत्वात्। एतदेवाह—कारणवशादिति। यदि हीति। पूर्वानुभवः स्मृतिरूपप्रमाविषयतयैव सिध्यति, पूर्वानुभववैशिष्ट्यं हि तत्ता, तथा च स्मृतेरप्रामाण्ये स कथं सिद्ध्येदित्यर्थः। न हि तत्तायां पूर्वानुभववैशिष्ट्यरूपायां न प्रमा इति भावः। स्मृतीति। पूर्वानुभवं विना स्मृतिरेव नोत्पद्यत इत्यर्थापत्तिरेव तत्र मानमित्यर्थः। अर्थापत्तावन्यथोपपत्तिमाह—तदेति। किन्न स्यादिति। स्मृतानुभवजन्यत्वस्येत्यर्थः। एतदेवाह—नह्यस्तीति। पूर्वानुभवोल्लेखस्तत्तोल्लेख इत्यर्थः। तत् किमिति। यथा सौत्रान्तिकैर्नीलाद्याकारकादाचित्कत्वान्यथाऽनुपपत्त्याऽनुभवस्य नीलादेः सिद्धिरिष्यते, तथा नैयायिकेनापीष्यते। तथाभूतं ज्ञानमिति। तद्विषयकज्ञानमित्यर्थः। आद्ये तद्वदेवेति। यथा सौत्रान्तिकमतेऽनैकान्तिकत्वं, तथा तवापि मते तत् प्रसज्यत इत्यर्थः। अनैकान्तिकत्वमेवाह—न हीति। अतीतानागताकारं ज्ञानं न तु तत्पूर्वकमित्याकारकादाचित्कत्वं विषयसत्त्वेऽनैकान्तिकमित्यर्थः। विभ्रम इति। रजताकारस्य रजताजन्यत्वाद् व्यभिचार इत्यर्थः। स्मृतिप्रामाण्यमिति। तत्तांशः स्मृतिविषयतयैव प्रमेय इति स्मृतिरेव तत्र प्रमेत्यर्थः। ननु पूर्वानुभववैशिष्ट्यं न तत्ता किन्त्वतीतधर्मवैशिष्ट्यम्। तथा च तत्तांशे न स्मृतिः प्रमा स्यादित्याह—मा भूदिति। एवं सति अनुभवः स्मृतिजनक इत्यत्र प्रमाणमेव सिद्धान्तिनो न किमपि स्यादिति स्मृतिप्रामाण्यवादी पूर्वपक्षमाह—न तर्हीति। सिद्धान्ती सिद्धान्तमुपक्रमते—नेति। प्रत्यभिज्ञानस्वरूपमाह—योऽहमिति। तथा च पूर्वानुभववैशिष्ट्यमेव तत्ता प्रत्यभिज्ञान एव भासते तत्प्रामाण्यादेवानुभवसिद्धिर्न

तदर्थं स्मृतिप्रामाण्यापेक्षेति । अनुभवानन्तरमनुव्यवसायेन संस्कारजननात्तेन च स्मृतिजननम्, ततः प्रत्यभिज्ञानं, तदुक्तं तृतीयाध्याये टीकाकृता "प्रागनुभवः, पुनरनुभवोऽथ संस्कारोऽथ स्मृतिरथ प्रत्यभिज्ञानमिति" वस्तुतस्तु स्मृतेः पारिभाषिकप्रामाण्यविरहेऽपि तद्वति तत्प्रकारकत्वरूपं 5 वस्तुसाधकं प्रमात्वमस्त्येवेति नोक्तदोषः । ईश्वरज्ञानेऽगृहीतग्राहित्वमुपपादयति—न चेति । गृहीतत्वं चातीतग्रहणविषयत्वमेव वाच्यं प्रत्ययानुरोधात् । अतीतत्वं च ईश्वरज्ञाने नास्तीत्यर्थः । अतिप्रसङ्गादिति । द्वितीयलक्षणे सर्वज्ञानाप्रामाण्यप्रसङ्गादित्यर्थः ॥ १ ॥

बोधनी

10 ॥ अथ तुरीयः परिच्छेदः ॥

सत्त्वेऽपि तस्याप्रमाणत्वादित्यस्यासिद्धिव्युत्पादनं परिच्छेदार्थः । तत्रेश्वरप्रामाण्यस्य तज्[१]ज्ञानद्वारत्वात् तदाक्षेपेण पूर्वपक्षयति—नन्विति—कथं तल्लक्षण[२]ायोगः यथार्थज्ञानस्यैव प्रमाणत्वादित्यत्राह—अनधिगतार्थगन्तुरिति । तर्हि[३] ईश्वरज्ञानमप्यनधिगतार्थगं[४]न्तृत्वेन प्रमाणं भविष्यतीत्यत्राह—न चेति । तत्र परोक्तलक्षणदूषणपुरस्स[५]रं 15 स्वाभिमतलक्षणमभिदधा[६]नः सिद्धान्तयति—अव्याप्तेरिति । अपूर्वदृगिति । भावप्रधानो निर्देशः । अनधिगतपूर्वगन्तृत्वं न प्रमाणलक्षणम् । कुतः ? धारावाहिकबुद्धि[ष्वव्याप्तेः विभ्रमबुद्धि]ष्वतिव्याप्तेश्चेति शेषः । किन्तर्हि लक्षणम् ? यथार्थानुभवः । अनुभवत्वैकनियतं यथार्थत्वमित्यर्थः । कुतोऽनुभव एव मानम्, न तु स्मृतिः ? अनपेक्षतया अनुभवस्य । यथा हि स्मृतेः याथार्थ्यमनुभवपरतन्त्रम् नैवमनुभवस्येत्यर्थः । 20 अधिगतार्थगन्तुरप्रामाण्यकारणादि यावत् सम्भवमाशङ्क्य निराकुर्वाणः श्लोकं व्याचष्टे—न हीति । अतदधीनत्वादिति । प्रमात्रपेक्षानधीनत्वादिति । फलोत्पादानुत्पादाभ्यां विशेषादिति । निष्पादिते कर्मणि किं परशुनेति साधनन्यासातिपातादसाधकत्वं परश्वादेरुक्तम्, चक्षुरादेस्तु परिच्छिन्न एवार्थे पुनः परिच्छेदलक्षणफलोत्पत्तेर्नैषा रीतिः ।

25 ननु फलस्योत्पादेऽपि तस्याप्रमाणत्वात् तत्साधनं न प्रमाणं भवेदित्याह—तत्फलमिति । किमिदमिह प्रमात्वं नाम यन्निषेधः साध्यते, यथार्थानुभवत्वमनधि-

---

१—क तत् ख० तन् । २—क तल्लक्षणयोगः । ३—ख तर्ही ४ ख—गतार्थत्वेन । ५—ख पुरः सरं । ६—क अभिसन्दधानः ।

गतार्थगन्तृत्वम्वेति विकल्पाभिप्रायेण दूषयति—**न यथार्थेति**। **साध्यसमत्वादिति**। अधिगतार्थगन्तृत्वस्यैव हेतुत्वादिति। यदि तत्र प्रमाव्यवहारनिषेधः साध्यते, तदा गृहीतग्राहित्वमप्रयोजकं स्मृतौ प्रमाव्यवहाराभावस्य अव्यवहारतद्व्यवहारनिमित्त-विरहप्रयुक्तत्वात्। बाधितविषयत्वं च गृहीतग्राहिष्वपि प्रमाव्यवहारदर्शनादित्याह—**व्यवहारेति**। अस्तु निमित्तविरह उपाधिः, निमित्तं चानधिगतार्थत्वम् ततस्तद्विरहोऽ- 5
स्तीत्याशङ्क्याह—**न चेति**। अनधिगतार्थत्वस्यैव प्रमाव्यवहारहेतुत्वे विपर्ययज्ञानेऽपि तद्व्यवहारः स्यादिति, तर्हि यथार्थत्वविशिष्टमनधिगतार्थत्वं प्रमाव्यवहारनिमित्तमित्यत्राह—**नापीति**। प्रमाव्यवहारगोचराणामपि धारावाहिकबुद्धीनामनधिगतार्थत्वाभावादिति तास्वपि कालभेदावभासादनधिगतार्थत्वमस्तीत्यत्राह—**न चेति**। कालस्य स्वतो भेदा-भावादौपाधिकभेदस्य चौपाधिकभेदाधीननिरूपणत्वादुपाधीनां च सूक्ष्मत्वेनाकालयितुम- 10
शक्यत्वादिति।

नन्वज्ञातेष्वपि कालभेदरूपेषु विशेषणेषु तज्जनितस्य विशिष्टतालक्षणस्याधि-कस्यार्थान्तरस्य सद्भावादधिकविषयत्वम् धारावहनबुद्धीनामित्यत्राह—**न चेति**। यदि सत्तया कालभेदोऽपि विशिष्टतां जनयेत्, तदानागतादिकालस्येदानीमसत्त्वात् तद्विशिष्ट-स्यानुभवो न स्यात्। ज्ञानमानतया तु तज्जनने सूर्यगत्यादीनामुपाधीनामज्ञानेन तदाय- 15
त्तकालभेदस्याज्ञानात् विशिष्टता नोत्पद्येतेति विशिष्टता नाम किञ्चिद्रूपान्तरमविशेषणेन विशेष्यजन्यमिति **मीमांसकदृष्ट्या** कालभेदेन तज्जननानुपपत्तिरुक्ता, सम्प्रति सापि नास्तीत्याह—**न चैतस्यामिति**। विशेषणविशेष्यभावानुपपत्तिरेव तत्र प्रमाणमित्याह।

**नन्विति**। विशेष्यगतातिशयजननेन तदुपकारिण एव विशेषणत्वम्। अन्यथा सर्वं सर्वस्यापि विशेषणं विशेष्यं च स्यादिति अन्यथैवोपपत्तिमाह—**व्यवच्छित्तीति**। 20
व्यवच्छित्तिप्रतीतेर्जनकत्वविषयत्वाभ्यां विशेषणविशेष्यभावः, न तूपकार्योपकारकत्वाभ्याम् इति अतिशयमादधानस्यैव व्यवच्छित्तिप्रतीतिहेतुत्वेऽप्यतिप्रसङ्गः स्यादित्यत्राह—**व्यवच्छित्ताविति**। स्वभावेनैव किंचिदेवास्य चिद्व्यवच्छित्तिप्रत्यायकं भवति, न सर्वं सर्वस्येत्यतिप्रसङ्गवारणमिति। यदि स्वभावमवधीर्य व्यवच्छित्तिप्रत्यायनमतिशयाधानेनैव व्यवस्थाप्यते, तदा तत्रैवातिशयाधानं नान्यत्रेत्येषापि व्यवस्थातिशयान्तराधानद्वारा 25
स्यादित्यनवस्थेत्याह—**अन्यथेति**। मा भूत् सूर्यगत्यादिरुपाधिः, ज्ञाततोपाधिककाल-भेदेन ज्ञाततयैव वा प्रमेयाधिक्यात् धारावहनबुद्धीनां प्रामाण्यं भविष्यति, पूर्वपूर्वबुद्धि-जनितायाः ज्ञाततायाः उत्तरोत्तरबुद्धाववभासनादित्याह—**अस्त्विति**। न तावत् ज्ञातता नाम

किंचित् तत्त्वमस्तीत्यग्रे निवेदयिष्याम[1] इत्याह—नेति । अस्तु वा तस्याः सद्भावः, तथापि तत एव स्मृतावप्यधिकविषयत्वलाभात् प्रामाण्यं स्यादित्याह—तत्सद्भावेऽपीति । जनकागोचरत्वेऽपीति, ज्ञातताजनकस्य स्मरणस्य गोचरत्वेऽपीत्यर्थः । अस्तु वेति । प्रत्यक्षज्ञाने कालभेदादि कापि गतिः संभवेदपि, पूर्वं तु गृहीते तदनु
5 विस्मृते पुनः श्रूयमाणेऽर्थे जायमानस्य ज्ञानस्यानधिगतार्थत्वाभावान्न प्रमात्वं भवेदिति नेदमनिष्टापादनमित्याह—अप्रमेति । अनिष्टतामेव दर्शयति—गतमिति । कुत इत्यत आह—न हीति । अवगतत्वनिश्चयो न शक्यत इत्यत्राह—सन्देहेऽपीति । न च तत्रापि प्रत्यक्षवत्[2] गतिः संभवतीत्याह—न चेति । न चास्मिन् जन्मनि वेदार्थोऽनेनाधिगतपूर्व इति चेत् किमतस्तर्हि अनधिगतगन्तृप्रमाणमितिलक्षणं
10 प्रणयता एकस्मिन् जन्मनि परिभाषितमित्यत्राह—न चैकस्मिन्निति । अङ्गीकृत्यापि परिभाषामाह—तत्रापीति । उत्तरार्थव्याचिख्यासया पृच्छति—कथन्तर्हीति । यद्यधिगतगन्तुरपि प्रामाण्यं स्यादिति । अननुभवत्वेनेति । न त्वनधिगतगन्तृतयेति । कुत एतत् गम्यत इत्यत्राह—तत्त्वज्ञानादिति । प्रथमसूत्रे तत्त्वशब्देन यथार्थत्वस्य, ज्ञानशब्देनानुभवत्वस्य च सूत्रणात्, तथा प्रत्यक्षसूत्रे चाव्यभिचारिज्ञानपदाभ्यां यथार्थत्वास्यानु-
15 भवत्वस्य च[3] ग्रहणादिति याथार्थ्यमेव प्रमा[4]व्यवहारनिमित्तमिति मन्यमानश्चोदयति—नन्विति । नेति । लोकसिद्धव्यवहारे तन्निमित्तमात्रं परीक्षकैरनुसरणीयम्, न तु स्वमनीषकाकल्पितेन निमित्तेन व्यवहार एव नियन्तुं युक्तः, तथा सति सर्वे व्यवहाराः सर्वत्र प्रवर्तिता भवेयुः । ननु स्मृतौ प्रमाव्यवहारोऽस्तीति, यदि स्यात् ततः तद्धेतुस्संस्कारः प्रमाणमिति व्यवह्रियेत, नचैतदस्तीत्याह—न चेति । कुतोऽवगम्यत
20 इत्यत आह—पृथगिति । तथा सति हि प्रत्यक्षानुमानोपमानशब्दसंस्काराः प्रमाणानीति प्रत्यक्षादिभ्यः पृथगेवोपदिशेयुरिति । उक्तेष्विति । अर्थापत्त्यादीनामिवेति । नेति । संस्कारस्य ह्यसाक्षात्कारिफलत्वेन प्रत्यक्षे नान्तर्भावः, सत्तया ज्ञानहेतुत्वेन नानुभानादिष्विति, तदेवं स्मृतेः प्रमात्वे साध्ये यथार्थज्ञानत्वादिति हेतोः लौकिकपरीक्षकव्यवहाराभावेन बाधितविषयत्वं व्यवस्थापितम् । सम्प्रतिविशेषणासिद्धिमभिसन्दधान
25 आह—एवं व्यवस्थित इति । स्मृतेर्याथार्थ्यं तात्त्विकमौपचारिकं वेति विचार्यत इति तत्रौपचारिकत्वं दर्शयति—यदियमिति । स्मृतेर[नुभवमात्रत्वेन] तद्याथार्थ्याधीनं याथार्थ्यमतः स्वकार्ये प्रवृत्तिनिमित्तरूपे व्यवहारे हेतुर्भवन्ती प्रमितिः पूर्वानुभव एव न

---

१. क वक्ष्याम २. क प्रत्यक्षस्य ।
३. ख यथार्थत्वानुभवत्वयोः । ४. क प्रामाण्य ।

स्मृतिः, तदपेक्षत्वादिति । अनुभवपारतन्त्र्यमेव दर्शयति--**असमीचीने हीति**। अतः स्वयमयथार्थैव स्मृतिः, यथार्थेति व्यवह्रियते ।

ननु महदिदमिन्द्रजालं यदनुभावो यथार्थः, तदेकविषया स्मृतिः अयथार्थेति। मैवं यदि समानो विषय इत्येतावता तयोर्याथार्थ्यं सिध्येत् । तर्हि, श्यामे घटे श्यामताबुद्धिः साध्वीति पुनः पाकरक्तेऽपि घटे श्यामताबुद्धिः साध्वी स्यात्। अथ पूर्वश्यामताबुद्धिसमये 5 तस्यार्थस्य तादवस्थ्यात्, पाकरक्ते पुनस्तादवस्थ्याभावात् नैवमिति चेत् समः समाधिः । अनुभवकालेऽर्थस्य तादवस्थ्यात् स्मृतिकाले स्वतादवस्थ्यात् न हि पूर्ववर्तमानकालावच्छेद-रूपार्थस्य सत्ता स्मृतिकाले सति पाकरक्तेऽपि श्यामतासद्भावे वा पूर्वतैव न स्यात् । यदि पूर्वं तदवस्थ इत्येतावता याथार्थ्यम्। तर्हि पाकरक्तेऽपि श्यामतामतिः यथार्था स्यादेतदेव ह्ययथार्थ्यम् । यद्यदा यादृशोऽर्थः प्रतीयते न तदा तादृशोऽसाविति । न च निवृत्तपूर्वा- 10 वस्थाकलनमेव स्मृतौ नास्तीति तत्ताहानप्रसंगात् । न च पूर्वावस्थानिवृत्तेरेव तदंशेनाव-लम्बनात् यथार्थत्वमिति वाच्यम्; यथार्थानुभवत्वप्रसंगात्, तस्मादयथार्थाया एव स्मृतेरनुभवैकविषयत्वेन याचितकमण्डलेन कमनीयमेव स्मृतेः याथार्थ्यं तदैतत्सर्वं "तात्पर्यपरिशुद्धि" परिश्रमशालिनां सुगमं सुखं च "तार्किकरक्षा"याम् अस्माभि-र्दिङ्मात्रेण प्रदर्शितं नेह प्रतन्यते। हन्तैवं यथार्थग्रहणेनैव स्मृतिव्यवच्छेदसिद्धेः 15 किमनुभवग्रहणेन । सत्यमेवम् । तथाप्यनुभवैकनियतं यथार्थत्वमिति दर्शयितुं यथार्थानुभवो मानमित्युक्तम् । कथं तर्हि स्मृतेः व्यवच्छेद इति अनुभवत्वेनेति ग्रन्थः अभ्युपगमादेवेति द्रष्टव्यः । उक्तमर्थं यथावदजानानश्चोदयति ।

**नन्विति** । किमनेन यथावदबोधितेनेति मन्वानोऽन्यथा परिहारमाह--**विषयभेदादिति** । स्यादेतदेवं यद्यनुभवापेक्षामात्रेण स्मृतेरप्रामाण्यं ब्रूमः । तदेक- 20 विषयत्वेन तु तदपेक्षया स्मृत्यप्रामाण्यं वदतां नायं प्रसंगोऽपेक्षणीयप्रत्यक्षस्य लिङ्गवि-षयत्वादनुमानस्य च लिङ्गिविषयत्वादिति तर्हि मूलप्रमाणापेक्षस्तदेकविषयश्चागमो न प्रमाणं भवेदित्याह--**आगम इति** । नेति । श्रोतुः प्रमाणमागमः वक्तुः प्रमाणान्तरमिति। **धारावाहिकबुद्धय इति** । विषयस्य प्रमातुश्चैकत्वादिति । **नेति** । आद्याया इवोत्तरासाम् अपि कारणशुद्धिरेवापेक्षणीया न पूर्वा बुद्धिरिति । पौर्वापर्यनियमो हि 25 कार्यकारणभावः स चासामस्तीति कथं तदनपेक्षत्वमित्यत्राह--**कारणवशादिति** । सामग्रीवशायत्तत्वादन्यथासिद्धं पौर्वापर्यमिति यदि तर्हीति पृच्छति । पृच्छतोऽयमाशयः-स्मृत्यप्रामाण्येऽनुभवो न सिध्येत्, तदेकप्रमाणत्वात्तस्य तदसिद्धौ च तदपेक्षया स्मृत्य-

प्रामाण्यं दुर्भणमिति स एव सिद्धान्ती सन् शङ्कते—**स्मृतीति**। **नेति** तथानुपपत्त्या। **तेन** स्मृतिकारणेनेति। **अननुभूतेऽपीति**। यदि स्मृतेरनुभवः कारणं न स्यात्। **तर्हीति**। **किं न स्यादिति**। अनुभवस्य स्मृतिकारणत्वे प्रमाणाभावादननुभूतेऽपि स्मरणं किं न भवेदिति अनुभवकारणत्वे प्रमाणमाह—**पूर्वानुभवेति**। अनुभूतः स इति स्मृतेरा-
5 कार इति तदेतद्विकल्प्य दूषयति—**तत्किमिति**। बौद्धाः हि ज्ञानस्य विषयाकारता एव विषये प्रमाणम् विषयसिद्धिस्तु ततोऽन्या तद्धेतुकेत्याहुः। विषयाकारतैवास्य प्रमाणं तैरनुमीयत इति। अन्ये तु विषयोल्लेखिज्ञानमेव [नोपपद्यत इति] तत्सिद्धिरिति। तत्र पूर्वत्र बौद्धानामिव तवाप्यनैकान्तिकं न ह्यनागतादिज्ञाने भ्रान्ते च य आकारः परिप्लवते तत्पूर्वकत्वं तयोः तस्य तदानीमसत्त्वात् तत्पूर्वकत्वं नाम तद्धेतुकत्वं तद्विषयत्वमिति
10 यावत्। हेतुत्वमेव हि बौद्धानां विषयत्वम्। यथाहुर्वाह्यतां विद्य[ा]हेतुत्वमेव युज्येत ज्ञानाकारार्पणक्षममिति उत्तरत्र घटाद्युल्लेखिनो ज्ञानस्य पादाविवानुभवोल्लेखिन्याः स्मृतेरनु-**भवे प्रामाण्यमवर्जनीयमिति**। यदि स्मृत्यप्रामाण्ये अनुभवो न सिध्येत्। **मा भूत्तत्सिद्धिः**। न तु स्मृतिप्रामाण्यं लोकविरुद्धम् अङ्गीकार्यमित्याह—**मा भूदिति**। **न तर्हीति**। तथा च स्मृतेरनुभवपारतन्त्र्यासिद्धेः, प्रामाण्यसिद्धिरिति।

15 अथ सिद्धान्ती स्मृत्यप्रामाण्येऽपि स्मृत्यनुभवयोः कार्यकारणसिद्धिमाह—**न तद-प्रामाण्येऽपीति**। मानसं प्रत्यभिज्ञानमेव दर्शयति—**योऽहमिति**। तदेवं गृहीत-ग्राहिणोऽपीश्वरज्ञानस्य यथार्थानुभवत्वेनैव प्रामाण्यं सिध्यति। अनधिगतार्थगन्तृत्वस्या-लक्षणत्वादित्युक्तम्। इदानीं ज्ञानान्तरगृहीतविषयं हि ज्ञानम् गृहीतग्राहि भवति। न हि तथेश्वरज्ञानं तस्यैकत्वादित्याह—**न चेति**।

20 नन्वेकस्यापि पूर्वं विषयीकृतस्यैव पश्चादपि विषयीकरणेन गृहीतग्राहित्वाद-प्रामाण्यमित्यत आह—**न च तदेवेति**। प्रमात्वहेतोरन्यानपेक्षत्वस्य कालान्तरेऽपि भावादिति। अन्यान्यपेक्षत्वस्य कालान्तरेऽपि भावादिति अन्यानपेक्षत्वस्य प्रामाण्ये न किञ्चित् प्रमाणं स्यादित्यत आह—**तथापीति**॥ १ ॥

विवेकः

सत्त्वेऽपि तस्याप्रमाणत्वादिति चतुर्थीं विप्रतिपत्तिमवतारयति—**नन्विति**। प्रमाणं
25 न प्रमितिः। कुत इत्याकाङ्क्षायामाह—**अनधिगतेति**। गन्तुर्विषयिणः स्वोत्पत्ति-कालीनज्ञानाविषयविषयिण एव तथाभावात्। प्रमात्वात्। न च नित्ये तत् संभव इति भावः। अन्यथा एतस्य प्रमात्वाघटकत्वेन स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिकाल-

वृत्त्यविषयकत्वं तद्वाच्यं । तथा च तत्प्रागभावासत्त्वेऽपि न क्षतिरित्यनुशयादाह— **न चेति** ।

नन्विदं लक्षणं यथार्थत्वेन विशेषितं न वा ? आद्ये धारावाहिकबुद्धावव्याप्तिः । द्वितीये भ्रमेऽतिव्याप्तिश्च । स्वपूर्वदृक्स्वगृहीतग्राहिज्ञानत्वमलक्षणम् न प्रमालक्षणघटकं तर्हि किं लक्षणमित्यत्राह **यथार्थेति** । नन्वनुभवत्वमुपादाय स्मृतिः किमर्थं वार्यते । 5 तत्कारणमेव वाभियुक्तैः किमर्थं न प्रमाणत्वेनोपेयते अत आह—**अनपेक्षतयेति** । यत् सापेक्षा स्मृतिः तत एवावश्यकात् वस्तुव्यवस्थोपपत्तौ वस्त्वव्यवस्थापकतया न तत्करणेषु प्रमाणत्वोपगमे इति सापि न प्रमेति भावः । सापेक्षत्वञ्च स्वसमानप्रकारकस्वसमानविशेष्यकनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वम् निश्चयत्वोपादानात् योग्यताधीजन्यशाब्दबोधनिरासः । वक्तुर्वाक्यार्थनिश्चयत्वेन तथात्वं निवेश्यतां वा । 10 सामानाधिकरण्यमपि प्रत्यासत्तितया जन्यतायां कार्यतावच्छेदकप्रविष्टविषयतया कारणतावच्छेदकव्यापकत्वम् वाच्यम् । तेन विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वेऽपि न क्षतिः । धारावाहिकस्थले च विशेषणज्ञानत्वेन तत्तद्व्यक्तित्वेन चोत्तरज्ञानं प्रति हेतुत्वमिति नाव्याप्तिः । **न हीति** । यद्यपि धारावाहिकस्थले पूर्वपूर्वानुभवे नानुव्यवसायः प्रमाणं तत्र तदभावात् नेन्द्रियसन्निकर्षस्तावन्मात्रस्य 15 फलोपधानाप्रयोजकत्वात् । सामग्र्याश्चातीन्द्रियतया सन्दिग्धत्वात् । संस्कारप्रवृत्त्यादेश्वरमत्वेनाभिमतज्ञानादेरेवोपपत्तिस्तथापि सामग्रीसन्देहात् । असन्दिग्धे सन्दिग्धाव्याप्तिः ध्येया । मास्तु धारावाहिकं कालान्तरोत्पन्ने तादृशि ज्ञानेऽव्याप्तेर्दुरवगमत्वमेव अत एव **मणिकृता** वेदजन्ये इदानीन्तनज्ञानेऽप्यव्याप्तिरुक्ता । **अनपेक्षितेति** । प्रथमयैव कृतिकर्तव्यत्वादिति भावः । तदधीनत्वात् । अन्यथा दुःखाद्यनुभवस्याप्यप्रमाणत्वा- 20 पत्तिरिति भावः । पूर्वाविशिष्टता पूर्वज्ञानविषयतातिरिक्ताविषयतयाऽप्रामाण्ये उत्तराधिगतेः तदनपेक्षत्वेन उत्तरज्ञानानधीनत्वेन तस्य पूर्वज्ञानस्य तथैव स्यात् । पूर्वानपेक्षत्वेन प्रामाण्यं स्यात् तथा च तत्र लक्षणमव्याप्तमिति भावः । **अविशेषादिति** । एतच्च धारावाहिकातिरिक्तोत्तरज्ञाने यथाश्रुतमेव, धारावाहिकेऽपि तन्नये विशेषणधियोऽजनकत्वात् यथाश्रुतमेव ज्ञेयमिति **केचित्** । साधकतमत्वं ज्ञानरूपक्रियाकरणत्वं । 25 **फलेति** । तत्र तस्य धर्मिणोरभावादेरनवच्छिन्नान्तरम् इह तु न तथेति भावः । तत्फलं गृहीतगोचरं ज्ञानम् । **मात्रेति** । विशिष्टज्ञाने व्यभिचारवारणाय । ननु सिद्ध्यभावदशायां साध्यते इत्यत्राह **साध्यसमत्वाच्चेति** । तस्यैव हेतुतया सन्दिग्धासिद्धतया न तेन साधनसंभव इति भावः । व्यवहारनिषेधे प्रमात्वव्यवहारनिषेधे । **तन्निमित्तेति** ।

प्रमात्वव्यवहारनिमित्तविरहेत्यर्थः । तच्च व्यवहर्त्तव्यतावच्छेदकं सत्यपि तदवच्छेदके व्यवजिहीर्षाविरहादपि तदभावसंभवात् । साध्यव्यापकत्वमाशङ्क्याह—बाधितत्वाचेति । वक्ष्ये साधनाव्यापकत्वासंभवादुपाधिं निरस्यति । न चेति । एतदेवागृहीतग्राहित्वमेव तन्निमित्तमित्यनुपज्यते । बाधेति । तत्र च व्यवहारः प्रामाणिक एवेति
5 भावः । तत्कालविशिष्टतया तत्तत्कालकलाविषयतयानधिगतगन्तृत्वं कालकलाप्रकारेण विषयाणामेव वाऽनधिगतत्वम् । अनाकलनात् । विशेषणज्ञानरूपकारणाभावादिति शेषः ।

ननु विशेषणज्ञानं न तथाऽपि तु विशेषणं तच्च पूर्वलक्षणरूपमुत्तरज्ञाने भासते । स्वोत्तरक्षणाधारतैव हि संसर्ग इत्याशङ्कते—न चेति । जनितेति । विशेषणजनितेत्यर्थः । स्वरूपेण तज्ज्ञाने स्वरूपसतो विशेषणस्य विशिष्टधीजनकत्वे । ननु विशेषण-
10 ज्ञानं विशेष्यविशिष्टतां जनयति । सैव च विशिष्टता तत्फलस्य विषय इति तमेवादायागृहीतग्राहिता स्यादित्याशङ्क्य विशिष्टतामेव निराकरोति । न चेति । नचैतस्यामिति । ननूपकार्यं विशेष्यमुपकारकञ्च विशेषणमित्यवश्यं विशेषणज्ञानेन विशेष्ये कश्चिदुपकारः सन्धेयः सैव च विशिष्टतेत्याह—न चेति । उत्तरं व्यवच्छिन्नत्तीति येन यत्र यद्व्यवहितव्यवच्छित्तिप्रत्ययजनकं तत्तत्र विशेषणमित्येतावतैवानतिप्रसङ्गादित्यर्थः ।

15 ननु तदेव तत्रैव व्यवच्छित्तिप्रत्यायकम् इत्यत्रैव किं नियामकमित्यत्राह—व्यवच्छित्ताविति । अन्यथा तत्रैव विशिष्टतामादधाति नान्यत्रेति । किं नियामकम् तत्रापि नियामकान्तरापेक्षायां चानवस्थेत्याह अन्यथेति । ननु धारावाहिकस्थले पूर्वज्ञानं स्वजन्यज्ञाततताविषयकमेव द्वितीयादिज्ञानं जनयति । स्वप्रकाशतादीनां स्वमिव स्वजनकज्ञानाहिता ज्ञातता प्रमासमयोत्पत्तिकापि प्रत्यक्षे भासते इत्यभिप्रेत्याह—
20 ज्ञाततैवेति । उपाधिर्द्वितीयादिज्ञानानां विषयीभूयभेदकः ।

नन्वेवं धारावाहिकस्मृतावपि उत्तरोत्तरस्मृतौ पूर्वपूर्वस्मृततताभानात् प्रामाण्यं स्यात् । प्रत्यक्षे सन्निकृष्टायाभावानुभवाविषयस्यापि तस्या भाने अविरोधादित्याह—तत्सद्भावेऽपीति । ननु मास्तु उक्तप्रणाल्या प्रत्यक्षे ज्ञातताभानं किन्तु प्राथमिकज्ञानकारणीभूतज्ञानाहिता ज्ञातता प्रथमज्ञानोत्पत्तिक्षणोत्पत्तिका धीर्वा द्वितीयादिज्ञाने भासेत, इन्द्रियसन्नि-
25 कर्षादेः सत्त्वात् । स्मृतौ च नानुभवाविषयज्ञातताभानं कारणनुपपत्तेरित्यत आह । अस्तु वेति । गृहीतो विस्मृतोऽर्थो यस्या एवम्भूता या श्रुतिः शाब्दोबोधस्तस्याः का गतिः ? सा प्रमा अप्रमा वेति ? विस्मृतत्वावधारणं स्मृतेरेव तत्र प्रवृत्त्याद्युपपत्तेः शाब्दज्ञानानुत्पत्तेरपि न क्षतिरिति शङ्काव्युदासाय । यद्वा इदानीं विशिष्टज्ञानानुत्पत्तौ अनन्तरं स्मृतिर्न स्यात्

विस्मृतत्वेन पूर्वज्ञानाधीनस्मृतेरसंभावादिति बोधनाय। तत्प्रमैवेति उपस्थितानां पदार्थानां तत्रासंसर्गाग्रहमात्रं तत एव च तत्र प्रवृत्त्यादिरिति स्मृतिरपि न तत्र विशिष्टज्ञानमपि-तूपस्थितानामसंसर्गाग्रहमात्रमिति भावः। केनचिदिति। येन पुरुषेणाधिगतस्तत्रैव तत्प्रामाण्यं स्यादिति शङ्कते—नचेति। प्राथमिकस्तनपानादेरिष्टसाधनतावति प्रसङ्ग-व्यवच्छेदाय तत्रापि शाब्दबोधेऽपि तदानुपस्थितत्वादिति भावः। 5

ननु त [दन्य-] गृहीतार्थग्राहित्वं वाच्यम्। तज्जन्मनि प्राथमिकशाब्दबोधमादाय श्रुतेः प्रामाण्यं स्यादिति शङ्कते। न चेति। प्राथमिकस्तनपानेष्टसाधनतास्मृतावतिप्रसंगं स्फुटत्वादुपेक्ष्य दोषान्तरमाह—तत्रापीति। तज्जन्मन्यपि इत्यर्थः। तत्र च प्रामाण्य-व्यवहारः प्रामाणिकानामस्तीति तद्व्यवच्छेदो नोचित इति भावः। अत एव वक्ष्यति—सिद्धे व्यवहार इत्याद्यनुभवत्वेन लक्षणप्रविष्टेन क्वचिदनुभवत्वेनेति पाठः। तत्र स्मृति- 10 रप्रामाण्यमननुभवत्वेनेत्यर्थः। तत्त्वज्ञानादिति। यथार्थज्ञानत्वेन यत्प्रमाणं साध्यते किं तत् यदि यथार्थज्ञानत्वं तदा साध्याविशेषः। यदि यथार्थानुभवत्वं तदा बाधः, यदि प्रामाणिकताद्दशव्यवहारविषयत्वन्तदा ताद्दशव्यवहारविषयतावच्छेदकधर्मवत्त्वमुपाधिरित्य-भिप्रायेणाह—सिद्ध इति। तद्व्यवहारविषयतया यत्स्वेच्छाकल्पितं तेन प्रामाणिकानां व्यवहारनियमः तेन तत्साधनम्। अव्यवस्थयेति। मयाऽप्रमाणाव्यवहारविषयतावच्छेदकत्वेन 15 यत्कल्पितं ततोऽप्रामाण्यं स्यात् यथा चैकस्य विरुद्धव्यवहारविषयत्वं स्यादित्यर्थः।

ननु प्रामाणिकव्यवहारविषयतावच्छेदकमपि यथार्थज्ञानत्वमेव न कुत इति कुतो निर्णीतमित्यत्राह—न चेति। यदि च सा प्रमा स्यात् तदा तत्करणस्य प्रमाणान्तरत्व-मापद्यत इति भावः। शङ्कते—उक्तेष्विति। प्रत्यक्षादिष्वित्यर्थः। अनुपदेशः पृथगु-पदेशान्तरः। प्रत्यक्षस्येति—असाक्षात्कारिफलत्वम्। साक्षात्कारिभिन्नज्ञासाधारणकारणत्वम्। 20 स्मृतेष्वसाक्षात्कारित्वं सर्वमतसिद्धमिति भावः। सद्भावमात्रेणेति। प्रतीतं ज्ञानं च तदा तस्यानुभवस्य प्रामाण्यमव्यवस्थाप्य स्थितौ व्यवहर्तुं न शक्यते। व्यवहारेऽपि स्मृतौ प्रमाणत्वव्यवहारे सत्यपि याथार्थ्येऽनुविधानमुक्त्वाऽयथार्थेऽपि तदाह—असमीचीने हीति। यद्यप्येवमप्रमाव्यवहारोऽपि न स्यादिति शक्यत एव वक्तुम्। तथापि सिद्धे हीत्याद्युपष्टम्भकतयेदमभिहितम्। न चाप्रामाण्यव्यवहारे तथा अत एवोक्तमेवं सिद्ध 25 इति मूलप्रत्यक्षं हेतुभूतम्। तदनुविधानात्। तदिति। स्वसमानविषयकवक्तृज्ञानं याथार्थ्यानु-विहितं याथार्थ्यत्वात्। कारणेति। तस्य विशेषणज्ञानत्वेन तत्त्वेन वा तत्र हेतुत्वं न तु स्वसमानविषयकनिश्चयत्वेनेत्यर्थः।

ननु यदि स्मृतिर्नागृहीतग्राहिणी तदानुभव एव किं मानमिति अतीतानुभवविषयत्वरूपां तत्तामुल्लिखन्ती स्मृतिरेव तत्र मानम्। न चास्वप्रकाशवादिनोऽनुभवोऽपि तद्विषय इत्यभिप्रेत्य शङ्कते। **यदीत्यादि**। उत्तरम्। **स्मृत्यन्यथेति**। तथा च तादृशी तत्ता न तस्या विषय इति भावः। तया कार्यरूपस्मृत्याऽननुभूतेऽज्ञाते। बौद्धानामुत्तरं किमिति। तथा च वीतरागजन्मदर्शनादिति न्यायेन मानादेवात्मनः सिद्धिरिति भावः। पूर्वानुभवोल्लेखः तत्ताकारतयाऽन्यथा पूर्वानुभवं विना। बौद्धवत् सौत्रान्तिकवत् विषयाकारस्यानुभवे नीलाद्याकारस्यानुपपत्त्या कादाचित्कत्वस्यान्यथानुपपत्त्या कारणीभूतस्य विषयस्य नीलादेः सिद्धिः त्वयापि नैयायिकेनापि। तथाभूतं तद्विषयकं यथान्यायसिद्धान्तं तत्सिद्धिः। पूर्वानुभवसिद्धिः। आकारे कदाचित्कत्वान्यथानुपपत्त्या कारणतया विषयाक्षेपे तन्नये यथानुगताकारविज्ञानेनैकान्तिकत्वम् दोषस्तथान्वये च तथा च नानुभवसिद्धिरिति भावः।

ननु कारणतया न तदाक्षेपः अपि त्वाकारस्य पारमार्थिकविषयत्वव्याप्यतया। न चानागताकारज्ञाने तद्व्यभिचार इत्यनुशयादाह—**विभ्रमे चेति**। तन्नये सद्विषयकस्यैव तत्त्वादिति भावः। वस्तुतस्तु तन्नये गृहीतग्राहित्वमतीतज्ञानाकारातिरिक्ताकारत्वमेव वाच्यमितरस्य गृहीतत्वस्य दुर्वारत्वात्। तथा च तत्ताकारतामादाय तत्त्वं दुर्वारमेवेतिध्येयम्। तस्याः स्मृतेरनुभवाग्राहितयाऽप्रमात्वेऽपि तस्यानुभवस्योपपत्तेः। निरुक्तप्रत्यभिज्ञेवानुभवे प्रमेत्याखण्डलार्थः। न च तदेवेति ध्येयम्। अन्यथा प्रमात्वेन त्वदभिमतस्यापि ज्ञानस्य स्थितिक्षणेऽप्रामाण्यं स्यात्। उत्पत्तिक्षणे विषयीकृतस्य विषयीकरणादिति भावः॥ १॥

स्यादेतत्। अनुपकारकं विषयस्य, तदीयमेतदीयं वा न भवितुमर्हत्यविशेषात्। न च तस्येत्यनियतं तत्र प्रमाणमतिप्रसङ्गात्। न च तदभिज्ञमन्तरेण तदुपकारस्योत्पत्तिः, तथानभ्युपगमात्। अभ्युपगमे वा, कार्यत्वस्यानैकान्तिकत्वात्।

अत्रोच्यते—

**स्वभावनियमाभावादुपकारोऽपि दुर्घटः।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा॥ २॥**

विशेषाभावात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तेः। स्वभावनियमेन चोपपत्तौ तथैव विषयव्यवस्थोपपत्तेः। अवश्यञ्चैतदनुमन्तव्यम्, अतीतादिविष-

यत्वानुरोधात्। न हि तत्र ज्ञानेन किञ्चित् क्रियते इति शक्यमवगन्तुम्। असत्त्वात्। न च तद्धर्मसामान्याधारं किञ्चित् क्रियते इति युक्तम्। तेन तस्यैव विषयत्वप्राप्तेः। तादात्म्याद्विशेषस्यापि सैव ज्ञाततेति चेत्, तत् किं चक्षुषा घटे ज्ञायमाने रसोऽपि ज्ञायते, तादात्म्यात्। घटाकारेण ज्ञायत एवासौ रस इति चेत्। अथ रसाकारेण किं न ज्ञायते। तेन रूपेण ज्ञातताऽनाधारत्वादिति चेत्। न तर्हि वर्त्तमानसामान्यज्ञानेऽप्यतीतानागतादिज्ञानम्, तेनाकारेण प्राकट्यानाधारत्वादिति ॥ २ ॥ 5

आमोदः

पूर्वं ज्ञाततानिराकरणं प्रतिज्ञातम् इदानीमवसरं प्राप्य तां निराकर्त्तुं भट्टमतमुत्थापयति--**स्यादेतदिति**। यदि घटज्ञानेन घटविषये कश्चिदुपकारो ज्ञाततालक्षणो न जननीयः, तदा घटज्ञानस्य पटविषयता किन्न स्यान्नियामकाभावादित्यर्थः। ननु किं नियामकेनेत्यत आह--**न चेति**। 10 एवं सर्वं ज्ञानं सर्वविषयकं स्यादित्यर्थः। ननु घटज्ञानं घटे ज्ञाततां मा जनयतु, चक्षुरादिना ज्ञानजनकेनैव ज्ञातता जन्यतामत आह--**न चेति**। यस्मिन्नुपादाने ज्ञाततालक्षणं कार्यं स्यात् तज्ज्ञानमावश्यकमित्यर्थः। **कार्यत्वस्येति**। क्षित्यादिकमुपादानगोचरज्ञानजन्यं कार्यत्वादिति। तज्ज्ञाततायामनैकान्तिकं स्यादित्यर्थः। 15

**स्वाभावेति**। स्वभावसम्बन्धो यदि न नियामकः, तदा ज्ञाततापि घटीया न स्यात्। न हि सा सम्बन्धान्तरेण तस्य, तथा सति अनवस्थाप्रसङ्गात्। तथा च स्वभावसम्बन्धेन ज्ञानमेव घटीयमस्तु, किमुपकारेणेत्यर्थः। ननु घटो ज्ञात इत्यनुभवबलात् तत्रैव स्वभावसम्बन्धोऽस्तु, न तु ज्ञानविषययोरपीत्यत आह--**सुघटत्वेऽपीति**। **सतीति**। विद्यमान 20 इत्यर्थः। असति अतीतेऽनागते वा। **का गतिरिति**। समवायिकारणं विना कार्यानुत्पत्तेरित्यर्थः। ननु द्रव्यत्वं घटत्वं वा यद्विद्यमानं तत्रैव ज्ञातताधानमस्तु इत्याह--**न चेति**। तादात्म्याच्च ज्ञाततैव तत्त्वतो ज्ञातता स्यादित्याह--**तादात्म्यादिति**। **तत्किमिति**। घटघटत्वयोरिव घटरसयोरपि तादात्म्याविशेषादित्यर्थः। **अथेति**। तेनाप्याकारेण तादात्म्यादित्यर्थः। ननु येन 25 रूपेण ज्ञातताधानं तेनैव तादात्म्यबलात्तज्ज्ञानं भवति न त्वन्येनेति शङ्कते--**तेनेति**। **वर्तमानसामान्येति**। वर्तमानश्च तत्सामान्यश्चेत्यर्थः। **तेनाकारेणेति**। अतीतानागताकारेणेत्यर्थः **प्राकट्यं** ज्ञातता ॥२॥

बोधनी

मा भूत् गृहीतग्राहित्वादीश्वरज्ञानस्य प्रामाण्यं विषयाव्यवस्थया भविष्यतीत्याह—**स्यादेतदिति**। न हि विषयगतं किंचिदतिशयमनादधत् घटस्येदं ज्ञानं न पटस्येति व्यवतिष्ठते। उभयत्रापि अविशेषादिति ततः किमित्यत आह—**न चेति**। सर्वस्य सर्वत्र प्रामाण्यप्रसङ्ग इति तर्ह्यधीयतामिति इश्वरज्ञाने[न] नोपकार इत्यत्राह—**न च तदिति**।
5 न हि भवत्पक्षे उपकारजनकज्ञानाभिज्ञमन्तरेणोपकारोत्पत्तिः सर्वस्यापि कार्यजातस्योपादानोपकरणाद्यभिज्ञाकर्तृपूर्वकत्वनियमाङ्गीकारात् तदभिज्ञामन्तरेणाप्युपकारोत्पत्त्यंगीकारे वा कार्यत्वस्य तेनैवानैकान्तिकत्वात्। न चोपकारकमीश्वरज्ञानमिति तदीयेनैव ज्ञानान्तरेण ज्ञायत इति युक्तम्, तदेकत्वाभ्युपगमात् ज्ञानान्तराभ्युपगमे च तस्याप्युपकारजननार्थं ज्ञानान्तरापेक्षायामनवस्थानादिति। तदयं संक्षेपः, न तावदीश्वरज्ञानं तदभिज्ञामन्तरेण विषय-
10 गतमुपकारं जनयति, तथा च सति कार्यत्वस्यानैकान्तिकत्वप्रसङ्गात्। न च तद्विषयं ज्ञानान्तरमस्ति, अनभ्युपगमात् अनवस्थानाच्च। न चोपकारजननमन्तरेण विषयस्य व्यवस्था सिध्यति। न चाव्यवस्थितविषयं प्रमाणं नाम, तस्मादीश्वरज्ञानं न प्रमाणमिति। यद्वा धारावहधियां ज्ञाततोऽधिकाधिकाधिकविषयत्वमाशङ्क्य तन्निराकरणं सामान्यतः कृतम् स्मृतीनामपि तत एव प्रामाण्यं स्यादित्युक्तम्।

15 इदानीं तन्निराकर्तुमाशङ्कते—स्यादेतदिति। अन्यथोपपत्त्या दूषयति—**स्वभावनियमाभावादिति**। उपकाराधानपक्षेऽपि तत्रैव उपकारो नान्यत्रेति। को नियन्ता यदि स्वभावनियमः, तर्हि विषयनियमेऽपि प्रतिसन्दधीथाः। तदवधीरणे हि व्यवस्थिताधार उपकारोऽपि दुर्घटः स्यात्। अथ स्वभावमन्तरेण यथाकथञ्चित् उपकारस्सुघटः। सत्यपि सुघटत्वेऽर्थे तदन्यथात्वे सत्यर्थे का गतिः? उपकारस्य अतीतानागतादेरसत्त्वेन
20 ज्ञानजन्यफलानाधारत्वाद्विषयत्वव्याघात इत्यर्थः। स्वभावनियमाभावादिति गतमुत्तरमर्थं व्याचष्टे—**अवश्यं चेति**। स्वभावेनैव विषयनियमो ज्ञानस्य। एतदिति।

नन्वतीतादिविशेषाणामसत्त्वेऽपि तदाश्रयस्य सामान्यस्य नित्यत्वात्तदधीन उपकारः आधास्यत इत्यत्राह—**न चेति**। नन्वतीतादिज्ञानजन्यस्योपकारस्य सामान्याश्रयत्वे तदेव तद्विषयः स्यात्। ज्ञातताश्रयस्यैव विषयत्वाङ्गीकारादिति।

25 ननु सामान्यविशेषयोस्तादात्म्यात् सामान्याश्रयापि ज्ञातता विशेषाश्रयस्यापि स्यादित्यत आह—**तादात्म्यादिति**। अनिष्टप्रसंगेन दूषयति—तत्किमिति।

ननु द्र्याकारो रसः तर्हि रसोऽपि ज्ञात एवेति नेदमनिष्टापादनमित्याह —**घटाकारेणेति**। सुगममन्यत्॥ २॥

विवेकः

निराकरिष्यमाणत्वादित्यनेनोक्तं चिकीर्षुः शङ्कते— **स्यादेतदिति**। अनुपकारकं विषयतानियामकस्य तन्निष्ठस्याजनकमेतदीयं तदीयभिन्नं यद्यदीयं तत्तद्भिन्नीयमिति वाऽविशेषात् ज्ञानात्मत्वेन निखिलज्ञानानामभेदात्। न चेति। अनियतं नियामकरहितं ज्ञानं तस्य विषयस्येत्यत्र प्रमाणमस्तीति योजना। यद्वा तस्येत्यनियतस्यैव तदिति नियामकशून्यं ज्ञानं तत्र प्रमाणं तत्सिद्धिरूपमतिप्रसंगात् निखिलधियां सर्वत्र प्रमाणत्वापातात्। 5

ननु तादृशज्ञानसामग्र्यैव तन्नियामकमुपकारं जनयतीति नातिप्रसङ्गः इत्याह— **न चेति**। तदभिज्ञं तदभिज्ञा तच्चोपपादकत्वेनाभिमतं। ननु प्राथमिक तद्गोचरज्ञान-सामग्रीत एव निखिलधारावाहिकज्ञानीयतानियामकस्य विषयसमवेतकार्यस्योपपत्तिरस्तु, स चोपकारः प्रथमवृत्तिरपि विषय इति द्वितीयादिज्ञानानां नागृहीतग्राहिता इत्याशङ्क्य निराकरोति—तदभिज्ञं तद्गोचरं ज्ञानं ज्ञानसामग्र्येव तादृशोपकारजनकत्वस्य भवद्भिर- 10 नुपगमात्। **कार्यत्वस्येति**। नित्यभववज्ज्ञानसामग्र्या अभावात् तस्य तदविषयकत्वे क्षित्याद्युपादानस्य ज्ञानविषयत्वाभावात्। कार्यत्वस्य उपादानगोचरज्ञानजन्यत्वव्याप्तिर्न-स्यादित्यर्थः। तथा चोपगतेनापि भगवता किमिति भावः। इदं ज्ञानमत्रैवोपकारमाद-धातीत्यत्र यः स्वभावो नियामकः स एव विषयतायामप्यस्तु, अन्यथा तन्नियतोपकारोऽपि दुर्घटः आपद्येत। एवमुपकारस्य स्वभाव एव सम्बन्धो वाच्यः, सम्बन्धान्तरेऽन- 15 वस्थानात्। तथा च ज्ञानविषययोरपि स्वभाव एव सम्बन्धोऽस्तीत्याह—**स्वभावेति**।

ननु तत्रोपकाराधीनद्वित्वादाविव प्रागभाव एव नियामको वाच्यः सम्बन्धस्य स्वरूपसम्बन्धेनान्यथासिद्धिश्च समवायसिद्धेरपि विरोधिनी स्यादित्यनुशयादाह— **सुघटत्वेऽपीति**। सति ज्ञानकालवृत्तित्वे सति तत् प्राक्कालवृत्तौ असति निरुक्तभिन्ने तत्र तेनोपकारस्योत्पादयितुमशक्यत्वात्। विशेषो नियामकः फलं ज्ञातता स्वभावनियमेन 20 स्वभावात्मकनियामकेन तस्य निरुक्तनियस्योपपत्तौ द्वितीयं कारिकार्द्धं व्याकरोति— **अवश्यमिति**। **अतीतेति**। अतीतादेर्विषयता व्यवस्थानुरोधादित्यर्थः। **न चेति**। तस्यातीतादेर्यो धर्मः जातिरूपस्तदाधारः तदधेयं क्रियत इत्यत्र ज्ञानेनेति प्राक्तन-मनुषज्यते। तेन सामान्याधेयफलेन तस्यैव सामान्यस्यैव न तु धर्मिणः तादात्म्यात्। सामान्यतद्वतोरभेदात्। विशेष्यस्य धर्मिणस्तादात्म्यात् रसतद्वतोरभेदात्। उत्तरम्। 25 **घटाकारेणेत्यादि**। अत्राकारः तत्तद्विलक्षणज्ञाततोपलक्षणं तत्र च विलक्षणसामग्री-प्रभवज्ञानमेव जनकमिति हृदयम्। वर्तमानं यत्सामान्यं तज्ज्ञानेऽपि तदाकार-ज्ञाततोत्पत्तावपि वस्तुतो भेदाभेदस्यैवाप्रामाणिकत्वमवसेयम् ॥ २ ॥

ननु क्रियया कर्मणि किञ्चित् कर्त्तव्यमितिव्याप्तेरस्त्वनुमानम्। न।

**अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया।**
**तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ ३ ॥**

धात्वर्थमात्राभिप्रायेण प्रयोगे संयोगादिभिरनैकान्तात्, न हि शरसंयोगेन
5 गगने किञ्चित् क्रियते, अन्त्यशब्दाभिव्यक्त्या वा, स्पन्दाभिप्रायेणासिद्धेः। व्यापाराभिप्रायेण शब्दलिङ्गेन्द्रियव्यापारैर्व्यभिचारात्, न हि तैः प्रमेये किञ्चित् क्रियते, अपि तु प्रमातर्येव। फलाभिप्रायेणापि तथा। अन्ततस्तैरेवानैकान्ताद्, अनवस्थानाच्च। आशुविनाशिधर्माभिप्रायेण द्वित्वादिभिरनियमात्। आशुकारकाभिप्रायेण कर्मण्यसिद्धेः, कर्मण्याशुकारकं ज्ञानमित्येव हि साध्यम्। कर्त्तर्याशुकारकत्वस्य कर्मोपकारत्वेना-
10 व्याप्तेः। शब्दादिव्यापारैरेवानेकान्तात्।

स्यादेतत्, अनुभवसिद्धमेव प्राकट्यम्। तथा हि—ज्ञातोऽयमर्थः इति सामान्यतः, साक्षात्कृतोऽयमर्थ इति विशेषतो विषयविशेषणमेव किञ्चित् परिस्फुरतीति चेत्। तदसत्॥ ३ ॥

आमोदः

ज्ञाततासाधकं प्रकारान्तरं शङ्कते—**नन्विति**। ज्ञानस्यापि
15 क्रियात्वेन तेनापि कर्मणि विषये घटादौ किमपि जननीयं तेन धात्वर्थावच्छेदकपरसमवेतक्रियाफलशालित्वं कर्मत्वं विषयस्य निर्वहतीत्यर्थः। **अनेकान्तादसिद्धेर्वेति**। व्यवस्थितो विकल्पः। धात्वर्थविवक्षायामनैकान्तिकत्वमेव, स्पन्दविवक्षायां स्वरूपासिद्धिरेव। ननु ज्ञातो घट इत्यनुभव एव ज्ञाततायां प्रमाणमित्यत आह—**तद्वैशिष्ट्येति**। **तदिति** ज्ञानं परामृशति।
20 तेन ज्ञातो घट इत्यत्र ज्ञानवैशिष्ट्यमेव प्रकाशते न तु ज्ञाततावैशिष्ट्यम्। **अधिके** ज्ञाततायाम्।

**न हीति**। शरे संयुज्यते गगनमित्यत्र धात्वर्थः संयोगः, न तु तेन गगने कर्मणि धात्वर्थतावच्छेदकं किञ्चित् फलं जन्यत इत्यर्थः। **अन्त्यशब्दाभिव्यक्त्या वेति**। अत्राभिव्यक्तिरुत्पत्तिः। अन्त्यशब्देन गगने शब्दस्य जननाद्व्यभिचारः स्यादेवेति भावः। अपव्याख्यानमन्यत्, अन्त्यशब्दस्या-
25 तीन्द्रियत्वाभ्युपगमात्। **असिद्धेरिति**। ज्ञानस्पन्दत्वाभावादिति भावः। **शब्दलिङ्गेन्द्रियेति**। पदार्थस्मरणसन्निकर्षलिङ्गपरामर्शैः प्रमेये किमपि न जन्यत इति भवति व्यभिचार इति भावः। **फलेति**। शब्दादिव्यापारा-

णामपि फलरूपत्वात् तत्रैव व्यभिचार इत्यर्थः । **तेनैवेति** । प्राकट्येनैवेत्यर्थः, फलेनैव वा । ननु फलेनैव किञ्चित् किञ्चित् क्रियतामत आह—**अनवस्थानादिति** । **अनियमादिति** । व्यभिचारादित्यर्थः । **असिद्धेरिति** । कर्मण्याशुकारकत्वस्य हेतोः साध्याविशिष्टत्वादित्यर्थः । कर्तर्याशुकारकत्वं च हेतुः शब्दादिव्यापारे व्यभिचारीत्याह—**कर्तरीति** । द्वितीयार्धं व्याख्यातुं शङ्कते—**अनुभवेति** ॥ ३ ॥ 5

बोधनी

मा भूद्विषयनियमान्यथानुपपत्तिः, प्रमाणमनुमानं तु भविष्यतीत्याह—**नन्विति** । ज्ञानं स्वकर्मणि किञ्चित् करोति, क्रियात्वात्, विदिक्रियावदिति विकल्पाभिप्रायेण दूषयति—**अनैकान्त्यादिति** । किमिदमिह क्रियात्वं विवक्षितम्, धात्वर्थमात्रं स्पन्दो वा । पूर्वत्र संयोगादिभिरनैकान्त्यात्परत्रासिद्धेः न क्रियात्वं ज्ञाततालिङ्गं भवति । वा शब्दोऽत्र 10 व्यवस्थितविकल्पार्थं मा भूत्, अन्यत् ज्ञातोऽयमर्थः इति विषयविशेषणत्वेन ज्ञाततायाः स्फुरणात् प्रत्यक्षमेव प्रमाणमित्यत आह—**तद्वैशिष्ट्येति** । ज्ञातोऽसाविति, ज्ञानविशिष्टत्वेनार्थस्य प्रकाशनात्, ज्ञानावधिके ज्ञाततारूपे प्रत्यक्षानुभवो नास्ति, तदनेन प्रत्यक्षस्य विषयान्तरविनियोगेनान्यथासिद्धिरनुक्तेति व्याचष्टे—**धात्वर्थेति** । संयोगो हि युजिधातोरर्थः । न च तेन संयुज्यमाने गगने किंचित् क्रियते । **अन्त्यशब्दाभिव्यक्त्या वेति** । तस्मिन्नभिव्यज्यमाने यावदतिशयाधानं तस्यानवस्थानात् । आद्यादीनां तु अनभिव्यक्तेरन्त्य इत्युक्तम् । अथ स्पन्दः क्रिया । तदसिद्धम्, कार्यत्वे सति विभुद्रव्यसमवायिनो ज्ञानस्य गुणत्वादित्याह—**स्पन्देति** । 15

ननु व्यापारः क्रिया, स च हेतूनामविषयौन्मुख्यम् । तच्च ज्ञानानामप्यस्ति इत्यत्राह—**व्यापारेति** । कथमनेकान्ताः यावता तेऽपि ह्यभिधानार्थसन्निकर्षमरामर्शिआत्मनो ज्ञानमुत्पादयन्तीत्यत्राह—**न हीति** । फलं क्रिया तत्राप्यनैकान्तिकत्वमतिदिशति—**फलेति** । न हि गमनफलेन प्राप्त्या ग्रामे किंचित् क्रियत इति माभूदन्यदनैकन्तिकोदाहारणं तेनैव ज्ञानजन्यत्वेन त्वया साध्यमानेन फलेनानैकान्तिकत्वं, न हि तेनापि विषये किञ्चित् क्रियत इत्याह—**अन्तत इति** । यदि फलेन फलान्तरं जनयितव्यमेव, ततस्तेन तेनापीत्यनवस्थानमेवेत्याह—**अनवस्थानाच्चेति** । यद्याशुविनाशिधर्मसंक्रियात्वं तत्राह—**आशुविनाशीति** । नह्याशुविनाशिनो द्वित्वादयः स्वाश्रये किंचिदादधति । एकत्वसंख्ययैव संख्यान्तरोपजननादिति आशुकारकत्वं 20 25

[कुर्यात् ] [न च] ज्ञानं च तथा। न हि तत् क्षणमप्यास्त इति न्यायादित्याह—आशुकारकेति। किमिह कर्मण्याशुकारकत्वं हेतुः, कर्तरि वा। पूर्वत्र साध्यसमो हेतुः उत्तरत्र व्याप्त्यसिद्धिः, पूर्वोक्तैरेव शब्दादिव्यापारैर्व्यभिचारात्। न तर्हि ते कर्तव्यात्मनि ज्ञानं कुर्वन्तं [ अनुमेयादौ किंचित् जनयन्ति। येऽपि किंचित् ]
5 जनयन्तीति उत्तरार्धं व्याचिख्यासुः शङ्कते—अनुभवसिद्धिमिति। ज्ञानमात्रजन्यातिशयो ज्ञाततारूपेण सामान्यतः स्फुरति, प्रत्यक्षज्ञानजन्यस्तु साक्षात्काररूपेण विशेषत इति—तदसदिति। यथा हि—स्वयमनाकाराणां ज्ञानानां घटज्ञानं पटज्ञानं घटादिविशिष्टतया व्यवहारो घटादिजन्यमतिशयमन्तरेणैव तदवच्छेद्यतामात्रेण भवति। ज्ञातो घट इत्यादि व्यवहारोऽपि ज्ञानजन्यातिशयाभावेऽपि ज्ञानक्रियावच्छेद्यतामात्रेणो
10 पपद्यत इति ॥ ३ ॥

विवेकः

ननु घटं जानातोत्यत्र घटस्य ज्ञानकर्मता क्रियाजन्यफलसमवायं विनानुपपद्यमानं ज्ञाततारूपं तदाक्षिपति अतीतादौ तु भाक्तस्तद्व्यवहार इत्यभिप्रायेणाह—

**नन्विति**। ननु या क्रिया सा परसमवेतजनिकेत्यत्र यदि क्रियात्वं धात्वर्थादिकं तदानेकान्तः शरगगनसंयोगादौ। यदि च स्पन्दत्वं तदा प्रकृते स्वरूपासिद्धिरित्याह—
15 **अनैकान्तादित्यादि**। क्रिया क्रियात्वतादात्म्येन सा एव वा तथा। ननु ज्ञातो घट इत्यनुभवे ज्ञातता भासत इति स एव तत्र मानमित्यत्राह—**तदिति**। तस्य ज्ञानस्य स्वरूपसम्बन्धात्मकवैशिष्ट्यविषयकत्वात्। अधिके तदभिमते प्रत्यक्षानुभव इन्द्रियजन्यं ज्ञानं न प्रमाणमिति शेषः। प्रयोगे क्रियात्वादिति हेतोः समवेतं संयोगेन शब्दविभागाजनके शरस्य चान्त्यावयवितया न संयोगजनकता। यथाश्रुतेरित्यरुचेराह—**अन्त्येति**।
20 तस्य क्षणिकतया तदभिव्यक्त्या तत्र ज्ञाततायाः अनवधानादिति भावः। **असिद्धेः**। स्वरूपासिद्धेः। यः प्रमाणव्यापारः स प्रमेयसमवेतं किञ्चिज्जनयति। यथा आत्मज्ञानं तत्र संस्कारजनकमित्यभिप्रायेणोक्तम्। **शब्देति**। घटस्मृतिघटेन्द्रियसंयोगतद्विशेष्यकलिङ्गपरामर्शैस्तत्समवेतजनकैः तत्र पदार्थस्मृतिपरामर्शौ अविद्यमानविषयौ संयोगश्च विभागाजनको वोध्यः तेन तन्नये ज्ञाततया स्वनये विभागेन साध्यसम्पदिति ध्येयम्।
25 ननु यत्प्रमाणव्यापारफलं तत्प्रमेये किञ्चिज्जनयतीति वाच्यमित्याह—**फलेति**। तेनैव भवदभिमतप्राकट्येनैव स्वतोऽसिद्धव्याप्तिकतया न तेन तत्साधनं शक्यमिति भावः।

ननु तेनापि तत्र किंचिज्जन्यत एवेत्यत्र आह—**अनवस्थानादिति**। एतच्च

प्रमाणव्यापारत्वस्य तत्फलत्वस्य वा साधारण्यमभिप्रेत्य । ननु प्रमाणाधीनाशुविनाशि-
धर्मत्वेन प्रमेये किंचिज्जनकत्वम् साध्यम् । न च प्राकट्यं तथेत्याशङ्क्याह—आश्विति ।
द्वित्वादिभिरिन्द्रियजन्यैरनियमात् व्यभिचारात् । न स्वोत्पत्तिक्षणानन्तरं कारकत्वे सति
यः प्रमाणव्यापारः प्रमेये किंचिज्जनयतीति नियमः । न च द्वित्वादिकं तथेत्यत्राह—
**आश्विति** । अत्र कारकत्वं यत्र कुत्रापि कर्मणीति वा अन्त्य आह—**कर्मणीति** । 5
असिद्धेः । स्वरूपासिद्धेः । कुत इत्याकाङ्क्षायामाह—**कर्मणीति** । तस्यैव साध्यत्वात् ।
सिद्धौ वाश्रयासिद्धेः सिद्धसाधनादिति । आद्य आह **कर्तरीति** । अधिकरणान्त-
र्भावपरं कर्मेति । कर्मनिष्ठकिंचिज्जनकत्वव्याप्तिशून्यत्वात् न तेन तदनुमानमित्यर्थः ।
व्याप्तिविरहे तस्य तद्व्याप्यत्वे हेतुमाह—**शब्दादीति** । कारिकायाः द्वितीयार्धं व्याकर्तु-
माह—**अनुभवेति** । सामान्यतो ज्ञातत्वेन साक्षात्कृतत्वेनोपलक्षणमिदम् ॥ ३ ॥ 10

यथा हि—

**अर्थेनैव विशेषो हि निराकारतया धियाम् ।**

**तथा,**

**क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम् ॥ ४ ॥**

किं न पश्यसि, घटक्रिया पटक्रियेतिवत् कृतो घटः करिष्यते घट इत्यादि, 15
तथैव गृहाण, घटज्ञानं पटज्ञानमितिवज्ज्ञातो घटो ज्ञास्यते ज्ञायते इति । कथमसम्बद्धयो-
र्धर्मधर्मिभाव इति चेद्, ध्वस्तो घट इति यथा । एतदपि कथमिति चेद्, नूनं ध्वंसेनापि
घटे किञ्चित् क्रियते इति वक्तुमध्यवसितोऽसि । तन्निरूपणाधीननिरूपणो ध्वंसः
स्वभावादेव तदीय इति किमत्र संवन्धान्तरेणेति चेत् । प्रकृतेऽप्येवमेव ।

एतेन फलानाधारत्वादर्थः कथं कर्मेति निरस्तम् । विनाश्यवत् करणव्यापार- 20
विषयत्वेन तदुपपत्तेः । स्वाभाविकफलनिरूपकत्वञ्च तुल्यम् ।

ननु ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयं तदभावे कथमनुमीयेत, अप्रतीतञ्च
कथं व्यवहारपथमवतरेदिति ज्ञानव्यवहारान्यथानुपपत्त्या ज्ञातताकल्पनम् । तदप्यसत् ।
परस्पराश्रयप्रसङ्गात् । ज्ञाततया हि ज्ञानमनुमीयेत, ज्ञाते च तद्व्यवहारान्यथानुप-
पत्तिस्तां ज्ञापयेत् । कुतश्च ज्ञानमतीन्द्रियम् ? इन्द्रियेणानुपलभ्यमानत्वादिति चेत् । 25
न । अनुमानोपन्यासे साध्याविशिष्टत्वात्, अनुपलब्धमात्रोपन्यासे तु योग्यताऽवि-
शेषिताऽसौ कथमैन्द्रियकोपलम्भाभावं गमयेत्, तद्विशेषणे तु कथमतीन्द्रियं ज्ञान-
मिति । तथाविधज्ञातताश्रयत्वादिति चेन्न । आश्रयासिद्धेः । व्यवहारान्यथानुपपत्त्यैव
सिद्ध आश्रय इति चेन्न । ज्ञानहेतुनैव तदुपपत्तेः । तस्यात्ममनःसंयोगादिरूपस्य
सत्त्वेऽपि सुषुप्तिदशायामर्थव्यवहाराभावान्नैवमिति चेन्न । तावन्मात्रस्य व्यवहाराहेतु- 30

त्वात् । अन्यथा ज्ञानस्वीकारेऽपि तुल्यत्वात् । स्मरणान्यथानुपपत्त्येति चेन्न । तस्याप्यसिद्धेः । अस्ति तावद्व्यवहारनिमित्तं किञ्चिदिति चेत् । किमतः ? । न ह्येतावता ज्ञानं तदिति सिद्ध्यतीति, तस्यैवासिद्धेः । तथापि नियतस्य कर्तुः प्रवृत्तेः कर्तृधर्मेणैव केनचित् प्रवृत्तिहेतुना भवितव्यमिति चेत् । अस्त्विच्छा प्रत्यक्षसिद्धा, न तु ज्ञानम् । सैव कथं नियताधिकरणे उत्पद्यतामिति चेन्न । ज्ञानाभ्युपगमेऽपि तुल्यत्वात् । स्वहेतोः कुतश्चिदिति चेत् । तत एव इच्छा अस्तु, किं ज्ञानकल्पनयेति ।

स्यादेतत् । प्रकाशमाने खल्वर्थे तदुपादित्सादिरुपजायते, न तु सुषुप्त्यवस्थायामप्रकाशमानेऽप्यर्थे इत्यनुभवसिद्धम् । तत इच्छायाः कारणं विलक्षणमेव किञ्चित् परिकल्पनीयं, यस्मिन् सति सुस्वापलक्षणमौदासीन्यमर्थविषयमात्मनो निवर्त्तते इति चेत् । हन्तैवं सुस्वापनिवृत्तिमनुभवसिद्धां प्रतिजानानेन ज्ञानमेवापरोक्षमिष्यते । अचेतयन्नेव हि सुषुप्त इत्युच्यते, अचैतन्यनिवृत्तिरेव हि चैतन्यं ज्ञानमिति । तथा च कालात्ययापदिष्टो हेतुः ।

एतेन क्षणिकत्वादिति निरस्तम् । अपि च किमिदं क्षणिकत्वं नाम ? यद्याशुतरविनाशित्वं, तदाऽनैकान्तिकम् । अथैकक्षणावस्थायित्वं, तदसिद्धं प्रमाणाभावात् ।

ननु स्थायिविज्ञानं यादृशमर्थक्षणं गृह्णदुत्पद्यते, द्वितीयेऽपि क्षणे किं तादृशमेव गृह्णाति, अन्यादृशं वा, न वा कमपीति । न प्रथमः । तस्य क्षणस्यातीतत्वात् । प्रत्यक्षज्ञानस्य च वर्त्तमानाभत्वात् । न चातीतमेव वर्त्तमानाभतयोल्लिखति, भ्रान्तत्वप्रसङ्गात् । न द्वितीयः, विरम्य व्यापारायोगात् । प्रथमतोऽपि तथाऽभ्युपगमेऽनागतावेक्षणप्रसङ्गात् । न तृतीयः । ज्ञानत्वहानेरिति महाव्रतीयाः ।

तदसत् । ज्ञानं गृह्णातीत्यस्यैवार्थस्यानभ्युपगमात् । अपि तु तदेव ग्रहणमित्यभ्युपगमः । तथा च ज्ञानं प्रथमे क्षणे यमर्थमालम्ब्य जातं, द्वितीयेऽपि क्षणे तदालम्बनमेव तन्न वेति प्रश्नार्थः । तत्र तदालम्बनमेव तदिति परमार्थः । न चैवं भ्रान्तत्वम् । विपरीतानवगाहनात् । तथापि ज्ञेयनिवृत्तौ कथं ज्ञानानुवृत्तिः, तदनुवृत्तौ वा कथं ज्ञेयनिवृत्तिरिति चेत् । किमस्मिन्ननुपपन्नम् । न हि ज्ञानमर्थश्चेत्येकं तत्त्वमेकायुष्कं वेति । सत्यपि वा क्षणिकत्वे कथमप्रत्यक्षम् ? इत्थं यथोच्यते—न स्वप्रकाशं, वस्तुत्वादितरवस्तुवत् । न च ज्ञानान्तरग्राह्यं, ज्ञानयौगपद्यनिषेधेन समानकालस्य तस्याभावात् । ग्राहककाले ग्राह्यस्यातीतत्वेन वर्त्तमानाभत्वानुपपत्तेः । ग्राह्यकाले च ग्राहकस्यानागतत्त्वादिति चेत् । नन्वेवं ज्ञाततापि न प्रत्यक्षा स्यात्, क्षणिकत्वात् । कथम् ? इत्थम् न स्वप्रकाशा वस्तुत्वात् । न जनकग्राह्या, अनागतत्वात्, विरम्य व्यापारायोगाच्च । न समसमयज्ञानग्राह्या ज्ञानजनकेन्द्रियसम्बन्धाननुभवात् । न च तदुत्तरज्ञानग्राह्या, तदानीमतीतत्वादिति । क्षणिकत्वमेव तस्याः कुत इति चेत् । त्वदुक्तयुक्तेरेव ।

तथाहि—यं क्षणमाश्रित्य जाता ततः परमपि तमेवाश्रयतेऽन्यं वा, न वा कमपीति । तत्र न प्रथमः । तस्य तदानीमसत्त्वात् । न द्वितीयः । अप्रतिसंक्रमात् । एकक्षणावगाहिनि च ज्ञाने तदन्यक्षणाऽऽश्रयज्ञाततफलत्वेन भ्रान्तत्वप्र-

सङ्गात्, रजतावगाहिनि पुरोवर्त्तिवृत्तिज्ञाततताफल इव। न चान्यमपि क्षणं ज्ञानमवगाहते, तदानीं तस्यासत्त्वात्। न तृतीयः। निःस्वभावताप्रसङ्गात्। न ह्यसौ तदानीं तदीयान्यदीया वेति। अतीतेनापि तेनैव क्षणेनोपलक्षितानुवर्त्तते इति चेत्। एवं तर्हि वर्त्तमानार्थता प्रकाशस्य न स्यात्। अन्यथा ज्ञानस्यापि तथानुवृत्तेः को दोषः। न हि वर्त्तमानार्थप्रकाशसम्बन्धमन्तरेण ज्ञानस्यान्या वर्त्तमानावभासता नाम। अर्थनिरपेक्षप्रकाशनानुवृत्तिमात्रेण तथात्वे भूतभाविविषयस्यापि ज्ञानस्य तथाभावप्रसङ्गात्। अथ मा भूदयं दोष इति स्थूल एव वर्त्तमानः प्रकाशेनाश्रीयते इत्यभ्युपगमः, तदा तज्ज्ञानस्यापि स एव विषय इति तस्यापि न क्षणिकत्वमिति। 5

ननु ज्ञानमैन्द्रियकं चेद् विषयसञ्चारो न स्यात्। संजातसम्बन्धत्वात् न च जिज्ञासानियमान्नियमः। तस्याः संशयपूर्वकत्वात्। तस्य च धर्मिज्ञानपूर्वकत्वात्। 10 धर्मिणश्च सन्निधिमात्रेण ज्ञाने जिज्ञासापेक्षणे वा उभयथाऽप्यनवस्थानादिति। तन्न। ज्ञाततापक्षेऽपि तुल्यत्वात्, तस्या अपि हि ज्ञेयत्वे तत्परम्पराज्ञानापाताज्जिज्ञासानियमस्य च तद्वदनुपपत्तेः। न च इन्द्रियसम्बन्धविच्छेदाद्विराम इति युक्तम्। आत्मप्रकाश्याव्यापनात्। स्वभावत एव काचिदसावजिज्ञासितापि ज्ञायते, न तु सर्वेति चेत्, तुल्यम्। प्रागुत्पन्नज्ञाततास्मरणजनितजिज्ञासः समुन्मीलितनयनः 15 सञ्जातज्ञानसमुत्पादितप्राकट्यं जिज्ञासुरेव प्रतिपद्यते इत्यतो नानवस्थेति चेत्। तुल्यमेतत्।

ननु ज्ञानं न सविकल्पकग्राह्यं, तस्य निर्विकल्पकपूर्वकत्वाद् निर्विकल्पकगृहीतस्य तावत्कालानवस्थानात् तस्य तेनैव विनाशात्। नापि केवलनिर्विकल्पकवेद्यम्। तस्य सविकल्पकोन्नेयत्वेन तदभावे प्रमाणाभावात्। न च समवायाभाव- 20 वन्निर्विकल्पकनिरपेक्षसविकल्पकगोचरत्वं ज्ञानस्येति साम्प्रतम्। तयोर्विशेषणांशस्य प्राग्ग्रहणादनुमानादिवत्तदुपपत्तेः। प्रकृते तु ज्ञानत्वादेरनुपलब्धेरगृहीतविशेषणायाश्च बुद्धेर्विशेष्यानुपसंक्रमात् कथमेवं स्यात्। न। उत्पन्नमात्रस्यैव बाह्यविषयज्ञानस्यालोचनात्। ततस्तत्पुरःसरं प्रथमत एव तज्जातीयस्य ज्ञानान्तरस्य विकल्पनात्। इन्द्रियसन्निकर्षस्य तदैव विशेषणग्रहणलक्षणसहकारिसम्पत्तेः। 25 व्यक्त्यन्तरसमवेतमपि हि सामान्यं गृहीतं तदेवेत्युपयुज्यते, अन्यथा अनुमानादिविकल्पानामनुत्पादप्रसङ्गः। तद्गतस्य विशेषणस्याऽग्रहणाद्, अन्यगतस्य चानुपयोगात्, किं लिङ्गग्रहणसहकारि स्यादिति। एतेन शब्दादिप्रत्यक्षं व्याख्यातमिति।

स्यादेतत्। विषयनिरूप्यं हि ज्ञानमिष्यते। न चातीन्द्रियस्य परमाण्वादेर्मनसा वेदनमस्ति। न चागृहीतस्य विशेषणत्वम्। न च नित्यपरोक्षस्यापरोक्षविशिष्ट- 30 बुद्धिविषयत्वम् व्याघातादिति। न। बाह्येन्द्रियग्राह्यस्याग्राह्यस्य वा पूर्वज्ञानोपनीतस्यैव मनसा वेदनात्। अन्यथाऽतीन्द्रियस्मरणस्याप्यनुत्पत्तिप्रसङ्गात्। इयांस्तु विशेषः - तस्मिन् सति तद्बलादेव, असति तु तज्जनितवासनाबलात्। न चैवं सति स्मरणमेतत्। अगृहीतज्ञानगोचरत्वात्। न च विषयांशे तत्तथा स्यादिति युक्तम्। अवच्छेदकतया प्रागवस्थावदवभासनात्। न च प्रत्यभिज्ञानमपि ग्रहणस्मरणाकारम्। 35

विरोधात्। अथ ग्रहणस्मरणयोः कियती सामग्री? अधिकोऽर्थसन्निकर्षो ग्रहणस्य, संस्कारमात्रं सन्निकर्षः स्मरणस्य।

अथ ग्रहणत्वेऽपि कुत एतदपरोक्षाकारम्? कारणान्तरनिरपेक्षेण संस्काराधिकसन्निकर्षवतेन्द्रियेण जनितत्वात्। अथ कः सनिकर्षः? ज्ञानेन संयुक्तसमवायः, 5 तदर्थेन संयुक्तसमवेतविशेषणत्वमिति। मनसो निरपेक्षस्य बहिर्व्यापारेऽन्धबधिराद्यभावप्रसङ्ग इति चेत्। ज्ञानावच्छेदकं प्रति नायं दोषः। न च ज्ञानापेक्षया बहिरित्यस्ति। नापि तद्विषयापेक्षया निरपेक्षत्वम्, तस्यैव ज्ञानस्यापेक्षणात्। अथापि ज्ञानं प्रत्यक्षमित्यत्र किं प्रमाणम्? प्रत्यक्षमेव। यदसूत्रयत्—'ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्' ( न्या०सू० ५. १. ३१ ) इति ॥ ४ ॥

आमोदः

10 प्रत्यक्षमन्यथोपपादयति—**यथा हीति**। यथा पदस्य ज्ञानमित्यत्रार्थो ज्ञानविशेषणं, तथा ज्ञातो घट इत्यत्र ज्ञानमेवार्थविशेषणमित्यर्थः। ननु ज्ञाननिष्ठं घटत्वं ज्ञानाकार इति तदेव ज्ञानं विशेषयति न त्वर्थ इत्यत आह—**निराकारतयेति**। न हि घटत्वादिकमपि ज्ञानाकारो येन ज्ञानं विशिष्यादित्यर्थः।

15 **कुतो घट इति**। अन्यथा ज्ञाततावत् कृततादीनामपि स्वीकारापत्तेरिति भावः। न च यथापेक्षाबुद्धिः द्वित्वादिकमाधत्ते तथा ज्ञानावच्छेदेनैवं कर्मणि किञ्चिदाधायकत्वमङ्गीकर्तव्यमिति वाच्यम्। तत्रानुभवबलात् तथास्तु अन्यत्रानुभवोऽन्यथासिद्धो ज्ञानत्वञ्च हेतुरप्रयोजक इति भावः। **असम्बद्धयो**र्ज्ञानार्थयोरित्यर्थः। **ध्वस्त इति**। तत्राप्यसम्बन्धेन भिन्नकालेनैव 20 ध्वंसेन यथा धर्मधर्मिभाव इत्यर्थः। परमुखेन प्रकृते धर्मधर्मिभावं समर्थयति—**स्वभावादेवेति**। स्वरूपसम्बन्धादेवेत्यर्थः। **स्वरूपादेवेति** क्वचित्पाठः तस्याप्ययमर्थः। **एतेनेति**। परसमवेतक्रियाफलशालिन एव कर्मत्वादित्यर्थः। **विनाश्यवदिति**। मुद्गरेण घटं नाशयतीत्यत्र मुद्गरस्य करणस्य यो व्यापारः नाशस्तेन सह स्वरूपसम्बन्धेन तद्विषयत्वं यथोपपाद्यते तथा 25 प्रकृतेऽपीत्यर्थः। यथात्र द्वितीया प्रयोगमात्रसाधुस्तथा प्रकृतेऽपि स्यादिति भावः। न च घटपटयोरेकज्ञानविषयत्वे घटो ज्ञातः पटो ज्ञात इति भिन्नभिन्नज्ञाततानुभवः कथमिति चेत्, न। तत्रैकस्यैव ज्ञानस्योभयविशेषणत्वेन प्रतीतेरितिभावः। **असाधारणेति**। स चासाधारणो धर्मः

प्राकट्यमेवेत्यर्थः । ननु याज्ञायि (?) ज्ञानं किमतः स्यादित्याह— अप्रतीतमिति । अनुपलब्धिमात्रेति । अनुपलब्धिमात्रमेवैन्द्रियकस्य उपलम्भस्याभावं गमयेत् यदि तदा परमाण्वाद्यभावमपि गमयेदित्यर्थः । अनुपलब्धिमात्रमुपलम्भाभावं गमयतीति, चेत्, न । ऐन्द्रियकत्वस्याप्यतीन्द्रियतया अनुपलब्धिमात्रेण तदभावावगमे परमाण्वाद्यभावमपि गमयेदिति भावः । 5 योग्यानुपलम्भस्य तूपलम्भाभावबोधकत्वाभ्युपगमे ज्ञानयोग्यत्वस्य त्वयैव स्वीकारादित्याह—तद्विशेषणे त्विति । ननु ज्ञानमतीन्द्रियं तथाविधज्ञततानाधारत्वादित्यनुमानमस्तु इत्याह—तथाविधेति । साक्षात्कृतततानाधारत्वादिति हेत्वर्थः । ज्ञानस्य पक्षस्यासिद्धेरित्याह—आश्रयेति । व्यवहारेति । ज्ञानमन्तरेण घटादिव्यवहारोऽपि न स्यादिति सिद्धं ज्ञानमित्यर्थः । तद्धेतोरेव 10 तत्सम्भव इत्याह—नेति । व्यवहारं प्रति ज्ञानहेतोरन्वयव्यभिचारं दर्शयति— तस्येति । अन्वयव्यभिचारो न दोषः इत्याह—तावन्मात्रस्येति । आत्मनः संयोगमात्रस्येत्यर्थः । अन्यथेति । सैव चेत् ज्ञानसामग्री तदासुषुप्तावस्थाय ज्ञानमेव कुतो नोत्पद्यत इत्यर्थः । स्मरणेति । ज्ञानं विना स्मरणमनुपपन्नमिति ज्ञानकल्पनेत्यर्थः । तस्यापीति । स्मरणस्यापि ज्ञानत्वेनाद्याप्यसिद्धे- 15 रित्यर्थः । अस्ति तावदिति । तच्च ज्ञानमेव पर्यवस्यतीति भावः । गूढाभिसन्धिराह—न हीति । तस्यैवेति । व्यवहारो ज्ञानजन्य इति कार्यकारणभावग्रहे सति व्यवहाररूपं कार्यं स्वकारणतया ज्ञानं गमयेत्, अयञ्च कार्यकारणभावग्रहो ज्ञानसिद्ध्या सिद्ध्येत्, तदेव तु न सिद्धमस्तीत्यर्थः । कर्तृधर्मेणेति । ज्ञानसामग्री च न कर्तृधर्मं इति न तयाऽप्यन्यथासिद्धिः । 20 कर्तृधर्मो हि तत्समवेत इष्यत इत्यर्थः । प्रत्यक्षसिद्धा । तन्मतेऽपीति शेषः । कथमिति । ज्ञानमन्तरेणेत्यर्थः । ज्ञानेति । ज्ञानमप्यनियताधिकरणं कथमुत्पद्यतामिति तुल्यमित्यर्थः । कुतश्चिदिति नियतादित्यर्थः । इच्छोत्पत्तिरेव तस्मान्नियामकात् किं न स्यादित्याह—तत इति । विलक्षणमिति । येनार्थस्य प्रकाशमानता सम्भवति, इच्छादिकं तु न तथेत्यर्थः । अनुभवसिद्धमिति । 25 पूर्वपक्षिणा यदुक्तं तत्रानुभवपदं प्रत्यक्षपरतया गृहीत्वा दूषयति—हन्तेति । सुस्वापनिवृत्तेर्ज्ञानपरतामाह—अचेतयन्निति । तथा चेति । ज्ञानस्य प्रत्यक्षत्वे सिद्धे ज्ञानातीन्द्रियत्वसाधकं तथाविधज्ञाततानाश्रयत्वं हेतुर्बाधितमित्यर्थः । एतेनेति । बाधेनेत्यर्थः । अनैकान्तिकमिति । शब्दविभागादाविति शेषः ।

**एकक्षणावस्थायित्वम्** एकक्षणमात्रावस्थायित्वमित्यर्थः। **तदसिद्धमिति**। ज्ञानस्यापि तत्क्षणद्वयावस्थायित्वादिति भावः। ज्ञानस्य क्षणिकत्वं प्रमाणयन्नाशङ्कते—**नन्विति**। **स्थायिविज्ञानमिति** यद्युपनिबन्धेन। **अर्थक्षणमिति**। अर्थावच्छेदकं कालोपाधिम् अर्थस्वरूपं वा। **वर्तमानाभत्वात्**। वर्तमाना-
5 कारत्वात्। **भ्रान्तत्वेति**। अयथार्थविषयत्वादित्यर्थः। **विरम्येति**। यमर्थमवलम्ब्योत्पद्यते यज्ज्ञानं तस्य तदतिरिक्तार्थानवगाहनस्वाभाव्यापरित्यागादित्यर्थः। **ज्ञानत्वेति**। अर्थप्रवणस्यैव ज्ञातत्वादिति भावः। **महाव्रतीयाः** भट्टैकदेशिनः शब्दाकौशलमाह—**ज्ञानमिति**। धात्वर्थस्य क्रियायाः कर्तृत्वविरोधादिति भावः। **यमर्थमवलम्ब्य** ज्ञानमुत्पन्नं द्वितीयेऽपि क्षणे सोऽर्थो
10 वर्तत एवेति तत्रापि तज्ज्ञानस्य वर्तमानाभत्वं न निरुद्धं, च चातिरिक्तावगाहित्वं येन विरम्य व्यापारत्वापत्तिर्न बाध्या (?) दृश्यत्वेन तदर्थज्ञानं येन भ्रान्तत्वापत्तिरिति समाधत्ते—**तत्र चेति**। **ज्ञेयनिवृत्ताविति**त्यभ्युपगमवादः। शब्दविभागादिविषयकज्ञानाभिप्रायं वा शब्दादिनाशक्षणेऽपि ज्ञानसत्त्वात्, क्षणस्य तु कालोपाधेरज्ञेयत्वान्न तदभिप्रायकम्। **न हीति**।
15 येन **ज्ञेयनिवृत्तौ नावतिष्ठेतेति** शेषः। अतीन्द्रियतासाधकस्य क्षणिकत्वस्य हेतोरभ्युपगमवादेनाप्रयोजकत्वमाह—**सत्यपि चेति**। पूर्वपक्ष्याह—**इत्थमिति**। **यथोच्यते** इत्थं क्षणिकत्वे ज्ञानस्यातीन्द्रियत्वमिति योजना। स्वप्रकाशत्वं चेश्वरज्ञाने योगिज्ञाने च सिद्धमिह निषिध्यते। यद्वा घटज्ञानं नैतज्ज्ञानविषयः ज्ञानत्वादिति स्वप्रकाशनिषेधः इतरवादिनि घटवदित्यर्थः।
20 **तस्येति**। ग्राहकज्ञानस्येत्यर्थः। **वर्तमानाभत्वेति**। **जानामीति**।

वर्तमानाभत्वानुपपत्तेरित्यर्थः। परमुखेन स्वसिद्धान्तमाविष्कर्तुं गूढाभिसन्धिराह सिद्धान्ती—**नन्वेमिति**। **विरम्येति**। घटाद्यालम्ब्य जातस्य ज्ञानस्योत्पत्स्यमानज्ञातताग्रहे विरम्य व्यापारत्वापत्तेरित्यर्थः। **अननुभवादिति**। भू प्राप्तावित्यस्य धातोः प्रयोगः, तेनाप्राप्तेरित्यर्थः। **तदुत्तरेति**।
25 ज्ञाततानन्तरोत्पत्तिकज्ञानग्राह्येत्यर्थः। **अतीतत्वात्** ज्ञाततायां इत्यनुषङ्गः। **त्वदुक्तेति**। ज्ञानस्य यया युक्त्या क्षणिकत्वं साधितं तयेत्यर्थः। तामेवाह—**तथा हीति**। **तस्येति**। ज्ञातताश्रयस्येत्यर्थः। **अप्रतिसंक्रमादिति**। आश्रयान्तरागमनादित्यर्थः। **एकक्षणेति**। अन्यविषयकज्ञानेनान्यत्र ज्ञातताधाने ज्ञाताज्ञातव्यवहारविप्लवप्रसङ्ग इत्यर्थः। यद्वा, जनकज्ञानस्य भ्रान्तत्वापत्ति-

रिति मूल एव स्फुटम्। **ज्ञातताफलत्व इवेति**। ज्ञाततालक्षणं फलं यस्य ज्ञानस्य तत्त्वादित्यर्थः। नन्वागामिक्षणो ज्ञानविषयत्वादेव ज्ञातताश्रयः स्यादित्यत आह—**न चेति**। **तदानीमिति**। उत्तरक्षणस्य पूर्वक्षणेऽवर्तमानत्वादित्यर्थः। **न हीति**। स्वजनकाविषये ज्ञायमानत्वादिति भावः। **अतीतेनापीति**। सैव ज्ञातता स्वगोचरमपि स्वोत्तरक्षणमुपलक्षयति। नचातिप्रसङ्गः, स्वोत्तरक्षणत्वस्यैवोपलक्ष्यतावच्छेदकत्वादित्यर्थः। **एवं तर्हीति**। जनकज्ञानगोचरस्य क्षणस्यातीतेऽपि या विज्ञाततानुवृत्तिः स्यादित्यर्थः। **प्रकाशस्येति**। ज्ञातताया इत्यर्थः। **अन्यथेति**। ज्ञानमप्यतीते विषयक्षणेऽनुवर्ततामिति कुतः क्षणिकतेत्यर्थः। ननु विषयवर्तमानताधीनत्वं न ज्ञाततावर्तमानत्वं किन्तु ज्ञानवर्तमानत्वाधीनमेव वरमभ्युपगन्तव्यमित्यत आह— **न हीति**। वर्तमानेऽर्थे वर्तते यः **प्रकाशः** प्राकाट्यं तेन सह यः **सम्बन्धो** जन्यजनकलक्षणं ज्ञानस्य सैव वर्तमानाभताऽन्या नास्तीति **त्वदभ्युपगमा**दित्यर्थः। ननूक्तमतीतेऽप्यर्थे उपलक्षणतया ज्ञाततानुवर्तत एव। तथा च तत्सम्बन्ध एव ज्ञानस्य वर्तमानाभता भवेदत आह—**अर्थेति**। **अर्थो** ज्ञानजनकज्ञानविषयो वर्तमानः। **भूतेति**। अतीतेऽनागते विषये ज्ञातता ज्ञानेनाधीयते, तत्सम्बन्धेन तदपि ज्ञानं वर्तमानाभं स्यादित्यर्थः। तत्रापि सामान्याश्रयज्ञाततायास्त्वयाऽभ्युपगमादित्यर्थः। **परद्वारा** स्वाशयमुद्घाटयति—**अथेति**। स एव विषयो वर्तमानतयेत्यर्थः। **संजातेति**। संयुक्तसमवायेन जातमात्रमेव ज्ञानमनुव्यवसीयते, **एवं तदपि**। **एवं तदपि** इति **विषयसंचारा**भाव इत्यर्थः। ननु सम्बन्धसत्त्वेऽपि जिज्ञासालक्षणसहकारिविरहान्न ज्ञानग्रहप्रौढ्यमित्यत आह—**न चेति**। ज्ञानसामान्यज्ञानाधीना ज्ञानविशेषे जिज्ञासा वाच्या। ज्ञानसामान्यज्ञानमपि जिज्ञासाधीनम्, एवं सापि ज्ञानसामान्यज्ञानाधीना। जिज्ञासापेक्षायामूर्ध्वं धावतीत्यादावनवस्था। अथ ज्ञानसामान्यज्ञानानपेक्षम्, तथापि विशेषज्ञानेऽपि तथैव स्यादिति सैवानवस्थेत्यर्थः। यद्वा, अहमिदानीं घटज्ञानवानिति जिज्ञासा ज्ञानवत्त्वेनात्मज्ञाने सति स्यात्तत्रापि जिज्ञासापेक्षायामनवस्थेत्यर्थः। **धर्मिण इति**। ज्ञानस्येत्यर्थः। **उभयथेति**। घटज्ञानं जानीयामिति जिज्ञासा घटज्ञानपूर्वसंशयाधीना, स च संशयो घटज्ञाने ज्ञाते स्यात्तदपि घटज्ञानज्ञानं जिज्ञासाज्ञानापेक्षम् इत्येवमनवस्था। तदनपेक्षं चेत्तदा ज्ञानधारैवेति सुतरामनवस्थेत्यर्थः।

गूढाभिसन्धिः प्रतिवन्दिमुखेन तावत् परिहरति—ज्ञाततेति। यथा ज्ञाततया नावश्यज्ञेयता तथा ज्ञानस्यापीत्यर्थः। ननु घटादेर्ज्ञातताधारस्य नाशादन्यत्र गमनाद्वा न संयुक्तसमवायलक्षणः सन्निकर्ष इति न ज्ञातताज्ञान-ध्रौव्यम्, ज्ञाने तु सन्निकर्षस्य ध्रौव्यमित्याह—न चेति। आत्मेति।
5 आत्मसमवेतज्ञाततया ज्ञानतुल्ययोगक्षेमत्वमेवेत्यर्थः। आत्मनिष्ठज्ञाततायां सन्निकर्षे सत्यपि नावश्यज्ञेयतेति यदि तदपि तुल्यमेवेत्याह—तुल्यमिति। ज्ञाततायाः सामान्यतो ज्ञानं घटज्ञाततामपि विषयीकृत्य जातमिति तत्र जिज्ञासया नयनोन्मीलनं ज्ञातताज्ञानञ्चेति यदि, तदेव ज्ञानेऽपि समानमिति शङ्कोत्तराभ्यामाह—प्रागिति। वस्तुतो ज्ञानग्रहे ज्ञानान्तरसामग्री प्रति-
10 बन्धिका चरमज्ञानमनुद्भूतं वा जायते ज्ञानान्तरजनने स्वरूपायोग्यं वा अन्त्यशब्दवत्। बहिरिन्द्रियकरणकज्ञानसामग्री मानसज्ञानसामग्री इति वा फलबलात् कल्प्यते। किञ्च बहिः प्रमासामग्र्याः एव मानसज्ञानप्रति-बन्धकत्वमत एवानुमित्यादिसम्भवः। अत एव प्रत्यक्षसामग्रीतोऽनुमिति-सामग्र्या बलवत्त्वमित्यर्थः। ननु ज्ञानत्वनिर्विकल्पकेन ग्राह्यज्ञानस्य नाशात्
15 विशेष्यनाशे च विशिष्टप्रत्यक्षानुदयात् ज्ञानमप्रत्यक्षमेव स्वीकर्तुमर्हतीत्याह—नन्विति। तस्य ग्राह्यज्ञानस्य तेनैव निर्विकल्पकेनैव तदभाव इति सविकल्प-काभाव इत्यर्थः। समवायाभावादिति। समवायवदभाववच्चेत्यर्थः। तयोरिति समवाये सम्बन्धिनोऽभावे च प्रतियोगिनो विशेषणस्य सर्वभानाद्विशिष्टज्ञान-सामग्रीसत्त्वादित्यर्थः। अनुमानादिवदिति। तत्र व्याप्तिज्ञान एव साध्यस्य
20 विशेषणस्य पूर्वं ज्ञानादित्यर्थः। ज्ञानत्वादेरित्यादिपदादनुभवत्वस्मृतित्वपरि-ग्रहः। कथमेवं स्यादिति कथं ज्ञानं प्रत्यक्षं स्यादित्यर्थः। बाह्यविषयेत्युप-लक्षणमक्षरविषयस्यापि तुल्यत्वात्। प्रथमं घटज्ञानं ततो ज्ञानत्वनिर्वि-कल्पकं, ततः पूर्वोत्पन्नविशिष्टज्ञाननाशतज्जातीयज्ञानान्तरोत्पादौ, ततो द्वितीयज्ञाने ज्ञानत्ववैशिष्ट्यग्रह इत्यर्थः। ननु विशेष्यनिष्ठतया विशेषणं न
25 गृहीतमिति कथं ज्ञानान्तरे तद्वैशिष्ट्यग्रह इत्यत आह—व्यक्त्यन्तरेति। अन्यथेति। यदि तद्गततयैव विशेषणज्ञानमुपयुक्तं स्यादित्यर्थः। तत्रापि महानसादौ गृहीतं वह्निमत्त्वं पर्वते विशेषणतया न भासेत इति भावः। अन्यत्र गृहीतं विशेषणमन्यत्र भासत इत्यभ्युपगमे प्रथमोत्पन्नककारगतं कत्वं द्वितीये ककारे भासत इत्युपपादितं स्यादन्यथा अणुद्वयावस्थायिनः

ककारादेर्विशिष्टज्ञानविषयतैव नोपपद्यतेत्यर्थः। अनुमितौ तदानीमनुमित्यन्तरान्नैवं, न वा सर्वत्र तत्सजातीयज्ञानसामग्रोसमवहितस्यैव ज्ञानस्यैव ग्रहात्। अभावत्वे प्रतियोगित्ववद् विशेषणज्ञानत्वादिदं पूर्वगृहीतमेव भासते फलवत्त्वात् तथा कल्पनादित्येके। ज्ञानज्ञानत्वनिर्विकल्पानन्तरं ज्ञाने ज्ञानत्वमात्मनि च ज्ञानं विशेषणतया भासत इत्यपरे। विषयविशेषणकमेव ज्ञानं गृह्यते, तदेव ज्ञानं ज्ञानत्वेन निर्विकल्पकरूपमित्यपरे। गकारादिग्रहेऽप्येवमेवोत्पन्नोऽयमिति। परमाणुमहं जानामीत्यनुव्यवसायानुपपत्ति शङ्कते—स्यादेतदिति। परमाण्वादिविषयकस्य विशेषणांशायोग्यतया मनसा ग्रहीतुमशक्यत्वादित्यर्थः। ग्राह्येति। सम्पातायातं, विशेषणस्य योग्यता न तन्त्रं किन्तु ज्ञानमात्रम्। अतोऽनुमानाद्युपनीतस्य तस्य मनसा ग्रहणं नानुपन्नमित्यर्थः। अन्यथेति। यद्यप्युपनीतं मनसा न गृह्येतेत्यर्थः। ननु स्मरणमपि यदि मानसमेव, तदा साक्षात्कारिज्ञानान्न भिद्येत इत्यत आह—इयानिति। तस्मिन्ननुभवे विद्यमाने तदुपनीतो विषयो मनसा यदि गृह्यते, तदा तज्ज्ञानं साक्षात्कारि। यत्र त्वनुभवः संस्कारं जनयित्वा निवृत्तस्तत्र संस्कारोपनीतविषयगोचरं ज्ञानं स्मरणमेवेत्यर्थः। एवं सतीति। यदि पूर्वगृहीतमेव मनसा गृह्यते इत्यर्थः। तथा चास्य भेदस्य परिभाषामात्रत्वादिदमपि ज्ञानं स्मरणमेव, गृहीतग्राहित्वादित्यर्थः। अगृहीतेति। विषयांशे गृहीतग्राहित्वेपि ज्ञानांशेऽगृहीतग्राहित्वेन प्रामाण्यमित्यर्थः। अवच्छेदकतयेति। विशेष्यतया यत्र गृहीतस्य ग्रहणं तत् स्मरणं, यथा स घट इति अवच्छेदकतयाऽनुगृहीतस्यापि ग्रहणमनुभव एव प्रत्यभिज्ञायां तत्त्वांशस्येवेत्यर्थः। अवच्छेदकत्वं विशेषणत्वम्। विरोधादिति। जातिसङ्करप्रसङ्गादित्यर्थः। कियती सामग्रीति। कः सामग्रीभेद इत्यर्थः। अधिक इति। संस्कारापेक्षया सन्निकर्ष इति उपनायकत्वाभिप्रायेण, न तु षोढासन्निकर्षाभिप्रायेण। ग्रहणत्वेऽपीति। अनुभवत्वेऽपि प्रत्यभिज्ञानस्य साक्षात्त्वं कुतः, प्रत्युत स्मृतिवत्यपरोक्षत्वमेवोचितमित्यर्थः। इन्द्रियेण मनसा स्मृतिरपि जन्यते इत्यत उक्तं संस्काराधिकसन्निकर्षवतेति। तथाप्यनुमानादौ मनोजन्ये साक्षात्त्वं स्यादत उक्तम्। कारणान्तरनिरपेक्षेणेति। तथा चेन्द्रियार्थसन्निकर्षोत्पन्नत्वेन प्रत्यभिज्ञानं साक्षात्कारीत्यर्थः। अथ कः सन्निकर्षो ज्ञानेन येन प्रत्यक्षं स्यादिति शेषः। उत्तरं संयुक्तेति। मनः संयुक्त आत्मा

तत्समवाय इत्यर्थः। विषयेण सन्निकर्षमाह—**तदर्थेनेति**। उपपादितं विस्मृत्य शङ्कते **मनस** इति। **ज्ञानावच्छेदकमिति**। येन विषयेण ज्ञानमवच्छिद्यते तं विषयं प्रति न निरपेक्षत्वदोषो न वा तत्प्रयुक्तोऽन्धवधिराद्यभावप्रसङ्गदोष इत्यर्थः। **ज्ञानापेक्षयेति**। ज्ञानक्रोडीकृतो विषयो
5 बाह्योऽप्यवान्तर एवेत्यर्थः। **नापीति**। तथा च निरपेक्षबहिर्व्यापारवत्त्वमन्धवधिराद्यभावप्रसञ्जकं स्वरूपासिद्धमित्यर्थः। **तथापीति**। इन्द्रियार्थसन्निकर्षोत्पन्नत्वेऽपि ज्ञानं निर्विकल्पकवदप्रत्यक्षमेव स्यादित्यर्थः। **प्रत्यक्षमिति**। प्रत्यक्षवेद्यमित्यर्थः। **प्रत्यक्षमेवेति**। घटमहं जानामीति प्रत्यक्षमेव ज्ञानप्रत्यक्षत्वे प्रमाणमित्यर्थः। अन्यथा घटप्रत्यक्षतायामपि विवादः
10 स्यादिति भावः। **सूत्रकारसम्मतमित्याह—यदिति**। अध्यात्मं प्रत्यात्मनि **ज्ञानविकल्पानां** ज्ञानभेदानाम् अस्ति मे ज्ञानं नास्ति मे ज्ञानमिति **भावाभावसंवेदनादिति** सूत्रार्थः। किञ्च ज्ञानत्वं प्रत्यक्षवृत्ति आद्युत्तरविनाश्यात्मविशेषगुणवृत्तिजातित्वात् सुखत्ववदित्यनुमानमत्रेति भावः ॥४॥

बोधनी

ननु [न] क्वचिदपि क्रियामात्रेण विशिष्टस्य व्यवहारो दृश्यत इति शङ्कां
15 निराकुर्वन् व्याचष्टे—**किं न पश्यसीति**। यदि ज्ञानमेवार्थस्य विशेषणं न तद्गतः कश्चिदतिशयः तर्ह्यसम्बद्धयोः ज्ञानार्थयोः धर्मधर्मिभावोऽनुपपन्न इत्याह—**कथमिति** परस्परासम्बद्धयोरेव घटतत्प्रध्वंसयोरिवोपपन्न इत्याह—**ध्वस्त इति**। तत्रापि नास्माकं संप्रतिपत्तिरित्याह—**तदपीति**। **नूनमिति**। युक्तमसत्याश्रयेऽतिशयाधानायोगादिति। घटादिप्रतियोग्यधीननिरूपणो ध्वंसः, स्वभावादेव प्रतियोगिना सम्बन्धी,
20 तत्र सम्बन्धेऽनपेक्षेत्यत आह—**तन्निरूपणेति**। समः समाधिरित्याह—**प्रकृतेऽपीति**। विषयाधीननिरूपणस्वभावत्वात् ज्ञानस्येति।

ननु ज्ञानजन्यफलानाधारत्वे अर्थस्य कथं ज्ञानक[र्मत्वं]क्रियाजन्यफलाभावादित्यपि ध्वंसोदाहरणेन निरस्तमित्याह—एतेनेति। तदेव विवृणोति—**विनाश्यवदिति**। न हि विनाश्ये विनाशक्रियाजन्यफलभागित्वात् कर्म भवति किं तर्हि करणव्यापारस्य
25 मुद्गरप्रहारादेर्विषयत्वात्, एवमत्रापि ये तु मन्यन्ते स्वाभाविकं फलनिरूपकत्वमेव फलाश्रयत्वम्, तदेव च कर्मत्वमिति, तन्मतेऽपि करणव्यापारफलस्य विनाशस्य निरूपकत्वात् यथा विनाश्यस्य कर्मता तथा ज्ञाननिरूपकत्वेन ज्ञेयस्यापि कर्मतोपपत्तिरित्याह—**स्वाभाविकेति**। तर्हि ज्ञानव्यवहारान्यथानुपपत्तिरेव ज्ञाततायामप्रमाणमित्याह—

**नन्विति**। यद्धि कार्यं यस्यैवासाधारणं कारणं तत्तदेकसमवायिक्रियापूर्वकं दृष्टम्। यथा गन्तुरसाधारणी ग्रामप्राप्तिः तदेकसमवायिक्रियापूर्विका, अतः प्रकाशेनापि कस्यचित् प्रमातुरसाधारणेन तदेकसमवायिक्रियापूर्वकेण भवितव्यम्। सा च क्रिया ज्ञानमिति ज्ञानमनुमीयते इति मा भूत् ज्ञानानुमानमित्यत आह—**अप्रतीतं चेति**। **तदप्यसदिति**। ज्ञाततासिद्धौ तद्व्यवहारान्यथानुपपत्त्या ज्ञाततासिद्धिरिति। **परस्पराश्रयतेति**। एतच्च ज्ञानस्यातीन्द्रियत्वमभ्युपगम्योक्तम्। न च तत्र प्रमाणमस्तीत्याह—**कुतश्चेति**। प्रमाणमाशङ्कते—**इन्द्रियेणेति**। **नेति**। किमनेन ज्ञानमतीन्द्रियमिन्द्रियेणानुपलभ्यमानत्वात्, परमाण्वादिवदित्यनुमानमुपन्यस्तम्। किम्वा ज्ञानविषयस्यैवालम्भस्याभावमात्रम्। आद्ये साध्याविशिष्टो हेतुः। इन्द्रियेणानुपलभ्यमानत्वमेव ह्यतीन्द्रियत्वम्। इतरत्र न तावदयोग्यानुपलब्धिरिन्द्रियजन्यस्य ज्ञानस्याभावं गमयति, अतिप्रसङ्गात्। इन्द्रियग्रहणयोग्यत्वे सतीति विशेषणे तु अतीन्द्रियत्वमिन्द्रियत्वमिन्द्रियग्रहणयोग्यस्यैवेन्द्रियकत्वादिति, तर्हि साक्षात्काररूपज्ञाततानाधारत्वं हेतुर्भविष्यतीत्याह—**तथाविधेति**। **नेति**। अप्रत्यक्षत्वे ज्ञानस्यासिद्धिरिति वा कदाचित्कस्य घटव्यवहारस्य कादाचित्केन हेतुना भवितव्यम्। स च हेतुर्ज्ञानमेवेत्याश्रयस्य सिद्धिरित्याह—व्यवहारा[न्यथा]नुपपत्त्येति। [व्यवहारानुपपत्तिरि]ति हेतुत्वेन ज्ञानमिच्छतापि कादाचित्कत्वात् ज्ञानस्याप्यात्ममनःसंयोगादिहेतुरङ्गीकर्तव्यः, तेनैव घटादिव्यवहारोपपत्तेः किमन्तर्गडुना ज्ञानेनेति। **तस्येति**। गतम्। **नेति**। ज्ञानहेतोः सेन्द्रियात्मप्रदेशमनःसंयोगस्यैव व्यवहारहेतुत्वेनाभ्युपगमात्, तस्य चाव्यभिचारादिति। **अन्यथेति**। तावन्मात्रस्यैव ज्ञानहेतुत्वाभ्युपगमे सुषुप्तिदशायां तस्य सत्त्वात्। ज्ञानस्वीकारेऽपि तद्द्वाराव्यवहारो भवेदिति—**स्मरणेति**। ज्ञानकार्यत्वात् स्मरणस्येति। **नेति**। स्मरणस्यापि ज्ञानात्मकत्वेनास्यामवस्थायामसिद्धेरिति निराकृतमप्युत्तरविवक्षया शङ्कते—**अस्ति तावदिति**। पूर्वोक्तमेव परिहारं स्मारयति, **किंचात इति**। स एवाह—**न हीति**। आत्ममनस्संयोगादिनैवोपपत्तेरिति। अत्र विवक्षितमाशङ्कते—**तथापीति**। अन्यधर्मेणान्यस्य प्रवृत्त्यसंभवात् कर्तृधर्मेणैव प्रवृत्तिहेतुना भवितव्यम्। स च ज्ञानमेवात्ममनस्संयोगादेर्मनसोऽपि धर्मत्वादिति। तर्हि मानसप्रत्यक्षसिद्धत्वादिच्छैव प्रवृत्तिहेतुः कर्तृधर्मोऽस्तु किं ज्ञानेनेत्याह—**अस्त्विति**।

**नन्विच्छाया** अपि नियतायाः स्वाश्रयनियतेनैव केनचिद्धेतुना भवितव्यम्, तच्च ज्ञानमेवेत्याशयवानाह—**सैवेति**। तर्हि ज्ञानस्यापि नियतस्य नियामकेन धर्मान्तरेण विना कथमुत्पत्तिरित्याह—**ज्ञानेति**।

नन्वन्तरेणापि धर्मान्तरमात्ममनःसंयोगादिरूपस्वहेतुसामर्थ्यादेवनियताधिकरणं ज्ञानमुत्पद्यत इत्याह--**स्वहेतोरिति**। तर्हि तत एव हेतोरिच्छैवोत्पद्यतां किं ज्ञानेन, ततश्च ज्ञानातीन्द्रियत्वहेतोराश्रयासिद्धिः सुस्थेति।

**स्यादेतदिति**। विलक्षणमात्ममनस्संयोगादेरिति। **हन्तैवमिति**। गतम्।
5 कथं सुस्वापनिवृत्तेर्मानसानुभवसिद्धत्वेन ज्ञानस्यैवापरोक्षत्वसिद्धिरित्याह--**अचेतयन्निति**। ततोऽपि किमित्यत्राह—**अचैतन्येति**। तथापि ज्ञानप्रत्यक्षत्वस्य किमायातमित्युक्तम्। ज्ञानमिति। सैव हि ज्ञानमिति। एवं ज्ञानस्यापरोक्षत्वे सिद्धेऽतीन्द्रियत्वहेतोर्बाधितविषयत्वं स्यादित्याह—**तथा चेति**। एतेन आश्रयासिद्धकालात्ययापदिष्टत्वप्रतिपादनेन ज्ञानातीन्द्रियत्वे हेत्वन्तरमपि निरस्तमित्याह—**एतेनेति**। दूषणान्तरमप्याह---**अपि-**
10 **चेति**। अनैकान्ति[कम्। इच्छादावित्यर्थः।]

**असिद्धमिति**। द्वित्रिक्षणावस्थायित्वाभ्युपगमात् ज्ञानस्येति। एकक्षणावस्थायित्वे प्रमाणमाह---

**नन्विति**। तर्ह्यतीतक्षणविशिष्टतया गृह्णातीत्यत उक्तम् **प्रत्यक्षस्येति**। विरम्य व्यापाराभावादिति। न हि तदेव ज्ञानं प्रथमक्षणेऽन्यादृशमर्थं गृहीत्वा द्वितीय-
15 क्षणेऽन्यादृशं गृह्णाति। शब्दबुद्ध्यादीनां विरम्यव्यापाराभावादिति। तर्हि द्वितीयक्षणविशिष्टमप्यर्थं प्रथमत एव ग्रहणादुत्पद्यत इत्यत्राह—**प्रथमत इति**। ज्ञानत्वहानेरिति। अर्थग्रहणात्मकमेव ज्ञानमिति अनवसरदुस्थोऽयं विकल्प इत्याह---**तदसदिति**। गृहीतज्ञानमित्यभ्युपगमे तु कुतः प्रश्नः स्यादित्यत्राह---**तथा चेति**। तत्र वा किमुत्तरयित्यत्राह—**तत्रेति**।

20 ननु यदि द्वितीयक्षणेऽपि प्रथमक्षणावच्छिन्नमेवार्थमालम्बते। तर्हि भ्रान्तिरेव स्यादित्याशङ्क्याह—**न चैवमिति**। न खलु विपरीतार्थावलम्बनात् भ्रान्तत्वम्। किन्तर्हि, विपरीतार्थावगाहनात्, तदवगाहनं च तज्ज्ञानस्योत्पत्तिसमये तदुल्लेखनं विवक्षितम्। ततश्च द्वितीयक्षणे विपरीतार्थावलम्बने विपरीतानवगाहनात् न भ्रान्तत्वम्। यदा त्ववगाहः प्रथमक्षणे तदा विपरीत्याभावान्न भ्रान्तत्वमिति। **तथापीति**। भ्रान्ति-
25 त्वाभावेऽपीति। ज्ञानार्थयोरेकत्वस्यैककालत्वनियमस्य वानभ्युपगमान्नानुपपत्तिरित्याह—**किमस्मिन्निति**। तदेवं ज्ञानस्य क्षणिकत्वमसिद्धमित्युक्तम्। सम्प्रत्यभ्युपगम्याह—**सत्यपि वेति**। इतर आह—**इत्थमिति**। तमेव प्रकारमाह—**स्वप्रकाशमिति**। तद्युत्तरकालभाविना ज्ञानान्तरेण गृह्यत इत्यत्राह—**ग्राहकेति**। तस्य स्वप्रकाशत्वेन

ज्ञानान्तरग्राह्यत्वेन वा प्रत्यक्षत्वाभावादतीन्द्रियत्वमेव परिशिष्यत इति भावः। यदि क्षणिकत्वेन ज्ञानं न प्रत्यक्षं स्यात्, तर्हि तत एव हेतोः ज्ञाततापि न प्रत्यक्षा स्यादित्याह—नन्वेवमिति। न तावत् ज्ञातता स्वजनकेन ज्ञानेन ग्राह्या, तदुत्पत्तिसमये तज्जन्याया ज्ञाततायाः अभावादित्याह—न जनकेति। तर्हि तां जनयित्वा पश्चाद् ग्रहीष्यत इत्युक्तम्—विरम्येति। नापि ज्ञाततायाः समकालभाविना ज्ञानेन ग्राह्ये- 5
त्याह—नापीति। सत्यां ज्ञाततायां तत्सम्बद्धमिन्द्रियं तद्विषयं ज्ञानं जनयेत्। न च ज्ञानोत्पत्तेः पूर्वं तज्जन्या ज्ञाततास्ति ययेन्द्रियं सम्बध्येतेति, तर्हि ज्ञाततोत्तरकालभाविज्ञान-ग्राह्यास्त्वित्यत्राह—न तदुत्तरेति। नह्यतीतमैन्द्रियकज्ञानेन गृह्यते इति, ततश्च ज्ञाततायाः असिद्धत्वात् न तस्या ज्ञानलिङ्गत्वमिति भावः। स्यादेवं यदि ज्ञाततायाः क्षणिकत्वं भवेत्। तदेव कुतः इत्याह—क्षणिकत्वमेवेति। ज्ञानक्षणिकत्वे त्वदुक्त- 10
युक्तेरेवेत्याह—त्वदुक्तेति। तामेवात्राप्यनुसन्धत्ते—तथा हीति। अप्रतिसंक्रमादिति। प्रतीतेरर्थान्तरसंक्रमणे तत्कार्यज्ञाततापि संक्रमेदपि, न च तत्सम्भवति, तर्हि प्रथमक्षणावगाहिना ज्ञानेनैव द्वितीयक्षणाश्रयापि ज्ञाततोत्पद्यत इत्यत्राह—एकक्षणेति। तर्हि तदेव ज्ञानं द्वितीयक्षणमवगाहतामित्यत्राह—न चान्यमपीति। उत्पत्तिसमय एव हि ज्ञानानि विषयमवगाहन्ते, ज्ञानोत्पत्तिकाले च द्वितीयक्षणस्यासत्त्वान्न तदवगाहन- 15
मिति। निःस्वभावतेति। विषयाश्रितत्वस्वभावा हि ज्ञाततेति तदेवाह—न हीति। निःस्वभावत्वपरिजिहीर्षया शङ्कते—अतीतेनापीति। एवं हीति। अतीतेनैवोपलक्ष्यमाणत्वादिति। यद्यतीतक्षणोपलक्षणेनापि प्राकट्यस्य वर्तमानार्थताभ्युपगम्येत, तर्हि तादृशप्राकट्यसम्बन्धेन वर्तमानार्थस्यैव तज्जनकज्ञानस्यानुवृत्तिः स्यादित्याह—अन्यथेति। [वर्तमानार्थत्व इ]त्येवमित्यत्राह—न हीति। 20

ननु माभूदर्थो वर्तमानः तथापि तद्विषयः प्रकाशोऽनुवर्तते तावता तज्जनकज्ञानस्य वर्तमानार्थतोपपत्तिरित्यत्राह—अर्थेति। भूतादिविषयज्ञानानामपि वर्तमानावभासताप्रसङ्गः। ज्ञाततालक्षणप्रकाशानुप्रसक्तेरिति। एवं निराश्रयैव ज्ञातता[नुवर्ति]ष्यत इति महायानिकपक्षमाक्षिप्य मीमांसकमाशङ्कते—अथेति। सूक्ष्मवर्तमानैकक्षणविशिष्टो न ज्ञाततायाः आश्रयः किन्तर्हि, स्थूलेनास्मदादिगोचरेण त्रिचतुरक्षणलक्षणेन वर्तमानत्वेन विशिष्टः, 25
ततो द्वितीयादिक्षणेऽप्याश्रयसद्भावात् न क्षणिकत्वमिति। तदेतत् ज्ञानेऽपि सुवचमित्याह—ज्ञानस्यापीति।

नन्वैन्द्रियकत्वे ज्ञानस्य चक्षकमेव ज्ञानं मनसा सम्बन्धयोग्यं चेति तद्विषयज्ञानान्तर-

मुत्पद्यते, तस्यापि ज्ञानत्वात् द्वितीयं ज्ञानान्तरमेवं तस्य तस्यापीति ज्ञानपरम्परायामेव व्यापृतत्वान्मनसो विषयान्तरसंचारो न स्यादित्याह—**ननु ज्ञानमिति** । स्यादेवं यद्य-जिज्ञासितमेव ज्ञानं सुखादिवत् गृह्येत । नत्वेतदस्तीत्यत आह—**न चेति** । जिज्ञासा तावत् संशयपूर्विका । सा च सामान्यतोऽवगते धर्मिणि भवति । तज्जिज्ञासार्थमेव 5 धर्मिरूपं ज्ञानं ज्ञातव्यम् । तच्च किमुत्पन्नमात्रं जिज्ञासितमेव ज्ञायते । किं जिज्ञासितं वा पूर्वत्र पूर्ववत् ज्ञानपरम्परैव स्यात् । उत्तरत्र जिज्ञासायाः धर्मिज्ञानापेक्षत्वात् धर्मिणो-ऽपि ज्ञानत्वेन जिज्ञासापेक्षत्वात् तस्या अपि जिज्ञासाया धर्मिज्ञानापेक्षत्वात्, तस्य च जिज्ञासापेक्षत्वात्, धर्मिज्ञानार्थमेव जिज्ञासायामेव मनसो व्यापारात् विषयान्तरसंचारो न स्यादिति । तदेतत् ज्ञातताप्रत्यक्षत्वेऽपि तुल्यमित्याह—**तन्नेति** । ज्ञातताया अप्य-10 जिज्ञासितज्ञेयत्वे ज्ञातताविषयज्ञानजन्याया अपि तथात्वात् विषयान्तरसंचाराभावः । जिज्ञा-सिताया एव ज्ञेयत्वे ज्ञानवदेव जिज्ञासापरम्परैव स्यादिति ।

ननु विषयान्तरे संचारे सति चक्षुरादेः ज्ञाततासम्बन्धविच्छेदात् ज्ञानपरम्परा विरंस्यतीत्याहशङ्क्याह—**न चेति** । स्यादेष परिहारो बाह्यविषये, आत्मनि जनितस्य तु प्राकट्यस्य मनस्सम्बन्धविच्छेदायोगात् । ज्ञातता तत्परम्परैव स्यादिति । **स्वभावत** 15 **इति** । असौ ज्ञातता तदेतत् ज्ञानेऽपि सुवचमित्याह—**तुल्यमिति** । अथ जिज्ञा-सितैव ज्ञातता ज्ञायते, तथापि न जिज्ञासानवस्था न हि तामेव ज्ञाततां सामान्यतो ज्ञात्वा जिज्ञासोपपत्तिः । किन्तर्हि आगमानुभूतपूर्वज्ञातता धर्मिस्मरणेन संजातजिज्ञासः सम्प्रति समुत्पन्नां ज्ञाततां प्रतिपाद्यत इत्युच्येत, तर्हि ज्ञानेऽपि तथैव स्यादित्याह—**प्रागुत्पन्नेति** ।

ननु प्रत्यक्षज्ञानवादिनः प्रष्टव्याः । किमिदं विकल्पमात्रेण गृह्यते । निर्विकल्पक-20 पूर्वकेण वा सविकल्पकेन निर्विकल्पकमात्रेण वेति विकल्पमभिसन्धायाद्ये दूषणमाह—

**ननु ज्ञानमिति** । द्वितीयेऽप्याह—**निर्विकल्पकगृहीतस्येति** । किमिति विकल्पोदयं यावन्नावतिष्ठत इत्यत्राह—**तस्येति** । निर्विकल्पकविषयस्य ज्ञानस्य तेनैव निर्विकल्पकेन विरोधिना गुणेन विनाशादिति तृतीयेऽप्याह—**नापीति** । दृष्टान्तावष्टम्भेन विकल्पैकवेद्यत्वमाशङ्क्याह—**न चेति** । समवायाभावयोरवच्छेदकांशस्य समवायिनः प्रतियोगिनश्च प्रागेव ज्ञानान्तरेण गृहीतत्वात् युक्तम् अनुमेयस्येव विकल्प-25 वेद्यत्वम् । ज्ञाने तु विशेषणांशस्य ज्ञानत्वस्य प्रागग्रहणात् कथं विकल्पैकवेद्यत्वमिति नोत्पन्नमात्रस्येति उत्पन्नमात्रस्य विद्यमानस्यैव नीलादिज्ञानस्य निर्विकल्पकेन तावदालोचनं

---

१—क ज्ञानपरम्परैव ।

भवति। ततस्तद्व्यक्तिनाशेऽपि तदालोचितेनैव ज्ञानत्वेन व्यक्त्यन्तरमुत्पन्नमात्रमेव विकल्प्यत इति कथं तदालोचनमन्तरेण प्रथमत एव व्यक्त्यन्तरं विकल्प्यत इत्यत्राह—**इन्द्रियसन्निकर्षस्येति**। विकल्प[ज्ञानं ज]नयत इन्द्रियसन्निकर्षस्य विशेषणग्रहणसहकार्यपेक्षया, तच्च सहकारि द्वितीयज्ञानोत्पत्तिसमय एवास्तीति प्रथमत एव तद्विकल्पापत्तिरिति कथं व्यक्त्यन्तरसमवेतत्वेन गृहीतं ज्ञानत्वं व्यक्त्यन्तरविकल्पोपयोगि स्यादित्याह— 5 **व्यक्त्यन्तरेति**। यदि गृहीतेऽपि विशेषणविशेष्यव्यक्तिसमवेतत्वेनाग्रहणाद् विशिष्टप्रत्ययो न स्यात्, तर्ह्यनुमानविकल्पोऽपि न स्यात् अनुमित्सितविशेष्यगतत्वेन विशेषणस्याग्रहणात्, गृहीतस्य चान्यत्र विशिष्टप्रतीतिहेतुत्वानभ्युपगमात्, विशिष्टप्रत्ययलिङ्गग्रहणस्य विशेषणग्रहणलक्षणसहकार्यभावादित्याह—**अन्यथेति**। **एतेनेति**। व्यक्त्यन्तरालोचितेन विशेषणेन व्यक्त्यन्तरं विकल्प्यत इति प्रतिपादनेन अथातीन्द्रियपरमाण्वादिविषयविज्ञानानां 10 मनोवेद्यत्वानुपपत्तिमाह—

**स्यादेतदिति**। न हि बाह्येन्द्रियविषयस्यैव मनोवेद्यत्वं मनसो बहिरस्वातन्त्र्यादिति अनुपपत्त्यन्तरमाह—**न च नित्येति**। **नेति**। न तावन्मनोवेद्यत्वे बाह्येन्द्रियग्राह्यत्वं तन्त्रम्, विषयोपस्थापनाय हि मनसो बाह्येन्द्रियापेक्षा यदि वातीन्द्रियोऽपि विषयस्तद्विषयज्ञानेनोपस्थाप्यते ततस्तदेव ज्ञानविशेषणत्वेन मनसा वेद्यत इति बाह्येन्द्रियग्राह्यस्यैव 15 मनोवेद्यत्वेऽतीन्द्रियार्थविषया स्मृतिरपि न स्यात्, तद्विषयस्यापि मानसत्वादित्याह—**अन्यथेति**। अत्रापि हि पूर्वज्ञानोपस्थापित एव विषये मानसी स्मृतिरिति भावः। किं स्मरणानुव्यवसाययोरविशेष एवेत्यत्राह—**इयांस्त्विति** अनुव्यवसाये विषयोपस्थापकस्य ज्ञानभूतस्य ज्ञानस्य सत्त्वात्तद्बलेनैव ज्ञानविशेषणग्रहणात्तदुत्पत्तिः, स्मरणे तु विषयोपस्थापकस्य पूर्वानुभवस्य तत्काले स्वरूपेणासत्त्वात् तज्जनितवासनाद्वारेण तदुत्पत्ति- 20 रित्येतावान्विशेष इति। यद्यनुव्यवसायोऽपि पूर्वज्ञानोपस्थापितविषयः स्यात्, तर्हि स्मरणमेव स्यादित्यत्राह—**न चैवमिति**। मा भूत् ज्ञानांशे, स्मृतिविषयांशे त्वनुव्यवसायज्ञानं स्मृतिः स्यात गृहीतपूर्वत्वात् तस्येत्यत्राह—**न च विषयांश इति**। अनुभवावस्थायामिवानुव्यवसायेऽपि विषयस्यागृहीतपूर्वेणैव ज्ञानावच्छेदकत्वरूपेणावभासमानत्वादिति किमित्येवं क्लिश्यते, प्रत्यभिज्ञानवत् ग्रहणस्मरणात्मकोऽनुव्यवसायोऽङ्गीक्रियता- 25 मित्यत्राह—**न चेति**। ग्रहणस्मरणाकारयोर्विरुद्धत्वेनैकस्मिन् धर्मिणि समावेशायोगात्। प्रत्यभिज्ञानमपि नोभयात्मकम्। किन्तु ग्रहणात्मकमेवेति। **अथेति**। यदि संस्कारजमपि ज्ञानं ग्रहणमेव स्यादिति उत्तरम्—**अधिक इति**। यस्यां ज्ञानसामग्र्यां संस्कारातिरिक्तोऽप्यर्थसन्निकर्षोऽस्ति सा ग्रहणसामग्री यस्यां तु संस्कारमेवार्थसन्निकर्षः, सा

स्मरणस्य। एतदुक्तं भवति, पूर्वानुभवजनितसंस्कारबलोपस्थापिततद्विषयसन्निकर्षादेव मनसा यदुत्पद्यते ज्ञानं तदेव स्मरणमनुव्यवसायस्तु तत्तद्विषयावच्छिन्नेन ज्ञानेन मनसः सन्निकर्षात् संस्कारातिरिक्तादेव जायमानो ग्रहणमेवेति—**अथेति**। एतदनुव्यवसाय-ज्ञानमिति—**कारणान्तरेति**। संस्काराधिकसन्निकर्षेण तावज्जनितत्वात् ग्रहणात्मकत्वं 5 सिद्धम्। लिङ्गादिकारणान्तरनिरपेक्षेणेन्द्रियेण जनितत्वात् अपरोक्षा[का]रत्वसिद्धिरिति—**अधिक इति**। मन इन्द्रियस्येति शेषः। **ज्ञानेनेति**। काकाक्षिवत् प्रश्नोत्तराभ्यां सम्बध्यत इति। **तदर्थेनेति**। तस्य ज्ञानस्यावच्छेदकेन विषयेण सन्निकर्षः संयुक्त-समवेतविशेषणत्वमनःसंयुक्तात्मसमवेतज्ञानविशेषणत्वात्—**तस्येति**। मनस इति, बहिर्ज्ञानावच्छेदक इत्यर्थः। **ज्ञानावच्छेदकमिति**। चक्षुरादिगृहीतपूर्वस्यैव ज्ञाना-10 वच्छेदकत्वेन मनोवेद्यत्वादन्धादीनां च तदसंभवादिति। किञ्चायमनुव्यवसायेन[मन]सो निरपेक्षस्य बहिर्व्यापारः किमनुव्यवसीयमानज्ञानापेक्षयोच्यते, किम्वा तदवच्छेदकविषया-पेक्षया पूर्वत्र बहिरिति नास्ति, अनन्तरत्वात् ज्ञानांशस्य उत्तरत्र सत्यपि बाह्यत्वे निरपेक्ष-स्येति नास्ति, विषयोपस्थापनाय तस्यैव ज्ञानस्यापेक्षणादित्याह—**न च ज्ञानापेक्षयेति**। **तथापीति**। मा भूत् ज्ञानस्यातीन्द्रियत्वे प्रमाणम्, मा च भूवन्नैन्द्रियकत्वे बाधकानि 15 तथापीत्यर्थः। ज्ञानविषयापरोक्षानुभवस्य सर्वजनस्वसंवेद्यत्वान्नात्र प्रमाणान्तरं मृग्यमि-त्याह। **प्रत्यक्षमेवेति**। ज्ञानस्य मानसप्रत्यक्षत्वं सूत्रकारस्यापि सम्मतमित्याह। **यदवोचदिति**। घटमुपलभे नोपलभ इति च विधिनिषेधरूपाणां ज्ञानविशेषाणां भावाभावविषयत्वसंवेदनादध्यात्मं मानसमिति सूत्रार्थः ॥४॥

विवेकः

**अनुमितित्वादेरिति** घटज्ञानमित्यत्र यथा ज्ञाने अर्थो विशेषणं तथा ज्ञातोऽर्थ इत्यत्र 20 ज्ञातताविशेषणमार्थज्ञानमित्याह—**यथा हीति**।

**अर्थेनेति**। अभेदे तृतीया धान्येन धनमितिवत् तथा चार्थ एव विशेषो विशिष्यते अनेनेति व्युत्पत्त्या विशेषणं व्यावृत्तिप्रतीतेर्विशेषशब्दार्थत्वे। अर्थेनेति तृतीया करण एव। ज्ञायमानकरणतानये चाविरोधः। नन्वाकार एव ज्ञानस्य विशेषोऽस्त्वि-त्यत्राह—**निराकारेति**। क्रियया प्रकृते ज्ञानेन। **व्यवहारेष्विति**। व्यवह्रियतेऽनेनेति 25 व्युत्पत्त्या कर्मणां व्यवहारो ज्ञातो घट इत्यादिबोधास्तेषु विशेषो विशेषणम्। घटक्रिया घटाकृतिः। एवमग्रेऽपि। अन्यथा तत्रापि कृत्यातिरिक्ता सिद्ध्येदिति भावः। सम्बद्धयोर्ज्ञानार्थयोस्तथा च विशेषणीभूय तत्प्रत्ययात् सा न सिध्यतु सम्बद्धतया तु

स्यादिति भावः । **एतेनेति** । धात्वर्थविच्छेदकफलशालीन एव कर्मत्वादिति भावः । मुख्यकर्मत्वाभावेऽपि भाक्तं तदुपपादयति । **विनाश्यवदिति** । यथा मुद्गरेण घटं नाशयतीत्यत्र नाशिधात्वर्थावच्छेदकफलेन घटस्य समवायाभावेऽपि भाक्तं कर्मत्वं तत्रापीत्यर्थः । तत्र चोभयसाधारणीं भाक्त[ता]माह—**करणेति** । करणस्य मुद्गरादेश्चक्षुरादेश्च व्यापारो विनाशो ज्ञानञ्च तद्विषयत्वेन तत्स्वरूपसम्बन्धित्वेन । ननु 5 नाशेन समं प्रतियोगिनः स्वभावः सम्बन्धोऽस्तु तन्निरूपकत्वात् ज्ञानेनार्थस्य तु कुत इत्यत्राह--**स्वाभाविकेति** । तुल्यं प्रतियोगिवदर्थस्याप्यस्तीत्यर्थः । ज्ञानानुमानान्यथानुपपत्त्या प्राकट्यं साधयति **नन्विति** । तदभावेऽसाधारणतादृशकार्याननुभावे । ननु मास्तु ज्ञानज्ञानं किन्तावतेत्यत्राह—**अप्रतीतं चेति** । **परस्परेति** । चैत्रं जानामीति तावदनुभूयते अनुभवः । तत्र चैत्रज्ञाने प्रसिद्धे तदनुमानाप्रसिद्ध्या ज्ञाततानुमानं 10 ज्ञाततया च चैत्रज्ञानम् । यद्वा ज्ञाते ज्ञाने यो व्यवहारः ज्ञानज्ञानाधीनो यो व्यवहारसरसवाह विप्रतिपद्यमिति यावत् । तदनुपपत्त्या ज्ञाततानुमानमित्थं ज्ञाततया ज्ञानानुमानाधीनस्तद्व्यवहार इति स इत्यर्थः ।

ननु प्रत्यक्षसिद्ध्या ज्ञाततया ज्ञानानुमानं ततस्तद्व्यवहारः सरसवाही विप्रतिपन्नं प्रति च इयमनुपपत्तिर्मानतयोच्यते इति क्व स इत्यरुचेराह—**कुतश्चेति** । 15

ननु ज्ञाने इन्द्रियजन्योपलम्भविषयत्वाभावो विषयतया तदभावो वा अनुपलब्ध्यैव स्वरूपसत्या गृह्यत इत्याशंक्य निराकरोति—**अनुपलब्धीति** । अनुपलब्धिः केवलैवाभावगमिका योग्यताविशेषिता वा ? आद्ये कथमिति। अतीन्द्रियमात्रविलोपापत्त्यानुपलब्धिमात्रं नाभावगमकमन्यथा भवतां ज्ञानमेव न वस्तु कुत्र तदभावग्रह इति भावः । तया योग्यताऽविशेषणेऽनुपलब्धेः । **कथमिति** । न त्वतीन्द्रियस्यानुपलब्धिर्योग्या सम्भवतीति भावः । 20

ननु ज्ञानमतीन्द्रियं साक्षात्कृततानवधारत्वात् इत्यनुमानमस्त्विति शङ्कते—**तथाविधेति** । साक्षात्कृतेत्यर्थः । आश्रयस्य पक्षीभूतज्ञानस्यासिद्धेः प्रमाणाभावेनाज्ञानात् तदुपपत्तेः व्यवहारस्योपपत्तेः । **तद्धेतोरिति** न्यायादिति भावः । एकशक्तिमत्त्वेन च तैः कारणत्वोपगमात् तद्धेतुनामननुगमेऽपि न क्षतिरिति ध्येयम् । तद्धेतुमात्रस्य व्यवहारकारणतोपगमे अन्वयव्यभिचारं शङ्कते—**तस्येति** । तावन्मात्रस्य ज्ञानहेतुमात्रस्य अपि तु तत्सामग्र्याः । 25 न च तद्दशायां सेत्यर्थः । अन्यथा तावन्मात्रस्य तत्सामग्रीत्वोपगमे ततस्तद्दशायां ज्ञानस्वीकारे व्यवहार एव । वस्तुतः **कुत इति** । **स्मरणेति** । सिद्ध आश्रय इति प्राक्तनमनुषज्यते ।

ननु व्यवहारस्य कार्यतया साधारणहेतुजत्वानुमानं पक्षधर्मताबलाज्ज्ञानं गमयतीत्याह । **अस्तीति** । तस्यैव ज्ञानरूपस्य वस्तुनः असिद्धेः अप्रसिद्धेः । ननु प्रवृत्तिनियताधिकरणताया उत्पत्तिः समानाधिकरणप्रयोज्या अन्यथातिप्रसंगात् । तदेव च ज्ञानमितराधीनम् सिध्यतीत्याह—**तथापीति** । **अस्त्विति** । तथा चोक्तानुमाने इच्छया अर्थान्तरत्वमिति भावः । **ज्ञानेति** । ज्ञानमेव नियताधिकरणमितीच्छया सह तुल्यमित्यर्थः । अत एव अहेतुत एव इच्छास्तु नियताधिकरणा । नन्विच्छोत्पत्तेः पूर्वं स्वस्वापदशाव्यावृत्तमर्थप्रकाशकं किमप्यनुभूयते तदेवेच्छाया नियताधिकरणतानियामकम् इच्छति शङ्कते । **स्यादेतदिति** । ततोऽनुभवबलात् यस्मिन्नर्थप्रकाशात्मनि अनुभवपदं प्रकारान्तरासंभवात् । प्रत्यक्षपरमभ्युपेत्य स्वमतसिद्धौ हर्षमाविष्कुर्वन्नाह—**हन्तैव**मित्यादि । कालात्ययापदिष्टहेतुरतीन्द्रियत्वसाध्यकः । एतेनैव कालात्ययापदिष्टदोषेणानैकान्तिकम् इच्छादौ एकक्षणमात्रावस्थायित्वं ज्ञानस्य क्षणिकत्वे प्रमाणमाह । नन्वित्यादि । **स्थायीति** । पराभ्युपगमेन तेषां चासत्ख्यात्युपनीतमर्थः । क्षणं क्षणावच्छिन्नमर्थम् । तन्नये क्षणरूपमर्थं सर्वेषामेव तेषां क्षणिकत्वात् । **द्वितीयेऽपीति** । तं क्षणं द्वितीयेऽपि क्षणे तादृशं वर्तमानमेव वर्तमानत्वेनैव तं क्षणं गृह्णातीत्यर्थः । **अन्येति** । अन्यं वा क्षणं द्वितीयक्षणरूपं वर्त्तमानत्वेन गृह्णाति न वा किमपि तज्ज्ञानं द्वितीयक्षणे गृह्णाति । तस्योत्पत्तिक्षणे वर्तमानक्षणस्य तद्द्वितीयक्षणेऽतीतत्वात् । तत्क्षणवृत्तिध्वंसप्रतियोगित्वात् । ननु क्षणत्वेन तं गोचरयति । स तु क्षणो भवत्येवेत्यत्राह–**प्रत्यक्षस्येति** । वर्त्तमानभत्वात् । वर्तमानविषयत्वात् । नन्वतीतमेव क्षणं तदा वर्तमानत्वेनैव विषयीकरोतीत्यत्राह—**भ्रान्तत्वेति** । तथा च भ्रान्तत्वाभ्रान्तत्वविरुद्धधर्माध्यासादेव ज्ञानभेदसिद्धिरिति भावः । विरम्येति । यमर्थमालम्ब्य यज्ज्ञानमुत्पन्नं तस्य न तदतिरिक्तालम्बनसामर्थ्यमित्यर्थः । प्रथमत उत्पत्तिक्षण एव तथाभ्युपगमे स्थितिक्षणस्य वर्तमानतया ग्रहणाभ्युपगमे । तथा तदपि भ्रान्तत्वेन लक्षणभेदेनाभ्रान्तत्वमिति नोक्तविरुद्धाध्यासाद्भेद इति भावः । **अनागतेति** । न चानागतं सामान्यं सामग्रीमर्यादया भातीति भावः । ज्ञानत्वहानेरित्यस्य प्रसंगादिति शेषः । तदानीमर्थप्रवणत्वाभावान्न वा तन्नियतस्य ज्ञानत्वस्यापि अभावप्रसंगः । इदमुपलक्षणम् । अर्थ प्रवणत्वविरुद्धधर्माध्यासादपि असिद्ध्या क्षणिकत्वे पर्यवसानादित्यपि बोध्यम् । ग्रहधातुं ज्ञानार्थकम् मन्वानो दूषयति ज्ञानमिति । तदेव ज्ञानमेव । **विपरीतेति** । येन समर्थमालम्ब्य ज्ञानमुत्पन्नं तस्य तथात्वादेवेत्यर्थः स्थूलकालस्यैव तदानीं भानात् । तस्य च न द्वितीयक्षणेऽवर्तमानता न वा विषयः क्षणिक इति भावः ।

ननु ज्ञानोत्पत्तिद्वितीयक्षणे यस्य विषयस्य विनाशस्तज्ज्ञानं विषयनिवृत्तिक्षणे न

स्थातुमर्हति क्षणिकमेकमुपेयमित्याह । **तथापीति** । अभ्युपेत्य पक्षधर्मतां व्याप्यत्वा-
सिद्ध्या दूषयति । **सत्यपि वेति** । **न स्वप्रकाशमिति** । सा कृतिः निषेध्यप्रसिद्धिः ।
ज्ञानयोः यौगपद्यनिषेधेन एकस्मिन् आत्मनि एकक्षणवृत्तित्वानभ्युपगमे न कार्यारम्भोपगमे
एकावच्छेदेनेत्यपि बोध्यम् । समानकालस्य ग्राहकज्ञानाधिकरणक्षणवृत्तेर्ग्राह्यज्ञानस्य ग्राहक-
काले ग्राहकत्वाभिमतज्ञानाधिकरणक्षणे ग्राह्यतत्क्षणवृत्तिध्वंसप्रतियोगित्वात् । किमेतावते- 5
त्यत्राह—**वर्त्तमानाभेति** । ग्राहकज्ञानस्य वर्तमानाकारतानुपपत्तेरित्यर्थः । यदा च
विषयस्य वर्तमानत्वं तदा यौगपद्यविरोधेन ग्राहकमेव नोपपत्तुमर्हति । किं वर्तमानाकारं
स्यादिति पररीत्या स्वाभिमतं साधयितुं सिद्धान्ती शङ्कते । **नन्वेवमिति** । अत्र क्षणि-
कत्वादिति न तदुत्तरज्ञानग्राह्येत्यत्र यो हेतुस्तत्रोपयोक्ष्यते । परः पृच्छति । **कथमिति** ।
उत्तरम् । **इत्थमिति** । न प्रकाश इत्यत्र प्राक्तनी ज्ञाततानुषज्यते एवमग्रेऽपि । जनके- 10
त्यस्य स्वेत्यादि तथा च न स्वजनकप्रत्यक्षविषयः अनागतत्वात् । तद्व्यक्तिकालीन-
प्रागभावप्रतियोगित्वात् । सुलभो दृष्टान्तः । यदा तस्यानागतता तदा तेनाविषयीकरणेऽपि
वर्तमानदशायां विषयीकरणे न दोषः । उक्तानुमाने च स्वाकालीनत्वमुपाधिरित्यत्राह—
**विरम्येति** । एतज्ज्ञानस्य क्षणद्वयायावस्थानमभ्युपेत्यान्यथा द्वितीयक्षणज्ञानस्यैवाभावात् ।
कस्य तद्विषयिता स्यादिति ध्येयम् । **न समेति** । ज्ञातता न स्वोत्पत्तिक्षणोत्पत्तिकक्षणप्रत्यक्षवि- 15
षयः तदानीमिन्द्रियासम्बन्धादित्यर्थः । अनुभवोपादानं सम्बन्धे प्रमाणाभावबोधनाय भूधातोः
प्राप्त्यर्थकतया इन्द्रियसम्बन्धाप्राप्तेरित्यर्थः इति केचित् । तच्च सम्बन्धांशेऽनुप्रवेशवैयर्थ्या-
दुपेक्षितम्—अतीतत्वादिति । प्रत्यक्षेण वर्तमानस्यैव विषयीकरणादिति भावः । पृच्छति
**क्षणिकत्वमेवेति** । तथा च स्वोत्पत्तिद्वितीयक्षणोत्पत्तिकज्ञानेनैव तद्ग्रहः स्यादिति
भावः । **त्वदुक्तेति** । ज्ञानस्य क्षणिकतायां त्वया या युक्तिरुक्ता तत्प्रतिरूपयुक्त्यैवेत्यर्थः । 20
**तथा हीत्यादि** । यं क्षणम् यत्क्षणावच्छिन्नम्वा ज्ञात इति प्रत्ययनियामकेन सम्बन्धेनाश्रित्य
जाताज्ञातता ततः परम् ततः क्षणादुत्तरं तमेव क्षणं तेन सम्बन्धेनाश्रयते तस्य क्षणस्य ।
**अप्रतिसंक्रमादिति** । उत्पत्तिकाले स्वसमवायिनि समवायासम्भवादित्यर्थः । समवायश्चाति-
रिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । ननु ज्ञाततापि व्यवहारनिमित्तं सम्बन्धान्तरमुपेयम् ।
उत्पत्तिक्षणे च तेन सम्बन्धेनासम्बन्धिन्यपि सम्बन्धो निःस्वभावापत्तिभयादेवोपेय इत्य- 25
नुशयादेवाह—**एकक्षणेति** । एकक्षणमात्रवृत्तिप्रकार इत्यर्थः । **भ्रान्तत्वेति** । तन्नये
स्वप्रकारानधिकरणवृत्तिज्ञातताकत्वस्यैव भ्रमलक्षणादिति भावः । अन्यमपि क्षणं तत्तत्क्षण-
त्वेन तथा च न प्रकारानधिकरणत्वं तस्येति भावः । तदानीं ज्ञानोत्पत्तिक्षणे तस्य
तदेवाह—**न हीति** । असौ ज्ञातता तदीया भ्रमक्षणीयप्रथमक्षणीयान्यदीया तदन्यक्षणीया

वा इत्यनागतक्षणस्यासत्त्वादविद्यमानत्वात् निःस्वभावताप्रसंगात् निराश्रयत्वप्रसंगात्। न च जन्यं तथाभ्युपेयत इति भावः। ननु ज्ञातता न स्वोत्पत्तिक्षणाव्यवहितक्षणवृत्तिध्वंसप्रतियोगिन्युपेयते। निराश्रयस्यापि विनश्यदवस्थस्य सत्त्वोपगमादित्यभिप्रायेणाह–– **अतीतेनापीति**। वर्तमानार्थता स्वाधिकरणक्षणे वर्तमानोयोऽर्थस्तद्वृत्तिता प्रकाशस्य

5 ज्ञातताया न स्यात् द्वितीयक्षण एव तदसम्भवादिति भावः। तथानुप्रवृत्तेः स्वोत्पत्तिकक्षणे यो वर्तमानस्तद्विषयत्वेनोपलब्धिः तस्यद्वितीयक्षणेऽप्यनुवृत्तेः संभवात्। वर्तमानार्थप्रकाशसम्बन्धं वर्तमानार्थीयज्ञातताकत्वं यद्वा वर्तमानार्थवृत्तिज्ञातताजनकत्वविशेषः एव सः। ननु ज्ञातता वर्तमानत्वाधीनैव ज्ञानस्य वर्तमानता वाच्या इत्याह––**अर्थेति**। अर्थस्य वर्तमानतां विना प्रकाशस्य वर्तमानतां विनैव तथात्वे ज्ञानस्यवर्तमानतात्वे **भूतेति**। तत्रापि

10 तद्वृत्तिसामान्याद्याश्रितप्राकट्यस्य वर्तमानतायास्त्वनुपगमात्। स्थूल एव क्षणोपाधिः न तु क्षणः प्रकाशेन प्राकाट्येन तज्ज्ञानस्यापि तादृशप्राकाट्यजनकत्वेनाभिमतज्ञानस्यापि स एव स्थूलकाल एव तस्यापि ज्ञानस्यापि जातसम्बन्धत्वात् उत्पन्नस्यैव ज्ञानस्य मनःसंयुक्तसमवेतत्वात्तथा च सुखादेरितरस्यैव प्रत्यक्षं नेष्टसाधनताज्ञानादेव स भवितुमर्हति। संशयस्य क्वचिदुपयोगः संशयजन्यदुःखे द्वेषात्तादृशदुःखाभावरूपेष्टसाधनताग्रहोपक्षीणः

15 तथापि सामान्यतो ज्ञातेऽज्ञाते च विशेषतो विशेषप्रकारेण तत्र सा जायते ज्ञानज्ञानत्वेनेष्टसाधनताज्ञानस्य ज्ञाने ज्ञानं विनानुपपत्तेः। तदेव सामान्यतो ज्ञानं यदि जिज्ञासाधीनं तदोर्ध्वमुख्यनवस्था तदनपेक्षं चेत् तदा जिज्ञासाया व्यभिचारेणाहेतुतयाधोमुखी स विशेषतः ज्ञाने जिज्ञासाया उपयोगित्वेऽपि सामान्यतो ज्ञानमादायैव सा दुरुद्धरेति ध्येयम्। गूढाभिसन्धिः प्रतिवन्दिमुखेनोद्धरति––**ज्ञाततेति**। तद्वत् ज्ञान इवोक्तानवस्थादोषानुपपत्तेः

20 घटादिवृत्तिज्ञाततया घटादिना सममिन्द्रियसन्निधिविच्छेदाद्विषयान्तरसंचारः स्यादित्याशङ्कते **न चेति**। **आत्मेति**। आत्मसमवेतप्राकट्येषु इन्द्रियसम्बन्धविच्छेदस्याव्यापनादभावात्। तथा च तत्रैव विषयान्तरसंचारानुपपत्तिरित्यर्थः। स्वभावतः स्ववृत्त्या उद्भवत्वेनानुद्भवाभावत्वेन वासौ ज्ञातताज्ञातते साक्षात्क्रियते तुल्यं ज्ञानेऽपि स्वभावत एव नियमः साक्षात्कारे वाच्य इत्यर्थः।

25 ननु यदि सामान्यतो ज्ञातता ज्ञानं साक्षात्काररूपं जिज्ञासोपयोग्युपेयते तदैवानवस्था। किन्तु तत्स्मरणमेव तथेति नानवस्थेति [आ]शङ्क्य ज्ञाने तुल्यतया निषेधति। **प्रगिति**। न सविकल्पकज्ञानं ग्राह्यं न सविकल्पकरूपलौकिकसाक्षात्कारविषयः। नन्वस्तु प्रकृतेऽपि निर्विकल्पकमित्यत्राह––**तावत् कालानवस्थानादिति**। तज्जन्यसविकल्पककालानवस्थानादित्यर्थः। तस्य ग्राह्यज्ञानस्य तेनैव निर्विकल्पकेनैव स्वाधिकरणक्षणावर्त-

मानस्य च लौकिकप्रत्यक्षादौ चागोचरत्वादिति भावः। **केवलेति**। साक्षात्कारि-सविकल्पकावेद्यत्वे सति निर्विकल्पकवेद्यमित्यर्थः। तस्य निर्विकल्पकस्य। **समवायाभाववदिति**। द्वन्द्वोत्तरं वतिः तयोः समवायाभावयोर्विशेषणांशस्य सम्बन्धिप्रतियोगि-रूपस्य अनुमानादिवदिति। यथा तत्र पूर्वं निर्विकल्पकाभावेऽपि साध्यस्य विशेषणस्य-प्राग्ग्रहणादनुमितिस्तथा तत्रापीत्यर्थः। तज्ज्ञानादेरिति। आदिपदात्तदवान्तरजातिपरिग्रहः 5 अनुपलब्धेः प्रागग्रहात् कथमेवं स्यात्। कथं घटं जानामि इत्यनुव्यवसायः स्यात्। ज्ञाने जाते तस्य विषयस्योपहितविषयकं ज्ञानत्वांशे निर्विकल्पकरूपं नृसिंहाकारं ज्ञानमुत्पद्यते। अथ तदेव ज्ञानं विषयज्ञानत्वाभ्यामुपरक्तं प्रथमव्यवसायतृतीयक्षणोत्पन्न-ज्ञानेन विषयीक्रियते। द्वितीयज्ञानस्यापि विषयविषयकत्वात् ज्ञानत्ववत्त्वाच्च नायथार्थत्व-मित्यक्षरतात्पर्याभ्यामेव। नेत्यादि। तत्पुरःसरं तदालोकनपूर्वकं प्रथमत एव उत्पत्त्यनन्तरमेव 10 तज्जातीयस्य प्राथमिकव्यवसायविषयकद्वितीयज्ञानस्य विकल्पनात्। घटं जानामीति तृतीयक्षणे विकल्पसंभवात्। इन्द्रियसन्निकर्षस्य द्वितीयज्ञानेन विषयग्रहणस्य ज्ञानत्व-ज्ञानस्य व्यक्त्यन्तरसमवेतमपि सामान्यं गृहीतं व्यक्त्यन्तरघटितसन्निकर्षेण गृहीतमपि सामान्यं व्यक्त्यन्तरे यद् गृह्यते तत्तदेव, तेन नाप्रमात्वमिति भावः। अन्यथा फलीभूतज्ञानविशेष्यघटितसन्निकर्षेण गृहीतस्यैव सामान्यस्य प्रमायां प्रकारत्वोपगमे 15 तदवघृतस्याफलीभूतज्ञानवैशेष्ट्यसन्निकृष्टस्य तादृशसन्निकर्षेणेति यावत्। अनागस्यान्यघ-टितसन्निकर्षेण गृहीतस्यानुपयोगात्। फलीभूतप्रमायां प्रकारत्वानुपगमात्। किमिति। लिङ्ग-ज्ञानसहकारेण कीदृशं विशेषणज्ञानम् प्रमारूपामनुमितिं जनयेत्। एतेन एकव्यक्तिघ-टितसन्निकर्षेण गृहीतकत्वादेर्व्यक्त्यन्तरविशेष्यकप्रकारत्वोपगमेन इत्थञ्च तादृशज्ञानस्य एव विशेष्यकज्ञाने भानम् ज्ञानलक्षणमेव वर्तमानता तु स्थूलकालमादायैवेति ध्येयम्। 20 इत्थमिति। यद्यपि अनुमिनोमीत्यनुव्यवसायस्य नोपपत्तिस्तत्र तादृशि द्वितीयज्ञानेऽनुमिति-त्वाभावात् तथापि तदवगाहित्वे भ्रमत्वापत्तेः। तथापि तथाभ्रमत्वोपगमेऽपि न क्षतिरित्यत्र तात्पर्यम्। **मणिकृतस्तु** अव्यवहितप्राक्कालसत्तामात्रेणैव विषयस्य प्रत्यक्षजनकत्वोपगमेन कार्यकालवृत्तिता न प्रयोजिका। तथा च द्वितीयक्षणे विषयांशे सविकल्पकमनुमिति-त्वांशे निर्विकल्पकम् ज्ञानमुत्पद्यते, ततोऽनुमितिविशेष्यिका घटानुमितिरिति ज्ञानम् तत् 25 उपनयमर्यादया घटमनुमिनोमीति धीर्यदि चानुमितित्वादिनानुमित्यादेर्न विशिष्टवैशिष्ट्यस्वी-कारस्तदा तादृशनृसिंहाकारज्ञानोत्तरं लौकिकप्रत्यासत्त्यैवात्मविशेष्यका तादृशधीरित्याहुः। अभावत्वप्रतियोगित्ववदनुपस्थितस्यैव ज्ञानत्वादेः प्रकारत्वमिति तु **स्वतन्त्राः**।

विषयनिरूप्यं विषयाविषयलौकिकसाक्षात्कारः विषय इष्यते भवद्भिः। मनसा

वेदनं मानसप्रत्यक्षे भानमगृहीतस्य विशिष्टज्ञानाविषयस्य नित्यपरोक्षस्य नित्यं परोक्षस्य साक्षात्कारायोग्यस्येति यावत् । **अपरोक्षेति** । विशिष्टत्वं सम्पातायातम् सामान्यलक्षणा-जन्यज्ञानविषयतामादाय बाधवारणाय विशेषणीभूय प्रत्यक्षे भानलाभाय वा तत् अन्वया-द्यस्य अन्यथा प्रमाणान्तरासहकृतस्य तज्ज्ञानसहकारेण मनसोऽतीन्द्रियगोचरज्ञानजनना
5 सामर्थ्ये तस्मिन् तद्गोचरज्ञानेऽगृहीतं यद् द्वितीयम् ज्ञानं तद्गोचरत्वात् । इदमुपलक्षणम् । संस्काराभावेन ज्ञानत्वभानं न स्यादित्यपि ध्येयम् । **ज्ञानत्वेति** । प्राक्संस्कारोऽस्त्येवेति **केचित्** । तत् अनुव्यवसायरूपं ज्ञानं तथा स्मरणम् । अवच्छेदकतयात्मविषयकज्ञान-सहकारेण विशेषणीभूय प्रागवस्थस्य विषयस्यैवावभासनात्, न तु ज्ञानस्य तथा च तद्विषयकज्ञानजन्यत्वेन तत्स्मृतित्वसाधनेऽज्ञाताविषयत्वमुपाधिरिति भावः । तत्र साध्या-
10 व्यापकत्वं शङ्कते **नचेति** । अत्राज्ञातस्येदन्त्वस्य भानादिति भावः । विरोधादिति । तथा च तत्र स्मृतित्वाभावादेव न साध्याव्यापकत्वमिति भावः । अधिकः संस्कारातिरिक्त-ग्रहणस्य प्रत्यक्षस्य ग्रहणत्वेऽपि अनुभवत्वेऽपि एतत अनुव्यवसायस्वरूपमपरोक्षाकारं साक्षात्कारि । उचम् । **कारणान्तरेति** । स्मृतौ व्यभिचारवारणाय संस्काराधिकेति । संस्काराजन्यत्वमात्रं विवक्षितं तच्चानुमित्यादिसाधारणमत उक्तं कारणान्तरनिरपेक्षणेऽपि
15 मानान्तराजन्यत्वे सतीत्यर्थकमेतत्, जनितत्वात् । जनितज्ञानत्वात् । प्रत्यभिज्ञायान्तु तत्रा स्मृतिरेव हेतुरिति भावः । सन्निकर्षवतेन्द्रियेणेति तु स्वरूपकथनं । यथाश्रुते प्रमाणान्तरानपेक्षणेत्यस्य व्यर्थत्वापत्तेः । यद्वा संस्कारे भिन्नेन्द्रियसन्निकर्षजन्यत्वोचौ आत्मानुमित्यादौ गतमत उक्तं कारणान्तरनिरपेक्षेणेति । शङ्कते—**मनस इति** । प्रमाणा-न्तरनिरपेक्षस्य मनसो बहिरर्थगोचरज्ञानजनकत्वेऽन्धबधिरादेरपि रूपशब्दादिसाक्षात्कारा-
20 त्त्वाभावप्रसङ्गः । ज्ञानावच्छेदकम् । विषयतया ज्ञाने विशेषणम् । ज्ञानोपनीतमिति यावत् । तं प्रति तस्य मानसज्ञाने भानेऽपि नासम्बन्धः वधिराद्यभावरूपो दोषः । तेषां रूपाद्यनुमितिवत्तादृशतद्धानेऽपि न तत्त्वहानिरिति भावः । ज्ञानापेक्षया तद्विषयज्ञाना-पेक्षस्य मनसः बहिरित्यस्ति अयोग्यमस्ति न मनसो बहिरस्वातन्त्र्यमिति ग्रन्थं योजयति । तदिति । तथा च तद्विषयज्ञानानपेक्षत्वमेव स्वातन्त्र्यं तच्च नास्तीत्यर्थः । प्रत्यक्षं प्रत्यक्ष-
25 विषयकमित्यत्र किम्मानम् । उत्तरम् । **प्रत्यक्षमेवेति** । विनापि लिङ्गादिसंस्कारं जायमानं जानामीत्याकारं ज्ञानमेव अत्र सूत्रकारसम्मतिमाह—**यदीति** । ज्ञानविकल्पानां ज्ञान-भेदानामध्यात्ममात्मानं धर्मीकृत्य भावाभावे वेदनात् । घटं साक्षात्करोमि घटं न साक्षा-त्करोमीति वेदनात् । ज्ञानं प्रत्यक्षमिति । प्रकृतं ज्ञानत्वमैन्द्रियकवृत्ति आशुविनाशिवृत्तिगुण-त्वसाक्षाद्व्याप्यजातित्वात्, सुखत्ववत् । आशुविनाशिमात्रवृत्तिजातित्वं स्वोत्पत्तिक्षणा-

वधिकपञ्चमक्षणोत्पत्तिकनाशप्रतियोग्यवृत्तित्वं गुरुत्वधर्मत्ववारणाय वृत्त्यन्तं जीवनयोनियत्न-त्ववारणाय गुणत्वसाक्षाद्व्याप्येत्यपि आहुः ॥ ४ ॥

ननु नेश्वरज्ञानं प्रमा, नित्यत्वेनाफलत्वात्। नापि प्रमाणम्। अकारकत्वात्। अत एव च न तदाश्रयः प्रमातेति। उच्यते—

**मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ॥ 5**
**तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥ ५ ॥**

समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम्। तथा च अनित्यत्वेन विशेषण-मनर्थकम्। नित्यानुभवसिद्धौ तद्व्यवच्छेदस्यानिष्टत्वादसिद्धौ च व्यवच्छेद्याभावात्। नचेदमनुमानम्, आश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात्। न तत्प्रमाकरणमिति त्विष्यत एव, प्रमया सम्बन्धाभावात्। तदाश्रयस्य तु प्रमातृत्वमेतदेव, यत् तत्सम- 10 वायः। कारकत्वे सतीति तु विशेषणं पूर्ववन्निरर्थकमनुसन्धेयम्। यद्येवम् 'आप्त-प्रामाण्यात्' ( न्या०सू० २. १. ६७ ) इति सूत्रविरोधः। तेन हीश्वरस्य प्रामाण्यं प्रति-पाद्यते, न तु प्रमातृत्वमिति चेन्न। निमित्तसमावेशेन व्यवहारसमावेशाविरोधात्। प्रमासमवायो हि प्रमातृव्यवहारनिमित्तं, प्रमया त्वयोगव्यवच्छेदेन सम्बन्धः प्रमाण-व्यवहारनिमित्तं, तदुभयञ्चेश्वरे। अत्रापि कार्ययेति विशेषणं पूर्ववदनर्थकमूहनीयम्। 15

स्यादेतत्—प्रमीयतेऽनेनेति प्रमाणं, प्रमिणोतीति प्रमातेति कारकशब्दत्व-मनयोः, तथा च कथमकारकमर्थ इति चेत्। न। एतस्य व्युत्पत्तिमात्रनिमित्तत्वात्। प्रवृत्तिनिमित्तन्तु यथोपदर्शितमेव व्यवस्थापनात्। अन्यथा अस्मदादिषु न प्रमातृ-व्यवहारः स्यात्, सर्वत्र स्वातन्त्र्याभावात्। करणव्यवहारस्त्वन्यत्र यद्यप्यन्यनिमित्त-कोऽपि, तथापीहोक्तनिमित्तविवक्षयैवेति। एवन्तर्हि पञ्चमप्रमाणाभ्युपगमेऽपसि- 20 द्धान्तः। न हि तत् प्रत्यक्षमनुमानमागमो वा, अनिन्द्रियलिङ्गशब्दकरणत्वात्। न, साक्षात्कारिप्रमावत्तया प्रत्यक्षान्तर्भावाद् इन्द्रियार्थसन्निकर्षोत्पन्नत्वस्य च लौकिक-मात्रविषयत्वात्।

स्यादेतत्—तथापीश्वरज्ञानं न प्रमा, विपर्ययत्वात्। यदा खल्वेतदस्मदादि-विभ्रमानालम्बते, तदैतस्य विषयमस्पृशतो न ज्ञानावगाहनसम्भव इति तदर्थोऽप्या- 25 लम्बनमभ्युपेयम्, तथा च तदपि विपर्ययः, विपरीतार्थालम्बनत्वात्। तदनवगाहने वा अस्मदादेर्विभ्रमानविदुषस्तदुपशमायोपदेशानामसर्वज्ञपूर्वकत्वमिति। न। विभ्रम-स्याप्रामाण्येऽपि तद्विषयस्य तत्त्वमुल्लिखतोऽभ्रान्तत्वात्। अन्यथा भ्रान्तिसमुच्छेद-प्रसङ्गः। प्रमाणाभावात्। तथाप्यारोपितार्थावच्छिन्नज्ञानालम्बनत्वेन कथं न भ्रान्तत्व-मिति चेत्। न यद् यत्र नास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थत्वात् एतदालम्बनस्य 30 चैवमुल्लिखतः सर्वत्र यथार्थत्वात्। न हि न तद्रजतं, नापि तत्रासत्, नापि तन्नाव-गतमिति ॥ ५ ॥

आमोदः

अफलत्वादिति । अफलरूपत्वादित्यर्थः । अकरणत्वादिति । अस्मदादिप्रमां प्रति कारणत्वेऽपि करणत्वाभावादित्यर्थः । अत एवेति । प्रमाया नित्यत्वादेव तदाश्रयस्य तत्राकर्तृत्वादित्यर्थः । तद्वत्ता चेति । प्रमासमवायित्वमेव प्रमातृत्वम् न तु कारकत्वे सति इत्यर्थः । तदयोगेति । प्रमाया
5 अयोगव्यवच्छेदेन सम्बन्धि प्रमाणमीश्वरोऽपीत्यर्थः ।

व्यवस्थितमिति । पराभिमतलक्षणनिराकरणेनेत्यर्थः । तथा चेति । नित्येऽप्यनुभवे लक्षणस्य गतत्वादित्यर्थः । प्रत्युतानित्यपददाने तत्राव्याप्तिः स्यादित्याह--नित्येति । उभयथापि नित्यपदमनर्थकमित्यर्थः । नन्वीश्वरज्ञानं न प्रमा अफलत्वात्, न प्रमाणमकरणत्वादित्यनुमाने को दोष
10 इत्यत आह—न चेति । प्रमाण्यमाह—तदाश्रयस्येति । पूर्ववदिति । अनित्यपदवदित्यर्थः । यद्येवमिति । यदीश्वरो न प्रमाकरणमित्यर्थः । मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति द्वितीयाध्याये सूत्रविरोध इत्यर्थः (न्या. सू. २. १. ६८) कथं विरोध इत्याह—तेन हीति । निमित्तसमावेशमाह—प्रमयेति । ननु कार्यया प्रमया समवायः प्रमातृत्वम्,
15 एवञ्चेऽपीति कथं निमित्तसमावेश इत्यत आह--अत्रापीति । अनित्यपदवदिदमप्यनर्थकमित्यर्थः । ईश्वरव्यावृत्तं निमित्तान्तरं शङ्कते--प्रमीयत इति । एतस्येति । वैयाकरणव्युत्पत्तिमात्रमिदमित्यर्थः । व्यवस्थापनादिति । नित्यप्रमासाधकैः प्रमाणैरित्यर्थः । अन्यथेति । यदि शाब्दिकप्रवृत्तिनिमित्तानुसरणं, तदा 'स्वतन्त्रः कर्त्तेत्यनुशासनात् (पा. सू.) प्रयोज्यस्य कर्तृत्वं
20 न स्यादित्यर्थः ( महाभाष्यम् )। यदि कर्तृत्वं फलानुकूलकृतिमत्त्वं तत्र च कृतिं विना प्रमोत्पत्तौ प्रमातृत्वमस्मदादीनामपि सर्वत्र न स्यादित्यर्थः । अन्यनिमित्तकः । कर्तृव्यापारविषयत्वादिनिमित्तकः । उक्तेति । फलायोगव्यवच्छेदेनेत्यादीत्यर्थः पञ्चमेति । ईश्वर उक्तप्रमाणतिरिक्तमेव प्रमाणमित्यर्थः । उक्तबहिर्भावमाह--न हीति । अन्तर्भावयति--साक्षादिति ।
25 सूत्रविरोधं परिहरति--इन्द्रियेति । अस्मदादिभ्रमविषयकमीश्वरज्ञानमपि भ्रमः स्यादिति आशङ्कते--तथापीति । भ्रमाविद्वतायां दोषमाह--तदनवगाहनइति । तदुपशमायेति । अस्मदादिमोहोपशमायेत्यर्थः । विभ्रमस्येति ।

रजतत्वप्रकारकं शुक्तावस्य ज्ञानमीतीश्वरज्ञानं व्यधिकरप्रकारतानवच्छिन्नं प्रमेवेत्यर्थः। अन्यथेति। भ्रमविषयकस्याप्रामाण्ये भ्रमः सर्वत्राप्रामाणिक एव स्यादित्यर्थः। एवमुल्लिखत इति। यत्र यन्नास्ति तत्र तस्यावतिरस्येति- एवमुल्लिखत इत्यर्थः। अयं तूल्लेखो यथार्थ एवेति भावः। भ्रमे च ज्ञानस्या- याथार्थ्यमाह—न हीति ॥५॥ 5

बोधनी

सम्प्रति प्रकारान्तरेणेश्वरज्ञानप्रामाण्यमाक्षिपति। नन्विति। प्रमायाश्च प्रमाणफलत्वनियमादिति। अस्तु तर्हि प्रमाणमित्यत्राह। नापीति। प्रमाकरणस्य प्रमाणत्वादस्य चातथात्वादिति। अत इति। यतस्तत् ज्ञानं न प्रमा, अतस्तदाश्रय ईश्वरो न प्रमाता प्रमाश्रयस्य प्रमातृत्वादिति सर्वं समाधत्ते। उच्यते। मितिरिति। फलमफलम्वा सम्यगनुभवः प्रमा। प्रमातृत्वं प्रमासमवायित्वमात्रम्, न तु तत्कारकत्वमपि 10 तथापि कथमीश्वरस्य प्रामाण्यम् प्रमाकरणत्वाभावात् तस्येत्यत उक्तम्। तदयोगेति। तस्याः प्रमाया अयोगव्यवच्छेदः, असम्बन्धव्यावृत्तिस्तदविनाभाव इति यावत्। स एव न्यायतन्त्रे प्रमाणशब्दप्रवृत्तिनिमित्तम्। न तु तन्त्रान्तरवत् प्रमितिसाधनत्वं प्रमीयतेऽनेनेति व्युत्पत्तिनिमित्तस्य प्रवृत्तिनिमित्तत्वेनानाश्रयणादिति[1] व्याचष्टे। समीचीन इति।

म त्वनित्य एव समीचीनानुभव इति किमित्यनित्यस्यैव तस्य प्रमात्वं न 15 व्यवस्थाप्यत इत्यत्राह। तथा चेति। किं नित्यमपि किञ्चिदनुभवमभ्युपगम्यानित्यत्वेन विशेषणमनभ्युपगम्य वा न पूर्वाप्रमाणत्वेनानभिमतस्य तस्य व्यवच्छेदायोगात्, व्यवच्छेद- [2]फलत्वाच्च विशेषणस्य, नाप्युत्तरः व्यवच्छेद्यस्यैवाभावादिति।

नन्वीश्वरज्ञानं न प्रमा प्रमाणफलत्वात् मिथ्याज्ञानवदित्यनुमाने को दोष इत्यत्राह। न चेदमिति। तत्तावदाश्रयासिद्धम् ईश्वरज्ञानानभ्युपगमात्, अभ्युपगमे वा धर्मिग्राहक- 20 प्रमाणबाधितमिति, यत्त्वीश्वरज्ञानं न प्रमाणमित्युक्तं तत् सिद्धसाधनमित्याह। न तत्प्रमाणमिति। तच्चोक्तं न तदाश्रयः प्रमातेति तत्राह—तदाश्रयस्येति।

ननु प्रमिणोतीति व्युत्पत्त्या प्रमां प्रति कर्तृकारकत्वे सति प्रमासमवायः प्रमातृत्वम्। न च तदीश्वरस्य संभवति। नित्यत्वाभ्युपगमात्तज्ज्ञानस्येत्यत्राह—कारकत्वे सतीति।

१ क. प्रवृत्तिनिमित्तत्वेनाश्रयणादिति व्याचष्टे। असमीचीन इति। 25
२ क. व्यवच्छेदफलत्वाद्धि°।

कारकस्य प्रमासमवायिनः सिद्धौ तद्व्यवच्छेदस्यानिष्टत्वात्, तदसिद्धौ व्यवच्छेद्यस्यैवाभावादिति। यदीश्वरस्य प्रमातृत्वमभ्युपगम्येत, ततो मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादितीश्वरप्रामाण्यं प्रतिपादयता सूत्रेण विरोध इत्याह—**यद्येवमिति**। न हि प्रमाणस्य प्रमातृत्वमिति[1]। नेति एकस्मिन्नेवेश्वरे प्रमातृत्वप्रमाणत्वव्यवहारनिमित्तयोः
5 समावेशात् उभयव्यवहारो न विरुध्यत इति प्रमाणव्यवहारनिमित्तस्य प्रमायोगव्यवच्छेदस्य कार्यत्वेन विशेषणं पूर्ववदकार्यप्रमासिद्ध्यसिद्धिभ्यां निरर्थकमित्याह—**अत्रापीति**। **स्यादेतदिति** गतार्थम्। **व्यवस्थापनादिति**। प्रमासमवायित्वस्यैव प्रमातृत्वं प्रति व्यापकत्वात् तदेव निमित्तमिति प्रमाकर्तृत्वे प्रमातृत्वनिमित्तेऽनिष्टमाह। **अन्यथेति**। स्वतन्त्रः कर्ता स्वातन्त्र्यं च कारकान्तरप्रयोक्तृत्वम्। न च
10 तदजिज्ञासितविषयज्ञानजनने प्रमातुरस्ति, प्रमाश्रयत्वं तु सर्वत्रास्तीति तदेव निमित्तं प्रमातृत्वस्येति।

ननु सर्वप्रमाणव्यापित्वात् प्रमाकरणत्वमेवास्तु निमित्तं प्रमाणशब्दस्येत्यत्राह— **कारणव्यवहार इति**। अन्यत्र = लोके। इह लोकोत्तर ईश्वरे विवक्षातः कारकप्रवृत्तिरिति भावः। यदीश्वरः प्रमाणं तर्हि पञ्चमं प्रमाणमङ्गीकृतं स्यात्, तथाचाप-
15 सिद्धान्तः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति न्यूनाधिकसंख्याव्यवच्छेदादिति पञ्चत्वमेवान्यत्रानन्तर्भावेनोपपादयति। **न हीति**। नियतविषयत्वादुपमानस्याशङ्कैव नास्तीत्यर्थः। **नेति**। साक्षात्कारिण्याः प्रमाया अयोगव्यवच्छेदेन[2]। [तदन्त]र्भावादिति [कथं दोषः] प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नस्यैव तथात्वादित्यत्राह। **इन्द्रियेति**। सूत्रं लौकिकप्रत्यक्षमात्रविषयमिति।

20 **स्यादेतदिति**। अस्तु साक्षात्कारिप्रमावत्त्वमेव प्रत्यक्षत्वम्, तथापीत्यर्थः। विपर्ययत्वमेवाह। **यदा खल्विति**। तदेतदीश्वरज्ञानमस्मदादीनां विभ्रमज्ञानान्यालम्बमानं विषयनिरूप्यत्वात् ज्ञानानां भ्रमविषयमप्यालम्बेत, तत्र चास्मदादिविभ्रमवदेव विपरीतार्थावगाहनादीश्वरज्ञानमपि भ्रमः स्यादिति।

अथ न तथावगाहेत, ततस्तन्निरूप्यानस्मदादिविभ्रमानपि नालम्बेतेत्याह—
25 **तदनवगाहन इति**। **नेति**। विपरीतावगाहित्वेनास्मदादिविभ्रमस्याप्रामाण्येऽपि न

---

१ क. न हि प्रामाण्यस्य प्रमातृत्वादिति।

२. साक्षात्कारिप्रमया त्वयोगव्यवच्छेदेन सम्बन्धस्य सम्भवेन प्रत्यक्षप्रमाणान्तर्भावान्नोक्तदोष इत्यर्थः। साक्षात्कारित्वं त्वीश्वरप्रमाया धर्मिग्राहकमानसिद्धमित्यर्थः। प्रकाशः पृ० २७

तद्विषयस्येश्वरज्ञानस्याप्रमाण्यं यादृशो विभ्रमः तथैव तमुल्लिखितो यथार्थत्वादिति । यदि तु भ्रान्तिविषयत्वेन ईश्वरज्ञानमपि भ्रान्तिः स्यात्, तदा न कदाचित् भ्रान्तिः नाम स्यादित्याह । **अन्यथेति** । भ्रान्तिविषयस्य भ्रान्तत्वेन तज्ज्ञानाप्रामाण्यात् तमपि विषयीकुर्वतः तस्य प्रामाण्यसम्भवाच्चेति तत्त्वबुभुत्सया पृच्छति । **तथापीति** । भ्रान्तिस्वरूपं तावदाह । **नेति** । ततः किमा [लम्बन]मीश्वरज्ञानस्येत्यत्राह । 5 **एतदिति** । पुरोवर्तिनि शुक्तिकाशकले तदेव रजतं सत्त्वेनावभासते, तेन विभ्रमेणालम्बितमित्येवमाकारेणास्मदादिविभ्रमानुल्लिखितेश्वरज्ञानस्य सद्विषयत्वेनाभ्रान्तत्वमिति याथार्थ्यमेव सर्वत्र दर्शयति । **न हीति** । यदि हि विभ्रमे भासमानं रजतं न स्यात् यदि वा तत्रासन्न स्यात्, यदि वा नावगतं भ्रान्तेन तदा यथार्थं न स्यात् ॥ ५ ॥

### विवेकः

नित्यत्वेन सत्त्वे सति ध्वंसाप्रतियोगित्वेनाफलत्वात् तथा च तद्विशेषणज्ञानजन्यत्व- 10 रूपप्रकारत्वाभावात् न प्रमात्वमिति भावः । अकारणकत्वादिति । यद्यपि अस्मदादिप्रमां प्रति करणत्वमप्यस्ति । तथापि कारणत्वेऽपि नियतव्यापाराभावेनातथात्वं बोध्यम् । अत एव तस्याफलत्वादेव तदाश्रयस्य तदकर्तृत्वादित्यर्थः । सम्यक् परिच्छितिस्तत्त्वात् । तत्प्रकारकोऽनुभवः मितिर्मतिर्व्यवहारविषयः प्रकारित्वञ्च विषयताविशेषो विशेषणज्ञानाजन्येऽप्यक्षतम्, तद्वृत्तासमवायेन प्रमावत्त्वं प्रमातृत्वात् व्यवहारविषयः । नन्वाप्तप्रामाण्या- 15 द्वेदस्यप्रामाण्यमभिहितम् । तच्चेश्वरस्य प्रामाण्य एव सम्भवति । नचेश्वरः स्ववृत्तिप्रमाकरणमित्यत्र आह । तदयोगेति । अधिकरणक्षणध्वंसोत्पत्तिक्षणत्वव्यापकप्रमितिकत्वमेव प्रमितिचरमकारणनित्यप्रमासमवायिसाधारणम् [न प्रमाफलत्वात्] प्रामाण्यं गौतमे मते तत्र सूत्रे गौतमाभिप्रायविषयस्तच्च तत्रास्त्येवेति भावः । अनिष्टत्वात् । धर्मिग्राहकमाने तस्य प्रमात्वेनैव सिद्धेरिति भावः । ईश्वरज्ञानं न प्रमाफलत्वादित्यनुमानं वाधाश्रयासिद्धि 20 [-दोषग्रस्ततया] दूषणान्तरम्—ग्रस्तमित्यर्थः । **प्रमयेति** । स्वनिष्ठप्रमया करणतासंबन्धेनासम्बन्धित्वादित्यर्थः । तदेव इत्येवकारेण कारकत्वव्यवच्छेदः । पूर्ववत्सिद्ध्यसिद्धिभ्यां वाधाश्रयासिद्धिदोषग्रस्ततया— **निमित्तेति** । प्रमातृत्वप्रमाणत्वयोर्येनिमित्ते तयोस्तत्र वृत्तेरित्यर्थः । विशेषणं प्रमायाः । **स्यादेतदिति** । तथा च निमित्तयोर्न कस्यापि तत्र सम्भव इति भावः । अन्यथा प्रमाकर्तृत्वस्य प्रमातृत्वे सर्वत्र 25 स्वनिष्ठप्रमासामान्ये स्वातन्त्र्याभावात् । अन्यत्र इन्द्रियवास्यादन्यनिमित्तकः (इन्द्रिय वास्यादौ अन्यनिमित्तकः) क्रियाकरणकत्वसमुच्चयकः अकरणकत्वात् अतिदेशवाक्यकरण-

कान्यत्वादिति तदर्थः । **साक्षात्कारीति** । ज्ञानस्यान्तर्भावः । साक्षात्कारिणि प्रमाकरणत्वनिबन्धनं तु प्रामाण्यं न चेश्वरस्येति । नाधिक्यमिति भावः । विपर्ययत्वमेव साधयति **यदा तावदिति** । अस्पृशतः विषयीकुर्वतः अर्थो अस्मदादि विपर्ययस्य विषयः । तदपि ईश्वरज्ञानमपि । ननु तल्लौकिकाध्यक्षस्यैव तद्विषयकत्वनियमो
5 नचेश्वरज्ञानस्तथेत्यत आह--**तदनवगाहने इति** । तस्य भ्रान्तत्वानवगाहन इत्यर्थः । तदवगाहने चासद्विषयत्वभानेऽसतोऽपि भानाद् भ्रान्तत्वमवर्जनीयमिति भावः । व्यधिकरणप्रकारकत्वमेवभ्रमत्वमित्यभिप्रेत्याह—**नेति** । **एवमिति** । रजतत्वप्रकारकत्वं पुरोवर्ति विशेष्यकत्वं च भ्रमस्य भ्रान्तिज्ञानविषयस्तत्चास्त्येवेत्याखण्डलार्थः ॥ ५ ॥

**साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ**
10 **भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ॥**
**लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः**
**शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥६॥**

इति चतुर्थः स्तवकः ॥ ४ ॥

### आमोदः

**साक्षात्कारिणीति** । तत् तस्मान्मम **शिवः प्रमाणम्** । कीदृशः शिव इत्याह--**भूतार्थेति** । यथार्थानुभवे **निविष्टः** विषयीभूतो **निखिलः प्रस्तावी**
15 **प्रपञ्चरूपो वस्तूनां क्रमो** यस्य स तथोक्तः । **साक्षात्कारिणीति** अनुभवविशेषणं साक्षात्कारपदस्य धर्मपरतया योज्यम् । नित्यं योगो यस्य । **परद्वारेति** । **परमिन्द्रियशब्दलिङ्गादि**, तदेव द्वारम्, तदनपेक्षा स्थितिर्यस्यानुभवस्येत्यर्थः । **लेशा** स्वल्पा याऽदृष्टिरदर्शनं तन्निमित्ता या दुष्टिर्दोषस्तस्य विगमेन **प्रभ्रष्टः शङ्कातुषो** प्रामाण्यशङ्कालेशो यस्मिन्नित्यर्थः । **शङ्कोन्मेष** एव अप्रामाण्यशङ्का-
20 प्रादुर्भाव एव **कलङ्को** येषां बौद्धादीनानां तैः किम् ? तेषां विमतिरतन्त्रमित्यर्थः । **भूतार्थानुभव** इति बहुव्रीहिणा ईश्वरज्ञानपरं वा विशेषणान्तरमपि तत्परतया योज्यम् ॥६॥

॥ इति चतुर्थः स्तबकः ॥

बोधनी

न चैतत् सर्वमस्ति, तस्मात्सिद्धं साक्षात्कारिप्रयोगव्यवच्छेदनम् ईश्वरप्रमाणमिति परिच्छेदार्थमुप[सं]हरन् कर्मयोगसिद्धकपिलादिभ्य उत्कर्षोपपादनेनाजानसिद्ध सर्वज्ञस्यैव परमेश्वरस्य परिग्राह्यतामाह। **साक्षात्कारिणीति**। साक्षात्कारो नाम ज्ञानावान्तर-जातिः तद्वति ईश्वरस्य प्रत्यक्षत्वायोक्तम्। **नित्ययोगिनीति**। ईश्वरेण नित्य-सम्बन्धित्वं तत्प्रमाणकायोक्तम्। **परद्वारेति**। कारणानपेक्षत्वं नित्ययोगसिध्यर्थमुक्तम्। 5

यद्वा दुष्टकारणजत्वव्यवच्छेदेन वक्ष्यमाणभूतार्थत्वोपयोगित्वेन। अथ वा पूर्वानु-भवानपेक्षत्वेन स्मृतिव्यवच्छेदादनुभवत्वोपयोगित्वेन। यद्वा कारणाधीनसंकोचव्यवच्छेदेन वक्ष्यमाणसर्वविषयत्वायेति। भूतश्चासावर्थश्चेति भूतार्थः। तत्सम्बन्धिविषयत्वेन योऽनुभवः तस्मिन्नेकस्मिन्नेकवस्तुनिविष्टो विषयतया निखिलप्रस्तारिणः सार्वत्रिकस्य वस्तुनः क्रमो निश्शेषविशेषो यस्येश्वरस्य स तथोक्तः। तदेवं नित्यधर्मज्ञानं परमेश्वर 10 एव विश्रान्तमिति दर्शितम्। अत एव लेशस्य विशेषलेशस्य अदृष्टिरज्ञानं तन्निमित्ताया दुष्टेर्दोषस्य भ्रमसंशयादेर्विगमेन प्रभ्रष्टः उत्सन्नो[1] नास्ति शङ्कांशो यस्मिन् स तथोक्तः। तत्तस्मादेवम्भूतः शिवो मे नैयायिकस्येति सिद्धान्तन्यायेन प्रमाणं साक्षात्कारिप्रमावत्तया प्रत्यक्षादिति भावः।

यद्वा तदिति प्रत्यक्षपरामर्शः जन्यकारणदोषविशेषादर्शननिमित्तभ्रान्तादिशङ्का- 15 स्पदत्वेनाप्रमाणैः कपिलादिभिः किमस्माकं सिध्यति। तस्मात् परमेश्वर एवागमा प्रमाणानि नान्य इति।

इति श्रीरामदेवमिश्रसूनोः वरदराजस्य कृतौ
न्यायकुसुमाञ्जलिटीकायां चतुर्थः परिच्छेदः।

विवेकः

स्तवकार्थमुपसंहरन् भगवन्तं स्तौति **साक्षादिति**। तत्तस्मात् मे मम ईश्वरः प्रभुः 20 शिवः प्रमाणम्। कीदृशः स इत्याकाङ्क्षायामाह—भूतेति। भूतार्थानुभवे यथार्थे स्वनिष्ठेऽ-नुभवे निविष्टो विषयतामाप्तो निखिलानां प्रस्ताविवस्तूनां जगतः प्रपञ्चस्य क्रमः स्वाभाविको धर्मो यस्य। कीदृशानुभवे साक्षात्कारिणि साक्षात्कारित्वनिरूपितविषयताशालिनि तथैव धर्मिग्राहकमानेन सिद्धेरिति भावः। ननु तस्येन्द्रियाभावात् कथं साक्षात्कारिविज्ञानसम्भवः इत्यत्राह—नित्ययोगिनि। नित्यत्ववतीत्यर्थः। गृहीतग्राहितालक्षणमप्रामाण्यं निराकरोति। 25

१ क अनुत्पन्नो

**परेति ।** समानाधिकरणसमानविषयताशालिज्ञानत्वेन नियमत्वेन तदजन्य इन्द्रियादिव्यापारानधीन इति केचित् । पुनः शिवः कीदृश इत्याह—**लेशेति ।** लेशाल्पापि या दृष्टिर्विशेषादर्शनम् तन्निमित्तका या दुष्टिःदोषा भ्रमादयस्तेषां विगमस्तदत्यन्ताभावसम्बन्धस्तेन तज्ज्ञानेन प्रभ्रष्टा निरस्ता अप्रामाण्यशङ्कारूपास्तुषा यत्र स तथा । एवम्भूते तत्राप्रामाण्यशङ्कानि-
5 रूपकलङ्कवद्भिः पाखण्डैः किम्मे कर्तव्यमिति । अथ वा अप्रामाण्यशङ्काकलङ्कविपर्ययैर्मन्वादिभिः किं नास्य तैरन्यथासिद्धिरिति भावः । यद्वा निविष्टः कृतिविषयताभाक्षौ निखिलानां प्रस्ताविनां वस्तूनां क्रमो यस्य क्रमवन्ति तानि वस्तूनीति यावत् । कृदभिहित इति न्यायात् । तत्र भगवति शङ्कोन्मेषकलङ्ककारिभिः पाखण्डैः किं कर्तव्यं तत्र कीदृशि साक्षात्कारिणि निखिलगोचरसाक्षात्कारवति नित्ययोगिनि नित्यमणिमाद्यष्टविधैश्वर्यशालिनि
10 परद्वारानपेक्षस्थितौ इतरोपदेशाद्यनपेक्षघटादिविश्वनिर्माणसमर्थे भूतार्थो यथार्थोऽनुभवो यस्य स तथा ॥ ६ ॥

इति न्यायकुसुमाञ्जलिकारिकाविवेकश्चतुर्थस्तवकः ।

## पञ्चमः स्तबकः ।

नन्वीश्वरे प्रमाणोपपत्तौ सत्यां सर्वमतदेवं स्यात्, तदेव तु न पश्याम इति चेत्। न ह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति । तथा हि—

**कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः ।**
**वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ १ ॥**

क्षित्यादि कर्तृपूर्वकं, कार्यत्वादिति ।।१।। 5

आमोद

तत्साधकप्रमाणाभावादिति पञ्चमीं विप्रतिपत्तिमीश्वरे प्रमाणमभिधाय निराकर्तुमुपक्रमते—नन्विति । **सर्वमिति** । पूर्वोक्तान्यथासिद्ध्यादिनिराकरणरूपमित्यर्थः । **स्थाणुरीश्वरो** दारुविशेषः । **अन्धो** युक्तिहीनो नेत्रहीनश्च । **कार्येति** । क्षित्यादिलक्षणात् कार्यात् ईश्वरोऽनुमेय इत्यर्थः । **आयोजनम्** । सर्गाद्यकालीनद्व्यणुकोत्पादकपरमाणुद्वयसंयोगजनकं कर्म । तद्धि 10 परमाणुद्वयं संघट्टयति इत्यर्थः । **धृतिर्ब्रह्माण्डभूगोलकादिधारणम्**, आदिपदात् संहरणं गृह्यते । न हि तदपि ईश्वरादन्यस्मात्संभाव्यते । **पदादिति** । व्यवहारादित्यर्थः । पद्यते हि व्यवहाराङ्गमर्थस्तेन पटादिनिर्माणे नैपुण्यं कुविन्दादीनां वाग्व्यवहारश्चाद्यो नेश्वरं विनेत्यर्थः । **प्रत्ययत इति** । विश्वासादित्यर्थः । न ह्यन्यत्र विश्वासः सम्भवतीत्यर्थं । **श्रुतेरिति** । सर्वज्ञेन 15 प्रणीता वेदा वेदत्वात्; यन्नैवं तन्नैवमिति व्यतिरेकी । **वाक्यादिति** । वेदः पौरुषेयो वाक्यत्वादस्मदादिवाक्यवदित्यन्वयी वा हेतुरभिमतः । **संख्याविशेषादिति** । द्व्यणुकत्र्यणुकपरिमाणजनकद्वित्वत्रित्वादिसंख्याविशेषादित्यर्थः । न हि साऽस्मदाद्यपेक्षाबुद्धिजन्येति भावः । यद्वा, कार्यं तात्पर्यं ततोऽपि ईश्वरसिद्धिः । **आयोजनम्** । सहस्रशाखवेदयोजना । न हि साऽर्वाचीनसाध्येति 20 भावः । धृतिः समस्तवेदधारणं, न तदप्यस्मदाद्यधीनम् । आदिपदात् सहस्रशाखवेदाध्यापनं संगृहीतम् । **पदादिति** । ईश्वरादिपदमीश्वरवाचकं पदं प्रमाणम् । **प्रत्ययत इति** । लिङादिप्रत्ययात् पुमभिप्रायपरादित्यर्थः । **श्रुतेरिति** । श्रुतिरेव विष्णुसंहिता रुद्राध्यायरूपात्र प्रमाणमित्यर्थः । **वाक्यादिति** । यद्वाक्यं यत्संसर्गप्रतिपादकं तत्तज्ज्ञानपूर्वकम् । तच्च वेदार्थगोचर- 25

ज्ञानमीश्वरनिष्ठमेवेत्यर्थः । संख्याविशेषादिति । संख्या समाख्या कठकलापादिरूपा, सा च तत्तद्रूपेण तत्तच्छाखाध्ययनाधीना तत्र चेश्वरादन्यो न क्षमः । तदुक्तं—समाख्यापि च शास्त्राणां नाद्यप्रवचनादृते इति । सर्वविदव्यय इति । नित्यसर्वज्ञ इत्यर्थः ।

5 क्षित्यादीति । जन्यकृत्यजन्यं जन्यमित्यर्थः । न च क्षित्यादीनामप्यदृष्टद्वारकजन्यकृतिजन्यत्वमस्तीति वाच्यम् । अदृष्टजनककृतेन दृष्टेनैवान्यथा सिद्धत्वेनाजनकत्वात् । कर्तृपूर्वकमिति । उपादानगोचरापरोक्षज्ञानविषयीभवदुपादानकमित्यर्थः । कार्यत्वादिति । समवेतत्वादित्यर्थः ॥१॥

बोधनी

अथ पञ्चमीं विप्रतिपत्तिं निरसितुमुपन्यस्यति । नन्विति । यदेतदीश्वरस्य 10 प्रतिपादितं प्रमाणत्वादिति तत्सर्वमसेत्स्यत्, यदि तस्मिन् प्रमाणमुपालप्स्यत तत्तु नोपलभामहे, प्रत्यक्षस्यायोग्यत्वात्, तद्व्याप्तस्य लिङ्गस्याभावात् । आगमस्य तद्प्रणीतस्येतरेतराश्रयप्रसङ्गेन तत्राप्रामाण्यात्, नित्यस्य चासंभवदुपमानस्य नियतविषयत्वेनानाशङ्कनीयत्वाच्चेति सोपालम्भमाह । नैष इति । न खलु सामग्रीविधुरैरनुपलम्भाद्वस्तुनोऽभावः स्यादिति, परमेश्वरसिद्धौ स्वाभिमतानि प्रमाणानि संकलय्याह । कार्येति । संग्रहविवरण-15 मेवासमाप्तेर्द्वेधा वर्तिष्यते, संक्षेपस्तावत् शरीरानपेक्षोत्पत्तिकमूर्वीदूर्वादिकं, कर्तृपूर्वकं, कार्यत्वात्, घटवत् । आयोजनं नामाचेतनक्रियाहेतुभूतं चेतनाधिष्ठानं शरीरकार्ये शरीरानपेक्षकार्योत्पत्तौ परमाण्वादिक्रिया चेतनाधिष्ठानपूर्विका, अचेतनक्रियात्वात्, वास्यादिवदिति धृतिरपतनेन स्थितिः । ब्रह्माण्डादिद्व्यणुकपर्यन्तं जगत् , साक्षात्परम्परया वा आधारकप्रयत्नाधिष्ठितं गुरुत्वे सत्यपतनत्वात् वियति विहङ्गमशरीरवत्, तत्संयुक्तद्रव्यवच्च [धृत्यादेरि-20 त्यादिपदात् विनाशं संगृह्णाति । कृत्स्नं जगत्, [प्रयत्नवद्विनाश्यं, विनाश्यत्वात्, पाट्यमानपटवत् । पदं नाम पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति व्युत्पत्त्या व्यवहारः [सेत्स्यति, पटादिनिर्माणनैपुण्यं पटादिशब्दव्यवहारश्च] स्वतन्त्रपुरुषविश्रान्तः व्यवहारत्वात्, निपुणतरशिल्पिनिर्मितापूर्वशिल्पवत्, देवदत्तादिशब्दव्यवहारवच्च । प्रत्ययतः । प्रत्ययः समाश्वासहेतुप्रामाण्यम् । आगमसम्प्रदायोऽयं[कारणगुणपूर्वकः] प्रमाणत्वात् प्रत्यक्षवत् । श्रुतिर्वेदः 25 अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यात्मा । सर्वज्ञप्रणीतो वेदः, वेदत्वात्, न यदेवं न तदेवं यथा कुमारसम्भवादि । वाक्यात् । वाक्यं [वेदवाक्य-] मात्रात्मकम् । वेदवाक्यानि पौरुषेयाणि, वाक्यत्वात् । सम्प्रतिपन्नवत् । संख्याविशेषात् । संख्या-

विशेषो द्व्यणुकपरिमाणयोरसमवायिकारणं परमाण्वोर्द्व्यणुकेषु च समवेता द्वित्रिसंख्या, अपेक्षाबुद्धिजन्या, अनेकसंख्यात्वात्, सम्प्रतिपन्नवदित्येकः कल्पः। अपरस्तु अत्र कार्य-शब्देन वैदिकानां निन्दाप्रशंसावाक्यानां तात्पर्यविषयभूते प्रवृत्तिनिवृत्ती विवक्षिते। वैदिकानि निन्दाप्रशंसावाक्यानि यथायथं हानोपादानाभिप्रायपूर्वकाणि, अर्थवादात्मकत्वात्, परिणतिसुरसमाम्रफलं परिणतिविरसं पानसफलमिति लोकवाक्यवत्। आयोजनं वेदानां 5 व्याख्यानं [धर्माधर्मानुष्ठानम्] तदर्थानुष्ठानस्य निश्चलत्वं तन्निदानमनुष्ठातॄणां मतिचलनेऽपि तदनुष्ठानमादिशब्दार्थः। यद्वा धृतिर्व्यवस्था व्याख्यानस्य। वेदाः कदाचित् समस्त-तदर्थविद्व्याख्याताः [अनुष्ठातृमतिचलनेऽपि निश्चलार्थानुष्ठानत्वात्] यदेवं विधं तत्समस्त-तदर्थविद्व्याख्यातम्। यथा मन्वादिसंहितापदम्। वैदिकं प्रणवेश्वरेशानादिकं, तत्सार्थकम्, अविगानेन श्रुत्यादिषु प्रयुज्यमानत्वात् घटादिपदवत्! किञ्च वैदिकमस्मत्पदं [स्वातन्त्र्येण] 10 प्रयोक्तृवचनमस्मत्पदत्वात्, लौकिकवत्। प्रत्ययः। वैदिको लिङादिः सः स्वतन्त्रवक्तृ-नियोगाभिधायकः लिङादित्वात् राजशासनवत्। श्रुतिः कृत्स्नो वेदः स हि स्रष्टृत्वे[न पुरुषसूक्तेषु उपास्यत्वेन रूपेणेश्वरं [सर्वत्र] प्रतिपादयन् स्रष्टृत्वादिरूप ईश्वरे प्रमाणम्। तत्प्रतिपादकत्वात्, स्वर्गनरकादिप्रतिपादकवेदवाक्यवत्, वाक्यत्वम्, संसर्गभेदप्रति-पादकत्वम्। वैदिकं पदकदम्बकं, [स्वप्रतिपाद्यसंसर्गभेदप्रतिपादकं, तत्तदनपेक्षसंसर्गज्ञा]न 15 पूर्वकं, वाक्यत्वात्। यद्वाक्यं तत्तदनपेक्षसंसर्गज्ञानपूर्वकं यथालौकिकम्। संख्या। स्याम्, अभूवम्, भविष्यामीतरकृत[पुरुषानभिहिता, सा च [उत्तमपुरुषाभिहिता] स्वतन्त्र-वक्तृगोचरा, उत्तमपुरुषाभिहितत्वात्, लौकिकवत्।

किञ्च काठकं भगवति परमेश्वरे कथं प्रमाणभावः? अत्र विश्वविदव्यय इति पक्षधर्मतासहायकार्यत्वादिहेतुसिद्धमेव सर्वज्ञत्वमागन्तुकज्ञानादिविशेषः। गुणशून्यत्व- 20 [विशेष]द्वारेणास्मदादिभिः कर्मयोगसिद्धकपिलादिभिश्च सिद्धसाधनतां निरसितुं, पक्षधर्मता-बलसिद्धिमुत्तरत्र दर्शयिष्याम इति तत्र कार्यत्वं हेतुं विवृणोति—क्षित्यादिकमिति। [आदिपदेन प-] रानपेक्षोत्पत्तिकस्य दूर्वाङ्कुरादेर्विवक्षितत्वान्न भगवतः सिद्धसाधनता सिद्धिर्बाधो दृष्टान्ताभावश्च प्रादुष्युः॥ १॥

विवेकः

**तत्साधकप्रमाणाभावादिति** पञ्चमीं विप्रतिपत्तिमुपस्थापयति—**नन्विति**। 25 ईश्वरे तत्त्वेन त्वदभिमते प्रमाणसंभवे सर्वमेतत् तत्र बाधकनिराकरणादि तदेव तत्र प्रमाणमेव भानो[स्थाणो]र्भगवत उच्चैः काष्ठस्य नापराधो न दोषः। अर्थयुक्त्या नेत्रेण च हीनः।

स्थाणुं[णुं] यद्यपि प्रमाणं न पश्यामः इति। एनमित्यनुक्तोपालम्भस्तथापि प्रमाणदर्शनवति स्थाणुप्रमाणदर्शनं स्थाणुदर्शनपरमित्यभिप्रायेणेदम्।

ननु उपालम्भमात्रान्न वस्तुसिद्धिरत आह—तथा हीति।

कार्येत्यादि। एभ्यो हेतुभ्यः पक्षेभ्यो वाऽनुमितिकारणीभूतपक्षधर्मताज्ञानविषयत्वस्य पंचम्यर्थत्वात्। तस्य च पक्षसाधारण्यात् विश्वविद् साध्ये ज्ञाप्यः वेदनसमवायिनैवाव्ययस्य प्राप्तत्वेऽपि वेदनविशिष्टेऽव्ययत्वविधानात्, वेदनस्यापि अव्ययत्वलाभायोक्तम्—अव्यय इति। तत्र क्षित्यादिकं पक्षीकृत्य कर्तृजन्यत्वानुमापकपक्षविधया तदुपादानं पक्षयित्वा प्रत्यक्षादिविषयत्वानुमाने हेतुविधया कार्यस्य ज्ञापकत्वमेव आयोजनादावपि यथायथं बोध्यम्। अत्र कार्यादिपदस्य प्रत्येकमर्थद्वैविध्यात् अष्टादशपदपदस्यार्थभेदमादाया-धिका अपि हेतवो बोध्याः। अत्र क्षित्यादिकं क्षितिर्वा कार्यमात्रं वा साक्षात्कारित्व-निरूपकविषयताशालिज्ञानचिकीर्षाकृतिविषयवृत्तित्वे सति प्रागभावप्रतियोगित्वात्। योगि-ज्ञानस्यापि तथात्वोपगमे संस्काराजन्यत्वेन साक्षाददृष्टाजन्यत्वेन वा ज्ञानं विशेष्यम्। निरुक्तोपादानि वा तद्विषयः। कार्यात् तन्तुवदिति प्रयोगः। क्षित्यादिकत्वं च स्वजनकादृष्ट-जनकभिन्नकृतिजन्यभिन्नत्वम्। स्वस्य प्रतियोगिपरत्वेऽजन्यवारणाय जन्यत्वमपि निवेश्यम्। जन्यताविशेषनिवेशात् न कृतिसाक्षात्काराद्यसंग्रहः। क्षितिमात्रस्य पक्षत्वे च पक्षसमे व्यभिचार संशयः। पक्ष इव न दोषाय पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वाच्च कार्यमात्रस्य पक्षत्वेऽपि नांशतः सिद्धसाधनम्। पक्षतावच्छेदकस्य हेतुत्वेऽपि कार्यत्वं साध्यसमानाधिकरणमिति ज्ञानेऽपि कार्यं सकर्तृकमिति बुद्धेरभावात् न सिद्धसाधनम्। सत्त्वविशेषितयोः ध्वंसप्रतियोगित्वप्रागभावप्रतियोगित्वयोरन्यतरस्य पक्षतावच्छेदकत्वेऽन्यत-रस्य वा हेतुत्वे ध्वंसत्वप्रागभावत्वे चाखण्डोपाधी अनुयोगिताविशेषो वा। गन्धानाधार-समयावृत्त्यभावत्वं प्रागभावत्वं कादाचित्कत्वे सति गन्धानाधारसमयवृत्तिध्वंसत्वम् आयोजनम् सर्गाद्यकालीनद्व्यणुकासमवायिकारणजनकं, कर्म प्रयत्नवत्संयोगजं स्पन्दत्वात्। चेष्टावत् तत्समवायी वा तदनुकूलप्रयत्नवत्संयोगी, तादृशप्रयत्नविषय एव वा तादृशक्रियावत्त्वात्, शरीरवदित्यादिब्रह्माण्डपर्यन्तं गुरुद्रव्यापतनं प्रयत्नाधीनं गुरुद्रव्यपतनत्वात्, वियति विहंगमा-पतनवत्। तादृशं वा द्रव्यम् अपातप्रयोजकप्रयत्नविषयः, गुरुत्वे सत्यपतनवत्त्वात्, वियति विहङ्गमवत्। आदिपदात् सन्तरणग्रहणम्, तत्र ब्रह्माण्डादिद्व्यणुकपर्यन्तस्य नाशः। प्रयत्ना-धीनः, नाशत्वात्, पाट्यमानपटनाशवत्। तादृशं वस्तु प्रयत्नाधीननाशप्रतियोगि, विनाशित्वात्। पाट्यमानपटवत्। पदम्, पद्यते प्राप्यते ज्ञायते व्यवहाराङ्गमर्थोऽनेनेति

व्युत्पत्त्या पटादिनिर्माणं । पटादिपदसङ्केततत्वाल्लिपितत्क्रमव्यवहारः सजातीयज्ञानाधीनज्ञानपूर्वकत्वात्, इदानीन्तनस्वयं कल्पितनिर्माणवत् । इदानीन्तनपदसंकेतवत् । इदानीं कल्पितलिपितत्क्रमव्यवहारवच्चेति वा । प्रत्ययः प्रामाण्यं निष्कम्पव्यवहारविषयजातीयं निर्माणकर्मत्वात् संकेतवत्त्वात् तथाविधव्यवहारविषयत्वात् । शिल्पिविशेषनिर्मितापूर्वपदार्थवत् इदानीन्तनसंकेतविषयवत् , । इदानीन्तनकल्पितलिपि- 5
तत्क्रमव्यवहाराच्चेति वा, प्रत्ययः प्रामाण्यं निष्पन्नव्यवहारानुकूलप्रतीतेरेव तदधीनत्वात् । वेदाः वक्तृयथार्थज्ञानपूर्वकाः प्रमाणशब्दत्वात् तादृशलौकिकवाक्यवत् । वेदजन्या वा शाब्दप्रमावक्तृयथार्थधीजन्या, शाब्दप्रमात्वादिति वा । लौकिकवाक्यजप्रमावत् । श्रुतिर्वेदः । तथा च वेदाः सर्वज्ञपूर्वकाः वेदत्वात् , यो न सर्वज्ञपूर्वकः नासौ पूर्वको वेदः । यथा आकाशमिति व्यतिरेकी । यद्वा वेदकर्ता सर्वज्ञः, वेदकर्तृत्वात्, 10
यो न सर्वज्ञः नासौ वेदकर्ता, अहमिव । वाक्यम् वेदरूपम् । वेदः पौरुषेयः, वाक्यत्वात् , तादात्म्येन वाक्यमेव वा हेतुः अस्मदादिवाक्यवत , संख्याविशेषः सर्गाद्यकालीनद्व्यणुकत्र्यणुकपरिमाणासमवायिकारणद्वित्वत्रित्वानि अपेक्षाबुद्धिजानि, एकत्वान्यसंख्यात्वात् , मतवत, तादृशद्व्यणुकत्र्यणुकानि वा अपेक्षाबुद्धिविषयैकत्वन्ति, एकत्वान्यसंख्यावत्त्वात् घटवदिति वा पक्षान्तरे कार्यं, तात्पर्यम् । कृतिवाचकधातोः कृत्यल्युटोऽन्य- 15
त्रापि चेत्यनुशासनात् , कृतिकारणेच्छैव कार्यं तच्च विशेषपरमिति तात्पर्यलाभस्तथा च वेदाः तात्पर्यपूर्वकाः प्रमाणशब्दत्वात् , मतवत् तात्पर्यम् क्वचिदाश्रितम् इच्छात्वात् मतवदित्यनुमानादितरबाधसहकारेण भगवत्सिद्धिः ।

आयोजनम् । वेदानां मिथोयोजना व्याख्येति यावत् । तथा च वेदाः केनचित् व्याख्याताः महाजनपरिगृहीतवाक्यत्वात् , मन्वादिवत् , इत्यनुमानेन सिद्धव्याख्याकर्तृतया 20
तत्सिद्धिः । धृतिः धारणम् यन्मेधेति गीयते । तथा च वेदाः तादृशज्ञानविषयाः महाजनपरिगृहीतवाक्यत्वात् न स्मृतिवदित्यनुमानं लाघवात् तादृशैकज्ञानविषयतां विषयीकरोति तादृशज्ञानाश्रयतया च तत्सिद्धिः । आदिपदात् अध्यापनग्रहणं, वेदाः स्वतन्त्राध्यापनविषयजातीयाः अध्यापनविषयत्वात् मतवदिति अनुमाने तादृशाध्यापनाश्रयतया तत्सिद्धिः । पदम् ईश्वरादिपदम् , तानि पदानि एकार्थप्रतिपादिकानि पर्यायतया 25
तदभियुक्तैरनुशासितत्वात , अक्षादिपदवदित्यनुमानम् , इतरबाधसहकाराद्यमर्थमालम्बते, स एव भगवान् एवं वेदेऽपि अस्मदादिपदं दृश्यते । तस्य च स्वतन्त्रस्योच्चारयितृवाचकतया ततोऽपि तत्सिद्धिः । प्रत्ययो । लिङ्प्रत्ययः, स चाप्तेच्छावाचकः तथा

वैदिका लिङाप्तेच्छावाचिकेति विलिङ्त्वात् मतवदित्यनुमानं भगवन्तमालम्बत इति। श्रुतिर्वेदः स एव भगवति प्रमाणम् वक्ष्यमाणनिखिलवेदानां तत्र तात्पर्यावधारणात्। वाक्यं स्वर्गकामादिवाक्यं वाक्यार्थज्ञानवद्वक्तृकं सतात्पर्यकवाक्यत्वात्, मतवदित्यनुमितवाक्यार्थज्ञानाश्रयतया तत्सिद्धिः।

5 संख्याकठकलापादिशाखाव्यवस्थावत् कर्तृतयापि तत्सिद्धिः ॥ १ ॥

**न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः ॥**
**सिद्ध्यसिद्ध्योर्विरोधो नो नासिद्धिरनिबन्धना ॥ २ ॥**

तथा हि—अत्र ये शरीरप्रसङ्गमुद्घाटयन्ति, कस्तेषामाशयः?। किमीश्वरं पक्षयित्वा कर्तृत्वाच्छरीरित्वं; ततः शरीरव्यावृत्तेरकर्तृकत्वम्। अथ क्षित्यादिकमेव 10 पक्षयित्वा कार्यत्वाच्छरीरिकर्तृकत्वम्। यद्वा शरीराऽजन्यत्वादकार्यत्वम्, तत एव वाऽकर्तृकत्वं परव्याप्तिस्तम्भनार्थं विपरीतव्याप्त्युपदर्शनमात्रं वेति? तत्र प्रथमद्वितीययोराश्रयासिद्धिबाधापसिद्धान्तप्रतिज्ञाविरोधाः। तृतीये तु व्याप्तौ सत्यां नेदमनिष्टम्, असत्यान्तु न प्रसङ्गः। चतुर्थे बाधानैकान्तिको। पञ्चमे त्वसमर्थविशेषणत्वम्। षष्ठेऽपि नागृह्यमाणविशेषया व्याप्त्या बाधः। न चागृह्यमाणविशेषव्याप्त्या 15 गृह्यमाणविशेषायाः सत्प्रतिपक्षत्वम्। अस्ति च कार्यत्वव्याप्तेः पक्षधर्मतापरिग्रहो विशेषः। कर्त्ता शरीरी, विपरीतो न कर्त्तेति चानयोस्तद्विरहः।

ननु यद् बुद्धिमद्धेतुकं तच्छरीरहेतुकमिति नियमे यच्छरीरहेतुकं न भवति तद्बुद्धिमद्धेतुकमपि न भवतीति विपर्ययनियमोऽपि स्यात्, तथा च पक्षधर्मताऽपि लभ्यते इति चेत्। न। गगनादेः सपक्षभागस्यापि सम्भवात् केवलव्यतिरेकित्वानु- 20 पपत्तेः। अन्वये तु विशेषणासामर्थ्यात्। हेतुव्यावृत्तिमात्रमेव हि तत्र कर्तृव्यावृत्तिव्याप्तं, न तु शरीररूपहेतुव्यावृत्तिरित्युक्तम्। व्याप्तश्च पक्षधर्म उपयुज्यते, न त्वन्योऽतिप्रसङ्गात्।

एतेन तद्व्यापकरहितत्वादिति सामान्योपसंहारस्याऽसिद्धत्वं वेदितव्यम्। न हि यद्व्यावृत्तिर्यदभावेऽन्वयव्यतिरेकाभ्यामुपसंहर्त्तुमशक्या, तत् तस्य व्यापकं 25 नामेति। विशेषविरोधस्तु विशेषसिद्धौ सहोपलम्भेन तदसिद्धौ मिथोधर्मिपरिहारानुपलम्भेन निरस्तो नाशङ्कामप्यधिरोहतीति।

स्यादेतत्। अस्ति तावत् कार्यस्यावान्तरविशेषो यतः शरीरिकर्तृकत्वमनुमीयते, तथा च तत्प्रयुक्तामेव व्याप्तिमुपजीवेत् कार्यत्वसामान्यमिति स्यात्। न स्यात्। न हि विशेषोऽस्तीति सामान्यमप्रयोजकम्। तथा सति सौरभकटुत्वनीलि- 30 माऽऽदिविशेषे सति न धूमसामान्यमग्निङ्गमयेत्। किं नाम साधकसामान्ये साध्यसामान्यमाश्रित्य प्रवर्त्तमाने तद्विशेषः साध्यविशेषव्याप्तिमाश्रयेद्, न तु विशेषे

सति सामान्यमकिञ्चित्करम् । तस्यापि विशेषान्तरापेक्षयाऽकिञ्चित्करत्वप्रसङ्गात् । सौरभादिविशेषं विहायाऽपि धूमे वह्निर्दृष्टो, न तु विशेषं विहाय कार्ये कर्त्तेति चेत् । न । कार्यविशेषः कारणविशेषे व्यवतिष्ठते, न तु कार्यकारणसामान्ययोः प्रतिबन्धमन्यथा कुर्यादिति । किं न दृष्टं कार्यं कारणमात्रे अङ्कुरो बीजे तद्विशेषो धान्ये तद्विशेषः शालौ तद्विशेषः कलमे इत्यादि बहुलं लोके । क्व वा दृष्टमणुद्रव्यारभ्यं द्रव्यं नित्यरूपाद्यारब्धं रूपादि । तथापि सामान्यव्याप्तेरविरोधात् सिद्ध्यत्येव । अवश्यञ्चैतदेवमङ्गीकर्त्तव्यम् । अन्यथा कार्यत्वस्याकस्मिकत्वप्रसङ्गात् । 5

स्यादेतत् । अन्वयव्यतिरेकि तावदिदं कार्यत्वमिति परमार्थः । तत्राकाशादेर्विपक्षात् किं कर्तृव्यावृत्तेः कार्यत्वव्यावृत्तिराहोस्वित् कारणमात्रव्यावृत्तेरिति सन्दिह्यते । तदसत् । कर्तुरपि कारणत्वात् । कारणेषु चान्यतमव्यतिरेकस्यापि कार्यानुत्पत्तिं प्रति प्रयोजकत्वादन्यथा कारणत्वव्याघातात् । करणादिविशेषव्यतिरेकसन्देहप्रसङ्गाच्च । कथं हि निश्चीयते किमाकाशात् कारणव्यावृत्त्या कार्यत्वव्यावृत्तिः, उत करणव्यावृत्त्या ? एवं किमुपादानव्यावृत्त्या, किमसमवायिव्यावृत्त्या, किं निमित्तव्यावृत्त्येति । कार्यत्वात् करणमुपादानमसमवायि निमित्तं वा बुद्ध्यादिषु न सिद्ध्येत् । कर्तुः कारणत्वे सिद्धे सर्वमेतदुचितं, तदेव त्वसिद्धमिति चेत् । किं पटादौ कुविन्दादिरकारणमेव कर्त्ता, प्रस्तुते चोदासीन एव साधयितुमुपक्रान्तः ? तस्माद् यत्किञ्चिदेतदपीति । 10 15

ननु कर्त्ता कारणानामधिष्ठाता साक्षाद्वा शरीरवत्, साध्यपरम्परया वा दण्डादिवत् ? । तत्र न पूर्वः, परमाण्वादीनां शरीरत्वप्रसङ्गात् । न द्वितीयः, द्वाराभावात् । न हि कस्यचित् साक्षादधिष्ठेयस्याऽभावे परम्परया अधिष्ठानं सम्भवति । 20

तदयं प्रमाणार्थः--परमाण्वादयो न साक्षाच्चेतनाऽधिष्ठेयाः, शरीरेतरत्वात् । यत्पुनः साक्षादधिष्ठेयं न तदेवं यथास्मच्छरीरमिति । नापि परम्परया अधिष्ठेयाः, स्वव्यापारे शरीरानपेक्षत्वात्, स्वचेष्टायामस्मच्छरीरवत् । व्यतिरेकेण वा दण्डाद्युदाहरणम् । एवं क्षित्यादि न चेतनाधिष्ठितहेतुकं शरीरेतरहेतुकत्वादित्यतिपीडया सत्प्रतिपक्षत्वम् । 25

अपि च पटादौ कुविन्दादेः किं कारकाधिष्ठानाऽर्थमपेक्षा, तेषामचेतनानां स्वतोऽप्रवृत्तेः आहो कारकत्वेन ? न पूर्वः । तेषां परमेश्वरेणैवाधिष्ठानात् । न ह्यस्य ज्ञानमिच्छा प्रयत्नो वा वेमादीन् न व्याप्नोतीति सम्भवति । न चाधिष्ठितानामधिष्ठात्रन्तरापेक्षा तदर्थमेव । तथा सत्यनवस्थानादेवाऽविशेषात् । न द्वितीयः । अधिष्ठातृत्वस्यानङ्गत्वप्रसङ्गे दृष्टान्तस्य साध्यविकलत्वापत्तेः । न च हेतुत्वेनैव तस्यापेक्षाऽस्त्विति वाच्यम् । एवन्तर्हि यत्कार्यं तत्सहेतुकमिति व्याप्तिः, न तु सकर्तृकमिति । तथा च तथैव प्रयोगे सिद्धसाधनात् । 30

किञ्चानित्यप्रयत्नपूर्वकत्वप्रयुक्तां व्याप्तिमुपजीवत् कार्यत्वं न बुद्धिमत्पूर्वकत्वेन स्वभावप्रतिबद्धम् । न ह्यनित्यप्रयत्नोऽपि बुद्ध्या शरीरवत् कारणत्वेनाऽपेक्ष्यते, येन तन्निवृत्तावप्यकार्यबुद्धिर्न निवर्त्तते इति । 35

तदेतत् प्रागेव निरस्तप्रायं नोत्तरान्तरमपेक्षते। तथा हि—साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसङ्ग इति किमिदं शरीरत्वं, यत् प्रसज्यते? यदि साक्षात्प्रयत्नवदधिष्ठेयत्वं तदिष्यत एव। न च ततोऽन्यत् प्रसञ्जकमपि। अथेन्द्रियाश्रयत्वम्? तन्न। तदवच्छिन्नप्रयत्नोत्पत्तौ तदवच्छिन्नज्ञानजननद्वारेणेन्द्रियाणामुपयोगात्। अनवच्छिन्ने प्रयत्ने नायं विधिः। नित्यत्वात्। अत एव नाऽर्थाश्रयत्वम्। न हि नित्यज्ञानं भोगरूपमभोगरूपं वा यत्नमपेक्षते तस्य कारणविशेषत्वात्। न च नित्यसर्वज्ञस्य भोगसम्भावनाऽपि। विशेषादर्शनाभावे मिथ्याज्ञानानवकाशे दोषानुत्पत्तौ धर्माधर्मयोरसत्त्वात्।

तस्मात् साक्षात्प्रयत्नानधिष्ठेयत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति द्वयं साध्याविशिष्टम्। अनिन्द्रियाश्रयत्वादभोगायतनत्वात् स्वव्यापारे तदनपेक्षत्वाच्चेति त्रयमप्यन्यथासिद्धम्। अभोगायतनत्वादनिन्द्रियाश्रयोऽपि, भोक्तृकर्मानुपग्रहादभोगायतनमपि, स्पर्शवद्वेगवद्द्रव्यानुद्यत्वात्तदनपेक्षमपि स्यात्। अचेतनत्वाच्चेतनाधिष्ठितमपि स्यादिति को विरोधः।

तथा च साक्षात्प्रयत्नाऽधिष्ठितेतरजन्यत्वादिति साध्यसमः। इन्द्रियाश्रयेतरजन्यत्वाद् भोगायतनेतरजन्यत्वादिति द्वयमप्यन्यथासिद्धम्। कार्यज्ञानाद्यनपेक्षत्वाच्छरीरेतरजन्यमपि स्यात्। अचेतनहेतुकत्वाच्चेतनाधिष्ठितमपीति को विरोधः।

अप्रसिद्धविशेषणश्च पक्षः। न हि चेतनानधिष्ठितहेतुकत्वं क्वचित् प्रमाणसिद्धम्। न च चेतनाधिष्ठितहेतुकत्वनिषेधः साध्यः, हेतोरसाधारण्यप्रसङ्गात्। गगनादेरपि सपक्षाद्व्यावृत्तेः।

यत् पुनरुक्तं—कुविन्दादेः पटादौ कथमपेक्षेति। तत्र कारकतयेति कः सन्देहः। किन्तु कारकत्वमेव तस्य ज्ञानचिकीर्षाप्रयत्नवतो न स्वरूपतः। तदेव चाऽधिष्ठातृत्वम्।

यत्त्वधिष्ठिते किमधिष्ठानेनेति। तत् किं कुविन्द उद्धार्यते, ईश्वरो वा, अनवस्था वाऽऽपाद्यते। न प्रथमः। अन्वयव्यतिरेकसिद्धत्वात्। न द्वितीयः परमाण्वदृष्टाद्यधिष्ठातृत्वसिद्धौ ज्ञानाऽऽदीनां सर्वविषयत्वे वेमाद्यधिष्ठानस्यापि न्यायप्राप्तत्वात्। न तु तदधिष्ठानार्थमेवेश्वरसिद्धिः।

न तृतीयः। तस्मिन् प्रमाणाभावात्। तथाप्येकाऽधिष्ठितमपरः किमर्थमधितिष्ठतीति प्रश्ने किमुत्तरमिति चेत्। हेतुप्रश्नोऽयं, प्रयोजनप्रश्नो वा? नाद्यः। ईश्वराधिष्ठानस्य नित्यत्वात्। कुविन्दाद्यधिष्ठानस्य स्वहेत्वधीनत्वात्। न द्वितीयः। कार्यनिष्पादनेन भोगसिद्धेः स्पष्टत्वात्।

एकाधिष्ठानेनैव कार्यं स्यादिति चेत्। स्यादेव। तथापि न सम्भेदेऽन्यतरवैयर्थ्यम्। परिमाणं प्रति सङ्ख्यापरिमाणप्रचयवत् प्रत्येकं सामर्थ्योपलब्धौ सम्भूयकारित्वोपपत्तेः।

अस्ति तत्र वैजात्यमिति चेत्। इहापि किञ्चिद्भविष्यतीति। न चाकुर्वतः

कुलालादेः कायसङ्क्षोभादिसाध्यो भोगः सिद्ध्येदिति तदर्थमस्य कर्तृत्वमीश्वरोऽनुमन्यते, तदर्थमात्रत्वादैश्वर्यस्येति ।

यत्त्वनित्यप्रयत्नेत्यादि । भवेदप्येवं यद्यनित्यप्रयत्ननिवृत्तावेव बुद्धिरपि निवर्त्तेत, न त्वेतदस्ति, उदासीनस्य प्रयत्नाभावेऽपि बुद्धिसद्भावात् । हेतुभूता बुद्धिर्निवर्त्तते इति चेन्न । उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात् । कारकविषया बुद्धिर्निवर्त्तते इति चेन्न । उदासीनबुद्धेरपि संस्कारं प्रति हेतुत्वात् । कारकविषया बुद्धिर्निवर्तते इति चेन्न । उदासीनस्यापि कारकबोद्धृत्वात् । न हि घटादिकमकुर्वन्तश्चक्रादिकं नेक्षामहे । हेतुभूता कारकबुद्धिर्निवर्त्तते इति चेन्न । अयतमानस्यापि दुःखहेतुभूताया अपि तद्धेतुकण्टकस्पर्शबुद्धेरभावात् । चिकीर्षाहेतुभूतोऽनुभवो निवर्त्तते इति चेन्न । केनचिन्निमित्तेनाऽकुर्वतोऽपि चिकीर्षातद्धेतुबुद्धिसम्भवात् । अनपेक्षकृतिहेतुचिकीर्षाकारणं बुद्धिर्निवर्त्तते इति चेद्, न तर्हि बुद्धिमात्रम् । तथा चानित्यप्रयत्नहेतुकत्वप्रयुक्तं विशिष्टप्रयत्नचिकीर्षाहेतुबुद्धिमत्पूर्वकत्वमिति तन्निवृत्तौ तदेव निवर्त्ततां, न तु बुद्धिमत्पूर्वकत्वमात्रम्, तत्र तस्याप्रयोजकत्वादिति बुद्धिमत्पूर्वकत्वसाध्यपक्षे परीहारः । सकर्त्तृकमिति प्रयत्नप्रधानपक्षे शङ्कैव नास्ति, तस्यैव तत्रानुपाधित्वात् ।

एतेन शरीरसम्बन्धे बुद्धिगतकार्यत्ववद् बुद्धिसम्बन्धे प्रयत्नगतकार्यत्वमुपाधिरिति निरस्तम् । यो हि बुद्ध्या शरीरवच्छरीरनिवृत्त्या बुद्धिनिवृत्तिवद्वा प्रयत्नेन बुद्धिं बुद्धिनिवृत्त्या प्रयत्ननिवृत्तिं साधयेत्, स एवं कदाचिदुपालभ्यः । वयं त्ववगतहेतुभावं कलितसकलशक्तिकारकप्रयोक्तारं कार्यादेवानुमिमाना नैवमास्कन्दनीयाः, तत्र तस्यानुपाधित्वात् । न च प्रयत्न आत्मलाभार्थमेव मतिमपेक्षते । विषयलाभाऽर्थमप्यपेक्षणात् । ततः प्रयत्नाद् बुद्धिः, तन्निवृत्तेश्च प्रयत्ननिवृत्तिः सिद्ध्यत्येवेति विस्तृतमन्यत्र । कार्यबुद्धिनिवृत्त्या तु कार्य एव प्रयत्नो निवर्त्तते, न नित्यः । नित्ये च प्रयत्ने नित्यैव बुद्धिः प्रवर्त्तते, नानित्या । न हि तया तस्य विषयलाभसम्भवः । शरीरादेः प्राक् तदसम्भवे देहानुपपत्तौ सर्वानुपपत्तेः । शरीराजन्यत्ववच्चानित्यप्रयत्नाजन्यत्वमिति संक्षेपः ॥२॥

## आमोदः

अत्र कण्टकोद्धारप्रकारमाह—न बाध इति । ईश्वरो न कर्त्ता अशरीरत्वादिति व्यापकानुपलब्धिबाधस्तावन्न भवति अस्य कार्यत्वस्य हेतोरीश्वररूपधर्मिसिद्ध्यर्थमुपजीव्यत्वात् । न च क्षित्यादि न सकर्तृकं शरीराजन्यत्वादित्यादि वा प्रतिरोधोऽपि अस्य व्यर्थविशेषणतया दुर्बलत्वात् । व्याप्त्या शरीरी कर्ता विषयीक्रियते इति विरोधोऽपि ईश्वरसिद्धौ सिद्धत्वादेव असिद्धौ तु विरोधनिरूपकाभावादेव नास्ति । व्याप्यत्वासिद्धेर्निबन्धनं विपक्षबाधकाभाव उपाधिशङ्का च, तदुभयाभावात् सापि नास्ति । आश्रया-

सिद्धेस्तु निबन्धनमाश्रयाभावः, सन्देहसिषाधयिषयोश्चाभावः । सोऽपि नास्तीति भावः ।

**शरीरप्रसङ्गमिति** । ईश्वरो यदि कर्ता स्यात् शरीरी स्यादित्यतिप्रसङ्गमित्यर्थः । **अत एवेति** । शरीराजन्यत्वादेवेत्यर्थः । यद् यत् कार्यं
5 तत्तत् सकर्तृकमिति **परव्याप्तिः** । यच्छरीराजन्यं तन्न सकर्तृकमिति तद्विपरीतव्याप्तिः, स्तम्भनं फलाजनकत्वम् । ईश्वरपक्षकयोरनुमानयोरीश्वरासिद्धया वाश्रयासिद्धिः, तत्सिद्धौ धर्मिग्राहकमानबाधः, ईश्वरस्य शरीरित्वसाधनेऽपसिद्धान्त ईश्वरस्यापि कर्तृपदार्थत्वात् प्रतिज्ञाविरोधश्चेत्याह—**प्रथमेति** । **तृतीय इति** । क्षित्यादिकं शरीरकर्तृकं कार्यत्वा-
10 दित्यत्रेत्यर्थः । व्याप्तिरेव तादृशी नास्तीत्यर्थः । **चतुर्थ इति** । क्षित्यादिकमकार्यं शरीराजन्यत्वात् इति बाधितमङ्कुरादावनैकान्तिकमेवमभ्युपगन्तुरपसिद्धान्तश्चेत्यर्थः । **पञ्चम इति** । क्षित्यादिकं न सकर्तृकं शरीराजन्यत्वात् । अत्राजन्यत्वमात्रं व्याप्यं शरीरन्तु विशेषणं व्यर्थमित्यर्थः । **षष्ठ इति** । परव्याप्तिस्तभ्भनं बाधनं वा प्रतिरोधो वा । आद्ये च बलवत्ताभावः ।
15 अन्त्ये पक्षधर्मताऽनुपग्रहेण हीनबलत्वमित्यर्थः । एतदेवाह—**कर्तेति** । क्षित्यादिकं न बुद्धिमद्धेतुकं शरीराहेतुकत्वादिति व्यतिरेकिणि पक्षधर्मतासम्पत्तिरस्त्येवेत्याशङ्कते—**नन्विति** । नेदमनुमानं केवलव्यतिरेकि गगनादावन्वयदर्शनादित्याह—**गगनेति** । नन्विदमन्वयव्यतिरेकि स्यात्, को दोष इत्यत आह **अन्वये वेति** । विशेषणासामर्थ्यं स्फुटयति—**हेतुर्व्यावृत्तीति**
20 ननु विशेषणासामर्थ्येन किमायातमत आह—**व्याप्त इति** । विशेषणान्तर्भावेन व्याप्तिरेव नास्तीति भावः । **नत्वन्य इति** । व्याप्तिरहित इत्यर्थः । ननु क्षित्यादिकं न सकर्तृकं कर्तृव्यापकरहितत्वादिति सामान्योपसंहारेण व्यापकानुपलब्धिर्बाधः सत्प्रतिपक्षो वास्तु इत्यत आह—**एतेनेति** । शरीरादीनां व्यापकत्वमभिप्रेत्य यदि व्यापकानुपलब्धिरुच्यते, तदा विशेषणा-
25 सामर्थ्यं व्यापकान्तरं चानिर्णीतमिति तद्रहितत्वं सन्दिग्धासिद्धमित्यर्थः । एतदेवाह—**नहीति** । यस्य व्यापकस्य व्यावृत्तिर्यदभावे सकर्तृत्वाभावे सामान्यस्यानिर्णयात् स्वरूपासिद्धेर्विशेष्यशरीराजन्यत्वादौ प्रयुक्ते व्यर्थविशेषणत्वान्नोपसंहारः सम्भवतीत्यर्थः । यद्यपि पक्षधर्मतासम्पादकमेव

शरीरं विशेषणमस्तु क्षित्यादावजन्यत्वाभावात्, तथापि हेतौ विशेषणं यदुपादीयते तद्व्यभिचारवारकमेव। अत एव गन्धादिषु मध्ये गन्धस्यैव व्यञ्जकत्वादित्यत्राप्येवकारान्तर्भावेणैव गन्धादिषु मध्य इत्यस्यापि विशेषणत्वम्। अन्यथा गन्धमात्रव्यञ्जकत्वं विशेष्यमेव नास्ति यस्येदं विशेषणं स्यात्। अत एव येन विशेषणेनेत्यभिधानमतीव तुच्छमेव लक्षणन्तु अयोगान्ययोग- 5 व्यवच्छिन्नमेव व्यवहारमितरभेदं वा साधयति। तेनायोगव्यवच्छेदार्थमयोगव्याप्तिवारकमपि विशेषणमुचितम्। यथा शब्देतरोद्भूतविशेषगुणनाश्रयत्वे सति ज्ञानकरणमनःसंयोगाश्रयत्वमिन्द्रियत्वमित्यत्र शब्देतरेति विशेषणम्। सिद्ध्यसिद्ध्योरिति कारिकाप्रतीकं व्याचष्टे विशेषेति। अवान्तरेति। घटत्वपटत्वादिरेवेत्यर्थः। उपजीवेदिति। कार्यत्वमपि तत्र सकर्तृकत्वं साधये- 10 दित्यर्थः। नहीति। कार्यत्वसकर्तृकत्वयोर्बाधकं नास्ति, विशेषस्योपाधित्वमेव यदि बाधकं तदा धूमाद्यनुमानं न स्यादित्यर्थः। ननु सुरभिधूमत्वादिकमपि लिङ्गमनुमापकमेव, तथा च कुतोऽत्र व्यर्थविशेषणत्वमत आह—किन्नामेति। वह्निमात्रं यत्रानुमेयं तत्र सुरभिधूमत्वं व्यर्थविशेषणत्वादलिङ्गमेव, चन्दनप्रभववह्निविशेषानुमितौ तु तल्लिङ्गमेवेत्यर्थः। तदेवाह— 15 तद्विशेष इति। ननु विशेषयोरेव व्याप्तौ किं सामान्यव्याप्त्या इत्यत आह—नन्विति। विशेषान्तरेति। तथा च तदेव विशेषान्तरं तत्रोपाधिः स्यादिति अपर्यवसानमित्यर्थः। ननु यत्र यं विशेषमपहाय सामान्यं दृष्टं तत्र स विशेषो न तन्त्रम्। प्रकृते शरीरजन्यत्वं विशेषमपहाय कर्तृसामान्यं न दृष्टमिति स विशेषस्तत्र तन्त्रमेवेत्याह सौरभेति। कार्यविशेष इति। घटत्वादिकं 20 कुलालादिजन्यत्वे व्यवतिष्ठतां कार्यत्वसामान्यं कर्तृसामान्यमनुमापयत् नाभासमित्यर्थः। विशेषव्याप्तेः सामान्यव्याप्त्यपवादकत्वं दृष्टान्तेन दर्शयति—किन्नेति। कारणमात्र इति। लिङ्गमित्यध्याहारः। एवमुत्तरत्रापि। तद्विशेषो धान्याङ्कुरः, तद्विशेषः शाल्यङ्कुरः, तद्विशेषः कलमाङ्कुरः। नन्वशरीरः कर्ता चेति दुर्घटं, कुत्राप्यदर्शनादत आह—क्व वेति। 25 अणुश्च द्रव्यसमवायिकारणञ्च नित्यञ्च रूपं रूपासमवायिकारणञ्चेति यथान्यत्रादृष्टमपि पक्षधर्मताबललभ्यं तथा प्रकृतेऽपीत्यर्थः। सिध्यत्येवेति। अणुद्रव्यं नित्यञ्च रूपमित्यनुषङ्गः। अनङ्गीकारे दण्डमाह—अन्यथेति। कार्यत्वावच्छिन्नं यदि कारणजन्यं न स्यादित्यर्थः सकर्तृकत्वे साध्ये कार्यत्व-

मन्यथा सिद्धमिति शङ्कते—स्यादेतदिति । यद्व्यावृत्त्या यस्य व्यावृत्तिस्तदेव तस्य व्यापकमिति भावः । **करणादीति** । एवं सन्देहे करणाद्यपि कार्य-व्यापकं न स्यादिति कार्यत्वात् सकरणत्वादिकमपि नानुमीयेतेत्यर्थः । **सर्वमिदमिति** । कर्तृव्यावृत्त्या कार्यव्यावृत्त्यादिकमित्यर्थः । कर्ता न कारणं
5 किन्तु कृतिः कारणमिति भावः । **तत्किमिति** । कुलालेन कृतोऽयं घटः, कुविन्देन कृतोऽयं पट इति लौकिकपरीक्षकप्रतीतिबलात् कर्तुरपि कारणत्वादित्यर्थः । **प्रस्तुत इति** । क्षित्यादि सकर्तृकं कार्यत्वादित्यनुमाना-दुदासीन एव कर्ता किन्न सिध्यतीति वाभिमतमित्यर्थः । **एतदिति** । कर्तुरकरणत्वाभिधानमित्यर्थः । **शरीवदिति** । तद् यथा साक्षादधितिष्ठ-
10 तीत्यर्थः । **दण्डादिवदिति** । यथादण्डादि शरीरद्वाराधितिष्ठतीत्यर्थः । **परमाण्वा-दीनामिति** । साक्षादधिष्ठेयस्यैव शरीरत्वादित्यर्थः । **द्वाराभावादिति** । तत्र शरीरस्य द्वारस्य त्वयाऽनभ्युपगमादित्यर्थः । **साक्षादधिष्ठेयस्येति** । शरीरस्येत्यर्थः । **शरीरेतरत्वादिति** । शरीरतदवयवेतरत्वे सति रूपवत्त्वा-दित्यर्थः तथा च मनसि प्राणवायौ शरीरावयवे च न व्यभिचारः ।
15 साक्षादधिष्ठेयत्वं च शरीरक्रियामद्वारीकृत्याधिष्ठेयत्वम् । शरीरक्रियान-पेक्षव्यापारानाश्रयत्वं नैयायिकमतेऽन्वयाभावाद्व्यतिरेकमाह—**यदिति** । **न तदेवमिति** । न तच्छरीरतदवयवेतरदित्यर्थः । **नापि परम्पराधिष्ठेया इति** । शरीरद्वारापि नाधिष्ठेया इत्यर्थः । **स्वव्यापार इति** । द्व्यणुका-रम्भकसंयोगजनकक्रियायाम् । न हि तत्र शरीरं द्वारं त्वयेष्यते इत्यर्थः ।
20 **व्यतिरेकेणेति** । यत् परम्पराधिष्ठेयं तत् स्वव्यापारे शरीरापेक्षं यथा दण्डादिः । कारणपक्षकमुक्त्वा कार्यपक्षकमाह—**एवमिति** । **शरीरेतरहेतु-कत्वादि** । शरीराहेतुकत्वादित्यर्थः अन्यथा घटादौ व्यभिचारः स्यात् । **अतिपीडयेति** । यथाश्रुतहेतौ व्यभिचारस्य शरीराहेतुकत्वादिति हेतौ विशेषणवैयर्थ्यस्य स्फुटत्वात् यद्यपि न सत्प्रतिपक्षता तथापि परमाण्वा-
25 दीनां साक्षादधिष्ठेयत्वपरम्पराधिष्ठेयत्वनिरासादयं सत्प्रतिपक्षो निर्वहे-दित्यतिपीडार्थः । सिद्धसाधनमभिधातुमुपक्रमते—**अपि चेति** । कुविन्दा-दीनामधिष्ठातृत्वेन कारणत्वमात्रेण वाऽपेक्षेति विकल्पार्थः । नन्वीश्वरः पटादिकारणं कथमधितिष्ठेदित्यत आह—**न हीति** । **न व्याप्नोतीति** । न विषयीकरोतीत्यर्थः । नन्वीश्वराधिष्ठितमपि कुविन्दोऽधितिष्ठेदित्यत

**आह—नेति।** **अविशेषादिति।** अधिष्ठिताधिष्ठानं प्रत्यविशेषात् चेतनानन्त्यमेकस्मिन्नपि कार्ये स्यादित्यर्थः। **अनङ्गत्वेति।** अधिष्ठातृपूर्वकत्वं क्षित्यादौ साध्यते। तच्च पटादौ नास्ति, तत्र तेषां कारणत्वेनैवापेक्षणादिति साध्यवैकल्यादित्यर्थः। ननु कुविन्दादयोऽपि हेतुत्वेनैव पटादिभिरपेक्ष्यतां, तथापि चेतनपूर्वकत्वं तत्र पर्यवस्यतीत्याह—**न चेति।** 5
इदानीमुपक्रान्तं सिद्धसाधनं स्फुटयति—**एवं तर्हीति।** क्षित्यादिकं बुद्धिमत्पूर्वकं कार्यत्वादित्यत्रानित्यप्रयत्नपूर्वकत्वमुपाधिमाह—**किञ्चेति।** ननु नित्यप्रयत्नपूर्वकत्वं बुद्धिमत्पूर्वकत्वे साध्ये तदोपाधिः स्यात्, यदि स्वव्यतिरेकेण साध्यव्यतिरेकं साधयेत्। अनित्यप्रयत्नस्य च बुद्धि प्रत्यकारणत्वेन तन्निवृत्तौ कथं बुद्धिर्निवर्तताम्? भवतु कारणत्वं, तथापि 10
तन्निवृत्तौ कार्या बुद्धिर्निवर्ततां न त्वकार्येत्यत आह—**न हीति।** अनित्यप्रयत्नो बुद्धेः करणत्वे न व्यापकः किन्तु स्वभावसम्बन्धादेव रूपरसादिवत्, तथा च व्यापकनिवृत्तौ बुद्धिमत्पूर्वकत्वमपि निर्वर्तिष्यत एव; सा च बुद्धिः कार्याऽकार्या वा स्यादित्यर्थः। शरीरनिवृत्तावपि अकार्या बुद्धिर्न निवर्तेत इति त्वया यथोच्यते तथाऽत्र वक्तुमशक्यम्। अनित्यप्रयत्नस्य बुद्ध्या 15
स्वभावप्रतिबन्धादित्यर्थः। **प्रागेवेति।** ये **शरीरप्रसङ्गमुद्घाटयन्तीत्यादिना।** **किमिदमिति।** परमाणवो यदि साक्षात् प्रयत्नाधिष्ठेयाः स्युरितीश्वरवादिभिरभ्युपगम्यत एव। न चापाद्यापादकयोरत्र भेद इत्यर्थः। ननु तद्भिन्नमेव प्रसञ्जकं वक्तव्यम्, तथा च नापाद्यापादकयोरभेद इत्यत
आह—**न चेति।** नन्विन्द्रियाश्रयत्वमेव परमाणूनां साक्षात् प्रयत्नाधिष्ठेयत्वेनापाद्यं, तथा च नाभेद इत्यत आह—**अथेति।** अत्रान्यथासिद्धिमाह—**तदवच्छिन्नेति।** यदवच्छेदे न प्रयत्न उत्पद्यते तदवच्छेदेन ज्ञानजनने भवेदिन्द्रियाणामुपयोगः। प्रकृते परमाण्ववच्छिन्ने स्वात्मनि प्रयत्न एव नोत्पाद्य इति कथमिन्द्रियाश्रयत्वं स्यादित्यर्थः। **विधिरिति।** इन्द्रियोपयोग इत्यर्थः। 20
**अत एवेति।** अथाश्रयत्वलक्षणमपि शरीरं परमाणूनामापाद्यमित्यर्थः। 25
अर्थाश्रयत्वं हि भोगायतनत्वं वाच्यं, तच्चेश्वरे भोगाभावान्नास्तीत्याह—**न हीति।** **तस्येति** आयतनस्येत्यर्थः। **न चेति।** यद्यप्यापाद्यबाधोऽनुगुण एव, तथापि परमाणौ भोगायतनत्वमापाद्यं तत्र वा दृष्टवत् साक्षात्प्रयत्नाधिष्ठेयत्वमुपाधिरिति भावः। भोगसम्भावनां निरस्यति—**विशेषेति।**

तर्कं दूषयित्वा तदुपष्टम्भनं तत् प्रमाणमुक्तं तद् दूषयति--साक्षादिति। साक्षात्प्रयत्नाधिष्ठेयत्वमेव हि शरीरेतरत्वेन हेतुना विवक्षितम्। तच्च साध्यमेव। एवं परमाणवो न साक्षात्प्रयत्नाधिष्ठेया इति साध्ये स्वव्यापारे साक्षात्प्रयत्नानधिष्ठेयत्वमेव हेतुत्वेन विवक्षितं, तदपि साध्या-
5 विशिष्टमेवेत्यर्थः। यदि चेन्द्रियाश्रयत्वं भोगायतनत्वं वा शरीरत्वं विवक्षितं तदा **शरीरेतरत्वादित्यस्य** हेतोरतीन्द्रियाश्रयत्वादभोगायतनत्वादित्यर्थः सम्पद्यते। तदा नैतदुभयं साक्षात् प्रयत्नानधिष्ठेयत्वं साधयितुमर्हति, अन्यथासिद्धत्वात्। **स्वव्यापारे** तदनपेक्षत्वादित्यस्यापि द्वितीयहेतोः स्वपारे इन्द्रियाश्रयानपेक्षत्वात् भोगायतनानपेक्षत्वादित्यदित्यर्थः सम्पद्यते।
10 न चानेनापि परम्परानधिष्ठेयत्वं साधयितुं शक्यतेऽन्यथासिद्धत्वादित्यर्थः। त्रयाणामन्यथासिद्धिं क्रमेणाह--**अभोगेति**। ईश्वरे भोगाभावात् परमाण्वादिर्भोगानवच्छेदकः स्यात्, अतीन्द्रियाश्रयः स्यात्, साक्षात्प्रयत्नानधिष्ठेयोऽपि स्यात्, न विरोध इत्यर्थः। **स्पर्शवदिति**। स्पर्शवद्वेगवद्द्रव्यन्तराप्रेर्यत्वादेव शरीरानपेक्षक्रियः स्यादित्यर्थः। क्षित्यादि चेतनाधिष्ठितहेतुकं
15 शरीरेतरहेतुकत्वात् इत्यतिपीडया सत्प्रतिपक्षत्वमुक्तम्। तदपि शरीरपदार्थविकल्पद्वारकं साध्याविशिष्टमन्यथासिद्धश्च। तत् क्रमेणाह **तथा चेति**। अन्यथासिद्धिमाह **कार्येति**। अचेतनहेतुकं चेतनाधिष्ठितहेतुकं भवत्येवेति व्याप्तिः। शरीरेतरजन्यत्वं च कार्यज्ञानानपेक्षत्वप्रयुक्तमतोऽन्यथासिद्धमित्यर्थः। दोषान्तरमाह **अप्रसिद्धेरिति**। विशेषणं साध्यं,
20 तथा च न तद्विशेषणिकानुमितिर्न वा व्याप्तिग्रहो न वा सन्देहसिषाधयिषयोरभावात् पक्षत्वमिति। ननु गगनादौ प्रसिद्धश्चेतनाधिष्ठितहेतुकत्वाभाव एव साध्य इत्यत आह **न चेति**। ननु कारकत्वेनैव चेत् कुविन्दादीनां कारणत्वं तदा क्षित्यादौ बुद्धिमत्पूर्वकत्वे साध्ये पटादिर्दृष्टान्तः साध्यविकलः स्यात्; कुविन्दादेरेव तत्कारणत्वात्, न तु तज्ज्ञानादेरित्यत
25 आह—**किन्त्विति। न स्वरूपत इति**। इन्द्रियादिवदित्यर्थः। **कुविन्द उद्धार्यत इति**। पटादौ कुविन्दस्याकर्तृत्वप्रसङ्गः क्रियते, किमीश्वरस्येति विकल्पार्थः। **अनवस्था चेति**। अधिष्ठिताधिष्ठानविश्रान्त्यभावात् चेतनानन्त्यं स्यादित्यर्थः। कुविन्दाधिष्ठानमन्वयव्यतिरेकायातमीश्वराधिष्ठानं चावर्जनीयसिद्धमित्युभयकर्तृकं घटादीत्यर्थः। **तत्रेति**। द्वितीयेऽधिष्ठा-

तरीत्यर्थः। ननु परतः प्रमुक्तिं पश्यंश्चेतनः स्वयमुदास्ते, तथा चेश्वरः कुविन्दो वा पटादिकं किमर्थमधितिष्ठतीति शङ्कते तथापीति। केन हेतुना पटोपादानगोचरमस्य ज्ञानं क्रियत इति प्रश्ने तावदुत्तरमाह ईश्वरेति। प्रयोजनप्रश्नमुत्तरयति कार्येति। तथाप्यन्यतरवैयर्थ्यं शङ्कते एकेति। प्रत्येकदृष्टसामर्थ्ययोः सम्भेदे द्वयोरपि कारणत्वं दृष्टचरमेवेत्याह 5 स्यादेवेति। कुत्र दृष्टमिदमित्यत आह परिमाणमिति। ननु दृष्टान्ते केवल संख्याद्या इच्छापेक्षया समुदिता बद्धे (?) परिमाणे वैजात्यमवश्यं कल्पनीयम्। अन्यथा परस्परव्यभिचारेण तेषां कारणत्वमेव न स्यात् प्रकृते तु वैजात्यं नानुभूयत इति शङ्कते अस्तीति। एककर्तृकक्षित्याद्यपेक्षया द्विकर्तृकपटादौ तृणारणिमणिजन्यवह्निवद्वैजात्यस्यावश्यं कल्पनीयत्वादाह 10 इहापीति। न चेति। तथापीश्वरः कुविन्दादेः कर्तृत्वं कथं सहते तद्व्यतिरेकेणापि पटं निष्पादयेत् इत्यत आह न चेति।

बुद्धिमद्धेतुकत्वे साध्येऽनित्यप्रयत्नहेतुकत्वस्य उपाधित्वं यदुक्तं तत्राह—यत्त्विति। साध्याव्यापकत्वमाह—यदीति। नहि यन्निवृत्तावपि यन्न निवर्तते तत्तस्य व्यापकमित्यर्थः। साध्यं विशिनष्टि—हेत्विति। यथाश्रुते 15 दोषमाह—उदासीनेति। उदासीनबुद्धेः कारकविषयत्वमाह—नहीति। अयतमानस्येति। कण्टकस्पर्शजन्यदुःखसहिष्णोरित्यर्थः। तत्र कृतिश्चेन्नोत्पद्यते नूनं चिकीर्षापि नाभूदतस्तथा विशेषयति—चिकीर्षेति। केनचिदिति। निषिद्धकर्मचिकीर्षोरपि पापभयात् कृतिः परं नोत्पद्यते यत्र तत्र तादृशबुद्धेः प्रयत्नं विनापि सत्त्वादित्यर्थः। अनपेक्षेति। यत्र चिकीर्षायामु- 20 त्पन्नायां कृतिरुत्पद्यते एव तादृशचिकीर्षाहेतुबुद्धिर्निवर्तत इत्यर्थः। निरपेक्षकृतिहेतुचिकीर्षाकारणबुद्धिमत्पूर्वकत्वे साध्येऽनित्यप्रयत्नहेतुकत्वमुपाधिः, न तु बुद्धिमत्पूर्वकत्वमात्रे साध्ये इत्याह—न तर्हीति। तस्यैवेति। यद्यपि क्षित्यादिकं कृतिमद्धेतुकम्, अत्रानित्यप्रयत्नपूर्वकत्वमुपाधिः सम्भवत्येव, तथापि अनित्यप्रयत्न इत्यत्र व्यर्थविशेषणत्वं व्यावर्त्यं सिद्ध्यसिद्धिव्याघातश्चेति 25 भावः। एतेनेति। तदेव शरीरहेतुकं यत् कार्यं मुक्तिहेतुकमिति यथा त्वयोच्यते तथा तदेव बुद्धिमत्पूर्वकं यत् कार्यं प्रयत्नहेतुकमिति मयाप्युच्यते इति निरस्तमित्यर्थः। पूर्वनिरस्तमप्येतत् प्रकारान्तरेणाशङ्क्य निरस्यत इत्यपौनरुक्त्यम्। प्रयत्नेन बुद्धिरत्र न साध्यते येन तद्गतकार्यत्वमुपाधिः स्यात्,

किन्तु कार्यत्वाद्धेतोस्त्रितयमप्येकवारेण साधयाम इति न परस्परमुपाध्युपाधिमद्भाव इत्यर्थः । ननूक्तं जन्ये प्रयत्ने बुद्ध्यपेक्षा नाजन्येऽपीत्यत आह— **न चेति** । बुद्धिविषय एव प्रयत्नविषय इति नियमात् । बुद्धिमन्तरेण यत्नस्य विषयलाभ एव न सम्भवतीत्यर्थः । **ततश्चेति** । विषयनियमार्थं बुद्ध्यपेक्षाया
5 आवश्यकत्वेन बुद्धिः प्रयत्नव्यापिकेति व्यापकनिवृत्तेर्व्याप्यनिवृत्तिरिति सकर्तृकत्वे साध्येऽपि बुद्धिसिद्धिरित्यर्थः । **अन्यत्रेति** । किरणावल्यामात्मतत्त्वविवेके चतुर्थाध्यायनिबन्धे चेत्यर्थः । **नहि तयेति** । तया अनित्यबुद्ध्या, तस्य नित्यप्रयत्नस्येत्यर्थं । बुद्धिश्चेदनित्या, तदा शरीरात् प्राक् सा न स्यात्, तया च विना शरीरं न स्यादिति बुद्धेरनुत्पाद एवायात इत्याह--**शरीरा-**
10 **देरिति** । ननु चानित्यप्रयत्नवत्वं न चेदुपाधिस्तदाह नित्यप्रयत्नाजन्यत्वात् क्षित्यादिकमकर्तृकमिनि सत्प्रतिपक्षः स्यादित्यत आह--**शरीरेति** । अत्रापि व्यर्थविशेषणत्वमेवेत्यर्थः ॥२॥

बोधनी

कर्तृत्वं नामोपादानगोचरापरोक्षज्ञानचिकीर्षा[कृतिमज्जन्यप]रत्वमिति न जीवात्मभिः सिद्धसाधनम् । कार्यत्वञ्चोत्पत्तिमत्वमिति न साध्यानुप्रवेशावकाशः । न चावयवन्यूनत्व-
15 मिति शब्दस्य प्रभृत्यर्थत्वेन प्रयोगविशेषप्रदर्शनार्थ [मिति हेत्वा-] भासानुद्धरति—**न बाधोऽस्येति** । न तावदीश्वरासिद्धौ तस्य नास्तित्वमकर्तृत्वं शरीरित्वम्वावधारयितुं शक्यम् । आश्रयासिद्धिप्रसङ्गात् । आश्रयासिद्धिप्रसङ्गात् । तत्सिद्धिश्चानेन कार्यत्वानुमाने[न] कार्य इत्यस्य बाधोपजीव्यत्वान्न बाधः । प्रत्युत तेषामेव धर्मिग्राहकप्रमाणबाध इति भावः । तेन क्वानुमानमनाश्रयमित्याश्रयासिद्धिमात्रपर्यवसायिना पूर्वोक्तपौनरुक्त्यं
20 नाशङ्कनीयम् । तत एव **नासिद्धिरिति** । सापि वक्ष्यमाणदिशानुकूलप्रतिकूलतर्कसाहित्यसहकृतेन भूयोदर्शनेन प्रतिबन्धसिद्धेः—**सहेतुकेति**[1] । अथ पूर्वार्धं विवरीतुकामः शरीरप्रसञ्जनद्वाराबाधः[धं] प्रतिरोधं च वदतामभिप्रायं तावद्विकल्पयति—**तथा हीति** । सर्वेष्वपि कल्पेषु अभिमत ईश्वरो न सिध्येदिति भावः । अत्रोपजीव्यत्वादित्येतदुपलक्षणपरं मन्वान उत्तरयति—**तत्रेति** । ईश्वरः, शरीरी, कर्तृत्वात् । ईश्वरोक्ता-
25 शरीरित्वादित्यनयोरनीश्वरवादिनामाश्रयासिद्धिस्तावत् । अथ तदुज्जिहीर्षया कुतश्चित् प्रमाणात् तमङ्गीकुर्यात्, ततो धर्मिग्राहकप्रमाणबाधः । तत्रेश्वराभ्युपगमादपसिद्धान्तो

१. मूलं मृग्यम्

[भवति] तथा अशरीरः कर्त्ता चेश्वरपदवाच्यः, तमुद्दिश्य शरीरत्वात् कर्तृत्वविधाने प्रतिज्ञापदयोर्मिथो व्याघातः। **तृतीये त्विति**। तु ना पूर्वोक्तानाश्रयासिद्ध्यादीन् व्यवच्छिनत्ति। शरीरिकर्तृकार्यत्वस्य सत्यां व्याप्तौ पक्षधर्मताबलात् सर्वज्ञस्यैव सिद्धेः सिद्धसाधनमसत्यां तु व्याप्तौ न कर्त्तुः शरीरत्वं प्रसज्येत, व्याप्तिश्च नास्ति अङ्कुरादौ व्यभिचारादिति भावः। चतुर्थे दूर्वाङ्कुरादेरपि पक्षत्वादंशे बाधितविषयत्वम्, तदुत्पत्तेः 5 प्रत्यक्षसिद्धत्वात्, यदि तु तदतिरिक्तमेव पक्षीक्रियते ततस्तेनैवानैकान्तिकत्वमकार्यस्यापि तस्य शरीराजन्यत्वादिति विकल्पाभिप्रायं दूषणद्वयम्। यद्वा क्षित्यादेः सावयवत्वेन कार्यत्वसिद्धेर्बाधः। सिद्धे कार्यत्वेन तस्मिन् वर्तमानत्वादनैकान्तिकत्वमिति। **पञ्चमे त्विति**।

ननु किमिदमसामर्थ्यन्नाम, यदि प्रक्षेप्योऽप्यकिञ्चित्करत्वं, तन्न, अनन्यत्वादिति 10 हेतोः स्वरूपासिद्धिपरिहारादिति चेत्, एकामसिद्धिं परिहरतो द्वितीयापत्तेः विशेषणोपक्षेपणेऽपीह पक्षधर्मता कथञ्चित् सिध्येत् व्याप्तिस्तु न सिध्यति, गगनादावजन्यत्वादेव कर्तृत्वसिद्धेः तस्यैव व्याप्यत्वनिश्चयेन विशेषणस्य व्याप्तावननुप्रवेशात्। अत एव "समर्थविशेषणादयोऽप्यसिद्धभेदा" इति तात्पर्यपरिशुद्धिः। इदञ्चासमर्थविशेषणत्वञ्च तुल्यपक्षसाधारणमपि दूषणान्तरसद्भावादनुक्तन्तत्रापि द्रष्टव्यम्। **षष्ठेऽपीति**। यत्कार्यं 15 तत् सकर्तृकं यदकर्तृकं तन्न कार्यम् एतच्च कार्यमिति परकीयव्याप्तेः स्तम्भनार्थं यः कर्त्ता स सशरीरः योऽशरीरः स न कर्त्तेति विपरीतव्याप्तिप्रदर्शनं क्रियत इत्यत्र बाधः प्रतिरोधो वा विवक्षितः, न तावत् बाधः संभवतीत्युक्तम्। पक्षधर्मतादिलक्षणस्य त्वदुक्तव्याप्तावग्रहणात् प्रतिरोधस्तु स्यात्। यदि विशेषो न गृह्येत विशेषग्रहणात्तु परव्याप्तेः सोऽपि न संभवतीति विशेषसदसद्भावावेवोभयत्र दर्शयति—**अस्तीति**। 20 चो यस्मादर्थे आदिशब्देन धर्मिग्राहकप्रमाणबाधाद्यभावमाह—**तद्विरहः** पक्षधर्मताविरहः, कर्त्तुरीश्वरस्यासिद्धेरिति।

तर्हि क्षित्यादिकं पक्षयित्वा बुद्धिमद्धेतुकं न भवति शरीराहेतुकत्वात्, यद्बुद्धिमद्धेतुकं तत् [शरीरहेतुकं स्याद्य-]था, घटादीति प्रयोगे पक्षधर्मतालाभात् परव्याप्तिप्रतिरोधोऽपि भविष्यतीत्यत्राह—**अन्वय इति**। असामर्थ्यमेव स्फोरयति—**हेतुव्यावृत्तिमात्रमिति**। अहेतुकत्वमात्रस्य कर्त्रभावाव्यभिचारादिति। 25

ननु शरीरविशेषणेन पक्षधर्मता तावत् सिद्धा, अतः कथमसामर्थ्यं कथञ्च तावता न हेतुत्वमित्यत्राह—**व्याप्तश्चेति**। यदुक्तं परैः क्षित्यादिकमकर्तृकं कर्तृव्यापकरहितत्वा-

दिति । तदप्यनेन शरीरव्यावृत्तिप्रयुक्ता न कर्तृव्यावृत्तिरिति प्रतिपादनेन निरस्तमित्याह—एतेनेति । शरीरमेव हि अभिव्यापकमभिप्रेत्य तद्रहितत्वादित्युच्यते, तस्य व्यापकत्वाभावात्तन्निवृत्तावपि व्यापकराहित्यं संसिद्धमिति व्यापकत्वासिद्धिमपि स्फोरयति—न हीति ।

5 न च शरीराभावे कर्तृव्यावृत्तिरित्युक्तमिति । अथ सिद्ध्यसिद्ध्योर्विरोधो नो इत्येतद्विभजते—विशेषविरोध इति । एतत् संग्रहव्याख्यानेन गतमथवा यद्ययं कार्यत्वहेतुः घटादौ शरीरादिमत्कर्तृव्याप्तो दृष्ट इति पक्षेप्यूर्वीदूर्वादौ शरीरादिविशिष्टमेव कर्त्तारं साधयेत्, ततो नास्माकं क्वचिद्विरोधः कोऽभिप्रमाणसिद्धं नाङ्गीकुर्यात् । अथ दूर्वाङ्कुरादौ योग्यानुपलम्भनिराकृतत्वेन शरीरादिकं न साधयेत् । नह्यशरीरत्वादीनि 10 निरुन्ध्यात् । तेषां कार्यत्वहेतोश्च मिथो गोत्वाश्वत्ववद्धर्मिपरिहारेणैवावस्थानस्यासिद्धेरिति । इदं च व्याख्यानम्, संग्रहेऽपि द्रष्टव्यम् । नासिद्धिरनिबन्धनेत्येतद्व्याचिख्यासुस्तन्निराकरणीयां व्याप्यत्वासिद्धिमुपाध्युद्भावनेन शङ्कते—

स्यादेतदिति । अस्ति तावत् कार्यत्वे समानेऽपि दूर्वापर्वतादिव्यावृत्तः प्रासादगोपुरादिष्वनुवृत्तः कश्चित् कार्यत्वावान्तरजातिभेदः यतस्तेषु शरीरकत्वमनुमीयते, यदभावाच्च न दूर्वादाविति, ततः किमित्याह—तथा सतीति । तस्य विशेषस्य साध्यस्य व्यापक-15 तया साधनसामान्याव्यापकतया चोपाधित्वात् अप्रयोजकत्वं कार्यत्वस्येति न स्यादिति । यो हि यद्विशेषः नासौ तत्साध्यसामान्यव्यापकः, यथा गोत्वाद्विषाणित्वादौ साध्ये शावलेयत्वादिरन्यथा तद्विशेषत्वानुपपत्तिरिति । यदि नाप्रयोजकत्वं किं नाम स्यादिति पृच्छति—किं नामेति । इदं नाम स्यादित्याह—साधकेति । तत्र किं स्यादित्याह—तस्यापीति । विशेषस्यापि स्वविशेषापेक्षया सामन्यस्याप्रयोजकत्वं स्यात् । यथा 20 स्थित एव धूमसामान्यस्याग्निसामान्यं प्रति प्रयोजकत्वे सौरभादिविशेषादिविशेषाणामगुरुदहनादीनेव प्रति प्रयोजकत्वम्, न तु तत्सामान्यं प्रति तथा स्थित एव चाकार्यत्वसामान्यस्य कर्तृमात्रं प्रति प्रयोजकत्वे तद्विशेषस्य कर्तृविशेषं प्रति प्रयोजकत्वमुपपद्यत इति तात्पर्यम् ।

ननु स्यादेवं तदि कार्यविशेषमन्तरेणापि कार्यत्वसामान्यप्रयोजकत्वेन क्वचित् 25 कर्तृमात्रं दृश्येत, न त्वेदस्ति, ततः कार्यविशेष एव कर्तृमात्रप्रयोजक इति निश्चीयत इत्याह—सौरभेति । यदि कार्यविशेषस्य प्रयोज्यमन्यन्न लभ्येत । ततः कर्तृमात्रमेव प्रयोज्यं भवेत् । सति कर्तृविशेषे तस्मिन्नेव प्रयोज्येऽवतिष्ठते, न तु कर्तृसामान्यमपि

तावत् गत्वा तदपि प्रयोज्यतया क्रोडीकुर्वन् कार्यकारणसामान्ययोर्लोकदृष्टां व्याप्तिं विघटयतीत्याह— **न कार्यविशेष इति** ।

अयमाशयः, यद्यपि कार्यविशेषकर्तृविशेषयोरेव साहित्यं दृष्टम्, तथापि सर्वत्र विशेषकर्त्तरि कर्तृमात्रस्यापि सामान्यत्वेन सत्त्वात् तेनैव कार्यत्वमात्रस्य व्याप्तिः, कार्यविशेषस्य कर्तृविशेषेण लोके कार्यकारणसामान्ययोः व्याप्तिदर्शनादिति कार्यकारणसामान्यविशेषयोः कारणसामान्यविशेषाभ्यां व्याप्तिं लोकदृष्टान्तेन सम्पादयति— **किं न दृष्टमिति** । दृष्टमेवेत्यर्थः । तथापि न क्वचित् कार्यसामान्यस्य कर्तृमात्रेण सामान्यं दृष्टम्, अतः कथं तत्सिध्येदित्यत्राह— **क्व वा दृष्टमिति** । यथा स्थूलद्रव्यारभ्यत्वेन द्रव्याणामनित्यरूपाद्यारभ्यत्वेन रूपादी[नां]दर्शनेऽपि द्रव्यं द्रव्यारभ्यं गुणाश्च गुणारभ्या इति सामान्यव्याप्तेरविरोधात् अदृष्टपूर्वाण्येवाणुद्रव्याणि नित्यरूपादयश्चारम्भकाः सिध्यन्ति, एवमत्रापीति कार्यसामान्यस्यैव कर्तृसामान्यं प्रति व्याप्तिरवश्याभ्युपगन्तव्येति सदण्डमाह— **अवश्यमिति** । कार्यविशेष एव कर्तुरुपयोगात् कार्यमात्रमाकस्मिकं स्यादिति तदेवमन्वयांशे कार्यत्वस्योपाधिर्निराकृतः सम्प्रति व्यतिरेकांशे शङ्कते— **स्यादेतदिति** । ततश्चोपाधिसन्देहाद् व्याप्त्यसिद्धिरिति तदसति माभूत् सन्देहः कारणव्यावृत्तेरेवास्तु कार्यव्यावृत्तिः, तथापि कर्तृव्यावृत्तेः तद्व्यावृत्तिः सिध्यति । कर्तुरपि कारणकोटिनिवेशादिति अस्तु कारणम् कर्तापि न तु तद्व्यावृत्तौ कार्यत्वव्यावृत्तिरिति तत्राह— **कारणेषु चेति** । अन्यथेति, अन्वयवद्व्यतिरेकोऽपि कारणत्वस्याङ्गमिति अन्यतमकारणव्यतिरेकव्यावृत्त्यनभ्युपगमे बाधकान्तरमाह— **कारणादिति** । द्वेधा हि कारणविशेषनिरूपणं कारणरूपेणोपादानादिरूपेण उभयथाप्यनिश्चयाभिधानमिति एवं निश्चये सति किं स्यादित्यत्राह— **इति कार्यत्वादिति** । उपादानादीनामन्यतमेनापि बुद्ध्याद्युपपत्तेः न सर्वेषां सिद्धिरिति— **कर्तुरिति** । तदिदं व्यतिरेकव्याप्त्यादिकमिति— **तत्किमिति** किमकारणमेव सर्वोऽपि कर्ता किम्वान्यत्र कर्तुः कारणत्वेऽपीश्वरः कर्ता न कारणमुदासीन एवेति साध्ये तत्र कुविन्दादेः कारणत्वस्यान्वयव्यतिरेकसिद्धत्वात् तज्जातीयत्वेनेश्वरस्यापि तत्सिद्धेः । पक्षद्वयेऽपि स्थूलदोषत्वात् नोत्तरापेक्षेति भावः ।

अथान्यथा सत्प्रतिपक्षत्वमुद्भावयितुमाह— **नन्विति** । आत्मा हि शरीरप्रयत्नमात्रेण व्यापारयन् साक्षादधितिष्ठति । तत्संयुक्तं तु दण्डादि शरीरद्वारेण परम्परया, तद्द्वेधापीश्वरस्य परमाण्वधिष्ठानं न सम्भवति, शरीरानभ्युपगमात्तस्येति उक्तमर्थं प्रयोगमारोपयति—

**तदयमिति**। व्यतिरेकेण वेति, यत्परम्परयाधिष्ठेयं तत्स्वव्यापारे शरीरापेक्षं यथा दण्डादीति किमेतावता कार्यत्वानुमानस्यायातमित्यत्राह—**एवञ्चेति**। अत्र यच्चेतनाधिष्ठितहेतुकं तच्छरीरे जन्यं न भवति, यथा—**घटादीति**। व्यतिरेकेणोदाहर्त्तव्यं पूर्वं करणानां चेतनाधिष्ठेयत्वं प्रसाध्य पश्चात् तद्बलेनास्य प्रवृत्तिरित्यतिपीडायामित्युक्तमिति 5 सिद्धसाधनत्वम्वक्तुं पीठिकामारचयति—**अपि चेति**। ज्ञानादिविषयत्वमेवाधिष्ठेयत्वमित्याशयेनाह—**न ह्यस्येति**। यदि त्वीश्वराधिष्ठितानामपि वेमादीनां कुविन्दाद्यधिष्ठात्रन्तरापेक्षा स्यात्, अधिष्ठानार्थमेव तर्ह्यधिष्ठात्रन्तरापेक्षा न व्यवतिष्ठत इत्याह—**न चेति**। यद्वा यदि कुविन्दाद्यधिष्ठितामीश्वरापेक्षा स्यात्, तदर्थमेवाधिष्ठातुरपि कुविन्दस्य कारकविशेषत्वेन कुविन्दादिकारकाधिष्ठानार्थमेव तर्ह्यधिष्ठातुरीश्वरस्यापि तथात्वादन्या10 पेक्षायामनवस्था स्यादिति। तर्हि कुविन्दाद्यपेक्षा कारकत्वेन न त्वधिष्ठातृत्वेनेत्यत्राह—**न द्वितीय इति**। कुविन्दादेरपि वेमादिवत् कारकत्वेन कार्याङ्गत्वे पटादीनां चेतनाधिष्ठितहेतुकत्वासिद्धेः साध्यवैकल्यं भवेदिति। अस्तु तर्हि पटादौ हेतुत्वेनैव कुविन्दाद्यपेक्षा न त्वधिष्ठातृत्वेनेत्यत्राह—**न चेति**। तादृश्यान्तु व्याप्तौ को दोषः इत्यत्राह—**तथा चेति**। व्याप्त्यनुसारेणोर्वीदूर्वादिः सहेतुकमिति प्रयोगः स्यात् तत्र 15 च सिद्धसाधनम्। न हि मीमांसका अपि निर्हेतुकत्वं क्षित्यादेरभ्युपगच्छन्तीति। प्रकारान्तरेण कार्यत्वहेतोरप्रयोजकत्वमाह—**किञ्चेति**। घटादौ बुद्धिमत्पूर्वकत्वमनित्यप्रयत्नपूर्वकत्वप्रयुक्तमदुष्टमतः क्षित्यादावनित्यप्रयत्नपूर्वकत्वाभावाद्बुद्धिमत्पूर्वकत्वमपि न स्यादिति।

ननु यथा बुद्धिमत्पूर्वकत्वे शरीरपूर्वकत्वमुपाधिः। ततः शरीरादिनिवृत्तौ बुद्धिः 20 निवर्तत इति चोदितो वाचस्पतिरवोचत्। बुद्धिगतकार्यत्वोपाधिप्रयुक्तत्वात् शरीरसम्बन्धस्य तन्निवृत्तौ कार्यबुद्धिर्निवर्तते, न त्वकार्यापीति, तथात्राप्यनित्यप्रयत्ननिवृत्तौ कार्यैव बुद्धिर्निवर्तत इति समाधास्याम इत्यत्राह—**न हीति**। युक्तं तत्र बुद्ध्या शरीरस्य कार्यत्वेनापेक्षणात् तन्निवृत्तौ कार्याया एव निवृत्तिः, न तु नित्याया अपीति प्रयत्नः पुनः कारणत्वेन बुद्ध्यपेक्षते, यतस्तन्निवृत्तौ कार्यैव बुद्धिर्निवर्तते न त्वकार्यापीति तदेतच्चोद्यत्रयं 25 समादधाति—**तदेतदिति**। तत्रान्तिमस्य पूर्वोद्भावितं प्रयोजकत्वनिरासं . . . न हि विशेषोऽस्तीति सामान्यम् प्रयोजकं स्यादित्य रासः। मध्यमस्य तत किं कुविन्दादिकारणमेव कर्त्रेत्युक्तं कुविन्दादेः कारणत्वसमर्थनेन प्रथमोक्तस्य तु पूर्वोक्तप्रतिरोधानुमानदूषणैरेव व्याप्तिपक्षधर्मत्वासिद्ध्यादिभिरिति प्रागेव निरस्तमित्युक्तं तमेव निरासं स्फोरयति—**तथापीति**। चेष्टेन्द्रियाणामन्यतमाश्रयत्वं हि शरीरलक्षणम्।

तत्र परमाण्वादीनां शरीरत्वप्रसङ्ग इत्यत्र यदि चेष्टाश्रयत्वं तत [ इष्टापादनम् साक्षात् ] प्रयत्नवदात्मसंसर्गासमवायिकारणता हि क्रिया चेष्टा तदाश्रयत्वं परमाणूनां नैयायिकैः सुगममित्यर्थः । [ साक्षात्प्रयत्नवदधिष्ठेयत्वमेव तदिष्यत एवास्माभिरिति । किञ्चात्र पक्षे साक्षाद्विषयत्वाभ्युपगमे साक्षादधिष्ठातृत्वप्रसङ्गः इत्युक्तं स्यात् । न च तत्र प्रसञ्जकादन्यत् प्रसञ्जनं स्यादित्याह—न च ततोऽन्यदिति । ] अथेन्द्रियाश्रयत्व-लक्षणशरीरत्वप्रसङ्गमाशङ्क्य दूषयति—अथेति । न खल्वस्मदादिशरीराणां साक्षा-दधिष्ठेयत्वप्रयुक्तमिन्द्रियाश्रयत्वम्, कार्यप्रयत्नाधिष्ठेयप्रयुक्तत्वादिति कुत एतदित्यत आह—तदवच्छिन्नेति । अस्मदादीनामिन्द्रियावच्छिन्न एवात्मप्रदेशे प्रयत्नोत्पत्तेः तस्याश्च तदव-च्छिन्नज्ञानाधीनत्वात्तस्य चेन्द्रियाधीनत्वेन तदन्तरेणानुपपत्तेः, अनवच्छिन्ने तु प्रयत्नेनैव ज्ञान[द्वारेणैवे] न्द्रियाणामुपयोग प्रयत्नेच्छाज्ञानानामन्यतमत्वेनानुत्पद्यत्वादनवच्छिन्नत्वा-च्चेति । अत एवाप्रयोजकत्वान्नार्थाश्रयत्वरूपमपि शरीरत्वं प्रसज्यत इत्याह—अत इति । अर्थ्यत इति अर्थो भोगः । तस्याश्रयः आयतनं यदाश्रित्यायमात्मा भोगान् भुङ्क्ते सोऽर्थाश्रय इत्यर्थः । तल्लक्षणशरीरत्वञ्च भोगसाधनत्वप्रयुक्तम्, नचेश्वरस्य भोगो नामेति ।

नन्वस्ति तस्यापि ज्ञानरूपो भोग इत्यत्राह—न हीति । न तावत्तस्य ज्ञानं भोगः नित्यत्वात्, अस्तु वा भोगः, तथापि नायतनमपेक्षते, नित्यत्वादेव कारणशेषत्वाच्चायतनस्य, तस्मादर्थाश्रयत्वस्यापि अनित्यभोगप्रयुक्तत्वादप्रयोजकमसाक्षादधिष्ठेयमिति भोक्तृधर्मोप-ग्रहाच्चाप्रयोजकमित्याह—न च नित्येति । सुखदुःखसाक्षात्काररलक्षणो हि भोगः धर्माधर्माभ्यां भवति, तौ च प्रवृत्त्या, सा च रागद्वेषमोहरूपेभ्यो दोषेभ्यः ते च मिथ्या-ज्ञानात् तच्च नियामकनिःशेषविशेषादर्शनात्, न च नित्यसर्वज्ञस्य संभवतीति । यद्वा किमित्यनित्य एव भोग ईश्वरस्य न स्यादित्यत्राह—न च नित्येति । तदेवं परमाण्वा-दीनां प्रसञ्जितं शरीरत्वं विकल्प्य दूषयित्वा प्रसङ्गदूषणे[न]सिद्धम्, तदनुग्राह्यानुमान-दूषणं दर्शयन्नुपसंहरति—तस्मादिति । तत्र तावत्साक्षादधिष्ठेयत्वस्य शरीरत्वपक्षे परमाण्वादयो न साक्षाच्चेतनाधिष्ठेयाः, शरीरेतरत्वादिति प्रयोगे शरीरत्वं नाम साक्षात् प्रयत्नाधिष्ठेयत्वमापद्यते । तथा च साध्यमपि तदेवेति साध्याविष्टो हेतुः । तथा नापि परम्परयाधिष्ठेया इत्यत्र साक्षात् प्रयत्नाधिष्ठितद्वारानधिष्ठेया इति साध्यं स्यात् । स्वव्यापारे शरीरानपेक्षत्वादिति च साक्षात् प्रयत्नवदधिष्ठितत्वद्वारानपेक्षत्वादिति साध्याविशिष्टत्वमेवेति इन्द्रियाश्रयत्वार्थाश्रयत्वपक्षयोरनुमानदूषणमाह—अनिन्द्रियाश्रयत्वादिति । तदनपेक्ष-त्वादिति । इन्द्रियाश्रयभोगायतनानपेक्षत्वादित्यर्थः । इन्द्रियाश्रयत्वं भोगायतनत्वं

भोगायतनत्वञ्च भोगसाधनत्वभोक्तृधर्मोपगृहीतत्वाभ्यां प्रयुज्यते, न तु साक्षादधिष्ठान-
प्रयुक्तेन च परमाणूनां तयोः सम्भवः ईश्वरस्य धर्माद्यभावादिति स्वव्यापारे शरीरान-
पेक्षत्वं चान्यथासिद्धमित्याह—**स्पर्शवदिति**। स्पर्शवद्वेगवद्द्रव्योत्पाद्यत्वेन दण्डादयः
स्वव्यापारे शरीरमपेक्षन्ते न तु परम्परयानधिष्ठेयत्वेन परमाण्वादयस्तु नैवं विधाः स्वतन्त्र-
5 त्वादित्यचेतनत्वाच्चेति पूर्वापरयोरपि वाक्यशेषतया योजयितव्यः। तदेवं शरीरेतरत्वात्
स्वव्यापारे शरीरानपेक्षत्वादित्यनुमानयोर्दूषणमुक्त्वा तदुपजीवनेन प्रवृत्तस्य क्षित्यादिकं,
चेतनानधिष्ठितहेतुकं, शरीरेतरजन्यत्वादिति प्रतिरोधानुमानस्यापि शरीरविकल्पद्वारसिद्धम्।
तदेव दूषणद्वयं स्फोरयति—**तथा चेति**। अन्यथासिद्धमेवाह—**कार्यज्ञानेति**। कार्य-
ज्ञानानपेक्षत्वादिन्द्रियाश्रयेतरजन्यत्वभोक्तृधर्मानुपग्रहात् भोगायतनेतरजन्यत्वमपि स्यादिति।
10 किञ्च क्षित्यादयो न चेतनाधिष्ठितहेतुका इत्यत्र चेतनानधिष्ठितहेतुकत्वविधिर्वा साध्यः,
चेतनाधिष्ठितहेतुकत्वनिषेधमात्रम्वा ? पूर्वत्राप्रसिद्धं विशेषणं पक्षा[श्रितम्] क्वचिदपि
तस्यासिद्धेरुत्तरत्रासाधारणानैकान्तिको हेतुः। विवक्षादिव घटादेः सपक्षादपि गगनादेर-
शरीरजन्यत्वस्य हेतोर्व्यावृत्तेरिति द्वितीयं चोद्यं प्रतीकेनानुभाष्य दूषयति—**यत्पुनरिति**
तर्हि कार्यानुमानस्य साध्यविकलो दृष्टान्तः स्यादित्युक्तं तत्राह—**किन्त्विति**। अधिष्ठा-
15 तृत्वेन कुविन्दाद्यपेक्षा वा यदुक्तं तदनुभाष्य दूषयति—**यस्त्विति**। **न द्वितीय इति**।
न हि वयं घटादिकारकाधिष्ठानार्थमीश्वरमभ्युपगच्छामः। एवं कुविन्दादिना तदधिष्ठार्थ-
सिद्धौ किमीश्वरेणेत्युपालभ्येमहि। किन्तर्हि परमाण्वदृष्टाद्यधिष्ठानार्थं तदधिष्ठानस्य तु
सर्वज्ञेतरेणानुपपत्तेः तत्सिद्धौ च वेमादीनामपि तज्ज्ञानादिविषयत्वेनावर्जनीयत्वान्नान्तरीयकं
तदधिष्ठानमिति। **न तृतीय इति**। यद्यधिष्ठितस्याप्यधिष्ठानापेक्षयैव द्वितीयाधिष्ठात्रपेक्षा
20 ततोऽनवस्था स्यात्। न त्वेतदस्ति। किन्तु द्वितीयस्यापि प्रमाणसिद्धत्वात्। तृतीये
त्वधिष्ठातरि प्रमाणाभावान्न प्रसङ्ग इति। तथापि द्वयोः प्रमाणसिद्धत्वेऽपीति विकल्प्य
दूषयति—**हेतुप्रश्नोऽयमिति**। कुतो हेतुरिति। हेतुर्वा पृच्छ्यते, कस्मै प्रयोजना-
येति। प्रयोजनं वा नाद्यः, ईश्वराधिष्ठानस्यनित्यत्वेन हेतोरभावात्। कुविन्दादिहेतोस्तु
प्रसिद्धत्वात्।

25 नचोत्तरः घटादिकार्यनिष्पादनेनास्मदादिभोगसिद्धेरुभयाधिष्ठानप्रयोजनस्य स्पष्टत्वा-
दिति—**एकेति**। तत्र चान्यतरस्य निष्प्रयोजनत्वमेवेति भावः। **स्यादेवेति**। एकाधि-
ष्ठानेन कार्यमित्यनुषङ्गः। तर्ह्यन्यतरवैयर्थ्यमित्यत्राह—**तथापीति**। दूर्वादौ दृष्टसामर्थ्ये-
श्वराधिष्ठानस्य घटादिष्ववर्जनीयतयान्येन संभेदेऽपि न वैयर्थ्यं सम्भूयकारित्वोपपत्तेः।

न हि त्र्यणुकद्वितन्तुकपटतुलपिण्डपरिमाणेषु प्रत्येकमेवोपलब्धसामर्थ्यानां संख्यापरिणामप्रचयानामन्यत्र घटादिपरिमाणे जनयितव्ये कपालादिगतसंख्यापरिमाणप्रचयानां सम्भेदेऽप्यन्यतरवैयर्थ्यमिति ।

ननु सम्भिन्नकारणस्य परिणामस्यैव तद्वैजात्यान्नान्यतमवैयर्थ्यमित्याह—**अस्तीति**। तर्हि भाव्युर्वीदूर्वादिभ्यः पटादिकार्येषु किञ्चिद्वैजात्यं भविष्यतीत्याह—**इहेति** । मा भूद् 5 दूर्वादिष्वदृष्टपरमाण्वाद्यधिष्ठानस्य कुलालादिभिर्निर्वाहाभावात्, तदर्थमङ्गीकृतस्येश्वरस्य नान्तरीयकतया दण्डाद्यधिष्ठानसिद्धौ कुलालादिसम्भेदेऽपि तस्य वैयर्थ्यं दण्डादेस्त्वीश्वरेणैवाधिष्ठानसिद्धौ कुतः कुलालाद्यधिष्ठानशङ्कैवेत्याह—**न चेति** । कुलालाद्यधिष्ठानयोग्येषु घटादिकारणेषु तदधिष्ठानमीश्वरोऽनुमन्यते, न तु स्वयमेवाधितिष्ठति, अन्यथा कुलालादीनां व्यापाराभावेन तद्व्यापारसाध्यभोग्यासिद्धेरिति । 10

ननु स्वयमेवाधिष्ठातुरीश्वरस्य सतः किं कुलालादिकर्तृत्वानुमित्येत्यत्रोक्तम्—**तदर्थमात्रत्वादैश्वर्यस्येति** । शक्यक्रियेषु घटादिषु तेषां कर्तृत्वानुज्ञामात्रमैश्वर्यम्, अन्यत्र तु स्वयं कर्तृत्वमिति । यत्त्वनित्यप्रयत्नोपाधिना कार्यत्वस्याप्रयोजकत्वमुक्तम्, तदनुभाष्य दूषयति—**यस्त्विति** । स हि तत्रोपाधिः यन्निवृत्तौ साध्यनिवृत्तिः यथाहुः साध्याभावाविनाभावो स उपाधिर्यदन्यत्र । **य इति** । न चानित्यप्रयत्ननिवृत्तौ[1] बुद्धिर्निवर्तत 15 एव अप्रयतमानस्यापि बुद्धिसद्भावः[2] । अतो नानित्यप्रयुक्तं बुद्धिमत्पूर्वकत्वमिति—**हेतुभूतेत्यादि** सुगमः । हेतुभूतकारकबुद्धिरिति यस्य कार्यस्य कारकं विषयीकरोति तदेव कार्यं प्रति हेतुभूता बुद्धिरुदासीनस्य निवर्तत एवं[3][4] न हि घटादिकर्मं[5] कुर्वतां चक्रादिबुद्धिः **हेतुभूतेति** । न सापि निवर्तते परेण कण्टकैस्तुद्यमानस्य तत्संभवादित्याह—**नाप्रयतमानस्येति** । तर्हि चिकीर्षया अपि हेतुभूता बुद्धिर्निवर्तत इत्याह—**चिकीर्षेति** । 20 दुःखकारककण्टकसंस्पर्शविषया[6] बुद्धिर्न दुःखचिकीर्षाया हेतुरिति । **नेति** । केनचित् प्रति...दिनेति । या खलु चिकीर्षा निरपेक्षैव कृतिं जनयति, तस्याः कारणं बुद्धिरयतमानस्य निवर्तत इत्याह—**अनपेक्षेति** । न तर्हि बुद्धिमात्रं निवर्तते, किन्तु बुद्धिविशेषः, तथा च नास्माकं क्षतिरित्याह—**न हि तर्हीति** । बुद्धिमत्पूर्वकमिति साध्ये[7] कार्यत्वहेतोरनित्यप्रयत्नोपाध्युद्भावने परिहार इत्याह—**इतीति** । सकर्तृकत्वमिति साध्ये तु कस्तर्हि 25 परिहार इत्यत्राह—**सकर्तृकमिति**[8] । कर्तृत्वं नाम कृतियोगः कृतिश्च प्रयत्नः, ततश्च

---

१. ख. न त्वनित्य° । २. ख. बुद्धिसद्भावः । ३. क. हेतुबुद्धि° । ४. क. एवं । ५. क. °क्रम° कुर्वताश्चक्रादिहेतुभूतेति नासावपि । ६. ख. °स्पर्श° । ७. क. सिध्ये । ८. क. सकर्तृकमिति ।

प्रयत्नपूर्वकत्वमेव साध्यं स्यात् । तस्मिंश्च प्रयत्नपूर्वकत्वस्योपाधित्वे स्वस्यैव स्वस्मिन्नुपाधित्वं स्यात्, तच्चायुक्तमेव, तस्यैव प्रयोज्यप्रयोजकत्वानुपपत्तेरिति । ननु[१] सकर्तृकमिति प्रयत्नपूर्वकत्वे साध्ये बुद्धिमत्पूर्वकत्वं कुतः सिध्येत् । न च प्रयत्नादेवेति वाच्यम् । शरीरसंबन्धे बुद्धिगतकार्यत्ववत् बुद्धिसंबन्धेऽपि प्रयत्नगतकार्यत्वस्योपाधेस्सुवचत्वेन
5 प्रयत्नमात्रस्य बुद्ध्या व्याप्त्यभावेन ततस्तस्या[२]बुद्धेर्न सिद्धिरित्याशङ्क्याह—**एतेनेति** । प्रयत्नानित्यत्वस्यानुपाधित्वेनेति कथं निरस्तमित्याह—**यो हीति** । न हि वयं कार्यत्वेन प्रयत्नपूर्वक[३]त्वमात्रं साधयित्वा तेन बुद्धिम[४]त्पूर्वकत्वं साधयामः येनोपाध्युद्भावनेनोपालभ्येमहि । किन्तु बुद्धिमत्पूर्वकत्वमपि कार्यत्वादेव साधयामः, कार्यत्वं हि कर्तारं साधयेत् इ[५]ति प्रतिबन्धकबलेनोपादानादिगोचरबुद्धिमन्तमेव कर्तारं साधयेत् । तत्र च कार्यत्वस्य
10 निरुपाधित्वमुक्तमेवेति, किं च कार्यत्वात् साधितेन प्रयत्नेनैव बुद्धिरपि साध्यताम्, तथापि न काचि[६]त् क्षतिरिति विवक्षन्ननुप्रयत्नकारणत्वेन बुद्ध्यपेक्षया हि ततस्तदनुमान नित्यस्य तु प्रयत्नस्य तदनपेक्षत्वात् कथं ततस्तत्सिद्धिरित्याशङ्कामपनुदन्नाह—**न चेति** । न हि प्रयत्न[७]ः केवलमिच्छाद्वारेणात्मनिष्पत्तये ज्ञानम[८]पेक्षते किन्तु विषयोप[९]नयामर्थमपि न ह्यज्ञात एव विषये कश्चिद्यतितुं शक्नोति, तेन नित्यत्वेनात्म[१०]लाभार्थमपेक्ष ।भावेऽपि
15 विषयलाभार्थमपेक्षणात् प्रयत्नात् बुद्धिसिद्धिस्तन्निवृत्तौ च तन्निवृत्तिः सिध्यतीत्येतद्विस्तृत-**मात्मतत्त्वविवेक** इति नेह प्रपञ्च्यत इति ।

ननु[११] सर्वथा कार्यमेव बुद्धिमपेक्षमाणः सर्वत्र प्रयत्नो दृष्ट[१२] इत्यपेक्षणीयनिवृत्तेरपेक्षकस्य[१३] प्रयत्नस्यापि निवृत्तिरित्याह—**कार्यबुद्धीति** । कार्यप्रयत्नस्यैव तदपेक्षत्वादिति ।

ननु[१४] नित्यादपि बुद्धिः सिध्यताम् अनित्यत्वं तु तस्याः कुतः सिद्ध[१५]मित्यत्राह—
20 **नित्ये चेति** । कथं नानित्ययैव बु[१६]द्ध्या नित्यस्य प्रयत्नस्य विषयलाभसंभवस्तत्राह—**शरीरादेरिति** । शरीरादिकार्यत्वेनानित्याया बुद्धेस्ततः प्रागसंभवात् । बुद्ध्यभावे च[१७] निर्विषयत्वेन प्रयत्नस्या[१८]प्यसंभवात्, देहस्यानुत्पत्तौ सर्वथा बु[१९]द्ध्यनुत्पत्तिप्रसङ्ग इति तर्ह्यनित्यप्रयत्नजन्यमस्तु विश्वमित्यात्राह—**शरीरेति** । यद्वा विवादपदमकर्तृकमनित्यप्रयत्नाजन्यत्वात् गगनवदिति साध[२०]नमाशङ्क्याह—**शरीरेति** । शरीराजन्यत्वहेतोरिवास्याप्य-
25 समर्थविशेषणत्वमिति संक्षेप **आत्मतत्त्वविवेको**क्त[२१]विस्तरस्येति ॥२॥

---

१ क. अयं पाठः नास्ति । २ क. तस्यासिद्धे॰ । ३ क. पूर्वमात्रं । ४ क. बुद्धिपूर्वकत्वं । ५ क. पाठो नास्ति । ६ क. कदाचित् । ७ ख. प्रयत्नं । ८ ख. अपेक्षन्त । ९ क. विषयोपनयनत्व॰ । १० ख. ॰नामूलाधार्य॰ । ११ क. न तु । १२ क. इति, । १३ क. अपेक्षा कस्य । १४ क. नानित्यादधिप्रयत्नात्…प्रसा॰ । १५ क. कुतन्त्यम् । १६ क. नित्यर्थबुद्धनि॰ । १७ क. बुद्ध्यभावेन । १८ क. ॰स्यासं॰ । १९ ख. पाठो नास्ति । २० ख. प्रसा॰ । २१ ख. ॰कात्तस्य ।

विवेकः

पक्षधर्मताबलादशरीरिकर्तृसाध्यकानुमानस्य न बाधो। न कर्तृत्वाव्यापकशरीर-बाधात् ईश्वरे कर्तृत्ववाधो न। ईश्वरो न कर्ता अशरीरित्वादित्यादिरूपो न। उपजीव्यत्वात् एतदनुमात्सिद्धं पक्षयित्वा कर्तृत्वाभावः साध्यः। धर्मिग्राहकेण कर्तृतयैव तत्सिद्धे-र्नेदमुपजीव्यम् वाधितुमिष्ट इति असिद्धौ चाश्रयासिद्धिरिति भावः।

ननु क्षित्यादिकं पक्षयित्वा शरीराजन्यत्वादिभिः सत्प्रतिपक्षोऽस्तु तत्राह—प्रतिबन्ध इति। प्रतिरोधो न दुर्बलैर्व्यर्थविशेषणत्वादिभिरसिद्धेः। ननु शरीरिकर्तृत्वाभावव्याप्येन हेतुना पक्षधर्मतासाहाय्येनापि कथं तादृशसाध्य इत्यत्राह—सिद्धीति। सिद्धिश्चेदशरीरी कर्ता न तत्कर्तृत्वाभावव्याप्यतया कार्यत्वग्रहः। पक्ष एव व्यभिचारात्। तदसिद्धौ च कथं तादृशकर्तृत्वाभावव्याप्यतया कार्यत्वग्रहः। ननु तव हेतावपि व्याप्यत्वासिद्धि-राश्रयासिद्धिर्वा भविष्यतीत्यत्राह—नासिद्धिरिति। व्याप्यत्वासिद्धिनिबन्धनमनुकूलतर्का-भाव उपाधिशंका च तदभावान्नाद्या आश्रयविशेषणसिद्धिः सिद्धसाधने चाश्रयासिद्धि [र्विशेष्यतीत्यत्राह—नासिद्धिरिति। व्याप्यत्वासिद्धिनिबन्धनमनुकूलतर्का] निबन्धनेन च तत्प्रकृत इत्यर्थः। शरीरित्वमित्यनन्तरमापाद्यते साध्यते वेति शेषः। एवमग्रेऽपि। शरीरिकर्तृकत्वमित्यनन्तरं साध्यत इति च। तत एव शरीराजन्यत्वादेव। शरीराजन्यत्वा-देवेति क्वचित्पाठः। परव्याप्तिः पराभिममता व्याप्तिः। कार्यत्वेन कर्तृत्वनिरूपिता तस्या स्तम्भनावधिप्रतिरोधान्यतरोत्थापनेन फलाजननाय। विपरीतेति। कर्तृत्वनिरूपिताया: व्याप्तेस्तदुपदर्शनमात्रमेवेत्यर्थः। प्रथमद्वितीययोर्यत्रेश्वरस्य पक्षत्वन्तत्रेश्वरस्यासिद्धिराश्रया-सिद्धिः। तत्सिद्धौ धर्मिग्राहकमानबाधः तस्य तच्छरीरस्य वा उपगमे भवतामपसिद्धान्तः। तत्कर्तरीश्वरपदार्थत्वात्। मातावन्ध्येतिवत् अकर्तृत्वसाधने प्रतिज्ञापदद्वयोर्विरोधः। क्षित्यादौ अकार्यत्वबाधस्य प्रमाणसिद्धत्वात् प्रत्येकपक्षतायामङ्कुरादाव नैकान्तः। पंचमे शरीराजन्यत्वेनाकर्तृकत्वसाधने असमर्थविशेषणत्वं व्यभिचारवारणासमर्थशरीर-रूपविशेषणवत्त्वम्। यद्यपि शरीरं नाभावे विशेषणं किन्तु प्रतियोगिनि जन्यत्व एव तथा चाखण्डाभावनिर्वाहकतया न वैयर्थ्यशंकापि, तथापि धर्म्यन्योन्याभावात् धर्मात्यन्ताभावो नातिरिच्यते। नातिरिच्यते च ऐकाधिकरण्यावच्छिन्नविशेषाभाव-कूटात्सामान्यावच्छिन्नप्रतियोगिताकोऽभाव इति नये जन्यभेदकूटस्यैव संभवव्याप्तिभा-वस्य संकोचकं शरीरविशेषणं व्यर्थमेव। अतिरिक्तसामान्याभावाभिप्रायेणोक्तौ अजन्य-त्वमुपाधिः। पूर्वसाधनव्यतिरेकत्वेऽपि व्यापकताग्रहेणानुकूलतर्कसम्भवादुपाधितायामिव-

वापवदत्वादिति ध्येयम् । अगृह्यमाणविषया पक्षधर्मता निश्चयरूपसहाकारिशून्यायामेवम-ग्रेऽपि । बाधः प्रकृतसाध्याभावनिश्चयः । प्रकृतव्याप्तेर्गृह्यमाणविशेषत्वं दर्शयति—**अस्ति चेति** । तद्विरहः विशेषविरहः ।

नन्विदम् केवलव्यतिरेकि वा अन्वयव्यतिरेकि वा ? आद्येऽन्वयव्याप्तौ व्यर्थविशेष-
5 णत्वेऽपि व्यतिरेकव्याप्तिज्ञानाधीनैव प्रतिरोधता स्यादित्यतस्तदादौ दूषयति—**न गग-नादेरिति** । इदनुपलक्षणम् । केवलव्यतिरेकिणो भवद्भिरनुपगमाद्धेत्यपि बोध्यम् । हेतुव्यावृत्तिमात्रम् । हेतुतानिरूपकभेदमात्रम् । तत्र हेतुत्वे शरीरस्याधेयताविशेषणत्वे व्यर्थत्वम् । हेतुत्वञ्चाबाधितविशेष इति ध्येयम् । यथाश्रुते शरीरजन्यत्वस्य शरीर-नियतोत्तरवर्तित्वरूपस्य जन्यत्वागर्भतया तत्प्रसंगाभावादिति अत एव शरीरहेतुक-
10 मित्येवोक्तम् ।

परे तु शरीरप्रागभावव्यापकप्रागभागप्रतियोगित्वमेव शरीरजन्यत्वं । तत्र प्राग-भावप्रतियोगित्वरूपं जन्यत्वं निविशत एवेति वदन्ति ।

ननु व्यर्थविशेषणतया[विशेषणत्वे व्यर्थत्वं हेतुश्चाबाधिताविशेष इति ध्येयम्] । मास्तु व्याप्तिः । किमेतावतेत्यत्राह—**व्याघातश्चेति** । चतुर्थः । तद्व्यापकरहितत्वात् ।
15 सकर्तृकतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्त्वात्सामान्योपसंहारेण सामान्येन हेतु-करणम् । **न हीति** । व्याप्यवृत्तिव्यतिरेकिसाध्यनिरूपितान्वयव्याप्तेर्न व्यतिरेकव्याप्ति-नियतत्वेन व्यतिरेके च व्यर्थविशेषणतया व्याप्तेरभावात । अन्वयेऽपि न व्याप्तिरिति शरीरजन्यत्वं सकर्तृकत्वव्यापकतावच्छेदकान्तरावच्छिन्नप्रतियोगिताकाभावश्च न पक्षधर्म इति स्वरूपासिद्धिरित्याखण्डलार्थः । यद्व्यावृत्तिर्यदभावोऽन्वयव्यतिरेकसहचारग्रहसहका-
20 रेणोपसंहर्तुं व्याप्यतया निश्चेतुं न शक्यते विशेषस्याशरीरकर्तृकत्वस्य क्षित्यादौ सिद्धौ कार्यत्वेन सहोपलम्भेन एकाधिकरणे कार्यत्वशरीरिकर्तृकत्वाभावयोरुपलम्भेनेति यावत् । तेन कार्यत्वस्य तद्भावव्याप्यत्वरूपो विरोधो निरस्तः व्यभिचारोपलम्भात् तदसिद्धौ तदभावग्रहान्न तद्व्याप्यत्वग्रह इत्यर्थः ।

ननु शरीराजन्यत्वेऽसमर्थविशेषणवत्त्वेऽपि शरीरजन्यतावच्छेदकमखण्डधर्मान्तरम-
25 स्ति स एवोपाधिस्तथा च तन्निबन्धना व्याप्यत्वासिद्धिस्तवापीत्याशङ्कते—**स्यादेतदिति** । अवान्तरविशेषः । कार्यत्वन्यूनवृत्तिरेतावता साधनाव्यापकत्वविशिष्टसाधनसामान्यव्यापक-मित्यभिप्रायेणाह—**न स्यादिति** । विशेषो घटत्वादिः कर्तृविशेषानुमापकोऽ-स्तीति स एव सकर्तृत्वानुमापक इत्यर्थः । **सौरभादीति** । सौरभविशेषवद्धर्मो-

ऽग्निविशेषानुमापकः अस्तीत्यर्थः। साधकसामान्येऽसति बाधके साध्ये सामान्यस्य व्याप्यीभूय ज्ञापके तद्विशेषः साधनविशेषः। तस्यापि भवद्भिमतविशेषस्यापि तथा च तेनापि विशेषेणकर्तृत्वानुमानं न स्यात्। तत्रापि विशेषान्तरस्य तत्तद्व्यक्तित्वादेःसंभवादित्यर्थः। धूमे सति विशेषं शरीरनिष्ठकारणतानिरूपितकार्यतावच्छेदकावच्छिन्नं लाघवात् धर्मान्तरावच्छिन्नं लाघवात् कर्तृसामान्यजन्यतावच्छेदकं कार्यत्वमेवेत्यभि- 5
प्रेत्याह—न **कार्यविशेष इति**। कार्यकारणसामान्ययोः कार्यसामान्यकर्तृसामान्ययोः, प्रतिबन्धं व्याप्तिमन्यथा कुर्यात्। धर्मान्तरावच्छिन्नं कुर्यात्। अन्यथा कार्यसामान्येन कारणसामान्यानुमानमपि न स्यादिति भावः। तदेव-**किं नेति**। **व्यवतिष्ठत इति**। क्रिया प्राक्तनी सर्वत्रानुषज्ज्यते।

ननु शरीरे कर्तृत्वस्यादर्शनात् कथं सामान्यव्याप्त्या अपि तत्सिद्धिरित्यत्राह— 10
**क्व वेति**। अत्र यथा पक्षधर्मताबलाद्दृष्टजातीयस्यैवसिद्धिस्तथा तत्रापि इत्यर्थः। सिध्यत्येवारम्भकमणुद्रव्यं नित्यं च रूपम्। **आकस्मिकत्वेति**। असति बाधके कार्यमात्रवृत्तिधर्मस्य कार्यतावच्छेदकत्वमिति व्याप्तेर्भङ्गप्रसङ्गादित्यर्थः। तथा च यथा समवायिकारणादिजन्यतावच्छेदकमपीति भावः। अनुकूलतर्काभावनिबन्धनां व्याप्यत्वासिद्धिं शङ्कते—
**स्यादेतदिति**। कर्तुः कार्यत्वमेव जन्यतावच्छेदकं करणादेरिवेत्यभिप्रेत्याह—**कर्तुरपीति**। 15
कारणेषु कारणदिति। तथा च कार्यसामान्यं कारणसामामान्यमपि न गमयेदिति भावः। तत् किमिति सोपहासं कुविन्दात् पटः कुलालाद्घट इत्यादिलौकिकपरीक्षकव्यवहारादेव तत्सिद्धिरिति भावः। प्रस्तुते वा क्षित्यादौ वा उदासीन एव कारणभिन्न एव। एतत्कर्तुरकारणत्वाभिधानेनोपसंस्थानं यत्किंचिन्निरर्थकम्। कारणानां साक्षादधिष्ठाता यः कर्ता स क्षित्यादौ साध्यः। **शरीरवदिति**। षष्ठ्यन्ताद्वतिः। यथा शरीरस्य 20
साक्षादधिष्ठाता तथेत्यर्थः। कारणानां परम्परया वाधिष्ठितो दण्डादिरिव शरीरत्वप्रसङ्गात्। अत्र शरीरत्वतदवयवत्वसाधारणमापाद्यं साक्षात्कर्त्रधिष्ठितत्वमापादकम्। **द्वाराभावादिति**। साक्षादधिष्ठितस्य शरीरस्य योग्यानुपलम्भबाधात्। सर्गादौ तदसंभवाच्चेति भावः। प्रसङ्गमात्रस्यासाधकत्वात् उपकार्यं मानमाह—**तदयमिति**। शरीरेतरत्वात्। शरीरतदवयवेतरत्वात्। अवयवत्वमपि साक्षात्परम्परासाधारणं तेन न व्यभिचारः। न्यायनये 25
साक्षाच्चेतनानधिष्ठितत्वस्य अप्रसिद्ध्या केवलव्यतिरेकिणमभ्युपेत्य भावात्मकव्यतिरेकयोर्व्यतिरेकमाह—**तत्पुनरिति**। न तदेवं न शरीरतदवयवेतरवत् शरीरतदवयवान्यतरवदिति यावत्। **न परम्परयेति**। न शरीरव्यापारानधीनव्यापाराश्रयत्वे सति व्यापाराश्रयाः, शरीरव्यापाराजन्यव्यापारवत्त्वादित्यर्थः। सत्प्रतिपक्षैक्यस्योपादेयत्वे कार्य-

पक्षकानुमानप्रतिरोधतया तादृगाह—**एवमिति**। चेतनानधिष्ठितहेतुकं चेतनाधिष्ठिताहेतुकं शरीरेतरहेतुकत्वात्। शरीराप्रयोजकत्वे सति शरीरसमवेतत्वादित्यर्थः। सत्यन्तेन घटादौ विशेष्येण चेष्टायां व्यभिचारनिरासः। यथाश्रुते सहेतुकतया तस्यैव शरीरेतर-हेतुकत्वेन व्यभिचारात्। शरीरहेतुकान्यपरत्वे चोक्तव्यर्थविशेषणताया अनुद्धार इति
5 ध्येयम्। शरीरेतरहेतुकत्वात्। शरीरभेदव्याप्यकारणताकत्वादित्यर्थः इति केचित्। अतिपीडाकारणकत्वेन कारणत्वेन कार्यत्वस्य सहेतुकत्वनियमादिति भावः। तेषां पटकारणानां परमेश्वरेण भवदभ्युपगतेन तस्य भगवतः न व्याप्नोति न विषयीकरोति। तेषां कारणानधीनतया सर्वविषयत्वोपगमादिति भावः। तदर्थमेव अधिष्ठानार्थमेव। तथा सति अधिष्ठानानामपि अधिष्ठानान्तरापेक्षायामविशेषात्। ईश्वराधिष्ठिते कुविन्दा-
10 धिष्ठानवत् तदुभयाधिष्ठितानां निष्कर्षः। वस्तुतस्तु शरीराहेतुकत्वस्याखण्डाभावतया न व्यर्थताशङ्का। साक्षादित्याद्युक्ततत्कार्यव्याप्तिग्राहकस्य सत्वान्न तत्रोपाध्यन्तरशङ्केति ध्येयम्। सिद्धसाधनमभिधातुं भूमिकां रचयति—**अपि चेति**। अधिष्ठानं किमित्य-पेक्षितमित्यत आह—**तेषामिति**। सर्वमचेतनं हीति नियमादित्यर्थः। स्वतः विना चेतनाधिष्ठानमप्रवृत्तेरधिष्ठानान्तरं स्यादित्यर्थः। दृष्टान्तस्य घटादेः साध्यविकलत्वात्
15 कर्तृजन्यत्वानिश्चितत्वात्। तथा च न व्याप्तिग्रह इति भावः।

ननु दण्डादिवत् कुविन्दादिरप्यन्वयव्यतिरेकाद्गृहीतहेतुभावोऽस्तु इत्याशंक्याह— **न चेति**। एवं तर्हीति। दण्डवत् कुविन्द इति क्षितौ तत्कर्तृत्वाभावेऽपि न क्षतिरिति भावः। तथैव हेतुकमित्यस्यैव साध्यत्वे कार्यत्वेन बुद्धिमत् पूर्वकत्वे[नापेक्षणीयं शरीर निवृत्तावप्यकार्या बुद्धिर्न निवर्तते। तद्वत् कारणत्वेन] नित्यप्रयत्नपूर्वकत्वमुपाधिमाह—
20 **किं चेति**। अत्र रागजन्यतावच्छेदकजातिविशेषोऽनित्यप्रयत्नत्वं नातो व्यावर्त्या-प्रसिद्ध्यादि। ननु यथा कारणत्वेनापेक्षणीयशरीरनिवृत्तावपि अकार्या बुद्धिर्न निवर्त्तते, तद्वत् कारणत्वेनापेक्षणीयानित्यप्रयत्ननिवृत्तावनित्यबुद्धिनिवृत्तावपि नित्या बुद्धिर्न निवर्त्स्यत इत्यत्राह—**न हीति**। शरीरवत् शरीरमिव। तथा च स्पर्शनिवृत्त्या नित्यानित्यसाधारणरूपनिवृत्तिवत् स्वभावनियमबलात् नित्यानित्यसाधारणं बुद्धि-
25 सामान्यमेव तन्निवृत्त्या निवर्तत इति भावः। **न च ततोऽन्यदिति**। प्रतिवाद्यभ्युगम-विषयस्यैव तर्के आपादकत्वम् इष्टापत्तेः प्रागेव स्फुर्तेरिति भावः। इन्द्रियाश्रयत्वं ज्ञाननिरूपितमनःसंयोगनिष्ठकारताया अवच्छेदकतासम्बन्धेनावच्छेदकत्वं शरीरावच्छे-देन तत्संयोगस्यैव तद्धेतुत्वादिति। **तदवच्छिन्नत्वेति**। यद्यपि तदवच्छेदेन प्रयत्नोत्पत्तो तदवच्छेदेनात्ममनोयोग एव हेतुः। यदवच्छेदेन प्रयत्नस्तदवच्छेदेन चेष्टापत्तेर्ज्ञानस्य

तु शरीरावच्छिन्नत्वे न मानं। तथापि तावतापि सिद्धेरनपायात् इत्थमभिधानम्। नायं विधिः नेन्द्रियसंयोगावच्छेदकत्वेनोपयोगः। तथा चाप्रयोजकत्वात् नापाद्यापादकयोर्व्याप्तिग्रह इति भावः। अर्थाश्रयत्वं भोगावच्छेदकत्वमत एवाप्रयोजकत्वेन मूलशैथिल्यादेव भोगरूपमलौकिकप्रत्यासत्त्यजन्याथ सुखदुःखान्यतरसाक्षात्काररिरूपमायतनमवच्छेदकं तस्य नित्यज्ञानस्य कारणेऽपीति तथा च कारणसामान्यापेक्षैव नास्ति किमायतनरूप- 5
तद्विशेषापेक्षेति भावः। तथा च साक्षात्प्रयत्नाधिष्ठितत्वमुपाधेरिति सिद्धम्। तत्र साधनव्यापकत्वमाशंक्याह—न चेति। अत्र भोगो विषयीभूय अथ सुखदुःखान्यतरसाक्षात्कारदोषानुपपत्तौ शरीराहंवासनानुत्पत्तौ। प्रसङ्गे दोषमुक्त्वा—विपर्यये दोषमाहः—
तस्मादिति। परमाणवो न साक्षात्प्रयत्नाधिष्ठिताः। शरीरेतरत्वादित्यस्य साक्षात्प्रयत्ना-
धिष्ठितेतरत्वात् न साक्षात्प्रयत्नाधिष्ठिताः तत्र प्रयुक्तव्यापारवन्तः। साक्षात्प्रयत्नाधिष्ठितत्व- 10
प्रयुक्तव्यापारवद्भिन्नत्वादिति साध्याविशिष्टत्वमित्यर्थः। अनिन्द्रियाश्रयत्वात् इन्द्रियाश्रयान्यात्वात्। अभोगायतनत्वात् भोगायतनान्यत्वात्। इदं साक्षात्प्रयत्नाधिष्ठितवत्त्वे साध्ये परम्परया तदधिष्ठितत्व आह—स्वव्यापारे तदनपेक्षत्वात् इति। तत्पदमिन्द्रियाश्रयभोगायतनपरम्। अन्यथासिद्धमप्रयोजकम्। अप्रयोजकत्वमेवाह—अभोगेत्यादि। स्पर्शवदिति।
तन्नोदनाधीनव्यापारवत्त्वादित्यर्थः। तेन नासिद्धिः। एतच्च शरीरव्यापारजत्वव्यापकम्, 15
स्पर्शवत्त्वे परन्नोदनाधीनव्यापारवत्त्वमित्यभिप्रायेणाभिहितम्। अतिपीडया सत्प्रतिपक्षीकृतया दोषमाह—तथा चेति। न साक्षात्प्रयत्नाधिष्ठितहेतुकं शरीरहेतुकेतरत्वादित्यस्य साक्षात्प्रयत्नाधिष्ठितजन्येतरत्वादित्यत्र साध्यवैशिष्ट्यम्। इन्द्रियेति। इन्द्रियाश्रयजन्येतरत्वादित्यर्थः। एवमग्रेऽपि। साध्यं विकल्प्य दूषयति। अप्रसिद्धेति। साध्यमप्रसिद्धमित्यर्थः।
न हीति। न्यायनये निखिलस्यैव भगवत्प्रयत्नाधिष्ठितत्वादिति भावः। गगनादेरपीति। 20
यद्यपि तेनाधिष्ठितपूर्वकत्वं प्रतिशरीरहेतुकत्वस्य व्यापकत्वग्रहात् व्यतिरेकिमुद्रया साध्यसिद्धौ किं सपक्षव्यावृत्त्या सत्प्रतिपक्षे च सत्प्रतिपक्षान्तरं न दोषाय शरीरभेदव्याप्यकरणताकत्वस्य ततो व्यावृत्तावपि न शरीरहेतुकत्वाभावस्य ततो व्यावृत्तिरपि, तथापि जन्यतावच्छेदेन प्रयत्नजन्यताग्रहेण स्थापनाया अधिकरणत्वेन नाणुना तस्य सत्प्रतिपक्षत्वमि-
त्याखण्डलतात्पर्यार्थोऽवसेयः। कारकतया कारकविषयत्वेन। ननु चेतनमेव किञ्चित्तथा 25
कारणमस्तु स्वनिष्ठज्ञानजननादिद्वारा तथात्वस्य भवद्भिरित्यनुपगमादित्यत्राह—
किन्त्विति। तथा च स्वनिष्ठज्ञानजन्यतयैव कारकत्वं तदेव विवक्षितं, न तु स्वनिष्ठतज्जननद्वारेति भावः। नन्वधिष्ठातृतया यत्कारकं साधयितुमुपक्रान्तं त्वया चान्यदेव निरुक्तमित्यर्थान्तरमित्यत्राह—तदेव चेति। ईश्वरेण कुविन्द
उद्धार्यते। कुविन्देन वा घटादावीश्वरस्तथा क्रियते—अनवस्थेति। द्विकर्तृकघटदृष्टान्तेन 30

एककुलालकर्तृके द्विकर्तृकत्वसाधने दृष्टान्ते तावता एकैककर्तृबुद्ध्या तद्बलेनानन्तकर्तृकत्वं सर्वत्र प्रसार्यत इत्यर्थः। विषयं प्रति नियामककारणनियमाभावात् सर्वविषयत्वे सिद्धे तदधिष्ठानार्थम् कुविन्दाद्यधिष्ठितनेमाद्यधिष्ठानार्थं तस्मिन् द्विकर्तृकत्वे सहचारदर्शनमात्रं चाप्रयोकत्वादिति भावः। किमधितिष्ठति इत्यत्र किं शब्दोऽव्ययः। तस्य केन
5 हेतुनाधितिष्ठति कस्मै अधितिष्ठति इति चार्थं[तस्मिन् द्विकर्तृकत्वे] विकल्प्य क्रमेण दूषयति—**स्वहेत्वधीनत्वात्**। स्वाधिष्ठानस्य यो हेतुस्तदधीनत्वात्। शङ्कते **एकेति**। कुविन्दस्तस्यैवान्वयव्यतिरेकेण सिद्धकारणभावत्वात् संभेदे क्लृप्तकारणाभावान्मिलनेऽन्यतरस्यान्यतरेण वैयर्थ्यं तत्र समुचितं दृष्टान्तमाह—**परिमाणं प्रतीति**। तत्र प्रत्येकजन्यापेक्षया समुदितजन्ये इहापि एककर्तृकक्षित्याद्यपेक्षया पटादौ खण्डपटस्यापि ईश्वरमात्रकर्तृ-
10 कत्वोपगमे तु ततोऽपि द्विकर्तृकपटे किंचित् वैजात्यं भविष्यति, कारणोन्नेयमिति भावः।

नन्‍ु सर्गाद्यपटवदिदानीमपि भगवान् किमिति पटं न विधत्ते इत्यत्राह—**न चेति**। **तदर्थेति**। यस्य तादृशं कर्म तदनुसारेण तस्य भोगजननमात्रार्थत्वम् ऐश्वर्यस्य राजादौ तथा दर्शनादिति भावः। उपादानस्य बुद्धिविषयत्वे साध्येऽनित्यप्रयत्नविषयत्वमुपाधिरित्युक्तं दूषयति—**यत्त्विति**। **उदासीनस्येति**। तथा च साध्याव्यापकत्वमिति
15 भावः। पुनरपि तद्विशिनष्टि हेतुभूते **त्विति**। स्वविषयजन्यहेतुभूतेत्यर्थः। **कारकेति**। सम्पातायातं न च संस्कारः स्वविषयजन्य इति नोक्तव्यभिचार इति भावः। **दुःखेति**। संस्कारजनकात्मबुद्धिमादायापि न व्यभिचारो बोध्यः। केनचिन्निमित्तेन विषयस्वाभाव्यादिना सुखादिविषयकृतिविरहेऽपि चिकीर्षायास्तद्धेतोर्बुद्धेश्च संभवादिति पुनर्विशिनष्टि—**अनपेक्षेति**। कृतिसामग्रीप्रविष्टचिकीर्षाफलोपधायिकाबुद्धिस्तद्व्याप्येत्यर्थः। तर्हि अनित्य-
20 प्रयत्नव्यावृत्तावपि न बुद्धिमात्रं क्षित्याद्युपादाने निवर्तते तथा च न प्रकृतक्षतिरिति भावः। एतदेव प्रपंचयति। **तथा चेति**। अनित्यप्रयत्नहेतुकत्वप्रयुक्तं तदन्वयव्यतिरेकानुविहितान्वयव्यतिरेकन्तत्र बुद्धिमत्पूर्वकत्वसामान्ये तस्यानित्यप्रयत्नपूर्वकत्वस्याप्रयोजकत्वात् अव्यापकत्वात्। न चाव्यापकनिवृत्त्या वृत्तिमदव्याप्यं निवर्तत इति भावः। **सकर्तृकमिति**। साध्ये क्षित्याद्युपादानेषु विषयतासम्बन्धेन प्रयत्नेन साध्यप्रधानता च तस्य साध्यतावच्छेदक-
25 वैशिष्ट्यमनित्यप्रयत्नपूर्वकत्वस्याप्रयोजकत्वादुपाधित्वशंकापि न तत्रैवेति कृतित्वस्य चिकीर्षाजन्यतावच्छेदकजात्यतिरिक्तवृत्तित्वग्रहे साध्याव्यापकत्वं स्फुटमेव तदग्रहे तु साध्यतावच्छेदकस्यैवोपाधितावच्छेदकम्। न च तेन व्यभिचाराद्युन्नयनं साध्याविशिष्टत्वादिति भावः।

नन्‍ु यथा विनापि शरीरं नित्यस्य बुद्ध्यादेः संभवात् न भगवति शरीरस्वीकारस्तथापि विना बुद्धिचिकीर्षे नित्यप्रयत्नसंभवात् न तत्र तयोः संभव इति शङ्कां निरस्यति—

एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः। बुद्धिगतेत्यत्र बुद्धिपदं बुद्ध्यादित्रयपरं बुद्धिसम्बन्ध इत्यत्र बुद्धिपदं चिकीर्षापरम्। यदि प्रयत्नेन न बुद्धिं साधयामस्तदा नित्यं प्रयत्नो विनैव बुद्धिं स्यादिति शरीरवदप्रयोजकत्वं शंकेत। किन्तु कार्यत्वावच्छेदेन बुद्धिचिकीर्षयोरपि हेतुत्वात्। कार्यत्वेन हेतुना प्रयत्नवत्तयोरपि सिद्धिरित्याह—**यो हीत्यादि**। कदाचि-दित्यनेन प्रयत्नविषयतानिर्वाहाय प्रयत्नेनापि बुद्धिसाधने न दोष इति सूचितम्। कलित- 5
शक्ति निश्चितकारणभावम्। करणानां करणादीनां प्रयोक्तारं तद्गोचरबुद्ध्यादिमन्तं तत्र तादृशि साध्ये तस्य कार्यत्वस्य। ननु बुद्धिः साक्षान्न चेष्टादौ हेतुः। चिकीर्षया प्रयत्नक्षणे तस्या नाशात्। किन्तु चिकीर्षादिद्वारा। न च नित्यप्रयत्नस्य तथात्वसंभवः। न च विनापि द्वारं हेतुभाववतो द्वारता इत्यनुशयेन युक्त्यन्तरमाह—**न चेति**। न वेत्यर्थः। आत्मलाभार्थं स्वोत्पत्तये विषयलाभार्थं क्षित्याद्युपादानेन सम्बन्धार्थं स्वस्य विषयता- 10
संपत्त्यर्थमिति यावत्। अपेक्षणात्। प्रयत्नेन बुद्धेः स्वारसिकविषयतया एव ज्ञानत्वजाति-व्यवस्थापकत्वादिति भावः। अत्र वदन्ति—इच्छाकृत्योरपि स्वाभाविकत्वेऽविषयता। न च जनकज्ञानविषयतयैव तयोर्विषयितेति वाच्यम्, समूहालम्बनज्ञानजन्यैकमात्रविषय-केच्छादेरपि समूहविषयकत्वापत्तेः। न च यद्विषयकज्ञानत्वेन यदिच्छादौ जनकत्वं तस्य तज्जन्यत्वमेव तत्त्वमिति वाच्यम्। ईश्वरेच्छाप्रयत्नयोरविषयत्वापत्तेः इष्टसाधनत्वकृतिसाध्य- 15
त्वयोरिच्छाप्रयत्नविषयतापत्तेः। यद्विषयकज्ञानस्य यद्विषयकसमानाधिकरणेच्छासमये नियमतः सत्त्वं तद्विषयकत्वमेव तस्या विषयता यादृशेच्छायाश्च यद्विषयकप्रयत्नसमये नियमतस्तथात्वं तस्यास्तत्त्वमेव प्रयत्नस्य तत्त्वमिति परास्तम्। विनश्यदवस्थज्ञानेच्छा-जन्येच्छाप्रयत्नयोर्निविषयत्वापत्तेः। न च तादृशाव्यवहितपूर्वसमये ज्ञानेच्छयोः सत्त्वं वाच्यम्। अव्यवहितपूर्वत्वञ्च तदधिकरणसमयप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे 20
सति तदधिकरणसमयप्रागभावाधिकरणत्वं महाप्रलयाव्यवहितपूर्वोत्पन्नश्च समयः ईश्वरेच्छाप्रयत्नयोरव्यवहितपूर्वं इति वाच्यम्। इष्टसाधनत्वादेरपि इच्छादिविषयत्वा-पत्तेरित्यावेदितत्वात्। एतदपेक्षया लाघवात् तत्र स्वाभाविकविषयिताया एव कल्पयितु-मुचितत्वाच्चेति। **तत इति**। अत्र प्रयत्नबुद्ध्योः समवायेन विषयतासम्बन्धेन च व्याप्यव्यापकभावः। अन्यत्र आत्मतत्त्वविवेके किरणावल्याम्। प्रयत्ने साध्येऽनित्यबुद्धिपूर्व- 25
कत्वस्योपाधित्वमाशङ्क्य निषेधति। **कार्येति**। तथा च साध्याव्यापकतया नोपाधिरिति भावः। साधनव्यापकतया अनुपाधित्वं निरस्यति—**नित्ये प्रयत्न इति** नानित्येत्यनुवादेन साध्येनाव्यापकत्वं स्फुटतयाऽनित्यबुद्ध्या तस्य नित्यप्रयत्नस्य तदसंभवेनानित्यबुद्ध्यधीन-विषयत्वासंभवेन देहाद्युपादानगोचरकृत्यभावेन देहानुत्पत्तौ सर्वदैव बुद्धेरनुत्पत्तेर्न तया

तत्संभवति । अनित्यप्रयत्नाजन्यत्वहेतुकं सत्प्रतिपक्षमाशङ्क्य निराकरोति । **शरीरेति** व्यर्थविशेषणत्वं तद्वदत्रापि इति भावः । न च चिकीर्षाजन्यतावच्छेदकजातिरेवानित्य-प्रयत्नत्वेनोपलक्षितेति वाच्यम् । तस्याः कृतित्वन्यूनवृत्तित्वग्रहे व्यभिचारस्य स्फुटत्वात् तदग्रहे च साध्याविशिष्टत्वमिति ध्येयम् । संक्षेप इति ॥ २ ॥

5 **तर्काभासतयाऽन्येषां तर्काशुद्धिरदूषणम् ।**
**अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम् ॥ ३ ॥**

कारकव्यापारविगमे हि कार्यानुत्पत्तिप्रसङ्गः । चेतनाचेतनव्यापारयोर्हेतुफ-लभावावधारणात्कारणान्तराभावे इव कर्त्रभावे कार्यानुत्पत्तिप्रसङ्गः, कर्त्तुरपि कारणत्वात् ।

10 यस्त्वाह—प्रत्यक्षानुपलम्भाभ्यां तदुत्पत्तिनिश्चयो दृश्ययोरेव, न त्वदृश्ययोः । प्रत्यक्षस्यानुपलम्भस्य च तावान्मात्रविधिनिषेधसमर्थत्वात्, धूमाग्निवत्, कम्प-मारुतवच्च । न हि धूमः कार्योऽनलस्येति उदयँस्यापि, न हि शाखाकम्पो मात-रिश्वन इति स्तिमितस्यापि स्यात्, किन्तु भौमस्पृश्ययोरेव । तथेहापि शरीरवत एव कारणत्वमवगन्तुमुचितं, नान्यस्येति ।

15 तदसत् । प्रत्यक्षाऽनुपलम्भौ हि दृश्यविषयावुपायस्तदुत्पत्तिनिश्चये, न तु दृश्यतैव तत्रोपेया । किन्नाम दृश्याश्रितं सामान्यद्वयम् । तदालीढस्य हि तदुत्पत्ति-निश्चये दृश्यमदृश्यं वा सर्वमेव तज्जातीयं तदुत्पत्तिमत्तया निश्चितं भवति । यथा स्पर्शरूपरसगन्धानामुत्तरोत्तरनिमित्ततायां तव, अस्माकञ्चातीन्द्रियसमवायादिसिद्धौ । न चेदेवमुदाहृतयोरेव दहनपवनयोरालोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोकनिर-

20 स्तरूपयोः सिद्धिर्यदुदर्यस्तिमितसाधारणी सिद्धिः स्यादिति । तद्वद्वेदप्येवं यदि शरीरादिकं विना कार्यमिव भौमं स्पर्शवद्वेगवन्तञ्च विनाऽग्निमात्रात् पवनमात्राद्वा धूमकम्पौ स्याताम्, न त्वेवम् । नचैवं चेतनव्यभिचारोऽपि शक्याऽभिधान इत्यलं बालप्रलापानां समाधानैः ।

तदुत्पत्तेरसिद्धावपि तत्तदुपाधिविधूननेन स्वाभाविकत्वस्थितौ यदि कर्त्तारमति-

25 पत्य कार्यं स्यात् स्वभावमेवातिपतेदिति कार्यविलोपप्रसङ्ग इति । एतच्च सर्वमात्म-तत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते । एवञ्च सिद्धे प्रतिबन्धे न प्रति-बन्ध्यादेः क्षुद्रोपद्रवस्यावकाशः । प्रतिबन्धसिद्धाविष्टापादनात् । तदसिद्धौ तत एव तत्सिद्धेरप्रसङ्गादिति ।

ननु तस्य सर्वदा सर्वत्राविशेषे कार्यस्य सर्वदोत्पत्तिप्रसङ्ग इति निरपेक्षेश्वरपक्षे

30 दोषः, सापेक्षे उपेक्षणीय एवास्त्विति बालस्य प्रदीपकलिकाक्रीडयैव नगरदाहः ।

तन्न। स्थेमभाजो जगत एवाकारणत्वप्रसङ्गात्। ॐमिति ब्रुवतः सौगतस्य दत्तमुत्तरं प्राक्।

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥

तमिममर्थमागमः संवदति, विसंवदति तु परेषां विचारम्— 5

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥

अत्र प्रथमेन सर्वज्ञत्वं, चक्षुषा दृष्टेरुपलक्षणात्। द्वितीयेन सर्ववक्तृत्वं, मुखेन वागुपलक्षणात्। तृतीयेन सर्वसहकारित्वं, बाहुना सहकारित्वोपलक्षणात्। चतुर्थेन व्यापकत्वं, पदा व्याप्तेरुपलक्षणात्। पञ्चमेन धर्माधर्मलक्षणप्रधानकारणत्वं, तौ हि 10 लोकयात्रावहनाद् बाहू। षष्ठेन परमाणुरूपप्रधानाधिष्ठेयत्वं, ते हि गतिशीलत्वात् पतत्रव्यपदेशाः पतन्तीति। सन्धमति, सञ्जनयन्निति च व्यवहितोपसर्गसम्बन्धः। तेन संयोजयति समुत्पादयन्नित्यर्थः। द्यावा इत्यूर्ध्वसप्तलोकोपलक्षणं, भूमीत्यधस्तात्, एक इत्यनादितेति। स्मृतिरपि—अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते—इत्यादि। एतेन ब्रह्मादिप्रतिपादका आगमा बोद्धव्याः॥ ३॥ 15

## आमोदः

### तर्काभासतयेति ॥३॥

अन्येषां वादिनाम् ईश्वरानुमाने तर्काशुद्धिर्दूषणम्। तद् यदि ईश्वरः कर्ता स्यात् शरीरी स्यादित्यादिप्रतिकूलतर्कपराघातरूपं तन्न दूषणं सिद्ध्यसिद्धिपराहतत्वादित्याह—तर्काभासतयेति। अन्येषां तर्काणामित्यपि केचित्। नन्वनुकूलतर्काभाव एव तर्कापरिशुद्धिरित्यत आह—अनुकूलस्त्विति। कर्ताऽपि कारणमेव, तदभावे क्षित्यादिकार्यं नोत्पद्येतेत्यर्थः। 20 एतदेव विवृणोति—कारकेति। ननु परमाणोर्दृष्टादेव कार्यमुत्पाद्यतामित्यत आह—चेतनेति। चेतनव्यापारस्य हेतोरचेतनव्यापारः फलमिति तेन विना न स्यादेवेति कार्यविलोपप्रसङ्ग इत्यर्थः। किञ्च यथा कार्यस्य कारणान्तरापेक्षा तथा कर्त्रपेक्षाप्यावश्यकीत्याह—कारणन्तरेति। सौगतमतमास्कन्दितुमुपन्यस्यति—यस्त्विति प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरे- 25 काभ्याम्। तदयमर्थः—अदृश्यायाः कृतेर्व्यतिरेको दुर्ग्रह इति तत्साधारण्येन व्याप्तिग्रहोऽप्यशक्यः, अन्यथा वह्निसामान्यव्याप्तिबलाज्जाठर्यादिवह्निर्धूमात् सिद्ध्येत। सिध्येच्च—शाखाकम्पात् अयोग्यस्तिमितो वायुरिति। भौमस्पृश्ययोरिति। भौमो वह्निविशेषः स्पृश्यः प्रत्यक्षस्पर्शाश्रयो वायुः। शरीरवदिति।

तथा च व्यापकांशस्य कृते दृश्यत्वमुपपद्यत इत्यर्थः। शरीरिकृतेर्घटादिकार्यविशेषेऽन्वयव्यतिरेकदर्शनात् कृतिसामान्यकार्यसामान्ययोरपि बाधकं विना व्याप्तिग्रहः सम्भवत्येवेत्याह––प्रत्यक्षेति। तदालीढस्य तदाक्रान्तस्य। यथेति। दृश्यादृश्यस्पर्शस्य दृश्यादृश्यरूपकारणतायां प्रत्यक्षानुपलम्भगोचर
5 दृश्यमात्रस्पर्शरूपयोस्तदुत्पत्तिनिश्चयव्यवस्थापनीयता दुर्दर्शने (?) इत्यर्थः। एवमग्रेऽपि। कार्यद्रव्यमुपादानवदिति व्याप्त्याऽस्मन्मते द्व्यणुकपरमाणुसिद्धिरित्यर्थः। सालोकस्य वह्नेः पाकं प्रति कारणता प्रत्यक्षानुपलम्भाभ्यां गृह्यत इत्यत्रादिपाकात् निरालोकजाठर्यवह्निर्न सिद्ध्येत्, दण्डादेरेव रूपवतश्चक्रादिकम्पकारणता गृहीता इति शाखाकम्पान्नीरूपो वायुरपि न
10 सिद्ध्येदित्याह––नचेदेवमित्यादि। उदाहृतयोरुक्तयोरालोकरूपवतोस्तदुत्पत्तिनिश्चये कथमनालोकनिरस्तरूपयोरुक्तयोर्दहनपवनयोः सिद्धिरित्यन्वयः। नन्वेवं धूमादुदर्यवह्निसिद्धिः, कम्पाच्च स्तिमितवायुसिद्धिः स्यादित्युक्तमित्याह––यत्त्विति। तद्भवेनेति। शरीरादिकं विना क्षित्यादिकार्यं यथोपलभ्यते तथा भौमेन्धनं विना धूमः, स्पर्शवदवेगवद्वायुं विनाऽपि कम्प
15 उपलभ्येत, तदा तत् साधारणी सिद्धिर्भवेदित्यर्थः। न चैवमिति। चेतनं विनापि कार्यमित्यभिधातुमशक्यमित्यर्थः! अभ्युपेत्याह––तदुत्पत्तेरिति। तथा च स्वाभाविकसम्बन्धबलादेव कार्यत्वाद्धेतोः कर्ता सेत्स्यतीत्यर्थः। उपाधिविधूननप्रकारस्याप्रपञ्चने हेतुमाह––एतच्चेति। नन्वेवं शशेऽपि शृङ्गं पशुत्वात् सिद्ध्येत् योग्यबाधेऽयोग्यमपि सिद्ध्येदित्याह––एवञ्चेति। व्याप्ति-
20 रेवात्र नास्ति। शृङ्गस्य योग्यसंस्थाननियमाद्बाध एवात्रेत्यर्थः। अपेक्षणीयान्तरेणान्यथासिद्धौ दण्डादेरप्यकारणत्वं स्यादित्याह––स्थेमेति स्थेमा स्थैर्य्यं, न तु स्थिरस्याकारणत्वं बौद्ध(?)मतमेवेत्याह––ओमितीति। प्रागिति। प्रथमस्तबकेन तूपनिषदादिसिद्धेऽपीश्वरे किमुक्तानुमानेन, किं वा तर्कोपवर्णनेनेत्यत आह आर्षमिति। न्यायानुसरणमन्तरेणाश्रद्धामलक्षालनमेव न
25 भवतीत्यर्थः। तमिममिति। नित्यसर्वज्ञकर्तृत्वं क्षित्यादेरित्यर्थमित्यर्थः। प्रथमेनेति। विश्वतश्चक्षुरित्यनेन कथमेवमत आह––चक्षुषेति। सर्ववक्तृत्वं सहस्रशाखवेदप्रणेतृत्वं, नायमर्थः पदस्य त(?)इत्यत आह––मुखेनेति। सर्वसहकारित्वं सर्वकारणसहकारित्वम्। ननु नायं पदार्थ इत्यर्थं आह––बाहुपदेनेति। बाहुः पुरुषस्य स्वकृत्ये सहकारीति लक्षणया तत्प्रयोगः।

चतुर्थंन विश्वतः पादित्यनेन व्यापकत्वं सकलमूर्तद्रव्यसंयोगित्वम् । ननु नायम् पदार्थं इत्यत आह—पदेति । बाहुपदेन धर्माधर्माभिधानाय यौगिकमर्थमाह—तौ हीति । षष्ठेन पतत्रैरित्यनेन पतन्तीति पतत्राः परमाणवोऽभिमताः । व्यवहितेति । छन्दसि परे व्यवहिताश्चेति व्यवहितोपसर्गानुशासनं पाणिनेः । ननु ब्रह्मणो विश्वकर्तृत्वं श्रूयते, न त्वीश्वरस्येत्यत आह—एतेनेति । ईश्वरस्य जगत्कर्तृत्वसाधनेनेत्यर्थः । ब्रह्मादीनामधिकारिपुरुषत्वेन ईश्वरस्यैव प्रयोजककर्तृत्वादिति भावः ॥३॥

### बोधनी

अथ कार्यत्वहेतोः प्रतिबन्धसिद्धये प्रतिकूलतर्कराहित्यमनुकूलतर्कसाहित्यं चाह—तर्केति । अत्र पराभिमतानां तर्काणां यथायथमङ्गपञ्चकान्यतमहीनत्वेनाभास[1]त्वान्न प्रतिकूलतर्कपरा[2]हतिर्व्याप्तिविषयसंशयद्वारानुमानं दूषयति—अनुकूलतर्क[3]स्तु कार्यानुत्पत्तिप्रसङ्गात्मकस्तर्क उपाधितः स्वरूपतश्च व्यभिचारशङ्कापादनपटीयान् प्रतिबन्धनिश्चयद्वारेण प्रमाणमनुगृह्णन् विभू[4]षयतीति तत्रानुकूल[5]तर्कं कार्यलोपं तावद्विवृणोति—**कारकेति** । यद्युर्वीदूर्वादेः[6] कर्त्ता[7] न स्यात्, ततस्तत्कारकाणि न व्याप्रियेरन्निति कार्योत्पत्तिः स्यादिति [न] कर्त्तृभावे कारकव्यापारविगम इत्यत्राह—**चेतनेति** । अन्वयव्यतिरेकाभ्यां चेतनव्यापारफलत्वेनाचेतनव्यापारस्यावधारणादिति, अन्यथा कार्यलोपप्रसङ्गमाह[8]—**कारणान्तरेति** । पूर्वं कर्त्तुः[9] कारकत्वमङ्गीकृत्योक्तम्, इदानीं तु निमित्तकारणत्वमिति विवेकः किमस्ति वानयोर्विशेषः, बाढं, क्रियासंबन्धित्वं कारकत्वं कार्यं प्रति योग्यत्वं कारणत्वं हेतुत्वमिति यावत् । अत एव ध्रुवमपायेऽपादानमित्यत्र कारके पञ्चमी भीत्रार्थानां भयहेतुरिति हेताविति कर्त्तुरपि कारणत्वादित्यत्र बौद्धमतमुत्थापयति—**यस्त्विति** । अस्मिन् सतीदं भवतीति प्रत्यक्षद्वयमसति च न भवति सति चान्यस्मिन्न भवतीत्यत्रानुपलम्भय[न्] हि कार्यकारणभावनिश्चयहेतुरिति स च प्रत्यक्षयोग्ययोरेव न त्वयोग्ययोरपि प्रत्यक्षस्य च योग्यतामात्रसिद्धौ[10] सामर्थ्यादनुपलम्भस्य च तन्मात्रनिषेधसामर्थ्यादिति । तत्रोदाहरणमाह—**धूमाग्निवदिति** । तदेव विशदयति—**क हीति** [कम्पेति] तद्धि भौमस्पृश्ययोरेव दृश्यत्वादिति भावः । अस्तु भौमस्पृश्ययोरेव तदुत्पत्तिनिश्चयः, ततः

---

१ क. आभासकत्वा° । २ ख. प्रतिहृति° । ३ ख. अनुकूलस्तु । ४ ख. विभूषतीति । ५ क. °लं° । ६ क. यद्युर्व्यादेः । ७ क. कर्तनस्याका° । ८ क. ततः इत्यारभ्य अन्यथा कार्य° इत्येतत्पर्यन्तं नास्ति । ९ क. पाठो नास्ति । १० क. विधौ ।

किमित्यत्राह—**तथेहापीति**। शरीरवत् एव दृश्यत्वात्तदसदिति[1] प्रत्यक्षानुपलम्भयोः प्रवृत्तिमात्रयोगिनी पश्यता ताभ्यामेव तदुत्पत्तिनिश्चय इति तथापि दृश्यतामेवोपाधीकृत्य ताभ्यां तदुत्पत्तिर्निश्चेतव्या, तत्र दृश्यकारणमेवेत्यत्राह—**न तु दृश्यते वेति**। तर्हि किं नाम तयोरुपाय इति पृच्छति—**किं नामेति**। व्यक्तीनामानन्त्यव्यभिचाराभ्यामनुपायत्वाद्दृश्ययोः कार्यकारणयोराश्रितं सामान्यद्वयमित्याह—**तदाश्रितमिति**। किमेतावतापि विवक्षितं सिध्येत्, ओमित्याह—**तदालीढस्येति**। न केवलमेतदस्माकं न चात्रैव चास्माकं च विषयान्तरेऽपीत्याह[2]—**यथेति**। बौद्धानां हि स्थिरस्य गुणिनो द्रव्यस्याभावात्, स्पर्शादय एव प्रतिक्षणभङ्गुराः सन्तः पूर्वपूर्व उत्तरोत्तरेषामारम्भक इति सिद्धान्तः। तेषु च प्रतिक्षणमनुपलभ्यमानभेदेषु प्रत्यक्षानुपक्षम्भयोरसंभवात् द्रव्यघटकपालादिपदार्थगतसामान्यद्वारेण निमित्तता निश्चेतव्या अस्माकं चातीन्द्रियस्य परमाण्वादेः समवायिकारणस्य सिद्धिर्दृश्याश्रित[3]सामान्यद्वारिकैवेति अदृश्यस्यापि कारणत्वाऽनङ्गीकारेऽनिष्टमाह—**न चेति**। आलोकशालीन एवानलस्य धूमं प्रति रूपवत एव दण्डादेः कम्पं प्रति च कारणत्वं साध्यादन्यत्र[4] सर्वत्र दृष्टम्, तत्र कथमनालोकस्य कुलदहनस्य[5] निरूपस्य च वायोर्धूमकम्पाभ्यां सिद्धिर्दहनपवनयोः कथमनालोकनिरस्तरूपयोरिति संबन्धः। यदि सामान्यालीढस्य कारणत्वनिश्चये तज्जातीयं सर्वमपि तथा निश्चितं भवेत्। तर्हि दहनपवनयोर्धूमकम्पं प्रति कारणत्वनिश्चये धूमकम्पाभ्यां सिध्यतोर्दहनपवनयोरुदर्यस्तिमितसाधारण्येन सिद्धिः स्यात्। तावपि ताभ्यां सिध्येयातामिति यावत्। तदेतदुपन्यस्य दूषयति—**यस्त्विति**। युक्तं तत्र भौमस्पृश्यव्यतिरेकेणान्यत्र धूमकम्पयोरनुपलम्भनात्[6] ताभ्यामेव तयोरविनाभावनिश्चयादुदर्यस्तिमितयोरसिद्धिर्नैवमत्र शरीरादिकं विना कार्यस्यानुपलम्भ इति शरीरादिमत एव कारणस्य कार्यत्वात्[7]सिद्धिरिति। न च दूर्वादौ शरीरव्यभिचारवच्चेतनव्यभिचारः शक्यो[8]ऽभिधातुं तेषां पक्षत्वादयोग्यत्वेन शरीरवत् बाधाभावाच्चेत्याशयेनाह—**न चैवमिति**। उपसंहरतीति—तदेवमशरीरस्यापि कारणत्वं प्रसाध्य कर्तुरभावे कार्यानुत्पत्तिप्रसङ्गः समर्थितः, सम्प्रति कर्तुः कारणत्वाभावेऽपि कर्त्रतिपाते कार्यलोपप्रसङ्ग इत्याह—**तदुत्पत्तेरिति**। कार्यकारणभावाभावेऽपि पूर्वोक्तमार्गेणोपाधिविधूननेन[9] कार्यत्वस्य स्वभावप्रतिबन्धे सिद्धे यदि कर्त्रतिपातः स्यात्, कार्यस्य स्वभाव एव हीयेत[10], तथा च निःस्व[11]भावस्यावस्थान[ा]योगात् कार्यमेव विलुप्येतेति किमिति

१ क. तदसतीति। २ क. तत्रैव तव चास्माकमपि विषयान्तरे। ३ ख. °साश्रि°। ४ क. कारणत्वमन्य°। ५ क. कुकूल°। ६ क. अनुपलम्भेन। ७ क. कार्यात्। ८ क. इति शक्यमभि। ९ क. °नने। १० क. एव भिधियते। ११ क. नित्यस्व°।

विस्तरेणायमर्थो नेह प्रतिपाद्यत इत्यत्राह—**एतच्चेति**। **एवमिति**। एवमनुकूलतर्केण कार्यस्य कर्तृमत्त्वेन स्वभावप्रतिबन्धसिद्धौ शशविषाणप्रतिबन्धादेर्नावकाशः पशुत्वादेर्विषाणव्याप्तिसिद्धौ शशविषाणादेरिष्टत्वात् तदसिद्धौ व्याप्त्यभावादेव शशविषाणित्वादेः साधकत्वस्य चातिप्रसङ्गादिति तदेतदाह—**एवं चेति**। अथ प्रतिकूलतर्कमाशङ्कते।

**नन्विति**। किमयमीश्वरो जीवादृष्टादिहेत्वन्तरनिरपेक्ष एव जगन्ति[2] निर्मिमीते, तत्सापेक्षो वा ? पूर्वत्र तस्य सर्वविषयनित्यज्ञानचिकीर्षाप्रयत्नवतो देशतः कालतो वा नियामकस्याभावात् तन्मात्रयत्नसिद्धेः कार्यस्य सर्वत्र सर्वदा प्रसङ्गः[3] उत्तरत्रापेक्षणीयमेवास्तु कारणमन्वयव्यतिरेकवत्त्वात् कृतमीश्वरेणेति तत्र निरपेक्षकक्षीकाराभावादेव तत्रोक्तदोषः प्रतिक्षिप्त इति मनसिकृत्वा सापेक्षपक्षोक्तदोषमुद्धरति—**इति त्विति**। यद्वा इति हेतौ त्विति परिहारो गूढः सत्यमेव निरपेक्ष ईश्वरे दोषः स्यात्, वयं तु तथानभ्युपगच्छाम इति भावः। तत्र शङ्कते—**सापेक्ष इति**। परिहरतीति—**बालस्येति**। यथा दीपोत्सवे दीपकलिकया क्रीडमानस्य बालस्यानवधानतः स्वाश्रयस्यैव करस्य दाहः सम्पद्यते, तथा कर्त्तुः कारणत्वं निराकर्त्तुमपेक्षणीयमेवास्त्विति वदतो **मीमांसकस्य** वालिश्यात् स्थिरस्य कारकचक्रस्य कारणत्वाभ्युपगमसिद्धान्तो व्याकुप्येत क्षणभङ्गश्च भावानामापद्येत, तथा हि—यथा **बौद्धः** क्षणभङ्गसाधनस्य करणाकरणविरुद्धधर्मसंसर्गस्य त्वयोक्तमपेक्षणीयसहकारिलाभालाभाभ्यामन्यथासिद्धिदोषमनेनैव न्यायेन परिहरेत्, तर्ह्यपेक्षणीयमेवास्तु कारणं कृतमपेक्षिणा स्थिरेणेति तदा मूकीभाव एव भवतः शरणमापद्येत, ततश्च स्थिरस्य कारणचक्रस्य कारणत्वासिद्धेः सहकारिवादभङ्गेन क्षणभङ्गवाद एवोत्तिष्ठते। अत्र जगच्छब्देन कारणमुच्यत उत मा भूत्तस्य स्थिरस्य जगतः कारणत्वं, भवतु क्षणभङ्ग इति इति प्रत्यवतिष्ठमानस्य सौगतस्य किमुत्तरं देयमिति चेत्तत्राह—**ओमिति**। प्रथमे परिच्छेदे। किञ्चिद्व्याचष्टे कर्त्तुरपलापे न नियोगमन्तरेण कारणान्तराणां प्रवृत्तेर्जगतोऽकारण[क]त्वं प्रसज्येत, स्थिरपक्ष एव कारणानामन्योऽन्यापेक्षसंभवात् स्थेमजगदुक्तमस्त्वकारणकत्वमेवेति चेत्तत्राह—**ओमिति**। सौगतस्येति। स्वभाववादिनोऽत्राभिधानमिति तद्दुष्टमनादेशिकत्वान्न्यायाननुगुण्याच्चेति आत्मीयन्यायस्यागमसंवादेन शुद्धिमितरस्य तद्विवादेनाशुद्धिं दर्शयिष्यन् आगमसंवादावश्यंभावं तावन्मनुवचनेनाह—**आर्षमिति**। स्वकीयपरकीययोरागमसंवादविसंवादौ स्त इत्यत्राह—**तमिति**। प्रागेव निर्णेयमिति शेषः। संवादिनमागममुदाहृत्य व्याचष्टे—**विश्वत इति**। कथं विश्वतश्चक्षु-

१ क. °रदृष्ट°। २ क. जगन्ति°। ३ क. सिद्धिप्रसङ्गः।

रित्यनेन सर्वज्ञत्वमुच्यत इत्यत्राह—चक्षुषेति । कार्ये कारणोपचारात् एवमुत्तरत्रापि पतन्तीति व्युत्पत्त्येति शेषः । व्यवहितोपसर्गसंबन्ध इति व्यवहिताश्चेति । सम ते धमतीति[?] बह्वृचानां पाठः । तत्र ध्मा शब्दाग्निसंयोगयोरिति संयोगविशेषवाचिनोऽपि ध्माशब्दस्य संयोगमात्रपरत्वं धमतिजायत्योर्विभक्तिव्यत्ययं च मन्वानः पतत्रे संयोगं 5 जनयन् समुत्पादयतीति वाक्यार्थ इत्याह—तेनेति । यजुर्वेदिनस्तु नमतीति अधीयते । तत्राप्ययमेवार्थः । अधस्तादिति । सप्तलोकोपलक्षणमित्यनुषङ्गः । इत्यस्मिन्नर्थे गीतासु भगवद्वचनमुदाहरति—अहमिति । ब्रह्मादिप्रतिपादकाः सदेव सोम्येदमग्र आसीदित्येवमादयः । सर्वेऽप्यागमाः सर्वज्ञं कर्त्तारं प्रतिपादयन्तस्तदभाववादं विसंवदन्त[1] एवेति । तदेवं निरस्तसमस्तान्तरायेण कार्यत्वलिङ्गेन सामान्यावलम्बवृत्तेन विश्वाधिष्ठातरि 10 सिद्धे विश्वदेवत्वं तस्य तत एव पक्षधर्मतासहायात्सिध्यति ।

कथं सर्वथानुपलब्धस्य विधानं कुत्रचिल्लब्धस्वरूपस्यान्यत्र विधानयोग्यत्वादिति चेत् । व्याप्तिपक्षधर्मताबलेन साधनसामान्यात् साध्यसामान्यविधानोपक्रान्तबलादेवापर्यवसानेन विशेषस्यापि सिद्धेः, को हि ब्रह्माण्डादिद्व्यणुकपर्यन्तकार्यपक्षीकरणे शब्दार्थः । सकर्तृकमिति यदि तत्कारणपरमाण्वादिज्ञानं तस्य न स्यात्, न हि तस्य कलितशक्ति- 15 कारकप्रयोक्तृत्वादन्यत् कर्तृत्वं नाम, नापि परमाण्वादिभ्योऽन्यत् कारणं यतः सामान्यविधिःसर्वज्ञमन्तरेण पर्यवस्येत्, अस्मदादिवदसौ सर्वज्ञः स तु नित्यसर्वज्ञ इति कुतः, पर्यवसानादेव, को हि सर्गादिकार्यपक्षीकरणे शब्दार्थो बुद्धिमद्धेतुकमिति यदि तत्काले शरीराद्यनपेक्षं ज्ञानं न स्यात्, स हि सकलकार्यविषयविरहोपलक्षितः कालः सोऽयमधिकरणसिद्धान्तन्यायः कुत्र सिद्धो(?) सर्वज्ञसिद्धेः, अत एव धूमादनुमानादिषु उपलब्ध- 20 चराणां विशेषाणां साध्यधर्मिण्यसंभवात्, तद्वति विशेषानुगुणः कश्चिददृष्ट पर एव विशेषोऽग्नित्वादिसामान्यायत्तसिद्ध इति शब्दो विसंम्बन्धग्रहणसमयानुभूतविशेषव्यतिरेकेण प्रमाणसमये समभिव्याहृतपदान्तरसंसर्गयोग्यमदृष्टचरमपि गोत्वादिसामान्याश्रयं विशेषं प्रतिपादयति—अत एव सामान्यसङ्गतिबलप्रवृत्तस्यापि पदस्य स्वर्गादिपदान्तरसमभिव्याहारेणालौकिकपूर्वकार्यस्याभिधानं केचिद्वर्णयन्ति, तदेवं सामान्यव्याप्तिरेवात्र पक्षधर्मता- 25 सहायमवाप्यापर्यवसानद्वारेण जागरूकेति कार्यत्वादेव कर्तृत्वनित्यसर्वज्ञसिद्धिर्गीर्वाणशापेनापि निरोद्धुं शक्येति कृतं विस्तरेण ॥३॥

---

१ क. विनिन्दन्तं ।

विवेकः

**तर्कैति**। अन्येषां प्रतिवादिनां यदीश्वरः कर्ता स्यात् शरीरी स्यादित्यादिभिस्तर्कैरत्रानुमाने या परिशुद्धिः प्रतिबन्धायोद्भावनं तन्न दूषणम्। तर्काणामाभासत्वात्। ते तर्का न वाधकाः, सिद्ध्यसिद्धिव्याघातेनाभासत्वादिति फलितम्। ननु प्रतिकूलतर्कैःपरिशुद्धिर्मास्तु अनुकूलतर्काभावादनुमानाप्रवृत्तिरेव तर्कापरिशुद्धिरस्त्वित्यत्राह **अनुकूल इति**। कार्यत्वावच्छेदेन कर्तृजन्यत्वात् कर्तुरभावे क्षित्यादिकं नोत्पद्येतेत्यनुकूलस्तर्को- 5 ऽत्रानुमानेऽस्त्येवेत्यर्थः।

द्वितीयकारिकां व्याकरोति—**कारकेति**। कारकाणाम् अचेतनानां चेतनाधिष्ठानं विना व्यापारविगमे फलानुकूलस्य व्यापारस्याजनने कार्यस्य द्व्यणुकादेरुत्पादाभावप्रसंगः। ननु परमाणव अत एव तं व्यापारं जनयेरन् अत्राह-—**चेतनेति**। **हेत्विति**। चेतनस्य यद्हेतुत्वमचेतनव्यापारस्य फलत्वमेतयोरवधारणादित्यर्थः। 10 प्रकारान्तरमाह—**कारणान्तरेति**। कार्यमात्रे समवायिकारणादेरिव कर्तुरपि कारणत्वावधारणात्। तेन विना न तत्स्यादित्यर्थः। प्रत्यक्षानुपलम्भाभ्यामन्वयव्यतिरेकसहचारग्रहसचिवप्रत्यक्षेण तद्व्युत्पत्तिनिश्चयः। हेतुहेतुमद्भावनिश्चयः। दृश्ययोरेव योग्ययोरेव एवार्थं स्पष्टयति। **न त्वदृश्ययोरिति**। कुत इत्यत्राह **प्रत्यक्षेति**। अन्वयव्यतिरेकग्रहाधीनकार्यकारणभावग्रहमूलकव्याप्तिग्रहस्य दृश्यमात्रविधिनिषेधसमर्थत्वात्। 15 यत्तद्ग्रहादृश्यस्यैव साध्यस्य सिद्धिः दृश्यतद्व्यावृत्त्यैव हेतोर्व्यावृत्तिरित्यर्थः। अत्र निदर्शनमाह—**धूमेति**। जाठरस्यापि वह्नेः धूमाद्विधिर्न वा तन्निषेधान्निषेधः मातरिश्वनः प्रत्यक्षस्पर्शाश्रयस्य च। न च स्तिमितस्यापि वायोरचलतोऽप्रत्यक्षस्पर्शस्यापि तेन कल्पेन विधिर्न वा निषेधात्। निषेधः ताभ्यां कीदृशयोर्विधिनिषेधावित्यत्राह। **किन्त्विति**। भौमो दाहकोऽग्निविशेषः स्पृश्यः प्रत्यक्षस्पर्शाश्रयः। वायोः प्रत्यक्षत्वे यथाश्रुतमेव 20 ज्यायः तथेहापीति। ततः शरीरवानेव सिद्धेः नाशरीरीति भावः। कार्यकारणयोः कार्यकारणताश्रयदृश्ययत्किंचिद्गोचरान्वयव्यतिरेकाभ्यां व्यभिचाराग्रहसहकारेण तयोर्ग्रहस्तदवच्छिन्नयोरेव कार्यकारणभावो। न च तत्र दृश्यत्वमपि प्रयोजकमित्याह—**तत्सदिति**। दृश्यविषयौ दृश्ययत्किंचित्विशेषगोचरौ। प्रत्यक्षानुपलम्भौ तु उपादानसहकारिणौ प्राप्य यदुत्पत्तिनिश्चयः। कार्यकारणभावग्रहः। तत्र न दृश्यतोपेयाःदृश्य- 25 योरेव कार्यकारणभाव इति नोपेयमित्यर्थः। तदानीं तदालीढस्य तदवच्छिन्नस्य तेन प्रकारेण निश्चय इति यावत्। तज्जातीयकम् कार्यकारणतावच्छेदकवत् तदुत्पत्ति-

मत्तया कार्यकारणभाववत्तया । **यथेति** । दृश्यस्पर्शेन दृश्यरूपरसगन्धानामन्वयव्यतिरेकाददृश्यस्पर्शसाधारणकारणत्वस्यादृश्यरूपादिसाधारणकार्यत्वस्य च ग्रह एवं रूपस्य रसगन्धयोः रसस्य गन्धे इत्युक्तमुत्तरोत्तरेति । तव सौगतस्य दर्शने । अस्माकमिति । शब्दो द्रव्याश्रितः गुणत्वादित्यादौ ऐन्द्रियकद्रव्यम् बाधातीन्द्रियमाकाशम् शब्दादेः
5 समवायि सिध्यतीत्यर्थः । यदि प्रत्यक्षविषययोरन्वयव्यतिरेकग्रहात् हेतुताग्रहे [अशितपीत] हेतुहेतुमद्भावग्रहे तन्मूलकव्याप्तिग्रहात् तज्जातीयकार्यादयोग्यहेतोर्न सिद्धिः । तदा प्रत्यक्षवह्नेः पाकं प्रति तादृशि हस्तादौ तृणादिकम्पं प्रति च हेतुताग्रहेऽशितपीतपाकादयोग्यस्यौदर्यवह्नेर्नभसि तृणादिकम्पादप्रत्यक्षस्य वायोःसिद्धिर्न स्यादित्यत आह—**न चेदेवमिति** । उदाहृतयोरुक्तयोर्दहनपवनयोर्जठरानलयोर्गृहीतान्वयव्यतिरेकतो
10 वैधर्म्यं दर्शयति । **अनालोकनिरस्तरूपयोरिति** । अनालोकत्वञ्चोद्भूतरूपशून्यत्वं ययोरन्वयव्यतिरेकाभ्यां कारणतानिश्चयः तावाह—**आलोकेति** । उद्भूतरूपतेज इत्यर्थः । सिद्धिः पाककम्पाभ्यां हेतुभ्यां सिद्धिर्धूमकम्पाभ्यां स्याच्चेदित्यहोऽव्ययम् । उष्णमात्रत्वात् अनपेक्षितदाहप्रयोजक इति विशेषात् । पवनमात्रात् स्तिमितसाधारणात् । तथाचान्वयव्यतिरेकाभ्यां तद्व्यावृत्तधर्मावच्छेदेनैव कारणताग्रहात् ततस्तत्सिद्धिरिति भावः ।
15 योग्यायोग्यसाधारणचेतनव्यभिचारस्तु न प्रकृत इति तत्साधारणी सिद्धिरप्रत्यूहेत्याह—**नचैवमिति** । यथा सत्यपि जाठर्यवह्नौ स्तिमितवायौ च धूमकम्पयोरन्वयव्यभिचारस्तयोरहेतुत्वं व्यवस्थापयति न तथा प्रकृत इत्यर्थः । अभ्युपेत्य प्रकारान्तरेणैवमाह—**तदुत्पत्तेरिति**—असिद्धावपि अनिश्चयदशायामपि स्वभाविकत्वसिद्धौ यावत् स्वव्यभिचारिव्यभिचारिकत्वलक्षणव्याप्यत्वनिश्चये कर्तारमतिपत्य सकर्तृकत्वशून्यं स्वभावम् निरु-
20 पाधिसहचारबलेन गृहीतां व्याप्तिमतिपतेत् । कार्यत्वं तादात्म्येन कार्यं वा जह्यात् । कार्यलोपः व्यापकं विना व्याप्यं न स्यात् तथा चायमेव विलोपः यत्कर्तारं विना तस्याप्यभावः स्यादिति भावः । एतदुपाधिविधूननप्रपञ्चनम् ।

ननु पशुत्वात् तर्हि योग्यबाधादयोग्यमपि शृङ्गं सिध्येदिति प्रतिबन्धिमुद्धरति । **एवञ्चेति** । प्रतिबन्धे कार्यत्वस्य सकर्तृकत्वव्याप्तत्वे सिद्धे निश्चिते क्षुद्रत्वं प्रकृतिसिद्ध-
25 प्रत्यूहतयोपद्रवत्वमप्रकृततया तन्निरसनप्रयाससम्वलनात् प्रतिबन्धानिश्चयादेव तदसिद्धेस्तस्य पशुत्वस्यासिद्धेः । शृङ्गसिध्यनुकूलनिश्चयाविषयत्वात् न ततः शृंगप्रसङ्गो यतः तत्सिद्धेरप्रसङ्गादिति क्वचित् पाठः । तत्र तत्सिद्धेः शृंगसिद्धेरित्यर्थः । निरपेक्षेश्वरे निरपेक्षस्य भगवतः कर्तृत्वे । **बालस्येति** । सोऽपि आशुविनाशिदीपकालकामुपगृह्य स्थिराण्येव नगरग्रामाणि निरस्यतीति । स्थेमभाजः स्थैर्यवतः स्थिरमात्रस्यैव तत्तत्सहकारिसमवधानवशात्

कार्यजनकत्वं न स्यादित्यर्थः। प्राक् प्रथमस्तबके सहकारिविवादेन क्षणिकत्वनिराकरणात्। वक्ष्यमाणश्रुतिसंवादोपदर्शनस्यार्थान्तरत्वं श्रुतिविरुद्धतर्कस्य इष्टोपायताप्रदर्शनेन निराकरोति। आर्षमिति। आर्षं-ऋषिप्रणीतं मन्वादिधर्मोपदेशं स्वाध्यायोऽध्येतव्य इति विधिबोधितेष्टसाधनतानिर्वाहकधर्मजनकाध्ययनविषयं वेदं धर्म ईश्वरः तस्योपदेशं वा। यद्वा धर्मोपदेशं धर्मतात्पर्यकमुपदेशमत एव धर्मवेदनाद्वेद इति गीयते। वेदशास्त्राविरोधिनेत्यनेन नरशिरःकपालशौचानुमानव्यावृत्तिः। तर्केण सत्तर्कप्रमाणेनासम्बद्धे तात्पर्यवत्तयानुमिनोमीति स धर्मं वेदं धर्मशास्त्रं जानाति तथा चेश्वरपरवेदानां न्यायेन तात्पर्यावधारणमावश्यकमिति च ध्वनितम्। केचित्तु वेदादेव ईश्वरावधारणमस्तु किमनुमानेनेत्यत्राह—आर्षमिति। तन्न। श्रवणान्तराद्युपागतेत्यनेन मननस्य इष्टसाधनताव्यवस्थापनात्। परे तु कार्यत्वहेतोः कण्टकोद्धारावसरे आगमरूपप्रमाणविरोधरूपकण्टकोद्धारपरतया ग्रन्थं योजयन्ति। ननु कर्तृत्वसर्वज्ञत्वादिप्रकारेणापि मननं तथात्वं। मननञ्च तद्विरोधितया मोक्षहेतुविघटकतया विरोध्येव स्यादिति शङ्कायां तन्मननस्य वेदविरोधेन मोक्षानुपायतां दर्शयति—आर्षमित्यादि इति तु प्रतिभाति।

नन्वस्तु कृतेरेव कारणत्वेन सिद्धिर्न स्यादेवं च स्वविषयत्वात् न विषयतासिध्यर्थं ज्ञानाद्यपेक्षापि भवतु वा ज्ञानादितया तदाश्रयकल्पने मानाभावः गुणत्वेन कृतित्वेन वा समवेतत्वसाधनेऽप्रयोजकत्वात्। न च सर्वज्ञे मानमस्ति। अस्मदाद्यधिष्ठितकपालादौ तदधिष्ठाने मानाभावात्। कारणानधीनपरिमाणादेः सर्वत्र समवायवत् कारणानधीनस्यापि तस्य तद्विषयत्वे युक्त्यभावात्। प्रमां प्रति गुणत्वसंभवः भवतु वा ज्ञानादिकं तदाश्रयः। तदापि तस्य वैभवे मानाभावः। मनोवदणुत्वेनाप्युपपत्तेः वैभवे निखिलमूर्त्तसंयोगविभागादिकल्पनायां गौरवात्। यदि च क्रिया व्यधिकरणयदीयगुणजन्येति न्यायेन तत्संयोगस्य क्रियाहेतुतया एकदा नानादेशवर्तिविततद्रव्येषु तदुत्पत्तये वैभवापेक्षास्तदा तत्तत्संयोगिता अस्मदाद्यधिष्ठितशरीरादिसंयोगित्वे च मानाभावः। एकत्वे च किम्मानं? लाघवसहकारेणोक्तानुमान एव तद्भासत इति चेत् किमेकत्वं संख्याविशेष इति चेत् अनेकत्वेऽप्यविरोधात्। क्षितिकर्तृनिष्ठान्योन्याभावप्रतियोगित्वं च क्षितिकर्तृसिद्धेः पूर्वंभवितुमनर्हमत एव क्षितिकर्तृनिष्ठात्यन्ताभावप्रतियोग्येकत्वमपि निरस्तम्। द्वितीयानुमाने तद्भानेऽपि कारणबाधाद्भानानुपपत्तिरत एव द्विकर्तृकत्वाभाव एव क्षितौ भासत इति निरस्तम्। न च द्विकर्तृकत्वविधेयकानुमितौ तादृशविशिष्टनिरूपितव्याप्तिज्ञानस्य कारणत्वेऽपि विशेष्ये विशेषणमिति न्यायेन लाघवज्ञानं सहकारीति वाच्यम्। तथापि तथा मननस्य न वेदादिविरोधित्वमिति तेन रूपेण

तन्मननस्य विरोधित्वं प्रसज्येतेत्याद्याशंकायां श्रुतिमुपष्टम्भिकामाह—**विश्वत इति** । **सर्वव-क्तृत्वमिति** । एतावता वक्तृवाक्यार्थप्रमाथा गुणत्वे यथोक्तबाधकनिरासः । **सहकारितेति** । तथा च विश्वसाहाय्यकर्त्तेति लभ्यते । **चतुर्थेनेति** । तथा च विश्वपदं मूर्तसामान्यमिति भावः । येन योगेन बाहुपदस्य धर्माधर्मबोधकजातमाह—**तौ हीति** । लोकयात्रा जनानां
5 हिताहितवहनात् प्रापणात् जननादिति यावत् । **प्रधानेति** । तत्राधिष्ठितानां संभवात् । तदधिष्ठातृतया तत्सिद्धिसूचनाय ते परमाणवः गतिशीलत्वात् । परितः पतनशीलत्वात् । **व्यवहितेति** । छन्दसि परे व्यवहिताश्चेति व्यवहितोपसर्गानुशासनम् । **अनादितेति** । फलितार्थवर्णनम् । अनादिकार्यप्रवाहजनकार्थकः । वस्तुतस्तु निरुक्तकत्वं बोध्यम् । ननु ब्रह्मण एव विश्वकर्तृकत्वं श्रूयते न भगवत इत्यत्राह—**एतेनेति** । भगवानेव
10 ब्रह्मशरीरमुपगृह्य सृजतीत्यर्थः ॥ ३ ॥

आयोजनात् खल्वपि—

**स्वातन्त्र्ये जडताहानिर्नादृष्टं दृष्टघातकम् ।**
**हेत्वभावे फलाभावो विशेषस्तु विशेषवान् ॥ ४ ॥**

परमाण्वादयो हि चेतनायोजिताः प्रवर्त्तन्ते अचेतनत्वाद् वास्यादिवत् । अन्यथा
15 कारणं विना कार्यानुत्पत्तिप्रसङ्गः । अचेतनक्रियायाश्चेतनाधिष्ठानकार्यत्वावधारणात् । क्रियाविशेषविश्रान्तोऽयमर्थो, न तु तन्मात्रगोचरः । चेष्टा हि चेतनाधिष्ठानमपेक्षते इति चेत् । अथ केयं चेष्टा नाम ? । यदि प्रयत्नवदात्मसंयोगाऽसमवायिकारणिका क्रिया, प्रयत्नमात्रकारणिकेति वा विवक्षितम् । तन्न । तस्यैव तत्रानुपाधित्वात् । अथ हिताहितप्राप्तिपरिहारफलत्वं तत्त्वम् । तन्न । विषभक्षणोद्बन्धनाद्यव्यापनाद्
20 इष्टानिष्टप्राप्तिपरिहारफलत्वमिति चेत् / कर्त्तारं प्रत्यन्यं वा ? । उभयथाऽपि परमाण्वादिक्रियासाधारण्यादविशेषः । भ्रान्तसमीहाया अतथाभूताया अपि चेतनव्यापारापेक्षणाच्च । शरीरसमवायिक्रियात्वं तदिति चेन्न । मृतशरीरक्रियाया अपि चेतनपूर्वकत्वप्रसक्तेः । जीवत इति चेन्न । नेत्रस्पन्दादेश्चेतनाधिष्ठानाभ्युपगमप्रसङ्गात् । स्पर्शवद्द्रव्यान्तराप्रयोगे सतीति चेन्न । ज्वलनपवनादौ तथाभावाभ्युपगमापत्तेः ।
25 शरीरस्य स्पर्शवद्द्रव्यान्तराप्रयुक्तस्येति चेन्न । चेष्टयैव शरीरस्य लक्ष्यमाणत्वात् । सामान्यविशेषश्चेष्टात्वं, यत उन्नीयते प्रयत्नपूर्विकेयं क्रियेति चेन्न । क्रियामात्रेणैव तदुन्नयनात् । भोक्तृबुद्धिमत्त्वपूर्वकत्वं यत इति चेत्, तर्हि तद्विश्रान्तत्वमेव तस्य । न चैतावतैव क्रियामात्रं प्रत्यचेतनमात्रस्य चेतनाधिष्ठानेन व्याप्तिरपसार्यते । विशेषस्य विशेषं प्रति प्रयोजकतया सामान्यव्याप्तिं प्रत्यविरोधकत्वात् । अन्यथा सर्वसामान्य-
30 व्याप्तेरुच्छेदादित्युक्तम् ।

एतेनाऽशरीरत्वादिना सत्प्रतिपक्षत्वमपास्तम् ।
अत्राप्यागमसंवादः—

यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । 5
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥ इत्यादि ॥

अत्र जागरस्वापौ सहकारिलाभालाभौ । ईश्वरप्रेरणायामज्ञत्वमप्रयतमानत्वञ्च हेतू दर्शितौ परमाण्वादिसाधारणौ । स्वर्गश्वभ्रे चेष्टानिष्टोपलक्षणे । एतदेव सर्वाधिष्ठानमुत्तरत्र विभाव्यते–मयेत्यादिना । न केवलं प्रेरणायामहमधिष्ठाता, अपि तु प्रतिरोधेऽपि । यो हि यत्र प्रभवति, स तस्य प्रेरणावद्धारणेऽपि समर्थः । यथाऽर्वाचीनः शरीरप्राणप्रेरणधारणयोरिति दर्शितं तपामीत्यादिना । 10

धृतेः खल्वपि । क्षित्यादिब्रह्माऽण्डपर्यन्तं हि जगत् साक्षात् परम्परयावा विधारकप्रयत्नाधिष्ठितं गुरुत्वे सत्यपतनधर्मकत्वाद् वियति विहङ्गमशरीरवत् तत्संयुक्तद्रव्यवच्च । एतेनेन्द्राग्नियमादिलोकपालप्रतिपादका अप्यागमा व्याख्याताः । सर्वावेशनिबन्धनश्च सर्वतादात्म्यव्यवहारः–आत्मैवेदं सर्वमिति । यथैक एव मायावी अश्वो व्याघ्रो वराहो वानरः किन्नरो भिक्षुस्तापसो विप्र इत्यादि । 15

अदृष्टादेव तदुपपत्तेरन्यथासिद्धमिदमिति चेत् । तद्भावेऽपि प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि स्थितिं प्रति कारणत्वात् । कारणैकदेशस्य च कारणान्तरं प्रत्यनुपाधित्वात्, उपाधित्वे वा सर्वेषामाकारणत्वप्रसङ्गात् । शरीरस्थितिरेवं नत्वन्यस्थितिरिति चेत् । न । प्राणेन्द्रिययोः स्थितेरव्यापनात्, प्राङ्न्यायेनापास्तत्वाच्च । अत्राप्यागमः—'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' इति । प्रशासनं–दण्डभूतः प्रयत्नः । 20

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । 25
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ इति स्मृतिः ।

अत्रोत्तमत्वमसंसारित्वं सर्वज्ञत्वादि च । परमत्वं सर्वोपास्यता । लोकत्रयमिति सर्वोपलक्षणम् । आवेशो ज्ञानचिकीर्षाप्रयत्नवतः संयोगः । भरणं धारणम् । अव्ययत्वमागन्तुकविशेषगुणशून्यत्वम् । ऐश्वर्यं संकल्पाप्रतिघातः इति । एतेन कूर्मादिविषया अप्यागमा व्याख्याताः । 30

संहरणात् खल्वपि ब्रह्माण्डादिद्व्यणुकपर्यन्तं जगत् प्रयत्नवद्विनाश्यं विनाश्यत्वात् पाट्यमानपटवत् । अत्राप्यागमः—

एष सर्वाणि भूतानि समभिव्याप्य मूर्त्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं सम्भ्रामयति चक्रवत् ॥
सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामकीम् । 35
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ इत्यादि ।

एतेन रौद्रमंशं प्रतिपादयन्तोऽप्यागमा व्याख्याताः ॥ ४ ॥

आमोदः

**खल्वपीति**। उदाह्रियत इत्यर्थः। यद्वा, आयोजनादपि साध्यो विश्वजिदन्वय इत्यर्थः। खल्वपीति निपातसमुदायस्य समुच्चयवाचित्वात्। सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमानकालीनप्रयत्नजन्यं कर्मत्वात् चेष्टावदित्यनुमानस्योपकुर्वाणं तर्कमाह—**स्वातन्त्र्य** इति। आयोजनं हि 5 परमाणुद्वयसंयोगजनकं कर्म, तद् यदि परमाणुद्वयात् स्वतन्त्रादेव जायते तदा तेषां जडत्वमचैतन्यं न स्यादित्यर्थः। ननु दृष्टादेव तदुत्पद्यतामत आह—**नादृष्टमिति**। अदृष्टस्यापि दृष्टकारणसहकृतस्यैव जनकत्वादित्यर्थः। **दृष्टघातकमिति**। दृष्टकारणताविघटकमित्यर्थः। अत्र विपक्षबाधकमाह—**हेत्वभावे फलाभाव** इति। चेतनव्यापारस्य हेतोरभावे कर्मैव फलं परमाणु- 10 षु नोत्पद्यत इत्यर्थः। ननु चेष्टारूपे कर्मणि चेतनापेक्षा, न तु क्रियान्तरेऽपीत्यत्यत आह—**विशेष** इति।

तर्कोपकार्यमानमाह—**परमाण्वादय** इति। **तन्मात्रेति**। क्रियामात्रेत्यर्थः। **तस्यैवेति**। प्रयत्नवदात्मसंयोगासमवायि कारणत्वमेवात्र साधयितुमुपक्रान्तम्। साध्यश्च नोपाधिरनुमानमात्रोच्छेदप्रसङ्गादित्यर्थः। **तत्त्वमिति**। 15 चेष्टात्वमित्यर्थः। एतच्चेष्टालक्षणेऽव्याप्तिमाह—**विशेषेति**। तत्र हि न हितप्राप्तिर्न वाऽहितनिवृत्तिरित्यर्थः। उद्बन्धनादेरपि तत्कालमिष्यमाणत्वात्तत्संग्रहार्थं लक्षणान्तरं शङ्कते—**इष्टानिष्टेति**। पक्षाद्व्यावृत्तादुपाधेः साधनव्यापकत्वमाह—**उभयथेति**। परमाणुक्रियायास्तत्कर्तरीश्वरस्यास्मदादेश्च इच्छाविषयार्थहेतुत्वादित्यर्थः। चेतनाधिष्ठानजन्यत्वस्य साध्यस्य व्यापकोऽपीष्टानिष्टप्राप्ति- 20 परिहारफलक्रियात्वमुपाधिरित्याह—अचेतने क्रिया चेतनाधिष्ठानजन्या क्रियात्वात् शरीरक्रियावत् इत्यत्रेष्टानिष्टप्राप्तिपरिहारफलकक्रियात्वस्य साध्याव्यापकत्वमाह—**भ्रान्तेति**। समीहा चेष्टा। अतथाभूताया इति इष्टानिष्टप्राप्तिरूपफलरहिताया इत्यर्थः। **तदिति**। चेष्टात्वमित्यर्थः। तथा च न साध्याव्यापकमित्यर्थः। समव्याप्तोपाध्यभिप्रायेणाह—**मृतेति**। जीवच्छरीरक्रियात्वमुपाधिरि- 25 त्याह—**जीवत** इति। **नेत्रस्पन्दादेरिति**। वायुमात्रकृतस्येत्यर्थः। स्पर्शवद्द्रव्यान्तराप्रयुक्तक्रियात्वमुपाधिरित्याह—**स्पर्शवदिति**। नेत्रक्रिया चस्प र्शवता वायुनाक्रियत इत्यर्थः। ज्वलनपवनक्रिययोरदृष्टवदात्मसंयोगासमवायिकारणकयोरपि त्वन्मते चेतनाधिष्ठानप्रसङ्गादित्यपि समव्याप्तोपाध्यभिप्रायम् स्वर्श-

वद्द्रव्यान्तराप्रयोज्यशरीरक्रियात्वमुपाधिमाशङ्कते—**शरीरस्येति**। ज्वल-
नादिक्रियाव्यावर्तनाय स्पर्शवदित्यादि वा नेत्रस्पन्दादिव्यावर्तनाय। अत्रान्यो-
न्याश्रयमाह—**चेष्टयैवेति**। शरीरावयवक्रियायां साध्याव्यापकत्वमत्रापि
द्रष्टव्यम्। **क्रियामात्रेणैवेति**। स्वमताभिष्टम्भेन **यत इति**। उन्नीयत इत्यनु-
षङ्गः। तर्हि या चेष्टाबुद्धिमत्पूर्विका इति विशेषव्याप्तावपि या क्रिया बुद्धि- 5
मत्पूर्विकेति सामान्यव्याप्तिबलात् परमाण्वादिक्रियायां बुद्धिमत्पूर्वकत्वं
स्यादेवेत्याह—**तर्हीति**। चेष्टामात्रविश्रान्तत्वमेव भोक्तृबुद्धिमत्पूर्वकत्व-
स्येत्यर्थः।

ननु परमाणवो न चेतनाधिष्ठिताः प्रवर्तन्ते शरीरत्वादिति सत्प्रति-
पक्षः स्यादित्यत आह—**एतेनेति**। सामान्यव्याप्तौ बाधकाभावेनेत्यर्थः। 10
**जागर्ति** सिसृक्षावान् भवतीत्यर्थः। जगत् परमाणुरूपं **चेष्टते** क्रियावद्
भवतीत्यर्थः। **स्वपिति** सञ्जिहीषुर्भवति। **निमीलति** निष्क्रियं भवतीत्यर्थः।
जनयतीति **जन्तुः** परमाण्वादिः, स चाचेतनः, तथा च चेतनापेक्षास्या-
वश्यकी। सुखदुःखाभ्यां प्रवृत्तिनिवृत्ती लक्ष्येते, तज्ज्ञानाधीनत्वात्तयोः।
**मयाध्यक्षेणेति**। मयाऽधिष्ठात्रा इत्यर्थः। **प्रकृतिर्मूलकारणं** परमाणुः **सूयते** 15
आरभते। **सचराचरमिति**। चरेण जङ्गमेन सह वर्तमानं सचरं स्थावरमित्यर्थः।
अन्यत्रापि शक्तिं दर्शयति—**तपामीति**। वर्षातपयोरहमेव कर्ता। **वर्षं निगृ-
ह्णामि**। अवग्रहो मदधीन एवेत्यक्षरार्थः। तात्पर्यं तु स्फुटयिष्यति—**सह-
कारीति**। सिसृक्षासञ्जिहीर्षे = सहकारिलाभालाभौ। **प्रयतमानत्वञ्चेति**।
ईशता यत्नः, अनीशोऽयतमानः, इष्टानिष्टे ईश्वरस्यैव, तेनेश्वरस्य यदिष्टं तद् 20
गच्छति। तदारभत इत्यर्थः। अनिष्टं गच्छति ततो निवर्तत इत्यर्थः।
धारकस्य प्रयत्नः, धारको वा प्रयत्नः। **परम्परयेत्यत्र** दृष्टान्तस्तत्संयुक्त-
द्रव्यवदिति एवं सति च क्षित्यादिकं प्रत्यक्षप्रतिबद्धपतनम्, गुरुत्वे सति
अपातिद्रव्यत्वादिति मानार्थः। कण्ठधृतवस्त्रादौ व्यभिचारवारणाय **परम्पर-
येति**। ननु लोकानां धृतिहेतवो लोकपाला एव न त्वीश्वर इत्यत आह— 25
**एतेनेति**। ईश्वरस्यैव साक्षाद्धारकत्वपरम्पराधारकत्वव्युत्पादनेनेत्यर्थः।
यमादयोऽपि जगद्धारणे द्वारभूता इत्यर्थः। नन्वेवं सर्वतादात्म्यप्रतिपादका-
गमविरोधः स्यादित्यत आह— **सर्वावेशेति**। सर्वत्रावेशेन प्रयत्नेनाधिष्ठा-

नमस्येत्युपदर्शनार्थत्वात् तस्येत्यर्थः। आत्मैवेदं ब्रह्मैवेदं सर्वमित्यागमोऽपि, अन्यथाऽस्य सकलाभेदप्रतिपादकत्वे प्रत्यक्षबाधः स्यादिति भावः। यद्वा, इन्द्रादिशरीरमाविश्य सर्वमिदमीश्वर एव धारयतीत्याह––एतेनेति। अत्रानुरूपं निदर्शनमाह–यथेति।

5 तत्सद्भावेति। नादृष्टं दृष्टघातकमित्युक्तत्वादित्यर्थः। सर्वेषामिति। एकेनान्यस्यान्यथासिद्धशङ्काग्रस्तत्वादित्यर्थः। एवमिति। प्रयत्नप्रतिबद्धगुरुत्वेत्यर्थः। यत्र प्रयत्नप्रतिबन्धागुरुत्वं तत्र शरीरत्वमित्यत्र साध्याव्यापकत्वमाह––प्राणेति। शरीरावयववेदान्तादौ च साध्याव्यापकत्वम्। प्राङ्न्यायेनेति। शरीरपदेनात्र साक्षात्प्रयत्नाधिष्ठेयत्वं वा विवक्षितमिन्द्रियाश्रयत्वम्वा भोगायतनञ्चेत्यर्थः। यद्वा, विशेषस्तु विशेषवानित्यादिनेत्यर्थः।
10 अक्षरस्य नित्यस्य, द्यौः सुरलोकः, दण्डभूत इत्यभिधानं प्रशासनपदार्थतया यत्नमात्रं तु विवक्षितम्। उत्तम परमपदयोरर्थं भेत्तुमाह––अत्रेति। सर्वोपलक्षणमिति। अन्यथा एकादशभुवनानामधार्यत्वमन्यधार्यत्वं वा स्यादिति भावः। बिभर्तीति प्रकृत्यर्थप्रकृतार्थपरतया व्याचष्टे भरणमिति। उत्तम
15 पदादेव नित्यत्वे लब्धेऽव्ययपदस्यैव वैयर्थ्यमाशङ्क्याह—अव्ययत्वमिति। संयोगादिशून्यत्वमनुपपन्नमत आह—विशेषेति। परमपदेनोत्तमपदेन वा ऐश्वर्ये लब्धे तदुपादानवैयर्थ्यमाशङ्क्याह—ऐश्वर्यमिति। एतेनेति। कूर्मादिशरीरपरिग्रहेण ईश्वरस्यैव क्षित्यादिधारकत्वादित्यर्थः।

संहरणादिति। प्रयत्नवद्विनाश्यमिति। तथा चार्वाचीनस्य तादृशद्वे-
20 षाभावे पौरुषधौरेयसिद्धिरित्यर्थः। तथा च प्रयोगः—ब्रह्माण्डादि स्वजनकप्रयत्नसमानकालीनचरमकारणनाशप्रतियोगिजन्यत्वात्, तत्कालघटितविघटितघटवदिति। अन्येषां पक्षसमत्वादेव न व्यभिचारः। मूर्तिभिरिति। रुद्रादिमूर्तिभिरित्यर्थः। संभ्रामयतीति। उत्पाद्यविनाशयति विनाश्योत्पादयतीत्यर्थः। सर्वभूतानीति। प्रलयावस्थायां परमाणुमात्रविशिष्टानीत्यर्थः।
25 प्रकृतमिति। यामादिकारणमाहुस्तां सिसृक्षां यान्ति, पुनः सर्गायापेक्षन्ते इत्यर्थः। विसृजामि सर्गानुकूलानि करोमीत्यर्थः। एतेनेति। ईश्वरस्यैव संहारकर्तृत्वप्रतिपादनेनेत्यर्थः। व्याख्याताः ईश्वरपरतया ॥४॥

बोधनी

अतः परम् आयोजनादिति हेतुमनुसन्दधानः प्रतिबन्धासिद्धिं तावदुद्धरन्ननुकूल-तर्कमाह—स्वातन्त्र्येति । चेतनाधिष्ठाननिरपेक्षाणामेव परमाण्वादीनां कार्योत्पादनप्रवृत्तौ तेषां जडता अचैतन्यं हीयेत, चेतनानामेव स्वातन्त्र्यप्रवृत्तिदर्शनात् दहनपवनादेव(?) क्षेत्रज्ञादृष्टप्रेरिता एव ते प्रवर्त्यन्ते, किं चेतनेनेत्यत उक्तम्—नादृष्टमिति । सत्यमदृष्टं कारणपरं दृष्टस्यान्वयव्यतिरेकसिद्धस्य चेतनाधिष्ठानस्य करणत्वं न विहन्ति, प्रत्युत दृष्टोपहारद्वारेणैवादृष्टं कारणं भवति, अन्यथा घटादेरपि तावदुत्पत्तिसंभवप्रसङ्गः अनादयस्तु पक्षभूता इति भावः । अत्रापि कार्यलोपप्रसङ्गं स्मारयति—हेत्वभाव इति । अचेतनक्रियायाश्चेतनाधिष्ठानहेतुत्वादिति ।

ननु चेष्टात्मकस्य क्रियाविशेषस्यैव चेतनाधिष्ठानपूर्वकत्वम्, न तु क्रियामात्रस्य इत्यत उक्तम् । विशेषस्त्विति । अवधारणे भिन्नक्रमः । क्रियाविशेषश्चेष्टात्मको भोक्तृबुद्धिमत्पूर्वकत्वविशेषवानेव प्रयोज्यतयेति शेषः । बुद्धिमत्पूर्वकत्वसामान्यवानिति अनुग्राह्यत्वेनाभिसंहितं प्रयोगं तावदाह—परमाण्वादय इति । पूर्वार्धं गतार्थत्वादुपेक्ष्य तृतीयं पादं व्याचष्टे—अन्यथेति । तुरीयं पादं व्याचिख्यासुः शङ्कते—क्रियाविशेषेति । चेतनाधिष्ठित[1]लक्षणोऽयमर्थः । क्रियाविशेषपर्यवसायी[2] प्रयोज्यत्वेन न तु क्रियामात्रप्रयोज्यत्वमिति उक्तमेव विशेषतो विशदयति[3]—चेष्टा हीति । प्रयत्नपूर्विकां चेष्टां विकल्पयति—अथेति । उभयत्रापि दोषमाह—तन्नेति । पूर्वत्र साक्षात्प्रयत्नाधिष्ठेयसमवायिनी[4] क्रिया विवक्षिता स्यात्, उत्तरत्र तु यस्याः प्रयत्नाः करणमात्रं न स्वसमवायीति परम्परयाधिष्ठेयसमवायिनी क्रिया विवक्षिता तत्रोभयत्रापि प्रयत्नाधि[5]ष्ठानपूर्विका क्रिया प्रयोजिकेत्युक्तं भवेत् । साध्यं च परमाण्वादिक्रियाणां चेतन[6]प्रयत्नाधिष्ठानपूर्वकत्वमेवेति साध्यस्यैवोपाधित्वमिति चेष्टात्वमन्यथा शङ्कते—अथेति । नेति । विषभक्षणादयोऽपि हि चेष्टानाधिष्ठानपूर्वका इति—इष्टानिष्टेति । विषभक्षणादिषु विहितत्वाद्यभावेऽपीष्टत्वादिकमस्त्येवेति विकल्प्य दूषयति—कर्त्तारमिति । कर्त्तुरीश्वरस्य क्षेत्रज्ञानुजिघृक्षया बुभुक्षया चान्येषां जगत्स्रष्टेरिष्टत्वेन साधनाव्याप[7]कत्वादनुपाधित्वमिति साध्यव्यापकत्वं च नास्तीत्याह—भ्रान्तेति । भ्रान्तसमीहाया अतथाभूताया अपि चेतनाव्यापारापेक्षाणाम्—शरीरेति । शङ्कोत्तरे सुगमे । जीवत इति ।

---

१ क. °धिष्ठान° । २ क. क्रियाविशेषप्रयोज्यो न तु क्रियामात्रप्रयोज्यः । ३क. दर्शयति । ४ क. समवायिक्रिया° । ५ क. अधिष्ठेय° । ६ क. चेतनाधि° ७ ख. °नव्या°

शरीरसमवायिक्रियात्वमित्यनुषज्यते । **नेति** । न हि तस्य चेतनाधिष्ठानमिष्यत इति । **स्पर्शवदिति** । क्रियार्थत्वमित्येतावन्मात्रस्यानुषङ्गः । नेत्रबाहुस्फुरणादयः स्पर्शवद्वायुप्रयोज्या इति भावः । **ज्वलनेति** । यथाभावश्चेतनाधिष्ठानपूर्वकत्वमिति । **शरीरस्येति** । न च ज्वलनादयः शरीरमिति, चेष्टयैव लक्ष्यमाणं शरीरं कथं तस्या एव लक्षणं
5 भवेत्, अन्योन्याश्रयप्रसङ्गादिति । **सामान्येति** । क्रियात्वसामान्यस्य[1] विशेषश्चेष्टात्वं तस्य चोपलक्षणं प्रयत्नपूर्वकत्वोन्नेयकत्वं न तु शरीरमिति । तर्हि पक्षीकृतायां परमाण्वादिक्रियायामपि तदुपलक्षितस्य क्रियाविशेषस्या[3]भ्युपगमात् साधनव्यापकत्वमिति । **भोक्तृबुद्धीति** । यतः क्रियाविशेषादिकं फलभोक्तृत्वबुद्धिपूर्विका क्रियेत्युन्नीयते[4], सा चेष्टा सैव चेतनव्यापारपूर्विका न त्वचेतनक्रियामात्रमिति । अत्र विशेषस्तु—
10 विशेषवानित्येतदवतारयति—**तर्हीति** । तस्य तर्हि क्रियाविशेषस्य भोक्तृबुद्धिपूर्वकत्वविशेषमेव प्रति प्रयोजकत्वं स्यात्, न तु चेतनव्यापारापेक्षत्वमात्रं प्रतीति स्पष्टम् । शिष्टमित्यनेनैव विशेषस्य विशेषं प्रति प्रयोजकत्वप्रतिपादनेन परमाण्वादयो न साक्षात् चेतनाधिष्ठिताः प्रवर्त्तन्ते, शरीरेतरत्वान्न यदेवं न तदेवं यथा शरीरमित्यादेः सत्प्रतिपक्षस्य मूले निहितः कुठार इत्याह—**एतेनेति** । शरीरत्वं भोक्त्रधिष्ठितत्वे प्रयोजकम्, न तु
15 चेतनाधिष्ठानमात्र इत्यर्थः । चेतनाधिष्ठितमेवाचेतनं प्रवर्तत इत्यत्राप्यागमसंवादोऽस्तीत्याह—**अत्रापीति** । कथं [5]नित्यसर्वज्ञस्य [6]जागरणादिसंभव इत्यत आह—**अत्र-जागरेति** ।

ननु चेतनस्येश्वराधिष्ठानमात्रत्वं श्रूयते, नाचेतनस्य परमाण्वादेरित्यत आह—**ईश्वरप्रेरणायामिति** । कथं स्वर्गनरकयोः प्रेरणायां सर्वत्रेश्वरप्रेरणा सिध्यति तत्राह—
20 **स्वर्गेति** । एवं व्याख्याने प्रमाणमाह—**एतदेवेति** । प्रकृतिः परमाण्वादयः चराचरशब्दश्च सुखदुःखसाधनमात्रपरः कथमीश्वरप्रेरणायां संवादं दर्शयति इत्यत्राह—**न हि केवलमिति** । तत्र संवाद्यं प्रमाणमाह—**यो हीति** । **तपामीत्यादि** । संगच्छते ।

**धृतेरिति** हेतुमुपादाय यथा तत ईश्वरः साध्यते तथाह—**धृतेरिति** । विहङ्गमादिसंयुक्तद्रव्यैरनैकान्तिकत्वं सर्वान्तर्भावेन परिहरति—**परम्परयेति** । लोकपालानां
25 जगद्धारकत्वं प्रतिपादयद्भिरप्यागमैरयमर्थोऽनुगम्यत इत्यत आह—**एतेनेति** ।

ननु आत्मैवेदं सर्वमित्यादीनि श्रुतिशिरांसि सर्वं तादात्म्यमीश्वरस्य घोषयन्ति । कथं धारकत्वमुच्यते, भेदा[7]धिष्ठानत्वात्तस्येत्याह—**सर्वावेशेति** । यद्वा

---

१ क. °न्यविशे° २ख. तुरीयमिति । ३क. °षत्वस्या° । ४. ख. क्रियेत्युक्तम्, नियते । ५. क. न च नि° ६ क. स्वापादि° ७ क. देहा° ।

कथमिन्द्रादिभेदप्रतिपादका आगमा मुख्यार्था अभेदागमविरोधादित्याह—**सर्वावेशेति**। आवेशो नाम ज्ञानचिकीर्षाप्रयत्नवतः संयोग इति स्वयमेव व्याख्यास्यतीति। कथमेकस्यैव सर्वांशैः कथं वा तन्निबन्धनस्तादात्म्यव्यवहार इत्यत्राह—**यथा हीति**।

ननु जलभरभरितस्य नभोभागभागो जलधरपटलस्येवादृष्टादेव धारणोपपत्तौ किं प्रयत्नाधिष्ठानेनेत्याह—**अदृष्टादिति**। **नेति**। अदृष्टं कारणमेव न तु तन्मात्रं 5 तत्सद्भावेऽपि विहङ्गमस्थितेः प्रयत्नान्वयव्यतिरेकानुविधानेन तस्यापि कारणत्वात् कारणत्वे च तस्मिन्नदृष्टरूपः कारणैकदेश उपाधिर्न भवति। उपाधित्वे वा तस्यापि कारणान्तरोपाधित्वेनाकारणत्वप्रसङ्गादिति—**शरीरस्थितिरेवमिति**। विधारकप्रयत्नापेक्षिणीति शेषः। **नेति**। शरीरेतरस्यैव प्राणवायोरिन्द्रियाणां च स्थितेः प्रयत्नपूर्वकत्वस्येष्टत्वात्, अन्यथा प्राणायामाद्युपदेशवैयर्थ्यप्रसङ्गादिति। एतच्च विशेषस्तु—विशेष- 10 वानिति न्यायेन निरस्तपूर्वमेवेत्याह—**प्राङ्न्यायेनेति**। शरीरस्थितिभोक्तृधारकप्रयत्नपूर्विका स्थितिमात्रं तु धारकप्रयत्नपूर्वकमित्यर्थः। ईश्वरस्य[2] विधारकप्रयत्नेनाधिष्ठितं ब्रह्माण्डमित्यत्राप्यागमसंवादं दर्शयति—**अत्रापीति**। उत्तरार्थसंवादं स्पष्टयन्नागमं व्याचष्टे—अत्र **प्रशासनमित्यादि**। **दण्डभूत इति**। विधारक इति यावत्। **एतेनेति**। कूर्मादिरूपिणा भगवता ब्रह्माण्डमाध्रियत इति प्रतिपादयन्तोऽप्यागमास्तस्य धारकप्रयत्ना- 15 धिष्ठितत्वं संवदन्तीति धृत्यादेरित्यादिशब्दोपात्तं हेतुमाह—**संहरणादिति**। यथा ततः संहारसिद्धिः तथा प्रयोगेण दर्शयति—**ब्रह्माण्डादीति**। स्पष्टम्। न च विनाशविशेषप्रयुक्तं प्रयत्नपूर्वकत्वमण्डनाशस्त्वन्यथा भविष्यतीति वाच्यम्। प्राङ्न्यायेनापास्तत्वादिति भावः ॥४॥

विवेकः

**खल्वपीति**। निपातसमुदायस्तदा क्रियत इत्यर्थे समुच्चयो वा तदर्थः। 20 तथा चायोजनादपि विश्ववित् साध्यत इति लभ्यते **एवमग्रेऽपि**। अत्र सर्गाद्यकालीनद्व्यणुकसमवायिकारणं कर्मप्रयत्नवदात्मसंयोगासमवायिकारणकं क्रियात्वात् चेष्टावदिति अनुमाने तर्कमाह—**स्वातन्त्र्य इति**।

परमाणुः यदि परसमवेतप्रयत्नासहकारेण जनकः स्यात् जडत्वं च अचेतनत्वं स्वनयेऽप्रसिद्धिवारणाय—**परसमवेतेति**। नन्वदृष्टसहकारेण तस्य जनकत्वसंभवाद- 25

---

२ क. °स्यापि।

प्रयोजकमिदं तत्राह—**नादृष्टमिति** । अन्वयव्यतिरेकसिद्धभावकारणस्य प्रयत्नस्य नादृष्टेनान्यथासिद्धिरित्यर्थः । अत्रानुकूलतर्कान्तरमाह—**हेत्वभाव इति** । लाघवात् क्रियात्वावच्छेदेनैव प्रयत्नजन्यत्वात् तं विना क्रिया न स्यादित्यर्थः । ननु चेष्टात्वमेव तज्जन्तावच्छेदकं न तु क्रियात्वमित्यत्राह—**विशेष इति** । चेष्टात्वं हि न जातिः ।
5 गमनत्वादिना संकरात् । किन्तु गमनत्वादिव्याप्यं नाना तत्र च विलक्षणजडप्रयत्नानां जनकत्वेऽपि न क्रिया । सामान्येऽपि प्रवृत्तिमात्रस्यान्यथासिद्धिरित्यर्थः । विशेषो गमनत्वादिव्याप्यतत्तज्जातिमान् विशेषवान् तत्तद्विलक्षणप्रयत्नरूपहेतुमान् । अत्रापि हेत्वभाव इति योजयति । **अन्यथेति** । अचेतनक्रियायाः अचेतनकार्यस्य । **क्रियाविशेषेति** । तथा चेष्टात्वमुपाधिरित्यर्थः । प्रयत्नवत्संयोगासमवायिकारणत्वं न तावन्मात्रगोचरः । न क्रिया-
10 मात्रव्यापकः । क्रियाविशेषं विशदयति—**चेष्टेति** । **प्रयत्नमात्रेति** । मात्रेण संयोगांशपरित्यागसूचनम् तेन प्रयत्नकारणकत्वमात्रलाभः । **तस्यैवेति** । मया तदेव साध्यते । साध्यं च नोपाधिरित्यर्थः । तत्त्वं चेष्टात्वम् । **विशेषेति** । तदनुकूलस्पन्दपरं कारणव्युत्पत्तेः । तस्य न हिताव्याप्ते र्न वाहितनिवृत्तिः फलमपि तु अहिताव्याप्तिरिति भावः । विषभक्षणादेरपि च तदानीमिष्टत्वात् नाव्याप्तिरित्याह—**इष्टेति** । **उभयथापीति** । तत्फल-
15 स्यापि भगवदिष्टत्वात् । तथा च साधनव्यापकत्वमिति भावः । इष्टत्वस्य इष्टत्वावच्छेदकाश्रयपरत्वमभिप्रेत्याव्याप्तिमाह—**भ्रान्तेति** । समीहायाः चेष्टाया अतथाभूतायाः इष्टतावच्छेदकाश्रयप्राप्तिफलकभिन्नायाः । **चेतनेति** । तथा च तत्रैव साध्यव्यापकत्वमित्यर्थः । **शरीरसमवायीति** । बहुव्रीहिः प्रतियोगित्वं वा मतुबर्थः । धनवान् इत्यादौ वृत्त्यनियामकेऽपि मतुपः साधुत्वात् । **मृतेति** । त्वन्मत इति शेषः । तथा च तादृशक्रियानुरोधेनैव सिध्यतु भगवान्
20 इति भावः । एवमग्रेऽपि इति ध्येयम् । जीवत इति क्रिया चेष्टेति शेषः । एवमग्रेऽपि । **स्पर्शेति** । स च तादृशवायुसंयोगजन्य एवेति भावः । **ज्वलनेति** । ज्वलनादौ या क्रिया तस्याश्चेष्टात्वेन प्रयत्नजन्यत्वाभ्युपगमापत्तेरित्यर्थः । **चेष्टयैवेति** । चेष्टासमानाधिकरणान्त्यावयविमात्रवृत्तिजातिमत्त्वस्य तल्लक्षणादिति भावः । यद्यपि तद्घटितशरीरस्यात्र प्रवेशेऽपि न क्षतिः तथापि चेष्टाघटितशरीरलक्षणस्य दुर्निरूपत्वे तात्पर्यम् । एवं तदवयव-
25 क्रियायामव्याप्त्या साध्याव्यापकत्वमपि ध्येयम् । **क्रियामात्रेणैवेति** । इदमुपलक्षणं गमनत्वादिना संकरोऽपि बोध्यः । तन्नानात्वोपगमे तु साध्याव्यापकतया नोपाधिता । यतः इत्यत्रोन्नीयते सामान्यविशेषश्चेष्टात्वमित्यनुषज्यते । सह इति च शेषः । तद्विश्रान्तत्वं तादृश्येव साध्ये तस्योपाधित्वं न तु प्रयत्नपूर्वकत्वमित्यर्थः । क्रियामात्रं प्रति चेतनाधिष्ठानव्याप्तिः । प्रयत्नसामान्यपूर्वकत्वव्याप्तिः । तथा चेतनकार्यसामान्यं प्रति चेतनाधिष्ठान-

व्याप्तिरिति चास्यार्थः । **अविरोधकत्वादिति** । अपि तु साधकत्वादेवेत्यपि बोध्यम् । उक्तं घटत्वाद्यवच्छेदेन कुलालादिजन्यत्वेऽपि कार्यसामान्ये हेतुत्वव्युत्पादनावसरे—**एतेनेति** । परमाणवो न चेतनाधिष्ठानक्रियावन्तः अशरीरत्वात् । व्योमवत् । परमाणुक्रिया न प्रयत्नजा शरीरक्रियान्यत्वात् । तद्वदेवेत्यादिना सत्प्रतिपक्षत्वं सामान्यतः कार्यकारणभावमूलकत्वेन स्थापनाया अधिकरणत्वेन निरस्तम् । जागर्ति सिसृक्षुर्भवति । इदं जगत् परमाणुरूपं चेष्टतेऽत्र द्रव्यारम्भकसंयोगानुकूलक्रियावद् भवति । इतरक्रियायाः प्रलयेऽपि संभवात् । स्वपिति संजिहीर्षुर्भवति । सर्वं परमाणुसामान्यं निमीलति द्रव्यारम्भकसंयोगानुकूलक्रियाशून्यं भवति । जन्तुः स्वनिष्ठकार्येष्टाधारतया जनकः आधारता च समवायकालिकदैशिकसाधारणी । तेन ईश्वरान्यद्रव्यमात्रलाभः । जन्तुपदं द्व्यणुकं सयत्नाश्रयितया जनयतीति व्युत्पत्त्या परमाणुपरमिति केचित् । आत्मनः स्वस्य सुखदुःखयोः प्रवृत्तिनिवृत्त्योर्जननयोरिति यावत् । अनीशोऽसमर्थः ईश्वरः प्रेरितः प्रयत्नाधिष्ठितः गच्छेत् प्राप्नोति जनयतीति यावत् । स्वर्गंश्वभ्रे इष्टानिष्टे तत्त्वञ्च भोक्तुरपेक्षया अध्यक्षेण प्रभुणा अधिष्ठात्रेति यावत् । प्रकृतिर्मूलकारणं परमाणुः सूयते जनयति सचराचरं चरेण जङ्गमेन सह वर्तमानमचरमन्यत्रापि अप्रयोजकतां प्रतिजिहीर्षायतमानत्वमिति ईशा यत्न इत्यनुशासनात् । अनीशत्वमयतमानत्वं विभाव्यते विशिष्य विभृयात् । प्रभवति, अधिष्ठाता साक्षात्परम्परयेति विशेषविवक्षायां गौरवमभिप्रेत्य तत्संयुक्तद्रव्यदृष्टान्तानुरोधेन चेदम् ।

वस्तुतस्तु तत्रापि साक्षाद्भगवत्प्रयत्नाधिष्ठानसत्त्वात् पक्षसत्त्वेऽपि न क्षतिः । धारकेत्यनेन प्रयत्नत्वव्याप्यजातिविशेषोपलक्षणम् । तेनैव रूपेण धृतिं प्रति कारणत्वात् धृतिश्च गुरुत्वाधीनपतनप्रतिबन्धः । ननु लोकपालानामेव जगद्धारकत्वं श्रूयते तथा च तेन विरोध इत्याशङ्क्याह—**एतेनेति** । भगवानेव तत्तल्लोकपालदेवताकदिग्वर्तिवस्तुधारकतया तत्तल्लोकपालव्यवहारभाजनमित्यर्थः । सर्वतादात्म्यप्रतिपादकश्रुतेरुपचरितार्थकतामाह—**सर्वावेशेति** । तत्तदात्मसमवेतविषयकप्रयत्नेन तत्तादात्म्यव्यवहार इत्यर्थः । इदं सर्वं जगत् एतदेवानुरूपनिदर्शनेन दर्शयति । **यथेत्यादि** । अनुमाने अन्यथासिद्धिमाह—**अदृष्टादेवेति** । तदुपपत्तेः । धृतेरुपपत्तेः । तद्भावेऽपि अदृष्टस्य हेतोः सद्भावेऽपि अत एवोक्तं नादृष्टं दृष्टघातकमिति । **प्रयत्नेति** । क्वचिद् धृतिविशेषे प्रयत्नस्य हेतुत्वात् । लाघवात् धृतिसामान्य एव तस्यापि तादृशप्रयत्नस्यापि धृतिसामान्यं प्रति लाघवेन कारणत्वावधारणात् । कारणैकदेशस्य प्रकृतेऽदृष्टरूपस्य कारणान्तरं प्रयत्नरूपमनुपाधित्वात् शरीरधृतित्वमुपाधिं शङ्कते—**शरीरेति** ।

**प्राणेति**। तत्रैव साध्यकत्वमित्यर्थः। प्राणश्च प्राणवहनाभ्युपलक्षणम्। तेन तत्र गुरुभावेऽपि न क्षतिरिन्द्रियमपि गोलकादि। तथा च शरीरावयवतत्संयुक्तधृतावेव साध्याव्यापकत्वमिति भावः। **प्रागिति**। शरीरपदस्य साक्षात् प्रयत्नविषयपरत्वे साधनव्यापकत्वेनेन्द्रियाश्रयादिपरत्वे च विशेषस्तु विशेषवानित्युपदर्शितदोषेणेत्यर्थः।
5 अक्षरस्य नित्यं तादृशप्रयत्नवतः दण्डभूत इति पदस्वरसादुक्तम्। उत्तमत्वपरमत्वयोः पौनरुक्त्यमाशङ्क्य व्याकरोति—**अत्रेत्यादि** असंसारित्वमदृष्टशून्यता। पाषाणपर्वतादि-भ्रमं निराकरोति। **साधारणमिति**। अव्ययत्वस्य सर्वात्मसाधारण्यादन्यथा व्याचष्टे **आगन्तुकेति**। अप्रतिघातः याथार्थ्यम्। **तेनेति**। कूर्मादिशरीरावेशेन भगवत एव धारकत्वात् न तद्विरोध इति भावः। धृत्यादेरित्यादिपदोपगृहीतं हेतुमाह—**संहरणादिति**।
10 प्रयत्नवद्विनाश्यं प्रयत्नवदात्मसंयोगप्रयोज्यक्रियाधीनसंयोगनाशनाश्यं विनाश्यत्वात्, विनाश्यद्रव्यत्वात्। **मूर्त्येति**। ब्रह्मविष्णुरुद्रादिरूपैः संभ्रामयति। उत्पाद्य समूर्तं नाशयति। विनाश्य तादृशं पुनरुत्पाद्य वर्तयति चक्रवदिति। यथा चक्रं तत्र देशसंयोगमुत्पद्यमानं संस्थाप्य विनाशयति। ततस्तत्रैव तादृशं संयोगमुत्पाद्य स्थापयतीत्यर्थः। सर्वभूतानि सर्वाणि जन्यद्रव्याणि। प्रकृतिं परमाणुं सकलजन्यद्रव्याणां मूलकारणत्वात् यानि
15 तदवशिष्टानि साक्षात्परम्परया वा तत्तद्वृत्तिनाशप्रतियोगीनि वा भवन्ति। **कल्पक्षय इति**। प्रलय इत्यर्थः। एतच्च पूर्वार्धान्वयि। मामकीमित्यनेन नाशे स्वस्योपयोगः सूचित इति प्रकृतोपष्टम्भः। एतेन भगवत एव संसारसंहारव्युत्पादनेन। व्याख्याताः रुद्रादिपदस्य भगवत्परत्वेन ॥४॥

पदात् खल्वपि—

20 **कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः।**
**विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत् ॥५॥**

पदशब्देनात्र पद्यते गम्यते व्यवहाराङ्गमर्थोऽनेनेति वृद्धव्यवहार एवोच्यते। अतोऽपीश्वरसिद्धिः। तथा हि—यदेतत् पटादिनिर्माणनैपुण्यं कुविन्दाऽऽदीनां, वाग्व्यवहारश्च व्यक्तवाचां, लिपितत्क्रमव्यवहारश्च बालानां, स सर्वः स्वतन्त्रपुरुष-
25 विश्रान्तो व्यवहारत्वात् निपुणतरशिल्पिनिर्मितापूर्वघटघटनानैपुण्यवत्, चैत्रमैत्रादि-पदवत्, पत्राक्षरवत्, पाणिनीयवर्णनिर्देशक्रमवच्चेति।

आदिमान् व्यवहार एवम्, अयन्त्वनादिरन्यथाऽपि भविष्यतीति चेन्न। तद-सिद्धेः। आदिमत्तामेव साधयितुमयमारम्भः। न चैवं संसारस्यानादित्वभङ्गप्रसङ्गः। तथापि तस्याविरोधात्। न हि चैत्रादिव्यवहारोऽयमादिमानिति भवस्याप्यनादिता

नास्ति, तदनादित्वे वा न चैत्रादिपदव्यवहारोऽप्यादिमानिति। अस्त्ववार्ग्दर्शी कश्चिदेवात्र मूलमिति चेन्न। तेनाशक्यत्वात्, कल्पादावादर्शाभासस्याप्यऽसिद्धेः। साधितौ च सर्गप्रलयौ।

ननु व्यवहारयितृवृद्धः शरीरी समधिगतो, न च ईश्वरस्तथा, तत्कथमेवं स्यात्। न। शरीरान्वयव्यतिरेकाऽनुविधायिनि कार्ये तस्यापि तद्वत्त्वात्। गृह्णाति हि ईश्वरोऽपि कार्यवशाच्छरीरमन्तरान्तरा, दर्शयति च विभूतिमिति। अत्राप्यागमः—

पिताऽहमस्य जगतो माता धाता पितामहः।

तथा,

यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्॥ इति॥

एतेन 'नमः कुलालेभ्यः कर्मारेभ्य' इत्यादि यजूंषि बोद्धव्यानि।

प्रत्ययोऽपि। प्रत्ययशब्देनात्र समाश्वासविषयप्रामाण्यमुच्यते। तथा च प्रयोगः आगमसंप्रदायोऽयं कारणगुणपूर्वकः प्रमाणत्वात्, प्रत्यक्षादिवत्। न हि प्रामाण्यप्रत्ययं विना क्वचित् समाश्वासः। न चासिद्धस्य प्रामाण्यस्य प्रतीतिः। न च स्वतः प्रामाण्यमित्यावेदितम्। न च नेदं प्रमाणम्, महाजनपरिग्रहादित्युक्तम्। न चासर्वज्ञो धर्माधर्मयोः स्वातन्त्र्येण प्रभवति। न चासर्वज्ञस्य गुणवत्तेति निःशङ्कमेतत्।

श्रुतेः खल्वपि। तथा हि—सर्वज्ञप्रणीता वेदाः वेदत्वात्। यत् पुनर्न सर्वज्ञप्रणीतं, नाऽसौ वेदो यथेतरवाक्यम्।

ननु किमिदं वेदत्वं नाम ? वाक्यत्वस्यादृष्टविषयवाक्यत्वस्य च विरुद्धत्वात्, अदृष्टविषयप्रमाणवाक्यत्वस्य चासिद्धेः। मन्वादिवाक्ये गतत्वेन विरोधाच्चेति चेन्न। अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वस्य तत्त्वात्। न ह्यस्मदादीनां प्रत्यक्षादि मूलम्। भ्रमविप्रलिप्से, महाजनपरिग्रहादित्युक्तम्। नापि परम्परैव मूलं, महाप्रलये विच्छेदादित्युक्तम्।

अन्वयतो वा। वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद्, अस्मदादिवाक्यवत्। अस्मर्यमाणकर्तृकत्वान्नैवमिति चेन्न। असिद्धेः।

अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः।
प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते॥

वेदान्तकृद्वेदविदेव चाहम्, इति स्मृतेः। तस्माद्, 'यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादिश्रुतिपाठकस्मृतेश्च।

अर्थवादमात्रमिदमिति चेन्न। कर्तृस्मरणस्य सर्वत्राविध्यर्थत्वात्। तथा चास्मरणे कालिदासादेरस्मरणात्। एवञ्च कुमारसम्भवादेरकर्तृकत्वप्रसङ्गः। अनैकान्तिकत्वं वा हेतोः।

प्रमाणान्तरागोचरार्थत्वात् सत्प्रतिपक्षत्वमिति चेन्न। प्रणेतारं प्रत्यसिद्धेः। अन्यं प्रत्यनैकान्तिकत्वात्। आकस्मिकस्मितबीजसुखानुस्मृतेः कारणविशेषस्यान्यं प्रति प्रमाणान्तरागोचरस्यापि तेनैव वक्त्रा प्रतिपाद्यमानत्वात्।

वक्तैव प्रकृते न सम्भवति। हेत्वभावे फलाभावात्। चक्षुरादीनां तत्रासा-
5 मर्थ्यात्। अस्मदादीन्द्रियवत्। मनसो बहिरस्वातन्त्र्यात्। न। चेतनस्य ज्ञानस्येन्द्रियस्य मनसो वा पक्षीकरणे आश्रयासिद्धेः प्रागेव प्रपञ्चनात्। नित्यनिराकरणे चासामर्थ्यात्।

परमाण्वादयो न कस्यचित् प्रत्यक्षाः तत्सामग्रीरहितत्वादिति चेन्न। द्रष्टारं प्रत्यसिद्धेः। अन्यं प्रति सिद्धसाधनात्।

10 तथापि वाक्यत्वं न प्रमाणम्। अप्रयोजकत्वात्। प्रमाणान्तरगोचरार्थत्वप्रयुक्तं तत्र पौरुषेयत्वं, न तु वाक्यत्वप्रयुक्तम्। न। सुगताद्यागमानामपौरुषेयत्वप्रसङ्गात्। प्रमाणवाक्यस्य सत इति चेन्न। प्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशात्। स्वतन्त्रपुरुषप्रणीतत्वं हि पौरुषेयत्वम्। अर्थप्रतीत्येकविषयौ हि विवक्षाप्रयत्नौ स्वातन्त्र्यम्। मन्वादिवाक्यस्याऽपौरुषेयत्वप्रसङ्गाच्च। तदर्थस्य
15 शब्देतरप्रमाणागोचरत्वात्। प्रयुज्यमानवाक्येतरगोचरार्थत्वमात्रमिति चेन्न। तस्य वेदेऽपि सत्त्वात्, एकस्याप्यर्थस्य शाखाभेदेन बहुभिर्वाक्यैः प्रतिपादनात्। अस्त्वेवं, न तु तेषां मिथो मूलमूलीभाव इति चेन्न। उक्तोत्तरत्वात्।

संख्याविशेषात् खल्वपि। द्व्यणुकत्र्यणुके तावत् परिमाणवती द्रव्यत्वात्। तच्च परिमाणं कार्यं कार्यगुणत्वात्। न च तस्य परमाणुपरिमाणं द्व्यणुकपरिमाणं वा
20 कारणम्। नित्यपरिमाणत्वात्, अणुपरिमाणत्वाच्च, अन्यथा अनाश्रयकार्योत्पत्तिप्रसङ्गात्। द्व्यणुकस्य महत्त्वप्रसङ्गाच्च त्र्यणुकवदण्वारभ्यत्वाविशेषात्। तत्र कारणबहुत्वेन महत्त्वे अणुपरिमाणस्यानारम्भकत्वस्थितेः। अणुत्वमेव महदारम्भे विशेष इत्यपि न युक्तम्। महतो महदनारम्भप्रसङ्गात्। अणुत्वमहत्त्वयोर्विरुद्धतया एकजातीयकार्यानारम्भकत्वप्रसङ्गात्। बहुभिरपि परमाणुभिर्द्वाभ्यामपि
25 द्व्यणुकाभ्यामारम्भप्रसङ्गाच्च।

एवं सति को दोष इति चेत्। परमाणुकार्यस्य महत्त्वप्रसङ्गः। कारणबहुत्वस्य तद्धेतुत्वात्। अन्यथा द्वाभ्यां त्रिभिश्चतुर्भिरित्यनियमेनाप्यण्वारम्भे तद्वैयर्थ्यप्रसङ्गात्। अणुन एव तारतम्याभ्युपगमस्तु संख्यामवधीर्य न स्यात्। अस्तु महादारम्भ एव त्रिभिरिति चेन्न। न, महतः कार्यस्य कार्यद्रव्यारभ्यत्वनियमात्।
30 तथापि वा तारतम्ये संख्यैव प्रयोजिकेति। न च प्रचयोऽपेक्षणीयोऽवयवसंयोगस्याभावात्।

तस्मात् परिमाणप्रचयौ महत एवारम्भकाविति स्थितिः। अतोऽनेकसंख्या परिशिष्यते। सा अपेक्षाबुद्धिजन्या, अनेकसंख्यात्वात्। न चास्मदादीनामपेक्षाबुद्धिः परमाणुषु सम्भवति। यद् यस्यासौ सर्वज्ञः। अन्यथा अपेक्षाबुद्धेरभावात्
35 संख्याऽनुत्पत्तौ तद्गतपरिमाणानुत्पादेऽपरिमितस्य द्रव्यस्यानारम्भकत्वात् त्र्यणुका-

नुत्पत्तौ विश्वानुत्पत्तिप्रसङ्गः। अस्मदादीनामेवाऽऽनुमानिक्यपेक्षाबुद्धिरस्त्विति चेन्न। इतरेतराश्रयप्रसङ्गात्। जाते हि स्थूलकार्ये तेन परमाण्वाद्यनुमानं, तस्मिन् सति द्व्यणुकादिक्रमेण स्थूलोत्पत्तिः। अस्त्वदृष्टादेव परिमाणं कृतमपेक्षाबुद्ध्येति चेत्। न। अस्तु तत एव सर्वं, किं दृष्टकारणेनेत्यादेरसमाधेयत्वप्रसङ्गादिति ॥५॥

आमोदः

ननु घटादिनाश एव प्रयत्नपूर्वको न तु ब्रह्माण्डनाशोऽपीत्यत्र 5 विशेषस्तु विशेषवान्, न तु सामान्यव्याप्तौ विशेषस्योपाधित्वं धूमानुमानादिविप्लवप्रसङ्गादिति यत् पूर्वमुक्तं तदेतद्वर्तिष्यमाणहेतुष्वप्यतिदिशति—

कार्यत्वादिति ॥ (५।५) यथा धृतिविनाशयोः कार्यकारणभावो निरुपाधित्वग्राहकः, एवं पदस्यापि व्यवहारस्यापि न त्वादिमत्त्वमुपाधिः 10 स्यादत आह—विच्छेदेनेति। प्रलये विच्छेदेन प्रयोज्यप्रयोजकवृद्धाभावात्। घटादिनिर्माणे घटादिपदव्युत्पत्त्यभावादाद्यव्यवहारप्रवर्त्तक ईश्वरोऽभ्युपगन्तव्य इत्यर्थः। पद्पदमीश्वरादिपरं सार्थमिति द्वितीयव्याख्यानाद्धेतुं व्युत्पादयति—पदशब्देनेति। व्यक्तवाचो मनुष्याः, स्वातन्त्र्यञ्च पुरुषस्य तज्जातीयव्यवहारानुपजीवित्वम्। अत्र पक्षभेदेन दृष्टान्तात् क्रमेणाह— 15 निपुणतरेत्यादि। व्यवच्छेदेत्यादि प्रतीकं व्याचष्टे। अनादित्वमुपाधिमाशङ्कते—आदिमानिति। अन्यथापीति। स्वतन्त्रपुरुषमन्तरेणापीत्यर्थः। तदसिद्धेरिति। अनादित्वासिद्धेरित्यर्थः। स्वतन्त्रपुरुषाधीनत्वेनादिमत्त्वैव सेत्स्यतीत्याह—आदिमत्तामेवेति। न त्वपसिद्धान्त इत्यत आह— न चैवमिति। तथापीति। संसारानादित्वेऽपि प्रकृतव्यवहारस्यादिमत्त्वा- 20 विरोधादित्यर्थः। यद्वा, प्रकृतव्यवहारस्यादिमत्त्वेऽपि संसारस्यानादित्वाविरोधादित्यर्थः। सर्गध्वंसव्याप्यप्रागभावप्रतियोगित्वं संसारानादित्वम्। प्रकृतव्यवहारस्य च स्वतन्त्रपुरुषाधीनत्वमादिमत्त्वमिति न विरोध इति भावः। एतदेव दृष्टान्तेनोपपादयति—न हीति प्रकृतहेतावन्यथासिद्धि शङ्कते—अस्त्विति। लिप्यादिमूलमादर्शः। ननु यदि प्रलयेन विच्छेदः स्यात् 25 तदाऽदर्शभावः स्यात्। न त्वेवमत आह—साधिताविति। अस्मदाद्यदृष्टाधीनमीश्वरस्यापि शरीरमित्याह—शरीरेति। अत्रोपजीव्यसंगतिमाह—गृह्णातीति। विभूतिरिति। ब्रह्माद्यवतारादीत्यर्थः। पितामहस्येति। जगतोऽभि-

नवपटादिनिर्माणरूपस्य पिता जनकः। माता पालकः, धाता रक्षकः, पितामहो जनकस्यापि जनक इत्यर्थः। यद्यहं कर्मण्यतन्द्रितोऽनलसो न वर्तेयं न स्याम, ततश्च यदि कर्म न कुर्यां, तदा अमी लोकाः लोक्यमाना व्यवहारा उत्सीदेयुरुच्छिन्ना भवेयुरित्यर्थः। ननु कथमेतावतैवोत्सी-
5 देयुरत उक्तम्—ममेत्यादि। मदुपदिष्टेन वर्त्मना मनुष्या वर्तन्ते व्यवहरन्तीत्यर्थः। एतेनेति। कुलालादिदेहमुपगृह्य ईश्वर एव प्रवर्त्तक इति साधनेनेत्यर्थः। प्रत्ययादपीति। साध्यो विश्वविदव्ययः इत्यनुषङ्गः। लिङादि-प्रत्ययादिति व्याख्यान्तराद्व्यवच्छेत्तुं, विषयिणा विषयमुपलक्षयति प्रत्यय-शब्देनेति। सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायः। आगमश्चासौ
10 सम्प्रदायश्चेति आगमसम्प्रदायः। प्रवाहो वा सम्प्रदायः। कारणं यो गुणस्तत् पूर्वक इत्यर्थः। प्रत्यक्षादिवदिति। प्रत्यक्षे सन्निकर्ष अनुमाने यथार्थपरामर्शः। समाश्वास इदमित्थमेवेति संप्रत्ययः। स च प्रामाण्य-ग्रहाधीनः, प्रमाणस्योत्पत्तौ गुणो हेतुः, गुणश्च शाब्दे ज्ञाने वक्तृयथार्थ-ज्ञानमित्यादि प्रमायाः परतन्त्रत्वादित्यादिना साधितमेवेत्यर्थः। ननु ज्ञान-
15 मात्रहेत्वधीनत्वं स्वतस्त्वमेव प्रामाण्यस्य, न तु गुणजन्यत्वमत आह—न चेति। ननु वेदजन्या प्रमैव न भवतीत्यत आह—न च वेदमिति। ननु तथाप्यस्मदादिगुणजन्यत्वं स्यादित्यत आह—न चेति। स्वातन्त्र्येणेति। वेदं विना नास्मदादेर्धर्माधर्मज्ञानमित्यर्थः। हेतुकृतं वेदत्वमाक्षिपति—नन्विति। अस्मदादिविसंवादिवाक्ये सर्वज्ञपूर्वकत्वं विरुद्धमदृष्टविषयकास्म-
20 दादिविसंवादिवाक्ये वा दृष्टविषयवाक्यत्वं विरुद्धमत आह—वाक्यत्व-स्येति। व्यभिचारितो व्यतिरेको विरुद्ध इति सिद्धान्तानुसारात्। अनुप-लभ्यमानमूलान्तरत्वे सतीति। मन्वादिवाक्य (?) वाक्यच्छेदाय। महाजनपरिगृहीतवाक्यत्वादिति। सुगताद्यागमव्यवच्छेदाय। प्रथमविशेष-णासिद्धिमाह—नह्यत्रेति। द्वितीयविशेषणासिद्धिमाह—नापीति। अन्यथा-
25 सिद्धिं निरस्यति—नापीति। यद्यपि शाखासहस्रस्य प्रतिपादकत्वाभावात् वाक्यत्वमसिद्धं, न च शाखासमुदायत्वमेव वेदत्वम्, शाखाया वेदनि-रूप्यत्वेनात्माश्रयत्वात्। नापि वेदत्वं शब्दगतोऽपीति विशेषणं देवदत्तो-यत्वाद्यनुमापकजातिसङ्करात्। स्वर्गकामादिपदसमभिव्याहृतवाक्यत्वं च स्मृतावतिव्याप्तत्वात् विरुद्धार्थं, नापि शब्दतदुपजीविप्रमाणातिरिक्तप्रमाण-

जन्यप्रमित्यविषयार्थत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं तत्। यद्यपि शब्दत्वं यत्किञ्चिच्छब्दे विरुद्धं प्रमाणशब्दत्वं च तथा। ज्ञानाजन्यप्रमाणशब्दत्वमसम्भवि। वाक्यत्वेति विशेषणोऽपि तथा। जन्य-वाक्यार्थज्ञानजन्येत्यत्र जन्यपदव्यावर्त्याभावः। शब्दजन्येति कृते प्रत्यक्ष-दृष्टार्थवक्तृवाक्ये विरुद्धं जन्यप्रमित्यविषयार्थकत्वेऽसम्भवि। जन्यपद- 5 व्यावर्त्याभावश्च प्रमाया जन्यप्रमित्यविषयार्थकत्वे सतीत्यसम्भवि। शब्द-तदुपजीविप्रमाणातिरिक्तत्वेन प्रमाणविशेषान्नोक्तदोषः। तथापि प्रमेयत्व-सामान्यलक्षणया प्रत्यासत्त्या यत् प्रत्यक्षं योगजधर्माधीनं च यत् प्रत्यक्षं तद्विषयकार्थत्वात् शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषया-र्थकत्वं विशेषणं स्वरूपासिद्धम्। किंस्विद्विश्वस्य भेषजमित्यादौ भागासिद्धं 10 वेदादर्थं प्रतीत्यास्मदाद्युदीरितवेदभागे शब्दजन्यवाक्यार्थज्ञानाजन्यमसिद्ध-मतो यथान्यायेन वा दुष्टं कृतमर्थन्यासेन। वाक्यादिति संगृहीतं हेतुं व्याचष्टे—अन्वयतो वेति। पौरुषेयाणीति। स्वजातीयोच्चारणानपेक्षोच्च-रितजातीयानीत्यर्थः। तेन तदर्थधीजन्यत्वे तदुच्चारणधीजन्यत्वे वा साध्ये व्यापकजन्यत्वेन सिद्धसाधनम्, स्वतन्त्रपुरुषप्रणीतत्वे च साध्ये इदानीं 15 पठ्यमाने वेदे भागासिद्धिः, तज्जातीयत्वे च साध्ये स्मृत्यादौ व्यभिचार इत्यपास्तम्। आद्यस्मृतिपुराणभारतेषु स्वजातीयोच्चारणानपेक्षोच्चरित-जातीयत्वसत्त्वान्न व्यभिचारः। ननु यदि वेदः सकर्तृकः स्यात् तदा रघुकाव्यादौ कालिदासादेरिव कर्तुः स्मरणं स्यात् इत्याह—अस्मर्यमाणेति। प्रकृतेऽपि कर्तुः स्मरणमस्त्येवेत्याह—अनन्तरश्चेति। श्रुतिपाठकेति। 20 श्रुतिपाठकानां या स्मृतिस्तत इत्यर्थः। तथा चेति। श्रुतेरित्येवार्थः पर्यवस्यति। श्रुत्युपाधिकस्मृतेश्चेति पाठे श्रुत्युपाधिका स्मृत्यर्थप्रतिपादि-केत्यर्थः। ननु कार्यान्वित एव वृद्धव्यवहाराधीना शक्तिरिति तदेव प्रमाणं न त्वर्थवादोऽपीत्याह अर्थवादेति।

'सदेव सौम्येदमग्र आसीत् (छान्दो ।६। 'रुद्रः किल रुरोद' 25

इत्याद्यर्थवादानां मुख्यार्थपरत्वे बाधकाभावात् अर्थवादानामपि प्रमाणत्वात्। अत एव 'यन्न दुःखेन सम्भिन्नम्' इत्यादीनामपि प्रमाणत्व-मन्यथा स्वर्गपदशक्तिग्रहानुपपत्तेरित्यभिप्रायवानाह—कर्तृस्मरणस्येति। अनैकान्तिकत्वमिति। अस्मर्यमाणकर्तृकत्वं कुमारसम्भवादौ न चापौरुषेयत्व-

मित्यनैकान्तिकत्वमित्यर्थः। तत्स्मरणस्यार्थवादत्वेन त्वया प्रामाण्यानभ्युपगमादिति भावः। ननु वेदाः न पौरुषेयाः प्रमाणान्तरागोचरार्थत्वादिति व्यतिरेकिणा सत्प्रतिपक्षितमेतदित्याह—प्रमाणेति। प्रणेतुरीश्वरस्य शब्दापेक्षया यत्प्रमाणान्तरं प्रत्यक्षं तद्गोचरार्थत्वं वेदेऽप्यस्तीति स्वरूपासिद्धि-
5 रित्याह—प्रणेतारमिति। अनैकान्तिकत्वं स्फुटयति—आकस्मिकेति। उत्तमाङ्गना काचित् स्वप्ने मया दृष्टेति वाक्ये पौरुषेयत्वे सत्यपि वक्तृभिन्नपुरुषप्रमाणान्तरागोचरार्थत्वसत्त्वादनैकान्तिकत्वमित्यर्थः। वेदे पौरुषेयत्वानुमाने बाधकमाह—वक्तैवेति। स्वर्गापूर्वादिज्ञानवतो वेदकर्तृत्वं सम्भाव्येत, तच्च प्रकृतवक्तुर्नास्तीत्यर्थः। हेत्वभाव इति। स्वर्गापूर्वादिज्ञानहेत्वभावे
10 ज्ञानरूपफलाभाव इत्यर्थः। हेत्वभावमेवाह—चक्षुरादीनामिति। वेदवक्ता नातीन्द्रियार्थदर्शी पुरुषत्वात्। तज्ज्ञानं नातीन्द्रियविषयकं ज्ञानत्वात्। तदिन्द्रियं मनो वा नातीन्द्रियार्थावगाहि इन्द्रियत्वात्, मनस्त्वाद्वेति। सिद्ध्यसिद्धिपराहतमिति पूर्वमेव प्रपञ्चितमित्याह—चेतनस्येति। किञ्च सामग्री चेन्नास्ति तदा कार्यं तस्य ज्ञानं मास्तु, नित्यं तु स्यादेव इत्याह—
15 नित्येति। अतीन्द्रियार्थदर्शित्वं वक्तुरनुमानबाधितमित्याह—परमाण्वादय इति। द्रष्टा यद्यनित्यज्ञानवान् नूनं तत्सामग्र्यप्यस्त्येव इति स्वरूपासिद्धो हेतुरित्याह—द्रष्टारमिति। ननु यत्र यत्र पौरुषेयत्वं तत्र तत्र प्रमाणान्तरगोचरार्थत्वं दृष्टं, प्रकृते च तथा नास्तीति पौरुषेयत्वं निवर्तत इत्युपाधि शङ्कते—प्रमाणान्तरेति। मण्डलीकरणादिप्रतिपादकवाक्ये पौरुषेयत्वे
20 साध्ये सत्यपि प्रमाणान्तरगोचरार्थत्वं नास्तीति साध्याव्यापकत्वमाह—सुगतेति। पक्षधर्मावच्छिन्नसाध्यव्यापकतामाह—प्रमाणस्येति। प्रणेतृषु प्रमाणान्तरगोचरार्थत्वमेव पौरुषेत्वं साध्यमिह विवर्जितं न च साध्यमेवोपाधिर्भवितुमर्हति। सकलानुमानोच्छेदकत्वादित्याह—प्रणेत्रिति। उपाधेः साध्यानुप्रवेशं स्फुटयितुमाह—स्वतन्त्रेति। तथापि कथं प्रमाणान्तरागोच-
25 रार्थत्वमुपाधिः साध्यमध्ये निविशते इत्याह—अर्थप्रतीतीति। वाक्यप्रणयनानुकूलज्ञानेच्छाकृतिमत्त्वं स्वातन्त्र्यं, तथा च प्रमाणान्तरगोचरार्थत्वं साध्यप्रविष्टमेवेत्यर्थः। किञ्च त्वन्मते मन्वादिवाक्यानां शब्देतरप्रमाणगोचरार्थानाम् अपौरुषेयत्वं स्यादित्याह—मन्वादीति। ननु मन्वादिवाक्ये प्रमाणान्तरं वेदस्तद्गोचरार्थत्वमस्त्येवेति नोक्तोपाधिव्यावृत्तिरित्याह—प्रयुज्यमानेति।

एवं सति साधनाव्यापकत्वमुपाधेरित्याह—तस्येति। एकस्याः शाखायाः प्रयुज्यमानायाः शाखान्तरगोचरार्थत्वसत्त्वादित्याह—एकस्यापीति। ननु मूलभूतप्रमाणान्तरगोचरार्थत्वमुपाधिः, स च वेदव्यावृत्त एवेति क्व साधन-व्यापकत्वमित्याह—अस्त्वेवमिति। उक्तोत्तरत्वादिति। मूलभूतप्रमाणान्तर-गोचरार्थस्य पौरुषेयत्वस्य साध्यत्वान्नोपाध्युपाधिमद्भाव इत्युक्तत्वादित्यर्थः। 5
द्व्यणुकपरिमाणजनकं परमाणुद्वयगतं द्वित्वं द्व्यणुकत्रयगतञ्च त्रित्वं त्रसरेणौ महत्त्वजनकं तदुभयमप्यस्मदाद्यपेक्षाबुद्धिजन्यं न सम्भवतीति यदपेक्षाबुद्धिजन्यं स ईश्वर इति साधयितुं पीठमारचयति—द्व्यणुकेति। कार्यगुणत्वादिति षष्ठीसमासः। अणुपरिमाणत्वादित्युभयत्र हेतुः, मनः परिमाणमत्र दृष्टान्तः। तच्च धर्मिग्राहकमानादणु चा (?) जनकत्वं चेति 10
भावः। यदि नित्यं परिमाणमणुपरिमाणं वा परिमाणमारभेत, तदा स्पर्शशून्यानामाकाशकालमनसां द्रव्याणामारम्भकाणामपि परिमाणमनाश्रय-मेव परिमाणमारभेतेत्याह—अन्यथेति। किञ्च त्रसरेणुमहत्त्वमणुत्वेनैव चेदुत्पाद्यं, तदा परमाणुपरिमाणमपि द्व्यणुके महत्त्वमेवोत्पादयेत् इत्याह—द्व्यणुकस्येति। ननु त्रसरेणौ कारणबहुत्वाधीनं महत्त्वं नाणुत्वाधीनमिति- 15
कथमविशेष इत्याह—कारणेति। ननु चानित्यमणुत्वं महत्त्वमारभते, न तु नित्यमपीत्याशङ्क्य निराकरोति—अणुत्वमिति। तर्हि व्यभिचारान्महत्त्वं महत्त्वारम्भकं न स्यादित्याह महत इति। ननु अणुत्वमहत्त्वाभ्यां महत्त्व-मारभ्यतां, को दोष इत्यत आह—अणुत्वेति। यदि वाणुत्वस्य बहुत्व-सामानाधिकरण्यमात्रं महत्त्वारम्भे तन्त्रं, तत्राह बहुभिरिति। अनित्या- 20
णुत्वमात्रं चेन्महत्त्वारम्भे तन्त्रं, तत्राह—द्वाभ्यामिति। यद्वा, परिमाणारम्भे यदि संख्या न तन्त्रं, तदाऽनियमः स्यादित्यर्थः। एवं सतीति। बहुभिः परमाणुभिर्महदारभ्यतां को दोष इत्यर्थः। महत्त्वं प्रति बहुत्वं तन्त्रं, तथा च बहुभिः परमाणुभिरारम्भे भग्ने घटे कपालशर्कराद्युपलम्भो न स्यादिति भावः। कारणबहुत्वस्य तद्धेतुत्वात्। महदारम्भहेतुत्वात्, तस्य च त्वया 25
परमाणावभ्युपगमादित्यर्थः। नन्वणुत्वसमानाधिकरणम् बहुत्वमप्यणुत्व-मारभतां, तथा च परमाणुकार्यस्य कुतो महत्त्वापत्तिरित्यत आह—अन्यथेति। द्वाभ्यामणुभ्यामणुद्रव्यमारभते, त्रिभिश्चतुर्भिरपि यदा तादृश-मेवाणुद्रव्यमारभेत, तदा बहुत्वसंख्याया वैयर्थ्यमेव स्यात्, कार्ये विशेषाना-

धानादित्यर्थः। ननु कथं बहुत्वमतन्त्रं यावताणुद्वयापेक्षयाऽणुत्रयारब्धम् अणुतरम्, अणुचतुष्टयारब्धम् अणुतमं स्यादित्यत आह—अणुन एवेति। एवं सति संख्यायाः परिमाणारम्भकत्वं त्वयाऽभ्युपगतमिति सिद्धं नः समीहितमिति भावः।

5 **परमाणुकार्यस्य** महत्त्वप्रसङ्ग इति यदुक्तं तत्रेष्टप्रसङ्गमाह—**अस्त्विति**। **त्रिभिरिति**। परमाणुभिरित्यर्थः। महत इति। घटादौ तथादर्शनादिति भावः। ननु सहचारमात्रमेतत्, न तु नियम इत्यत आह—**तथापि चेति**। परमाणुभिरपि महद्द्रव्यारम्भे महत्तरतमादिभावेन यत् तारतम्यमुपलभ्यते तत्र परमाणुसंख्यैव तन्त्रं, महत्त्वप्रचययोरभावादित्यर्थः। ननु

10 द्व्यणुके परमाणुप्रचयेन द्व्यणुकप्रचयेन च त्रसरेणौ परिमाणमारभ्यतां किं द्वित्वत्रित्वाभ्यामत आह **न चेति**। तत्र प्रचयाभावात् संख्यैव तन्त्रमित्यर्थः। **परिशिष्यत** इति। द्व्यणुकत्र्यणुकपरिमाणारम्भायेति शेषः। स्वापेक्षितं रचिते पीठे तावदुपपादयति—**सा चेति**। **अपेक्षाबुद्धिरिति**। प्रात्यक्षिकीत्यर्थः। एवमनभ्युपगमेऽनिष्टपरम्परामाह—**अन्यथेति**। अन्यो-

15 न्याश्रयं विशदयति—**जाते हीति**। कार्यपदं तात्पर्यपरम्, आयोजनपदं व्याख्यानपरं, पदपदमीश्वरादिपरम् ॥५॥

## बोधनी

क्रमप्राप्तं पदादिति हेतुमुपादत्ते—**पदादिति**। धृतिविनाशयोर्निरुपाधित्वमुक्तम्। कार्यत्वदृष्टान्तेन स्पष्टयन्नुपात्तस्य पदस्यावशिष्टपदानां च हेतुनामेकोद्यमेन निरुपाधित्वमाह—**कार्यत्वादिति**। हेतोर्निरुपाधित्वमेवं धृतिविनाशयोरपि निरुपाधित्वम्। यद्वा

20 धृतिविनाशयोरेवं कार्यत्वात् प्रयत्नकार्यत्वस्य सिद्धे निरुपाधिकत्वमित्येकप्रसरेण योजना, अस्यापि पदस्य स्वसाध्येन विच्छेदेन स्वतन्त्रपुरुषपर्यवसानात्मना संबन्धे निरुपाधित्वम्। यद्वा पदस्य निरुपाधित्वमित्यनेन संबन्धः।

ननु पदं वृद्धव्यवहारः सत्त्वादिमान्स्वतन्त्रपुरुषपूर्वकः अनादिस्त्वयमन्यथा भविष्यतीत्याह—**विच्छेदेनेति**।

प्रलयेन नानादिमत्त्वमित्यर्थः। प्रत्ययश्रुत्यादेरपि पूर्ववन्निरुपाधित्वमित्यर्थः। पद-

25 शब्दस्य विवक्षितार्थमुक्त्वा तत ईश्वरसिद्धिं प्रयोगचतुष्टयेनाह—**पदशब्देनेति**।

आदर्शनैरपेक्ष्येण[1] कर्तृत्वं स्वातन्त्र्यं बालानां लिपिव्यवहारस्य दृष्टान्तो यन्त्राक्षरवदिति । तत्क्रमव्यवहारस्य तु पाणिनीयवर्णक्रमनिर्देशः अइउणित्यादिः । उपाधिमाशङ्कते—**आदिमानिति** । **एवमिति** । स्वतन्त्रपुरुषविश्रान्त इत्यर्थः । **नेति** । तस्य व्यवहारानादित्वस्येति । असिद्धिमेवाह—**आदिमत्तामिति** । व्यवहाराणामादिमत्वे संसारस्याप्यादिमत्वप्रसङ्ग इत्यत्राह—**न चैवमिति** । व्यवहारादिमत्वेऽपि संसारादिमत्वस्य विरोधाभावमेव दृष्टान्तेनाह—**न हीति** । पूर्वपूर्वभवपरं परोपार्जितकर्माशयपरवशानेव[2] प्राणिनः सृष्ट्वा व्यवहारप्रवर्त्तनोपपत्तेर्न संसारस्यादिमत्ताप्रसङ्ग इति[3] भावः । **अस्त्विति** । न तु ततः सर्वज्ञसिद्धिरिति । अशक्यतामेवाह—**कल्पादाविति** । अद्यत्वे हि निपुणतरा अपि शिल्पिनः कमप्यादर्शमालोच्य तदनुसारेणापूर्वनैपुण्यनिर्माणाय प्रभवन्ति । **सर्गादौ** तु सर्वेषामप्यव्युत्पन्नत्वेन व्यवहारादर्शस्याभावेन कथमयं व्यवहारान् प्रवर्त्तयेत् **अथापि** वा शक्तौ स एवास्माकमीश्वर इति भावः ।

ननु कल्पादिरेवासिद्ध इत्यत्राह—**साधितो चेति** । सत्प्रतिपक्षत्वमाशङ्कते—**नन्विति** । यद्धि कार्यं शरीरे सति भवति असति च न भवति तस्मिन् व्यवहारप्रवर्त्तनादौ ईश्वरस्यापि शरीरत्वादसिद्धमशरीरित्वमित्याह—**नेति** । किमीश्वरोऽपि शरीरवानित्यत्राह—**गृह्णातीति** । स खल्वीश्वरस्येच्छामात्रकल्पितनिखिलभुवनभवनपालनविलयनलीलोऽपि लोकमर्यादामनतिक्रमकर्माणस्तत्कार्यानुकूलशरीरमुपादान एव तत्र कर्त्ता भवति, तथा कुर्वन्नेव मध्ये मध्ये [ ऐश्वर्य- ] वशाद्दर्शयति चात्मनः परमाद्भुता विभूतिः—यथा भगवान् देवकीतनयः पाण्डवसन्देशहारी दुर्योधनसभायामात्मनो विभूतिं प्रदर्शयाम्बभूव । तथा अर्जुनसारथिर्युद्धारम्भे रथोपस्थमास्थितोऽपवर्गमार्गमर्जुनायोपदिशन्नात्मनः सर्वात्मभावेन परमैश्वर्यं दर्शयामासेति । व्यवहारमूलत्वेऽपीश्वरस्यागमसंवादमाह—**अत्रापीति** । पितृत्वादिना शब्दव्यवहारमूलत्वं दर्शितम् । **यदि ह्ययमिति** । कर्मकर्तृत्वेन क्रियाव्यवहारस्य मूलत्वमाह—**लोका इति** । लोक्यन्त इति प्रामाणिका व्यवहारा उच्यन्ते इति न परं स्मृतिः वेदोऽपि तस्य लोकव्युत्पत्तये सर्गादौ कुलालादिरूपेण कर्तृत्वं संवदतीत्याह—**एतेनेति** । घटादिव्यवहारस्य स्वतन्त्रपुरुषपूर्वकत्वप्रतिपादनेनेत्यर्थः ।

**प्रत्ययादिति** । हेतुमवतार्य[4] प्रत्ययशब्दार्थमाह—**प्रत्ययादिति** । प्रत्ययः समाश्वासः । तेन तद्विषयमप्रामाण्यं लक्षयति विषयो हेतुरत एवाह—न हि प्रामाण्य-

---

१. क अदर्शने नैरपेक्ष्येण कर्तृत्वस्वातन्त्र्यं । २. क. पारवश्येनैव ।
३. क. इत्यर्थः । ४. क. हेत्वभिमत ।

प्रत्ययं विना क्वचित्समाश्वास इति हेतुहेतुमद्भावसंबन्धश्च लक्षणाबीजमिति यथा तत ईश्वरसिद्धस्तदाह—तथा चेति । सम्प्रदीयत इति सम्प्रदायः ततश्चा···नुष्ठाप्य··· नार्थश्चा···इत्यर्थः ।

ननु यमा [ अयमा- ] गमसम्प्रदायस्तत्समाश्वासादेवोत्पद्यते कुतः कारणगुणः
5 सिध्येदित्यत्राह—न हीति । ननु प्रमाणत्वमसिद्धमित्यत आह—न चेति । ततोऽपि न चाप्रतीतौ प्रामाण्यस्य पारलौकिकपरे कर्मणि प्रज्ञावतः प्रवृत्त्युपपत्तिरित्यर्थः । ततोऽपि किमित्याह—न च स्वत इति । न चासिद्धो हेतुरित्याह—न च नेदमिदमिति । अस्तु तर्हि लौकिकः कश्चिदागमस्य कारणं सन्तु तद्गुणा एव प्रामाण्यस्य कारण-मित्यत्राह—न चासर्वज्ञ इति । उक्तं ह्येतत्ततोऽन्यस्मिन्ननाश्वासादिति ।

10 श्रुतेरिति हेतुमुपादाय ततः सर्वज्ञसिद्धिमाह—श्रुतेः खल्विति । वेदत्वादित्यर्थः[1] । संभवति च परिगृहीतविग्रहस्य भगवतो वेदप्रणयनं वचनशक्तौ सत्यां परार्थैकतानत्वात्, यो हिताहितविभागं विद्वानपरार्थैकतानाभिप्रायः संस्थानकरणपाटवे सत्यविदुषे अवश्य-मुपदिशेत् यथान्धाय दक्षिणेन याहि वामेन भागा इति पृथग्जनोऽपि किमुत परम-कारुणिकः परमेश्वर इति ।

15 ननु सर्वज्ञप्रणीतत्वं सर्वज्ञकर्तृकत्वं तच्च दूर्वादिष्वप्यस्तीति सपक्षस्य सत्वात् कथं व्यतिरेकितेति चेत्, न, निश्चितसाध्यधर्मवत एव सपक्षत्वाद्दूर्वादेश्च तथात्वनिश्चयादिति वेदत्वहेतुं विकल्प्य दूषयति—किमिदमिति । विप्रलम्भवाक्यस्याप्यदृष्टविषयत्वात् पक्षविपक्षयोरेव वृत्तेर्विरुद्धत्वमिति, तर्हि प्रमाणपूर्वकत्वेन विशेषयिष्याम इत्याह—अदृष्ट-विषयप्रमाणेति । सर्वज्ञप्रणीतत्वसिद्धेः प्राक् प्रामाण्यविशेषणासिद्धेरिति प्रामाण्यमङ्गी-
20 कृत्याह—मन्वादीति । असर्वज्ञप्रणीतमन्वादिवाक्यगतत्वेन विरुद्धो हेतुरिति । यद्वा बौद्धस्योत्तरमसिद्धेरिति विरोधादिति तु मीमांसकस्येति स्वाभिमतं वेदत्वमाह—अनुपलभ्यमानेति । यस्य वाक्यस्य वक्तृव्यतिरेकेणान्यद्वाक्यादिमूलं नोपलभ्यते महाजनपरिग्रहश्चास्ति, तस्य वाक्यस्य वेदत्वमिति तस्य तर्हि प्रमामूलत्वमेव सिध्येत् न तु सर्वज्ञमूलत्वमिति चेत्तत्राह—न हीति । धर्माधर्मयोरसामर्थ्यात्तस्येति विभ्रमविप्र-
25 लिप्सामूलत्वं तु उक्तरूपस्य वेदस्य नाशङ्कनीयमेवेत्याह—नापीति । अस्तु वा स्वाध्यायरूपपरम्परैव मूलमित्यत्राह—नापीति । तदेव श्रुतिरिति हेतुः केवलव्यतिरेक-तया व्याख्यातः ।

---

१. क. वेदत्वमित्यर्थः ।

अथ वाक्यत्वादिति हेतुमन्वयित्वेन व्याचष्टे—अन्वयतो वेति। स्वतन्त्रपुरुषपूर्वकत्वं पौरुषेयत्वं स्वातन्त्र्यञ्च पदानुपूर्वीकरणे तज्जातीयानुपूर्व्यन्तरदर्शननैरपेक्ष्यमिति सत्प्रतिपक्षत्वमाशङ्कते—अस्मर्यमाणेति। अभियुक्ततमानामेव कर्तृस्मृतेरसिद्धो हेतुरित्याह—नेति। श्रुतिमनुक्त्वा ततः पाठस्मृत्युपन्यासो हेत्वसिद्धेरुपक्रान्तत्वादिति—अर्थवादेति। ततश्चान्यपरत्वात् न स्वार्थे प्रमाणमिति। नेति। न तावदेषामर्थवादत्वं विध्यैक[1]वाक्यत्वाभावात्, अर्थवादत्वेऽपि तेभ्योऽस्माकं जायमानं कर्तृस्मरणं न विध्यर्थं[2] विध्यन्तरोपयोगितया वाक्येनाप्रति[3]पाद्यमानत्वात्। न च प्रामाण्याभावः[4] तथापि [5]तदप्रामाण्ये दुःखेन यन्न सम्भिन्नमित्यादे[6]रप्यप्रामाण्यात् स्वर्गादयो दत्तजलाञ्जलयः स्युः। तथा चेति। जायमानस्यैव कर्तृस्मरणस्याविवक्षाकारणाभावेऽपि विवक्षा[8]पह्नवे सति कालिदासादेरपि स्मरणमपह्नियेत। अविशेषादिति। ततः किमित्याह—एवं चेति। यद्यस्मर्यमाणमेव तत्कर्त्तारमङ्गीकुर्यात्। तत्राह—अनैकान्तिकत्वमिति। अन्यथा सत्प्रतिपक्षत्वमाह—प्रमाणान्तरेति। केवलव्यतिरेकिणोऽस्य लौकिकवाक्यं दृष्टान्त इति हेतुं विकल्प्य दूषयति—नेति। किं प्रणेतुः प्रमाणान्तरागोचर[9]त्वहेतुः श्रोतुर्वा पूर्वत्रा[10]सिद्धो हेतुरीश्वरप्रमाणविषयत्वाद्वेदार्थस्य[11] उत्तरत्रानैकान्तिकत्वमिति तदेवाह—आकस्मिकेति। दृष्टस्वकारणासन्निधानरूपमाकस्मिकत्वं स्मितस्योक्तम्, तत्सन्निधौ तु तत एवानुमानादितरैरपि कारणविशेषो ज्ञायेतेति[12]।

ननु वेदार्थविषयविज्ञानस्य हेत्वभावनिराकृतत्वादज्ञातार्थस्य वक्तृत्वासंभवात्[13] प्रमाणबाधित एव वक्ता वेदस्येत्याह—वक्त्रैवेति। तदाहुः—हेत्वभावे फलाभावात् प्रमाणेऽसति न प्रमा[14] चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मन इति। नेति। गतम्। किञ्च कारणाभावः कार्यमेव ज्ञातं निवर्त्तयितुमीष्टे न त्वकार्यमिति। नित्येति। आश्रयासिद्धिपरिहारेण बाधकान्तरमाह—परमाण्वादय इति। नेति। परमाण्वादिदर्शित्वेनास्मदभिमतस्य तददर्शनसामग्रीराहित्यमसिद्धमेव, ततोऽन्यमर्वाचीनं प्रति तु तेषामप्रत्यक्षत्वमिष्टमेवेति उपाधिमाशङ्क्य निराकरोति। तथापीति। अनुपाधित्वं च सुगताद्यागमेषु साध्यसमव्याप्त्यभावात्। प्रयाणवाक्यस्येति। पौरुषेयत्वमित्यनु-

---

१ क. विधेयकवाक्यताभावात्। २ ख. च विध्यर्थः। ३ क. °प्रतीय°। ४ ख. प्रमाणान्तरबाधः। ५ क. तदप्रामाण्यं। ६ क. °देः प्रामाण्यात्। ७ क. °ञ्जलिः स्यात्। ८ ख. °पक्षा°। ९ ख. °चरार्थ°। १० क. °त्रसि°। ११ ख. °दस्य°। १२. ख. ज्ञेयेतेति। १३. ख. हेतुत्वासंभवात्। १४. क. प्रमाणेसहितप्रमाण इति।

षङ्गः। अन्यं प्रत्यनाशङ्कनीयत्वात् प्रणेतारं प्रतीति कृत्वा आह—नेति। साध्यानुप्रवेशमेव दर्शयितुं साध्यं पौरुषेयत्वं तावद्विविनक्ति। स्वतन्त्रेति। ततः किमित्याह—अर्थप्रतीतिः न हि वक्तुः केवलौ विविक्षाप्रयत्नौ स्वतान्त्र्यम्, किन्तु प्रमाणान्तरजन्याया वाक्यार्थविषया याः प्रतीतेस्तदेकविषयौ ततश्च प्रणेतुः प्रमाणान्तरगोचरार्थत्वस्य पौरुषेयत्वशरीरानुप्रवेशादनुपाधित्वमिति।

किञ्चेदं प्रमाणान्तरगोचरार्थत्वं, किं शब्देतरप्रमाणगोचरार्थत्वं, मानान्तरगोचरार्थत्वमात्रम्वा? (मूलभूतमानान्तरगोचरार्थत्वमात्रम् मूलभूतमानान्तरगोचरार्थत्वम्वा) तत्र नाद्यः साध्याव्यापकत्वादित्याह—मन्वादीति। द्वितीयमाशङ्क्य साधनव्यापकतयानुपाधित्वमाह—प्रयुज्यमानेति। तृतीयमाशङ्क्य साध्यानुप्रवेशादनुपाधित्वमाह—अस्त्वेवमिति। उत्तरोत्तरविकल्पप्रणेतृप्रमाणान्तरगोचरार्थत्वस्य साध्यानुप्रवेशादित्यनेनेति, यद्वा साधनव्यापकत्वादनुपाधित्वम्। उक्तोत्तरत्वादिति। प्रणेतृमूलभूतप्रमाणान्तरागोचरार्थत्वस्यासिद्धेरित्यनेनेति अयं च प्रयोगः—वेद[1]वाक्यपरम्परा, आदिमती, वाक्यपरम्परात्वात्, कुमारसम्भवादिवाक्यपरम्परावदिति यद्वेदाध्ययनमित्यादिकं गर्भस्रावेण गतमिति।

अथ संख्याविशेषादिति हेतुमवतारयति—संख्याविशेषादिति। हेतुमवतारयति—संख्याविशेषादिति। हेतुत्वाभिमतसंख्याविशेषसिद्धये तत्साधकं लिङ्गं तावत्साधयति—द्व्यणुकेति। तयोः परिमाणकारणत्वेन संख्याविशेषसिद्धिं विवक्षन्[2] तस्य कार्यतामप्याह—तच्चेति। अथ [3]परिमाणकारणत्वेन रूपादीनां प्रसङ्गात् प्रसज्यमानानां च कारणसंख्यापरिमाणप्रचयानां मध्ये संख्याविशेषमेव विशेषयितुमितरयोः कारणत्वं निराकुर्वन् परिमाणस्य तावन्निराचष्टे—न च तस्येति। तस्य द्व्यणुकत्र्यणुयोः परिमाणस्य परमाणुपरिमाणं परमाण्वोः संबन्धि यत्परिमाणमणुत्वं परमाणुगतं द्व्यणुकगतं चैतत् कारणं न भवति, द्वयोः परिमाणयोरवान्तरवैलक्षण्येऽपि महत्त्वविलक्षणेनाणुत्वेनैकजातीयत्वं मत्वा परमाणुपरिमाणमिति न निर्देशः। अणुमहद्दीर्घं ह्रस्वं चेति परिमाणस्य चतुर्धैव विभजनात् अणुत्वस्यैव नित्यानित्यतया द्वेधा विभजनात् द्वयोरणुत्वेनैकजातीयत्वं तत्र परमाणुगतस्यानारम्भकत्वे हेतुः। नित्यपरिमाणत्वादिति। न हि नित्याकाशस्य महत्परिमाणस्य महत्परिमाणमारम्भकं दृष्टम्। द्व्यणुकगतस्यानारम्भकत्वे हेतुः। अणुपरिमाणत्वादिति। अयमपि हेतुः पूर्वत्र संभवन्नपि दृष्टान्ताभावादनुक्तः इदानीं

---

१. ख. वाक्यपरम्परावैदिकी, आदिवाक्यवती। २. क. विवक्षुः। ३. क. अत्राय°

तु परमाणूनामणुत्व एव दृष्टान्तः सिध्यतीत्युक्तम् । परमाण्वादौ त्वणुत्वव्यवहारो महत्त्व-
रापेक्षया भाक्त इति न व्यभिचाराशङ्केति परमाणुगतस्यारम्भकत्वेऽनिष्टमाह—**अनाश्रय-
कार्योत्पत्तिप्रसङ्गादिति** । परिमाणं तु स्वजातीयक्रमेण स्वस्मात् प्रकृष्टपरिमाणारम्भकं
दृष्टम्—यथा त्र्यणुकादिगतं महत्त्वं तज्जातीयस्यैव महत्तरतमत्वादेः, तेन परमाणुगतपरि-
माणमपि परिमाणस्यारम्भकं सत् स्वस्मात् प्रकृष्टं परमाणुतरं परिमाणमारभेत ।　5

न च तथा सूक्ष्मपरिमाणाश्रयं परमाणोरप्यणुतरं द्रव्यमस्ति । ततश्च परमाणुपरि-
माणाज्जायमानं परिमाणरूपं कार्यमनाश्रयमेव जायते, न चानारम्भकपरिमाणप्रयुक्तमाका-
शादिपरिमाणस्या[ना]रम्भकत्वं न नित्यपरिमाणत्वप्रयुक्तमिति वाच्यम् । आरम्भकद्व्यणुक-
परिमाणस्याप्यनारम्भकत्वेन साध्याव्यापकत्वादिति द्व्यणुकपरिमाणस्य त्र्यणुकपरिमाणा-
रम्भकत्वेऽनिष्टमाह—**द्व्यणुकस्येति** । कुत इत्याह—**त्र्यणुकवदिति** । द्व्यणुक-　10
गतेनाणुत्वेनारब्धस्य त्र्यणुकपरिमाणस्येव परमाणुगतेनाप्यणुत्वेनारम्भमाणस्य द्व्यणुकपरि-
माणस्यापि महत्त्वं भवेदिति, भवेदेवं यदि द्व्यणुकपरिमाणेन त्र्यणुकपरिमाणं महत्त्वमा-
रभ्येत, न त्वेवं किन्तु त्र्यणुकसमवायिकारणानां द्व्यणुकानां बहुत्वेनारभ्यत इति चेत्
सिद्धं नस्समीहितम्, तत्राणुपरिमाणमवधीर्य संख्याया एव कारणत्वाङ्गीकारादित्याशङ्का-
यामाह—**कारणबहुत्वेनेति** ।　15

ननु परमाणुपरिमाणात् पारिमाण्डल्याद्विलक्षणं द्व्यणुकपरिमाणमणुत्वं नाम
यदपेक्षया परममणुत्वं परमाणुत्वस्य ततश्चाणुत्वारम्भकात् परमाणुपरिमाणान्[1]महत्त्वारम्भ-
कस्याणुकत्वस्य वैलक्षण्याद्[2]द्व्यणुकस्य न महत्त्वप्रसङ्गः इत्याशङ्क्याह—**अणुत्वमेवेति** ।
तत्राणुत्वस्यैव महदारम्भकत्वाङ्गीकारे तावदनिष्टमाह—**महत इति** । अथात्राणुत्वस्य
महदारम्भकत्वमन्यत्र महत्त्वमेव महदारम्भ[3]कमित्यङ्गीकारेऽनिष्टमाह—**अणुत्वमहत्त्वयो-　20
रिति** । तदा हि द्वयोरपि व्यतिरेकव्यभिचारादकारणत्वमेव स्यादिति भावः । संख्या-
मनादृत्य परमाणुपरिमाणेन द्व्यणुकपरिमाणारम्भे द्व्यणुकपरिमाणेन च त्र्यणुकपरिमाणा-
रम्भे क्रमेणानन्तरं दर्शयति—**बहुभिरपीति** । तत्रापि द्व्यणुकत्र्यणुकपरिमाणकारणयोः
परमाणुत्वाणुत्वयोः सत्त्वादिति, एवमारम्भे किं स्यादित्याशङ्क्य प्रसङ्गशेषमाह—**एवं
चेति** । द्व्यणुककार्यस्य चामहत्त्वप्रसङ्ग इति कुत इत्यत्राह—**कारणबहुत्वस्येति** ।　25
अल्पसंख्यैस्तन्तुभिरारब्धाच्च पटात् समानमहत्त्वैरेव बहुसंख्यैरारब्धस्य पटस्य महत्त्वाति-

---

१ ख. परिमाणं ।　　२ ख. वैलक्षण्यं ।

३ क. तथारेवाणुत्वस्य महत्त्वारम्भकत्वम् ।

शयदर्शनेन कारणबहुत्वस्य महत्त्वहेतुत्वावधारणात्, बहुभिः परमाणुभिरारब्धस्य महत्त्वप्रसङ्गः[१]। न स्याच्च द्व्यणुकद्वयारब्धस्य महत्त्वम् कारणबहुत्वाभावादिति भावः। कारणबहुत्वाबहुत्वयोः कार्यत्वमहत्त्वामहत्त्वयोरनभ्युपगमे दोषमाह—अन्यथेति। द्वाभ्यामिव त्रिचतुरादिभिः परमाणुभिरणुन एवारम्भे त्रिचतुराद्युपादानवैयर्थ्यं स्यात्। द्वाभ्यामपि 5 त्र्यणुकाभ्यां महत एवारम्भे त्रयोपादानवैयर्थ्यं स्यादिति भावः।

ननु बहुभिरपि परमाणुभिरणुन एवारम्भेऽपि न त्रिचतुराद्युपादानवैयर्थ्यमणुत्वस्यैव तरतमभावेन विशेषसद्भावात् तत्प्रयोजकत्वाच्च त्रिचचतुरादेरित्याशङ्क्याह—अणुन इति। भावप्रधानो निर्देशः। अणुत्वस्येत्यर्थः। अणुत्वे इति सम्यक् पाठः। तर्हि कारणगतसंख्याविशेषेण कार्यपरिमाणविशेषाभ्युपगमात् सिद्धं नः समीहितम्। द्व्यणुकत्रयस्य 10 च महत्वविशेषप्रयोजकत्वे संख्याविशेषस्य कारणत्वसिद्धिरिति भावः।

ननु यदि बहुभिः परमाणुभिरारब्धस्याणुत्वतारतम्याभ्युपगमे चतुःपञ्चादिभिर्महत्तरमहत्तमादेरारम्भो वक्तव्यः अन्यथा तद्वैयर्थ्यप्रसङ्गात्, अस्तु तर्हि महदारम्भ इत्याह—अस्त्विति। अस्तु च द्वाभ्यामपि द्व्यणुकाभ्यामणुन एकारम्भ इति भावः। नेति। कार्यद्रव्यस्येव महदारम्भकत्वनियमादिति भावः। तत्र च संख्यायाः परिमाण-15 कारणकारणत्वसिद्धिरित्याह—तथापि वेति। द्व्युणके तु प्रसङ्गः सुगम इति भावः। सेयं कठोरमतिभ्य एव रोचते, न कोमलमतिभ्य इति अन्यथा व्याख्यायते। द्व्यणुकत्र्यणुकयोः परिमाणस्य परमाणुपरिमाणारम्भकत्वे हेतुद्वयमाह—न च तस्य परमाणुपरिमाणं कारणमिति द्वितीयहेतोर्मनःपरिमाणमेकपरमाणुपरिमाणं वा दृष्टान्त इति द्व्यणुकत्र्यणुकयोः परिमाणस्य परमाणुपरिमाणकारकत्व एव बाधकान्तरमाह—20 द्व्यणुकस्येति। अथ त्र्यणुकमहत्त्वस्य द्व्यणुकबहुत्वकारणत्वाङ्गीकारे द्व्यणुकपरिमाणं प्रत्यपि परमाणुपरिमाणं कारणं न स्यादित्याह—तत्र कारणेति।

ननु परमाणुपरिमाणाद्विलक्षणमणुत्वं नाम द्व्यणुकपरिमाणं त्र्यणुकमहत्त्वारम्भकारणमित्यत्राह—अणुमेवेति।

ननु द्वे अपि यथायोगं कारणं भविष्यतीत्याह—अणुत्वमहत्त्वयोरिति। संख्यामनादृत्याणुपरिमाणस्यैवारम्भकत्वेऽनिष्टान्तरमाह—बहुभिरपीति[२]। परमाणु-25 कार्यस्येति। कारणबहुत्वस्यान्यत्र महत्त्वकारणत्वेन निरूपितत्वादिति। यदि तु

---

१. क. तत्रापि द्व्यणुकद्वयारब्धस्यामहत्त्वं कारणबहुत्वाभावादिति।

२. ख. निराशङ्कत्वादिति।

कारणसंख्यावैषम्येऽपि कार्ये परिमाणविशेषो न स्यात्। तर्हि स्थूलकार्योत्पत्त्यर्थं परमाणुभ्यां परमाणुभिर्वा तत्कार्यस्याणोरारम्भो व्यर्थः स्यादित्याह—**अन्यथेति**।

ननु बहुभिरपि परमाणुभिरणुत्वारम्भेऽपि तस्य तरतमभावेनारम्भान्न कारणबहुत्वस्य महदारम्भकत्वं नाप्यरम्भवैयर्थ्यमित्यत आह—**अणुन एवेति**। कारणसङ्ख्याविशेषस्य कार्यपरिमाणविशेषं प्रति हेतुत्वमभ्युपगतं स्यादिति द्व्यणुकगतसंख्याविशेषात् त्र्यणुकपरिमाणारम्भसिद्धये त्र्यणुकपरमाण्वोश्चान्तराकार्यद्रव्यमवश्यमभ्युपगन्तव्यमिति शङ्कापूर्वकमाह—**अस्त्विति**। समानमितरत् द्रष्टव्यम्, तदेवं परिमाणहेतुत्वं निराकृत्य प्रचयहेतुत्वं निराचष्टे—**न चेति**। न च द्व्यणुकत्र्यणुकयोः परिमाणेन प्रचयः कारणत्वेनापेक्षणीयः कारणप्रचयो हि स्वारम्भकाणामवयवानां प्रशिथिलसंयोगापेक्षः कारणं भवति। यथा द्वाभ्यां तूलपिण्डाभ्यामारब्धे द्वितूलके कार्ये प्रत्येकपिण्डवर्तिनामवयवानां परस्परमेलकपिण्डवर्तिनां चावयवानां पिण्डान्तर्वर्तिभिरवयवैश्च बहिर्मध्ये[1] च ये प्रशिथिलाः संयोगाः तदनपेक्ष[2]स्तूलपिण्डद्वयप्रचयो महत्त्वमारभते, नैवं परमाणौ द्व्यणुके वा प्रचयः संभवति। परमाण्वोरनवयवत्वेनावयवसंयोगस्यैवाभावात्, अत एव द्व्यणुकावयवानां परमाणूनां प्रशिथिलावयवसंयोगाभावाच्चेति परिमाणप्रचयो नियतविषयत्वादपि नात्र कारण[3]मित्युपसंहरन्नाह—**तस्मादिति**। महत आद्यमहद्व्यतिरिक्तस्येति। तदेवं प्रसक्तयोः परिमाणप्रचययोर्निषेधात् संख्याविशेषः परिशेषतः सिद्ध इत्युपसंहरति—**अत इति**। परिशिष्यते, कारणत्वेनेति शेषः। अनेकसंख्येत्येकसंख्यां व्यवच्छिनत्ति। तस्या अनारम्भकत्वात्। अत्रैवं प्रयोगः द्व्यणुकत्र्यणुकयोः परिमाणंकारणसंख्याकार्यं परिमाण[4]प्रचययोरसंभवे सति कार्यपरिमाणत्वात् यत्पुनर्न संख्याकार्यं न तदेव यथा द्वाभ्यां प्रचिताभ्यां यहद्भ्यामारब्धं द्रव्यपरिमाणान्वितं द्वितूलकपरिमाणं चेति। अन्यथा कारणाभावात्कार्यानुत्पादप्रसङ्ग इति अस्तु संख्याकारणं ततः किमित्यत्राह—**सा चेति**। ततोऽपि किमित्यत्राह—**न चेति**। **परमाणुष्विति**। उपलक्षणं द्व्यणुकेषु चेत्यर्थः। परमाण्व[5]पेक्षाबुद्धिमतः सर्वज्ञस्यानङ्गीकारेऽनिष्टमाह—**अन्यथेति**। **तदिति**। द्व्यणुकत्र्यणुकयोः परामर्शः।

नन्वस्मदादीनां परमाण्वादिष्वपरोक्षबु[6]द्ध्यसंभवेऽप्यानुमानिकी भविष्यतीत्याह—**अस्मदादीनामिति**। **नेति**। जातेन हि महत्परिमाणवता कार्येण लिङ्गभूतेन परमाण्वा-

---

१ क. अयं पाठो नास्ति। २. क. तदपेक्ष। ३ ख. °गत्व°। ४ क. परमाण°
५ क. परमाण्वादिविषयापेक्षया बुद्धिमतः। ६ क. बुद्धिसंभवे°।

दिष्वानुमानिकी बुद्धिर्भवेत् । तस्यां च सत्यां तन्निमित्तेन द्व्यणुकादिक्रमेण स्थूलद्रव्यारम्भ इति अस्तित्वत्यादि स्पष्टम् ॥ ५ ॥

विवेकः

कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोरिति । **पदात्** । **खल्वपीत्यस्य** प्राग्धृतिसंहरणहेतुद्वये व्याप्तिग्राहककार्यकारणभावोपदर्शनपरम् लिखनन्तु कारिकाया एकवाक्यतया
5 तदुत्तरम् । यद्वा, यथेति कारिकापूर्वं पूरणीयम् । तथा च धृतिविनाशदृष्टान्तेन पदस्य पददृष्टान्तेन प्रत्ययादेर्निरुपाधित्वोपदर्शनम् । धृतिविनाशयोर्हेत्वोः कार्यत्वात् । कार्यकारणभावरूपानुकूलतर्कसहकारेण गृहीतव्याप्तिकत्वात् निरुपाधित्वं तत एव व्याख्यास्यमानहेतुचतुष्टयेऽपि लाघवादिदानीमेव निरुपाधित्वग्राहकमाह—**प्रत्ययादेश्चेति** । पूर्ववत् कार्यकारणगृहीतव्याप्तिकत्वात् निरुपाधित्वमित्यर्थः ।

10 **ननु** परतन्त्रपुरुषपरम्पराधीनमेव [ । एव ] व्यवहारपरम्परास्तु किं स्वतन्त्रेणेत्यत आह—**विच्छेदेनेति** । प्रलये तदुच्छेदात् । सर्गादौ तत्तत्प्रवर्त्तकोऽवश्यमुपेय इति भावः । अत्र प्रथमव्याख्यायां द्वितीयव्याख्यायास्तु पदपदमीश्वरादिपदपरमिति भावः । गम्यते, ज्ञायते । एकस्यानुगतस्य पक्षतावच्छेदकस्याभावात् एकपदम् । पदेनोक्तान् तेन तेन रूपेण-पक्षीकृतानाह—**यदेतदित्यादि** । व्यक्तवाचां मानुषाणां लिपिव्यवहाराल्लिखनज्ञानप्रकारः
15 क्रमव्यवहारो यद्वर्णानन्तरं योऽवग्रहः पठ्यते स स्वतन्त्रपुरुषविश्रान्तः सजातीयव्यवहाराप्रयुक्तव्यवहारवदधीनजातीयः आदिमत्त्वमुपाधिं शङ्कते—**आदीति** । स्वाव्यवहितप्राक्कालवृत्तिजातीयव्यवहारजातीयत्वमित्यर्थः । पक्षे साधनाव्यापकत्वमाह—**अयमिति** । अन्यथापि निरुक्तसाध्यं विनापि तेन व्यभिचारोत्थापनद्वारा दोषत्वमाविष्कृतम् । तदसिद्धेः । तथा च न साधनव्यापकत्वमिति भावः । **आदिमत्तामिति** । स्वतन्त्रव्यव-
20 हर्तृसाधनेन फलत आदिमत्तामेवायं हेतुः साधयतीति भावः । शङ्कते—**न चेति** । एवं विच्छेदाद्युपगमे तथा चापसिद्धान्त इति भावः । संसारस्यानादित्वं हि सजातीयध्वंसव्याप्यप्रागभावप्रतियोगित्वं, तच्च व्यवहारेषु निरुक्तादिमत्तास्वीकारेऽपि न क्षतिः । सर्गान्तरीयव्यवहारध्वंसमादाय तदविरोधादिति उत्तरयति । **तथापीति** । भिन्नविषयतयाऽविरोधं दृष्टान्तेन दर्शयति **न हीति** । अन्यनिरुक्तादिमत्त्वं न भवस्यानिरुक्तानादित्व-
25 विरोधिबाधकं न वा ? न भवस्य निरुक्तानादित्वमन्यनिरुक्तादिमत्त्वविरोधीत्यन्येनेश्वरस्यान्यथासिद्धिमाह **अस्त्विति**। अर्वाग्दर्शी असर्वज्ञः मूलं स्वतन्त्रो व्यवहर्ताआदर्शाभावेन तेन सर्गादौ कल्पनासंभव इत्याह **तेनेति** । वस्तुतस्तु सर्गव्यवहारमूलं लाघवादेक एव सिध्यतीति नान्यथासिद्धिरिति ध्येयम् ।

ननु सर्गप्रलयसंभवे सर्वमिदं स एव तु कुत इत्यत्राह—**साधिताविति**। प्रमाण-द्योतनाय पितेति व्युत्पादकत्वगुणयोगेन पितृत्वव्यपदेश इति भावः। जगतः संसारात्सम-जातस्य मातृत्वमपि जनकतदुत्पादकत्वपालनत्वादिगुणयोगात्। धाता घटादिनिर्माणकर्ता अत्र जगत इति च शैषिकी षष्ठी रक्षक इति केचित्। पितामहो जनकस्यापि जनकः उत्पादकस्याप्युत्पादको वा। अहं यदि कर्मणि घटादिनिर्माणादौ अतन्द्रितः अनलसो 5 न वर्तेयं कर्ता न स्याम् तदा अमी लोकाः व्युत्पत्तिघटादिव्यवहारानभिज्ञतया उत्सीदेयुः। तत्तत्कार्यानिर्वाहेण च्छिन्नव्यवहाराः स्युः। कुत एतदित्याशङ्कायामाह—**ममेति**। मत्कर्मणि कर्माणि कुर्वन्ति यतः। **एतेनेति**। भगवानेव प्रथमतः कुलालादिशरीरमुपगृह्य घटादीन् कृतवानिति। यतः अत्र प्रथमव्याख्यायां तेन विधिप्रत्ययपरः द्वितीयव्याख्यातो भेदः सूचितः। समाश्वासविषयः बहुवित्तव्यायासाध्येषु निष्कम्पप्रवृत्त्युपयोगिज्ञानविषयः। 10 गुरुणा सम्प्रदीयते यः स सम्प्रदायो वेदः। तत्र दृष्टार्थकवेदे सिद्धसाधनवारणायाह—**आगम इति**। आगम्यते सम्यग् ज्ञायते अलौकिकोऽर्थः अनेनेति व्युत्पत्त्या आगम-पदमदृष्टार्थपरम्। तथा चालौकिकार्थो वेद इति फलति। केचित्तु वेदसम्प्रदायो वेदपरम्परेत्याहुः। गुणपूर्वकः गुणसहकारेण प्रमाजनकः। अत्र विपक्षबाधकमाह—**कारणेति**। जन्यप्रमात्वावच्छिन्नं प्रति गुणस्य कारणत्वात्। तेन विना प्रमाजननमेव 15 न स्यादित्यर्थः। समासः। अवधारणाकारः। प्रत्ययः। असिद्धस्य गुणजन्यत्वा-भावप्रसक्तबाधस्यातो दोषाभावाद्वा आवेदितम् प्रमायाः गुणजन्यत्वादित्यादिना। इदमागमस्वरूपम् अर्वाचीनवृत्तिवाक्यार्थप्रमयार्थान्तरम् निराकरोति। **न चेति**। स्वातन्त्र्येण वेदमनुपजीव्य धर्माधर्मयोः प्रभवति। तज्जनकताज्ञानवान् भवितुमर्हति। ननु सिद्ध्यतु कश्चिद् गुणवान् तस्य सार्वज्ञ्ये किम्मानमत आह—**न चेति**। २० गुणवत्त्वमनुपजीव्य वेदा निखिलवेदार्थज्ञानवत्ता। **सर्वज्ञेति**। वेदाः सर्वज्ञप्रणीताः। प्रणीतत्वञ्च तत्कण्ठादुच्चरितत्वम्। तेन न दृष्टान्तासिद्धिः। प्रणीतजातीयत्वं तेनेदानीन्तन-वेदे न व्यभिचारः। हेतुमाक्षिपति—**नन्विति**। वाक्यत्वस्य वह्निना सिञ्चतीत्यादौ अदृष्टार्थकवाक्यत्वस्य स्वर्गकामो वह्निना सिञ्चतीत्यादौ विरुद्धत्वात् व्यभिचारितो व्यभि-चारे कः विरुद्ध इति नयेनेदमदृष्टार्थकप्रमाणवाक्यत्वम्। [ लौकिकवाक्यम् ] अदृष्टार्थ- 25 कत्वे सत्याप्तवक्तृकवाक्यत्वं तत्त्वे सति यथार्थज्ञानजनकत्वम्वा। आद्येऽसिद्धिराप्तवक्तृ-कत्वस्य तत्रास्माभिरनुपगमात्। द्वितीये सत्त्वादि [मन्वादी] ति तेषामसर्वज्ञत्वात्। तत्त्वे वा तैरेवार्थान्तरादिति भावः। **अनुपलभ्यमानेति**। सत्यन्तं संवादिवाक्यवारणाय शब्दजन्यज्ञानजन्यत्वार्थकम्। लौकिकवाक्यस्य सुगताद्यागमस्य च वारणाय **महाजन-**

**परिगृहीतेति** । धर्मजनकाध्ययनानुष्ठानादिविषयेत्यर्थः । यागदानादिवारणाय—**वाक्यस्येति** । अप्रयोजकत्वमुद्धरति—**न हीति** । तत्र वेदो मूलमसर्वज्ञानां तत्र स्वातन्त्र्येण वाक्यार्थज्ञानासंभवादिति । ननु प्रमाया गुणजन्यत्वनियम एवात्र मूलमयञ्च प्रमाणमेव नेत्यप्रयोजकत्वमाशंक्याह—**नापीति** । **महाजनेति** । हेतु-
5 दर्शनशून्यग्रहणधारणादिना प्रमाणत्वेन निर्णयादित्यर्थः । **परम्परैवेति** । तथा च शब्दजन्यवाक्यार्थज्ञानाजन्यत्वमेवासिद्धम् तादृशज्ञानेनैव तत्सिद्धेरप्रयोजकत्वञ्चेति भावः। महाप्रलयेन जन्यद्रव्यानधिकरणप्रलयेन क्वचित्प्रलयेन इत्येव पाठः । दैनन्दिनप्रलयेऽपि पुराणे तथा व्यवहारात् । महत्त्वोपदानमत्र सर्वज्ञाप्रसिद्ध्या साध्याप्रसिद्धिमाशंक्य वाक्यात् खल्वपीत्यनुमैव **वाक्यादिति अन्वयतो वेति** । पौरुषेयाणि सजातीयोच्चार-
10 णानपेक्षोच्चारणविषयजातीयानि घुणाक्षरन्यायेन कदाचित् क्वचिद्वेदे तथात्वसंभवेऽपि वेदत्वावच्छेदेन तदसंभावान्न सिद्धसाधनं लाघवसहकारेणैकपुरुषीयोच्चारणसिद्धेर्वा स तथाऽध्ययनविषयत्वपक्षधर्मावच्छिन्नसाध्यव्यापकं स्मर्य्यमाणकर्तृकत्वमुपाधिरध्ययनविषयत्वे सति अस्मर्य्यमाणकर्तृकत्वरूपं सत्प्रतिपक्षम्वा शंकते—**अस्मर्य्यमाणेति** । **असिद्धेरिति** विशेषणवति विशिष्टाभावेन विशिष्टव्यभिचारेण वा न दूषणक्षमता विशेषणवतीत्यसिद्धे
15 सत्प्रतिपक्षे स्वरुपासिद्धिरिति यथाश्रुतमनन्तरं प्रलयात् । **प्रतिमन्वन्तरमिति** । अत्र विधीयत इति क्रियाक्षिप्तस्य कर्तुः स्मरणं यज्ञो विष्णुः श्रुतिपाठकश्च वेदविशेषस्य स्मृतेः स्मरणात् । श्रुत्युपाधिकस्मृतेरिति पाठेऽप्ययमेवार्थः । शंकते **अर्थवादेति** । स च न तेषां प्रमाणमिति भावः । केवलव्यतिरेकिणा सत्प्रतिपक्षं शंकते—**प्रमाणान्तरेति** । शब्दोपजीव्यतिरिक्तप्रमित्यविषयार्थकत्वादित्यर्थः । मन्वादिस्मृतौ व्यभिचारस्फुरत्वादुपे-
20 क्ष्याह—**प्रणेतारमिति** । प्रणेतुरीश्वरस्य तत्र प्रत्यक्षसत्त्वादित्यर्थः । तथा च न सामान्याभावः प्रणेतृनिष्ठतादृशप्रमाविषयत्वस्यैव तत्र सत्त्वादित्यर्थः ।

ननु प्रणेतृभिन्ननिष्ठतादृशप्रमित्यविषयार्थकत्वादिति हेतु कर्तव्यं तत्राह—**आकस्मिकेति** । **तेनैवेति** । तथा च तद्वक्तृकतद्वाक्ये पौरुषेयत्ववति निरुक्तहेतुमति व्यभिचार इति भावः । वक्ता प्रकृतवाक्यार्थज्ञानवान् प्रकृते वेदे हेत्वभावे वाक्यार्थज्ञान-
25 कारणाभावे फलस्य वाक्यार्थज्ञानस्याभावात् । हेत्वभावमेवाह **चक्षुरादीनामिति** । तत्र वेदार्थे [समर्थमिन्द्रियं] दूषयति । **नेति** । ईश्वरो न वेदार्थसाक्षात्कारी समवायिचेतनत्वात् । ईश्वरज्ञानं न तद्विषयकं ज्ञानत्वात् ईश्वरेन्द्रियं न वेदार्थे समर्थमिन्द्रियत्वात् । तन्मनः न स्वातन्त्र्येण तत्साक्षात्कारसमर्थं मनस्त्वात् । मद्वदित्यादीनि आश्रयस्यासिद्धेः । सिद्ध्यसिद्धिव्याघातेन प्रागेव निराकृतप्रायेऽपि चक्षुरादेस्तत्रासामर्थ्येऽपि तद्गोचर-

नित्यसाक्षात्कारनिराकरणे यथोक्तमानस्यासामर्थ्यात्। **द्रष्टारमिति**। नित्यानित्यसाधारण-दृष्टिमत एव नित्यदृष्टिमतो वा किम्शब्दार्थत्वे उक्तहेतोरसिद्धेः अप्रयोजकत्वात्। सामर्थ्याभावेन अनित्यसाक्षात्कारासम्भवेऽपि नित्यसाक्षात्कारत्वे बाधकाभावादित्यर्थः। द्वितीये साध्याप्रसिद्ध्यापि सा अन्यं प्रति अनित्यदृष्टिमत्परत्वे सिद्धसाधनात्। शंकते—**तथापीति**। अप्रमाणं न प्रकृतानुमितिकारणीभूतज्ञानविषयः। ननु निरुपाधित्वादेव 5 प्रयोजकं स्यादित्यत्राह—**प्रमाणान्तरेति**। शब्दोपजीव्यातिरिक्तप्रमाविषयत्वरूपोपाधि-प्रयुक्तं वाक्यत्वस्य निरुक्तसाध्यव्याप्यत्वमित्यर्थः।

ननु [सु]**गतेति** सुगताद्यागमे पौरुषेयत्ववति प्रमाविषयार्थत्वाभावेन साध्याव्यापक-त्वात् तस्य तद्व्यापकत्वे तदभावात् तत्रापि पौरुषेयत्वन्न स्यादित्यर्थः। ननु प्रमाण-वाक्यत्वावच्छिन्नव्यापकः तदुपाधिः स्यादित्याह—**प्रमाणवाक्यस्येति**। प्रणेतृप्रमाणान्तर- 10 गोचरार्थकत्वमेव विवक्षितविवेकसाध्यम्। उपाधौ च प्रमाणपदं यदि प्रमापरं तदा साध्य-भिन्नतया नोपाधिता, साधनव्यापकत्वात् दोषोन्नयने साध्याविशेषाच्च यदि च प्रमाकरणपरं तदा प्रयोजकतया साध्यव्यापकतया इत्यक्षरतात्पर्याभ्यामाह—**प्रणेत्रिति**। भिन्नद्वया-पौरुषेयत्वसाध्यमुपात्तु **स्वतन्त्रेणेति**। अर्थप्रतीत्येकविषयौ प्रकृतवाक्यार्थप्रतीतिसमान-विषयौ। विवक्षायामपि तादृशतात्पर्यरूपायां वाक्यानुप्रवेशोऽस्त्येव प्रयत्नस्याप्युद्देश्यता- 15 ख्यविषयताया वाक्यार्थं प्रति विषयत्वेन वाक्यार्थगोचरत्वमूहनीयम्। न त्वेतावता प्रमाणान्तरगोचरार्थकत्वादिना साध्येऽनुप्रवेशः, किन्तु स्वातन्त्र्यघटकतया। न च तावतानुपाधिता साध्यतावच्छेदकस्य परमुपाधिताऽवच्छेदकत्वन्नोपेयते, प्रकारान्तरे तु साध्यस्य तत्त्वमिष्यत एवेत्यरुचेराह **मन्वादी**'ति। व्यापकताभावेन व्याप्याभावस्य भावादिति भावः। शब्देतरत्वं तदुपजीविनोऽप्युपलक्षणम् शङ्कते—**प्रयुज्यमाने** 20 (ने ?) ति। तथा च शब्दपदं शब्दपरिशेषपरं मन्वादिवाक्ये च प्रयुज्यमानमन्वादि-वाक्येतरवेदगोचरार्थकत्वात्। न च तदभाव इति भावः। **तस्येति**। तथा च साधनव्यापकत्वादनुपाधित्वमिति भावः। शाखाभेदेनेत्युपलक्षणं, मन्त्रादिवाक्यैरपीत्यपि बोध्यम्। ननु प्रयुज्यमानवाक्येतरत्वमूलीभूतप्रमाणगोचरार्थत्वं तथा वाच्यम्। न च वेदस्य वेदो मन्वादिवाक्यं वा मूलमित्याह **अस्त्वेवमिति**। **उक्तोत्तरत्वादिति**। 25 ईश्वरप्रत्यक्षविषयार्थकत्वेन पक्षेऽप्येतस्य मयोपगमेन साधनव्यापकतया वह्नौ साध्ये दाह-समर्थवत्त्वादेरिव नोपाधित्वमिति भावः। कर्त्तव्यं जन्यं कार्यगुणत्वात् कार्य्यवृत्तिगुणत्वात् परमाणुपरिमाणं न द्व्यणुकपरिमाणस्य कारणम्। प्रथमे **हेतुर्नित्येति**। उभयत्र हेतुमाह **अण्विति**। **सर्वत्र** मनःपरिमाणं दृष्टान्तः। ननु अवच्छिन्नपरिमाणत्वेनैव वा परिमाणं

प्रति हेतुतया परमाणुद्व्यणुकपरिमाणमपि जनकं स्यादेव इत्यत्र बाधकमाह **अन्यथेति**। मनोगगनादिपरिमाणस्यापि तेन रूपेण योग्यत्वे नित्यस्य स्वरूपयोग्यस्य फलोपधाननियमात् स्पर्शरहिततया तदाश्रयस्य द्रव्यानारम्भेऽपि ततो निराश्रयमेव कार्यं स्यात्। आरम्भेऽपि वा स्पर्शरहितमपि द्रव्यमित्यक्षरतात्पर्ययोरर्थः। ननु स्पर्शवत्परिमाणत्वमेव
5 तदारम्भकतावच्छेदकं वाच्यं यतो नोक्तदोष इत्यरुचेराह **द्व्यणुकस्येति**। तत्र द्व्यणुककारणबहुत्वेन द्व्यणुकबहुत्वेन। **अणुपरिमाणस्येति**। इदमुपलक्षणम्, एतावतैव समीहितमिति सिद्धिरभ्युपेया। ननु नित्यत्वेन बहुत्वेन वा विशिष्टानि अणुपरिमाणानि महत्त्वमारभन्ताम्। न च द्व्यणुकारम्भकपरिमाणानि तथा इत्याह **अणुत्वमेवेति**। निरुक्ताविशिष्टाणुत्वमेवेत्यर्थः। एवकारेण बहुत्वसंख्यायाः व्यवच्छेदः। विशेषो
10 द्व्यणुकपरिमाणारम्भकाद्व्यावृत्तस्तादृशाणुत्वस्य जन्यमहत्त्वमेव कार्य्यतावच्छेदकं तद्विशेषो वा ? आद्ये **महत्** इति। द्वितीये '**अणुत्वेति**। आरम्भकवृत्तिपरिमाणत्वसाक्षाद्व्याप्यजातेरावश्यकवृत्तित्वनियमात् त्र्यणुकपरिमाणेऽणुत्वं स्यात्। एवम् आरम्भकपरिमाणनिष्ठात्यन्ताभावप्रतियोगितादृशजातेरारम्भावृत्तित्वनियमेन तत्र महत्त्वत्वं च न स्यादित्यर्थः। उक्तव्याप्तावप्रयोजकमाशङ्क्याह **बहुभिरिति**। द्व्यणुकवृत्तिबहुत्वसंख्यामनादृत्य बहुभि-
15 रणुपरिमाणैर्महदारम्भे बहुभिः परमाणुभिः एवं तदनादृत्यानित्यतावैशिष्ट्यमात्रेण तैर्महदारम्भे द्वाभ्यां द्व्यणुकाभ्यां महत्त्वमारभ्येतेत्यर्थः। एवं सति भवतां स्थितिपक्षे बहुभिः परमाणुभिर्द्रव्यारम्भको दोषस्तव सिद्धान्तविरोधः। परमाणुभिर्द्व्यणुके विरोधस्य क्लृप्तत्वादित्यर्थः। ननु तैरारम्भोऽस्तु महत्त्वं तु कुत इत्यत्राह **कारणेति**। तथा च सामग्रीबलादेव तन्महत् स्यादिति भावः। नन्वस्तु परमाणुकार्यमपि महत्, का ते हानिरित्यनिष्टमुपदर्शयति
20 **अन्यथेति**। अन्यारम्भे परमाणुभिरारम्भे तद्वैयर्थ्यप्रसङ्गात्। अन्तरा द्व्यणुकारम्भवैयर्थ्यप्रसङ्गात्। यद्वा, ननु जन्यवृत्तिबहुत्वमेव तदारम्भकं वाच्यम्। तत्राह **अन्यथेति**। बह्वारम्भ्याणुवैयर्थ्यं स्यादिति मयापि सुवचम् एव। सहं ( महद् ? ) वा परमात्मा ( ण्वा ? ) रब्धमप्यणवेव स्यात्। जन्यवृत्तेरेव तस्य महदारम्भकत्वात्। न च समानपरिमाणाल्पारब्धापेक्षया तद्बहुतरारब्धे उत्कर्षदर्शनात्। तत्रावान्तरतारतम्यं
25 स्यादित्यत्रेष्टापत्त्योत्तरितं प्रत्याह **अणुन एवेति**। तत्परिमाणबहुत्वाल्पत्वाधीन तारतम्याभ्युपगमस्तु आश्रये तादृशसंख्यामवधीर्य्य विना न स्यात् न भवति। तथा च संख्याया एव तत्तारतम्यप्रयोजकत्वमभ्युपगम ( न्तव्य ? ) मिति भावः। ननु मास्तु अन्तरा द्व्यणुकं त्रिभिरेव परमाणुभिस्त्वया त्र्यणुकारम्भः किमिति नोपेयत इत्याह **अस्त्विति**। त्रिभिः परमाणुभिः। ननु दर्शनमात्रादेव न नियमसिद्धिरत **आह**

**तथापि** **वेति**। अयमर्थः—एवमपि सामग्रीबलादणुत्वेनारब्धेपि बाधकाभावान्महदेव स्यात्, अणु वा? आद्येपि तत्परिमाणं द्व्यणुकतारतम्यवदेव, ततोऽपकर्षव-त्त्वात् प्रथमे समानजातीयपरिमाणन्यूनाधिकसंख्यकारब्धेऽपकर्षोपकर्षनियमबाधः। अन्त्ये त्वाह **तथापि** **वेति**। महत्तारतम्ये परमाणुद्व्यारब्धमहत्त्वापेक्षयाण्वारब्धे उत्कर्षाभ्युपगमे संख्यैव परमाणुप्रयोजिका, तथा च सिद्धमीहितं, तत्कारणापेक्षाबुद्ध्यर्थ- 5
मेव भगवदुपगमादिति तदस्य पदस्य अपकर्षविश्रान्तजातिपरत्वे च यथाश्रुतमेव ज्यायः। न च तत्तारतम्ये प्रचय एव प्रयोजक इत्यत्राह **नचेति**। **अवयवेति**। अवयवावयवसंयोगापेक्षस्यैव तस्य तद्धेतुत्वोपगमादित्यर्थः। महतो महत्त्वस्य एव न परिमाणान्तरव्यवच्छेदः परमाणुषु नियमतः **सम्भवति**। तत् अपेक्षाबुद्धि-स्वरूपम्। उक्तानुमानेऽनुकूलतर्कं कार्य्यकारणभावमाह **अन्यथेति**। परिमितस्य 10
अवच्छिन्नपरिमाणाभावे तत्र कर्मानुत्पत्तौ परमाण्वोः संयोगासम्भवेन द्रव्यस्यानुत्पादः स्यादित्यर्थः। [ मूर्तत्वस्य जातिरूपत्वे तु विना परिमाणं नानुपपत्तिगन्धोऽपीत्येकदेशिनः। विप्रतिपद्यन्ते च ते परमाणुद्व्यणुकयोरपि तत्र मानत्वेनाभिहितानामप्रयोजकतयेत्यन्यत्र विस्तरः। इतरेतराश्रयं विशदयति **जात इति**। कार्य्यायोजनपदरूपान् हेतून् कारिकया व्याचष्टे। स्यादित्यर्थः। मूर्तत्वस्य जातिरूपत्वे तु विना परिमाणं नानुपपत्तिगन्धोऽपीत्येक- 15
देशिनः। इतरेतराश्रयं विशदयति **जात** इति ॥ ५ ॥

अथ वा, कार्येत्यादिकमन्यथा व्याख्यायते—

**उद्देश एव तात्पर्यं व्याख्या विश्वदृशः सती।**
**ईश्वरादिपदं सार्थं लोकवृत्तानुसारतः ॥ ६ ॥**

आम्नायस्य हि भाव्यार्थस्य कार्ये पुरुषप्रवृत्तिनिवृत्ती। भूतार्थस्य तु यद्यपि 20
नाहत्य प्रवर्त्तकत्वं निवर्त्तकत्वं वा, तथापि तात्पर्यतस्तत्रैव प्रामाण्यम्। तथा हि विधिशक्तिरेवावसीदन्ती स्तुत्यादिभिरुत्तभ्यते। प्रशस्ते हि सर्वः प्रवर्त्तते, निन्दि-ताच्च निवर्त्तते इति स्थितिः।

तत्र पदशक्तिस्तावदभिधा, तद्बलायातः पदार्थः। आकाङ्क्षादिमत्त्वे सति चाऽन्वयशक्तिः पदानां पदार्थानां वा वाक्यं, तद्बलायातो वाक्यार्थः। 25

तात्पर्यार्थस्तु चिन्त्यते—तदेव परं साध्यं प्रतिपाद्यं प्रयोजनमुद्देश्यं वा यस्य तदिदं तत्परम्, तस्य भावस्तत्त्वम्, तद् यद्विषयं, स तात्पर्यार्थ इति स्यात्। तत्र न प्रथमः, प्रमाणेनार्थस्य कर्मणोऽसाध्यत्वात्। फलस्य च तत्प्रतिपत्तितोऽन्यस्या-भावात्। प्रशस्तनिन्दितस्वार्थप्रतिवादनद्वारेण प्रवृत्तिनिवृत्तिरूपं साध्यं परमुच्यते इति चेन्न। गङ्गायां घोष इत्यत्र तीरस्याऽप्रवृत्तिनिवृत्तिरूपस्यासाध्यस्यापि परत्वात्। 30

तीरविषये प्रवृत्तिनिवृत्ती साध्ये इति तीरस्यापि परत्वमिति चेन्न। स्वरूपाख्यानमात्रेणापि पर्यवसानात्।

न द्वितीयः पदवाक्ययोः पदार्थतत्संसर्गौ विहाय प्रतिपाद्यान्तराभावात्। 'पदशक्तिसंसर्गशक्ती विना स्वार्थाविनाभावेन प्रतिपाद्यं परमुच्यते' इत्यपि न 5 साम्प्रतम्। न हि यद् यच्छब्दार्थाविनाभूतं तत्र तत्र तात्पर्यं शब्दस्य, अतिप्रसङ्गात्। तदा हि गङ्गायां जलमित्याद्यपि तीरपरं स्यात्, अविनाभावस्य तादवस्थ्यात्। मुख्ये बाधके सति तत्तथा स्यादिति चेत्। न। तस्मिन्नसत्यपि भावात्। तद् यथा—

'गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
10 ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥' इति

मुख्यार्थाबाधनेऽपि वारणे तात्पर्यम्। न च परं व्यापकमेव, अव्यापकेऽपि तात्पर्यदर्शनात्। तद् यथा-मञ्चाः क्रोशन्तीति पुरुषे तात्पर्यम्। न च मञ्चपुरुषयोरविनाभावः, नापि पुरुषक्रोशनयोः।

नापि तृतीयः। तद्धि प्रतिपाद्यापेक्षितं, प्रतिपादकापेक्षितं वा स्यात्? नाद्यः 15 शब्दप्रामाण्यस्यातदधीनत्वात्, तथात्वे वाऽतिप्रसङ्गात्। यस्य यदपेक्षितं, तं प्रति तस्य परत्वप्रङ्गात्। तदर्थसाध्यत्वेनाऽपेक्षानियम इति चेत्। न, कार्यज्ञाप्यभेदेन साध्यस्य बहुविधत्वे भिन्नतात्पर्यतया वाक्यभेदप्रसङ्गात्। धूमस्य हि प्रदेशश्यामलतामशकनिवृत्त्याद्यनेकं कार्यम्। आर्द्रेन्धनदहनाद्यनेकं ज्ञाप्यम्। तथा चेह प्रदेशे धूमोद्गम इत्यभिहिते तात्पर्यतः को वाक्यार्थो भवेत्? चेतनापेक्षाया नियन्तुमशक्य- 20 त्वात्। नाऽपि प्रतिपादकापेक्षितं, वेदे तदभावात्।

चतुर्थस्तु स्यात्। यदुद्देशेन यः शब्दः प्रवृत्तः स तत्परः, तथैव लोकव्युत्पत्तेः। तथा हि—प्रशंसावाक्यमुपादानमुद्दिश्य लोके प्रयुज्यते, तदुपादानपरम्। निन्दावाक्यं हानमुद्दिश्य प्रयुज्यते, तद्धानपरम्, एवमन्यत्रापि स्वयमूहनीयम्।

तस्माल्लोकानुसारेण वेदेऽप्येवं स्वीकरणीयम्, अन्यथा अर्थवादानां सर्वथैवानर्थ- 25 क्यप्रसङ्गात्। स चोद्देशो व्यवसायोऽधिकारोऽभिप्रायो भाव आशय इत्यनर्थान्तरमिति तदाधारप्रणेतृपुरुषधौरेयसिद्धिः।

तथा च प्रयोगः—वैदिकानि प्रशंसावाक्यानि उपादानाभिप्रायपूर्वकाणि प्रशंसावाक्यत्वात् परिणतिसुरसमाम्रफलमित्यादिलोकवाक्यवदिति। एवं निन्दावाक्यानि हानाभिप्रायपूर्वकाणि निन्दावाक्यत्वात् परिणतिविरसं पनसफलमित्यादिवाक्यवत्, 30 अन्यथा निरर्थकत्वप्रसङ्गश्च विपक्षे बाधकमुक्तम्।

अपि च नो चेदेवं, श्रुतार्थापत्तिरपि हीयेत। सिद्धो ह्यर्थः प्रमाणविषयो, न तु तेनैव कर्त्तव्यः। न च पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रौ भुङ्क्त इति वाक्यशेषोऽस्ति, अनुपलम्भबाधितत्वात्—उत्पत्त्यभिव्यक्तिसामग्रीताल्वादिव्यापारविरहात्, अयोग्यस्याशङ्कितुमप्यशक्यत्वात्। तस्मादभिप्रायस्थ एव परिशिष्यते,

गत्यन्तराभावात्। स चेद्वेदे नास्ति, नास्ति श्रुतार्थापत्तिरिति तद्व्युत्पादनानर्थक्यप्रसङ्गः। तस्मात् कार्यात्तात्पर्यादप्युन्नीयते, अस्ति प्रणेतेति।

आयोजनात् खल्वपि। न हि वेदादव्याख्यातात् कश्चिदर्थमधिगच्छति। न चैकदेशदर्शिनो व्याख्यानमादरणीयम्।

पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम्। 5

इति न्यायेनानाश्वासात्। त्रिचतुरपदकादपि वाक्यादेकदेशश्राविणोऽन्यथार्थप्रत्ययः स्यात्, किमुतातीन्द्रियादन्तरान्तरवाक्यसम्भेददुरधिगमात्।

ततः सकलवेदवेदार्थदर्शी कश्चिदेवाऽभ्युपेयोऽन्यथाऽन्धपरम्पराप्रसङ्गात्। स च श्रुताऽधीतावधृतस्मृतसाङ्गोपाङ्गवेदवेदार्थस्तद्विपरीतो वा न सर्वज्ञादन्यः सम्भवति। को ह्यप्रत्यक्षीकृतविश्वतदनुष्ठान एतावानेवायमाम्नाय इति निश्चिनुयात्। 10 कश्चाऽर्वाग्दृग् निःशेषाः श्रुतीर्ग्रन्थतोऽर्थतो वाऽधीयीत, अध्यापयेद्वा।

अत्रापि प्रयोगः—वेदाः कदाचित् सर्ववेदार्थविद्व्याख्याताः अनुष्ठातृमतिचलनेऽपि निश्चलार्थानुष्ठानत्वात्, यदे तत्सर्वं तदर्थविद्व्याख्यातं, यथा मन्वादिसंहितेति। अन्यथा त्वनाश्वासेनाव्यवस्थानादननुष्ठानमव्यवस्था वा भवेदनादेशिकत्वात्। अनुष्ठातार एवादेष्टार इति चेत्। न तेनामनियतबोधत्वात्। वेदवद्वेदानुष्ठानमप्यना- 15 दीति चेत्। न। तद्धि स्वतन्त्रं वा, वेदार्थबोधतन्त्रं वा? आद्ये निर्मूलत्वप्रसङ्गः। द्वितीये त्वनियमापत्तिः। न। ह्यसर्वज्ञाविशेषे पूर्वेषां तदवबोधः प्रमाणं, न त्विदानीन्तनानामिति नियामकमस्ति।

पदात् खल्वपि। श्रूयते हि प्रणवेश्वरेशानादिपदम्, तच्च सार्थकम्, अविगानेन श्रुतिस्मृतीतिहासेषु प्रयुज्यमानत्वात् घटादिपदवदिति सामान्यतः सिद्धे 20 कोऽस्यार्थः? इति व्युत्पित्सोर्विमर्शे सति निर्णयः, स्वर्गादिपदवत्।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥

इत्यऽर्थवादात्, यववराहादिवद्वाक्यशेषाद्वा। तद् यथा ईश्वरप्रणिधानमुपक्रम्य श्रूयते— 25

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥ इति॥

एवम्भूतोऽर्थः प्रमाणबाधित इति चेन्न। प्रागेव प्रतिषेधात्। तथापि न तत्र प्रमाणमस्तीति चेत्। स्वर्गे अस्तीति का श्रद्धा। न ह्युक्तविशेषणे सुखे किञ्चित् प्रमाणमस्त्यस्मदादीनाम्। 30

याज्ञिकप्रवृत्त्यन्यथाऽनुपपत्त्या तथैव तदित्यवधार्यते इति चेद्। न। इतरेतराश्रयप्रसङ्गात्—अवधृते हि स्वर्गरूपे तत्र प्रवृत्तिः, प्रवृत्त्यन्यथाऽनुपपत्त्या च तदवधारणमिति। पूर्ववृद्धप्रवृत्त्या तदवधारणेऽयमदोष इति चेन्न। अन्धपरम्परा-

प्रसङ्गात् । विशिष्टादृष्टवशात् कदाचित् कस्यचिदेवं विधमपि सुखं स्यादिति नास्ति विरोधः, तन्निषेधे प्रमाणाभावादिति चेत् । तुल्यमितरत्रापि ।

अत्रापि प्रयोगः—यः शब्दो यत्र वृद्धैरसति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचकः, यथा स्वर्गशब्दः सुखविशेषे प्रयुज्यमानस्तस्य वाचकः, प्रयुज्यते चायं
5 जगत्कर्त्तरीति । अन्यथा निरर्थकत्वप्रसङ्गे सार्थकपदकदम्बसमभिव्याहारानुपपत्तिरिति । एतेन—रुद्रोपेन्द्रमहेन्द्रादिदेवताविशेषवाचका व्याख्याताः ।

अपि च अस्मत्पदं लोकवद्वेदेऽपि प्रयुज्यते, तस्य च लोके नाचेतनेष्वन्यतमदर्थः, तत्र सर्वथैवाप्रयोगात् । नाप्यात्ममात्रमर्थः, परात्मन्यपि प्रयोगप्रसङ्गात् । अपि तु यस्तं स्वातन्त्र्येणोच्चारयति, तमेवाह, तथैवान्वयव्यतिरेकाभ्यामवसायात् । ततो
10 लोकव्युत्पत्तिमनतिक्रम्य वेदेऽप्यनेन स्वप्रयोक्तैव वक्तव्यः, अन्यथाऽप्रयोगप्रसङ्गात् । न च यो यदोच्चारयति वैदिकमहंशब्दं, स एव तदा तस्यार्थ इति युक्तम् । तदा सति मामुपासीतेत्यादौ स एवोपास्यः स्यात् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते, इत्युपाध्यायशिष्यपरम्परैवात्मन्यैश्वर्यं समधिगच्छेत्, तथा च उपासनं प्रत्युन्मत्तकेलिः स्यात् । लोकव्यवहारश्चोच्छिद्येत । तस्मान्नानुवक्ताऽस्य
15 वाच्योऽपि तु वक्तैवेति स्थिते प्रयुज्यते—वेदे अस्मच्छब्दः स्वप्रयोक्तृवचनः अस्मच्छब्दत्वाल्लोकवदिति ।

एवमन्येऽपि यः कः स इत्यादिशब्दा द्रष्टव्याः । तेषां बुद्ध्युपक्रमप्रश्नपरामर्शाद्युपहितमर्यादत्वात्, तस्य च वक्तृधर्मत्वात् । बुद्ध्युपक्रमो हि प्रकृतत्वं, जिज्ञासाऽऽविष्करणञ्च प्रश्नः, प्रतिसन्धानञ्च परामर्श इति । एवञ्च संशयादिवाचका
20 अप्युन्नेयाः ।

न च जिज्ञासासंशयादयः सर्वज्ञे प्रतिषिद्धा इति युक्तम् । शिष्यप्रतिबोधनायाहार्यत्वेनाविरोधात् । को धर्मः कथंलक्षणक इत्यादिभाष्यवदिति । एतेन धिगहो बत हन्तेत्यादयो निपाता व्याख्याताः ॥ ६ ॥

आमोद

कार्यायोजनेत्यादिग्रहणककारिकाव्याख्यानमाह—उद्देश इति ।
25 उद्देशोऽभिप्रायः, न तु प्रतीतिप्रयोजनकत्वादिकं मीमांसकाभिमतमित्यर्थः । भूतभाव्यार्थयोरुभयत्रापि तात्पर्यमाह—आम्नायस्य हीति । भाव्यार्थस्य ।

'स्वर्गकामो यजेते' त्यादेः भूतार्थस्य 'वायुर्वै क्षेपिष्ठा देवता' 'तेजो वै घृतम्' इत्यादेः । विधिशक्तिः प्रवृत्तिजनकत्वम् । अवसीदन्ती च कार्यमजनयन्ती उत्तभ्यते प्रवृत्तिजनकीक्रियते । कथमुत्तम्भनमत आह—प्रशस्ते
30 हीति । 'वायुः क्षेपिष्ठा देवता क्षिप्रफलदायिनीति ज्ञात्वा । वायव्यं (श्वेत) छागलमालभेतेत्यादिविधिवाक्यबलाद्वायव्यं छागलमालभते । पदार्थवाक्या-

र्थाभ्यां तात्पर्यार्थं भेत्तुमाह--अभिधा संकेतः **तद्बलायातः** तत्प्रतिसन्धान-
स्मारितः, **अन्वयशक्तिः** संसर्गप्रतिपादकत्वम्। **पदानामिति स्वमते। पदार्थानामिति भट्टमते। तद्बलायात**स्तज्जनितानुभवविषयः। एतदुभयमपि
तात्पर्यार्थं इत्याह--**तात्पर्यार्थस्त्विति**। तत्परस्य भावस्तात्पर्यम् इत्यत्र पर-
शब्दार्थं विकल्पयति, **तदेवेति**। **साध्यमिति**। कार्यमित्यर्थः। तदिदं **वाक्यम्** 5
तत्परम्, तस्य भावस्तत्परवाक्यत्वं तत् तत्परवाक्यं यद्विषयं स तात्पर्यार्थं
इत्यर्थः। **प्रमाणेन** शब्देन **कर्मणो** विषयस्यासाध्यत्वादजन्यत्वात्। ननु
वाक्यस्य यत् फलं तदेव तात्पर्यार्थः स्यादित्यत आह--**फलस्येति**। वाक्यार्थ-
प्रतिपत्तिर्वाक्यार्थधीरेवेति न तात्पर्यार्थं इत्यर्थः। ननु प्रवृत्तिनिवृत्ती एव
तात्पर्यार्थः स्यादित्याह--**प्रशस्तेति**। एवं सति तीरादिपरत्वं **लक्षणादौ न** 10
स्यादित्यर्थः। ननु गंगायां घोषः प्रतिवसतीत्यादिवाक्यमपि प्रवृत्तिनिवृत्ति-
तात्पर्यकमेव, परन्तु तीरप्रतिपत्तिं जनयित्वा तदुभयं जनयतीति तीरतात्पर्य-
कताऽभिधीयत इति शङ्कते **तीरविषय** इति। यत्र तद्वाक्यं प्रतिपत्तिपर-
तया नाभिधीयते किन्तु तीरप्रतिपत्तिमात्रपरतया, तत्र तीरतात्पर्यकं न
स्यादिति परिहरति--**स्वरूपेति**। प्रतिपाद्यो हि पदार्थो वाक्यार्थो वा 15
ताभ्यामन्यस्यैव तात्पर्यार्थत्वादित्युक्तमित्याह--**पदेति**। ननु पदार्थवाक्यार्था-
न्यतराविनाभूतो योऽर्थः स एव तात्पर्यार्थः स्यादित्याशंक्य निराकरोति--
**न हीति**। **तथा स्यादिति**। अविनाभूतार्थतात्पर्यकं वाच्यं स्यादित्यर्थः। **वारणे**
गमनवारणे। ननु मया न गन्तव्यं मद्गमनस्य प्रियामरणहेतुत्वादित्यनुमा-
नात्तत्र वारणप्रतीतिर्न तु वाक्यादिति वाच्यम्, तत्तात्पर्यकं **यद्यपि मया** 20
**न गन्तव्यं मयेति शब्दार्थो नानुमानिकः** तथाप्यनुमानद्वारापि तात्पर्यं
वाक्यस्यैव निर्वहति। तथा पर्वते धूमोऽस्तीति वह्नितात्पर्यकं वाक्यम् अनु-
माननिर्वाहतात्पर्यकम्। वस्तुतस्तु वारणमपि वाक्यार्थं एव। **न चापदार्थ-
त्वात्** तत्संसर्गः कथं वाक्यार्थः स्यादिति ? व्युत्पत्तिबलायातस्यापदार्थसंसर्ग-
स्यापि वाक्यार्थत्वात्। अन्यथा प्रियामरणहेतुत्वादिति लिङ्गमपि **वाक्यार्थो** 25
**न स्यात्। मरणस्यापदार्थत्वात्।** अन्यत्र जन्ममरणमन्तरेण न भवतीति
तस्याक्षेप्यत्वात्। ननु पदार्थस्य यदेव व्यापकं तदेव परमित्यत आह--
**न चेति**। पुरुषक्रोशनयोरित्युपलक्षणम्। मञ्चक्रोशनयोरित्यपि द्रष्टव्यम्।
**अतदधीनत्वादिति**। प्रतिपाद्यपुरुषापेक्षितप्रयोजनानधीनत्वादित्यर्थः। **ननु**

**तथैव** किं न स्यादित्यत आह—**तथात्व** इति । अतिप्रसङ्गमेवाह—**यस्य यदिति** । अस्तं गतः सवितेति वाक्यं द्विजानां सन्ध्योपासने, वेश्यायाः प्रसाधने, वणिजः पण्योत्सारणे, स्नुषाया दीपदाने, गोपस्य गवानयने, गृहस्थस्यातिथिपरिग्रहेऽपेक्षासत्त्वाद्वाक्यभेदः स्यादित्यर्थः । नन्वत्र वाक्यार्थः
5 सवितुरस्तगमनं सन्ध्योपासनादिकं च न तत्साध्यमिति तत्परत्वाभावान्न वाक्यभेद इत्याह—**तदर्थेति** । वाक्यार्थसाध्यतयेत्यर्थः । एवं सतीह प्रदेशे **धूम** इति वाक्यं तात्पर्यभेदात् भिद्यते इत्याह—**कार्येति** । ननु यद्यपि बहूनि **कार्यज्ञाप्यभेदेन** वाक्यार्थसाध्यानि, तथापि यदेव प्रतिपाद्यापेक्षितं तदेव तात्पर्यार्थः स्यादित्यत आह—**चेतनेति** । **वेदे तदभावादिति** तत्र मत इति
10 शेषः । **एवमन्यदपीति** उपेक्षावाक्यमुपेक्षापरमित्यादि । **अर्थवादानामिति** । स्तुतिनिन्दापरकृतिपुराकल्पवाक्यानामित्यर्थः । तत्र स्तुतिः "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इत्यादिः । निन्दा तु "एष वाव प्रथमो यज्ञानाम् । अनेन हुत्वा योऽन्येन जुहोति सोऽन्धं तमः प्रविशती"-त्यादिः ।

15 परकृतिस्तु:—

"वपामेवाग्रे अभिधारयन्त्यथ पृषदाज्यं तदु ह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिधारयन्ती" त्यादिः । पुराकल्पस्तु

"पुरा ब्राह्मणाः पवमानस्तोममस्तोषन्नित्यादिः । तदेतेषां यदि प्रवृत्तिपरता न स्यादानर्थक्यमेव स्यादित्यर्थः । उद्देश शब्दस्याभिप्रायार्थत्वं
20 पर्यायेणाह **स चेति** । **अधिकार** इति । एतदधिकृत्यानेनोक्तमित्यर्थः प्रतीयत इति भावः । **वैदिकानि वाक्यानीति** । सर्गाद्यकालीनानीत्ययमर्थः । सर्गस्य साधितत्वादत्राश्रयासिद्धिः । वेदस्य स्वतन्त्राभिप्रायपूर्वकत्वव्यतिरेके भट्टं प्रति विपक्षबाधकमाह **नो चेदेवमिति** । पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यश्रवणानन्तरं रात्रौ भुङ्क्ते इति वक्तुरभिप्रायविषयं वाक्यं यथा
25 श्रोता कल्पयति तथा 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत' इत्यत्र विधिकल्पनं वक्तुरभिप्रायं विनाऽनुपपन्नमित्यर्थः । नन्वर्थापत्त्या शेषीभूतवाक्यमेव जन्यतामित्यत आह **सिद्ध** इति । प्रमाणस्य ज्ञापकत्वं न तु ज्ञाप्यजनकत्वमपीत्यर्थः । **अनुपलम्भेति** । यदि स्यात् तदा वाक्यान्तरवदुप-

लभ्येतेत्यर्थः। ननु सदपि वाक्यमयोग्यत्वान्नोपलभ्येतेत्यत आह—**उत्पत्तीति**। स्वमते अभिव्यक्तीति। परमते 'पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादि-वाक्योच्चारणानन्तरं वक्तुस्ताल्वादिव्यापारोऽपि नोपलभ्यते येन रात्रौ भुक्त-मिति वाक्यमयोग्यमपि कल्प्येतेत्यर्थः। **अभिप्रायस्थ एवेति**। वक्तुरिति शेषः। नन्वर्थं एव तादृशः कल्प्यतां किं शब्दकल्पनया इत्यत आह—**गत्य-न्तरेति**। अर्थकल्पनयाऽन्वयबोध एव न सम्भवति अन्वयबोधे हि पदविशेषो-पस्थापितत्वं तन्त्रम्, अन्यथा गौः कर्मानयनं कृतिरित्यादौ अन्वयबोधः स्यात्। अत एव यत्रान्यत् क्रियापदं न श्रूयते तत्रास्ति भवतीति क्रियापदं प्रयोक्तव्यमित्याचक्षते शाब्दाः। पचतीत्युक्ते बधूपदर्शितकलापमादायान्वय-बोधप्रसङ्गात्। न। ननु यथान्योदीरिते कलापादिपदेनान्वयबोधः, तथा प्रत्यक्षकलापादिकमादायापीति वाच्यम्, तत्र समभिव्याहाराभावात् आकाङ्क्षाया एवाभावात्, वेदे विधिशेषकल्पनार्थमेव व्युत्पादनं तत्र शास्त्रे व्यर्थं स्यादित्याह—**स चेदित्यादि**। प्रकृतमुपसंहरति—**तस्मादिति**। तात्पर्य-विषयस्य प्रवृत्तिनिवृत्त्यादेः कार्यत्वमिति लक्षणया कार्यपदेन तात्पर्यमुक्तमिति भावः। आयोजनं समस्तवेदव्याख्यानम्। तच्चार्वाचीनपुरुषाशक्यमिति ईश्वर एव प्रथमव्याख्याता इत्यर्थः। **पौर्वापर्यापरामृष्टः** विशेषणविशेष्यभावेनान-वगतः। त्रिचतुरेति विमलं जलमित्यश्रुतवतो 'नद्याः कच्छे महिषश्चरतीत्यादेः दुरधिगमादिति। **वेदादिति** शेषः। **अन्यथेति**। यद्यस्मदादिरेव व्याख्याता स्यादित्यर्थः। कार्यायोजनपदे व्याख्याय धृत्यादेरित्यपि तदन्तर्भावेणैव व्याचष्टे **स चेति**। अधिगतो ज्ञानविषयीकृतः श्रुतः श्रोत्रेण साक्षात्कृतः, धृतो निरन्तराभ्यासेन दृढसंस्कारविषयीकृतः। **तद्विपरीतो** अध्ययनादिश्रवणादि-कमन्तरेणैव समाकलितस्साङ्गोपाङ्गवेदार्थः। अध्यापितश्रावितधारित-समस्तवेदार्थो वा। अन्यथासिद्धिनिरासायाह—**को हीति**। इदानीं सर्व-वेदार्थविद्व्याख्यातत्वमनुपलम्भबाधितमत आह—**कदाचिदिति**। सर्गादौ मन्वादीन्न मानसानुत्पाद्येत्यर्थः। **अन्यथेति**। सर्वविद्व्याख्यानमन्तरेणेत्यर्थः। कथमनुष्ठानमत आह **अव्यवस्थानादिति**। अर्वाचीनव्याख्यानस्याव्य-वस्थितत्वादित्यर्थः। अर्वाचीनेनैवान्यथाव्याख्यानेऽनुष्ठानं व्यवस्थितं न स्यादित्याह—**अननुष्ठानेति**। **अनादेशिकत्वादिति**। परमार्थाभिज्ञोपदेशा-विषयत्वादित्यर्थः। ननु पूर्वपूर्वानुष्ठातॄणामुपदेश इदानीन्तनानुष्ठाने तन्त्रं

स्यादित्याह—**अनुष्ठातार** इति । **तेषामिति** । असर्वज्ञत्वेनानियतबोधत्वादित्यर्थः । **वेदवदिति** । तथा च किं सर्वविद्व्याख्यानेनेत्यर्थः । **स्वतन्त्रमिति** । यादृच्छिकमित्यर्थः । **वेदार्थावबोधतन्त्रमिति** । अर्वाचीनव्याख्यातवेदार्थावबोधतन्त्रमित्यर्थः । ननु कथमनियमः पूर्वेषां प्रामाणिकत्वात्, तद्व्याख्यानस्यैव
5 नियामकत्वादित्यत आह—**न हीति** । पूर्वत्वमतन्त्रमित्यर्थः । **प्रणवस्येश्वरवाचकत्वम्** ।

'समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम्' (शिवमहिम्नस्तो०) इति श्रवणात् । **अविगानेनेति** । अविरोधेनेत्यर्थः । न च स्तोमेन व्यभिचारः । श्रुत्यादिषु प्रयुज्यमानत्वादिति हेत्वर्थो न तु श्रुतौ प्रयुज्यमान-
10 त्वादितिमात्रम् । यद्वा, विगानं निरर्थकतया प्रसिद्धिः । स्तोमे च ताद्रूप्येणैव प्रसिद्धेः । **स्वर्गादिपदवदिति** । यथा 'यन्न दुःखेन सम्भिन्नमित्याद्यर्थवादात् स्वर्गादिपदे शक्तिग्रहः, तथा 'उत्तमः पुरुषस्त्वन्यः' (श्रीमद्भगवद्गीता) इत्याद्यर्थवादादीश्वरपदशक्तिग्रह इत्यर्थः । **वाक्यशेषादिति** । यद्यपि वाक्यशेषोऽप्यर्थवाद एव, तथापि वाच्यसन्देहे विधिशेषः, अन्यत्र त्वर्थवाद-
15 मात्रमिति विकल्पेनाभिधानम् । यवादिपदे यथा 'वसन्ते सर्वशस्यानामि' त्यादिना शक्तिग्रहस्तथा प्रकृतेऽपि 'सर्वज्ञतेत्यादिना शक्तिग्रहः इत्यर्थः । अर्थवादमुपदर्शयति—**उत्तम** इत्यादि । **प्रणिधानम्** ध्यानम् । विधिशेषमाह—सर्वज्ञतेत्यादि । **तृप्तिः** संभोगेच्छाविरहः **स्वतन्त्रता** सर्वकारकप्रयोक्तृत्वम् । **अलुप्तशक्तिः** नित्ययत्नः । **अनन्तशक्तिरविनाशिनीच्छा** ।
20 एतानि षड् अङ्गानि धर्मान् विदित्वा आहुः प्रामाणिकाः । तथा च तावद्धर्मविशिष्टमीश्वरं प्रणिदध्यादिति विधेः शेषोऽयमित्यर्थः । **एवम्भूत** इति । सर्वज्ञतादिधर्मयुक्त इत्यर्थः । **प्रागेवेति** । योग्यानुपलब्ध्यादिप्रमाणजातबाधकत्वस्य प्रागेव दूषितत्वादित्यर्थः । **तथापीति** । अर्थवादस्याप्रामाणिकत्वादिति भावः । **स्वर्ग** इति । तत्रार्थवादस्यैव प्रमाणत्वादित्यर्थः । ननु
25 स्वर्गः सुखं, तत्र प्रमाणं प्रत्यक्षमेवात आह—**न ह्युक्तविशेषण** इति । दुःखासम्भिन्नत्वादिविशेषणविशिष्टः । **किञ्चिदिति** । अर्थवादादन्यदित्यर्थः । ननु विशिष्टं सुखमन्तरेण बहुवित्तव्ययायाससाध्ये वाजपेयादौ प्रेक्षावतां प्रवृत्तिरेव न स्यादित्याह—**याज्ञिकेति** । इतरेतराश्रयमेव स्फुटयति—**अवधूत**

इति । अन्धेति । मूलाभावादित्यर्थः । अदृष्टादुत्पन्ने विशिष्टसुखे तज्ज्ञानात्त-ज्जातीयसुखान्तरार्थं प्रवृत्तिः स्यादित्याह—विशिष्टेति । तुल्यमिति । तददृष्टम् यागादिनैवोत्पाद्यम् । यागादौ च प्रवृत्तिरर्थवादोपस्थितविशिष्टसुखप्रतीत्यैव इदृशश्चार्थवादः प्रकृतेऽपीत्यर्थः । सार्थकेति । संसर्गपरतयेत्यर्थः । तथा च न स्तोमेन व्यभिचारः । रुद्रादीति । "रुद्रो वै उग्रा देवता" इत्यर्थवादाद्रुद्रपदे, 5 'सहस्राक्ष इन्द्र' इत्यर्थवादादिन्द्रपदे शक्तिग्रह इत्यर्थः । प्रयोगप्रसङ्गादिति । परेणेत्यादिः । स्वातन्त्र्येणेति । अन्यथा, वाच्यस्त्वया मद्वचनात् स राजा' (रघुवंश १४) इत्यत्र कविरेवाहंपदवाच्यः स्यादिति भावः । तथैवेति । स्वतन्त्रोच्चारयितृवाचकस्यैवेत्यर्थः । स्वप्रयुक्तैवेति । स चेश्वर इत्यर्थः । 'मामुपासीते' ति वेदभागमुच्चारयन् स एव उच्चारयितैव अस्योपास्य 10 इत्यर्थः । तथा सतीति । अनुवक्तृपरम्परैवोपास्या स्यादित्यर्थः । द्रष्टव्या इति । ईश्वरसाधकत्वेनेति शेषः । कथमेवमत आह—तेषामिति । यथासंख्य-मन्वयः । उपहितमर्यादत्वादिति । उपहितवाचकत्वादित्यर्थः । एतावता कथं वक्तुः सिद्धिरत आह—तेषामिति । प्रकृतत्वं प्रथमं बुद्धावुपनिपतितत्वम् । प्रतिसन्धानमिति । स्मरणारूढस्तत्पदवाच्य इत्यर्थः । उन्नेया इति । संशया- 15 द्याधारसाधकत्वेनेति शेषः । विप्रतिषिद्धा इति दोषाभावादित्यर्थः । निर्दोष-स्याप्याहार्यः संशय इत्यत्र दृष्टान्तमाह—क इति । एतेनेति । संशयादीनां वक्तृधर्मकथनेनेत्यर्थः । धिगादिशब्दार्थानामपि कुत्साविषयखेदानुशयानां वक्तृधर्मत्वादित्यर्थः ॥६॥

बोधनी

तदेवं कार्येत्यादिकं श्लोकं प्रसिद्धेऽर्थे व्याख्याय सम्प्रति निपुणतरमतिगोचरेऽर्थे 20 व्याख्यातुमुपक्रमते—अथ वेति । वैदिकानां तावदर्थवादानां श्रुतार्थानुपयोगित्वेन प्रवृत्तिनिवृत्तिलक्षणे कार्ये तात्पर्यतः प्रामाण्यं वक्तव्यम् , तात्पर्यार्थश्चोद्देश्य इति परिशेष-यिष्यते, तेन तात्पर्यमप्युद्देश एव स्यात्, स च वक्तुरभिप्राय इति तदाधारपुरुषसिद्धिः । तदेवं कार्यं व्याख्यायायोजनधृती व्याचष्टे—व्याख्येति । वेदानां सती व्यवस्थिता व्याख्या सकलतदर्थदर्शिनः संभवतीति । अत्रायोजनं व्याख्यातस्य धृतिर्व्यवस्थितिः, 25 सा च सतीत्यनेनोक्ता । यद्वा धृतिर्नाम सर्वदृक्सर्वकर्तृकं व्याख्यालिङ्गं तदर्थानुष्ठान-

निश्चलत्वं तत्र सतीति धृतिः सिध्येदित्यर्थः। पदं व्याचष्टे—ईश्वरेति। तत एवानु-
मानादितरैरपि कारणविशेषो ज्ञायतेति[1]।

ननु वेदार्थविषयविज्ञानस्य हेत्वभावनिराकृतत्वात्तदज्ञातार्थस्य वक्तृत्वासंभावात्[2]
प्रमाणबाधित एव वक्ता वेदस्येत्याह—वक्त्रैवेति। तदाहुः—हेत्वभावे फलाभावात्
5 प्रमाणेऽप्यस्ति न प्रमा[3]। चक्षुराद्युक्तविषयं परतन्त्रं बहिर्मन इति। नेति। गतम्।
किञ्च कारणाभावः कार्यमेव ज्ञातं निवर्त्तयितुमीष्टे न त्वकार्यमिति। नित्येति। आश्र-
यासिद्धिपरिहारेण बाधकान्तरमाह—परमाण्वादय इति। नेति। परमाण्वादि-
दर्शित्वेनास्मदभिमतस्य तददर्शनसामग्रीराहित्यमसिद्धमेव, ततोऽन्यमर्वाचीनं प्रति तु
तेषामप्रत्यक्षत्वमिष्टमेवेति उपाधिमाशङ्क्य निराकरोति। तथापीति। अनुपाधित्वं
10 च सुगताद्यागमेषु साध्यसमव्याप्त्यभावात्। प्रमाणवाक्यस्येति। पौरुषेयत्वमि-
त्यनुषङ्गः। अन्यं प्रत्यनाशङ्कनीयत्वात् प्रणेतारं प्रतीति कृत्वा आह—नेति। साध्या-
नुप्रवेशमेव दर्शयितुं साध्यं पौरुषेयत्वं तावद्विविनक्ति। स्वतन्त्रेति। ततः किमि-
त्याह—अर्थप्रतीतिः न हि वक्तुः केवलौ विवक्षाप्रयत्नौ स्वातन्त्र्यम्, किन्तु प्रमाणान्तर-
जन्याया वाक्यार्थविषयाप्रतीतेस्तदेकविषयौ ततश्च प्रणेतुः प्रमाणान्तरगोचरार्थत्वस्य
15 पौरुषेयत्वशरीरानुप्रवेशादनुपाधित्वमिति।

किञ्चेदं प्रमाणान्तरगोचरार्थत्वं, किं शब्देतरप्रमाणगोचरार्थत्वं, मानान्तरगोचरार्थत्व-
मात्रम्वा? ( मूलभूतमानान्तरगोचरार्थत्वमात्रम् मूलभूतमानान्तरगोचरार्थत्वम्वा ) तत्र
नाद्यः साध्याव्यापकत्वादित्याह—मन्वादीति। द्वितीयमाशङ्क्य साधनव्यापकतयानुपा-
धित्वमाह—प्रयुज्यमानेति। वैदिकं प्रणवेश्वरादिकं पदमादिशब्दगृहीतं स्वतन्त्र-
20 प्रवक्तृवचनमस्मदादिपदं च सार्थकमीश्वरेणार्थेनेत्यर्थः।

लोकवृत्तानुसारत इत्येतत् सर्वत्र सम्बध्यते। तदेतत् सर्वं दृष्टमेवोच्यत इत्यर्थः।

तत्राद्यं पादं विवरितुं भूमिकां तावदारचयति—आम्नायस्येति। भव्यार्थस्य
विधिनिषेधात्मकस्य प्रवृत्तिनिवृत्ती साक्षात्कार्ये, भूतार्थस्य सक्षात्प्रवृत्तिनिवृत्तिकार्यत्वाभावेऽपि
तात्पर्यतः प्रवृत्तिनिवृत्त्योरेव प्रामाण्यमङ्गीकर्त्तव्यम्। श्रौतार्थमात्रपरत्वे सत्यानर्थक्य-
25 प्रसङ्गादिति। अर्थवादस्य[5] प्रवृत्तिनिवृत्त्योः[6] प्रामाण्यमुपपादयन्नाह—तथाहीति।

---

१. ख, ज्ञेयेतेति। २. ख. हेतुत्वासंभवात्।
३. क. प्रमाणे सति न प्रमाए इति। ४. क. प्रवृत्तिनिवृत्तीसाक्षात्कार्थे।
५. क. °दादिषु। ६. क. प्रवृत्ते।

विधिग्रहणमुपलक्षणम् । विधिनिषेधयोर्हि[1] प्रवर्तननिवर्तन[2]कार्ये स्वरसतः सिद्धावपि शक्तिविषयस्य तदात्मकसुखदुःखहेतुत्वाद[3]र्शनेन पुरुषं प्रत्यवसीदन्त्यर्थवादैर्लक्षणया स्तुतिनिन्दे प्रतिपाद्य रुचिद्वेषोत्पादनद्वारेणोत्तम्यत इति उक्तमेवाह—प्रशस्ते हीति ।

अर्थवादाः विधिनिषेधाभ्यामेकवाक्यानि सन्तस्तदेकप्रयोजनतया प्रवृत्तिनिवृत्त्योरेव तात्पर्यार्थतः प्रामाण्यं प्रतिपद्यन्त इति वक्तव्यम् । तेन तात्पर्यार्थो नाम कश्चि[4]दवश्याङ्गी- 5 कर्तव्यः । शब्दानामिति । एवमाबद्धायां भूमिकायां विवक्षितुमर्थं निवेशयितुं पदार्थवाक्यार्थाभ्यां तात्पर्यार्थं विवेचयं[5]स्तयोः स्वरूपमाह—तत्रेति । पदा[6]र्थस्तावन्न तात्पर्यार्थः अभिधानबलायातत्वात् । पदार्थस्य किमित्येवं तात्पर्यार्थो न भवतीत्यत उक्तम्—पदशक्तिरभिधेति अभिधा तावत्पदशक्तिरेव तद्बलायातपदस्यैवार्थः स्यान्न तात्पर्यस्यार्थो यथा तथोत्तरत्रापि योज्यमिति, तदेवं प्रसिद्धाभ्यां पदार्थवाक्या- 10 र्थाभ्यां विलक्षणस्तु तात्पर्यार्थः कीदृश इति चिन्तनीय इत्याह—तात्पर्यार्थोऽस्त्विति । विमृश्य निर्णेतुं सम्भावितान् पक्षान् आह--तदेवेति । तत्परं यस्य शब्दस्य सः तत्परस्तस्य भावः । तच्च तात्पर्यं यद्विषयं स तात्पर्यार्थः तच्च परं साध्यप्रतिपाद्य- प्रयोजनोद्देश्यानामन्यतमं सम्भवतीति तात्पर्यार्थस्य चतुर्धा सम्भवे सति कोऽसौ तात्पर्यार्थ इति चिन्त्यत इति न तावत्साध्यं तात्पर्यार्थ इत्याह—तत्रेति । प्रमाणं हि शब्दः 15 तेन हि प्राप्तिकर्मणोऽर्थस्यानुत्पादत्वादिति ।

ननु माभूदर्थः साध्यः अन्यत्तु किञ्चित् भविष्यति फलसाधकत्वे प्रमाणत्वस्यैवा- योग्यत्वादित्यत्राह—फलस्येति । अर्थप्रतिपत्तिः फलं नासौ तात्पर्यार्थः । शब्द- गोचरत्वात् । तस्या इति । प्रतिपत्तिव्यतिरेकेण साध्यमाशङ्कते—प्रशस्तेति । नेति । गङ्गायां घोष इत्यत्र हि गङ्गापदस्य तीरे तात्पर्यम् । न च तत्प्रवृत्तिनिवृत्ति- 20 रूपं नापि प्रमाणसाध्यमिति ।

ननु तीरस्य स्वरूपतः प्रवृत्तिनिवृत्तिरूपत्वसाध्यत्वयोरभावेऽपि तद्विषयप्रवृत्तिनिवृ- त्त्यर्थत्वेनैव गङ्गापदेन तीरप्रतिपादनात्तद्द्वारेण तीरस्यापि परत्वं सिध्यतीत्याह—तीरेति । नेति । न हि सर्वे शब्दाः प्रवृत्तिनिवृत्त्योरेव विश्राम्यन्तीति न नियम इति नापि प्रतिपाद्यं तात्पर्यार्थ इत्याह—न द्वितीय इति । कुत इत्याह—पदेति । तथा च 25 पदार्थवाक्यार्थव्यतिरिक्तस्तात्पर्यार्थो न सिध्येदिति ।

---

१. क. प्रतिषेधयोर्हि । २. क. नात्मनि । ३. क. त्वदर्शनेन । ४. क, दोषो° । ५. क. विवेचयितुं स । ६. क. पदार्थस्तु ।

ननु पदवाक्ययोश्च स्वशक्तिप्रतिपाद्यपदार्थवाक्यार्थव्यतिरिक्तं तदविनाभावेन[1] प्रतिपाद्यं तात्पर्यार्थं इत्याह—**पदशक्तीति**। **न हीति**। स्पष्टम्।

ननु यत्र मुख्यार्थस्य बाधोऽस्ति तत्रैवाविनाभूतस्तात्पर्यार्थः स्यात्। **यथा गङ्गायां घोष इति**। गङ्गायां जलमित्यत्र तु बाधाभावात् न तीरपरत्वमित्याह—**मुख्येति**। **नेति**। असत्यपि मुख्यार्थबाधेऽर्थान्तरतात्पर्यस्य भावादित्यत्रोदाहरणमाह—**तद्यथेति**।

नन्वविनाभावेन प्रतिपाद्यमित्यत्र व्यापकं विवक्षितम् अतो नोक्तदोष इत्यत्राह—**न च परमिति**। अत्र मञ्चपदस्य क्रोशतो वा पुरुषः तात्पर्यार्थः स्यात्। न च पुरुषस्तयो[2]र्व्यापक इत्यत्राह—**नापि तृतीय इति**। अपेक्षितं हि प्रयोजनं भवति। द्वौ चात्रापेक्षितारौ सम्भवतः प्रतिपाद्यः प्रतिपादकश्चेति कृत्वा विकल्पयति—**तद्धीति**। अपेक्षायाः[3] प्रतिपाद्याधीनत्वेनापेक्षालक्षणे तात्पर्यार्थे भवच्छब्दप्रामाण्यं तदधीनमेव स्यादिति प्रसङ्गमभिधाय विपर्यये पर्यवसानमाह—**शब्दप्रामाण्यस्येति**। अतिप्रसङ्गमेवाह—**यस्येति**।

ननु नापेक्षितमात्रं तात्पर्यार्थः, यतः कदलीफलमपेक्षमाणस्य गामानयेति वाक्यं तत्र प्रमाणं स्यात्, किन्तु तस्य शब्दस्यार्थेन साध्यत्वे सत्यपेक्षितं ततो नातिप्रसङ्ग इत्याह—**तदर्थेति**। **नेति**। तदर्थस्य तावत् कार्यं ज्ञाप्यं चेति साध्यं तावद् भिद्यते। तयोश्च प्रत्येकमनेकभेदत्वादेकस्मिन्नेव वाक्ये तात्पर्यात् तात्पर्यभेदेन वाक्यभेदः स्यादिति साध्यभेदेन तात्पर्यभेदाद्वाक्यभेदप्रसङ्गमेवोदाहरणेन दर्शयति—**धूमस्येति**।

ननु साध्यत्वे[4] सति प्रतिपाद्यापेक्षितं परमित्युक्तम्। ततश्चात्र साध्यभेदेऽप्यपेक्षा[5]तो वाक्यनियमः स्यादित्यत्राह—**चेतनेति**। तत्र सर्वत्रापि चेतनस्यापेक्षायाः सम्भवादिति। तर्हि प्रतिपादकापेक्षितं वाक्यार्थः[6] स्यादित्यत्राह—**नापीति**। वेदे प्रतिपादकस्यैवाभावात् भवतः अस्माकं च तदपेक्षितस्याभावादिति स्वाभिमतं पक्षमुपपादयितुं परिगृह्णाति—**चतुर्थस्त्विति**। तुनापेक्षान्तरोक्तदोषाद्व्यवच्छिनत्ति। कुत इत्यपेक्षायां लोकप्रवृत्तानुसारत इत्येतदवतारयति—**तथैवेति**। व्युत्पत्तिमाह—**तथा हीति**। अन्यदपि गङ्गावाक्यं तीरोद्देशेन प्रवृत्तं तत्परमिति द्रष्टव्यमिति। ईदृश्यां च लोकव्युत्पत्तौ तदनुसारिणां वैदिकानमेवं तात्पर्यार्थः स्वीकार्यः। अन्यथा त्वेवं तात्पर्यतः प्रवृत्तिनिवृत्त्योः प्रामाण्यानङ्गी-

---

१. क. °भावप्र°। २. क. तयोः व्या°। ३. क. अपेक्षितस्य प्रतिपाद्यत्वेनापेक्षणे भाव°। ४. क. साध्यता। ५ क. व्यपेक्षातो। ख. ऽप्यवेक्षातो। ६ क. तात्पर्यार्थः।

कारे स्वार्थानुपयोगिनामर्थवादानामानर्थक्यमेव स्यादित्याह—**लोकानुसारेणेति**। तदाहु-"राम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति", विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि'ति। अस्तूद्देश्यं तात्पर्यार्थः। ततः किमित्याह—**स चोद्देश इति**। यस्य विषयोऽयमुद्देशः स चोद्देशस्तात्पर्यात्मकः प्रणेतृपुरुषधर्मत्वेन प्रसिद्धाध्यवसायादिरूपत्वेन प्रसिद्धत्वात् सकललोकवेदयात्राधुरन्धरस्य पुरुषस्य सिद्धिरिति। उक्तमर्थं प्रयोगद्वयेनाह—**तथा चेति**। अनयोर्विपक्षे बाधकमर्थवादानां सर्वथानर्थकत्वप्रसङ्ग इत्यत्रैवोक्तमित्याह—**अन्यथेति**। न केवलं तदेव तदन्यदप्यस्तीत्याह—**अपि चेति**। यदि पुरुषाभिप्रायो वेदेन तदा श्रुतार्थापत्तिर्निर्विषयत्वा[1]देवोत्सीदेत्। वक्त्रभिप्रायस्थस्यैव वाक्यशेषस्य तद्विषयत्वेन परिशेषादिति न तावदुपपादकवाक्येनैवं वाक्यशेषः सिध्यति। पूर्वसिद्धस्यैवार्थस्य प्रमाणविषयत्वादित्याह—**सिद्धो हीति**। न चान्यतः पूर्वसिद्धिरस्तीत्याह—**न चेति**। न च सतोऽप्ययोग्यत्वादनुपल[ म्भ ]त्वस्यैवावधारणादित्याह—**उत्पत्तीति**। मीमांसकापेक्षयाभिव्यक्तिः वचनमिति। प्रसक्तायास्तत एव सिद्धेः। पूर्वसिद्धेश्च प्रतिषेधात् गत्यन्तरस्य चाप्रसङ्गात् वक्त्रभिप्रायस्थ एव वाक्यशेषः श्रुतार्थापत्तिविषयत्वेन परिशेषतः सिद्ध इत्याह—**तस्मादिति**। स्यादेवं लोके वेदे तु वक्तुरभावात् कथमभिप्रायस्थो वाक्यशेषः स्यादित्याह— **स चेति**। स इत्यभिप्रायस्थोऽभिप्रायवान्वा परामृश्यते श्रुतार्थापत्तिव्युत्पादनं दृष्टः श्रुतो वेति भाष्यं दृष्टः। पञ्चभिरप्यस्मात् भेदेनोक्ता श्रुतोद्भवा प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणेति वार्त्तिकं च द्रष्टव्यम्। उक्तेऽर्थे कार्यशब्दं संघटयन्नुपसंहरति—**तस्मादिति**। आयोजनादिति। हेतुमुपपादयति **आयोजनादिति**।

नन्वर्वाचीन एव कश्चिद्व्याचष्टामित्यत्राह—**न चैकदेशेति**। यथाने[2]नं न्यायेनानाश्वासस्तदाह—**त्रिचतुरेति**। ऐन्द्रियकार्थत्वे ह्येकदेशदर्शिनाऽप्यर्थप्रकरणादिना कथञ्चित्तात्पर्यार्थनिश्चयेनार्थनिश्चयः स्यादित्यतउक्तम्—**अतीन्द्रियार्थादिति**। ततः किमित्याह— **अत इति**। व्याख्यातृत्वेनेति शेषः। तस्मिन् हि सति केचित्तत्सकाशान्निःसंशयं वेदार्थैकदेशानधिगम्य अनन्तरेभ्यो यथार्थमधिगतानं[3]शान् व्याचख्युः। ते च स्वानन्तरेभ्य इत्यवधारणादविगानमेव व्याख्या प्रवृत्तेति कल्पयितुं लभ्यत इति भावः। असति तु तादृशि सकलवेदार्थदर्शिनि सर्वेषां पूर्वपिक्षायामपि संशयानिवृत्तेरन्धपरम्परा[4] तुल्यतैव स्यादित्याह—**अन्यथेति**।

---

१ क. तदाश्रितापत्तिर्निविषयत्वेनैवावसीदेत्। २ क. तेन।
३. क. यथायथं विगतानंशान्। ४ क. °परंपरा अभावतुं°।

नन्वस्तु तादृश एव प्रवक्ता स तु कल्पकारादिवदनेकेभ्य एवोपाध्यायेभ्यो वेदादिकमधीत्य धृत्वा श्रुत्वा तदर्थं च स्मृत्वा व्याचष्टाम्, न तु स्वयमेव सर्वमपरोक्षं समीक्ष्येति कृतमीश्वरेणेत्यत्राह—**स चेति**। अस्त्वेवं तथाप्ययं सर्वज्ञ एव सिध्येत्। यद्वास्मदुपपत्तिभिस्त्वदुक्तविपरीतः स्वयमेवापरोक्षीकृतवेदार्थोऽयं भवेत्। ततः सुतरां तत्सिद्धिरिति
5 त्वदुक्तविपरीतसिद्धावेवोपपत्तिमाह—**को हीति**। अनिश्चितायां चाम्नायस्येयत्तायां न तदर्थनिश्चयः स्यादिति भावः। तदुक्तसिद्धावपि सर्वज्ञसिद्धिमुपपादयति—**को वेति**। उक्तमर्थं प्रयोगमारोपयति—**अत्रापीति**।

नन्वेकदेशदर्शिव्याख्यातादपि ग्रन्थाच्छिष्याणामुपाध्यायश्रद्धयैव वर्तमानानां निश्चलानुष्ठानं दृश्यत इत्यत्राह—**अनुष्ठातृमतिचलनेऽपीति**। अत्रानुष्ठातॄणां परीक्षकाणां
10 भावनावाक्यार्थोऽपूर्वं वाक्यार्थः पदार्था वाक्यार्थं बोधयन्ति। पदान्येव वा बोधयन्तीत्यदिमतिभेदेऽपि अविगानेनानुष्ठीयमानार्थत्वादित्यर्थः। तर्ह्ययमेव हेतुरस्तु किं निश्चलानुष्ठानत्वादिति। सत्यम्। पक्षधर्मतासिध्यर्थं विशेष्योपादनमिति केचित्। त्वमिति। चलनेऽपीति पठन्ति। तत्रानुष्ठातॄणां चलनं सन्देहस्याभावो निश्चलानुष्ठानसिद्धये हेतुत्वेनोक्त इति व्याख्येयम्। साध्यानङ्गीकारे वक्त्रर्थनाश्वासेनार्थस्यानुष्ठानं न भवेत्।
15 अव्यवस्थानादर्थनिश्चयस्याभावात् वाक्यार्थस्यानेकधाप्रतिभानेनाव्यवस्थितमेव वा भवेत्।[1] व्यवस्थितमतिमूलस्योपदेष्टुः पुरुषस्याभावादित्याह—**अन्यथेति**। सन्तु तर्हि पूर्वपूर्वानुष्ठातार एवोत्तरोतरेषामादेष्टार इत्याह—**अनुष्ठातार इति**। **नेति**। तेषां सर्वदर्शित्वेन व्यवस्थितबोधसाम्यादिति—**वेदवदिति**। ततश्च यथाऽनादेर्वेदस्य स्वरूपनिश्चयाय[2] स्वतन्त्रपुरुषापेक्षा नास्ति तद्वदनादिनोऽनुष्ठानस्यापि पूर्वपूर्वानुष्ठावतृप्रत्ययादेव व्यवस्थिता-
20 नुष्ठानसिद्धेः न स्वतन्त्रपुरुषापेक्षेति तत्रानादित्वमनुरुध्याह—**तद्धीति**। मूलप्रमाणनैरपेक्ष्यं स्वातन्त्र्यम्। अनियमापत्तिः बोधस्यानुष्ठानस्य वेति पूर्वेषां बोध एव नियामकः स्यादित्यत्राह—**नहीति**।

अथ पदादिति हेतुं तद्विवरणश्लोकांशव्याख्यानायोपादत्ते—**पदादपीति** व्याचष्टे—**श्रूयते हीति**। **कोऽस्यार्थ इति**। किं जीवा एव कर्मद्वारेणेश्वराः[3]? किं वा
25 राजादयो लोकसिद्धाः? किं वा लोकोत्तरपदस्य सुखमात्रमर्थः तद्विशेषो वेति? विमर्शे सति यत्र नोष्णं, न शीतं, न क्षुत्, न तृष्णा पुण्यकृत एव तत्र प्रेत्य गच्छन्ती-

---

१ क. निश्चस्यानेकधाप्रतिभावेनाव्यवस्थि°। २ ख. °याया:।
३ क. किं जीव एव कर्मद्वारेणेश्वरः।

त्यर्थवादेभ्यो निरतिशयसुखविशेषस्वर्गपदार्थो न तु सुखमात्रमिति निर्णीयते, तथेश्वर-पदार्थोऽप्युत्तमः पुरुष इत्यर्थवादेभ्यो लोकोत्तर इति निर्णेष्यत इति—**यववराहादिवद्धेति।** यथा यववराहवेतसशब्दानामभियुक्तप्रयोगवशेन सामान्यतोऽर्थवत्त्वे सिद्धे प्रियङ्गु किं वार्यप्रसिद्ध्या दीर्घशुकनीवारा इति विमर्शे सति वाक्यशेषेभ्योऽर्थविशेषो निर्णीयते। तथा हि यवमयश्चरुर्भवतीति विधेर्वाक्यशेषः श्रूयते। यत्रान्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्तीति तत्र हि ओषधिम्लानकाले फाल्गुने मासि यवानां मोदमानत्ववचनात् दीर्घशुका एव यवशब्दार्थो न प्रियङ्गव इति प्रतीयते। प्रियङ्गूनां शरदि पक्वानां फाल्गुनात् पूर्वमेव क्षीणत्वात् तेषां मोदनकाले सर्वौषधिमोदनादन्यौषधिम्लाना-भावाच्च। यथा हि

> फाल्गुनेऽन्यौषधीनां तु जायते पत्रशातनम्।
> मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः॥
> प्रियङ्गवः शरत्पक्वा तावद्गच्छन्ति संक्षयम्[२]।
> [य]दा वर्षासु मोदन्ते सम्यग्जाताः प्रियङ्गवः।
> तदा नान्यौषधिम्लानिः सर्वेषामेव मोदनात्॥
>
> इति।

एवं वाराही उपानहावित्यस्य वाक्यशेषः। वराहं गावोऽनुधावन्तीति गोभिरनु-धावनं यत्सादृश्यात् सूकरस्येति स एव पराभवशब्दार्थो वायस एवं वैतसे कटे प्राजा-पत्यान् सञ्चिनुयादिति विधेर्वेतसशाखया चावकाभिश्चाग्निं विकर्षतीत्यस्य विधेर्वाक्यशेषो-ऽप्सुजो वेतस इति नीवारस्यैवाप्सम्बन्धो नियतो न जंववास एव वेतसशब्दार्थः न जंवुस्तस्यास्तत्सम्बन्धनियमाभावात् तथेश्वरादिपदार्थोऽपीति तमेव वाक्यशेषमुदाहरति—**तद्यथेति।**

ननु सर्वज्ञादिरूपोऽर्थः पुरुषत्वादिहेतुभिरेव बाध्यत इत्याह—**एवम्भूत इति। नेति।** प्रागेव तृतीयपरिच्छेद इति।

ननु मा भूद्बाधः साधकमपि नास्तीत्याह—**तथापीति।** प्रतिवादिनोऽपि संमतेन स्वर्गेण साम्यमाह—**स्वर्ग इति।** न तावन्नित्यातीन्[द्रियेषु] प्रत्यक्षादिः प्रवर्त्तते। नाप्यागमः विधिनिषेधमात्रपरत्वात्तस्येति उक्तविशेषणे स्वग प्रमाणमाशङ्कते

१, क. किं जीव एव कर्मद्वारेणेश्वरः।
२. क. भक्षया।

—याज्ञिकेति । न हि सन्निहितसुखविमुखाः प्रेक्षाकारिणः प्रवर्त्तन्ते, यदि ततोऽतिशयः किञ्चिन्न सिध्येत् । तदेतदितरेतराश्रयापादनेन दूषयति—अवधृत इति । अवधृते फलविशेषे प्रेक्षावतां प्रवृत्तिः सत्यां च प्रवृत्तौ तदन्यथानुपपत्त्या फलविशेषावधृतिरिति ।

5 ननु स्यादेवं यदि यतः प्रवृत्तेः फलविशेषावधारतिः सैव तन्मूला भवेत् । न चैवं पूर्वपूर्वेषां प्रवृत्तिदर्शनेनोत्तरोत्तरेषां फलविशेषमवधार्य प्रवृत्तेरित्याह—पूर्वेति । एवं[1] तर्हि यथास्य फलविशेषावधारणे पूर्वत्र···पायः तथा पूर्वस्यापि पूर्वतरप्रवृत्तिरेवं तस्य तस्यापीति असति निरपेक्षप्रमाणेत्थं परंपरावाक्यसाम्यापत्तिरित्याह—अन्यपरम्परेति ।

ननु मा भूदन्यदद्यत्वं तत्तदृष्टवशात्तावत्तारतम्येन दुःखासम्भिन्नः सुखविशेषः 10 पुरुषाणां दृश्यते । तेनादृष्टप्रकर्षविशेषात् कस्यचित् ज्योतिष्टोमादिकर्त्तुः क्वचिद्देशविशेषे कदाचिदप्रतिबन्धदशायां तथाविधं सर्वथा दुःखासम्भिन्नं सुखमलब्धपूर्वमनुभवेदिति संभावयतां प्रमाणविरोधस्तावन्नास्ति, निषेधकस्यानुपलम्भात् । तथा च दुःखेन यन्न सम्भिन्नमित्याद्यर्थवादसहकृतं स्वर्गपदमेव तथाविधे सुखे प्रमाणं स्यादित्याशयेनाह—विशिष्टेति । तर्हि ईश्वरादिपदेऽपि त्वदुक्त एवानुसन्धेयः पन्था इत्याह—तुल्यमिति । 15 न हि ज्ञानादयः सातिशयाः न दृष्टाः । न चासम्भाविनोऽपि निरतिशयाः निषेधकप्रमाणमस्ति । न च सर्वज्ञतातृप्तिरित्याद्यर्थवादपदसमभिव्याहारो नास्ति, यतस्तदसहायमीश्वरादिपदमेव पुरुषविशेषप्रमाणं न भवेदिति अर्थवादस्यान्यपरत्वेन उक्तप्रकारानुपपत्तिमाशङ्क्याह—तत्रापि प्रयोग इति । लोकवृद्धप्रयुक्तैः गाव्याद्यपभ्रंशैर्व्यभिचारमभूदित्युक्तम् । वेदे वृद्धैरिति तत्प्रयुक्तैरपि गौणादिवृत्तैः व्यभिचारः स्यादित्युक्तम् । 20 असति वृत्त्यन्तर इति । वृत्त्यन्तरभावश्च निरुपपादस्येश्वरपदस्यानवच्छिन्नेश्वरविषयत्वे मुख्यस्यान्यस्याभावे गौणादिवृत्त्यसम्भवादिति । अन्यथेति । यदि जगत्कर्त्तृत्ववाचकसर्वदेवतासमष्टिरूपदेवताप्रतिपादकमीश्वरेऽज्ञानादिशब्दानामर्थवत्ताप्रतिपादनन्यायेन तद्व्यष्टिरूपरुद्रोपेन्द्रादिदेवताविशेषवाचकाः शब्दा अर्थवत्तया व्याख्याताः अतस्तेभ्योऽपि पदेभ्यः ईश्वरसिद्धिरिति भावः । इदानीं पदादित्यस्यास्मत्पदादित्यर्थमभिसन्धायाह—अपि चास्मत्पदमिति । अन्यथेति स्वप्रयोक्तृभावे तस्यार्थभावादप्रयोगप्रसङ्गादिति । 25

नच परतन्त्रप्रयोक्तैवास्यार्थ इति वक्तुं युक्तमित्याह—न चेति । आत्मनैवास्मन्यैश्वर्यमिति । न हि तदा परस्परस्यैश्वर्यमधिगन्तुमर्हति सर्वस्याहं सर्वस्य प्रभव इति

---

१. क. पुस्तके नास्ति ।

वाक्यमनुसन्दधानस्य स्वयमेवाहं शब्दार्थत्वात्। अहंशब्दार्थस्यैवानेन वाक्येनैश्वर्यकथनात् स्वात्मनैव स्वात्मन्यैश्वर्यावगतिः प्रसज्येतेति। उन्मत्तकेलिरुन्मत्तक्रीडा स्यादिति। **लोकव्यवहारश्चेति।** लोके च स्वातन्त्र्येणाहंशब्दप्रयोक्तुः तदर्थमवगम्य तदनुकूलव्यवहारो दृश्यमान उच्छिद्यत इति उपहितमर्यादत्वादिति। अत्र मर्यादाशब्देन शब्दप्रवृत्त्यवधिभूतस्तदर्थ एवोच्यते। स च प्रकृतत्वाद्युपहित एव यः कः स इत्यादीनामर्थो भवति, न तु स्वरूपमात्रेणेत्यर्थः। कथं पुरुषधर्मत्वमिति, बुद्ध्युपक्रम इति। **एवं संशयादीति।** संशयादिवाचका अपीति वेत्यादिवैदिकशब्दा वैदिकधर्मप्रतिपादकत्वेनोन्नेयाः। आदिशब्देन निश्चयादिप्रतिपादका एवकारादयः संगृहीताः। ननु विशेषमजानानस्य संशयो जिज्ञासा वा भवति। सर्वज्ञस्य तदसम्भवान्नैषा रीतिः संभवतीत्याह **न चेति।** न ह्ययं सर्वज्ञो विशेषाज्ञानात् संशेते जिज्ञासते वा किन्तु ज्ञानं नैव शिष्यान् बोधयिष्यन् संशयितजिज्ञासितविषयत्वात् प्रतिबोधनस्य तेषां संशयाद्युत्पादनायात्मनोऽपि संशयादिकमाहरति—स तु संशयान इव जिज्ञासमान इव च व्यवहरतीत्यर्थः। अज्ञातत्वेऽपि व्यवहारमुदाहरति—**को धर्म इति।** न हि न्यायसहस्रानुगृहीतसमस्तवेदार्थविदो मीमांसाभाष्यकारस्य धर्मस्वरूपादिष्वज्ञानसंशयविपर्यासा वस्तुतः सम्भवन्तः तथाप्यथातो धर्मजिज्ञासा इति सूत्रमवतारयितुं शिष्यजिज्ञासोत्पादनाय को धर्म इत्यादिव्यवहारो यथा तथेत्यर्थः। एतेन यदा आदिशब्दप्रतिपादनेन धिगादिशब्दा अपि बुद्धिविशेषोपहितमर्यादा इति व्याख्याता इत्याह—**एतेनेति।** धिक्शब्दोऽपि निन्दामाह—सा चाप्रशस्तज्ञानोपहिता[1] अहो इत्याश्चर्यम् तच्चादृष्टविषयबुद्ध्युपहितम्। बतेति खेदः। स च बुद्ध्युपहितः दुखानुभवरूपत्वात्। हन्तेत्याश्चर्यम् सम्बोधनं वा। तच्च सम्बोध्यविषयवक्तृज्ञानमिति ॥ ६ ॥

विवेकः

कार्य्यायोजनपदरूपान् हेतून् कारिकया व्याचष्टे—**उद्देश एवेति।** क्रियते जन्यते शब्दोऽनेनेति व्युत्पत्त्या तात्पर्यमेव कार्यपदेनोच्यते। कृत्यल्युटो बाहुलकात् करणेऽपि ध्यञ्प्रयोगात्। तात्पर्यमेव कार्यं, तच्च तात्पर्यम् उद्देश एव इच्छाविशेष एव, न तु प्रतीतिप्रयोजनकत्वरूपं प्रमाकरणव्युत्पादितमिति भावः। विश्वदृशः सर्वज्ञस्य सती यथार्था वेदव्याख्या आयोजनं शब्दयोजनारूपत्वात्। तस्या 'वायुर्वै क्षेपिष्ठा देवता' 'यस्य पिता पितामहो वासीदि'ति विदित्वा। आहत्य सक्षात् न

१. क. च प्रश०

प्रवर्त्तकत्वं निवर्त्तकत्वं च न प्रवृत्तिनिष्ठनिवृत्तिजनकज्ञानजनकत्वं तत्रैव प्रवृत्तिनिवृत्त्योरेव तात्पर्यात् प्रामाण्यं प्रति प्रवृत्तिनिवृत्त्योरेव तात्पर्यात् प्रामाण्यं प्रवृत्तिनिवृत्तिप्रयोजकताद्यर्थक-जन्यप्रमाप्रयोजकं, कथं तदित्यत आह **तथाहीति** । अवसीदन्ती कथं कर्मेति न्यायेन प्रवृत्तिम ( ा ? ) योजयन्ती उत्तभ्यते । बलवदनिष्टज्ञानं वानेन स्वकार्य्यं यदेवाश्रयते तदेव
5 कथमित्यत्राह **प्रशस्ते हीति** । तत्र पदार्थवाक्यार्थाभ्यां तात्पर्य्यार्थं भेदयितुं तौ निरूपयति **तत्रेति** । अर्थे सुमेध्ये तद्बलायाते साक्षात्परम्परया उपस्थापितः शक्यो लक्ष्यो वा, अन्वयशक्तिरन्वयानुभावकत्वं विशिष्टवैशिष्ट्यशक्तिपदेति व्याप्तेराह **आकाङ्क्षादिमत्त्वे सतीति** । तदन्वयप्रतिपत्त्यनुकूलाकाङ्क्षादिमत्त्वे सतीत्यर्थः । **पदानामिति** । बहुवचन-मविवक्षितार्थम् , एकपदोपात्तयोरपि कृतिवर्त्तमानत्वयोरनुमते । **पदार्थानामिति** । भट्टनये
10 पदार्थेऽपि तैर्विशिष्टप्रत्ययानुकूलाकाङ्क्षारूपपदार्थान्तरोपगमान्नासिद्धिः । वाक्यं वाक्यत्वं तद्बलाया ( त ) स्तदवच्छिन्नज्ञानबलादायातोऽनुभूतः, तत्र तात्पर्य्यार्थं विवेचयिष्यन् तत्पदघटकपरपदास्यार्थं विकल्पयति **परमित्यादि** । **साध्यमिति** । पूर्वं कारणं परं कार्यमिति व्यवहारमाश्रित्येदं प्रतिपाद्यं स्वसाध्यप्रतिपत्तिविषयः साध्यवाचकपरपदस्य साध्य-विषय(क) लक्षकत्वादिति भावः । प्रयोजनानुकूलत्वमुद्देश्यार्थकत्वं च तस्य सुप्रसिद्ध-
15 मेवायोजनत्वम् अपेक्षितत्वम् उद्देश्यत्वम् अग्रे निर्वाच्यम् । **तदिति** । तत्परं तच्च पदं वाक्यं वा तत्त्वं तत्परत्वं तत् तात्पर्यं यत् विषयं येन परपदार्थेन निरूप्यं स तात्पर्य्यार्थः । न प्रथमः न साध्यरूपः परपदार्थ एव तात्पर्य्यार्थः । प्रमाणेन शब्देन अर्थस्य पदार्थस्य वाक्यार्थ ( स्य ? ) वा । कर्मणः स्वजन्यप्रमाविषयस्य असाध्यत्वात् । तथा च पदार्थे वाक्यार्थे च तात्पर्य्यार्थव्यवहारो न स्यादिति भावः । भावार्थे इष्टापत्तौ दोषान्तर-
20 माह **फलस्य चेति** । तथा च तज्जन्यप्रतिपत्तौ तात्पर्य्यार्थत्वप्रतिप्रसक्तं ज्ञानजननद्वारा तत्साध्यत्वोक्तौ चासम्भवः, तादृशस्य साध्यान्तरस्य तत्राभावादित्यर्थः । संभवमाह **प्रशस्तेति** । इदं च भाव्यार्थस्याप्युपलक्षणम् । **गङ्गायामिति** । तथा च तीरपरं गङ्गापदमिति व्यवहारो न स्यादिति भावः । **शङ्कते तीरेति** । तथा च लक्षणया तत्र तत्परत्वव्यवहार इति भावः । स्वरूपाख्यानविषयीभूतेऽप्यर्थे तत्परत्वमिति व्यवहारात्तत्र
25 नोक्तप्रणाल्या तत्परत्वव्यवहारः स्यात्तत्र प्रवृत्त्यादेस्तदसाध्यत्वादिति भावः । तत्प्रतिपा-दकत्वमित्यत्र प्रतिपत्तिरनुभूतिः, तथा च तदेव अनुभाव्यं यस्य इत्यर्थः पर्य्यवस्यति । तत्र दोषमाह **पदवाक्ययोरिति** । पदार्थः स्वशक्यः, तथा च गङ्गापदस्य तीरस्वभाव-कत्वाभावात् गङ्गापदं तीरपरं न स्यात् इति भावः । ज्ञानमात्रस्य प्रतिपत्तिपरत्वमभिप्रे-त्याह **पदशक्तीत्यादि** । प्रतिपाद्यं प्रतिपाद्यमपि यस्य शब्दस्य शक्येनाविनाभूतं व्याप्यं

तस्य शब्दस्य दोषमुद्धरति मुख्य इति। तदर्थाविनाभावेन प्रतिपाद्यं तथा परं तस्मिन् मुख्यार्थे बाधके भावात्। अन्यस्मिन्नर्थे तात्पर्यस्य सत्त्वात् प्रतिपाद्यं परं तत्त्वं च तद्योग्यता सा च व्यापकत्वरूपैव इति शङ्कते परमिति। तद्व्यापकत्वं स्वार्थनिरूपितं स्वसमभिव्याहृतपदार्थनिरूपितं वा। आद्ये नहीति। द्वितीये नापीति। प्रतिपाद्यो बोधनीयः। यन्निष्ठज्ञानोत्पत्तये शब्दः प्रयुज्यते तदधीनत्वात् प्रतिपाद्यापेक्षानधीनत्वात्। 5
अतिप्रसङ्गं विवृणोति यस्येति। अतिप्रसङ्गमुद्धरति तदर्थेति। तस्य शब्दस्य योऽर्थः पदार्थो वाक्यार्थो वा तत्साध्यत्वे सति यत् प्रतिपाद्यापेक्षितं तत् परम् इत्यर्थः। भिन्नतात्पर्यतयेति। वाक्यभेदे तात्पर्यविषयभेदस्यैव नियामकत्वादिति भावः। ननु प्रतिपाद्यानाम् अनेकमेकदाऽपेक्षितमेव भवति इत्यत्राह चेतनापेक्षाया इति। तदभावात् तव मते भावे वा सिद्धं समीहितमिति भावः। अर्थवादानां स्तुतिनिन्दापरकृ- 10
तिपुराकल्पानाम्। तत्र स्तुतिस्तरति मृत्युमित्यादि। निन्दा एष वा प्रथमो यज्ञानाम्, अनेन हुत्वा योऽन्येन जुहोति सोऽन्धं तमः प्रविशतीत्यादिः। परकृतिः परमेवाग्रे अभिघारयन्तीत्यादिः। पुराकल्पस्तु पुरा ब्राह्मणाः पवमानस्तोममस्तोषन्नित्यादिः। एतेषां प्रवृत्तिनिवृत्त्यपरत्वे व्यर्थमेव प्रसज्येतेत्यर्थः। पर्यायेणापि तमर्थं द्रढयति स चेति। चोऽवधारणे। अधिकार इति। इत्यधिकृत्यैतदभिहितमित्यादौ। अभिप्रायेऽपि 15
तत्प्रयोगादिति भावः। वैदिकानीति। अत्र स्वर्गाद्यकालीनत्वेन पक्षं विशेषयति, तेन व्यापकाभिप्रायेण सिद्धसाधनमिति स्वतन्त्रनिष्ठत्वेनाभिप्रायो विशेष्य इत्यपरे। बाधकमुक्तमर्थवादानामानर्थक्यप्रसङ्गरूपम्। शुकाद्युदीरिततादृशवाक्ये व्यभिचार-माशङ्क्य युक्त्यन्तरमाह न चेदेवमिति। तादृशार्थो वेदस्य वक्त्रभिप्रायापूर्वकत्व इत्यर्थः। पीनदेवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवाभोजिनो भोजनसाध्यम् 20
पीनत्वमनुपपन्नं वक्त्रभिप्रायस्थं रात्रिभोजित्वप्रतिपादकं शब्दं भट्टानां नये कल्पयति। न च वक्त्रभिप्रायं विना तदुपपद्यत इत्यर्थः। ननू (तु ?) पत्त्यैव शब्दः क्रियते, स एव तस्य विषयोऽस्तु, किमभिप्रायेण इत्यत्राह सिद्ध इति। न तु तेनैव प्रमाणेनैव शब्दः कर्त्तव्यः। ननु मास्त्वत्र शब्दार्थापत्तिः वाक्यशेषादेव तदर्थाधिग-मोऽस्तु इत्यत्राह न चेति। उत्पत्त्यभिव्यक्तीति च भेदेन, तथा च तादृश- 25
व्यापारविरहात् अश्रूयमाणतादृशशब्दस्य न तत्र सद्भाव इति भावः। स वक्त्रभिप्रायः वेदे। तरति मृत्युमित्यादौ श्रुतार्थापत्तिः विधिवाक्ये प्रमाणमिति यद्व्युत्पादकं तस्य वितथत्वप्रसङ्ग उपसंहरति तस्मादिति। आयोजनादिति। वेदाः केनचिद्व्याख्याताः, महाजनपरिगृहीतत्वात् भारतवदित्यनुमानाद् व्याख्यातृतया तत्सिद्धिरित्यर्थः। तत्रानुकू-

लतर्कमाह **नहीति**। अर्थान्तरं निरस्यति **न चेति**। पौर्वापर्य्याप ( रा ) मृष्टः शब्दः एकवाक्यतापन्नलिखिततात्पर्य्यः, अन्याम् अतात्पर्य्यविषयिकाम्। अन्तरान्तर-वाक्यशेषः सम्भेदः समभिव्याहारस्ततोऽन्येऽधिगमात् उपसंहरति **तत** इति। अन्यथा अव्याख्याने अल्पदर्शिना व्याख्याने अन्धपरम्परा अप्रामाण्यशङ्का धृत्यादेरित्यप्येतदन्त-
5 र्भावेनैव छलतो व्याकरोति **स चेति**। तथा च वेदा वक्त्रप्रयुक्ता धृतिविषयास्तत्-प्रयुक्ताध्ययनवि ( शे ? ) षया इति रा ( अ ? ) नुमानादपि सिद्धिरिति भावः। धृत्यादिरित्यादिग्रहणादध्ययनपरिग्रहः। अधीतत्वं वेदस्य स्वरूपतो धृतत्वं सतताभ्यासेन दृढतरसंस्कारविषयत्वम्। अत एव स्मृतत्वम् एतद्‌द्वयं वेदस्य स्वरूपतोऽर्थतश्च श्रुतत्वं शाब्दबोधविषयत्वम् इदं चार्थस्यैव। यथासम्भवम् एतद्विशेषणचतुष्टयशाली सकल-
10 साङ्गोपाङ्गं वेदवेदार्थो येन समो वाच्यादि च तदध्यापनेरन्येन शक्यमिति तावतापि भगवत्सिद्धिरिति भावः। तद्विपरीतश्चेत्तदा सर्वज्ञातुर्भगवतोऽन्यः सम्भवति। तादृश-परम्परिताध्यापकेनैवार्थान्तरं निरस्यति **को हीति**। अप्रत्यक्षीकृतेरयनेनार्थान्तरनिरसनम्। तादृशपरम्पराकल्पने चाणुपरम्परेतिभावः। धृत्यादिहेतोरर्थान्तरं निरस्यति **के चेति** अर्वाग्दृक् अ ( स ) र्वज्ञः। ग्रन्थतः स्वरूपतः। इदानीं तादृशव्याख्यानस्य योग्या-
15 नुपलम्भादाह **कदाचिदिति**। एतच्च न साध्यप्रविष्टं व्यर्थत्वात्। नन्वधि ( नु ) ष्ठा-तॄणां व्यासप्रभृतीनां मतिरभ्युपगमस्तस्याश्चलनेऽपि विश्वस्य सामयिकत्वतात्त्विकत्वादिविरु-द्धनानाप्रकारत्वेऽपि निषेकादिषु संस्कारेषु सन्ध्योपासनादिषु ग्रहोपरागादिश्राद्धेषु नैमित्तिकेषु दानयागादिषु काम्येषु चानुष्ठानाविसंवादात्। यद्येषां विश्वगुरुरुपदेष्टा न स्यात् तर्हि तत्रापि अनुष्ठानभेदः स्यात्, तेषां सर्वज्ञतयाऽनुष्ठानभेदाभावोऽप्यनेन
20 निरस्तः। अयं च महाजनपरिग्रहत्वलक्षणहेतौ व्याप्तिग्राहकस्तर्क इति ध्येयम्। एवं महाजनपरिगृहीतम् अन्यथा निश्चलवता ( ? ) व्याख्यानेऽनाश्वासेऽप्रामाण्यशङ्कायां बहुवित्तव्ययायाससाध्येषु कर्मसु न निष्कम्पा प्रवृत्तिः स्वार्थेषु तत्तद्वाक्यार्थे अव्यवस्थानात् अवधारणकारप्रवर्त्तकज्ञानाभावात्।

ननु पूर्वानुष्ठानव्यवस्थायै च व्यवस्थाऽस्तु तत्राननुष्ठान ( म ) व्यवस्था ( वा )
25 **भवेदिति**। तथा च सैव न स्यादित्यर्थः। कुत इत्याकाङ्क्षायामाह **अनादे-शिकत्वादिति**। आदेश उपदेशस्तदमूलकत्वात् विश्वासविषयोपदेशाभावादित्यर्थः, नत्वनुष्ठानाभावो ( तारो ) दर्शनकर्त्तारस्त एवादेष्टारः। प्रलये विच्छेदं स्फुटत्वादुपेक्ष्यान्यदाह **तद्धीति**। स्वतन्त्रं स्वादेष्ट्रनधीनम्। **निर्मूलत्वेति**। स्वतन्त्रप्रमाणामूलकत्वेनाणुपरम्पराशङ्का स्यादित्यर्थः। **नन्वी ( त्वि ) ति**। तथा च

निखिलपुरुषधौरेयः कश्चिद् उपदेष्टा वाच्यः । नय ( नाप्य ? ) त्रानाश्वास इति दिक् । प्रणवेति । इदं च समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदमिति श्रवणात् । स्तोष (म ?) व्यभिचारादाह अविगानेनेति । निरर्थकत्वेनोभयसिद्धभिन्नत्वे सतीत्यर्थः । तादृशि बौद्धमात्रसङ्केतविषयाप्रामाणिकशुकपदे व्यभिचारमाशङ्क्याह श्रुतीत्यादि । अत्र प्रत्येकस्यैव हेतौ प्रवेशो ध्येयः । सिद्धे तत्तत्पदस्यार्थे, विमर्षे संशये, यथा यन्न दुःखेन संभिन्नमित्याद्यर्थपदोपस्थपिततत्तद्विशेषावच्छिन्ने तदुपलक्षितजातिविशेषविशिष्टे वा शक्तिनिर्णयः ; तथा लोकत्रयधारकप्रयत्नवत्यपि परमात्मपदस्य, तेन चेश्वरादिपदस्य समानार्थकत्वं स्व ( सु ) प्रसिद्धं चेति भावः । इत एव वारुचेराह यद्वेति । यत्रमयश्चरुर्भवति वाराही चोपानत् वैतसे कटे प्राजापत्यं चिनोतीत्यत्र यवादिशब्दाः किं म्लेच्छसङ्केतविषयकपि ( ङ्गु ) वायसजम्बूनां वाचका उत दीर्घशूकशूकरवञ्जुलान मिति सन्ने ( न्दे ) हेऽनुष्ठानाप्रवृत्तौ वाक्यशेषो विनिगमकतया उपतिष्ठते । यथा, वसन्ते सर्वशस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥ वराहं गावोऽनुधावन्ति, अप्सुजो वेतस इत्यादि । कणिशः शस्यमञ्जरी । तथा ईश्वरमुपासीतेत्यत्र ईश्वरपदस्य अखण्डमण्डलेश्वरपदयोरपि लोके प्रयोगात्, मन्त्रमये मीमांसकैर्व्यवहाराच्च सन्देहे वाक्यशेषान्निर्णयः । वाक्यशेष एव हि सर्वज्ञतेति । सर्वज्ञता भ्रमभिन्ननिखिलज्ञानविषयिताव ( न् ) ज्ञानसमवायः । तृप्तिश्चेतनत्वे सति स्वनिष्ठाभोगेच्छावच्छेदः । स्वतन्त्रता स्वान्याखिलकारकप्रयोक्तृता । अलुप्तशक्तिर्नित्यः प्रयत्नः । अनन्ता शक्तिरिच्छा । एतानि अङ्गानि धर्मान् महेश्वरस्य विधिज्ञा वेदतत्त्वविद आहुः । एवंभूतः निरुक्तधर्मषट्कवान् । प्राक् तृतीयस्तवके । शङ्कते तथापीति । अर्थवादस्तु न प्रमाणमिति भावः । उक्तविशेषणैः दुःखासंभिन्नत्वादीनि अर्थवादोक्तानि विशेषणानि यत्र तादृशि सुखे किञ्चिद् अर्थवादभिन्नम् । ननु तादृशस्वर्गं विना बहुवित्तव्ययायाससाध्ये यागादौ प्रवित्तिरनुपपत्तिभिया तत् कल्प्यत इत्याह याज्ञिकेति । इतरेतराश्रयमुद्धरति पूर्वेति । तदवधारणे तादृशसुखावधारणे । अन्धेति । स्वतन्त्रप्रमाणामूलेति भावः । ननु दुःखसामग्र्यनुपधाना ( द् ) दुःखासम्भेदः निरन्तरसामग्रीसमवधानान्नैरन्तर्यम् । आभिमानिकसुखवच्चाभिलाषेणापि सुखं स्यादिति निषेधकमानाभावात् सम्भावनयाऽर्थवाद एव तत्र मानं स्यात् इत्याशङ्कते विशिष्टेति । तुल्यमिति । क्षित्यादेरुक्तयुक्त्या ज्ञानादिजन्यल (त्व) स्थितौ निषेधकाभावात् प्रकृतार्थवादस्यापि प्रामाण्यमवर्जनीयमित्यर्थः । अत्रापीति । बौद्धनये प्रयोगकारणं तद्बोधनाय । वस्तुतस्तु प्रतिज्ञादिपञ्चकम् एव प्रयोज्यम् व्यभिचारवारणाय । यत्रेति । यद्बोधनायेत्यर्थः । वेदबुद्धिरिति ।

बौद्धादिसाङ्केतिकवारणाय **वेदे**ति । **प्रयुज्यत** इति । फलति वैदिकलक्ष्योल्क ( ? ) वारणाय । **असति वृत्त्यन्तर** इति । अयम् ईश्वरादिशब्दः । अत्र विपक्षे बाधक-माह **अन्यथे**ति । ईश्वरमुपासीतेत्यत्र सुरत्वस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेस्त-दर्थान्वयानुपपत्तिरित्यर्थः । **रुद्रे**ति । रुद्रो वै उग्रदेवता इत्याद्यनुसारादपि तत्र शक्ते-
5 र्ग्राहक इत्यर्थः । पदरूपं हेतुम् अन्यथापि व्याचष्टे **अपि चे**ति । तत्र अचेतनेति अस्मच्छब्दं वाच्यस्त्वया मद्वचनात् स राजा इत्यत्र । कविवारणाय **स्वातन्त्र्येणे**ति । स तु सोतोच्चरितार्थवादक इति न स्वतन्त्र इति भावः । स्वातन्त्र्यविशेषणस्य वैदिकेऽपि प्रयोजनमाह **न चे**ति । तस्य वैदिकास्मच्छब्दस्य स एव उच्चारयितैव । **शिष्ये**ति । तत्र उच्चारयितृतादृशमधिकृत्य आत्मना स्वस्मिन् ऐश्वर्य्यं सर्वहेतुत्वसर्वप्रवर्त्तकत्वादि
10 समधिगच्छेदिति प्रयोगकरणीभूतज्ञानमादाय नो चेत् समधिगमयेत् तस्य अस्मच्छब्दस्य वक्तयो (क्तारो) वस्तुतः समात्मत्वेन वक्तृतावच्छेदकरूपेण वा वाच्यः । ननु आत्मत्वे-नान्वयबोधे आत्माहं जानामीत्यत्रान्वयं विनोपस्थित्यभावात् अभेदान्वयानुपपत्तिः ? अहं-शब्दस्य अहंशब्दवाच्यत्वलक्षणायां जानामीत्युत्तमपुरुषानुपपत्तिः । आत्मशब्दतया लक्षणो-पगमे तु (तथा तात्पर्य्याभावे तु ?) तथा तात्पर्य्याभावेऽनन्वयः प्रयुज्यते चाभियुक्तैस्तदभा-
15 वेऽपि । एवं वक्तृतावच्छेदकमपि यदि देवदत्तत्वादिकं तदा तद्घोषतादवस्थ्यं वयमित्य-त्रानन्वयाच्च तत्र देवदत्तादेरनेकावृत्तित्वात् । अत्रोच्यते—गोसदृशगवयवपदवाच्य इति वाक्यार्थप्रतिप्रतिसन्धानवशादुपमानेनैव स्ववक्तृवृत्तिधर्मविशिष्टशक्तम् अस्मत्पदमिति । शक्तिग्राहकज्ञानसहकारात् वक्तृवृत्तितया उपस्थितेषु तेषु देवदत्तत्वादिषु परम्परया तदव-च्छिन्नात्मस्वरातदैव ( ? ) शक्तिग्राहकात्तेन रूपेण शब्दबोधः । यदि अन्वयाननुगमः
20 शङ्कते, तदास्तु प्रत्यासत्तितया तत्प्रवेशः, असमवायिकारणनाशस्य द्रव्यनाशहेतुतायामिव वयमित्यत्र च, स च त्वं चाहं चेत्येवं सर्वनामस्वतदभियुक्ता ( ? ) एकशेषे मानमस्तीति नानुपपत्तिगन्धोऽपि । एवम् अस्मत्पदेऽपि स्वजनकीभूतज्ञानविषयताविशेषान्यवच्छेद-कावच्छिन्ने शक्तिग्राहकसहकारात् तथैव तेन रूपेण तदैव शक्तिग्रहे तथैवान्वयबोधः । एवं च येन रूपेणोपस्थिते यत्पदेन इतरस्य विधेय ( त ? ) या तत्पदेन तेनोपस्थापित
25 एव तदितरविशेषान्वय इत्याकाङ्क्षानियमादुभयसमभिव्याहारनियमः । अत एव यो धूमवान् सोऽग्निमानित्यत्र महानसं धूमवद् वह्निमच्चेत्यन्वयबोधे मानमस्ति, विशेषस्तु एकधर्मविशेष्यकतया अपि नियमोऽत एव किम् शब्देऽपि कुत्सावितर्कजिज्ञासाविषयशक्तेः स्वजनकी ( भूत ? ) तत्तद्विषयतावच्छेदकावच्छिन्नशक्तमिति शक्तिग्राहकसहका (चा ?) रोक्तेन तेन रूपेण तथैव शक्तिग्रहाधीनान्वयबोध इति दिक् । **स्वार्थकारणजिज्ञासानुप-**

चरितं परामर्शस्वसमभिव्याहृतयत्पदोपस्थाप्यत्वं तदुपहितत्वं तद्विषयगोचरज्ञानजनकत्वं तस्य बुद्ध्यादिपरामर्शात्तस्य वक्तृधर्मत्वात् अतिप्रसङ्गवारणाय शक्तिग्रहे वक्तृव्यावृत्तत्वात्। न च ( वक्ता ? ) प्रकृते भगवानेवेति भावः। एवमिति। किं स्विदित्यादौ संशय-विशेषवितर्कविषयतावच्छेदकावच्छिन्नस्यै ( व ? ) बोधनादिति भावः। आहार्यत्वेनेति। एतच्च संशयत्वं विषयिताविशेष इत्यभिप्रेत्य, जन्यज्ञाने तन्न सम्भवति प्रतिबन्धवशात्। इच्छाविशेषाधीने नित्ये च निश्चये तत्सत्त्वेन विरोध इत्यभिमानः। यथाश्रुतेन एकेन संवननैकधर्मितत्संवननत्वावच्छिन्नतदभावप्रकारकज्ञानस्य तथाविधतदभावाप्रकारत्वासम्भ-वात् विरोधो दुरुद्धर एवेति।

एतेनेति। वक्तुमर्हणीयतावच्छेदकावच्छिन्नेऽधिकरणे शब्दस्य अहोशब्दस्य तद्विस्मयविषयतावच्छेदकवत्तहन्तयोश्च उभयत्रैव शक्तिरिति सर्वनामरीतिरत्राप्यनु-सन्धेया ॥ ६ ॥

प्रत्ययादपि। लिङादिप्रत्यया हि पुरुषधौरेयनियोगार्था भवन्तस्तं प्रतिपाद-यन्ति। तथा हि—

**प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा।**
**तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथ वा ॥ ७ ॥**

प्रवृत्तिः खलु विधिकार्या सती न तावत्कायपरिस्पन्दमात्रम्, आत्मा ज्ञातव्य इत्याद्यव्यापनात्। नापीच्छामात्रम्, तत एव फलसिद्धौ कर्मानारम्भप्रसङ्गात्। ततः प्रयत्नः परिशिष्यते। आत्मज्ञानभूतदयादावपि तस्याभावात्। तदुक्तं—'प्रवृत्तिरारम्भ' इति।

सेयं प्रवृत्तिर्यतः सत्तामात्रावस्थिताद्, नासौ विधिः, तत्र शास्त्रवैयर्थ्यात्। अप्रतीतादेव कुतश्चित् प्रवृत्तिसिद्धौ तत्प्रत्यायनार्थं तदभ्यर्थनाभावात्। न च प्रवृत्तिसिद्धौ तत्प्रत्ययनार्थं तदभ्यर्थनाभावात्। न च प्रवृत्तिहेतुजननार्थं तदुपयोगः, प्रवृत्तिहेतोरिच्छाया ज्ञानयोनित्वात्। ज्ञानमनुत्पाद्य तदुत्पादनस्याशक्यत्वात्, तस्य च निरालम्बनस्यानुत्पत्तेरप्रवर्त्तकत्वाच्च, नियामकाभावात्।

तस्माद् यस्य ज्ञानं प्रयत्नजननीमिच्छां प्रसूते, सोऽर्थविशेषस्तज्ज्ञापको वाऽर्थविशेषो विधिः प्रेरणा प्रवर्त्तना नियुक्तिर्नियोग उपदेश इत्यनर्थान्तरमिति स्थिते विचार्यते। स हि कर्तृधर्मो वा स्यात्, कर्मधर्मो वा, करणधर्मो वा, नियोक्तृधर्मो वेति ?

आमोदः

लिङादीत्यादिपदेन लोट्तव्यानीयादयो गृह्यन्ते । नियोगः प्रवर्त्तनम् प्रयोजनमर्थो येषां ते नियोगार्था इति । प्रवृत्तिरिति । कृतिरेव प्रयत्न एवेत्यर्थः । सा कृतिर्यतो भवति सा इच्छा चिकीर्षा इत्यर्थः । यतश्चिकीर्षा भवति तज्ज्ञानं चिकीर्षाजनकज्ञानस्य यो विषय इष्टसाधनत्वादिर्मतभेदेन 5 स विधिः विधिप्रत्ययार्थः । स्वाभिमतमाह—तज्ज्ञापक इति । तदनुमापकः प्रमाभिप्राय इति यावत् । प्रवृत्तेः कृतित्वनिर्वाहाय परिशेषमाह—प्रवृत्तिरिति । विधिकार्येत्यत्र विधिपदं विधायकवाक्यपरम् । ज्ञातव्य इति । ज्ञानानुकूलस्पन्दाभावादित्यर्थः । तत एवेति । इच्छामात्रादेव फलस्य स्वर्गादिरुत्पत्तौ कर्मणो यागादेरननुष्ठानप्रसङ्गादित्यर्थः । स्वामिमतमाह—10 यत इति । आत्मज्ञानेति । श्रवणमनननिदिध्यासनादेः प्रयत्नसाध्यत्वात् भूतदयादीनामपि प्रयत्नविषयत्वोपपादनादित्यर्थः ।

तदुक्तमिति । प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ' इति गौतमीयसूत्रे ( १-१-१७ ) यत इति । मनःसंयोगादेरित्यर्थः । नासौ विधिरिति । न लिङादिवाच्य इत्यर्थः । तत्रेति । तद्बाधनार्थं शास्त्रं न स्यादित्यर्थः । 15 एतदेव स्फुटयति । अप्रतीतादेवेति । ननु लिङादिना प्रवृत्तिहेतुः कश्चिदुत्पाद्यतामत्रैव शास्त्रमुपकरिष्यति इत्यत आह—न चेति । प्रवृत्तिं प्रति हेतुरिच्छैव, सा च ज्ञानाधीनैवेति ज्ञानमेव शास्त्रेणोत्पाद्यं, तच्च ज्ञानं सविषयकं निर्विषयकस्यानुत्पत्तेर्यत्र क्वचित् प्रवर्त्तकत्वप्रसङ्गाच्चेत्यर्थः । सोऽर्थविशेष इष्टसाधनत्वादिर्विद्यमानः पर्यवस्यतीत्यर्थः । पर्यायोत्कीर्त्तनेन प्रवर्त्तकज्ञान-20 विषयत्वं विधित्वमिति दर्शयति । विचारार्थं विकल्पयति—स हीति । प्रवर्तकज्ञानविषय इत्यर्थः । कर्तृधर्म इति । यागादिकर्तुर्नियोज्यस्य स च स्पन्दः प्रयत्नः इच्छा वा स्यादिति भावः । कर्मपदेन यागादिक्रिया तद्धर्मः कार्यत्वादिव पूर्वस्य वा कर्मणः कश्चिद्धर्मः इत्यर्थः । करणधर्म इति । 25 करणस्य यागादेरेव धर्मं इष्टसाधनत्वमित्यर्थः । नियोक्त्रिति । नियोक्ता उपदेष्टा, तस्य धर्मोऽभिप्राय इत्यर्थः ॥ ७ ॥

बोधनी

तदेवं कार्येत्यादिकं श्लोकं पदादित्यन्तं संग्रहविवरणाभ्यां व्याख्याय सम्प्रति प्रत्यय इति हेतुं व्याख्यातुमुपादत्ते—प्रत्ययादिति । य इदानीं प्रत्ययत्वेन विवक्षितः, यथा

च तथा ईश्वरसिद्धिस्तदाह—**लिङादिति**। विधौ विहिताः लिङादयः प्रत्यया वक्तृ-प्रयोक्तृत्वलक्षणं धुरमुद्वहतः पुरुषस्य नियोगमभिधानास्तं पुरुषमावेदयन्तीति विधित्वेन वक्तृनियोगमेव परिशिष्यंश्चेतनप्रयत्नात्मकस्य[1] विधेः प्रवृत्त्यधीननिरूपणत्वात् प्रवृत्तिं निरूपणस्य तद्धेतोरिच्छाया तद्धेतोर्ज्ञानस्य विधित्वानुपपत्तेस्तदवान्तरव्यापारवतोऽन्यस्य च विधित्वं सामान्यतस्तावदाह—**प्रवृत्तिः कृतिरेवात्रेति**। अत्र विधिविषये विधिकार्यं-प्रवृत्तिः कृतिरेव पुरुषप्रयत्ना एवेति यावत्, न तु स्पन्द इच्छा वा यतस्तद्धेतुरेव विधिः तत्राह—**सा चेदिच्छात** इति। कृतिरिच्छातो भवति न च सैव विधिः, सत्तया प्रवृत्तिहेतुत्वादिति भावः। अस्तु तर्हि इच्छामवान्तरव्यापारीकृत्य इच्छाहेतुर्विधिरित्यत्राह—**यतश्च सा तज्ज्ञानमिति**। ज्ञानहेतुत्वादिच्छायास्तद्धेतुज्ञानं, तच्च न विधिर्निर्विषयस्य तस्येच्छाद्वारेण प्रवृत्तिहेतुत्वायोगादिति ··· ··· [ इ ] ष्टाभ्युपायतारूपो विधित्वेन शिष्यते। अथ वा तस्य विषयस्य यो ज्ञापको वक्तृनियोगादिः तज्ज्ञापनद्वारेण प्रवृत्तिहे-तुत्वाद्विधिरित्याह—विषयस्तस्य विधिरिति प्रथमं पादं व्याचष्टे—**प्रवृत्तिः खल्विति**। आत्मा ज्ञातव्य इत्यत्र हि विधिकार्यं ज्ञानमेव न तु स्पन्द इति, अस्तु तर्हीच्छामात्रं प्रवृत्तिः तत्रापि सम्भवादित्यत्राह—**नापीति**। यजेत स्वर्गकामः इत्यत्रापि यागेच्छामात्रादेव स्वर्गसिद्धेर्यागाद्यनुष्ठानवैयर्थ्यं स्यादिति ततः प्रसक्तयोः स्पन्देच्छयोः प्रतिषेधाद्विधिकार्या प्रवृत्तिः प्रयत्न इति परिशिष्यत इत्यत्राह—**तत इति**। न तावदत्र स्पन्दप्रवृत्तिपक्षोक्त-दोष इत्याह—**आत्मज्ञानेति**। इच्छापक्षोक्तदोषस्त्वनाशङ्कनीय एवेति भावः। तदेतत् भाष्यकारस्यापि सम्मतम्। यतः प्रयत्नवाचिनैवारम्भशब्देन प्रवृत्तिं व्याख्यदि-त्याह—**तदुक्तमिति**। अस्तु कृतिपर्यायप्रयत्न एव प्रवृत्तिः तद्धेतुस्तु विधिर्भविष्यतीत्या-शङ्क्य सा चेच्छात इति व्याचक्षाण आह—**सेयं प्रवृत्तिरिति**। प्रयत्नहेतुरिच्छा, सा च सत्तामात्रेणावस्थिता तं प्रसूते न तु स्वज्ञानेन तस्मादिच्छायां प्रवृत्तिहेतुत्वेन न विधित्वमिति तथापि विधिः कुतो न भविष्यतीत्याह—**तत्रेति**। **वैयर्थ्यमेवाह—अप्रतीतादिति**। प्रवृत्तिहेतुज्ञापनार्थं[2] शास्त्रमभ्यर्थ्यत इति भावः। अस्तु तर्हीच्छो-त्पत्त्यर्थं शास्त्रापेक्षेत्यप्रतीतमित्यंशं व्याचक्षाण आह—**न च प्रवृत्तीति**। न हीच्छायाः साक्षादेव शास्त्रं हेतुः ज्ञानयोनित्वात्तस्याः तत इच्छामुत्पादयता शास्त्रेण ज्ञानं तावदव-श्योत्पादयितव्यमिति, अस्तु तदुत्पादितज्ञानमेव विधिरित्यत्र विषयस्तस्य विधिरित्यंशं व्याचक्षाण आह—**तस्य चेति**।

---

१ ख. प्रवर्त्तनात्मकस्य। २ ख. ज्ञापना बहिः।

किं चास्तु निरालम्बनमपि ज्ञानं अनेन तावत् सालम्बनेनैव भवितव्यम् । अन्यथा नियामकाभावेन सर्वत्र प्रवर्त्तयेत्, न वा क्वचिदपि इति नियतविषय[1]प्रवर्त्तकत्वम् । अस्य न स्यादित्याह—**अप्रवर्त्तकत्वाच्चेति** । सालम्बनस्य तु यथालम्बनं प्रवर्त्तकत्व[2]नियमः स्यादिति भावः । अस्तु सालम्बनं, ततः किमित्यत आह—**तस्मादिति** । तत् 5 ज्ञापको वेत्येतद्व्याचष्टे—**तज्ज्ञापक इति** । कोऽसौ ज्ञापक इत्यत्रोक्तम्—**प्रेरणादिवाच्य इति** । एवं सामान्यतः सिद्धे विधित्वे[3]ऽभिमतं विशेषं परिशेषयितुं सम्भावितान् पक्षानुपन्यस्य[4] विमृशति—**स्थित इति** । तत्र कर्मणामनुष्ठाता कर्त्ता कर्म क्रियत इति व्युत्पत्त्या फलं पूर्वं वा[5] करणं यागादयो धात्वार्था विवरणानुगुण्येन लिङादयः शब्दा वा नियोक्ता लिङादीनां स्वतन्त्रवक्तेति एवं विमृश्य निर्णयायोपक्रमते— **न प्रथम इति** । 10 शरीरसम्भिन्नस्यात्मनः कर्तृत्वात् स्पन्दोऽपि कर्तृधर्मः स तावन्न विधिः । विधित्वेनेष्टस्य ज्ञातव्य इत्यादेः हानिप्रसङ्गात्, गच्छन्तीत्यादावनिष्टस्य गमनादेर्विधित्वप्रसङ्गात् । न चात्मधर्मोऽपि प्रयत्नो विधिः तस्य सर्वाख्यातसाधारण्येन ततोऽप्रवृत्तेः । प्रवृत्तेर्यत्नरूपत्वेन तस्यां प्रयत्नस्यैव हेतुत्वे स्वात्मनि क्रियाविरोचनापि इच्छा विधिः, तस्याः साधनविषयायाः लिङ्श्रवणकालेऽसत्त्वात् स्वर्गादिसाध्यविषयायास्तु स्वारसिकत्वेन लिङादिप्रत्यय15 वैफल्यात्, यदि च फलेच्छैव प्रवृत्तिं जनयेत् साधन ··· ··· प्रसुवीतेति **प्रवृत्तिसङ्करप्रसङ्गाच्च** ॥ ७ ॥

विवेकः

लिङादीत्यादिपदात्तव्यादिपदपरिग्रहः । तथा च वेदस्य लिङादिप्रत्ययाः पुरुषधौरेयस्य भगवत आप्तस्य नियोगः प्रवर्तनीयत्वेन इच्छा तदर्थका भवन्तस्तं पुरुषधौरेयं प्रतिपादयन्ति । आप्तत्वेन अत्र च परिशेषबलात् प्रमाणीभवन्ति च ।

20 नियोगार्थकतां तेषां व्यवस्थापयिकां भूमिमारचयति—**प्रवृत्तिरिति** । प्रतिबन्धः प्रवर्तत इत्यत्र भवनेच्छात्यन्तयोः (?) क्वचित् प्रवृत्तिपदप्रयोगादाह—**अत्रेति** । प्रकृतविचार इत्यर्थः । जीवनयोनियत्ननिवृत्तिव्यावृत्तिजातिविशेषस्य प्रवृत्तित्वस्य व्यवस्थापकमाह—**सा चेति** । इच्छातः, चिकीर्षातः । तदुत्पत्तिनियामकं कारणमाह—**यत इति** । सा चिकीर्षा । किन्तु विषयकृत एवेत्याह—**विषयस्तस्य** इष्टसाधनत्वादि विधिः 25 कर्मव्युत्पत्त्या विधेयः लिङादिर्बोध्य इत्यर्थः । तेन कृतिकारणचिकीर्षानिष्ठकार्य्यतानिरूपितज्ञाननिष्ठकारणताया विषयतयावच्छेदकं हेतु विधिरिति फलितम् । सुखादिचिकीर्षा-

१ ख. विषयं । २ ख. प्रवर्तकत्वं । ३ ख. विधितत्त्वे । ४ ख. पक्षानुपक्षिपति । ५ ख. च ।

कारणज्ञानविषयसुखत्वादिवारणाय—**कृतिकारणेति**। सुखेच्छाया अपि कृतित्वे तथैवातिप्रसङ्गवारणाय—**चिकीर्षेति**। साम्प्रदायमतमुक्त्वा प्रकृतोपपत्तये स्वमतमाह—**तज्ज्ञापक इति**। तस्य इष्टसाधनत्वादेर्ज्ञापकानुमापकोऽनाप्तेच्छारूप इत्यर्थः।

विधिकार्य्या विधिप्रयोज्या। **ज्ञातव्य इति**। आत्मज्ञानस्य स्पन्दानधीनत्वमिति भावः। तत एव इच्छामात्रादेव फलस्य यागादेः स्वर्गस्य वा सिद्धौ कर्मविषयककृत्यन्वयव्यतिरेकानुविधानं न स्यात्, तस्यास्तदाऽप्रयोजकत्वादिति भावः। नन्वात्मज्ञानादौ यथा स्पन्दस्य बाधस्तथा यत्नस्यापीत्याशङ्क्याह—**आत्मज्ञानेत्यादि**। तस्य प्रयत्नस्य साध्यत्वे सूत्रकारानुमतिमाह—**तदिति**। उक्तमक्षपादचरणैः। प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। ( न्या० सू० १-१-१७ ) वाग्बुद्धिशरीराणि आरभ्यन्ते येन प्रवृत्तिरिति। अत्र वागाद्यारम्भकत्वेनोपलक्षितो जातिविशेषः उक्तः। न च बुद्ध्यनारम्भकत्वे प्रवृत्तेस्तथोपलक्षणतासम्भव इति भावः। यत आत्ममनोयोगादेरिच्छादेर्वा नासौ विधिर्लिङादिर्बोध्यः। **तदिति**। शास्त्रस्य ज्ञान एव प्रयोजनकत्वादिति भावः। तदेव विवृणोति—**अप्रतीतादिति**। तदभ्यर्थना शास्त्राद्यभ्यर्थना। प्रवृत्तिहेतौ ज्ञानातिरिक्तस्य जननार्थं तदुपयोगः शास्त्रोपयोगः। विषयस्तस्येति कारिकांशं व्याचिकीर्षुराह—**तस्य** ज्ञानस्येत्यर्थः। निरालम्बनस्य निर्विषयस्य। नन्वस्तु असदेव विषयः इत्यत्राह—**अप्रवर्त्तकत्वाच्चेति**। अर्थविशेषः इष्टसाधनत्वादिः तज्ज्ञापकः आप्ताभिप्रायः। तत्रैव प्रमाणवृद्धानां व्यवहारभेदं दर्शयति—**प्रेरणेत्यादि**। तत्र तदेकतरे निर्धारणाय विकल्प्य विचारयति—**स हीति**। कर्तृधर्मः स्पन्दः प्रयत्नः इच्छा वा। कर्म यागादि अपूर्वं वा तस्य धर्मः कार्य्यत्वादिः कारणस्य इष्टकारणस्य यागादेर्धर्मं इष्टसाधनत्वं नियोक्तुः प्रवर्त्तयितुर्वा तस्य धर्मः अभिप्रायः ॥ ७ ॥

न प्रथमः

**इष्टहानेरनिष्टाप्तेरप्रवृत्तेर्विरोधतः ।**
**असत्त्वात् प्रत्ययत्यागात् कर्तृधर्मो न सङ्करात् ॥ ८ ॥**

स हि न स्पन्द एव, आत्मानमनुपश्येदित्याद्यव्याप्तेः ग्रामं गच्छतीत्यादावतिव्याप्तेश्च। नाऽपि तत्कारणं प्रयत्नः। तस्य सर्वाख्यातसाधारणत्वात्।

ननु न सर्वत्र प्रयत्न एव प्रत्ययार्थः। करोतीत्यादौ प्रकृत्यर्थातिरेकिणस्तस्याभावात्। संख्यामात्राभिधानेन प्रत्ययस्य चरितार्थत्वात्। ततो लिङादिवाच्य एव प्रयत्न इति। न, कुर्यादित्यत्रापि तुल्यत्वात्। प्रयत्नमात्रस्य प्रकृत्यर्थत्वेऽपि तस्य पराङ्गताऽऽपन्नस्य प्रत्ययार्थत्वान्न तुल्यत्वमिति चेत्। न, तथापि

तुल्यत्वात्। न चैकस्य तद्वाचकत्वेऽन्यस्य तद्विपर्यय आपद्येत। एको द्वौ बहव एषिषिषतीत्यादौ व्यभिचारात्। तत्र द्वितीयसंख्येच्छादिकल्पने करोति प्रयतते इत्यादावपि तथा स्यात्। प्रत्येकमन्यत्र सामर्थ्यावधृतौ सम्भेदे तथा कल्पनाया-स्तुल्यत्वात्।

5 रथो गच्छतीत्यादौ तदसम्भवे का गतिरिति चेत्, तन्तवः पटं कुर्वन्तीत्यत्र या। लोकोपचारोऽयमपर्यनुयोज्य इति चेत्तुल्यम्। लिङः कार्यत्वे वृद्धव्यवहारा-द्व्युत्पत्तौ सर्वं समञ्जसम्। आख्यातमात्रस्य तु न तथेति चेत्। न। विवरणा-देरपि व्युत्पत्तेः। अस्ति च तदिह—किं करोति? पचति, पाकं करोतीत्यर्थः इत्यादिदर्शनात्।

10 तथापि फलानुकूलताऽऽपन्नधात्वर्थमात्राभिधाने तदतिरिक्तप्रयत्नाभिधानक-ल्पानायां कल्पनागौरवं स्यात्, अतो विवरणमपि तावन्मात्रपरमिति चेत्। भवेदप्येवं, यदि पाकेनेति विवृणुयात्, न त्वेतदस्ति। धात्वर्थस्यैव पाकमिति साध्यत्वेन निर्देशात्। ततस्तं प्रत्येव किञ्चिदनुकूलताऽऽपन्नं प्रत्ययेनाभिधानीय-मिति युक्तम्।

15 तथापि तेन प्रयत्नेनैव भवितव्यं, न त्वन्येनेति कुत इति चेत्। नियमेन तथा विवरणात्। बाधकं विना तस्यान्यथाकर्तुमशक्यत्वात्। अन्यथाऽति प्रसङ्गात् ॥ ८ ॥

आमोदः

चरमं पक्षमुपग्रहीतुं परिशेषमाह—इष्टहानेरिति। यदि कर्तृधर्मः स्पन्दो विधिः स्यात् तदात्मा ज्ञातव्यो, भूतेभ्यो दयां कुर्यादित्यादावव्याप्तिः, 20 जलताडनादिस्पन्दोऽपि विधिः स्यादित्यतिव्याप्तिरित्याह—अनिष्टाप्तेरिति। स्पन्दज्ञानश्च न प्रवर्त्तकमिति भावः। यत्नस्य प्रवर्तकत्वं दूषयति—अप्रवृत्तेरिति। न हि प्रयत्नज्ञानं प्रवर्त्तकमित्यर्थः। यत्नमात्रस्यानिष्टसा-धनसाधारण्यादित्येके। इच्छाविधित्वं दूषयति—विरोधत इति। न हि इच्छाज्ञानमेवेच्छां प्रसूते, न वा इच्छैवेच्छामित्यर्थः। नन्विच्छा ज्ञातैव 25 प्रवृत्तिहेतुरित्यत आह—असत्त्वादिति। न च लिङादिश्रुतिकाले सा सती, तत्सत्त्वकाले वा प्रवृत्तिपूर्वं तज्ज्ञानसम्भव इति भावः। किञ्च इच्छाया इच्छाजनकत्वे प्रत्ययस्य इच्छाजनकत्वमन्वयव्यतिरेकसिद्धं व्यक्तं स्यादित्याह—प्रत्ययत्यागादिति। स्पन्देच्छायत्नानां कर्तृधर्माणाम् एकत्र यागादौ साङ्कर्यादन्यतरस्य विधित्वेनानिर्णयादित्याह—सङ्करादिति। सङ्कर इच्छादिसङ्कल्पः चिकीर्षेति यावत्। यद्वा, सङ्कराद् गौरवसङ्कीर्णत्वादि-

त्यर्थः । प्रयत्नजनकचिकीर्षाया इष्टसाधनताज्ञानसाध्यत्वेन तस्यामेव लाघवेन विधिशक्तिकल्पनात् इच्छायां विधिशक्तौ गौरवमित्यर्थः ।

**नापि प्रयत्न** इति । लिङ्वाच्यो विधिरित्यर्थः । **सर्वाख्यातेति** । भावनाख्यस्य यत्नस्य लङादिसर्वाख्यातसाधारणतया लिङाख्यातविशेषणं किमुपनेयं यतः प्रवृत्तिः स्यादित्यर्थः । **प्रकृत्यर्थेति** । प्रत्ययानां प्रकृत्यर्थ- 5
गतस्वार्थबोधकता न स्यात् यद्यर्थभेदो न स्यादित्यर्थः । **प्रकृत्यर्थेति** । नन्वेवं कृधातोः परस्य लिङादेर्निरर्थकतैव स्यादित्यत आह—**संख्यामात्रेति**। **प्रत्ययस्येति** । लिङाख्यातस्येत्यर्थः । ननु चैत्रः कुर्यादित्यत्र कृञः प्रयत्न- मात्रमर्थः प्रयत्नविशेषस्तु चैत्रादिसम्बन्धी लिङादिवाच्य इति पौनरुक्त्यमिति शङ्कते—**प्रयत्नमात्रस्येति** । तर्हि करोतीत्यादावपि तथैव स्यादिति 10
परिहरति—**तथापीति** । प्रकृतिप्रत्ययोरभिन्नार्थतां दृष्टान्तेनाह—**एक** इति । अत्र संख्याद्वयमिच्छाद्वयञ्च प्रकृतिप्रत्ययाभ्यामुपस्थाप्यते, परन्त्व- न्वयाभिधानदशायां योग्यताबलादेकमेवान्वेतीति यदा, तदा प्रकृतेऽपि समानमित्याह—**तत्रेति** । ननु तथापि पौनरुक्त्यं न समाहितमित्यत आह—**प्रत्येकमिति** । सामग्रीवशादुभाभ्यामेकोपस्थितौ पुनरुक्तदोषाभाव 15
इत्यर्थः । **तदसम्भव** इति । यत्नार्थता अचेतने न सम्भवतीत्यर्थः । **ये- ति** । गतिरित्यनुषङ्गः । **लोकेति** । अत्र पटानुकूलव्यापारवन्तस्तन्तव इत्याख्यातस्य व्यापारमात्रे लक्षणा इत्यर्थः । **तुल्यमिति** । रथो गच्छती- त्यादावपि व्यापारमात्रे लक्षणेत्यर्थः । ननु पचेत् स्नायादित्यादिश्राविणः पाकानुकूलयत्ने प्रवृत्तिदर्शनात् लिङादीनामेव यत्नार्थतेति शङ्कते— 20
**लिङ** इति । आख्यातान्तरस्यापि यत्नार्थतानिश्चयो विवरणादेवेत्याह— **नेति** । विवरणमेव विवृणोति—**अस्ति चेति** । ननु पाकं करोतीत्यत्र विवरणमपि फलानुकूलव्यापारवानित्येवम् । तथा च व्यापारो व्याख्यातार्थो व्यापारविशेषो वा इत्यत्र लाघवमेव नियामकमाशङ्कते—**तथापीति** । **भवेदेवमिति** । पाकस्य धात्वर्थस्य तुषप्रक्षेपणरूपव्यापारकलापस्य फलमो- 25
दनादिकं प्रति अनुकूलता यदि विवरणप्रतिपाद्या तदा किं करोति पचतीति, पाकेन व्यापारकलापेन ओदनं साधयतीति विवरणं स्यादित्यर्थः । **धात्व- र्थस्येति** । पाकस्य व्यापारकलापस्य साध्यत्वेन निर्देशश्चेत्, नूनं तत्साधकं

यत्नस्वरूपमेवं विवरणीयमित्यर्थः । न हि यत्नं विना तुषादिप्रक्षेपो धात्वर्थः सम्भवतीति भावः । किञ्चिदिति । यत्नस्वरूपमित्यर्थः । न त्वन्येनेति । व्यापारान्तरेणेत्यर्थः । तथेति । यत्नार्थत्वेनेत्यर्थः । तस्येति । विवरणस्येत्यर्थः । भवति हि कोकिलः पिक इत्यादौ विवरणाधीनैव व्युत्पत्तिः ।
5 अतिप्रसङ्गादिति । अन्यत्रापि विवरणेऽर्थान्तरशङ्का स्यादित्यर्थः ।

ननु यत्नोऽप्यनुकूलव्यापारत्वेनैवाभिधीयताम्, न तु यत्नत्वेन, अन्यथाख्यातयत्नपदयोः पर्यायतापत्तिरित्याह—स्यादेतदिति । तावन्मात्रमेवेति । धात्वर्थानुकूलत्वमात्रमेवेत्यर्थः । युक्त्यन्तरमाह—अचेतनेष्विति । असति बाधक इति । रथो गच्छतीत्यादावपि गमनानुकूलव्यापारमात्रप्रतीतौ
10 लक्षणानुपयोगादित्यर्थः । ॥ ८ ॥

बोधनी

यद्वा सङ्करादिति नापि संकल्पो विधिः । तस्य प्रयत्नेच्छयोः सङ्कीर्णत्वात्तदन्तर्भावादिति यावत् । तयोश्च निराकृतत्वादिति भावः । आद्यं व्याचष्टे—स हीति । नापीति । विधिर्हि लिङादिष्वेव नियतः स कथं सर्वाख्यातसाधारणप्रयत्नो भवेदिति ।

ननु करोति प्रयतत इत्यादौ प्रकृत्यर्थप्रयत्नव्यतिरेकेण प्रत्ययवाच्यप्रयत्नान्तरस्या-
15 नुपलम्भात्, तर्हि न सर्वाख्यातसाधारणः प्रयत्नः किन्तु लिङादिष्वेव नियत इति प्राभाकरदृष्ट्या चोदयति—नन्विति ।

ननु प्रयत्नाभिधानेऽनर्थक एव प्रत्ययः स्यादि [ त्यत आह ] तस्मादिति । तेन विधित्वोपपत्तिरिति चेत्, यदि करोतीत्यादौ द्वितीयप्रयत्नानुपलम्भान्नासौ प्रत्ययार्थस्तर्हि लिङर्थो न स्यात्[२] । कुर्यादित्यत्रापि द्वितीयानुपलम्भा[त्प्रकृत्या] स्वप्रधानः
20 प्रयत्नोऽभिधीयते । प्रत्ययेन तु परस्य कस्यचित्साध्यस्याङ्गत्वेन किमपि भावयितुमर्ह[३] यत्न इति तादृशश्च प्रयत्नो विधिः नैवमाख्यातान्तरेष्वित्यौह—अर्थविशेष इति । [ लिङ्लङ्– ] प्रत्ययार्थयोर्विशेषः । तथाप्याख्यातान्तरैस्तुल्यतैव लिङादीनां लङादिष्वपि पराङ्गत्वेनाभिधानात्, अन्यथा करोतीत्युक्ते किमित्याकाङ्क्षा न स्यादित्याशयवानाह—

१ क. नासौ प्रत्ययार्थः तर्हि लिङर्थोऽपि न स्यात, कुर्यादित्यत्रापि द्वितीयानुपलम्भसाम्यादित्याशङ्कोत्तराभ्यामाह—नन्विति ।

२ क. नन्वित्यारभ्य' ' 'स्यादित्यन्तः पाठो नास्ति।

३ क, अयं पाठो नास्ति ।

नेति। न च करोतीत्यत्रैकस्य प्रकृत्यंशस्य यत्नवाचित्वे सति अन्यस्य न तद्विपर्ययस्त-दवाचित्वं प्रसज्यते। एकादिशब्देषु प्रकृत्यभिहितस्यैव प्रत्ययेनाभिधानदर्शनादित्याह— न चैकस्येति। यदित्येकादिशब्दे प्रकृत्यभिहितसंख्यादिव्यतिरिक्तसंख्यादिवाचित्वं प्रत्ययस्य कल्प्येत तर्हि करोतीत्यादावपि प्रत्ययस्य प्रयत्नान्तरवाचित्वं कल्प्यताम्। प्रत्ययान्तरयोगिनः प्रातिपदिकस्य प्रातिपदिकान्तरयोगिनः प्रत्ययस्यान्यत्र प्रयत्नान्तराभि- 5 ध्यानदर्शनेन प्रत्येकं सामर्थ्यावधारणात् तयोः सम्भेदे द्वितीयप्रयत्नकल्पनायास्तुल्यत्वादे-कादिशब्देष्वपि हि द्वितीयादिकल्पने नान्यत् प्रमाणमस्तीत्याह—तत्र द्वितीयेति।

ननु यद्याख्यातमात्रार्थः प्रयत्नः तर्हि[1] असंभवत्प्रयत्नेष्वचेतनेषु प्रयुक्तस्याख्यातस्य कथमर्थवत्तेत्याह—रथो गच्छतीति। भवतोऽपि तावत्करोतीति धातुः प्रयत्नार्थः। तस्याचेतनेषु प्रयुक्तस्य का गतिः तामेवात्राप्यनुसन्दधीथा इत्याह—तन्तव इति। 10 यदि लौकिकत्वेन तस्य प्रयोगस्योपचारेणापि निर्वाहादपर्यनुयोग्यत्वम्। तर्हि रथो गच्छतीत्यस्यापि तुल्यस्तथा निर्वाह इत्याह—लौकिकेति।

ननु वृद्धव्यवहारे हि शब्दानां व्युत्पत्तिः ततश्च लिङादिश्रवणानन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभमानो व्युत्पित्सुः प्रवृत्तिहेतुः कश्चिदर्थोऽनेनास्मादवगत इति नावगम ... र्थताज्ञानस्यैव प्रवृत्तिहेतुत्वेनावगमात् कार्यमेव लिङर्थ इति व्युत्पद्यते। 15 कार्यं च कृतिसाध्यं कृतिश्च प्रयत्नः तेन साध्यनिष्ठः प्रयत्न एव लिङर्थ इति स्थिते लौकिकस्य प्रयोगस्य औपचारिकत्वकल्पनं व्युत्पत्त्यबाधाय क्रियमाणत्वात् समञ्जसं भवति। लडाद्याख्यातान्तरेषु नैषा रीतिः संभवति तत्र व्यवहाराभावेन कार्ये व्युत्पत्त्यभावादित्याह—लिङ इति। भवेदप्येषा प्रक्रिया यदि व्यवहारत एव व्युत्पत्तिरिति नियमः, न चासावस्तीत्याह—नेति। किमस्ति वा तादृशं विवरणं यत 20 आख्यातमात्रस्य प्रयत्नार्थत्वेन व्युत्पत्तिः स्यादित्यत्राह—अस्ति चेति। किं करोतीति साध्यविशेषं पृष्टः कश्चिदाचष्टे—पचतीति। स पुनस्तदेव व्याचष्टे—पाकं करोतीत्यर्थ इति। तत्र प्रकृत्यर्थं पाकमिति निर्दिश्य प्रत्ययार्थं करोतीत्यनेन विवृतवानिति व्युत्पित्सुरवगच्छतीति यथाहुः—सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति सामानाधिकरण्येन करोतीत्यर्थोऽवगम्यत इति। 25

नन्वस्मादपि विवरणान्नाख्यातार्थप्रयत्न इति सिध्यति कल्पनागौरवप्रसङ्गेन विवरण-स्यापि धात्वर्थमात्रपरत्वादित्याह—तथापीति। यद्याख्यातोऽपि धात्वर्थमभिदध्यात्तदा

---

[1] ख. [ प्रयत्नस्तस्य संभवत्।

पचतिपाचकशब्दयोरविशेषः स्यादित्यत्रोक्तम्। **फलानुकूलतापन्नेति।** पाकशब्दो हि धात्वर्थं सिद्धवल्लिङ्गसंख्यायोगितया द्रव्यरूपेणाभिधत्ते, पचतिशब्दस्तु तमेव विक्लत्युत्पादनानुकूलत्वेन पूर्वापरीभूत [ ासत्त्वरूपोपन्न ] मित्यस्ति विशेषः। अयमेव हि भवतः प्रयत्नाभिधानेऽप्याख्यातस्य प्रयत्नपदाद्विशेष इति। यद्ययं विवरणकारो
5 धात्वर्थस्यैवानुकूलत्वं प्रत्ययार्थ इत्यभ्युपागमिष्यत् तदा कारणाभिधायिन्या तृतीयया प्रयोज्यपाकेनेति व्यवाहरिष्यत्, यतः स्वयं साध्यत्वेन विवृणोति--**पाकमिति।** तेनावगम्यते न धात्वर्थमात्रस्यानुकूलत्वं[2] प्रत्ययार्थ इत्यस्य विवक्षितम्। किन्तु तमेव प्रत्यन्यस्य कस्यचिदित्याह--**भवेदप्येवमिति।**

नन्वस्तु धात्वर्थादप्यर्थस्तदनुकूलः कश्चित्प्रत्ययार्थः स तु यत्न एवेति कुतो नियम
10 इत्याह--**तथापीति।** करोतिनैवाख्यातस्य विवरणात् करोतेश्च यत्नाभिधायित्वादाह--**नियमेनेति।** यदि च विनैव बाधकं व्युत्पत्तिरन्यथा क्रियेत ततोऽतिप्रसङ्ग इत्याह--**अतिप्रसङ्गाच्चेति।** ॥ ८ ॥

विवेकः

चरमपक्षनिर्धारणाय परिशेषयति--इष्टस्य आत्मा ज्ञातव्य इत्यादेः प्रवर्त्तकत्वस्य
15 हानेः अनिष्टस्य चैत्यवन्दनेत्यादिस्तथात्वस्य प्रसङ्गाच्च स्पन्दो न विध्यर्थः। स्पन्दस्यापि-कर्तृकर्मत्वं परम्परया कृत्यवच्छेदकत्वम्वा कर्तृत्वं यत्नस्य तदर्थत्वं निराकरोति—**अप्रवृत्तेरिति।** पचतीत्यादितः प्रयत्नज्ञानेऽपि प्रवृत्तेरभावादित्यर्थः। एष च दोषः स्पन्देऽपि योज्यः। अनिष्टाप्तेरित्यनेनैव वा तल्लाभस्तत्र इच्छायास्तन्निराकरोति—**विरोधित इति।** अनाप्तस्याप्तेच्छेति ज्ञानात् प्रवृत्तेर्विरोधाद्विरोधिज्ञानस्यैवोत्पत्तेः तन्मात्रं न
20 विध्यर्थ इत्यर्थः। ननु प्रवर्त्तमानपुरुषेच्छाज्ञानमेव प्रवर्त्तकन्तमेव निर्बोधयति तत्राह—**असत्त्वादिति।** मया इदं कदाचिदिष्टमिति ज्ञानेऽपि सञ्जातबोधस्य प्रवृत्त्यपरेण तदातनेच्छैव तदर्थो वाच्यः, सा च विधिप्रवृत्त्यव्यवहितप्राक्तनं वा तत्समसमया वा नोभयमपि तदानीं तथाविधेच्छाया नियमतोऽसत्त्वादित्यर्थः। ननु विधिरेव तामुत्पाद्य बोधयेदित्यत्राह—**प्रत्ययत्यागादिति।** प्रत्ययस्य इच्छां प्रति कारणस्य इष्टसाधनत्वादिज्ञानस्य
25 त्यागात् अभावात् न विधिस्तां जनयितुं समर्थ इत्यर्थः। अगृहीतसङ्केतानामपि विधिश्राविणां प्रवृत्तिप्रसङ्गोऽपि ध्येयः। ननु तादृशशाब्दबोधसामग्र्यपि तदुत्पादने प्रयोजिका वाच्या तत्राह—**सङ्करादिति।** शाब्दबोधसामग्रीप्रत्युपस्थापितत्वेन तस्या इच्छाया

---

१ ख. इत्यमंस्यत। २ ख. ॰र्थस्यान्यानुकूलत्वं।

ज्ञानत्वापत्तौ इच्छात्वज्ञानत्वयोः सङ्करप्रसङ्गादित्यर्थः। यद्वा विजातीयेच्छां प्रति इष्टसाधनत्वादिज्ञानस्य तद्विजातीयायां च तत्र विधेर्हेतुत्वमस्तु तृणारणिवद् वह्नौ इत्यत्राह—सङ्करादिति। यत्रोभयोः समावेशस्तत्र वैजात्ययोः सङ्करप्रसङ्गात्। चित्रत्वकल्पने च मानाभावादिति भावः। केचित्तु इष्टसाधनताज्ञानसहकारेणेच्छाज्ञानं प्रवर्त्तकं वाच्यम्, तत्राह—सङ्करादिति। प्रवर्त्तकज्ञानेनावश्यकेन सङ्करात्तेनेच्छा- 5
ज्ञानेऽन्यथासिद्धमित्यर्थ इत्याहुः।

तत्कारणं प्रयत्नकारणम्। सर्वेति। न च ततः प्रवर्त्तकज्ञानमिति भावः। प्रत्ययार्थः आख्यातार्थः। तस्य प्रयत्नस्य। तथा च न तेन प्रकृत्यर्थस्य भेदेनान्वयो बोधात् (?) नाप्यभेदेनाव्युत्पत्तिरूपोपस्थित्यभावाच्चेति भावः। नन्वेवमाख्यातस्य निरर्थकत्वमेवापद्येते- त्यत्राह—संख्येति। प्रत्ययस्य आख्यातस्य। इदमुपलक्षणं धात्वर्थस्य नामार्थे 10
साक्षात् भेदेनान्वयादाश्रयत्वादेरतदर्थत्वेनापि सार्थकत्वसम्भवो ध्येयः। तेन न प्रकृत्यर्था- न्वितस्वार्थबोधकत्वव्युत्पत्तिविरूपोपस्थित्यभावाच्चेति भाव्यबोधः। तुल्यत्वात् करोतीत्या- दाविव प्रकृत्यर्थातिरेकिणो यत्नस्यापि असत्त्वेन मानत्वात्। प्रयत्नमात्रस्य जीवनयोनि- यत्नसाधारणयत्नत्वावच्छिन्नस्य पराङ्गतापन्नस्य प्रवृत्तिकारणीभूतज्ञानविषयितावच्छेदिका रागप्रयोज्यजातिस्तदवच्छिन्नस्य, तथा च प्रकृत्यर्थेन तस्य भेदान्वय एवेति भावः। 15
पराङ्गतापन्नस्य कर्तृविशेषणतामापन्नस्य, तथा च कृतिविशिष्टो लिङर्थ इति केचित्। अत्र च प्रकृत्यर्थस्यानन्वयो ध्येयः, तुल्यत्वात्। करोतीत्यत्रापि तथैव वक्तुमशक्यत्वात्। एकस्य प्रकृत्यर्थात्मकपदस्य अन्यस्य प्रत्ययस्य तद्विपर्य्ययस्तद्वाचकत्वाभावः। नन्वेक इत्यादावनन्वयः विभक्त्यर्थस्य उद्देश्यतावच्छेदकस्य विषयतयानन्वयात्। प्रकृत्यर्थे तदन्वयस्यानुपपत्तेः। तदतिरिक्ते च तदन्वयस्याव्युत्पत्तेः एक इत्यादिपदानां विशेष्य- 20
निघ्नतया विशेषणतानियमेन तत्समभिव्याहृतविभक्तेः प्रयोगसाधुतामात्रत्वात्। अस्तु वा अभेद एव विधिश्राविणां तदर्थ इत्यरुचेराह—एषिषिषतीति। नन्वेकेन रूपेणोप- स्थितावपि संख्याव्यक्तिभेदेनोद्देश्यतावच्छेदकत्वविधेयत्वयोरुपपत्तिः स्यात्। एवमेषिषि- षतीत्यादावपि इच्छाविषयकमिच्छान्तरान्नियमात् इत्याह—तत्रेति। तथा स्यात् द्वितीयप्रयत्नकल्पना स्यात्। नन्वेकवचनत्वादिना घट इत्यादौ एकत्वप्रत्ययान्वयबोधा- 25
च्छक्तौ क्लृप्तायाम् अत्र चेदुत्पत्तिविरोधे नान्वयस्तदपि न तच्छक्तौ हानिरित्याह— प्रत्येकमिति। तुल्यत्वात् करोतीत्यादावपि तथा वक्तुं शक्यत्वात्। शङ्कते—रथ इति। तदसम्भवे का गतिः प्रकारः। लोक इति व्यापारमात्रं तत्र लक्षणेत्यर्थः। ननु विधिश्राविणां व्यवहारादनुमितेः कार्य्यताज्ञाने व्युत्पत्तेः कृतौ विधेः शक्तिग्राहकत्वमस्ति।

नैवमाख्यातसामान्यस्येति शङ्कते—**लिङ** इति। विवरणादेरित्यादिपदग्राह्यं प्रश्नान्तरं प्रथममुदाहरति—**किमिति**। विवरणं विवृणोति पाकं करोतीत्यर्थः।

ननु ओदनं न पचतीत्यस्य ओदननिष्ठरिक्थाद्यनुकूलपाकवानित्येवार्थो, लाघवात् न तु तादृशपाकानुकूलधर्मान्तरवान् तथा च विवरणस्यापि तत्रैव तात्पर्य्यमित्याशङ्कते—
5 **तथापीति**। **पाकेनेति**। तेन सामान्यवाच्यत्वार्थानुकूलं न। तथा च विध्यर्थप्रयत्नस्य न सर्वाख्यातसाधारण्यमिति भावः। यथा यत्नात्मकक्करोतिना तस्य विवरणस्य। **अतिप्रसङ्गादिति**। यत्र विवरणस्य शक्तिग्राहकत्वमुभयसिद्धं तत्रापि तस्यार्थान्तरप्रसङ्ग इत्यर्थः। कृधातोरपि व्यापारमात्रमर्थ इति शङ्कते—**स्यादेतदिति**। यस्य कस्यचित् प्रयत्नस्य तदतिरिक्तस्य वा फलं धात्वर्थं प्रति अनुकूलतामात्रं करोत्यर्थः कृधातोः
10 शक्यतावच्छेदकं जनकं कृदर्थ इति पर्य्यवस्थितम्।

**सोऽपि यत्नोऽपि**। अनेन अनुकूलत्वेन आख्यातेन यत्नत्वमात्रेण यत्नमात्रवृत्तिनान्वयः, यत्नत्वस्य लाघवाच्छक्यतावच्छेदकत्वं स्यात् इत्यत्राह—**प्रयत्नपदेनेति**। **अविशेषः** आख्यातसामान्यस्य यत्नपदेन पर्य्यायतानुकूलयत्नत्वमाख्यातस्य शक्यतावच्छेदकं यत्नत्वमात्रं तु पदस्येति नाविशेष इत्यत्राह—**तद्वरमिति**। तावन्मात्रम् उपाधी
15 शक्यतावच्छेदकौ। ननु यत्नपदस्य जीवनयोनियत्नसाधारणं शक्यतावच्छेदकं तद्व्याप्यजातिविशेषताख्यातस्य नाविशेषः। कृतिपदेन पर्यायत्वमिष्यत एव। अनुकूलत्वं च धात्वर्थाख्यातार्थयोः संसर्ग इति न गौरवमपि इत्यतो युक्त्यन्तरमाह—**अचेतनेष्विति**। अन्यथेत्यत्राप्यनुषज्यते ॥ ८ ॥

20 स्यादेतत्, यस्य कस्यचित् फलं प्रत्यनुकूलताऽऽपत्तिमात्रमेव करोत्यर्थे, न तु प्रयत्न एव, सोऽपि ह्यनेनैवोपाधिना प्रत्ययेन वक्तव्यो, न तु यत्नत्वमात्रेण प्रयत्नपदेनाविशेषप्रसङ्गात्, तद्वरं तावन्मात्रमेवास्तु लाघवाय, अन्यथा त्वनुकूलत्वप्रयत्नत्वे द्वावुपाधी कल्पनीयौ, अचेतनेषु सर्वत्र गौणार्थास्तिङोऽसति बाधके कल्पनीया इति चेत्। अत्रोच्यते—

25 **कृताकृतविभागेन कर्त्तृरूपव्यवस्थया।**
**यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना ॥ ९ ॥**

यत्नपूर्वकत्वं हि प्रतिसन्धाय घटादौ कृत इति व्यवहारात्। हेतुसत्त्वप्रतिसन्धानेऽपि यत्नपूर्वकत्वप्रतिसन्धानविधुराणामङ्कुरादौ तदव्यवहारात् करोत्यर्थो यत्न एव तावदवसीयते। अन्यथा हि यत्किञ्चिदनुकूलपूर्वकत्वाविशेषाद् घटादयः कृताः, न कृतास्त्वङ्कुरादय इति कुतो व्यवहारनियमः। तेन च सर्वमाख्यातपदं

विव्रियते इति सर्वत्र स एवार्थ इति निर्णयः। तथा च समुदिते प्रवृत्तं पदं तदेकदेशेऽपि प्रयुज्यते, विशुद्धिमात्रं पुरस्कृत्य ब्राह्मणे श्रोत्रियपदवत्। अन्यथाऽपि मध्यमोत्तमपुरुषगामिनः प्रत्ययाः, प्रथमे पुरुषे जानाति, इच्छति, प्रयतते, अध्यवस्यति, शेते, संशेते इत्यादयश्च गौणार्था एवाचेतनेषु। न च वृत्त्यन्तरेणापि प्रयोगसम्भवे शक्तिकल्पना युक्ता। अन्यायश्चानेकार्थत्वमिति स्थितेः। अत एवानुभवोऽपि- 5
यावदुक्तं भवति पाकानुकूलवर्त्तमानप्रयत्नवांस्तावदुक्तं भवति पचतीति। एवं तथाभूतातिवृत्तप्रयत्नोऽपाक्षीदिति। एवं तथाभूतभाविप्रयत्नः पक्ष्यतीति। न तु पचतीति पकानुकूलयत्किञ्चिद्वानिति। अन्यथाऽतिथावपि परिश्रमशयाने पचतीति प्रत्ययप्रसङ्गात्।

अपि च कर्त्तृव्यापार एव कृदर्थश्चेतनश्च कर्त्ता, अन्यथा तद्व्यवस्थाऽनुपपत्तेः। 10
न ह्यभिधीयमानव्यापारवत्त्वं कर्तृत्वम्, अनभिधानदशायां कुर्वतोऽप्यकर्तृत्वप्रसङ्गात्। नाप्याख्यातप्रत्ययाभिधानयोग्यव्यापारशालित्वं कर्तृत्वं, योग्यताया एवानिरूपणात्। फलानुगुणमात्रस्य सर्वकारकव्यापारसाधारणत्वात्। नापि विवक्षातो नियमः अविवक्षादशायामनियमप्रसङ्गात्। स्वव्यापारे नेदमनिष्टमिति चेत्। एवं तर्हि 'स्वव्यापारे च कर्त्तृत्वं सर्वत्रैवास्ति कारके' इति न्यायेन करणादिविलोपप्रसङ्गः। 15
न स्वव्यापारापेक्षया करणादिव्यवहारः, किन्तु प्रधानक्रियापेक्षया। अस्ति हि काञ्चित् क्रियामुद्दिश्य प्रवर्त्तमानानां कारकाणामवान्तरव्यपारयोगो, न त्ववान्तरव्यापारार्थमेव तेषां प्रवृत्तिरिति चेत्। तर्हि तदपेक्षयैव कर्त्तृकर्मादिव्यवहारविशेषनियमे किं कारणमिति चिन्त्यताम्। स्वातन्त्र्यादीति चेत्। ननु तदेव किमन्यत् प्रयत्नादिसमवायादिति विविच्याभिधीयतामिति। तस्मात् सर्वत्र समानव्यापार 20
एवाख्यातार्थः ॥ ९ ॥

### आमोदः

कृताकृतविभागेनेति व्याचष्टे—यत्नेति। 'स एव' यत्न एव। सर्वत्र गौणार्थास्तिङः कल्पनीया इति समाधत्ते समुदित इति। यत्नत्वसमानाधिकरणपूर्वापरीभूतानुकूलत्वं समुदितमाख्यातवाच्यम्। रथो गच्छतीत्यादावयोग्यता यत्नत्वं न भासते। पूर्वापरीभूताकूलत्वं तु तदेकदेशभूतं 25
भासते। एवं च पङ्कजं कुमुदमित्यत्रापि रूढ्यर्थयोग्यतया योगार्थान्वियो लक्षणां विनैवेति भावः। दृष्टान्तमाह—विशुद्धीति। ब्राह्मणत्वसमानाधिकरणविशुद्धपितृ-मातृ-योनिजत्वे सति छन्दोऽध्येतृत्वं यत् समुदितं श्रोत्रियपदवाच्यं तत्र छन्दोऽध्येतृत्वमनधीतवेदब्राह्मणेऽयोग्यतया नान्वेति, किन्तु ब्राह्मणत्वे सति विशुद्धयोनिजत्वपुरस्कारेण प्रवर्तते, न तु लाक्षणिकमित्यर्थः। 30
अपि च अचेतने गौणत्वभिया 'त्वया' ( व्या ? ) पारे शक्तिः कल्पनीया,

तच्च तवाप्यापतितमित्याह—अन्यथापीति या पारशवतावपीत्यर्थः । 'मेघदूतादौ'

'आसारेण त्वमपि शमयेरि'त्यादौ

तथा दर्शनात् । सम्बोध्ये मध्यमपुरुषस्य वक्तरि चोत्तमपुरुषस्यानुशासनात् । सम्बोध्यत्वं वक्तृत्वं वचनेन ( त ? ) स्यैवेत्यर्थः । प्रथमपुरुषेऽपि
5 जानातीति प्रयोगोऽचेतने यथा 'त्वन्मते' गौणस्थता'ऽस्मन्तेऽपि' रथो गच्छतीत्यादावित्यर्थः । ननु चाचेतने धात्वर्थानुकूलो व्यापारोऽन्यत्र तु यत्न एवाख्यातार्थः स्यादित्यक्षादिपदवन्नानार्थतैवास्त्वित्यत आह न चेति । वृत्त्यन्तरेणापीति । एकदेशमात्रपरत्वेनापीत्यर्थः । यद्वा, लक्षणेत्यर्थः । एवञ्च पङ्कजं कुमुदमिवापि स्वतन्त्रोपस्थितये लक्षणा । यथा पुरोडाशक-
10 पालेन तुषानावपति इत्यादौ पुरोडाशश्रपणप्रयोजनकत्वेनोपस्थितकपालस्य तुषावापेऽन्वयमलभमानस्य स्वतन्त्रोपस्थितये लक्षणा । अत एव गौर्जात इत्यादौ व्यक्त्युपस्थितये लक्षणा । वस्तुतस्तु पङ्कजादिपदे गवादिपदे वैकदेशपरतया प्रयुज्यमानेऽपि न लक्षणेति 'शब्दमयूखे' विवृतम् । यत्नस्याख्यातार्थत्वेऽनुभवं प्रमाणयति अत एवेति । 'यत्किञ्चिद्वानि'ति । यत्-
15 किञ्चिद्व्यापारवानित्यर्थः । अन्यथेति । श्रमशान्तेः पाकानुकूलत्वात् । 'कर्तृरूपव्यवस्थये'ति व्याचष्टे अपि चेति । 'कर्तृरूपे'ति कर्तृपदेत्यर्थः । 'तद्व्यवस्थे'ति । अयं कर्ता नायं कर्तेति व्यवस्थाऽनुपपत्तेरित्यर्थः । व्यवस्थापकान्तरमाशङ्क्या निराकरोति न हीति । यस्य व्यापारं धातुराख्यातप्राधान्येनाभिधात्रे ( धत्ते ? ) स कर्तेत्यचेतनेऽपि रथो गच्छतीत्यादौ
20 कर्तृत्वमित्यत्राभिधानस्य विशेषणत्वे दोषमाह अनभिधानेति । अभिधानस्योपलक्षणतया दोषमाह—कर्तृत्वज्ञानाधीनमभिधानमभिधानाधीनं कर्तृत्वमित्यन्योन्याश्रयोऽपीति भावः । नापीति । उपलक्ष्यतावच्छेदकापरिचयाद् 'योग्यता ( या ? ) एवानिरूपणादि'त्यर्थः । ननुफलानुगुणत्वमेव योग्यतावच्छेदकं स्यादित्यत आह नापीति । अनियमेति । कारणादेरपि कर्तृत्व-
25 प्रसङ्गादित्यर्थः करणादेरपि स्वव्यापारे कर्तृत्वमित्याह स्वेति । एवं सर्वेषां कर्तृत्वमेवायातं न करणत्वादिकमित्याह एवमिति । ननु स्वव्यापारापेक्षया सर्वकारकाणां कर्तृत्वमेव प्रधानक्रियापेक्षया तु करणादिव्यवस्थेति शङ्कते

न स्वव्यापारेति । प्रधानक्रियापेक्षयापि नियामकानुयोगस्तदवस्थ एवेत्याह तर्हीति । स्वातन्त्र्यं कर्तृत्वम् । कर्तृव्यापारविषयत्वं करणत्वमित्यादिविशेषनियामकमित्याशङ्कते स्वातन्त्र्यादीति । इदं कर्तृत्वमस्मदाद्यभिमतमिति सम्बोध्य बोधयति नन्विति । यतमानव्यापार एवेति । यत्न एवेत्यर्थः ॥ ९ ॥　5

## बोधनी

स्यादेतदिति । यदा हि करोतेर्यस्य कस्यचित् फलानुकूलतापत्तिरित्यर्थः । तदा तत्पर्यायस्य चाख्यातस्य स्वप्रकृतिधात्वर्थफलानुकूलतापत्तिरेवार्थः स्यादित्याशयः । यत्नवाचित्वाभ्युपगमेऽपि तत्प्रत्ययस्य तावत्फलानुकूलतापत्तिरप्यर्थ इत्यवश्याङ्गीकार्यमित्याह—सोऽपि हीति । अस्तु तर्हि फलानुकूलत्वेनोपाधिनाख्यातवाच्य इत्यत्राह—तद्वरमिति । किञ्चाख्यातस्य प्रयत्नार्थत्वे रथो गच्छतीत्यादिषु गौणत्वं सत्येव मुख्यत्व-　10
बाधके कल्पनीयमित्याह—अचेतनेष्विति । बाधकाभावश्च चेतनेष्विव तत्रापि · · · कानामिति—अत्रोच्यत इति । अन्यानुकूलतापन्नपूर्वकत्वाविशेषे प्रयत्नपूर्वकेऽङ्कुरादिषु कृतत्वव्यवहाराभावात् यत्नपूर्वकेषु च घटादिषु चैतद्व्यवहारात् कृतिः करोतेरर्थो यत्न एव । किञ्च कर्तुरेव व्यापारः करोत्यर्थः । कर्ता च चेतनः अन्यथा कारकान्तरेभ्यः कर्तृरूपव्यवस्थासिद्धेश्चेतनव्यापारश्च प्रयत्न एवेति यत्न एव करोत्यर्थो न त्वन्यानुकूल-　15
तापत्तिरत्र तथा च करोतिपर्यायस्याख्यातस्यापि यत्नार्थत्वं सिध्यतीति भावः ।

नन्वाख्यातार्थो भावनेत्याचार्याः । यथाहुः—भावना त्वन्या सर्वाख्यातेषु गम्यत इति तत्र कथमेतस्य यत्नार्थत्वमत आह—पूर्वेति । पूर्वात् प्रत्ययात् प्रतीयमाना प्रकृत्यर्थत्वेन गम्यमानेति यावत् । कृतिर्यत्न एव परस्मिन् प्रत्यये पूर्वापरीभावेन प्रतीयमाना भावनेति व्यपदिश्यते । यद्वा पूर्वा चिकीर्षातः सिद्धा साध्ये साधनीभूता भावना　20
कृतिर्यत्न इत्यभिधीयते, परस्मिन् स्वभाव्ये प्रतीयमाना भाव्योपहितरूपेति यावत् भावनेति यद्वा पूर्वापरस्मिन्नित्येकं पदं पूर्वापरीभूते प्रतीयमाने यत्ने भावनेति व्यपदेश इत्याद्यं पादं व्याचष्टे—यत्नपूर्वकत्वं हीति । यत्नान्वयव्यतिरेकानुविधानेन करोतेर्यत्न एवार्थः । न त्वन्यानुकूलतापत्तिमात्रं सत्येव तस्मिन् करोति, व्यवहाराभावादिति—अस्तु करोतेरर्थः यत्नः किमायातमित्यत्राह—तेन चेति । तस्य चेतनेषु का गतिरि-　25
त्याह—तथा चेति । यत्नत्वतत्फलानुकूलत्वपूर्वापरीभूतानां समुदाययोगिचेतने मुख्यमाख्यातपदं रथो गच्छतीत्याह—तौ तदेकदेशो धात्वर्थफलानुकूलत्वमात्रे गौणं प्रयुज्यते ।

यथा—

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव तैः ॥ इति ।

जन्माद्यनेकोपाधिमति ब्राह्मणे मुख्यं श्रोत्रियपदं, तदेव विशुद्धे ब्राह्मणे प्रयुज्यते इति मण्डनाचार्याः—भाष्ये यततेति गिरा प्रयत्नं प्रतिपेदिरे अचेतने प्रयोगस्य प्राचुर्यान्नोपचारधीरिति । अन्यथापीति । अचेतनेषु गौणत्वपरिजिहीर्षयान्यानुकूलतापत्तिमात्रमाख्यातार्थ इत्यभ्युपगमेऽपि शृणोत ग्रावाणः, शेवधिष्टेऽहमस्मि, रक्ष मामित्यादयो मध्यमोत्तमपुरुषगामिनः प्रत्ययाः प्रथमपुरुषेऽपि मम चेतो जानाति, अध्यवस्यति, संशेते इत्यादयो धातवः प्रत्ययाश्च गौणा एवाङ्गीकर्तव्याः तथा रथो गच्छतीत्यादावपि गौणत्वमङ्गीक्रियत इति भावः ।

नन्वस्तु चेतनेषु प्रयत्नोऽर्थः अचेतनेष्वन्यानुकूलतापत्तिरेव मुख्योऽर्थः, किमिति न स्यादित्यत्राह—न च वृत्त्यन्तरेणेति । तदप्ययुक्तम् । भावनाविवेके—अनेकार्थत्वमन्याय्यं तेनैकाधिकरण्यतः । करोतिना तिङन्तेषु भावभेदोऽनुमीयत इति । यत एव साध्यानुकूलो यत्नः न त्वन्यानुकूलतामात्रम्, अत एव सर्वाख्यातेषु यत्नानुवृत्तेरनुभव इत्याह—अत एवेति । अन्यथातिप्रसङ्गमाह—अतिथावपीति । अतिथेः कृते गृहमेधिनः पचन्तीति अस्मिन्नपि पाका * * * पचतिप्रयोगप्रसङ्ग इति कर्तृरूपव्यवस्थये त्येतद्विवृणोति—अपि चेति । कर्तृव्यापार एव न तु कर्मव्यापारोऽपीति ततः किमित्याह—चेतन एवेति । चेतनव्यापारश्च प्रयत्न एवेति भावः । स्याच्चेतनोऽपि कर्ता तर्हि देवदत्तः कर्ता न तु काष्ठादय इति व्यवस्था न स्यादित्याह—अन्यथेति । यस्य व्यापारं धातुराख्यातेनाभिधत्ते स चेतनोऽचेतनो वा कर्तेति व्यवस्था सिध्यतीत्यत्राह—न हीति ।

ननु अभिधानदशायामपि तद्योग्यताभावोऽस्ति तावतैव कर्तृनियमः स्यादित्यत्राह—नापीति । अस्त्वेवं सा तु योग्यता किं चेतनत्वमन्यद्वा किंचिदितीदानीमेव चिन्त्यमानत्वेनानिरूपितपूर्वत्वादिति यस्य व्यापारः फलानुगुणः स कर्ता स्यादित्यत्राह—फलानुगुणेति । यस्य कारकस्य स्वातन्त्र्यं यदा विवक्षितं तदा तस्य कर्तृत्वं नान्यस्य, विवक्षातः कारकाणि भवन्तीति न्यायादिति वैयाकरणमतं स्थाप्य निराचष्टे—अविवक्षेति ।

---

१ क. नन्वचेतनेषु प्रयत्नरूपोऽर्थः अचेतनेष्वन्यानुकूलतापत्तिरेव मुख्योऽर्थः किमिति न स्यादित्यत्राह— ।

ननु सर्वेषामपि कारणं स्वस्वव्यापारेषु अनियमः कर्तृत्वमनिष्टमेव, काष्ठानि ज्वलन्ति, विकसिष्यन्ते तण्डुला इति प्रयोगसिद्धेरित्याह—**स्वव्यापार इति**। तेषां कर्तृत्वे कारणादिव्यवहारो न स्यादित्याह—**एवं तर्हीति**।

ननु प्रातिस्विकज्वलनाद्यवान्तरव्यापारापेक्षया कर्तृत्वेऽप्येषामुद्देश्यपाकादिक्रियापेक्षया कर्मकरणादिकारकवैचित्र्योपपत्तिरित्याह—**स्वव्यापारेति**। तथापि सर्वेषां प्रधानक्रिया- 5 कारकत्वाविशेषात् कुतः कर्त्रादिनियम इत्याह—**तर्हीति**। नियामकमाशङ्कते—**स्वातन्त्र्यादीति**। स्मरन्ति हि "स्वतन्त्रः कर्ते"ति तर्हि तदेव स्वातन्त्र्यमेव प्रयत्नार्था- दिसमवायादन्यतोऽस्तीति सिद्धं नः समीहितमित्याह—**तदेवेति**। कर्तृरूपव्यवस्थयेति हेतुमुपसंहरति—**तस्मादिति**। ॥ ९ ॥

विवेकः

करोतिना आख्यातार्थस्य विवरणार्थस्यैवार्थं प्रथमतो व्यवस्थापयति **कृताकृतेति**। 10 व्यापारवत्त्वस्य कर्तृत्वस्य कर(ण)स्तथा तादृशविशेषदर्शनशालीनतदभावप्रकारकज्ञानेच्छया विरहविशिष्टतदभावप्रकारकत्वाभावरूपं वा निश्चयत्वं भगवज्ज्ञाने वाच्यम्। अयं च विशिष्टाभावो तादृशेच्छारूपविशेषणाभावादपीत्याहुः। सिद्ध्यतु प्रमाणबलात्तादृशं ज्ञानान्तर(ं) नित्यमेव भगवति समानाधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वमेव तस्याहार्य्य- त्वमित्यप्येकदेशिनः सिसृक्षात्वादिवत् तादृशशब्दसामग्रीसमवधानमेव तस्य संशयत्व- 15 मिति तु साम्प्रदायिकाः।

आख्यातार्थो भावनेति ग्रन्थं समर्थयति **पूर्वेति**। पूर्वकारणीभूता कृतिः परस्मिन् कार्य्यमपेक्ष्य भावयतीति व्युत्पत्त्या 'भावना'पदवाच्येत्यर्थः। यद्वा, पूर्वा परस्मिन् पूर्वापरीभावापन्नव्यापारकलापधात्वर्थविषयिणः सैव 'भावना'पदवाच्येत्यर्थः।

'तदव्यवहारात्' कृतव्यवहाराभावात्। तथाविधव्यवहाराभावमुक्त्वा यत्नापूर्वकत्व- 20 प्रतिसन्धानात् विपरीतव्यवहारमादर्शयति **अन्यथा हीत्यादिना**। 'सर्वत्र' आख्या- तसामान्ये 'स एव' यत्न एव 'अर्थो' वाच्यः। 'समुदिते' अनुकूलयत्ने 'प्रवृत्तं' शक्तम्, 'एकदेशे' अनुकूलमात्रे, रथो गच्छतीत्यादौ 'प्रयुज्यते' आख्यातम्। अत्र दृष्टान्तमाह **विशुद्धीति**। विशुद्धा ब्राह्मणत्वमुपलक्षितं, तथा च ब्राह्मणत्वे सति छन्दोऽध्येतरि शक्तं 'श्रोत्रियपदं' यथा 'एकदेशे' ब्राह्मणे प्रयुज्यते तथेत्यर्थः। एवञ्च यदि विशिष्टं 25 शक्यं तदा लक्षणया समर्थनीयम्। यदि च अनुकूलप्रयत्नो ब्राह्मणच्छन्दोऽध्येतारौ

स्वतन्त्रौ शक्यौ, तदापि पङ्कजपदवल्लक्षणा तत्रापि यदि न स्यात्तदाऽत्रापि तथैवेति ध्येयम् । 'अन्यथापि' अनुकूलमात्रस्याख्यातवाच्यत्वेऽपि मध्यमोत्तमपुरुषयोः संबोध्यत्ववक्तृतावच्छेदकरूपचेतनधर्मशक्तयोरासारेण त्वमपि शमयेरित्यादावचेतने मेघादौ गौण एव प्रयोगा वाच्याः, न चाचेतने लक्षणाभिया व्यापारे गुरुशक्तिस्वीकारेऽपि
5 क्वचिल्लक्षणा आपतति वेति किं तत इति भावः । ननु मध्यमोत्तमपुरुषयोर्लक्षणाया-मुभयसम्मतिरप्रथमपुरुषे व्यापारशक्तौ न लक्षणेति न्यायकं स्यात् इति तत्रापि लक्षणां व्युत्पादयति **जानातीति** । अत्र लक्षणा चेतनेऽपि तत्र ज्ञानवत्त्वादिमात्रप्रत्ययात् । न च विनैव लक्षणां धात्वर्थस्य आश्रयतासम्बन्धेनान्वयोऽस्त्विति वाच्यम् । धात्वर्थना-मार्थयोः साक्षात् भेदेनान्वयस्य व्युत्पादितत्वात् । अत एव स्तोकत्वं ( कं ) पचती-
10 त्यादौ स्तोकत्वस्य तथान्वयः । नन्वेतावता नामार्थविशेषणकधात्वर्थानन्वयेऽपि धात्वर्थ-विशेषणकनामार्थान्वयेनाव्युत्पत्तिरिति चेन्न । जानातीत्यत्र भेदेनान्वयवारणाय ज्ञानविशिष्टे तथान्वये विभक्तिजन्यान्यतरोपस्थितेर्हेतुत्वकल्पनात् । तदभावे तथान्वयस्याव्युत्पत्तेरित्य-न्यत्र विस्तरः । ननु अत्रापि लक्षणा उभयसिद्धैव, गच्छति इत्यादौ लक्षणापत्तिभयेन व्यापारे शक्तिरुच्यतामित्यत्राह **न चेति** । **अन्याय्यमि ( यश्चे ? ) ति** ।
15 प्रवृत्तित्वापेक्षया व्यापारत्वस्य गौरवमेवानेन ध्वनितम् । यद्वा, नन्वाश्रयत्वमपि तच्छक्त-मस्तु इत्यत्राह **न चेति** । अत्र चान्याय इति यथाश्रुतार्थकमेव । **अतिथावित्ति** । इदं चापाततः । तथाविधपरम्परानुकूलयत्नस्यापि 'त्वया' वरणीयत्वादिति ध्येयम् । 'अभिधीयमाने'त्यस्य 'आख्यातस्ये'त्यादि । तथा च यत्क्रियावाचकधातुसमभिव्याहृता-ख्याताभिधीयमानो यो व्यापारस्तस्य तद्वत्त्वमेव तत्कर्तृत्वमिति फलितम् । अत्र
20 तदभिमानत्वं तदुपहितत्वं तद्योग्यत्वं वा ? आद्ये **अनभीति** । द्वितीये **नापीति** । योग्यताया इत्यस्य विना योग्यतावच्छेदकनिरूपणमित्यादि । 'फलं' धात्वर्थः । **विवक्षात इति** । अत एव दात्रं छिनत्तीत्याद्यपि स्वातन्त्र्यविवक्षया प्रयुज्यत इति भावः । अनियमप्रसङ्गात्, करणादेरपि कर्तृत्वप्रसङ्गात् शङ्कते **न्वे ( स्वे? ) ति** । इदं करणादेः कर्तृत्वप्रसञ्जनम् । 'करणादी'त्यस्य अविवक्षादशायामित्यादिः ।
25 तदपेक्षया प्रधानक्रियापेक्षया । **स्वातन्त्र्यादीति** । स्वातन्त्र्यं कर्तृत्वं कर्तृव्यापार्यत्वं करणत्वमित्यादिलक्षणज्ञानाधीनो व्यवहारनियम इत्यर्थः । नन्वित्यनेन संबोध्य समाधत्ते **नन्विति** । उपसंहरति **तस्मादिति** । यत्र ( त ) मानव्यापारो यत्नः ॥ ९ ॥

तथापि फलानुगुणतैवास्तु प्रत्ययस्य प्रवृत्तिनिमित्तं प्रयत्नस्त्वाक्षेपतो लप्स्यते इति चेत् , न –

**भावनैव हि यत्नात्मा सर्वत्राख्यातगोचरः ।**
**तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ १० ॥**

केन हि तदाक्षिप्येत ? न तावदनुकूलत्वमात्रेण, तस्य प्रयत्नत्वेनाव्यापनात् । 5
न हि यत्नत्वैकार्थसमवाय्येवानुकूलत्वम् । अत एव न संख्यया, तस्याः संख्येयमात्रपर्यवसायित्वात् । कर्त्रेति चेत् । न । द्रव्यमात्रस्याकर्तृत्वात् । व्यापारवतश्चाभिधाने व्यापाराभिधानस्यावश्याभ्युपगमनीयत्वात् । नापि धात्वर्थेन तदाक्षेपः । विद्यते इत्यादौ तदसम्भवात् । न ह्यत्र धात्वर्थो भावनाऽपेक्षी, सत्ताया नित्यत्वात् । तत्र न भविष्यतीति चेत् । न । पूर्वापरीभूतभावनाऽनुभवस्याविशेषात् । भावनोपरागेण ह्यतथाभूतोऽप्यर्थस्तथा भासते इति । न च पदान्तरलब्धया भावनयाऽनुकूलतायाः प्रत्ययार्थस्यान्वयः । तदसम्भवात् । न खलु प्रकृत्यैव साऽभिधीयते । धातूनां क्रियाफलमात्राभिधायित्वात् । अन्यथा पाक इत्यादावपि भावनाऽनुभवप्रसङ्गात् । नापि चैत्र इत्यादिना पदान्तरेण । प्रकृतिप्रत्यययोरुभयोरप्यकारकार्थत्वात् । 10 15

ओदनमित्यादेः कारकपदत्वात् तस्य च क्रियोपहितत्वात् तेनाभिधानमाक्षेपो वा, कथमन्यथौदनमित्युक्ते, किं भुङ्क्ते पचति वेति विशेषाकाङ्क्षेति चेन्न । पचतीत्युक्ते किमोदनं तेमनं वेति विशेषाकाङ्क्षादर्शनात् । सा चाक्षेपाभिधानयोरन्यतरमन्तरेण न स्यात् । तस्यां दशायां न चेदाक्षेपो नूनमभिधानमेवेति ॥

स्यादेतत् , अभिधीयतां तर्हि कर्त्ताऽपि । तदनभिधाने हि सङ्ख्येयमात्रमाक्षिप्य सङ्ख्या कथं कर्त्तारमन्वियात् , न तु कर्मादिकमपि । शाकसूपौ पचति शाकसूपौदनान् पचतीत्यादौ विरोधनिरस्ता सङ्ख्या चैत्र इति कर्त्तारमविरुद्धमनुगच्छतीति चेत् । चैत्र ओदनं पचतीत्यत्र का गतिः ? 20

एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथा, यववराहादिवदिति चेत् । न, पच्यते इत्यादावपि तथाभावप्रसङ्गात् । चैत्राभ्यां चैत्रैरिति विरोधनिरस्ता सूप इत्यविरुद्धं कर्म्म समनुक्रामतीति चेत् । चैत्रमैत्राभ्यां शाकसूपे पच्यते इत्यत्र का गतिः ? 25

अन्यत्र निर्णीतेनार्थेन व्यवहार इति चेत् । न, पचतीत्यादावपि तथाभावप्रसङ्गात् । तत्र पूर्व्वक एव निर्णयः, पच्यते इत्यत्र त्वपर इति चेत् । न । विशेषाभावात् । आत्मनेपदपरस्मैपदाभ्यां विशेष इति चेत् । न, पच्यते पचते पक्ष्यते इत्यादौ विप्लवप्रसङ्गादिति । 30

दृश्यते च समानप्रत्ययाभिहितेनान्वयः सङ्ख्यायाः । तद् यथा—भूयते सुप्यते इत्यादौ , न हि तत्र कर्त्रा कर्मणा वा अन्येनैव वा केनचिदन्वयः, किन्तु भावेनैव । अनन्वये तदभिधायिनोऽनर्थकत्वप्रसङ्गात् । आक्षिप्तेन चान्वये तत्रापि कर्त्रैवान्वयापत्तेः । को हि सुप्यते स्वपितीत्यनयोः कर्त्राक्षेपं प्रति विशेषः ॥ १० ॥ 35

आमोदः

यत्नानुभवं प्रमाणत्वेनोपन्यस्तमन्यथासिद्धमित्याह। **तथापीति**। **आक्षेपत इति**। पाकादिक्रियाणां यत्नं विनाऽनुपपत्तेः क्रियैव तमाक्षिपतीत्यर्थः। पादत्रयं यत्नानुवादमात्रम्। चतुर्थं पादं व्याचष्टे—**केनेति**। **तदिति**। यत्नस्वरूपमित्यर्थः। 'अनुकूलत्वमात्रेणे'ति। धात्वर्थानुकूलत्वमात्रेणेत्यर्थः। **तस्येति**। प्रयत्नभिन्नस्याप्यनुकूलत्वात् प्रयत्नत्वेन रूपेण व्याप्त्यभावादित्यर्थः। अन्यथा रथो गच्छतीत्यादावपि यत्नाक्षेपः स्यादिति भावः। नन्वाख्यातवाच्यया संख्यया पचतीत्यादौ यत्नाक्षेपः स्यादित्यत आह—**अत एवेति**। संख्यायाः प्रयत्नैकार्थनियमाभावादेवेत्यर्थः। एतदेवाह—**तस्या इति**। नन्वाख्यातवाच्यः कर्ता, स च स्वव्यापारं यत्नमाक्षिपेत् इत्याह—**कर्त्रेति**। शुद्धं द्रव्यमेव वा कर्तृपदेनोच्यते, व्यापारविशिष्टं वा, कृतिरूपव्यापारविशिष्टं वा ? आद्य आह—**द्रव्येति**। द्वितीये रथो गच्छतीत्यादावपि यत्नाक्षेपप्रसङ्गः। तृतीये त्वाह—**व्यापारवत इति**। व्यापारोऽत्र यत्नो विवक्षितः। तत्र न भावं प्रतीत्यत्र यत्नाक्षेप इति शेषः। विद्यत इत्यादावपि पूर्वापरीभूतभावनान्वयः प्रथमं स्यादेव प्रयोगवत्त्वात् परन्तु बाधकात् तद् भज्यत इत्याह—**पूर्वेति**। नन्वनुभव एवायं कथं स्यादित्यत आह—**भावनेति**। भावनोपराग आख्यातसमभिव्याहारः, अतथाभूतो भावनानधीनः सत्तादिस्तथाभूतो भावनोपरक्त इत्यर्थः। अनुकूलमात्रमाख्यातप्रत्ययार्थोऽस्तु, तस्य तु यत्नत्वं पदान्तरसमभिव्याहारलभ्यं स्यादित्यत आह—**न चेति**। तदसम्भवात् तादृशपदान्तराभावादित्यर्थः। ननु धातुनैव भावनाभिधीयताम्, आख्यातं तु अनुकूलतामात्राभिधानपर्यवसितं स्यादित्यत आह—**न खल्विति**। मण्डनमतमाश्रित्य दूषयति—**धातूनामिति**। 'क्रियाफलं' विक्लृत्यादि पच्यादिधात्वर्थोऽस्तु लाघवात्, न त्वधःसन्तापादिव्यापारकलापः। न चैवं व्यापारोपरमे फलदशायां पचतीत्यादिप्रयोगापत्तिः। व्यापारवर्तमानताया आख्यातार्थत्वात् कथं तथा प्रयोगः ? ननु फलमेव चेत् क्रिया धात्वर्थस्तदा परसमवेतक्रियाफलशालितया तण्डुलादिना यत् कर्मत्वं तन्न स्यादिति चेन्न। परसमवेतव्यापारफलशालित्वादेव तण्डुलादीनां कर्मत्वोपपत्तेः। स च व्यापारो धात्वर्थं आख्यातार्थो वेति तत्फलभागितायास्तण्डुलादीनां सत्त्वात्।

**अन्यथेति**। यदि धातूनां यत्नार्थता तदेत्यर्थः। **पदान्तरेणेति**। यत्नाक्षेप इति शेषः। प्रकृतिश्चैत्रः, प्रत्ययस्तु विभक्तिः। तथा च चैत्र इत्यतः शब्दात् शुद्धप्रातिपदिकमात्रोपस्थितौ कथं यत्नाक्षेप इत्यर्थः। ननु ओदनं पचतीत्यत्र ओदनस्य कर्मत्वं प्रतीयते, कर्मत्वञ्च भाव्यत्वमेव; तथा च तद्वाच्या वा तदाक्षेप्या वाऽवश्यम्भावना स्यादन्यथा भावनासामान्याज्ञाने 5 पाकभावना भोजनभावना चेति विशेषाकाङ्क्षैव न स्यादिति शङ्कते **ओदनमिति**। भावनाया आख्यातोपस्थाप्यत्वमन्तरेण विशेषाकाङ्क्षा न स्यादिति—**तुल्यमिति**। परिहरति—**पचतीति**। **तस्यां दशायामिति**। कर्मपदासमभिव्याहारदशायामित्यर्थः। **नूनमिति**। आक्षेपकाभिमतकर्मत्वा-दीनामनुपस्थितेरित्यर्थः। आख्यातेन तर्हि कर्तैवाभिधीयतां, तथा च 'कर्तरि 10 लडि'त्यनुशासनमपि समर्थितं स्यादित्याह—**अभिधीयतामिति**। अनभिधाने दण्डमाह—**तदिति**। कर्तुरभिधाने समानपदाश्रिता संख्यापि कर्त्रैवान्वेति, न कर्मादिनेत्यत्र न विनिगमकं स्यादित्यर्थः। आख्यातोपस्थाप्या संख्या द्वित्वबहुत्वोपरुद्धकर्मस्थले कर्तारमेवान्वेति चेत्, तदा एकत्वावरुद्धकर्मस्थलेऽपि कर्तारमेवान्वेष्यति। न हि यवमयश्चरुर्भवतीत्यत्र म्लेच्छप्रसिद्धकङ्गुपरत्वे 15 निरस्तेऽर्थवादाद्दीर्घशूकपरत्वे च निर्णीते यवैर्यजेतेत्या(दा)वपि निर्णयान्तरा-पेक्षा इत्याह—**शाकेत्यादि**। **तथाभावेति**। कर्त्रैव संख्यान्वयप्रसङ्गादित्यर्थः। द्वित्वबहुत्वावरुद्धकर्तृस्थले कर्मान्वियस्य दर्शनात्। पचत इत्यत्रापि कर्मान्वय एव। यत्रापि कर्तृकर्मणोर्द्वित्वबहुत्वावरोधस्तत्रापि कर्मान्वय एव, एकत्र निर्णीतः शास्त्रार्थ इति न्यायादित्याह **चैत्राभ्यामित्यादि**। **पूर्वक इति**। 20 कर्त्रन्वय एवेत्यर्थः। (अ)पर इति। कर्मान्वय एवेत्यर्थः। अत्र विनिगमना-विरहमाह—**नेति**। **विप्लवेति**। यत्र धातुरात्मनेपदी कर्तरि च लकारस्तत्रापि तदुपस्थाप्या संख्या कर्मान्वितैव स्यादित्यर्थः। 'पच्यत' इति दृष्टान्तार्थं, 'पक्ष्यत' इति च कर्तृकर्मणोः समानरूपत्वादुदाहृतम्। यद्वा, 'विप्लवप्रसङ्गात्' अविशेषप्रसङ्गादित्यर्थः तथा च 'पच्यत' इति न 25 दृष्टान्तार्थम्। ननु कर्ता चेदाख्यातवाच्यः स्यात्तदा तद्वाच्यया तदन्वयो न स्यात्। न ह्येकपदोपस्थाप्ययोः पदार्थयोरन्योन्यमन्वयो दृश्यत इत्याह—**दृश्यत इति**। **सुप्यत इति**। आख्यातोपस्थाप्येन भावेनैव संख्यायास्तदुप-स्थाप्याया अन्वयबोधस्य दर्शनादित्यर्थः। ननु तत्रापि कर्त्रादिनैवान्वयः

स्यादित्यत आह—न हीति। कर्म तावदिह नास्त्येव, कर्त्रन्वये चैत्रमैत्राभ्या(१) सुप्यत इत्यत्र द्विवचनं स्यादत एव भावस्यैकत्वादेकवचनमिति पठन्ति। न चात्र चैत्रमैत्रगतस्वापद्वयलाभाय द्विवचनापत्तिः। स्वापत्वेन तदुभयस्वापस्यैकत्वात् द्विवचनबहुवचनयोरसाधुत्वादिति भावः। ननु भावस्थले
5 संख्यान्वयो मास्तु, को दोष इत्यत आह—अन्वय इति। निश्चितानन्वयत्वेनापार्थकत्वापत्तिरित्यर्थः। कर्त्रैवेति। तथा च चैत्रमैत्राभ्यां सुप्यत इत्यत्र एकत्वमनन्वितमेव स्यादित्यर्थः। ननु सुप्यत इत्यत्र कर्ता नाक्षिप्यत एवेत्यत आह—को हीति ॥१०॥

बोधनी

नन्वाख्यातेभ्यः फलानुकूलप्रयत्नावगमेऽप्याकृत्यधिकरणन्यायेन विशेषणकृत्यभूतं
10 फलानुकूलत्वमेव प्रत्ययार्थः विशेष्यस्तु तत्रैवाक्षेपादवगम्यमानो नाभिधेय इत्याह—**तथापीति। न भावनैवेति।** भावनानां फलोत्पादनानुकूलमात्रात्मा सा तु यत्नात्मनैवाख्याताभिधेया, न त्वन्यानुकूलत्वमात्रात्मना विशिष्ट एव प्रयत्नोऽभिधेय इत्यर्थः। कुतस्तया प्रयत्नात्मनैव भावनया निमित्तभूतया तद्वाचकाभ्यां करोति-भावयतिभ्यां विवरणस्य किं करोति पचति पाकं करोति भावयति गच्छति गमनं करोति
15 भावयतीत्यर्थः इत्यादेः सर्वदा बाधतः सर्वदा सिद्धत्वादाक्षेपसिद्धेश्चानुपपन्नत्वादिति तथा विवरणध्रौव्यस्य व्याख्यातचरत्वादाक्षेपानुपपत्तिमेव व्याचष्टे—**केन हीति।** तद्यत्नमित्यर्थः।

नन्वाख्याताभिहितमन्यानुकूलत्वमस्तु स्वाश्रयत्वेन[१] यत्नमाक्षेपयतीति अत्राह—**न तावदिति।** अव्यापनमेवाह—**न हीति।** रथो गच्छतीत्यादौ स्पन्दस्यापि
20 फलानुकूलत्वादिति।

नन्वाख्याताभिहिता संख्या संख्येयभूतकर्तृद्वारेणाक्षेप्येति क्रियामित्यत्राह—**अत एवेति।** यत्नत्वेनाव्यापनादेवेति[२]। अव्यापनमेवाह[३]—**तस्या इति।**

ननु वयं हि वैयाकरणा अस्माकं चाख्याताभिधेयः कर्ता स च स्वव्यापारं यत्नमाक्षेपयतीत्यत्राह—**तत्रेति।** तत्र किं चैत्रमैत्रमात्रस्याख्यातेनाभिधानं व्यापारवतो
25 वा प्रथमेन तेनाक्षेपः तस्याकर्तृत्वात् द्वितीये तु नागृहीतविशेषणन्यायेन व्यापाराभिधा-

---

१ क. आश्र०। २ क. अयं पाठो नास्ति। ३ क. तदेवाह।

नमवर्जनीयमित्याह—**न द्रव्यमात्रस्येति**। तर्हि धात्वर्थं स्वनिष्पादकत्वेन यत्नमाक्षेपयतीत्यत्राह—**नापीति**। विद सत्तायामिति। विद्यति धातोः सत्तार्थत्वात् तस्याश्च नित्यत्वेन यत्नानपेक्षत्वान्न ततस्तदाक्षेपः संभवति। मा भूत्तत्राक्षेपः पचत्यादौ तावद्धात्वर्थस्य विक्लेदनादेः प्रयत्नापेक्षत्वात्, तदापेक्षत्वात् तदाक्षेपसिद्धिरित्याशयेन[1] शङ्कते—**अत्रेति**। विद्यत इत्यादावपि पचतीत्यादिवद्धात्वर्थस्य पूर्वापरीभावानुभवस्ता-[2] 5
वदस्तीत्याह—**नेति**। ततः किमित्याह—**भावनोपरागेण हीति**। न हि निष्प-न्नात्मनः[3] क्रियाफलस्य संयोगविभागादिरूपस्य[4] न स्वतः पूर्वापरीभावः संभवति। कृताभिहितेष्वदर्शनात्[5][6] दूरे च नित्यायास्सत्ताया इति भावः। मा भूदाक्षेपः। तथापि न प्रत्ययार्थः पदान्तराभिहितेनैव यत्नेन प्रत्ययार्थस्यानुकूलत्वमात्रस्यान्वयोप-पत्तेरित्यत्राह—**न चेति**। तदसंभवात्, भावनाभिधायिनः पदान्तरस्यासंभवादित्यर्थः। 10
असम्भवमेवाह—**न खल्विति**। **अन्यथेति**। यदि धातव एव क्रियामभिदध्युः ततः प्रत्ययविधुरेभ्योऽपि तेभ्यस्तदनुभवः स्यात्। न चैतदस्तीति—**नापीति**। प्रकृतेस्तावच्छुद्धप्रातिपदिकार्थत्वात्। प्रथमाविभक्तेरपि तन्मात्रवचनत्वात् कारकाभिधानमेव नास्तीति तदभिधाने हि व्यापारवतः कारकत्वात्तदभिधानमाक्षेपो वा सेत्स्यतीति भावः। शङ्कते—**ओदनमित्यादेरिति**। **कथमन्यथेति**। क्रिया- 15
सामान्यस्याप्रतीतौ हि तद्विशेषस्य जिज्ञासा न स्यादिति। एवं तर्ह्यनेनैव न्याये-नाख्यातपदे[7] न कर्मादिकारकसामान्यस्याक्षेपाभिधानयोरन्यतरदापद्येतेत्याह—**नेति**। विशेषजिज्ञासाविनाभावमात्रात् भवति। दृष्टे रसविशेषरूपविशेषजिज्ञासावदिति भावः। तस्यां दशायामिति सामान्यविशेषयोरुपलम्भकाले तेन कस्याक्षेप इति। विशेषादर्शनात् कर्माभिधानमेव प्रसज्येतेति तद्व्याख्यातेन[8] कारकसामान्यस्य प्रतीतोऽनेनैव न्यायेनाङ्गीका-[9] 20
र्यत्वात्तस्याश्च क्रियाप्रतीतिमन्तरेणानुपपत्तेराख्यातपदेनैव क्रियाया आक्षेपोऽभिधानं वा भवेत्। तत्र चाक्षेपानुपपत्तेरुक्तत्वात् अभिधानमेव परिशिष्यत इत्याह—**न पचतीति**। यद्याक्षेपानुपपत्तेराख्यातवाच्या भावना तर्हि तत एव कर्ताप्याख्याताभिधेयः स्यादिति वैयाकरणाः प्रत्यवतिष्ठन्ते। **स्यादेतदिति**। प्रत्ययाभिहितया संख्यया संख्येयत्वेन कर्तुराक्षेपतः सिद्धेः किमभिधानेनेत्याशङ्क्याह—**तदनभिधाने हीति**। संख्येयमात्रा 25

---

१ ख. तदाक्षेपसिद्धये नाशङ्कते। २ क. °भावेनानु°।
३ क. निष्पाद्यमानक्रियाफलस्य। ४ ख. संयोगभोगादिरूपापूर्वापरीभावः।
५ क. कृदन्ताभि°। ६ ख. °नादिभिरेव।
७ क. °ख्यातपदे। ८ क. यद्व्याख्यातेन। ९ क. °न त्वाङ्गी°।

पेक्षिण्याः संख्यायाः कर्त्रैवान्वयो न तु कर्मादिभिरपीति नास्ति विनिगमनायां हेतुः। तेषामपि क्रियोपस्थितत्वाविशेषादिति, नास्ति विशेषहेतुः। द्वित्वादिसंख्याविरुद्धकर्मणो विरोधेन निरस्तत्वादाख्याताभिधेयैकत्वसंख्या कर्तारमन्वेति। विरोधाभावादित्याह--

नत्विति। किं चैत्र ओदनमित्यत्र न कर्मणोऽपि विरोधिसंख्यानवरोधात् 5 कर्त्रैवान्वयो न कर्मणेत्यत्र न काचिद्गतिरस्तीत्याह—चैत्र इति। तत्रापि गतिमाशङ्कते —एकत्रेति। शाकसूपौ पचतीत्यत्र तावदाख्याताभिहितसंख्याकर्त्तारमेवान्वीयादित्याह— तत्र तदतिक्रमेण...विति। वाक्यशेषेण निर्णीतत्वात्। अन्यत्रासत्यपि तादृशि वाक्यशेषे तेनैवान्वयः सिद्ध्यति। यथा यववराहादिशब्दानां क्वचिद्वाक्यशेषवशेन दीर्घशूकसूकराद्यर्थनिर्णये सति ... प्रयुज्यते ... अपि वाक्यशेषे तादर्थ्यसिद्धिरिति 10 यद्येकत्र कृत एव निर्णयोऽन्यत्रापि स्यात्, तर्ह्योदनः पच्यत इत्यत्राप्याख्यातसंख्या कर्तारमेवान्वीयादित्याह[2]—नेति। सत्यं, तत्रापि कर्त्रन्वयः प्रसज्यते। किन्तु विरोधि-संख्यान्तरावरोधादपोद्यत इत्याह—चैत्राभ्यामिति। तर्हि यत्र कर्तुर्विरोधिसंख्यान्तरा-वरोधो नास्ति तत्र तदतिक्रमेण कर्मोपसंक्रमणे वाच्यो हेतुरित्याह—चैत्रमैत्राभ्यामिति।

ननु चैत्राभ्यां चैत्रैः पूज्यत इत्यत्र कर्मगामित्वेन निर्णयादत्रापि तथा स्यादित्याह— 15 अन्यत्रेति। यदि क्वचिन्निर्णीतेनान्यत्रापि व्यवहारः तर्हि पचतीत्यत्रापि कर्मगामित्वमेव संख्यायाः स्यादित्याह—नेति। तत्र पचति देवदत्त इत्यत्र पूर्वक एव शाकसूपौ पचतीत्यादिसंख्यावरोधादाख्यातसंख्यायाः[3] कर्मण्यनन्वयात् कर्तृगामित्वमित्युक्तो निर्णयः स्यात्। पच्यत इत्यत्रापरः चैत्राभ्यां चैत्रः पच्यत इति कर्तृगामित्वासंभवात् कर्तृगामित्वमित्युक्तो निर्णयो भविष्यति। नेति। उभयत्रापि कर्मकर्त्रोराक्षेपस्य 20 विरोधिसंख्यान्तरानाक्रान्तत्वस्य चाविशेषात्।

ननु विशेषव्यवस्था युज्यत इत्याह—आत्मनेपदेति। आत्मनेपदाभिहिता संख्या कर्मान्वेति परस्मैपदाभिहिता संख्या कर्तारमिति व्यवस्था युक्तेति। तर्हि पचत इत्यत्राह—पचत इत्यत्रापि संख्यायाः कर्मगामित्वप्रसङ्गः इत्याह—नेति। तस्माद्यत्र प्रत्ययः कर्त्तारमभिधत्ते तत्र संख्यासमानप्रत्ययोपादानात् कर्तृगामिनी, यत्र तु कर्मकर्तृ तत्र 25 कर्मगामिनी व्यवस्थाङ्गीकार्येति भावः। अयं समानप्रत्ययोपात्तेनैवान्वयः संख्याया व्याप्तिबलादप्यवगम्यत इत्याह—दृश्यते चेति। देवदत्तेन गृहे[4] भूयते सुप्यत इत्यादौ

---

१ ख. द्वित्वादिसंख्यावरुद्धात्।

२. तत्रेत्यारभ्य पच्यत इत्यन्तः पाठः क पुस्तके नास्ति।

३ क. संख्यायां। ४ क. गतेनेव।

भावप्रत्ययेनाभिहिता संख्या भावेनैवान्वेतीति द्रष्टम्। **अन्येनेति**। यदि तु संख्या कर्त्रादिवद् भावेनापि नान्वीयात्[1], ततो वाक्यार्थानन्वयिसंख्याभिधायिनः प्रत्ययस्य निष्प्रयोजनत्वमेव स्यादित्याह—**अनन्वय** इति। सुप्यत इत्यादावपि आक्षिप्तेन भावेनान्वयः संख्यायाः न तु समानप्रत्ययाभिहितेनेत्यत्राह—**आक्षिप्तेनेति**। तदा हि स्वपितीति वत् सुप्यत इत्यत्रापि कर्त्रैवान्वयः प्रसज्येत, उभयत्रापि क्रियया कर्त्राक्षेपस्या- 5
विशेषात्। ॥ १० ॥

## विवेकः

पादत्रयं प्रागुक्तानुवादरूपतया निगदव्याख्यातमिति तदपहाय चतुर्थपादं व्याकरोति को ( केन ! ) **हीति**। तस्यानुकूलतामात्रस्य। **कर्त्रेति**। आख्यातवाच्येन कृत्याश्रयेणेत्यर्थः। तत्र कृतिरुपलक्षणं विशेषणं वा ? आद्ये, उपलक्षणतावच्छेदकमा- त्मत्वं द्रव्यत्वादिकं वा ? आद्ये, रथो गच्छतीत्यादौ दुर्वारैव लक्षणा। द्वितीये त्वाह— 10
**द्रव्यमात्रस्येति**। तृतीये **व्यापारवत इति**। कृतिमत इत्यर्थः। व्यापारोऽभिधानस्य, तथा च रथो गच्छतीत्यादौ लक्षणैव शक्तौ च गौरवमधिकं न वा आक्षेप इति भावः। तदाक्षेपः यत्नस्याक्षेपः। **तत्रेति**। तथा च धात्वर्थविशेषेणैव तदाक्षेप इति भावः। सत्ताया धात्वर्थस्य व्यापाराव्याप्यत्वज्ञानदशायामपि विद्यते इत्यादौ योग्यतासंशयाधीनो भवनानुभवो भवत्येव, बाधकावतारे तु तज्ज्ञानस्याप्रामाण्यं कल्प्यते इति अनुभवसिद्धं 15
विरुद्ध्येत इत्याह **पूर्वेति**। अतथाभूतोऽपि असाध्योऽपि। तथा साध्यतया। इदमुपलक्षणं, रथो गच्छतीत्यादौ व्यभिचारात्, धात्वर्थविशेषस्यापि। तदनाक्षेपत्वं ध्येयम्। पदान्तरलभ्यत्वमेव यत्नस्याक्षेप इति शङ्कते **न चेति**। भावनया यत्नेन तस्य पदान्तरात् अभावात्। सा भावना। **क्रियाफलेति**। क्रियायाः कृतेर्यत् फलं गमनादि तदभिधायकत्वात्, न तु कृत्यभिधाय ( क ? ) त्वमिति 20
भावः। क्रियारूपं फलमिति वार्थः। **मण्डन**मते तु क्रियायाः फलम् उत्तरसंयोगादि, तथा च **क्रियेत्यस्मन्नये**, फलेति **मण्डननये** इति केचित्। प्रथमाविभक्तौ अकारकार्थत्वादिति। तथा च सामान्याभावे विशेषाभावः सुतरामेवेति भावः। ननु देवदत्त ओदनमित्यत्र द्वितीयाकारकविभक्तिस्तयैव च कृतेरभिधानमाक्षेप उच्यतां धात्वर्थोपधानेन कृतौ जिज्ञासायाः सामान्यतोऽवगमं विनानुत्पादादित्याह **ओदनमि-** 25
**त्यादि**। क्रियोपहितत्वात्, उपधानं चाभिधानपक्षे विशेषणत्वम्, आक्षेपे च नियमः।

---

१ क. नान्वितः स्यात्।

आकाङ्क्षा—जिज्ञासा । नन्वेवं पचतीत्युक्ते किमोदनं तेमनं वेति, चैत्रो मैत्रो वेति जिज्ञासादर्शनात् । कर्म कर्त्ता च सामान्यत आख्यातवाच्यौ स्यातामित्याह **पचतीत्यादि** । **किमोदनमिति** । चैत्रो मैत्रो वेत्यस्याप्युपलक्षणमिदम् । सा आकाङ्क्षा । तस्यां दशायां तादृशशाब्दबोधानन्तरं यदि आक्षेपकाभावात् नाक्षेपः,
5 तदा कर्मणः कर्त्तुराख्यातेन तत् न स्यात् अभिधानमेव स्यात्, अत्र कर्त्तुरभिधानेऽनन्तरं **वैयाकरण** इष्टापत्तिं शङ्कते **स्यादेतदिति** । तदनभिधाने आख्यातेन कर्त्तुरनभिधाने संख्येयमात्रमाक्षिप्य संख्येयमात्रमाकाङ्क्षा कथमिति तेन तदभिधाने च एकपदोपात्तत्व-प्रत्यासत्त्या तत्रैवान्वियादिति भावः । शङ्कते **शाकेति** । विरोधे च योग्यतानिश्चयः । **चैत्र इति** । अत्र कर्मणि तदन्वययोग्यतानिश्चयाभावादिति भावः । शङ्कते
10 **एकत्रेति** । शाकसूपावित्यादौ, अत्र निर्णीत आख्यातोपस्थाप्यसंख्यायाः कर्त्तर्यन्व-यरूपः शास्त्रार्थः । **यवेति** । 'यवमयश्चरुर्भवती'त्यत्र वाक्यशेषाद्दीर्घ-शूकस्य विशेष-वाचकत्वे यवपदस्य वाक्यशेषान्निर्णीते 'यवैर्यजेते'त्यत्रापि स एव तदर्थः । एवं वराहपदेऽपि अनुसन्धेयम् । 'तथाभावप्रसङ्गात्' तत्संख्यायाः कर्त्तर्यन्वयप्रसङ्गात् । शङ्कते चैत्राभ्यामित्यादि । **का गतिरिति** । उभयत्रैव तदन्वये विरोधाभावादिति
15 भावः । पुनः **शङ्कतेऽन्यत्रेति** । चैत्राभ्यामित्यादावित्यर्थः । पुनरप्याह **तत्रेति** । देवदत्त ओदनं पचतीत्यत्र । पूर्वक एव संख्यायाः कर्त्रन्वयः, अपरः कर्मणैव तदन्वयः । **विशेषमाहात्मन इति** । संख्याभिधानसम्भवात् । तादृशाख्याताभि-हिताभ्यां भावकर्मभ्यां, तत्र भावकर्मणोर्नोत्पन्नेनानुशिष्टः आख्यातस्य संख्याभि-धायकत्वे किं मानमित्यत्र यद्यपि चैत्रो मैत्रश्च गच्छत इत्यादौ द्वित्वादिप्रत्ययान्यथानुपपत्त्या
20 तद्वाचकत्वं सिद्धं, तथापि एकत्ववाचकत्वेन मानमित्यत्र समाधानं दर्शयति **सुप्यत इति** । भावरूपप्रत्ययत्वे एकत्वानुभव इति ध्येयम् । **दीधितिकृतस्तु** एकवचनत्वेन एकत्वे वाचकत्वमित्याहुः । तत्र एकवचनत्वम् एकत्ववाचकत्वं, तच्चान्योन्याश्रयग्रस्तं, तथापि तथाविधव्याकरणसङ्केतविषयत्वमेव तद्वाच्यमिति ध्येयम् । ननूपस्थितापि सा संख्याभावरूपेऽर्थे नान्वेति इत्यत्राह **अनभिधान इति** । सम्भवत्यर्थसाधुत्वे
25 शब्दसाधुतामात्रं न कल्प्यत इति भावः । ॥ १० ॥

स्यादेतत्, भावकर्मणोरित्याद्यनुशासनबलात्तावत् भावकर्मणी प्रत्ययवाच्ये, ततस्तदभिहिता सङ्ख्या, ताभ्यामन्वीयते। यस्तु प्रत्ययो न तत्रोत्पन्नः, तदभिहिता सङ्ख्या, 'मुख्यं वा पूर्वचोदनाल्लोकवद्' (मी० १२, २, ३३) इति न्यायेन कर्त्तारमेवाश्रयते इति नियमः। न। विपर्ययप्रसङ्गात्। 'शेषात् कर्त्तरि परस्मैपदं' 'कर्त्तरि-शवि'त्यनुशासनबलाद्भावकर्त्तारौ प्रत्ययवाच्यौ, ततस्तदभिहिता सङ्ख्याऽपि ताभ्यामन्वीयते। यस्तु प्रत्ययो, न तत्रोत्पन्नस्तदभिहिता सङ्ख्या तेनैव न्यायेन कर्म्म समाश्रयेदिति नियमोपपत्तेः। तस्मान्मतिकर्दममपहाय यथाऽनुशासनमेव गृह्यते इति प्राप्तम्। एवं प्राप्तेऽभिधीयते—　5

**आक्षेपलभ्ये सङ्ख्येये नाभिधानस्य कल्पना।**
**सङ्ख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः॥ ११॥**　10

सङ्ख्याऽपि तावदियं भावनाऽनुगामिनी; यं यं भावनान्वेति, तं तं संङ्ख्याऽपीति स्थितेः एकप्रत्ययवाच्यत्वनियमात्। भावना च शुद्धं प्रातिपदिकार्थमात्रमाकाङ्क्षति। न हि व्यापारवन्तं व्यापार आश्रयते, आत्माश्रयत्वात्, समवायं प्रति तदनुपयोगात्, विजातीयव्यापारवतोऽकर्तृत्वाच्च। न च द्वितीयाद्याः प्रातिपदिकविभक्तयः। ततः प्रथमानिर्दिष्टेनैव भावनाऽन्वीयते इति तस्यान्वययोग्यतानियमात् सङ्ख्याऽपि तदनुगामिनी तेनैवान्वीयते इति नातिप्रसङ्गः, नञर्थवत्। यथा हि चैत्रो न ब्राह्मणो गौरो न स्पन्दते न कुण्डलीत्यादौ विशेषणविशेष्यसमभिव्याहाराविशेषेऽपि नञा तदनभिधानाविशेषेऽपि नञर्थस्य विशेषणांशैरेवान्वयो न विशेष्यांशेन।　15

ननु वाधात्तत्र तथा, न हि विशेष्येण तदन्वये विशेषणोपादानमर्थवद्भवेत्, तन्निषेधेनैव विशेषणनिषेधोपलब्धेः। उभयनिषेधे चावृत्तौ वाक्यभेदादनावृत्तौ निराकाङ्क्षत्वादिति चेत्। न, तुल्यत्वात्। समानप्रत्ययोपात्तभावनाऽऽक्षिप्तान्वयोपपत्तौ बाधकं विना सन्निहितत्यागे व्यवहितपरिग्रहस्य गुरुत्वात्। भावनायाश्च सामान्याक्षेपेऽपि साकाङ्क्षपरित्यागे निराकाङ्क्षान्वयानुपपत्तेः। न ह्यन्यतराकाङ्क्षा अन्वयहेतुः, अपि तूभयाकाङ्क्षा। प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रियासम्बन्धमपेक्षते, भावनाऽपि व्यापारभूता सती व्यापारिणमित्युभयाकाङ्क्षा अन्वयहेतुः। कटं कटेनेत्यादि तु कारकतयैव फलसमन्वितं न व्यापारान्तरमपेक्षते इति निराकाङ्क्षमिति।　20　25

अत एवा'ऽऽस्यते सुप्यते' इत्यादौ नाक्षिप्तेनान्वयः। न हि चैत्रेणेति तृतीयान्तशब्दस्य भावनायामाकाङ्क्षाऽस्ति। भाव्याकाङ्क्षाऽस्तीति चेत्। न, फलेन शयनादिधात्वर्थेनान्वयात्। फलसंबन्धिनश्चात्र कर्त्रनतिरेकात्, न हि शयनादयो धात्वर्थाः कर्त्रतिरेकिसंबन्धाः। न च फलतत्संबन्धिव्यतिरेकेणान्यो भाव्यो नाम यमपेक्षेत।　30

स्यादेतत्, किमिति न प्रयुज्यते कटः करोति चैत्रमित्यादि, अभिहितानभिहितव्यवस्थाऽभावादिति चेत्। न, चैत्रमिति प्रथमान्तस्यासाधुत्वात्। द्विती-　35

यान्तस्य तु कर्म्मवचनत्वेन तत्संबन्धाद्द्राव्यानपेक्षणी भावना भावकमात्रमपेक्षेत। न च कटस्य चैत्रं प्रति भावकत्वं, विपर्ययात। अनाप्तेन तु विवक्षायां प्रयुज्यत एव।

प्रयुज्यतां तर्हि कटं करोति चैत्र इत्यादि। न, नित्यसन्दिग्धत्वेन वाक्यार्थासमर्पकत्वात्। ततस्तदुपपत्तये विशेषस्य व्यञ्जनीयत्वात्। व्यज्यतां तर्हि तृतीयया चैत्रेणेति, एवं देवदत्तः क्रियते कटमिति व्यज्यतां द्वितीययेति चेत्। न, अप्रयोगात्। न ह्यनाप्तेनाऽप्येवंप्रायाणि प्रयुज्यन्ते। लक्षणाविरोधेन कुत एतदेवेति चेत। लोकस्यापर्यनुयोज्यत्वात्।

न हि गार्गिकयेति पदं साध्विति श्लाघाऽभिधायिपदसन्निधिमनपेक्ष्य प्रयुज्यते। तस्य तदुपाधिनैव विहितत्वादिति चेत्। एतदेव कुतः? लोके तथैव प्रयोगदर्शनादिति चेत्। तुल्यम्। करोतीत्यादि कर्मविभक्तिसमभिव्याहारेणैव प्रयुज्यते, क्रियते इति कर्तृविभक्तिसमभिव्याहारेणैवेति किमत्र क्रियताम्।

इममेव विशेषमुररीकृत्यानभिहिताधिकारानुशासनेन ह्येतावान् परामर्शः सर्वेषां हृदि पदमादधातीत्यभिधानानभिधानविभाग एव व्युत्पादनदशायां पेशल इति।

स्यादेतत्, भवतु सर्वाख्यातसाधारणी भावना, कालविशेषसंबन्धिनी सा लडाद्यर्थः, कालत्रयापरामृष्टा लिङर्थ इति चेत्। न, यत्नपदेन समानार्थत्वप्रसङ्गात्। विषयोपरागानुपरागाभ्यां विशेष इति चेत्। न, यागयत्न इत्यनेन पर्यायताऽऽपत्तेः। कर्तृसङ्ख्याऽभिधानानभिधानाभ्यां विशेष इति चेत। न, यागयत्नवानित्यनेन साम्यापत्तेः। इष्ट एवायमर्थ इति चेत्। न, इतो वत्सरशतेनाप्यप्रवृत्तेः। फलसमभिव्याहाराभावान्न प्रवर्त्तते इति चेत्। न, स्वर्गकामो यागयत्नवानित्यतोऽप्यप्रवृत्तेः। तत् कस्य हेतोः? न हि यत्नो यत्नस्य हेतुर्यत्नप्रतीतिर्वा यत्नस्य कारणम्, अपि त्विच्छा। न च साऽपि प्रतीता यत्नजननी येन सैव विध्यर्थ इत्यनुगम्यताम्, अपि तु सत्तया। न च लिङः श्रुतिकाले सा सती। न च लिङेव तां जनयति। अर्थविशेषमप्रत्याययन्त्यास्तस्यास्तज्जनकत्वे व्युत्पत्तिग्रहणवैयर्थ्यात्। अनुपलब्धलिङाच्चेच्छाऽनुत्पत्तिप्रसङ्गादिति। एतेन वृद्धव्यवहाराद् व्युत्पत्तिर्भवन्ती बालस्यात्मनि प्रवृत्तिहेतुर्योऽवगतस्तमेवाश्रयेत्, स्वयञ्च कुर्यामिति सङ्कल्पादेवायं प्रवृत्तः, ततः स एव लिङर्थ इति निरस्तम्। कुर्यामिति प्रयत्नो वा स्यादिच्छा वा? नाद्यः, स्वात्मनि वृत्तिविरोधात्। न द्वितीयः, सा हि सत्तयैव प्रयत्नोत्पादिनी, न च लिङः श्रुतिकाले सा सतीत्युक्तम्।

फलेच्छा तु निसर्गवाहितया सत्यपि न प्रयत्नं प्रति हेतुः। अन्यविषयत्वात्। तदर्थञ्च शास्त्रवैयर्थ्यात्। तस्याः कारणान्तरत एव सिद्धेः, तत्प्रतीत्यर्थमपि शास्त्रानपेक्षणात्, तस्या मनोवेद्यत्वात्। अप्राप्ते च शास्त्रानवकाशात्। तदभिधाने च स्वर्गकाम इति कर्तृविशेषणपौनरुक्त्यात्, तदा हि यजेतेत्यस्यैव यागकर्त्ता स्वर्गकाम इत्यर्थः स्यात्।

यदि च फलविषयैव साधनविषयं प्रयत्नं जनयेत्; अन्यत्रापि प्रसुवीत, नियामकाभावात्। हेतुफलभाव एव नियामक इति चेत्। न। अज्ञातस्य तस्य निमकत्वे लिङं विनाऽपि स्वर्गेच्छातो यागे प्रवृत्तिप्रसङ्गात्। ज्ञातस्य तु तत्साधनत्वस्य नियामकत्वे तदिच्छैव तत्र प्रवर्त्तयतु। यो यत्कामयते स तत्साधनमपि कामयत एवेति नियमात्। न च सा तदानीं सती। न च तज्ज्ञानमेव प्रयत्नजनकं, तच्च लिङा क्रियत इति युक्तम्। स्वर्गकामो यागचिकीर्षावानित्यतोऽपि प्रवृत्तिप्रसङ्गात्। लिङो वेच्छां प्रतीत्यानिच्छन्नपि सर्वः प्रवर्त्तेत। स्वसम्बन्धितया तदवगमस्तथा न तु सामान्यत इति चेत्। न। प्रथमपुरुषेण तदभिधाने तस्याविध्यर्थत्वप्रसङ्गात्। ओदनकामस्त्वं पाकचिकीर्षावानित्यतोऽपि प्रवृत्त्यापत्तेश्च। 5

अपि च, सङ्कल्पज्ञानात् यदि प्रयत्नो जायेत तथापि सङ्कल्पस्य कुतो जन्म किमर्थञ्च? सङ्कल्पज्ञानादेव, प्रयत्नार्थञ्चेति चेत्। नन्विच्छाविशेषः सङ्कल्पः; स तावत् सुखे स्वभावतः, तत्साधने चौपाधिकः, सङ्कल्पविषयस्तु कथम? तत्साधनत्वादेवेति चेत्। तर्हि तत्साधनत्वज्ञानात् न तु सङ्कल्पस्वरूपज्ञानाद्भवितुमर्हतीति। अन्यथेष्टसाधनताज्ञानमप्यनर्थकमापद्येत। तस्मात् सङ्कल्पः प्रवर्त्तक इत्यभ्युपेयते, किन्तु सत्तामात्रेण न तु ज्ञात इति नासौ विधिः। ज्ञानञ्च विषयोपहारेणैव व्यवहारयतीति तद्विषय एवावशिष्यते इति कर्तृधर्म्मव्युदासः॥ ११॥ 10 15

## आमोदः

वैयाकरणमते संख्यान्वयं प्रति विनिगमकं शङ्कते—स्यादेतदिति। यत्र भावे प्रत्यय उत्पन्नस्तत्र भावगता संख्या प्रतीयते, यथा सुप्यते चैत्रेणेत्यत्र भावोऽत्र धात्वर्थ एव, यत्र तु कर्मणि तत्र कर्मगता, यथा पच्यते तण्डुलः। यत्र तु न भावे, न वा कर्मणि तत्र कर्तृगता, यथा चैत्रः पचति तण्डुलमित्यत्रेत्यर्थः। अत्र कर्तृगतसंख्याप्रतीतौ न्यायमाह—मुख्यार्थेति ('मुख्यं वे'ति?)। कारकपरिगणनानुशासने कर्तारमुपक्रम्याभिधानात् कर्तुरेव मुख्यत्वं, तथा च तद्गतैव संख्या प्रतीयते। लोकवदिति। यथा चैत्रं तावद् भोजय, मैत्रमपि भोजयिष्यामि इत्यत्र लौकिकवाक्ये चैत्रभोजनस्य मुख्यत्वमित्यर्थः। न्यायोत्थानस्थानन्तु 'जैमिनीयसूत्रे' तत्र 'अग्नावैष्णवमेकादशकपालं चरुं निर्वपेत्' 'संग्रामे सरस्वतीमप्याज्येन यजेते'त्यत्र प्रथमे देशितस्याग्नावैष्णवनिर्वापस्यैव प्रथममनुष्ठानं न सारस्वतस्येत्यादि। तदेतद्दूषयति—नेति। विपर्ययमेवाह—शेषादिति। न तत्रेति। न कर्तरि, न वा भाव इत्यर्थः। तेनैव न्यायेनेति मुख्यार्थेति ('मुख्यं वे'ति?) न्यायेनेत्यर्थः। अत्र कर्तृविनिर्मुक्तत्वात् तदतिरिक्तकारकमध्ये कर्मण 20 25 30

एव प्रथमं देशनेति 'न्याय'संवादः। यथानुशासनं यथाव्याकरणम्। तेन कर्तरि विहितस्याख्यातस्य कर्तृगतसंख्याभिधानं, कर्मविहितस्य कर्मगत-संख्याभिधानं, भावविहितस्य भावगतसंख्याभिधानमिति भावः।

कर्तृकर्मणी आख्यातवाच्ये इति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिधीयत
5 इत्याह—एवमिति। आक्षेपेति। संख्येयः कर्ता कर्म च तदुभयमाक्षेपलभ्यं चेत्तदाऽभिधानस्याख्यातवाच्यत्वस्य कल्पना न युक्ता इत्यर्थः। नन्वेवं यत्किञ्चित् संख्येयमादायैव पर्यवसानं स्यात् इत्यत आह-साकाङ्क्षे(णे)ति भावनानुगामिनीति। भावनामनुयातुं शीलमस्येत्यर्थः। शीलमेव दर्शयति यं यमिति। एतादृशं शीलमेवास्याः कुत इत्यत आह—एकेति। ननु
10 भवत्वेवं भावनाया एव अन्वये किं नियामकमत आह—भावना चेति। शुद्धमिति। भावनानवरुद्धमित्यर्थः। कथमेवमत आह—न हीति। व्यापारवन्तं व्यापारविशिष्टम्। व्यापारश्चात्र कृतिः। तथा च तत्कृति-विशिष्टे तत्कृत्यन्वये आत्माश्रय इत्यर्थः। नन्वात्माश्रयभयात्तत्कृतिविशिष्टे तत्कृतिर्नान्वेतु, कृत्यन्तरमन्वीयतामित्यत आह—समवायं प्रतीति। कृति-
15 समवायं प्रति कृतेरप्रयोजकत्वात्। कृतौ कृतिसमवायाभावात् प्रथमकृतावपि कृत्यन्तरापेक्षायामनवस्थानाच्चेत्यर्थः। ननु कृतिविशिष्टकृतिर्नान्वेतु, व्यापारा-न्तरमन्वीयतामित्याह—विजातीयेति। कृत्यन्वयादेव कर्ता भवति, न तु व्यापारान्तरयोगादपि, तथा सति करणादीनामपि कर्तृत्वप्रसङ्ग इत्यर्थः। ननु कृतौ कृतिसमवायो मास्तु, सम्बन्धान्तरमस्तु, को दोष इत्यत आह—
20 विजातीयेति। विजातीयेन सम्बन्धेन समवायभिन्ने च सम्बन्धेन व्यापार-वतोऽकर्तृत्वात्, अन्यथा विषयतासम्बन्धेन कर्मणोऽपि कर्तृत्वापत्तिरिति भावः। तदयं समुदायार्थः। चैत्रः पचति इत्यत्र चैत्रस्य प्रथमान्तस्य भावनानवरुद्धतयोपस्थितत्वाद् भावनां प्रत्याकाङ्क्षा, भावना च भावकं भाव्य(ं)नापेक्षते। तत्र तण्डुलानि द्वितीयया पाकभावनाभाव्यत्वेनैवोप
25 स्थितांस्तण्डुलान् विहाय भावकमेव काङ्क्षतीत्युभयाकाङ्क्षावशात् कर्त्रैवान्वयो भावनाया इति संख्यान्वयोऽपि तेनैव समानपदोपात्तत्वप्रत्यासत्तेः। चैत्रेण तण्डुलाः पच्यन्ते इत्यत्र तु तृतीयया चैत्रः कर्तृत्वेनोपस्थापित इति तेनान्वयो न कर्तृत्वं नास्त्येवातो धात्वर्थेनैवान्वयो भावनाया इत्याक्षेप्ये एव कर्तृकर्मणी, न तु वाच्य इति। ननु द्वितीयान्तेनैव वा न कथं भावनान्वय

**इत्यत–आह न चेति।** उभयोपस्थितावपि साकाङ्क्षेणैवान्वय इत्यत्र दृष्टान्तमाह—**नञर्थवदिति।** अत एव विशेषणविशेष्योभयसमभिव्याहारेऽपि यथा विशेषणेनैवान्वयो न तु विशेष्येण, तथा प्रकृतेऽपि प्रथमातदन्यविभक्त्यन्तोपस्थितौ प्रथमान्तेनैवान्वय इत्यर्थः। **न ब्राह्मण इत्यादिना** जातिगुणकर्मद्रव्याणां क्रमेण नञर्थान्वयो दर्शितः। ननु यत्र विशेषणसमभिव्याहारस्तत्र　5
विशेषणमात्रेणैव नञर्थान्वयो न विशेष्येणेति नियमात्तत्र तथास्तु, प्रकृते तु नियामकं न पश्याम इत्याह—**नन्विति।** ननु विशेषणविशेष्याभ्यामेव नञर्थान्वयोऽस्तु इत्यत आह—**तन्निषेधेनैवेति।** नञ्पदानुवृत्तानुभयान्वये वाक्यभेद एव, अनावृत्तौ त्वेकान्वयेनैव निराकाङ्क्षत्वान्नापरान्वय इत्याह–**उभयेति।** भावनान्वये तावन्नियामकमुक्तमेव, संख्याया अपि तदन्वितेनैवा-　10
न्वयकल्पने लाघवं, संख्येयान्तरगवेषणायां तु गौरवमित्याह—**समानेति।** भावनान्वयमेव विशदयति—**भावनाया इति।** ननु भावनाया भाव्यभावकोभयाकाङ्क्षाऽस्त्येवातो न तस्याः सम्बन्धिप्रतिनियम इत्यत आह–-**न हीति।** फलेनौदनादिना क्रियासम्बन्धमधःसन्तापनादिधात्वर्थश्च भावनासम्बन्धमन्तरेण नोपपद्यत इति भावनामप्यपेक्षत इति विशेषः। भावनापि व्यापारभूता　15
सती व्यापारिणमपेक्षते निराश्रयायास्तस्या अनुपपत्तेरित्यर्थः। साकाङ्क्षमुक्त्वा निराकाङ्क्षमाह–-**कटं कटेनेति।** कारकतया कर्तृतया कर्मतया वेत्यर्थः। भाव्यस्य धात्वर्थानतिरेकत्वमाह–-**फलेनेति।** तर्हि फलसम्बन्धिना भावनान्वीयतामत आह—**फलसम्बन्धिन इति। धात्वर्थ(।) इति।** स्वापादय इत्यर्थः। **किमितीति।** यदि कर्तृकर्मणी नाख्यातवाच्ये, तदा　20
नियामकाभावात् किमितीति फक्किकोत्थानं कथमेवं प्रयुज्यतामत आह–-**अभिहितेति। चैत्रमिति।** प्रथमान्तं द्वितीयान्तं वा। आद्य आह–**प्रथमेति।** द्वितीये त्वाह–**कर्मेति।** 'तत्सम्बन्धात्' कर्मत्वसम्बन्धात्। भाव्यश्चैत्र एव स्यात्। तथा च तद्विषयिणी भावना भावकमपेक्षते, स च न कटस्तस्य भाव्यत्वात्। चैत्रस्यैव भावकत्वादित्यर्थः। **तथा विवक्षायां**　25
कटस्यैव चैत्रं प्रति जनकत्वविवक्षायामित्यर्थः। **प्रयुज्यतामिति।** आसेनेति शेषः। **तर्हीति।** चैत्रस्य प्रथमान्तोपस्थितत्वेन चेतनत्वेन च भावनान्वययोग्यत्वादित्यर्थः। **व्यज्यतामिति।** कटः करोति चैत्रेण, चैत्रः क्रियते कटमिति तृतीयाद्वितीयाभ्यां विशेषस्याभिव्यक्तत्वेन सन्देहाभावादित्यर्थः।

**अप्रयोगादिति**। 'पाणिनिस्मृते'रपि प्रयोगमूलकत्वादिति भावः। **लक्षणाविरोधेनेति**। अनुशासनविरोधेनेत्यर्थः। अभिहितानभिहितव्यवस्था तव नास्त्येवेति भावः। **लोकस्येति**। अनादेरप्रयोगस्य'।पर्यनुयोज्यत्वादि'त्यर्थः। एतदेव दृष्टान्तेनाह–**न हि गार्गिकयेति**। स्वस्य गार्ग्यत्वेन श्लाघते। अत्र वुण्प्रत्ययस्य श्लाघ्यसमभिव्याहारादेव साधुत्वादित्वादित्यर्थः। **तस्येति**। वुण्प्रत्ययस्येत्यर्थः। तदुपाधिना श्लाघापदसमभिव्याहारेणेत्यर्थः। तर्हि कथमीदृशमनुशासनमत आह––**इममेवेति**। लोकप्रयोगाप्रयोगावेव यदि तन्त्रं, तदानुशासनवैयर्थ्यमित्यत आह–**न ह्येतावानिति**। **इत्यभिधानेति**। अत्र यद्विशेष्यं तेन संख्यान्वयः। तेन चैत्रः तण्डुलान् पचतीत्यत्र फलजनकयत्नाश्रयश्चैत्र एव विशेष्यः, चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रवृत्तियत्नविषया तण्डुला इति त एव विशेष्या इति तत्रैत्र संख्यान्वयः, रथो गच्छतीत्यत्र रथस्यैव विशेषणं विशेष्यः, तेनैव संख्यान्वयः, रथो गच्छतीत्यत्र रथस्यैव विशेष्यत्वं, रथेन गम्यते ग्राम इत्यत्र तु **ग्रामस्येति**। तेनैवाचेतनस्थलेऽपि संख्यान्यश्चैत्रेण सुप्यत इत्यत्र कर्माभावात्। कर्तृव्यापारोपरुद्धतयैवोपस्थितेश्चैत्रवृत्तिव्यापारविषयः स्वाप इति धात्वर्थ एव विशेष्यः, तेनैव संख्यान्वयः, तेन चैत्रः कर्ता पचत्योदनमत्र भावनान्वयं विनापि संख्यान्वयश्चैत्रेणैव, तस्य विशेष्यत्वात्। न च तत्र भावनान्वयादपदार्थता आख्याता, नैवं तृचा एकस्या एव भावनाया अभिधानात्। एवं चैत्रः पचतीत्यत्रापि सुपा तिङा च एकस्या एव संख्याया अभिधानमिति नेयं भावना विशेष्यत्वे सति प्रथमान्तपदोपस्थाप्यत्वमेव कर्तुः कर्मणो वा आधेयत्वं न त्वनुमेयत्वमित्यवधेयम्। **कर्तृधर्मो यत्नो न लिङर्थः**। तस्य सर्वाख्यातसाधारणत्वादिति यदुक्तं तत्राभ्युपगम्य विशेषं शङ्कते––**स्यादेतदिति**। **कालत्रयेति**। न हि यजेत स्नायादित्यादौ कश्चित् कालो भासत इत्यर्थः। **यत्नपदेनेति**। तत्रापि कालत्रयापरामृष्टो यत्न एवार्थ इत्यर्थः। ननु यजेतेत्यत्र यागविषयो यत्नः प्रतीयते। यत्नपदात्तु यत्नमात्रमिति न साध्यमिति शङ्कते–**विषयेति**। ननु 'यजेत स्वर्गकाम' इत्यत्र लिङा कतृसंख्याभिधीयते, न तु यागप्रयत्न इत्यत्रेति शङ्कते–**कर्तृसंख्येति**। **इष्ट एवेति**। अयमेव लिङर्थ **इत्यर्थः**। लिङर्थस्य प्रवर्तकत्वात् अस्य चातथाभूतत्वान्नायं लिङर्थं इत्याह––**इत इति**। **अर्थसाम्येऽपि** फलसमभिव्याहारविरहान्न प्रवर्तकत्वमस्येत्याह–**फलेति**।

अर्थविशेषेऽपि विनिगमकं पृच्छति–**तदिति**। उत्तरं–**न हीति**। **यत्न इति**। प्रतीयमानो यत्न इत्यर्थः। नन्विच्छा चेद् यत्नं जनयति, तदा सैव लिङर्थः स्यादित्याह––**न चेति**। इच्छायाः प्रवृत्तिहेतुज्ञानविषयत्वाभावादित्यर्थः। इच्छायाः कर्तृधर्मस्य विधित्वेन कारिकयाऽसत्त्वादि यद्बाधकमुक्तं तद् विवृणोति **न च लिङ इति**। सा सती येन यत्नं जनयेदिति शेषः। न च 5 लिङ(:) श्रुतिकालेऽपि स्वहेतुबत(ल)ायाता साऽस्तीति वाच्यम्, तदा प्रवृत्तिं प्रति लिङोऽप्रयोजकत्वेन वैयर्थ्यापत्तेरिति भावः, ननु नाप्रयोजकत्वम् इच्छाजन्यस्यैव प्रयोजनत्वादित्याह--**न चेति**। **तस्या इति**। लिङ इत्यर्थः। **व्युत्पत्तीति**। तर्हि लिङ्पदमव्युत्पन्नस्यापीच्छां जनयित्वा प्रवृत्तिं जनयेत् इत्यर्थः। इच्छाया लिङर्थत्वे युक्त्यन्तरमाशङ्क्य निराकरोति–**एतेनेति**। 10 अहं सङ्कल्पात् प्रवृत्तः, अतोऽयमपि वृद्धं पचेतेत्यादिश्रवणसमनन्तरं सङ्कल्पादेव प्रवर्तत इति सङ्कल्प एव लिङर्थ इति व्यवहाराधीनो व्युत्पत्तिग्रह इत्यर्थः। **स एवेति**। सङ्कल्प एवेत्यर्थः। **स्वात्मनीति**। न हि यत्न एव यत्नं जनयतीत्यर्थः। **सा हीति**। साधनगोचरेच्छेत्यर्थः। **प्रयुक्तमिति**। लिङ् च न तदुत्पादिकेत्यप्युक्तमिति भावः। ननु फलेच्छा 15 तदानीं सम्भवत्येवातः सत्त्वात् सैव लिङर्थः स्यादित्यत आह–**फलेच्छेति**। निसर्गवाहित्वं निरुपाधित्वं प्रवृत्तिः साधने न तु फलेऽपि, न च फलेच्छा साधने प्रवर्तयति भिन्नविषयत्वादित्यर्थः। **तदर्थं चेति**। फलेच्छोत्पादनार्थं ज्ञापनार्थं वा न शास्त्रमर्थवदित्यर्थः। **कारणान्तरत इति**। फलज्ञाना-देवेत्यर्थः। **तस्या इति**। फलेच्छाया इत्यर्थः। ननु मनोवेद्याऽपि शास्त्रेण 20 बोध्यतामत आह–**अप्राप्त इति**। 'विधिरत्यन्तमप्राप्तावि'ति वस्तुगते-रित्यर्थः। दोषान्तरमाह–**तदभिधान इति**। लिङा फलेच्छाभिधीयते। 'स्वर्गकाम'पदेन चेति पौनरुक्त्यान्न सा लिङित्यर्थः। पौनरुक्त्यमेव स्पष्टयति **तदा हीति**। तथा च स्वर्गकाम इति पदं व्यर्थमापद्येतेत्यर्थः। **अन्यविषय-त्वादिति**। हेतुं तर्कोपष्टम्भेन स्फुटयति–**यदि ही(चे)ति**। ननु फलेच्छा हेतौ 25 प्रवर्तयन्तीति कुतोऽतिप्रसङ्ग इति शङ्कते–**हेत्विति**। अज्ञातस्य नियामकत्वे शास्त्रवैयर्थ्यमाह–**अज्ञातस्येति**। भ्रमादसाधने प्रवृत्तिर्न स्यादित्यापि बोध्यम्। **तस्येति**। हेतुफलभावस्येत्यर्थः। यागस्वर्गयोर्हेतुफलभावो यदि ज्ञातस्तदा हेतुगोचरेच्छैव हेतौ प्रवर्तिकेति कृतं शास्त्रेणेत्याह––**ज्ञातस्येति**। ननु शास्त्रं

विना साधनेच्छैव कथं स्यादित्यत आह–य इति। इष्टसाधनताज्ञानादेव तत्रेच्छेति भावः। ननु तथापि तत्साधनेच्छैव लिङा बोध्यतामत आह––न चेति। तदानीं लिङ्श्रवणकाले। ननु चासत्या एव साधनेच्छाया ज्ञानं निज(लिङ्?)जन्यतामत आह–न चेति। जनितमपि तज्ज्ञानम-
5 सत्यामिच्छायां प्रवृत्तिं जनयतीति ज्ञानजननतन्त्रमित्याह–स्वर्गेति। इत्यतोऽपिति। एतज्जनितज्ञानादपीत्यर्थः। ननु लिङा जनितमिच्छाज्ञानं प्रवर्तकं न तु तदुदाहृतवाक्यजनितमित्यत आह––लिङ इति। ननु स्वसम्बन्धीच्छाया यदा ज्ञानं भवति, तदा प्रवर्तत एवेत्याह–स्वेति। तर्हि यजेतेति वाक्यान्न प्रवर्तेत, अनेन स्वसम्बन्धिन्या इच्छाया प्रत्यायनात्
10 इत्याह–प्रथमेति। स्वसम्बन्धीच्छाप्रवृत्तावपि न प्रवर्तत एवेति व्यभिचारमाह––ओदनेति। सङ्कल्पज्ञानस्य यत्नजनकत्वे सङ्कल्पस्य वैयर्थ्यमाह–अपि चेति। कुत इति(?)। इष्टसाधनताज्ञानस्य त्वया सङ्कल्पजनकतानभ्युपगमादिति भावः। किमर्थश्चेति। किं वास्य प्रयोजनमित्यर्थः। लिङा सङ्कल्पविषयकं ज्ञानं जन्यते, तेन च ज्ञानेन संकल्प उत्पाद्यते, उत्पन्नेन च
15 प्रयत्नो जन्यते इत्युभयत्रैव प्रश्ने उत्तरमाह–संकल्पेति। इच्छाविशेष इति। कुर्यामिति(?)। चिकीर्षारूपमित्यर्थः। संकल्पे संकल्पज्ञानस्य प्रयोजकत्वमाह–सुख इति। स्वभावत इति। फलेच्छाया फलज्ञानमात्रजन्यत्वात् साधनेच्छायास्तु फलेच्छाजन्यत्वादुभयत्रापि सङ्कल्पज्ञानमप्रयोजकमित्यर्थः।सङ्कल्पज्ञानस्य सङ्कल्पातिरिक्तागोचरसङ्कल्पजनकत्वात् सङ्कल्पगोचरमेव सङ्कल्पं जनयेत्,
20 सङ्कल्पस्य च फलतत्साधनेतरत्वात् न सङ्कल्पविषयत्वमित्याह–सङ्कल्पेति। सङ्कल्पविषयः सङ्कल्प इत्यर्थः। ननु सङ्कल्पोऽपि प्रवृत्तिद्वारा सुखसाधनं भवत्येवेति तत्र कथं नेच्छा स्यादित्याह––तत्साधनेति। सुखसाधनत्वादेवेत्यर्थः। तर्हि सङ्कल्पेऽपीष्टसाधनताज्ञानाधीनैवेच्छा न तु सङ्कल्पस्वरूपज्ञानाधीनेत्याह––तर्हीति। अन्यथा चन्दनावपि स्वरूपज्ञानादेवेच्छा स्यान्न
25 तु सुखसाधनताज्ञानादित्याह––अन्यथेति। यद्वा, औपाधिक इष्टसाधनताज्ञानाधीन इत्यर्थः। सङ्कल्पविषयस्त्विति। बोध इति शेषम्(:?)। कथमिति। अङ्गीक्रियत इति शेषः। सङ्कल्पोऽपि प्रवृत्तिद्वारा तत्साधनत्वसत्त्वादुपायेच्छार्थमेव सङ्कल्पे सुखसाधनत्वज्ञानमित्याह–तत्साधनत्वादेवेति। तर्हि इष्टसाधनत्वज्ञानमेव सङ्कल्पहेतुरङ्गीकृतो न तु सङ्कल्पस्वरूपज्ञानम्

इत्याह—**तर्हीति । अन्यथेति ।** चन्दनादिस्वरूपज्ञानादपि इच्छोत्पत्त्यापत्तिरिति भावः । **नासौ विधिरिति ।** न सङ्कल्पः प्रवर्तकज्ञानविषय इत्यर्थः । ननु यत्किञ्चिज्ज्ञानं प्रवर्तकमस्तु, किं विषयविवेचनेनेत्यत आह **ज्ञानञ्चेति ।** 'अवशिष्यत' इति वक्तुमिति शेषः । **कर्तृधर्मेति ।** स्पन्द-प्रयत्नेच्छानां कर्तृधर्माणां प्रवर्तकत्वव्युदास इत्यर्थः ॥११॥　5

### बोधनी

**स्यादेतदिति ।** यदि तत्राक्षिप्तेनान्वयः संख्यायास्तत आक्षेपाविशेषात् कर्त्रन्वयः स्यात्, नत्वेवं भूयते देवदत्तेन क्रियते घट इत्यादावनुशासनात् भावकर्मणोः प्रत्ययवाच्यत्वात् तदभिहितायाः संख्यायाः समानप्रत्ययोपादानश्रुत्या ताभ्यामेवान्वयः ।

न चैवं पचतीत्यत्रापि प्रसङ्ग इत्युक्तम् । **यस्त्विति ।** कथं तर्हि तत्र कर्तृकर्मभावानामनभिधाने क्रियोपस्थाने चाविशिष्टे कर्त्रैवान्वय इत्युक्तम्—**मुख्यमिति ।**　10
प्रत्ययवाच्यभावनाश्रयत्वे प्रथमप्रतीतमुख्यकर्त्तारमेवाश्रयतीति । अत्रानवगाढमीमांसातन्त्राणामायासो मा भूदित्यधिकरणं लिख्यते । आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीयमाज्येन यजेतेति श्रूयते । तत्राग्नावैष्णवमैन्द्राग्नविकारः सारस्वतमुपांशुयाजविकारः तत्राज्यभागादिषु पौर्णमासिकाः सारस्वतधर्मावत्तृप्तमन्त्रादयः अमावास्याश्चाग्नावैष्णवधर्मावतृप्तत्वादधिविकल्पेन प्रयोक्तव्याः । सारस्वतधर्माणा[1]मत्यन्तबाधस्यान्याय्यत्वादिति　15
प्राप्ते उक्तम् । मुख्यं वा पूर्वश्चोदनाल्लोकवदिति प्रतिपादनात्, आग्नावैष्णवस्य प्रथमप्रतिपन्नानाममावास्याधर्माणामसंजातविरोधित्वात् तद्धर्मै रेव सारस्वतस्याप्युपकारकल्पनात् पृ[2]थन्वत्यादय एव प्रयोक्तव्या यथा लोके प्रथममागतस्यासनादौ दत्ते पश्चादागतस्यासनैकदेशादुपकारसिद्धेर्नासनान्तरं दीयते इत्याचार्याणां मतम् । गुरूणां तु सर्वत्र प्रतिषिद्धधर्मसमवाये भूयसां स्यात् । सर्वधर्मत्वमित्यत्र पञ्चदशरात्रेः प्रथमस्याह्नः अग्निष्टुत　20
आग्नेयी सुब्रह्मण्या तदुत्तराणां बहूनामनुग्रहादैन्द्री कर्तव्येति पूर्वपक्षं कृत्वा राद्धान्तत्वेन मुख्यं वेति सूत्रमवतारितम् । प्रथमप्रतीतत्वादाग्नेय्येव सुब्रह्मण्येति यदि सुप्यते शय्यत इत्यादावनुशासनात् भावकर्मवाचित्वमङ्गीक्रियेत, तर्हि अत एव पचतीत्यादावपि कर्तृवाचित्वमङ्गीक्रियतामित्याशयेनाह—**न विपर्ययेति ।** तेनैव मुख्यं वेत्ययनेनैव न्यायेन कर्मणः क्रियया प्रथममाकांक्षितत्वं प्राधान्यं चे[3]ति तस्मात् कर्तर्यनुशिष्टः प्रत्ययः कर्तृविशि-　25
ष्टामेव संख्यामभिधत्ते, भावकर्मणोरनुशिष्टास्तद्विशिष्टामिति वक्तव्यम् । अन्यथा

---

१ क. विकाराणां । २ क. गृधन्व° । ३ क. वेति ।

क्वचित्कर्मगामित्वमिति व्यवस्थानुपपत्तेरिति उपसंहरति—**तस्मादिति**। एवं पूर्वपक्षिते सिद्धान्तमाह—**एवमिति**। संख्याभिधानेनैव संख्येयस्य कर्त्रादेराक्षेपतः सिद्धौ न तत्राप्यभिधानशक्तिः कल्पनीयेति तथापि संख्यायाः संख्येयमात्राकांक्षिण्याः कर्त्रादिभिरनियमेनान्वयप्रसङ्ग उक्त इति चेत्तत्राह—**संख्येयेति**। संख्या हि स्वतः संख्येयविशेष-
5 मनादृत्य प्रीयमाणापि समानप्रत्ययोपात्तभावनासहचारिणी य स्वव्यापारत्वेन भावनां प्रति साकांक्षस्तदन्वयिनी भवति। तस्मिन्नेव व्यवतिष्ठते, स एव च तां प्रति साकाङ्क्षादयः (?) क्रियावत्तया न शब्देनावगम्यते। तद्वतस्तदपेक्षाभावात्, तस्मात् पचतीत्यादौ प्रातिपदिकमात्राभिधायिन्या प्रथमया समुच्चारितं चैत्रमभिसरन्ती[1] भावना संख्यामपि सहैव संगमयति। पच्यत इत्यत्र तेनैव न्यायेनोदनादिकमनुगच्छन्ती भावना
10 संख्यामपि तमेवानुगमयति। सुप्यत इत्यत्र तु स्वप्रधाना[2]भिधीयमाना भावना नान्यगामिनीति संख्यां स्वविशेषणत्वेनैव संगृह्णाति इति तत्रोत्तरार्धं व्याचष्टे—**संख्या तावदिति**। **एकप्र[3]त्ययेति**। समानप्रत्ययवाच्यत्वात् समानविषयत्वेन नियमादिति। **किं नहीति**। यदि भावनात्मको व्यापारः तदात्मकव्यापारवन्तमेवाकाङ्क्षेत्तदात्माश्रयापत्तिः व्यापारान्तरकल्पनायामनवस्थेति भावः।

15 किञ्च समवायस्य नित्यतया व्यापारान्तरानुपयोग इत्याह—**समवायं प्रतीति**। यद्वा आत्माश्रयप्रसङ्गात् समवायं प्रति तदनुपयोगादित्येकप्रसरे[4]ण हेतुहेतुमद्भावेन[5] योजनेति तर्हि भावनाविजातीयेन स्पन्दना[6]दिना व्यापारेण तद्वन्तमपेक्षत इत्यत्राह—**विजातीयेति**। प्रयत्नवत एव कर्तृत्वात् विजातीयव्यापारवतः करणादेरचेतनस्य भावनाश्रयत्वायोगादिति।

20 ननु शुद्धं प्रातिपदिकमाकांक्षतु भावना तथापि कुतश्चैत्राणां चैत्रेणान्वयो भावनायाः न त्वोदनेनेत्यत्राह—**न चेति**। द्वितीयादीनां कारकार्थत्वेन स्मरणादिति उपसंहरति—**तत इति**। **अस्येति**। प्रथमानिर्दिष्टस्य भावनान्वययोग्यत्वनियमादिति कर्तृकर्मभ्यां समभिव्याहाराविशेषेऽपि संख्यायाः क्वचित्केनचिदेवान्वय इत्यत्र दृष्टान्तमाह—**नञर्थवदिति**। नञर्थस्य हि केवलविशेष्यांशेन विशेषणविशेष्याभ्यां वान्वये
25 बाधकसद्भावादेव केवलविशेषणांशेनैवान्वय इष्यते न त्विह तादृशं बाधकमस्तीत्यभिप्रायेणाह—**नन्विति**। तमेव बाधकमाह—**न हीति**।

---

१ क. °भिधावति। २ क. प्रथामि°। ३ ख. एकप्रत्ययेन।
४ क. °नैव। ५ क. नैव। ६ क. शब्दादिना। ७ क. °द्वा।

ननु हि[1] विशेषणानुपादाने विशेष्यमात्रसम्बन्धेन नञा विशेषणं निषिद्धं भवेदित्याशङ्क्याह—**तन्निषेधेनैवेति** । नह्यस्ति विशेष्यः पुरुषः अस्ति च जातिगुणक्रियात्मकं तद्विशेषणमिति श्रुत्यैवोभयनिषेधः किमिति न स्यादत आह—**उभयेति** । तथाप्युभयसम्बन्धार्थं नञो द्विरुच्चारणं स्यादिति, अनावृत्तौ तु विशेषणमात्र-निषेधेन निराकाङ्क्षस्य नञो न विशेष्यसम्बन्ध इत्याह—**अनावृत्ताविति** । तर्ह्यत्रापि संख्येयाकांक्षिण्याः संख्यायाः प्रथमानिर्दिष्टं विहाय द्वितीयानिर्दिष्टेनान्वये तुल्यो बाध इत्याह—**नेति** । तमेवाह—**समानेति** । न ह्यपेक्षैव सम्बन्धहेतुः किन्तु सन्निधिरपि स च समानप्रत्ययोपात्तभावनाक्षिप्तस्य प्रथमानिर्दिष्टस्यैवेति ।

ननु भावना चाश्रयमात्रापेक्षिणी तावन्मात्रमेवाक्षिपेत्, न [2]प्रथमानिर्दिष्टमेवेत्येत-द्दत्तोत्तरमेव तदित्याशये[3]नाह—**भावनायाश्चेति** । कर्मादीनां व्यापारे भावनायामाकां-क्षाभावेऽपि भावनायास्तावदस्तीत्याह—**तर्हीति** । अस्ति प्रथमानिर्दिष्टे उभयोराकाङ्क्षे-त्याह—**प्रातिपदिकार्थो हीति** । व्यापारद्वारा ह्यव्यापारात्मनः फलसम्बन्ध इति भावः । द्वितीयानिर्दिष्टस्य पुनर्भावनापेक्षाऽस्तीत्याह—**कटमिति** । तदु[4]क्तं पचतीत्यत्र यद्याक्षि-प्तेन कर्त्रान्वयः संख्यायाः तर्हि सुप्यत इत्यादावपि तथा स्यात् कर्माक्षेपाविशेषादिति तदप्यत एव द्वितीयानिर्दिष्टस्य व्यापारान्वितत्वेन न भावनां प्रत्याकाङ्क्षाऽस्तीति प्रतिपादनान्निरस्तमित्याह—**अत एवेति** । भावनायास्तदन्वयात् संख्यापि तदनुवर्तिनी न तेनान्वेतीति भावः । अत एवेत्यनिर्दिष्टमेव हेतुं स्फोरयति न हि चैत्रेणेति शङ्कते—**भाव्याकाङ्क्षेति** । भाव्याकाङ्क्षायां भावनाक्षिप्तेन भाव्येनान्वयः, संख्यायाः न भावनयेति भावः । **नेति** । सुप्यत इत्यादौ भावना स्वफलभूतेन शयनादिना धात्वर्थेन पदश्रुत्यैवाधिगतान्वया न भाव्यान्तरमाक्षिपतीति ।

नन्वोदनं पचतीत्यत्र न पचिधा[5]त्वर्थे विक्लेदनमात्रं भावनायाः फलम् । तत्सम्बन्धिनस्त्वोदनादेः फलत्वादित्यत्राह—**फलसम्बन्धिन** इत्यत्र सुप्यत इत्यादिष्वकर्मकेषु कर्तैव फलसम्बन्धी नान्य इति कुत इत्यत्राह—**न हीति** । ननु[6] यथा हि फलादन्यदपि तत्सम्बन्धि भाव्यं दृष्टम्, तथापि तद्व्यतिरिक्तमपि किञ्चित् भविष्यतीत्यत्राह—**न चेति** । फलस्य तावद्धात्वर्थस्य प्रकृत्यैवोक्तत्वान्न भावनयाक्षेपः कर्तुश्चैत्रेणेति कारक-

१ क. च । २ क. नन्वसमाननिर्दिष्टमेवेत्याशङ्क्य दत्तोत्तरमेव ।
३ क. दर्शयतो ह भावनाया चेति । ४ क. यदुक्तं ।
५ क. पचति धात्वर्थे क्लेदनमात्रभावनाया फलम् । ६ क. न हि ।

तयोपादानं न भावनाक्षेप्यत्वमिति भावनान्वयिनी संख्या स्वप्रधानां भावनामेवागत्यान्वेति इति भावः ।

ननु यदाख्यातेन संख्यामात्रमभिधीयते, न कर्मकर्तृ वा तर्हि यथा क्रियते कट इत्यत्राख्यातानभिहितेऽपि कर्मणि प्रथमैव प्रयुज्यते न द्वितीया, तथा करोतीत्यत्रापि
5 कर्मणि कटे प्रथमैव प्रयोज्या अनभिहितत्वाविशेषादित्याह—स्यादेतदिति । कटेनासमानाधिकृतस्य चैत्रस्य कस्मिन् वाक्ये समानविभक्तिकत्वासम्भवमात्रेण चैत्रमिति स्यादित्युक्तम् । यद्वा आख्यातेन तस्य कर्मत्वा[1]नभिधानात् द्वितीया स्यादिति । वैयाकरणानां यत्र कर्मणो[2]ऽभिधानम् क्रियत इत्यादौ तत्र प्रथमैव, करोतीत्यादौ तु द्वितीयैव अनभिहितत्वात् कर्मण इति व्यवस्थोपपत्तिरिति भावः । तत्र यदि चैत्रमिति
10 पदं प्रथमान्तं विवक्षितम्, तदा तस्यापि कर्तृत्वेनैव चैत्रस्य करोतिना सम्बन्धः । न च तत्सम्बन्धः सम्भवति असाधुत्वप्रसङ्गात् इत्याह—चैत्रमिति । द्वितीयान्तत्वविक्षायां तु कर्मवचनत्वेनास्य करोतिना सम्बन्धस्यान्तकर्तृवचनत्वेन तत्र च कर्मणो भावस्य चैत्रपदेन लाभात् तदनपेक्षिणी भावना भाव्यस्य भावकमेव किञ्चित् पदान्तरसम[3]र्पितमपेक्षत इत्याह—द्वितीयान्तस्येति । कर्मत्वे तदसम्भवादिति केचित् पठन्ति । तत्र चैत्रस्यैव
15 कर्मत्वेनान्वयात् कटस्य करोतिना सर्वथैवासम्बन्धादिति भावः । ततः किमित्यत्राह—न चेति । पदान्तरोपात्तः कटो न चैत्रं भावयितुं शक्नोति, प्रत्युत चैत्रस्य कटं प्रति भावकत्वादिति तत् किं कदाचिदपि तथाविधः प्रयोगः नास्तीत्याह—अनाप्तेन त्विति । स हि कटस्य चैत्रं प्रति भावकत्वं[4] सदेव विवक्षितत्वाप्रयुक्ते प्रयोगोऽयमयथार्थत्वादादरणीय इति भावः ।

20 यदि चैत्रस्य भावकत्वेन कर्मत्वं तर्हि स्यादेवं प्रयोग इत्याह—प्रयुज्यतामिति । कटस्तु कर्म भविष्यतीति भावः । नेति । उभयोरप्येकविभक्तित्वे कोऽत्र भावकः को भाव्य इति न निर्णीयते । न चानिर्णीतार्थपदं वाक्यार्थसमर्पकम् । न च विभक्तिभेदमन्तरेण कर्मकर्त्रादिविशेषो व्यज्यत इति व्यज्यतामिति विशेष इति विपरिणामेनानुषञ्जनीयमिति शास्त्रस्यापि लोकप्रयोगादेव नैवं प्रयोग इत्यभिप्रायेण परिहरति—नेति ।

25 नन्वनभिहिते कर्मणि द्वितीयां, कर्तरि तृतीया[5]मपि स्मरन्ति लक्षणस्यासति विरोधकमिति लोको नैवं प्रत्युङ्क्त इत्याह—लक्षणेति । नेति । यथाहुः—

---

१ क. कर्मणः । २ ख. अनभि° ।
३ क. °न्तरार्पि° । ४ क. °मसदेव प्रयुङ्क्त । ५ क. द्वितीया कर्तरि तृतीयेति ।

सिद्धानुगममात्रं तु कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति ।

पाणिनीया अपि स्मरन्ति, लक्ष्यस्मृत्यनुरोधात्तु क्वचित् किञ्चिदाश्रयत[1] इति ।

ननु गार्गिकायेति चतुर्थ्यन्तस्य श्लघाभिधायिपदसन्निध्युपाधिनैव श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः इति सूत्रेण विहितत्वात् श्लाघाभिधायिपदासन्निधौ चतुर्थ्यन्तप्रयोगो लक्षणविरुद्धत्वादेव न क्रियत इत्याह—तस्येति । विध्यभावे हि प्रयोग एव मूलं नान्यदित्याशयवानाह[2]—एतदेवेति । लोक इत्यादि स्पष्टम् । यदि लोकाधीनप्रयोगत्वाद् द्वितीयादयः तर्हि द्वितीयाद्यनुशासनेऽभिहिताधिकारः पाणिनेररण्यरुदितं स्यादित्यत्राह—इममिति । तर्ह्ययमेव लोकप्रयोगविशेष[3] एवोच्यतां किमनेनावास्तवा[4]भिधानानभिधानेन विभागेनेत्यत आह—न हीति । न हि सर्वेऽपि व्युत्पित्सवः पूर्वोक्तं लौकिकप्रयोगस्थमेतावन्तं विशेषमनुसन्धातुं क्षमन्ते । तेन सुज्ञानो[5]ऽयमभिहितानभिहितविभाग एव प्रकृति[6]प्रत्ययविभागवदवास्तवो[7]ऽपि बालव्युत्पादक[8] इति स एवानुशिष्ट इति । अथ[9] सर्वाख्यातसाधारण्येऽपि भावनाया विलक्षणेन रूपेण लिङभिधेयत्वं विधित्वं चाह—स्यादेतदिति । नेति । लिङ इति शेषः । न हि यत्नपदे[10]नापि कालविशेषः प्रतीयत इति भावः ।

ननु धात्वर्थोपरक्त एव यत्नो लिङावगम्यते, केवलस्तु यत्नपदेनेति न समानार्थत्वमित्याह—विषयेति । नेति । अत्रापि यजेतेति धात्वर्थोपश्लेषोऽनुपश्लेषश्च कालेनावगाम्यत इति कर्तृसंख्येति स्पष्टम् । अत्र चाप्रवृत्तेरिति दूषणं निवेशयितुं शङ्कते—इष्ट एवेति । अयमविशेष इति—इत इति । यागयत्नवानित्यस्मात्[11] पदादिति फलेति स्पष्टम् । अत्र विरोध इत्येतत् प्रश्नपूर्वकमवतारयति—तत्कस्येति । कस्माद्धेतोरित्यर्थः । षष्ठी हेतुप्रयोग इति हेतौ षष्ठीविधानाद्यत्नप्रयत्नस्यैव हेतुत्वे स्वात्मनि क्रियाविरोध इति किं तर्हि प्रवृत्तेः हेतुरित्यत्राह—अपि त्विति । अस्तु तर्हि इच्छैव कर्तृधर्मो लिङर्थो विधिश्चेत्यत्राह—न च सापीति । अस्तु सत्तै[12]व प्रवृत्तिहेतुरित्यत्राह[13]—सत्त्वादिति । हेतुमाह—न च लिङ इति । हेत्वभावादिति भावः ।

---

१ क. °दाश्रीयत । २ क. चान्य° ।
३ ख. विशेषणम् । ४ क. स्तवेना° । ५ क. संज्ञा° ।
६ ख. प्रकृत° । ७ ख. °स्तवो । ८ क. व्युपदादनसमर्थ° ।
९ क. तथा । १० क. त्नविपदे° ।
११ क. °त्यतः° । १२ ख. सत्तयैव । १३ ख. °रित्यत्रैवासत्त्वा° ।

प्रत्ययायोगादिति हेतुमवतारयितुं शङ्कते—**न च लिङेवेति**। ज्ञानयोनित्वादिच्छाया इति लिङैवं[1] तज्जनने बाधकमाह—**अर्थेति**। तत्रैव बाधकान्तरमाह—**अर्थेति**। तत्रैव[2] बाधकान्तरमप्याह—**अनुपलब्धेति**। भावनेच्छयोर्विधित्वनिरासमार्गेण संकल्पविधिवादोऽपि निरस्त इत्याह—**एतेनेति**। यदाहुः—"अन्तः संकल्पमूलात्मा वृत्तिर्विधि-
5 निषेधयोः" इति। कथमेकेन निरस्तमित्यत्राह—**कुर्यादिति**। संग्रहश्लोकस्थं विरोधादित्येतदेवाह—**स्वात्मनिवृत्तिविरोधादिति**। अस्त्वर्थादिति हेतुमेवाह—**सा हीति**[3]। मा भूत्साधनविषयेच्छाफलविषया त्वस्ति[4] निसर्गसिद्धत्वादतः सैवास्तु प्रवृत्तिरित्यत्राह—**फलेच्छेति**। न हि फलविषयेच्छासाधने प्रवृत्तिं जनयति अतिप्रसङ्गादिच्छाविषयस्तु फलं न प्रवृत्तेर्गोचर इति। किञ्च फलेच्छायाः प्रवृत्तिहेतुत्वे तत्स्वरूपप्रतीत्योरन्यत एव
10 सिद्धेः शास्त्रवैयर्थ्यं स्यादित्याह—**तदर्थश्चेति**। अस्त्यन्यतः सिद्धायामपि शास्त्रप्रवृत्तिरित्याह—**अप्राप्ते चेति**। अनेन च प्रत्ययायोगादिति व्याख्यातम्। यदि प्राप्तेऽपि शास्त्रं प्रवर्तेत तदा पौनरुक्त्यदोष इत्याह—**तदभिधाने चेति**। पौनरुक्त्यमेवाह—**तथा हीति**। उक्तं न फलेच्छासाधने प्रवृत्तिं जनयति अन्यविषयत्वादिति। तत्रापि विपक्षे दण्डमाह—**यदि चेति**। अनेनैव संस्कारादिति व्याख्यातम्।

15 ननु फलेच्छा तत्साधन एव पुरुषं प्रवर्त्तयति नान्यत्रेति, नातिप्रसङ्ग इत्याह—**हेतुफलेति**। किमत्राज्ञात एव हेतुफलभावः प्रवृत्तिं नियच्छति, ज्ञातो[5] वा पूर्वत्र श्रुतिलिङ्गादियुक्तवाक्यानामेव स्वर्गकामानां[6] वस्तुतः स्वर्गसाधने यागे प्रवृत्तिः प्रसज्येत, उत्तरत्र तु ब्रह्मसाधनेच्छयैव साधने प्रवृत्तिरस्तु किं फलेच्छयेत्याह—**नाज्ञातस्येति**।

ननु फलमेव हि कामयन्ते प्रेक्षावन्तो न साधनमित्यत्राह—**यो हीति**। सुखसाध-
20 नस्याप्यस्त्यौपाधिकं[7] सुखत्वमिति भावः। अस्तु तर्हि साधनेच्छा प्रवर्त्तिकेत्यत्राह—**न च सेति**। साधनत्वज्ञानेन हि तत्रेच्छा न च तज्ज्ञानं लिङ्श्रुतिकालेऽस्ति लिङ इष्टसाधनतार्थत्वानभ्युपगमादिति।

नन्वसत्यपि साधनेच्छा लिङा ज्ञायमाना प्रवर्तयत्वित्यत्राह—**न चेति**। हेतुमाह—**स्वर्गकामा इति**। इतोऽपि वाक्यात् साधनेच्छाप्रतीतेरिति। असत्या एव
25 ज्ञायमानतया प्रवर्तकत्वमिति प्रसङ्गान्तरमाह—**लिङा चेति**[8]।

---

१ क. लिङ एवेति। २ क. अत्रै°। ३ क. न द्वितीय इति।
४ ख. त्वस्तीति।
५ क. ज्ञातेन वा पूर्वत्रापि। ६ क. युक्तानामेव स्वर्गकामिनां।
७ ख. °स्याप्यस्त्यन्योपाधिकं सुखमि°। ८ क. नेति।

ननु स्वसम्बन्धितया इच्छावगमः प्रवृत्तिहेतुः न[1] च स्वर्गकामो यागचिकीर्षावा-नित्यतः तथावगमः, तत्स्वरूपमात्रावगमादित्यत्राह—**स्वसम्बन्धितयेति**। अत्र चेष्टहानिं तावदाह—**प्रथमेति**। अनिष्टाप्तिमप्याह—**ओदनेति**।

अथ दूषणान्तरनिवक्षया संकल्पज्ञानस्य प्रवृत्तिहेतुत्वमवगम्यैव पृच्छति—**अपि चेति**। संकल्पस्य हेतुं प्रयोजनं चाह—**संकल्पविषयेति**। कुर्यामिति संकल्पो 5 यदर्थविषयस्तज्ज्ञानादेव प्रयत्ननिष्पत्तये संकल्पस्य जन्मेति पुनरपि सिद्धान्ती संकल्पं तद्विषयं च विविञ्चानः पृच्छति—**नन्विति**। इच्छा हि तावत् स्वतः सुखे भवति सुखानुशयी स्यात्, सुखसाधने च तत्साधनत्वोपाधिना भवति, ततः संकल्पात्मनः[2] इच्छाविशेषस्य विषयीभवताऽप्यनयोरन्यतरप्रकारजुषा भवितव्यम्। स तु कथं केन प्रकारेण विषयो भवतीति संकल्पविधिवाद्याह—**तत्साधनत्वादिति**। सिद्धान्ती विवक्षितं 10 दूषणमुद्गिरति[3]—**तर्हीति**। संकल्पविषयज्ञानात् संकल्पजन्मेति ब्रुवता सुखसाधनस्य तद्विषयत्वाभ्युपगमात् सुखसाधनत्वज्ञानात् संकल्पोत्पत्तित्वाभ्युपगमः[4] स्यात्। वयं चात्र संप्रतिपत्तार इति भावः।

एवमनभ्युपगमे दोषमाह—**अन्यथेति**। प्रयत्नहेतुत्वेनास्माभिरभ्युपगतानिष्टसाध-नताज्ञानं यद्यन्तरा संकल्पं न जनयेत्, ततः प्रवृत्तिहेतुत्वायोगादनर्थकमेव[5] स्यात्, न 15 हीष्टसाधनताज्ञानं कुर्यामिति संकल्पमन्तरेण प्रवृत्तिहेतुः स्यादिति किमत्र भवन्तोऽपि संकल्पस्य प्रवर्त्तकत्वमङ्गीकुर्वन्त्येवेति। अत्रोपसंहारव्याजेनाह—**तस्मादिति**। तर्हि संकल्प एव विधिः स्यादित्यत्राह—**किन्त्विति**। संकल्पस्येच्छात्मकत्वात्तस्याश्च सत्तया प्रवर्त्तकत्वात् विधेश्च लिङाद्यवगतस्यैव प्रवर्त्तकत्वान्न संकल्पो विधिरित्येतेनैतन्निरस्तम्। यदाह—महाव्रतः विधिरिच्छा प्रयत्नो वा भवेत्, कार्यं न जातुचिदिति। 20

ननु मा भूत् कर्तृधर्मस्पन्दो भावना वा विधिः मा च भूदिच्छाज्ञानं भविष्यतीत्या-शङ्क्यात्रापि प्रत्ययायोगात् सङ्करादिति हेतुद्वयमेवोत्तरमित्यभिसन्धायाह—**ज्ञानं चेति**। न तावन्निर्विषयं ज्ञानं प्रवर्त्तकम्। निर्विषयज्ञानासम्भवात् सर्वस्य ज्ञानस्य सर्वत्र प्रवर्त्तकत्वप्रसङ्गाच्च विषयविशेषावच्छिन्नस्य तु प्रवर्त्तकत्वम्। **तद्विषयोपहारेणेति**। स एव विषयो विधिरिति उपसंहरति—**इतीति**। इतिशब्दस्तस्मादर्थे। इष्टहान्यादिहेतुच- 25 तुष्कं परामृशतीति ॥ ११ ॥

---

१ ख. न तु। २ क. °त्मना°। ३ क. उद्धरति।
४ क. °भ्युपगतं। ५ क. °र्थमेव।

विवेकः

कर्त्तुरनभिधानेऽपि **वैयाकरण**नये प्रविश्यैव संख्यान्वये नियामकमाह-**स्यादेतदिति**।

"मुख्यं वा पूर्वचोदनाल्लोकवदिति" **जैमिनिसूत्रम्**। 'आग्नावैष्णवमेकादशकपालं निर्वपेत्'। 'सरस्वतीमप्याज्यस्य यजेते'त्यत्राग्नावैष्णवस्य प्रथममनुष्ठानम्, न सारस्वतस्य।

5 पूर्वचोदनात् प्रथमोद्दिष्टत्वात्। तथा चैत्र ओदनं पचतीत्यत्रापि चैत्र एव तदन्वय इत्यर्थः। सर्वान्वयापेक्षया चोद्देश्यतया प्रथमान्तस्यैव प्रथममुद्देश इति हृदयम्। अस्य कर्त्तुः कारकपरिगणनञ्च प्रथमं चोदनमिति केचित्। मतं दूषयति **नेति**। **कर्त्तरि शबिति**। यद्यपि शरीरादीनां निरर्थकत्वमेव, तथापि कर्त्तृविहिता-ख्यातविशेषसमभिव्याहारे शपोऽनुशासनात्। आख्यातस्य कर्त्तृवाचकत्वे प्रमाणोपदर्श-

10 नपरमिदमिति ध्येयम्। **तदभिहिता इति**। ताभ्यां भावकर्त्तृभ्याम्। **तेनैवेति**। ओदनः पच्यते देवदत्तेनेत्यादावपि प्रथमान्तस्यैव उद्देश्यतया प्रथमत्वेने-त्यर्थः। 'आनुशासनिकप्राथमिकत्वमि'ति **शैषिकसूत्रे** कर्मणः प्रथमोपादानमेव प्रथम-चोदनं ध्येयम्।

**वैयाकरणः** स्वमतमुपसंहरति **आक्षेपेति**। प्रथमान्तपदोपस्थाप्यतया भाव-

15 नाऽन्वयित्वेन लब्धे संख्येये संख्यान्वयनियमलाभः सम्भवति। संख्येये कर्त्तरि कर्मणि वा न आख्यातशक्ता कल्पना। ननु संख्यायाः संख्येयमात्रसाकाङ्क्षत्वात् भावनान्वयित्वस्य तन्नियामकत्वे किम्मानमत्राह **संख्येयेति**। संख्यायाः संख्येयमात्र-साकाङ्क्षत्वेऽपि भावनायाः स्वशक्तपदोपस्थापिताया अन्वयबोधे साकाङ्क्षेण प्रथमान्तप-देनान्वयस्य **व्यवस्थितिः**। अयं भावः—प्रथमान्तपदस्य स्वार्थविशेष्यकाख्यातार्थ-

20 भावनाप्रकारकान्वयबोधसामर्थ्यस्य क्लृप्तत्वात्, तदर्थसंख्याप्रकारकस्वार्थविशेष्यकान्वयेऽपि तत् कल्प्यत इत। एवमाख्यातेऽपि तथात्वमनुसन्धेयम्।

भावनान्वयिनी( -नुगामिनी' ) भावनाविशेष्यकान्वयप्रकारः। एतच्च उभयमत-साधारणम्। कर्त्तुर्वाच्यत्वेऽपि तथा नियमोपगमात्। अत एवाह **स्थितेरिति**। ननु कर्त्तुराख्याताशक्यत्वे भावनाविशेष्यत्व एव किं नियामकमत्राह **भावना चेति**।

25 **शुद्धं** कारकान्तरानवरुद्धं तत्र देवदत्तेन ओदनः पच्यत इत्यत्र कर्त्तरि भावनान्वयं वारयति **न हीति**। व्यापारवन्तं कृतिमन्तं व्यापारः कृतिः, आश्रयते अन्वीयते, तदभेदेन वा तत्र प्रथम आह **आत्माश्रय(त्व)दिति**। स्वेन तथोपस्थितेरेव स्वेन तथान्वयबोधे

हेतुत्वोपगमात् । द्वितीये-**इतरेतराश्रयादिति** । तृतीये-**अनवगाहादिति** । एतेभ्यः दोषेभ्यः समवायं प्रति व्यापारान्वयं प्रति तस्याव्यापारत्वेनोपस्थितेरनुपयोगात् । अन्यथापि वेत्यत्र तु को दोषः इति चेत्, निराकाङ्क्षत्वमेव स्वसमभिव्याहृतकारकविभक्त्यर्थविशेषणतया कृत्यर्थस्योपस्थितेः तथैवान्वयस्य निरूढत्वात् । अत एव चैत्रेणेत्यत्र विभक्त्यर्थे कृतावेव तदन्वयबोधमाशङ्क्याप्यभिहितमात्माश्रय(त्व)ादिति । सम्बन्धान्तरेण 5 स्वस्मिन्नपि स्वसत्त्वमाशङ्क्य उक्तं-**समवायं प्रतीति** । समवायेनैव संबन्धेनैव कृतौ कृत्यन्वये अनुपयोगात् अयोग्यत्वादिति तदर्थात् देवदत्त ओदनं पचतीत्यादौ कारकान्तरावरुद्धे कर्मणि अयोग्यतया अन्वयं निरस्यति-**विजातीयेति** । **प्रकाशकृतस्तु** कृतिमति कृत्यन्वये कृतौ कृत्यभावेन विशिष्टवैशिष्ट्यबोध इत्याहुः । आत्माश्रय(त्व)ादिति कृतौ कृत्यभावादित्यर्थः । ननु कृति समवायो वाख्यातार्थः, तस्य कृतिमत्यन्वयः स्यात् 10 इत्यत्राह—**समवायमिति** । अनुपयोगात् तत्समवायस्याख्यातवाच्यत्वकल्पनायामनुपयोगात् व्यर्थत्वादिति । यद्वा, समवायं पूर्वापरीभावापन्नयत्नैकसाध्यस्याख्यातेनैव बोधितत्वात् तद्बोधनाय तृतीयाया अनुपयोगात् तत्र तृतीयाया उक्तार्थतया अप्रयोगः स्यादित्यर्थ इत्याहुः । **परे तु** संबन्धान्तरेण कृतौ कृत्यन्वयमाशङ्क्य व्युत्पत्तिविरोधात् समवायेनैव तदन्वयमभिप्रेत्य समवायं प्रतीत्याहुः प्रातिपदिकविभक्तयः व्यापारानुपस्था- 15 पिका विभक्तयः, कारकान्तरानुपस्थापकत्वात् । प्रथमानिर्दिष्टेन प्रथमाप्रकृत्यर्थेन तस्य प्रथमाप्रकृत्यर्थस्य । अन्वय-योग्यतानियमात् आख्यातोपस्थाप्यभावनान्वयानुकाङ्क्षायाः कल्पनात् । तदनुगामिनी भावनानुगामिनी तेनैव भावनान्वयिनैव आश्रीयते । एकस्यान्वयबोधे यदुद्देश्यतया भासते तत्समभिव्याहारे अन्यं प्रत्यागतस्य तथाभानम् इत्यत्र दृष्टान्तमाह **नञर्थवदिति** । नञ्समभिव्याहारे प्रतियोगिनो 20 यदुद्देश्यं तत्समभिव्याहृतनञर्थस्य तथेत्यर्थः । न ब्राह्मण इत्यादिजातिगुणक्रियाद्रव्याणां विधेयतावच्छेदकतया उदाहरणानि एकपदोपात्तस्य नियामकस्य तत्रासत्त्वमाह **नञेति** । विशेषणांशेनुयोगितासम्बन्धेनान्वयः, आश्रयतासम्बन्धेन च विशेष्ये इत्यपि बोध्यम् । विशेषणे प्रतियोगिनाऽन्वयदोषमाह **न हीति** । विशेष्येणेति सावधारणम् । तथा चैत्रः अभाववानित्येवान्वयोपगमे विशेषणानां ब्राह्मणादिपदानाम् 25 अपादानस्य वैयर्थ्यं स्यादित्यर्थः । ननु तवापि ब्राह्मणत्वादेविशेषणविशिष्यप्रतियोगितयाऽनन्वये किं तदुपादानेन इत्यत्राह—**तन्निषेधेनेति** । तस्य ब्राह्मणादेविशेषणस्य विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नञर्थेऽन्वयेनैव विशेषणस्य ब्राह्मणत्वादेर्विशेषणस्यालाभादित्यर्थः । ननु अभावे ब्राह्मणीयः चैत्रो भाववानिति वान्वयोऽस्तु,

न तु चैत्रो ब्राह्मणभिन्न इति विशिष्टवैशिष्ट्यमित्यत्राह **उभयेति**। **आवृत्ताविति**। अभावद्वयबोधमभिप्रेत्य। 'सकृदुच्चरित' इति न्यायेन एकस्यैव भावस्य तथात्वे त्वाह **अनावृत्ताविति**। विशकलितान्वये एकवाक्यत्वस्याभावादिति। तथा च लाघवाद्विशिष्ट-वैशिष्ट्यबोधानुकूले वा आकाङ्क्षा तत्र कल्प्यत इति भावः। अत्राप्यस्मदभिमतान्वये
5 लाघवमभिसन्धायाह **तुल्यत्वादिति**। भावनाक्षिप्तं भावनान्वयि, तेन संख्याया अन्वयोपपत्तौ सन्निहितस्य स्वोपस्थापकपदसाकाङ्क्षपदोपस्थापितस्य परित्यागेन व्यवहितस्य क्लृप्तताद्दशाकाङ्क्षपदोपस्थापितस्य यः परिग्रहः अन्वयस्तस्य गुरुत्वात् भावनाया अपि तत्रान्वये लाघवान्तरमाह **भावनाश्चेति**। सामान्याक्षेपेऽपि सामान्यत आश्रयसाकाङ्क्ष-त्वेऽपि व्यापारानवरुद्धतया व्यापाराकाङ्क्षस्य प्रथमान्तपदोपस्थाप्यस्य परित्यागे निरा-
10 काङ्क्षस्य। द्वितीयाद्यन्तोपस्थापितस्य यो व्यापारान्वयस्तस्यानुपपत्तेः। ननु तस्य निराकाङ्क्षत्वेऽपि भावनायाः साकाङ्क्षत्वादेवान्वयोऽस्तु इत्यत्राह **न हीति**। स्वाभिमते परस्प(स्प)राकाङ्क्षां व्युत्पादयति **प्रातिपदिकार्थो हीत्यादि**। फलेन व्यापारेण क्रियाया व्यापारः कारकतया कारकविभक्त्यर्थतया, फलसमन्वितं व्यापारान्त-रावरुद्धम्, अत एव तत्समभिव्याहृतस्य कर्त्तुस्तृतीयार्थव्यापारावरुद्धत्वेन निराकाङ्क्ष-
15 त्वादेव आक्षिप्तेन तृतीयाप्रकृत्यर्थेन शङ्कते **भावनेति**। भाव्यं भावनायाः फलं वा, तज्जन्यधात्वर्थावच्छेदकफलशालि वा? आद्ये, तदन्वय इष्ट एवेत्याह **फलेनेति**। द्वितीये, **फलसम्बन्धिन इति**। स च कर्त्ता व्यापाररुद्ध एवेति भावः। **द्वितीयेन हीति**। फलसम्बन्धी कर्त्तृकर्मान्यतरः। नन्वभिधाने कर्त्तृकर्मणोः प्रथमा, तत्राख्यातेन द्वयोरप्यनभिधाने कुतः प्रथमा, यतो नियमः स्यादिति
20 गूढ़भावेन शङ्कते **स्यादेतदिति**। यत्रान्वयतया विशेष्यतया वा आख्यातार्थस्यान्वये तात्पर्यं, तत्र प्रथमेत्येतावतैवानतिप्रसङ्गः। तत्र **चैत्रमिति**। प्रथमान्ततया प्रयुक्तं, द्वितीयान्ततया वा? आद्ये, **चैत्रमितीति**। तच्छब्दस्य न पुंलिङ्गतया प्रथमायां प्रयोगो व्याकरणविरुद्ध इत्यर्थः। द्वितीये त्वाह **द्वितीयेति**। कर्मवचनत्वेन कर्मत्वान्वितं वा बाधकत्वेन तत्संबन्धात्तदन्वयबलात् भाव्या(न)पेक्षणी कर्माकाङ्क्षारहिता,
25 भाव(क)मात्रमाश्रयमात्रमपेक्षते **आकाङ्क्षति**। भावकत्वं विपर्ययात् चैत्रस्यैव पटं प्रति भावकत्वसम्भवात् अनाप्तेन तथा वाक्यार्थः। अत्र कटस्य धात्वर्थे (अन्वयः) विशेषणतया विशेष्यतया वा? नाद्यः। नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पत्तेः। अत एव न द्वितीयोऽपि। नामार्थस्याख्यातार्थे विशेषणतयापि साक्षादनन्वयः। तृतीयेऽपि कटस्याश्रयतयान्वय आपाद्यते। विशेष्यतासम्बन्धेन आद्ये योग्यत्वासम्भवः। द्वितीयेऽपि

आश्रयतया विशेष्यतया च एकदा स्वार्थान्वयं बोधयित्वा विशिष्टवैशिष्ट्यबोधेऽव्युत्पत्तिः। अन्यथा अर्त्तृकर्मवाचकत्वेऽपि पक्ष्यते चैत्र ओदन इति प्रयोगस्य दुर्वारत्वमेव। न च विशेष्यतयैवोभयत्रान्वयोऽस्तु परस्मैपदस्य, तेन सम्बन्धेनाप्यन्वये व्युत्पत्तेरित्यभिप्रायेणाह **नेत्यादि**। अयं भावः—चैत्रे विषयतासम्बन्धेन कृत्यन्वयाय प्रयोगः, आश्रयतया वा ? आद्ये, कर्त्राकाङ्क्षाया अनुपगमात्। नित्यं साकाङ्क्षतया आद्ये, 5
कर्त्राकाङ्क्षान्वयापर्य्यवसानम्, द्वितीये आश्रयतया यत्र कृतेरन्वयः, तत्र श्यनोऽसाधुत्वात् क्रियत इति न प्रयोग इति। **विशेषस्य कर्तुर्व्यज्यतामिति**। कटः करोतीति चैत्रेण, चैत्रः क्रियते कटेनेत्यादि प्रयोगः स्यादित्यर्थः। यत्राश्रयतासम्बन्धेन कृतेरन्वयस्तत्रैव परस्मैपदं, यत्र विषयतया तत्रैव च श्यनो निमित्तमात्मनेपदम्। न च ख(क)ट-
चैत्रयोस्तथान्वयसम्भवोऽयोग्यत्वात्, तद्भ्रमेण च प्रयुज्यत एवेत्यभिप्रेत्याह '**स्व(अ ?)-** 10
**प्रयोगादि**'ति। अनुशास(ने)नेत्यर्थः। एतत् प्रयोगः। '**लोकस्य**' पूर्वपूर्वप्रयोगकर्त्तुरिति। **न हीति**। **गार्गिकयेति**। गोत्रवाचकपदात् श्लाघायां गम्यमाना(यां) स्त्र्यधिकारेण गर्गत्वेन श्लाघते इत्यर्थः। 'द्वन्द्वायु(मु)ष्यकु(श)लादेरिकण् स्त्रियामित्यधिकृत्य "गोत्रचरणाच्छ्लाघाविक्षेपतदवेतेषु इकण्प्रत्ययो विहितः। **शङ्कते तस्येति**।
तदुपाधिना श्लाघापदसमभिव्याहारेण"। तदेव तदुपाधिनैव विहितत्वमेव। **उत्तरं** 15
**लोक इति**। तदेव प्रामाणिकप्रयोगविरुद्धम्। तदर्थं किं तर्हि ? किमर्थं कारणानुशासनं प्रयोगाप्रयोगाभ्यामेव व्युत्पत्तिसम्भवादित्यत्राह **न हीति**। तथा च तथा प्रयोगार्थं येन केनापि लघुप्रतिपत्तित्वेन प्रकारेण **व्याकरणकृतो** बाललालनायाश्लाघयैव व्युत्पादितवन्त इत्यर्थः। आख्यातान्तरवैलक्षण्येन लिङः प्रवृत्तिप्रयोजकत्वमाह **स्यादे-**
**तदिति**। कालविशेषो वर्त्तमानत्वादिस्तत्संबन्धात् अन्वयिनी सा भावना। 20
**यत्नपदेनेति**। न हि यत्नपदं प्रवृत्तानुपयोगीति भावः। एवमग्रेऽपि। **विषयेति**। विषयोपरक्तं तज्ज्ञानं प्रवर्त्तकम्। न च यत्नपदं तज्जनकमित्यर्थः। **कर्त्तृसंख्येति**। कर्त्तृभिस्सम्पातायातम्। ततो यागयत्नवानित्यतः। **एतेनाप्रवृत्तेरिति कारिकांशो** व्याहतः। यत्न इत्यस्य ज्ञायमान इत्यादिस्तेन लिङो नानर्थक्यम्।
इत एवारुचेराह **यत्नप्रतीतिरिति**। स्वरूपत इति शेषः। तेन कृतीष्टसाधन- 25
ताधियः प्रवर्त्तकत्वेऽपि न क्षतिः। तत्रारुच्यभिमानेन वा एतत्। न च सापि इच्छापि फलगोचरा उपायगोचरा प्रतीता यत्नोपयोगि(नी) येन स्वर्गकाम इति पदात्तदुपस्थापकतया प्रवर्त्तकता प्रसज्येत। एवम् उपायविषयतया अपि तत्त्वमनुसन्धेयम्। ( सैव ? ) निरुक्तेच्छैव। **न च लिङः श्रुतीति**। येन तत्सहकारे लिङः प्रवर्त्तकं

स्यादिति। ताम् इच्छाम। तथा च सैव तद्व्यापार इति भावः। तस्या लिङः तज्ज्ञानत्वेन ( -जनकत्वे ? )। **व्युत्पत्तिग्रहेति**। ज्ञानजननायैव तदुपयोगादिति भावः। नन्विच्छाजनकत्वे व्युत्पत्तिग्रहस्यान्वयव्यतिरेकात् सहकारिताऽस्तु इत्याशङ्क्य **प्रत्ययत्यागादिति कारिकाशं** व्याकरोति **अनुपलब्धेति**। एतेनेत्यादि-
5 प्रयोजकनियोगोच्चरं प्रयोज्यवृद्धस्य उपलब्धस्य प्रवृत्त्या बालव्युत्पत्तिः, व्युत्पद्यमानो बालः स्वात्मनि स्वीयस्तनपानादिप्रवृत्तौ यो हेतुरवगतस्तमेवाश्रयेत्, तत्रैव व्युत्पाद्येत। कीदृशः स्वात्मन्यवगतस्तत्राह **स्वयं चेति**। **कुर्य्यामिति**। कृतीच्छायाः प्रवर्त्तकत्व-मनुसृत्य व्यापारो वा लिङर्थः। अत्र स एव संकल्प्य एव कुर्य्यामित्यस्यार्थं विकल्प्य दूषयति **कुर्य्यामिति**। **आत्मनीति**। तस्याः कृतेस्तां प्रति हेतुत्वे
10 आत्माश्रयात्। अन्योन्यकृते शुद्धे तु इतरेतराश्रयादि ( ति ? ) बोध्यम्। एतेन **विरोधत इति [ ८ ] कारिकांशो** व्याहृतः। फलेच्छा सुख-दुःखाभावान्यतरेच्छा निसर्गवाहितयाऽसति प्रतिबन्धके स्वज्ञानमात्रासाधारणकारक-(ण)तया सत्यपि यत्नात् प्राक् विद्यमानापि अन्यविषयत्वात् यत्नविषयाविषयत्वात् तदर्थं फलेच्छोत्पादाय कारणान्तरतः स्वविषयज्ञानमात्रात् तत्प्रतीत्यर्थं फले ज्ञानाय
15 अनु शाब्दप्रवृत्तिविशेषे शाब्दं तज्ज्ञानमपेक्षितम् इति यदि ब्रूयात् तदाह **तदभिधाने चेति**। ननु सामान्यतः फलेच्छाया विध्यर्थत्वेऽपि स्वर्गेच्छावत्त्वं कर्त्तुर्नाधिगतमिति तदर्थं तदुपादानमित्यशङ्क्याह **यदि चेति**। अन्यत्रापि स्वविषय-साधनभिन्नेऽपि अज्ञातस्य हेतुफलाभावस्य, ज्ञातस्य तत्साधकस्य स्वविषयसाधनत्वेन ज्ञातस्य नियामकत्वे स्वविषयसाधनत्वेन ज्ञाते फलेच्छा प्रवर्त्तयतीत्युक्तावित्यर्थः।
20 तदिच्छैव उपायेच्छैव समानविषयकत्वेन तत्त्वे लाघवादिति भावः। उपायेच्छाया व्यभिचारं निरस्यति **यो यदिति**। तत्साधनं तत्साधनत्वेन साधनम्। सा उपायेच्छा सती विद्यमाना तज्ज्ञानम् उपायेच्छाज्ञानमनिच्छन्नपि परनिष्ठतादृशेच्छा-ज्ञानवान् सञ्जातबाधोऽपि अतद्विषयेच्छावानिति ज्ञानं प्रवर्त्तकं, न चानिच्छन् तद्वत्तयापि फलबलात् प्रतिबन्धकत्वोपगमात्। अत एवोक्तं न ह्यननुजानन् जानातीति कश्चित्
25 प्रत्येतीति इत्यभिप्रेत्याह **स्वसंबन्धितयेति**। तदवगमः उपायेच्छावगमः, तथा प्रवर्त्तकः, न तु सामान्यतः स्वार्थोपरागेण। **प्रथमपुरुषेणेति**। ( न च ? ) यजेतेत्यत्र यागेच्छावत्त्वेन कर्त्तुर्बोधे उत्तमपुरुषापत्त्या तदतिरिक्त एव विशेष्यतया भासत इति वाच्यम्। तथा च तद्विधेः प्रवर्त्तकत्वं न स्यादित्यर्थः। ननु स्वर्गकामत्वेन अस्य विशेष्यतया भानेऽपि अहन्त्वेन तथा भानाभावान्नोत्तमपुरुष इति ? ननु विद्यमानायां

चिकीर्षायां तथा ज्ञानानुभव इत्येव, विद्यमानायां तु प्रवृत्तिस्त्वयाभ्युपेयत एवेत्यनुशयादाह **अपि चेति**। संकल्पज्ञानं प्रवर्त्तकमित्युक्तम् त्वया संकल्प एव कुतो भवति त्वया च संकल्पहेतुत्वेन यदुक्तव्यं तदेव प्रवर्त्तकम् अस्त्विति भावः। संकल्पस्य कुतो जन्मेत्यत्रोत्तरं **संकल्पज्ञानादेवेति**। किमर्थं चेत्यत्र **प्रयत्नार्थं चेति**। तत्र संकल्पज्ञानमात्रादेव यदि संकल्पस्तथात्वे यागचिकीर्षा वा नित्यतोऽपि संकल्पम् 5 उत्पाद्य प्रयत्नं जनयेत्। अथेष्टसाधनताज्ञानमपि तत्सहकारि, तदा आवश्यकत्वात्तदेवे-च्छाजनकमस्तु, किं संकल्पज्ञानेनेति इष्टसाधनत्वमेव विध्यर्थः स्यादित्यक्षरतात्पर्य्याभ्यामाह **नन्वित्यादि**। स्वभावतः इतरेच्छानधीनः, औपाधिक इष्टसाधनताज्ञानात् पाकादीच्छायां तथावधारणादिति भावः। संकल्पविषयस्तु प्रत्ययक्लृप्तेष्टसाधनताज्ञानं विना कथमिच्छाजनक इति शेषः। इष्टसाधनताज्ञानं विनेत्यंशमसहमान आह 10 **तत्साधनत्वादेवेति**। इष्टसाधनताज्ञानसहकारेणेत्यर्थः। तर्हि इष्टसाधनताज्ञान-स्यावश्यापेक्षणीयत्वात् तत्साधनत्वज्ञानात्तत एव व्यवच्छेद्यमाह **न त्विति**। भवितुमर्हति संकल्पजननत्वोपगमे नियतान्वयव्यतिरेकानुविधायीष्टसाधनताज्ञानन्तत्र निष्प्रयोजनमापद्यते। तथा च संजातबोधोऽपि इच्छाज्ञानमात्रात् उपायमिच्छेदिति भावः। उपसंहरति **तस्मादिति**। असौ संकल्पः, विधिः विधिप्रत्ययार्थतज्ज्ञान- 15 स्यानुपयोगादिति भावः। ज्ञानं च विधिज्ञानं च विषयोपहारेण विलक्षणेन विषयेणावच्छिन्नमेव व्यवहारयति प्रयत्नं च जनयति इति कृत्वा निरुक्तानां कर्त्तृधर्माणां तथा विषयत्वाभावेन तेषां विध्यर्थताया व्युदासः निरासः। हेतुज्ञानमेव कर्त्तृधर्मो विध्यर्थोऽस्तु इत्याशङ्क्याह **ज्ञानं चेति**। ज्ञानमित्यादितो प्रवृत्त्यादिलक्षणविषयो-परक्तं ज्ञानमेव तदर्थो वाच्य इत्यावश्यकत्वात् स एव विध्यर्थोऽस्तु, किं ज्ञानज्ञानेनेत्याह 20 **ज्ञानं चेत्याहुः** ॥ ११ ॥

अस्तु तर्हि कर्म्मधर्म्मः । नेत्युच्यते,

**अतिप्रसङ्गान्न फलं नापूर्वं तत्त्वहानितः ॥**
**तदलाभान्न कार्यञ्च न क्रियाऽप्यप्रवृत्तितः ॥ १२ ॥**

कर्म्म हि फलं वा स्यात् , तत्कारणमपूर्वं वा, तत्कारणं क्रिया वा ? न प्रथमः
5 फलेच्छायाः प्रवृत्ति प्रत्यहेतुत्वात् , अतिप्रसङ्गादित्युक्तत्वात् । न द्वितीयोऽव्युत्पत्तेः ।
लिङो हि प्रवृत्तिनिमित्तमपूर्वत्वं वा स्यात् , कार्यत्वं वा स्यात् , उभयं वा ? न प्रथमः ।
शब्दप्रवृत्तिनिमित्तस्यापूर्व्वत्वस्य प्रमाणान्तरादवगतावपूर्वत्वव्याघातात् , अनवगताव-
व्युत्पत्तेः, सम्बन्धिनोऽनवगमे सम्बन्धस्य प्रत्येतुमशक्यत्वात् । तत एवावगतावितरे-
तराश्रयदोषात् ।

10 न च गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दवत् अपूर्वे प्रवर्त्तते लिङिति
युक्तम् । तत्रोभयोरपि प्रतीयमानत्वेन सन्देहे कल्पनागौरवपुरस्कारेण पृथिवीत्व एव
सङ्गतिविश्रान्तेरुपपत्तेः, न त्वत्रापूर्वत्वप्रतीतिः ।

स्यादेतत् , कार्यत्वमुपलक्षणीकृत्य तावदेषा लिङ् प्रवृत्ता, तदुपलक्षितश्च यागो
वा यत्नो वाऽन्यो वा शब्देतरप्रमाणगोचरो नाधिकारिविशेषणस्वर्गसाधनसमर्थः । न
15 चाकाम्यफले कामी नियोक्तुं शक्यते । ततोऽन्यदेवालौकिकं किञ्चिदनेनोपलक्ष्यते,
यो लिङादिप्रवृत्तिगोचर इति किमनुपपन्नमिति चेत् । उपलक्षणं हि स्मरणमनुमानं
वा ? उभयमप्यनवगतसम्बन्धेनाशक्यम् , न हि संस्कारवन्मनोवददृष्टवद्वा कार्य-
त्वमपूर्वत्वमुपलक्षयति, ज्ञानापेक्षणात् । ततो हस्तीव हस्तिपकं, धूम इव धूमध्वजं,
तत्सम्बन्धज्ञानादुपलक्षयेत् , न त्वन्यथा ।

20 तथा च न्यायसम्पादनाऽप्यरण्ये रुदितम् , न हि युक्तिसहस्रैरप्यविदिते सङ्ग-
तिग्रहोऽविदितसङ्गतिर्वा शब्दः प्रवर्त्तते इति । एतेन भेदाग्रहात् क्रिया कार्ये व्युत्पत्तिरि-
ति निरस्तम् , न ह्यज्ञाते भेदाग्रहो व्यवहाराङ्गम् , अतिप्रसङ्गात् ।

किञ्चापूर्वत्वे प्रवृत्तिनिमित्ते कल्प्यमाने लौकिकी लिङनर्थिका प्रसज्येत,
तत्रोपलक्षणीयाभावात् । तत्र कार्यत्वमेव प्रवृत्तिनिमित्तमिति यदि, प्रकृतेऽपि
25 तथैवास्तु क्लृप्तत्वात् सम्भवाच्चेति ॥

अस्तु तर्हि तदेव प्रवृत्तिनिमित्तं, तर्कसम्पादनया त्वपूर्वव्यक्तिलाभ इति चेत् ।
न । नित्यनिषेधापूर्वयोरलाभप्रसङ्गात् । न चास्मिन् पक्षे एकत्र निर्णीतेन
शास्त्रार्थेनान्यत्र तथैव व्यवहार इति सम्भवति । कार्यत्वस्यैव प्रवृत्तिनिमित्तत्वेन
निर्णीतत्वात् , न त्वपूर्वत्वस्य । न्यायसम्पादनायाश्च तत्रासम्भवात् । फलानुगुण्येन
हि व्यक्तिविशेषो लभ्यते, न च तत् तत्र श्रूयते । न चाश्रुतमपि कल्पयितुं शक्यते ।
30 बीजाभावात् ।

तद्धि विध्यन्यथाऽनुपपत्त्या कल्प्येत, कार्य्यत्वप्रत्ययान्यथाऽनुपपत्त्या वा,
लोकवत् । न प्रथमः । भवतां दर्शने तस्योपेयरूपत्वात् , यतः श्रुतस्वर्गफलत्वेऽपि

साध्यविवृद्धिरुच्यते ! न द्वितीयः । शब्दबलेन तत्प्रत्यये तदनपेक्षणात्, लोके हि तत्प्रत्यय इष्टाभ्युपायताऽधीनो न तु वेदे इत्यभ्युपगमात् । अन्यथेष्टाभ्युपायतैव प्रथमं वेदादवगन्तव्या, प्रमाणान्तराभावात्, ततः कार्य्यतेत्यानुमानिको विधिः स्यात्, न शाब्दः ।

आनुमानिकं फलमस्तु, यत्कर्त्तव्यं तदिष्टाभ्युपाय इति व्याप्तेरित्यपि न युक्तम् । सुखेन व्यभिचारात् । अन्यत्वे सतीति चेत् । न । दुःखाभावेन व्यभिचारात् । फलं विहायेति चेत् । तदेव किमुक्तं स्यात् । इष्टं स्वभावत इति चेत् । तर्हि ततोऽन्यदनिष्टं स्यात्, तच्च कर्त्तव्यमिति व्याघातः । तत्साधनमिति चेत् । तत्साधनत्वे सतीति साध्याविशिष्टं विशेषणम् । स्वभावतो नेदमिष्टं कर्त्तव्यञ्च, ततो नूनमिष्टसाधनमिति साधनार्थं इति चेत् । न । स्वभावतो नेदमिष्टमित्यसिद्धेः । अनन्योद्देशप्रवृत्तकृतिव्याप्यत्वात्, अन्यथा तदसिद्धेः, ततो व्याघातादन्यतरापाय इति ।

अस्तु नित्यनिषेधापूर्व्वयोरलाभः, किं नश्छिन्नमिति चेत् । किं नश्छिन्नं, यदा कामाधिकारेऽपि तदलाभः, न हि लिङा कार्य्यं स्वर्गसाधनमुक्तम् । नापि स्वर्गकामपदसमभिव्याहारान्यथाऽनुपपत्त्या तल्लब्धं, ब्राह्मणत्वादिवदधिकार्य्यवच्छेदमात्रेणैवोपपत्तेः ।

न चेदमनुमानं—यस्य यदिच्छातो यत्कर्त्तव्यं, तत्तस्येष्टसाधनम्—इति । अन्येच्छया स्वाभाविककर्त्तव्यत्वासिद्धेः । अन्येच्छयैव तत्कर्त्तव्यतायाः सुखेनानैकान्तिकत्वात्, औपाधिककर्त्तव्यतायाश्चेष्टसाधनत्वमप्रतीत्य प्रत्येतुमशक्यत्वात् ।

किमनया विशेषचिन्तया, प्रतीयते तावच्छब्दादन्यदिच्छतोऽन्यत्कार्यमित्येतावतैवानुमानमिति चेत् । नन्वन्वितमभिधानीयं, योग्यञ्चान्वीयते, अन्यदिच्छतश्चान्यत् कर्त्तव्यमन्वयायोग्यं, तत्कथमभिधीयताम् ? तत एव तत्साधनत्वसिद्धिरिति चेत् । एवं तर्हीष्टसाधनतैकार्थसमवायिकर्त्तव्यत्वाभिधानादनुमानानवकाशः । न चान्विताभिधानेऽपि तत्साधनत्वसिद्धिः । अधिकार्यवच्छेदमात्रेणाप्यन्वययोग्यतोपपत्तेः ।

न च कार्यत्वमपूर्वे सम्भवति । तद्धि कृतिव्याप्यता चेत्, व्रीह्यादिष्वेव, सिद्धत्वात् । कृतिफलत्वञ्चेत्, यागस्यैव, ततस्तस्यैवाहत्योत्पत्तेः । कृत्युद्देश्यता चेत्, स्वर्गस्यैव, निसर्गसुन्दरत्वात् । न त्वपूर्वस्य, तद्विपरीतत्वात् । स्तनपानादिवदौपाधिकीति चेत् । साऽपि यागस्यैव । स्वर्गस्य साध्यत्वस्थितौ यागस्यैव साधनत्वेनान्वयात् ।

कालव्यवधानान्नैतन्निर्व्वहतीति चेत्, यथा निर्व्वहति श्रुतानुरोधेन तथा कल्प्यताम् । व्यापारद्वारा कथञ्चित् स्यात्, न तु भिन्नकालयोर्व्यापारव्यापारिभावः । कारणत्वञ्च व्यापारेण युज्यते । अव्यवधानेन पूर्व्वकालनियमश्च तत्त्वम् । अन्यथाऽतिप्रसङ्गादिति चेत् । न, पूर्व्वभावनियममात्रस्य कारणत्वात् । कार्य्यानुगुणावान्तरकार्य्यस्यैव व्यापारत्वात्, कृषिचिकित्सादौ बहुलं तथा व्यवहारात् । लाक्षणिकोऽसाविति चेत् । न । मुख्यार्थत्वे विरोधाभावात् ॥

अस्तु तर्हि पुत्रेण हते ब्रह्मणि चिरध्वस्तस्य पितुस्तमवान्तरव्यापारीकृत्य कर्त्तृत्वम्, तथा च लोकयात्राविप्लव इति चेत्। न। सत्यपि सुते कदाचित्तद-करणात् तस्मिन्नसत्यपि कदाचित् करणादनिर्वाहकतया तस्य व्यापारत्वायोगात्। यं जनयित्वैव हि यं प्रति यस्य पूर्वभावनिर्वाहः, स एव तं प्रति तस्य व्यापारो नापरः,
5 यथाऽनुभवस्य स्मरणं प्रति संस्कारः, तस्य ह्यन्वयव्यतिरेकानुविधाने सिद्धे तदन्यथाऽ-नुपपत्त्या संस्कारः कल्प्यते, न त्वन्यथा, तथेहापि। न चेदेवं, तवापि ब्रह्मभिदुरश-रविमोकसमसमयहतस्य हन्तृत्वं न स्यात्, स्याच्च स्वनिवेशनशयानस्य तत्पितुरिति। एतेनोभयं वेति निरस्तम्।

अस्तु तर्हि क्रियाधर्म्म एव कार्यत्वं विधिः, सर्वो हि कर्त्तव्यमेतदिति प्रत्येति,
10 ततः कुर्यामिति सङ्कल्प्य प्रवर्त्तते इति चेत्। न। कर्त्तव्यं मयेति कृत्यध्यवसायार्थो वा स्यात्? कर्तव्यं मयेत्युचितार्थो वा स्यात्? तत्र प्रथमः सङ्कल्पान्न भिद्यते। व्यवहितकार्ये सङ्कल्पो हि कर्त्तव्यो मयेति, सन्निहितकार्यसङ्कल्पस्तु कुर्यामिति। स च न लिङर्थः। सत्तामात्रेण प्रवर्त्तनादित्युक्तम्। तदेतत् कर्त्तव्यतायां जातायां प्रवर्त्तते इति वस्तुस्थितौ भ्रान्तेर्ज्ञातायामिति गृहीतम्।

15 औचित्यन्तु क्रियाधर्म्मः प्रागभाववत्त्वं, तस्मिन् सति शक्यत्वं वा, तस्मिन् सति कर्तारं प्रत्युपकारकत्वं वा? प्रथमे कुतश्चिदपि न निवर्त्तेत। द्वितीये दुःखेऽपि तथाविधे प्रवर्त्तेत। तृतीये तु वक्ष्यते॥ १२॥

## आमोदः

कर्मधर्म इति। कार्यत्वमित्यर्थः। विधिरित्यनुषङ्गः। तदेव लिङादि-पदजन्यज्ञानविषयोऽस्त्वित्यर्थः। तत्र प्रवृत्तियोग्यं कार्यं विकल्पयति—
20 कर्म हीति। फलं स्वर्गादि तत्कारणं स्वर्गादिकारणं तत्कारणमपूर्वकारणं, क्रियायागादिरित्यर्थः। तदेतेषां मध्ये कस्य कार्यत्वं धर्मं ज्ञात्वा पुरुषः प्रवर्त्तते इत्यभिप्रायः। अत्र कारिकापठितुमुचिता। अतिप्रसङ्गादिति। स्वर्गः कार्य-मिति ज्ञानात् स्वर्ग एवेच्छा स्यात्। सा च कुत्र प्रवर्त्तयेदित्यर्थः। अपूर्वं कार्यमिति ज्ञानं यदि लिङा जन्येत तदा व्युत्पत्तिग्रहदशायामेवापूर्वविगताव-
25 पूर्वत्वव्याघातः। शब्देतरप्रमाणगम्यत्वस्य त्वयाऽभ्युपगमात्तदलाभात्। अपूर्वस्य पूर्वमलाभात्। अनुपस्थितेः कार्यत्वेनापि प्रवृत्तिनिमित्तेन न तदुपस्थितिः। क्रियाया अपि यागादेः कार्यत्वं लिङा ज्ञात्वा न प्रवर्त्तते क्रियाया दुःखमय-त्वादित्यर्थः। कारिकया तमेव विशदयति—फलेच्छाया इति। उक्तत्वादि-ति। यदि कालविषयैव सा साधनविषयं यत्नं जनयेत् अन्यत्रापि प्रमुचीते
30 त्यादिनेत्यर्थः। अव्युत्पत्तेरिति। विवरितुमाह—लिङो हीति। उभयमि

ति । अपूर्वत्वसमानाधिकरणं कार्यमित्यर्थः । अपूर्वत्वेति । शब्देतरप्रमाण-
विषयत्वस्य त्वयाऽनभ्युपगमादित्यर्थः । सम्बन्धिन इति । प्रवृत्तिनिमित्तस्ये-
त्यर्थः । सम्बन्धस्य सङ्केतस्येत्यर्थः । ननु व्युत्पत्तिरपि लिङ्पदादेव
स्यादित्यत आह—तत एवेति । लिङ्पदादर्थं प्रतीत्य व्युत्पन्नः स्यात्,
व्युत्पत्तौ च सत्यां तदर्थप्रत्ययः स्यादित्यर्थं । ननु गन्धवत्त्वोपलक्षितं 5
पृथिवीत्वं यथा पृथिवीपदे प्रवृत्तिनिमित्तं तथा कार्यत्वोपलक्षितमपूर्वत्वमेव
प्रवृत्तिनिमित्तमदूरविप्रकर्षात् सामानाधिकरण्यात् उपलक्ष्योपलक्षकभावः
स्यादित्याशङ्क्य निराकरोति—न चेति । विशेषमाह—तत्रेति । तत्रो-
भयोर्युगपदुपस्थितौ गन्धवत्त्वस्योपाधित्वेन गौरवमिति पृथिवीत्वमेव
प्रवृत्तिनिमित्तमित्यवसीयत इत्यर्थः । ननु कार्यत्वेनैव रूपेण कार्यं किञ्चित् 10
स्मारयति । लिङ्पदं प्रथममनन्तरमन्विताभिधानदशायां यागं यत्नं घटादि-
कञ्च तिरस्कृत्य काम्याव्यवहितमपूर्वमादाय पर्यवस्यतीति शङ्कते—स्यादेत-
दिति । अधिकारिविशेषणं यः स्वर्गः तत्साधनसमर्थो न यागादिराहत्ये-
त्यर्थः । ननु यागादि साक्षात्स्वर्गसाधनं मास्तु, किमेतावता इत्यत आह—
न चेति । अकाम्यफलेति । न काम्यं स्वर्गादिकमव्यवधानेन फलं यस्येत्यर्थः । 15
नियोक्तुं प्रवर्त्तयितुम् । तत इति । अन्यदेव स्वर्गसाधनमनेन कार्यत्वेन
धर्मितया उपलक्षणीयं तच्चापूर्वमेवेत्यर्थः । कार्यत्वेन धर्मि किञ्चिदुपलक्षणीय-
मिति यदुक्तं तत्र पृच्छति—उपलक्षणमिति । कार्यत्वेन धर्मेणापूर्वस्य
धर्मिणः सम्बन्धस्यावगमो नास्तीति नेदमुपलक्षणीयमित्यर्थः । ननु
यथा संस्कारादीनामज्ञातमेव ज्ञापकत्वं तथा प्रकृतेऽपि स्यादत आह— 20
न हीति । ज्ञानापेक्षणादिति । स्मारकस्यानुमापकस्य वा सम्बन्धज्ञाना-
पेक्षणादित्यर्थः । एतदेव दृष्टान्तेन दर्शयति—तत इति । न्यायसम्पा-
दनेति । यागे यत्ने वा नाधिकारिविशेषणं स्वर्गसामर्थ्यं किन्त्वपूर्वं
तथेत्यादिना यो न्यायः सम्पादितः सोऽपि व्यर्थ एव सम्बन्धावगमाभावा-
दित्यर्थः । कथमरण्यरुदितमित्यत आह—न हीति । ननु क्रियाकार्यत्वे 25
एव व्युत्पत्तिग्रहः, परन्तु क्रियया सममपूर्वस्य भेदाग्रहात् अपूर्वमेवोपस्थापयति
लिङित्यपि नेत्याह—एतेनेति । यद्वाऽपूर्वं न भेदाग्रहात् क्रियाकार्यत्वे
व्युत्पत्तिरित्यपूर्वमेव लिङुपस्थापयतीति निरस्तमित्यर्थः । अज्ञातभेदाग्रहस्य
व्यवहाराङ्गत्वे सर्वः सर्वत्र प्रवर्त्तेत, न तु रक्षणार्थी मुक्तावेव भ्रमादित्याह—

न हीति । अनर्थिकेति । तत्र नापूर्वत्वं प्रवृत्तिनिमित्तमित्यर्थः । कार्यत्वेना-
पूर्वत्वमुपलक्षणीयमित्यत्र दोषमाह—तत्रेति । प्रकृतेऽपीति । वैदिकलिङापि
इत्यर्थः । क्लृप्तत्वात् लौकिकलिङि सम्भवात् अन्वययोग्यत्वात् उपस्थि-
तत्वाच्चेत्यर्थः । ननु कार्यत्वेनैव प्रकारेण पूर्वमभिधत्तां लिङित्याशङ्कते—
5 अस्तु तर्हीति । तर्कसम्पादनायेति । अन्यस्य स्वर्गसाधनायोग्यत्वात्
कार्यत्वेनापि रूपेण योग्येनापूर्वमेवोपस्थापनीयमित्यर्थः । पूर्वं तु कार्यत्वेना-
पूर्वत्वमुपलक्षणीयम् । अपूर्वत्वेनैवापूर्वोपस्थितिरिति भेदः । नित्येति ।
"अहरहः सन्ध्यामुपासीत" "न कलञ्जं भक्षयेदि"त्यत्र स्वर्गादिकं फलं न श्रूयते
येनायोग्यतया क्रियानिरासादपूर्वलाभः स्यादित्यर्थः । ननु काम्यस्थले येन
10 रूपेणापूर्वलाभः तेनैव नित्यनिषेधापूर्वलाभोऽपि नहि वैदिकलिङ्त्वेनात्र
कश्चिद्विशेष इत्यत आह— न चेति । भवेदेवं यदि अपूर्वत्वं प्रवृत्तिनिमित्तं
स्यात्, किन्तु कार्यत्वमेव, तथा च कथमपूर्वलाभ इत्यर्थः ननूक्तमन्यस्या-
योग्यत्वान्न्यायसम्पादनबलादपूर्वलाभ इत्यत आह—न्यायसम्पादनायाश्चेति।
न्यायसम्पादना हि काम्याव्यवहितसाधनत्वं, नित्ये च काम्यं नास्त्येवेत्यर्थः ।
15 न्यायसम्पादनामेवाह—फलेति । तदिति । फलमित्यर्थः । तत्रेति । नित्य-
निषेधस्थल इत्यर्थः । ननु विश्वजिन्न्यायात् तत्रापि फलं कल्पयित्वा न्याय-
सम्पादना स्यादत आह—न चेति । बीजेति । फलकल्पने बीजमेव नित्ये
नास्तीत्यर्थः । बीजाभावमेव स्फुटयति—तदितरेति । विधिरेव फलं
विनानुपपन्न इति तावन्नास्ति सन्ध्यामुपासीतेति विधेस्त्वया फलं विनापि
20 स्वीकारात् । तस्यैवोपेयरूपत्वात्, स्वतः सुन्दरत्वात्, अन्येच्छानधीनेच्छा-
विषयत्वादिति यावत् । यत इति । यत्रापि स्वर्गः फलं श्रूयते तत्रापि
साध्यस्यापूर्वस्य वृद्धिः स्वर्गादिफलपर्यन्तस्थायिता, न तु स्वर्गादिरेव
स्वातन्त्र्येण तत्र फलम् अपूर्वस्य स्वतः सुन्दरत्वभङ्गप्रसङ्गात् । विश्वजितस्तु
काम्याधिकाराम्नातत्वेन फलकल्पनौचित्यात् ईक्षितवद्दर्शनादित्यर्थः । इष्ट-
साधनताज्ञानमन्तरेण कार्यत्वप्रत्यय एव नोत्पद्यत इति इष्टसाधनताज्ञानार्थ-
25 मिष्टं किञ्चिन्नित्यनिषेधमूलेऽपि कल्पनीयमिति कल्पनाबीजमेतदेव । यथा
लोके कार्यत्वमिष्टसाधनतालिङ्गकमिति । यद् द्वितीयं तद् दूषयति —
न द्वितीय इति । शब्दबलेनेति । वेदे निजैव चेत् कार्यत्वं त्वन्मते बोध्यते,
तदेष्टाभ्युपायतारूपप्रतिपत्त्यर्थं कथमिष्टं किञ्चित् कल्प्यतामित्यर्थः । तत्प्रत्यय

इति । कार्यत्वप्रत्यय इत्यर्थः । तदनपेक्षणात् इष्टकल्पनानपेक्षणादित्यर्थः । तत्प्रत्ययः कार्यत्वप्रत्यय इत्यर्थः । लोके भोजनदाविष्टाभ्युपायतान्वयव्यतिरेकगम्या, तेन तथा लिङ्गेन कार्यत्वं भोजनादावनुमाय प्रवर्त्तत इति तवाभ्युपगमादित्यर्थः । अन्यथेति । वैदिकयागादावन्वयव्यतिरेकग्रहाधीना नेष्टाभ्युपायताधीरित्यगत्या सा लिङर्थ एव त्वया वाच्या, तथा च कार्यताऽनुमातव्येति त्वन्मते विधिः शब्दो न स्यादित्यर्थः । ननु नित्यस्थलेऽपि कर्तव्यताधीस्तावत् शाब्दी यच्च कर्तव्यं तदिष्टाभ्युपायता इति व्याप्तिबलादेवेष्टोपस्थितिरिति शङ्कां निरस्यति--आनुमानिक इति । सुखेनेति । कर्तव्यत्वं हि कृत्यधीनोत्पत्तिकत्वं, तच्च सुखेऽप्यस्ति, न त्विष्टसाधनत्वमिति व्यभिचार इत्यर्थः । दुःखाभावेनेति । दुःखध्वंसेनेत्यर्थः क्षेमसाधारणकृतिसाध्यत्वमादाय दुःखप्रागभावेन वेत्यर्थ. फलमिति । तच्च सुखदुःखाभावसाधारणमिति भावः । तद्वेति । फलं निष्पाद्यश्चेत्तदा पूर्वसाधारणमेव तत्रेष्टाभ्युपायता न सिद्ध्येदिति न नित्यापूर्वलाभ इत्यर्थः । इष्टमिति । निरुपाधीच्छाविषय इत्यर्थः । तर्हीति । तथा चापूर्वस्याप्यनिष्टत्वमायातं, तथा न कर्तव्यत्वान्वय इत्यर्थः । त्वयापूर्वस्यापि स्वभावत एवेष्टत्वाभ्युपगमाच्चेति भावः । अनित्यश्च कर्तव्यश्चेत्युक्तिव्याघात एवात्रेत्याह—तच्चेति । नन्विष्टसाधनत्वे सति यत् कर्तव्यं तदिष्टसाधनमिति व्याप्तिरित्याह—तत्साधनत्वे सतीति । अत्र साध्याविशेषमाह—तर्हीति । नन्विष्टसाधनत्वेन न विशेष्यं येन साध्याविशेषः स्यात्, अपि तु सोपाधीच्छाविषयत्वे सति यत् कर्तव्यं तदिष्टसाधनमित्याह—स्वभावत इति । नित्यापूर्वस्यापि स्वभावतस्त्वया इष्टत्वाभ्युपगमात् स्वरूपासिद्धिरत्रेत्याह—स्वभावत इति । तदेव स्फुटयति—अन्यस्येति । अन्यथेति । नित्यापूर्वमपि यद्यन्योद्देशप्रवृत्तकृतिव्याप्यं तदा सन्ध्योपासनादेर्नित्यत्वं भज्येत फलाभावादपूर्वमपि तत्र निषिद्ध्येदित्यर्थः । तत इति । स्वभावत एव यदीष्टत्वं तदा न काम्यसाधनत्वं तच्चेन्न तदा स्वभावत इष्टत्वं त्वया च स्वभावत एव तस्येष्टत्वाभ्युपगमात् काम्यसाधनत्वाभावान्न तत्सिद्धिरित्यर्थः । नित्यनिषेधस्थले न्यायसम्पादनाविरहादपूर्वं मा सिद्ध्यतु काम्यस्थले तु कार्यत्वेन रूपेणापूर्ववाच्यत्वं सेत्स्यत्येवेत्याह—अस्त्वति । तदा लाभ इति । अपूर्वलाभ इत्यर्थः । एतदेव स्फुटयति—न हीति । यदि लिङा स्वर्गसाधनगतं कार्यत्वमभिधीयेत तदा क्रियाया

घटादेश्चायोग्यतया निरासादपूर्वकार्यता प्रतीयेत। तच्च नास्ति लोके वेदे नित्यस्थानस्वर्गसाधनत्वानभिधानादित्यर्थः। ननु स्वर्गकामादिसमभिव्याहार-बलात् काम्याधिकारेऽवश्यं स्वर्गसाधनमेव कार्यं लिङर्थ इत्यत आह—नापीति। यथा ब्राह्मणो यजेत, राजा राजसूयेन यजेत इत्यादावधिकारि-
5 विशेषणत्वेन ब्राह्मणत्वादीनामन्वयः। तथा च स्वर्गकामनाया अप्यधिकारि-विशेषणत्वेनैवान्वयसम्भावनायामपूर्वस्य कार्यस्य स्वर्गसाधनत्वालाभादित्यर्थः। काम्याधिकारेऽपूर्वलाभप्रकारमाह—यस्येति। यस्य कामिनो यत् स्वर्गा-दीच्छतो यत्कर्त्तव्यतया ज्ञानं भवति तत् तस्येष्टसाधनं भवत्येवेति व्याप्ति-बलात् कालान्तरभावि यदि प्रमाणं तत् प्रति साधनत्वेन यज्ज्ञायते नूनं तत्
10 स्थिरं सेत्स्यति तदेवापूर्वमित्यर्थः। न हि काम्यसाधने कामिनः कर्तव्यता-धीरिति भावः। स्वर्गमिच्छतो यद्यपूर्वे कर्तव्यताधीस्तदा तस्य निरुपाधीच्छा-विषयत्वं भज्येत त्वया च नित्यापूर्वानुरोधेन तथाभ्युपगमात् इत्याह—अन्येच्छयेति। ननु यदिष्यमाणं सत् कर्तव्यं भवति तदिष्टसाधनमेवेति व्याप्त्याऽपूर्वलाभो न तु निरुपाधीच्छाभङ्ग इत्यत आह—तदिच्छयैवेति।
15 सुखमिच्छतः सुखं कार्यं भवति न तु तदिष्टसाधनमिति व्यभिचार इत्यर्थः। ननु चापूर्वस्य लिङा औपाधिक्येव कर्तव्यता बोध्यतां माभूत्तस्य स्वतः सुन्दरत्वमित्यत आह—औपाधिकेति। अन्येच्छाधीना कर्तव्यता तावदौपाधिकी कर्तव्यता सा चान्यदिष्टं प्रतीयमानं प्रति साधनत्वेन ज्ञात एव सम्भवति। तज्ज्ञापकत्वञ्च स्वर्गकामवदस्याधिकारिविशेषणत्वेनैव ब्राह्मणवच्चरितार्थत्वात्
20 इत्यर्थः। अन्येच्छया तदिच्छया चेति विशेषचिन्ता तावदास्तां स्वर्गकामो यजेतेति विधिः स्वर्गमिच्छतोऽपूर्वकार्यमित्ययं बोधस्तावद भवत्येव। एतावता कामाधिकारे कथं नापूर्वलाभ इत्याह—किमनयेति। अन्यदिच्छतोऽन्यत् कर्तव्यतामित्ययोग्यतया वाक्यं नाभिधत्त इति। न हि घटामिच्छतः पटः कर्तव्यो भवति इत्याह—नन्विति। ननु शब्दादेवेष्टसाधनत्वं कर्तव्यत्वं च
25 द्वयमुपस्थितं त्यात्तथा चान्यदिच्छतोऽन्यत्कर्तव्यमित्यन्वययोग्यं भवत्येव यथौदन-मिच्छतः पाकः तत्साधनत्वेन ज्ञायत एवेत्याह—अत एवेति। शब्दादेवेत्यर्थः। एवमिष्टसाधनत्वमपि शब्दादेव चेदुपस्थितं तदा त्वदुक्तमनुमानमनवकाशमेवे-त्याह—एवमिति। ननु स्वर्गकामपदसमभिहारलभ्यं तत्, न तु लिङ्लभ्य-मित्यतस्तत्रानुमानमेव पर्यवस्यति साधनत्ववाचकपदाभावादित्यत आह—

**न चेति** । अत्रोक्तं स्मारयति—**अधिकार्येति** । कार्यत्वेन न्यायसम्पादनयाऽपूर्वमेव लिङ्वाच्यमत्र दूषणान्तरमाह—**न चेति** । कृतिव्याप्यता कृतिविषयत्वं कृतेः सिद्धविषयत्वनियमादित्यर्थः । **कृतिफलत्वमिति** । कृतिसाक्षान्निष्पाद्यत्वमित्यर्थः । कथमेवमत आह—**तत इति** । **कृत्युद्देश्यत्वमिति** अनन्योद्देश्यकृतिव्याप्यत्वमित्यर्थः । **तद्विपरीतत्वादिति** । 5 अन्योद्देश्यप्रवृत्तकृतिव्याप्यत्वादित्यर्थः । एतच्च निसर्गसुन्दरत्वविरहादध्यवसेयम् । ननु कृत्युद्देश्येन स्तनपाने कार्यत्वं, तथा स्वर्गोद्देश्येनापूर्वेऽपि कार्यत्वमौपाधिकमित्याह—**स्तनेति** । कृत्युद्देश्यतेत्यनुषङ्गः । **सापीति** । स्वर्गौपाधिकी कृत्युद्देश्यतेत्यर्थः । सा तु यागस्यैव न पुनरप्रतीयमानस्यापूर्वस्येत्यर्थः । ननु चिरभाविनं स्वर्गं प्रति आशुविनाशिनो यागस्य साधनत्वमनुपपन्नमतः 10 फलौपाधिकी कृत्युद्देश्यतापूर्वस्य भवितुमर्हति, न तु योग्यस्य यागस्य इति शङ्कते—**कालेति** स्वर्गसाधनतातीवानुपस्थितस्यैव प्रकृत्यर्थस्य यागस्य लिङा बोध्यते, सा च व्यापारमन्तरेणापर्यवस्यन्ती व्यापारकल्पनया पर्यवस्यतीत्याह—**यथेति** । अव्यवहितपूर्ववर्तित्वं साधनत्वं' तच्च स्वर्गं प्रति यागस्यानुपपन्नं, कारणत्वे ज्ञाते च व्यापारकल्पना, तच्चायोग्यतया लिङा बोधयितुम- 15 शक्यमिति न व्यापारकल्पनेत्याशङ्कते—**व्यापारेति** । ननूत्पादेतरव्यापारद्वारा साधनत्वं का नो हानिरित्यत आह—**न हीति** । व्यापारव्यापारिभावः कार्यकारणभावः, यद्वा भिन्नकालयोरिति सप्तमीद्विवचनम् । तथा च भिन्नकालयोः पदार्थयोः भिन्नकालीने पदार्थद्वयस्थले इति यावत् । **तत्र कथं** न व्यापारव्यापारिभाव इत्यत आह—**कारणं चेति** । कारणत्वमेव तत्र 20 कथमित्यत आह—**अव्यवधानेनेति** । नियतपूर्ववर्तित्वं कारणत्वं, तच्च यागेऽस्त्येव तदेव लिङा बोध्यते, तथा च नायोग्यत्वमिति परिहरति—**पूर्वेति** । तथा च चिरध्वस्तं कारणं व्यापारव्याप्तमिति व्याप्त्यैव व्यापारकल्पनमिति भावः । ननु तथापि तेन व्यापारेण व्यवहितं कथं कारणं स्यादित्यत आह—**कार्येति** । तथा च स्वाङ्गमव्यवधायकमिति भावः । 25 **कृषीति** । यथा कृषिर्व्यवहितापि चिरभाविने फलाय कल्पते, तत्र हि पाकजगुणोत्पत्तिर्व्यापारः, चिकित्सापि दशमूलीकषायपानादि वाशुतरविनाश्यपि धातुसाम्यादिव्यापारत्वाद् वा चिरभाविरोगोपशमाय फलाय कल्पते, तथेदमपीत्यर्थः । शस्यकारणं कृषिः, रोगोपशमनसाधनं चिकित्सेति

प्रयोगो लाक्षणिकः कारणकारणे न तु कारणे तयोर्व्यवधाने कारणत्वा-
दित्याह—लाक्षणिक इति। अतिप्रसङ्गेन व्यवहितस्य कारणमेव न
न सम्भवतीति शङ्कते—अस्त्विति। तथा चेति। तद्रूपिता(?)ब्रह्मावधित्वेन
व्यवह्रियेतेत्यर्थः। पितुः पुत्रस्तदा तत्र व्यापारः स्यात्, यदि पुत्रमन्तरेण
5 वध एव स्यात्, यदि च तस्मिन् सति अवश्यं वधः स्यात्। न चैवमिति।
परिहरति—सत्यपीति। व्यापारिव्यापारभावमेव विशदयति—यमिति।
एतदेव दृष्टान्तेन स्फुटयति—यथेति। तदन्यथा उपपत्त्येति। चिरध्वस्तं
कारणं व्यापारिव्यापारव्याप्तमिति व्याप्तेरिति भावः। तथेहापीति।
लिङा यागस्य कारणत्वेऽवगते चिरध्वस्तं कारणमित्यादिव्याप्तेर्व्यापार-
10 कल्पनमित्यर्थः। कार्यसमानकास्यैव कारणत्वाभ्युपगमे दण्डमाह—न
चेदेवमिति। ब्राह्मणवधमुद्दिश्य येन शरः क्षिप्तः स शरविमोककाल एव
मृतो ब्राह्मणश्च क्रमिकशरनिपातेन व्रणपाकपरम्परया मृतः तत्र शरक्षेप्तुर्ह-
न्तृत्वं न स्यात्, तदानीं वर्तमानस्य तत्पितुस्तु स्यादित्यर्थः। एतेनेति।
अपूर्वत्वोपस्थितिमन्तरेण च्युत्यभावेन कामाधिकारोऽपि न्यायसम्पादनावै-
15 धुर्येण चेत्यर्थः। उभयमिति। कार्यत्वमपूर्वत्वञ्च लिङ्प्रवृत्तिनिमित्तमित्यर्थः।
क्रिया यागादि। विधिरिति। प्रवर्त्तकता न विषयो लिङर्थ इत्यर्थः। अत्रा-
नुभवं प्रमाणयति—सर्वो हीति। एतादृशज्ञानेच्छाकृतीनां कार्यकारणभावस्य
सकलानुभवसिद्धत्वादिति भावः। अध्यवसायार्थ इति। अवश्यं कर्तव्यमेव
मयेति प्रतिज्ञार्थ इत्यर्थः। उचितार्थ इति। कर्तुमिदमर्हतीत्यौचित्यमात्रार्थ
20 इत्यर्थः। प्रतिज्ञायाः सङ्कल्पात्मकत्वान्न विध्यर्थत्वमित्याह—तत्रेति। ननु
मयेदं कर्तव्यमिति न सङ्कल्पाकारः, किन्त्वहं कुर्यामित्यत आह—व्यवहितेति।
ननु स एव लिङर्थः स्यादित्यत आह—स चेति। एवं तर्हि कार्यत्वं विधि-
रिति मीमांसकानां किं निबन्धनः प्रवाद इत्यत आह—तदेतदिति। भ्रम-
निबन्धन इत्यर्थः। द्वितीयं कल्पं दूषयति—औचित्यमिति। प्रागभावप्रतियोगि-
25 त्वमात्रनिबन्धनं यदि कर्तव्यत्वं तदा तज्ज्ञानात् सर्वकार्ये तक्षकचूडाद्याहरणे-
ऽपि प्रवर्तेतेत्यर्थः। दुःखेपीति। दुःखसाधनेऽपि प्रवर्त्तेतेत्यर्थः। वक्ष्यत इति।
इष्टसाधनताविधिपर्यवसन्नमिदमग्रे दूष्यमित्यर्थः। ननु स्वर्गकामो यजेतेति
वाक्यश्रवणानन्तरं पुरुषः प्रवर्त्तत इति प्रवृत्तिकारणं शब्द एव तदनन्तरं
प्रवृत्तिदर्शनात्। तथा च शब्दो यागानुकूलां कृतिं मदीयामभिधत्ते इति

विधिवाक्यात् प्रतीत्य यागानुकूलां भावनां पुरुष उत्पादयति। तथा शब्दव्यापारभूतामभिधां ज्ञात्वा पुरुषश्चेत् प्रवर्त्तते तदा सैव लिङर्थः। तदुक्तं—लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिरित्यादि। प्ररोचना स्तुतिः, सा च सुखोत्पादनद्वारा प्रवृत्त्यङ्गम्। उक्तञ्च—

अभिधां भावानामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः॥ 5

अन्यस्य शब्दापेक्षया अर्थात्मनः। तस्य भावना कृतिः सा चान्या शब्दसमवेता भावनापेक्षया ॥१२॥

बोधनी

अथ कर्मधर्मस्य विधित्वमुत्थाप्य निराकरोति—**अस्त्विति**। कर्मभिः क्रियत इति व्युत्पत्त्या फलं वा करणव्युत्पत्त्याऽपूर्वं वा भावव्युत्पत्त्या तत्करणं क्रिया वा वा विवक्ष्यते। तत्र फलस्य धर्मः तद्विषयेच्छैव सम्भवति स तावन्न विधिः। न हि फलेच्छासाधने प्रवृत्तिं प्रसूते, अतिप्रसङ्गात् न चापूर्वस्य धर्मोऽपूर्वत्वं विधिः अपूर्वस्य प्रमाणान्तरादनवगत एव व्युत्पत्तेरवगतौ नापूर्वत्वमिति हि तेषामुद्घोषः। न चापूर्वस्य धर्मस्तद्गतं कार्यत्वविधिः नित्यनिषेधाधिकारयोस्तर्कसम्पादनाभावेनापूर्वस्यैवाभावात्, न च क्रियाधर्मः तत्कार्यत्वं विधिः, संकल्पविशेषो हि तत्कार्यत्वं स च न प्रवर्त्तक इत्युक्तमिति संग्रहार्थः। 10 15

ननु कथं कर्मधर्मविधित्वनिराकरणं प्रतिज्ञाय फलापूर्वेति क्रियानिरासं गच्छत इति शङ्कानवकाशाय कर्मस्वरूपं विकल्पयति—**कर्म हीति**। यस्य धर्मो विधिर्भवेदिति विकल्पविशेषः फलेच्छाया इति सा हि न तावत्फले प्रवृत्तिहेतुः प्रवृत्त्यगोचरत्वात् फलस्य। न च तत्साधने अन्येच्छाया अन्यत्र प्रवृत्तिहेतुत्वे अतिप्रसङ्गादिति अपूर्वकर्मपक्षं दूषयति—**न द्वितीयं**[1] **इति**। विकल्पपूर्वकमव्युत्पत्तिमेवाह—**लिङादीति**। लिङादिशब्दादेवापूर्वत्वमवगम्य तत्र व्युत्पत्तिरित्यत्राह—**तत एवेति**। सम्बन्धग्रहे सति ततोऽवगतिः ततोऽवगतौ सम्बन्धग्रह इति गन्धवती पृथिवीति गन्धवत्त्वेनोपलक्षिते पृथिवीत्वे पृथिवीशब्दवत्कृतिसाध्यमपूर्वमिति प्रसिद्धेन कर्मत्वेनोपलक्षिते तदेकार्थसमवायिन्यपूर्वत्वे लिङा व्युत्पत्तिरित्यत्राह—**न चेति**। हेतुमाह—**तत्र** 20 25

१ क. नन्विति, य इति।

**हीति** । गन्धवती पृथिवीत्यत्र गन्धवत्त्वपृथिवीत्वयोरुभयोरपि प्रतीयमानयोः किं स्यात् प्रवृत्तिनिमित्तमिति सन्देहे गन्धवत्त्वस्य प्रवृत्तिनिमित्तत्वे विशिष्टाभिधानगौरवप्रसङ्गात् । पृथिवीत्वं निमित्तमिति कल्प्यते नैवमत्र सम्भवति अप्रतीतपूर्वस्यापूर्वस्य कार्यत्वेनोपलक्षणायोगादिति ।

5 अथ प्रमाणान्तरागोचरेऽपि तर्कबलोपनीत एवापूर्वे व्युत्पत्तिं समर्थयमान आह— **स्यादेतदिति** । व्युत्पित्सुरन्ततः स्तनपानादौ कार्यज्ञानस्यैव स्वात्मनि प्रवृत्तिहेतुत्वेनावगमात् कार्यत्वेनोपलक्षितायां क्रियायामुपक्रान्तव्युत्पत्तिः वेदे त्वधिकारिविशेषणत्वेन कालान्तरभाविनः स्वर्गादेः श्रवणात् क्षणभङ्गिनश्च[1] यागादेस्तत्साधनायोगादतत्साधने च तत्कामिनो नियोगानुपपत्तेः । यागादिक्रियाया एव स्थायित्वकल्पने प्रमाणविरोधप्रसङ्गात्

10 क्रियोत्तीर्णमलौकिकम् । किञ्चित्कालान्तरावस्थानक्षममपूर्वाख्यं कार्यत्वेनोपलक्ष्य तत्रैव व्युत्पद्यत इति यथाह **शालिकनाथः**—

स्तनपानादिकार्येषु दृष्टा या तृप्तिविक्रिया ।
तां तु यावन्न सोऽध्येति तावन्नैव प्रवर्तते ॥

तत्र लोकानुसारेण क्रिया कार्येति यद्यपि तथापि वेदे षष्ठाद्यसिद्धान्तेऽवधृते सति

15 स्वर्गकामादयः सर्वे नियोज्यत्वेन संस्थिताः नियोज्यत्वकार्याय स्वकीयत्वेन बुध्यते । स्वर्गादिकामयोगाच्च साध्यत्वेनैव गम्यतेऽनेन साध्यत्वपर्यन्तं स्वर्गादीच्छाविशेषितं तदेव शक्नुयात् । वोद्धुं कार्यं यत्कामसाधनमिति तदेतत्**प्राभाकरसर्वस्वं** निराकरोति— **नेति** । किमिदं कार्यत्वेनापूर्वस्योपलक्षणं नामकं स्मरणं हस्तिनैव हस्तिपकस्य । किं वानुमानं धूमेनैव धूमध्वजस्य तच्चोभयमप्यगृहीतसम्भेदेनाशक्यम्[2] । न चात्र

20 सम्बन्धग्रहः सम्भवति । सम्बन्धिनोऽपूर्वस्यानवगमादिति ।

ननु यथा संस्कारादयो ह्यगृहीतसम्बन्धा एवार्थानां[न्] स्मारयन्ति । तथा कार्यत्वमप्यगृहीतसम्बन्धमेवापूर्वं स्मारयिष्यतीत्यत्राह—**न हीति** । उपलक्षयति ज्ञापयतीत्यर्थः । ज्ञानापेक्षणादिति युक्तम् । संस्कारादीनां सम्बन्धज्ञानानपेक्षत्वं स्वकार्यजनने स्वज्ञानापेक्षणात् कार्यत्वपूर्वोपलक्षणे स्वज्ञानापेक्षमिति सम्बन्धज्ञानमप्यपेक्षते ।

25 एतदुक्तं भवति सम्बन्धज्ञानानपेक्षत्वव्यापकं ज्ञानानपेक्षत्वं कार्यत्वान्निवर्तमानं स्वव्याप्यसम्बन्धज्ञानानपेक्षत्वमप्युपादायैव निवर्तत इति व्यापकविरोद्धोपलब्धिरिति तस्मात् स्वज्ञानापेक्षस्य कार्यत्वस्य हस्त्यादय एव दृष्टान्ताः, न तु संस्कारादय इत्याह—**तत** इति ।

---

१ क. क्षणभङ्गिनिश्चयाद्यामा° । २ क. गृहीतसम्भेदेन शक्यम् ।

यत्तु प्रमाणान्तरागोचरस्याप्यपूर्वस्य व्युत्पत्तिसिद्ध्यर्थमुक्तन्यायसम्पादनम्, तदपि निरर्थकमित्याह—**तथा चेति**। कुत इत्याह—**न हीति**। न खलु भङ्गुरो यागादि स्वर्गसाधनम्। न च तस्य स्थायित्वकल्पनम्। न चातत्साधने कामिनो नियुक्तिः। न च शक्तिमति विनष्टे शक्तेरवस्थितिरित्यादिभिः परस्सहस्रेणापि युक्तिभिरनवगतपूर्वे न व्युत्पत्तिरव्युत्पन्न एव वा शब्दः प्रत्यायकः स्यादिति ये पुनराहुः—क्रियात्मनः कार्यादपूर्वात्मनः कार्यस्य भेदाग्रहात् क्रियाकार्यविषयैव व्युत्पत्तिः क्रियाकार्यविषयैवावतिष्ठते। यथा रजतव्यवहारः शुक्तिविषय इति तदप्येतेनापूर्वस्याप्रतीतपूर्वत्वेन निरस्तमित्याह—**एतनेति**। कथमित्याह—**न हीति**। न हि धर्मिरूपेऽप्यज्ञाते भेदाग्रहो व्यवहारहेतुः सर्वत्र रजतव्यवहारप्रसङ्गादिति अपूर्वत्वे व्युत्पत्तिमङ्गीकृत्याप्याह—**किञ्चेति**। **तत्रेति**। लोके कार्यत्वोपलक्षणीयस्यापूर्वत्वस्याभावादिति। यदि लोके कार्यत्वमेव प्रवृत्तिनिमित्तं स्यात् तर्हि वेदेऽपि तथैवास्तु नापूर्वत्वमित्याह—**तत्रेति**। तदेवं पूर्वार्धं व्याख्याय तृतीयपादं व्याचिख्यासुः शङ्कते—**अस्त्विति**। कार्यत्वमेव लिङः प्रवृत्तिनिमित्तम्। तत्तु लोके क्रियायामेव पर्यवस्यति वेदे पुनः स्वर्गकामादिनियोज्यान्यथानुपपत्त्या अपूर्वात्मनि विशेषे विश्राम्यति, यथा गवादिशब्दानां जातिमात्रनिमित्तानामेवार्थप्रकरणादिवशेन शावलेयादिविशेषविश्रान्तिरिति। **नेति**। अहरहः सन्ध्यामुपासीत, ब्राह्मणो न हन्तव्य इत्यादि नित्यनिषेधविधिषु कामिपदं सम्बन्धाभावेन तत्सम्पादनाभावादपूर्वात्मविशेषो न सिध्येदिति कामाधिकारेऽपूर्वलाभादन्यत्रापि तदेव लिङर्थ इति निर्णेष्यत इत्यत्राह—**न चास्मिन्निति**। कार्यत्वं लिङः प्रवृत्तिनिमित्तमित्यत्र पक्ष इति कुतो न सम्भवतीत्यत्राह—**कार्यत्वस्यैवेति**। तर्हि कामाधिकारवत्तत्सम्पादनयापूर्वव्यक्तिलाभ इत्यत्राह—**न्यायेति**। कथं तत्र तदसम्भव इत्यत्राह—**फलेति**। तर्हि विश्वजिदादिवत् कल्पयिष्यत इत्यत्राह—**न चाश्रुतमपीति**[1]। बीजभावमेवाह—**तद्धीति**। चेतनप्रवर्तननिवर्तनात्मकयोर्विधिनिषेधयोर्विषयगतमर्थानर्थसाधनत्वमन्तरेणानुपपत्तेस्ताभ्यां वा फलं कल्प्यते[2]। अर्थानर्थप्राप्तिपरिहारसाधनत्वाधीनमेव लोके गवानयनादेः कार्यत्वं दृष्टमिति।

कार्यत्वान्यथानुपपत्त्या वेति[3] द्वयी गतिः। न प्रथमः गुरुमते तस्यापूर्वात्मनो विधेरेव प्रधानसाध्यत्वेनोपाधिरूपत्वात् स्वयमेव फलत्वेन फलान्तरमन्तरेणानुपपत्त्य-

---

१ क. न चाज्ञा°। २ क. °प्येत। ३ क. चेति।

भावादिति अनुपपत्त्यभावमेवाह—**यत** इति। एभिः श्रुतं स्वर्गफलत्वमपि यस्मिन्वाक्ये तस्मिन्नपि विधेः स्वयमेव फलत्वादेकस्मिन् वाक्ये फलद्वयासम्भवाच्च नियोज्य[1]विशेषणतया श्रूयमाणस्य गत्यन्तराभावात् प्रधानसाध्यमपूर्वमेव स्वर्गादिरूपेण विवर्धते इति वदन्ति। यथा आत्मसिध्यनुकूलस्य नियोज्यस्य प्रसिद्धये कुर्वत्[2] स्वर्गादिकमपि प्रधानं कार्यमेव न
5 इति कथमिव ते वदेयुः। अश्रुतफलेषु वाक्येषु फलं विना विध्यनुपपत्तिरिति। **न द्वितीय** इति। न हि शब्देनैव कार्यत्वप्रत्यये जनयितव्ये फलस्यापेक्षास्तीति लोके तदपेक्षा दृष्टेत्युक्तमिति चेत्तत्राह—**लोक** इति। लोके हि शब्दानां विनियोगमात्रपरत्वेन नियोगपरत्वाभावात् न कार्यतायाः प्रामाण्यमिति इष्टाभ्युपायताधीन एव कार्यताप्रत्ययः। वेदे तु शब्दादेवान्यानपेक्षात् कार्यताप्रत्यय इति भवताभ्युपगम इति
10 वेदेऽपि यदिष्टताभ्युपायताधीन एव कार्यताप्रत्ययः स्याच्चत्राह—**अन्यथेति**।

ननु वेदे शब्दावगतात् कार्यत्वात् फलमनुमीयते, कार्यत्वस्येष्टसाधनतया लोके व्याप्तिदर्शनादित्यत्राह—**आनुमानिकमिति**। न हि सुखदुःखाभावश्चेष्टाभ्युपायः।

अथ च कर्तव्य[3]मिति तर्हि फलव्यतिरिक्तत्वे सति कर्त्तव्यत्वादिति हेतुर्भविष्यतीत्यत्राह—**फलं विहायेति**। निराकर्ता फलशब्दार्थं पृच्छति—**तदेवेति**।
15 इतरस्त्वन[4]न्यार्थेच्छाविषयः फलमित्याह—**इष्टं तर्हि** फलम[5]न्यदनिष्टं स्यात्, तस्य च कर्तव्यत्वं व्याहन्येत अनन्योद्देशप्रवृत्तिकृतिसाध्यरूपत्वात् कर्तव्यस्येति इष्टसाधन[6]त्वे सतीति विशेषयिष्याम इत्यत्राह—**तदिति**। **तर्हीति**। यतः इष्टसाधनत्वमेव साध्यमपीति न तावदिदं कार्यं स्वभावत इष्टम्, अथ च कर्तव्यतया शास्त्रेणाव[7]गम्यते। तेनौपाधिकमस्येष्टत्वम् तच्चेष्टसाधनत्वेनेति। तदनुमानमित्याह—**स्वभावत इति**।
20 तत्रापि विशेषणासिद्धिरित्यत आह—**अन्यथेति**। स्वभावत इष्टत्वानङ्गीकारे कर्तव्यता न सिद्ध्येत्। ततश्च पूर्वोक्त एव व्याघात इति तदेवं नित्यनिषेधाधिकारयोः फलस्याश्रवणात्तत्प्रमाणान्त[8]राभावान्न्यायसम्पादनाभावे कार्यत्वस्यापूर्वव्यक्तिलाभो नास्तीत्युक्तम्। सम्प्रत्यगत्या तदलाभमभ्युपगच्छति। **अस्त्विति**। तथापि न सर्वथा पूर्वोच्छेद इति भावः।

25 सर्वथैवोच्छेदमाह—**किमिति**। तत्रापि तदभावमाह—**न हीति**। स्वप्रधानतयाभिधीयमानस्य स्वर्गं प्रति गुणत्वेनाभिधानासम्भवादिति।

---

१ क. नियोग। २ क. कुर्वन्। ३ क. कर्तव्यापीति ननु।
४ क. इतरस्त्वनन्यथार्थविषयः। ५ ख. फलादन्यदनिष्टं। ६ क. इष्टसाधनत्वमेव।
७ क. °ण गम्य। ८ क. अस्ति च तेने°। ९ क. °भाणा भावा°।

ननूक्तमत्र न हि स्वर्गकामिनो तत्साधने कार्यविधि[1]: संभवतीति तेन लिङानभिधानेऽपि पदद्वयसमभिव्याहारात्मनो वाक्यादेव कार्यस्य स्वर्गसाधनत्वं सिध्यतीत्यत्राह—**नापीति**। वसन्ते ब्राह्मणोऽग्निमादधीतेत्यादिष्वधिकार्यवच्छेदमात्रे कामपदसमभिव्याहारे न श्रुतं कार्यप्राधान्यं हातव्यमिति।

ननु माभूत् वाक्यादनुमानतस्तु सिध्यतीत्याह—**न चेदमिति**। किमत्रान्येच्छया कर्तव्यत्वं स्वेच्छया वा। पूर्वत्रासिद्धिः स्वोद्देशप्रवृत्तकृतिव्याप्यत्वात् कार्यस्योत्तरत्र व्यभिचारः तदिच्छयैव कर्तव्यस्य सुखस्येष्टसाधनत्वाभावात्। 5

नन्विच्छाकर्तव्यत्वयोः भिन्नविषयत्वाङ्गीकारेणान्यार्थतया कर्तव्यत्वं कार्यस्य ब्रूमः। अस्ति च तस्येष्टसाधनत्वेन व्याप्तिरित्यत्राह—**औपाधिकेति**।

ननु किमनेन स्वाभाविकेनौपाधिकत्वविशेषचिन्ताव्यसनेन व्रीहिकामः कृषिं कुर्यादिति वत् स्वर्गमिच्छतोऽन्यत् कर्त्तव्यमिति शब्दो बोधयति तेन[2] यत्कर्त्तव्यं तदिष्टाभ्युपाय इत्यनुमीयते इत्याह—**किमनयेति**। **नेति**। न हि सागरं गन्तुकामस्य हिमवद्गमनवदन्यदिच्छतोऽन्यत् कर्तव्यतयाऽन्वेतुं योग्यम्। कृष्यादौ व्रीह्यादिसाधनत्वज्ञानाधीनमेव कर्त्तव्यताज्ञानमिति भावः। 10

यत एवान्यमात्रस्यान्वययोग्यता नास्ति अत एव तदन्वययोग्यतासिध्यर्थमिष्टसाधनत्वं सेत्स्यतीत्याह—**अत एवेति**। **एवं तर्हीति**। योग्येनैवान्विताभिधानादिष्टसाधनत्वैकार्थसमवायिन्या एव कर्तव्यताया योग्यत्वात्तदभिधाने चानुमेयाभाव इति तदेवं स्वर्गमिच्छतोऽपूर्वस्य कर्तव्यत्वमन्वयायोग्यत्वान्नाभिधीयत इत्युक्तम्। सम्प्रत्यभ्युपगम्याह—**न चान्विताभिधानेऽपीति**। ब्राह्मणत्वादिवत् स्वर्गकामपदान्वयोपपत्तिरित्युक्तमेवेति न केवलं[3] कार्यात्वादपूर्वव्यक्तेरलाभः। असम्भावितमपूर्वे[4] कार्यत्वमित्याह—**न चेति**। तद्धि कार्यत्वं कृतिव्याप्यमपि चेत् व्रीहीन् प्रोक्षतीत्यत्र व्रीहीणामेव तथात्वात् कार्यत्वं[5] स्यात्। अथ कृतिजन्यत्वं यागस्यैव स्यात् तस्यैव साक्षात्कृतिजन्यत्वात् यदि कृत्युद्देश्यत्वं तत्स्वर्गस्यैव स्यात् तस्यैव निसर्गसुन्दरत्वादिति, न चात्र सर्वस्याप्यपूर्वस्य कार्यत्व... विपरीतत्वात्तस्येत्याह—**न त्विति**। 15 20

१ क. ननूक्तं स्वर्गकामिना तत्साधने कार्यस्य धी. संभवतीति।
२ क. यत्तत्क°। ३ क. °लम°। ४ क. °तं चापूर्वस्य।
५. कार्यत्वमित्यारभ्य विपरीतत्वादित्यन्तः पाठ, क पुस्तके नास्ति।

नन्वीप्सिततमत्वाभावेन स्वभावतः कार्यत्वाभावेऽपि स्वर्गसाधनत्वोपाधिनापूर्वस्यापि भविष्यतीत्याह—**स्तनपानेति**। औपाधिक्यपि कार्यता यागस्यैव नत्वपूर्वस्येत्यत्राह—**सापीति**।

ननु साधनत्वेन श्रुतस्यापि यागस्य क्षणिकत्वेन कालान्तरभाविस्वर्गसाधनत्वायोगा-
5 दपूर्वस्यैवौपाधिकं कार्यत्वमङ्गीकार्यमित्याह—**कालेति**। यथाश्रुतस्यैव यागस्य स्वर्गसाधनत्वं निर्वहति, तथा कल्पना युक्ता। श्रुतानुरोधश्च यागस्यैव कथञ्चित् साधनत्वाङ्गीकारे स्यान्न त्वपूर्वसाधनत्व इत्याह—**यथेति**।

ननु व्यापारद्वारा हि यागस्य साधनत्वं निर्वहेत्। न च व्यापारिणि यागे विनष्टे तद्व्यापारोऽवतिष्ठते। किञ्च कारणस्य हि व्यापारयोगः। न च विनष्टस्य यागस्य
10 कारणत्वं कार्यानन्तरपूर्ववर्तिनः कारणत्वादित्याह— **व्यापारद्वारेति**। द्वयीमप्यनुपपत्तिं परिहरति—**नेति**।

ननु कृष्यादितदवान्तरकार्ययोः कारणत्वव्यवहारः लाक्षणिक इति नैतन्निदर्शनमत्रेत्याह—**लाक्षणिक** इति। स्यादेवं यदि मुख्यत्वे प्रमाणविरोधः स्यात्। न चासावस्तीत्याह—**मुख्यार्थत्व**[1] **इति**। अपूर्वव्यवहितस्यैव व्यापारयोगित्वे विरोधमाशङ्कते—
15 **अस्तु तर्हीति**। कार्यव्यभिचारिपुत्रस्य पितुः कारणत्वानिर्वाहकतयावान्तरव्यापारलक्षणाभावात्तदवान्तरव्यापारत्वेन पितुः कारणत्वं प्रसज्यत इत्याह—**नेति**। पूर्वभावनिर्वाहः कारणत्वं[2]निर्वाह इत्यर्थः। कारणत्वनिर्वाहक एवावान्तरव्यापार इत्यत्र दृष्टान्तः **यथार्थानुभवस्येति**। तत्र हि स्मरणं प्रत्यन्वयव्यतिरेकावधृतकारणभावस्यातीतत्वेन कारणत्वानुपपत्तौ तदुपपादकत्वेन संस्कारः कल्प्यते न तु कारणत्वोपपत्ताविति। तथा
20 यागस्यापि शब्दावगतकारणत्वानुपपत्तौ तन्निर्वाहकतया व्यापारः कल्प्यत इत्याह—**तद्वदिति**। नास्त्यसतो व्यापारद्वारा कारणत्वम्, किन्तु सत एवेत्यङ्गीकारेऽनिष्टद्वयमाह—**न चेदेवमिति**[3]। शरविमोक्षसमये हतस्य हन्तुः शरीरस्यैसत्त्वात्, सत्त्वाच्च पितुरिति यत एवापूर्वत्वं वा लिङः प्रवृत्तिनिमित्तमित्युक्तम्। अत एव तदुभयमपीति पक्षेऽपि प्रतिक्षिप्त इत्याह—**अत एवेति**। न क्रियेति संग्रहं व्याचिख्यासुः शङ्कते—
25 **अस्त्विति**। यद्यपूर्वकार्यत्वं न विधिः तर्हि धात्वर्थकार्यत्वमस्तु सर्वेषां तत्कार्यतामेवावगम्य संकल्पपूर्वकं प्रवृत्तेरिति तत्र कार्यताप्रतीतिं विकल्पयति—**कर्तव्यमिति**। कः

---

१ ख. नेति। २ क. °त्वं ३ क. न चेदिति। ४ क. पुत्र°।
५ क. नेति। ५ क. °त्रस्यस° ६ क. नेति।

खलु कर्तव्यमेव तदिति वाक्यार्थः । किमध्यवसायो यदनन्तरं प्रवृत्तिर्जायते सोऽध्यव[1]-सायश्चिकीर्षेति यावत्तस्य[2] क्रियाधर्मत्वं तद्विषयत्वमेव । किं वा कर्तुं योग्या क्रियेत्यौचित्यमात्रमिति, तत्राध्यवसायः संकल्प एवेत्याह—**तत्रेति** ।

ननु कुर्यामित्येवमाकारः[3] संकल्पः स कथं कर्तव्यमित्यध्यवसायादभिन्नः स्यादित्यत्राह—**व्यवहितेति** । भवतु संकल्पस्ततः किमित्यत्राह—**स चेति** । कथं तर्ह्ययं व्यवहारः कर्तव्यताप्रतीत्या प्रेक्षावतां[4]प्रवृत्तिरिति तत्राह—**तदेतदिति** । भ्रान्तव्यवहारोऽयमित्यर्थः । द्वितीयं संकल्पं विकल्प्य दूषयति —**औचित्यमिति** । न हि प्रागपि[5] सतः कर्तुमौचित्यम् । न च प्रागभाववतो[6]ऽप्यशक्तस्य नापि सत्युभयस्मिन् कर्तुरनुपकारस्येत्यौचित्यं त्रेधा संभवः, प्रथमेऽनुत्पन्नासु सागरतरणादिक्रियास्वपि प्रवर्तेत । द्वितीये शक्यक्रिये स्वशरीरं प्रहारादावपि प्रवर्तेत । तृतीये तु वक्ष्यमाणा एवेष्टसाधनत्वपक्षोक्ता दोषा अनुसन्धेया इति ॥ १२ ॥

विवेकः

कर्मधर्म इत्यत्र विधिरित्यनुषज्यते । तत्क्रियत इति व्युत्पत्त्या कर्म कार्यं तस्य धर्मः कार्यत्वं तेन रूपेण फलं स्वर्गादि वा तेन बोध्यते । स्वर्गसाधनापूर्वं प्रवृत्तिविषयो यागादि क्रिया वा क्रमेण त्रयन्निरस्यति—**अतिप्रसङ्गादिति** । सत्यपि फले कार्यत्वज्ञाने उपाधेः कृत्यसाध्यज्ञाने प्रवृत्तिप्रसङ्गादित्यर्थः द्वितीयं निरस्यति—**नापूर्वमिति** । तस्योपस्थितौ हि तत्र व्युत्पत्तिग्रहो वाच्यः । न च शाब्दबोधात् पूर्वं तदुपस्थापकमस्ति । तदभ्युपगमे चापूर्वत्वव्याघातादित्यर्थः । नन्वपूर्वत्वेन पूर्वं तदनुपस्थितावपि कार्यत्वेन तदुपस्थितिर्वाच्या, न च तावताऽपूर्वत्वक्षतिः । सामान्यलक्षणानुपगमे तु समानकारकत्वेनैव शक्त्यनुभवतत्स्मरणयोः शाब्दानुभवे हेतुत्वमस्तु इत्यत्राह—**तदलाभाद्धीति** । उपस्थितानां क्रियाणां यथा स्थिरतया निरासः, तथा घटादीनामपि स्वर्गसाधनतया निरासे व्युत्पत्तिस्थानस्यालाभार्थकार्यत्वेन रूपेण तत्र शक्तिग्रह इत्यर्थः । तृतीयं निरस्यति—**न क्रियेति** । सत्यपि क्रियायाः कार्यत्वज्ञाने सञ्जातबाधस्य चैत्यवन्दनादौ चाप्रवृत्तिता न कार्यत्वमात्रं विध्यर्थ इत्यर्थः ।

फलेच्छाया फलस्य कृतिसाध्यताज्ञानाधीनायाः फलचिकीर्षायाः प्रवृत्तिं प्रति अहेतुत्वात् । तत्र हेतुः—**अतिप्रसङ्गादिति** । उक्तत्वात् अतिस्फुटतया उक्त-

---

१ क. साध्यवसायं । २ ख. तस्याश्च । ३ क. °त्यध्यवसायाकारः । ४ ख. प्रेक्षावताय° । ५ क, प्रागस° । ६ क. °वत्वेऽप्यशक्यस्य ।

प्रायत्वात् । अपूर्वत्वं धर्मत्वम् उभयं कार्यत्वापूर्वत्वे, अव्युत्पत्तेः शक्तिग्रहासम्भवात् । सम्बन्धिनः शक्तिविषयस्य सम्बन्धस्य शक्तेः तत एव विधिप्रत्ययादेव अवगमे अपूर्वत्व-विशिष्टस्य गन्धवत्त्वेनोपनीतायां पृथिव्यां पृथिवीशब्दो यथा प्रवर्त्तते पृथिवीत्वेन रूपेण तां बोधयति । अदूरविप्रकर्षसमानाधिकरण्यम् उभयोः गन्धवत्त्वपृथिवीत्वयोः सन्देहे
5 पृथिवीत्वं प्रवृत्तिनिमित्तं गन्धवद्बुद्धेरिति सन्देहे कल्पनागौरवं गन्धवत्त्वस्य पृथिवीपदप्रवृत्ति-निमित्तकत्वकल्पनायां गौरवं ततः प्रसङ्गेन तदापत्त्या पुरस्कारेण तत्सहकारेण तदपेक्षया पृथिवीत्वे यल्लाघवं तत्सहकारेणेति यावत् । अपूर्वप्रतीतिः अनपूर्वप्रतीतिः अननु-शक्त्यनुभवपदार्थस्मरणशब्दानुभवानां समानप्रकारकतयैव हेतुसद्भावात् लौकिकप्रमाण-गम्यघटादिसाधारणकार्य्यत्वेन रूपेण घटादावेव शक्तिग्रहेऽन्विताभिधानवशादपूर्वलाभस्तु
10 न तावता व्युत्पत्तिरपूर्वत्वव्याघातो वेत्याशङ्कते—**स्यादेतदिति** । अन्यो घटादिः अधिकारिविशेषणं कार्यं फलं साधनमुत्पादनम् । एतावता प्रसिद्धे बाधो दर्शितः । **नन्विति** । यज्जन्यते तदपेक्षयैव तदन्वयोऽस्तु इत्यत आह—**न चेति** । स्वर्ग-रूपफलकामनाविशिष्ट इतरफलसाधनतया ज्ञातमपि कार्य्यतया जानातीत्यर्थः । यद्वा अकाम्यफले काम्यस्वर्गाव्यवहितसाधनाभिन्ने कामी काम्यादन्यत् काम्याव्यवहितसाधनतया
15 ज्ञातमेव कर्तव्यतयाऽवैतीति व्याप्तेरिति भावः । लिङादिप्रवृत्तिगोचरः स्वर्गकामसमभि-व्याहृतलिङादिजन्यान्विताभिधानविषयः शक्तिग्रहकाले क्रियावद्घटादेरपि निरासात् न शक्तिग्रहसम्भव इत्यभिप्रेत्याह—**नेत्यादि** । सम्बन्धे शक्तौ व्याप्यत्वे वा कार्यत्वं कर्तृज्ञानापेक्षणात् । न च तत् प्रकृते सम्भवतीति भावः । स्मरणे दृष्टान्तोऽस्तीति अनुमायानभूम(?) इति । न्यायसम्पादनात् उक्तयुक्तिकथनं, भेदाग्रहात, उपस्थितायाः शक्तेः
20 क्रियाकार्ये अपूर्वगृहीतशक्तिकक्रियायाः तत्कार्येऽपूर्वे वा भेदाग्रहः व्युत्पत्तिः व्युत्पत्त्यधीनो बोधः । व्यवह्रियतेऽनेनेति व्युत्पत्त्या व्यवहारः शाब्दो बोधस्तदङ्गं तद्धेतुः अतिप्रसङ्गात् । अज्ञातेषु सर्वेष्वेव भेदाग्रहसत्त्वात् सर्वत्रैव तदधीनफलप्रसङ्गात् । अपूर्वत्वस्य प्रवृत्तिनिमि-त्तत्वे दोषान्तरमाह—**किञ्चेति** । **अनर्थिकेति** । अत्राप्यपूर्वत्वेन रूपेणान्वयस्यायोग्यता-पराहतत्वादिति भावः । उपलक्षणीयस्य अपूर्वत्वस्य अभावात असम्भवात् तत्र लौकिकलिङि
25 प्रकृते वैदिकतादृशलिङि तदेव कार्यत्वमेवास्तु प्रवृत्तिनिमित्तं क्लृप्तत्वात् लौकिकलिङि सम्भवात् अन्वययोग्यत्वात । तदेव कार्यत्वमेव प्रवृत्तिनिमित्तं वैदिकलिङापि तर्क-सम्पादनया योग्यतामहिम्ना नित्येति स्वर्गसाधनतान्वयायोग्यतया हि काम्यस्थले इतराणा-मुपस्थितानां निरासेनापूर्वलाभः । न च नित्यनिषेधस्थले तथा फलसमभिव्याहारोऽस्ति येन तन्महिम्ना तल्लभ्येतेत्यर्थः । अस्मिन् पक्षे कार्यत्वेन रूपेण लिङ्शक्यत्वपक्षे एकत्र

काम्यस्थले निर्णीते शास्त्रार्थे तज्ज्ञानस्य अपूर्वविषयत्वे अन्यत्र निषेधयोरपि तथैव अपूर्व-विषय एव व्यवहारः शाब्दबोधः। भवेदेवं यद्यपूर्वत्वं विध्यर्थः स्यात्, किन्तु कार्यत्वमेव तत्, क्रियान्वयित्वसम्भवे इतरबाधसहकाराभावात् नापूर्वलाभः स्यात् अन्यथा काम्य-स्थले इष्टसाधनतापूर्वत्विषयतयाऽन्यत्रापि तथा स्यादित्यक्षरतात्पर्याभ्यामाह—**कार्यत्वस्यै-वेति** व्यक्तिविशेषोऽपूर्वं तत्फलम्। अत्र नित्यनिषेधयोः। **विध्यन्यथेति**। विधेयत्वस्य फलसाधनतानियतत्वेनेत्यर्थः। तस्य सन्ध्यावन्दनादेः उपेयरूपत्वात्, अन्येच्छानधीने-च्छाविषयत्वेनाभ्युपेयत्वात्। तथा च तत्र फलाभ्युपगमे तवापसिद्धान्त इति भावः। यतः सिद्धान्तानुसारात् यत्र नित्ये स्वर्गादिः फलं श्रूयते तत्र साध्यत्वेऽस्य प्रवृत्तिविषयस्य सन्ध्यावन्दनादेर्विवृद्धिस्तवमात्रं कल्प्यते, न तु परमार्थतः तस्येष्टसाधनत्वमभ्युपेयत इति। **द्वितीय इति**। इष्टसाधनत्वस्य कार्यतया लिङ्त्वात्तज्ज्ञानार्थमिष्टापेक्षेत्यर्थः। तत्प्रत्यये कार्यताप्रत्यये तदनपेक्षणात् लिङ्ज्ञानानपेक्षणात्, लोके को भोजनादिप्रवृत्तौ तत्प्रत्ययः कार्यताप्रत्ययः। अन्यथा वेदेऽपि कार्यताप्रत्ययस्य इष्टसाधनताधीनत्वेन विधिः कार्यान्तरम्। ननु स्वर्गादिलक्षणफलस्य सन्ध्यावन्दनादावुपगमेऽपसिद्धान्तः, अपि तु अपूर्वमेव तत्र फलमित्यभिप्रेत्याह—**आनुमानिकमिति**। तदेव फलमेव फलत्वमेव किमित्यर्थः। **इष्टमिति** निरुपाधीच्छाविषय इत्यर्थः। तत्र फलान्यत्वं निरुपाधीच्छा-विषयान्यत्वम् अयं विशिष्टाभावो विशेष्याभावात् विशेषणाभावाद्वा नाद्य इत्याह—**तर्हीति**। तत्र अनिष्टं च विशेषणाभावायत्तं विशिष्टाभावं शङ्कयते—**तत्साधनमिति**। नन्वेकरूपेण साध्यत्वसाधनत्वेनेष्यते इति विशिष्टाभावेन हेतुता स्यात् इत्याह—**स्वभावत इति**। इदं सन्ध्यावन्दनादिकृतिव्याप्यत्वात् तादृशकृतिविषयत्वात्। फला-न्तरसिद्धिं विना अनन्योद्देश्यकृतिविषयत्वमेव तत्र दुर्निरूपम् इति भावः। अन्यथा फलान्तरज्ञानानधीनप्रवृत्तिविषयत्वस्य तत्र प्राक् तदसिद्धेः सिद्धसाधनरूपसिद्धिदोषापत्तेः। तस्माद्विशेष्याभावायत्त एव विशिष्टाभावो वाच्यः, तत्र व्याघातात् विरोधात्। साध्य-हेत्वोरन्यतरसत्त्वे हेतुसाध्ययोरन्यतरस्याभावः। कामाधिकारेऽपि कामनाधिकारिकेऽग्नि-ष्टोमादौ तदलाभः अपूर्वस्य विध्यर्थताबाधः। नित्यनिषेधस्थले तस्य तदन्यत्वे एकत्र निर्णीत इति न्यायेन कदाचिदत्रापि स्यादिति भावः। **न हीति**। अयं भावः—विधिप्रत्ययेन कार्यमुच्यते, नित्यस्थले च तत् क्रियायामभेदेनैवान्वेति यथा, तथा काम्य-स्थलेऽप्यस्तु क्लृप्तव्युत्पत्तेः, न च विषयितयैवान्वयो निरूढः नित्यनिषेधस्थले लोके तदभावादिति। ननु कामनाविशिष्टस्य तत्र नियोज्यत्वेनान्वयो वाच्यस्तत्र कामनाया उपयोग इष्टसाधनतालक्षणलिङ्गोत्थापकतया न चेष्टसाधनत्वम्। आशुविनाशिनि यागादौ

द्वारोपस्थितिं विना गन्तुं शक्यत इति विधेरेव तदुपस्थितिर्वाच्येत्याशङ्क्य निषेधति—**नापीति**। ब्राह्मणत्वादेर्यथान्वयोऽवच्छेदकतया तथा कामनाया अपि स्यादिति। तद्विशिष्टस्य नियोज्यत्वेनान्वयानुरोधान्नापूर्ववाच्यतेत्यर्थः। काम्यस्थलेऽपूर्वलाभे युक्त्यन्तरमाह—**यदिच्छात** इति। फलकामनावतोर्यत्कर्तव्यं तत्तस्य फलजनकमिति।
5 एतावता कामनावतः कृतिसाध्यत्वान्वयप्रयोजकरूपत्वमिष्टसाधनत्वमस्यादर्शितम्। तथा चेष्टसाधनतारूपयोग्यतानिश्चयार्थमपूर्वोपस्थितिरावश्यिकीति भावः। तत्रान्येच्छावत्कृतिसाध्यत्वम् अन्येच्छाधीनकृतिसाध्यत्वं वा तथा। आद्ये, नान्तरीयके व्यभिचारः। द्वितीये चाह—**अन्येच्छयेति**। सिद्धिः यागकृते स्वर्गकामाधीनत्वस्य प्रागसिद्धेः स्वाभाविकत्वं स्वेच्छाधीनत्वं तत्र निरुक्त्यासौ भ्रमवारणायावश्यं वाच्यमिति। **अन्ये-**
10 **च्छयेति**। सुखवारणाय। तृतीये त्वाह—**तदिच्छयेति**। प्रागुक्तमसिद्धं स्पष्टयति—**औपाधिकेति**। यद्वा, अन्येच्छाधीनत्वेच्छानधीनकृतिसाध्यत्वं तथा तदिच्छाधीनकृतिसाध्यत्वं वा अन्येच्छाधीनतत्कृतिसाध्यत्वं वा। आद्ये—**अन्येच्छयेति**। स्वाभाविकत्वं स्वेच्छानधीनत्वम् असिद्धेः स्वरूपासिद्धेः, यागादौ तथानभ्युपगमात्। नान्तरीयके व्यभिचाराद्व्याप्यत्वासिद्धेः। द्वितीये तृतीये—**औपाधिकेति**। अन्विताभिधाने कामनाया
15 विशेषणत्वस्य औत्सर्गिकत्वात्। तदधीनकृतिसाध्यत्वं शब्द एव बोधयति इति नासिद्धेरित्याह—**किमनयेति**। इष्टसाधनतारूपयोग्यताज्ञानविरहादौत्सर्गिकमपि विशेषणत्वं त्यज्यते। तत्तदनुरोधेन पदार्थान्तरे शक्तिरपि कल्प्यत इत्याह—**नन्विति**। ननु कामनाया उपलक्षणत्वे उपलक्षणतावच्छेदकाभाव इति विशेषणत्वं वाच्यम्। तन्नये इष्टसाधनताप्रतीतिरवश्यमपेक्षणीया इत्याह—**तत एवेति**। **तत्साधनत्वेति**। इष्टसाधनतेत्यर्थः।
20 अनुपपत्तेः साक्षादुपपादकविषयत्वादिष्टसाधनत्वमपि तर्हि विध्यर्थोऽस्त्वित्याह—**एवन्तर्हीति**। ननु तदेवेष्टसाधनत्वमाशुविनाशिनि यागादौ विना द्वारोपस्थितिं दुर्ग्रहमिति अपूर्ववाच्यता स्यादित्यनुशयादाह—विनाप्युपलक्षणतावच्छेदकं विशेष्यान्वयिन्यपि विशेषणकामना ब्राह्मणत्ववत् स्यादित्यर्थः। ननु ब्राह्मणेऽन्वयिताच्छेदकरूपानुपस्थित्यानन्वयोऽस्तु कामनायास्तु अवश्यमन्वयस्य सम्भविनः त्यागायोगात्। तद्रक्षार्थमपूर्ववाच्यता
25 स्यादित्यनुशये दोषान्तरमाह—**न च कार्यत्वमिति**। कृतिव्याप्यत्वं कृतिकर्मत्वं विषयतया कृतिजनकत्वमिति यावत्। **व्रीह्यादिष्विति**। यागोपायकृतिमभिप्रेत्य कृतिफलत्वं विषयताविशेषणकृतिविशिष्टत्वम्, अन्येच्छाधीनविषयकृतिसाध्यत्वमिति यावत्। ततः कृतेस्तस्यैव यागस्यैव न च कृतेः पूर्वमपूर्वेच्छा तत्रास्तीति भावः। **आहत्येति**। स्वर्गादिवारणाय। तेन यागस्यैव नियमासिद्धिः। ननु स्वाभाविकी

उद्देश्यताऽपूर्वे माऽस्तु, अन्येच्छाधीनात्र स्यादित्याशङ्कते—**स्तनपानेति**। कृतेः पूर्वमपूर्वेच्छाया अननुभवमभिप्रेत्याह—**सापीति**। नन्विष्टसाधनस्य विरोध्यर्थत्वेऽपि स्वर्गसाधनत्वस्य कुतो लाभ इत्यत्राह—**स्वर्गस्येति**। कामनाविषयतयैव तस्य साध्यत्वोपस्थितिस्तस्य च साधनाकाङ्क्षतया अनायत्या इष्टेन समं तस्याभेदेनान्वयः। अथ वा श्रुतानुरोधेन तथैवाकाङ्क्षाकल्पनात् इष्टसाधनत्वयोः स्वातन्त्र्येण पदार्थत्वेनेष्टं पदार्थैक- 5
देशतापीति भावः। शङ्कते—**कालेति**। कालव्यवधानात् स्वर्गाव्यवहितप्राक्कालवर्तित्वाभावात् तत्र यागे स्वर्गसाधनत्वम्। तथा च स्वर्गसाधनत्वमपूर्वमपूर्वसाधनत्वं च यागेऽन्वेतीत्यवश्यमपूर्वं वाच्यमिति भावः। **यथेति**। श्रुतस्य शब्दात्प्रतीतस्य यागेष्टसाधनत्वस्यानुरोधात्। तद्यागस्य स्वर्गसाधनत्वं यथा निर्वहति तथा कल्प्यतां प्रतीतसाधनत्वानुपपत्त्यां व्यापारः कल्प्यतामित्याखण्डलार्थः। शङ्कते—**व्यापारेति**। साक्षा- 10
दव्यवहितपूर्वकालावृत्तेः कारणत्वं व्यापारत्वाद्वा कथञ्चित्कल्पनायाः स्यात्। न च भिन्नकालयोर्व्यन्तरा पूर्वकालिकापूर्वव्यवधानात्, आपाद्यस्वर्गसाधनपरमापूर्वयागयोर्व्यापारव्यापारिभावः, तथादर्शनात्। अव्यवधानेनोत्पाद्यसंस्कारः, तत्र च व्यापारान्तरस्य निविशत इति भावः। श्रुतस्यानुक्तौ प्रतिकूलतर्कमाह—**अन्यथेति**। अतिप्रसङ्गोऽस्ति "इत्यनेनाग्रे स्फुटयिष्यति। परे तु यागस्य कारणत्वं व्यापारेणोपपाद- 15
नीयम्। एतच्चानुपपन्नं व्यापारसहस्रेणापि चिरध्वस्तेत्यस्यानिर्वाहादित्याशङ्कते—**व्यापारेति**। भिन्नकालयोः एककालावृत्त्योः। प्राभाकरमतेनेदं ते हि कार्य्यकालवृत्तेरेव कारणत्वमामनन्ति। अव्यवहितप्राक्कालवृत्तित्वानिरूपकयोर्वा। निरूपकत्वं च प्रतियोगितया आश्रयतया च व्यापारव्यापारिभावः कार्यकारणभावः। नन्वेवं कोऽर्थ इत्यत्राह कारणत्वं पूर्वभावनियममात्रस्य कालिकत्वजन्यान्यतरसम्बन्धेनाव्यवहितप्राक्काल- 20
नियतत्वस्य तदभिव्यङ्ग्यावधित्वविशेषस्य कारणत्वात् कारणपदार्थत्वात् कार्यानुकूलावान्तरकार्य्यस्य। ननु व्यवधाने तत्कार्य्यस्य तदुक्तव्याप्तौ व्यवहारविरोधमाह—**कृषीति**। कृषिचिकित्सयोः सस्यरोगादिषु कार्य्येषु यौ व्यापारौ बीजपाकरूपादिधातुसाम्यं, तेन व्यवधानेन तत्कार्य्यं इत्यर्थः। शङ्कते—**लाक्षणिकमिति**। अतिप्रसङ्गं शङ्कते—**अस्त्विति**। **चिरध्वस्तस्येति**। निषेकाव्यवधानेनैव सुतस्येत्यर्थः। तस्य च 25
पुत्रेणाव्यवहितकालसत्तया हेतुतेति भावः। कर्त्तृत्वं ब्रह्मवधकर्तृत्वम्। सत्यपीत्यनेन फलायोगव्यवच्छिन्नस्वजनकत्वलक्षणं करणत्वं प्रतिक्षिप्तं यद्धर्मावच्छिन्नं जनयति तत्रैव तयोर्व्यापारस्तस्याव्यवहितप्राक्कालवृत्तित्वोपलक्षणमेतत्। **स्वनिवेशन(श)यानस्येति**। पुत्राव्यवहितप्राक्कालावृत्तेरित्यर्थः। परे तु पूर्वभावेत्यादि। एतेन यागं प्रति स्वर्ग-

साधनत्वमुपपादितम् । ननु व्यवहितप्राक्कालावृत्तेः कारणत्वं व्यापारवत्त्वं, स चान्यत्र संस्कारादिदृष्टस्तद्बाधात् कुतः कारणता इत्यत्राह---**कार्य्यानुकूलेति** । एवकारेण अन्यत्र क्लृप्ततद्बाधेऽपि न क्षतिरिति ध्वनितम् । तथा दर्शनात् कालव्यवहितयागेऽपि सस्यारोग्यहेतुत्वव्यवहारात् । असौ व्यवहारः व्यापारत्वयोगात् । तथा च न तेन
5 तस्य तद्धेतुतानिर्वाह इति भाव इत्याहुः । एतेन अपूर्वत्वोपस्थितिविरहेण व्युत्पत्ति-सम्भवेन कार्य्यत्वेन शक्तावपि नित्यनिषेधापूर्वयोरलाभः । तत्प्रसङ्गादिना च---**उभयमिति** । कार्य्यत्वमपूर्वत्वं च लिङः प्रवृत्तिनिमित्तमित्यर्थः । क्रियाधर्म्मः प्रकृतिधात्वर्थान्वयो विधिः लिङर्थः, तत्रानुभवं प्रमाणयति---**सर्वो हीति** । **कुर्य्यामिति** । कृतिसाध्यत्वप्रकारकेच्छाया उपदर्शनं, तत्र च स्वकारकप्रकारकज्ञानस्य
10 कारणत्वात् कार्य्यत्वप्रकारकज्ञानमावश्यकमिति ध्वनितम् । अनुभवविषयं यथाश्रुतं विकल्प्य दूषयति---**न कर्त्तव्यमिति** । अध्यवसायः अवश्यमिदम्मयानुष्ठेयमित्याकारकेच्छाविशेषः । उचितार्थः कुर्य्यामित्यतो भेदेन । **व्यवहितेति** । विलम्ब-भाविकृते विषयसंकल्प इत्यर्थः । नन्वयमेव विधिरस्तु इत्यत्राह--**स चेति** । कर्त्तव्यतायां तादृशसंकल्पविशेषे प्रागभावत्वं तत्प्रतियोगित्वं तस्मिन्निति शक्यत्वमतः
15 कृतिविषयत्वं, तच्चोपादाने कृतिप्रकारके घटत्वादौ च गतमत आह---**तस्मिन्निति** । तत्रापि उपादानं वारणीयम् । **सतीति** । तदा तेन प्रागभावप्रतियोगित्वलाभाय कर्त्तारं प्रत्युपकारकत्वं प्रवर्त्तमानेष्टसाधनत्वम् । **कुतश्चिदिति** । समुद्रतरणादेरपि प्रवर्त्तते प्रागभावप्रतियोगित्वस्य तत्रापि सत्त्वादिति । दुःखे दुःखैकफलके । **वक्ष्यत इति** । निषेधानुपपत्तिर्दोषस्तत्र वक्ष्यत इत्यर्थः । भट्टमतमुत्थापयति---**करणमिति** ।
20 शब्दलिङादिरूपस्तदर्थः । आख्यातत्वेन लिङोऽपि भावनावाचकतया भावनापि लिङर्थः । भावनादिरित्यादिपदाद्व्यापारपरिग्रहः । इत्थं च करणपदम् इष्टरूप-फलकरणपरं क्रियाद्वारा भावनाया अपि तत्त्वात् क्रियारूपफलायोगव्यवच्छिन्नतया वा तत्त्वम् ॥ १२ ॥

अस्तु तर्हि करणधर्म्मः । न । करणं हि शब्दः, तद्धर्म्मोऽभिधा वा स्यात्, तदर्थो भावनादिर्वा, तद्धर्म्म इष्टसाधनता वा ? न प्रथमः,--

**असत्त्वादप्रवृत्तेश्च नाभिधाऽपि गरीयसी ।**
**बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥ १३ ॥**

सङ्गतिप्रतिसन्धानाधिकायां तस्यां प्रमाणाभावात् । अन्यसमवेतस्यापूर्ववदन्यव्यापारत्वेनाप्युपपत्तेः । विषयतयाऽपि च स्वव्यापारं प्रति लिङ्गवद्धेतुभावाविरोधात्, अधिकत्वेऽपि ततोऽप्रवृत्तेः । बालानां तदभावेऽपि तद्भावात् । शब्दान्तरेण तच्छ्राविणामप्यप्रवृत्तेः । 5

न च विलक्षणैव सा लिङो विषयः । तद्वैलक्षण्यं प्रतीतं प्रति चेत्, अर्थविशेषोऽपि स्यात् । प्रवृत्तिमात्रं प्रति चेत्, अभिधासमवेतं तदिति कुतः ? तत्सन्निधानादिति चेत् । न । अनियमात् । अन्यस्य सर्वस्य निषेधादिति चेत् । न । प्रवृत्तिहेतुत्वनिषेधस्य तुल्यत्वात् । शब्दैकवेद्यत्वे चाव्युत्पत्तेः । 10

प्रवृत्त्यन्यथाऽनुपपत्तिसिद्धे व्युत्पत्तिरित्यपि वार्त्तम् । न हि प्रवृत्तिहेतुः कश्चिदस्तीति प्रवर्त्तते । इष्टसाधनता तु स्यात् । सर्वो हि मया क्रियमाणमेतन्मतं समीहितं साधयिष्यतीति प्रतिसन्धत्ते, तत इच्छति कुर्यामिति, ततः करोतीति सर्वानुभवसिद्धम् । 15

तदयं व्युत्पित्सुर्यज्ज्ञानात् प्रयत्नजननीमिच्छामवाप्नवान्, तज्ज्ञानमेव लिङ्श्राविणः प्रवृत्तिकारणमनुमिनोति ।

ततश्च कर्त्तव्यतैकार्थसमवायिनी इष्टसाधनता लिङर्थ इत्यवधारयति । न च वाच्यम् एवञ्चेत् वरं कर्तव्यतैवास्तु, अवश्याभ्युपगमनीयत्वात्, ; कृतमिष्टसाधनतया इति । यथा हि नेष्टसाधनतामात्रं प्रतीत्य प्रवर्त्तते, असाध्येषु व्यभिचारात् । तथा प्रयत्नविषयसमवायिनीमिष्टसाधनतामधिगम्याधिकारी प्रवर्त्तते इत्यनुभवः । 20

तत्र विषयो धातुना भवनाऽऽख्यातमात्रेण, शेषन्तु तद्विशेषेण लिङा इत्येवमिष्टाभ्युपायतायामधिगतायामन्यबलात् तद्विषयस्येष्टसाधनत्वावगतिरिति कर्त्तव्यतैकार्थसमवायिनीष्टाभ्युपायता लिङः प्रवृत्तिनिमित्तमित्युक्तम् । 25

करणस्येष्टसाधनताऽभिधाने ज्योतिष्टोमेनेति तृतीया न भवितव्यमिति तु देश्यमवैयाकरणस्यावधीरणीयमेव । तत्सङ्ख्याऽभिधानं हि तदभिधानमाख्यातेन, न च तत् प्रकृते । न च यागेष्टसाधनताऽभिधानं लिङा, किन्त्वन्वयबलात्तल्लाभ इत्युक्तम् ।

यत्तु सिद्धोपदेशादपि प्रतीयते इष्टसाधनता, न चातः सङ्कल्पात्मा प्रवृत्तिरस्तीति देश्यम् । तत्र समुत्कटफलाभिलाषस्य समर्थस्य तत्साधनताऽवगमेऽपि न प्रवृत्तिरिति कः प्रतीयात् ? सर्वपक्षसमानञ्चैतत् समानपरीहारञ्चेति किन्तेन ? 30

अत्राभिधीयते—अस्तु प्रयत्नविषयसमवायिनीष्टसाधनता प्रवृत्तिहेतुः, तथापि नासौ लिङर्थः, सन्देहात्। सा हि किं साक्षादेव लिङाऽवगम्यते, स्तनपानादावनुमानादिव बालेन; किं वा तत्प्रतिपादितात् कुतश्चिदर्थादनुमीयते, चेष्टाविशेषानुमितादिवाभिप्रायविशेषात् समयाभिज्ञेनेति सन्दिह्यते? एवञ्च सति सा नाभि-
5 धीयते इत्येव निर्णयः ॥ १३ ॥

आमोदः

तदेतत् भट्टमतमुत्थापयति—**करणमिति**। **शब्द इति**। लिङादिशब्द इत्यर्थं। किंचालिङ आख्यातत्वेन योऽर्थो भावनादिस्तद्गतमिष्टसाधनत्वं लिङर्थं इत्यर्थः। **असत्त्वादिति**। शब्दगताया भावनाया असत्त्वात्। न वाऽभिधाज्ञानात् प्रवृत्तिः गरीयसीति सकलापेक्षया प्रवर्तिकेत्यर्थः। परि-
10 शेषादपि नाभिधासङ्कल्पादीनामप्रवर्तकत्ववदभिधाया अपि प्रवर्तकत्वे बाधकस्योक्तत्वादित्यर्थः। असत्त्वादिति व्याचष्टे—**सङ्गतीति**। सङ्केतस्मृतेरन्या काचिच्छब्दसमवेता भावना नास्त्येवेत्यर्थः। ननु सङ्गतिस्मृतिरात्मसमवेता, सा कथं शब्दव्यापारः स्यान्न हि शब्दस्या(शु)तरविनाशिनोऽन्वयप्रतिपादकत्वं व्यापारमन्तरेण तस्माच्छब्दव्यापारः शब्दसमवेतैव
15 भावना वक्तव्या इत्यत आह—**अन्यथेति**। यथा यागादेरात्मसमवेतमपूर्वं व्यापारः, तथा प्रकृतेऽपि स्यादित्यर्थः। ननु सङ्गतिस्मृतौ पदं करणं न भवति, तथा च कथं सा पदव्यापारः स्यादित्यत आह—**विषयतयापीति**। सङ्गतिस्मृतेः पदं विषयो भवत्येवातः सा कथं न व्यापारः भवति हि विषयतया लिङ्गम् लिङ्गपरामर्शजनकम्, स च तद्व्यापारः, तथाऽत्रापी-
20 त्यर्थः। स्मृतेर्विषयजन्यत्वमभ्युपेत्योक्तं भवतु वा भावना शब्दसमवेता, तथापि तज्ज्ञानं न (प्र)वर्तकं भावनापदादपि प्रवृत्तिप्रसङ्गादित्याह—**अधिकत्वेऽपीति**। भावनायाः प्रवर्तकत्वे व्यतिरेकव्यभिचारमाह—**बालानामिति**। अन्वयव्यभिचारमाह—**शब्दान्तरणेति**। भावनादिशब्दान्तरेणेत्यर्थः। ननु लिङुपस्थाप्या अन्यैव भावना यतः प्रवृत्तिर्भावनादिपदोप-
25 स्थाप्या त्वन्यैवेति नान्वयव्यभिचारः इत्यत आह—**न चेति**। तच्च वैलक्षण्यं ज्ञाननिष्ठमेव विलक्षणप्रतीतिविषयत्वमेव च तस्यावैलक्षण्यमित्याह—**तद्वैलक्षण्यमिति**। लिङ्पदजनितभावनाप्रतीतिर्भावनादिपदजनितभावनाप्रतीतेर्विलक्षणैवातः प्रवर्तिकेति यदि, तदा प्रतीतिवैलक्षण्यं विषयवैलक्षण्याधीन-

मिति कुतस्तन्मात्रात् प्रवृत्तिरित्याह--**अर्थविशेष इति**। ननु प्रवृत्ति-जनकत्वमेव वैलक्षण्यम्, न ततोऽन्यदित्याशङ्क्य निराकरोति-**प्रवृत्तीति**। प्रवृत्तिजनकत्वं सहकार्यधीनं न तु तत्रान्यत् प्रयोजकमभिधाज्ञानादिकं येन शब्दनिष्ठमभिधास्वरूपमायास्यतीत्याह--**अभिधा(न)समवेतमिति**। अभिधानं शब्दः, न तु किञ्चिदवश्यं प्रवर्तकं कल्पनीयं प्रवृत्तिदशायाञ्च सन्निहितः शब्द　5
एवातः प्रवर्तकं कल्प्यमानं तत्समवेतमेव कल्पयितुमुचितमिति शङ्कते--**तदिति**। अन्यनिष्ठेनापि कल्पितेन प्रवृत्तिः सम्भवत्येवेति परिहरति--**नेति**। अन्यस्य संकल्पकार्यत्वादेः प्रवर्तकत्वनिषेधात् भावनैव परिशिष्यत इति शङ्कते--**अन्यस्येति**। अन्येषां प्रवृत्तिहेतुत्वनिषेधकयुक्तेर्भावना-साधारण्यादिति परिहरति-**नेति**। ननु प्रवर्तकान्तरालिङ्सन्निहिताया　10
एव भावनायाः प्रवर्तकत्वं पर्यवसन्नमत आह-**सन्निधीति**। सङ्कल्पादयः सन्निहिता एवेत्यर्थः। अभिधाया लिङर्थत्वे व्युत्पत्तिरशक्येत्याह-**शब्दे-केति**। ननु प्रवृत्त्यन्यथानुपपत्त्या उपस्थितायामभिधायां व्युत्पत्तिः स्यादि-त्याह-**प्रवृत्तीति**। प्रवृत्त्या कार्येण कारणमात्रमायाति न त्वभिधाविशेष्य-मात्रान्यतः प्रवृत्तिहेतुरिति ज्ञानं तु न प्रवर्तकमित्याह--**न हीति**।　15
साम्प्रदायिकमतमाह-**इष्टेति**। **स्यादिति**। लिङाद्यर्थ इति शेषः। अत्रानुभवं प्रमाणत्वेन दर्शयति--**सर्वो ही(ति)**। मया क्रियमाणमेतदिति स्वकार्यं दर्शयति, तेन स्वकृत्यसाध्ये प्रवृत्तिरपास्ता। समीहितं साधयिष्य-तीति विषभक्षणादौ प्रवृत्तिरपास्ता। मम समीहितमिति परेष्टसाधने स्वसाध्ये प्रवृत्तिरपास्ता। प्रवर्तकज्ञानमुक्त्वा तज्जनित(ा)मिच्छां दर्शयति-　20
**तत इति**। लिङ्श्राविण इति पठेत यजेत इत्यादिलोकवेदसाधारण्येनैव प्रयोज्यप्रवृत्तावपीष्टसाधनताज्ञानमेव कारणमिति तटस्थो बालकः स्वानुभवानुसारेण कल्पयतीत्यर्थः। पर्यवसन्नं लिङर्थमाह-- **तथा चेति**। **ततश्चेति**। कार्यतासमानाधिकरणमिष्टसाधनत्वं लिङर्थं इत्यर्थः। कार्यता-मात्रविधिवादिनो मतमुत्थाप्य निराकरोति-**न चेति**। तावन्मात्रस्य　25
विषभक्षणादौ व्यभिचारात् उक्तस्यैव प्रवर्तकत्वमभ्युपेयम् इत्याह-**यथा हीति**। **प्रयत्नविषयस्वरूपमिति**। मत्कृतिविषयोऽयमिति। ज्ञानमपि न प्रवर्तक-मित्यर्थः। **विषय इति**। यागपाकादिरित्यर्थः। **आख्यातप्रत्ययमात्रेणेति**। लिङ एव आख्यातत्वपुरस्कारेणैव भावनात्मककृतिवाचकत्वं लिङ्त्वनिबन्धनं

तु लिङ इष्टसाधनता वाच्येत्याह–शेषस्त्विति। शेषमित्यपि क्वचित् पाठः। यजेतेति। प्रकृतिप्रत्ययसमुदायबललभ्यमर्थमाह––कर्तव्यतेति। ननु करणस्य यागस्य इष्टसाधनता लिङा चेद्बोद्धव्या तदा ज्योतिष्टोमेनेति तृतीयाऽनर्थिकैव स्यात्, तदभिधेयस्य करणत्वस्य लिङो वा अभिहित्वात् 5 इत्याह–करणस्येति। यजेतेत्याख्यातेन करणगता संख्या नाभिधीयते किन्तु कर्तृगता, कर्तरि लकारस्यानुविधानात् इत्याह–तत्संख्येति। प्रकृत इति। यजेतेत्यर्थः। किञ्च लिङा साधनतामात्रं बोध्यते, न तु यागेष्ट-साधनत्वं न तु यागनिष्ठमित्यर्थः। अन्वयबलात् तृतीयापदसमभिव्याहारात् तल्लाभः, करणत्वलाभ इत्यर्थः। तथा च साधनत्वकारणत्वयोर्भिन्नोपाधि- 10 तया न पौनरुक्त्यमित्यर्थः। सङ्कल्पात्मेति। सङ्कल्पात्मापि प्रवृत्तिर्न भवति किं पुनः कृतिरूपेत्यर्थः। तत्र भवत्येव प्रवृत्तिरित्याह–तत्रेति। किञ्च येषामपि कार्यतादिर्विधिः तेषामपि यागः कार्यं इति सिद्धोपदेशात् प्रवृत्तिप्रसञ्जने यः परीहारः सोऽस्माकपीत्याह–सर्वेति। अत्राभिधीयत इति। अत्र लिङर्थविवेचने स्वसिद्धान्तोऽभिधीयत इत्यर्थः। अस्त्विति। स्व- 15 कार्यतासमानाधिकरणेष्टसाधनताज्ञानं प्रवर्तकमित्यनुमन्यामहे एवं तद्विषय-योर्लिङादि वाच्यो लिङादिवाच्यानुमेयो वा इति सन्देह इत्यर्थः। सन्देहाकारमाह––सा हीति। स्तनपानमिष्टसाधनं स्तनपानत्वात् पूर्वानुभूत-स्तनपानधदिति जीवनादृष्टोद्बोधितप्राक्त्न(ग्भ)वीर्यसंस्कारजन्यव्याप्तिस्मृति-बलात् यथा लिङ्गेन साक्षादेवेष्टसाधनता प्रतिपाद्यते, तथा लिङाऽपि 20 साक्षादेवेष्टसाधनता बोध्यते। यद्वा लिङः पुमभिप्रायोऽर्थः। तेनेष्टसाधन-ताऽनुमीयत इति विकल्पार्थः। अत्र दृष्टान्तमाह––चेष्टेति। यथा कृतसमया चेष्टा तथा पुरुषाभिप्रायमुन्नीय प्रतिपाद्यनिवृत्ती भवत इत्यर्थः। स्वपक्षमाह–एवमिति ॥ १२ ॥

### बोधिनी

तदेवं कर्मधर्मपक्षं निराकृत्य इदानीं कर्म विधिरित्येन्निराकर्तुमुपक्षिप्य विकल्पयति 25 —अस्त्विति। प्रवृत्तिं प्रति पुरुषेण नियुज्यमानो लिङादिशब्दः करणम् तस्य च धर्मो व्यापारः स च स्वार्थस्य भावना या अभिधा सैव प्रवर्तनात्मको विधिः यद्वा लिङर्थो[1]

---

१ क. लिङर्थे।

भावनादिकरणं तस्य धात्वर्थं प्रति निर्वाहकत्वात्तद्धर्मं इष्टसाधनत्वं स विधिरिति तत्र वाभिधात्वं तावन्निराचष्टे—न प्रथम इति। शब्दसमवेतस्याभिधात्मनो व्यापारस्यासत्त्वात् सत्त्वेऽपि ततोऽप्रवृत्तेश्च न विधित्वम्। न च विधित्वेन प्रसक्तानां क्रियादीनां बाधकेन प्रतिषेधात् अभिधाया एव परिशेषः। तस्या अपि बाधकसद्भावादिति असत्त्वादित्येद्वि-भजते। सङ्गतिः[1]प्रतिसन्धानमेव शब्दव्यापारोऽभिधेत्यर्थः। कथमन्यसमवेतस्यान्यव्या- 5
पारत्वमत आह—आत्मेति। यथा ह्यात्मसमवेतमेवापूर्वं यागस्य व्यापारः, तथा श्रोत्रात्मसमवेतस्यापि सङ्गतिप्रतिसन्धानस्य शब्दव्यापारत्वमिति[2] कथमशब्दहेतुकस्तद्व्यापार इत्यत्राह—विषयतयेति। तथा लिङ्गस्य परामर्शज्ञानं प्रति विषयतया हेतुत्वम्। तथा प्रतिसन्धानं प्रति विषयतया शब्दस्य हेतुत्वोपपत्तिरिति। यद्वान्यसमवेतस्यापूर्वस्य यागजन्यत्वात्तद्व्यापारत्वमुपपद्यते। सङ्गतिप्रतिसन्धानस्य तु शब्दादन्यस्य कथं तद्व्यापा- 10
रत्वमित्यत्राह—विषयतयेति। यथा नु लिङ्गस्य परामर्शज्ञानं प्रति हेतुत्वम् तथा सङ्गतिप्रतिसन्धानं प्रति शब्दस्य सङ्गत्याश्रयत्वेन विषयतया शब्दस्य हेतुत्वाविरोध इति। अप्रवृत्तेरिति विभजते—अधिकृत्वेऽपीति। अभिधादिशब्दान्तरेणाभिधाना-वगमेऽपि न प्रवृत्तम् ते च तदनवगमेऽपि लिङर्थज्ञानाभावेऽपि प्रवृत्तिसम्भवादिति अनेन व्यतिरेकव्यभिचारादप्रवृत्तिहेतुत्वमुक्तम्। अन्वयव्यभिचारादप्रवृत्तिहेतुत्वं दर्शयति— 15
प्रवृत्तिव्यभिचारादिति। विलक्षणेनैवाभिधा प्रवृत्तिहेतुः, सैव लिङो विषयः नाभि-धामात्रम्, अभिधाया द्वे कार्ये अर्थप्रतिपत्तिः पुरुषप्रवृत्तिश्च तत्र यदि प्रतिपन्नं प्रति वैलक्षण्यं विलक्षणप्रतिपत्तिजनकतया तद्वैलक्षण्यमित्यर्थः। तत्र पक्षे प्रतीतिविषयार्थविशे-षणमन्तरेण प्रतीतिवैलक्षण्यानुपपत्तेरर्थविशेषोऽपि स्यात्। तत्र स एवार्थविशेषो लिङाभिधेय इत्याह—प्रवृत्तिमात्रमिति। मात्रशब्देन प्रतिप···अभिधेति। प्रवर्त्त- 20
कत्वलक्षणं तद्वैलक्षण्यमभिधायामेव समवेतं न तु लिङर्थत्वेन वादिभिरुच्यमानेषु कार्या-दिष्विति कुतो लभ्यत इति हेतुं शङ्कते—सन्निधे[3]रिति। लिङ्शब्दश्रवणानन्तरं जायमानायाः प्र[वृत्तेः] व्यापारभूताया अभिधायाः सन्निधेरिति। अनियमादिति। अन्येषामपि लिङर्थतया सन्निहितत्वेनाभिधाया एव सन्निधिरिति नियमाभावादित्यर्थः। अन्यस्य सर्वस्य निषेधादित्येतत् प्रवृत्तिहेतुत्वनिषेधाभिप्राय [एव] सन्निधि- 25
निषेधोऽभिप्रायं वेति विकल्प्य दूषयति—न प्रवृत्तीति। तुल्यत्वादिति। अभिधाया अप्युक्तेन प्रकारेण प्रवृत्तिहेतुत्वनिषेधस्य तुल्यत्वादिति कार्यादीनामपि

१ क. सङ्गतीति। २ क. °त्वमपि कथं शब्दस्य हेतुत्वं तस्मिन् व्यापार।
३. •सन्निधानादिति मुद्रितपुस्तकपाठः।

लिङ्शब्दश्रवणकाले प्रतीयमानानां निषेधस्याशक्यत्वादिति—**शब्दैकवेद्यत्व इति**। वैलक्षण्यस्य शब्दैकवेद्यत्वे तत्र शब्दव्युत्पत्त्यभावान्न तस्य लिङर्थत्वमिति।

ननु प्रवृत्त्यन्यथानुपपत्त्यार्थापत्त्या सिद्धे प्रतीते वैलक्षण्ये [ व्युत्पत्तिः ] चेत्तत्राह—**प्रवृत्तीति**। कुत इत्याह—**न हीति**। प्रवृत्त्यन्यथानुपपत्त्या हि प्रवृत्तिहेतुः कश्चिद-5 स्तीत्येतावन्मात्रं प्रतीयते एवं कश्चिदस्तीत्यनिर्धारितविशेषे वस्तुनि व्युत्पन्नेन शब्देनापि प्रवृत्ति[र]स्तीति प्रतीयते न चैवं रूपः स तु प्रतीत्य कश्चित् प्रवर्त्तते इति एवं कर्तृकर्म-धर्माणां करणधर्मयोरप्यभिधेयेष्टसाधनत्वयोरभिधायाश्च विधित्वं निरस्य इष्टसाधनक्रिया-विधित्वं पूर्वपक्षत्वेन परिगृही[तेष्ट सा]धनतेति इष्टसाधनताया एव स्वात्मनि प्रवृत्तिहेतुत्वं जानन् व्युत्पित्सुः कर्तव्यतैकार्थसमवायिनी सैव लिङर्थ इत्यवधारयतीति सैव लिङर्थो 10 विधिरिति दर्शयति—**समवायिनीति**। प्रयत्नजननीमित्येतत् प्र[वृत्तेः] अतिविषय-त्वलक्षणकर्तव्यतैकार्थसमवायिन्या एवेष्टसाधनताया एव लिङर्थत्वावधारणार्थमुक्तम्। इष्ट-साधनतापक्षेऽप्यवश्याभ्युपगमनीया कर्तव्यतैव ··· कल्पनालाघवाय न···मित्याह—**न चेति**। परं केवलं कर्तव्यतैवास्तु लिङर्थ इत्यर्थः। तक्षकचूडादिना इष्टसाधनेनापि तक्षकचूडारत्नेनेत्यर्थः। कर्तव्यत्वस्य च इष्टसाधनत्वस्य च लिङर्थत्वं प्रकारान्तरेणेत्यत्राह—15 **तत्रेति**। कृतिर्भावनाया विषयो यागादिर्धातुनाभिधीयते, भावना कृतिराख्यातप्रत्ययमात्रेण लिङामाख्यातप्रत्ययविशेषाणां सामान्यरूपेणाख्यातप्रत्ययमात्रेणाभिधीयते। [कृति]विषयस्य यागस्येष्टसाधनत्वलक्षणं तद्विशेषेणाख्यातप्रत्ययविशेषेण लिङाभिधीयत इत्येवमनेन प्रकारेण लिङः प्रवृत्तिनिमित्तमित्युक्तमिति सम्बन्धः। लिङेष्टाभ्युपा[यता]द्यवगताय···प्र···परस्परमन्वयबलात्तद्विषयस्य कृतिविषयस्येष्टसाधनतावगतिर्भवतीति कर्तव्यतैकार्थसमवा-20 यिनीष्टाभ्युपायता लिङः प्रवृत्तिनिमित्तमित्युक्तमिति। **करणस्येति**। करणस्य यागस्ये-ष्टसाधनत्वाभिधाने या[ग]स्य लिङाभिहितत्वाद्यागनामधेयात् ज्योतिष्टोमपदादनभिहिताधि-कारविहितया तृतीयया विभक्त्या न भवितव्यमित्यवैयाकरणस्य व्याकरणशास्त्रानभिज्ञस्य चोद्यमनवधारणीयमवज्ञेयमिति कुतः। **सङ्ख्येति**। यथा कर्तृसङ्ख्याभिधानं कर्त्र-भिधानमाख्यातेनेति प्रागिष्टम्, तथा करणसङ्ख्याभिधानं करणाभिधानमाख्यातेनेत्यर्थः। 25 न च करणसङ्ख्याभिधानं यजेतेत्यत्रास्ति करणसङ्ख्यायाः पदान्तरे···दित्याह—**न चेति**। किञ्च न यागस्य करणस्येष्टसाधनताभिधानं लिङा क्रियते, किन्त्विष्टसाधन-तामात्राभिधानमेव अन्वयबलादेव यागेष्टसाधनतालाभ इति करणरूपाभिधानमपि लिङा नास्तीत्याह—साक्षाद्विधिवाक्यश्रवणेऽपि न बाह्यपरिस्पन्दात्मा प्रवृत्तिः सर्वेषामित्यत उक्तम्

—नचान्तःसङ्कल्पेति। साक्षाद्विधिवाक्यश्रवणे प्रवर्त्तितव्यमित्यन्तःसङ्कल्पात्मा प्रवृत्तिर्भवति। न चेयमपि सिद्धोपदेशादित्यर्थः। **समर्थस्येति**। किञ्च कार्यादिविधिपक्षेऽपि कार्यादिशब्देन कार्यादिश्राविणां न प्रवृत्तिसङ्कल्प इति चोद्यं समानम्। समुत्कटकार्यत्वादिबुद्धेः प्रवृत्तिसङ्कल्पोऽसाविति समानपरिहारं चेति किमनेन चोद्येनेति तथा चोक्तम् 5

> यश्चोभयोः समो दोषः परिहारोऽपि वा समः।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति।

अत्र सिद्धान्तमाह—**अत्राभिधीयत** इत्यादिना सन्देहादेव···स्तनपानाद्यनुमानवदिति। यथा हि स्तनपानत्वादिदमिष्टसाधनमिति स्तनपानलिङ्गादनुमानात् बालेनेष्टसाधनत्वमवगम्यते तथेत्यर्थः। **तत्प्रतिपादितादिति**। लिङ्प्रतिपादितात् कुतश्चिद्वक्तुं 10 नियोगादिरू[पाद]र्थादनुमीयते चेष्टा तु विशेषानुमिताभिप्रायविशेषात् समयाभिज्ञेन चेष्टासंकेताभिज्ञेनेति ॥ १३ ॥

विवेकः

असत्त्वात् अभिधापदवाच्ये शब्दवृत्तित्वस्य भावात्, अभिधाज्ञाने तत्त्वस्य प्रवृत्तेः न गरीयसी इतरानपेक्षेण, प्रवृत्तिकाल इतरापेक्षायां तु तैरन्यथासिद्धिरिति भावः। संकल्पादीनां विषयत्वे यद्बाधकम् अस्य अभिधायामपि समानत्वात्। परिशेषादपि 15 तस्याप्रवृत्त्युपयोगित्वमित्यर्थः। यद्यप्यभिधाया अस्मन्नये असिद्धया नैतत्सम्भवः, तथापि शब्दवृत्तिधर्म्मत्वावच्छेदेन यागादिगोचरप्रवृत्त्युपयोगित्वाभावसाधने तात्पर्य्यम्। **असत्वादिति**। व्याकरोति **सङ्गतीति**। सङ्गतिः प्रतिसन्धानं विषयशब्दतदर्थयोः सम्बन्धः। तस्याम् अभिधापदवाच्यायाम्। ननु प्रवृत्तिर्द्वयी, शाब्दी, तदितरा च। तत्राद्यायां शब्दः करणं तत्त्वनिर्वाहकश्च व्यापारः स्ववृत्तिरेव वाच्यः, छिदाकरणकुठारादौ 20 उद्यमानादित्याशङ्क्याह—**अन्येति**। यथा यागस्य स्वर्गकारणान्यनिष्ठमपूर्वं व्यापारः स्ववृत्तिरेव वाच्यः, तथा शब्दस्यापि ज्ञानमेवात्मनिष्ठं व्यापार इत्यर्थः। ननु यागविषयकं कार्यमित्यनुभवात् कार्येणापूर्वयागादेः कश्चिद् सम्बन्धः वाच्यस्तथा च सोऽपि करणनिष्ठ एव इत्यत्राह—**विषयतयापि चेति**। स्वव्यापारं शब्दविषयकं ज्ञानं विषयतया शब्दनिष्ठं तत् प्रति शब्दस्य हेतुत्वाविरोधात्। तथा च लिङ्गस्य यथा स्वज्ञानद्वारा 25 प्रवृत्तिकरणत्वं स्यादित्यर्थः। हेतुत्वव्युत्पादनं च व्यापारतानिर्वाहाय। असत्त्वादिति हेतुत्वम् अन्यथापि व्याचष्टे—**अधिकत्वेऽपीति**। सङ्गत्यतिरिक्ताया अभिधापदवाच्य-

त्वोपगमे अभिधाज्ञानस्य प्रवृत्तिसामान्याव्यवहितप्राक्कालेऽसत्त्वात् । न तज्ज्ञानं हेतुरित्यर्थः । प्रवृत्तित्वे रूप्यं ( ? ) चाप्रामाणिकमिति भावः । अप्रवृत्तेरिति हेतुं व्याकरोति **शब्दान्तर इति** । अभिधाशब्दादितत्तज्ज्ञानस्य प्रवृत्तेरित्यर्थः । ननु विलक्षणैवाभिधालि(ङ)भिधेया प्रवृत्तिप्रयोजिका वाच्या शब्दान्तराच्च न तत्प्रतिपत्तिरित्याह—
5 **न चेति** । तद्वैलक्षण्यम् इत्यक्षरतात्पर्ययोरर्थः । विलक्षणज्ञानविषयत्वमेव वाच्यम् । ज्ञाने वैलक्षण्यं च जातिकृतं वा विध(षय?)कृतं वा ? आद्ये, जातिसाङ्कर्य्यम् , द्वितीये त्वाह—**अर्थविशेष इति** । सोऽपि विशेषो यदि जातिरूपस्तदा तत्सङ्केतग्राहकवाक्यादितोऽपि प्रवृत्त्यापत्तिरिति प्रवृत्तिसामग्रीसमवहितमेव तद्वाच्यम् इत्याह––**प्रवृत्ति—अभिधेति** । अभिधानं शब्दः, तत्समवेतस्य किमर्थं वैलक्षण्यं तदुपेयते यावताऽ-
10 न्यस्यापि तथात्वस्य सुवचत्वमिति । ननु शब्दस्यान्वयव्यभिचारात् वैलक्षण्ये कल्पनीये उपस्थितशब्दवृत्तिधर्म्मस्यैव तत् कल्प्यते इत्याह—**तत्संवि ( नि ? ) धानादिति** । शब्दवत् अन्यस्यापि तदानीमुपस्थितत्वान्न शब्दस्य नियम इत्याह—**अनियमादिति** । नन्वन्यवृत्तिधर्म्मस्य प्रवृत्त्युपयोगित्वनिषेधात् तत्र कल्पनमित्याह—**अन्यस्येति** । तत्रापि भावनायामपि व्यभिचारेण तुल्यत्वात् । ननु क्वचित् प्रवृत्तौ अभिधाज्ञानस्य सहचार-
15 दर्शनात्तत्रैव तत् कल्प्यते इत्यत्राह—**सन्निधीति** । सङ्कल्पापूर्वादावपि तत्सन्निधानस्य कदाचित् सत्त्वात् न नियम इति भावः । ननु जातिविशेष एवाभिधाया वैलक्षण्यं स च धर्मिग्राहकप्रमाणबलात् लिङ्गादिवेद्य एवेति कल्प्यत इति नातिप्रसङ्ग इत्यत्राह—**शब्दैकेति** । तथा च शक्तिग्रहानुपपत्त्या प्रमाणान्तरेणापि तद्ग्रहोऽभ्युपेय इति स एवातिप्रसङ्ग इति भावः । **न हीति** । ततः प्रवृत्तौ च स एवातिप्रसङ्ग इति भावः ।
20 सम्प्रदायमतमाह—**इष्टेति** । मया क्रियमाणं मत्कृतिसाध्यम् इदानीमिति लभ्यते, तेन भावियौवराज्यव्यवच्छेदः । समीहितं मदिष्टम् , इदं च न ज्ञानाकारः स्वरूपसत्प्रवर्त्तमानेच्छाविषयो तत्तत्साधनताधिय एव प्रवर्त्तकत्वात् । **तत इच्छतीति** । इदानी( म ? ) स्मत्कृतिसाध्यत्वप्रकारकेच्छावान् भवतीत्यर्थः । करोति कृतिमान् भवति । **सर्वेति** । कारणताग्रहोपलक्षणम् । त ( य ? ) ज्ज्ञानात् यादृशज्ञानत्वे, एवमग्रेऽपि ।
25 प्रवृत्तिजननीमिच्छाम् उपायचिकीर्षां प्राप्तवान् उपलब्धवान् । एकार्थसमवायिनी समानाधिकरणकृतिसाध्यत्वेष्टसाधनत्वयोः प्रवृत्तिप्रयोजकत्वम् उक्तवैचित्र्येण दर्शयितुं शङ्कते—**न चेति** । तत्र यजेतेत्यादिवाक्यार्थं व्युत्पादयति—**तत्रेति** । विषयो यागपाकादि धातुना यजिपच्यादिना भावना कृतिः आख्यातप्रत्ययमात्रेण आख्यातत्वावच्छिन्नसामान्यशक्त्या, शेषम् इष्टसाधनत्वम् । तद्विशेषेण लिङा आख्यातत्वव्या-

प्यलिङ्त्वावच्छिन्नशक्त्या, अत्र च कृतिसाध्यत्वं न लिङ्त्वावच्छिन्नशक्यं कृत्यसाध्ये सामान्याख्याते लभ्यते तदनुकूलकृत्यभावेनैवान्वयादिति चेत्, कृतिप्रकारकेच्छयैव चिकीर्षा तन्निर्वाहाय तादृशं ज्ञानमपेक्षितम्। तदर्थं स्मारकशक्तेरभेदेऽप्यर्थभावकशक्तेर्व्युत्पत्ति-विशेषस्य लिङ्त्वावच्छेदेनावश्यकल्पनीयत्वमित्यपरे। वस्तुतस्तु समुद्रन्न तरेदित्यादौ वृत्त्यनियामकसम्बन्धेन नञ्त्वान्वयेऽतिप्रसङ्गात्। कृतिसाध्यत्वमपि लिङ् (त्व) ाव- 5
च्छिन्नशक्यमिति मणिकृदनुयायिनः। सामानाधिकरण्यसम्बन्धेन कृतिविशिष्टमिष्टसाधनत्वं शक्यम्। **आख्यातेनेति**। इष्टकरणत्वं तृतीयार्थसाधनत्वमात्रम्। **लिङर्थ इति**। नाभिहितत्वम्। ननु यागे इष्टसाधनत्वं साक्षाद्बाधितम् इष्टकरणत्वे विश्राम्यति इत्यत्राह— **न चेति**। अन्वयबलात् करणत्वपर्य्यवसानेऽपि पदार्थमर्यादा नाभिहितमिति न तथात्वमित्यर्थः। तत्र यद्यपि इष्टसाधनत्वस्य विध्यर्थत्वे इष्टैकदेशेन तृतीयार्थस्याऽन्व- 10
योऽव्युत्पन्नस्तथापि इष्टसाधनत्वे स्वातन्त्र्येण शक्ये इति नयेनेदम्। तथा चाग्निष्टो-मनिष्ठेष्टकरणताश्रये यागे इष्टसाधनमिति वा अग्निष्टोमनिष्ठेष्टकरणताऽभिन्नं यदिष्टसाधनत्वं तथा न याग इति वान्वयः, लिङ्स्थले च विशिष्टैव व्युत्पत्तिकल्पना, नान्वयः। **एकदेशिनस्तु** अभेद एव तृतीयार्थस्तथा चाग्निष्टोमाभिन्नयाग इष्टसाधनमित्येवान्वयः इति नानुपपत्तिगन्धोऽपि। **आचार्यास्तु वैयाकरण**मतमभ्युपेत्यैव समादायाभ्युपेत्यैव 15
इत्याहुः। **सिद्धेति**। याग इष्टसाधनमित्यात्मकात् प्रवृत्तिः संकल्पाधीना प्रवृत्तिः कृतिरिति यावत्। प्रवृत्तिपदस्य नानार्थतया विशेषलाभाय कल्पनान्नेत्युक्तम्। **केचित्तु** संकल्पान्ताः संकल्परूपाः, तथा च सुतरां न कृतिरिति भाव इत्याहुः। गोचरस्य समर्थस्य तादृशोपायगोचरेदानींतनमत्कृतिसाध्यताज्ञानवतः। किञ्च कृतिसाध्यतामात्रस्य विध्यर्थत्वेऽपि यागः कृतिसाध्य इति सिद्धोपदेशात् प्रवृत्त्यापादने यः सिद्धान्तः 20
सोऽस्माकमपीत्याह। **सर्वेति**। अत्र चेष्टसाधनत्वं प्रवृत्तिनिमित्तं धात्वर्थेन सममभेदश्च वाक्यार्थः साधनत्वस्य शक्यतावच्छेदकत्वे तु गौरवमिति **केचित्**। निरूपकताविशेषेण साधनत्वस्यापि इष्टमेव प्रवृत्तिनिमित्तं, साधनत्वं चावधित्वविशेषः पदार्थान्तरं वेति तु **नव्याः**। अत्र लिङर्थविवेचने प्रयत्नविषयसमवायिनी इदानीम् अस्मत्कृतिसाध्यत्वे सति स्वरूपसत्प्रवर्त्तमानेच्छाविषयसाधनता प्रवृत्तिहेतुः प्रवृत्तिप्रयोजकः, नासौ लिङर्थः, 25
नैतावतैव लिङर्थत्वेनासौ निश्चेतुं शक्या। सन्देहाकारमाह स्तनपानादेस्स्तनत्वादेस्तादा-त्म्येन स एव वा हेतुः, स्तनपानादेः पक्षीकृतस्य वा तत्त्वं, तत्प्रतिपादितात् कुतश्चिद्व-क्ष्यमाणाभिप्रायात्। अत्र दृष्टान्तमाह—**चेष्टेति**। कृतसम(य)या चेष्टया चेष्टितुरभि-प्रायमुन्नीय प्रतिपाद्यस्य प्रवृत्त्यादि यथेत्यर्थः। तत्र स्वपक्षमाह—**एवमिति**। सा इष्टसाधनता नाभिधीयते लिङा॥ १३॥

हेतुत्वादनुमानाच मध्यमादौ वियोगतः।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः॥ १४॥

तथा हि—अग्निकामो दारुणी मथ्नीयादिति श्रुत्वा कुत इत्युक्ते वक्तारो वदन्ति, यतस्तन्मन्थनादग्निरस्य सिद्ध्यतीति। तरति ब्रह्महत्यां योऽश्वमेधेन यजते इत्या-
5 दाविष्टाभ्युपायतायामेवावगतायामनुमिमते तान्त्रिकाः—यदश्वमेधेन यजेत मृत्युब्रह्म- हत्यातरणकाम इत्यादिविधिम्। निन्दया च निषेधम्। तत् यथा—

अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः

इत्यतो नात्मानं हन्यादिति। कुर्य्याः कुर्य्यामित्यत्र विधिविहितैव लिङ् नेष्टा- भ्युपायतामाह, किन्तु वक्तृसङ्कल्पम् न हीष्टाभ्युपायो ममायमिति कुर्य्यामिति
10 पदार्थः, किन्तु तत्प्रतिपत्तेरनन्तरं योऽस्य सङ्कल्पः—कुर्य्यामिति, स एव। सर्व्वत्र चान्यत्र वक्तुरेवेच्छाऽभिधीयते लिङेत्यवधृतम्। तथाह्याज्ञाऽध्येषणाऽनुज्ञासंप्रश्न- प्रार्थनाऽऽशंसालिङि नान्यत् चकास्ति।

यां वक्तुरिच्छामननुविदधानस्तत्क्षोभाद्बिभेति, सा आज्ञा। या तु श्रोतुः पूजासम्मानव्यञ्जिका, सा अध्येषणा। वारणाभावव्यञ्जिका अनुज्ञा। अभिधान-
15 प्रयोजना सम्प्रश्नः। लाभेच्छा प्रार्थना। शुभाशंसनमाशीरिति।

न च विधिविकल्पेषु निषेध उपपद्यते। तथा हि—यदाऽभिधा विधिः, तदा न हन्यात् हननभावना नाभिधीयते इति वाक्यार्थो व्याघातान्निरस्तः। यदा काल- त्रयापरामृष्टा भावना, तदा नेति सम्बन्धोऽत्यन्ताभावो मिथ्या। यदा कार्यं, तदा न हन्यात् न हननं कार्यमित्यनुभवविरुद्धम्। क्रियत एव यतः। न हननेन कार्यं
20 हननकारणकं कार्यं नास्तीत्यर्थं इत्यपि नास्ति। दुःखनिवृत्तिसुखाप्त्योरन्यतरस्य तत्र सद्भावात् हननकारणकमदृष्टं नास्तीत्यर्थं इति तु निरातङ्कं दृष्टार्थिनं प्रवर्त्त- येदेवेति साधु शास्त्रार्थः। अहननेनापूर्वं भावयेदिति त्वशक्यम्। कारणस्याना- दित्वेन कार्यस्यापि तथाभावप्रसङ्गात्, भावनायाश्च तदविषयत्वात्। अहननसङ्कल्पे- नेति यावज्जीवमविच्छिन्नतत्सङ्कल्पः स्यात्। सकृत् कृत्वैव वा निवृत्तिः। पश्चाद्ध-
25 न्यादेवाविरोधात्। सम्पादितो ह्यनेन नियोगार्थः।

यावद् यावद्धननसङ्कल्पवान् तावत्तावद्विपरीतसङ्कल्पेनापूर्वं भावयेदिति वाक्यार्थः, तथाभूतस्याधिकारित्वादित्यपि वार्त्तम्। तदश्रुतेः। प्रसक्तं हि प्रति- षिध्यते नाप्रसक्तमिति चेत्। न वै किञ्चिदिह प्रतिषिध्यते। तदभावः प्रतिपाद्यते इति निषेधार्थः। हननकरणकमपूर्वं वाक्यार्थः॥

30 किञ्च न हन्यादिति अहननेनापूर्वस्य कर्त्तव्यताप्रत्ययो जातो वेदात्, जातश्च हननक्रियायां रागात्। निष्फलाच्च कार्यादपेक्षितफलं गरीय इति न्यायेन हन्यादे- वेत्यहो वेदव्याख्याकौशलमास्तिक्याभिमानिनो मीमांसकदुर्दुरूढस्य।

इष्टसाधनतापक्षेऽपि न हन्यात् न हननभावना इष्टाभ्युपाय इति वाक्यार्थः। तथाचानिष्टसाधनत्वं कुतो लभ्यते? न हीष्टसाधनं यन्न भवति तदवश्यमनिष्टसाधनं
35 दृष्टमुपेक्षणीयस्यापि भावात्।

यत् रागादिप्रसक्तं प्रतिषिध्यते तदवश्यमनिष्टसाधनं दृष्टम्, यथा सविषमन्नं न भुञ्जीथा इति, तेन वेदेऽप्यनुमास्यते, इत्यपि न साधीयः। प्रतिषेधार्थस्यैव चिन्त्यमानत्वात्।

न हि कर्त्तव्यत्वस्येष्टसाधनत्वस्य भावनाया वा अभावः प्रतिपादयितुं शक्यते, लौकिकानां लौकिकप्रमाणसिद्धत्वात्। तथापि प्रतिपाद्यते तावदिति चेत्। न। 5 पाषण्डागमनिषेधेनानैकान्तात्। नासौ प्रमाणमिति चेत्। न। अर्थविपर्य्ययप्रतिपादनाविशेषेऽस्यापि तथाभावात्।

तात्पर्य्यतः प्रामाण्यमिति चेत्। न। विधिनिषेधयोरनन्यपरत्वात्। न विधौ परः शब्दार्थ इति वचनात्। तथापि निषेधे तथा भविष्यतीति चेत्। न। अविनाभावतदुद्देशप्रवृत्त्योरभावात्। नाप्यसुरामिद्यादिवदस्य नञो विरोधिवचनत्वम्, 10 क्रियासङ्गतत्वात् असमस्तत्वाच्च ॥ १४ ॥

आमोदः

**हेतुत्वादिति** । लिङः श्रवणादपि हेतुत्वाकाङ्क्षासत्त्वादित्यर्थः । **अनुमानादिति** । हेतुत्वेऽवगतेऽपि विधिशेषानुमानादित्यर्थः । **मध्यमादाविति** । मध्यमोत्तमपुरुषलिङोरिष्टसाधनताबोधकत्ववैधुर्यादित्यर्थः । **अन्यत्रेति** । आज्ञाध्येषणादौ पुमभिप्रायस्यैव लिङाभिधानादित्यर्थः । **निषेधेति** । अभिप्रायस्य लिङर्थतामन्तरेण न कलञ्जं भक्षयेदित्यादिनिषेधानाम् अनुपपत्तेश्चेत्यर्थः। 15 **अभिधानेति** । जिज्ञासिताभिधानप्रयोजिकेत्यर्थः । **शुभाशंसनमिति** । पुत्रादिगतसुखित्वाद्यभिप्राय इत्यर्थः । निषेधानुपपत्तितः इति व्याचष्टे—**न चेति** । **व्याघातादिति** । लिङा हननभावनाय अभिहितत्वात् तस्या एव त्वन्मते लिङर्थत्वादित्यर्थः । वर्तमानत्वाभ्युपरक्ता भावना लडाद्यर्थः। कालत्रयापरामृष्टो लिङर्थ इति मतं दूषयति—**यदेति** । हननगोचरा भावना 20 कालत्रयेऽपि नास्तीति हननगोचरकृतेरत्यन्ताभावोऽर्थः पर्यवस्येत्, स च नास्ति केनचिद्धननकरणादित्यर्थः । कार्यताविधिपक्षे निषेधानुपपत्तिमाह—**यदेति** । **क्रियत इति** । हननस्य कृतिगोचरत्वानुभवादित्यर्थः । ननु यागविषयकं कार्यम् इत्यनु यो यजेतेत्यत्र यथा प्रतीयते तथा नञर्थान्वयस्तत्रैव स्यात्, तेन हननजन्यं कार्यं नास्तीत्यन्वयः स्यादित्याह—**हननेति** । 25 हननजन्यं कार्यं दर्शयति—**दुःखेति** । ननु कार्यसामान्यं न लिङर्थः, किन्तु कार्यत्वेन रूपेणापूर्वं तत्राह—**हननेति** । अत्र धर्मनिषेधो यदि वाक्यार्थः तदा तदभावेऽपि भोजनप्रवृत्तौ रन्धने प्रवृत्तिः स्यादेव । यदि स्वधर्मनिषेध-

स्तदा निःशङ्कं प्रवर्तेतेत्यर्थः। नित्यापूर्ववन्निषेधापूर्वमपि स्वतः पुरुषार्थं इत्यहननेनापूर्वं भावयेदित्यभिमतं चेत्तत्राह—**अहननेनेति**। हननप्रागभाव-स्यानादित्वादपूर्वमप्यनादीत्यर्थः। नन्वहननप्रागभावविषया भावनाऽपूर्वं भावयेदित्यर्थः स्यात् इत्यत आह—**भावनाया इति**। प्रागभावविषया
5 भावना न भवतीत्यर्थः। क्षेमसाधारणं कृतिसाध्यत्वं नास्तीत्यभिमानः सङ्कल्पविपक्षे निषेधानुपपत्तिमाह—**अहननेति**। अहननसङ्कल्पेनापूर्वं भाव-येदित्यर्थे यावज्जीवमहननगोचरः सङ्कल्पो यदि विवक्षितस्तदा विषयान्तर-सञ्चारो न स्यादेव। यदि च कादाचित्क एव अहन(न)सङ्कल्पो विवक्षितः, तदा न हन्यामित्येकदा कृतसंकल्पस्यापूर्वोत्पत्त्या कृतकृत्यस्य कालान्तरे
10 हननप्रवृत्तिः स्यादेवेत्यर्थः। **नियोगार्थमिति**। विध्यर्थ इत्यर्थः। ननु न सार्वदिकं सङ्कल्पं ब्रूमो, न वा यदा कदाचित् सङ्कल्पं किन्तु यदा हननमिच्छति तदा तदा न हन्यादिति विपरीतसङ्कल्पेनापूर्वं भावयेदिति योगार्थं शङ्कते—**यावदिति**। वार्तं तुच्छम्। **तदश्रुतेरिति**। न हन्यादिति वाक्यादेतदर्थस्याप्रतीतेरित्यर्थः। ननु निषेधबलादेवायमर्थः कल्पनीयः।
15 प्रसक्तं हि प्रतिषिध्यते प्रसङ्गश्चेच्छैव, तथा च तद्विपरीतेच्छा कथं नार्थः स्यादिति शङ्कते—**प्रसक्तमिति**। निराकरोति—**नेति**। हननेच्छा न निषि-ध्यते तस्याः स्वरसवाहित्वात्, किन्तु पर्युदासनञा तद्विपरीतेच्छा अभिधीयत इति तदभावप्रतिपत्तिरार्थीति तथानुमतमित्यर्थः। नञ्पदार्थं दूषयित्वा वाक्यार्थं दूषयति—**इह त्विति**। हननसङ्कल्पविपरीतसङ्कल्पोऽत्राहनन-
20 सङ्कल्पः हननसङ्कल्पविपरीतसङ्कल्पेन यदपूर्वं जन्यं न हि तत् सुखं सुखसाधनं वा अदैक्षपशुहननेन तत्तन्मांसभक्षणादिजन्यं सुखमिति सफलत्वात् हननमेव कुर्यात्, न तु कदाचिन्निवर्तेत इत्याह—**न हन्यादिति**। स्वपक्षमवतारयितुं साम्प्रदायिकं पक्षं दूषयति—**इष्टेति**। **कुतो लभ्यत इति**। येन निवृत्तिः स्यादिति शेषः। ननु इष्टानिष्टे द्वे एव कोटी, तेनैककोटिनिषेधे
25 द्वितीयैव पर्यवस्येत्। तथा चानिष्टसाधनमिदमिति प्रतिस(न्ध)ाय कुतो न निवर्तेतेत्याह—**न हीति**। उपेक्षणीयस्य तृतीयकोटेः सत्त्वान्नैवमित्यर्थः। ननु कलञ्जभक्षणं हननं वा रागप्राप्तं प्रतिषिध्यते चेदायातं तदनिष्टसाधनमित्यर्थः। **यदिति**। कलञ्जभक्षणादिनिषेधोऽत्र नञर्थः। किन्तु लिङः समभिव्याहृताया नञो लिङर्थ एव निषेध्यो लिङर्थश्च कर्तव्यत्वाद्यन्य-

तम एव मतभेदेन तन्निषेधश्चाशक्य इत्यर्थः। ननु योग्यमपि शब्दमहिम्ना क्वचिद् भासत एवेत्याह—तथापीति। तथा चायातं यत् प्रसक्तं प्रतिषिध्यते तदवश्यमनिष्टसाधनमिति भावः। भावार्थे दूषणमाह-पाषण्डेति। दैक्षपशुहिंसा पाषण्डागमे निषिद्धा, न तु तस्या अनिष्टसाधनत्वमिति व्यभिचार इत्यर्थः। ननु प्रमाणशब्देन यत् प्रसक्तं प्रतिषिध्यते तदनिष्टसाधनमिति व्याप्तिः पाषण्डागमश्च न तथेति न व्यभिचार इत्याह—नासाविति। परिहरति—नेति। अर्थविपर्ययोऽत्रायोग्योऽर्थः। तथा चायोग्यार्थप्रतिपादकतया निषेधबोधकागमोऽप्ययमप्रमाणमेवेत्यर्थः। ननु वेदत्वेन निषेधकवाक्यं तावत् प्रमाणमेव, तथा चेष्टसाधनत्वनिषेधरूपमुख्यार्थबाधात् गङ्गायां घोष इति च लक्षणयाऽनिष्टसाधनपरं स्यादित्याह—तात्पर्यत इति। स्तुत्यर्थवादानां विधिपरत्वं निन्दार्थवादानां च निषेधपरत्वं सम्भवति, न तु विधिनिषेधवाक्यानामपीत्याह—विधीति। अत्र प्रमाणमाह—न विधाविति। ननु विधौ मा भवतु, वचनान्निषेधे तत् स्यादेवेत्याह—तथापीति। यत्राविनाभावो यत्र च तात्पर्येण प्रयोगस्तत्रैव लक्षणा, प्रकृते चेष्टसाधननिषेधानिष्टसाधनत्वयोरविनाभावाभावात् उपेक्षणीये व्यभिचारस्य दर्शितत्वात्। न वा इदं वाक्यं तत्तात्पर्येण प्रयुक्तमित्यत्र किञ्चिन्नियामकमिति परिहरति—अविनाभावेति। ननु पर्युदासनञाऽनिष्टसाधनत्वमभिधीयतामत आह—नापीति। क्रियासङ्गतस्यासमस्तस्य च नञ्पदस्य प्रसज्यप्रतिषेधमात्रार्थत्वात्। यजतिषु ये यजामहं कुर्यात् नानुयाजेष्वित्यत्र समस्तस्यापि वाक्यभेदभयेन पर्युदासार्थत्वकल्पनमिह तु न तथेति भावः ॥१४॥

बोधनी

अत्र सन्देहस्य प्रा[प्ति]कोटौ स्तनपानानुमानस्थानीयः शब्दद्वितीयकोटौ चेष्टास्थानीय इति हेतुत्वादिनाभ्युपायत्वस्य लिङर्थं प्रति हेतुत्वेन व्यपदेशादिष्टाभ्युपायादन्यो लिङर्थ इत्यवगम्यते। क्वचिदिष्टाभ्युपायत्वेऽवगतेऽपि ततो विधिमनुमिन्वते तान्त्रिकाः। मध्यमोत्तमपुरुषयोरपि विहितैव लिङ् नेष्टाभ्यु[पायता] किन्तु वक्तृसङ्कल्पं विधिव्यतिरिक्तेषु चाधीष्टसंप्रश्नाद्यर्थेष्विवच्छायामेव लिङः क्लृप्तसामर्थ्यत्वं वक्तृनियोगव्यतिरिक्तेषु च सङ्कल्पेषु निषेधानुपपत्तिश्च तस्माच्चतोऽन्य एव लिङर्थो विधिरिति विधिविहितै · · · णादिविहिता अतो

विधिविहिताया एव मध्यमादौ सङ्कल्पवाचित्वाद्विधिः सङ्कल्प इत्यवगम्यते । **आशंसा-लिङीति** । आज्ञाप्रभृत्याशंसापर्यन्तेष्वर्थेषु विहितायां लिङि नान्यादिच्छायाश्चकास्तीति ? **आज्ञादीनामि** ˙ ˙ ˙ मिति । **आशीरिति** । **आशंसेति** । **अन्येष्विति** वक्तुरिच्छातोऽन्येष्विति अभिधाविधिपक्षे हननभावनाभिधीयत इति हन्यादिति शब्दार्थः तत्र
5 नेति सम्बन्धे हननभावनाभिधीयते इति व्याघातः हननभावनेत्युक्ते हननभावनाया ˙ ˙ ˙ कथं नाभिधीयत इत्युच्यतेति अत्यन्ताभावो विरुन्ध्यादिति ।

ननु कालत्रयापरामृष्टाया एव लिङर्थत्वान्न हननभावनेत्युक्ते हननभावनाया अत्यन्ताभावो विधीयते तत्र लोके विना ˙ ˙ ˙ नयो दृष्टा ˙ ˙ ˙ विरुन्ध्यादिति ।

ननु न हन्यादिति न हननं कार्यमिति नार्थः हननेन कार्यं हननकरणकं कार्यं
10 नास्तीत्यर्थ इति चेत्तत्राह—**हननकरणकमिति** । **दुःखनिवृत्तीति** । हननेन दुःखनिवृत्तिसुखावा[प्त्योरन्यतरस्य]तत्र सद्भावादिति । निरातङ्कं दृष्टार्थिनमिति अपूर्वविधिपक्षे न हन्यादित्यस्य हननकरणकमपूर्वं नास्तीत्यनर्थ इत्यनर्थहेतुभूतपूर्वसंभावनया सातङ्कत्वाद्धनने शिथिलप्रवृत्तिं दृष्टार्थिनं [ निरातङ्कं ] प्रवर्त्तयेदेवेति साधुसारत्नार्थः समर्थित इति ।

15 ननु नात्राख्यातार्थप्रत्ययसम्बन्धी नञ् येन निषेधार्थत्वम् किन्तु नेक्षेतेत्यादिसम्बन्धी नेत्यहननेनापूर्वं भावयेदित्यर्थः समर्थित इति चेत्तत्राह—**अहननेनापूर्व** ˙ ˙ ˙ त्वेनेति । हननप्रागभावस्य कारणस्यानादित्वेन कार्यस्यापूर्वस्यानादित्वादपूर्वं भावयेदित्यशक्यमिति तदविषयत्वात् अनाद्यर्थाविषयत्वादिति ।

नन्वहननेत्यस्य हननाभावेनेति नायमर्थः हननादन्येनाहननसंकल्प ˙ ˙ ˙ वृत्त्या
20 तदन्यार्थत्वमिति चेत् तत्राह—**अहननसंकल्पेनेति** । अहननसंकल्पेन यावज्जीवमपूर्वं कुर्यादिति वा सकृत्कुर्यादिति वा विकल्पमभिसन्धाय यथाक्रमं दूषणमाह—**यावज्जीवमित्यादिना** । तथाभूत ˙ ˙ ˙ धिकारित ˙ ˙ ˙ प्रतिषेधद्वारा अपूर्वनियोगं प्रति हनने प्रवृत्तो न हन्यादित्येवमश्रुतेरिति प्रतिषेधसमर्थ्या देवायमर्थः सिद्ध इति शङ्कते—**प्रसक्तमिति** । तदभावः हननाभावः नि[षेधं] कुर्यादिति । अपूर्वस्य स्वयं
25 फलरूपत्वाभावात्तज्जन्यफलान्तरस्याप्यभावान्निष्फलादपूर्वाख्यात् कार्यात् इति दुर्दुरूढस्य कुत्सितस्य इष्टसाधनत्वाभावेनैवानिष्टसाधनत्वमनुमीयत इति चेत् तत्राह—**न हीति** । प्रति[षेधार्थस्यै]वेति । इदानीं प्रतिषेधार्थ एव चिन्त्यते तत्कथं सिद्धवत्प्रतिषिध्यमानत्वादिति हेतुकथनमिति भावः ।

ननु किमत्र चिन्त्यते इष्टसाधनत्वस्य वा अभावोऽनेन वाक्येन प्रतिपाद्यत इति चेत् तत्राह—**नहीति—लोकप्रमाणसिद्धत्वादिति** । प्रमाणसिद्धेन प्रत्यक्षादिना प्रमाणेन हननस्य कर्त्तव्यत्वमिष्टसाधनत्वं हननभावना च प्रतीयत इति तदभावस्य तद्विरुद्धत्वमिति । **तथापीति** । लोकप्रमाणविरुद्धत्वेऽपि न हन्यादित्यनेनैव तावत् प्रतियाद्यते अभावः प्रतिषिध्यमानस्यैव ' ' ' एवंविधः प्रमाणविरुद्धः प्रतिषेधः पाषण्डा- 5 गमप्रतिषेधेनानैकान्तिकत्वान्नावश्यमनर्थसाधनत्वं बोधयतीत्याह—**पाषण्डेति** । **नासा-विति** । प्रामाणिकः प्रतिषेधो हेतुः न चासौ पाषण्डागमः ' ' ' येति । प्रमाणसिद्धार्थविपर्ययप्रतिपादनस्य प्रकृतेऽप्यविशेषेण प्रकृतस्य न हन्यादित्यागमस्यापि त्वत्पक्षे तथा भावादप्रमाणमिति । **तात्पर्यत इति** । प्रमाणविरुद्धं वदतोऽप्यस्यान्यत्र तात्प[र्यादि]ति न विधाविति विधिशब्दो निषेधस्याप्युपलक्षणमिति सिद्धान्तिनोऽभिप्रायः । 10 पूर्वपक्षी तु विधिमात्रविवक्षयैव विधिशब्द इति मत्वा चोदयति—**तथापीति** । तथा भविष्यतीति चेदिति सिद्धान्ती तु न्या ' ' ' धेऽपि नान्यपरत्वमित्याह—**अविनाभा-वेति** । इष्टसाधनत्वाभावस्यानिष्टसाधनत्वेनाविनाभावस्य तद्देशप्रवृत्तेश्चाभावात् नानर्थसा-धनत्वे शब्दस्य तात्पर्यम् । अविनाभावः प्रागेवोक्तः ' ' ' पक्षो मतान्तरेणोक्तः न स्वमतेन तात्पर्यार्थचिन्तावसरे निराकृतत्वात् तदुद्देशेन प्रवृत्त्यभावश्च हननस्यानर्थ[साध]- 15 नत्वप्रतिपादकनिषेधवाक्यैकवाक्यभूतस्य नि ' ' ' न्तरस्याभावादिति ।

ननु न हन्यादिति साधनत्वाभावमात्रं नञोऽर्थः असुरा अविद्यादिवदिष्टसाधनत्व-विरोध्यनिष्टसाधनत्वमेवार्थः । अतोऽनर्थसाधनत्वं लभ्यत इति तत्राह—**नापीति** । नाम-पदेन समासवृत्त्या हि नञ् विरोधवाची अयं तु क्रियासङ्गतत्वात् विरोधवाचीति ॥ १४ ॥

विवेकः

**हेतुत्वादिति** । लिङः नेष्टसाधनता अभिप्रायिका इष्टसाधनताजिज्ञासाजनकज्ञान- 20 हेतुत्वादित्यर्थः । यदि च तत एवेष्टसाधनताप्रतीतिमेदात्तत्र जिज्ञासा नोत्पद्येतेति भावः । ननु दारुमथनस्य सामान्यत इष्टसाधनत्वावगमेऽपि स्यादेव सा इत्यनुशयादाह— **अनुमानाच्चेति** । प्रवर्त्तकज्ञानार्थम् इष्टसाधनताबोधकलिङनुमेयत्वात् । साध्यस्तु तदेव तन्निष्ठसाधनताज्ञानार्थं तदनुमानम्, अपि तु तथाविधेष्टसाधनताया विधेयत्वव्याप्यतया व्यापकानुपलब्धिबाधोद्धारायैव इत्यनुशयादाह—**मध्यमादौ वियोगत इति** । लिङ्त्वं 25 नेष्टसाधनताशक्ततावच्छेदकं, तदशक्तवृत्तित्वात् इत्यर्थः । तदशक्तौ च मध्यमादिपुरुषी-यलिङः तद्बोधनाय तदभिहितम् । नन्वस्तु प्रथमपुरुषीयलिङ्त्वमेव शक्ततावच्छेदकं, तथा च सिद्धसाधनमित्यनुशयादाह—**अन्यत्र क्लृप्तसामर्थ्यादिति** । प्रथमपुरुषीया

लिङ इच्छा शक्ता लिङ्त्वात् आशंसाद्यनुशिष्टलिङ्वत् इत्यर्थः । अक्षरा ( र्थं ) स्तु—अन्यत्र आशंसादिप्रतिपादकलिङः क्लृप्तसामग्र(र्थ्य ? ) ात् इच्छाशक्तिकल्पनात् । तथा च तद्दृष्टान्ते अन्यत्रापि साधनीयन्तदिति भावः । ननु प्रयोजकमिदमाख्यातत्वादिवत् प्रवर्त्तनाय प्रवर्त्तकज्ञानसाक्षादुपपादकतच्छक्तेरेव कल्पयितुमुचितत्वाच्चेत्यनुशयेनेत्याह—

5 **निषेधानुपपत्तिव इति** । इष्टसाधने स्वार्थनिषेधतात्पर्यकबाधितार्थे नञ्समभिव्याहृतत्वात् इत्यर्थः । साध्यन्तु प्राग्वत् । ( f ) लङ्प्रतिपत्तेः इष्टोपायतानिश्चयात् । स एव कुर्यामिति वाक्यस्यार्थः । **अन्यत्रेति** । हेतुं व्याकरोति **सर्वत्र चान्यत्रेति** । नन्वस्तु आज्ञादीनां तत्र तथात्वम् , इच्छेति तु कुत इत्याकाङ्क्षायां निरुक्तानामिच्छात्वं व्युत्पादयति—**यां चेत्यादि** । तत्क्षोभात् तदतिक्रमेणानष्टबुद्ध्यायात्त्विति (?) निरुक्तव्यञ्ज-

10 कतावच्छेदकजातिविशेषोपलक्षणम् । **अभिधानेति** । जिज्ञासाविषयाभिधानप्रयोजिका वक्तुरिच्छेत्यर्थः । इदमपि जातिविशेषोपलक्षणं, तेन न सङ्करः । निषेधानुपपत्तित इति व्याचष्टे—**न चेति** । विधिविकल्पेषु विध्यर्थत्वेन अभिधाभावनात् । इष्टसाधनत्वकार्य्यत्वादिषु हननभावने भावनायां सामान्याख्यातार्थेऽभिधान्वयं विधावभिप्रेत्य, न चेद्धननमेव बोध्यम् । अत्र चाभिधात्वं तन्नये विष्टव्य ( विषया ) नुकूलशब्दवृत्तिधर्म-

15 त्वम् , अनुकूलता च विषयतातिरिक्तरूपेण, तेन शब्दत्वादिव्युदासः । विषयी च श ( ा ) ब्दो बोधः प्रवृत्तिश्च नञाका ( ङ्क्षा ) न्वयितावच्छेदकावच्छिन्नप्रतियोगिताकोऽभावो बोध्यः । स च व्याहृतः शाब्दबोधानुकूलशक्त्यायातो बोधत एव धर्मीत्यर्थः । भावनेत्यनन्तरं विधिरित्यनुषज्यते । एवमग्रेऽपि । मिथ्या बाधितः । **न हननमिति** । धात्वर्थेन विध्यर्थस्याभेदान्वयमभिप्रेत्य उक्तस्यार्थं विवृणोति

20 **हननकार ( ण ? ) कमिति** । तथा मिथ्याकारणस्य हननादिसंसर्गाभावस्य । ननु हननप्रागभावगोचरा भावना अपूर्वसाधनत्वेन ( ाभि ? ) धीयत इत्यत्राह भावनायाश्च प्रागभावस्य क्षेमसाधारणसाधनतायाः प्रागेव निरासादिति भावः । हननसङ्कल्पेनेत्यस्य अपूर्वमित्यनुषज्यते । तत्र तादृशापूर्वमनवच्छिन्नसङ्कल्पेन वा, तादृशेनैकेन वा ? आद्ये, **यावज्जीवमिति** । द्वितीये **सकृदिति** । निवृत्तिस्तत्सङ्कल्पवान् । यावत् यावदित्यनेन

25 व्याप्यत्वमादर्शितं, तेन यदा यदा हननसङ्कल्पवान् तदा तदा हननाभावगोचरसङ्कल्पेनापूर्वं जन्यते, एतच्च नियमबाधेन भवतीति भावः । तथाभूतस्य हननगोचरसङ्कल्पवतः वार्त्तं तुच्छं स्वर्गकामनाया इव हननकामनाया अधिकारित्वात् । श्रुतेरश्रवणेऽपि न्यायप्राप्त तदधिकारित्वमित्याह—**प्रसक्तमिति** । प्रसङ्गश्च तदिच्छैवेति भावः । ननु भवेदेवं यदि हननेच्छा निषिध्यते, किन्तु हननाभावगोचरेच्छापूर्वसाधनत्वेन विधीयते । तत्र च

हननप्रसङ्गोऽनुपयुक्त एवेत्याह—**न वै काञ्चेदिति**। प्रतिपाद्यतेऽपूर्वसाधनसङ्कल्पविषयतया कृत एतदित्याकाङ्क्षायां तदभिमतं वाक्यार्थमादर्शयति—**इह त्विति**। तुः हेतौ। ननु हननाभावगोचरः संकल्प एवापूर्वसाधनं तस्यावृत्तौ फलावृत्तिरिति जातापूर्वोऽपि निवर्त्तते इत्यनुशयादाह—**किञ्चेति**। निष्फलात् तत्त्वेनाधिगतात् अपेक्षितफलं तत्त्वेनाधिगतं गरीयः उत्कर्षेच्छाविषयनिषेधापूर्वस्य स्वतः पुरुषार्थत्वं च प्रतिषिद्धं भूयसेति भावः। **हननभावनेति**। कृतीष्टसाधनताधियं प्रवर्त्तकत्वपक्षे नो चेद्धननमिति बोध्यम्। उपेक्षणीयस्य न इष्टानिष्टसाधनान्यच्च। ननु इष्टसाधनत्वस्याशाब्दत्वेऽपि अनुमेयत्वं स्यादित्याह—**यद्रागादीति**। नान्तरीक्षेऽग्निश्चेतव्य इति नित्यप्राप्तानुवादे व्यभिचारमाशङ्क्याह—**यद्रागादिप्रसक्तमिति**। प्रतिषिद्धयते इत्यस्यैव कोऽर्थ इत्याह—**प्रतिषेधार्थस्येति**। भावनाया आख्यातसामान्यशक्तिबललभ्यायाः, लौकिकानां कार्यत्वादीनाम्। ननु सत्यपि दोषवशाद् यथा सत्यपि शरीराहंप्रत्यये वेदान्तविपरीतं ज्ञानं तथात्रापि स्यात्। अत एव अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोतीति तेषां वर्द्धोऽत (वृत्तान्त) इत्याह—**तथापीति**। **पाषण्डेति**। दक्षपशुहिंसायाः पाषण्डागमनिषिद्धाया अनिष्टसाधनत्वाभावेन व्यभिचारादित्यर्थः। असौ पाषण्डागमप्रतिषेधः। तथा च प्रमाणं प्रतिषिध्यते न हेतुर्विशेष्य इति भावः। कार्यत्वादीनां प्रमाणसिद्धत्वात्। बाधितार्थकत्वम् उभयत्राप्यविशिष्टं, तथा च स्वरूपासिद्धिरित्याह—**अर्थेति**। अस्यापि हननिषेधस्यापि तथाभावात् अप्रमाणत्वात्। ननु मुख्यत्वेऽप्रामाण्येऽपि गङ्गायां घोष इत्यत्रेव तात्पर्यविषयेऽनिष्टसाधनत्वे प्रामाण्यमस्त्येवेत्याह—**तात्पर्यत इति**। प्रामाण्य हननिषेधकागमस्य। **न विधाविति**। एतेन नावकाश(सा)धनत्वं लक्षयित्वा तत्र नञर्थान्वयोऽपि प्रत्युक्तो ध्वनितः। ननु विधौ परः शब्दार्थः इति सिद्धान्ताद्विधौ मास्तु अन्यपरत्वं निषेधे तु स्यादित्याह—**तथापीति**। अन्यपरत्वम् उभयथा निर्वहति अविनाभावबलात् यथा वह्नितात्पर्यके धूमोऽस्तीति वाक्ये, क्वचिच्च मुख्यार्थबाधादन्यत्र तात्पर्यनिश्चयात्, प्रकृते च इष्टसाधनत्वाभावस्य नानिष्टसाधनत्वे नाविनाभावः उपेक्षणीये व्यभिचारात्। तत्र च तात्पर्यनिश्चायकाभावात्। वक्ष्यमाणायां वक्त्रभिप्रायशक्तौ विना लक्षणाया उपपत्तेरित्यक्षरतात्पर्याभ्यामाह—**अविनाभावेति**। विरोधिपरत्वम् (वचनत्वम् ?) इष्टविरोध्यनिष्टपरत्वम्, एतच्च इष्टसाधनत्वं स्वतन्त्रयोः शक्यत्वनये, अन्यथा इष्टैकदेशतया तत्र नञर्थान्वयस्य भक्तिसम्भव एव न स्यादिति ध्येयम्। **क्रियेति**। क्रियासंगतस्यापि असमस्तस्यापि यजतिषु ये यजामहं कुर्य्यार्थान्वयाजेष्विगत (कुर्यादनानुयाजेष्वित्यादिष्विति ?), अत्र यद्यपि भेदपरत्वं नेति भावः॥ १४॥

तस्मात्

**विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः ।**
**अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता ॥ १५ ॥**

तत्र स्वयङ्कर्त्तृकक्रियेच्छाऽभिधानं कुर्य्यामिति । सम्बोध्यकर्त्तृकक्रियेच्छाऽभिधानं कुर्य्या इति । शेषकर्त्तृकक्रियेच्छाऽभिधानं कुर्वीतेति । तथाचाग्निकामो दारुणी मथ्नीयादित्यस्य लौकिकवाक्यस्यायमर्थः सम्पद्यते अग्निकामस्य दारुमथने प्रवृत्तिर्ममेष्टेति । ततः श्रोताऽनुमिनोति नूनं दारुमथनयत्नोऽग्नेरुपाय इति । यद्विषयो हि प्रयत्नो यस्याप्तेनेष्यते, स तस्यापेक्षितहेतुः । तथा तेनावगतश्च, यथा ममैव पुत्रादेर्भोजनविषय इति व्याप्तेः ।

विषं न भक्षयेदित्यस्य तु विषभक्षणगोचरा प्रवृत्तिर्मम नेष्टा इत्यर्थः । ततोऽपि श्रोताऽनुमिनोति नूनं विषभक्षणभावना अनिष्टसाधनम् । यद्विषयो हि प्रयत्नः कर्त्तुरभिमतसाधकोऽप्याप्तेन नेष्यते, स ततोऽधिकतरानर्थहेतुः, तथा तेनावगतश्च, यथा ममैव पुत्रादेः क्रीडाकर्दमविषभक्षणादिविषय इति व्याप्तेः ।

लौकिक एव वाक्ये अयं प्रकारः कदाचिद्बुद्धिमधिरोहति न तु वैदिकेषु, तेषु पुरुषस्य निरस्तत्वात् इति चेत् । न । निरासहेतोरभावात् । तदस्तित्वेऽपि प्रमाणं नास्तीति चेत् । मा भूदन्यत्, विधिरेव तावद्गर्भ इव पुंयोगे प्रमाणं श्रुतिकुमार्य्याः किमत्र क्रियताम् । लिङो वा लौकिकार्थातिक्रमे य एव लौकिकास्त एव वैदिकास्त एव चैषामर्था इति विप्लवेत । तथा च जबगडदशादिवदनर्थकत्वप्रसङ्ग इति भव सुस्थः ।

स्यादेतत् । तथापि वक्तॄणामुपाध्यायानामेवाभिप्रायो वेदे विधिरस्तु कृतं स्वतन्त्रेण वक्त्रा परमेश्वरेणेति चेत् । न, तेषामनुवक्तृतयाऽभ्यासाभिप्रायमात्रेण प्रवृत्तेः शुकादिवत् तथाविधाभिप्रायाभावात् । भावे वा न राजशासनानुवादिनोऽभिप्राय आज्ञा, किं नाम राज्ञ एवेति लौकिकोऽनुभवः ॥ १५ ॥

आमोदः

**नियोक्तृधर्मो** वेति यद्विकल्पितं तत्र स्वाभिमतमाह—**तस्मादिति** । विधिः परम्परया प्रवर्तको वक्तुरभिप्रायः । प्रवृत्त्यादाविति । प्रवृत्तौ निवृत्तौ चेत्यर्थः । ननु वक्त्रभिप्रायमात्रज्ञानात् कथं प्रवृत्तिनिवृत्ती इत्यत आह—**अनुमेयेति** । इष्टाभ्युपायतेत्युपलक्षणम्, अनिष्टाभ्युपायतेत्यपि द्रष्टव्यम् । सर्वत्र लिङ इच्छाभिधानमित्याह—**तत्रेति** । शेषः स्वभिन्नः संबोध्यभिन्नः, अलौकिकवाक्यस्य नियोक्तुरभिप्रायार्थत्वे यथा प्रवर्तकत्वं तथाह—**तथा चेति** । निवृत्तिस्थलेऽनुमितिप्रकारमाह—

विषयमिति। यस्य यो यत्नो यदाप्तेनेष्यते स तस्य बलवदनिष्टाननुबन्धीष्ट-साधनं, यद्विषयस्तु यत्नो यदाप्तेन नेष्यते तत्तस्य बलवदनिष्टसाधन-मिति व्याप्तिद्वयं, तथा च यागयत्नो मदिष्टसाधनं मदाप्तेनेष्यमाणत्वात्, भुङ्क्ष्व चेत्यत्र भोजनवत्, निवृत्तौ तु कलञ्जभक्षणं मम बलवदनिष्टसाधनं मत्कृतिसाध्यत्वे मदिष्टसाधनत्वे च सत्यपि मदाप्तेनानिष्यमाणत्वात्। 5
सविषमन्नं न भुङ्क्ष्वेत्यत्र सविषान्नभक्षणवत् कलञ्जभक्षणयत्नो वा पक्षः। सविषान्नभक्षणगोचरयत्नो दृष्टान्तः, इष्टसाधनत्वादिकं साक्षात्प्रवर्तकमपि न लिङादिवाच्यमन्यलभ्यत्वात्। पुमभिप्रायस्त्वन्यलभ्य इति नासौ पुमभि-प्राय इति स एव लिङर्थ इति भावः। **कदाचिदिति**। तत्रापि क्रियेष्टसाधन-त्वादिरेव लिङर्थं इत्यर्थः। **निरस्तत्वादिति**। सङ्कल्पविधिनिरासेन निरस्त्वा- 10
दित्यर्थः। **निरासहेतोरिति**। तत्र नियोज्यस्य इच्छा लिङर्थत्वेन निरस्ता, न तु नियोक्तुरिच्छेत्यर्थः। ननु यदि नियोक्ता कश्चित् प्रमाणगोचरः स्यात्तदा तदिच्छा लिङाद्यर्थः स्यात्, स एव नास्तीत्याह—**तदस्तित्व इति**। मा भूया(द?)न्यदिति। प्रमाणमित्यनुषङ्गः। **विधिरेव तावदिति**। प्रमाण-मित्यनुषङ्गः। विधिर्विधायके पुमभिप्रायवाचकलिङादिसमभिव्याहृतमीश्वर- 15
मन्तरेणानुपपद्यमानमीश्वरेण प्रमाणमित्यर्थः। विधिः पुमभिप्रायो वा यजेते-त्यादेरपौरुषेयत्वे पुमभिप्रायो लिङादिवाच्योऽनुपपन्न एव स्यात्। एतावता परिशेषेण तदभिधानस्यैव प्रामाणिकत्वादित्यर्थः। प्रमाणान्तरमाह— **लिङो वेति**। लौकिकलिङामिच्छार्थत्वे व्यवस्थितेऽन्यत्रापि तथैव कल्पनादित्यर्थः। ईश्वरसिद्धावन्यथासिद्धिं शङ्कते—**स्यादेतदिति**। परिहरति—**नेति**। तेषां 20
नियोज्यप्रवृत्तिनिवृत्तितात्पर्यकोच्चारणाभावादित्यर्थः। ननु किमत्र प्रमाण-मित्यत आह-भावेऽपी(वे)ति। वेदस्य पौरुषेयत्वव्यवस्थापनादिति भावः॥१५॥

## बोधनी

एवं पूर्वपक्षं निराकृत्य सिद्धान्तमाह—**तस्मादिति**। हेतुत्वाद् अनुमानाच्चे-त्युक्तेभ्यो हेतुभ्य इष्टसाधनत्वस्य विधित्वेन लिङर्थत्वाभावादित्यर्थः। अभिप्रायस्येच्छाया विषयं दर्शयति—प्रवृत्त्यादावनुचिन्तनादेर्ग्रहणम्। **अनुमेयेति**। शब्दाभिहितेनाभि- 25
प्रायरूपेण लिङ नानुमेयेति उत्तमपुरुषादिषु विषयभेदेनेच्छायागेनेदं दर्शयति—**तत्रेति**। लिङर्थे···भयव्यतिरिक्तक्रियेच्छाभिधामिति···वदिच्छये···नाय लिङ्युक्तस्य लौकिक-

वाक्यस्यायं तावदर्थः संपन्न इत्याह—**तथा चेति**। इच्छाया ज्ञानपूर्वकत्वेन ज्ञानमप्यनुमीयत इत्याह—**तथा तेनावगतश्चेति**। निषेधवाक्येष्वनर्थसाधनत्वानुमानं दर्शयितुं निषेधवाक्यं [ प्रदर्श ] यति—**विषमिति**। **अनिष्टसाधनमिति**। विषभक्षणभावनाजन्याभिमतप्रयोजनादप्यधिकानर्थसाधनमित्यर्थः। **प्रयत्न इति**। भावनैवोच्यते। 5 कर्तुरभिमतसाधकोऽप्येतदतोऽप्यधिकानर्थहेतुत्वेन व्याप्त···तदनाप्तेन निषिध्यमानेन व्यभिचारव्यावर्त्तनाय विशेषणमुक्तम्। अनर्थेच्छाया अपि ज्ञानपूर्वकत्वेन ज्ञानमप्यनुमीयत इत्याह—**तथा तेनैवेति**। **एष प्रकारइति**। वक्तुरिच्छैव लिङाभिधीयते तत इच्छा तदभावा···साधनत्वे अनुमीयेते इत्येष प्रकार इति निरासहेतोरभावादिति निरासहेतोरस्मर्यमाणकर्तृकत्वस्यासिद्धत्वोद्भावादिति भावः। **मा भूदन्यदिति**। वेदवावाक्याद्येव 10 तावत्प्रमाणं वक्ष्यमाणविधि···सर्वं मा भू···वक्त्रभिप्रायरूपो गर्भ इव कुमार्यश्रुतिकुमार्या अपि पद्मयोगे प्रमाणं किं क्रियते न किंचित्तत्र प्रतिकर्तव्यमित्यर्थः। वैदिकलिङो लौकिकवक्त्रभिप्रायो नार्थ इति चेत्तत्राह—**लिङो वा लौकिकार्थातिक्रम इति**। न्यायो विप्लवेतेत्यर्थः। ततः किमित्याह—**तथा चेति**। लौकिकवैदिकशब्दानां तदर्थानां चान्यत्वे लोकव्यवहारसिद्धाया व्युत्पत्तेर्लौकिकशब्दमात्रविषयत्वाद्वैदिकशब्दानां 15 व्युत्पत्तिविरहाद [ नर्थकत्व- ] प्रसङ्ग [ इति प्रामा- ] ण्यं स्यात्। ततश्च वेदप्रामाण्योपयोगितया पुरुषदोषाभावाय वेदप्रणेतुर्भगवतः परमेश्वरस्य निराकरणे प्रवृत्तः स मीमांसक···ति तथा योऽभिप्रायेति प्रवृत्त्यप्रवृत्तिविषयाभिप्रायाभावादित्याह···अभिप्रायो न विधिः किन्तु कर्तुरेवेत्यभिप्रायो न विधिः॥ १५॥

विवेकः

**विधिरित्यादि**। प्रवृत्त्यादौ निवृत्तौ तात्पर्यविषये लिङादिभिराप्ताभिप्राय 20 एवाभिधेयः। तेन न तु हेतुना इष्टाभ्युपायता विधिः प्रवर्त्तकज्ञानप्रकारः अनुमेयः। इदमुपलक्षणम्। नञर्थान्वयार्थिनां तेनानिष्टाद्यु(भ्यु)पायताप्यनुमेया इति बोध्यम्। विधिरिति वक्तुरभिप्रायस्यैव विशेषणं तदर्थश्च परंपरया प्रवृत्त्युपयोगीत्याहुः। उत्तममध्यमप्रथमपुरुषेषु यथाऽनुभवं बोधं व्युत्पादयति—**तत्रेत्यादि**। शेषः स्वसंबोध्याद्या(म !)न्यः दारुमथ(ने) यत्नो दारुमथनं वा यद्विषयो यत्नो, यद्वा **आप्तेनेति**। 25 अत्राप्तत्वं पुरोवर्त्तिनि प्रवर्त्तकज्ञानप्रकारांशे सर्वत्र यथार्थज्ञानवत्त्वं तेनेश्वरेच्छाविषयत्वमादाय इष्टसाधनभ्रमाधीनप्रवृत्तिविषयेण व्यभिचारः। पक्षधर्मतां दर्शयति—**तथेति**। तथा आप्तेच्छाविषयत्वे अनेन विधिना दारुमथनयत्नोऽधिगत इत्यर्थः। एतच्च

स्वार्थानुमानमिति प्रयोगविपर्यासादिना शङ्कनीयम् । यद्वा, आप्तत्वेन यत्नोऽधिगत इति तदर्थः । निषेधस्थले निवर्त्तकज्ञानप्रकारमाह—**विषमिति** । सविषान्नभक्षणं मदनिष्टसाधनं मदनिष्टसाधनत्वेन मत्कृतिसाधनत्वेन च आप्तेन ज्ञायमानत्वे सति मत्कर्त्तव्यत्वेनानिष्यमाणत्वात् मतवत् । अत्र च यदि कश्चित् व्यभिचारः संभाव्यते, तथापि स्वार्थानुमाने तदस्फूर्त्तावनुमानं, यदा च तत् स्फुरेत् तदा ( ता- ) दृशान्यत्वेनापि हेतुविशेषणीय 5 इति केचित् । यत्नपक्षत्वे तु तादृशयत्नत्वं हेतुः, कृतिसाध्यत्वं च हेतौ न विशेषणीयमिति तु ध्येयम् । भ्रमादिमादायार्थान्तरवारणायाधिकतरेति । शङ्कते—**लौकिकेति** । तत्र वक्तुः सम्भवात्, वेदे तु वक्तुरभावात् कथमेवमित्यर्थः । तदस्तित्वे वेदे वक्तुरस्तित्वे, अन्यत् प्रमाणं विधिः वैदिकलिङादिः । ननु लौकिकी लिङ् तच्छक्तास्तु, वैदिकी तु भिन्नैवेति न तत्र तच्छक्तिरित्याशङ्क्याह—**लिङो वेति** । अलौकिकलिङो 10 लोकस्थलक्लृप्तशक्त्यतिक्रम इत्यर्थः । **य एवेति** । लाघवाल्लिङ्त्वमेव शक्ततावच्छेदकं निषेधानुपपत्तिश्च वेदवल्लोकेऽपीति भावः । वैदिकविधिनिषेधयोर्निरर्थकत्वे दोषमाह—**तथा चेति** । तथा च प्रवृत्त्य(प्र)वृत्तीत्यत्र व्याहन्येतामिति भावः । **तेषामिति** । तथा च बाधादेव तदभिप्रायो न विध्यर्थ इति भावः । तथाभिप्रायपूर्वकमेदेऽन्यथासिद्धि निरस्यति—**भावे वेति** । लाघवादेकस्यैवाभिप्रायस्तथा कल्प्यते । अध्यापकाभिप्रायस्य 15 कदाचिद्विपरीतस्यापि सम्भवात् । न चैवमर्थान्तरमिति भावः ॥ १५ ॥

अतः खल्वपि—

**कृत्स्न एव हि वेदोऽयं परमेश्वरगोचरः ।**
**स्वार्थद्वारैव तात्पर्य्यं तस्य स्वर्गादिवद्विधौ ॥ १६ ॥**

न सन्त्येव हि वेदभागा यत्र परमेश्वरो न गीयते । तथा हि स्रष्टृत्वेन पुरुष- 20 सूक्तेषु, विभूत्या रुद्रेषु, शब्दब्रह्मत्वेन मण्डलब्राह्मणेषु, प्रपञ्चं पुरस्कृत्य निष्प्रपञ्चतयोपनिषत्सु, यज्ञपुरुषत्वेन मन्त्रविधिषु, देहाविर्भावैरुपाख्यानेषु, उपास्यत्वेन च सर्वत्रेति ।

सिद्धार्थतया न ते प्रमाणमिति चेत् । न । तद्धेतोः कारणदोषशङ्कानिरासस्य भाव्यभूतार्थसाधारणत्वात् । अन्यत्रामीषां तात्पर्यमिति चेत् । स्वार्थप्रतिपादन- 25 द्वारा, शब्दमात्रतया वा ? प्रथमे स्वार्थेऽपि प्रामाण्यमेषितव्यम् । तस्यार्थस्यानन्यप्रमाणकत्वात् । अत एव तत्र तस्य स्मारकत्वमित्यपि मिथ्या । तत्प्रतिपादकत्वेऽपि न तत्र तात्पर्यमिति चेत् ।

स्वार्थापरित्यागे ज्योतिःशास्त्रवदन्यत्रापि तात्पर्ये को दोषः। अन्यथा स्वर्ग-नरकव्रात्यश्रोत्रियादिस्वरूपप्रतिपादकानामप्रामाण्ये बहु विप्लवेत तत्राबाधनात्तथेति चेत्। तुल्यम्।

न तादृगर्थः क्वचित् इष्ट इति चेत्। स्वर्गादयोऽपि तथा। तन्मिथ्यात्वे तदर्थि-
5 नामप्रवृत्तौ विधानानर्थक्यप्रसङ्ग इति चेत्। इहापि तदुपासनाविधानानर्थक्य-प्रसङ्गः। तन्मिथ्यात्वे हि सालोक्यसायुज्यादिफलमिथ्यात्वे कः प्रेक्षावांस्तमुपासीतेति तुल्यमिति।

वाक्यादपि। संसर्गभेदप्रतिपादकत्वं ह्यत्र वाक्यत्वमभिप्रेतम्। तथा च यत्पद-कदम्बकं यत्संसर्गभेदप्रतिपादकं तत् तदनपेक्षसंसर्गज्ञानपूर्वकं, यथा लौकिकं, तथा च
10 वैदिकमिति प्रयोगः। विपक्षे च बाधकमुक्तम्॥ १६॥

आमोदः

पूर्वं लिङ्विधया श्रुतेः प्रमाणत्वमुक्तं, सम्प्रति शब्दविधयैव श्रुतिः प्रमाणमित्याह---श्रुतेरिति। न गीयते न विषयीक्रियते। स्रष्टृत्वेनेति।

तस्मादश्वा अजायन्त ये के चोभयतोदत इत्यादिषु,

रुद्रेषु–नमो विरूपेभ्यः इत्यादिषु,

15 उपनिषत्सु–अतमोऽवायुरनाकाशमित्यादिषु,

मन्त्रविधिषु–इदं विष्णुर्विचक्रमे इत्यादिषु,

उपाख्यानेषु–मत्स्यकूर्मवराहाद्यवतारकथासु, पुरुषसूक्तावपि स्रष्टृत्व-विभूत्यादिप्रतिपादनमुपास्यत्वतात्पर्यकमेवेत्याह–उपास्यत्वेनेति। पुरुषसूक्ता-दीनां कार्योपस्थापकपदसमभिव्याहाराभावाव्यवहारविरहेण तत्र शक्तिग्राहका-
20 भावान्न ते प्रमाणानीत्याह—सिद्धार्थतयेति। शब्दाप्रामाण्यप्रयोजको वक्तुर्भ्रमादिदोषः स चेश्वरे नास्ति, तस्मादाप्तप्रणीतत्वेन साध्यार्थवत् सिद्धार्थस्यापि प्रामाण्यमस्त्येवेत्याह–तद्धेत्विति। अन्यत्रेति। उपासनादावि-त्यर्थः। सिद्धार्थस्याप्रामाण्ये पुत्रस्ते जात इति वाक्यात् प्रमैव नोत्पद्यते। प्रमा नोत्पद्यत एवास्मादिति चेत्, हर्षहेतुकं पिता(त्रा ? )देर्दर्शनात् तत्र
25 प्रमोत्पत्तेरन्वयनात्( ? )। हर्षहेतुनामानन्त्याच्च तत्रानुभवकल्पनमिति चेत, न। उपस्थितहेतुपरित्यागे अनुपस्थितहेतुकल्पने गौरवात् अमीषामिति। सिद्धार्थानामित्यर्थः। शब्दमात्रतया वेति। पुरुषसूक्तादिशब्दमात्रस्तोम-भागवन्न तु स्वार्थप्रतिपादकमित्यर्थः। तस्यार्थस्येति। स्रष्टृत्वविभूत्यादि-

रूपस्येत्यर्थः । ननु सिद्धार्थाः स्मारयन्ति न त्वनुभावयन्ति इत्यत आह—तत एवेति । तदर्थस्य प्रमाणान्तराविषयत्वेनानुभवादित्यर्थः । स्वार्थप्रतिपत्तेरनुभवत्वे बाधकाभावादिति भावः । ननु तात्पर्यार्थे शब्दस्य प्रामाण्यं न त्वक्षरार्थमात्रे इत्यत आह—तदिति । स्वार्थे बाधकं चेन्नास्ति, तदान्यत्र तात्पर्ये को दोषः (इत्याह ?) ज्योतिःशास्त्रवदिति । 5

'ऐन्द्रं दधि भवत्यमावास्यायाम्'

इत्यादिविधाने वाऽमावास्यागणना शास्त्रस्य तात्पर्ये सत्यपि स्वार्थप्रतिपादकत्ववदित्यर्थः । अन्यथेति । यद्यर्थवादानां प्रामाण्यं न स्यादित्यर्थः । व्रात्यः संस्कारहीनः । बहु विप्लवेतेति । स्वर्गनरकादिप्रतिपादकार्थवादाप्रामाण्ये यागादौ प्रवृत्तिर्न स्यात् । परदारगमनादौ निवृत्तिश्च न स्यादित्यर्थः । ननु स्वर्गनरकादिबोधकागमे बाधो नास्ति, येन विप्लवः स्यात् इत्याह—तत्रेति । तुल्यमिति । ईदृशप्रतिपादनेऽपि बाधाभावस्तुल्य इत्यर्थः । न तादृगर्थ इति । सर्वज्ञत्वादियुक्त इत्यर्थः । स्वर्गादय इति । दुःखासम्भिन्नसुखस्याप्यदर्शनं तुल्यमित्यर्थः । ननु विलक्षणं सुखं यदि न स्यात्, तदा यागाद्यनुष्ठानं न स्यात् । तथा च तदर्थकवेदभागस्याननुष्ठानलक्षणमप्रामाण्यमेव पर्यवस्येदित्याह—तन्मिथ्यात्व इति । ईश्वरस्याप्यभावे ईश्वरमुपासीतेति विधानानर्थक्यं तुल्यमेवेत्याह—इहापीति । सालोक्यं समानलोकता, सायुज्यं सहयोगः । यत्पदकदम्बकमिति । तज्ज्ञानपूर्वकमित्येतावति कृते वेदाधीनतज्ज्ञानपूर्वकास्मदाद्युच्चरितवेदे सिद्धसाधनमत उक्तम्—तदनपेक्षेति । पदकदम्बत्वादित्येवात्र हेतुः । सर्गाद्यकालीनवेदवाक्यं तदर्थज्ञानजन्यं वाक्यत्वात्, अस्मदादिवाक्यवदित्यर्थः । कर्तृगुणाभावे वेदस्य प्रामाण्यमेव भज्येतेति विपक्षबाधकमाह—विपक्ष इति ॥१६॥

बोधनी

एवं प्रत्ययत इत्येतद्व्याख्यायश्रुतेरित्येतद्व्याख्यातुमवतारयति—श्रुतेरिति । वेदादित्यर्थः । वेदावगम्यत्वं परमेश्वरस्य दर्शयति—कृत्स्न···पादकः तस्य वेदस्योपासनाविधौ तात्पर्यान्न स्वार्थे प्रामाण्यमिति चेत् तत्राह—स्वार्थेति । यथा—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्पदं स्वःपदास्पदम् इति ॥

स्वर्गस्वरूपनिरूपणवाक्यस्य स्वार्थविवक्षाद्वारेणैव विधौ तात्पर्यम् । तथा परमेश्वरप्रतिपादकस्यापि स्वार्थविवक्षाद्वारेणैव विधौ तात्पर्यमिति स्वार्थेऽपि प्रामाण्यमिति स्रष्टृत्वे पुरुषसूक्ते त्विति तस्मि···दिभिः स्रष्टृत्वेन तु पुरुषसूक्तेषु परमेश्वरो गीयत इति **विभूत्या रुद्रेष्विति** । नमः कुलालेभ्यः सहस्राणि सहस्रश इत्यादिवाक्यैर्विभूत्या
5 रुद्रेषु गीयते प्रपञ्चमिति आत्मैवेदं सर्वमिति पुरस्कृत्य स एष नेति नेति अगन्धरसमित्यादिभिर्निष्प्रपञ्चतयोपनिषत्सु गीयते । अथ वा स एष नेति नेतीत्यत्र इति शब्देन प्रपञ्चं पुरस्कृत्य एष नेत्यनेन निष्प्रपञ्चतयोपनिषत्सु···**मन्त्रविधिष्विति** । मन्त्रविधिसंज्ञकवाक्येन यज्ञरूपः पुरुषो यज्ञपुरुषः तत्त्वेन यज्ञप्रतिपादकैर्मन्त्रविधिभिर्यज्ञपुरुषत्वेन परमेश्वर एव गीयत इत्यर्थः । **देहाविर्भावैरित** । तदुपाख्यानरूपेषु वेदभागेषु देहा-
10 विर्भावैः परमेश्वर एव [उपास्यत्वेन गीयते] । न दक्षाध्वरध्वंसाद्युपाख्यानेषु तत्तत्कर्मार्थदेहाविर्भावैरिति । **उपास्यत्वेन सर्वत्रेति** । उक्तेषु सर्वेष्वपि [ या ] गेपूपासनविधिविषयत्वेषु गीयते । एतेषां सर्वेषामपि वेदयागानामौपासन···प्रामाण्यहेतोरिति सत्यमस्त्येवैषां प्रामाण्यमिति तात्पर्यविषये उपासनाविधावेवेत्याशङ्कते—**अन्यत्रेति** । शब्दमात्रतया वेति । अविवक्षितत्वेन शब्दस्वरूपेण वेत्यर्थः । **अत एवेति** । **अनन्यप्रमा-**
15 **णकत्वादिति** । निःस्वार्थतात्पर्यापरित्यागेन ज्योति.शास्त्रवत् यथा ज्योतिःशास्त्रस्य तत्तद्ग्रहगतिविशेषादिरूपस्य स्वार्थतात्पर्यापरित्यागेन तत्तत्कर्म ··· तमुहूर्त्तविधिषु तात्पर्यम् । तथान्यत्रापि तात्पर्ये ··· मित्यर्थः । स्वार्थे तात्पर्यानभ्युपगम एव महान् दोष इत्याह—**अन्यथेति** । **बहु विप्लवेतेति** । स्वर्गाभावे तदर्थिनं प्रति यागविध्यानर्थक्यप्रसङ्गः । नरकाभावे तत्परिहाराय निषेधशास्त्राप्रवृत्तिप्रसङ्गः ··· स्याधिकार्यभावादप्रामाण्यप्रसङ्गः
20 श्रोत्रियाभावे श्रोत्रियमधिकृत्य प्रवृत्तानामप्रामाण्यप्रसङ्ग इति बहुशः प्लवतेति कथमित्याह—**तन्मिथ्यात्व इति** । परमेश्वरस्य स्वरूपप्रतिपादकानां मिथ्यात्वे हि सायुज्यादिरूपोपासनाफलमिथ्यात्वे कः प्रेक्षावांस्तं परमेश्वरमुपासीतेति तुल्यमिति ।

वाक्यादपीति हेतुमवतारयति—**वाक्यादपीति** । वैदिकादिति शेषः । वाक्येन परमेश्वरबोधकेन । **संसर्गेति**। संसर्गभेदप्रतिपादकत्वेन परमेश्वरं साधयति—**तथा चेति** ।
25 तानपेक्षेतेति । तज्ज्ञानपूर्वकमिति । एतावत्युक्ते कदाचित्तेनैव वाक्येन तं संसर्गभेदं ज्ञात्वा तस्मैव वाक्यस्य प्रयोगे संसर्गज्ञान···मा भूदिति तदनपेक्षेत्युक्तमिति तत्र कथाबाह्यत्वाद्यवप्रयोगः । **विपक्षे बाधकमिति** ॥ १६ ॥

विवेकः

पूर्वं कार्यतया श्रुतिः लिङ्विधया वक्तरि प्रमाणमुक्तम्, इदानीं शब्दविधया तत्र तस्य प्रामाण्य(ता)माह—**श्रुतेः खल्वपीति**। कृत्स्नो वेदः कृत्स्नशाखात्वव्यापकं परमेश्वरविषयकत्वमिति यावत्। नन्वर्थवादतया अन्यत्र तात्पर्यान्न तत्र प्रामाण्यमित्यत्राह—**स्वार्थेति**। तस्य वेदस्य स्वार्थप्रतिपादनद्वारैवोपासनाविध्युपष्टम्भकत्वं, स्वार्थश्च भगवद्घटित इति भावः। स्वर्गादिबोधकानुवादानामिव यागादिप्रवृत्तितात्पर्यकत्वमित्यर्थः। 5
न गीयते न बोध्यते। **स्रष्टृत्वेनेति**। तस्मादश्वा अजायन्त ये के चोभयतोग(द)त इत्यादिषु। **रुद्रेष्विति**। नमो विरूपेभ्य इत्यादिषु। उपनिषत्सु कतमोऽवायुरनाकाशम् इत्यादिषु, मन्त्रविधिषु इदं विष्णुर्विचक्रम इत्यादिषूपाख्यानेषु मत्स्यकूर्मवराहाद्यवतारकथासु सर्वत्रैव—**पुरुषसूक्तादिषु** उपासनायां तात्पर्यादाह—**उपास्यत्वेनेति**।
शङ्कते—**सिद्धार्थतयेति**। कार्यताबोधकपदसमभिव्याहाराभावात्। **पुरुषसूक्तादयो** 10
न प्रमाकरणमित्यर्थः। तत्राप्रामाण्यात् प्रमाकरणत्वं वा, प्रमाकरणत्वाभावो वा? आद्ये आह—**तद्धेतोरिति**। द्वितीये, कार्यान्वितशक्तिनिरासकान्यनुसन्धेयानि। शङ्कते **अन्यत्रेति**। अमीषाम् अव(ता)रादीनाम् अन्यत् फलम् इत्यर्थः। **स्वार्थप्रतिपादनेति**। तेन योऽर्थः प्रतिपाद्यते तस्योपासना कार्येत्यर्थः। **शब्दमात्रतयेति**। एतदानुपूर्वीकस्य निरर्थकस्यैव पाठ इष्टफलक इत्यर्थः। प्रमाणमेषितव्यं प्रामाण्यं तत्राभ्युपेयम्, तथा च 15
तत एव तत्सिद्धिरित्यर्थः। अनुवादकतयापि नाप्रामाण्यमित्याह—**तस्यार्थस्येति**। अत एव तस्यानन्यप्रमा(ण)कत्वादेव प्रमाणान्तरेण प्रतीते तादृशि विशिष्टे तादृशार्थवादस्य केनापि सम्बन्धेन सम्बन्धितया ग्रहेऽर्थवादज्ञानानन्तरं तादृशविशिष्टस्मृतिः, सा च न प्रमेति नार्थवादानां प्रामाण्यमिति परास्तम्। ननु तात्पर्यविषयीभूतेऽर्थे शब्दस्य प्रामाण्यं न तु यथाश्रुतार्थेन हि.वरं विषं भु(ङ्)क्ष्व इति वाक्यस्य विषभोजने प्रामाण्यं 20
तथात्रापि स्यादिति शङ्कते—**तत्प्रतिपादकत्वेऽपीति**। तत्र स्वार्थे बाधकबलात् तात्पर्याभावः कल्प्यते। न च प्रकृते तथा न ह्यन्यत्र तात्पर्यम् प्रकृततात्पर्यविरोधि, अत एव ज्योतिःशास्त्रस्यामावास्यादिपुरस्कारप्रवृत्त्यविध्यधीनप्रवृत्तितात्पर्यकत्वेऽपि न स्वार्थेऽप्रामाण्यमित्यक्षरतात्पर्याभ्यामाह—**स्वार्थापरित्यागेनेति**। तद्वद्भिरपि विधिसमभिव्याहृतार्थवादानामुपेयत एव प्रामाण्यम्, अन्यथा अङ्गादिबोधकागमानामप्रामाण्ये 25
तदधीनप्रवृत्तिनिवृत्त्युच्छेदापत्तिरित्याह—**अन्यथेति**। व्रीह्यः (व्रात्यः?) संस्कारहीनः। यस्य पिता पितामहो वा सोमं न पिबेत् स व्रीह्य (व्रात्य?) इति बोधितो वा। श्रोत्रियो वेदपारगो ब्राह्मणस्तादृशसार्वज्ञादिमुक (युक्तः?)। स्वर्गादय इत्यादिपदात्

नरकोपग्रहः। तन्मिथ्यात्वे स्वर्गाद्यनुवादानामप्रमाण्ये तदन्विना लक्षणं (?) नरकभीरूणां न निवृत्तिः स्यादित्यपि बोध्यम्। इहापि ईश्वरप्रतिपादना (या ?) मप्रमाण्ये। **तदिति**। ईश्वरमुपासीतेत्यादिविधेरप्रामाण्यप्रसङ्गः। तदप्रामाण्ये दोषमाह—**तन्मिथ्यात्व इति**। तथा च तत्तत्फलार्थिनामीश्वरोपासने महाजनानां प्रवृत्तिर्न स्यादित्यर्थः। 5 **तथा चेति**। येषां पदार्थानां यं संसर्गं प्रतिपादयतीत्यर्थो बोध्यः। तेन विसंवादिशुकवाक्ये न व्यभिचारः, तज्जातीयत्वं वा साध्यं घुणाक्षरन्यायोक्तं शुकवाक्यं च न प्रतिपादकमित्यभिमानः। वेदाधीनाव्यापकज्ञानमादायार्थान्तरवारणाय—**तदनपेक्षेति**। विपक्षबाधकमुक्तम् प्रमाया गुणजन्यत्वादिति **कारिकाविवेचने** ॥ १६ ॥

सङ्ख्याविशेषादपि—

10 **स्यामभूवं भविष्यामीत्यादिसङ्ख्या च वक्तृगा।**
**समाख्याऽपि न शाखानामाद्यप्रवचनादृते ॥ १७ ॥**

कार्यतया हि प्राक् सङ्ख्योक्ता, सम्प्रति तु प्रतिपाद्यतयोच्यते। तथा ह्युत्तमपुरुषाभिहिता सङ्ख्या वक्तारमन्वेतीति सुप्रसिद्धम्। अस्ति च तत्प्रयोगः प्रायशो वेदे। ततस्तदभिहितया तयाऽपि स एवानुगन्तव्यः, अन्यथाऽनन्वयप्रसङ्गात्।

15 अथ वा—समाख्याविशेषः सङ्ख्याविशेष उच्यते। काठकं कालापकमित्यादयो हि समाख्याविशेषाः शाखाविशेषाणामनुस्मर्य्यन्ते। ते च न प्रवचनमात्रनिबन्धनाः प्रवक्तॄणामनन्तत्वात्। नापि प्रकृष्टवचननिमित्ताः। उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषात्। तत्पाठानुकरणे च प्रकर्षाभावात्। कतिचनादौ संसारे प्रकृष्टाः प्रवक्तार इति को नियामक इति। नाप्याद्यस्य वक्तुः समाख्येति 20 युक्तम्। भवद्भिस्तदनभ्युपगमात्। अभ्युपगमे वा स एवास्माकं वेदकार इति वृथा विप्रतिपत्तिः।

स्यादेतत्, ब्राह्मणत्वे सत्यवान्तरजातिभेदा एव कठत्वादयः। तदध्येया तदनुष्ठेयार्था च शाखा तत्समाख्यया व्यपदिश्यते इति किमनुपपन्नम्। न क्षत्रियादेरपि तत्रैवाधिकारात्। न च यो ब्राह्मणस्य विशेषः, स क्षत्रियादौ सम्भवति। 25 न च क्षत्रियादेरन्यो वेद इत्यस्ति। न च कठाः काठकमेवाधीयते तदर्थमेवानुतिष्ठन्तीति नियमः, शाखासङ्करस्यापि प्रायशो दर्शनात्। प्रागेवायं नियम आसीदिदानीमयं विप्लवते इति चेत्। विप्लव एव तर्हि सर्वदा, कठाद्यवान्तरजातिविप्लवादित्यगतिरेवेयम्। तस्मादाद्यप्रवक्तृवचननिमित्त एवायं समाख्याविशेषसम्बन्ध इत्येव साध्विति ॥

30 स एवं भगवान् श्रुतोऽनुमितश्च, कैश्चित् साक्षादपि दृश्यते प्रमेयत्वादेर्घटवत् ॥ ननु तत्सामग्रीरहितः कथं द्रष्टव्यः। सा हि बहिरिन्द्रियगर्भा मनोगर्भा वा तत्र न

सम्भवति। चक्षुरादेर्नियतविषयत्वात्। मनसो बहिरस्वातन्त्र्यात्। तदुक्तं 'हेत्व-भावे फलाभावादित्यादि। न। कार्यैकव्यङ्ग्यायाः सामग्र्या निषेद्धुमशक्यत्वात्।

अपि च दृश्यते तावद्बहिरिन्द्रियोपरमेऽपि असन्निहितदेशकालार्थसाक्षात्कारः स्वप्ने। न च स्मृतिरेवासौ पटीयसी। स्मरामि स्मृतं वेति स्वप्नानुसन्धानाभावात्। पश्यामि दृष्टमित्यनुव्यवसायात्। न चारोपितं तत्रानुभवत्वम्। अबाधनात्। अननुभूतस्यापि स्वशिरश्छेदनादेरवभासनाच्च। 5

स्मृतिविपर्यासोऽसाविति चेत्। यदि स्मृतिविषये विपर्यास इत्यर्थः, तदाऽनुमन्यामहे। अथ स्मृतावेवानुभवत्वविपर्यासः इति, तदा प्रागेव निरस्तः। न च सम्भवत्यपि, न ह्यन्येनाकारेणाध्यवसितोऽन्येन ज्ञानावच्छेदकतयाऽध्यवसीयते। तथा च स घट इत्युत्पन्नायां स्मृतौ भ्राम्यतस्तं घटमनुभवामीति स्यात्, न त्विमं घटमिति। 10 न ह्ययं घट इति स्मृतेराकारः। तस्मादनुभव एवासौ स्वीकर्त्तव्यः।

अस्ति च स्वप्नानुभवस्यापि कस्यचित् सत्यत्वं, संवादात्। तच्च काकतालीयमपि न निर्निमित्तम्। सर्वस्वप्नज्ञानानामपि तथात्वप्रसङ्गात्। हेतुश्चात्र धर्म एव। स च कर्म्मजवत् योगजोऽपि योगविधेरवसेयः, कर्मयोगविध्योस्तुल्ययोग-क्षेमत्वात्। 15

तस्मात् योगिनामनुभवो धर्मजत्वात् प्रमा, साक्षात्कारित्वात् प्रत्यक्षफलं, धर्माननुगृहीतभावनामात्रप्रभवस्तु न प्रमेति विभाग इति। अतस्तत्सामग्रीविर-होऽसिद्धः।

तथापि विपक्षे किं बाधकमिति चेत्। 'द्वे ब्रह्मणी वेदितव्ये' इत्यादियोग-विधिवैयर्थ्यप्रसङ्गः अशक्यानुष्ठानोपायोपदेशकत्वात्। न चासाक्षात्कारिज्ञानविधान- 20 मेतत्। अर्थज्ञानावधिनाऽध्ययनविधिनैव तस्य गतार्थत्वात् इति। एतेन परमाण्वादयो व्याख्याता इति।

तदेनमेवम्भूतमधिकृत्य श्रूयते—'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति। 'एकमे-वाद्वितीय' मिति। 'पश्यत्यचक्षुः स शृणोत्यकर्ण इति। 'द्वे ब्रह्मणी वेदितव्ये पर-ञ्चापरमेव चे' ति। 'यज्ञेन यज्ञमयजन्त देवा' इति। 'यज्ञा वै देवा' इति। 'यज्ञो 25 वै विष्णु'रित्यादि। स्मर्यते च—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। इति।
मदर्थं कर्म कौन्तेय ! मुक्तसङ्गः समाचर। इति।
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। इति।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते। इत्यादि। 30

अनुशिष्यते च साङ्ख्यप्रवचने ईश्वरप्रणिधानम्। तमिमं ज्योतिष्टोमादिभिरिष्टैः प्रासादादिना पूर्त्तेन शीतातपसहनादिना तपसा, अहिंसादिभिर्यमैः शौचसन्तोषादि-भिर्नियमैः आसनप्राणायामादिना योगेन महर्षयोऽपि विविदिषन्ति। तस्मिन् ज्ञाते सर्वमिदं ज्ञातं भवतीत्येवं विज्ञाय श्रुत्वैकतानस्तत्परो भवेत्। यत्रेदं गीयते—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ १७ ॥ इति ।

आमोदः

5 स्याम् इत्याद्युत्तमपुरुषप्रयोगः । संख्याशब्दस्य समाख्यामर्थमादायाह--**समाख्यापीति**। ननु पूर्वमपि साङ्ख्येश्वरसाधकत्वेनोक्तेति पौनरुक्त्यमित्याह--**कार्येति**। द्व्यणुकत्र्यणुकपरिमाणजनकद्वित्वत्रित्वसंख्याजनकापेक्षाबुद्धिमत्त्वेन पूर्वमीश्वरः साधित इत्यर्थः। **प्रतिपाद्यतयेति**। उत्तमपुरुषाख्यातप्रतिपाद्यतयेत्यर्थः। स एव वक्तैव। **अनुगन्तव्य इति**। अन्वेष्यत
10 इत्यर्थः। अवगन्तव्य इति पाठे तु संख्याविशिष्टतया अवगन्तव्य इत्यर्थः। इयं कठशाखा, इयं कलापशाखा इत्यादिसहस्रस्यापि शाखानां या समाख्या नामत ईश्वरकृतमेवेत्याह--**काठकमिति**। ननु येन या शाखा पठिता तन्नामाकाङ्क्षिता सा शाखा इति किमीश्वरेणेत्याह--**न चेति**। चेतन इत्यपि क्वचित् पाठः। ननु यद्यप्यनन्ता प्रवक्तारस्तथापि कठकलापादयस्तासु तासु
15 शाखासु प्रकृष्टाः प्रवक्तारोऽभूवन्निति तत्तन्नामाङ्कितास्तास्ताः शाखा इत्यत आह--**नापीति**। अध्यापकापेक्षया प्रकर्षश्चेद्विवक्षितस्तदा पूर्वपूर्वाध्यापकापेक्षया यः कश्चित् पूर्वोत्कृष्टस्तस्यैव नाम्ना समाख्या स्यादित्यर्थः। ननु तासु तासु शाखासु त एव कठादयः सर्वोत्कृष्टा इत्यत आह--**कति चेति**। अनादौ संसारे चैवम्भूता एव कति महान्तो जाता इति एकस्या एव
20 शाखाया बहवः समाख्याः स्युरित्यर्थः। ननु कठजातीयब्राह्मणाधीता शाखा काठिकेति व्यपदिश्यत इत्याह--**स्यादेतदिति**। तर्हि क्षत्रियवैश्याभ्यां सा नाधीयेत इत्याह--**क्षत्रियेति**। **एवं नियम इति**। कठाः काठकमेव पठन्तीत्येवंरूप इत्यर्थः। **अयं विप्लव इति**। कठाद्यवान्तरजातिर्विप्लवादिति भावः। पूर्वमपि कठाद्यवान्तरजातौ मताभावेनायं नासीन्नियम इत्याह--
25 **विप्लव एवेति**। **अगतिरेवेति**। आद्यप्रवचनं विनेति शेषः। **आद्येति**। आदौ यः प्रवक्ता ईश्वरस्तेन या शाखा प्रथमं यस्मै प्रोक्ता सा तन्नाम्ना प्रसिद्धेत्यर्थः। ईश्वरदार्ढ्यार्थं प्रमाणसंप्लवमाह--**स इति**। यद्वा, श्रवणमननाभ्यामेव न मोक्षः, किन्तु साक्षात्कारपर्यन्तः। तेन सदातनमिथ्याज्ञानोच्छेद

इत्यत आह—स एष(व)इति। कैश्चिदिति। योगिभिरित्यर्थः। प्रत्यक्ष-सामग्र्यभावादप्रत्यक्षतामाह—नन्विति। कार्यं चेदस्ति तदा सामग्र्यपि तत्रा-स्त्येवेत्याह—कार्येति। योगजधर्मसहकृत आत्ममनोयोग एव तत्सामग्रीति व्यवस्थापयितुं पीठमारचयति—दृश्यत इति। पटीयसी स्फुटा, तत्काले स्मरामीति स्यात्। जागरावस्थायां स्मृतमिति स्याद् इत्याह—स्मरामीति। 5 ननु स्मृतावेव तत्रानुभवत्वारोप इत्याह—न चेति। स्मृतिरेवानुभूतित्वेन गृहीतेति बाधाभावान्नैवमित्याह—अबाधनादिति। अनुपलब्धस्यापीति। स्मृतेरुपलब्धमात्रविषयत्वात् स्वप्नज्ञानं न स्मृतिरिति भावः। प्राभाकरः शङ्कते—स्मृतीति। एतद्विकल्प्य दूषयति--यदीति। स्वप्नज्ञानस्यारोपत्वे-नास्माभिरभ्युपगमादित्यर्थः। प्रागेवेति। अबाधनादित्युक्तत्वादित्यर्थः। न 10 च सम्भवत्यपीति। स्मृतावनुभवत्वारोप इत्यनुषङ्गः। न ह्यन्थेति। तत्ता-वच्छेदेनोत्पन्ना स्मृतिरिदन्तावच्छेदेन कथमनुव्यवसीयेतेत्यर्थः। ननु मनसः प्रमायामेव बहिरस्वातन्त्र्यं न तु भ्रमेऽपि, तथा च मनसैव स्वप्नज्ञानं जन्यते। योगिसाक्षात्कारस्तु प्रमारूप इति कथं मनोमात्रयोनिः स्यादित्यत आह—अस्तीति। अत्रेति। स्वप्नान्तिकसत्यज्ञान इत्यर्थः। धर्म एवेति। कर्मजन्य 15 इति शेषः। यदर्थंपीठरचना तदाह—स चेति। कर्मविधिः स्वर्गकामो यजेते-त्यादिः, योगविधिः आत्मा वा अरे द्रष्टव्य इत्यादि। योगो यमेन तात्पर्येण प्रवृत्तिः, तेनैव तात्पर्येण परिपालनं क्षेमः। धर्मजन्यत्वादिति। दोषासहकृत-धर्मजन्यत्वादित्यर्थः। तेन कामातुरकामिनीभ्रमस्य सुखहेतुत्वेन धर्मजत्वेऽपि न व्यभिचार इति भावः। तथा च योगिसाक्षात्कारे प्रत्यक्षसामग्र्यभाव 20 इति यदुक्तं तदसिद्धमिति दर्शितं, स कैश्चित् साक्षात्कृतः प्रमेयत्वादिति यदुक्तं तत्र किं विपक्षबाधकमित्याह—तथापीति। वेदनशब्दस्य प्रत्यक्षज्ञान-परत्वमभ्युपेत्याह—अशक्येति। ईश्वरप्रत्यक्षासिद्धावियं श्रुतिः ग्रावप्लवन-श्रुतिवदनन्वितैव स्यादित्यर्थः। ननु वेदनमात्रमनेन विधीयते, तच्च शक्यमे-वेत्याह—न हीति। 25

स्वाध्यायोऽध्येतव्य इति

विधेरर्थज्ञानपर्यन्तमध्ययनं विषय इति भावः। तथा चोपनिषदध्यय-नेनैव ब्रह्मणः, श्रौतज्ञानविषयत्वं प्राप्तमतो द्वे ब्रह्मणीत्यादि व्यर्थमित्यर्थः एतेनेति। ईश्वरमानसप्रत्यक्षव्युत्पादनेनेत्यर्थः। तदेनमीश्वररूपम्।

**दृष्टेर्विलोप** इति। दृष्टिः प्रत्यक्षज्ञानम्। तदप्रतिहतमेव सर्वत्र परमेश्वरस्येत्यर्थः। **एकमेवेति**। ईश्वर एक एव, न द्वितीय ईश्वर इत्यर्थः। **पश्यत्यचक्षुरिति**। इन्द्रियादिव्यतिरेकेणैव सर्वविषयकसाक्षात्कारवानित्यर्थः। **द्वे ब्रह्मणी इति**। परमात्मा स्वात्मा चेति व्यापकत्वात् स्वात्मनि ब्रह्मपदप्रयोगः। 5 **यज्ञेनेति**। यष्टा यष्टव्यश्च। **विष्णुरेवेति**। तन्मयत्वभावनपरम्। **यज्ञार्थादिति**। विष्णुमुद्दिश्य यत् कर्म क्रियते तेन कर्मणा संसारानुप्रच्यव इत्यर्थः। दर्शनान्तरेणैकमत्यमाह—**अनुशिष्यत इति**। उपदिश्यत इत्यर्थः। ज्ञानकर्मसमुच्चयनिरासार्थमाह-**तमिममिति**। इष्टापूर्तादीन्यपि कर्माणि तत्त्वज्ञानद्वारेणैव मोक्षसाधनानीत्यर्थः। **तस्मिन्निति**। ब्रह्मणीत्यर्थः। **एवमिति**। श्रद्धैकतानः 10 श्रद्धापरः ईश्वरमात्रे श्रद्धावान्। तदुपदेशमेव प्रमाणमाह—**यत्रेदमिति**। युक्त्या निरिन्द्रियप्रदेशे मनः संयोज्य मामेवैष्यसि मां साक्षात्करिष्यसीत्यर्थः। **भोक्तारमिति**। एतादृशं मां साक्षात्कृत्य शान्ति मोक्षम् ऋच्छति प्राप्नोतीत्यर्थः ॥१७॥

बोधनी

संसर्गभेदप्रतिपादकस्य वाक्यस्य संसर्गभेदज्ञानकार्यत्वात्तदभावे कार्यविलोपप्रसङ्गः 15 इति बाधकं सर्वसाधारण्ये इति संख्याविशेषादिति हेतुमवतारयति—**संख्याविशेषादपीति**। वक्तृगेत्यनेन वेदवाक्यप्रणेतृसद्भावप्रतिपादनेन द्वारेणापि परमेश्वरः साध्यत इति दर्शितम्।

संख्याशब्दस्यार्थान्तरमभिप्रेत्याह—**समाख्यादपीति**। शाखाकाङ्क्षादिवक्तारं साधयतीत्यर्थः। तत्र संख्याः

20 संख्यार्थत्वे सत्येव पूर्वव्याख्यानादस्य भेदं दर्शयति—**कार्यतयेति**। परमाण्वादिगतानेकसंख्याया ईश्वरकार्यत्वात् कार्यात् कारणत्वेनेश्वरावगतिरिति संख्यायास्तेनैव प्रतिपाद्यत्वात् प्रतिपाद्यमानयानया प्रतिपादकः परमेश्वरः साध्यत इति विशेष इत्यर्थः। **अन्यथानन्वयेति**। वक्त्रभावे उत्तमपुरुषाभिहितायाः संख्याया वाक्ये···अदिति··· न्तत्वादिति। तथा च कथमेकेनैव कठेन व्यपदिश्येतेति भावः। प्रकृष्टप्रवचनकर्त्रा 25 कठेनैव व्यपदिश्यत इति चेत्तत्राह—**नापीति**। **प्रत्युतेति**। तादृशस्य प्रवचनस्य समाख्यां प्रत्यनिमित्तत्वमेवेति कथमित्याह—**अथेति**। तत्पाठानुकरणे प्रकर्षस्यासंभव एवेति दर्शयति—**पाठेति**। **कति चेति**। संभवतु वा प्रकृष्टं प्रवक्ता तथापि दोषाणां

बहुत्वात् कस्तेषां मध्ये नियामकः नियतव्यपदेशहेतुरित्यर्थः। **वेदार्थ इति**। वेदप्रतिपादक एवास्माकमीश्वर इति न कठशब्दः कस्यचिदेकस्य संज्ञा किन्तु ब्राह्मणत्वावान्तरजातिवचनः अतो बहिरभिधीयमानत्वेऽपि जातिप्रवचननिमित्तयैव समाख्यया व्यपदिश्यत इति शङ्कते—**स्यादेतदिति**। परिहरति—[ **क्षत्रियादेरिति** ]। क्षत्रियवैश्ययोरपि त्रैवर्णिकत्वेन तस्यामेव शाखायामधिकारादिति को दोषः क्षत्रियादावपि कठत्वादिसंभवा- 5
दिति चेत् तत्राह—**न च य** इति। जातिसङ्करप्रसङ्गादिति भावः। क्षत्रियादेरपि तत्रैवाधिका [ रात् ] तेन क्षत्रियादेरन्यो वेद इति। किञ्च काठकानां कठशाखाध्ययनवत् शाखान्तराध्ययनादेरपि संभवात् तदध्ययनादिनिमित्तत्वे काठकसंज्ञायाः शाखान्तरमपि काठकसंज्ञया व्यपदिश्येतेत्याह—**न च कठा** इति। **शाखान्तरसञ्चारस्येति**। **शाखान्तरसञ्चारस्यापीति**। **कठत्वाद्यवान्तरेति**। अयमर्थः— 10
यदीदानीं कठाद्यवान्तरजातिर्दृश्यते तद्बलादेव तैर्नीयमानात्तन्निमित्ता समाख्येति कल्प्येतापि सा तु विप्लुता इदानीं दृश्यते अत इदानीमिव सर्वदा विप्लवः। **प्राग् एवायमिति**। एवं भगवति परमेश्वरे प्रमाणाभाववादिनं प्रति श्रुत्यनुमाने प्रमाणे दर्शयित्वा तस्मिन् प्रत्यक्षमपि केषाञ्चित् क्रमत इति साधयति—**कैश्चिदिति**। योगिभिरित्यर्थः। सामग्रीराहित्यात् दर्शयति—**सा हीति**। नियतविषयत्ववर्तमानरूपादिनियतविषयत्वादिति। 15
**मनसो बहिरस्वातन्त्र्यादिति**। आत्मतद्गुणेभ्यो बहिर्बाह्येन्द्रियनिरपेक्षस्य मनसो स्वातन्त्र्याभावादिति। **कार्यैकव्यङ्ग्याया** इति। यथोपन्यस्तानुमानसिद्धे⋯अकाराख्येन⋯याः कल्प्यायाः सामग्र्याः निषेद्धुमशक्यत्वादिति मनसो बहिरपि स्वातन्त्र्यं स्वप्ने दृष्टमित्याह—**अपि चेति**। **स्मरामि स्मृतं वेति**। कर्तृविशेषणत्वेन कर्मविशेषणत्वेन वा स्मृतित्वस्याननुसन्धानादित्यर्थः। अनुभवत्वेन प्रमाणम्—**पश्यामीति**। 20
न केवलं स्मृतित्वे प्रमाणाभावः किन्तु बाधकमप्यस्तीत्याह—**अनुपलब्धस्यापीति**। अथ वा न केवलमनुभवत्वे बाधकाभावः किन्त्वनुग्राहकमस्तीत्याह—**अनुपलब्धस्यापीति**। **स्मृतिविपर्यास** इति। अर्थविकल्पं दूषयति—**अथेति**। पदार्थरूपे विपर्यासः संसर्गविपर्यास इत्यर्थः। **प्रागेव निरस्त** इति। बाधकाभावादित्यादिना निरस्त इति। **न ह्यन्येनेति**। नहि यथाऽयं घट इति घटाकारेणाध्यवसितोऽर्थोऽन्येन 25
पटाकारेण पटं जानामीति ज्ञा [ नमध्यव्यवसीयते ] तथा सति तत्तथा परोक्षाकारेणाध्यवसितोऽर्थो नेदं तया अपरोक्षाकारेण ज्ञानावच्छेदकतयानुव्यवसीयेत, एवं त्वसति किं सिध्यतीतत्राह—**तथा चेति**। अस्तु मनसो बहिर्भ्रान्तिरूपा⋯नुभवजननीति चेत् तत्राह—**अस्ति चेति**। यथा स्वप्नदृष्टस्यार्थप्रमाणान्तरेण क्वचित्। **संवादादिति**।

हेतुश्चात्रेति। अत्र यथार्थज्ञाने पुण्यकर्मजोऽपूर्वरूपो धर्म एव हेतुरिति। स च धर्म…धिप्रमाणको यथार्थानुभवहेतुरस्तीति दर्शयति—स चेति। साक्षात्कारित्व-प्रमात्वादिति। लिङ्शब्दाद्यभावे सति प्रमात्वात् साक्षात्कारित्वमिति भावः। कामुकादीनां धर्मानुगृहीतकामिन्यादिभावनामन्त्रप्रभवस्य…रो न प्रमेति। प्रमा प्रमाविभाग इत्याह—धर्माननुगृहीतेति। परमेश्वरसाक्षात्करणसाधकस्य प्रमेयत्वस्य तत्सामग्रीरहितत्वादिति यत्प्रतिसाधनमुक्तम् तस्य सिद्धत्वेऽपि प्रमेयत्वस्य विपक्षे किं बाधकमिति चेत् परापरब्रह्मसाक्षात्कारं विदधतो द्वे ब्रह्मणी वेदितव्य इति योगविधेर्वैयर्थ्यप्रसङ्गो बाधक इति परिहरति—द्वे ब्रह्मणी इति। कुत इत्यत्राह—अशक्येति। अशक्यानुष्ठानस्य मोक्षोपायस्य ब्रह्मसाक्षात्कारत्वादिति वेदितव्ये इति वेदनमात्रश्रावणादसाक्षात्कारिविज्ञानविधानमेवैतदिति न वक्तव्यमित्याह—न च साक्षात्कारीत्ति। अर्थज्ञान-पर्यन्तेन स्वाध्यायोऽध्येतव्य इति स्वाध्यायाध्ययना…सार्थं यो…ह्मणोरसाक्षात्कारि-विज्ञानस्य वेदानामेव सिद्धेरिति। एतेनेति। …नागमप्रमाणसिद्धस्य परमेश्वरस्य शिष्यान् प्रतिश्रद्धापूर्वमुपास्यताविधानार्थं तस्य श्रुतिसिद्धमुपास्याकारमाह—तदेनमिति। दृष्टेरित्यत्र दृष्टिशब्देन ज्ञानमुच्यते दृष्टेरित्यत्र दृष्टिशब्देन ज्ञानमुच्यते। दृष्टिग्रहणमि…यज्ञयोरप्युपलक्षणं ज्ञानेच्छाप्रयत्न…स्तीत्यर्थः। एकमेवेति। अनेन समाधिकशून्यत्वमुक्तम्। पश्यत्यचक्षुरित्यनेनेश्वरज्ञानस्य कारणनिषेधेन कार्यत्वमुच्यते, एवं कर्तृविशिष्टस्य परस्य ब्रह्मणः उपास्यत्वप्रतिपादनार्थमुपास्यत्वे प्रमाणं दर्शयति—द्वे ब्रह्मणी इति। अ…हेत्वतिरिक्तः कर्मणापि स एवोपास्य इत्यत्रापि प्रमाणमाह—यज्ञेनेति। सर्वधर्माणीत्यनेन कर्मपरित्याग उक्तः। मुक्तसङ्ग इति। यज्ञार्थत्वं सहायफलसङ्गेन क्रियमाणं कर्म…बन्धनमेव…र्थस्य कर्मणः संसारहेतुभूत…अनुशिष्यत इति। योगशास्त्रस्यापि सेश्वरसांख्यमिति सांख्यप्रभेदत्वेन प्रसिद्धेः सांख्यप्रवचन इत्युक्तमिति। एवमीश्वरस्योपास्यत्वे श्रुत्या शास्त्रात्मकं प्रमाणमुपन्यस्य कर्मयोगाभ्यामुपास्यत्वे शिष्टाचारमपि…एवमस्योपास्यत्वे प्रमाणमुपन्यस्य शिष्यहिताय तान् प्रति परमेश्वरस्योपास्यत्वं स्वयमेव विदधति। एवं विज्ञायेति। एवमुक्तेन प्रकारेण तदुपासनस्य प्रामाणिकत्वं विज्ञाय तत एव श्रद्धैकतानः श्रद्धातत्परो भवेत् परमेश्वरोपासको भवेत् इति परमेश्वरोपासनायाः किं फलमिति चेत् तत्राह—यत्रेति। यत्र परमेश्वरोपासनायामिदं फलं गीयत इत्यर्थः। मामेवैष्यसीति। ब्रह्म प्राप्य लक्षणं फलं गीयत इति शास्त्रं दुःखशान्तिलक्षणं ब्रह्म प्राप्नोतीत्युक्तमिति ॥ १७ ॥

विवेकः

स्यामभूवमित्याद्युत्तमपुरुषे, कालभेदेन प्रयोगत्रैविध्यं, संख्याशब्दस्य समाख्याप्यर्थ इति तदभिप्रायेण हेत्वन्तरमाह--**समाख्यापीति**। काठ (क) कालापादि-शाखानां संज्ञा। पूर्वं संख्यात इत्युक्तमिति पौनरुक्त्यमाशङ्क्याह--**कार्त्स्न्यतया हीति**। स एव वक्ता अनुगन्तव्यः अन्वयी। **प्रवचनेति**। येन या पठिता तेनैव तदीयत्वेन सा तथेत्यर्थः। प्रवचनानाम् अध्येतॄणां, तथा चानियम इति भावः। ननु सर्वेभ्यो यः प्रकृष्टो यस्याः शाखाया वक्ता तन्नाम्नैव सा व्यपदिश्यते इत्याशङ्क्य निराकरोति--**नापीति**। **उपाध्यायेभ्य इति**। यत्किञ्चिदपेक्षया प्रकर्षोऽतिप्रसक्तः, स कलापाध्यायेभ्यश्च न कठादावपि तस्याप्युपाध्यायस्य सत्त्वात् तेनापि व्यपदेशः स्यादित्यर्थः। ननु कठादेः शाखोपाध्यायेभ्योऽपि (?) प्रकर्षवत्त्वात् तैरेव व्यपदेश इत्याशयाह--**कृतीति**। आद्यस्य इतरानधीनज्ञानवतः। ननु कठत्वादयो ब्राह्मणत्वावान्तरजातिभेदाः तदवच्छिन्नाधिकृता शाखा काठिका, यश्च (?) तत्कर्तृकाध्ययनाध्यापनतदनुष्ठेयबोधकत्वादाह--**स्यादेतदिति**। तदनुष्ठेया तदवच्छिन्नाधिकारिककर्मबोधिका। दूषयति--**नेति**। तथा च कठत्वं नाधिकारितावच्छेदकमित्यभिमानः। ब्राह्मणस्य विशेषः ब्राह्मणत्वाव्यापकत्वे सति ब्राह्मणवृत्तिजातिः, जातिसङ्करदोषादिति भावः। ननु क्षत्रियादेस्तदधिकारो नास्त्येवेत्याशङ्क्याह--**न चेति**। तथा च सर्वत्रैव शाखायां, तथा समाख्यासत्त्वेन क्षत्रियादेर्वेदाध्ययनादावधिकार एव स्यादिति भावः। ननु कठातिरिक्तब्राह्मणानधिकारित्वे स चाधिकृतकत्वनियामकं स्यादित्यत्राह--**न च कठा इति**। तथा च कालापेऽपि कठाध्यय(न)त्वादिति सत्त्वात्। कालापातिरिक्त-ब्राह्मणानधिकारिकत्वाभावात्तत्र समाख्यानं स्यादिति भावः। **शाखासंचारस्येति**। यच्छाखाक्रमेण यस्य संस्कारः कृतः स तच्छाखा भवति। तथा च कठातिरिक्तोऽपि यदि तच्छाखया संस्क्रियते तदा सोऽपि तच्छाखीति नोक्तनियम इति भावः। शङ्कते—**प्रागिति**। तथा प्राक्तनतादृशनियमादेव समाख्यानियम इति भावः। अयं शाखा-सञ्चारः। विप्लवः शास्त्रविरुद्धः। **विप्लव एवेति**। **कठादीति**। कठत्वाद्यवा-न्तरजातिभेदे मानाभावादित्यर्थः। इयं व्यवस्थाद्यं प्रवक्तारं विना गतिरसमाधेया। सतीश्वरे समाख्यान्नियमयति--**तस्मादिति**। आद्येन इतरज्ञानानधीनतज्ज्ञानवता प्रवक्ता-ध्यापकेन यन्नाम्नो या शाखाध्यापिता सा तेन व्यपदिश्यत इति नियम इत्यर्थः। ननु भवत्वाद्यः प्रवक्ता नाद्यापि भगवतो वार्त्ता इत्यत्राह--**न एव त्विति**। ननु श्रवणादीनां समानविषयत्वश्रुतेर्यस्य साक्षात्कारस्तद्गोचराण्येव श्रवणादीनि मोक्षे उपयुज्यन्ते, न

चेश्वरस्य साक्षात्कारसंभव इति व्यर्थोऽस्य मननारम्भ इति आशङ्कायामाह--श्रुत इत्यादि। साक्षात् दृश्यते साक्षात्कारित्वनिरूपकविषयतावान्। कश्चिदिति। इदानीन्तनानुपलम्भबाधवारणाय जन्यतालाभाय वा कैश्चिदित्युक्तं मेयत्वात्, ज्ञेयत्वात् इति यावत्। तत्सामग्री तत्र हि तैर्यावद्विशेषबाधेन तत्सामग्री सामान्यविरहं बाधयति। सा हीति। बहिरिन्द्रियगर्भा बहिरिन्द्रियघटिता, मनोगर्भा मनोऽसाधारणकारणिका नियतविषयत्वात्। स्वव्यवस्थापकगुणशून्यद्रव्यसाक्षात्काराजनकत्वात् बहिरिन्द्रियजन्यात् इन्द्रियान्तरासहकारेण आत्मीयात्मातिरिक्तद्रव्यसाक्षात्काराजनकत्वात्। उक्तं च चतुर्थस्तवके। उक्तमर्थं कारिकार्द्धेन संगृह्णाति--चक्षुरादीति। उक्तानुमानबलात् सिद्धेस्तत्र साक्षात्कारे सामग्र्यपि कल्प्यत इत्याह--न कार्येति। तद्व्यङ्ग्यत्वं तत्प्रमाणकत्वम्। ननु उक्तयावद्विशेषबाधात् तत्सामान्यसामग्रीबाधे दृश्यतासाधकमनुमानमेव बाधितं स्यादित्यभिप्रेत्य तद्विशेषबाधमेव निराकरोति--अपि चेति। बहिरिन्द्रियोपरमस्तद्व्यापाराभावः, असन्निहितस्य मानसलौकिकसाक्षात्कारहेतुसन्निकर्षरहितस्य। देशकालेति। विषयमात्रोपलक्षणम्, स्वप्ने स्वप्नदशायाम्। असौ स्वप्नदशायां साक्षात्कारत्वेनाभिमता प्रतीतिः। पटीयसी तद्वृत्तिबहुतरधर्मावगाहिनी। स्मरामीति। विद्यमाने ज्ञाने स्मृतमिति जागरदशायाम् आत्मविशेष्यकमेयपरतार्थविशेष्यकमिति भेदेन वा भेदः। अनुसन्धानमनुव्यवसायः। पश्यामि अनुभवामीति दृष्टमनुभूतम्। ननु सामग्रीबाधादेव बाधोऽस्तु इत्यरुचेराह--अनुपलब्धस्यापीति। शङ्कते--स्मृतीति। विकल्प्य दूषयति--यदीति। स्मृतिविषये स्मृतेर्धर्मिणि विपर्यासः स्मृतस्य व्यधिकरणप्रकारकोऽनुभवः। तदेति। तथा चायातम् अलौकिकप्रत्यासत्तिसहकारेण मनसः स्वातन्त्र्यमिति भावः। निरस्तः अबाधनादित्यनेन व्यधिकरणप्रकारकस्मृतिरिति तु तथाभूतसंस्काराभावे सैव सम्भवतीति भावः। स च सम्भवतीत्यत्र स्मृतावनुभवत्वारोप इत्यनुषज्यते--न ह्यन्येति। तथा च तत्ताकारेण स्मृतिविषयोऽर्थः स्मृत्यनुव्यवसाये इदन्ताकारेण भासेतेति भावः। अत्र प्रमात्वं तत्त्वमि ( ति ) तत्प्रकारकानुभवत्वम्। तच्च स्वप्नज्ञाने क्वचिद्विषये यथार्थत्वेऽपि क्वचिद्विषयेऽस्त्येवेति भावः। भ्रमभिन्ने स्वातन्त्र्यकल्पनायां च न मानमिति ध्येयम्। तत् सत्यत्वं काकतालीयम् इति कृत्वे ( ते ) नैव न निर्मितुं ( निर्निमित्तं ) निमित्तं च मन एव वाच्यमिति स्वातन्त्र्यमस्त्येवेति भावः। अत्र काकतालीयस्वप्नप्रमात्वे धर्म एवेति अदृष्टोपलक्षणं दुःखफलकप्रमाया अपि दुरदृष्टजत्वादिति ध्येयम्। तुल्ययोगक्षेमत्वात् मनःप्रवृत्त्यनुकूलदृष्टजनकविधाय ( क ) त्वेन मिथः साम्यात्। वक्ष्यमाणधर्मसहकारेण धर्मजत्वात्

दोषासहकृतपुण्यजानुभवत्वात् । अत एव कामोत्तरकामिनीसाक्षात्कारे सुखहेतुतया धर्मजेन व्यभिचारः साक्षात्कारिप्रमात्वादिति प्रमात्वेन प्रमा अप्रमाबहिर्भूतेश्वरज्ञाने व्यभिचारो निरस्तः । तच्च जन्यत्वमात्रं प्रकृते तथा चेन्द्रियान्तरबाधान्मन एव तत्र कारणमेषितव्यमिति भावः । **धर्माननुगृहीतेति** । दोषसहकृतत्वोपलक्षणं धर्मपदं वा प्रमाप्रयोजकगुणपरं भवतु बाधकाभावः । प्रमेय अदृश्यत्वव्याप्तिग्राहके किम्मानमिति शङ्कते—**तथापीति** । **द्वे ब्रह्मणीति** । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीत्यनेन परब्रह्मणो भगवत एव वेदनस्य विहितत्वादिति । **अशक्येति** । आ ( प्राव ) प्लव-नश्रुतिवदप्रामाण्यं स्यादित्यर्थः । **न चेति** । तथा नाशं ( ? ) च विधानमिति भावः । दूषयति—अनु ( र्थ ) **ज्ञानेति** । ननु ज्ञानतात्पर्यकेण स्वाध्यायोऽध्येतव्य इति विधिनैव ईश्वरप्रतिपादकवेदाध्ययनेनैव ज्ञानमात्रप्राप्तत्वात् वैयर्थ्यमस्य स्यादित्यर्थः । द्रष्टुरीश्वरस्य दृष्टेः साक्षात्कारस्य विलोपो नाशो नास्ति । एतेन नित्यज्ञानवत्त्वे प्रमाणं दर्शितम् । एकत्वे प्रमाणमाह ( एक ) **मेये** ( **वे** ) **ति** । एकजाती ( य ) भ्रमनिरासायाह **अद्वितीयमिति** । ब्रह्म ईश्वरद्वृत्त्यन्योन्याभावाप्रतियोगीत्यर्थः । अना-दिज्ञानवत्त्वे अनिन्द्रियत्वे च मानमाह—**पश्यतीति** । रूपसाक्षात्कारवानित्यर्थः । शृणोति शब्दसाक्षात्कारवान् । तस्य परममहत्त्वे मानमाह—**द्वे इति** । बृंहणत्वाद्ब्र-ह्मेति योगानुसारात्तल्लाभः । व्यापकत्वे मानमाह—**यज्ञ इति** । विष्णुर्व्यापकः । तदुपा-सनस्य सफलत्वे मानमाह **सर्वधर्मानिति** । इतरात्मनो वैलक्षण्यान्तरमाह—**मदर्थमिति** । मामुद्दिश्येत्यर्थः । यज्ञार्थात् अन्यत्र भिन्ने कर्मणि कृते अयं लोकः कर्मबन्धनः कर्माधीनबन्धवान् भवतीत्यर्थः । विपरीते निन्दामु ( प ) दर्श्य तदर्थककर्मणः फलमाह—**यज्ञायेति** । विष्णवर्थं कर्म कुर्वतः पुरुषस्य कर्मग्रन्थिरितरकर्माधीनो बन्धः विलीयते नश्यति । **दर्शनान्तरेऽपि अनुशिष्यत इति** । ज्ञानकर्म्मसमुच्चयं निरस्यन् शिष्टा-चारमपि मानोत्थापकमादर्शयति तम् यथोक्तम् इमम् ईश्वरम् । विविदिषाविषयस्य फलान्तरमप्याह—अ (त) **स्मिन्निति** । विज्ञाते साक्षात्कृते विज्ञातं साक्षात्कृतम् । एवं यथोक्तोत्कर्षवन्तं विज्ञाय श्रद्धैकतानः तदुपासनेऽधिकश्रद्धावान् । तत्परस्तदुपासनकः । तत्परत्वस्यापि फलमाह एवंक्रमेण उक्त्वा श्रवणादिक्रमेण निदिध्यासनवान् माम् एष्यसि साक्षात्कारयिष्यसि । तत्साक्षात्कारस्यापि फलमाह—**भोक्तारमिति**। शान्ति संसारोपशमं मोक्षमिति यावत् ॥ १७ ॥

**इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते**
**येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।**
**किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः**
**काले कारुणिक त्वयैव कृपया ते भावनीया नराः ॥१८॥**

आमोदः

5 इत्येवमिति(५।१८)इत्यनेन ग्रन्थोक्तप्रकारेण श्रुतिराम्नायो नीति-र्नयः तयोर्यः संप्लवः परस्पराविरोधेन साहित्यं तदेव जलं, श्रुतीनां न्यायानां च भूयस्त्वात् तत्साहित्यानाञ्च भूयस्त्वमिति बहुवचनं, तैर्जलैराक्षालितेऽपि ईश्वरविषयकविप्रतिपत्तिनिरासेन शुद्धीकृते हृदये पदं नादधाति(सि) । ते वादिनः शैलसाराशयाः पाषाणसारवत् लोहवत्त्वाद् दृढाशया इत्यर्थः । सर्व-10 मुक्तिमभिप्रेत्याह—किन्त्विति । प्रस्तुता तावदीश्वरसिद्धिः, तद्विप्रतीपो विरोधी विधिः कुतर्काभ्यासादिर्येषां तेऽपि त्वयैव भवच्चिन्तका भावनीया इत्यर्थः ॥१८॥

बोधनी

एवं श्रवणानन्तरं कर्तव्यत्वेनोक्तन्यायचर्चात्मिकां मननोपासनां परमेश्वरगोचरां कृत्वा एव श्रवणमननोपासनासंस्तुतचेतसोऽपि ये त्वां भावयितु···स्त्वयैव कृपया भावयितव्य 15 इति परमेश्वरं प्रति परानुग्रहार्थं प्रार्थयन्त **इत्येवमिति** । संप्लवजले मम प्रक्षालनजलैः आस्पदं स्थानं शैलसाराशय अयोमयचित्ता···तसोनरे···स्वाभाविक एवेत्यर्थः प्रस्तुत-प्रतीपविधयः प्रारब्धप्रतिहतयोगविषय इत्यर्थः । अस्माकं तु चेतो नैवं विधं तथापि विषयेभ्यः परावृत्तं न त्वय्येव तृप्तिमुपगच्छति तस्मात् सांसारिकदुःखसागरोक्त···लक्षण-तृप्तेर्जननी करुणा स्वात्मानं प्रति विधातव्येति करुणाविधानं प्रार्थयते ॥ १८ ॥

विवेकः

20 अत्र शास्त्रे ये न श्रद्दधते तानधिकृत्याह—**इत्येवमिति** । श्रुतयो वेदा भगवतः परा नीतयो तद्विषयका न्याया भक्तेय ( मयोक्ताः ? ) इति यावत् , तासां यः संप्लवो विरोधस्तत्र एव जलानि हृन्मलापहारकतया तैराक्षालिते निरस्तकुतर्काभ्यासजनितसंस्कारे येषां हृदये मनसि आस्पदं न आदधासि नाप्नोषि ते वादिनः शैलसारो लौहम् , अतिकठिनशिला वा तद्वद्दाशयो हृदयं येषां ते तथा । तेषामधिकमनं ( ? ) बन्धे

बन्धं वीक्ष्य भगवन्तं प्रार्थयति—किं त्विति । प्रस्तुता भगवत्सिद्धिस्तस्याः प्रतीपो विरोधी विधिः कुतर्काभ्यासादिर्येषां ते, त्वयैव कृपया करणभूतया उच्चैर्भवच्चिन्तका भावनीयाः करणीया इत्यर्थः ॥ १८ ॥

**अस्माकन्तु निसर्गसुन्दर ! चिराच्चेतो निमग्नं त्वयी-**
**त्यद्धाऽऽनन्दनिधे ! तथापि तरलं नाद्यापि सन्तृप्यते ।**　5
**तन्नाथ ! त्वरितं विधेहि करुणां येन त्वदेकाग्रतां**
**याते चेतसि नाप्नुयाम शतशो याम्याः पुनर्यातनाः ॥ १९ ॥**

आमोदः

चेतो निमग्नं श्रवणमननयोरनन्तरं निदिध्यासनमपि कृतम् । तथापि साक्षात्कार विना नाद्यापि संतृप्यते तृप्तं न भवतीत्यर्थः । त्वदेकात्मतां त्वन्मात्रगोचरसाक्षात्कारजनकतामित्यर्थः । याम्या यमभवाः पूर्वं प्राप्ता 10 एव, पुनर्नाप्नुयाम येन तद्विधेहीत्यन्वयः ॥१९॥

बोधनी

अस्माकं त्विति । चिराच्चेत इति । निसर्गसुन्दरत्वादेव चिराच्चेतो निमग्नमिति अध्यासत्यर्थः । निसर्गसुन्दरत्वमेवोपपा··नेतः पूर्वमेव तृप्तिप्राप्तौ युक्तायामपि न संतृप्यतीत्यर्थः । तत्प्राप्तिकालातिक्रमात् त्वरितं विधेहि करुणामिति येन करुणाविधानेन त्वदेकात्मतां त्वदेकपरतामित्यर्थः । ॥ १९ ॥　15

विवेकः

प्रार्थनान्तरमाह अस्माकमिति । हे लि (नि) स्व (स) र्गव (सु) न्त (न्द) र नित्यं निर्दोष ! त्वयि श्रवण-मननानन्तरं चेतो निमग्नं कृतनिदिध्यासनं यद्यपि, तथापि न सन्तृप्यते त्वत्साक्षात्कारेच्छाविरहितं न भवति । अद्धानन्दनिधे नित्यं दुःखशून्य ! तत्तस्मात् नाथ ।

**इत्येष नीतिकुसुमाञ्जलिरुज्ज्वलश्री-**
**र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।**
**नो वा ततः किममरेशगुरोर्गुरुस्तु**
**प्रीतोऽस्त्वनेन पदपीठसमर्पितेन ॥ २० ॥**

इति श्रीन्यायाचार्यपदाङ्कितमहामहोपाध्यायश्रीमदुदयनविरचितं
न्यायकुसुमाञ्जलिप्रकरणं समाप्तम् ॥

आमोद.

5 **इतीति ।** इत्यनेन प्रकारेण कण्टकोद्धारादिना उज्ज्वलश्रीरत्यन्तविशुद्धः कृतः कुसुमाञ्जलिः दक्षिणवामकौ सुजनदुर्जनौ वासयेदप्यनुरञ्जयेदपि । अन्योऽपि कुसुमाञ्जलिर्दक्षिणवामनासापुटे वासिते करोति । ननु कुतर्का-भ्यासव्यसनमग्नमानसं दुर्जनं कथं वासयिष्यति इत्यतस्तत्रानाश्वासादाह— **नो वेति ।** दुर्जनानुरञ्जनमशक्यत्वान्नोद्देश्यं किन्त्वमरेश इन्द्रस्तस्य गुरुर्ब्रह्मा 10 बृहस्पतिर्वा तस्यापि गुरुरुपदेष्टा महादेवः, तत्प्रीतिरेवात्रोद्देश्याऽतस्तत्पा दपीठ एवायं कुसुमाञ्जलिरर्पित इत्यर्थः ॥२०॥

॥ इति श्रीशङ्करमिश्रकृतकुसुमाञ्जल्यामोदः समाप्तः ॥
इति श्रीन्यायकुसुमाञ्जलौ पञ्चमस्तबकः
समाप्तोऽयं ग्रन्थः

बोधनी

संप्र ··· ध्वितो यन्नीतिकुसुमाञ्जलिस्तत्र करो भवतु मा वेति यत् ततः किं तत्र न काचिच्चिन्ता स तु सर्वथा तस्य पादपीठसमर्पणमात्रेणैव प्रीतो भवत्वित्याह—इत्येष इति ।

इति श्रीरामदेवमिश्रसूनोः वरदराजस्य कृतौ
15 न्यायकुसुमाञ्जलिटीकायां पञ्चमः परिच्छेदः ।

